# प्रस्तावना ।

भवतु सुविश्रुतं समस्तसहृदयहृदयेषु,—भगवता श्रीव्यासमुनिना निखिलसांसारिकजनोद्दिधीर्षया निजमतिमन्थानेनागाधं वेदसागरं समुन्मथ्याभिनवाख्यानविभूषितानि पुराणानि निरमीयन्त । तान्येतानि महर्षिप्रणीतानि महापुराणानि संप्रति प्रायः सुदुर्लभानीति निपुणं विचार्य मया महता परिश्रमेण भूयसा द्रव्यव्ययेन च यतस्ततो महान्ति स्वल्पानि त्रुटितानि पूर्णानि जीर्णलिखितानि च तानि पुराणपुस्तकानि समानीय शास्त्रिजनद्वारा संशोधनेन परिष्कृत्य भूयसः कालादारभ्य स्वकीय "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशयितुमुपक्रान्तानि । तत्राद्ययावत्—पाद्म—वायु—मात्स्य—ब्रह्मवैवर्त—मार्कण्डेय—श्रीमद्भागवत—कालिकापुराण—देवीभागवत—प्रभृतीनि पुराणानि मुद्रयित्वा प्रकाशितान्येव । तेनैव क्रमेणाधुनेदं "श्रीशैवमहापुराणम्" मुद्रयित्वा प्रकाशितमस्ति । अस्मिन्पुराणे श्रीशिवस्य भगवतः सर्वोत्कृष्टं माहात्म्यं यथावस्थितं संवर्णितमस्ति तदनुसारेण सर्ग—प्रतिसर्ग—वंश—मन्वंतर—वंश्यानुचरितानि सविस्तरं वर्णितानि संति । इदं चतुर्विंशतिसहस्रसंहितात्मकं "श्रीशैवमहापुराण" पुस्तकं सकलस्वधर्मानुयायिनां जनानामवश्यं संग्राह्यमेव । अत आशासे,—सर्वे विद्वांसः स्वधर्मनिष्ठाः सज्जनाश्चातीव दुर्लभमपि सकलजनसौलभ्याय स्थापितेनाल्पीयसा मूल्येन ७ रूप्यकात्मकेन लभ्यं संगृह्य कृतार्थयंतु मम सकलपुराणमुद्रणाभिलाषमहोद्यममिति ।

सज्जनकृपाभिलाषी—

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" छापाखाना, खेतवाडी—बम्बई.

श्रीगणेशायनमः ॥ श्रीशौनकउवाच ॥ हेहेसूतमहाप्राज्ञसर्वसिद्धान्तवित्प्रभो ॥ आख्याहिमेकथासारंपुराणानांविशेषतः ॥ १ ॥ सपुत्रायाश्वसद्भक्तेर्वि
वेकोवर्द्धतेकथम् ॥ स्वविकारनिरासश्चसज्जनैःक्रियतेकथम् ॥ २ ॥ जीवाश्चासुरतांप्राप्ताःप्रायोघोरेकलाविह ॥ तस्यसंशोधनेकिंहिविद्यतेपरमा
यनम् ॥ ३ ॥ यदस्तिवस्तुपरमंश्रेयसांश्रेयउत्तमम् ॥ पावनंपावनानांचसाधनंतद्वदाधुना ॥ ४ ॥ येनतत्साधनेनाशुशुध्यत्यात्माविशेषतः ॥ शिवप्रा
प्तिर्भवेत्तातसदानिर्म्मलचेतसः ॥ ५ ॥ सूतउवाच ॥ धन्यस्त्वंमुनिशार्दूलश्रवणप्रीतिलालसः ॥ अतोविचार्य्यसुधियावच्मिशास्त्रंमहोत्तमम् ॥ ६ ॥
सर्व्वसिद्धान्तनिष्पन्नंभक्त्यादिकविवर्द्धनम् ॥ शिवतोषकरंदिव्यंशृणुवत्सरसायनम् ॥ ७ ॥ कालव्यालमहात्रासविध्वंसकरमुत्तमम् ॥ शैवंपुराणंपरमं
शिवेनोक्तंपुरामुने ॥८॥सनत्कुमारस्यमुनेरुपदेशात्परादरात् ॥ व्यासेनोक्तंतुसंक्षेपात्कलिजानांहितायच॥९॥एतस्मादपरंकिंचित्पुराणाच्छैवतोमुने॥
नविद्यतेमनःशुद्ध्यैकलिजानांविशेषतः ॥ १० ॥ जन्मान्तरेभवेत्पुण्यंमहत्तस्यसुधीमतः ॥ तस्यप्रीतिर्भवेत्तत्रमहाभाग्यवतोमुने ॥ ११ ॥ एतच्छि
वपुराणंहिपरमंशास्त्रमुत्तमम् ॥ शिवरूपंक्षितौज्ञेयंसेवनीयंचसर्व्वथा ॥ १२ ॥ पठनाच्छ्रवणादस्यभक्तिमान्नरसत्तमः ॥ सद्यःशिवपदप्राप्तिंलभतेसर्व्व
साधनात् ॥ १३ ॥ तस्मात्सर्वप्रयत्नेनकांक्षितंपठनंनृभिः ॥ तथास्यश्रवणंप्रेम्णासर्वकामफलप्रदम् ॥ १४ ॥ पुराणश्रवणाच्छम्भोर्निष्पापोजायते
नरः ॥ भुक्त्वाभोगान्सुविपुलाञ्छिवलोकमवाप्नुयात् ॥ १५ ॥ राजसूयेनयत्पुण्यमग्निष्टोमशतेनच ॥ तत्पुण्यंलभतेशम्भोःकथाश्रवणमात्रतः
॥ १६ ॥ येशृण्वन्तिमुनेशैवंपुराणंशास्त्रमुत्तमम् ॥ तेमनुष्यानमन्तव्यारुद्राएवनसंशयः ॥ १७॥ शृण्वतांतत्पुराणंहितथाकीर्तयतांचतत् ॥ पादाम्बुज
रजांस्येवतीर्थानिमुनयोविदुः ॥ १८ ॥ गन्तुंनिःश्रेयसंस्थानंयेभिवाञ्छन्तिदेहिनः ॥ शैवम्पुराणममलंभक्त्याशृण्वन्तुतेसदा ॥ १९ ॥ सदाश्रोतुंयद्य
शक्तोभवेत्समुनिसत्तम ॥ नियतात्माप्रतिदिनंशृणुयाद्वामुहूर्तकम् ॥ २० ॥ यदिप्रतिदिनंश्रोतुमशक्तोमानवोभवेत् ॥ पुण्यमासादिषुमुनेशृणुयाच्छि
वपुराणकम् ॥ २१ ॥ मुहूर्तं तदर्द्धंवातदर्द्धंवाक्षणंचवा ॥ येशृण्वन्तिपुराणंतन्नतेषांदुर्गतिर्भवेत् ॥ २२ ॥ तत्पुराणंचशृण्वानःपुरुषोयोमुनीश्वर ॥
सनिस्तरतिसंसारंदग्ध्वाकर्ममहाटवीम् ॥ २३ ॥ तत्पुण्यंसर्वदानेषुसर्वयज्ञेषुवामुने ॥ शम्भोःपुराणश्रवणात्तत्फलंनिश्चलंभवेत् ॥ २४ ॥ विशेषतःक
लौशैवपुराणश्रवणादृते॥परोधर्मोनपुंसांहिमुक्तिसाधनकृन्मुने२५पुराणश्रवणंशम्भोर्नामसंकीर्तनंतथा॥कल्पद्रुमफलंसम्यङ्मनुष्याणांनसंशयः॥२६॥
कलौदुर्मेधसांपुंसांधर्माचारोज्झितात्मनाम् ॥ हितायविदधेशम्भुःपुराणाख्यंसुधारसम् ॥ २७ ॥ एकोऽजरामरःस्याद्वैपिबन्नेवामृतंपुमान् ॥ शम्भोः
कथामृतंकुर्यात्कुलमेवाजरामरम् ॥ २८ ॥ सदासेव्यासदासेव्यासदासेव्याविशेषतः॥एतच्छिवपुराणस्यकथापरमपावनी ॥ २९ ॥ एतच्छिवपुराण

स्यकथाश्रवणमात्रतः ॥ किंब्रवीमिफलंतस्यशिवश्चित्तंसमाश्रयेत् ॥ ३० ॥ चतुर्विंशतिसाहस्रोग्रन्थोयंसप्तसंहितः ॥ भक्तित्रिकसुसम्पूर्णःशृणु
यात्तंपरादरात् ॥ ३१ ॥ विद्येश्वरसंहिताद्याद्वितीयारुद्रसंहिता ॥ तृतीयाशतरुद्राख्याकोटिरुद्राचतुर्थिका ॥ ३२ ॥ पञ्चम्युमासंहितोक्ताषष्ठी
कैलाससंहिता ॥ सप्तमीवायवीयाख्यासप्तैवंसंहिताइह ॥ ३३ ॥ ससप्तसंहितंदिव्यंपुराणंशिवसंज्ञकम् ॥ वरीवर्तिब्रह्मतुल्यंसर्वोपरिगतिप्रदम् ॥ ३४ ॥
एतच्छिवपुराणंहिसप्तसंहितमादरात् ॥ परिपूर्णपठेद्यस्तुसजीवन्मुक्तउच्यते ॥ ३५ ॥ पुमानज्ञानतस्तावद्भ्रमतेऽस्मिन्भवेमुने ॥ यावत्कर्णगतंना
स्तिपुराणंशैवमुत्तमम् ॥ ३६ ॥ किंश्रुतैर्बहुभिश्शास्त्रैःपुराणैश्चभ्रमावहैः ॥ शैवम्पुराणमेकंहिमुक्तिदानेनगर्जति ॥ ३७ ॥ एतच्छिवपुराणस्यकथा
भवतियद्गृहे॥तीर्थभूतंहितद्गेहंवसतांपापनाशनम् ॥ ३८ ॥ अश्वमेधसहस्राणिवाजपेयशतानिच ॥ कलांशिवपुराणस्यनार्हन्तिखलुषोडशीम् ॥ ३९ ॥
तावत्सप्रोच्यतेपापीपापकृन्मुनिसत्तम ॥ यावच्छिवपुराणंहिनशृणोतिसुभक्तितः ॥ ४० ॥ गंगाद्याःपुण्यनद्यश्चसप्तपुर्य्योगयातथा ॥ एतच्छिवपुराण
स्यसमतांयान्तिनक्वचित् ॥ ४१ ॥ नित्यंशिवपुराणस्यश्लोकंश्लोकार्द्धमेवच ॥ स्वमुखेनपठेद्भक्त्यायदीच्छेत्परमांगतिम् ॥ ४२ ॥ एतच्छिवपु
राणंयोवाचयेदर्थतोऽनिशम् ॥ पठेद्वाप्रीतितोनित्यंसपुण्यात्मानसंशयः ॥ ४३ ॥ अन्तकालेहियश्चैनंशृणुयाद्भक्तितस्सुधीः ॥ सुप्रसन्नोमहेशानस्त
स्मैयच्छतिस्वम्पदम् ॥ ४४ ॥ एतच्छिवपुराणंयःपूजयेन्नित्यमादरात् ॥ सभुक्त्वेहाखिलान्कामानन्तेशिवपदंलभेत् ॥ ४५ ॥ एतच्छिवपुराणस्य
कुर्वन्नित्यमतन्द्रितः ॥ पट्टवस्त्रादिनाऽभ्यर्त्यसत्कारंससुखीसदा ॥ ४६ ॥ शैवंपुराणममलंशैवसर्वस्वमादरात् ॥ सेवनीयंप्रयत्नेनपरत्रेहसुखेप्सुना
॥ ४७ ॥ चतुर्व्वर्ग्गप्रदंशैवंपुराणममलंपरम् ॥ श्रोतव्यंसर्वदाप्रीत्यापठितव्यंविशेषतः ॥ ४८ ॥ वेदेतिहासशास्त्रेषुपरंश्रेयस्करंमहत् ॥ शैवम्पुराणंविज्ञेयं
सर्व्वथाहिमुमुक्षुभिः ॥ ४९ ॥ शैवंपुराणमिदमात्मविदांवरिष्ठंसेव्यंसदापरमवस्तुसतांसमर्च्यम् ॥ तापत्रयाभिशमनंसुखदंसदैवप्राणप्रियंविधिहरीशसु
खामराणाम् ॥ ५० ॥ वन्देशिवपुराणंहिसर्व्वदाहंप्रसन्नधीः ॥ शिवःप्रसन्नतांयायाद्दद्यात्स्वपदयोरतिम् ॥ ५१ ॥ इतिश्रीस्कान्देमहापुराणेशिवपुराणमाहा
त्म्येतन्महिमवर्णनंनामप्रथमोऽध्यायः ॥ १ ॥ शौनकउवाच ॥ सूतसूतमहाभागधन्यस्त्वंपरमार्थवित् ॥ अद्भुतेयंकथादिव्याश्राविताकृपयाहिनः ॥ १ ॥
अघौघविध्वंसकरीमनःशुद्धिविधायिनी॥शिवसन्तोषजननीकथेयंनःश्रुताद्भुता ॥ २ ॥ एतत्कथासमानंनभुविकिंचित्परात्परम् ॥ निश्चयेनेतिविज्ञातम
स्माभिःकृपयातव ॥ ३ ॥ केकेविशुध्यन्त्यनयाकथयापापिनःकलौ ॥ वदतान्कृपयासूतकृतार्थंभुवनंकुरु ॥ ४ ॥ सूतउवाच ॥ येमानवाःपापकृतोदुरा
चाररताःखलाः ॥ कामादिनिरतानित्यंतेऽपिशुध्यन्त्यनेनवै ॥ ५ ॥ ज्ञानयज्ञःपरोयंवैभुक्तिमुक्तिप्रदस्सदा ॥ शोधनस्सर्वपापानांशिवसन्तोषकारकः ॥ ६ ॥

तृष्णाकुलास्सत्यहीनाःपितृमातृविदूषकाः ॥ दाम्भिकाहिंसकायेचतेऽपिशुध्यन्त्यनेनवै ॥ ७ ॥ स्ववर्णाश्रमधर्मेभ्योवार्जितामत्सरान्विताः ॥ ज्ञान
यज्ञेनतेऽनेनसम्पुनन्तिकलावपि ॥ ८ ॥ छलच्छद्मकरायेचयेचक्रूरास्सुनिर्दयाः ॥ ज्ञानयज्ञेनतेऽनेनसम्पुनन्तिकलावपि ॥ ९ ॥ ब्रह्मस्वपुष्टास्सततंव्य
भिचाररताश्चये ॥ ज्ञानयज्ञेनतेऽनेनसम्पुनन्तिकलावपि ॥ १० ॥ सदापापरतायेचयेशठातिदुराशयाः ॥ ज्ञानयज्ञेनतेऽनेनसम्पुनन्तिकलावपि ॥११॥
मलिनादुर्धियः शान्तादेवताद्रव्यभोजिनः ॥ ज्ञानयज्ञेनतेऽनेनसम्पुनन्तिकलावपि ॥ १२ ॥ पुराणस्यास्यपुण्यंसन्महापातकनाशनम् ॥ भुक्तिमुक्तिं
प्रदंचैवशिवसन्तोषहेतुकम् ॥ १३ ॥ अत्रैवोदाहरन्तीमामितिहासंपुरातनम् ॥ यस्यश्रवणमात्रेणपापहानिर्भवत्यलम् ॥ १४ ॥ आसी
त्किरातनगरेब्राह्मणोज्ञानदुर्बलः ॥ दरिद्रोरसविक्रेतादेवधर्मपराङ्मुखः ॥ १५ ॥ सन्ध्यास्नानपरिभ्रष्टोवैश्यवृत्तिपरायणः ॥ देवराजइतिख्या
तोविश्वस्तजनवञ्चकः ॥ १६ ॥ सविप्रान्क्षत्रियान्वैश्याञ्छूद्रांश्चापितथापरान् ॥ हत्वानानामिषेणैवतत्तद्धनमपाहरत् ॥ १७ ॥ अधर्माद्बहुवित्तानिपश्चा
त्तेनार्जितानिवै ॥ नधर्मायधनन्तस्यस्वल्पश्चापीहपापिनः ॥ १८ ॥ एकदैकतडागेसस्नातुंयातोमहीसुरः ॥ वेश्यांशोभावतींनामदृष्ट्वातत्रातिविह्वलः
॥ १९॥ स्ववशंधनिनंविप्रंज्ञात्वाहृष्टाथसुन्दरी ॥ वार्तालापेनतच्चित्तंप्रीतिमत्समजायत ॥२०॥ स्त्रियंकर्तुंसताम्मेनेपतिंकर्तुंचसातथा ॥ एवंकामवशौभू
त्वाबहुकालंविजह्रतुः ॥ २१ ॥ आसनेशयनेपानेभोजनेक्रीडनेतथा॥दम्पतीवसदाद्वौतुववृतातेपरस्परम् ॥ २२॥ मात्रापित्रातथापत्न्यावारितोऽपिपुनः
पुनः ॥ नामन्यतवचस्तेषांपापवृत्तिपरायणः ॥ २३ ॥ एकदेर्ष्यावशाद्रात्रौमातरंपितरंवधूम् ॥ प्रसुप्तान्न्यवधीद्दुष्टोधनन्तेषान्तथाहरत् ॥ २४॥ आत्म
नीनंधनंयच्चपित्रादीनांतथाधनम् ॥ वेश्यायैदत्तवान्सर्व्वंकामीतद्गतमानसः ॥ २५ ॥ सोऽभक्ष्यभक्षकःपापीमदिरापानलालसः ॥ एकपात्रेसदाभौक्षी
त्सवेश्यौब्राह्मणाधमः ॥ २६ ॥ कदाचिद्दैवयोगेनप्रतिष्ठानमुपागतः ॥ शिवालयंददर्शासौतत्रसाधुजनावृतम् ॥ २७ ॥ स्थित्वातत्रचविप्रोसौज्वरेणाति
प्रपीडितः ॥ शुश्रावसततंशैवींकथांविप्रमुखोद्गताम् ॥ २८ ॥ देवराजश्चमासान्तेज्वरेणापीडितोमृतः ॥ बद्धोयमभटैःपाशैर्नीतोयमपुरम्बलात् ॥२९ ॥
तावच्छिवगणाःशुभ्रास्त्रिशूलाञ्चितपाणयः ॥ भस्मभासितसर्व्वाङ्गारुद्राक्षाञ्चितविग्रहाः ॥ ३० ॥ शिवलोकात्समागत्यक्रुद्धायमपुरींययुः ॥ ताडयित्वा
तुतद्दूतांस्तर्जयित्वापुनःपुनः ॥ ३१ ॥ देवराजंसमामोच्यविमानेपरमाद्भुते ॥ उपवेश्ययदादूताःकैलासंगन्तुमुत्सुकाः ॥ ३२ ॥ तदायमपुरीमध्येमहाको
लाहलोऽभवत् ॥ धर्मराजस्तुतंश्रुत्वास्वालयाद्बहिरागमत् ॥ ३३ ॥ दृष्ट्वाथचतुरोदूतान्साक्षाद्रुद्रानिवापरान् ॥ पूजयामासधर्मज्ञोधर्मराजोयथाविधि
॥ ३४ ॥ ज्ञानेनचक्षुषासर्वंवृत्तान्तंज्ञातवान्यमः ॥ नभयात्पृष्टवान्किंचिच्छम्भोर्दूतान्महात्मनः ॥ ३५ ॥ पूजिताःप्रार्थितास्तेवैकैलासमगमंस्तदा ॥

दद्दुश्शिवायसाम्बायतन्दयावारिराशये ॥३६॥ धन्याशिवपुराणस्यकथापरमपावनी ॥ यस्याःश्रवणमात्रेणपापीयानपिमुक्तिभाक् ॥ ३७ ॥ सदाशिव
महास्थानंपरंधामपरम्पदम्॥यदाहुर्वेदविद्वांसःसर्वलोकोपरिस्थितम् ॥३८॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्राअन्येपिप्राणिनः॥ हिंसिताधनलोभेनबहवोयेन
पापिना ॥ ३९ ॥ मातृपितृवधूहन्तावेश्यागामीचमद्यपः ॥ देवराजोद्विजस्तत्रगत्वामुक्तोऽभवत्क्षणात् ॥ ४० ॥ इतिश्रीस्कान्देमहापुराणेशिवपुराण
माहात्म्येदेवराजमुक्तिवर्णनंनामद्वितीयोऽध्यायः ॥२॥शौनकउवाच ॥ सूतसूतमहाभागसर्वज्ञोऽसिमहामते॥त्वत्प्रसादात्कृतार्थोहंकृतार्थोहम्पुनःपुनः॥
॥ १ ॥ इतिहासमिमंश्रुत्वामनोमेऽतीवमोदते ॥ अन्यामपिकथांशम्भोर्वदप्रेमविवर्द्धिनीम् ॥ २ ॥ नामृताम्पिबतांलोकेमुक्तिःक्वापिसभाज्यते ॥ शम्भोः
कथासुधापानंप्रत्यक्षंमुक्तिदायकम् ॥३॥ धन्याधन्याकथाशंभोस्त्वंधन्योधन्यएवच ॥ यदाकर्णनमात्रेणशिवलोकेव्रजेन्नरः ॥४॥ सूतउवाच ॥ शृणुशौन
कवक्ष्यामित्वदग्रेगुह्यमप्युत ॥ यतस्त्वंशिवभक्तानामग्रणीर्वेदवित्तमः ॥ ५ ॥ समुद्रनिकटेदेशेग्रामोबाष्कलसंज्ञकः ॥ वसन्तियत्रपापिष्ठावेदधर्मोज्झि
ताजनाः ॥६॥ दुष्टादुर्विषयात्मानोनिर्दैवाजिह्मवृत्तयः ॥ कृषीवलाःशस्त्रधराःपरस्त्रीभोगिनःखलाः ॥७॥ ज्ञानवैराग्यसद्धर्मंनजानन्तिपरंहिते ॥ कुकथा
श्रवणाढ्येषुनिरताःपशुबुद्धयः ॥८॥अन्येवर्णाश्चकुधियस्स्वधर्मविमुखाःखलाः ॥ कुकर्मनिरतानित्यंसदाविषयिणश्चते ॥९॥स्त्रियःसर्वाश्चकुटिलास्स्वैरि
ण्यःपापलालसाः ॥ कुधियोव्यभिचारिण्यस्सद्वृत्ताचारवर्जिताः ॥ १० ॥ एवंकुजनसंवासेग्रामेबाष्कलसंज्ञिते ॥ तत्रैकोबिन्दुगोनामविप्रआसी
न्महाधमः॥ ११ ॥ सदुरात्मामहापापीसुदारोऽपिकुमार्गगः ॥ वेश्यापतिर्बभूवाथकामाकुलितमानसः ॥ १२ ॥ स्वपत्नींचंचुलांनामहित्वानित्यं
सुधर्मिणीम् ॥ रेमेस्ववेश्ययादुष्टःस्मरबाणप्रपीडितः ॥ १३ ॥ एवंकालोव्यतीयायमहांस्तस्यकुकर्मिणः ॥ सास्वधर्मभयात्क्लेशात्स्मरार्ता
पिचचंचुला ॥ १४ ॥ अथतस्याङ्गनासापिप्ररूढनवयौवना ॥ अविषह्यस्मरावेशास्वधर्माद्विररामह ॥ १५ ॥ जारेणसंगताराात्रौरेमेपापे
नगुप्ततः ॥ पतिदृष्टिंवञ्चयित्वाभ्रष्टसत्वाकुमार्गगा ॥ १६ ॥ कदाचित्तांदुराचारांस्वपत्नींचंचुलांमुने ॥ जारेणसंगतांरात्रौददर्शस्मर
विह्वलाम् ॥ १७ ॥ दृष्ट्वातांदुष्टिनींपत्नींकुकर्मासक्तमानसाम् ॥ जारेणसंगतांरात्रौक्रोधाद्दुद्राववेगतः ॥ १८ ॥ तमागतंगृहेदुष्टमाज्ञायबिन्दुगंख
लः ॥ पलायितोद्रुतंजारोवेगतश्छद्मवान्सवै ॥ १९ ॥ अथसबिन्दुगःपत्नींगृहीत्वासुदुराशयः ॥ मुष्टिबन्धेनसंतर्ज्यपुनःपुनरताडयत् ॥ २० ॥ सानारी
ताडिताभर्त्राचञ्चुलास्वैरिणीखला ॥ कुपितानिर्भयाप्राहस्वपतिंबिन्दुगंखलम् ॥ २१ ॥ चंचुलोवाच ॥ भवान्प्रतिदिनंकामंरमतेवेश्ययाकुधीः ॥ मांवि
हायस्वपत्नींचयुवतींपतिसेविनीम् ॥ २२ ॥ रूपवत्यायुवत्याश्चकामाकुलितचेतसः ॥ विनापतिविहारंस्यात्कागतिर्मेभवान्वदेत् ॥ २३ ॥ अहंमहारूप

रादहो ॥ ६२ ॥ शूलप्रोतस्यशैलाग्रात्पततस्तुङ्गतोद्विज ॥ यद्दुःखंदेहिनोघोरंतस्मात्कोटिगुणंमम ॥ ६३ ॥ अश्वमेधशतंकृत्वागंगांस्नात्वाशतंस
माः ॥ नशुद्धिर्जायतेप्रायोमत्पापस्यगरीयसः ॥ ६४ ॥ किंकरोमिकगच्छामिकंवाशरणमाश्रये ॥ कस्त्रायतेमांलोकेस्मिन्पतन्तींनरकार्णवे ॥ ६५ ॥
त्वमेवमेगुरुर्ब्रह्मंस्त्वंमातात्वंपितासिच ॥ उद्धरोद्धरमांदीनांत्वमेवशरणंगताम् ॥ ६६ ॥ सूतउवाच ॥ इतिसंजातनिर्वेदांपतिताश्चरणद्वये ॥
उत्थाप्यकृपयाधीमान्बभाषेब्राह्मणस्साहि ॥ ६७ ॥ इतिश्रीस्कान्देमहापुराणेशिवपुराणमाहात्म्येचंचुलावैराग्यवर्णनंनामतृतीयोऽध्यायः ॥ ३ ॥
ब्राह्मणउवाच ॥ दिष्ट्याकालेप्रबुद्धासिशिवानुग्रहतोवराम् ॥ इमांशिवपुराणस्यश्रुत्वावैराग्यवत्कथाम् ॥ १ ॥ माभैषीर्द्विजपत्नित्वं
शिवस्यशरणंव्रज ॥ शिवानुग्रहतस्सर्वंपापंसद्योविनश्यति ॥ २ ॥ वक्ष्यामितेपरंवस्तुशिवकीर्तिसमन्वितम् ॥ भविष्यतिगतिर्येनसर्व
दातेसुखावहा ॥ ३ ॥ सत्कथाश्रवणादेवजातातेमतिरीदृशी ॥ पश्चात्तापान्विताशुद्धावैराग्यंविषयेषुच ॥ ४ ॥ पश्चात्तापःपापकृतांपापानां
निष्कृतिःपरा ॥ सर्वेषांवर्णितंसद्भिस्सर्वपापविशोधनम् ॥ ५ ॥ पश्चात्तापेनैवशुद्धिःप्रायश्चित्तंकरोतिसः ॥ यथोपदिष्टंसद्भिर्हिसर्वपापविशो
धनम् ॥ ६ ॥ प्रायश्चित्तमधीकृत्वाविधिवन्निर्भयःपुमान् ॥ नयातिसुगतिंप्रायःपश्चात्तापीनसंशयः ॥ ७ ॥ एतच्छिवपुराणस्यकथाश्रवणतोयथा ॥
जायतेचित्तशुद्धिर्हिनतथान्यैरुपायतः ॥ ८ ॥ शोध्यमानंदर्पणंहियथाभवतिनिर्मलम् ॥ तथैतत्कथयाचेतोविशुद्धिंयात्यसंशयम् ॥ ९ ॥ विशुद्धेचेत
सिशिवोनृणांतिष्ठतिसाम्बिकः ॥ ततोयातिविशुद्धात्मासाम्बशंभोःपरंपदम् ॥ १० ॥ अतःसर्वस्यवर्गस्यैतत्कथासाधनंमतम् ॥ एतदर्थंमहादेवोनि
र्ममेत्वाग्रहादिमाम् ॥ ११ ॥ कथयासिध्यतिध्यानमनयागिरिजापतेः ॥ ध्यानाज्ज्ञानंपरंतस्मात्कैवल्यंभवतिध्रुवम् ॥ १२ ॥ असिद्धशंकरध्यानः
कथामेवशृणोतियः ॥ सप्राप्यान्यभवेध्यानंशंभोर्यातिपरांगतिम् ॥ १३ ॥ एतत्कथाश्रवणतःकृत्वाध्यानमुमापतेः ॥ तेपश्चात्तापिनःपापाबहवःसिद्धि
मागताः ॥ १४ ॥ सर्वेषांश्रेयसांबीजंसत्कथाश्रवणंनृणाम् ॥ यथावत्संसमाराध्यंभवबन्धगदापहम् ॥ १५ ॥ कथाश्रवणतःशम्भोर्मननाच्चततोहृदा ॥
निदिध्यासनतश्चैवचित्तशुद्धिर्भवत्यलम् ॥ १६ ॥ अतोभक्तिर्महेशस्यपुत्राभ्यांभवतिध्रुवम् ॥ तदनुग्रहतोदिव्यातततोमुक्तिर्नसंशयः ॥ १७ ॥ तद्वि
हीनःपशुर्ज्ञेयोमायाबन्धनसक्तधीः ॥ संसारबन्धनान्नैवमुक्तोभवतिसध्रुवम् ॥ १८ ॥ अतोहिद्विजपत्नित्वंविषयेभ्योनिवृत्तधीः ॥ शृणुशंभोःकथांचैतांभ
क्त्यापरमपावनीम् ॥ १९ ॥ शृण्वन्त्यास्सत्कथामेतांशंकरस्यपरात्मनः ॥ शुद्धिमेष्यतिचेतस्तेततोमुक्तिमवाप्स्यसि ॥ २० ॥ ध्यायतःशिवपादाब्जंचेत
सानिर्मलेनवै ॥ एकेनजन्मनामुक्तिस्सत्यंसत्यंवदाम्यहम् ॥ २१ ॥ सूतउवाच ॥ इत्युक्त्वासद्द्विजवरोवरःशैवःकृपार्द्रधीः ॥ तूष्णींबभूवशुद्धात्माशिव

[illegible]ानपरायणः ॥ २२ ॥ अथबिंदुगपत्नीसाचंचुलाह्लाप्रसन्नधीः ॥ इत्युक्तातेनविप्रेणसमासीद्बाष्पलोचना ॥ २३ ॥ पपातारंद्विजेन्द्रस्यपादयोस्तस्यह्व
[illegible]धीः ॥ चंचुलासाञ्जलिःसाचकृतार्थास्मीत्यभाषत ॥ २४ ॥ अथसोत्थायसातंकासाञ्जलिर्गद्गदाक्षरम् ॥ तमुवाचमहाशैवंद्विजंवैराग्ययुक्सुधीः ॥२५॥
चंचुलोवाच॥ब्रह्मञ्छैववरस्वामिन्धन्यस्त्वंपरमार्थदृक् ॥ परोपकारनिरतोवर्णनीयःसुसाधुषु॥२६॥उद्धरोद्धरमांसाधोपतन्तींनरकार्णवे॥श्रुत्वायांसुकथां
शैवींपुराणार्थविजृंभिताम् ॥ २७ ॥ विरक्तधीरहंजाताविषयेभ्यश्चसर्वतः ॥ सुश्रद्धामहतीह्येतत्पुराणश्रवणेधुना ॥ २८॥ सूतउवाच ॥ इत्युक्त्वा
साञ्जलिःसावैसंप्राप्यतदनुग्रहम् ॥ तत्पुराणंश्रोतुकामातिष्ठत्तत्सेवनेरता ॥२९॥ अथशैववरोविप्रस्तस्मिन्नेवस्थलेसुधीः ॥ सत्कथांश्रावयामासतत्पुरा
णस्यतांस्त्रियम् ॥ ३० ॥ इत्थंतस्मिन्महाक्षेत्रेतस्माद्देवाद्द्विजोत्तमात् ॥ कथांशिवपुराणस्यसाशुश्रावमहोत्तमाम् ॥ ३१ ॥ भक्तिज्ञानविरागाणांवर्द्धिनीं
मुक्तिदायिनीम् ॥ बभूवसुकृतार्थासाश्रुत्वातांसत्कथांपराम् ॥ ३२ ॥ सद्गुरोस्तस्यकृपयाशुद्धचित्ताचसाद्रुतम् ॥ शिवानुग्रहतःशम्भोरूपध्यानम
वापह ॥ ३३ ॥ इत्थंसद्गुरुमाश्रित्यसाप्राप्तशिवसन्मतिः ॥ दध्यौमुहुर्मुहुःशम्भोश्चिदानन्दमयंवपुः ॥ ३४ ॥ स्नात्वातीर्थजलेनित्यंजटावल्कलधा
रिणी॥भस्मोद्धूलितसर्वाङ्गीरुद्राक्षकृतभूषणा ॥ ३५ ॥ शिवनामजपासक्तावाग्यतामितभोजना ॥ गुरूपदिष्टमार्गेणसाशिवंसमतोषयत् ॥ ३६ ॥ एवं
तस्याश्चंचुलायाःकुर्वत्याध्यानमुत्तमम्॥बहुकालोव्यतीयायशंभोस्तत्रैवशौनक ॥ ३७ ॥ अथकालेनपूर्णेनभक्तित्रिकसमन्विता ॥ समुत्ससर्जदेहं
स्वमनायासेनचंचुला ॥ ३८ ॥ विमानंद्रुतमायातंप्रेषितंत्रिपुरारिणा ॥ दिव्यंस्वगणसंयुक्तंनानाशोभासमन्वितम् ॥ ३९ ॥ अथतत्रसमारूढामहेशा
नुचरैर्वरैः ॥ नीताशिवपुरींसद्योध्वस्तसर्वमलाचसा ॥ ४० ॥दिव्यरूपधरादिव्यादिव्यावयवशालिनी ॥ चन्द्रार्द्धशेखरागौरीविलसद्दिव्यभूषणा ॥४१॥
गत्वातत्रमहादेवंसाददर्शत्रिलोचनम् ॥ विष्णुब्रह्मादिभिर्देवैःसेव्यमानंसनातनम् ॥४२॥ गणेशभृङ्गनन्दीशवीरभद्रेश्वरादिभिः ॥ उपास्यमानंसद्भक्त्या
कोटिसूर्य्यसमप्रभम्॥४३॥नीलग्रीवंपञ्चवक्त्रंत्र्यम्बकंचन्द्रशेखरम्॥ वामाङ्गेबिभ्रतंगौरींविद्युत्पुञ्जसमप्रभाम् ॥४४॥ कर्पूरगौरंगौरीशंसर्वालंकारधारि
णम् ॥ सितभस्मलसद्देहंसितवस्त्रंमहोज्ज्वलम् ॥४५॥ दृष्ट्वैवंशंकरंनारीसासुमोदातिचंचुला ॥ सुसंभ्रमान्महाप्रीताप्रणनामपुनःपुनः ॥ ४६ ॥ साञ्जलि
स्सासुदाप्रेम्णासन्तुष्टाचविनीतका ॥ आनन्दाश्रुजलैर्युक्तारोमहर्षसमन्विता ॥४७॥अथसावैकरुणयापार्वत्याशंकरेणच॥समानीतोपकण्ठंहिसुदृष्ट्याच
विलोकिता ॥ ४८॥ पार्वत्यासाकृताप्रीत्यास्वसखीदिव्यरूपिणी ॥ दिव्यसौख्यान्वितातत्रचंचुलाबिन्दुगप्रिया ॥ ४९ ॥ तस्मिँल्लोकेपरानंदघनज्यो
तिषिशाश्वते॥लब्ध्वानिवासमचलंलेभेसुखमनाहतम्॥५०॥इतिश्रीस्कान्देमहापुराणेशिवपुराणमाहात्म्येचंचुलासद्गतिवर्णनंनामचतुर्थोऽध्यायः ॥४॥

वतीनवयौवनविह्वला ॥ कथंसहेकामदुःखंतवसङ्गंविनार्तधीः ॥ २४ ॥ सूतउवाच ॥ इत्युक्तस्सतयामूर्खोमूढधीर्ब्राह्मणोऽधमः ॥ प्रोवाचबिन्दुगःपापी
स्वधर्मविमुखःखलः ॥२५॥ बिन्दुगउवाच॥सत्यमेतत्त्वयोक्तंहिकामव्याकुलचेतसा॥हितंवक्ष्यामितस्मात्तेशृणुकान्तेभयन्त्यज ॥ २६ ॥ जारैर्विहरनि
त्यंत्वंचेतसानिर्भयेनवै ॥ धनमाकर्षतेभ्योहिदत्वातेभ्यःपरांरतिम् ॥ २७ ॥ तद्धनंदेहिसर्वंमेवेश्यासंसक्तचेतसः ॥ महत्स्वार्थंभवेन्नूनंतवापिचममा
पिच ॥२८॥ सूतउवाच ॥ इतिभर्तृवचःश्रुत्वाचञ्चुलातद्वधूश्वसा ॥ तथेतिभर्तृवचनंप्रतिजग्राहहृष्टधीः ॥ २९॥ कृत्वैवंसमयंतौवैदम्पतीदुष्टमानसौ ॥
कुकर्मनिरतौजातौनिर्भयेनकुचेतसा ॥ ३० ॥ एवंतयोस्तुदम्पत्योर्दुराचारप्रवृत्तयोः ॥ महान्कालोव्यतीयायनिष्फलोमूढचेतसोः ॥ ३१ ॥ अथवि
प्रस्सकुमतिर्बिन्दुगोवृषलीपतिः ॥ कालेननिधनंप्राप्तोजगामनरकंखलः ॥ ३२ ॥ भुक्त्वानरकदुःखानिबह्वहानिसमूढधीः ॥ विन्ध्येऽभवत्पिशाचोहि
गिरौपापीभयङ्करः ॥ ३३ ॥ मृतेभर्तरितस्मिन्वैदुराचारेऽथबिन्दुगे ॥ उवासस्वगृहेपुत्रैश्चिरकालंविमूढधीः ॥ ३४ ॥ एवंविहरतीजारैस्सानारीचञ्चुला
ह्वया॥आसीत्कामरताप्रीताकिञ्चिदुत्क्रान्तयौवना॥३५॥एकदादैवयोगेनसम्प्राप्तेपुण्यपर्वणि॥सानारीबन्धुभिस्सार्द्धंगोकर्णक्षेत्रमाययौ॥३६॥प्रसङ्गात्सा
तदागत्वाकस्मिंश्चित्तीर्थपाथसि ॥ सस्नौसासामान्यतोयत्रतत्रबभ्रामबन्धुभिः ॥ ३७ ॥ देवालयेऽथकस्मिंश्चिद्दैवज्ञमुखतःशुभाम् ॥ शुश्रावसत्कथांशम्भोः
पुण्यांपौराणिकींचसा ॥ ३८ ॥ योषितांजारसक्तानांनरकेयमकिङ्कराः ॥ संतप्तलोहपरिघंक्षिपन्तिस्मरमन्दिरे ॥ ३९ ॥ इतिपौराणिकेनोक्तांश्रुत्वा
वैराग्यवर्द्धिनीम् ॥ कथामासीद्भयोद्विग्नाचकम्पेतत्रसाचवै ॥ ४० ॥ कथासमाप्तौसानारीनिर्गतेषुजनेषुच ॥ भीतारहसितंप्राहशैवंसंवाचकंद्विज
म् ॥ ४१ ॥ चंचुलोवाच ॥ ब्रह्मन्स्वंशृण्वसद्वृत्तमजानन्त्यास्वधर्मकम् ॥ श्रुत्वामामुद्धरस्वामिन्कृपांकृत्वाऽतुलामपि ॥ ४२ ॥ चरितंसूल्बणंपापंमया
मूढधियाप्रभो ॥ नीतंपौंश्चल्यतस्सर्वंयौवनंमदनान्धया ॥४३॥ श्रुत्वेदंवचनंतेद्यवैराग्यरसजृम्भितम्॥जातामहाभयासाहंसकम्पात्तवियोगका ॥ ४४ ॥
धिङ्मांमूढधियंपापांकाममोहितचेतसम् ॥ निन्द्यांदुर्विषयासक्तांविमुखींहिस्वधर्मतः ॥ ४५ ॥ यदल्पस्यसुखस्यार्थेस्वकार्यस्यविनाशिनः ॥ महा
पापंकृतंघोरमजानन्त्यातिकष्टदम् ॥ ४६ ॥ यास्यामिदुर्गतिंकांकांघोरांहाकष्टदायिनीम् ॥ कोज्ञोयास्यतिमांतत्रकुमार्गरतमानसाम् ॥ ४७ ॥ मरणे
यमदूतांस्तान्कथन्द्रक्ष्येभयंकरान् ॥ कथंपाशैर्बलात्कण्ठेबध्यमानाधृतिंलभे ॥ ४८ ॥ कथंसहिष्येनरकेखण्डशोदेहकृन्तनम् ॥ यातनांतत्रमहतीं
दुःखदांचविशेषतः ॥ ४९ ॥ दिवाचेष्टामिन्द्रियाणांकथंप्राप्स्यामिशोचती ॥ रात्रौकथंलभिष्येहंनिद्रांदुःखपरिप्लुता ॥ ५० ॥ हाहतास्मिचदग्धास्मि
विदीर्णहृदयास्मिच॥सर्वथाहंविनष्टास्मिपापिनीसर्वथाप्यहम् ॥ ५१ ॥ हाविधेमांमहापापेदत्वादुश्शेमुषींहठात् ॥ अपैतियत्स्वधर्माद्वैसर्वसौख्यक

शौनकउवाच ॥ सूतसूतमहाभागधन्यस्त्वंशिवसक्तधीः ॥ श्राविते यंकथास्माकमद्भुताभक्तिवर्द्धिनी ॥ १ ॥ तत्रगत्वाकिंचकारचंचुलाप्रा
तसद्गतिः ॥ तत्त्वंवदविशेषेणतत्पतेश्चमहामते ॥ २ ॥ सूतउवाच ॥ साकदाचिदुमांदेवीमुपगम्यप्रणम्यच ॥ सुतुष्टावकरौबद्ध्वापरमानन्दसंप्लुता ॥३॥
चंचुलोवाच ॥ गिरिजेस्कन्दमातस्त्वंसेवितासर्वदानरैः ॥ सर्वसौख्यप्रदाशम्भुप्रियेब्रह्मस्वरूपिणि ॥ ४ ॥ विष्णुब्रह्मादिभिस्सेव्यासगुणानिर्गुणापिच॥
त्वमाद्याप्रकृतिस्सूक्ष्मासच्चिदानन्दरूपिणी ॥५ ॥ सृष्टिस्थितिलयकरीत्रिगुणात्रिसुरालया ॥ ब्रह्मविष्णुमहेशानांसुप्रतिष्ठाकरापरा ॥६॥ सूतउवाच ॥
इतिस्तुत्वामहेशींतांचंचुलाप्राप्तसद्गतिः ॥ विरराम नतस्कन्धाप्रेमपूर्णाश्रुलोचना ॥ ७ ॥ ततस्साकरुणाविष्टापार्वतीशंकरप्रिया ॥ तामुवाचमहा
प्रीत्याचंचुलांभक्तवत्सला ॥ ८ ॥ पार्वत्युवाच ॥ चंचुलेसखिसुप्रीतानयास्तुत्यास्मिसुन्दरि ॥ किंयाचसेवरंब्रूहिनादेयंविद्यतेतव ॥ ९ ॥ सूतउवा
च ॥ इत्युक्तासागिरिजयाचंचुलासुप्रणम्यताम् ॥ पर्यपृच्छतसुप्रीत्यासाञ्जलिर्नतमस्तका ॥ १० ॥ चंचुलोवाच ॥ ममभर्ताधुनाक्वास्तेनैवजाना
मितद्गतिम् ॥ तेनयुक्तायथाहंवैभवामिगिरिजेऽनघे ॥ ११ ॥ तथैवकुरुकल्याणिकृपयादीनवत्सले ॥ महादेविमहेशानिभर्तामेवृषलीपतिः ॥ मत्तःपू
र्वंमृतःपापीनजानेकांगतिंगतः ॥ १२ ॥ सूतउवाच ॥ इत्याकर्ण्यवचस्तस्याश्चंचुलायाहिपार्वती ॥ प्रत्युवाचसुसंप्रीत्यागिरिजानयवत्सला ॥ १३ ॥
गिरिजोवाच ॥ सुतेभर्ताबिन्दुगाह्वोमहापापीदुराशयः ॥ वेश्याभोगीमहामूढोमृत्वासनरकंगतः ॥१४॥ भुक्त्वानरकदुःखानिविविधान्यमिताःसमाः ॥
पापशेषेणपापात्माविन्ध्येजातःपिशाचकः ॥ १५ ॥ इदानींसपिशाचोस्तिनानाक्लेशसमन्वितः ॥ तत्रैववातभुग्दुष्टस्सर्वकष्टवहस्सदा ॥ १६ ॥
सूतउवाच ॥ इतिगौर्य्यावचःश्रुत्वाचंचुलासाशुभव्रता ॥ पतिदुःखेनमहतादुःखितासीत्तदाकिल ॥ १७ ॥ समाधायततश्चित्तंसुप्रणम्यमहेश्वरीम् ॥
पुनःपप्रच्छसानारीहृदयेनविदूयता ॥ १८ ॥ चंचुलोवाच ॥ महेश्वरिमहादेविकृपांकुरुममोपरि ॥ समुद्धरपतिंमेद्यदुष्टकर्मकरंखलम् ॥ १९ ॥ केनो
पायेनमेभर्तापापात्मासकुबुद्धिमान् ॥ सद्गतिंप्राप्नुयादेवितद्वदाशुनमोस्तुते ॥ २० ॥ सूतउवाच ॥ इत्याकर्ण्यवचस्तस्याःपार्वतीभक्तवत्सला ॥
प्रत्युवाचप्रसन्नात्माचंचुलांस्वसखींचताम् ॥ २१ ॥ पार्वत्युवाच ॥ शृणुयाद्यदितेभर्तापुण्यांशिवकथांपराम् ॥ निस्तीर्यदुर्गतिंसर्वांसद्गतिंप्राप्नु
यादिति ॥ २२ ॥ इतिगौर्य्यावचःश्रुत्वामृताक्षरमथादरात् ॥ कृतांजलिर्नतस्कन्धाप्रणनामपुनःपुनः ॥ २३ ॥ तत्कथाश्रवणंभर्तुस्सर्वपापविशुद्धये ॥
[illegible]तिप्राप्तयेचैवप्रार्थयामासतांतदा ॥ २४ ॥ सूतउवाच॥तयामुहुर्मुहुर्नार्य्याप्रार्थ्यमानाशिवप्रिया ॥ गौरीकृपान्वितासीत्सामहेशीभक्तवत्सला॥२५॥
[illegible]तुंबुरुमाहूयशिवसत्कीर्तिगायकम् ॥ प्रीत्यागन्धर्वराजंहिगिरिकन्येदमब्रवीत् ॥ २६ ॥ गिरिजोवाच ॥ हेतुंबुरोशिवप्रीतममामानसकारक ॥

सहानयाविन्ध्यशैलंभद्रंतेगच्छसत्वरम् ॥ २७ ॥ आस्तेतत्रमहाघोरःपिशाचोतिभयंकरः ॥ तद्वृत्तंशृणुसुप्रीत्यादितस्सर्वंब्रवीमिते ॥ २८॥ पुराभवे
पिशाचस्सबिन्दुगाह्वोभवद्विजः ॥ अस्यानार्य्याःपतिर्दुष्टोमत्सख्यावृषलीपतिः ॥ २९ ॥ स्नानसंध्याक्रियाहीनोऽशौचःक्रोधविमूढधीः ॥
दुर्भक्षीसज्जनद्वेषीदुष्परिग्रहकारकः ॥ ३० ॥ हिंसकःशस्त्रधारीचसव्यहस्तेनभोजनी ॥ दीनानांपीडकःक्रूरःपरवेश्मप्रदीपकः ॥ ३१ ॥ चाण्डाला
भिरतोनित्यंवेश्याभोगीमहाखलः ॥ स्वपत्नीत्यागकृत्पापीदुष्टसंगरतस्तदा ॥ ३२ ॥ तेनवेश्याकुसंगेनसुकृतंनाशितंमहत् ॥ वित्तलोभेनमहि
षीनिर्भयाजारिणीकृता ॥ ३३ ॥ आमृत्योस्सदुराचारीकालेननिधनंगतः ॥ ययौयमपुरंघोरंभोगस्थानंहिपापिनाम् ॥ ३४ ॥ तत्रभुक्त्वासदुष्टात्मानर
कानिबहूनिच ॥ इदानींसपिशाचोऽस्तिविंध्येद्रौपापभुक्खलः ॥ ३५ ॥ तस्याग्रेपरमांपुण्यांसर्वपापविनाशिनीम् ॥ दिव्यांशिवपुराणस्यकथाङ्कथयय
त्नतः ॥ ३६ ॥ द्रुतंशिवपुराणस्यकथाश्रवणतःपरात् ॥ सर्वपापविशुद्धात्माहास्यतिप्रेततांचसः ॥ ३७ ॥ मुक्तंचदुर्गतेस्तंवैबिन्दुगंतंपिशाचकम् ॥
मदाज्ञयाविमानेनसमानयशिवान्तिकम् ॥३८॥ सूतउवाच ॥ इत्यादिष्टोमहेशान्यागन्धर्वेन्द्रश्चतुंबुरुः ॥ मुमुदेतीवमनसिभाग्यंनिजमवर्णयत् ॥३९॥
आरुह्यसुविमानंससत्यातत्प्रिययासह ॥ ययौविंध्याचलेसोरंयत्रास्तेनारदप्रियः ॥ ४० ॥ तत्रापश्यत्पिशाचंतंमहाकायंमहाहनुम् ॥ प्रहसन्तंरुदन्तं
चवल्गंतंविकटाकृतिम् ॥ ४१ ॥ बलाज्जग्राहतंपाशैःपिशाचंचातिभीकरम् ॥ तुम्बुरुश्शिवसत्कीर्तिगायकश्चमहाबली ॥ ४२ ॥ अथोशिवपुराण
स्यवाचनार्थंसतुम्बुरुः ॥ निश्चित्यरचनांचक्रेमहोत्सवसमन्विताम् ॥ ४३ ॥ पिशाचंतारितुंदेव्याःशासनात्तुम्बुरुर्गतः ॥ विंध्यंशिवपुराणंसह्यद्रिंश्रा
वयितुंपरम् ॥ ४४ ॥ इतिकोलाहलोजातस्सर्वलोकेषुवैमहान् ॥ तत्रतच्छ्रवणार्थायययुर्देवर्षयोद्भुतम् ॥ ४५ ॥ समाजस्तत्रपरमोद्भुतश्चासीच्छुभा
वहः ॥ तेषांशिवपुराणस्यागतानांश्रोतुमादरात् ॥ ४६ ॥ पिशाचमथतंपाशैर्बद्धासमुपवेश्यच ॥ तुंबुरुर्वल्लकीहस्तोजगौगौरीपतेःकथाम् ॥
॥ ४७ ॥ आरभ्यसंहितामाद्यांसप्तमींसंहितावधि ॥ स्पष्टंशिवपुराणंहिसमाहात्म्यंसमावदत् ॥ ४८ ॥ श्रुत्वाशिवपुराणंतंसप्तसंहितमादरात् ॥
बभूवुःसुकृतार्थास्तेसर्वेश्रोतारएवहि ॥ ४९ ॥ सपिशाचोमहापुण्यंश्रुत्वाशिवपुराणकम् ॥ विधूयकलुषंसर्वंजहौपैशाचकंवपुः ॥
॥ ५० ॥ दिव्यरूपोबभूवाशुगौरवर्णःसितांशुकः ॥ सर्वालंकारदीप्ताङ्गस्त्रिनेत्रश्चन्द्रशेखरः ॥ ५१ ॥ दिव्यंदिव्यवपुर्भूत्वातयासनिजका
न्तया ॥ जगौस्वयमपिश्रीमांश्चरितंपार्वतीपतेः ॥ ५२ ॥ तद्वधूमितिसंदृष्ट्वासर्वेदेवर्षयश्चते ॥ बभूवुर्विस्मिताश्चित्तेपरमानन्दसंयुताः ॥
॥ ५३ ॥ सुकृतार्थामहेशस्यश्रुत्वाचरितमद्भुतम् ॥ स्वंस्वंधामययुःप्रीत्याशंसन्तःशाङ्करंयशः ॥ ५४ ॥ बिन्दुगःसोपिदिव्यात्मासुविमा

नस्थितस्सुखी ॥ स्वकान्तापार्श्वगःश्रीमाञ्छुशुभेतीवखस्थितः ॥ ५५ ॥ अथगायन्महेशस्यसुगुणान्सुमनोहरान् ॥ सतुंबुरुर्जगामाशुसकान्त
इशाङ्कस्म्पदम् ॥ ५६ ॥ सुसत्कृतोमहेशेनपार्वत्याचसबिन्दुगः ॥ स्वगणश्चकृतःप्रीत्यासाऽभवद्गिरिजासखी ॥ ५७ ॥ तस्मिंल्लोकेपरानन्देघनज्योति
षिशाश्वते॥लब्ध्वानिवासमचलंप्रभातेपरमंसुखम् ॥ ५८ ॥ इत्येतत्कथितंपुण्यमितिहासमघापहम्॥शिवाशिवपरानन्दंनिर्मलंभक्तिवर्द्धनम् ॥ ५९ ॥
यइदंशृणुयाद्भक्त्याकीर्तयेद्वासमाहितः ॥ सभुक्त्वाविपुलान्भोगानन्तेमुक्तिमवाप्नुयात् ॥ ६० ॥ इतिश्रीस्कान्देमहापुराणेशिवपुराणमाहात्म्येबिन्दु
गसद्गतिवर्णनोनामपंचमोऽध्यायः ॥ ५ ॥ शौनकउवाच ॥ सूतसूतमहाप्राज्ञव्यासशिष्यनमोस्तुते ॥ धन्यस्त्वंशैववर्योसिवर्णनीयमहद्गुणः ॥ १ ॥
श्रीमच्छिवपुराणस्यश्रवणस्यविधिंवद ॥ येनसर्वलभेच्छ्रोतासम्पूर्णफलमुत्तमम् ॥ २ ॥ सूतउवाच ॥ अथतेसंप्रवक्ष्यामिसंपूर्णफलहेतवे ॥ विधिंशि
वपुराणस्यश्रवणेशौनकमुने ॥३॥ दैवज्ञंचसमाहूयसन्तोष्यचजनान्वितः ॥ मुहूर्त्तंशोधयेच्छुद्धंनिर्विघ्नेनसमाप्तये॥४॥ वार्ताप्रेष्याप्रयत्नेनदेशेदेशेचसा
शुभा ॥ भविष्यतिकथाशैवीआगन्तव्यंशुभार्थिभिः ॥ ५ ॥ दूरेहरिकथाःकाश्चिद्दूरेशंकरकीर्तनाः ॥ स्त्रियःशूद्रादयोयेचबोधस्तेषांभवेद्यतः ॥ ६ ॥
देशेदेशेशांभवायेकीर्तनश्रवणोत्सुकाः ॥ तेषामानयनंकार्यंतत्प्रकारार्थमादरात् ॥७॥ भविष्यतिसमाजोत्रसाधूनांपरमोत्सवः ॥ पारायणेपुराणस्य
शैवस्यपरमाद्भुतः ॥ ८ ॥ श्रीमच्छिवपुराणाह्वरसपानायचादरात् ॥ आयांत्वरंभवन्तश्चकृपयाप्रेमतत्पराः ॥ ९ ॥ नावकाशोयदिप्रेम्णागन्तव्यं
दिनमेककम् ॥ सर्वथागमनंकार्यंदुर्लभाचक्षणस्थितिः ॥ १० ॥ तेषामाह्वानमेवंहिकार्यंसविनयंमुदा ॥ आगतानांचतेषांहिसर्वथाकार्य्यआद
रः ॥ ११ ॥ शिवालयेचतीर्थेवावनेवापिगृहेथवा ॥ कार्यंशिवपुराणस्यश्रवणस्थलमुत्तमम् ॥ १२ ॥ कार्य्यंसंशोधनंभूमेर्लेपनंधातुमण्डनम् ॥ वि
चित्रारचनादिव्यामहोत्सवपुरस्सरम् ॥ १३ ॥ गृहोपस्करमुद्धृत्यनिखिलंतदयोग्यकम् ॥ एकान्तेगृहकोणेचादृश्ययेयत्नान्निवेशयेत् ॥ १४ ॥ कर्तव्यो
मण्डपोऽत्युच्चःकदलीस्तंभमण्डितः ॥ फलपुष्पादिभिस्सम्यग्विष्वग्वैतानराजितः ॥ १५ ॥ चतुर्दिक्षुध्वजारोपस्सपताकस्सुशोभनः ॥ सुभक्तिस्स
र्वथाकार्यासर्वानन्दविधायिनी ॥ १६ ॥ सङ्कल्प्यमासनंदिव्यंशंकरस्यपरात्मनः॥वक्तुश्चापितथादिव्यमासनंसुखसाधनम् ॥ १७ ॥ श्रोतॄणांकल्पनीया
निसुस्थलानियथार्हतः ॥ अन्येषांचस्थलान्येवसाधारणतयामुने ॥ १८ ॥ विवाहेयादृशंचित्तंतादृशंकार्यमेवहि ॥ अन्याचिन्ताविनिर्वार्य्यासर्वाशौ
नकलौकिकी ॥ १९ ॥ उदङ्मुखोभवेद्वक्ताश्रोताप्राग्वदनस्तथा ॥ व्युत्क्रमःपादयोर्ज्ञेयोविरोधोनास्तिकश्चन ॥ २० ॥ अथवापूर्वदिग्ज्ञेयापूज्यपू
जकमध्यतः ॥ अथवासंमुखेवक्तुःश्रोतॄणामाननस्पृहः ॥ २१ ॥ व्यासासनसमारूढोयदापौराणिकोद्विजः ॥ असमाप्तौप्रसंगस्यनमस्कुर्यान्नकस्य

चित् ॥ २२ ॥ बालोयुवाथवृद्धोवादरिद्रोवापिदुर्बलः ॥ पुराणज्ञस्सदावंद्यःपूज्यश्चसुकृतार्थिभिः ॥ २३ ॥ नीचबुद्धिंनकुर्वीतपुराणज्ञेकदाचन ॥
यस्यवक्त्रोद्गतावाणीकामधेनुश्शरीरिणाम् ॥ २४ ॥ गुरुवस्सन्तिबहवोजन्मतोगुणतश्चवै ॥ परोगुरुःपुराणज्ञस्तेषांमध्येविशेषतः ॥ २५ ॥
भवकोटिसहस्रेषुभूत्वाभूत्वावसीदताम् ॥ योददातिपरांमुक्तिंकोन्यस्तस्मात्परोगुरुः ॥ २६ ॥ पुराणज्ञश्शुचिर्दक्षःशान्तोविजितमत्सरः ॥
साधुःकारुण्यवान्वाग्मीवदेत्पुण्यकथामिमाम् ॥ २७ ॥ आसूर्योदयमारभ्यसार्द्धत्रिप्रहरान्तकम् ॥ कथाशिवपुराणस्यवाच्यासम्यक्सुधी
मता ॥ २८ ॥ येधूर्तायेचदुर्वृत्तायेचान्येविजिगीषवः ॥ तेषांकुटिलवृत्तीनामग्रेनैववदेत्कथाम् ॥ २९ ॥ नदुर्जनसमाकीर्णेनतुदस्युसमावृते ॥ देशेन
धूर्तसदनेवदेत्पुण्यकथामिमाम् ॥ ३० ॥ कथाविरामःकर्त्तव्योमध्याह्नेहिमुहूर्तकम् ॥ मलमूत्रोत्सर्जनार्थंतत्कथाकीर्तिनान्नरैः ॥ ३१ ॥ वक्त्राक्षौ
रंहिसंकार्यंदिनादर्वाग्व्रताप्तये ॥ कार्यंसंक्षेपतोनित्यकर्मसर्वंप्रयत्नतः ॥ ३२ ॥ वक्तुःपार्श्वेसहायार्थमन्यःस्थाप्यस्तथाविधः ॥ पण्डितःसंशयच्छेत्ता
लोकबोधनतत्परः ॥ ३३ ॥ कथाविघ्नविनाशार्थंगणनाथंप्रपूजयेत् ॥ कथाधीशंशिवंभक्त्यापुस्तकंचविशेषतः ॥ ३४ ॥ कथांशिवपुराणस्यशृणु
यादादरात्सुधीः ॥ श्रोतासुविधिनाशुद्धः शुद्धचित्तःप्रसन्नधीः ॥ ३५ ॥ अनेककर्मविभ्रान्तःकामादिषड्विकारवान् ॥ स्त्रैणः पाखण्डवादीचवक्ता
श्रोतानपुण्यभाक् ॥३७॥ लोकचिन्ताधनागारपुत्रचिंतांव्युदस्यच ॥ कथाचित्तःशुद्धमतिस्सलभेत्फलमुत्तमम् ॥३७॥ श्रद्धाभक्तिसमायुक्तानान्यका
र्येषुलालसाः ॥ वाग्यताश्शुचयोऽव्यग्राःश्रोतारःपुण्यभागिनः ॥ ३८ ॥ अभक्तायेकथांपुण्यांशृण्वन्तीमांनराधमाः ॥ तेषांश्रवणजंनास्तिफलंदुःप्र
भवेभवे ॥ ३९ ॥ असम्पूज्यपुराणंयेयथाशक्त्याह्युपायनैः ॥ शृण्वन्तीमांकथांमूढाःस्युर्दरिद्रानपावनाः ॥ ४० ॥ कथायांकथ्यमानायांगच्छन्त्य
न्यत्रयेनराः ॥ भोगान्तरेप्रणश्यन्तितेषांदारादिसम्पदः ॥ ४१ ॥ सोष्णीषमस्तकायेचशृण्वन्तीमांकथांनराः ॥ तत्पुत्राश्चप्रजायन्तेपापिनःकुलदूष
काः ॥ ४२ ॥ ताम्बूलंभक्षयन्तोयेशृण्वन्तीमांकथांनराः ॥ स्वविष्ठांखादयन्त्येतान्नरकेयमकिंकराः ॥ ४३ ॥ येचतुङ्गासनारूढाःशृण्वन्तीमांक
थांनराः ॥ भुक्त्वातेनरकान्सर्वांस्ततःकाकाभवन्तिह ॥ ४४ ॥ येवीराद्यासनारूढाःशृण्वन्तीमांकथांशुभाम् ॥ भुक्त्वातेनरकान्सर्वान्विषवृक्षाभवन्ति
वै ॥ ४५ ॥ असम्प्रणम्यवक्तारंकथांशृण्वन्तियेनराः ॥ भुक्त्वातेनरकान्सर्वान्भवंत्यर्जुनपादपाः ॥ ४६॥ अनातुराश्शयानायेशृण्वंतीमांकथांनराः॥भु
क्त्वातेनरकान्सर्वान्भवन्त्यजगरादयः ॥ ४७ ॥ वक्तुस्समासनारूढायेशृण्वन्तिकथामिमाम् ॥ गुरुतल्पसमंपापंप्राप्यतेनारकैस्सदा ॥ ४८ ॥ येनिन्द
न्तिचवक्तारंकथांचेमांसुपावनीम् ॥ भवन्तिशुनकाभुक्त्वादुःखंजन्मशतांहिते ॥४९॥ कथायांवर्तमानायांदुर्वादंयेवदन्तिहि ॥ भुक्त्वातेनरकान्घोरान्भ

वंतिगर्दभास्ततः ॥ ५० ॥ कदाचिन्नापिशृण्वन्तिकथामेतांसुपावनीम् ॥ भुक्त्वातेनरकान्घोरान्भवंतिवनशूकराः ॥ ५१ ॥ कथायांकीर्त्यमानायां
विघ्नंकुर्वंतियेखलाः ॥ कोट्यब्दंनरकान्भुक्त्वाभवंतिग्रामशूकराः ॥ ५२ ॥ एवंविचार्यशुद्धात्माश्रोतावक्तृसुभक्तिमान् ॥ कथाश्रवणहेतोर्हिभवेत्प्रीत्यो
द्यतःसुधीः ॥ ५३ ॥ कथाविघ्नविनाशार्थंगणेशंपूजयेत्पुरा ॥ नित्यंसंपाद्यसंक्षेपात्प्रायश्चित्तंसमाचरेत् ॥ ५४ ॥ नवग्रहांश्चसम्पूज्यसर्वतोभद्रदैवतम् ॥
शिवपूजोक्तविधिनापुस्तकंतत्समर्चयेत् ॥ ५५ ॥ पूजनांतेमहाभक्त्याकरौबद्ध्वाविनीतकः ॥ साक्षाच्छिवस्वरूपस्यपुस्तकस्यस्तुतिंचरेत् ॥ ५६ ॥
श्रीमच्छिवपुराणाख्यःप्रत्यक्षस्त्वंमहेश्वर ॥ श्रवणार्थंस्वीकृतोऽसिसन्तुष्टोभववैमयि ॥ ५७ ॥ मनोरथोमदीयोयंकर्तव्यस्सफलस्त्वया ॥ निर्विघ्नेनसु
संपूर्णंकथाश्रवणमस्तुमे ॥ ५८ ॥ भवाब्धिमग्नंदीनंमांसमुद्धरभवार्णवात् ॥ कर्मग्राहगृहीताङ्गंदासोहंतवशंकर ॥ ५९ ॥ एवंशिवपुराणंहिसाक्षाच्छि
वस्वरूपकम् ॥ स्तुत्वादीनवचःप्रोच्यवक्तुःपूजांसमारभेत् ॥ ६० ॥ शिवपूजोक्तविधिनावक्तारंचसमर्चयेत् ॥ सपुष्पवस्त्रभूषाभिर्धूपदीपादिनार्चये
त् ॥६१॥ तदग्रेशुद्धचित्तेनकर्तव्योनियमस्तदा ॥ आसमाप्तियथाशक्त्याधारणीयस्सुयत्नतः॥६२॥ व्यासरूपप्रबोधाग्र्यशिवशास्त्रविशारद ॥ एतत्क
थाप्रकाशेनमदज्ञानंविनाशय॥६३॥वरणंपंचविप्राणांकार्यंवैकस्यभक्तितः ॥ शिवपंचार्णमन्त्रस्यजपःकार्य्यश्चतैस्सदा ॥ ६४ ॥ इत्युक्तस्तेमुनेभक्त्या
कथाश्रवणसद्विधिः ॥ श्रोतॄणांचैवभक्तानांकिमन्यच्छ्रोतुमिच्छसि ॥ ६५ ॥ इतिश्रीस्कान्देमहापुराणेशिवपुराणमाहात्म्येश्रवणविधिवर्णनोनामषष्ठोऽ
ध्यायः ॥ ६ ॥ शौनकउवाच ॥ सूतसूतमहाप्राज्ञधन्यस्त्वंशैवपुङ्गव ॥ श्राविवेतेयंकथास्माकमद्भुतेयंशुभावहा ॥ १ ॥ पुंसांशिवपुराणस्यश्रवणं
व्रतिनांमुने ॥ सर्वलोकहितार्थायदययानियमंवद ॥ २ ॥ सूतउवाच ॥ नियमंशृणुसद्भक्त्यापुंसांतेषांचशौनक ॥ नियमात्सत्कथांश्रुत्वानिर्विघ्नफल
मुत्तमम् ॥ ३ ॥ पुंसांदीक्षाविहीनानांनाधिकारःकथाश्रवे ॥ श्रोतुकामैरतोवक्तुर्दीक्षाग्राह्याचतैर्मुने ॥ ४ ॥ ब्रह्मचर्य्यमधस्सुप्तिःपत्रावल्यांचभोजनम् ॥
कथासमाप्तौभुक्तिंचकुर्यान्नित्यंकथाव्रती ॥ ५ ॥ आसमाप्तपुराणंहिसमुपोष्यसुशक्तिमान् ॥ शृणुयाद्भक्तितःशुद्धःपुराणंशैवमुत्तमम् ॥ ६ ॥
घृतपानंपयःपानंकृत्वावाशृणुयात्सुखम् ॥ फलाहारेणवाश्राव्यमेकभुक्तेनवाहितत् ॥ ७ ॥ एकवारंहविष्यान्नंभुंज्यादेतत्कथाव्रती ॥
सुखसाध्यंयथास्यात्तच्छ्रवणंकार्यमेवच ॥ ८ ॥ भोजनंसुकरंमन्येकथासुश्रवणप्रदम् ॥ नोपवासोवरश्चेत्स्यात्कथाश्रवणविघ्नकृत् ॥ ९ ॥
गरिष्ठंद्विदलंदग्धंनिष्पावांश्चमसूरिकाम् ॥ भावदुष्टंपर्युषितंजग्ध्वानित्यंकथाव्रती ॥ १० ॥ वार्ताकंचकलिंदंचचिचण्डंमूलकन्तथा ॥
कूष्माण्डंनालिकेरंचमूलंजग्ध्वाकथाव्रती ॥ ११ ॥ पलाण्डुंलशुनंहिंगुंगृंजनंमादकंहितत् ॥ वस्तून्यामिषसंज्ञानिवर्जयेद्यःकथाव्रती ॥ १२ ॥

कामादिषड्विकारंचद्विजानांचविनिन्दनम् ॥ पतिव्रतासतांनिन्दांवर्जयेद्यःकथाव्रती ॥ १३ ॥ रजस्वलांनपश्येच्चपतितांनवदेत्कथाम् ॥ द्विज
द्विषोवेदवर्ज्यान्नवदेद्यःकथाव्रती ॥ १४ ॥ सत्यंशौचंदयांमौनमार्जवंविनयन्तथा ॥ औदार्यंमनसश्चैवकुर्यान्नित्यंकथाव्रती ॥ १५ ॥ निष्कामश्चस
कामश्चनियमाच्छृणुयात्कथाम् ॥ सकामःकाममाप्नोतिनिष्कामोमोक्षमाप्नुयात् ॥ १६ ॥ दरिद्रश्चक्षयीरोगीपापीनिर्भाग्यएवच ॥ अनपत्यो
पिपुरुषश्शृणुयात्सत्कथामिमाम् ॥ १७ ॥ काकवन्ध्यादयस्सप्तविधाअपिखलस्त्रियः ॥ स्रवद्गर्भाचयानारीताभ्यांश्राव्याकथापरा ॥ १८ ॥ सर्वे
षांश्रवणंकार्यंस्त्रीभिःपुंभिश्चयत्नतः ॥ एतच्छिवपुराणस्याविधिनाचकथांमुने ॥ १९ ॥ एतच्छिवपुराणस्यपारायणादिनानिवै ॥ अत्युत्तमानिबोध्या
निकोटियज्ञसमानिच ॥ २० ॥ एतेषुविधिनादत्तंयदल्पमपिवस्तुहि ॥ दिवसेषुवरिष्ठेषुतदक्षय्यफलंभवेत् ॥ २१ ॥ एवंकृत्वाव्रतविधिंश्रुत्वेमांपरमां
कथाम् ॥ परानन्दयुतःश्रीमानुद्यापनमथाचरेत् ॥ २२ ॥ एतदुद्यापनविधिश्चतुर्दश्यास्समोमतः ॥ कार्यस्तद्वद्धनाढ्यैश्चतदुक्तफलकांक्षिभिः ॥
॥ २३ ॥ अकिंचनेषुभक्तेषुप्रायोनोद्यापनग्रहः ॥ श्रवणेनैवपूतास्तेनिष्कामाश्शाम्भवामताः ॥ २४ ॥ एवंशिवपुराणस्यपारामणमखोत्सवे ॥ समाप्ते
श्रोतृभिर्भक्त्यापूजाकार्याप्रयत्नतः ॥ २५ ॥ शिवपूजनवत्सम्यक्पुस्तकस्यपुरोमुने ॥ पूजाकार्यासुविधिनावक्तुश्चतदनन्तरम् ॥ २६ ॥ पुस्तका
च्छादनार्थंहिनवीनंचासनंशुभम् ॥ समर्चयेद्दृढंदिव्यंबन्धनार्थंचसूत्रकम् ॥ २७ ॥ पुराणार्थंप्रयच्छन्तियेसूत्रंवसनंनवम् ॥ भोगिनोज्ञानसम्पन्ना
स्तेभवंतिभवेभवे ॥२८॥ वक्रेदद्यान्महार्हाणिवस्तूनिविविधानिच ॥ वस्त्रभूषणपात्राणिदिव्यंबहुविशेषतः ॥ २९ ॥ आसनार्थंप्रयच्छंतिपुराणस्यचये
नराः॥कम्बलाजिनवासांसिमंचंफलकमेवच ॥ ३० ॥ स्वर्गलोकंसमासाद्यभुक्त्वाभोगान्यथेप्सितान् ॥ स्थित्वाब्रह्मपदेकल्पंयान्तिशैवम्पदन्ततः ॥
॥ ३१ ॥ एवंकृत्वाविधानेनपुस्तकस्यप्रपूजनम् ॥ वक्तुश्चसुविशार्दूलमहोत्सवपुरस्सरम् ॥ ३२ ॥ सहायार्थंस्थापितस्यपण्डितस्यप्रपूजनम् ॥
कुर्यात्तदनुसारेणकिंचिदूनंधनादिभिः ॥ ३३ ॥ समागतेभ्योविप्रेभ्योदद्यादन्नंधनादिकम् ॥ महोत्सवःप्रकर्तव्योगीतैर्वाद्यैश्चनर्तनैः ॥ ३४ ॥ विरक्त
श्चभवेच्छ्रोतापरेहनिविशेषतः ॥ गीतावाच्याशिवेनोक्तारामचन्द्राययामुने ॥ ३५ ॥ गृहस्थश्चेद्भवेच्छ्रोताकर्तव्यस्तेनधीमता ॥ होमःशुद्धेनह
विषाकर्मणस्तस्यशान्तये ॥ ३६ ॥ रुद्रसंहितयाहोमःप्रतिश्लोकेनवामुने ॥ गायत्र्यास्तन्मयत्वाच्चपुराणस्यास्यतत्त्वतः ॥ ३७ ॥ अथवामूलमंत्रेण
पंचवर्णेनशैवतः ॥ होमाशक्तोबुधोहोम्यंहविर्दद्याद्द्विजायतत् ॥ ३८ ॥ दोषयोःप्रशमार्थंचन्यूनताधिकताख्ययोः ॥ पठेच्चशृणुयाद्भक्त्याशिवनामसह
स्रकम् ॥ ३९ ॥ तेनस्यात्सफलंसर्वंसफलंनात्रसंशयः ॥ यतोनास्त्यधिकंतस्मात्त्रैलोक्येवस्तुकिंचन ॥ ४० ॥ एकादशमितान्विप्रान्भोजयेन्मधु

पायसैः ॥ दद्यात्तेभ्योदक्षिणांचव्रतपूर्णत्वसिद्धये ॥ ४१ ॥ शक्तौपलत्रयमितस्वर्णेनसुन्दरंमुने ॥ सिंहंविधायतत्रास्यपुराणस्यशुभाक्षरम् ॥ ४२ ॥ लेखितंलिखितंवापिसंस्थाप्यविधिनापुमान् ॥ सम्पूज्यवाहनाद्यैश्चह्युपचारैस्सदक्षिणाम् ॥ ४३ ॥ वस्त्रभूषणगन्धाद्यैःपूजिताययतात्मने ॥ आचार्यायसुधीर्दद्याच्छिवसन्तोषहेतवे ॥४४॥ तेनदानप्रभावेणपुराणस्यास्यशौनक ॥ संप्राप्यानुग्रहंशैवंमुक्तःस्याद्भवबन्धनात् ॥४५॥ एवंकृतेविधानेचश्रीमच्छिवपुराणकम् ॥ संपूर्णफलदंस्याद्वैभुक्तिमुक्तिप्रदायकम् ॥ ४६ ॥ इतितेकथितंसर्वंकिंभूयःश्रोतुमिच्छसि ॥ श्रीमच्छिवपुराणस्यमाहात्म्यंसर्वकामदम् ॥ ४७ ॥ श्रीमच्छिवपुराणन्तुपुराणतिलकंस्मृतम् ॥ महच्छिवप्रियंरम्यंभवरोगनिवारणम् ॥ ४८ ॥ येजन्मभाजःखलुजीवलोकेयेवैसदाध्यायतिविश्वनाथम् ॥ वाणीगुणान्स्तौतिकथांशृणोतिश्रोत्रद्वयंतेभवमुत्तरन्ति ॥ ४९ ॥ सकलगुणविभेदैर्नित्यमस्पष्टरूपंजगतिचबहिरन्तर्भासमानंमहिम्ना ॥ मनसिचबहिरन्तर्वाङ्मनोवृत्तिरूपंपरमशिवमनन्तानन्दसान्द्रम्प्रपद्ये ॥ ५० ॥ इतिश्रीस्कान्देमहापुराणेसनत्कुमारसंहितायांश्रीशिवपुराणश्रवणव्रतिनांविधिनिषेधपुस्तकवक्तृपूजनवर्णनंनामसप्तमोऽध्यायः ॥७॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

इदं शिवमहापुराणमाहात्म्यं मुम्बय्यां "श्रीवेंकटेश्वर" मुद्रणालयाधिपतिना खेमराज श्रीकृष्णदास इत्यनेन—स्वकीये "श्रीवेंकटेश्वर" मुद्रणागारे मुद्रितम् ।

संवत् १९५३, शके १८१८, सन् १८९६.

श्रीगणेशाय नमः ॥ ॥ श्रीसांबसदाशिवायनमः ॥ ॥ श्रीगुरुभ्योनमः ॥ ॥ श्रीसच्चिदानंदपरमात्मनेनमः ॥ ॥ जगतःपितरंशंभुं
जगतोमातरंशिवाम् ॥ तत्पुत्रंचगणाधीशंनत्वैतद्वर्णयाम्यहम् ॥ १ ॥ वागीशायस्यवदनेलक्ष्मीर्यस्यचवक्षसि ॥ यस्यास्तेहृदयेसंवित्तंनृ
सिंहमहंभजे ॥ २ ॥ एकदामुनयःसर्वेनैमिषारण्यवासिनः ॥ पप्रच्छुःपरयाभक्त्याव्यासशिष्यंगुणान्वितम् ॥ ३ ॥ ऋषयऊचुः ॥ सूत
सूतमहाभागचिरंजीवसुखीभव ॥ पिबंतस्त्वन्मुखांभोजाच्च्युतंज्ञानामृतंवयम् ॥ ४ ॥ अवितृप्ताःपुनःकिंचित्प्रष्टुमिच्छामहेऽनघ ॥ व्यासप्रसा
दात्सर्वज्ञोयातोऽसिकृतकृत्यताम् ॥ ५ ॥ नाज्ञातंविद्यतेकिंचिद्भूतंभव्यंभवच्चयत् ॥ गुरोःकृपांसमासाद्यसर्वंसार्थीकृतंत्वया ॥ ६ ॥ कथयत्वं
प्रसादेनशिवरूपमनुत्तमम् ॥ तत्पूजांपरमांदिव्यांचरित्राण्यप्यनेकशः ॥ ७ ॥ अगुणोगुणतांयातःकथंलोकेमहेश्वरः ॥ शिवतत्त्वंवयंसर्वेनजा
नीमोविचारतः ॥ ८ ॥ सृष्टेःपूर्वंकथंदेवस्तन्मध्येचकथंपुनः ॥ तदंतेचकथंतिष्ठेच्छंकरोलोकशंकरः ॥ ९ ॥ कथंप्रसन्नतांयातिप्रसन्नःकिंफलंपुनः ॥
यच्छतेसर्वलोकेभ्यःसर्वंकथयसुव्रत ॥ १० ॥ सद्यःप्रसन्नोभगवान्भवतीत्यनुशुश्रुम ॥ एतत्सर्वंतथाचान्यत्कथनीयंत्वयाऽनघ ॥ ११ ॥ इतिपृष्ट
स्तथातैर्हिश्रुत्वाहर्षसमन्वितः ॥ उवाचवचनंतत्रऋषीणांशृण्वतांतदा ॥ १२ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांपरिपाटिकानामप्रथमोऽध्या
यः ॥ १ ॥ ॥ सूतउवाच ॥ सम्यक्पृष्टंभवद्भिस्तुयथावत्कथयाम्यहम् ॥ कपोलकल्पितंनैवकथयिष्येमुनीश्वराः ॥ १ ॥ भवद्भिःपृच्छ्यतेयद्वत्तत्तथा
नारदेनवै ॥ पृष्टंपित्रेस्वयंतत्रज्ञानायपरमात्मने ॥ २ ॥ कस्मिंश्चित्समयेविप्रानारदोमुनिसत्तमः ॥ पृथिव्यामटनंकृत्वाशिवरूपाण्यनेकशः ॥ ३ ॥
दृष्ट्वानत्वाचसंपूज्यतत्त्वंज्ञातुंमहात्मनः ॥ पप्रच्छब्रह्मणेतच्चशिवरूपंविचिंतयन् ॥ ४ ॥ श्रीनारदउवाच ॥ ब्रह्मन्ब्रह्मविदांश्रेष्ठपितामहजगत्प्रभो ॥
त्वत्प्रसादान्मयासर्वंविष्णोर्माहात्म्यमुत्तमम् ॥ ५ ॥ भक्तिमार्गंज्ञानमार्गंतपोमार्गंसुदुष्करम् ॥ दानमार्गंचतीर्थानांमार्गंचश्रुतवानहम् ॥ ६ ॥ नज्ञा
तंशिवतत्त्वंचपूजाचविधिवत्क्रमात् ॥ चरित्रंविविधंतस्यनिवेदयममप्रभो ॥ ७ ॥ ससंदिग्धंकथंचान्यंविहायपरमेष्ठिनम् ॥ पृच्छेयंपरमंतत्त्वंनैर्गु
ण्यंपरमेश्वरम् ॥ ८ ॥ तस्मात्त्वयाचवक्तव्यंमाहात्म्यंशंकरस्यच ॥ लोकानामुपकारार्थंव्रतानिचशिवस्यच ॥ ९ ॥ संतुष्टश्चैवभक्तेभ्यःकिंकिंयच्छ
तिवैफलम् ॥ तदुत्पत्तिंविवाहंचगिरिजायाःसविस्तरम् ॥ १० ॥ बहुभ्यश्चश्रुतंपूर्वंनतृप्तोऽस्मिजगत्प्रभो ॥ इतिश्रुत्वावचस्तस्यनारदस्यांगजस्य
च ॥ ११ ॥ उवाचवचनंतत्रब्रह्मालोकपितामहः ॥ १२ ॥ ब्रह्मोवाच ॥ भोब्रह्मन्त्साधुपृष्टोऽहंलोकानांहितकाम्यया ॥ यच्छ्रुत्वासर्वलोकानांसर्वपाप
क्षयोभवेत् ॥ १३ ॥ तत्त्वंनैवमयासम्यग्विष्णुनाप्रभविष्णुना ॥ शिवस्यपरमंब्रह्मन्नज्ञातंरूपमद्भुतम् ॥ १४ ॥ इदंदृश्यंयदानासीत्सदसदात्मकंच

यत् ॥ तदाब्रह्ममयंतेजोव्यातिरूपंचसंततम् ॥ १५ ॥ नस्थूलंनचसूक्ष्मंचशीतंनोष्णंतुपुत्रक ॥ आद्यंतरहितंदिव्यंसत्यंज्ञानमनंतकम् ॥ १६ ॥
योगिनोंतरदृष्ट्याहियंध्यायंतिनिरंतरम् ॥ तद्रूपंसकलंह्यासीज्ज्ञानविज्ञानदंमहत् ॥ १७ ॥ कियताचैवकालेनतस्येच्छासमपद्यत ॥ प्रकृतिर्नामसा
प्रोक्तामूलकारणमित्युत ॥ १८ ॥ अष्टौभुजाश्चतस्यासन्विचित्रवसनाशुभा ॥ राकाचंद्रसहस्रस्यवदनंतस्यनित्यशः ॥ १९ ॥ नानाभरणसंयुक्ता
नानागतिसमन्विता ॥ नानायुधधरादेवीप्रफुल्लपंकजाक्षिका ॥ २० ॥ अचिंत्यतेजसायुक्तासर्वयोनिसमन्विता ॥ एकाकिनीयदामायासंयोगाच्चाप्य
नेकिका ॥ २१ ॥ यतोवैप्रकृतिर्देवीततोवैपुरुषस्तदा ॥ उभौचमिलितौतत्रविचारेतत्परौमुने ॥ २२ ॥ आवाभ्यांकिंप्रकर्तव्यंध्यायतःस्मपरस्परम् ॥
एतस्मिन्नंतरेवाणीसमुत्पन्नागुणाशुभा ॥ २३ ॥ तपश्चैवप्रकर्तव्यंसंशयस्यापनुत्तये ॥ ततस्ताभ्यांचतच्छ्रुत्वातपस्तप्तंसुदारुणम् ॥ २४ ॥
कियत्कालंतदाब्रह्मन्ध्यानमार्गपरायणौ ॥ प्रकृतिःपुरुषश्चैवप्रबुद्धौध्यानमार्गतः ॥ २५ ॥ प्रबुद्धचविस्मयंप्राप्तौकियत्तत्तमहोइति ॥ तदंगाज्जल
धाराहिसंजाताविविधामुने ॥ २६ ॥ ताभिर्व्याप्तंचसकलंब्रह्मरूपमभूज्जलम् ॥ अनंतंह्यभवत्तच्चस्पर्शनात्पापनाशनम् ॥ २७ ॥ तदाश्रांतश्चपुरुष
स्तयासहजलेस्वयम् ॥ सुष्वापपरमप्रीतोबहुकालंतयासह ॥ २८ ॥ नारायणेतिवैनामजातंतस्यमहात्मनः ॥ नारायणीतिवैनामप्रकृतेःसम्मतंमुने ॥
॥ २९ ॥ नान्यत्किंचित्तदाह्यासीत्प्रकृतिंपुरुषंविना ॥ एतस्मिन्नंतरेब्रह्मंस्तत्वान्यासन्महात्मनः ॥ ३० ॥ प्रकृतेश्चमहानासीन्महतश्चगुणास्त्रयः ॥
अहंकारस्ततोजातस्ततस्तन्मात्रकाःपराः ॥ ३१ ॥ पंचभूतान्यतोप्यासञ्ज्ञानविज्ञानकान्यतः ॥ तत्वानामितिसंख्यानमुच्यतेऋषिसत्तम ॥ ३२ ॥
जडात्मकंचतत्सर्वंप्रकृतिंपुरुषंविना ॥ ताभ्यामेकीकृतंतच्चचतुर्विंशतिसंज्ञितम् ॥ ३३ ॥ तद्गृहीत्वाचसुष्वापजलेब्रह्मस्वरूपिणि ॥ सुप्तेनारायणेदे
वेनाभौपंकजमुत्तमम् ॥ ३४ ॥ अनंतपत्रिकायुक्तंकर्णिकारसमन्वितम् ॥ अनंतयोजनायाममनंतोच्छ्रायसंयुतम् ॥ ३५ ॥ कोटिसूर्यप्रतीकाशंसुंदरं
तत्वसंयुतम् ॥ तस्मात्पद्मात्ततोजज्ञेपुत्रोऽहंहेमगर्भकः ॥ ३६ ॥ तन्मायामोहितश्चाहंनाविदंकमलंविना ॥ कोहंवाकुतआयातःकिंकार्यंतुमदीयकम् ॥
॥ ३७ ॥ कस्यपुत्रोऽहमुत्पन्नःकेनैवनिर्मितोह्यहम् ॥ इतिसंशयमापन्नंनधीर्मासमपद्यत ॥ ३८ ॥ किमर्थंमोहमायातोयत्रवैकमलस्थलम् ॥ मत्क
र्ताचभवेत्तत्रभविष्यतिनसंशयः ॥ ३९ ॥ इतिबुद्धिंसमास्थायकमलादवरोहयन् ॥ नालेनालेगतस्तत्रवर्षाणांशतकंमुने ॥ ४० ॥ नलब्धंतुमयात
त्कमलस्थानमुत्तमम् ॥ संशयंतुपुनःप्राप्तःकमलंगंतुमुत्सुकः ॥ ४१ ॥ आरुरोहाथकमलंनालमार्गेणवैमुने ॥ कुड्मलंकमलस्याथलब्धवान्नविमो
हितः ॥ ४२ ॥ नालमार्गेतुभ्रमतोगतंवर्षशतंपुनः ॥ क्षणमात्रंतदातत्रश्रांतोऽतिष्ठंविमोहितः ॥ ४३ ॥ तदावाणीसमुत्पन्नातपेतिपरमाशुभा ॥ त
च्छ्रुत्वातुतपस्तप्तंद्वादशाब्दंप्रयत्नतः ॥ ४४ ॥ तदावैभगवान्विष्णुश्चतुर्बाहुःसुलोचनः ॥ ममैवानुग्रहंकर्तुंपीतांबरधरःशुभः ॥ ४५ ॥ शंखचक्रायु

धस्तत्रगदापद्मधरःपरः ॥ घनश्यामःसुसंतुष्टःप्रसन्नमुखपंकजः ॥ ४६ ॥ मुकुटादिभूषणैर्युक्तःकोटिकंदर्पसम्मतः ॥ प्रकृत्याजनितःसोऽथमयादृष्टः
पुरोमुने ॥ ४७ ॥ तंदृष्ट्वासुंदरंरूपंविस्मयंपरमंगतः ॥ कालात्माकांचनाभश्चशुक्लकृष्णश्चनिर्गुणः ॥ ४८ ॥ नारायणोमहाबाहुःसर्वात्मासदसन्मयः॥
त थाभूतमहंदृष्ट्वाहर्षितोह्यभवंतदा ॥ ४९ ॥ माययामोहितस्तस्यतमवोचममर्षितः ॥ कस्त्वंवदेतिहस्तेनसमुत्थाप्यसनातनम् ॥ ५० ॥ प्रबुद्धोभ
गवांस्तत्रकथंकथयसुव्रत ॥ इत्येतद्वचनंश्रुत्वानामतोभगवान्हरिः ॥ ५१ ॥ सत्वेनपरमोविष्णुर्निर्मातातवसुव्रत ॥ वत्सजानीहिभद्रंतेसत्यमेतद्व
दाम्यहम् ॥ ५२ ॥ तस्यतद्वचनंश्रुत्वास्मितपूर्वमहामुने ॥ माययामोहितस्तंवैपरिभत्स्र्यपुनस्तदा ॥५३॥ भाषसेवत्सवत्सेतिसर्गसंसारपालकम् ॥
मामाहाल्पस्मितंकृत्वागुरुःशिष्यमिवानघ ॥ ५४ ॥ कर्तारंजगतांसाक्षात्प्रकृतेश्चप्रवर्तकम् ॥ सनातनमजंविष्णुंविरंचेविश्वसंभवम् ॥ ५५ ॥
विश्वात्मानंविधातारंधातारंपंकजेक्षणम् ॥ किमर्थंभाषसेमोहाद्वक्तुमर्हसिसत्वरम् ॥ ५६ ॥ सोपिमामाहजगतांकर्तात्वमितिलोकय ॥ भर्ताहर्ताभ
वानंगादवतीर्णोममाव्ययात् ॥ ५७ ॥ विस्मृतोऽसिजगन्नाथंनारायणमनामयम् ॥ पुरुषंपरमात्मानंकर्तारंजगतांप्रभुम् ॥ ५८ ॥ विष्णुमच्युतमी
शानंविश्वस्यप्रभवोद्भवम् ॥ तवाऽपराधोनास्त्यत्रममायाकृतंत्विदम् ॥ ५९ ॥ शृणुसत्यंपरंब्रह्मन्त्सर्वंतन्ममसंभवम् ॥ मयासृष्टंपुराव्यक्तंचतुर्विं
शतितत्वकम् ॥ ६० ॥ इतिश्रुत्वावचस्तस्यब्रह्माक्रोधान्वितस्तदा ॥ कोवात्वमितिसंभत्स्र्यकश्चित्कर्ताभवेत्तव ॥ ६१ ॥ माययामोहितश्चाहंयुद्धं
चक्रेसुदारुणम् ॥ विवादशमनार्थंचप्रबोधार्थंद्वयोरपि ॥ ६२ ॥ ज्योतिर्लिंगंतदोत्पन्नमावयोर्मध्यअद्भुतम् ॥ ज्वालामालासहस्राढ्यंकालानलचयोप
मम् ॥ ६३ ॥ क्षयवृद्धिविनिर्मुक्तमादिमध्यांतवर्जितम् ॥ अनौपम्यमनिर्दिष्टमव्यक्तंविश्वसंभवम् ॥ ६४ ॥ तस्यज्वालासहस्रेणमोहितोभगवान्ह
रिः ॥ मोहितंप्राहमामत्रकिमर्थंस्पर्धसेऽधुना ॥ ६५ ॥ आगतोत्रतृतीयोऽपितिष्ठतांयुद्धमावयोः ॥ कुतएवात्रसंभूतंपरीक्षावोऽग्निसन्निभम् ॥ ६६ ॥
वायुवेगसमोभूत्वागच्छोर्ध्वंविश्वसंभव ॥ भवानूर्ध्वंप्रयत्नेनगंतुमर्हसिसत्वरम् ॥ हंसरूपंत्वयाधार्यंवाराहंचमयापुनः ॥ ६७ ॥ एवंव्याहृत्यविश्वा
त्मास्वरूपमकरोत्तदा ॥ हंसश्चाहंतदाजातःसुंदरःपक्षसंयुतः ॥ ६८ ॥ तदाप्रभृतिमामाहुर्हंसहंसविराडिति ॥ हंसहंसेतियोब्रूयात्सोहंसोऽहंभविष्य
ति ॥ ६९ ॥ सुश्वेतोह्यनिलप्रख्योविश्वतःपक्षसंयुतः ॥ मनोऽनिलजवोभूत्वाततश्चोर्ध्वंगतःपुरा ॥ ७० ॥ नारायणोऽपिविश्वात्मासुश्वेतोह्यभत्तदा ॥
दशयोजनविस्तीर्णमायतंशतयोजनम् ॥ ७१ ॥ मेरुपर्वतवर्ष्माणंतीक्ष्णनखाग्रदंष्ट्रिणम् ॥ कालादित्यसमाख्यंचदीर्घघोणंमहास्वनम् ॥ ७२ ॥ ह्र
स्वपादंविचित्रांगंजैत्रंदृढमनोजवम् ॥ वाराहंरूपमास्थायगतवांस्तदधोजवात् ॥ ७३ ॥ एवंवर्षसहस्रंतुचरन्विष्णुरधोगतः ॥ तदाप्रभृतिलोकेषुश्वे

तवाराहकल्पकः ॥ ७४ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांज्योतिर्लिंगप्रादुर्भाववर्णनंनामद्वितीयोऽध्यायः ॥ २ ॥ ॥ सूतउवाच ॥ ततःपरं
चयज्जातंश्रूयतामृषिसत्तमाः ॥ श्रांतंचबहुधाकालंविष्णुनाप्रभविष्णुना ॥ १ ॥ नापश्यदल्पमप्यस्यमूलंलिंगस्यसूकरः ॥ तावत्कालंगतोह्यूर्ध्वम
हमप्यरिसूदन ॥ २ ॥ सत्वरंसर्वयत्नेनतस्यांतंज्ञातुमिच्छया ॥ श्रांतोनदृष्ट्वातस्यांतमहंकालादधोगतः ॥ ३ ॥ तथैवभगवान्विष्णुःश्रांतस्त्रस्त
विलोचनः ॥ समागतोमयासार्धंप्रणिपत्यभवंमुहुः ॥ ४ ॥ माययामोहितःशंभोस्तस्थौसंविग्नमानसः ॥ प्रणिपत्यमयासार्द्धंसस्मारकिमिदंत्विति
॥ ५ ॥ अनिर्देश्यंचतद्रूपमनामकर्मवर्जितम् ॥ अलिंगंलिंगतांयातंध्यानमार्गेप्यगोचरम् ॥ ६ ॥ स्वस्थंचित्तंतदाकृत्वानमस्कारपरायणौ ॥ जा
नीयावोनतेरूपंयोऽसिसोऽसिनमोस्तुते ॥ ७ ॥ एवमब्दशतंजातंनमस्कारंप्रकुर्वतोः ॥ तदासमभवत्तत्रसानंदंशब्दलक्षणम् ॥ ८ ॥ ओमितीदंमुनि
श्रेष्ठसुव्यक्तंप्लुतलक्षणम् ॥ किमिदंत्विविसंचिंत्यमयातिष्ठन्महास्वनम् ॥ ९ ॥ यस्माच्छब्दःसमुद्भूतस्तस्मैतुभ्यंनमोस्तुते ॥ लिंगस्यदक्षिणेभागेत
दापश्यत्सनातनम् ॥ १० ॥ आद्यंवर्णमकारंतुउकारंचोत्तरेततः ॥ मकारंमध्यतश्चैवनादांतंतस्यचोमिति ॥ ११ ॥ सूर्यमंडलवद्दृष्ट्वावर्णमाद्यंतुद
क्षिणे ॥ उत्तरेपावकप्रख्यमुकारमृषिसत्तम ॥ १२ ॥ शीतांशुमंडलप्रख्यंमकारंतस्यमध्यतः ॥ तस्योपरितदापश्यत्स्फटिकप्रभवंपरम् ॥ १३ ॥
तुरीयातीतममृतंनिष्कलंनिरुपप्लवम् ॥ निर्द्वंद्वंकेवलंतत्त्वंबाह्याभ्यंतरवर्जितम् ॥ १४ ॥ आदिमध्यांतरहितमानंदस्यापिकारणम् ॥ सत्यमानंदममृ
तंपरंब्रह्मपरायणम् ॥ १५ ॥ एकाक्षरंतुयत्प्रोक्तंभगवान्नीललोहितः ॥ सर्गकर्ताह्यकाराख्यउकाराख्यस्तुपालकः ॥ १६ ॥ मकाराख्यस्तुयोनित्यम
नुग्रहकरोभवः ॥ अहमेवहरिर्ब्रह्मन्विस्मयाविष्टमानसौ ॥ एतस्मिन्नंतरेऽन्यच्चरूपमद्भुतसुंदरम् ॥ १७ ॥ पचवक्त्रंदशभुजंकर्पूरगौरकंमुने ॥ नानाकां
तिसमायुक्तंनानाभरणसंयुतम् ॥ १८ ॥ महोदारंमहावीर्यंमहापुरुषलक्षणम् ॥ तद्दृष्ट्वापरमंरूपंनिर्मातास्वयमेवाहि ॥ १९ ॥ ततोविज्ञायदेवेशंयथा
वच्छ्रुतिसंमतैः ॥ मंत्रैर्महेश्वरंदेवंतुष्टावसुमहोदयम् ॥ २० ॥ आवयोस्तुतिभिस्तुष्टोलिंगेतस्मिन्निरंजनः ॥ दिव्यंशब्दमयंरूपमास्थायप्रहसन्स्थितः
॥ २१ ॥ अकारस्तस्यमूर्धाचललाटंदीर्घउच्यते ॥ इकारंदक्षिणंनेत्रमीकारंवामलोचनम् ॥ २२ ॥ उकारंदक्षिणंश्रोत्रमूकारंवाममुच्यते ॥ ऋकारंद
क्षिणंतस्यकपोलंपरमेष्ठिनः ॥ २३ ॥ वामंकपोलमृकारम्लृल्लृनासापुटेउभे ॥ एकारमोष्ठमूर्ध्वंतुऐकारमधरंविभो ॥ २४ ॥ ओकारंचतथौकारंदंतपंक्ति
द्वयंक्रमात् ॥ अंअश्वतालुनीतस्यदेवदेवस्यधीमतः ॥ २५ ॥ कादिपंचाक्षराण्यस्यपंचहस्ताश्चदक्षिणे ॥ चादिपंचाक्षराण्येवंपंचहस्तास्तुवामतः ॥
॥ २६ ॥ टादिपंचाक्षरंपादौतादिपंचाक्षरंतथा ॥ पकारमुदरंतस्यफकारंपार्श्वमुच्यते ॥ २७ ॥ बकारंवामपार्श्वंतुभकारंस्कंधउच्यते ॥ मकारंहृदयंशं

भोर्महादेवस्ययोगिनः॥२८॥यकारादिसकारांतंविभोर्वैसप्तधातवः ॥ हकारंनाभिरूपंहिक्षकारंनादउच्यते ॥२९॥ एवंशब्दमयंरूपमगुणस्यगुणात्मनः ॥
तंदृष्ट्वातुमयासार्द्धंभगवंतंमहेश्वरम् ॥३०॥ प्रार्थयंतौपुनस्तंवैकृपाकार्यात्वयाविभो ॥ इत्येवंवचनंश्रुत्वाप्रसन्नःशंकरस्तदा ॥३१॥ उवाचवचनंतत्रप्रसन्नो
भगवानिह ॥ तदीयंतद्वचस्तत्रश्रुत्वाविष्णुर्मयासह ॥३२॥ उवाचयदिदेवेशप्रसन्नोभगवानिह ॥ आवयोःकिंचित्कार्यंवैयदिच्छसितथाकुरु ॥३३॥ इत्येवं
वचनंश्रुत्वाशंभुर्वाक्यमथाब्रवीत् ॥ सृष्टिकर्ताभवेद्ब्रह्मासृष्टेश्चपालकोहरिः॥३४॥ मदीयश्चतथाप्यंशोभविष्यतितदंतकृत् ॥ इयंचप्रकृतिर्देवीयानारायण
माश्रिता ॥ ३५ ॥ तस्यांभविष्यतिशक्तिर्ब्रह्माणीसंभविष्यति ॥ अन्याशक्तिःपुनस्तत्रप्रकृतेःसंभविष्यति ॥ ३६ ॥ समाश्रयिष्यतेविष्णुंलक्ष्मीरूपेणसा
तदा ॥ पुनश्चकालीनाम्नीचमदंशंप्रापयिष्यति ॥३७॥ ज्योतीरूपेणसातत्रकार्यार्थंसंभविष्यति ॥ त्रयोदेवास्तथाप्रोक्ताःशक्तयःपरमाःशुभाः ॥ ३८ ॥
सृष्टिकार्यंतुसंभूयकुर्वंतुतेमदाज्ञया ॥ इत्येवंतुवचःश्रुत्वाविष्णुर्वाक्यमथाब्रवीत् ॥ ३९ ॥ श्रीभगवानुवाच ॥ भवदुक्तंकरिष्यामोनियताःसर्वएवहि ॥ किं
चिद्विज्ञाप्यमस्त्येवतत्त्वंकर्तुमिहार्हसि ॥ ४० ॥ ततोवचनमारब्धंशंकरेणपरंशुभम् ॥ पदमिष्टतमंतुभ्यंदास्यामिहितकाम्यया ॥ ४१ ॥ विष्णुर्मया
सहोवाचशंकरंलोकशंकरम् ॥ ४२ ॥ श्रीभगवानुवाच ॥ देवदेवनमस्तुभ्यंदेहितत्त्वंनमोस्तुते ॥ ध्येयंसेव्यंतथापूज्यंवक्तुमर्हसिसुव्रत ॥ ४३ ॥ यत्कृ
त्वासर्वसामर्थ्यंभविष्यतिनसंशयः ॥ इत्युक्तःशंकरस्तस्मैददौनादात्मकंशिवम् ॥ ४४ ॥ प्रणवात्मकंपरंतत्त्वंलब्धवान्परमात्मनः ॥ हरिस्तत्रपरंत
त्त्वंज्ञात्वारूपमपश्यत ॥ ४५ ॥ तदुपायंप्रवक्ष्यामिमंत्रतत्त्वंशुभान्पथः ॥ प्रणम्यभगवान्विष्णुःपुनश्चापश्यदूर्ध्वतः ॥ ४६ ॥ ओंकारप्रभवंमंत्रंकला
पंचकसंयुतम् ॥ ओंतत्त्वमसीत्युक्तंमहावाक्यंहरस्यच ॥ ४७ ॥ शुद्धस्फटिकसंकाशंमंत्ररूपमनुत्तमम् ॥ मेधाकारमभूद्भूयःसर्वकामार्थसाधकम् ॥
॥ ४८ ॥ पुनर्मंत्रंतथान्यच्चगायत्रीलक्षणंमहत् ॥ चतुर्विंशतिवर्णाढ्यंचतुर्वर्गफलप्रदम् ॥ ४९ ॥ पुनर्मृत्युंजयंमंत्रंपंचाक्षरमतःपरम् ॥ चिंतामणिंतथा
मंत्रंदक्षिणामूर्तिसंज्ञितम्॥५०॥पंचमंत्रंतथालब्ध्वाजजापभगवान्हरिः ॥ ५१ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांविष्णुब्रह्मवरप्रदानंनामतृतीयो
ऽध्यायः ॥ ३ ॥ ॥ ब्रह्मोवाच ॥ जपतस्तस्यदेवस्यप्रादुर्भूतोहरःस्वयम् ॥ पुनःप्रसन्नस्तत्रैवहरयेपरमात्मने ॥ १ ॥ निगमंश्वासरूपेणददौतस्मैमहा
त्मने ॥ तत्रमंत्राह्यनेकेवैतत्रकर्माण्यनेकशः ॥ २ ॥ सर्वविद्यानिधिर्देवोहरश्चासीन्महामुने ॥ ईशानःसर्वविद्यानांश्रुतिरेषासनातनी ॥ ३ ॥ हरात्प्राप्य
स्वयंविष्णुर्हरिर्मह्यमदात्पुनः ॥ पुरतःश्वासरूपेणप्रातवान्निगमंतदा ॥ ४ ॥ स्वीयंज्ञानमदात्तस्मैरहस्यंपरमात्मने ॥ परमात्मापुनर्मह्यंदत्तवान्कृपया
मुने ॥ ५ ॥ संप्राप्यनिगमंदेवःपप्रच्छपुनरेवतम् ॥ कथंचतुष्यसेदेवमयाध्येयःकथंप्रभो ॥ ६ ॥ किंध्यानंचप्रकर्तव्यंशंकरंचकथंव्रजेत् ॥ एतत्सर्वम

हाराजकृपांकृत्वाममोपरि ॥ ७ ॥ कथनीयंप्रयत्नेनशृण्वतांपापहारकम् ॥ इत्येतद्वचनंश्रुत्वाप्रसन्नोभगवान्हरः ॥ ८ ॥ उवाचहरयेतत्रशृणुष्वावहि
तोहरे ॥ इदंलिंगंसदापूज्यंध्यानंचैतादृशंमम ॥ ९ ॥ इदानींदृश्यतेयद्वत्तथाकार्यंत्वयासदा ॥ पूजितोलिंगरूपेस्मिन्प्रसन्नोविविधंफलम् ॥ १० ॥
दास्यामिसर्वलोकेभ्योमनोभीष्टान्यनेकशः ॥ यदादुःखंभवेत्तत्रपूजितेदुःखनाशनम् ॥ ११ ॥ इतिदत्त्वाहरस्तस्मैवरानन्याननेकशः ॥ उवाचवचनं
देवोविष्णवेप्रभविष्णवे ॥ १२ ॥ अयंब्रह्मातथाकर्तासृष्टेःकार्यंनिरंतरम् ॥ पालयत्वंसदादेवमद्भक्तिंपरमांकुरु ॥ १३ ॥ इत्युक्त्वातुपुनस्तस्मैपूजा
विधिमदाच्छुभम् ॥ येनैवपूजितःशंभुःफलंयच्छत्यनेकशः ॥ १४ ॥ तदहंकथयिष्यामिसर्वपापहरंपरम् ॥ ततःसर्वमयंदेवंविश्वरूपंमहेश्वरम् ॥ १५ ॥
अनंतंनिष्कलंदेवमृग्यजुःसामरूपिणम् ॥ सर्गस्थितिलयानांहिकर्त्तारंपरमेश्वरम् ॥ तुष्टावपुनरिष्टाभिर्वाग्भिर्वरदमीश्वरम् ॥ १६ ॥ हरिरुवाच ॥
एकाक्षरायदेवायअकारायात्मरूपिणे ॥ उकारायादिदेवायविद्यारूपायतेनमः ॥ १७ ॥ तृतीयायमकारायशिवायपरमात्मने ॥ जलायजलजाप्यायनमस्ते
जलशायिने ॥ १८ ॥ चित्तायचित्तिरूपायस्मृतिरूपायतेनमः ॥ ज्ञानायज्ञानगम्यायनमस्तेपरमात्मने ॥ १९ ॥ हिरण्यबाहवेतुभ्यंनमस्तेहेमरेतसे ॥
कपर्दिनेनमस्तुभ्यंनागांगाभरणायच ॥ २० ॥ वृषाकपयेशर्वायकर्त्रेहर्त्रेनमोनमः ॥ शिवायशिवरूपायव्यापिनेव्योमव्यापिने ॥ २१ ॥ नमोनिधीनां
पतयेलिंगिनेलिंगरूपिणे ॥ तेजसेतेजसांभर्त्रेनमस्तेसर्वरूपिणे ॥ २२ ॥ शाश्वतायवरिष्ठायवारिगर्भाययोगिने ॥ स्थितायसामगेयायआवयोर्ब्रह्मवर्चसे
॥ २३ ॥ आत्मनेऋषयेतुभ्यंस्वामिनेविष्णवेनमः ॥ ओंकारायनमस्तुभ्यंसर्वज्ञायनमोनमः ॥ २४ ॥ विरराममेतितंस्तुत्वाब्रह्मणासहितोहरिः ॥
इदंस्तोत्रंपरंपुण्यंसर्वपापप्रणाशनम् ॥ २५ ॥ यःपठेच्छृणुयाद्वापिश्रावयेद्वाद्विजोत्तमान् ॥ सयातिब्रह्मणोलोकंपापकर्मरतोपिसन् ॥ २६ ॥ कल्या
णंवर्धतेतस्यशुक्लपक्षेयथाशशी ॥ सर्वपापविशुद्ध्यर्थंविष्णुनापरिभाषितम् ॥ २७ ॥ सूतउवाच ॥ अथोवाचमहादेवःप्रीतोहंसुरसत्तमौ ॥ पश्यतां
मांमहादेवंभयंसर्वंप्रमुच्यताम् ॥ २८ ॥ युवांप्रसूतौप्रकृतेर्मदिच्छायामहाबलौ ॥ मयारूपंत्रिधाभिन्नंनिर्गुणंसगुणीकृतम् ॥ २९ ॥ अयंमेदक्षिणेपा
र्श्वेब्रह्मालोकपितामहः ॥ वामपार्श्वेचमेविष्णुर्विश्वात्माहृदयेपरः ॥ ३० ॥ प्रीतोहंयुवयोःसम्यग्वरंदद्मियदीप्सितम् ॥ एवमुक्त्वातुमांविष्णुंकराभ्यां
परमेश्वरः ॥ ३१ ॥ पस्पर्शसुशुभाभ्यांचघृणयासघृणानिधिः ॥ ततःप्रहृष्टमनसाप्रणिपत्यमहेश्वरम् ॥ ३२ ॥ प्राहनारायणोनाथंलिंगस्थंलिंगवर्जितम् ॥
यदिप्रीतिःसमुत्पन्नायादिदेयोवरस्त्वया ॥ ३३ ॥ भक्तिर्भवतुनौनित्यंत्वयिचाव्यभिचारिणी ॥ देवःप्रसन्नवदनोभूत्वोवाचमहामुने ॥ ३४ ॥
कार्यार्थंनिर्मितौदेवौनादेयंविद्यतेमम ॥ जानुभ्यामवनींगत्वामुनेनारायणःस्वयम् ॥ ३५ ॥ प्रणिपत्यचविश्वेशंप्राहमंदतरंवशी ॥ आवयोर्देवदेवेश

विवादमपिशोभनम् ॥ ३६ ॥ इहागतोभवान्यस्माद्विवादशमनायनौ ॥ तस्यतद्वचनंश्रुत्वापुनःप्राहहरोहरिम् ॥ ३७ ॥ प्रणिपत्यस्थितंमूर्ध्नाकृतांज
लिपुटंस्मरन् ॥ ३८ ॥ महेश्वरउवाच ॥ मयिभक्तिर्दृढाभूयाद्युवयोरभ्यनुज्ञया ॥ पार्थिवींचैवमूर्तिंचाविधायकुरुतंयुवाम् ॥ ३९ ॥ सेवांचविधिवत्प्राज्ञौ
कृत्वासुखमवाप्स्यथः ॥ उपादिश्यविधानेस्मिन्धर्मान्दुःखहरोहरः ॥ ४० ॥ ददौवराननेकांश्चतयोर्हितचिकीर्षया ॥ ब्रह्मन्सृष्टिंकुरुत्वंहिमदाज्ञाप
रिपालकः ॥ ४१ ॥ वत्सवत्सहरेत्वंचपालयस्वचराचरम् ॥ त्रिधाभिन्नोह्यहंविष्णोब्रह्मविष्णुहराख्यया ॥ ४२ ॥ सर्वरक्षालयगुणैर्निष्कलोयंसदाहरे ॥
मद्रूपंपरमंब्रह्मन्नीदृशंभवदंगतः ॥ ४३ ॥ प्रकटीभविताल़ोकेनाम्नारुद्रःप्रकीर्तितः ॥ मदंशात्तस्यसामर्थ्यमूनंनैवभविष्यति ॥ ४४ ॥ योयंसोहंनभेदो
स्तिपूजाविधिविधानतः ॥ यथाचज्योतिषःसंगाज्जलादेःस्पर्शतानवै ॥ ४५ ॥ तथाममागुणस्यापिसंयोगाद्बंधनंनहि ॥ शिवरूपंममैतच्चरुद्रोपिशि
ववत्सदा ॥ ४६ ॥ नतत्रपरभेदोवैकर्त्तव्यश्चमहामुने ॥ वस्तुतोह्येकधाभिन्नंरूपंमेत्रिजगत्युत ॥ ४७ ॥ सुवर्णस्ययथैकस्यवस्तुत्वंनैवगच्छति ॥
अलंकारेकृतेदेवनामभेदोनवस्तुतः ॥ ४८ ॥ कारणस्यैवकार्येचनिदानंचनिदर्शनम् ॥ यथैकस्यामृदोभेदोनाम्निपात्रेनवस्तुतः ॥ ४९ ॥ यथैकस्यस
मुद्रस्यविकारोनैववस्तुतः ॥ ५० ॥ एवंज्ञात्वाभवद्भ्यांचनदृश्यंभेदकारणम् ॥ वस्तुतःसर्वदृश्यंचशिवरूपंमतंमम ॥ ५१ ॥ अहंभवानयंचैवरुद्रोयंयो
भविष्यति ॥ एकंरूपंनभेदोस्तिभेदेचबंधनंभवेत् ॥ ५२ ॥ तथापीहमदीयंवैशिवरूपंसनातनम् ॥ मूलभूतंसदाप्रोक्तंसत्यंज्ञानमनंतकम् ॥ ५३ ॥
एवंध्यात्वासदाध्येयंतत्त्वजिज्ञासुनात्वया ॥ विशेषेऽत्रकथंलभ्येच्छ्रूयतांकथ्यतेमया ॥ ५४ ॥ भवंतौप्रकृतेर्जातौनायंवैप्रकृतेःपुनः ॥ मदाज्ञाजायतेऽ
प्यत्रब्रह्मणोभ्रुकुटेरहम् ॥ ५५ ॥ गुणेष्वपिचयःप्रोक्तस्तामसःप्राकृतोहरे ॥ वैकारिकश्चविज्ञेयोयोहंकारउदाहृतः ॥ ५६ ॥ नामतोवस्तुतोनैवतामसः
परिचक्षते ॥ एतस्मात्कारणाद्ब्रह्मन्करणीयमिदंत्वया ॥ ५७ ॥ समोहंसर्वभूतेषुपालयैनंपितामह ॥ एतस्याःप्रकृतेर्लक्ष्मीर्ह्यैतदंशाभविष्यति ॥ ५८ ॥
ब्रह्माणीचतदंशाचमहाकालीतदंशिका ॥ भविष्यतिपरानूनंकार्यार्थेऽनेकतांगता ॥ ५९ ॥ त्वंचलक्ष्मीमुपाश्रित्यकार्यंकर्तुमिहार्हसि ॥ ब्रह्मंस्त्वंच
स्वरांदेवींकर्तुंकार्यमनंतकम् ॥ ६० ॥ अहंकालींसमाश्रित्यकरिष्येकार्यमुत्तमम् ॥ चतुर्वर्णमयंलोकंतत्संख्यैराश्रमैर्ध्रुवम् ॥ ६१ ॥ तदन्यैर्विविधैःका
र्यैःकृत्वासुखमवाप्स्यथ ॥ ज्ञानविज्ञानसंयुक्तालोकानांहितकारकाः ॥ ६२ ॥ मुक्तिदोत्रभवानद्यभवलोकेसनातन ॥ मद्दर्शनेफलंयद्वैतदेवतवदर्श
ने ॥ ६३ ॥ ममैवहृदयेविष्णुर्विष्णोश्चहृदयेह्यहम् ॥ उभयोरंतरंयोवैनजानातिमतोमम ॥ ६४ ॥ इदंलिंगंसदापूज्यंभवद्भ्यांसुखहेतवे ॥ राजतंरत्नजा
तंवाहैमंवापार्थिवंमुने ॥ ६५ ॥ एतस्माच्चविधेरन्योवल्लभोनमतोमम ॥ एवमुक्त्वासभगवांस्तत्रैवांतरधीयत ॥ ६६ ॥ तदाप्रभृतिलोकेस्मिन्लिंगेपू

जाविधिःस्मृतः ॥ लिंगंदेवीमहादेवीलिंगंसाक्षान्महेश्वरः ॥ ६७ ॥ यस्तुलिंगसमीपेतुकार्यंकिंचित्करोतिच ॥ तत्फलस्यचसंख्यातुनशक्नोमिमहामुने
॥ ६८ ॥ यस्तुलिंगसमाख्यानंपठतेशिवसन्निधौ ॥ षण्मासाच्छिवरूपोवैनात्रकार्याविचारणा ॥ ६९ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांशि
वोत्पत्तिवर्णनंनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ऋषयऊचुः ॥ सूतसूतमहाभागलिंगोत्पत्तिःश्रुताशुभा ॥ श्रुत्वायस्याःप्रभावेनदुःखनाशोभवेदिह ॥ १ ॥
तदन्तरेचयज्जातंमाहात्म्यंचशिवस्यच ॥ सृष्टेश्चैवप्रकारंतुकथयत्वंविशेषतः ॥ २ ॥ सूतउवाच ॥ सम्यक्पृष्टंभवद्भिश्चयज्जातंतदनन्तरम् ॥ कथ
यिष्यामिसंक्षेपाद्यथापूर्वंश्रुतंमया ॥ ३ ॥ अंतर्हितेतदादेवेशिवरूपेसनातने ॥ ब्रह्मणाविष्णुनारूपंहंसवाराहयोस्तदा ॥ ४ ॥ संहृतंचततस्ताभ्यां
यत्कृतंश्रूयतामिति ॥ ५ ॥ ऋषयऊचुः ॥ अस्माकंसंशयंतावत्त्वंनाशयितुमर्हसि ॥ हंसवाराहयोरूपंताभ्यांचैवधृतंकथम् ॥ ६ ॥ अन्यद्रूपंवि
हायैवकिमत्रकारणंवद ॥ इत्येतद्वचनंश्रुत्वासूतःपौराणिकोऽब्रवीत् ॥ ७ ॥ गगनेहंसरूपस्यगतिर्भवतिनिश्चला ॥ हंसस्यचविवेकोऽस्तिजलदुग्ध
विभागयोः ॥ ८ ॥ अज्ञानज्ञानयोस्तत्त्वंतद्विवेकायहंसकः ॥ विवेकोनैवलब्धश्चब्रह्मतोहंसोविलीयते ॥ ९ ॥ सृष्टिप्रवृत्तिकामोवैकथंज्ञानंप्रजायते ॥
वाराहंकारणंरूपंकल्पार्थेचप्रकल्पितम् ॥ १० ॥ यद्दिनंहिसमारभ्यरूपंचधृतवान्हरिः ॥ तद्दिनंप्रतिकल्पोवैकल्पोवाराहसंज्ञकः ॥ ११ ॥ तदि
च्छावायथाजातातााभ्यांरूपंधृतंतथा ॥ नैवात्रविस्मयःकार्योहंसवाराहरूपिणोः ॥ १२ ॥ प्रस्तुतंश्रूयतांपुत्रब्रह्मैवविकृतंचयत् ॥ अनंतेनिष्कले
लिंगेनिर्गुणेगुणरूपिणि ॥ १३ ॥ विष्णवेचवरान्दत्त्वागुणेषुमुख्यतांव्रज ॥ गुणाःसत्वादयश्चेतितेपिसर्वेविमोहिताः ॥ १४ ॥ तस्मात्त्वंसर्वलोकेषुमा
न्यःपूज्योभविष्यसि ॥ ब्रह्मणानिर्मितेलोकेयदादुःखंप्रजायते ॥ १५ ॥ तदात्वंसर्वदुःखानांनाशनेतत्परोभव ॥ विविधानवतारांश्चगृहीत्वाकीर्तिमु
त्तमाम् ॥ १६ ॥ विस्तारयहरेलोकतारणायपरेश्वर ॥ गुणरूपोऽस्म्यहंरुद्रोह्यनेनवपुषापुनः ॥ १७ ॥ कार्यंकरिष्येलोकानांसर्वथानात्रसंशयः ॥
ममध्येयंभवांश्चैवतवध्येयमहंपुनः ॥ १८ ॥ आवयोरंतरंनैवह्यणुमात्रंविचारतः ॥ वस्तुत्वेचाप्यनेकत्वंचरतोऽपितथैवच ॥ १९ ॥ मद्भक्तोयोन
रोभूत्त्वातेनिंदांयःकरिष्यति ॥ तस्याऽहंसकलंपुण्यंभस्मीकृत्याविशेषतः ॥ २० ॥ नरकेपातयिष्यामितद्दोषात्पुरुषोत्तम ॥ लोकेऽस्मिन्मुक्तिदो
नृणांमुक्तिदश्चविशेषतः ॥ २१ ॥ ध्येयःपूज्यश्चसर्वेषांनिग्रहानुग्रहंकुरु ॥ इत्युक्त्वाचैवब्रह्माणंहस्तेधृत्वास्वयंहरिम् ॥ २२ ॥ कथयामासदुःखे
षुसहायोभवसर्वदा ॥ सर्वाध्यक्षश्चदेवेषुभक्तिमुक्तिप्रदायकः ॥ २३ ॥ भवत्वंसर्वदाश्रेष्ठःसर्वकार्यप्रसाधकः ॥ सर्वेषांप्राणरूपश्चभवत्वंचममाज्ञ
या ॥ २४ ॥ त्वांचसमाश्रितायेवैमामेवसमुपाश्रिताः ॥ अन्तरंयश्चजानातिनिरयेपततेध्रुवम् ॥ २५ ॥ इदंरूपंत्वयातावदीक्षणीयंमदाज्ञया ॥

यावच्चब्रह्मणोऽप्यायुःशतवर्षमुदाहृतम् ॥ २६ ॥ चतुर्युगसहस्राणांसमूहंदिनमुच्यते ॥ रात्रिश्चतावतीतस्यमानमेतत्क्रमेणतु ॥ २७ ॥ तावत्सृष्टेश्च
कार्यैवैकर्त्तव्यंविविधैर्गुणैः ॥ गुणेषुचभवान्श्रेष्ठःसत्वात्मापुरुषोत्तम ॥ २८ ॥ इत्येतद्वचनंसर्वंतथेत्योमितिवैहरिः ॥ उवाचपरमप्रीतःशंकरप्रिय
काम्यया ॥ २९ ॥ श्रीहरिरुवाच ॥ शंकरश्रूयतांमत्तःकृपासिंधोजगत्पते ॥ सर्वंचैतत्करिष्यामिभवदाज्ञापरायणः ॥ ३० ॥ ममध्येयःसदात्वंच
भविष्यसिनचाऽन्यथा ॥ भवतःसर्वसामर्थ्यंलब्धंचैवपुरामया ॥ ३१ ॥ क्षणमात्रमपिचतेध्यानंवैपरमात्मनः ॥ चेतसोदूरतश्चैवमागच्छतुकदाचन ॥
॥ ३२ ॥ ममभक्तश्चयोनित्यंतवनिंदांकरिष्यति ॥ तस्यवैनिरयेवासंप्रयच्छेनियतंध्रुवम् ॥ ३३ ॥ त्वद्भक्तोयोभवेन्नित्यंमद्भक्तःसमुदाहृतः ॥ एवं
योवैविजानातितस्यमुक्तिर्नदुर्लभा ॥ ३४ ॥ महिमाचमदीयश्चवर्धितोभवताध्रुवम् ॥ कदाचिदवगणनाजायतेक्षम्यतामिति ॥ ३५ ॥ ततःशंभुस्तदीयं
हिश्रुत्वावचनमुत्तमम् ॥ उवाचविष्णवेविप्राःक्षंतव्यागणनातव ॥ ३६ ॥ इत्युक्त्वांतर्दधेशंभुःसर्वकल्याणकारकः ॥ अंतर्हितेतदादेवेब्रह्मलोकपि
तामहः ॥ ३७ ॥ तदीयंवचनंकर्तुंसमाधानपरायणः ॥ नमस्कृत्यतदाविष्णुंज्ञानंप्राप्यहरेस्तदा ॥ ३८ ॥ आनंदंपरमंगत्वासृष्टिंकर्तुंमनोदधे ॥ वि
ष्णुश्चाऽपितदातत्रह्यंतर्धानमुपागतः ॥ ३९ ॥ पूर्वंसृष्टंजलंयच्चतत्रांऽजलिमुपाक्षिपत् ॥ अतोंऽडमभवत्तत्रचतुर्विंशतिसंज्ञकम् ॥ ४० ॥ विराड्रूप
मभूद्विप्राजडरूपमपश्यत ॥ ततःसंशयमापन्नस्तपस्तेपेसुदारुणम् ॥ ४१ ॥ द्वादशाब्दंपुनस्तेपेविष्णुध्यानपरायणः ॥ तस्मिंश्चसमयेविष्णुःप्रादु
र्भूतोहरिःस्वयम् ॥ ४२ ॥ प्रसन्नोऽस्मिवरंब्रूहिनाऽदेयंविद्यतेतव ॥ ब्रह्मोवाच ॥ युक्तमेतन्महाराजदत्तोऽहंशंभुनाचते ॥ ४३ ॥ तदुक्तंयच्चतन्मेद्यज
डीभूतंप्रदृश्यते ॥ प्राणभूतोभवानद्यभूत्वाचैतन्यमावह ॥ ४४ ॥ इत्युक्तेचतदातेनशंभोराज्ञापरायणः ॥ अनंतरूपमास्थायप्रविवेशहरिःस्वयम् ॥
॥ ४५ ॥ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिंसर्वतःस्पृष्ट्वातदंडंव्याप्तवानिति ॥ ४६ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांसृष्टिनिरूप
णंनामपंचमोऽध्यायः ॥ ५ ॥ सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठाःकथांपापप्रणाशिनीम् ॥ प्रविष्टेविष्णुनातस्मिन्ब्रह्मणासंस्तुतेनवै ॥ १ ॥ सचेतनमभूत्त
च्चचतुर्विंशतिसंज्ञितम् ॥ पातालादिसमारभ्यसत्यलोकावधिस्वयम् ॥ २ ॥ राजतेस्महरिस्तत्रवैराजःपुरुषःप्रभुः ॥ सत्यंपदमुपाश्रित्यस्थितोऽसौ
पुरुषोत्तमः ॥ ३ ॥ तपोलोकंसमास्थायब्रह्मातिष्ठत्तपोधनः ॥ अन्येषुसर्वलोकेषुयथायोग्यमवस्थितिः ॥ ४ ॥ ततश्चमानसाःपुत्रानिर्मिताब्र
ह्मणापुरा ॥ तेचोर्ध्वरेतसःसर्वेपश्चादन्यानृषीन्प्रभुः ॥ ५ ॥ तेविरक्ताश्चसंजाताःपश्चात्क्रोधमवापसः ॥ तेनैवरोदनंचक्रेततश्चैवाभवद्धरः ॥ ६ ॥
रोदनाद्रुद्रनामेतिप्रसिद्धोभगवान्भवः ॥ ब्रह्मन्दुःखंकिमुत्पन्नंस्फोटयामिनसंशयः ॥ ७ ॥ इत्येतद्वचनंश्रुत्वाब्रह्मावचनमब्रवीत् ॥ साधूक्तं

चत्वयादेवसृष्टौविघ्नोदयोभवेत् ॥ ८ ॥ तथाकार्यंत्वयानित्यंसृष्टिःस्यादनपायिनी ॥ इत्येवंवचनंश्रुत्वालोकानांदुःखहाहरः ॥ ९ ॥ वचनं
चोक्तवांस्तत्रस्रष्टुःप्रियचिकीर्षया ॥ अहंचैवकरिष्यामिसृष्टिमेतांसनातनीम् ॥ १० ॥ इत्युक्त्वाब्रह्मणेरुद्रोगुणरूपीहरःस्वयम् ॥ जगामसग
णोदेवःकैलासमचलंततः ॥ ११ ॥ ततोब्रह्माऋषीन्सप्तभृग्वादीन्निर्ममेतदा ॥ उत्संगान्नारदंश्रेष्ठंछायायांकर्दमंपुनः ॥ १२ ॥ अंगुष्ठाच्चतथादक्षमेवं
दशक्रमेणतु ॥ भृगोश्चैवतथाजातोमरीचिर्नामवैऋषिः ॥ १३ ॥ ततश्चकश्यपोजज्ञेतेनेदंपूरितंजगत् ॥ षष्टिकन्यास्तथाजातादक्षाच्चैवमहात्मनः ॥
॥ १४ ॥ त्रयोदशतथाकन्याःकश्यपायमहात्मने ॥ दत्तादक्षेणताःकन्याविधिवद्दषिसत्तमाः ॥ १५ ॥ ततःप्रसूतिभिर्व्याप्तंतासांचकश्यपस्यच ॥
देवाश्चदनुजाश्चैवदैत्याश्चविविधास्तथा ॥ १६ ॥ वृक्षाश्चपक्षिणश्चैवसर्पपर्वतवीरुधः ॥ प्रसूतादक्षकन्याभिर्व्याप्तमेतच्चराचरम् ॥ १७ ॥ पातालतल
मारभ्यसत्यलोकावधिध्रुवम् ॥ ब्रह्मांडंसकलंव्याप्तंशून्यंनैवकदाचन ॥ १८ ॥ सतीनामतथाकन्यारुद्रायचमहात्मने ॥ दत्तादक्षेणसाकन्याभवानी
तिप्रकीर्तिता ॥ १९ ॥ ब्रह्माविष्णुश्चरुद्रश्चगुणास्त्रयउदाहृताः ॥ विष्णुःसत्वंरजोब्रह्मातमोरुद्रउदाहृतः ॥ २० ॥ तथागुणमयींदेवीलक्ष्मीःसत्वमुपा
श्रिता ॥ राजसीचतथाब्राह्मीतमोरूपातुसासती ॥ २१ ॥ गुणरूपामहाकालीयावैरुद्रमुपाश्रिता ॥ पुनश्चपार्वतीजातासाशिवंसमुपागता ॥ २२ ॥
ततोनामान्यनेकानिप्रापसापर्वतात्मजा ॥ कालिकाचंडिकाभद्राचामुंडाविजयाजया ॥ २३ ॥ गुणमय्यस्तथादेव्योदेवागुणमयास्त्रयः ॥ मिलित्वा
त्रिविधांसृष्टिंचक्रुस्तेकार्यमुत्तमम् ॥ २४ ॥ इत्येवंवचनंश्रुत्वाऋषयस्तेऽमलाशयाः ॥ नारदाद्याश्चयोगींद्राहर्षनिर्भरमानसाः ॥ २५ ॥ शृण्वानाःपर
मांदिव्यांकथांचैवपुरातनीम् ॥ अप्राप्यतृप्तिंतेसर्वेपप्रच्छुःपुनरेवतम् ॥ २६ ॥ ऋषयऊचुः ॥ सूतसर्वंहिजानासिप्रतापाच्चगुरोरिह ॥ त्वन्मुखांभो
जसंवृत्तंपीत्वाहरकथामृतम् ॥ २७ ॥ नतृप्यामःपुनस्तांचपातुमिच्छामहेवयम् ॥ प्रथमंदक्षपुत्रीचपश्चाच्चपर्वतात्मजा ॥ २८ ॥ कथमेकशरीरेणद्व
योःपुत्रीप्रजायते ॥ कथंवैपार्वतीपुण्यापुनःशिवमुपागता ॥ २९ ॥ एतत्सर्वंतथाऽन्यच्चसत्वंकथितुमर्हसि ॥ तदुक्तंतुतदाश्रुत्वासूतोवचनमब्रवीत् ॥
॥ ३० ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांसृष्टिनिरूपणंनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठाःकथयामिशुभांकथाम् ॥
यच्छ्रुत्वासफलंजन्मभविष्यतिनसंशयः ॥ १ ॥ पूर्वंदक्षस्यरुद्रस्यस्पर्धाजातामहात्मनोः ॥ ततोदक्षःस्वयंयज्ञंकृतवान्देवसंनिधौ ॥ २ ॥ अनाहूयत
दारुद्रंपूर्वमृषिसमन्वितः ॥ ततोदेवीसतीनाम्नीपित्रानाकारितायदा ॥ ३ ॥ तदागतापुनस्तत्रनाहूतापिपितुर्गृहे ॥ प्राप्यावज्ञांतुसातत्रदेहत्यागमथा
करोत् ॥ ४ ॥ यज्ञध्वंसेतथाजातेदेवलोकेऽथजीविते ॥ रुद्रस्याऽनुचरैस्तत्रवीरभद्रादिकैःकृते ॥ ५ ॥ रुद्रेक्रुद्धेकथंलोकेसुखंभवतिसत्तमाः ॥ पश्चा

द्रुद्रः प्रसन्नोऽभूद्देवानांस्तवनादपि ॥ ६ ॥ पूर्ववच्चकृतंतेनकृपालुत्वान्महात्मना ॥ रुद्रश्चपूजितस्तत्रदेवैर्देववरस्तदा ॥ ७ ॥ सतीदेहसमुत्पन्नाज्वाला
लोकभयावहा ॥ पतितापर्वतेतत्रपूजितासुखदायिनी ॥ ८ ॥ ज्वालामुखीतिसाप्रोक्तासर्वकामफलप्रदा ॥ इदानींपूज्यतेलोकैःसर्वकामफलाप्तये ॥
॥ ९ ॥ सादेवीशैलराजस्यपत्नीमेनेतिविश्रुता ॥ पितॄणांमानसीकन्यातस्यांजन्मसमादधे ॥ १० ॥ ततश्चपार्वतीनामप्रसिद्धमभवत्तदा ॥ सापुनःशि
वमाराध्यभर्तारंशिवमाश्रिता ॥ ११ ॥ भजतांसर्वलोकानांफलंयच्छत्यनेकशः ॥ एतत्सर्वंसमाख्यातंयत्पृष्टोऽहंपुरातनम् ॥ १२ ॥ यच्छ्रुत्वासर्वपापे
भ्योमुच्यतेनाऽत्रसंशयः ॥ इतिश्रुत्वावचस्तस्यनैमिषारण्यवासिनः ॥ १३ ॥ पप्रच्छुर्ऋषयःश्रेष्ठाःकथांपापप्रणाशिनीम् ॥ ऋषयऊचुः ॥ सूतसू
तमहाभागकथांपापप्रणाशिनीम् ॥ १४ ॥ श्रुत्वातुत्वन्मुखादेवनतृप्ताःस्मवयंप्रभो ॥ पुनःकथयतत्सर्वंशिवस्याराधनक्रमम् ॥ १५ ॥ यश्चयश्चविधिः
प्रोक्तोयेनैवाराधितःशिवः ॥ प्रसन्नेनाशिवेनैवकस्मैदत्तंफलंतुयत् ॥ १६ ॥ पार्वत्याश्चतपश्चैवविवाहश्चतथाऽनघ ॥ त्रिपुरस्यवधश्चैवज्योतिर्लिंगसमु
द्भवः ॥ १७ ॥ ज्योतिर्लिंगानिकतिधाकिंतेषांदर्शनेफलम् ॥ ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैर्वाशंभुपूजनम् ॥ १८ ॥ कथंकार्यंतथाब्रूहियथाव्यासमुखा
च्छ्रुतम् ॥ तच्छ्रुत्वावचनंतेषांवचनंश्रुतिसंमतम् ॥ १९ ॥ उवाचसकलंतत्रप्रश्नस्याऽनुक्रमेणतु ॥ सूतउवाच ॥ सम्यक्पृष्टंभवद्भिश्चयद्रहस्यंमुनी
श्वराः ॥ २० ॥ तदहंकथयाम्यद्ययथाबुद्धियथाश्रुतम् ॥ भवद्भिःपृच्छ्यतेयद्वत्तथाव्यासेनवैपुरा ॥ २१ ॥ पृष्टंसनत्कुमारायतच्छ्रुतंह्युपमन्युना ॥
ततोव्यासेनवैश्रुत्वाशिवपूजादिकंचयत् ॥ २२ ॥ मह्यंचपाठितंतेनलोकानांहितकाम्यया ॥ यच्छ्रुतंचैवकृष्णेनह्युपमन्योर्महात्मनः ॥ २३ ॥ तदहं
कथयिष्यामिश्रूयतामृषिसत्तमाः ॥ वक्ष्यामिशृणुसंक्षेपाल्लिंगार्चनविधिक्रमम् ॥ २४ ॥ वक्तुंवर्षशतेनाऽपिनशक्यंविस्तरेणतु ॥ एवंचशांकरंरूपंसुख
मीप्सुःसनातनम् ॥ २५ ॥ पूजयेत्परयाभक्त्यासर्वकामवराप्तये ॥ दारिद्र्यंरोगदुःखंचसंकटंशत्रुसंभवम् ॥ २६ ॥ पापंचतुर्विधंतावद्यावन्नार्चयतेशि
वम् ॥ संपूजितेशिवेदेवेसर्वंदुःखंविलीयते ॥ २७ ॥ योवैमानुषमाश्रित्यसुखसंतानकामुकः ॥ तेनपूज्योमहादेवःसर्वकामार्थसाधकः ॥ २८ ॥ ब्राह्म
णाःक्षत्रियावैश्याःशूद्राश्चविधिवत्क्रमात् ॥ प्रातःकालेसमुत्थायमुहूर्तेब्राह्मसंज्ञिते ॥ २९ ॥ विष्णोश्चस्मरणंकृत्वागुरोश्चैवाऽथवापुनः ॥ तीर्थानांस्मर
णंकृत्वाध्यानंचैवहरेरिति ॥ ३० ॥ मेघश्यामचतुर्बाहोभक्तानामभयप्रद ॥ तेरूपंसुंदरंसर्वंह्यदिवसतुनित्यशः ॥ ३१ ॥ ततःस्तोत्रंशुभंनामगृह्णी
याद्विधिपूर्वकम् ॥ तत्रोत्थायमलोत्सर्गंदक्षिणस्यांदिशिक्रमात् ॥ ३२ ॥ एकांतेतुतदाकृत्वामलोत्सर्गंविधिपुनः ॥ शुद्धांमृदंसमादायपंचवारंविशु
द्धये ॥ ३३ ॥ क्षत्रियश्चचतुर्वारंवैश्योवारत्रयंतथा ॥ शूद्रश्चैवद्विवारंचमृदांतुग्रहणंक्रमात् ॥ ३४ ॥ हस्तौपादौचप्रक्षाल्यपूर्ववन्मृदमाहरेत् ॥

स्त्रीणांतुशूद्रवत्कार्यंमृदादिग्रहणंतथा ॥ ३५ ॥ दतकाष्ठंतथाकुर्याद्द्वादशांगुलमानतः ॥ एकादशांगुलंराजातथावैश्योदशांगुलम् ॥ ३६ ॥ शूद्रोनवां
गुलंकुर्यादितिमानमिदंस्मृतम् ॥ कालदोषंविचार्यैवमनूच्छिष्टंविवर्जयेत् ॥ ३७ ॥ स्नानंतुविधिवत्कार्यंतीर्थादिषुक्रमेणच ॥ देशकालाविरोधेनस्नानं
कार्यंसमंत्रकम् ॥ ३८ ॥ आचम्यप्रथमंतत्रधौतवस्त्रंतुधारयेत् ॥ एकांतेतुस्थलेस्थित्वासंध्याविधिमथाचरेत् ॥ ३९ ॥ यथायोग्यंविधिंकृत्वापूजा
विधिमथाचरेत् ॥ मनस्तुसुस्थिरंकृत्वापूजागारंप्रविश्यच ॥ ४० ॥ पूजाद्रव्यंसमास्थायक्रमेणपूजयेद्धरम् ॥ प्रथमंचगणाधीशंद्वारपालंततःपरम् ॥
॥ ४१ ॥ दिक्पालास्तुततःपूज्याःपश्चात्पीठंप्रकल्पयेत् ॥ अथवाऽष्टदलंकृत्वापूजाद्रव्यसमीपतः ॥ ४२ ॥ उपविश्यततस्तत्रउपलक्ष्यशिवंप्रभुम् ॥
आचामत्रितयंकृत्वाप्रक्षाल्यचपुनःपुनः ॥ ४३ ॥ प्राणायामत्रयंकृत्वाध्यायेद्देवंचत्र्यंबकम् ॥ पंचवक्त्रंदशभुजंशुद्धस्फटिकसंनिभम् ॥ ४४ ॥ सर्वा
भरणसंयुक्तंव्याघ्रचर्मोत्तरीयकम् ॥ तस्यसारूप्यमाश्रित्यदहेत्पापंनरस्तदा ॥ ४५ ॥ शैवींतनुंसमास्थायपूजयेत्परमेश्वरम् ॥ देहशुद्धिंततःकृत्वामू
लमंत्रंन्यसेत्क्रमात् ॥ ४६ ॥ सर्वत्रप्रणवेनैवषडंगन्यासमाचरेत् ॥ कृत्वाद्यादिप्रयोगंचततःपूजांसमारभेत् ॥ ४७ ॥ तथाचाचमनीयार्थंकल्पितंपा
त्रमेवच ॥ स्थापयेद्विधिवद्धीमान्नवकुंभान्यथाविधि ॥ ४८ ॥ दर्भैराच्छाद्यतानेवसंस्थाप्याऽभ्युक्ष्यवारिणा ॥ तेषुतेषुचसर्वेषुक्षिपेत्तोयंसुशीतलम् ॥
॥ ४९ ॥ प्रणवेनक्षिपेत्तेषुद्रव्याण्यालोक्यबुद्धिमान् ॥ उशीरंचंदनंचैवपाद्येतुपरिकल्पयेत् ॥ ५० ॥ जातिकंकोलकर्पूरंबहुमूलतमालकम् ॥ चूर्ण
यित्वायथान्यायंक्षिपेदाचमनीयके ॥ ५१ ॥ एलांसर्वेषुपात्रेषुदापयेच्चंदनंतथा ॥ पार्श्वतोदेवदेवस्यनंदीशंतुसमर्चयेत् ॥ ५२ ॥ गंधैःपुष्पैस्तथाधू
पैर्विविधैःपूजयेच्छिवम् ॥ लिंगशुद्धिंततःकृत्वासुदायुक्तोनरस्तदा ॥ ५३ ॥ जप्त्वासर्वाणिमंत्राणिप्रणवादिनमोंतकम् ॥ कल्पयेदासनंपश्चात्पद्माख्यं
प्रणवेनतु ॥ ५४ ॥ तस्यपूर्वदलंसाक्षादणिमामयमक्षरम् ॥ लघिमादक्षिणंचैवमहिमापश्चिमंतथा ॥ ५५ ॥ प्राप्तिश्चैवोत्तरंपत्रंप्राकाम्यंपावकस्यच ॥
ईशित्वंनैर्ऋतंपत्रंवशित्वंवायुगोचरे ॥ ५६ ॥ सर्वज्ञत्वंतथैशान्यांकर्णिकासोमउच्यते ॥ सोमस्याधस्तथासूर्यस्तथाऽधःपावकःस्वयम् ॥ ५७ ॥ ध
र्मादयोपिदिक्ष्वंतेअनंतंकल्पयेत्क्रमात् ॥ अव्यक्तादिचतुर्दिक्षुसोमस्यांतेगुणत्रयम् ॥ ५८ ॥ सद्योजातंप्रपद्यामीत्यावाह्यपरमेश्वरम् ॥ वामदेवेन
मंत्रेणतिष्ठेच्चैवासनोपरि ॥ ५९ ॥ सांनिध्यंरुद्रगायत्र्याअघोरेणनिरुध्यच ॥ ईशानःसर्वविद्यानामितिमंत्रेणपूजयेत् ॥ ६० ॥ पाद्यमाचमनीयंचविभोश्चाऽर्घ्यं
प्रदापयेत् ॥ स्नापयेद्विधिनारुद्रंगंधचंदनवारिणा ॥ ६१ ॥ पंचगव्यविधानेनगृह्यपात्रेऽभिमंत्र्यच ॥ प्रणवेनैवगव्यैस्तुस्नापयेत्पयसाचतम् ॥ ६२ ॥
दध्नाथमधुनाचैवतथाचेक्षुरसेनच ॥ घृतेनचतथापूज्यंसर्वकामहितावहम् ॥ ६३ ॥ पुण्यैर्द्रव्यैर्महादेवंप्रणवेनाऽभिषेचयेत् ॥ जलभांडैःपवित्रैस्तु

मंत्रैस्तोयंक्षिपेत्ततः ॥ ६४ ॥ शुद्धीकृत्ययथान्यायंसितवस्त्रेणसाधकः ॥ तावद्दूरंनकर्त्तव्यंयावच्चचंदनंक्षिपेत् ॥ ६५ ॥ तंडुलैःसुंदरैस्तत्रपूजये
च्छंकरंमुदा ॥ कुशापामार्गकर्पूरजातिचंपकपाटलैः ॥ ६६ ॥ करवीरैःसितैश्चैवमल्लिकाकमलोत्पलैः ॥ अपूर्वपुष्पैर्विविधैश्चंदनाद्यैश्चतज्जलम् ॥ ६७ ॥
जलेनजलधारांचकल्पयेत्परमेश्वरे ॥ पात्रैश्चविविधैर्देवंस्नापयेच्चमहेश्वरम् ॥ ६८ ॥ मंत्रपूर्वंचकर्त्तव्यापूजासर्वफलप्रदा ॥ मंत्राणितेप्रवक्ष्यामिशृणुस
र्वार्थसिद्धये ॥ यैर्लिंगंसकृदप्येवंस्नापयंतिचमानवाः ॥ ६९ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांशिवपूजाविधानंनामसप्तमोऽध्यायः ॥ ७ ॥
॥ सूतउवाच ॥ पावमानेनमंत्रेणतथावाङ्मीयकेनच ॥ रुद्रेणनीलरुद्रेणश्रीसूक्तेनशुभेनच ॥ १ ॥ रजनीसूक्तकेनैवचमकेनशुभेनच ॥
श्रीतारेणाथशिरसाशुभेनाथर्वणेनच ॥ २ ॥ शांत्यावाऽथपुनःशांत्याभारुंडेनाऽरुणेनच ॥ अथज्येष्ठेनसाम्नावातदादेवव्रतेनच ॥ ३ ॥ रथंतरे
णपुष्येणसूक्तेनपुरुषेणतु ॥ मृत्युंजयेनमंत्रेणपंचाक्षरेणवापुनः ॥ ४ ॥ जलधारासहस्रेणशतमेकोत्तरेणवा ॥ कर्त्तव्यावेदमार्गेणनामभिर्वाऽथवापुनः ॥
॥ ५ ॥ ततश्चंदनपुष्पादिरोपणीयंशिवोपरि ॥ दापयेत्प्रणवेनैवमुखवासादिकानिवै ॥ ६ ॥ ततःस्फटिकसंकाशंदेवंनिष्कलमक्षरम् ॥ कारणंसर्व
लोकानांसर्वलोकमयंपरम् ॥ ७ ॥ ब्रह्मेंद्रविष्णुरुद्राद्यैरपिदेवैरगोचरम् ॥ वेदविद्भिर्हिवेदांतेत्वगोचरमितिस्मृतम् ॥ ८ ॥ आदिमध्यांतरहितंभे
षजंसर्वरोगिणाम् ॥ शिवतत्त्वमितिख्यातंशिवलिंगेव्यवस्थितम् ॥ ९ ॥ प्रणवेनैवमंत्रेणपूजयेल्लिंगमूर्धनि ॥ धूपैर्दीपैश्चतांबूलैरारात्रिकविधानतः
॥ १० ॥ नमस्कारैःस्तवैश्चाऽन्यैर्मंत्रैर्नानाविधैरपि ॥ स्तोत्रंजपंचविधिनानमस्कारंप्रदाक्षिणाम् ॥ ११ ॥ अर्घंदत्त्वातुपुष्पाणिपादयोस्तुविकीर्यच ॥
प्रणिपत्यचदेवेशमात्मनाराधयेच्छिवम् ॥ १२ ॥ हस्तेपुष्पंगृहीत्वाचसमुत्थायकृतांजलिः ॥ प्रार्थयेत्पुनरीशानंमंत्रेणाऽनेनवैशिवम् ॥ १३ ॥ अज्ञानाद्य
दिवाज्ञानाज्जपपूजादिकंमया ॥ कृतंतदस्तुसफलंकृपयातवशंकर ॥ १४ ॥ पठित्वैवंतुतत्पुष्पंशिवोपरिन्यसेत्तदा ॥ स्वस्त्ययनंततःकृत्वाह्याशिषो
विविधास्तदा ॥ १५ ॥ मार्जनंतुततःकार्यंशिवस्योपरिवैपुनः ॥ नमस्कारंततःक्षांतिंपुनरागमनायच ॥ १६ ॥ अघोच्चारणमुच्चार्यनमस्कारंप्र
कल्प्यच ॥ प्रार्थयेच्चपुनस्तत्रसर्वभावसमन्वितः ॥ १७ ॥ शिवेभक्तिःशिवेभक्तिःशिवेभक्तिर्भवेभवे ॥ अन्यथाशरणंनास्तित्वमेवशरणंमम
॥ १८ ॥ इतिसंप्रार्थ्यदेवेशंसर्वसिद्धिप्रदायकम् ॥ पूजयेत्परयाभक्त्यागल्लनादैर्विशेषतः ॥ १९ ॥ नमस्कारंततःकृत्वापरिवारगणैःसह ॥
प्रहर्षमतुलंलब्ध्वाकार्यंकुर्याद्यथासुखम् ॥ २० ॥ एवंयःपूजयेन्नित्यंशिवभक्तिपरायणः ॥ तस्यैवसकलासिद्धिर्जायतेतुपदेपदे ॥ २१ ॥
षण्मासाज्जायतेसिद्धिर्मनोभीष्टफलंध्रुवम् ॥ रोगंदुःखंचशोकंचउद्वेगंकृत्रिमंतथा ॥ २२ ॥ कौटिल्यंचगरंचैवयद्यद्दुःखमुपस्थितम् ॥ तद्दुःखंनाशय

त्येवशिवःशिवकरःपरः ॥२३॥ कल्याणंजायतेतस्यशुक्लपक्षेयथाशशी ॥ वर्धंतेतद्गुणास्तत्रशिवस्यपूजनाद्ध्रुवम् ॥२४॥ एवंतुतेमयाप्रोक्तंश्रुतंव्यासमुखा
दिह ॥ २५ ॥ अतःपरंप्रवक्ष्यामिकथांपापप्रणाशिनीम् ॥ यापृच्छ्यतेभवद्भिश्चतामहंविधिपूर्वकम् ॥ २६ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायां
शिवपूजाविधिर्नामाष्टमोऽध्यायः ॥ ८॥ ॥ ऋषयऊचुः ॥ व्यासशिष्यमहाभागसम्यगुक्तंत्वयाऽनघ ॥ त्रिपुरस्यजयंब्रूहिकथंवैत्रिपुरोहतः ॥१॥ किंरूपं
त्रिपुरस्येहकुत्रवाविकृतिंगतः ॥ किंसैन्यंतस्यदुष्टस्यशिवस्यचमहद्बलम् ॥ २ ॥ एतत्सर्वंप्रयत्नेनअन्यद्वाविविधंपुनः ॥ कथनीयंत्वयासम्यग्धन्यस्त्वंबु
द्धिमानसि ॥ ३ ॥ एवंवचस्तदाश्रुत्वासूतश्चैवाऽब्रवीत्पुनः ॥ सूतउवाच ॥ साधुपृष्टंमहाभागालोकानांहितकाम्यया ॥ ४ ॥ यच्छ्रुत्वासर्वलोकानांदुः
खहानिर्भविष्यति ॥ तारपुत्रोमहामायोमायिनामपिमोहकः ॥ ५ ॥ सर्वदेवजयंकर्त्तुंतपस्तेपेसुदारुणम् ॥ मधोर्वनमुपाश्रित्यगुर्वाज्ञापरिपालकः ॥ ६ ॥
ऊर्ध्वबाहुश्चैकपादोरविंपश्यन्सचक्षुषा ॥ शतवर्षंतथातस्थौशतमंगुष्ठकेनच ॥ ७ ॥ शतमेकंजलेनैवशतमेकंतुवायुभुक् ॥ शतमेकंजलेतिष्ठञ्छतमेकंच
स्थंडिले ॥ ८ ॥ शतमेकंतथाचाग्नौशतमेकमधोमुखः ॥ शतमेकंतुहस्तस्यतलेनचभुवंस्पृशन् ॥ ९ ॥ शतमेकंतुवृक्षाणांशाखामालंब्यवैमुने ॥
अधोमुखंतुवर्षाणांशतमेकंगतंतदा ॥ १० ॥ एवंकष्टतरंतप्तंश्रृण्वतामपिदुःसहम् ॥ तस्यैवशिरसस्तत्रतेजश्चनिःसृतंमहत् ॥ ११ ॥ तेनैवदेवलोका
स्तेदग्धप्रायाबभूविरे ॥ इंद्रश्चभयमापेदेस्वपदंकर्षयिष्यति ॥ १२ ॥ अत्यंतदुःखमापन्नाःसर्वेदेवास्तदाविदुः ॥ अकांडेचैवब्रह्मांडंसंहरिष्यतिवैप्रभुः
॥ १३ ॥ इतिसंशयमापन्नानिश्चयंनोपलेभिरे ॥ एतस्मिन्समयेतेवैज्ञातवंतोऽत्रकारणम् ॥ १४ ॥ ब्रह्माणंचसमुद्दिश्यतपस्तप्यतिदारुणम् ॥ इतिनि
श्चयमापन्नादेवाश्चैवपरस्परम् ॥ १५ ॥ यदिब्रह्मावरंह्यस्यनदास्यतिसुदुष्करम् ॥ तथाऽपिसर्वलोकानांनाशश्चैवभविष्यति ॥ १६ ॥ सर्वथादुःखमुत्पन्नं
यदिनैवप्रदास्यति ॥ दास्यतिवावरंतस्मैदुःखंवैसर्वथाध्रुवम् ॥ १७ ॥ यदिनदीयतेह्यस्मैवरंदुःखहरंनृणाम् ॥ तथेदानींचलोकानांनाशोभवितुमर्हति
॥ १८ ॥ यदिदत्तोवरस्तस्मैकालेनाशोभविष्यति ॥ एतस्माच्चवरंतस्मैदीयतेनात्रसंशयः ॥ १९ ॥ इतिकृत्वामतिंदेवाब्रह्माणंसमुपस्थिताः ॥ नमस्कृ
त्यस्थितास्तत्रतस्मैसर्वंन्यवेदयन् ॥ २० ॥ ब्रह्मासर्वंसुनिश्चित्यदेवाज्ञापरिसाधकः ॥ वरंदातुंतदातत्रजगामहंसवाहनः ॥ २१ ॥ यत्रैषतारकोनामत
पस्तप्यतिदारुणम् ॥ उवाचवचनंतस्मैवरंब्रूहियथेप्सितम् ॥ २२ ॥ तपस्तप्तंत्वयाघोरंनादेयंविद्यतेतव ॥ इत्येवंतुतदाश्रुत्वातारकाख्योमहासुरः
॥ २३ ॥ ब्रह्माणंप्रणिपत्यैवंवरंवव्रेसुदारुणम् ॥ दैत्यउवाच ॥ त्वयिप्रसन्नेवरदेकिमसाध्यंभवेन्मम ॥ २४ ॥ यदिप्रसन्नोदेवेशयदिदेयोवरोमम ॥ वरद्वयं
तदादेयंश्रूयतांचपितामह ॥ २५ ॥ त्वयाचनिर्मितेलोकेमत्तुल्योबलवान्नहि ॥ शिववीर्यसमुत्पन्नःपुत्रःसेनापतिर्यदा ॥ २६ ॥ भूत्वाशस्त्रंक्षिपेन्मह्यं

तदामेमरणंभवेत् ॥ इत्युक्तेचतदातेनब्रह्मालोकपितामहः ॥ २७ ॥ वरंचताहृशंदत्त्वादेवानुज्ञापरायणः ॥ जगामभवनंस्वीयंदाहशांतिमुपागतः ॥
॥ २८ ॥ दैत्योऽपितपसस्तस्माद्विररामहामुने ॥ वरंलब्ध्वाशुभंतत्रशोणिताख्यंपुरंगतः ॥ २९ ॥ इतस्ततश्चतेदैत्यामिलितास्तमथाऽब्रुवन् ॥
राजाभवत्वमस्माकंत्रिलोक्यांतारकासुर ॥ ३० ॥ अभिषिक्तोहितैराज्येदैत्याधीशोऽभवत्पुरा ॥ आज्ञांप्रवर्तयामासपृथिव्यांनाऽन्यशासनम् ॥ ३१ ॥
ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चान्येविजातयः ॥ सर्वेवैपीडितास्तेनतारकेणदुरात्मना ॥ ३२ ॥ देवाश्चदानवाश्चाऽन्येयक्षाःकिंपुरुषास्तदा ॥ पीडिताः
सर्वएवैतेतेभ्योरत्नान्युपाददे ॥३३॥ इंद्रादिभिश्चदिक्पालैःस्वीयंरत्नंसमर्पितम् ॥ इंद्रेणोच्चैःश्रवास्तस्मैधर्मेणरत्नदंडकम् ॥ ३४ ॥ कुबेरेणगदातस्मै
निधयोनवएवच ॥ वरुणेनहयाःशुद्धाऋषिभिःकामधुक्तथा ॥३५॥ यत्रयत्रशुभंदृष्टंतत्तदानीतवांस्तदा ॥ समुद्रश्चतथारत्नान्यदात्तस्मैपुरामुने ॥ ३६ ॥
सूर्यश्चतप्यतेतावद्यावद्दुःखंनजायते ॥ चंद्रस्तत्रसदादृश्योवायुःसर्वानुकूलवान् ॥३७॥ देवानांचैवयद्धव्यंपितॄणांकव्यमेवच ॥ तत्सर्वंसमुपादत्तमसुरेणब
लीयसा ॥३८॥ त्रैलोक्यंचैवतत्सर्वंतारकाज्ञापरायणम् ॥ तेदेवाश्चसदातत्रसेवामार्गपरायणाः ॥३९॥ ऋषयश्चतदासर्वेतस्याज्ञापरिपालकाः ॥ यक्षाःकिं
पुरुषाश्चाऽन्येकिंपुनर्मानुषाइमे ॥४०॥ देवोद्यानानिसर्वाणितीर्थान्यपिमहामुने ॥ आनीतानिगृहेतेननाकिंचिदवशोषितम् ॥४१॥ एवंवर्षाण्यनेकानिगता
निपीडितास्तदा॥सर्वेदेवामिलित्वाचब्रह्माणंशरणंगताः॥४२॥ ॥ इतिश्रीशिवमहापुराणे ज्ञानसंहितायांतारकोपाख्यानेदेवगमनंनामनवमोऽध्यायः॥९॥
॥ सूतउवाच ॥ ॥ तेसर्वेचतदागत्वाब्रह्माणंजगतःप्रभुम् ॥ नमस्कृत्यस्थितास्तत्रनम्रीभूताऋषीश्वराः ॥ १ ॥ तान्विषण्णांस्तदातत्रदृष्ट्वोवाचपि
तामहः ॥ यूयमत्रकथंप्राप्ताःकिंदुःखंभवतांपुनः ॥ २ ॥ तदहंस्फोटयाम्यद्यसाध्यंयदिभवेदिह ॥ इत्येतद्वचनंश्रुत्वाब्रह्माणंपरमर्षयः ॥ ३ ॥ देवाः
सानुचराःसर्वेवचनंचेदमब्रुवन् ॥ देवाऊचुः ॥ भवतःकिमविज्ञातंदुःखंचयदुपस्थितम् ॥ ४ ॥ तारकाच्चैवयद्दुःखंसंभूतंपरमेश्वर ॥ तद्दुःखंनाशयत्वंच
वयंसर्वेसमागताः ॥ ५ ॥ इत्येवंवचनंश्रुत्वाब्रह्मावचनमाददे ॥ मत्तोनैववधोयोग्योमत्तोवृद्धिमुपागतः ॥ ६ ॥ उपायंवोदिशाम्यद्यश्रूयतामृषिसत्तमाः ॥
॥ ब्रह्मोवाच ॥ शिववीर्यसमुत्पन्नःपुत्रश्चैनंहनिष्यति ॥ ७ ॥ तच्चैवदुर्लभंदेवाविचार्यैवंनिरंतरम् ॥ बुद्धिरेकासमुत्पन्नातथाचाक्रियतेयादि ॥ ८ ॥
हिमवच्छिखरेरम्येशंभुस्तप्यतिनित्यशः ॥ सखीभ्यांसहितातत्रपरिचर्यांशिवस्यह ॥ ९ ॥ वचनान्नारदस्यैवमुमापित्राऽनुशासिता ॥ करोती
हऋषिश्रेष्ठास्तस्याःसंयोगतांव्रजेत् ॥ १० ॥ यदाशिवस्तदातत्रतस्यांवीर्यंसमावपेत् ॥ ततश्चैवाथवःकार्यंभविष्यतिनचाऽन्यथा ॥ ११ ॥
शिववीर्यंसमाधातुंक्षमानाऽन्यापराशिवा ॥ यथावीर्यमदीयंवैजलरूपधरःशिवः ॥ १२ ॥ समाधातुंसमर्थोऽस्तितस्मादन्योनवैसुतः ॥ तथोपायंकरि

ष्यध्वंतदासिद्धिर्भविष्यति ॥ १३ ॥ इत्येवंवचनंतस्यश्रुत्वातेसर्वएवहि ॥ नमस्कृत्यसुरास्तत्रविचार्यतुपरस्परम् ॥ १४ ॥ तेसर्वेतुमरुत्वंतंसर्वंकार्यं
न्यवेदयन् ॥ यथायथाशिवायैवरुचिरुत्पद्यतेतथा ॥ १५ ॥ मघवंस्त्वयाचकर्तव्यंब्रह्मोक्तंसर्वमेवतत् ॥ इत्येवंसकलंदेवंनिवेद्यविधिवत्पुनः ॥ १६ ॥
जग्मुस्तेमुनयोदेवाःस्वंस्वंस्थानंमुदान्विताः ॥ गतेषुतेषुदेवेंद्रःसस्मारमकरध्वजम् ॥ १७ ॥ आगतस्तत्क्षणादेवरत्यायुक्तःस्वयंप्रभुः ॥ प्रणामंचततः
कृत्वास्थित्वाप्रांजलिरब्रवीत् ॥ १८ ॥ किंकार्यंतेसमुत्पन्नंस्मृतोऽहंकेनहेतुना ॥ तत्त्वंकथयदेवेशतत्कर्तुंसमुपागतः ॥ १९ ॥ इत्युक्त्वातुमहेंद्राय
स्थितस्तूष्णींतयासह ॥ इंद्रोऽपिवचनंश्रुत्वाकंदर्पस्यमहात्मनः ॥ २० ॥ उवाचवचनंतंवैयुक्तंयुक्तमितिस्तुवन् ॥ इंद्रउवाच ॥ त्वयासाधुसमारब्धं
यत्तेकार्यमुपस्थितम् ॥ २१ ॥ तत्कर्तुमुद्यतोऽसित्वंधन्यस्त्वंमकरध्वज ॥ प्रस्तुतंशृणुमद्वाक्यंकथयामितवाऽनघ ॥ २२ ॥ मदीयंचैवयत्कार्यंत
त्वदीयंनचाऽन्यथा ॥ मित्राणिममसंत्येवत्वत्तुल्यानिकदाचन ॥ २३ ॥ जयार्थंममदेवेननिर्मितंवज्रमुत्तमम् ॥ अन्यदस्त्रंभवानेवदेवेननिर्मितःपुरा ॥
॥ २४ ॥ वज्रंहिंसात्मकंविद्धिभवान्सुखकरंमतम् ॥ द्वयोरपिभवानद्यश्रेष्ठःसर्वेषुसत्तम ॥ २५ ॥ वज्रंतुनिष्फलंस्याद्वैत्वंतुनैवकदापिहि ॥ यतो
हितंप्रजायेतततःकोनुप्रियःपरः ॥ २६ ॥ तस्मान्मित्रवरस्त्वंचकार्यंकर्तुमिहार्हसि ॥ ममदुःखंसमुत्पन्नमसाध्यंबहुकालिकम् ॥ २७ ॥ केनाऽपिनै
वतच्छक्यंदूरीकर्तुंत्वयाविना ॥ दातुश्चैवपरीक्षावैदुर्भिक्षेज्ञायतेनृभिः ॥ २८ ॥ शूरस्यैवतुसंग्रामेमित्रस्यचतथाऽऽपदि ॥ अशक्तौचतथास्त्रीणांविपत्तौ
सुकुलस्यच ॥ २९ ॥ स्नेहस्यचपरोक्षेणसत्यस्यसंकटेगते ॥ परीक्षातुत्वदीयाऽद्यमित्रवर्यभविष्यति ॥ ३० ॥ नकेवलंमदीयंचकार्यंदेवसुखावहम् ॥
वयंचयाचितारःस्मःकार्यंकार्यंत्वयाशुभम् ॥ ३१ ॥ इत्येवंमघवद्वाक्यंश्रुत्वातुमकरध्वजः ॥ उवाचप्रेमगंभीरंगद्गदस्मितपूर्वकम् ॥ ३२ ॥ कामउवाच ॥
किमर्थंभाषसेदेवनांऽतरंह्यावयोरिह ॥ उपकृत्कृत्रिमोलोकेदृश्यतेकथनेनच ॥ ३३ ॥ कंठेनैवचयोब्रूयात्सकिंकार्यंकरिष्यति ॥ तथापिचमहा
राजकथयामिशृणुष्वतत् ॥ ३४ ॥ मुक्तिमार्गंसमापन्नंतेशत्रुंपातयाम्यहम् ॥ तेपदंकर्षितुंयोवैतपस्तप्यतिदारुणम् ॥ ३५ ॥ क्षणेनपातयाम्यद्यक
टाक्षेणस्त्रियास्तथा ॥ देवंवादानवंवाऽपिऋषिंवादेवसत्तम ॥ ३६ ॥ मानुषाणांनवैमेऽद्यगणनापातनेमता ॥ वज्रंतिष्ठतुदूरेवैशस्त्राण्यन्यान्यनेकशः ॥ ३७ ॥
किंतेकार्यंकरिष्यंतिमयिमित्रेस्थितेप्रभो ॥ अन्येषांगणनानास्तिपातयामिहरंयदि ॥ ३८ ॥ एवंतुवचनंतस्यश्रुत्वाहर्षमुपागतः ॥ उवाचप्रणयन्वा
चंकामंकांतासुखावहम् ॥ ३९ ॥ इंद्रउवाच ॥ यत्कार्यंमनसोद्दिष्टंतत्कार्यंकथितंत्वया ॥ शृणुकामप्रवक्ष्यामियदर्थंस्मरणंतव ॥ ४० ॥ तारकाख्यो
महादैत्योब्रह्मणोवरमुत्तमम् ॥ संप्राप्यपीड्यतेलोकान्नष्टधर्माह्यनेकशः ॥ ४१ ॥ दुःखितादेवताःसर्वाऋषयश्चतथाऽमलाः ॥ देवानांचायुधान्यत्र

विफलान्यभवन्प्रभो ॥ ४२ ॥ मरणंनैवतस्येत्थंभविष्यतिकदाचन ॥ एतस्यमरणंप्रोक्तंशंभुवीर्याद्धुरात्मनः ॥ ४३ ॥ एतत्कार्यंत्वयासाध्यंदेवानांपर
मंसुखम् ॥ ममापिचहितंलोकेकर्तुमर्हसिसांप्रतम् ॥ ४४ ॥ शंभुश्चगिरिराजेवैतपःपरममास्थितः ॥ तत्समीपेचसेवार्थंपार्वतीसखिसंयुता ॥ ४५ ॥
तिष्ठतिचमहाराजपित्राज्ञयामयाश्रुतम् ॥ तथातस्यांरुचिस्तस्यशिवस्यपरमात्मनः ॥ ४६ ॥ जायतेनितरांकामतथाकार्यंत्वयाध्रुवम् ॥ इतिकृत्वा
कृतीस्यास्त्वंदुःखंचैवगमिष्यति ॥ ४७ ॥ लोकस्वास्थ्यंप्रतापात्तेभविष्यतिनचाऽन्यथा ॥ इत्युक्तःसतुकामोवैप्रफुल्लमुखपंकजः ॥ ४८ ॥ अब्रवीत्तं
दातत्रहितमुत्पादयन्प्रभुम् ॥ प्रेम्णास्निग्धंचदेवेशंकरिष्यामिनसंशयः ॥ ४९ ॥ इत्युक्त्वावचनंतस्मैतथेत्योमितितद्वचः ॥ गृहीत्वाशिरसाकामः
सदारःसवसंतकः ॥ ५० ॥ यत्रचैवहरःसाक्षात्तपतेपरमंतपः ॥ तत्रगत्वामधुश्चादौधर्मंविस्तारयन्स्थितः ॥ ५१ ॥ वसंतस्यचयेधर्मास्तेधर्मास्तद्व
नेगताः ॥ वनानिचप्रफुल्लानिपलाशानांचतद्वने ॥ ५२ ॥ पुष्पाणिसहकारेषुअशोकवनिकासुच ॥ बकुलेषुचपुष्पाणिभ्रमराकुलितानिच ॥ ५३ ॥
तिलकेषुतथैकेषुकोकिलाकलकूजितम् ॥ भ्रमराणांतथाशब्दोह्यनेकोभून्महामुने ॥ ५४ ॥ चंद्रस्यविशदाह्यासन्किरणादूतिकाइव ॥ मानिनःप्रेरया
मासुःकालेकामपदार्पितान् ॥ ५५ ॥ मारुतश्चसुखश्चात्रववौविरहिणांप्रियः ॥ वनौकसांतदातत्रमुनीनांदुःसहोह्यभूत् ॥ ५६ ॥ अचेतनानांतत्रासीत्का
मासक्तिःसचेतसाम् ॥ अकालिनींप्रवृत्तिंचमधोर्वीक्ष्यहरस्तदा ॥ ५७ ॥ आश्चर्यंपरमंगत्वातपःपरमदुष्करम् ॥ तपयामासतत्रैवहरोदुःखहरःपरः ॥
॥ ५८ ॥ वसंतेप्रसृतेतत्रकामोरतिसमन्वितः ॥ चूतंबाणंसमाकृष्यस्थितःपार्श्वेतुवामतः ॥ ५९ ॥ रत्यायुक्तंतदाकामंदृष्ट्वाकोवानमोहितः ॥ एतस्मिन्नं
तरेदेवीपुष्पाभरणभूषिता ॥ ६० ॥ सखीभ्यांसंयुतातत्रयत्रातिष्ठद्धरःस्वयम् ॥ जगामशिवपूजार्थंनीत्वापुष्पाण्यनेकशः ॥ ६१ ॥ पृथिव्यांयादृशंलोके
सौंदर्यंविविधंमहत् ॥ तत्सर्वंचैकतस्तस्यांपार्वत्यांतुविनिश्चितम् ॥ ६२ ॥ आर्तवानिचपुष्पाणिधृतानिचतयातदा ॥ तत्सौंदर्यंकथंवर्ण्यमपिवर्षशते
रपि ॥ ६३ ॥ यदाशिवसमीपेतुगतासापर्वतात्मजा ॥ तदैवाकर्षयच्चापंरुच्यर्थंशूलपाणिनः ॥ ६४ ॥ तच्चापंपतितंहस्तात्पार्श्वेतस्यचवैतदा ॥ तया
गत्वोत्पलाक्ष्यावैदृष्टःशंभुःस्वयंतदा ॥ ६५ ॥ नमस्कृत्यतदापूजांकृत्वासीत्पुरतःस्थिता ॥ सादृष्टाप्रभुणातत्रसुंदरांगंविवृण्वती ॥ ६६ ॥ शिवोऽपि
वर्णयामासतदंगंसुंदरंतदा ॥ किंमुखंकिंशशांकश्चकिंनेत्रेचोत्पलेमते ॥ ६७ ॥ भ्रुकुट्यौधनुषीचैवकंदर्पस्यमहात्मनः ॥ अधरःकिंचबिंबंचकिंनासाकशुक
चंचुका ॥ ६८ ॥ किंस्वरःकोकिलालापःकिंमध्यंचैववेदिका ॥ किंगतिर्वर्ण्यतेह्यस्याःकिंरूपंवर्ण्यतेमुहुः ॥ ६९ ॥ पुष्पाणिवर्ण्यतेकिंचवस्त्राणिचपुनःपुनः ॥ लालि
त्यंचैवयत्सृष्टौतदेकत्रविनिर्मितम् ॥ ७० ॥ इत्येवंवर्णयित्वातुतपसोविरराम ह ॥ हस्तंवस्त्रांचलेयावत्तावच्चदूरतोगता ॥ ७१ ॥ स्त्रीस्वभावात्तदासाचलज्जितासुं

दरीस्वयम् ॥ विवृण्वतीतथांगानिपश्यंतीचमुहुर्मुहुः ॥७२॥ एवंचेष्टांतदादृष्ट्वाशंभुर्मोहमुपागमत् ॥ यद्यालिंगनमेतस्याःकरोमिकिंपुनःसुखम् ॥ ७३ ॥
क्षणमात्रंविचार्यैवंकिमहंमोहमागतः ॥ ईश्वरोऽहंयदीच्छेयंपरांगस्पर्शनंमुदा ॥ ७४ ॥ तर्हिकोऽन्यतमःक्षुद्रःकिंकिंनैवकरिष्यति ॥ एवंविवेकमासाद्य
पर्यंकबंधनंदृढम् ॥ रचयामाससर्वात्माईश्वरःकिंपतेदिह ॥ ७५ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांशिवतपोवर्णनंनामदशमोऽध्यायः ॥ १० ॥
॥ ऋषयऊचुः ॥ सूतसूतमहाभागकिंजातंचततःपरम् ॥ कथयत्वंप्रसादेनकथांपापप्रणाशिनीम् ॥ १ ॥ सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठायज्जा
तंतदनंतरम् ॥ धैर्यस्यच्यवनंदृष्ट्वाविचारेतत्परःशिवः ॥ २ ॥ कारणंकिंचिदुत्पन्नंनाऽन्यथेदंभवेदिति ॥ दिशोविलोकयामासपरितःशंकरस्तदा ॥
॥ ३ ॥ वामभागेस्थितंकामंददर्शबाणकर्षिणम् ॥ तंदृष्ट्वाक्रोधसंयुक्तःसंजातस्तत्क्षणादपि ॥ ४ ॥ अहोदुष्टेनकामेननमुक्तोहंदुरासदः ॥ इत्येवंम
नसाक्रुद्धःशिवःपरमकोपनः ॥ ५ ॥ तृतीयात्तस्यनेत्राद्वैनिःससाराऽग्निरुच्छिखः ॥ भस्मसात्कृतवांस्तेनमदनंतावदेवहि ॥ ६ ॥ यावच्चमरुतांवा
चःक्षम्यतांवैप्रभोत्वया ॥ भवंतिचततःपूर्वंहतोऽसौमकरध्वजः ॥ ७ ॥ हतेतस्मिन्महावीर्येदेवादुःखमुपागताः ॥ शिवोऽपितत्क्षणादेवविहायाश्रमम
न्यतः ॥ ८ ॥ वेगदीर्घीकृतात्माचगिरिराजसुतातदा ॥ समादायसखीयुक्ताजगाममंदिरंस्वयम् ॥ ९ ॥ क्षणमात्रंरतिस्तत्रविसंज्ञाह्यभवत्तदा ॥ भर्तृ
जन्यंचयद्दुःखंनज्ञातमृषिसत्तमाः ॥ १० ॥ जातायांचैवसंज्ञायांरतिर्दुःखसमन्विता ॥ विललापतदातत्रवनमासीत्सुदुःखितम् ॥ ११ ॥ मयूराश्चैव
नृत्यंहिवृक्षाश्चचलनंजहुः ॥ मृगाश्चभ्रमणंब्रह्मन्भृंगागुंजारवंपुनः ॥ १२ ॥ पक्षिणश्चतदाविप्रामूकाश्चमुनयोयथा ॥ वायवश्चलनंहित्वावांतिनैवदिशो
दश ॥ १३ ॥ रतिरुवाच ॥ किंकरोमिक्कगच्छामिकिंकृतंदैवतैरिह ॥ स्वामिनंतुसमाहूयहाहाप्रियप्रियेतिच ॥ १४ ॥ हस्तौपादौतथास्फाल्यकेशा
न्त्रोटयत्तदा ॥ ब्रह्मणासदृशोयोगोनसोढोममकर्मणा ॥ १५ ॥ सुखदातानकोऽप्यस्तिदुःखदातानकश्चन ॥ सर्वोऽपिस्वकृतंभुंक्तेदेवाःशोच्यामयावृ
था ॥१६॥ तद्विलापंतदाश्रुत्वादेवाःशिवमुपाययुः॥स्तुत्वादेवंप्रपद्यैवंवचनंचेदमब्रुवन् ॥१७॥ देवाऊचुः ॥ भगवञ्छ्रूयतामेतद्वचनंचशुभंप्रभो ॥ कामेनै
वकृतंयच्चनस्वार्थंलोकशंकर ॥ १८ ॥ दुष्टेनपीडितैर्देवैःकारितंतद्धिनान्यथा ॥ रतिस्त्वेकाकिनीदेवीविलापंदुःखितासती ॥ १९ ॥ करोतिशंकरत्वंचप्रस
न्नोभवसर्वथा ॥ संहारंकर्त्तुकामोऽसिदैवतैःसहशंकर॥२०॥दुःखंतस्यास्तथादृष्ट्वानष्टप्रायाश्चदेवताः॥तस्मात्त्वयाचकर्तव्यंरत्याःशोकापनोदनम्॥ २१ ॥
नमस्कृत्यतदादेवाःस्तुतिंकृत्वाविधानतः ॥ प्रसन्नंकृतवंतस्तेशिवंलोकसुखावहम् ॥ २२ ॥ प्रसन्नोभगवांस्तत्रवचनंचेदमब्रवीत् ॥ शिवउवाच ॥
देवाश्चऋषयःसर्वेयज्जातंनान्यथाभवेत् ॥ २३ ॥ अनंगस्तावदेवस्याद्यावच्चरुक्मिणीपतिः ॥ द्वारकायांस्वयंस्थित्वापुत्रानुत्पादयिष्यति ॥ २४ ॥

ततःकृष्णस्तुरुक्मिण्यांकाममुत्पादयिष्यति ॥ प्रद्युम्ननामतस्यैवभविष्यतिनसंशयः ॥ २५ ॥ जातमात्रंतुतंदेवाःशंबरःसहरिष्यति ॥ हत्वाप्राप्यस
मुद्रेवैनगरंसगमिष्यति ॥ २६ ॥ तावच्चनगरेतस्यरत्यास्थेयंयथासुखम् ॥ तत्रकामंमिलित्वातुहत्वाशंबरमाहवे ॥ २७ ॥ तदीयंचैवयद्द्रव्यंनीत्वा
स्वनगरंपुनः ॥ गमिष्यतिस्वयंसावैदेवाःसत्यंवचोमम ॥ २८ ॥ इत्युक्त्वांतर्दधेरुद्रोदेवानांस्तुवतांतदा ॥ देवास्तांचसमासाद्यरुद्रस्यवचनाद्रतिम्
॥ २९ ॥ उक्त्वावचस्तदीयंचस्वंस्वंभुवनमाययुः ॥ कामपत्नीयथादिष्टंनगरंसागतातदा ॥ ३० ॥ प्रतीक्षंतीचतंकालंरुद्रादिष्टंमुनीश्वराः ॥ देवाश्चदुः
खिताःसर्वेहाहाकिंचभविष्यति ॥ ३१ ॥ तारकस्यकथंनाशोभविष्यतिपरस्परम् ॥ पितुर्गृहंतदागत्वामिलित्वामातरंमुदा ॥ ३२ ॥ पुनर्जातंतदा
त्मानंमेनेसापर्वतात्मजा ॥ निनिंदचस्वकंरूपंहाहताऽस्मितदाब्रवीत् ॥ ३३ ॥ स्वपंतीचपिबंतीचह्यश्नंतीगच्छतीतदा ॥ तिष्ठंतीचसखीमध्येधि
ग्रूपंचमदीयकम् ॥३४॥ इतिसादुःखितातत्रस्मरंतीहरचेष्टितम् ॥ सुखंनलेभेकिंचिद्वैशिवाशिवेतिसाऽब्रवीत् ॥३५॥ एतस्मिन्समयेतत्रनारदोह्यगमत्तदा ॥
पूजितःसुखमासीनःपृष्टःप्राप्तौशिवस्यच॥३६॥उक्तवान्वचनंह्येतत्तपःसाध्योहरःस्वयम्॥नाऽन्यथालभ्यतेदेविदेवैर्ब्रह्मादिकैरपि॥३७॥ इत्येवंवचनंतस्यैना
रदोभगवत्प्रियः॥जगामसहरेर्नामगृणन्नारायणेतिच ॥ ३८ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांपार्वतीपरावर्तनंनामैकादशोऽध्यायः ॥ ११ ॥
॥ सूतउवाच ॥ पार्वतीचतदाश्रुत्वावचनंनारदस्यच ॥ तपःसाध्यंहरंमेनेतपोर्थमनआदधे ॥ १ ॥ मातरंपितरंचैवसखीभ्यांपर्यपृच्छत ॥ लज्ज
मानास्वयंवक्तुंपार्वतीविनयान्विता ॥ २ ॥ सख्यावूचतुः ॥ हिमवञ्छ्रूयतांपुत्र्यावचनंकथ्यतेऽधुना ॥ साफल्यंचैवदेहस्यरूपस्यचतथापुनः ॥ ३ ॥
भवतश्चकुलस्याऽस्यसाफल्यंकर्त्तुमिच्छति ॥ तपसाराधनीयोऽसौनाऽन्यथावश्यतांव्रजेत् ॥ ४ ॥ तस्माच्चपर्वतश्रेष्ठदेयाज्ञाभवताऽधुना ॥ इत्येवंचत
दापृष्टोगिरिराजोऽब्रवीदिदम् ॥ ५ ॥ हिमाचलउवाच॥मह्यंचरोचतेसख्यौमेनायैरोच्यतांपुनः ॥ यद्येवंभवितव्यंचकिमतःपरमुत्तमम् ॥६॥ साफल्यंचमदी
यस्यकुलस्यचनसंशयः॥मात्रेचरोच्यतांचेद्वैततःशुभतरंनुकिम् ॥७॥ इत्येवंवचनंपित्राह्युक्तंश्रुत्वातुतेतदा॥जग्मतुर्मातरंसख्यौतदाज्ञतेमुनीश्वराः॥८॥
गत्वातुमातरंतस्यावचनंह्यूचतुस्तदा ॥ मातस्त्वंवचनंपुत्र्याःश्रुत्वाकर्त्तुमिहाऽर्हसि ॥ ९ ॥ तप्तुकामास्तितेपुत्रीशिवार्थैपरमंतपः ॥ प्राप्ताऽनुज्ञापितुश्चैव
तुभ्यंचपरिपृच्छति ॥ १० ॥ इयंचरूपसाफल्यंकर्त्तुकामापतिव्रता ॥ त्वदाज्ञायादिजायेततप्यतेचतयाऽधुना ॥ ११ ॥ समाकर्ण्यवचस्त्वेतन्मेनादुःख
मुपागता ॥ समाहूयतदापुत्रीमुवाचविह्वलासती ॥ १२ ॥ दुःखिताऽसिकथंपुत्रितपस्तप्तंपुरायदि ॥ प्राप्तंजन्मगृहेह्यत्रकिंन्यूनंनुभवेदिह ॥ १३ ॥
कुत्रयासितपःकर्त्तुंदेवाःसंतिगृहेमम ॥ तीर्थानिचाविचित्राणिनसंतितेपितुर्गृहे ॥ १४ ॥ त्वयाऽत्रैवतपःकार्यसिद्धिःस्यादनपायिनी ॥ साधितंकिंत्वया

गत्वापुनःकिंसाधयिष्यसि ॥ १५ ॥ शरीरंकोमलंवत्सेतपस्तुकठिनंमहत् ॥ एतस्माच्चत्वयाकार्यंस्थित्वैतत्सुलभंभवेत् ॥ १६ ॥ इत्येवंबहुधापुत्रीमा
त्राऽपिवारितासती ॥ सुखंनैवाऽत्रसंपेदेह्यनाराध्यशिवंतदा ॥ १७ ॥ दुःखंज्ञात्वातदीयंसामात्राज्ञप्ताजगामसा ॥ मातरंपितरंचैवप्रणिपत्यपुनस्तदा ॥
॥ १८ ॥ सखीभ्यांसंयुतातत्रतपस्तप्तुमुपाययौ ॥ हित्वाभरणान्यनेकानिवस्त्राणिविविधानिच ॥ १९ ॥ वल्कलंचतदाधृत्वामौंजींबद्ध्वासुशोभनाम् ॥
हित्वाहारंतदाचर्ममृगस्यपरमंशुभम् ॥ २० ॥ जगामतपसेतत्रशृंगेस्यात्तीर्थमुत्तमम् ॥ गौरीशिखरनामासीत्तपसःकारणादिह ॥ २१ ॥
सुंदराश्चद्रुमास्तत्रपवित्राःफलभाजिनः ॥ भूमिशुद्धिंततःकृत्वाविधायवेदिकांशुभाम् ॥ २२ ॥ तयातपःसमारब्धंमुनीनामपिदुष्करम् ॥
चांचल्यंचतदास्थाप्यशरीरस्यविशेषतः ॥ २३ ॥ सूर्येदृष्टिंसमाक्षिप्यचकारपरमंतपः ॥ दीप्तानांचतथाऽग्नीनांमध्येस्थित्वातुघर्मके ॥ २४ ॥ वर्षासुस्थं
डिलेस्थित्वाशीतेजलसमीपगा ॥ एवंतपःप्रकुर्वाणावृक्षानारोपयत्तदा ॥ २५ ॥ सिंचतीप्रत्यहंतत्रह्यातिथ्यंचाऽप्यकल्पयत् ॥ वातश्चैवतथाशीतोवृ
ष्टिश्चविविधातदा ॥ २६ ॥ दुःखंचविविधंतत्रगणितंनतयातथा ॥ तथातपस्तयातप्तंमुनिभिश्चसुदुष्करम् ॥ २७ ॥ श्रुत्वातुऋषयस्तत्रविस्मयं
परमंगताः ॥ दर्शनार्थंसमाजग्मुःकीदृक्कृतप्तंतपोऽनया॥२८॥महतांधर्मवृद्धेषुगमनंश्रेयउच्यते॥प्रमाणंवयसोनास्तिमान्योधर्मःसदाबुधैः॥२९॥श्रुत्वादृष्ट्वा
तपस्तस्याःकिमन्यैःक्रियतेतपः॥जल्पंतस्तेतदातत्रकठिनांगाश्चयेपुनः॥३०॥तदाश्रमगतायेचविरोधरहितास्तदा॥ सिंहागावस्तथाऽन्येचरागादिदोषसं
युताः॥३१॥तन्महिम्नैवतेतत्रनाबाधंतपरस्परम्॥वृक्षाश्चसफलास्तत्रतृणानिविविधानिच॥३२॥पुष्पाणिचविचित्राणितत्रासन्नृषिसत्तमाः॥तद्वनंचतदासर्वं
कैलासेनसमन्वितम्॥जातंचतपसस्तस्याःसिद्धरूपमभूत्तदा॥३३॥इतिश्रीशिवमहापुराणेज्ञानसंहितायांपार्वतीतपश्चर्यावर्णनंनाम द्वादशोऽध्यायः॥१२॥
॥ सूतउवाच ॥ एतस्मिन्समयेदेवाऋषयोनारदादयः ॥ पार्वत्यास्तत्तपोदृष्ट्वातेजसाव्यापितास्तथा ॥ १ ॥ जग्मुस्तेचतदातत्रयत्राऽऽस्तेवृष
भध्वजः ॥ तत्रगत्वाचतेदेवानारदंप्रैषयंस्तदा ॥२॥ नारदोपितदागत्वादेवानाहूयतांस्ततः ॥ प्रणम्यशंकरंदेवंस्तुतिंचक्रुःपरस्परम् ॥ ३ ॥ ऋषयऊचुः॥
शंभुस्त्वंशंकरोऽसित्वंदयालुस्त्वंविशेषतः ॥ पार्वत्यावैतपस्तप्तंदारुणंलोकशोषणम् ॥ ४ ॥ अपूर्वंदृष्टंनोभाविदेवदानवदुर्लभम् ॥ प्रीतोभवत्वमस्माकं
कुरुकार्यंसदाशिव ॥ ५ ॥ इत्युक्तेनारदप्रख्यैःशंभुर्वचनमब्रवीत् ॥ देवानामप्यदर्शोहंतपसादुष्करेणच ॥ ६ ॥ तयापर्वतराजस्यसुतयातपसाह्यहम् ॥
क्रीतोऽस्मिवचनंतस्याःकरिष्यामिभवत्प्रियम् ॥ ७ ॥ अवश्यमेतद्भवितानात्रकार्याविचारणा ॥ गच्छतस्वपुरंतावद्युयमत्रास्मिसंयतः ॥ ८ ॥ स्वयमे
वकरिष्यामिकर्तव्यंभवतांप्रियम् ॥ आश्वास्यचतथाशीघ्रंशिवस्तत्परिपालकः ॥ ९ ॥ इत्युक्त्वाचतदादेवान्विसृज्यशंकरस्तदा ॥ जटिलंरूपमास्थाय

जगामपार्वतीवनम् ॥ १० ॥ आगतंचतदादृष्ट्वाशिवाप्यपूजयत्तदा ॥ वृद्धंचैवस्थितंदेवीपूजांतस्यतदाऽकरोत् ॥ ११ ॥ फलपुष्पादिभिस्तत्रपूजितं
परयामुदा ॥ स्थितंतंनिद्रयाव्याप्तंजराजर्जरितंतदा ॥ १२ ॥ पार्वतीकुशलंतंवैपप्रच्छत्वंकुतोगतः ॥ इतिपृष्टेतयातत्रह्युक्त्वास्वीयंचतांपुनः ॥ १३ ॥
पृष्टवान्कपटेनैवगोपयन्नुपमुत्तमम् ॥ अयिदेविजलंह्येतत्फलादिचनिरंतरम् ॥ १४ ॥ अन्वच्छिन्नंभवेदत्रयथाशक्तितपस्यसि ॥ नवेवयसियद्देवि
कृतंवैतपउत्तमम् ॥ १५ ॥ अतःकिंचिद्धिपृच्छेयंकथनीयंत्वयाऽधुना ॥ पूजाविधिस्त्वयादेविकृतोवैसर्वथात्मना ॥ १६ ॥ तस्मान्मैत्रीचसंजातारहस्यं
वदमेशुभे ॥ किमिच्छसिवरंदेविप्रष्टुमिच्छाम्यतःपरम् ॥ १७ ॥ त्वय्येवतपसोदेविफलंसर्वंप्रदृश्यते ॥ वरार्थंचतपश्चेद्वैतिष्ठतुतपएवतत् ॥ १८ ॥
रत्नंतुग्रहीतारंवैनपृच्छतिग्रहीष्यति ॥ ईदृशंचैवसौंदर्यंसर्वंव्यर्थीकृतंत्वया ॥१९॥ हित्वाभरणान्यनेकानिचर्मादिचधृतंत्वया ॥ तत्सर्वंकारणंब्रूहिदृष्ट्वाहर्ष
मुपागमे ॥२०॥ इतिपृष्टातदातेनसखींप्रेरयतीतदा ॥ तन्मुखेनैवतत्सर्वंकथयामाससुव्रता ॥ २१ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांपार्वतीतपोवर्णनं
नामत्रयोदशोऽध्यायः॥१३॥ ॥सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठाःकथांपापप्रणाशिनीम्॥यज्जातंचततःपश्चात्पार्वतीशिवयोस्तदा ॥१॥ तयाचप्रेरितातत्र
सखीजटिलमाहतत् ॥ सख्युवाच ॥ श्रूयतांविप्रवक्ष्यामियदित्वंश्रोतुमिच्छसि ॥ २ ॥ यदर्थमेतयासख्याह्यारब्धंतपउत्तमम् ॥ हित्वेंद्रप्रमुखान्देवानै
श्वर्यसंयुतानपि ॥३॥ पतिंपिनाकपाणिंवैप्राप्तुमिच्छतिसांप्रतम् ॥ इयंसखीमदीयावैवृक्षानारोपयत्पुरा॥४॥तषुवृक्षेषुसंजातंफलंपश्यपुरःप्रभो ॥ मनोरथां
कुरंत्वस्याःपश्यामिनकथंचन ॥ ५ ॥ रूपहार्यंशिवंदेवंमदनस्याऽनुहारिणम् ॥ तस्माच्चनारदादेशात्तपस्तप्यतिदारुणम् ॥ ६ ॥ यत्तेपृष्टंमयाख्यातं
सख्याश्चसमभीप्सितम् ॥ इत्येवंवचनंश्रुत्वाजटिलोवाक्यमब्रवीत् ॥ ७ ॥ जटिलउवाच ॥ सख्येदंकथितंसत्यंपरिहासउताऽपिवा ॥ यथार्थंनकथंदेविमु
खेनपरिभाषसे ॥ ८ ॥ इत्युक्तेचतदातेनस्वीयेनैवसखीतदा ॥ उवाचपार्वतीदेवीतत्तथैवनचाऽन्यथा ॥ ९ ॥ मनसावचसासाक्षाद्वृतोवैशंकरोमया ॥
जानामिदुर्लभंवस्तुकथंप्राप्यंमयाभवेत् ॥ १० ॥ तथापिमनसौत्सुक्यात्तप्यतेचमयाऽधुना ॥ इत्युक्त्वावचनंतस्मैस्थितासागिरिजातदा ॥ ११ ॥ उवा
चब्राह्मणस्तत्रमयाचगम्यतेऽधुना ॥ एतावत्कालपर्यंतंममेच्छामहतीह्यभूत् ॥१२॥ किंवस्तुकाम्यतीदेवीदृष्ट्वायामिस्तुवन्व्रतम् ॥ अवगतंमयासम्यक्त्व
न्मुखात्सुंदरिश्रुतम् ॥ १३ ॥ इतोगच्छाम्यहंदेवियथेच्छसितथाकुरु ॥ नकथ्यतेमयातुभ्यंमित्रत्वंनिष्फलंभवेत् ॥ १४ ॥ यथाकार्यंयथाभाविकथनी
यंशुभेनच ॥ इत्युक्त्वावचनंतस्यैयावद्गंतुमियेषसः ॥ १५ ॥ तावच्चपार्वतीदेवीह्युवाचकिंगमिष्यसि ॥ इत्युक्तेचतयातत्रास्थित्वोवाचसदंडधृक् ॥१६॥
॥ दंडधृगुवाच ॥ शृणुदेविप्रवक्ष्यामिमित्रत्वादुच्यतेमया ॥ इतश्चप्रथमंत्वंमेमान्यापूज्यासदाशुभा ॥ १७ ॥ इदानींतद्विपरीतंजातंमेनात्रसंशयः ॥

इतिकृतंत्वयाद्यैवतच्चैवश्रूयतामिति ॥ १८ ॥ दत्त्वासुवर्णमुद्रांचकाचंग्रहीतुमिच्छसि ॥ हित्वाचचंदनंशुभ्रंकर्दमंलेतुमीहसे ॥ १९ ॥ नागंचवाहंनहित्वा
बलीवर्दंत्वमिच्छसि ॥ गांगंजलंपरित्यज्यकूपोदकंसमीहसे ॥ २० ॥ सूर्यतेजःपरित्यज्यखद्योतद्युतिमिच्छसि ॥ चीनांशुकंविहायैवचर्मांबरमुपाससे
॥ २१ ॥ गृहेवासंचवैदेवित्यक्त्वावनंसमीहसे ॥ करोषित्वंचदेवेशेनयुक्तंकर्त्तुमुद्यता ॥ २२ ॥ तथात्वंसर्वदेवानांहित्वाचसंनिधिंपुनः ॥ इच्छसित्वं
सुराणांचनयुक्तंक्रियतेत्वया ॥ २३ ॥ इंद्रादिलोकपालांश्चहित्वाशिवमनुव्रता ॥ नैतद्युक्तंहिलोकेषुविरुद्धंदृश्यतेऽधुना ॥ २४ ॥ क्वत्वंकमलपत्राक्षिक्व
चाऽसौचत्रिलोचनः ॥ शशांकवदनात्वंचपञ्चवक्त्रःशिवःस्मृतः ॥२५॥ कबर्याश्चैवतेरूपंवर्णितुंनैवशक्यते ॥ जटाजूटंशिवस्यैवप्रसिद्धंपरिचक्षते ॥२६॥
चंदनंचत्वदीयेंऽगेचिताभस्मशिवस्यच ॥ क्वदुकूलंत्वदीयंवैगजाजिनमथाऽशुभम् ॥ २७ ॥ क्वांऽगदादीनिदिव्यानिक्वसर्पाःशंकरस्यच ॥ क्वचरादेवताः
सर्वाःक्वचभूतावलिःप्रिये ॥ २८ ॥ क्वाऽसौमृदंगनादोवैक्वचापिडमरुस्तथा ॥ क्वचभेरीकलापश्चक्वचशृंगीरवोऽशुभः ॥ २९ ॥ क्वचढक्कमयःशब्दोगल्लना
दःक्वचाऽपिहि ॥ भवत्याश्चशिवस्यैवनयुक्तंरूपमुत्तमम् ॥ ३० ॥ वपुश्चैवविरूपाक्षंजन्मनज्ञायतेकदा ॥ यदिधनंभवेत्तस्यकथंदिगंबरोभवेत् ॥ ३१ ॥
वरेषुयेगुणाःप्रोक्ताएकोऽपिनशिवेस्मृतः ॥ वाहनंचबलीवर्दोवसनंचर्मएवच ॥ ३२ ॥ यदिग्राहीभवेत्सोहिकथंचमदनंदहेत् ॥ सहायास्तुपिशाचाश्च
विषंकंठेविराजते ॥ ३३ ॥ अनादरस्तथादृष्टोहित्वावनमुपागतः ॥ जातिर्नलभ्यतेतस्यविद्याज्ञानंनदृश्यते ॥ ३४ ॥ एकाकीचसदानित्यंविरागीचवि
शेषतः ॥ तस्मात्त्वंतुशिवेनैवमनोयोक्तुमिहार्हसि ॥ ३५ ॥ क्वचहारस्त्वदीयोवैक्वचवैरुंडमालिका ॥ सर्वंविरोधिरूपंचतवचैवशिवस्यच ॥ ३६ ॥
मह्यंनरोचतेदेवियदिच्छसितथाकुरु ॥ समयाविदितोदेवःश्मशानेवासमीहते ॥ ३७ ॥ असद्वस्तुचयत्किंचित्तत्सर्वंसेवतेस्वयम् ॥ निवर्त्तयमन
स्तस्मान्नोचेद्गच्छेःसमीपतः ॥ ३८ ॥ इत्येतद्वचनंश्रुत्वापार्वतीक्रोधसंयुता ॥ उवाचक्रुध्यमानासाशिवनिंदापरंचतम् ॥ ३९ ॥ पार्वत्युवाच ॥
एतावद्धिमयाज्ञातंकश्चिद्धन्योभविष्यति ॥ परंतुसकलंज्ञातमबद्धोदृश्यसेऽधुना ॥ ४० ॥ श्रूयतांवचनंह्येतत्कथयामिक्रमेणच ॥ त्वयोक्तंवि
दितोदेवस्तदलीकंनचाऽन्यथा ॥ ४१ ॥ यदिचविदितःस्याद्वैविरुद्धंनोच्यतेत्वया ॥ कश्चिद्वृद्धःप्रदृश्येतवेषधारीनसंशयः ॥ ४२ ॥ ब्रह्मचारिस्व
रूपेणकश्चिद्धूर्त्तःसमागतः ॥ शंकरस्यस्वरूपंतुप्रवक्ष्यामिशृणुष्वतत् ॥४३॥ वस्तुतोनिर्गुणःसाक्षात्सगुणःकारणेनच ॥ कुतोजातिर्भवेत्तस्यनिर्गुणस्यगुणा
त्मनः ॥ ४४ ॥ सर्वासामपिविद्यानामधिष्ठानंसदाशिवः ॥ उच्छ्वासरूपिणोवेदादत्तास्तुविष्णवेपुरा ॥ ४५ ॥ किंतस्यविद्ययाकार्यंपूर्णस्यपरमात्मनः ॥
सर्वेषांचादिभूतस्यवयोमानंकुतःस्मृतम् ॥ ४६ ॥ प्रकृतिस्तुततोजाताकिंशक्तेस्तस्यकारणम् ॥ योवैभजतिनित्यंतंतस्यशक्तित्रयंसदा ॥४७॥ यस्यैव

भजनाल्लोकोमृत्युंजयतिनिश्चितम् ॥ तस्मान्मृत्युंजयंनामप्रसिद्धंजगतीतले ॥ ४८ ॥ यस्यपूजाप्रभावेनआरोग्यंजायतेनृणाम् ॥ तस्यारोग्यंकुतोऽ
पीहभविष्यतिसुदुर्मते ॥ ४९ ॥ तस्यैवपक्षपातेनदेवादेवत्वमागताः ॥ दर्शनार्थंशिवस्यैवयदागच्छतिदेवराट् ॥ ५० ॥ तदाभूताःपिशाचाश्चद्वारपालाःशिव
स्यच ॥ दंडैश्चमुकुटंविद्धंखंडंखंडंव्रजेद्भुवि ॥ ५१ ॥ किंतस्यबहुपक्षेणस्वयमेवप्रभुःसदा ॥ कल्याणरूपिणस्तस्यसेवयाकिंभवेदिह ॥ ५२ ॥
किंन्यूनंदेवदेवस्यमामिच्छातिसदाशिवः ॥ सप्तजन्मदरिद्रःस्यात्सेवतेयदिशंकरम् ॥ ५३ ॥ तस्यैवदुर्लभालोकेलक्ष्मीःस्यादनपायिनी ॥ यदग्रेसिद्ध
योऽष्टौचनृत्यंतिप्रतिवासरम् ॥ ५४ ॥ अवाङ्मुखःसदातत्रकुतोवित्तंसुदुर्लभम् ॥ यद्यप्यमंगलानीहसेवतेशंकरःसदा ॥ ५५ ॥ तथाऽपिमंगलंतस्यस्म
रणादेवजायते ॥ शिवेतिमंगलंनाममुखेयस्यनिरंतरम् ॥ ५६ ॥ तस्यैवदर्शनादन्येपवित्राःसंतिनित्यशः ॥ यद्यपूतंभवेद्भस्मचितायाश्चत्वयोदितम् ॥
॥ ५७ ॥ नृत्यस्याऽपगमेदेवैःशिरोभिर्धार्यतेकथम् ॥ यश्चैवजगतश्चाऽदिर्जगतश्चेश्वरोमतः ॥ ५८ ॥ जगत्संहारकर्त्ताचसज्ञेयोवैकथंभवेत् ॥
अगम्यंब्रह्मणोरूपंशिवस्यपरमात्मनः ॥ ५९ ॥ कथंतत्त्वंविजानंतित्वादृशाहिबहिर्मुखाः ॥ दुराचाराश्चपापाश्चवेदेभ्यस्तेबहिष्कृताः ॥ ६० ॥ तत्त्वं
नैतेविजानंतिशिवस्याऽगुणरूपिणः ॥ शिवनिंदांकरोतीहतत्त्वमज्ञाययःपुमान् ॥ ६१ ॥ आजन्मसंचितंपुण्यंतस्माद्भस्मीभविष्यति ॥ त्वयानिंदा
कृताह्यत्रहरस्यामिततेजसः ॥ ६२ ॥ त्वत्पूजाचकृतायस्मात्तस्मात्पापंभजाम्यहम् ॥ शिवविद्वेषिणंदृष्ट्वासचैलंस्नानमाचरेत् ॥ ६३ ॥ रेरेदुष्टत्वया
प्रोक्तंजानामिचमहेश्वरम् ॥ निश्चयेनैवनज्ञातःशिवएवसनातनः ॥ ६४ ॥ यथातथाभवेत्सोवैममाऽभीष्टतमोमतः ॥ पुनर्वचनमादातुंप्रक्रमेतावदेवहि ॥
॥ ६५ ॥ उवाचगिरिजादेवीसखींदुष्टमनाह्यसौ ॥ वारणीयःप्रयत्नेनशिवनिंदांकरिष्यति ॥ ६६ ॥ नकेवलंभजेत्पापंनिंदाकर्ताशिवस्यच ॥ योवैश्रृणो
तितांनिंदांपापभाक्सभवेदिह ॥ ६७ ॥ अयंदुष्टःपुनर्निंदांकरिष्यतिशिवस्यच ॥ स्थलमेतत्तथाहित्वायास्यामोऽन्यत्रमाचिरम् ॥ ६८ ॥ इत्युक्त्वा
चलनायाऽसौपदमुत्क्षिपतेयदा ॥ तदाऽसौचशिवःसाक्षादाललंबेप्रियांस्वयम् ॥ ६९ ॥ कृत्वास्वीयंस्वरूपंचयथाध्यातंतयातथा ॥ दर्शयित्वापुनस्तां
चह्युवाचाऽवाङ्मुखींशिवाम् ॥ ७० ॥ कुत्रयास्यसिमांहित्वानत्वंत्याज्यामयापुनः ॥ प्रसन्नोऽस्मिवरंब्रूहिनाऽदेयंविद्यतेतव ॥ ७१ ॥ अद्यप्रभृतितेदा
सस्तपोभिःप्रेमनिर्भरैः ॥ क्रीतोऽस्मितवसौंदर्यात्क्षणमेकंयुगायते ॥ ७२ ॥ त्यज्यतांचत्वयालज्जाएहियामोगृहंमम ॥ इत्युक्तेदेवदेवेनजहौदुः
खंपुरातनम् ॥ ७३ ॥ तपसश्चैवयज्जातंमहद्दुःखंगतंतदा ॥ फलेजातेश्रमःपूर्वजातोनाशमवाप्नुयात् ॥ ७४ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायां
पार्वतीवरप्रदानंनामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ऋषयऊचुः ॥ व्यासशिष्यमहाभागततोजातंचयत्पुनः ॥ तत्सवकथयत्वंहिकथांलोकमलापहाम् ॥ १ ॥

॥ सूतउवाच ॥ ॥ मुनयःश्रूयतांसम्यक्कथयामिकथांमुदा ॥ पार्वतीवचनंश्रुत्वाहरस्यपरमात्मनः ॥ २ ॥ उवाचव्रीडितादेवीवचःस्मृत्वापुरात
नम् ॥ सखीमुखेनसातत्रशिवंसम्यग्व्यवस्थितम् ॥ ३ ॥ एहियामोगृहेदेविकथंचैवंविलंबसे ॥ एवंब्रुवंतंतंदेवंपार्वतीवचनात्सखी ॥ ४ ॥
॥ सख्युवाच ॥ यदिप्रसन्नोदेवेशकरोषिचकृपांयदि ॥ तदेवंचत्वयाकार्यंकृपांकृत्वाममोपरि ॥ ५ ॥ पितुर्गृहेमयासम्यग्गम्यतेत्वदनुज्ञया ॥ प्रसिद्धैः
क्रियतेयद्वद्विवाहःपरमःशुभः ॥ ६ ॥ तथाचैवत्वयाकार्यंलोकेषुख्यापयन्यशः ॥ पितुर्मेसफलंसर्वंकुरुष्वेहगृहाश्रमम् ॥ ७ ॥ विवाहस्ययथारीतिःक
र्तव्यंतत्तथाध्रुवम् ॥ जानातिहिमवान्सम्यक्कृतंपुत्र्याशुभंमम ॥ ८ ॥ इत्येवंवचनंश्रुत्वाशिवोऽपिचशिवांतदा ॥ उवाचवचनंत्वंचयदिच्छसितथेतितत्
॥ ९ ॥ इत्युक्त्वांतर्दधेशंभुर्गत्वाकाशींविचारयन् ॥ सस्मारचऋषीन्सप्तविरहाविष्टमानसः ॥ १० ॥ पार्वत्यपिसखीयुक्तारूपंकृत्वातुसार्थकम् ॥
जगामचस्वकंधामपितुर्विरहकातरा ॥ ११ ॥ पिताचैवतथामातासख्यश्चैवाऽप्यनेकशः ॥ संबंधिनस्तथाचाऽन्येसंमुखाःसंययुस्तदा ॥ १२ ॥ जयेति
चब्रुवंतस्तेदृढालिंगनमादधुः ॥ साधितंतुत्वयासम्यक्पाविताःस्मोवयंत्वया ॥ १३ ॥ चंदनैःपुष्पवर्यैश्चपूजयित्वाशिवांमुदा ॥ गृहंप्रवेशयामासुर्बहु
मानपुरःसरम् ॥ १४ ॥ आश्रमंसफलंमेनेकुपुत्रात्पुत्रिकावरा ॥ हिमवान्नारदंतत्रप्रस्तुवन्साधुसाध्विति ॥ १५ ॥ ऋषयश्चैवतेसर्वेशंभुनाचस्मृताय
दा ॥ तदाजग्मुःस्वयंसर्वेकल्पवृक्षाइवाऽपरे ॥ १६ ॥ परंब्रह्मगृणंतश्चहेमवल्कलधारिणः ॥ मुक्ताफलैर्विचित्रैश्चभूषिताभूषणैःपरैः ॥ १७ ॥ अरुंधत्या
तयायुक्ताःसाक्षात्सिद्धिरिवाऽपरा ॥ यान्दृष्ट्वासूर्यसंकाशाञ्जहौलज्जांहरःस्वयम् ॥ १८ ॥ स्थित्वाऽग्रेऋषयःश्रेष्ठानमस्कृत्याशिवंमुदा ॥ मेनिरेचतदा
त्मानंकृतार्थंयेतपस्विनः ॥ १९ ॥ सत्यंवास्वप्नमायावानेत्राभ्यांदृश्यतेयथा ॥ वयंक्वदर्शनंचाद्यशिवस्यदुर्लभंकुतः ॥ २० ॥ इतिविस्मयमापन्ना
नमस्कृत्यस्थिताःपुरः ॥ प्रोचुःप्रांजलयस्तेवैशिवंलोकमलापहम् ॥ २१ ॥ ॥ ऋषयऊचुः ॥ नमस्तुभ्यंभगवतेशिवायामिततेजसे ॥ कपर्दिनेनमस्तु
भ्यंपञ्चवक्त्रायतेनमः ॥ २२ ॥ हिरण्यबाहवेतुभ्यंशितिकंठायतेनमः ॥ व्यापकायनमस्तुभ्यंव्याप्यरूपायतेनमः ॥ २३ ॥ परायपररूपायसर्वोत्कृ
ष्टायतेनमः ॥ शिवायशिवरूपायप्रणवायनमोनमः ॥ २४ ॥ इत्येवंचस्तुवंतस्तेपुनरूचुःपरात्मने ॥ सर्वोत्कृष्टमहाराजसर्वानुग्रहकारक ॥ २५ ॥ भा
ग्यंकिंवर्ण्यतेऽस्माभिःस्वीयंकिंतुपुनःपुनः ॥ तपस्तप्तंत्रिधापूर्वंवेदाध्ययनमुत्तमम् ॥ २६ ॥ अग्नयश्चहुताःपूर्वंयज्ञाश्चविविधाःकृताः ॥ तपांसिच
विचित्राणिपर्वण्यपिविशेषतः ॥ २७ ॥ दानानिचतथापूर्वंतीर्थानिविविधानिच ॥ वाङ्मनःकायजंकिंचित्पुण्यंस्मरणसंभवम् ॥ २८ ॥
तत्सर्वंसंगतंचाऽद्यस्मरणानुग्रहस्तव ॥ योवैभजातिनित्यंत्वांकृतकृत्योभवेन्नरः ॥ २९ ॥ किंभाग्यंवर्ण्यतेतेषांयेषांनःस्मरणंत्वया ॥ सर्वोत्कृष्टास्त

थाजाताःस्मरणात्तेसदाशिव ॥ ३० ॥ मनोरथपथंनैवगच्छसित्वंवयंकुतः ॥ वामनस्यफलंयद्वज्जन्मांधस्यचचक्षुषी ॥ ३१ ॥ वाचालत्वंचमूकस्यदरिद्रे
निधिदर्शनम् ॥ पंगोर्गिरिपरावृत्तिर्वंध्यस्यपुत्रकास्तथा ॥ ३२ ॥ दर्शनंभवतोह्येवंजातंचदुर्लभंप्रभो ॥ अद्यप्रभृतिलोकेषुमान्याःपूज्यामुनीश्वराः ॥
॥ ३३ ॥ जातास्तेऽनुग्रहादेवउच्चैःपदमुपाश्रिताः ॥ अत्रकिंबहुनोक्तेनमान्यपात्रंवयंगताः ॥ ३४ ॥ पूर्णानांकिंचकर्त्तव्यमस्तिचेत्परमाकृपा ॥ सदृशं
सेवकानांतुदेयंकार्यंशुभंत्वया ॥ ३५ ॥ इत्येवंवचनंतेषांश्रुत्वावाक्यमुपाददे ॥ शिवउवाच ॥ ऋषयश्चसदापूज्याःकारणात्स्मरणंकृतम् ॥ ३६ ॥ ममाऽ
वस्थाभवद्भिश्चज्ञायंतेह्युपकारिकाः ॥ देवानांदुःखमुत्पन्नंतारकात्सुदुरात्मनः ॥ ३७ ॥ ब्रह्मणाचवरोदत्तःकिंकरोमिदुरासदः ॥ मूर्तयोऽष्टौचयाःप्रोक्ता
मदीयाःपरमर्षयः ॥ ३८ ॥ ताःसर्वाउपकारार्थंनतुस्वार्थमितिस्फुटम् ॥ तथाचकर्त्तुकामोऽहंविवाहंशिवयासह ॥ ३९ ॥ तयाऽपिचतपस्तप्तंदुष्करं
परमर्षिभिः ॥ तस्याःफलंवरंदेयमभीष्टंतद्धितावहम् ॥ ४० ॥ तस्माद्भवंतोगच्छंतुहिमाचलगृहंध्रुवम् ॥ तत्रगत्वाहितंचैतत्तत्पत्नींतुपुनस्तथा ॥
॥ ४१ ॥ कथनीयंप्रयत्नेनयथास्यात्कार्यमुत्तमम् ॥ उद्वाहंकर्त्तुमिच्छामितत्पुत्र्यासहसत्तमाः ॥ ४२ ॥ हिमाचलगृहेपुत्रीपार्वतीचगुणान्विता ॥
अस्मदर्थंचतांतत्रप्रार्थनीयोहिमालयः ॥ ४३ ॥ तंतथाचप्रवक्तव्यंदेवानांचहितंयथा ॥ भवद्भिःकल्पितोयोवैविधिःस्यादविकल्पकः ॥ ४४ ॥ भवतां
नैवकथ्येतभवंतःकार्यभाजिनः ॥ इत्येवंवचनंश्रुत्वामुनयस्तेऽमलाशयाः ॥ ४५ ॥ आनंदंलेभिरेसर्वेप्रभुणाऽनुग्रहीकृताः ॥ वयंधन्यामहांतश्चकृतकृत्या
स्तथापुनः ॥ ४६ ॥ ब्रह्मणाविष्णुनायोवैवंद्यःसर्वार्थसाधकः ॥ सोऽस्मान्संप्रेरयत्येषकार्येलोकसुखावहे ॥ ४७ ॥ अयंवैजगतःस्वामीसोमाऽपिजननी
मता ॥ अयंयुक्तश्चसंबंधोवर्धतांचंद्रवत्सदा ॥ ४८ ॥ इत्युक्त्वाऋषयोदिव्यानमस्कृत्यशिवंमुदा ॥ गताश्चाकाशमार्गेणयत्रस्याद्धिमवत्पुरम् ॥ ४९ ॥
चिंतयंतश्चतेचात्रकिंपुण्यंवैभविष्यति ॥ यस्मादेवंविधेकार्येशिवेनविनियोजिताः ॥ ५० ॥ दृष्ट्वातत्परमंदिव्यंऋषयस्तेऽतिविस्मिताः ॥ ऊचुः
परस्परंसर्वेकिमेतदितिसस्फुटम् ॥ ५१ ॥ अलकायाश्चस्वर्ग्यायाभोगवत्यास्तथापुनः ॥ विशेषोऽत्रामरावत्यादृश्यतेऋषिसत्तमाः ॥ ५२ ॥
किंगृहाणिसुरम्याणिस्फाटिकैर्विविधैरिह ॥ मणिभिर्वाविचित्राणिरचितान्यंगणानिच ॥ ५३ ॥ सूर्यकांताश्चमणयश्चंद्रकांतास्तथैवच ॥ गृहेगृहेवि
चित्राश्चवृक्षाःस्वर्गसमुद्भवाः ॥ ५४ ॥ तोरणानांतथालक्ष्मीर्दृश्यतेचगृहेगृहे ॥ चित्राणिचविचित्राणिशुभ्रहंसैर्विमानकैः ॥ ५५ ॥ वितानानिविचित्रा
णिचैलपल्लवतोरणैः ॥ जलाशयान्यनेकानिदीर्घिकाविविधास्तथा ॥ ५६ ॥ उद्यानानिविचित्राणिपुष्पैश्चभरितान्यथ ॥ पक्षिणश्चाऽप्यनेकेऽत्रकलकंठ
रवास्तथा ॥ ५७ ॥ नराश्चदेवताःसर्वेस्त्रियश्चाऽप्सरसस्तथा ॥ परस्परविरुद्धास्तेतेषांरूपंतुकिंपुनः ॥ ५८ ॥ किंवर्ण्यतेनगर्याश्चमहिमाचऋषीश्वराः॥

अन्येचयाज्ञिकाश्चैवपुण्यानिस्वर्गकाम्यया ॥ ५९ ॥ कुर्वंतेतेवृथासर्वैविहायहिमवत्पुरम् ॥ यावन्नदृष्टमेतच्चतावत्स्वर्गपरानराः ॥ ६० ॥ इत्येवमृषिवर्या
स्तेवर्णयंतस्तथापुरम्॥गताहिमालयस्याऽथगृहंसर्वसमृद्धिमत्॥६१॥तान्दृष्ट्वासूर्यसंकाशान्हिमवान्विस्मितस्तथा॥ सूर्याःसप्तकथंचाऽत्रआयांतियेप्रियां
प्रति ॥ ६२ ॥ कार्यापूजाप्रयत्नेनगृहस्थत्वात्सदाप्रिये ॥ वयंधन्यागृहस्थाश्चसर्वेषांसुखदायिनः ॥ ६३ ॥ एतस्मिन्नंतरेतेवैह्याकाशादपतंस्तदा ॥
संमुखोहिमवान्दृष्ट्वाययौमानपुरःसरम् ॥ ६४ ॥ पूजांविधायतेषांचदंडवत्प्रपपातह ॥ हस्तैश्चहिमवंतंतेगृहीत्वोचुःशुभंशुभम् ॥ ६५ ॥ अथाऽग्रत
श्चतान्कृत्वाधन्योममगृहाश्रमः ॥ इत्युक्त्वाऽसनमानीयददौभक्तिपुरःसरम् ॥ ६६ ॥ आसनेषूपविष्टेषुतदाज्ञप्तःस्वयंस्थितः ॥ उवाचहिमवांस्तत्रऋ
षीञ्ज्योतिर्मयांस्तदा ॥ ६७ ॥ हिमाचलउवाच ॥ धन्योऽहंकृतकृत्योऽहंसफलंजीवितंमम ॥ लोकेषुदर्शनीयोऽहंबहुतीर्थसमोमतः ॥ ६८ ॥ य
स्माद्भवंतोमद्गेहंह्यागताविष्णुरूपिणः ॥ पूर्णानांचैवकिंकार्यंकृपणानांगृहेगृहे ॥ ६९ ॥ तेषांचदुःखनाशार्थंगृहेष्वागमनंसताम् ॥ मद्गेहपावनार्थंचभवंतः
सुसमागताः ॥ ७० ॥ तथाऽपिकिंचित्कार्यंहिसदृशंसेवकस्यच ॥ कथनीयंभवद्भिश्चसफलस्तुममाश्रमः ॥ ७१ ॥ महतामाज्ञयालोकेमान्यतांगच्छ
तिध्रुवम् ॥ तस्माच्चकुत्रचित्कार्येयोज्योऽहमृषिसत्तमाः ॥ ७२ ॥ एवंवचनमाकर्ण्यऋषयश्चप्रहर्षिताः ॥ ऊचुस्तेगिरिराजंवैस्मृत्वास्मृत्वाशिव
स्यच ॥ ७३ ॥ धन्योऽसिकृतकृत्योऽसिभाग्यवानसिसांप्रतम् ॥ शिवःपरोपकारायकर्तुकामःप्रजासुखम् ॥ ७४ ॥ असन्मुखेनतेपुत्रींयाचतेशंकरःस्व
यम् ॥ जगद्गुरोर्गुरुस्त्वंचभविष्यसिनसंशयः ॥ ७५ ॥ जगन्माताचतेपुत्रीतस्यैवानुग्रहाद्भवेत् ॥ जगत्पिताशिवःप्रोक्तोजगन्माताशिवास्मृता
॥ ७६ ॥ तस्मैदेयात्वयाकन्यासार्थकंतेभविष्यति ॥ एवंवचनमाकर्ण्यगिरिराजोऽब्रवीदिदम् ॥ ७७ ॥ मदीयंचशरीरंवैपत्नीमेनाचयामता ॥ ऋ
द्धिःसिद्धिश्चकीर्तिश्चश्रीर्मदीयानचान्यथा ॥ ७८ ॥ एवंज्ञात्वातदापुत्रींविलोक्यमातरंचताम् ॥ भूषयित्वातदंगंचऋष्युत्संगेन्यवेशयत् ॥ ७९ ॥ इदं
भैक्षंमयानामदातव्यमृषिसत्तमाः ॥ ॥ ऋषयऊचुः ॥ ईदृशाभिक्षुकास्तेद्यदाताचैवभवान्स्वयम् ॥ ८० ॥ भैक्षंचपार्वतीप्रोक्तंकिमतःपरमुत्तमम् ॥
हिमवच्छिखराणांतेमनसःसदृशीगतिः ॥ ८१ ॥ एवमुक्त्वातुतांकन्यामृषयोविमलाशयाः ॥ आशिषंदत्तवंतस्तेशिवायसुखदाभव ॥ ८२ ॥ स्पृष्ट्वा
करेणतांतत्रकल्याणंतेभविष्यति ॥ शुक्लपक्षेयथाचंद्रोवर्धतेत्वद्गुणास्तथा ॥ ८३ ॥ मिलित्वाचगृहंतेऽद्यवर्धयिष्यंतिनित्यशः ॥ इत्युक्त्वाऋषयःसर्वे
गिरिराजंपरस्परम् ॥ ८४ ॥ पुष्पाणिफलयुक्तानिव्यत्ययंचाक्रिरेतदा ॥ अरुंधतीतदातत्रमेनांसाश्रुमुखींतदा ॥ ८५ ॥ गुणैश्चलोभयामासशिवस्यपर
मासती ॥ हरिद्राकुंकुमैस्तत्रह्यश्रूणिपरिमार्जयत् ॥ ८६ ॥ ततश्चतेचतुर्थेऽह्निनिर्धार्यलग्नमुत्तमम् ॥ परस्परंचसंहृष्यजग्मुस्तेशिवसंनिधिम् ॥ ८७ ॥

महाकाशींप्रयातास्तेयत्रास्तेशंकरःस्वयम् ॥ विवाहस्यविधिंसम्यक्चक्रुस्तेऋषिसत्तमाः ॥ ८८ ॥ तदाज्ञप्ताश्चतेतत्रगताश्चागमनायवै ॥ यूयमध्वर्यवः
प्रोक्ताविवाहेचमयापुनः ॥ ८९ ॥ अतःशीघ्रंभवद्भिस्तुऋषयोब्रह्मवित्तमाः ॥ आगंतव्यंसशिष्यैस्तुभवंतःकार्यकारकाः ॥ ९० ॥ इत्युक्तास्तेगता
स्तत्रतथेतिपरमंवचः ॥ शिवोऽपिसगणस्तत्रप्रसन्नमुखपंकजः ॥ ९१ ॥ कैलासमगमद्देवोविवाहरचनायवै ॥ सस्मारनारदंदेवःस्मरणादागतःक्षणात् ॥
॥ ९२ ॥ निवेदितंचतत्सर्वंश्रुत्वाहृष्टोऽथनारदः ॥ शिवोऽपिकथयामासपार्वत्यावचनंतदा ॥ ९३ ॥ तयातपस्तथातप्तंवशीभूतोह्यहंतदा ॥ एवंश्रुत्वा
वचस्तस्यनारदोवाक्यमब्रवीत् ॥ ९४ ॥ भवतांतुव्रतमिदंभक्तवश्योभवाम्यहम् ॥ सम्यक्कृतंत्वयादेवपार्वतीमनसेप्सितम् ॥ ९५ ॥ कार्यमत्सदृशं
किंचित्कथनीयंत्वयाप्रभो ॥ इत्युक्तस्तुशिवस्तस्मैकथयामासवैतदा ॥ ९६ ॥ भवतोवचनंह्यत्रकृतंमेनाऽत्रसंशयः ॥ इदंत्वयातुकर्त्तव्यंदे
वानांचनिमंत्रणम् ॥ ९७ ॥ ब्रह्माणंचतथाविष्णुमन्यान्देववरांस्तथा ॥ कथनीयंप्रयत्नेनऋषिवर्यांस्तथैवच ॥ ९८ ॥ सर्वान्मातृगणांश्चैव
यक्षगंधर्वकानथ ॥ नागमिष्यंतियेप्यत्रमदीयानकदाचन ॥ ९९ ॥ इत्युक्तोनारदोब्रह्मन्प्रणिपत्यसदाशिवम् ॥ जगामसर्वतोदेवान्यदुक्तंशंभुनापुरा ॥
कथयित्वापुनस्तत्रमनोवेगसमागतः ॥ १०० ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांशिवनिमंत्रणंनामपंचदशोऽध्यायः ॥ १५ ॥ सूतउवाच ॥ सर्वे
देवास्तदातत्रशिवसेवासमीहया ॥ स्वीयान्येवोपकरणानिसेवार्थंतुशिवस्यच ॥ १ ॥ सर्वेतेप्रेरयामासुर्देवाइंद्रादयस्तदा ॥ गंधर्वाप्सरसस्तत्रवाद्यं
नृत्यंचचक्रिरे ॥ २ ॥ मातरःसप्ततास्तत्रशिवभूषाविधिंपरम् ॥ चक्रिरेचमुदायुक्तायथायोग्यंतथापुनः ॥ ३ ॥ कर्त्तव्यंकिंचपूर्णस्यसर्वेप्रियचिकी
र्षया ॥ तस्यस्वाभाविकोवेषोभूषाविधिरभूत्तदा ॥ ४ ॥ तदेवकथयाम्यद्यश्रूयतामृषिसत्तमाः ॥ चंद्रस्तुमुकुटस्थानेसान्निध्यमकरोत्तदा ॥ ५ ॥
तिलकंसुंदरंह्यासीन्नयनंतुतृतीयकम् ॥ कर्णाभरणानियान्यासंस्तान्येवाभरणानिच ॥ ६ ॥ भूतिश्चचंदनंह्यासीद्दुकूलंचर्मउच्यते ॥ सर्पाह्याभरणान्या
सन्मणयोविविधाश्चये ॥ ७ ॥ तत्प्रभावात्तदासर्वेप्राकृताविकृतिंगताः ॥ ईदृशंसुंदरंरूपंजातंवर्णनदुष्करम् ॥ ८ ॥ ईश्वरोऽपिस्वयंसाक्षादैश्वर्यंलब्ध
वानिह ॥ गणास्तत्रचवाद्यानिचक्रिरेविविधान्यपि ॥ ९ ॥ एतस्मिन्समयेदेवाआजग्मुःप्रभुसेवया ॥ ब्रह्मातुहंसमारुह्यऋषिभिःसहितस्तदा ॥ १० ॥
स्वीयाटोपेनवैतत्रभूतानांपतिमीश्वरम् ॥ नमस्कृत्यस्थितास्तत्रतावद्विष्णुःसमागतः ॥ ११ ॥ वाहनंपक्षिराजश्चनिजसेवकसंयुतः ॥ स्वचिह्नैर्भूषितश्चा
सौनमस्कृत्यस्थिरःपुरः ॥ १२ ॥ तावदिंद्रादयोदेवाःस्वीयाटोपसमन्विताः ॥ इंद्रश्चैवयमश्चैवकुबेरोवरुणस्तथा ॥ १३ ॥ अन्येतेलोकपालाश्चस्वी
यचिह्नसमन्विताः ॥ वसवश्चतथासूर्याऋषयश्चतथाशुभाः ॥ १४ ॥ नद्योगंगादयःसर्वाःसमुद्राःसर्वएवहि ॥ गंधर्वाप्सरसस्तत्रनागाःसर्वेतथाविधाः ॥ १५ ॥

सेवावसरमाज्ञायसमाजग्मुर्मुदान्विताः ॥ तस्मिन्दिनेतदातत्रशोभाभावसमन्विताः ॥ १६ ॥ देवान्व्यूहंतदाचक्रुःस्वीयंस्वीयंतुभागशः ॥ निःससार ततस्तस्मात्कैलासात्पर्वतोत्तमात् ॥ १७ ॥ शिवःपरमसंतुष्टोदेवान्कृत्वापुरस्तदा ॥ तेदेवाश्चतदाज्ञप्तायथायोग्यंपुरःसराः ॥ १८ ॥ अभवंस्तेतुवादित्रैर्युक्तानादंपरस्परम् ॥ तदेवकथयामासुर्येनतुष्येच्चशंकरः ॥ १९ ॥ हिमवानपितत्रैवस्वानाहूयसुहृद्वृतः ॥ विधिवत्कारयामासमंडपादिविधिं क्रमात् ॥ २० ॥ विविधानिविचित्राणितोरणानितथापुनः ॥ ध्वजांश्चैवविचित्रांश्चचकारपरयामुदा ॥ २१ ॥ पर्वताश्चतथारम्याजंगमंरूपमास्थिताः ॥ तत्पत्न्यश्चैवपुत्राश्चपुत्र्यश्चैवतथाविधाः ॥ २२ ॥ वस्त्रालंकारसंयुक्ताःसर्वेहर्षसमाकुलाः ॥ कार्यंचक्रुश्चतत्रत्यंहिमवद्गृहसंभवम् ॥ २३ ॥ तच्छोभांवर्णितुंनैवशक्तोमिऋषिसत्तमाः ॥ कन्यांचैवतुदानार्थंसुस्नाप्याऽलंचकारसः ॥ २४ ॥ विवाहविधियोग्यंचवेषंसंपाद्यसंस्थितः ॥ देवतापूजनंकृत्वानानोपकरणानिच ॥ २५ ॥ संविधायतदासर्वंप्रेषयन्गंधमादनम् ॥ सेवकंतुतथाऽन्यंचशीघ्रमायातुवैशिवः ॥ २६ ॥ प्रतीक्षांवरवर्गस्यकृत्वाचहिमवान्स्थितः ॥ एतस्मिन्समयेरुद्रःसमीपेस्वबलैर्वृतः ॥ २७ ॥ आजगाममहावीर्यःसर्वसिद्धिसमन्वितः ॥ तमागतंतदाश्रुत्वाहिमवान्बलसंयुतः ॥ २८ ॥ जगामसंमुखस्तत्रधन्योऽहमितिचिंतयन् ॥ देवसेनांतथादृष्ट्वाहिमवान्विस्मयंगतः ॥ २९ ॥ देवाहितद्बलंदृष्ट्वाविस्मयंपरमंगताः ॥ पर्वतानांतथासेनादेवानांचतथापुनः ॥ ३० ॥ मिलित्वातुतथारेजेमन्यतेसागराबुभौ ॥ परस्परंमिलित्वातुदेवाश्चपर्वतास्तथा ॥ ३१ ॥ कृतकृत्यंतथात्मानंमेनिरेपरयामुदा ॥ रचित्वाशिविरंसम्यक्संस्थाप्यदेवतावलम् ॥ ३२ ॥ जगामपर्वतस्तत्रयत्रस्याद्विधिवेदिका ॥ कारयित्वाविशेषेणचतुष्कंतोरणैर्युतम् ॥ ३३ ॥ स्नानदानादिकंकृत्वाप्रतीक्षामकरोत्तदा ॥ मेनाऽपिचतथातत्रचंद्रशालामुपागता ॥ ३४ ॥ हर्षभारसमायुक्ताशिवंभक्तसुखावहम् ॥ द्रष्टुकामाभवत्तत्रनारदेनसमन्विता ॥ ३५ ॥ प्रथमंचानिरीक्षामिहर्षनिर्भरमाश्रिता ॥ कीदृशंशिवरूपंचयदर्थेतपउत्तमम् ॥ ३६ ॥ तत्त्वज्ञानपरासाचदर्शनार्थेशिवस्यच ॥ स्थिताशिरोगृहेदेवीमेनामुनिवरस्तथा ॥ ३७ ॥ शिवोऽपिचतदातस्याज्ञात्वाऽहंकारमात्मनः ॥ तथैवदर्शयामासबुद्धिभ्रंशोभवेद्यथा ॥ ३८ ॥ एतस्मिन्समयेसेनांदेवानांपरमांशुभाम् ॥ निरीक्षंतीतदामेनादृष्ट्वाहर्षसमाकुला ॥ ३९ ॥ एतत्पतिःशिवःसाक्षात्कीदृशोवैभविष्यति ॥ सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठाःकथांचकौतुकावहाम् ॥ ४० ॥ प्रथमंचैवगंधर्वाःसुंदराःसुभगास्तथा ॥ वस्त्रैश्चविविधैर्युक्तानानालंकारभूषिताः ॥ ४१ ॥ नानावाहनयुक्ताश्चनानावाद्यपरायणाः ॥ पताकाभिर्विचित्राभिरप्सरोगणसंयुताः ॥ ४२ ॥ दृष्ट्वाविश्वावसुंतत्रतत्पतिंपरमंशुभम् ॥ दृष्ट्वाचहर्षिताचाऽसीच्छिवोऽयमितिचाऽब्रवीत् ॥ ४३ ॥ देवानांगायकश्चाऽयंकुतोदेवःसनातनः ॥ इत्येवंनारदस्तस्यैह्युवाचऋषिसत्तमः ॥ ४४ ॥ एवंश्रुत्वातदामेनाविचारे

तत्पराऽभवत् ॥ इतश्चाऽप्यधिकोयोवैशिवःकीदृग्भविष्यति ॥ ४५ ॥ एतस्मिन्नंतरेयक्षामणिग्रीवादयश्चये ॥ तेषांसेनातयादृष्टाशोभादिद्विगुणीकृता ॥ ४६ ॥ तत्पतिंचकुबेरंचदृष्ट्वाशोभासमन्वितम् ॥ अयंरुद्रस्तथाऽन्वेतिवरुणश्चसमागतः ॥ ४७ ॥ ततोऽपिद्विगुणांशोभांदृष्ट्वारुद्रस्तथानहि ॥ जगामधर्म राजश्चसर्वशोभासमन्वितः ॥ ४८ ॥ शोभांचद्विगुणांतस्यदृष्ट्वासोयंतथानहि ॥ तावदिंद्रःसमायातःसर्वदेववरःशुभः ॥ ४९ ॥ किंवर्ण्यतेतदीयाचशो भावैद्विगुणीकृता ॥ योयोऽप्यग्रेसमायातिशोभयाद्विगुणीकृतः ॥ ५० ॥ तंदृष्ट्वाशंकरःसोयंनायंरुद्रस्यकिंकरः ॥ तावत्सूर्यःसमायातःसर्वदेवमयःशुभः ॥५१॥ तेजसादीतिमाँल्लोकेदृष्ट्वारुद्रस्तथानहि ॥ तावच्चंद्रःसमायातोग्रहैःसर्वैःसमन्वितः ॥५२॥ ततश्चद्विगुणांशोभांरुद्रोऽयंनोभवेदिति ॥ मेनामेनेचतां पुत्रींधन्यांकुलसुखावहाम् ॥ ५३ ॥ एतेषांयःपतिःसोवैतस्याःपतिर्भविष्यति ॥ तस्याःकिंवर्ण्यतेभाग्यमपिवर्षशतैरपि ॥५४॥ तावद्ब्रह्मासमायातस्तेजसां राशिरुत्तमः ॥ ऋषिवर्ययुतःसाक्षाद्धर्मपुंजइवस्थितः ॥ ५५ ॥ अयंवैभवितानेतितावद्विष्णुःसमागतः ॥ मेघश्यामश्चतुर्बाहुःपीतांबरधरःशुभः ॥ ५६ ॥ श्रीवत्सवक्षालक्ष्मीशःशंखादिलक्षणैर्युतः ॥ मुकुटादिभूषणैर्युक्तःसिद्धचष्टकसमन्वितः ॥ ५७ ॥ कोटिकंदर्पलावण्यःप्रसन्नमुखपंकजः ॥ राजीवलोचनः शांतोनिजभक्तसमन्वितः ॥ ५८ ॥ पक्षींद्रवाहनःश्रीमानप्रमेयपराक्रमः ॥ तंदृष्ट्वाचकिताचासीद्धन्याऽहंसत्पथंगता ॥ ५९ ॥ सोऽयंशिवोभवेत्साक्षान्ने तितांनारदोऽब्रवीत् ॥ अतोऽधिकोभवेत्सोवैवर्णितुंनैवशक्यते ॥ ६० ॥ तावच्चऋषयोयाताभृग्वाद्याश्चमुनीश्वराः ॥ गंगादिसर्वतीर्थैश्चशिष्यशाखासम न्विताः ॥ ६१ ॥ ज्ञायंतेकल्पवृक्षाश्चगच्छंतःकामपूरकाः ॥ सुरभ्यादिपरैर्युक्तास्तेजसांराशयःपरे ॥ ६२ ॥ गृणंतस्तेपरंब्रह्मह्यनूचानाःसुखावहाः ॥ तन्मध्येचैववागीशंदृष्ट्वासोऽयंभविष्यति ॥ ६३ ॥ नाऽयमन्यःसमायातिनिर्गुणोगुणवान्हरः ॥ इत्येवंनारदाच्छ्रुत्वामेनामानवतीमुदा ॥ ६४ ॥ त्रैलोक्य सारंयच्चासीत्तदृष्टंहिमयापुनः ॥ अतोरुद्रश्चयोवैस्यात्कीदृक्सोऽयंभविष्यति ॥ ६५ ॥ तावद्रुद्रःसमायातोनारदस्तामुवाचह ॥ अयंवैशंकरःसाक्षात्पश्य तांसुंदरित्वया ॥ ६६ ॥ हर्षितासातदातत्रददर्शशंकरंमुदा ॥ वात्यारूपधराःकेचिदायातामर्मरस्वराः ॥ ६७ ॥ अंगुल्यादर्शयामासनारदस्तांशुभा ननाम् ॥ हरस्यसेवकान्पश्यपुनरन्यान्विलोकय ॥ ६८ ॥ तावदन्येसमायाताभूतप्रेतपिशाचकाः ॥ वक्रतुंडास्तथाकेचिद्विरूपाश्चतथापरे ॥ ६९ ॥ करालाःश्यामलाःकेचित्खंजाश्चलोमशाःपरे ॥ दंडपाशधराःकेचित्केचिन्मुद्गरधारकाः ॥ ७० ॥ विरुद्धवाहनाःकेचिद्दुरालापकरास्तथा ॥ डमरू न्वादयंतोवैगल्लनादंतथापरे ॥ ७१ ॥ तालनादकृतःकेचिच्छृंगीनादंतथाऽपरे ॥ असंख्यातास्तथायातास्तान्दृष्ट्वात्राससंयुता ॥ ७२ ॥ भवंतीतत्क्ष णादेवतथादृष्टास्तयातदा ॥ तान्दृष्ट्वाहृदयंतस्याःशीर्णमासीत्समाकुलम् ॥ ७३ ॥ तन्मध्येशंकरंदेवंनिर्गुणंगुणवत्तरम् ॥ वृषभस्थंपंचवक्त्रंत्रिनेत्रंभू

तिभूषितम् ॥ ७४ ॥ कपर्दिनंचंद्रमौलिंदशहस्तंकपालिनम् ॥ व्याघ्रचर्मोत्तरीयंचपिनाकपाणिनंशिवम् ॥ ७५ ॥ खर्परेणतथायुक्तंशंखादिभूषणैर्युतम् ॥ गजचर्मवृषेयस्यतीव्रमक्षिसमन्वितम् ॥ ७६ ॥ निद्रितंकंपयुक्तंचाशिवोऽयंमुनिरब्रवीत् ॥ तदीयंवचनंश्रुत्वावाताहतलतायथा ॥ ७७ ॥ सापपाततदाभूमौमेनादुःखभरासती ॥ किमिदंचकृतंदुष्टेधिक्त्वांमांचदुराग्रहे ॥ ७८ ॥ इत्युक्त्वामूर्च्छितातत्रविसंज्ञाह्यभवत्क्षणात् ॥ प्रयत्नैर्विविधैःसावैसंज्ञांलेभेथमेऽनका ॥ ७९ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांविवाहवर्णनंनामषोडशोऽध्यायः ॥ १६ ॥ ॥ सूतउवाच ॥ संज्ञांलब्ध्वा पुनःसाचतिरस्कारमथाऽकरोत् ॥ नारदस्याथपुत्र्याश्वनिनिंदचरितंतथा ॥ १ ॥ प्रथमंनारदस्यैवकथयामासदुर्वचः ॥ मेनोवाच ॥ प्रथमंतुत्वयाह्युक्तंशिवश्वेमांवरिष्यति ॥ २ ॥ पश्चाद्धिमवतःकृत्यंपूजार्थेविनिवेशिता ॥ ततोदृष्टंफलंसद्यस्तथापिवंचितात्वया ॥ ३ ॥ पुनस्तपस्तयाततप्तंदुष्कृतंमुनिभिश्वयत् ॥ पुनर्लब्धंफलंह्येतत्पश्यतांदुःखदायकम् ॥ ४ ॥ किंकरोमिक्कगच्छामिहतंतुममजीवितम् ॥ कस्यापिकिंगतंनैवममाऽपिचहतंगृहम् ॥ ॥ ५ ॥ हस्तेदीपंतथागृह्यपतितंकूपकेस्वयम् ॥ किंवश्छिन्नमिदानींतुसर्वंव्यर्थीकृतंमम ॥ ६ ॥ क्वगताऋषयोदिव्याःश्मश्रूण्युत्रोटयाम्यहम् ॥ तत्पश्चैवयापत्नीसाधूर्तास्वयमागता ॥ ७ ॥ तेषांचैवाऽपराधोनसर्वंपुत्र्याकृतंस्वयम् ॥ हेमहित्वाऽनयानीतंकाचंचदुष्टयास्वयम् ॥ ८ ॥ हित्वातुचंदनंसद्योलेपितःकर्दमस्तया ॥ हंसमुड्डीयकाकोवैगृहीतोहस्तपंजरे ॥ ९ ॥ हित्वाब्रह्मजलंदूरेपीतंकूपोदकंतया ॥ सूर्यंत्यक्त्वातुखद्योतंगृहीत्वासुखमीहते ॥ १० ॥ तंडुलांश्वतथाहित्वाकृतंतुतुषभक्षणम् ॥ घृतंत्यज्यतथातैलमैरंडंभोजितंस्वयम् ॥ ११ ॥ सिंहसेवांतथामुक्त्वाशृगालःसेवितस्तया ॥ यज्ञगृहविभूतिंहिदूरीकृत्यतयास्वयम् ॥ १२ ॥ सेवितंचतथाभस्मचितासंभवमित्युत ॥ सर्वान्देववरांस्त्यक्त्वाशिवार्थेतपईदृशम् ॥ ॥ १३ ॥ धिक्त्वांचतवबुद्धिंधिक्चर्यांचऋषिसत्तम ॥ धिक्कुलंधिक्क्रियादाक्ष्यंसर्वंतुच्छीकृतंतया ॥ १४ ॥ गृहंतुधुक्षतुह्येतन्मरणंतुममैवह ॥ पर्वतानांतथाराजानेत्राद्दूरंकथंनहि ॥ १५ ॥ ऋषयश्वकिमर्थंमेदर्शयंतिमुखंस्वयम् ॥ साधितंकिंचसर्वैस्तुमिलित्वापातितंकुलम् ॥ १६ ॥ वंध्याऽहंनकथंजातागर्भोनगलितःकथम् ॥ अथवानमृताचाऽहंमृतानपुत्रिकाकथम् ॥ १७ ॥ राक्षसैर्वाकथंनैवभक्षितागहनेवने ॥ हतावानकथंकैश्विन्मृताव्याघ्रवरान्नकिम् ॥ १८ ॥ छेदयामिशिरस्तेऽद्यकिंकरोमिकलेवरम् ॥ त्यक्ष्यामिवाकुतोयामिहाहाचजीवितंहतम् ॥ १९ ॥ इत्युक्त्वापतितासाचनायातिभर्तृसन्निधौ ॥ एतस्मिन्समयेब्रह्माह्याजगामस्वयंतदा ॥ २० ॥ नारदोऽपिवचस्तस्याउवाचऋषिसत्तमः ॥ यथार्थंसुंदरंरूपंनज्ञातंशंकरस्यच ॥ २१ ॥ तिष्ठदूरेतथातंचमेनावचनमब्रवीत् ॥ ब्रह्मापुनस्तथागत्यकथयामासतांप्रति॥२२॥श्रोतव्यंचत्वयामेनेमदीयंवचनंशुभम् ॥ शंकरोलोककर्ताचहर्तापाल

यितास्वयम् ॥२३॥ नत्वंजानासितद्रूपंकथंदुःखंसमीहसे ॥ इत्युक्ताचतथासातुब्रह्माणंवाक्यमब्रवीत् ॥२४॥ किंमर्थंतुभवंतश्चव्यर्थीकर्तुंसमुद्यताः॥रूपं
तस्याःपरंनामहन्यतांवास्वयंपुनः ॥२५॥ नवक्तव्यंभवद्भिस्तुशिवायदीयतामिति ॥ इत्युक्तेचतदादेवाइंद्राद्यालोकपालकाः ॥२६॥ समागत्यतदासर्वे
वचनंचेदमब्रुवन् ॥ अयंवैपरमःसाक्षाच्छिवःपरमदुःखहा ॥२७॥ कृपयाचभवत्पुत्र्यादर्शनंशंकरस्यच ॥ जातंचाऽयकृपाहेतुनाऽन्यथादर्शनंकुतः॥२८॥
अथोवाचपुनर्मेनाहन्यतांपुत्रिकाशुभा ॥ नदेयाचमयासम्यक्शंकरायकुरूपिणे ॥ २९ ॥ इत्युक्तेचतयातत्रऋषयःसप्तएवते ॥ ऊचुस्तेवचनंसुभ्रुमध्ये
वयमुपागताः ॥३०॥ विरुद्धंचैवयत्कार्यंवयंमन्यामहेकथम् ॥ अयंवैपरमोलाभोदर्शनंशंकरस्यच ॥३१॥ दानपात्रंतथाभूत्वाऽऽगतश्चमंदिरेतव ॥ अतः
शुभतरंकिंतुशिवोद्वारमुपागतः ॥ ३२ ॥ इत्युक्तेचपुनर्मेनाऋषिवाक्यंनिराकरोत् ॥ शस्त्रैर्वाघातयाम्यद्यनदास्येशंकरायवै ॥ ३३ ॥ हिमालयःसमा
गत्यविकलाऽसिकथंप्रिये ॥ केकेसमागतागेहंकथंचैतान्विकत्थसे ॥ ३४ ॥ शंकरस्तुमयाज्ञातःसर्वेषांप्रतिपालकः ॥ निग्रहानुग्रहौकर्तासंपूज्योजगता
मिह ॥ ३५ ॥ मुंचदुःखंतथाकार्यंकर्त्तुमिच्छसिसांप्रतम् ॥ तेनोक्तेचतथातस्मैमेनावाक्यमुपाददे ॥ ३६ ॥ हिमवन्श्रूयतामेतच्छ्रुत्वाकर्तुमिहाऽर्हसि ॥
गृहीत्वातनुजांत्वेतांबद्ध्वाकंठेतुपर्वतात् ॥ ३७ ॥ गत्वाचसागरेस्वामिन्क्षिप्त्वात्वंचसुखीभव ॥ नदेयाचशिवेपुत्रीनिश्चितंमेवचःपुनः ॥ ३८ ॥ यदि
दास्यसित्वंपुत्रींत्यक्ष्याम्येतत्कलेवरम् ॥ इत्युक्तेचतयातत्रपार्वतीस्वयमागता ॥ ३९ ॥ पार्वत्युवाच ॥ मातस्तेविपरीतावैबुद्धिस्त्वांसमुपागता ॥
धर्मावलंबनात्वंतुकथंधर्मंप्रहास्यसि ॥ ४० ॥ अयंवैपरमःसाक्षात्सर्वेषांयोनिरुच्यते ॥ शंभुश्चशंकरश्चैवदेवानांप्रभुरीश्वरः ॥ ४१ ॥ अधिष्ठानंतथा
कर्त्तापालकश्चसनातनः ॥ यदग्रेदेवताःसर्वाआयाताःकिंकरीकृताः ॥ ४२ ॥ ततःशुभतरःकोनुवदत्वंहितकारिणि ॥ उत्तिष्ठत्वंप्रयत्नेनजीवितंसफ
लंकुरु ॥ ४३ ॥ देहिदानंशिवायैवह्याश्रमंसार्थकंकुरु ॥ त्यजदुःखंपरंतापंहित्वासुखमवाप्नुहि ॥ ४४ ॥ यदिनदास्यसित्वंचनवृणेऽन्यंतथोत्तमम् ॥
सिंहभागंकथंलभ्येच्छृगालःपरमंशुभे ॥ ४५ ॥ मनसावचसादेविकर्मणावाहरःस्वयम् ॥ वृतोवृतोवृतश्चैवयदिच्छसितथाकुरु ॥ ४६ ॥ उमा
वचनमाकर्ण्यगृहीत्वातत्कलेवरे ॥ मुष्टिभिःकूर्परैश्चैवदंतान्घर्षयतीतथा ॥ ४७ ॥ ताडयामासतांपुत्रींविकलाइवसातदा ॥ येचाऽन्येऋषयश्चैवनार
दाद्याश्चयेपुनः ॥ ४८ ॥ तद्धस्तात्तांपरिच्छिद्यनीत्वादूरतरंस्थिताः ॥ तांचतथाविधांदृष्ट्वाभर्त्सयामासवैतदा ॥४९॥ किमेनांचकरिष्यामिदुष्टांग्रहवतीं
ध्रुवम् ॥ गरंददामितांपुत्रींक्षिपामिवाऽथकूपके ॥ ५० ॥ शस्त्रैर्वाछेदयाम्येतांसागरेवाक्षिपाम्यहम् ॥ स्वीयंवाऽथशरीरंवैत्यक्ष्यामिवाऽथकूपके ॥ ५१ ॥
वरश्चकीदृशोलोकेलब्धश्चदुष्टयापुनः ॥ नमातानपिताबंधुर्नभ्रातानचगोत्रजः ॥५२॥ नरूपंनचचातुर्यंनगृहंचशुभंपुनः ॥ नवस्त्रंनाप्यलंकारःसहायानशु

भास्तथा ॥५३॥ वाहनंनशुभंचाऽस्यनवयोनधनंतथा ॥ नपावित्र्यंनविद्याचकिंदृश्यमेकमेवयत् ॥ ५४ ॥ किंविलोक्यमयापुत्रीदीयतेकिंकरोम्यहम् ॥
एतस्मिन्समयेविष्णुःसमागत्याऽब्रवीदिदम् ॥ ५५ ॥ पितॄणांत्वंशुभापुत्रीमानसीगुणसंयुता ॥ पत्नीहिमवतःसाक्षाद्ब्रह्मणःकुलसमुद्भवा ॥ ५६ ॥
सहायाश्चेदृशालोकेधन्याऽसिकिंवदाम्यहम् ॥ धर्मस्याऽधारभूताऽसिकथंधर्मंप्रहास्यसि ॥ ५७ ॥ देवैश्चऋषिभिश्चैवब्रह्मणावामयातथा ॥ विरुद्धंकथ्य
तेकिंचत्वयाशुभतरंनुकिम् ॥ ५८ ॥ शिवंत्वंचनजानासिनिर्गुणःसगुणोह्यभूत् ॥ तेनैवनिर्मितादेवीप्रकृतिर्मूलकारणम् ॥ ५९ ॥ तत्पार्श्वेचतथातेन
निर्मितःपुरुषोत्तमः ॥ ताभ्यांचाऽहंतथाब्रह्मातातश्चगुणरूपतः ॥ ६० ॥ अवतीर्णःस्वयंशंभुर्लोकानांहितकारकः ॥ ततोवेदास्ततोदेवायत्किंचिद्दृश्यते
जगत् ॥ ६१ ॥ स्थावरंजंगमंयच्चतत्सर्वंशंकरादभूत् ॥ तद्रूपंवर्ण्यतेलोकेज्ञायतेकेनवापुनः ॥ ६२ ॥ मयानब्रह्मणायोवैवर्षाणांतुसहस्रकम् ॥ तस्यपा
रोनवैलब्धोह्यनेनवर्ण्यतेकथम् ॥ ६३ ॥ सत्यज्ञानमयश्चैवव्याप्यव्यापकएवच ॥ अजरश्चामरश्चैवसर्वाध्यक्षःसमीपगः ॥ ६४ ॥ अहंब्रह्माहरश्चैवदेवाः
सर्वेपुरातनाः ॥ सूर्यश्चचंद्रमाश्चैवग्रहाःसर्वेशुभावहाः ॥ ६५ ॥ पर्वताश्चैवनद्यश्चवृक्षाश्चधनदस्तथा ॥ ब्रह्मादितृणपर्यंतंयत्किंचिद्दृश्यतेजगत् ॥
॥ ६६ ॥ तत्सर्वंशिवतोजातंनाऽत्रकार्याविचारणा ॥ अरूपश्चसरूपश्चजायतेशंकरःस्वयम् ॥ ६७ ॥ बीजाद्वृक्षप्ररोहश्चनानात्वमुपजायते ॥ अं
तेचफलमेवस्यात्तस्मात्फलमुदाहृतम् ॥ ६८ ॥ आदौमध्येशिवश्चैवअंतेशिवउदाहृतः ॥ सर्वंशिवमयंचैतच्छिवःसर्वमयस्तथा ॥ ६९ ॥ सूत्रेचै
वतुपुष्पाणिपुष्पेषुसूत्रमुच्यते ॥ एवंशिवश्चसर्वेषुशिवेसर्वंतथास्मृतम् ॥ ७० ॥ अहंशिवःशिवश्चाऽहंत्वंचाऽपिशिवएवच ॥ सर्वंशिवमयंब्रह्माशिवा
त्परंनकिंचन ॥ ७१ ॥ अज्ञानादन्यभावश्चज्ञानेभ्यःसमुदाहृतः ॥ कारणंकार्यवस्तुत्वेएकएवनचाऽपरः ॥ ७२ ॥ कारणंचशिवःसाक्षात्कार्यं
दृश्यंमतंबुधैः ॥ अज्ञानाच्चैवकार्येतुकारणेभेदइष्यते ॥ ज्ञानिनांनैवभेदोऽस्तिसर्वंशिवमयंजगत् ॥ ७३ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांमेनाऽ
ज्ञानयोगोनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ विष्णुरुवाच ॥ ॥ एतस्माच्चशिवादन्यद्दृश्यंनैवभवेदिह ॥ वस्तुतस्तुशिवइतिप्र
सिद्धंवेदसंमतम् ॥ १ ॥ अज्ञानादन्यथाभावोज्ञानेवस्तुप्रदृश्यते ॥ स्थाणौतुपुरुषभ्रांतिरज्ञानादथजायते ॥ २ ॥ ज्ञानेजातेतथास्तंभेवस्तुज्ञानप्र
दर्शनम् ॥ रज्जौतुसर्पविज्ञानमज्ञानसंभवंनृणाम् ॥ ३ ॥ संजातेचैवविज्ञानेरज्जुरेवनचाऽन्यथा ॥ शुक्तौतुरजतज्ञानंध्यायन्पश्यतिकश्चन ॥ ४ ॥ विवे
केचसमुत्पन्नेशुक्तिरेवनसंशयः ॥ तथैवाऽज्ञानजाबुद्धिःशिवादन्यत्रयाभवेत् ॥ ५ ॥ एवंचज्ञानदृष्टीनांशिवःशिवशिवस्तथा ॥ अन्यन्निदर्शनंदेविश्रूयतां
चवदाम्यहम् ॥ ६ ॥ यथाचनटकःकश्चिद्वेषांतरसमीहया ॥ गृह्णातिविविधंवेषंवस्तुत्वेनटएवच ॥ ७ ॥ अज्ञातॄणांमनोहृत्वाप्रतार्यधनमाहरेत् ॥ ज्ञाता

विहसतेतत्रनटैनैवाऽऽहृतंधनम् ॥ ८ ॥ तथैवज्ञानवान्देविशिवादन्यन्नपश्यति ॥ अज्ञानाद्विविधंरूपंपश्यतीतिसुनिश्चितम् ॥ ९ ॥ देहीवस्त्राण्यनेकानि
दधातिविविधेहया ॥ वस्त्राणिविविधानीहधारकस्त्वेकएवसः ॥ १० ॥ तथैवशिवरूपंतुसंयोगाद्विविधंभवेत् ॥ वस्तुतोबंधनंनास्तिह्याकाररहितेशिवे ॥ ११ ॥
यावद्देहंप्रजायेततावद्वैबंधनंदृढम् ॥ निवृत्तेचाऽप्यहंकारेकर्त्ताशिवउदाहृतः ॥ १२ ॥ यथाचस्फटिकश्चैवसंयोगाद्विविधोभवेत् ॥ तथाप्रकृतिसंयो
गाच्छिवस्याऽनेकतामता ॥ १३ ॥ तथाविवेकतातस्याग्रहणेमोचनेशिवे ॥ प्रकृतेश्चपरंब्रह्मयत्तच्छिवउदाहृतम् ॥ १४ ॥ सएवगुणरूपेणह्यवतीर्णो
हरःस्वयम् ॥ तस्यतत्त्वंनजानीमोनजानीमोवयंप्रभोः ॥ १५ ॥ तस्मात्त्वंहिमवत्पत्निदुःखंमुंचशिवंभज ॥ तस्यास्तुकोमलंकिंचिन्मनोविष्णुप्रबो
धितम् ॥ १६ ॥ एतस्मिन्नंतरेरुद्रोनारदेनप्रबोधितः ॥ तावत्पार्श्वेंगतोयावद्रुद्रेणरूपमुत्तमम् ॥ १७ ॥ धृतंतुभक्तवात्सल्यात्कृपालुत्वंप्रदर्शितम् ॥
सुंदरंसुभगंदृष्ट्वामोहंप्राप्तायथापुरा ॥ १८ ॥ शिवंपश्यपुनस्तत्रनारदोवाक्यमब्रवीत् ॥ साददर्शशिवंतत्रश्रूयतांकीदृशंप्रभुम् ॥ १९ ॥ सूर्यकोटिप्रतीकाशं
सुनेत्रैर्भूषणैर्युतम् ॥ मुकुटेनविराजंतंविचित्रवसनंशुभम् ॥ २० ॥ वाहनस्यतथाशोभावर्णितुंनैवशक्यते ॥ सुप्रसन्नंसुहासंचसर्वैर्देवगणैर्युतम् ॥ २१ ॥
सूर्येणच्छत्रितोयोऽसौचंद्रेणवीजितस्तथा ॥ सिद्धयोऽष्टौप्रनृत्यंचकुर्वंतिस्मतदग्रतः ॥ २२ ॥ गंगाचयमुनाचैवचामरेदधतुःशुभे ॥ ब्रह्माचैवतथाविष्णु
रिंद्राद्यादेवतास्तथा ॥ २३ ॥ स्वीयंस्वीयंतथावेषंसंभूष्यपुरतोऽचरन् ॥ जयजयेतिभाषंतोनानाऋषिगणास्तथा ॥ २४ ॥ परंब्रह्मगृणंतस्तेपताका
भिरलंकृताः ॥ विश्वावसुमुखास्तत्रह्यप्सरोगणसंयुताः ॥ २५ ॥ गायंतोऽप्यग्रतस्तस्यशोभायुक्ताःपरस्परम् ॥ गणास्तत्रचवाद्यानिमृदंगादिक्रमे
णतु ॥ २६ ॥ ह्यकुर्वंतपरंतत्रतत्वानिपुरतोययुः ॥ समुद्राश्चतथानद्योनानाभूषाविभूषिताः ॥ २७ ॥ तस्मिंश्चसमयेतत्रशोभाचाऽस्यमहात्मनः ॥ जा
तातांवर्णितुंकोवाशक्नोतिऋषिसत्तमाः ॥ २८ ॥ तंदृष्ट्वाचतथामेनाक्षणंचित्रगताइव ॥ यथाचवर्णितंदेवैर्यद्रूपंतत्तथैवहि ॥ २९ ॥ धन्यापुत्रीमदीया
चययाऽसौपरवान्कृतः ॥ वर्णनंचतदातस्यकृत्वालज्जापराभवत् ॥ ३० ॥ शिवोऽपिचतथाद्वारिगतोदेवगणैःसह ॥ मेनातंपूजयामासब्रह्मविष्णुसम
न्वितम् ॥ ३१ ॥ तावत्स्त्रियःसमाजग्मुर्हित्वाकामाननेकशः ॥ मज्जनंकुर्वतीकाचिच्चूर्णेनसंयुताययौ ॥ ३२ ॥ काचित्तुस्वामिनःसेवांविहायसखि
संयुता ॥ चामरेणतथायुक्तादर्शनार्थंशिवस्यच ॥ ३३ ॥ काचित्तुबालकंहित्वाह्यतृप्तंद्रष्टुमाययौ ॥ रशनांबध्नतीकाचित्तथैवसंयुताययौ ॥ ३४ ॥
वस्त्रंचविपरीतंचधृत्वाकाचिदुपाययौ ॥ काचिद्धस्तेशलाकांचधृत्वांजनसमन्विताम् ॥ ३५ ॥ आदर्शंचतथाऽन्यस्मिन्नीत्वानेत्रमुपाययौ ॥ काचित्तुभो
जनार्थंचस्थितंचस्वामिनंतदा ॥ ३६ ॥ हित्वान्नेनसमायुक्तादर्शनार्थंप्रभोरिति ॥ दोहनार्थंस्थिताकाचित्तद्धित्वाह्यपराययौ ॥ ३७ ॥

काचित्तुकामिनीपादंरंजयंतीयदातदा ॥ श्रुत्वोद्घोषंचतद्धित्वादर्शनार्थमुपागता ॥ ३८ ॥ इत्यादिविविधंकार्थहित्वाऽन्याःसमुपागताः ॥ दृष्ट्वाचशां
कररूपंमोहंप्राप्ताश्चपुत्तिकाः ॥ ३९ ॥ यथाऽचेतनास्तिष्ठंतितथाताश्चस्थितास्तदा ॥ क्षणमात्रंतदास्थित्वावचनंचेदमब्रुवन् ॥ ४० ॥ सम्यक्कृतं
तुपार्वत्यानाऽन्यथायद्भवेदिह ॥ अहोपश्यतकिंरूपंवर्णनीयंकथंभवेत् ॥ ४१ ॥ यथार्थनामसख्यस्तुदृश्यतेनाऽन्यथाक्वचित् ॥ शिवइतिचविख्यातं
दर्शनाच्चलभेच्छिवम् ॥ ४२ ॥ नेत्राणिसफलान्यासन्हिमवत्पुरवासिनाम् ॥ योवैपश्यत्यदोरूपंतस्यैवसार्थकंभवेत् ॥ ४३ ॥ तस्यैवसफलं
जन्मतस्यैवसफलाःक्रियाः ॥ येनदृष्टःशिवःसाक्षात्सर्वपापप्रणाशकः ॥ ४४ ॥ पार्वत्यासाधितंसर्वंशिवार्थंतुतपःकृतम् ॥ धन्येयंकृतकृत्येयंशिवं
प्राप्यपतिंसदा ॥ ४५ ॥ प्रीणयिष्यतिसानित्यमचिंत्यसुखहेतुकम् ॥ यदीदंयुगलंब्रह्मासंगमायाक्षमोभवेत् ॥ ४६ ॥ तदाचसकलोऽप्यस्यश्रमो
निष्कलतामियात् ॥ सम्यक्कृतंतथातेनमेलितंयुग्ममुत्तमम् ॥ ४७ ॥ अनयायत्तपस्तप्तंसार्थकंसकलंकृतम् ॥ विनातुतपसाह्येतत्प्राप्तुंचैवसुदुर्ल
भम् ॥ ४८ ॥ लक्ष्मीर्नारायणंलेभेस्वामिनंचतथाशिवम् ॥ सुवर्णमणियुक्तंचराजतेनितरांयथा ॥ ४९ ॥ तथाऽसौपार्वतीदेवीहरंप्राप्यसुभूषितम् ॥
इत्येवंवचनंह्युक्त्वाचंदनैश्चाऽक्षतैरपि ॥ ५० ॥ शिवंचैवार्चयामासुर्धन्योऽयमितिचाऽब्रुवन् ॥ कथास्तथाविधाःशृण्वन्शिवोद्वारिसमागतः ॥ ५१ ॥
सर्वेदेववरास्तत्रह्यच्युताद्याःशिवंप्रति ॥ स्थितास्तत्राशिवस्याऽर्थेकश्चिच्चकौतुकंपुनः ॥ ५२ ॥ करिष्यतीतितन्मत्वासावधानतयातथा ॥
एतस्मिन्नंतरेदेवीमेनाहर्षसमन्विता ॥ ५३ ॥ परिधायशुभंवेषंलज्जितादेवसन्निधौ ॥ आगत्यशिवपूजांचकृत्वाशीघ्रमपावृता ॥ ५४ ॥ वस्त्रंशि
वस्यकंठेतुकृत्वादेवभियाशुभा ॥ कर्षयंतीक्षणंतत्रहास्यंकृत्वागृहंययौ ॥ ५५ ॥ चतुष्केचतथाब्रह्माऋषिभिर्वेष्टितःस्वयम् ॥ तावदेवशिवस्तत्रह्याज
गामप्रहर्षितः ॥ ५६ ॥ तावच्चहिमवान्स्नात्वासपत्नीकःस्वयंगतः ॥ ब्रह्मासर्वंचतत्रत्यंकारयामासवैतदा ॥ ५७ ॥ प्रयोगादिविधायैववेदोच्चारणतत्प
राः ॥ ऋषयःपाठयामासुर्गोत्राणिपरयोर्हिताः ॥ ५८ ॥ आवाहनंतथापाद्यंसर्वंचविधिपूर्वकम् ॥ दुकूलंसुंदरंतेनदत्तंतस्मैमहात्मने ॥ ५९ ॥ तिलकं
पुष्पहारंचकांचनस्ययथाविधि ॥ पुनश्चतुष्कमासाद्यदंपतीतौमुदान्वितौ ॥ ६० ॥ संस्थाप्याऽग्निंपुनस्तत्रवैवाहमकरोद्विधिम् ॥ अक्षतारोपणंतत्रस्त्रि
यश्चक्रुस्तदाज्ञया ॥ ६१ ॥ प्रदक्षिणंतथाचाग्नेश्चतुर्धाचकृतंतदा ॥ ब्रह्मणःस्खलनंजातंशिवांगुष्ठप्रदर्शनात् ॥ ६२ ॥ तद्गोपितंतदातेनह्युत्संगेपतितंच
यत् ॥ ततोजातास्त्वसंख्याताबटुकाब्रह्मसूत्रकाः ॥ ६३ ॥ जटादंडधरास्तेचबद्धकच्छाःसहस्रशः ॥ नमस्कृत्यचब्रह्माणंस्थितास्तेतुतदग्रतः ॥ ६४ ॥
शिवोऽपिबटुकान्दृष्ट्वाब्रह्मणेकुपितस्तदा ॥ संप्रार्थितस्तदादेवींगंगांदत्त्वातुपावितः ॥ ६५ ॥ अनुगृह्यपुनस्तत्रस्थापितश्चपितामहः ॥ बटुकान्सूर्य

शिष्यांश्चकृत्वाकार्यमथाऽकरोत् ॥ ६६ ॥ बटुकावर्धितास्तत्रसूर्यसेवापरायणाः ॥ रथपृष्ठेरथाग्रेचधावंतितेतपस्विनः ॥ ६७ ॥ ब्रह्मचारिस्वरूपेणस्थि
तास्तेवेदपारगाः ॥ अवशिष्टंचयत्कृत्यंकारयामासवैतदा ॥ ६८॥ अनुज्ञांचैवदत्त्वातुकन्यायैसपितामहः ॥ ध्रुवस्यदर्शनंतत्रकारयामासवैतदा ॥ ६९ ॥
पुनःस्थाप्यासनेदेवंचक्रुःस्वस्त्ययनंशुभम् ॥ वेदोक्ताद्याशिषोदत्त्वावर्धाप्यचपुनःपुनः ॥ ७० ॥ तेदेवाश्चतदादेवींजगतोमातरंशिवाम् ॥ नमस्कृत्य
पुनस्तेवैस्थितास्तेशंकरंपुनः ॥ ७१ ॥ नमस्कृत्याऽब्रुवंस्तत्रशिवत्वंजगतःपिता ॥ इयंचजगतोमाताद्यारभ्यदिनमद्यतः ॥ ७२ ॥ तद्वैवचपुनर्देवागं
धर्वाप्सरसस्तदा ॥ नृत्यंगानंचवाद्यंचचक्रुस्तेपरयामुदा ॥ ७३ ॥ गिरिराजोऽपितत्रैवसंपाद्यविधिमुत्तमम् ॥ मेनेकृतार्थमात्मानंसफलंचगृहाश्रमम् ॥
॥ ७४ ॥ तौदंपतीतदातत्रसंपूज्यकुलदेवताम् ॥ वर्धाप्यमंडपंतत्रद्युद्वह्यकौतुकौषधिम् ॥ ७५ ॥ ऋषीन्प्रणम्यसर्वांस्तांश्चकारानुग्रहंशिवः ॥ हिमवा
नपितत्रैवयथायोग्यमपूजयत् ॥ ७६ ॥ सर्वान्देवगणांस्तत्रसेवार्थंयेसमागताः ॥ यथाचमेनिरेदेवावयंकेपर्वताग्रतः ॥ ७७ ॥ तथापूजाचसेवाचकृतातेन
महात्मना ॥ यथातेमनसिग्लानिंगतास्तेदेवसत्तमाः ॥ ७८ ॥ समागतेषुसर्वेषुनकश्चिद्दुःखमागतः ॥ अहंधन्यःशिवेनैवगिरिणाचानुमानितः ॥ ७९ ॥
तथानकोऽपितत्रैवमानितश्चपरस्परम् ॥ तेदेवाश्चतथासर्वेवदंतश्चतपोधनाः ॥ ८० ॥ गिरिराजस्तदातत्रप्रार्थयामासतांस्तथा ॥ ममाऽद्यसफलंजातंजी
वितंधन्यमेवच ॥ ८१ ॥ मेनाचाऽपिपुनस्तत्रस्तुतिंचक्रेशुभानना ॥ निंदांनिवर्त्तयामाससर्वेषांप्रांजलिस्तदा ॥ ८२ ॥ धन्याऽहंकृतकृत्याऽहंयस्याश्चपु
त्रिकाशुभा ॥ जाताममकुलंधन्यंपावितंत्वनयाध्रुवम् ॥ ८३ ॥ यदिनपुत्रिकाचेयंयूयंवाशिवएववा ॥ कुतस्तेऋषयोदेवाविष्णुश्चैवसनातनः ॥ ८४ ॥
इयंवैपुत्रिकाधन्यासर्वपापापनुत्तये ॥ मदीयंदुष्टकृत्यंचक्षंतव्यंजगदीश्वराः ॥ ८५ ॥ एवंसंप्रार्थ्यतान्सर्वान्नमस्कृत्याऽक्षमापयत् ॥ गिरिराजोऽपितान्स
र्वान्नमस्कृत्यतथाऽवदत् ॥ ८६ ॥ तेदेवाःपूजितास्तेनप्रसन्नाश्चेदमब्रुवन् ॥ धन्योऽसिकृतकृत्योऽसिजीवितंसफलीकृतम् ॥ ८७ ॥ येनैवकन्यकादानं
शिवायैवसमर्पितम् ॥ इत्युक्त्वाचपुनर्मेनामूचुस्तेविनयान्विताः ॥ ८८ ॥ धन्यात्वंगिरिराजस्यपत्नीमेनेतिविश्रुता ॥ यदुदरात्समुत्पन्नंशिवारत्नंशु
भानने ॥ ८९ ॥ त्वदीयश्चतिरस्कारःसुखरूपोऽनुमानितः ॥ सौभाग्यंवर्द्धतांतेऽद्यगच्छामःसुखमस्तुते ॥ ९० ॥ गिरिराजंतथैवाऽत्रसंप्रार्थ्यदेवताग
णाः ॥ दत्त्वाचद्याशिषस्तस्मैवंदितास्तेययुर्मुदा ॥ ९१ ॥ हिमवत्पुत्रिकांसर्वेवाद्यगानपरायणाः ॥ अन्वगच्छंततेतत्रगिरिराजादयश्चये ॥ ९२ ॥
मेनाद्याश्चैवतत्पत्न्योगच्छंतिस्मशिवांप्रति ॥ गंधमादनपर्यंतंगत्वानुज्ञामवाप्यच ॥ ९३ ॥ सोत्सुकाश्चपराजग्मुःस्वस्थानंतेगिरीश्वराः ॥
तद्दिनंहिसमारभ्यकृतार्थाःपर्वताइमे ॥ ९४ ॥ सुखंचपरिवृद्धंचवर्णितुंनैवशक्यते ॥ अच्युताद्याश्चयेदेवाऋषयोनिर्मलाशयाः ॥ ९५ ॥

समागताश्चतेतत्रवाद्यनृत्यपरायणाः ॥ समागत्यतुकैलासंसंस्थाप्यमंदिरेशिवम् ॥ ९६ ॥ पत्न्यायुक्तंचसंप्रार्थ्यदत्तानुज्ञाययुश्चते ॥ प्रशंसंतो
विवाहंचकृपांचैवशिवस्यच ॥ ९७ ॥ स्वपदंचतथासर्वेययएतेऽत्रसमागताः ॥ दृष्ट्वाचशिवयोर्योगंदेवानांप्रीतिरुत्तमा ॥ ९८ ॥ वर्णितुंनैवशक्ये
तवर्षाणांचशतेनच ॥ एतच्चैवसमाख्यातंयत्पृष्टोऽहंमुनीश्वराः ॥ ९९ ॥ विवाहस्यविधिंसम्यग्देवस्यपरमात्मनः ॥ यएवंशृणुयान्नित्यंश्लोकं
श्लोकार्धमेववा ॥ १०० ॥ तस्यवैविपुलालक्ष्मीर्जायतेनाऽत्रसंशयः ॥ अज्ञानंनाशमायातिवर्धतेसुखसंपदः ॥१०१॥ आरोग्यंजायतेतस्यकन्या
लाभोभवेदिह ॥ १०२ ॥ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांपार्वतीविवाहवर्णनंनामाऽष्टादशोऽध्यायः ॥ १८ ॥ ऋषयऊचुः ॥
सूतसूतमहाभागकिंजातंतुततःपरम् ॥ तारकस्यवधश्चैवकथ्यतांतुत्वयाऽनघ ॥ १ ॥ सूतउवाच ॥ श्रूयतांकथयाम्यद्यकथांपापप्रणा
शिनीम् ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्यंतेमानवाःकलौ ॥ २ ॥ कैलासमासाद्यशिवांसमेत्यशोभांप्रपेदेऽतितरांशिवोऽपि ॥ विचारयामासचदेवकृ
त्यंपीडांजनस्याऽपिसदेवदेवः ॥ ३ ॥ विचार्यचकृतंतेनश्रूयतामृषिसत्तमाः ॥ शिवोऽपिभगवान्साक्षात्कैलासमगमद्यदा ॥ ४ ॥ गणाश्चसर्वेतत्राऽऽ
सन्प्रमथाद्यामहाबलाः ॥ वाद्यंचविविधंचक्रुर्हर्षनिर्भरमानसाः ॥ ५ ॥ देवाअपिचयेतत्राऽऽगतास्तेहर्षमागताः ॥ अतःपरंशिवोऽस्माकंकृपांचैवकरि
ष्यति ॥ ६ ॥ शिवस्तत्रशिवासार्धंनानारंगमथाऽकरोत् ॥ देवाश्चपीडितास्तेनशिवःकिंनुकरिष्यति ॥ ७ ॥ विलंबःक्रियतेतेनकथंचाऽग्निंसमीरयन् ॥
अग्निर्धृत्वाकपोतस्यरूपंतत्रजगामह ॥८॥ गत्वाशिवसमीपंचयदाचाऽग्निर्निरीक्षयेत् ॥ तावदग्निंशिवोदृष्ट्वाभोगादुपरतःस्वयम् ॥९॥ कस्त्वंकपटरूपोऽसिगृ
ह्यतांशुक्रमेवमे ॥ इत्युक्त्वाऽप्यग्नयेवीर्यंदत्तंतेनमहात्मना ॥ १० ॥ कपोतोवीर्यमादायचंचूपुटगतंयदा ॥ बहिर्गतोमहावीर्यंधर्तुमक्षमएवसः ॥ ११ ॥
तद्वीर्यंचैवगंगायांप्राक्षिपद्दुःखपीडितः ॥ गंगयाऽपिचतद्वीर्यंदुःसहंपरमात्मनः ॥ १२ ॥ निक्षिप्तंचशरस्तंबेतत्रबालोव्यजायत ॥ सुंदरःसुभगःश्रीमा
न्दर्शनात्सुखदायकः ॥१३॥ एतस्मिन्नंतरेतत्रराजकन्याःसमागताः ॥ षट्संख्याश्चैवस्नानार्थंताभिर्दृष्टस्तुबालकः ॥१४॥ मदीयोऽयंमदीयश्चवदंत्यश्चपर
स्परम् ॥ संपाद्यषण्मुखानीहपीतंस्तन्यंस्वयंतदा ॥ १५ ॥ षाण्मातुरस्तदानामप्रसिद्धंतुमहात्मनः ॥ पार्वतीनंदनंनामप्रथमंचाऽभवत्तदा ॥ १६ ॥ अ
ग्निभूश्चततःपश्चात्ततःस्कंदोऽभवत्पुनः ॥ गंगापुत्रस्तदानामशरजन्माततःपरम् ॥ १७ ॥ षाण्मातुरस्ततश्चैवनामानिबहुधाऽभवन् ॥ ताःकन्यास्तुततो
गृह्यपुत्रंकृत्वासुहर्षिताः ॥ १८ ॥ सर्वंचनारदाज्ज्ञात्वाशिवानुज्ञामवाप्यच ॥ तेदेवाश्चततोनीत्वासेनांदेवमयींतदा ॥ १९ ॥ स्कंदंचतत्पतिंकृत्वाय
युर्देवास्ततश्चते ॥ शोणिताख्यंपुरंगत्वायुद्धंचक्रुःसुदारुणम् ॥२०॥ दशाहंतुतदाजातंसंमर्दंकष्टमुत्कटम् ॥ ततोदैत्याधिपश्चैवहतस्तेनमहात्मना ॥२१॥

कियंतोऽपिपलायंताकियंतश्चूर्णमागताः ॥ पातालंचगताःकेचित्सर्वेतेचक्षयंगताः ॥ २२ ॥ शोणिताख्येपुरेतैश्चयुद्धमेवाऽभवत्तदा ॥ सर्वंनिष्कंटकं
ह्यासीद्धतेतस्मिन्दुरात्मनि ॥ २३ ॥ तेदेवाःसुखमापन्नाःस्वंस्वंराज्यमकुर्वत ॥ आनंदंपरमंगत्वानीत्वास्कंदंशिवाग्रतः ॥ २४ ॥ आरोप्यप्रणिपातंचस्तु
तिंकृत्वापुरःस्थिताः ॥ अकुर्वन्पुनरेवाऽत्रप्रफुल्लमुखपंकजाः ॥ २५ ॥ देवाऊचुः ॥ देवदेवमहादेवभक्तानामभयप्रद ॥ तवरूपंनजानीमोगतिंनैवचनैवच
॥ २६ ॥ विश्वेश्वरपरोदेवयोऽसिसोऽसिनमोऽस्तुते ॥ वरंदत्त्वांमहादेवदेवदेवंमहेश्वरम् ॥ २७ ॥ नमोभवायभव्यायभुवनायोद्भवायच ॥ अनंतबलवीर्याय
भूतानांपतयेनमः ॥ २८ ॥ संहर्त्रेकपिशांगायअव्ययायव्ययायच ॥ गंगासलिलधारायआधारायगुणात्मने ॥ २९ ॥ त्र्यंबकायत्रिनेत्रायत्रिशूलवरधारिणे ॥
कंदर्पायहुताशायनमोवैपरमात्मने ॥ ३० ॥ शंकरायवृषांकायगणानांपतयेनमः ॥ दंडहस्तायकालायपाशहस्तायवैनमः ॥ ३१ ॥ वेदमंत्रप्रधानायशताजि
ह्वायतेनमः ॥ भूतंभव्यंभविष्यंचस्थावरंजंगमंचयत् ॥ ३२ ॥ तवदेहात्समुत्पन्नंदेवसर्वमिदंजगत् ॥ पासिहंसिचभद्रंतेप्रसीदभगवंस्ततः ॥ ३३ ॥ ऋषय
ऊचुः ॥ नमोदिग्वाससेतुभ्यंकृतांतायत्रिशूलिने ॥ विकटायकरालायकरालवदनायच ॥ ३४ ॥ अरूपायसरूपायविश्वरूपायतेनमः ॥ वषट्कारायरुद्राय
स्वाहाकारायतेनमः ॥ ३५ ॥ सर्वप्रणतदेहायस्वयमप्रणतायच ॥ नित्यंनीलशिखंडायश्रीकंठायनमोनमः ॥ ३६ ॥ नीलकंठायदेवायचिताभस्मांगधारिणे ॥
त्वंब्रह्मासर्वदेवानांरुद्राणांनीललोहितः ॥ ३७ ॥ आत्माचसर्वभूतानांसांख्यःपुरुषउच्यते ॥ पर्वतानांमहामेरुर्नक्षत्राणांचचंद्रमाः ॥ ३८ ॥ ऋषीणांच
वसिष्ठस्त्वंदेवानांवासवस्तथा ॥ ओंकारःसर्ववेदानांज्येष्ठसामचसामसु ॥ ३९ ॥ आरण्यानांपशूनांचसिंहस्त्वंपरमेश्वर ॥ असकृद्दुःखदग्धानांत्राताभव
सुरेश्वर ॥ ४० ॥ त्वंचलोकहितार्थायभूतानिपरिषिंचसि ॥ महेश्वरमहाभागशुभाशुभनिरीक्षक ॥ ४१ ॥ आज्ञापयवयंनाथकर्त्तारोवचनंतव ॥ रूप
कोटिसहस्रेषुरूपकोटिशतेषुते ॥ ४२ ॥ अंतंगंतुंनशक्ताःस्मदेवदेवनमोस्तुते ॥ इतिस्तुत्वातदादेवाःस्कंदंदत्त्वास्थिताःपुरः ॥ ४३ ॥ प्रसन्नोभगवान्
रुद्रउवाचदेवसत्तमान् ॥ यदायदाभवेद्दुःखंतदायांतुमुनीश्वराः ॥ ४४ ॥ देवाश्चसर्वएवैतेभजंतुमांममाज्ञया ॥ इत्याज्ञप्तास्तदासर्वेशिवेनपरमात्मना ॥
॥ ४५ ॥ ओमित्युक्त्वानिजंधामजग्मुस्तेदेवतागणाः ॥ ऋषयऊचुः ॥ अतःपरंचयज्जातंकथनीयंत्वयासखे ॥ ४६ ॥ सूतउवाच ॥ कथयामिश्रुतंसम्यग्व्या
साद्विश्वार्थसूचकात् ॥ निहतेतारकेदैत्येतारपुत्रेसबांधवे ॥ ४७ ॥ स्कंदेनचाप्रयत्नेनतस्यपुत्रामहाबलाः ॥ विद्युन्मालीतारकाक्षःकमलाक्षश्चवीर्यवान्
॥ ४८ ॥ तपस्तेपुर्महात्मानोमहाबलपराक्रमाः ॥ तपउग्रंसमास्थायनियमेपरमेस्थिताः ॥ ४९ ॥ तपसाकर्शयामासुर्देहान्स्वान्दानवोत्तमाः ॥
वर्षाणांशतकंचैवपदमेकंनिधाय च ॥ ५० ॥ भूमौस्थित्वापरंतत्रतेपुस्तेबलवत्तराः ॥ तेसहस्रंतुवर्षाणांवातभक्षाःसुदारुणाः ॥ ५१ ॥ तपस्तेपुर्दु

४

रात्मानःपरंतापमुपागताः ॥ वर्षाणांतुसहस्रंवैमस्तकेनस्थितास्तदा ॥ ५२ ॥ वर्षाणांतुशतेनैवऊर्ध्वबाहवआस्थिताः ॥ तेतुदुःखतरंप्राप्तादुराग्रहप
राइमे ॥ ५३ ॥ तेषांपितामहःप्रीतोवरदःप्रददौवरम् ॥ प्रसन्नोस्मिवरंब्रूतदानवाबलदर्पिताः ॥ ५४ ॥ ॥ दानवाऊचुः ॥ यदिप्रसन्नोदेवेशयदिदेयोवरस्त
था ॥ अवध्यत्वंचसर्वेषांसर्वभूतेषुसर्वदा ॥ ५५ ॥ तेसर्वेवरयामासुःसर्वलोकपितामहम् ॥ तानब्रवीत्तदादेवोलोकानांप्रभुरव्ययः ॥ ५६ ॥ नास्तिसर्वा
मरत्वंवैनिवर्तध्वमतोऽसुराः ॥ अन्यंवरंवृणीध्वंवैयादृशःसंप्ररोचते ॥ ५७ ॥ ततस्तेसहिताःसर्वेसंप्रधार्यपरस्परम् ॥ ब्रह्माणमब्रुवन्दैत्याःप्रणिपत्य
जगद्गुरुम् ॥ ५८ ॥ वरंपुराणित्रीण्येवसमास्थायमहीमिमाम् ॥ चरिष्यामोहिलोकेशत्वत्प्रसादाज्जगद्गुरो ॥ ५९ ॥ तथावर्षसहस्रांतेसमेष्यामःपरस्प
रम् ॥ एकीभावंगमिष्यंतिपुराण्येतानिचाऽनघ ॥ ६० ॥ यदासमानिचैतानियोहन्याद्भगवंस्तदा ॥ एकेनैवेषुणादेवसनोमृत्युर्भविष्यति ॥ ६१ ॥
एवमस्त्वितितान्देवःप्रत्यक्षंप्राविशद्दिवम् ॥ आज्ञांदवामयस्याऽपिकुरुत्वंनगरत्रयम् ॥ ६२ ॥ कांचनंराजतंचैवआयसंचतथाकुरु ॥ इत्युक्त्वाचततो
ब्रह्माजगामस्वयमेवच ॥ ६३ ॥ ततोमयश्चतरसाचक्रेधीरःपुराण्यथ ॥ कांचनंदिवितत्रासीदंतरिक्षेचराजतम् ॥ ६३ ॥ आयसंचाऽभवद्भूमौपुरंतेषां
महात्मनाम् ॥ एकैकंयोजनायामंसुंदरंसुभगंपुनः ॥ ६५ ॥ कांचनंतारकाक्षस्यकमलाक्षस्यराजतम् ॥ विद्युन्मालेश्चायसंचत्रिविधंदुर्गमुत्तमम् ॥ ६६ ॥
मयश्चतत्रबलवान्दैत्यदानवपूजितः ॥ दत्त्वातेभ्यस्स्यंतार्हिहितकामपरायणः ॥ ६७ ॥ पुरत्रयंप्रविश्यैवबभूवुस्तेबलाधिकाः ॥ कल्पद्रुमैश्चसंकीर्णंगजवा
जिसमाकुलम् ॥ ६८ ॥ नानाप्रासादसंकीर्णंमणिजालसमावृतम् ॥ सूर्यमंडलसंकाशैर्विमानैर्विश्वतोमुखैः ॥ ६९ ॥ पद्मरागमयैश्चैवशोभितंचेंदुसन्नि
भैः ॥ प्रासादैर्गोपुरैर्दिव्यैःकैलासशिखरोपमैः ॥ ७० ॥ दिव्यस्त्रीभिश्चसंकीर्णंगंधर्वैःसिद्धचारणैः ॥ रुद्रालयैःप्रतिगृहंह्यग्निहोत्रैर्द्विजोत्तमैः ॥ ७१ ॥ वा
पीकूपतडागैश्चदीर्घिकाभिःसुशोभितम् ॥ मत्तमातंगयूथैश्चतुरंगश्चसुशोभनैः ॥७२॥ रथैश्चविविधाकारैःशिबिकाभिरलंकृतम् ॥ सभाप्रपादिभिश्चैवक्री
डास्थानैःपृथक्पृथक् ॥ ७३ ॥ वेदाध्ययनशालाभिर्विविधाभिःपृथक्पृथक् ॥ अदृष्टंमनसाप्यन्यैःपुण्यवद्भिःप्रदृश्यते ॥७४ ॥ पतिव्रताभिःसर्वत्रपावितं
मुनिपुंगवाः ॥ दैत्येश्वरैर्महाभागैःसदारैःससुतैर्द्विजैः ॥ ७५ ॥ श्रौतस्मार्तार्थधर्मज्ञैःस्वधर्मनिरतैःसदा ॥ व्यूढोरस्कैर्वृषस्कंधैःसामयुद्धधरैःसदा ॥७६ ॥
प्रशांतैःकुपितैश्चैवकुब्जैर्वामनकैस्तथा ॥ नीलोत्पलदलप्रख्यैर्वालकुंचितमूर्धजैः ॥ ७७ ॥ मयेनरक्षितैःसर्वैःशिक्षितैर्युद्धलालसैः ॥ ७८ ॥ अथसमररते
स्तदासमंतादजशिवपूजनयासुलब्धवीर्यैः ॥ रविमरुदमरेंद्रसंनिकाशैःसुरमथनैःसुदृढैःसुसेवितंचतत् ॥ ७९ ॥ शास्त्रवेदपुराणानियेयेधर्माःसनातनाः ॥
तैस्तैरविहतैश्चैवसेवितंतुसदाशुभैः ॥ ८० ॥ पृथिव्यांचैवयेधर्मास्तेधर्मास्तत्रतत्रह ॥ तेषांचप्रभयादग्धादेवाःसेंद्रादयस्तदा ॥ ८१ ॥ दुःखितास्तुत

दासर्वेब्रह्माणंशरणंययुः ॥ तेतुब्रह्माणमागत्यस्वंस्वंदुःखंन्यवेदयन् ॥ ८२ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांत्रिपुरजयोनामैकोनविंशतितमोऽध्यायः ॥ १९ ॥ ॥ सूतउवाच ॥ त्रिपुरस्यचतद्दुःखंश्रुत्वोवाचपितामहः ॥ मत्तोहिवर्धितोदैत्योवधंमत्तोनचार्हति ॥१॥ तथापिपुण्यंवर्तेतनगरेत्रिपुरेपुनः ॥ शिवंचप्रार्थयध्वंवैसवःकार्यंकरिष्यति ॥ २ ॥ तदुक्तास्तेययुस्तत्रयत्रास्तेवृषभध्वजः ॥ तत्रगत्वाचतद्दुःखंनिवेद्यसंस्थितास्पुरः ॥ ३ ॥ शिवोऽपितद्वचः श्रुत्वावचनंचेदमब्रवीत् ॥ अयंवैत्रिपुराध्यक्षःपुण्यवान्वर्ततेऽधुना ॥ ४ ॥ यत्रपुण्यंप्रवर्तेतनहंतव्यंबुधैःपुनः ॥ तावत्सर्वैनहंतव्योयावत्पुण्यंविवर्धते ॥ ५ ॥ तथाचविष्णवेदेवानिवेद्यकारणंत्विदम् ॥ तदीयंतद्वचःश्रुत्वादेवाविष्णुंनिवेदयन् ॥ ६ ॥ ज्ञात्वावृत्तंचतेषांवैविष्णुर्वचनमब्रवीत् ॥ इदंसत्यंवचश्चैवयत्रधर्मः सनातनः ॥ ७ ॥ तत्रदुःखंनजायेतसूर्येदृष्टेयथातमः ॥ इत्येतद्वचनंश्रुत्वादेवादुःखमुपागताः ॥ ८ ॥ पुनरूचुस्तदाविष्णुंपरिम्लानमुखांबुजाः ॥ कथंचैवप्रकर्तव्यंकथंस्थास्यामहेवयम् ॥ ९ ॥ कथंधर्माभविष्यंतित्रिपुरेजीवितेसति ॥ नोचेदकालिकीदेवसंहृतिःक्रियतांध्रुवम् ॥ १० ॥ अथवा त्रिपुरस्येहवधश्चैवविधीयताम् ॥ इत्युक्त्वातेतदादेवादुःखंकृत्वापुनःपुनः ॥ ११ ॥ स्थितानैवगतिंतेऽप्यचक्रुर्देववरादिह ॥ तांस्तांस्तथाविधान्दृष्ट्वा विष्णुर्विनयसंयुतान् ॥ १२ ॥ सोऽपिनारायणःश्रीमांश्चिंतयामासचेतसा ॥ किंकार्यंदेवकार्येषुभगवानितिसुव्रतः ॥ १३ ॥ ततोयज्ञाःस्मृतास्तेन देवकार्यार्थमक्षयाः ॥१४॥ यज्ञास्तंपुरुषंदिव्यंप्रणम्यतुष्टुवुस्तदा ॥ भगवानपितान्दृष्ट्वायज्ञान्प्राहसनातनान् ॥ १५ ॥ सनातनस्तदासेंद्रान्देवानालोक्यचाच्युतः ॥ अनेनोपसदादेवंयजध्वंपरमेश्वरम् ॥ १६ ॥ पुरत्रयविनाशायजगत्त्रयविभूतये ॥ अच्युतस्यवचःश्रुत्वादेवदेवस्यधीमतः ॥ १७ ॥ सिंहनादंमहत्कृत्वायज्ञेशंसंस्तुवन्सुराः ॥ ततःसंचिंत्यभगवान्स्वयमेवजनार्दनः ॥ १८ ॥ पुनःप्राहेतिसर्वांस्तांस्त्रिदशांस्त्रिदशेश्वरः ॥ अपापानैवहंतव्याःपापायेचनसंशयः ॥ १९ ॥ हंतव्याःसर्वयत्नेनकथंवध्याःसुरोत्तमाः ॥ असुरादुर्मदाःपापाअपिदेवैर्महाबलैः ॥ २० ॥ तस्माच्चवध्यारुद्रस्यप्रभावात्परमेष्ठिनः ॥ कोवाब्रह्माथवादैत्यादेवावारिपुसूदनाः ॥ २१ ॥ मुनयश्चमहात्मानःप्रसादेनविनाप्रभोः ॥ सएवसर्वदःशर्वःसर्वेषामपिशंकरः ॥ २२ ॥ लीलयादेवदेवश्चसर्वंकार्यंकरिष्यति ॥ तस्यांशमेकंसंपूज्यदेवादेवत्वमागताः ॥ २३ ॥ ब्रह्माब्रह्मत्वमापन्नोह्यहंविष्णुत्वमेवच ॥ तमपूज्यजगत्यस्मिन्कःपुमान्सिद्धिमागतः ॥ २४ ॥ तस्मात्तेनैवहंतव्यालिंगार्चनविधेर्बलात् ॥ रुद्रमिष्ट्वायथान्यायंजेष्यामोदैत्यसत्तमान् ॥ ॥ २५ ॥ एवमुक्त्वाहरंचेष्ट्वायज्ञेनोपसदाप्रभुम् ॥ मृन्मयंपार्थिवंकृत्वालक्षसंख्याविधायकम् ॥ २६ ॥ गंधपुष्पाक्षतैश्चैवविष्णुर्देवास्तथाऽयजन् ॥ उपातिष्ठन्ददर्शाऽथभूतसंघान्सहस्रशः ॥ २७ ॥ शूलशक्तिगदाहस्तान्दंष्ट्राचापशिलायुधान् ॥ नानाप्रहरणोपेतान्नानावेषधरांस्तथा ॥ २८ ॥

कालाग्निरुद्रसंकाशान्कालसूर्योपमांस्तदा ॥ प्राहदेवोहरिःसाक्षात्प्रणिपत्यस्थितान्पुरः ॥ २९ ॥ दग्ध्वाभित्त्वाचभङ्क्त्वाचगत्वादैत्यपुरत्रयम् ॥
पुनर्यथागतंभूतागंतुमर्हथभूतये ॥ ३० ॥ ततःप्रणम्यदेवेशंपरमात्मानमीश्वरम् ॥ तान्दृष्ट्वाचिंतयामासभगवान्पुरुषोत्तमः ॥ ३१ ॥ किंकृत्यमिति
संतप्तःसंतप्तान्सेंद्रकान्क्षणात् ॥ कथंचतेषांदैत्यानांबलंहत्वाप्रयत्नतः ॥ ३२ ॥ देवकार्यंकरिष्यामिप्रसादात्परमेष्ठिनः ॥ नाशोऽभिचारतोनास्ति
धर्मिष्ठानांनसंशयः ॥ ३३ ॥ दैत्याश्चतोहिधर्मिष्ठाःसर्वेत्रिपुरवासिनः ॥ तस्मादवध्यतांप्राप्तानाऽन्यथासुरपुंगवाः ॥ ३४ ॥ कृत्वापिसुमहत्पापंरुद्रम
भ्यर्चयंतिये ॥ मुच्यंतेपातकैःसर्वैःपद्मपत्रमिवांभसा ॥ ३५ ॥ पूजयाभोगसंपत्तिरवश्यंजायतेभुवि ॥ तस्मात्तेभोगिनोदैत्यालिंगार्चनपरायणाः ॥
॥ ३६ ॥ तत्रकृत्वाधर्मविघ्नंक्षणादेवात्ममायया ॥ दैत्यानांदेहनाशार्थंहनिष्येत्रिपुरंक्षणात् ॥ ३७ ॥ विचार्येत्थंततस्तेषांभगवान्पुरुषोत्तमः ॥ कर्त्तुं
व्यवसितःपश्चाद्धर्मविघ्नंसुरारिणाम् ॥ ३८ ॥ यावच्चवेदधर्मास्तुयावच्चशंकरार्चनम् ॥ यावच्चशुचिकृत्यादिस्तावन्नाशोभवेन्नहि ॥ ३९ ॥ तस्मादेवंप्रक
र्त्तव्यंवेदधर्मस्ततोव्रजेत् ॥ इतिनिश्चित्यतेविष्णुर्विघ्नार्थमकरोत्तदा ॥ ४० ॥ दत्त्वादेवान्स्वयंतत्रआज्ञांमत्वागताहरेः ॥ ततश्चैवाऽकरोद्विष्णुर्देवा
र्थेविधिमुत्तमम् ॥ तदेवश्रूयतांसम्यक्सर्वपापप्रणाशनम् ॥ ४१ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांत्रिपुरवर्णनंनामविंशोऽध्यायः ॥ २० ॥ छ ॥
॥ सूतउवाच ॥ असृजच्चमहातेजाःपुरुषंस्वात्मसंभवम् ॥ मायीमायामयंतेषांधर्मविघ्नार्थमच्युतः ॥ १ ॥ मुंडंमलिनवस्त्रंचकुंडिपात्रसमन्वितम् ॥
दधानंपुंजिकांहस्तेचालयंतंपदेपदे ॥ २ ॥ वस्त्रयुक्तंतथाहस्तंक्षिप्यमाणंमुखेसदा ॥ धर्मेतिव्याहरंतंतंनमस्कृत्यस्थितंहरेः ॥ ३ ॥ उवाचवचनंतत्र
हरयेप्रांजलिस्तदा ॥ अरिहन्नुच्यतांपूज्यकिंकरोमितदादिश ॥ ४ ॥ इत्येवंभगवान्श्रुत्वावचनंचेदमब्रवीत् ॥ यदर्थंनिर्मितोऽसित्वंनिबोधकथयामि
ते ॥ ५ ॥ ममांगात्त्वंसमुत्पन्नोमत्कार्यंकर्तुमर्हसि ॥ मदीयस्त्वंसदापूज्योभविष्यसिनसंशयः ॥ ६ ॥ मायिन्मायामयंशास्त्रंग्रंथंषोडशसहस्त्रकम् ॥
श्रौतस्मार्तविरुद्धंचवर्णाश्रमविवर्जितम् ॥ ७ ॥ इहैवस्वर्गनरकप्रत्ययान्नान्यथापुनः ॥ वेदभ्रंशमयंशास्त्रंकर्मवादपरंशुभम् ॥ ८ ॥ एतच्छास्त्रंत्वयाग्राह्यं
विस्तारंतद्गमिष्यति॥ददामितवसामर्थ्यंनिर्माणेचभविष्यति॥९॥मायाचविविधात्वत्तोवश्यावश्यकरीशुभा॥रोधनारोधनंचैवभवतःसंभविष्यति ॥१०॥
इष्टानिष्टप्रदृश्यंचनानापिशुनकल्पनाः ॥ विचित्रंचैवयत्कृत्यंतत्तेसर्वंभविष्यति ॥ ११ ॥ तच्छ्रुत्वावचनंतस्यहरेश्चपरमात्मनः ॥ नमस्कृत्यस्थितंतत्र
कर्तव्यमादिशाऽधुना ॥ १२ ॥ इत्युक्तेपाठयामासशास्त्रंमायामयंतदा ॥ तच्छास्त्रमुपदिश्यैवपुरुषायाच्युतःस्वयम् ॥ १३ ॥ तमुवाचपुनस्तत्रमोहनी
याइमेत्वया ॥ एतेदैत्यास्त्वयासर्वेपाठनीयामदाज्ञया ॥ १४ ॥ धर्मास्तत्रप्रकाशंतेश्रौतस्मार्तानसंशयः ॥ अनयाविद्ययासर्वेस्फोटनीयंनसंशयः॥१५॥

पुरत्रयविनाशार्थंप्राहतंपुरुषंहरिः ॥ गंतुमर्हसिनाशार्थंभोतूर्णंपुरवासिनाम् ॥ १६ ॥ ततोधर्मंप्रकाश्यैवनाशयित्वापुरत्रयम् ॥ ततश्चैवपुनर्गत्वामरुस्थ
ल्यांत्वयापुनः ॥ १७ ॥ स्थातव्यंचस्वधर्मेणकलिर्यावत्समाव्रजेत् ॥ प्रवृत्तेचयुगेतस्मिन्स्वीयोधर्मःप्रकाश्यताम् ॥ १८ ॥ शिष्यैःप्रशिष्यैस्तच्छिष्यै
र्वर्धनीयस्त्वयापुनः ॥ मदाज्ञयाभवद्धर्मोविस्तारंयास्यतिध्रुवम् ॥ १९ ॥ मदनुज्ञापरानित्यंगतिंप्राप्स्यथमामकीम् ॥ एवमाज्ञातदादत्ताविष्णुनाप्रभ
विष्णुना ॥ २० ॥ ततःसमुंडीपरिपालयन्हरेराज्ञांतदानिर्मितवांश्चशिष्यान् ॥ यथास्वरूपंचतुरश्चतांस्तदामायामयंशास्त्रमपाठयत्स्वयम् ॥ २१ ॥
यथास्वयंतथातेचचत्वारोमुंडिनःशुभाः ॥ नमस्कृत्यस्थितास्तत्रहरयेपरमात्मने ॥ २२ ॥ हरिश्चापिपुनस्तत्रचतुरस्तांस्तदास्वयम् ॥ उवाचपरम
प्रीतोधन्याःस्थइतिसंस्तुवन् ॥ २३ ॥ यथागुरुस्तथायूयंभविष्यथमदाज्ञया ॥ चत्वारोमुंडिनस्तेचधर्मंपाखंडमाश्रिताः ॥ २४ ॥ हस्तेपात्रंदधानाश्च
तुंडेवस्त्रस्यधारकाः ॥ मलिनान्येववासांसिधारयंतोऽल्पभाषिणः ॥ २५ ॥ धर्मोलाभःपरंतत्त्वंवदंतस्तेतथास्वयम् ॥ मार्जनींधार्यमाणास्तेवस्त्रखंडवि
निर्मिताम् ॥ २६ ॥ तेसर्वेचतदादेवंभगवंतंमुदान्विताः ॥ नमस्कृत्यपुनस्तत्रहर्षनिर्भरमानसाः ॥ २७ ॥ हरिणाचतदाहस्तेधृत्वाचगुरवेऽर्पिताः ॥
यथात्वंचतथैतेवैमदीयानैवसंशयः ॥ २८ ॥ आदिरूपंचतन्नामपूज्यत्वात्पूज्यउच्यते ॥ ऋषिर्यतिस्तथाचार्यउपाध्यायइतिस्वयम् ॥ २९ ॥ इमान्यपि
तुनामानिप्रसिद्धानिभवंत्विति ॥ ममापिचभवद्भिश्चनामग्राह्यंशुभंपुनः ॥ ३० ॥ अरिहन्नितितन्नामध्येयंपापप्रणाशनम् ॥ भवद्भिश्चैवकर्तव्यंकार्यंलोक
सुखावहम् ॥ ३१ ॥ ततःप्रणम्यतंमायीशिष्ययुक्तःस्वयंतदा ॥ प्रविश्यतत्पुरंतूर्णंमृषिर्मायांतदाकरोत् ॥ ३२ ॥ निकटस्थेवनेगत्वाशिष्यैर्युक्तःस्थित
स्तदा ॥ मायांप्रवर्तयामासमायिनामपिमोहिनीम् ॥ ३३ ॥ येयेगतास्तदातत्रतेतेदीक्षामुपागताः ॥ येयेपश्यंतितांस्तत्रमोहमायापरायणाः ॥ ३४ ॥
अभूवंस्तत्क्षणादेवदर्शनान्मायिनामपि ॥ नारदोऽपितदामायानियोगान्मायिनःप्रभोः ॥ ३५ ॥ प्रविश्यतत्पुरंतेनमायिनासहदीक्षितः ॥ ततश्चनारदोग
त्वाराज्ञेसर्वंन्यवेदयत् ॥ ३६ ॥ कश्चित्समागतश्चाऽत्रयतिर्धर्मपरायणः ॥ दृष्टाश्चबहवोधर्मानैतेनसदृशाःपुनः ॥ ३७ ॥ वयंचदीक्षितास्तत्रदृष्ट्वाधर्मंसनातनम् ॥
तवेच्छायदिवर्तेतग्राह्यादीक्षात्वयाऽधुना ॥ ३८ ॥ तदीयंतद्वचःश्रुत्वाराजातत्रजगामह ॥ नारदोदीक्षितोयस्माद्वयंदीक्षामवाप्नुमः ॥ ३९ ॥ इत्येवंचविदित्वा
वैजगामस्वयमेवह ॥ तदाटोपंतदादृष्ट्वामोहितोमाययातया ॥ ४० ॥ उवाचवचनंतस्मैनमस्कृत्यमहात्मने ॥ दीक्षादेयात्वयामह्यमृषयोनिर्मलाशयाः ॥ ४१ ॥
इत्येवंवचनंश्रुत्वाराज्ञोक्तंपरमंवचः ॥ उवाचमुंडिराजस्त्वंश्रूयतांपरमंवचः ॥ ४२ ॥ वरत्वंवचनंदेहिनलोप्यंवचनंमम ॥ इतिश्रुत्वावचस्तस्यराजा
मायामयोभवत् ॥ ४३ ॥ यथाचदास्यासित्वंचतत्तथैवनचाऽन्यथा ॥ दूरीकृत्यमुखाद्वस्त्रमुवाचऋषिसत्तमः ॥ ४४ ॥ आगच्छराजशार्दूलमंत्रमेनं

गृहाणच ॥ इत्युक्त्वातंमहाराजंविद्युन्मालिनमंततः ॥ ४५ ॥ कथयामासस्वंतत्त्वंयेनधर्मोविनश्यति ॥ दीक्षतांवचनंश्रुत्वादीक्षितस्तत्क्षणादपि ॥
॥ ४६ ॥ सर्वेचदीक्षितास्तत्रयेवैत्रिपुरवासिनः ॥ मुनेःशिष्यैःप्रशिष्यैश्चव्यापितंत्रिपुरंमहत् ॥ ४७ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांत्रिपुर
दीक्षाविधानंनामैकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ सूतउवाच ॥ ॥ स्त्रीधर्मंखंडयामासश्राद्धधर्मास्तथैवच ॥ शिवपूजांतथाविष्णोर्यज्ञभागानने
कशः ॥ १ ॥ स्नानदानादिकंतीर्थंसर्वकालेसुशोभनम् ॥ वेदधर्माश्चयेकेचित्तेसर्वेदूरतःकृताः ॥ २ ॥ मायाचदेवदेवस्यविष्णोस्तस्याज्ञयाप्रभोः ॥
अलक्ष्मीश्चस्वयंतस्यनियोगात्त्रिपुरंगता ॥ ३ ॥ यालक्ष्मीस्तपसातेषांलब्धादेवेश्वराज्ञया ॥ बहिर्गतापरित्यज्यनियोगाद्ब्रह्मणःप्रभोः ॥ ४ ॥ बुद्धिमो
हंतथाभूतंविष्णोर्मायाविनिर्मितम् ॥ तेषांदत्त्वाक्षणादेवतेषांमायीचनारदः ॥ ५ ॥ नारदोऽपितथारूपोयथामायीतथैवसः ॥ एवंनष्टेतदाधर्मेश्रौतस्मार्ते
सुशोभने ॥ ६ ॥ पाखंडःस्थापितस्तेनविष्णुनाविश्वयोनिना ॥ त्यक्तेमहेश्वरेदैत्यैस्त्यक्तेलिंगार्चनेतथा ॥ ७ ॥ स्त्रीधर्मेनिखिलेनष्टेदुराचारेव्यवस्थि
ते ॥ कृतार्थइवदेवेशोदेवैःसार्थमुमापतिम् ॥ ८ ॥ तरसाप्राप्यसर्वज्ञंतुष्टावपुरुषोत्तमः ॥ महेश्वरायदेवायनमस्तेपरमात्मने ॥ ९ ॥ नारायणायरुद्रा
यब्रह्मणेब्रह्मरूपिणे ॥ एवंस्तुत्वामहादेवंदंडवत्प्रणिपत्यह ॥ १० ॥ जजापरुद्रमंत्रंचदक्षिणामूर्तिसंभवम् ॥ जलेस्थित्वातदाकोटित्रयंचाऽर्धंतथैव
च ॥ ११ ॥ तावद्देवास्तदासर्वेतुष्टुवुःपरमेश्वरम् ॥ नमःसर्वात्मनेतुभ्यंशंकरायार्तिहारिणे ॥ १२ ॥ रुद्रायनीलरुद्रायविरूपायप्रचेतसे ॥ गतिर्नः
सर्वदाऽस्माभिर्वंद्योदेवारिसूदनः ॥ १३ ॥ त्वमादिस्त्वमनादिश्चआनंदश्चाऽक्षयःप्रभुः ॥ प्रकृतेःपुरुषस्यापिसाक्षात्स्रष्टाजगद्गुरुः ॥ १४ ॥
कर्ताहर्ताजगत्यस्मिन्सर्वेषांपरिपालकः ॥ वरदोवाङ्मयोवाच्योवाच्यवाचकवर्जितः ॥ १५ ॥ याच्योमुक्त्यर्थमीशानोयोगिभिर्योगवित्तमः ॥
हृत्पुंडरीकशिखरेयोगिनांसंस्थितःसदा ॥ १६ ॥ वदंतिवेदास्त्वांसंतंपरंब्रह्मस्वरूपिणम् ॥ भवंतंतत्त्वमित्याहुस्तेजोराशिंपरात्परम् ॥ १७ ॥
परमात्मात्वमित्याहुरस्मिन्जगतियत्प्रभो ॥ दृष्टंश्रुतंस्तुतंसर्वंजायमानंजगद्गुरो ॥ १८ ॥ अणोरल्पतरंप्राहुर्महतोपिमहत्तरम् ॥ सर्वतः
पाणिपादांतंसर्वतोऽक्षिशिरोमुखम् ॥ १९ ॥ महादेवमनिर्देश्यंसर्वज्ञंत्वामनावृतम् ॥ विश्वरूपंविरूपाक्षंसदाशिवमनुत्तमम् ॥ २० ॥ कोटि
भास्करसंकाशंषड्विंशकमनीश्वरम् ॥ प्रवर्तकंजगत्यस्मिन्प्रकृतेश्चपितामहम् ॥ २१ ॥ वदंतिवरदंदेवंसर्ववासंस्वयंप्रभुम् ॥ श्रुतयःश्रुतसारं
त्वांश्रुतिसारज्ञमेवच ॥ २२ ॥ अदृष्टमस्माभिरनेकमूर्तेत्वयाकृतंयद्भवनाथलोके ॥ त्वामेवदेवासुरभूसुराश्चदैत्याःसुराःस्थावरजंगमाश्च ॥ २३ ॥
पाहिनान्यागतिःशंभोविनिहत्यासुरान्क्षणात् ॥ माययामोहिताःसर्वेभवतःपरमात्मनः ॥ २४ ॥ स्तुतश्चैवंसुरेंद्राद्यैर्विष्णोर्जाप्येनचेश्वरः ॥

विष्णुमालिंग्यतत्रैवप्रगृहीतकरःस्वयम् ॥२५॥ प्राहगंभीरयावाचादेवानालोक्यशंकरः ॥ ज्ञातंमयेदमधुनादेवकार्यंसुरेश्वर ॥ २६ ॥ विष्णोमायाबलंचै
वनारदस्यचधीमतः ॥ तेषामधर्मनिष्ठानांदैत्यानांदेवसत्तम ॥ २७ ॥ पुरत्रयविनाशंचकरिष्येऽहंसुरोत्तम ॥ अथसब्रह्मकादेवाःसेंद्रोपेंद्राःसमागताः ॥
॥ २८ ॥ श्रुत्वाप्रभोस्तदावाक्यंप्रणेमुस्तुष्टुवुश्चते ॥ यइदंकीर्तयेत्स्तोत्रंशुचिर्भूत्वासदानरः ॥ २९ ॥ शृणुयाद्वामहापुण्यंसर्वान्कामानवाप्नुयात्॥३०॥
इति श्रीशिवमहापुराणेज्ञानसंहितायांत्रिपुरविजयोनामद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ अथैतदंतरेदेवाःपुत्रैःसहसमन्विताः ॥
व्याजहाराप्रियंवाक्यंजयेतिशुभलक्षणम् ॥ १ ॥ ततःसनंदीसहषण्मुखेनतयाचसार्द्धंगिरिराजपुत्र्या ॥ विवेशभव्यंभवनंनतोपिसुरैःसमस्तैरभिवंद्यमानः॥
॥ २ ॥ द्वारस्यपार्श्वतस्तस्थुर्देवदेवस्यधीमतः ॥ किंकर्तव्यंक्वगंतव्यंहाहताःस्मेतिवादिनः ॥ ३ ॥ किंतुकिंत्विातिचाऽन्योन्यंप्रेक्ष्यचात्यंतमाकुलाः ॥
पापावयमितीहान्येअभाग्याश्चेतिचाऽपरे ॥ ४ ॥ तेभाग्यवंतोदैत्येंद्राइतिचाऽन्येसुरेश्वराः ॥ इत्युक्वातुपुनर्यावद्द्रष्टुमीषुःशिवालयम् ॥५॥ एतस्मिन्नंतरेते
षांश्रुत्वाशब्दाननेकशः ॥ कुंभोदरोमहातेजादंडेनाऽताडयत्सुरान् ॥ ६ ॥ दुद्रुवुस्तेभयाविष्टादेवाहाहेतिवादिनः ॥ अपतन्मुनयश्चाऽन्येइंद्रश्च
धरणीतले ॥ ७ ॥ अहोविधिबलंचैतन्मुनयःकश्यपादयः ॥ वदंतिस्मतदासर्वेहरिंलोकसुखावहम् ॥ ८ ॥ अभाग्यान्नसमाप्तंतुकार्यमित्यपरेद्विजाः ॥
इत्येवंवचनंश्रुत्वाहरिर्वाक्यमुपाददे ॥ ९ ॥ किमर्थंदुःखमापन्नादुःखंतुत्यज्यतांपुनः ॥ महदाराधनंदेवाह्यसाध्यंभवतिनृणाम् ॥ १० ॥ शिवःसर्वग
णाध्यक्षःकथंवश्योभवेदिति ॥ प्रणवंपूर्वमुच्चार्यनमःपश्चादुदाहरेत् ॥ ११ ॥ शिवायेतिततश्चैवशुभद्वयमतःपरम् ॥ कुरुद्वयंपुनःप्रोक्तंशिवायचततः
पुनः ॥ १२ ॥ नमश्चप्रणवश्चैवमंत्रमेतंसदाबुधाः ॥ आवर्तध्वंपुनर्यूयंयदाशिवकृपातदा ॥ १३ ॥ कोटिमेकांतथाजप्त्वाशिवःकार्यंकरिष्यति ॥ इत्यु
क्तेचतदातेनहरिणाप्रभविष्णुना ॥ १४ ॥ तथादेवाःपुनश्चक्रुर्हरस्याराधनंरहः ॥ शिवशिवेतिभाषंतोदेवाधैर्यसमन्विताः ॥ १५ ॥ कोटिसंख्याजपंकृ
त्वासर्वेतेदेवसत्तमाः ॥ एतस्मिन्नंतरेसाक्षाच्छिवःप्रादुरभूत्स्वयम् ॥ १६ ॥ यथोक्तेनस्वरूपेणवचनंचेदमब्रवीत् ॥ प्रसन्नोऽस्मिवरंब्रूतमनसोभीप्सितं
परम् ॥ १७ ॥ प्रसन्नेवरदेदेवेशिवेमाहेश्वरेहरे ॥ सर्वेदेवास्तदासर्वेस्तुतिंचक्रुःशुभावहाम् ॥ १८ ॥ देवाऊचुः ॥ शंकरायनमस्तेऽस्तुनमस्तेप
रमात्मने ॥ परावरस्वरूपायनमस्तेशूलपाणये ॥ १९ ॥ नमोगणाधिदक्षायकपर्दिनेनमोस्तुते ॥ नमोस्तुतेत्रिनेत्रायवेदानांपतयेनमः ॥ २० ॥
कार्यकारणरूपायमूलप्रकृतिहेतवे ॥ व्याप्यायचनमस्तुभ्यंव्यापकायनमोनमः ॥ २१ ॥ एवंस्तुतस्तदादेवैःप्रसन्नोजगदीश्वरः ॥ यदिप्रसन्नोदेवेशहन्य
तांत्रिपुराणिच ॥ २२ ॥ इत्युक्तंवचनंतेषांश्रुत्वाचपुनरब्रवीत् ॥ रथंचसारथिंशंभोःकार्मुकंशरमुत्तमम् ॥ २३ ॥ कर्त्तुमर्हसियत्नेननष्टंमत्वापुरत्रयम् ॥

इतिश्रुत्वावचस्तस्यकल्पनंतुरथस्यच ॥ २४ ॥ सर्वदेवमयंदिव्यंरथंपरमशोभनम् ॥ रचयामासविश्वार्थेविश्वकर्मास्वयंतथा ॥ २५ ॥ इतिश्रीशिवमहापु
राणेज्ञानसंहितायांत्रिपुरोपाख्यानेत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ छ ॥ सूतउवाच ॥ अथरुद्रस्यदेवस्यनिर्मितोविश्वकर्मणा ॥ सर्वलोकमयोदि
व्योरथोयत्नेनसादरम् ॥ १ ॥ सर्वभूतमयश्चैवसौवर्णःसर्वतःस्मृतः ॥ रथांगंदक्षिणंसूर्योवामांगंसोमउच्यते ॥ २ ॥ दक्षिणंद्वादशारंहिषोडशारंत
थोत्तरम् ॥ अरेषुतेषुविप्रेंद्राआदित्याद्वादशैवतु ॥ ३ ॥ शशिनःषोडशारास्तुकलावामस्यसुव्रताः ॥ ऋक्षाणिचतथातस्यवामस्यैवविभूषणम् ॥ ४ ॥
तेभ्यःषट्टतवश्चैवतयोर्वैविप्रपुंगवाः ॥ पुष्करंचांतरिक्षंचरथनीडंचमंथरः ॥ ५ ॥ अस्ताद्रिरुदयाद्रिस्तुउभौतौकूबरौस्मृतौ ॥ वेगःसंवत्सरस्तस्यअ
यनेलोहधारके ॥ ६ ॥ समुद्रास्तस्यचत्वारोरथकुंडलिकाःस्मृताः ॥ गंगाद्याःसरितःश्रेष्ठाःसर्वाभरणभूषिताः ॥ ७ ॥ चामरासक्तहस्ताश्चदिव्यस्त्रीरूप
धारिकाः ॥ सारथिर्भगवान्ब्रह्मादेवोरश्मिधरःस्मृतः ॥ ८ ॥ प्रतोदोब्रह्मणस्तस्यप्रणवोब्रह्मदैवतम् ॥ मेकरश्चमहच्छत्रंमंदरःपार्श्वदंडकः ॥ ९ ॥ शैलें
द्रःकार्मुकंतस्यज्याभुजंगाधिपःस्वयम् ॥ घंटासरस्वतीदेवीधनुषःश्रुतिरूपिणी॥ १०॥इषुर्विष्णुर्महातेजाअग्निःशल्यंप्रकीर्तितम्॥हयास्तस्यतथाप्रोक्ताश्च
त्वारोनिगमास्तथा ॥ ११ ॥ ज्योतींषिभूषणंतेषामवशिष्टान्यतःपरम् ॥ ब्रह्मांडेचैवयत्किंचिद्वस्तुसर्वंरथंस्मृतम् ॥ १२ ॥ एवंकृतंरथंदिव्यंकार्मुकंच
शरास्तथा ॥ सारथिर्जगतांचैवब्रह्मातुप्रभुरीश्वरः ॥ १३ ॥ आरुरोहरथंयुक्तंरणमंडनमद्भुतम् ॥ सर्वदेवमयोभूत्वाकंपयन्निवरोदसी ॥ १४ ॥ ऋषि
भिःस्तूयमानस्तुवृतश्चाऽप्सरसांगणैः ॥ अथाऽधःसरथस्यास्यभगवान्धरणीधरः ॥ १५ ॥ वृषेंद्ररूपीचोत्थायस्थापयामासवैरथम् ॥ ततश्चचोदयामा
समनोमारुतरंहसम् ॥ १६ ॥ पुराण्युद्दिश्यस्वस्थानिदानवानांतरस्विनाम् ॥ अथालोक्यतथारुद्रंदेवालोकस्यशंकरम् ॥ १७ ॥ तथाचऋषयःसर्वेतु
ष्टुवुश्चसदाशिवम् ॥ जयजयपशुपतेप्रसिद्धमभवत्तदा ॥ १८ ॥ जयजयेतिभाषंतःसर्वेऋषिगणास्तथा ॥ तस्मिंश्चसमयेयच्चरूपंतस्यमहात्मनः॥ १९॥
जातंतद्वर्ण्यतेकिंचिदपिवर्षशतैरपि ॥ शिवापिचतदातत्रशिवेनसहसंगता ॥ २० ॥ जगामत्रिपुरंहंतुंसर्वेषांसुखदायिनी ॥ २१ ॥ तंदेवदेवंत्रिपुरंनि
हंतुंतदातुदेवेंद्ररविप्रकाशाः ॥ गजैर्हयैःसिंहवरैरथैश्चवृषैर्ययुस्तेऽमरराजमुख्याः ॥२२॥हलैश्चशालैर्मुसलैर्भृशुंडैर्गिरींद्रकूटैर्गिरिसंनिभैश्च ॥ ययुःपुरस्ता
द्धिमहेश्वरस्यतदेंद्रपद्मोद्भवविष्णुमुख्याः॥२३॥ननृतुर्मुनयःसर्वेदंडहस्ताजटाधराः॥ववृषुःपुष्पवर्षाणिखेचराःसिद्धचारणाः ॥२४॥ पुरत्रयेचविप्रेंद्राव्रजन्
सर्वेगणेश्वराः ॥ प्रकंदुःकुंददंतश्चकंपनश्चप्रकंपनः ॥ २५ ॥ इंद्रश्चेंद्रयवश्चैवयंताहिमकरस्तथा ॥ शताक्षश्चैवपंचाक्षःसहस्राक्षोमहोदरः ॥ २६ ॥
शतजिह्वःशतास्यश्चकंकटःकटपूतनः ॥ द्विशिरास्त्रिशिराश्चैवतथाह्येकाननस्तथा ॥ २७ ॥ अजवक्रोहयवक्रोगजवक्रोऽर्द्धवक्रकः ॥ इत्याद्याःपरिवार्ये

शंलक्षालक्षणवर्जिताः ॥ २८ ॥ समावृत्यमहादेवंतदोचुस्तेमहेश्वराः ॥ दग्धुंसमर्थोमनसाक्षणेनसचराचरम् ॥ २९ ॥ सर्वंकिमर्थंत्रिपुरंपिनाकीस्वयंगत
श्चात्रगणैश्चसार्धम् ॥ रथेनकिंचात्रशरेणतस्यगणैश्चकिंदेवगणैश्चशंभोः ॥ ३० ॥ किंत्वत्रकारणंह्येतद्दुष्टानांप्रत्ययायवै ॥ लोकेषुख्यापनार्थंवैयशःपरम
लापहम् ॥ ३१ ॥ अन्यच्चकारणंतुभ्यंवदामिऋषिसत्तम ॥ सर्वेष्वपिचदेवेषुमंतानान्योविशिष्यते ॥ ३२ ॥ तस्मिन्स्थितेमहादेवेरुद्रेविततकार्मुके ॥
पुराणितेनकालेनजग्मुरेकत्वमाशुवै ॥ ३३ ॥ एकीभावंगतेऽत्रैवत्रिपुरत्वमुपागते ॥ बभूवतुमुलोहर्षोदेवानांसुमहात्मनाम् ॥ ३४ ॥ ततोदेवगणाःसर्वे
सिद्धाश्चपरमर्षयः ॥ जयेतिवाचोमुमुचुःस्तुवंतश्चाऽष्टमूर्तिनम् ॥ ३५ ॥ अथाहभगवान्ब्रह्माविष्णुश्चजगतांपतिः ॥ समयोऽपितदाजातएकत्वमपिचाग
तम् ॥ ३६ ॥ अथाऽधिज्यंधनुःकृत्वाशर्वःसंधायतंशरम् ॥ युज्यपाशुपतास्त्रेणत्रिपुरंतमचिंतयत् ॥ ३७ ॥ यावन्नायांतिदेवेशविप्रयोगंपुराणिवै ॥ अ
थदेवोमहादेवःसावज्ञंतदवैक्षत ॥ ३८ ॥ पुरत्रयंविरूपाक्षस्तत्क्षणाद्भस्मसात्कृतम् ॥ दग्धुमप्यथदेवेशवीक्षणेनजगत्त्रयम् ॥ ३९ ॥ अस्मद्यशोविवृद्ध्य
र्थंशरंमोक्तुमिहार्हसि ॥ तत्क्षणात्त्रिपुरंदग्ध्वात्रिपुरंतच्छरःक्षणात् ॥ ४० ॥ देवदेवंनमस्कृत्यसमासाद्यव्यवस्थितः ॥ रेजेपुरत्रयंदग्धंदैत्यकोटिशतैर्वृ
तम् ॥ ४१ ॥ इषुणातेनकल्पांतेरुद्रेणेवजगत्त्रयम् ॥ येपूजयंतितत्रापिदैत्यारुद्रंसबांधवाः ॥ ४२ ॥ गाणपत्यंययुःसर्वेभवपूजाविधेर्बलात् ॥ नकिंचिद
ब्रुवन्देवाःसेंद्रोपेंद्रादयस्तदा ॥ ४३ ॥ भयाद्देवंनिरीक्ष्यैवदेवींचहिमवत्सुताम् ॥ दृष्ट्वाभीतंतदानींकंदेवानामृषिपुंगवाः ॥ ४४ ॥ किंचेत्याहुस्तदादेवाः
प्रणेमुस्तेसमंततः ॥ तुष्टावतुष्टहृदयोब्रह्मादेवैःसमाहितः ॥ ४५ ॥ विष्णुनाचभवंदेवंत्रिपुरारिंमहेश्वरम् ॥ पितामहउवाच ॥ प्रसीददेवदेवेशप्रसीदपरमे
श्वर ॥ ४६ ॥ प्रसीदजगतांनाथप्रसीदानंददायक ॥ ओंकारायनमस्तुभ्यमगुणायनमोऽस्तुते ॥ ४७ ॥ सगुणायनमस्तुभ्यंस्वर्गेशायनमोऽस्तुते ॥सदा
शिवायशांतायमहेशायपिनाकिने ॥ ४८ ॥ सर्वज्ञायशरण्यायसद्योजातायतेनमः॥स्तुत्वैवंदेवताःसर्वानमस्कारंपृथक्कदा ॥४९॥ चक्रुस्तेपरमप्रीताःप्रार्थ
यंतःसदाशिवम्॥ब्रह्मोवाच॥भगवन्देवदेवेशत्रिपुरांतकशंकर ॥५०॥ त्वयिभक्तिःपरामेऽद्यप्रसीदपरमेश्वर॥प्रसीदभक्तिंदेवेशसारथ्यंचास्तुसर्वदा ॥५१॥
जनार्दनोऽपिभगवान्नमस्कृत्यमहेश्वरम् ॥ कृतांजलिपुटोभूत्वाप्राहदेवंचशंकरम् ॥ ५२ ॥ निर्गुणायनमस्तुभ्यंपुनश्चसगुणायच ॥ पुनःप्रकृतिरूपाय
पुनश्चपुरुषायच ॥ ५३ ॥ पश्चाद्गुणस्वरूपायततोविश्वात्मनेनमः ॥ भक्तिप्रियायशांतायशिवायपरमात्मने ॥ ५४ ॥ सदाशिवायरुद्रायजगतांपत
येनमः ॥ त्वयिभक्तिर्दृढामेऽद्यवर्धमानाभवत्विति ॥ ५५ ॥ सर्वेदेवाःप्रणम्योचुस्ततश्चपरमेश्वरम् ॥ प्रसीदजगतांनाथप्रसीदपरमेश्वर ॥५६॥ प्रसीदसर्व
कर्त्तात्वंनमामःशंकरंमुदा ॥ त्वयिभक्तिर्दृढाऽस्माकंनित्यंस्यादनपायिनी ॥ ५७ ॥ इतिस्तुतःसदेवेशःशंकरोलोकशंकरः ॥ प्रसन्नोऽस्मिवरंब्रूतवचनं

ह्युक्तवांस्तदा ॥ ५८ ॥ सर्वदेवाऊचुः ॥ यदिप्रसन्नोभगवान्यदिदेयोवरस्त्वया ॥ यदादुःखंतुदेवानांजायतेदेवसत्तम ॥ ५९ ॥ तदात्वंप्रकटीभूत्वादुःखं
नाशयसर्वदा ॥ इत्युक्तोभगवान्रुद्रस्तथाचाऽस्तुनिरंतरम् ॥ ६० ॥ स्तवेनाऽनेनतृष्टोऽस्मिदास्यामिसर्वदावध्रुम् ॥ यदभीष्टतमंलोकेतत्सर्वंचप्रदत्त
वान् ॥ ६१ ॥ एतस्मिन्नंतरेतेवैमुंडिनश्चसमागताः ॥ प्रणम्योचुश्चतान्सर्वान्वयंकिंकरवामहे ॥ ६२ ॥ तेषांतद्वचनंश्रुत्वाविष्णुब्रह्मादयोब्रुवन् ॥
तांवन्मरुस्थलीसेव्यायावत्कलिः समाव्रजेत् ॥ ६३ ॥ नसस्कृत्यगतास्तत्रयथोदिष्टंसमाश्रयम् ॥ तेसर्वेचतदाज्ञतादेवाधामस्वकंययुः ॥ ६४ ॥ शृ
णोतीहसदायोवैसर्वान्कामानवाप्नुयात् ॥ ६५ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांत्रिपुरवधोनामचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ सूतउवा
च ॥ गत्वाब्रह्मास्वकंधामऋषीनाहूयसर्वतः ॥ प्रहस्याहसुरेंद्राणांभगवान्पद्मसंभवः ॥ १ ॥ ब्रह्मोवाच ॥ यदिनित्यंशुभेच्छावैयदिसिद्धेश्चकामुकाः ॥
आगंतव्यंमयासार्धंतीरंक्षीरपयोनिधेः ॥ २ ॥ आगंतव्यमृषिश्रेष्ठामयासाधुविचारितम् ॥ इत्येतद्वचनंश्रुत्वागतास्तेब्रह्मणासह ॥ ३ ॥ यत्रास्तेभग
वान्विष्णुःसर्वेषांहितकारकः ॥ तत्रगत्वाजगन्नाथंदेवदेवंजनार्दनम् ॥ ४ ॥ उपतस्थुस्तदादेवाःस्तोत्रैर्नानाविधैरपि ॥ ब्रह्माद्याऊचुः ॥ देवदेवजगन्नाथभ
क्तानामभयप्रद ॥ ५ ॥लक्ष्मीकांतनमस्तुभ्यंसदाभयविधायक ॥ मेघश्यामचतुर्बाहोपीतांबरधराव्यय ॥ ६ ॥ शंखचक्रगदापद्मैर्युक्तस्त्वंपुरुषोत्तम ॥
मुकुटादिभूषणैर्युक्तपुंडरीकाक्षसत्तम ॥ ७ ॥ श्रीवत्सलक्षणश्रीमन्कंठेकौस्तुभभूषण ॥ कोटिकंदर्पलावण्यकोटिसूर्यसुशोभन ॥ ८ ॥ शरण्यसर्वजंतू
नांभुक्तिमुक्तिफलप्रद ॥ मायाचदूरतोयस्यनृत्यतेकिंकरीयथा ॥ ९ ॥ सिद्धयोऽष्टौचयस्यैवदासत्वंसमुपागताः ॥ निजभक्तैःसदासेव्योनानालंकारभू
षितः ॥ १० ॥ यस्यैवकृपयासर्वेमुक्तिंप्राप्ताःसुदुर्लभाम् ॥ यस्यदूःखस्यनाशोवैकुतोऽपिनप्रजायते ॥ ११ ॥ तस्यदुःखस्यहर्तात्वंकृपांकुरुसदाहरे ॥
इत्युक्त्वातेतदादेवाउच्चैर्जयजयेतिच ॥ १२ ॥ प्रसीददेवदेवेशप्रसीदपुरुषोत्तम ॥ प्रसीदजगतांनाथप्रसीदकरुणाकर ॥ १३ ॥ इतिस्तुतस्तदादेवैःप्रस
न्नोजगदीश्वरः ॥ दर्शयामासरूपंस्वंदर्शयन्भक्तवश्यताम् ॥१४॥ऊचुस्तेचतदादेवाजयेतिचशुभंवचः ॥ तान्दृष्ट्वाचतदाविष्णुरब्रवीत्परमंवचः ॥१५॥
कथंसमागतायूयंकिंकार्यंविद्यतेऽधुना ॥ इतिपृष्टास्तदातेनअब्रुवन्वचनंशुभम् ॥ १६ ॥ ब्रह्माद्याऊचुः ॥ कृपयातवदेवेशसर्वदुःखंव्यलीयत ॥ तथा
पिपृच्छचतेत्वांचसर्वदेवहितायवै ॥ १७ ॥ नित्यंसेवातुकस्यैवकार्यादुःखापहाध्रुवम् ॥ मयाचदेवतैःसर्वैर्यत्सेव्यंचोपदिश्यताम् ॥ १८ ॥ इत्येतद्वचनं
श्रुत्वाभगवान्वाक्यमब्रवीत् ॥ श्रीभगवानुवाच ॥ भोब्रह्मन्श्रूयतांसम्यक्श्रुतंचभवतापुरा ॥ १९ ॥ तथापिकथ्यतेतुभ्यंदेवेभ्यश्चतथापुनः ॥ दृश्यं
चदृश्यतेह्येवकिंपुनःपृच्छचतेऽधुना ॥ २० ॥ यदिसेव्यःसदादेवाःशंकरःसर्वदुःखहा ॥ ममापिकथितंतेनब्रह्मणोपिविशेषतः ॥ २१ ॥ प्रस्तुतंचैवदृष्टं

चसर्वंदृष्टांतमद्भुतम् ॥ संत्यज्यदेवदेवेशंलिंगमूर्तिंमहेश्वरम् ॥ २२ ॥ तारपुत्रास्तथैतेवैनष्टास्तेचैवबांधवाः ॥ मयाचमोहितास्तेवैमाययादूरतः
कृताः ॥ २३ ॥ सर्वेविनष्टाःप्रध्वस्ताःशिवेनरहितायदा ॥ तस्मात्सदापूजनीयोलिंगमूर्तिधरोहरः ॥ २४ ॥ यदिसुखंसुरेशाश्चनैरंतर्यंभवेदिह ॥
पूजनीयःशिवोनित्यंश्रद्धयादेवपुंगवैः ॥ २५ ॥ सर्वलिंगमयोदेवःसर्वलिंगेप्रतिष्ठितः ॥ तस्मात्संपूजयेन्नित्यंयदीच्छेत्सिद्धिमात्मनः ॥ २६ ॥
सर्वेलिंगार्चनादेवदेवादैत्याश्चदानवाः ॥ वयंचैवतथाब्रह्मन्किमर्थंविस्मृतंत्वया ॥ २७ ॥ अर्चयत्वंलिंगमूर्तिंसंसिद्धंचैनात्रसंशयः ॥ तस्मा
ल्लिंगेऽर्चयेन्नित्यंयेनकेनापिवैसुराः ॥ २८ ॥ साहानिस्तन्महच्छिद्रंसोऽधर्मःसाचमूढता ॥ यन्मुहूर्तंक्षणंवापिशिवंचैवनचिंतयेत् ॥ २९ ॥ भवभक्तिप
परायेचभवप्रणतचेतसः ॥ भवसंस्मरणायेचनतेदुःखस्यभाजनम् ॥ ३० ॥ भवनानिमनोज्ञानिविविधाभरणाःस्त्रियः ॥ धनंचतुष्टिपर्यंतंपुत्रपौत्रादिसं
ततिम् ॥ ३१ ॥ आरोग्यंचशरीरेचवस्त्राणिविविधानिच ॥ वाहनानिचदिव्यानिप्रतिष्ठांचाऽप्यलौकिकीम् ॥ ३२ ॥ येवांछंतिमहाभागावस्तुंचत्रिदिवा
लये ॥ आयुर्वांचयथामानंमित्राणिचशुभानिच ॥ ३३ ॥ अंतेमुक्तिफलंचैवतेऽर्चयंतिसदाशिवम् ॥ लिंगंपूजयतेनित्यंयोवैभक्तिपरायणः ॥ ३४ ॥
तस्यवैसकलासिद्धिर्नसपापैर्विलिप्यते ॥ इत्युक्ताश्चतदादेवाःप्रणिपत्यहरिंस्वयम् ॥ ३५ ॥ लिंगानिप्रार्थयामासुःसर्वकामातयेनृणाम् ॥ हरिरपितथा
ब्रह्माविश्वकर्माणमब्रवीत् ॥ ३६ ॥ लिंगानिचत्वयादेवकल्पयित्वाशुभानिच ॥ देयानिसर्वदेवेभ्योवचनान्ममसत्तम ॥ ३७ ॥ लिंगानिकल्पयित्वैवंचा
धिकारानुरूपतः ॥ विश्वकर्माददौतेभ्योनियोगाद्ब्रह्मणःप्रभोः ॥ ३८ ॥ तदेवकथयाम्यद्यश्रूयतामृषिसत्तमाः ॥ पद्मरागमयंशक्रोहैमंविश्रवसःसुतः ॥
॥ ३९ ॥ पीतंमणिमयंधर्मोवरुणःश्यामलंशिवम् ॥ इंद्रनीलमयंविष्णुर्ब्रह्माहेममयंतथा ॥ ४० ॥ विश्वेदेवास्तथारौप्यंवसवश्चतथैवच ॥
आरकूटमयंवायुरश्विनौपार्थिवंतदा ॥ ४१ ॥ लक्ष्मीश्चस्फाटिकंदेवीआदित्यास्ताम्रनिर्मितम् ॥ मौक्तिकंसोमराजोवैवज्रंलिंगंविभावसुः ॥ ४२ ॥
मृन्मयंचैवविप्रेंद्राविप्रपत्न्यस्तथैवच ॥ चंदनेनकृतंयद्वैमयःपूजयतेशिवम् ॥ ४३ ॥ अनंताद्यास्तथानागाःप्रवालकमयंशिवम् ॥ दैत्याश्चगोमयं
लिंगंराक्षसाश्चमहाबलाः ॥ ४४ ॥ लोहमयंतथालिंगंपिशाचाःपूजयंतिहि ॥ शिवादेवीसदापूज्यानवनीतविनिर्मितम् ॥ ४५ ॥ दारुजंनिर्ऋतिर्भ
त्त्यायोगीभस्ममयंतथा ॥ सूर्यपत्नीपिष्टमयंब्रह्माणीरत्नसंभवम् ॥ ४६ ॥ दधिमयंतथायक्षाःपूजयंतिनिरंतरम् ॥ एवंविधानिलिंगानिदत्तानि
विश्वकर्मणा ॥ ४७ ॥ तेपूजयंतिसर्वेवैदेवाऋषिगणास्तथा ॥ ब्रह्माचैवतथाविष्णुरन्येदेवाश्चयेपुनः ॥ ४८ ॥ पूजयंतितदादेवंनित्यंसिद्धिस
मीहया ॥ तथाकृत्वाचलिंगानिदेवानांहितकाम्यया ॥ ४९ ॥ पूजाविधिंसमाचख्यौब्रह्मणेऽनंतशक्तये ॥ तच्छ्रुत्वावचनंविष्णोर्ब्रह्मादेवगणैःसह ॥ ५० ॥

जगामचस्वकंधामहर्षनिर्भरमानसः ॥ विष्णुश्चांतर्हितस्तत्रह्युपदिश्यतथाविधिम् ॥ ५१ ॥ तत्रागत्यऋषीन्सर्वान्देवांश्चैवतथापुनः ॥ शिवपूजाविधिं
सम्यक्कथयामासनिश्चलः ॥ ५२ ॥ यंविधिंचतथाकृत्वालोकानांफलमुत्तमम् ॥ भवतीतिसुनिश्चित्यतस्मात्पूज्योहरःसदा ॥ ५३ ॥ इति श्रीशिवमहापु
राणेज्ञानसंहितायांपूजाविधाननामपंचविंशोऽध्यायः ॥ २५ ॥ ॥ छ ॥ ॥ ऋषयऊचुः ॥ ॥ सूतसूतमहाभागकिंजातंतदनंतरम् ॥ ब्रह्मणाचक
थंप्रोक्तःपूजाविधिःशिवस्यच ॥ १ ॥ यथाचकथितस्तेनतथात्वंकथयाऽधुना ॥ इत्येतद्वचनंश्रुत्वासूतोवाक्यमथाऽब्रवीत् ॥ २ ॥ सूतउवाच ॥ यथाच
पृच्छयतेमह्यंभवद्भिर्लोककाम्यया ॥ तथाव्यासेनसंपृष्टःकुमारःसनत्पूर्वकः ॥३॥ तेनैवकथितस्तस्मैतेनमह्यंतथापुनः ॥ तमहंकथयाम्यद्यभवद्भ्यश्चमुनी
श्वराः ॥४॥ ब्रह्मोवाच ॥ श्रूयतामृषयःसर्वेशिवपूजाविधिःक्रमात् ॥ मानुषंजन्मसंप्राप्यदुर्लभंसर्वजंतुषु ॥५॥ तत्राऽपिसत्कुलेदेवादुष्प्रापंचमुनीश्वराः॥
अव्यंगंचैवसंप्राप्यकर्मस्वोक्तंसमाचरेत् ॥ ६ ॥ यद्यज्जातिसमुद्दिष्टंतत्तत्कर्मनलंघयेत् ॥ ततश्चतत्समुत्पन्नंफलंभवतिनिश्चितम् ॥ ७ ॥ यावज्ज्ञानस्य
संपत्तिस्तावत्कर्मसमाचरेत् ॥ कर्मयज्ञसहस्रेभ्यस्तपोयज्ञोविशिष्यते ॥ ८ ॥ तपोयज्ञसहस्रेभ्योजपयज्ञोविशिष्यते ॥ जपयज्ञसहस्रेभ्योध्यानयज्ञोवि
शिष्यते ॥ ९ ॥ ध्यानयज्ञात्परंनास्तिध्यानंज्ञानस्यसाधनम् ॥ सदासन्नंपरंब्रह्मयोगीध्यानेनपश्यति ॥ १० ॥ यदासमरसोऽभीष्टंयोगीध्यानेनपश्यति ॥
ध्यानयज्ञरतस्यास्यसदासन्निहितःशिवः ॥ ११ ॥ नास्तिविज्ञानिनांचेतिप्रायश्चित्तादिशोभनम् ॥ विशुद्धाविद्ययासर्वेब्रह्मविद्याविदोजनाः ॥ १२ ॥
नास्तिक्रियाचलोकेचसुखंदुःखंविचारतः ॥ धर्माधर्मौजपोहोमोध्यानंज्ञाननिधिःस्मृतः ॥ १३ ॥ परानंदकरंलिंगंविशुद्धंशिवमक्षरम् ॥ निष्कलंसर्वगंज्ञे
यंयोगिनांहृदिसंस्थितम् ॥ १४ ॥ लिंगंतुद्विविधंप्रोक्तंबाह्यमभ्यंतरंद्विजाः ॥ बाह्यंस्थूलंमुनिश्रेष्ठाःसूक्ष्ममभ्यंतरंशुभम् ॥ १५ ॥ कर्मयज्ञरतायेचस्थू
ललिंगार्चनेरताः ॥ असतांभावनार्थायसूक्ष्मेतुस्थूलविग्रहम् ॥ १६ ॥ आध्यात्मिकंतुयल्लिंगंप्रत्यक्षंयस्यनोभवेत् ॥ तस्यलिंगेतथास्थूलेकल्पयेच्चन
चाऽन्यथा ॥ १७ ॥ ज्ञानिनांसूक्ष्ममलंभवेत्प्रत्यक्षमव्ययम् ॥ यस्मात्स्थूलमयुक्तानांमृत्काष्ठादौप्रकल्पितम् ॥ १८ ॥ अहोविचारतोनास्तीत्य
न्येतत्त्वार्थवादिनः ॥ निष्कलंसकलंचित्तेसर्वेशिवमयंजगत् ॥ १९ ॥ एवंज्ञानविमुक्तानांनास्तिदोषविकल्पना ॥ विधिधश्चैवतथानास्तिविहिताविहिते
तथा ॥ २० ॥ यथाजलेचकमलंजलेनचनलिप्यते ॥ तथाज्ञानीगृहेतिष्ठन्कर्मणानसबध्यते ॥ २१ ॥ इतिज्ञानंसमुत्पन्नंयावच्चैवनरस्यच ॥ तावच्चक
र्मणादेवंशिवमाराधयेन्नरः ॥ २२ ॥ प्रत्ययार्थंचजगतामेकस्थोऽपिदिवाकरः ॥ एकोऽपिबहुधादृष्टोजलाधारेषुसुव्रताः ॥ २३ ॥ दृश्यतेश्रूयतेयद्यत्तत्त
द्विद्धिशिवात्मकम् ॥ भेदोजनानांलोकेऽस्मिन्प्रतिभासोविचारतः ॥ २४ ॥ एवमाहुस्तदाचान्येसर्वेवेदार्थतत्त्वगाः ॥ हृदिसंसारिणांसाक्षात्सकलःपर

मेश्वरः ॥ २५ ॥ इतिविज्ञानयुक्तस्यकिंतस्यप्रतिमादिभिः ॥ इतिविज्ञानहीनस्यप्रतिमाकल्पनाशुभा ॥ २६ ॥ पदमुच्चैःसमारोढुंपुंसोऽनालंबनंस्मृतम् ॥
नालंबनंविनातस्यपदमुच्चैःसुदुष्करम् ॥ २७ ॥ निर्गुणप्राप्तयेनॄणांप्रतिमालंबनंस्मृतम् ॥ सगुणानिर्गुणाप्राप्तिर्भवतीतिसुनिश्चितम् ॥ २८ ॥
एवंचसर्वदेवानांप्रतिमाप्रत्ययावहा ॥ देवश्चायंमदीयोवैतस्यार्थेपूजनंत्विदम् ॥ २९ ॥ गंधचंदनपुष्पादिकिमर्थंप्रतिमांविना ॥ तावच्चप्रतिमापूज्यायाव
द्विज्ञानसंभवः ॥ ३० ॥ ज्ञानाभावेनपूज्येतपतनंतस्यनिश्चितम् ॥ एतस्मात्कारणाद्विप्राःश्रूयतांकथयामिच ॥ ३१ ॥ स्वजात्युक्तंतुयत्कर्मकर्तव्यं
तत्प्रयत्नतः ॥ यत्रयत्रतथाभक्तिःकर्तव्यंपूजनादिकम् ॥ ३२ ॥ विनापूजनदानादिपातकंनविदूरतः ॥ यावच्चपातकंदेहेतावत्सिद्धिर्नजायते ॥ ३३ ॥
गतेचपातकेतस्यसर्वंचसफलंभवेत् ॥ यथाचमलिनेवस्त्रेरंगःशुभतरोनहि ॥ ३४ ॥ क्षारादिनाक्षालितेशुद्धेसर्वोरंगोविसज्जते ॥ तथाचनिर्मलेदेहेदेवानांपूजया
तथा ॥ ३५ ॥ ज्ञानरंगःप्रजायेतविज्ञानंसंभवेत्तदा ॥ विज्ञानस्यचयन्मूलंज्ञानंसम्यगुदाहृतम् ॥ ३६ ॥ ज्ञानस्यैवतुयन्मूलंभक्तिरव्यभिचारिणी ॥
भक्तेर्मूलंतुयत्कर्मदेवादिपूजनंशुभम् ॥ ३७ ॥ तन्मूलंसद्गुरुःप्रोक्तस्तन्मूलंसंगतिःसताम् ॥ संगत्यागुरुर्लभ्येतगुरोर्मंत्रादिपूजनम् ॥ ३८ ॥ पूजनाज्जा
यतेभक्तिर्भक्त्याज्ञानंप्रजायते ॥ ज्ञानाद्विज्ञानसंपत्तिःसत्यमेवनसंशयः ॥ ३९ ॥ विज्ञानंचयदाजातंतदाभेदोनिवर्तते ॥ अहंचाऽयंपुनःपुत्रोमित्रंशत्रुर्ध
नंस्त्रियः ॥ ४० ॥ मानेचैवाऽपमानेचलाभेचैवाऽप्यलाभके ॥ तथाजयाजयौतस्यसमौख्यातौनिरंतरम् ॥४१ ॥ द्वंद्वदुःखविहीनश्चशिवरूपोभवत्यसौ ॥
द्वंद्वप्राप्तौनजायेतेसुखदुःखेविजानतः ॥ ४२ ॥ विहिताविहितेतस्यनश्यतोऋषिसत्तमाः ॥ ईदृशोविरलोलोकेगृहाश्रमविवर्तिषु ॥ ४३ ॥ यदिभवति
लोकेऽस्मिन्दर्शनात्पापहारकः ॥ तीर्थानिश्लाघयंतीहतादृशमृषिसत्तमाः ॥ ४४ ॥ तादृश्यान्येवतीर्थानिनदेवामृच्छिलामयाः ॥ तेपुनंत्युरुकालेन
विज्ञानीदर्शनादपि ॥ ४५ ॥ यावद्गृहाश्रमेतिष्ठेत्तावदाकारपूजनम् ॥ शिवस्यप्रतिमावापिशिवायाःप्रतिमातथा ॥ ४६ ॥ विष्णोश्चैवप्रयत्नेनसूर्य
स्यैवाथवापुनः ॥ गणपतेर्वापुनस्तत्रपंचायतनमुत्तमम् ॥ ४७ ॥ अथवाचशिवःपूज्योमूलमेवविशिष्यते ॥ मूलेसिक्तेयथाशाखास्तृप्ताःसंतिमुनीश्व
राः ॥ ४८ ॥ शाखायांचैवतृप्तायांमूलंतृप्तंनकर्हिचित् ॥ शिवेचपूजितेदेवाःपूजिताःसर्वएवहि ॥ ४९ ॥ तस्माच्चपूजयेद्देवंत्र्यंबकंलोकशंकरम् ॥ सर्वका
मफलावाप्त्यैसर्वभूतहितेरतम् ॥ ५० ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांपूजाकरणंनामषड्विंशोऽध्यायः ॥ २६ ॥ ॥ सूतउवाच ॥ अतःपरंप्रवक्ष्या
मिपूजाविधिसुखावहाम् ॥ श्रूयतामृषयःश्रेष्ठाःकथांपापप्रणाशिनीम् ॥ १ ॥ ब्राह्मेमुहूर्तेउत्थायस्मृत्वादेवंगदाधरम् ॥ उत्तिष्ठोत्तिष्ठदेवेशउत्तिष्ठहृ
दयेशय ॥ २ ॥ उत्तिष्ठकमलास्वामिन्ब्रह्मांडेमंगलंकुरु ॥ इत्येवंवचनंह्युक्त्वास्मृत्वाचगुरुपादकौ ॥ ३ ॥ देहशुद्धिंतथाकृत्वाप्रक्ष्यालयचरणौमुदा ॥

हस्तौचविधिवत्क्षाल्यदंतधावनमाचरेत् ॥ ४ ॥ अनुदितेदिवानाथेकृत्वातुदंतधावनम् ॥ मुखंषोडशवारंतुप्रक्षाल्यांजलिभिस्तथा ॥ ५ ॥ यथाव
काशंसुस्नायान्नद्यादिष्वथवागृहे ॥ देशकालाविरुद्धंचस्नानंकार्यंनरेणच ॥ ६ ॥ रवेर्दिनेतथाश्राद्धेसंक्रातौग्रहणेतथा ॥ महादानेतथातीर्थेह्युपवासादिने
तथा ॥ ७ ॥ आशौचेप्यथवाविप्रानस्नायादुष्णवारिणा ॥ तैलाभ्यंगंनकुर्वीतवारान्दृष्ट्वाक्रमेणच ॥ ८ ॥ रवौतापंतथाकुर्यात्सोमेकांतिंलभेन्नरः ॥
भौमेमृत्युंलभेताथबुधेलक्ष्मींलभेन्नरः ॥ ९ ॥ गुरौदरिद्रतांचैवशुक्रेचाप्यसुखंभवेत् ॥ सुखंशनैश्चरेचैववारादिफलमुत्तमम् ॥ १० ॥ अशक्तौचतथा
कार्यंश्रूयतामृषिसत्तमाः ॥ अर्केपुष्पंक्षिपेत्तैलेगुरौदूर्वांतथैवच ॥ ११ ॥ भूमिपुत्रेरजश्चैवशुक्रेचजलबिंदुकम् ॥ नित्यमभ्यंगकेचैववासिते
नवदूषणम् ॥ १२ ॥ केनापिचनकर्त्तव्यंश्राद्धेचग्रहणेतथा ॥ उपवासेतथाप्राप्तेप्रतिपद्दिवसेतथा ॥ १३ ॥ अथवासार्षपंतैलंनदुष्येद्ग्रहणंविना ॥
देशंकालंविचार्यैवस्नानंकुर्याद्यथाविधि ॥ १४ ॥ उत्तराभिमुखश्चैवप्राङ्मुखोप्यथवापुनः ॥ उच्छिष्टेनैववस्त्रेणनस्नायान्मुनिसत्तमाः ॥ १५ ॥
परधार्यंतथोच्छिष्टंरात्रौचविधृतंचयत् ॥ तेनस्नानंतदाकार्यंक्षालितंचयदाभवेत् ॥ १६ ॥ प्रक्षाल्यचरणौप्राग्वैपश्चादाचमनंचरेत् ॥ पश्चादावाहनं
कार्यंतीर्थानांस्मरणंतथा ॥ १७ ॥ अद्यप्रयोगमुच्चार्यस्नानकालेसदानरः ॥ प्रक्षिपेच्चजलंपूर्वंमस्तकेऋषिसत्तमाः ॥ १८ ॥ तीर्थनामावलितत्रपठे
च्चविधिपूर्वकम् ॥ पश्चादंगेषुचक्षेप्यंजलंचमार्जनंपुनः ॥ १९ ॥ कृत्वामृदाशुचिंतत्रक्षालयेन्मतिमान्नरः ॥ पश्चादाचमनंकृत्वागंगांविष्णुंस्मरेत्पुनः ॥
॥ २० ॥ धौतवस्त्रंततोधार्यंपुनराचमनंचरेत् ॥ शुद्धदेशेततोगत्वागोमयाद्युपमार्जिते ॥ २१ ॥ आसनंचशुभंतत्ररचनीयंद्विजोत्तमाः ॥ शुद्ध
काष्ठसमुत्पन्नमूर्णांतरितमेवच ॥ २२ ॥ चित्रासनंतथाकुर्यात्सर्वकामफलप्रदम् ॥ यथायोग्यंपुनर्ग्राह्यंमृगचर्मादिकंचयत् ॥ २३ ॥ तत्रोपविश्यकु
र्वीततिलकंमतिमान्नरः ॥ तिलकंपंचधाप्रोक्तंतेष्वेकंपरिकल्पयेत् ॥ २४ ॥ त्रिपुंड्रंचोर्ध्वपुंड्रंचह्यर्धचंद्रमथापिवा ॥ सदृशंवंशपत्रेणपंचमंचनिबोधमे ॥
॥ २५ ॥ पुष्पंचपारिजातस्यतेनैवसदृशंपुनः ॥ त्रिपुंड्रंचोर्ध्वपुंड्रंचशिवभक्तेविशिष्यते ॥ २६ ॥ ब्रह्मक्षत्रविशांतत्रचत्वारितिलकानिवै ॥ अर्धचंद्रंतथा
शूद्रैरूर्ध्वपुंड्रमथापिवा ॥ २७ ॥ विष्णुभक्तेविशेषेणतिलकंसुप्रतिष्ठितम् ॥ ऊर्ध्वपुंड्रंतथाचात्रवंशपत्राकृतिर्यथा ॥ २८ ॥ तस्माच्चतिलकंकार्यंकृत्वासि
द्धिमवाप्नुयात् ॥ जपस्तपस्तथादानंतिलकात्सफलंभवेत् ॥ २९ ॥ अभावेतिलकस्यापिजलस्यापिप्रकीर्तितम् ॥ कृत्वातिलकंवर्णोक्तंविधिंसंपादये
न्नरः ॥ ३० ॥ संपाद्यचस्वकंकर्मपुनराराधयेच्छिवम् ॥ पुनराचमनंकृत्वात्रिवारंमंत्रपूर्वकम् ॥ ३१ ॥ एकंवाऽथप्रकुर्वीतगंगांविष्णुंन्नुवान्निति ॥ आत्म
तत्वंशिवतत्वंविद्यातत्वंतथैवच ॥ ३२ ॥ चतुर्थ्यंतंपदंग्राह्यमाचमनेविधौनरैः ॥ अर्घोदकंतथातत्रपूजार्थंचसमाहरेत् ॥ ३३ ॥ अन्यद्वस्तुचयत्किंचिद्य

थाशक्तिसमीपगम् ॥ कृत्वास्थेयंचतत्रैवधैर्यमास्थायवैनरः ॥ ३४ ॥ अर्घपात्रंतथाचैकंजलगंधाक्षतैर्युतम् ॥ दक्षिणांशेतथास्थाप्योपचारकल्पनायवै ॥
॥ ३५ ॥ गुरोश्चस्मरणंकृत्वातस्मैनत्वाविशेषतः ॥ ध्यानंपूजांतथाकृत्वातदनुज्ञामवाप्यच ॥ ३६ ॥ अद्यादिपुनरुच्चार्यकामनांनिप्रयुज्यच ॥ पूजये
त्परयाभक्त्याशिवंसपरिवारकम् ॥ ३७ ॥ मुद्रामेकांप्रदर्श्यैवपूजयेद्विघ्नहारकम् ॥ सिंदूरैःकुसुमैर्देवंसिद्धिबुद्धिसमन्वितम् ॥ ३८ ॥ लक्षलाभयुतंतत्रपूज
यित्वानमेत्पुनः ॥ क्षमाप्यनंदिनंदेवंभ्रात्रासहसमन्वितम् ॥ ३९ ॥ पूजयेत्परयाभक्त्यानमस्कृत्यततःपुनः ॥ द्वारपालंसदाद्वारितिष्ठंतंचमहोदरम् ॥
॥ ४० ॥ पूजयित्वाततःपश्चात्पूजयेद्गिरिजांसतीम् ॥ चंदनैःकुंकुमैश्चैवधूपैर्दीपैरनेकधा ॥ ४१ ॥ नैवेद्यैर्विविधैश्चैवपूजयित्वाततःशिवाम् ॥ नमस्कृ
त्यपुनस्तत्रगच्छेच्चशिवसन्निधौ ॥ ४२ ॥ यदिगृहेपार्थिवीवाहैमीवाराजतीतथा ॥ धातुजन्यातथावान्यापारदीधातुसंभवा ॥ ४३ ॥ तस्यांतुपूजिता
यांवैसर्वेस्युःपूजितास्तथा ॥ स्थापितंचयदालिंगंविधानंविधिपूर्वकम् ॥४४॥ कर्तव्यंसर्वथातत्रगृहेनियमोनविद्यते॥जीवप्राणप्रतिष्ठांचभूतशुद्धिंविधायच
॥४५॥ दिक्पालान्पूजयेत्तत्रस्थापितेचशिवालये ॥ गृहेशिवःसदापूज्योमूलमंत्राभियोगतः ॥ ४६ ॥ तत्रतुद्वारपालानांनियमोनास्तिसर्वथा ॥ गृहेलिंगं
चसंपूज्यतस्मिन्सर्वंप्रतिष्ठितम् ॥ ४७॥ पूजाकालेचसांगंवैपरिवारयुतंतदा ॥ आवाह्यपूजयेद्देवंनियमोऽत्रनविद्यते ॥ ४८ ॥ शिवस्यसंनिधिंगत्वाह्यासनं
परिकल्पयेत् ॥ उदङ्मुखस्तदास्थित्वाऽऽचमनंपुनरेवच ॥ ४९ ॥ प्रक्षाल्यहस्तौपश्चाद्वैप्राणायामंप्रकल्प्यच ॥ मूलमंत्रेणतत्रैवदशावर्त्तंजपेन्नरः ॥५०॥
पंचमुद्राःप्रकर्तव्याःपूजादौशुभमीप्सता ॥ एतामुद्राःप्रदर्श्यैवपूजाविधिंसमाचरेत् ॥ ५१ ॥ दीपंकृत्वातदातत्रनमस्कारंगुरोरथ ॥ बद्ध्वापद्मासनंत
त्रभद्रासनमथापिवा ॥ ५२ ॥ उत्तानासनकंकृत्वापर्यंकासनकेनच ॥ यथासुखंतथास्थित्वाप्रयोगंपुनरेवच ॥ ५३ ॥ कृत्वापूजांपुराजातांबटुकेनैवकारये
त् ॥ यदिवास्वयमेवेहगृहेनियमोनविद्यते॥५४॥ पश्चाच्चैवाऽर्घपात्रेणक्षालयेल्लिंगमुत्तमम्॥अनन्यमानसोभूत्वापूजांकृत्वायथाविधि ॥ ५५॥पश्चादावाहयेद्दे
वंमंत्रेणाऽनेनवैनरः॥कैलासशिखरस्थंचपार्वतीपतिमुत्तमम् ॥ ५६ ॥ यथोक्तरूपिणंदेवंनिर्गुणंगुणरूपिणम् ॥ पंचवक्त्रंदशभुजंत्रिनेत्रंवृषभध्वजम् ॥ ५७ ॥
कर्पूरगोरकंदिव्यंचंद्रमौलिंकपर्दिनम्॥व्याघ्रचर्मोत्तरीयंचगजचर्मांबरंशुभम्॥५८॥वासुक्यादिपरीतांगंपिनाकादिविभूषितम्॥ कपालडमरुयुक्तंकंठेगरल
शोभितम् ॥५९॥सिद्धयोऽष्टौचयस्याग्रेनृत्यंतीहनिरंतरम् ॥ जयजयेतिशब्दैश्चसेवितंनिजभक्तकैः ॥ ६० ॥ तेजसादुःसहेनैवसंबद्धंदेवसेवितम् ॥ शरण्यं
सर्वसत्त्वानांप्रसन्नमुखपंकजम् ॥ वेदशास्त्रैर्यथागीतंशिवमावाहयाम्यहम् ॥ ६१ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांपूजाविधानवर्णनंनामसप्तविंशो
ऽध्यायः ॥ २७ ॥ ॥ सूतउवाच ॥ ॥ अर्घपात्रजलेनैवसेचयेल्लिंगमुत्तमम् ॥ अथवाचतत्पार्श्वेहिजलेनैवाक्षिपेदिति ॥ १ ॥ एवंध्यानेप्यशक्तोहि

सूक्ष्ममंत्रमुदीरयेत् ॥ यथोक्तरूपिणंशंभुंशिवमावाहयाम्यहम् ॥ २ ॥ इत्युक्त्वाऽउपचारादीन्कल्पयेद्विधिवत्तदा ॥ पूर्वोक्तेनैवध्यानेनह्यासनंपरिक
ल्पयेत् ॥ ३ ॥ चतुर्थ्यंतपदेनैवसर्वंकुर्याद्यथाक्रमम् ॥ पश्चात्पाद्यंप्रदद्याद्वैशिवायपरमात्मने ॥ ४ ॥ ततश्चाचमनंदत्त्वाशंभवेगुणरूपिणे ॥ पश्चाच्चपं
चभिर्द्रव्यैःस्नापयेच्छंकरंमुदा ॥ ५ ॥ वेदमंत्रैर्यथायोग्यंनामभिर्वास्वमंत्रकैः ॥ चतुर्थ्यंतपदेनैवद्रव्याण्येवार्पयेत्तदा ॥ ६॥ दुग्धंदधितथाचाऽन्यद्घृतंमधु
चशर्करा ॥ तस्यतस्यचमंत्रेणअर्पयेच्छंकरायवै ॥ ७ ॥ यथाभिलाषंतद्द्रव्यमर्पयेच्छंकरोपरि ॥ अथवामंत्रमुच्चार्यदेयंजलमनुत्तमम् ॥ ८ ॥ पश्चाच्च
वारुणंस्नानंकरणीयंशिवायवै ॥ पश्चाच्चचंदनंदत्त्वास्वल्पहस्तेविदूरतः ॥ ९ ॥ शुभेनैवजलेनैवजलधारांप्रसिंचयेत् ॥ वेदमंत्रैःषडंगैर्वानामभीरुद्रसं
ख्यया ॥ १० ॥ यथावकाशंतांदत्त्वावस्त्रेणामार्जयेत्ततः ॥ तस्मैचमार्जनंदत्त्वाशिवायपरमात्मने ॥ ११ ॥ पश्चादाचमनीयंचततोवस्त्रंपरात्मने ॥
पश्चाच्चचंदनंदेयंशिवायसुभगायवै ॥ १२ ॥ पश्चाच्चतंडुलान्श्वेतानर्पयेत्परमात्मने ॥ अथवाकामनारूपंयोग्यंधान्यंसमर्पयेत् ॥ १३ ॥ तिलाश्चैवय
वावापिगोधूमामाषकास्तथा ॥ अर्पणीयाःशिवायैवमंत्रैर्नानाविधैरपि ॥ १४ ॥ ततःपुष्पाणिदिव्यानिपंचवक्त्रमहात्मने ॥ प्रतिवक्त्रंयथाधान्यंकृत्वा
पुष्पंसमर्पयेत् ॥ १५ ॥ पश्चान्मंत्रैरनेकैश्चपुष्पाणिविविधानिच ॥ देयानिशंभवेतत्रयथायोग्याभिलाषतः ॥ १६ ॥ कमलैःशतपत्रैश्चशंखपुष्पै
स्तथैवच ॥ करवीरभवैश्चैवबिल्वीदलपुरःसरैः ॥ १७ ॥ कुशदूर्वादलैश्चैवधत्तूरकुसुमैस्तथा ॥ तुलसीदलैस्तथादेवंपूजयेत्परयामुदा ॥ १८ ॥ गृहे
वास्थापितेलिंगेपूजांवापार्थिवेपुनः ॥ चूर्णवाविविधंतत्रवासितंतैलमुत्तमम् ॥ १९ ॥ पश्चाद्धूपःप्रकर्तव्योगुग्गुलागुरुभिस्तथा ॥ दीपोदेयस्तथात
स्मैशिवायपरमात्मने ॥ २० ॥ अर्घंदद्यात्पुनस्तस्मैमंत्रेणानेनवैतदा ॥ रूपंदेहिजयंदेहिभाग्यंभगवन्देहिमे ॥ २१ ॥ भुक्तिमुक्तिफलं
देहिगृहीत्वाऽर्घ्यंशिवाऽधुना ॥ पश्चाद्देयंशिवायैवनैवेद्यंविविधंतदा ॥ २२ ॥ ततश्चारात्रिकंकुर्यान्मंत्रेणपरमात्मने ॥ पंचावर्तिंतुमंत्रे
णकृत्वानैराजनंविधिम् ॥ २३ ॥ कुर्याच्चमतिमांस्तत्रसंकल्पंपुनरेवच ॥ कर्त्तव्यश्चविधिस्तत्रनैराजनइतिक्रमात् ॥ २४ ॥ पुनश्चतांबूलंदद्यात्तस्मैचपरम
त्मने ॥ पुनःप्रदक्षिणंतत्रशिवायशिवरूपिणे ॥ २५ ॥ नमस्कारंततःकुर्याच्छंभवेशंकरायच ॥ ततोध्यानंयथोक्तंचकृत्वामंत्रमुदीरयेत् ॥ २६ ॥ यथास
ख्यंयथाज्ञानंकुर्यान्मंत्रविधिंनरः ॥ गुरूपदिष्टमार्गेणकृत्वाजपमनुत्तमम् ॥ २७ ॥ स्तोत्रैर्नानाविधैस्तत्रस्तुवीतवृषभध्वजम् ॥ ततश्चैवतुयत्कार्यंश्रूयतामृ
षिसत्तमाः ॥ २८ ॥ पुष्पांजलिःप्रदातव्यामंत्रेणाऽनेनवैतदा ॥ अज्ञानाद्यदिवाज्ञानाज्जपपूजादिकंमया ॥ २९ ॥ कृतंतदस्तुसफलंकृपयातवशंकर ॥
तावकस्त्वद्गतप्राणस्त्वच्चित्तोऽहंसदामृड ॥ ३० ॥ कृपानिधइतिज्ञात्वाभूतनाथप्रसीदमे ॥ पुष्पांजलिंसमर्प्यैवंक्षमाप्यविधिपूर्वकम् ॥ ३१ ॥ पूजाकाले

पुनर्देवत्वयाऽऽगंतव्यमेवहि ॥ विसर्जयेत्ततस्तंवैयथोक्तरूपिणंशिवम् ॥ ३२ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांपूजाविधिवर्णननामाष्टाविंशोऽ
ध्यायः ॥ २८ ॥ ॥ ऋषयऊचुः ॥ व्यासशिष्यमहाभागकथयत्वंप्रमाणतः ॥ केनवैपूजितःशंभुःकिंकियच्छतिवैफलम् ॥ १ ॥ सूतउवाच ॥ सर्ववै
कथयाम्यद्यश्रूयतामृषिसत्तमाः ॥ कमलैर्बिल्वपत्रैश्चशतपत्रैस्तथापुनः ॥ २ ॥ शंखपुष्पैस्तथादेवंलक्ष्मीकामोभवेद्यदा ॥ एतैश्चलक्षसंख्याकैर्लक्ष्मीः
स्यान्नात्रसंशयः ॥ ३ ॥ विंशतिःकमलानांतुप्रस्थमेकमुदाहृतम् ॥ बिल्वीदलसहस्रेणप्रस्थमेकंपुरातनैः ॥ ४ ॥ शतपत्रसहस्रेणप्रस्थार्द्धंपरिभाषितम् ॥
पलैःषोडशभिःप्रस्थंपलंटंकदशस्मृतम् ॥ ५ ॥ अनेनैवतुमानेनतुलामारोपयेद्यदा ॥ राज्यस्यकामुकोयोवैपार्थिवानांचपूजया ॥ ६ ॥ तोषयेच्छं
करंदेवंदशकोट्यामुनीश्वराः॥प्रतिशिवंतथापुष्पमखंडितदलंतथा ॥ ७॥ चर्चितंचंदनेनैवजलधारांतथापुनः ॥ प्रातरूपंतथामंत्रंबिल्वीदलमनुत्तमम् ॥
॥८॥अथवाशतपत्रंचकमलंवातथापुनः ॥ शंखपुष्पंतथाप्रोक्तंविशेषेणपुरातनैः॥९॥ धूपंदीपंचनैवेद्यमर्घमारात्रिकंतथा ॥ प्रदक्षिणांनमस्कारंक्षमापनवि
सर्जनम् ॥ १० ॥ कृत्वासांगंतथाभोज्यंकृतंयेनभवेदिह ॥ तस्यवैसर्वथाराज्यंशंकरोलोकशंकरः ॥ ११ ॥ प्राधान्यकामुकोयोवैतदर्द्धेनाऽर्चयेत्पुमान् ॥
कारागृहगतोयोवैलक्षेणैवार्चयेद्धरम् ॥ १२ ॥ रोगग्रस्तोयदास्याद्वैतदर्द्धेनार्चयेच्छिवम् ॥ कन्याकामोभवेद्योवैतदर्द्धेनशिवंपुनः ॥ १३ ॥ विद्याकाम
स्त्वथोयःस्यात्तदर्धेनशिवंतथा ॥ शत्रूणांसंकटेजातेह्ययुतेनाशिवंतथा॥१४॥उच्चाटनार्थंशत्रूणांतथैवपूजनंहरे ॥ मारणेचतुर्लक्षेणमोहनेतुतदर्द्धकम्॥१५॥
सामंतविजयेचैवकोटिपूजाप्रशस्यते ॥ वशीकरणेतथाराज्ञामयुतंचप्रशस्यते ॥ १६ ॥ यशसेचतथातत्रपूजयेच्छंकरंमुदा ॥ वाहनाप्त्यैतथापूज्यः
सहस्रेणशिवस्तथा ॥ १७ ॥ मुक्तिकामोभवेद्योवैपंचकोट्याशिवंनरः ॥ ज्ञानार्थीचतदादेवंकोट्यावैपूजयेच्छिवम् ॥ १८ ॥ शिवदर्शनकामोवैतदर्धेन
प्रपूजयेत् ॥ तथामृत्युंजयोजाप्यःकामनाफलरूपतः ॥ १९ ॥ पंचलक्षोयदाजातःप्रत्यक्षंतुसदाशिवः॥ लक्षेणदेहशुद्धिःस्याद्द्वितीयेजातिसंस्मरः ॥ २०॥
तृतीयेकामनाज्ञानंचतुर्थेस्वप्नदर्शनम् ॥ पंचमेतुशिवःसाक्षादाविर्भवतिचाग्रतः ॥ २१ ॥ अनेनैवतुमंत्रेणदशलक्षेफलंभवेत् ॥ मुक्तिकामोभवेद्योवै
दर्भैश्चपूजनंचरेत् ॥ २२ ॥ लक्षसंख्यातुसर्वत्रज्ञातव्याऋषिसत्तमाः ॥ आयुष्कामोभवेद्योवैदूर्वाभिःपूजनंचरेत् ॥ २३ ॥ पुत्रकामोभवेद्योवैधत्तूरकु
सुमैर्नरः ॥ रक्तदंडश्चधत्तूरःपूजनेशुभदःस्मृतः ॥ २४ ॥ अगस्त्यकुसुमैर्यश्चतस्यवैविपुलंयशः ॥ भुक्तिमुक्तिफलंतस्यतुलसीपूजनंचरेत् ॥ २५ ॥
अर्कपुष्पैःप्रतापैश्चकुब्जकह्लारकैस्तथा ॥ जपाकुसुमपूजातुशत्रूणांमृत्युदास्मृता ॥ २६ ॥ रोगोच्चाटनकानीहकरवीराणिवैक्रमात् ॥ बंधूकैर्भूषणा
वाप्तिर्जात्यावाहनसंभवः ॥ २७ ॥ अतसीपुष्पकैर्देवोविष्णुर्वल्लभतामियात् ॥ शमीपत्रैस्तथामुक्तिःप्राप्यतेपुरुषेणच ॥ २८ ॥ मल्लिकाकुसुमैर्देवःस्त्रि

यंशुभतरांशिवः ॥ यूथिकाकुसुमैःसस्यंगृहंनैवविमुंचति ॥ २९ ॥ कर्णिकारैस्तथावस्त्रसंपत्तिर्जायतेनृणाम् ॥ निर्गुंडीकुसुमैर्लोकेमनोनिर्मलतांव्रजेत्
॥ ३० ॥ तत्कुसुमंनविद्येतयच्चैवशिववल्लभम् ॥ चंपकंकेतकंहित्वाअन्यत्सर्वंशिवेऽर्पयेत् ॥ ३१ ॥ एतत्तेकथयिष्यामिकारणंदुष्करंनृणाम् ॥ यदा
लक्षंशिवेदद्यात्तदाचविपुलंफलम् ॥ ३२ ॥ पुष्पाणितिलजातानिमुक्तिदानिनसंशयः ॥ राजिकाकुसुमानीहशत्रूणांमृत्युदानिच ॥ ३३ ॥ अतःपरंच
धान्यानांफलंशृणुतसत्तमाः ॥ तंडुलारोपणेनृणांलक्ष्मीवृद्धिःप्रजायते ॥ ३४ ॥ प्रस्थानांषट्केनैवतदर्धेनतथापुनः ॥ पलद्वयंतथातत्रलक्षमानमुदा
हृतम् ॥ ३५ ॥ पूजांरुद्रविधानेनकृत्वावस्त्रंचसुन्दरम् ॥ शिवोपरिन्यसेत्तत्रतंडुलार्पणमुत्तमम् ॥ ३६ ॥ उपरिश्रीफलंत्वेकंगंधपुष्पादिभिस्तथा ॥
रोपयित्वाचधूपादिकृत्वापूजाफलंलभेत् ॥ ३७ ॥ प्राजापत्यद्वयंतत्रब्राह्मणान्भोजयेत्ततः ॥ लक्षपूजातथाजातासांगाचमंत्रपूर्वकम् ॥ ३८ ॥ शत
मष्टोत्तरंतत्रमंत्रेविधिरुदाहृतः ॥ तिलानांचतथालक्षंमहापातकनाशनम् ॥ ३९ ॥ एकादशपलैरेवलक्षमानमुदाहृतम् ॥ पूर्ववत्पूजनंतत्रकर्तव्यंहित
काम्यया ॥ ४० ॥ पूज्यास्तुब्राह्मणास्तस्मादत्रकार्यानरेणह ॥ महापातकजंदुःखंनश्यतितत्क्षणाद्ध्रुवम् ॥ ४१ ॥ यवपूजातथाप्रोक्तालक्षेणपरमाशि
वे ॥ प्रस्थानामष्टकंचैवप्रस्थार्धसंयुतंपुनः ॥ ४२ ॥ फलद्वययुतंतच्चमानमेतत्पुरातनम् ॥ यवपूजातथाप्रोक्तास्वर्गेसुखविवर्द्धिनी ॥ ४३ ॥ प्राजाप
त्यंब्राह्मणानांकर्तव्यंफलमीप्सुना ॥ गोधूमानांतथापूजाप्रशस्ताऋषिसत्तमाः ॥ ४४ ॥ संततिंवर्द्धयेत्सापियदिलक्षावधिक्रमात् ॥ द्रोणार्धेनभवेल्लक्षं
विधानंविधिपूर्वकम् ॥ ४५ ॥ पुनश्चब्राह्मणानांहिप्राजापत्यंभवेदिह ॥ मुद्गानांपूजनादेवशिवोयच्छतिवैसुखम् ॥ ४६ ॥ प्रस्थानांसप्तकेनैवप्रस्थार्धे
नाऽथवापुनः ॥ पलद्वययुतेनैवलक्षमेकंविदुर्बुधाः ॥ ४७ ॥ माषाणांचतथापूजारोगनाशकरीतथा ॥ प्रस्थानामष्टकेनैवप्रस्थार्द्धेनाऽथवापुनः ॥ ४८ ॥
प्रस्थानांसप्तकेनैवलक्षमुक्तंपुरातनैः ॥ ब्राह्मणानांतथाभोज्यंरुद्रसंख्यावधिस्मृतम् ॥ ४९ ॥ प्रियंगुपूजनंदेवेसर्वाध्यक्षेपरात्मनि ॥ धर्मार्थवर्धनायैवपू
जासर्वसुखावहा ॥ ५० ॥ प्रस्थमेकंचयत्प्रोक्तंलक्षमेकंपुरातनैः ॥ ब्रह्मभोज्यंतथाप्रोक्तमर्काणांसंख्ययामुने ॥ ५१ ॥ राजिकापूजनंतस्यशत्रोर्मृतिकरंस्मृ
तम् ॥ प्रस्थेनपलयुक्तेनलक्षमेकंतथास्मृतम् ॥ ५२ ॥ सर्षपाणांतथालक्षंपलैर्विंशतिसंख्यया ॥ तेषांचपूजनादेवशत्रोर्मृतिरुदाहृता ॥ ५३ ॥ विप्राणां
भोजनंतत्रशतमेकोत्तरंस्मृतम् ॥ एकागौश्चप्रदातव्याबलीवर्दस्तथैवच ॥ ५४ ॥ मरीचिसंभवापूजाशत्रोर्नाशकरीस्मृता ॥ अतोऽपिविविधैर्धान्यैःपू
जनंशंकरस्यच ॥ ५५ ॥ आढकीनांदलैश्चैवरंजयित्वार्चयेच्छिवम् ॥ नानासुखकरीपूजाह्येषाचऋषिसत्तमाः ॥ ५६ ॥ इत्येतद्वचनंश्रुत्वापुनरूचुर्ऋ
षीश्वराः ॥ लक्षमानंतुपुष्पाणांवदत्वंहिहितावहम् ॥ ५७ ॥ ॥ इतिश्रुत्वावचस्तेषांपुनर्वचनमाददे ॥ ॥ सूतउवाच ॥ ॥ श्रूयतामृषयःश्रेष्ठाः

कथयामिकथामिंति ॥ ५८ ॥ प्रस्थमानंतुलक्षाणांशंखीपुष्पसमुद्भवम् ॥ लक्षंप्रोक्तंतुव्यासेनसूक्ष्ममानदिदृक्षुणा ॥ ५९ ॥ एकादशभिस्तथाप्रस्थै
र्जातिमानमुदाहृतम् ॥ यूथिक्याश्वतथामानंराजिकायास्तदर्धकम् ॥ ६० ॥ प्रस्थैर्विंशतिकैश्चैवमल्लिकामानमुत्तमम् ॥ तिलपुष्पेतथामानंप्रस्थन्यू
नंतथैवच ॥ ६१ ॥ ततश्चद्विगुणंमानंकरवीरभवेस्मृतम् ॥ निर्गुंडीकुसुमेमानंतथैवकथितंबुधैः ॥ ६२ ॥ कर्णिकारेतथामानंशिरीषकुसुमेपुनः ॥
बंधुजीवेतथामानंप्रस्थानांदशकेनच ॥ ६३ ॥ इत्यादिविविधैर्मानैर्दृष्ट्वाचपूजनंचरेत् ॥ सर्वकामसमृद्ध्यर्थंपूजयेत्परमेश्वरम् ॥ ६४ ॥ अतःपरं
प्रवक्ष्यामिधारापूजाफलंह्यहम् ॥ यस्यश्रवणमात्रेणकल्याणंजायतेनृणाम् ॥ ६५ ॥ विधानपूर्वकंपूजांकृत्वाचैवशिवस्यच ॥ पश्चाच्चजलधाराहिकर्त
व्याश्चमुनीश्वराः ॥ ६६ ॥ ज्वरप्रतापशांत्यर्थंजलधाराशुभावहा ॥ शतरुद्रीयमंत्रेणरुद्रमेकादशेनतु ॥ ६७ ॥ रुद्रजाप्येनवातत्रपुरुषसूक्तेनवा
पुनः ॥ षडंगेनाथवातत्रसहमृत्युंजयेनच ॥ ६८ ॥ गायत्र्याप्यथवाविप्रानामभिर्वाविशेषकैः ॥ अथवाप्यागमोक्तैर्वाजलाधारादिकंतथा ॥ ६९ ॥
सुखसंतानवृद्ध्यर्थंधारापूजनमुत्तमम् ॥ घृतधाराशिवेकार्यायावन्मंत्रसहस्रकम् ॥ ७० ॥ तदावंशस्यविस्तारोजायतेनात्रसंशयः ॥ एवमयुतमं
त्रेणकार्यवैशिवपूजनम् ॥ ७१ ॥ प्रमेहरोगशांत्यर्थंप्राप्नुयाच्चमनेप्सितम् ॥ पंडत्वंचयदायातस्तदाघृतसुपूजनम् ॥ ७२ ॥ ब्रह्मभोज्यंतदाप्रोक्तंप्राजा
पत्यंमुनीश्वरैः ॥ केवलंदुग्धधाराचतदाकार्याविशेषतः ॥ ७३ ॥ शर्करामिश्रितातत्रयदाबुद्धिर्जडाभवेत् ॥ केनापिकृत्रिमंचेद्वैशरीरेपरिकीलितम् ॥
॥ ७४ ॥ यावन्मंत्रायुतंस्याद्वैतावद्धाराप्रपूजनम् ॥ यदाचोच्चाटनंदेहेजायतेकारणंविना ॥ ७५ ॥ यत्रकुत्रापिचाऽप्रेमदुःखंचपरिवर्द्धते ॥ स्वगृहेकलहो
नित्यंयदाचैवप्रजायते ॥ ७६ ॥ तस्यांचैवकृतायांवैसर्वदुःखंविलीयते ॥ शत्रूणांतापनार्थंवैतैलधाराशिवायवै ॥ ७७ ॥ वासितेनैवतैलेनभोगवृद्धिःप्र
जायते ॥ सार्षपेणचतैलेनशत्रुनाशोभवेदिह ॥ ७८ ॥ मधुनायक्ष्मराजोवैगच्छेद्वैशिवपूजनात् ॥ इक्षुरसस्यवैधारासर्वदुःखहरीमता ॥ ७९ ॥ गंगाज
लसमुद्भूताधारामोक्षफलप्रदा ॥ एताःसर्वाश्चयाःप्रोक्तामृत्युंजयशुभावहाः ॥ ८० ॥ अयुतेनकृतास्तास्तुकृत्वाचैवविधानकम् ॥ कर्तव्यंब्राह्मणानां
तुभोज्यंचरुद्रसंख्यया ॥ ८१ ॥ तदावैसफलंसर्वंभवेच्चैवनचाऽन्यथा ॥ एतत्तेसर्वमाख्यातंयत्पृष्टोऽऽहंमुनीश्वराः ॥ ८२ ॥ एवंपूजाविधिंकृत्वासर्व
पापैःप्रमुच्यते ॥ एतद्वैसकलंलोकेसर्वकामहितायवै ॥ ८३ ॥ स्कंदोमासहितंलोकेसंपूज्यविधिनासकृत् ॥ यत्फलंलभतेमर्त्यस्तद्वदामियथाक्रमम् ॥
॥ ८४ ॥ अत्रसंभोगजातंवैभुक्त्वापुत्रादिकंशुभम् ॥ अंतेचजायतेयच्चश्रूयतामृषिसत्तमाः ॥ ८५ ॥ सूर्यकोटिप्रतीकाशैर्विमानैःसर्वकामिकैः ॥ रुद्रकन्या
समाकीर्णैर्गेयवाद्यसमन्वितैः ॥ शिववत्क्रीडतेभोगीयावदाभूतसंप्लवम् ॥ ८६ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांपूजाविधिवर्णनंनामैकोनत्रिंशो

ऽध्यायः ॥ २९ ॥ ॥ ऋषयऊचुः ॥ ॥ धन्योऽसिकृतकृत्योऽसिमहापुण्योऽसिवैपुनः ॥ त्वयाचकथितंसर्वंमाहात्म्यंशंकरस्यच ॥ १ ॥ तत्रैवंकथितंयच्च
चंपकंकेतकंतथा ॥ नयोग्यंचाशिवायैवकिंत्वत्रकारणंवद ॥२॥ सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठाःकारणंकथयामिच ॥ कदाचिद्राघवोयातःफल्गुतीरेस
लक्ष्मणः ॥ ३ ॥ सीतयासहितस्तत्रतस्थौपित्राज्ञयाध्रुवम् ॥ श्राद्धकालंकदाचिद्वैज्ञात्वाद्यकरवामकिम् ॥ ४ ॥ ग्रामेचप्रेषयामासलक्ष्मणंसस्यका
म्यया ॥ किंचिद्रेकादिकंगृह्यलज्जितोगतवांस्तदा ॥ ५ ॥ ततश्चैवाज्ञयातत्रविलंबंकृतवांस्तदा ॥ अतिकालंतदाज्ञात्वारामोऽपिगतवांस्तदा ॥ ६ ॥
जानक्येकाकिनीतत्रदिवारूढंकथंपुनः ॥ विचारतत्पराह्यासीन्नायातिदेवरःकथम् ॥ ७ ॥ प्राणनाथोऽपितत्रैवगतोनायातिवैकथम् ॥ श्राद्धकालोगत
श्चात्रआसुरंसंभविष्यति ॥ ८ ॥ इतिविचार्यसातत्रस्नानंकृत्वाविधानतः ॥ इंगुदीदीपनंकृत्वापुलिनेसास्थितातदा ॥ ९ ॥ नायातिलक्ष्मणश्चैवराघव
श्चतथैवच ॥ ममपितॄनहंदास्येपिंडानाहस्वयंतदा ॥ १० ॥ किंचिद्वस्तुगृहीत्वातुतेनैवपिंडकास्तदा ॥ दत्तायदातयातत्रहस्ताश्चनिःसृतास्तदा॥ ११॥
वदंतस्तर्पिताह्यद्यधन्यात्वंजनकात्मजे ॥ तान्दृष्ट्वासुंदरीहस्तान्नानालंकारभूषितान् ॥ १२ ॥ उवाचजानकीतत्रकेयूयंसमुपस्थिताः ॥ श्रुत्वातुव
चनंतस्याउवाचश्वशुरस्तदा ॥ १३ ॥ अहंदशरथोनामश्वशुरस्तेचसुव्रते ॥ तृप्ताःस्मतवपिंडेनश्राद्धंतेसफलंकृतम् ॥ १४ ॥ इत्युक्त्वासातदातत्रजान
कीवाक्यमब्रवीत् ॥ भर्तामेनैवमन्येतहस्तस्यदर्शनादिकम् ॥ १५ ॥ इत्युक्तेचतयातत्रस्थाप्याःसाक्ष्येत्वयाऽनघे ॥ इतिवाणींसमुत्पन्नांश्रुत्वासाजन
कात्मजा ॥ १६ ॥ फल्गुंनदींतथागांचह्यग्निंचकेतकींतदा ॥ उवाचश्रूयतांसम्यक्तेसर्वेसाक्षितांगताः ॥ १७॥ ततश्चांतर्हितास्तेवैतावद्रामःसमाग
तः ॥ शीघ्रंशिवतयासाध्विभवितव्यंत्वयाऽधुना ॥ १८ ॥ श्राद्धकालोगतश्चाऽद्यश्वशुरःसमुपस्थितः ॥ इत्युक्तेचतदातेनजानकीविस्मितासती ॥
॥ १९ ॥ नोवाचवचनंकिंचित्तदादृष्ट्वातथाविधाम् ॥ विलंबंक्रियमाणांतामुवाचराघवस्तदा ॥ २० ॥ वैदेहिविस्मितात्वंचदृश्यसेभामिनिकथम् ॥
इतिपृष्टातदातेनसर्वंचकथितंतया ॥ २१ ॥ तच्छ्रुत्वाराघवस्तत्रभ्रातरंवाक्यमब्रवीत् ॥ भ्रातस्त्वयाश्रुतंसम्यग्जानक्याकथितंचयत् ॥ २२ ॥ अ
स्माभिर्विधिनानैवदृष्टश्चैवाऽधुनातया ॥ कार्यार्थेव्याकुलासावैव्यलीकंह्युच्यतेतया ॥ २३ ॥ एवमुक्तेतदातेनव्रीडितासाऽब्रवीदिदम् ॥ मयाचस्था
पिताह्येतेसाक्षित्वेरघुनंदन ॥ २४ ॥ एवमस्त्वितिसत्यंवैयद्येतेवचनंमम ॥ कथयिष्यंतितेसुभ्रुमन्येसत्यंवचस्तथा ॥ २५ ॥ इत्युक्तेचतदापृष्टाश्च
त्वारःसाक्षिणस्तदा ॥ तेसर्वेमोहमापन्नानजानीमोवयंत्विदम् ॥ २६ ॥ इतिश्रुत्वावचस्तेषांरामश्चलक्ष्मणस्तदा ॥ ऊचतुर्भ्रातरौतत्रहास्यंकृत्वापर
स्परम्॥२७॥कार्यंचकरणीयंतेदिवारूढंबुभुक्षता ॥ जानकीदुःखमापन्नाकिंजातंकिंकृतंत्विह ॥२८॥ पाकंकृतवतीतत्ररामःश्राद्धंतदात्वयम् ॥ आवाहने

कृतेतत्रवाणीसूर्यसमीपतः ॥ २९ ॥ किमर्थंहूयतेपुत्रह्यनयातर्पितावयम् ॥ तत्रत्यंचवचःश्रुत्वानमन्येऽहंवचोविभो ॥ ३० ॥ कृतंश्राद्धंपुनर्नैवकर्त
व्यंहित्वयाऽनघ ॥ तथापिराघवस्तत्रनमेनेपरमंवचः ॥ ३१ ॥ सूर्यश्चसाक्षितांयातःकिमर्थंक्रियतेत्वया ॥ जयेतिचतदातांवैरामश्चलक्ष्मणस्तदा ॥
॥ ३२ ॥ धन्यावयंयथाऽस्माकंसाध्वीकुलवधूरिति ॥ पाकंकृत्वातदाभुक्त्वारामोलक्ष्मणमब्रवीत् ॥ ३३ ॥ एतेतुसाक्षितांप्राप्ताःकिंकृतंदुष्टवक्त
था ॥ एतस्मिन्नंतरेदेवीशापंतेभ्योददात्पुनः ॥ ३४ ॥ नदित्वयाश्रुतंयच्चदृष्टंयच्चतथापुनः ॥ सत्यंनिवेदितंनैवपातालेत्वंवहाऽधुना ॥ ३५ ॥
केतकित्वंशिवायेहनयोग्याभवसर्वदा ॥ नसत्यंकथितंचाऽद्यतथात्वंफलमाप्नुहि ॥ ३६ ॥ सन्निकृष्टेतथागांचउवाचजनकात्मजा ॥ यदिसत्यं
त्वयानोक्तमीदृशीत्वंभवाऽधुना ॥ ३७ ॥ पुच्छेशुद्धामुखेऽयोग्याभवत्वंसर्वदाऽनघे ॥ देवानांमुखमग्नेत्वंयदिसत्यंनभाषितम् ॥ ३८ ॥ सर्वभक्षी
भवत्वंचवचनान्ममसत्तम ॥ केतकित्वंतथानैवयथादृष्टंश्रुतंतथा ॥ ३९ ॥ शिवायवल्लभामाभूःसर्वकालमुदाहृता ॥ इतिशापंतदाप्राप्तायथायोग्यं
गतास्तदा ॥ ४० ॥ तद्दिनंहिसमारभ्यनदीह्यंतरवाहिनी ॥ अग्निश्चसर्वभुक्तत्रकेतकीशिवदुर्लभा ॥ ४१ ॥ गौश्चापिहियथाचाऽत्रयदुक्तंहित
यातथा ॥ एतत्सर्वंसमाख्यातंकेतकीशापकारणम् ॥ अतःपरंचंपकस्यकारणंकथयामिच ॥ ४२ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांत्रिंशोऽ
ध्यायः ॥ ३० ॥ ॥ छ ॥ सूतउवाच ॥ गोकर्णेशइतिख्यातःशंभुर्लोकसुखावहः ॥ दक्षिणस्यांदिशिचैवनिकटेवर्ततेऽधुना ॥ १ ॥ तस्यदर्श
नमात्रेणपातकंभस्मसाद्व्रजेत् ॥ तन्निकटेनारदोदेवोदर्शनार्थंसमाययौ ॥ २ ॥ कदाचिद्भ्रम्यमानेननारदेनमहर्षिणा ॥ पुष्पितःसुरभिश्चैवपथिं
दृष्टश्चचंपकः ॥ ३ ॥ तत्रकश्चिद्द्विजश्रेष्ठःपुष्पार्थंचसमागतः ॥ सदृष्ट्वानारदंतत्रवीणांचमहतींतथा ॥ ४ ॥ नादयंतंतथालोक्यक्षणमात्रंतदास्थि
तः ॥ सपुष्पावचयार्थंचह्याजगामस्वयंतदा ॥ ५ ॥ यदर्थमागतंतेननकृतंतेनतत्तथा ॥ करिष्यामियदाकार्यंपृष्टश्चायंकरिष्यति ॥ ६ ॥ इतिज्ञा
त्वातदातेननकृतंकार्यमुत्तमम् ॥ हस्तेचवंशपात्रंचदृष्ट्वोवाचाद्विजंतदा ॥ ७ ॥ किमर्थमागतंब्रह्मन्किंपात्रंहस्तकेतव ॥ तस्यतद्वचनंश्रुत्वाद्विजोवाक्यमुपा
ददे ॥ ८ ॥ भिक्षार्थंचगमिष्यामियथार्थंनैवभाषितम् ॥ तद्गत्वानारदस्तत्रननामशिवमंदिरे ॥ ९ ॥ गत्वाशिवंचसंतोष्यपरिवर्तितवांस्तदा ॥ सद्विजो
ऽपितदाकार्यंकृत्वाऽऽच्छाद्यचपात्रकम् ॥ १० ॥ मिलितश्चतदामार्गेपुनःपृष्टंकुतोगतः ॥ एवंश्रुत्वापुनस्तत्रव्यलीकंपरिभाषितम् ॥ ११ ॥ नलब्धाचमया
भिक्षागच्छामिचयथागतम् ॥ तच्छ्रुत्वानारदःसर्वंरहस्यंचजगामह ॥ १२ ॥ चंपकस्यसमीमेचआगतोनारदःस्वयम् ॥ आगत्यचतदापृष्टोब्राह्मणश्चकुतो
गतः ॥ १३ ॥ गृहीतानिचपुष्पाणिकियंतिऋषिसत्तमाः ॥ तमुवाचतदावृक्षोनिषिद्धश्चद्विजन्मना ॥ १४ ॥ कोवाद्विजश्चकिंपुष्पंकोवात्वंपरिपृच्छसि ॥

ततश्चनारदोज्ञात्वापरावृत्याशिवंगतः ॥ १५ ॥ सर्वाण्यपिचपुष्पाणिशतमेकोत्तराणिच ॥ गणितानितदातेननारदेनमहात्मना ॥ १६ ॥ अन्ये
नकेनचित्तत्रकृतापूजामहात्मना ॥ तंपप्रच्छपुनस्तत्रकोवाकिंत्वंसमीहसे ॥ १७ ॥ केनाऽऽनीतानिपुष्पाणिकथमुत्तारितानिच ॥ इतिश्रुत्वावचस्तथ्यं
ब्राह्मणोऽहंसदाशिवम् ॥ १८ ॥ पूजयित्वाऽर्थयेमुक्तिंसत्यमेतद्ब्रवीमिते ॥ अयंवैब्राह्मणःकश्चित्प्रत्यहंपरमेश्वरम् ॥ १९ ॥ चंपकैःपूजयित्वातुराज्ञोमो
हंददात्यसौ ॥ ततोधनंगृहीत्वातुबहून्पीडयतेद्विजान् ॥ २० ॥ राज्ञोऽधिश्रयणंगत्वापूजाविधिबलेनच ॥ अंधोभूत्वाद्विजश्चाऽयंगणयेन्नपरान्स्वकान् ॥ २१ ॥
पुष्पाण्युत्तारितानीहपूजार्थंचमयाप्रभो ॥ इतिश्रुत्वावचस्तस्मैमुक्तिस्तेह्यनपायिनी ॥ २२ ॥ भविष्यतिनसंदेहइतिसत्यंवचोमम ॥ चंपकैस्तोषितः
शंभुस्तस्यराज्ञोवशंनयेत् ॥ २३ ॥ राजानंचवशेनीत्वाद्विजानन्यान्प्रपीडयेत् ॥ दानाध्यक्षंयंतथालब्ध्वाब्राह्मणान्पीडयत्यसौ ॥ २४ ॥ एतत्सर्वंचंप
केभ्यःफलंलब्धंतथापुनः ॥ चंपकैस्तोषितःशंभुर्वश्यत्वंचप्रयच्छति ॥ २५ ॥ नारदःकथयामासशिवायपरमात्मने ॥ ईदृशंत्वंफलंस्वामिन्किंद्विजाय
प्रयच्छसि ॥ २६ ॥ तमुवाचततोदेवःकिंकरोमीहनारद ॥ ईदृशंचंपकाल्लब्धंफलंचैवद्विजन्मना ॥ २७ ॥ चंपकैःपूजितश्चाहंवशीकुर्याज्जगत्रयम् ॥
एतस्मिन्समयेकाचिद्ब्राह्मणीदुःखिताशिवम् ॥ २८ ॥ हाहताऽस्मिमहाराजवार्यतांदुष्टकस्त्वया ॥ मद्गृहस्थंधनंसर्वंहृतंचैवद्विजन्मना ॥ २९ ॥ ए
तस्मिन्समयेतेनपृष्टासाब्राह्मणीस्वयम् ॥ किंदुःखंतेसमुत्पन्नंकुतस्त्वंचविलप्यसे ॥ ३० ॥ तदीयंतद्वचःश्रुत्वाब्राह्मणीवाक्यमब्रवीत् ॥ श्रूयतांचद्विज
श्रेष्ठमदीयंदुःखकारणम् ॥ ३१ ॥ मत्स्वामीकर्मयोगाच्चपंगुश्चवर्ततेऽधुना ॥ कन्याचैकादानयोग्यावर्ततेमद्गृहेद्विज ॥ ३२ ॥ प्रतिग्रहस्तदर्थंवैकृतो
भर्त्रामामाऽधुना ॥ तदर्थंचद्विजश्चाऽयंहठाद्गृह्णातिकिंपुनः ॥ ३३ ॥ राजात्वंधीकृतस्तेननब्रवीतीहकिंचन ॥ किंकरोमिक्वगच्छामित्राताकश्चिन्नविद्यते ॥
॥ ३४ ॥ नित्यमत्रसमायातिशिवस्यपूजनायवै ॥ नारदउवाच ॥ किंदत्तंतवभर्त्रेचराज्ञादानंवरानने ॥ ३५ ॥ इत्युक्ताचपुनस्तत्रद्विजपत्नीवचोऽब्रवीत् ॥
प्रसूयमानागौर्दत्ताराज्ञाबहुधनान्विता ॥ ३६ ॥ तेनैवदापितात्रैवकथ्यतेचमयापुनः ॥ तदर्द्धंगृह्यतेतेनकिंकरोमिकुतोव्रजे ॥ ३७ ॥ मद्भर्त्रानगृही
तंवैदुष्टदानंकदापिह ॥ बलाद्गृहीतमस्माभिःकन्याकालोव्रजेद्द्विज ॥ ३८ ॥ इत्युक्त्वाग्राहितंतेनतदर्धंगृह्यतेकथम् ॥ अस्माभिरुच्यतेवार्ताधनंसर्वं
विभज्यताम् ॥ ३९ ॥ तेनोच्यतेधनंचैवगौश्चापिचविभज्यताम् ॥ गोश्चविभजनेपापंकुत्रवैक्षालयामहे ॥ ४० ॥ तस्यास्तद्वचनंश्रुत्वानारदो
वाक्यमब्रवीत् ॥ शंकरंतुनमस्कृत्यश्रूयतांहित्वयाप्रभो ॥ ४१ ॥ ईदृशोयोभवेत्स्याद्वैतद्धस्तात्पूजनंकथम् ॥ गृह्यतेचत्वयादेवदुष्टःकोवाह्यतः
परम् ॥ ४२ ॥ राजप्रतिग्रहश्चैवदुष्करःप्रथमंभवेत् ॥ ततश्चैवविभागश्चकिंपुनर्गोविभागभुक् ॥ ४३ ॥ एतस्माच्चपरोदुष्टःकोन्योभवितुमर्हति ॥

यस्याश्वदक्षिणेशृंगेगंगाचपरितिष्ठति ॥ ४४ ॥ वामेचयमुनादेवीमध्येचैवसरस्वती ॥ स्कंदेब्रह्मातथामध्येरुद्रःसपरिवारकः ॥ ४५॥ कक्ष्यांविष्णुःसदाति
ष्ठेत्पश्चात्तीर्थाऽन्यनेकशः ॥ ऋषयोदक्षिणेकुक्षौवामेसर्वाश्वदेवताः ॥ ४६ ॥ नद्यःसर्वाह्यधोभागेवेदाःखुरनिवासिनः ॥ ऊधसिचसमुद्राश्वजगत्तस्यांप्रति
ष्ठितम् ॥ ४७॥ ईदृशींचैवगांयोवैपूजयित्वाचप्रक्रमेत् ॥ पृथ्वीप्रक्रमणाज्जातंफलंतस्यसुनिश्चितम् ॥४८॥ आसमुद्रांतांक्ष्मांचैवसुवर्णपूरितांयदा ॥ ददा
तिपुरुषोयश्वगांचैवाऽत्रददातियः ॥४९॥ तयोःसमफलंप्रोक्तंनात्रकार्याविचारणा ॥ यस्यादुग्धंनरःपीत्वागंगोदकफलंलभेत् ॥ ५० ॥ शकृन्मूत्रंचयस्या
स्तुपीतंपुनातिपातकात् ॥ किमपूज्यांहितस्यागोःस्पर्शनात्पापहारिका ॥ ५१ ॥ पृथिव्यांत्रीणिदानानिगावःपृथ्वीसरस्वती ॥ नरकादुद्धरंत्येतेपूर्वानेको
त्तरंशतम् ॥ ५२ ॥ यस्यपापस्यप्रायश्चित्तंनिःसरेत्तुनकुत्रचित् ॥ तस्यपापस्यशुद्धिःस्याद्दानाद्यस्याःसुरेश्वर ॥ ५३ ॥ किंपुनर्वर्ण्यतेतस्यादानंस्पर्शे
श्वदर्शनम् ॥ सुवर्णशृंगयोश्चैवखुरेषुरूप्यमेवच ॥ ५४ ॥ पृष्ठंताम्रमयंकृत्वाप्रवालंनेत्रयोस्तथा ॥ कंठेचभूषणंयस्यावस्त्रंसर्वांगकेतथा ॥ ५५ ॥ कांस्यदो
हनपात्रेणसुशीलांवत्ससंयुताम् ॥ तरुणींरूपसंपन्नांबहुदुग्धवतींयदा ॥ ५६ ॥ अर्पयेद्देशकालेवैकिंतस्यदुर्लभंभवेत् ॥ एतादृशींतुगांलब्ध्वादत्त्वा
चाष्टगुणंफलम् ॥ ५७ ॥ मातुर्विक्रयणेपापंकन्याविक्रयणेतथा ॥ वेदविक्रयणेचैवगवांविक्रयणेतथा ॥ ५८ ॥ प्रायश्चित्तंनलभ्येतकिंपुनर्वर्ण्य
तेमया ॥ अयंवैब्राह्मणोदुष्टोगांचैवविभजिष्यति ॥ ५९ ॥ किंवक्तव्यंमयादेवतवभक्तोभवेदिह ॥ इत्येतद्वचनंश्रुत्वाशिवोवाक्यमथाऽब्रवीत् ॥ ६० ॥ त्व
च्चेतसियथास्याद्वैतथाकुरुप्रियोऽसिमे ॥ भुक्त्वापापंपुनश्चैवसद्गतिंप्राप्यतेयथा ॥ ६१ ॥ तथात्वयाचकर्त्तव्यंमद्भक्तश्चभवेदिह ॥ इत्युक्तोनारदस्तत्र
यत्रतिष्ठतिचंपकः ॥ ६२ ॥ पुनःपृष्टंतदातस्मैनित्यंपुष्पाण्यनेकशः ॥ नीयतेकेनवृक्षेशसत्यंवदममाऽग्रतः ॥ ६३ ॥ एवमुक्तस्तदासोवैनोवाचपर
मंवचः ॥ तदाचनारदस्तस्मैददौशापंशिवाज्ञया ॥ ६४ ॥ शृणुचंपकवक्ष्यामिसत्यंसाधनमुत्तमम् ॥ ईदृशोगुणवाँल्लोकेयदिसत्यंवदेदिहँ ॥ ६५ ॥
किंपुनर्दुर्लभंतस्यइहचापिपरत्रच ॥ तथाफलंमयादेयमसत्यभाषणादिह ॥ ६६ ॥ अद्यप्रभृतिलोकेषुशिवमान्योभवेन्नहि ॥ तवपुष्पंशिवस्यैवयोग्यं
भवतुनक्कचित् ॥ ६७ ॥ एतस्मिन्नंतरेविप्रःसमागच्छतवैतदा ॥ तंदृष्ट्वानारदोवाक्यमब्रवीच्चमुनीश्वराः ॥ ६८ ॥ राजप्रतिग्रहान्नूनंविभागोविहितस्त्व
या ॥ चंपापुष्पबलेनैववशीकृत्यमहेश्वरम् ॥ ६९ ॥ विप्राश्वपीडितास्तेऽद्यराक्षसस्त्वंभवाऽधुना ॥ इत्युक्तेनारदेनैवब्राह्मणोभयविह्वलः ॥ ७० ॥ क्ष
म्यतांक्षम्यतांस्वामिन्ननुग्रहंकुरुष्वमे ॥ इत्युक्त्वाचरणोपांतेनारदस्यपपातह ॥ ७१ ॥ नारदोवचनंस्मृत्वाशिवस्यपरमात्मनः ॥ विप्रंचैवगतोदृष्ट्वाद
यार्द्रहृदयोऽब्रवीत् ॥ ७२ ॥ नारदउवाच ॥ नमिथ्यामेकदाप्युक्तंवैरिष्वपिकदाचन ॥ तस्मान्मद्वचनाद्विप्रराक्षसत्वंगमिष्यसि ॥ ७३ ॥ विराधोना

यश्चासीद्राक्षसत्वंगतःक्षणात् ॥ अनुग्रहस्तदातस्यदत्तस्तेनमहात्मनः ॥ ७४ ॥ रामस्यदर्शनंप्राप्यतद्धस्तान्मरणंध्रुवम् ॥ लब्ध्वायास्यसिसद्रूपंप्रता
पाच्छंकरस्यच ॥ ७५ ॥ इत्युक्तोनारदेनैवसोऽपिरक्षोऽभवत्क्षणात् ॥ विराधोनामविप्रेंद्राःसर्वप्राणिभयंकरः ॥ ७६ ॥ दृष्ट्वातंराक्षसंतत्रनारदःप्राहशंक
रम् ॥ नमस्कृत्यपुनस्तत्रगोकर्णेशंतदाशुभम् ॥ ७७ ॥ चंपकस्यमहिमानंवर्णयित्वापुनःपुनः ॥ ईदृशश्चभवेल्लोकेसर्ववश्यंनयेदिह ॥ ७८ ॥ इत्यु
क्त्वानारदस्तस्मैययौस्वैरगतिर्मुनिः ॥ एतत्सर्वंसमाख्यातंयत्पृष्टोऽहंमुनीश्वराः ॥ ७९ ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्ययेमानवःक्षणात् ॥ ८० ॥ इतिश्री
शिवमहापुराणेज्ञानसंहितायांचंपकशापनिरूपणंनामैकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ऋषयऊचुः॥ सूतसूतमहाभागत्वयाभागवतोत्तम ॥ यत्पृष्टंचैवतत्सर्वं
निवेदितमतंद्रितम् ॥ १ ॥ अस्माकंसंशयंसर्वंकृतवान्दूरतोभवान् ॥ धन्यस्त्वंकृतकृत्यश्चकिंपुनर्वर्णयामहे ॥ २ ॥ व्यासोवैराजतेयस्यगुरुःशिरसिरा
जते ॥ किंतस्यदुर्लभंलोकेऽसंशयात्मस्वरूपिणः ॥ ३ ॥ त्वयाचकथितंयच्चपंचायतनमुत्तमम् ॥ पूजनंशुभदंलोकेसर्वकालफलप्रदम् ॥ ४ ॥ विष्णुर्दे
वःश्रुतःपूर्वंप्रकृतिःपरमाशुभा ॥ शंकरस्त्वपरोदेवःसूर्यस्तुत्रिगुणात्मकः ॥ ५ ॥ गणेशस्तत्रपंक्तौहिपूज्योजातःकथंप्रभो ॥ कोवागणपतिश्चायंकस्यपुत्रः
कुतोबलम् ॥ ६ ॥ महत्पंक्तिकथंप्राप्तःसर्वंकथयशोभनम् ॥ एवमेषांवचःश्रुत्वासूतोवाक्यमथाऽब्रवीत् ॥ ७ ॥ सूतउवाच ॥ साधुपृष्टंमहाभागालोकानांहित
काम्यया ॥ स्वरूपंचगणेशस्यकथयामियथाश्रुतम् ॥ ८ ॥ उद्वाहितेशिवेचाऽत्रकैलासेचगतेसति ॥ कियताचैवकालेनजयाचविजयासखी ॥ ९ ॥ पार्वत्याच
मिलित्वाचविचारतत्पराऽभवत् ॥ रुद्रस्यचगणाःसर्वेनंदिभृंगिपुरःसराः ॥ १० ॥ प्रमथाश्चह्यसंख्याताह्यस्मदीयोनकश्चन ॥ द्वारितिष्ठंतिसर्वेपिशिवस्याज्ञाप
रायणाः ॥ ११ ॥ तेसर्वेप्यस्मदीयाश्चतथापिनमिलेन्मनः ॥ एकश्चैवाऽस्मदीयोवैरक्षणीयस्त्वयाऽनघे ॥ १२ ॥ इत्युक्तापार्वतीदेवीसखीभ्यांरुचिरंवचः ॥ हितंमेने
तदातच्चकार्यतत्त्वावधारिणी ॥ १३ ॥ कदाचिन्मज्जमानायांपार्वत्यांवैसदाशिवः ॥ नंदिनंपरिभर्त्स्यैवआजगामस्वयंतदा ॥ १४ ॥ उत्तस्थौमज्जमानासाल
ज्जितासुंदरीतदा ॥ तदीयंतद्वचश्चैवहितंमेनेसुखावहम् ॥ १५ ॥ एवंजातेतदाकालेकदाचित्पार्वतीशुभा ॥ मदीयःसेवकःकश्चिद्भवेच्छुभतरस्तदा ॥ १६ ॥
मदाज्ञायाःपरंनान्यद्रेखामात्रंचलेदिह ॥ इतिविचार्यसादेवीकरयोर्जलसंभवम् ॥ १७ ॥ पंकमुत्सार्यतेनैवनिर्ममेपुत्रकंशुभम् ॥ सर्वावयवनिर्दोषंसर्वाव
यवसुंदरम् ॥ १८ ॥ प्रतिष्ठाप्यतदाद्वारिनिवार्योयइहागमेत् ॥ वस्त्राणिचतदातस्मैदत्त्वाचविविधानिच ॥ १९ ॥ नानालंकरणंतस्मैदत्त्वाऽऽशिषमनुत्त
माम् ॥ मत्पुत्रस्त्वंमदीयोऽसिनाऽन्यथाक्वचिदस्तिमे ॥ २० ॥ तयाह्येवंकृतेसोवैनमस्कृत्यशिवांस्थितः ॥ किंकार्यंविद्यतेतेऽद्यकरवाणितवोदितम् ॥
॥ २१ ॥ इत्युक्तासातदातेनद्वारपालोभवाऽद्यमे ॥ उक्त्वाचस्थापयामासयष्टिपाणिंगणाधिपम् ॥ २२ ॥ तद्रूपंसुंदरंतस्यविलोक्यहर्षमागता ॥ मुखमा

च्युंव्यसातत्रह्यालिंग्यास्थापयत्तदा ॥ २३ ॥ स्थितोद्वारिसदातत्रपार्वतीहितकाम्यया ॥ स्वयंचमज्जनार्थंसास्थिताचसखिसंयुता ॥२४॥ एतस्मिन्नेव
कालेतुशिवोद्वारिसमागतः ॥ गणैःसार्द्धंसमायातोद्वारिचप्राविशद्यदा ॥ २५ ॥ तदानिषिद्धस्तेनैवगम्यतेचत्वयाऽधुना ॥ मज्जनार्थंस्थितामाताक्वया
सिमाव्रजाऽधुना ॥२६ ॥ इत्युक्त्वायष्टिकांतत्ररोधनायसमामृशत् ॥ तद्दृष्ट्वातुशिवःप्राहशिवोऽहमितिनान्यथा ॥ २७ ॥ इत्युक्त्वागम्यमानंतंयष्ट्याचैवा
ऽप्यताडयत् ॥ कःशिवःकुत्रयासित्वंकिमर्थंगम्यतेऽधुना ॥ २८ ॥ ॥ शिवउवाच ॥ मूर्खोऽसित्वंनजानासिशिवोहंगिरिजापतिः ॥ इत्युक्त्वाप्रविशंतंतं
दंडेनाऽताडयत्पुनः ॥ २९ ॥ ततःशिवश्चसंक्रुद्धोगणानाज्ञापयत्तदा ॥ कोवाऽयंवर्ततेकिंचक्रियतेपश्यतांपुनः ॥ ३० ॥ इत्युक्त्वातुशिवस्तत्रस्थितः
क्रोधसमन्वितः ॥ गणास्तेक्रोधमापन्नाःपप्रच्छुर्द्वारपालकम् ॥ ३१ ॥ कोऽसित्वंकुतआयातःकिंवात्वंचचिकीर्षसि ॥ तदीयंतद्वचःश्रुत्वाद्वारपा
लोऽब्रवीदिदम् ॥ ३२ ॥ यूयंकेकुतआयाताभवंतःसुंदराइमे ॥ यातदूरंकिमर्थंवैस्थितायूयंविरोधिनः ॥ ३३ ॥ एवंश्रुत्वावचस्तस्यहास्यंकृत्वापरस्प
रम्॥कश्चाऽयंवर्ततेकिंचब्रवीतिशत्रुवत्पुनः ॥ ३४ ॥ तमूचुश्चतदासर्वेश्रूयतांद्वारपालक ॥ वयंशिवगणाःसर्वेशिवाज्ञापरिपालकाः ॥ ३५ ॥ त्वांचैवतुगणं
मत्वानहन्यामोऽन्यथाहतः ॥ तिष्ठदूरेह्यतस्त्वंचकिमर्थंमृत्युमीहसे ॥ ३६ ॥ इत्युक्तेपिगणेशश्चद्वारंनमुक्तवांस्तदा ॥ तेसर्वेऽपिगणास्तत्रशिवंगत्वातथाऽ
ब्रुवन् ॥ ३७ ॥ ततश्चैवंवचःश्रुत्वागणानूचेऽथशंकरः ॥ दूरतःक्रियतामेषषंढाइवस्थिताःकथम् ॥ ३८ ॥ स्वामिनोक्तागणास्तेचपुनरागत्यतत्रह ॥
रेरेद्वारेकथंकोऽयंस्थितश्चस्थापितःकुतः ॥ ३९ ॥ अस्मानवगणय्यैवंकथंजीवनमिच्छसि ॥ द्वारपालावयंसर्वेस्थिताःकिंपरिभाषसे ॥ ४० ॥ सिंहास
नंगृहीत्वातुशृगालःशिवमीहते ॥ तावद्गर्जसिमूर्खत्वंयावद्गणपराक्रमः ॥ ४१ ॥ नाऽनुभूतस्त्वयाचाऽत्रह्यनुभूयमरिष्यसि ॥ इत्युक्तःक्रोधमापन्नोहस्ता
भ्यांयष्टिकांतदा ॥ ४२ ॥ गृहीत्वाताडयामासगणांस्तान्परिभाषिणः ॥ यातयातह्यतोदूरेनोचेच्चदर्शयाम्यहम् ॥ ४३ ॥ गणाऊचुः ॥ किंकर्तव्यंक्वगं
तव्यंक्रियतेतेनकिंपुनः ॥ मर्यादारक्ष्यतेऽस्माभिरन्यथाकिंब्रवीतिच ॥ ४४ ॥ ततस्तेवैगणाःसर्वेशिवंदूरेव्यवस्थितम् ॥ क्रोशमात्रंतुकैलासाद्गत्वातेचत
थाऽब्रुवन् ॥ ४५ ॥ शिवोविहस्यतान्सर्वान्गणाःकिंतुनशूकराः ॥ एकोपिचबहून्सर्वान्भर्त्सतिकिंवदेत्पुनः ॥ ४६ ॥ गम्यतांताड्यतांचैषयःकश्च
नभवेदिह ॥ भर्त्सितास्तेनदेवेनगतास्तेगणसत्तमाः ॥ ४७ ॥ गणाऊचुः ॥ रेरेत्वंश्रूयतांबालबालवत्परिभाषसे ॥ इतस्त्वंदूरतोयाहिनोचेत्त्वंपश्य
सेऽधुना ॥ ४८ ॥ इतिश्रुत्वावचस्तेषांकिंकरोमीतिदुःखितः ॥ एतस्मिन्नंतरेदेवितेषांतस्यचवैपुनः ॥ ४९ ॥ श्रुत्वातुकलकलंतत्रसखींपश्याऽब्रवीदि
दम् ॥ समागत्यसखीतत्रवृत्तांतंपश्यतीतदा ॥ ५० ॥ क्षणमात्रंतदादृष्ट्वाहर्षितासागतातदा ॥ तत्रगत्वातुतत्सर्वंकथितंगिरिजाऽग्रतः ॥ ५१ ॥ अस्म

दीयोभवेन्नैवसर्वेह्यायांतिवैध्रुवम्॥शिवश्चैवगणाःसर्वैनिवासावसरःकथम्॥५२॥प्रविशंतिहठादेवनैवतच्छुभतरंतव॥सम्यक्कृतंह्यनेनैवकोपिप्रवेशितोनहि ॥
॥५३॥दुःखंचैवानुभूयापितिरस्कारादिकंतथा॥अतःपरंतुवाग्वादःक्रियतेचपरस्परम्॥५४॥वाग्वादश्चकृतोनैवतद्यायांतुसुखेनवै॥ कृतेचैवाऽत्रवाग्वादेजि
त्वाचविनयेनच॥५५॥प्रविशंतुतदासर्वेनाऽन्यथाकर्हिचित्प्रिये॥अयंचैवाऽस्मदीयोवैभर्त्सितेभर्त्सितावयम् ॥५६॥ तस्माद्देवित्वयाभद्रेनत्याज्योमानउत्त
मः॥शिवोमर्कटवत्तेऽग्रवर्ततेकिंकरिष्यति॥५७॥तदीयंतद्वचःश्रुत्वापार्वतीमानिनीतदा॥अहोस्थितंक्षणंनैवहठात्कारःकथंकृतः॥५८॥कथंचैवात्रकर्तव्यो
विनयोवाऽथवापुनः॥भविष्यतिभवत्वेवकृतंनैवाऽन्यथापुनः ॥५९॥ इत्युक्त्वातुसखीतत्रप्रेषिताप्रिययातदा ॥ समागत्यसखीसाचप्रिययाकथितंशृणु ॥
॥६०॥सम्यक्कृतंत्वयाभद्रबलात्प्रविशतानहि ॥ भवदग्रेगणाएतेजयंतिकिंभवान्पुनः॥६१॥कृतंचेद्वैकृतंचैवकर्तव्यंक्रियतांत्वया॥ जित्वायांतुपुनर्वापिवि
नयैरथवाध्रुवम् ॥ ६२ ॥ इतिश्रुत्वावचस्तस्यामातुश्चैवगणस्तथा ॥ बद्धकच्छस्तथोष्णीषंबद्ध्वाजंघोरुनादयन् ॥ ६३ ॥ उवाचसगणान्सर्वान्छ्रूयतां
गणसत्तमाः ॥ अहंचगिरिजासूनुर्यूयंशिवगणास्तथा ॥ ६४ ॥ उभयेसमतांप्राप्ताःकर्तव्यंक्रियतांपुनः ॥ भवंतोद्वारपालाश्चअहंचैवकथंनहि ॥ ६५ ॥
भवद्भिश्चस्थितंह्यत्रयदाभवतिनिश्चितम् ॥ तदाभवद्भिःकर्त्तव्यंशिवाज्ञापरिपालनम् ॥ ६६ ॥ इदानींतुमयाचात्रशिवाज्ञापरिपालनम् ॥ हठाद्वाविनये
नापिगंतव्यंमंदिरेपुनः ॥ ६७ ॥ इत्युक्ताश्चगणाःसर्वेययुस्तेशिवसंनिधौ ॥ लज्जितंलज्जितंगत्वानमस्कृत्यपुरःस्थिताः ॥ ६८ ॥ स्थित्वानिवेदितंसर्वंशि
वाग्रेगणसत्तमैः ॥ तत्सर्वंतुतदाश्रुत्वाशंकरोवाक्यमब्रवीत् ॥ ६९ ॥ श्रूयतांचगणाःसर्वेयुद्धयोग्यंभवेन्नहि ॥ अहंचैवात्रयूयंचतत्रगौरीगणस्तथा॥ ७० ॥
विनयःक्रियतेचेद्वैवश्योवैशंकरःस्त्रियाः ॥ कृतंचैवात्रकर्तव्यमेकाकीकिंकरिष्याति ॥ ७१ ॥ भवंतश्चगणालोकेयुद्धेचैवविशारदाः ॥ मदीयाश्चकथंयुद्धं
हित्वायास्यथलाघवम् ॥ ७२ ॥ स्त्रियाऽऽग्रहःकथंकार्यःकृत्वाफलमवाप्स्यति॥कर्तव्यंसर्वथायुद्धंयद्भावितद्भविष्यति ॥७३॥ इतिश्रीशिवमहापुराणेज्ञा
नसंहितायांगणयुद्धंनामद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥ सूतउवाच ॥ इत्युक्तास्तेगणास्तेननिश्चयंपरमंगताः ॥ सन्नद्धास्तेतदाजग्मुःसर्वेऽपिशिव
मंदिरम् ॥१॥ गणोऽपिचतथादृष्ट्वाह्यायातान्गणसत्तमान् ॥ युद्धाटोपंविधायैवस्थितश्चैवाऽब्रवीदिदम् ॥ २ ॥ आयांतुगणपाःसर्वेशिवाज्ञापरिपालकाः ॥
अहमेकस्तुबालश्चशिवाज्ञापरिपालकः ॥ ३ ॥ तथाऽपिपश्यतांदेवीपार्वतीसूनुजंबलम् ॥ शिवश्चैवगणानांतुबलंपश्यतुवैपुनः ॥४॥ बलवद्बालयुद्धंचमा
निनीशिवपक्षयोः॥भवद्भिश्चकृतंपूर्वंयुद्धंयुद्धविशारदाः॥५॥ मयापूर्वंकृतंनैवबालोऽस्मिक्रियतेऽधुना॥ तथापिभवतांलज्जाभविष्यतिजयाजये ॥६॥ ममै
वंतुभवेन्नैववैपरीत्यंभविष्यति॥ममैवंभवतांनैवगिरिजाशिवयोरिह॥७॥एवंज्ञात्वाचकर्तव्यंयुद्धंचैवगणेश्वराः॥भवद्भिःस्वामिनंदृष्ट्वामयाचमातरंपुनः ॥८॥

क्रियतेकीदृशंयुद्धंभवितव्यंभवत्विति ॥ इत्येवंभर्त्सितास्तेतुक्रुद्धालोहितचक्षुषः ॥ ९ ॥ विविधान्यायुधान्येवंधृत्वातेचसमुद्ययुः ॥ घर्षयंतस्तथादंतान्हुं
कृत्यचपुनःपुनः ॥ १० ॥ पश्यपश्यन्ब्रुवंतश्चगणास्तेसमुपागताः ॥ नंदीप्रथममागत्यधृत्वापादंव्यकर्षयत् ॥११॥ धावन्भृंगीद्वितीयंचपादंधृत्वातथैवच ॥
यावत्पादंव्यकृषतांतावद्धस्तेनवैगणः ॥ १२ ॥ आहत्यतौतुहस्ताभ्यामुत्रोटचपादकौस्वयम् ॥ द्वारस्थंपरिघंगृह्यसर्वानापोथयत्तदा ॥१३॥केषांचित्क
टयोभिन्नाःकेषांचित्पृष्ठकानिच ॥ केषांचित्तुशिरांस्येवकेषांचिन्मस्तकानिच ॥१४॥ केषांचिज्जानुनीतत्रकेषांचित्कंधरास्तथा ॥ संमुखंचागतायेवैतेसर्वे
हृदयेहताः॥१५॥ केचिच्चपतिताभूमौकेचिच्चविदिशोगताः ॥ केचिच्चचरणौनत्वाकेचिच्छिवांतिकंगताः ॥१६॥ तेषांमध्येतुकश्चिद्वैसंग्रामेसंमुखोनहि ॥
सिंहंदृष्ट्वायथायांतिमृगाश्चैवदिशोदश ॥ १७ ॥ तथातेचगणाःसर्वेगताश्चैवसहस्रशः ॥ परावृत्यतथासोऽपिद्वारिचसमुपस्थितः ॥ १८ ॥ कल्पांतकर
णेकालोदृश्यतेचतथाहिसः ॥ एतस्मिन्समयेतत्रब्रह्माइंद्रश्चदेवताः ॥ १९ ॥ प्रेरितानारदेनाऽथदेवाःसर्वेसमागमन् ॥ विष्णुश्चाऽपिसमायातःशिवस्यहि
तकाम्यया ॥ २० ॥ समागतास्तदासर्वेसमाश्वास्यपुरःस्थिताः ॥ ऋषयश्चतथासर्वेअप्सरसांगणस्तथा ॥ २१ ॥ शिवंचैवनमस्कृत्यआज्ञांदेहिप्रभो
इति ॥ गणान्भिन्नांस्तदादृष्ट्वातेभ्यःसर्वंनिवेदितम् ॥ २२ ॥ तेभ्यःसर्वंनिवेद्यैवब्रह्माणंसमुवाचह ॥ ब्रह्मंस्त्वयाचगंतव्यंप्रसाद्योऽयंमहाबलः ॥ २३ ॥
यथानप्रलयःस्याद्वैतथाकार्यंत्वयाप्रभो ॥ इत्युक्तःसययौब्रह्मायत्रास्तेसमहाबलः ॥ २४ ॥ तुंदिलःश्मश्रुलश्चैवसर्वैर्ऋषिवरैःसह ॥ समायातंचतंदृष्ट्वाग
णःश्मश्रूण्यवाकिरत् ॥ २५ ॥ क्षम्यतांक्षम्यतांदेवनयुद्धार्थंसमागतम् ॥ इत्येवंब्रुवतितस्मिंस्तावत्परिघमाददे ॥ २६ ॥ गृहीतंपरिघंदृष्ट्वापलायनप
रास्तदा ॥ यातयातब्रुवंतस्तेपरिघेणाऽऽहतास्तदा ॥ २७ ॥ स्वयंचपतिताःकेचित्केचित्तेननिपातिताः ॥ केचिच्चशिवसामीप्यंगतास्तत्क्षणमात्रतः ॥
॥ २८ ॥ तथाविधांश्चतान्दृष्ट्वाशिवःकोपसमन्वितः ॥ इंद्रादींश्चदेवगणान्षण्मुखप्रमुखान्गणान् ॥ २९ ॥ भूतप्रेतपिशाचांश्चसर्वानादेशयत्तदा ॥ तेस
र्वेचयथाटोपंगतास्तेसर्वतोदिशम् ॥ ३० ॥ यस्ययस्यायुधंयच्चतत्तत्सर्वंविमोचितम् ॥ पृथिवीव्याकुलाजातासंशयंपरमंगता ॥ ३१ ॥ नजातंब्रह्मणो
ऽप्यायुर्ब्रह्मांडंसंहरन्निव ॥ अकालेचतथाभूतंशिवश्चेच्छावशःस्वयम् ॥ ३२ ॥ तेसर्वेचगतास्तत्रषण्मुखाद्याश्चयेपुनः ॥ सर्वेव्यर्थायुधाजाताआश्चर्यंपर
मंगताः ॥ ३३ ॥ शक्तिद्वयंतथातत्रनिर्मितंगणहेतवे ॥ एकाप्रचंडरूपंचधृत्वाऽतिष्ठन्महामुखी ॥ ३४ ॥ श्यामपर्वतसंकाशंविस्तार्यमुखगह्वरम् ॥
एकाविद्युत्स्वरूपाचबहुहस्तयुतासती ॥ ३५ ॥ आयुधानिचसर्वाणिसर्वैश्चमोचितानिच ॥ गृहीत्वातन्मुखेसाचन्यक्षिपत्सकलानिच ॥ ३६ ॥ देवायु
द्धेनदृश्यंतेपरितःपरिघंपुनः ॥ एकोपिसकलंसैन्यंलोडयामासदुस्तरम् ॥ ३७ ॥ यथागिरिवरेणैवलोडितःसागरःपुरा ॥ एकेननिहताःसर्वेव्याकुलाह्य

भवंस्तदा ॥ ३८ ॥ किंकर्त्तव्यंकगंतव्यंनज्ञायंतेदिशोदश ॥ परिघंभ्रामयामाससव्यापसव्यमेवच ॥ ३९ ॥ रंभाचमेनकाचैवउर्वशीचतिलोत्तमा ॥ इत्याद्यप्सरसांश्रेष्ठाःपुष्पचंदनपाणयः ॥ ४० ॥ ऋषयोनारदाद्याश्चयेचयुद्धेऽतिलालसाः ॥ तेसर्वेचसमाजग्मुर्युद्धस्यदर्शनायवै ॥ ४१ ॥ तेऽपिविस्मयमापन्नाईदृशंनकदापिह ॥ गुणरूपंतदादृष्टंकालोऽयमपरःकुतः ॥ ४२ ॥ पृथिवीकंपितादेवीसमुद्रसहितातदा ॥ पर्वताःप्रतिनादैवैचक्रुःसंग्रामसंभवम् ॥ ४३ ॥ द्यौश्चैवसग्रहाशीर्णाःसर्वेव्याकुलतांगताः ॥ देवाःपलायिताःसर्वेगणाश्चैवपलायिताः ॥ ४४ ॥ षण्मुखश्चतदासर्वानावार्यपुरतःस्थितः ॥ शक्तिद्वयेनतद्युद्धंसर्वंचनिष्फलीकृतम् ॥ ४५ ॥ येऽवस्थिताश्चसर्वेऽपिशिवस्यांऽतिकमागताः ॥ तेसर्वेमिलिताश्चैवनमस्कृत्याशिवंतदा ॥ ४६ ॥ अब्रुवन्वचनंसर्वेकोऽयंगणवरःशुभः ॥ पुराचैवश्रुतंयुद्धमिदानींबहुधापुनः ॥ ४७ ॥ दृश्यतेनश्रुतंदृष्टमीदृशंनकदाचन ॥ किंचिद्विचार्यतांदेवह्यन्यथाप्रलयोभवेत् ॥ ४८ ॥ इत्येवंवचनंश्रुत्वाशिवःपरमकोपनः ॥ कोपंजगामतत्रैवगम्यतांचमयाऽधुना ॥ ४९ ॥ देवसैन्यंचतत्सर्वंशिवस्याऽनुजगामह ॥ एतस्मिन्नंतरेदेवंनमस्कृत्याऽथनारदः ॥ ५० ॥ अयंचजीवितश्चेत्स्यात्प्रलयंचकरिष्यति ॥ यथातथाप्ययंदेवहंतव्यःसर्वथात्वया ॥ ५१ ॥ इत्युक्त्वानारदस्तत्रह्यंतर्धानंगतस्तदा ॥ शिवोऽपिसहसैन्येनयुद्धंचक्रेसुदारुणम् ॥ ५२ ॥ महादेवोऽपितंदृष्ट्वाविस्मयंपरमंगतः ॥ छलेनैवचहंतव्योनाऽन्यथाहन्यतेपुनः ॥ ५३ ॥ इतिबुद्धिंसमास्थायसैन्यमध्येव्यवस्थितः ॥ शिवेदृष्टेतदादेवेनिर्गुणेगुणरूपिणि ॥ ५४ ॥ विष्णौचैवापिसंग्रामआयातेसर्वदेवताः ॥ गणाश्चैवतथाहर्षंजग्मुःसर्वेपरस्परम् ॥ ५५ ॥ प्रथमंप्रेरयामासविष्णुःसर्वसुखावहः ॥ अहंचमोहयिष्यामिहन्यतांचत्वयाप्रभो ॥ ५६ ॥ छलंविनानहन्याद्वैतामसोयंदुरासदः ॥ इतिकृत्वामतिंतत्रविष्णुर्मोहपरायणः ॥ ५७ ॥ शक्तिद्वयंतदालीनंहरिंदृष्ट्वातथाविधम् ॥ गणेशोऽपितदातत्रयत्रविष्णुःस्थितःस्वयम् ॥ ५८ ॥ परिघंक्षिप्तवांस्तत्रगणोपिबलवत्तरः ॥ एकतश्चमुखंदृष्ट्वाशिवोऽपिचजगामह ॥ ५९ ॥ त्रिशूलंचसमादायगतःकोपसमन्वितः ॥ त्रिशूलंपातितंहस्तात्पिनाकंपुनराददे ॥ ६० ॥ तदप्यपातयद्भूमौपरिघेणमहात्मना ॥ हताःपंचतथाहस्ताःपंचभिःशूलमाददे ॥ ६१ ॥ अहोदुःखतरंनूनंगणानांकिंपुनर्भवेत् ॥ परिघार्दिताश्चतेदेवायाताश्चैवदिशोदश ॥ ६२ ॥ विष्णुस्तंचगणंदृष्ट्वाधन्योऽयमितिचाऽब्रवीत् ॥ बहवोदेवताश्चैवमयादृष्टास्तथापुनः ॥ ६३ ॥ दैत्याश्चबहवश्चैवयक्षगंधर्वराक्षसाः ॥ नैतेनसमतांयांतिरूपशौर्यगुणादिभिः ॥ ६४ ॥ एवंविष्णुंब्रुवंतंचपरिघंभ्रामयंस्तदा ॥ चिक्षेपविष्णवेतत्रचक्रेचूर्णतरस्तदा ॥ ६५ ॥ गृहीत्वाविष्णुश्चक्रंतुयुयुधातेपरस्परम् ॥ खंडंतुपरिघस्यापिहरयेप्राक्षिपत्तदा ॥ ६६ ॥ गृहीत्वागरुडेनाऽपिपक्षिणाविकलीकृतम् ॥ यत्रयत्रक्षिपेत्तत्तैवपरिघंतत्रतत्रह ॥ ६७ ॥ शून्यंचकृतवान्सोवैविजयंचापसत्तमः ॥ विष्णुश्चैवगणश्चैवयुयुधातेपरस्परम् ॥ ६८ ॥ एतदंतरमासाद्यशू

लपाणिस्तथोत्तरे ॥ आगत्यचत्रिशूलेनशिरस्तस्यन्यपातयत् ॥ ६९ ॥ छिन्नेशिरसितस्यैवंदेवसैन्यंसुनिश्चलम् ॥ नारदोपितदागत्वादेव्यैसर्वंन्यवेद
यत् ॥ ७० ॥ मानिनिश्रूयतांमानस्त्याज्योनैवत्वयाऽधुना ॥ इत्युक्त्वांऽतर्हितस्तत्रनारदःकलहप्रियः ॥७१॥ जयजयेतिभाषंतोदेवाःसुखमुपस्थिताः ॥
यच्चकारतदादेवीश्रूयतामृषिसत्तमाः ॥७२॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांगणयुद्धभंगोनामत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ सूतउवाच ॥ श्रूयतां
कथयाम्यद्ययज्जातंतदनंतरम् ॥ कोपयुक्तायथादेवीचकारश्रूयतांतथा ॥१॥ शिवोपितच्छिरश्छित्त्वायावद्दुःखमुपाददे ॥ तावच्चगिरिजादेवीक्रोध्यमाना
चहाकथम् ॥ २ ॥ किंकरोमिक्कगच्छामिप्रलयंकिंकरोम्यहम् ॥ इत्येवंदुःखितासाचशक्तीःसहस्रशस्तदा ॥ ३ ॥ निर्ममेनिर्मितास्ताश्चनमस्कृत्यशिवां
तदा ॥ जाज्वल्यमानास्ताःसर्वामातरादिश्यतामिति ॥ ४ ॥ पार्वत्युवाच ॥ प्रलयश्चात्रकर्त्तव्योनात्रकार्याविचारणा ॥ देवांश्चैवगणांश्चैवयक्षराक्षसका
नथ ॥ ५ ॥ अस्मदीयःपरश्चैवविद्यतेनममापिह ॥ तदाज्ञप्ताश्चताःसर्वाःसंहारंचक्रिरेतदा ॥ ६ ॥ कल्पांतकालेसंप्राप्तेसंहरणार्थमुद्यताः ॥ यथाचाऽत्रतृ
णानीहह्यग्निःसंहरतेतथा ॥ ७ ॥ एवंताःशक्तयःसर्वाःसंहारंकर्तुमुद्यताः ॥ नगणयंतिदेवंवाब्रह्माणंवाऽथशंकरम् ॥ ८ ॥ इंद्रंवायक्षराजंवास्कंदंवासूर्यमेववा ॥
सर्वास्ताश्चैवसंहारंकुर्वंतिस्मनिरंतरम् ॥ ९ ॥ यत्रयत्राऽनुपश्येततत्रतत्राऽपिशक्तयः ॥ करालाःकुब्जकाःखंजालंबशीर्षाह्यनेकशः ॥ १० ॥ हस्ते
धृत्वाऽशुदेवांश्चमुखेनैवाक्षिपंस्तदा ॥ तंसंहारंतदादृष्ट्वाहरोहरिस्तथैवच ॥ ११ ॥ ब्रह्माचऋषयश्चाऽन्येदेवाइंद्रादयस्तदा ॥ किंकरिष्यतिदेवीसासंहारं
चाप्यकालतः ॥ १२ ॥ सर्वेसंशयमापन्नाजीवनायहितायवा ॥ सर्वेचमिलिताश्चेमेकिंकर्तव्यंविचिंत्यताम् ॥ १३ ॥ इतिविचार्यतेसर्वेह्यूचुस्तेचपरस्परम् ॥
यदिचगिरिजादेवीप्रसन्नाचभवेदिह ॥ १४ ॥ तदाचैवभवेत्स्वास्थ्यंनान्यथाभवतिध्रुवम् ॥ शिवोऽपिदुःखमापन्नःकटिभंग्नायदातदा ॥ १५ ॥ शिवांक्रो
धमयींसाक्षाद्द्रष्टुंनपुनरुत्सहेत् ॥ स्वीयोवापरकीयोवायक्षोवाकिन्नरस्तथा ॥ १६ ॥ देवोवाचतथाविष्णुर्ब्रह्मावाशंकरस्तथा ॥ नकश्चिद्गिरिजाऽग्रेचस्था
तुंशक्तश्चकेचन ॥ १७ ॥ जाज्वल्यमानंतत्तेजोदृष्ट्वादूरतरंस्थिताः ॥ एतस्मिन्समयेतत्रनारदोदेवदर्शनः ॥ १८ ॥ आजगामतदातत्रदेवानांसुखहे
तवे ॥ ब्रह्माणंचतथाविष्णुंशंकरप्रभृतीन्गणान् ॥ १९ ॥ समागत्यमिलित्वातुविचार्यकार्यमेवच ॥ यावच्चगिरिजालोकेकृपांनैवकरिष्यति ॥ २० ॥ तावन्नै
वसुखंस्याद्वैनात्रकार्याविचारणा ॥ ऋषयोनारदाद्याश्चगतास्तेशिवमंदिरम् ॥ २१ ॥ तदाप्रसादयामासुर्मातरंजगतःशुभाम् ॥ नमस्कृत्यतथास्तुत्वास्तो
त्रैर्नानाविधैरपि ॥ २२ ॥ जगदंबनमस्तुभ्यंप्रकृत्यैतेनमोस्तुते ॥ अपर्णायैनमस्तुभ्यंगिरिजायैनमोस्तुते ॥ २३ ॥ भवान्यैतेनमश्चैवदुर्गायैतेनमोस्तुच ॥
भद्रायैतेनमस्तुभ्यंप्रकृत्यैतेनमोस्तुवै ॥ २४ ॥ चण्डिकायैनमस्तुभ्यंकात्यायन्यैनमोस्तुते ॥ एवंस्तुतातदादेवीऋषिभिर्नारदादिभिः ॥ २५ ॥

उच्चैर्दृष्ट्वातदातांश्चनोवाचकिंचिदंबिका ॥ तदाचऋषयःसर्वैर्नत्वातच्चरणांबुजम् ॥ २६ ॥ क्षम्यतांक्षम्यतांदेविसंहारोजायतेऽधुना ॥ तवस्वामी वयंचैवइमेदेवास्तथैवहि ॥ २७ ॥ प्रजाश्चभवदीयाश्चक्षंतव्यंपरमेश्वरि ॥ एवंश्रुत्वावचस्तेषांप्रसन्नाचंडिकातदा ॥ २८ ॥ मत्पुत्रोयदिजीवितत्तदासं हरणंनहि ॥ यथाचभवतांमध्येपूज्योऽयंचभविष्यति ॥ २९ ॥ सर्वाध्यक्षोभवेदद्यनाऽन्यथासुखमाप्स्यथ ॥ इत्युक्तास्तेतदातेभ्योगत्वासर्वेन्यवे दयन् ॥ ३० ॥ तेसर्वेचवचःश्रुत्वाशिवश्चाऽयंतथापुनः ॥ कर्तव्यंचतथासर्वंलोकस्वास्थ्यंभवेदिह ॥ ३१ ॥ एतच्छिरःकुतोयातमप्सरोभिश्चतद्धृतम् ॥ एतत्कलेवरंचात्रप्रक्षाल्यसंप्रपूज्यच ॥ ३२ ॥ उत्तरस्यांपुनर्यातप्रथमंयइहागच्छेत् ॥ तच्छिरश्चसमाहृत्ययोजनीयंकलेवरे ॥ ३३ ॥ ततस्तैस्तत्कृतं सर्वंशिवाज्ञापरिपालकैः ॥ कलेवरंसमानीयप्रक्षाल्यविधिवच्चतत् ॥ ३४ ॥ पूजयित्वापुनस्तेवैगताश्चोदङ्मुखास्तदा ॥ प्रथमंमिलितस्तत्रहस्तीचाप्ये कर्दतकः ॥ ३५ ॥ तच्छिरश्चतथाछित्त्वानीत्वातेनाप्ययोजयन् ॥ संयोज्यदेवताःसर्वाःशिवंविष्णुंविधिंतथा ॥ ३६ ॥ ऊचुरनंतरंकर्मभवतामवशेषितम् ॥ ततस्तेतुवचःश्रुत्वाशिवाज्ञापरिपालकाः ॥ ३७ ॥ ऊचुस्तेचततःसर्वेशिवोविष्णुर्विधिस्तथा ॥ यस्माच्चतेजसःसर्वेवयंजातामहात्मनः ॥ ३८ ॥ तत्तेजश्चसमाया तुवेदमंत्राभियोगतः ॥ इत्येवमभिमंत्रेणमंत्रितंचयदापुनः ॥ ३९ ॥ तदोत्तस्थौपुनश्चायंशुभांगःसुंदरस्तदा ॥ अभिषिक्तैस्तदादेवैर्गणाध्यक्षैर्गजाननः ॥ ४० ॥ तस्यैचदर्शयामासदृष्ट्वाहर्षसमन्विता ॥ वस्त्रैश्चविविधैश्चैवनानालंकरणैस्तथा ॥ ४१ ॥ पूजयित्वातयादेव्यासिद्धिभिश्चाप्यनेकशः ॥ करेणस्पर्शितःसोवै दुःखितोऽसीहपुत्रक ॥ ४२ ॥ धन्योऽसिकृतकृत्योऽसिसर्वपूज्योभवाऽधुना ॥ आननेतवसिंदूरंदृश्यतेसांप्रतंयतः ॥ ४३ ॥ तस्मात्त्वंपूजनीयोसिसिंदू रेणसदानरैः ॥ पुष्पैर्वाचंदनैर्वापिगंधैर्नैवशुभेनच ॥ ४४ ॥ नैवेद्येनपुनस्त्वंचकृत्वानीराजनाविधिम् ॥ तांबूलैरर्घदानैश्चकृत्वाप्रक्रमणंतथा ॥ ४५ ॥ नमस्कारविधानेनपूजांचैवविधास्यति ॥ तस्यवैसकलासिद्धिर्भविष्यतिनसंशयः ॥ ४६ ॥ इत्युक्त्वाचतदादेवीशक्तीरावारयत्तदा ॥ ततःसमस्तास्तादे व्योदेहेदेव्यालयंगताः ॥ ४७ ॥ ततःस्वास्थ्यंचदेवानांजातंतत्क्षणमात्रतः ॥ एतस्मिंश्चक्षणेदेवावासवाद्याःशिवांतदा ॥ ४८ ॥ स्तुत्वाप्रसाद्यतंदेवंनी त्वाचैवशिवांतिके ॥ प्रसाद्यगिरिशंपश्चादुत्संगेसंन्यवेशयन् ॥ ४९ ॥ शिवोपितस्यशिरसिकृत्वाचकरपंकजम् ॥ उवाचवचनंदेवान्पुत्रोऽयमितिचाऽ परः ॥ ५० ॥ गणेशोऽपितदोत्थायनमस्कृत्यशिवायवै ॥ पार्वत्यैचनमस्कृत्यब्रह्माणंविष्णुमेवच ॥ ५१ ॥ नारदाद्यानृषीन्सर्वान्नमस्कृत्यपुरःस्थितः ॥ क्षंतव्यश्चापराधोमेमानश्चैवेदृशोनृणाम् ॥ ५२ ॥ ब्रह्माचशंकरश्चैवविष्णुश्चैवतदास्वयम् ॥ त्रयोवयंयथाचात्रतथाऽयंप्रतिपूज्यताम् ॥ ५३ ॥ वयंचप्राग्यथा पूज्यास्तथापूज्यतरोऽप्यसौ ॥ एतत्पूजांपुराकृत्वापश्चात्पूज्यावयंनरैः ॥ ५४ ॥ वयंचपूजिताःपूर्वंनाऽयंचपूजितोयदा ॥ तदाचफलहानिःस्यान्नात्र

कार्यांविचारणा ॥ ५५ ॥ शिवेनपूजितःपूर्वविष्णुनाचप्रपूजितः ॥ ब्रह्मणाचतथैवाऽत्रपार्वत्याचप्रपूजितः ॥ ५६ ॥ सर्वैर्देववरैश्चैवपूजितःपरयामुदा ॥
सर्वैर्मिलित्वातत्रैवसर्वाध्यक्ष्येनियोजितः ॥ ५७ ॥ पुनश्चैवशिवेनैववरादत्ताह्यनेकशः ॥ त्वन्नामविघ्नहर्त्तेतिश्रेष्ठंचैवभवत्विति ॥ ५८ ॥ ममसर्वगणाध्य
क्षःपूज्योवैत्वंभवाऽधुना ॥ एवमुक्त्वाचवाद्यानिपूजयित्वाह्यनेकशः ॥ ५९ ॥ आशिषश्चाप्यनेकाश्चकृताश्चतत्क्षणेध्रुवम् ॥ ततश्चैवतदादेवान्गी
तवाद्यंचनृत्यकम् ॥ ६० ॥ कारयामासतत्रैवह्यप्सरसांगणैस्तदा ॥ पुनश्चैववरोदत्तःशिवेनैवमहात्मना ॥ ६१ ॥ चतुर्थ्यांत्वंसमुत्पन्नऊर्जेमासिगणेश्व
र ॥ असितेचतथापक्षेचंद्रस्योदयनेशुभे॥६२॥प्रथमेचतथायामेजातेचगिरिजासती॥निर्मयामासतेरूपंतस्मात्तेव्रतमुत्तमम् ॥६३॥ तस्मात्तद्दिनमारभ्य
व्रतंकार्यंसुशोभनम्॥यावत्पुनःसमायातिवर्षांतेचचतुर्थिका ॥६४॥ तावद्व्रतंचकर्तव्यंतवचैवममाज्ञया॥संसारेसुखमिच्छंतिह्यतुलंचाप्यनेकशः ॥ ६५ ॥
तेपूजयंतुत्वांभक्त्याचतुर्थ्यांविधिपूर्वकम् ॥ मार्गशीर्षेतथामासेऽसितायावैचतुर्थिका ॥ ६६ ॥ प्रातःस्नानंतदाकृत्वाविप्रांनिमंत्रयेत्ततः ॥ दूर्वाभिःपूजनं
कार्यमुपवासस्तथाविधः ॥ ६७ ॥ रात्रेश्चप्रहरेजातेसुस्नात्वापूजनंनरः ॥ मूर्तिंधातुमयींकृत्वाप्रवालसंभवांतथा ॥ ६८ ॥ श्वेतार्कसंभवांवापिनिर्मितां
मार्दवींपुनः ॥ प्रतिष्ठाप्यतदातत्रपूजयेत्प्रयतःपुमान् ॥ ६९ ॥ गंधैर्नानाविधैर्दिव्यैश्चंदनैःपुष्पकैरपि ॥ वितस्तिमात्रांदूर्वांचत्र्यग्रांमूलविवर्जिताम्॥७०॥
ईदृशानांदलानांतुशतमेकोत्तरंतथा ॥ एकविंशतिर्वादेवंपूजयेत्परमार्थतः ॥ ७१ ॥ धूपैर्दीपैश्चनैवेद्यैःपूजयेत्परमेश्वरम् ॥ तांबूलाद्यर्घकैश्चैवप्रणिपातैः
स्तवैस्तथा ॥ ७२ ॥ पूजयित्वाचतंतत्रबालचंद्रंचपूजयेत् ॥ पश्चाच्चब्राह्मणंपूज्यभोजयेन्मधुरंमुदा ॥ ७३ ॥ स्वयंचैवतदाभोज्यंमधुरंलवणंविना ॥
विसर्जयेत्ततःपश्चादेवंपूज्यःसदानरैः ॥ ७४ ॥ एवंव्रतेचसंपूर्णेवर्षेजातेनरस्तदा ॥ उद्यापनविधिंकुर्याद्व्रतसंपूर्णहेतवे ॥ ७५ ॥ द्वादशब्राह्मणास्तत्रभोज
नीयामदाज्ञया ॥ कुंभएकश्चसंपूज्यःस्थाप्यमूर्तिंत्वदीयिकाम्॥७६॥अष्टदलंतदाकृत्वादीपंकृत्वाविधानतः ॥ होमश्चैवाऽत्रकर्तव्योवित्तशाठ्यंनकारयेत्
॥७७॥ स्त्रीद्वयंचतदाचात्रबटुद्वयमथापिच ॥ भोजयित्वापूजयित्वामूर्त्यग्रेविधिपूर्वकम् ॥ ७८ ॥ जागरणंततःकार्यंपुनःप्रातश्चपूजयेत् ॥ विसर्जयेत्ततश्चै
वपुनरागमनायच ॥ ७९॥ तिलकंचाशिषोग्राह्याःस्वस्तिवाचनमेवच ॥ पुष्पांजलिंप्रदद्याच्चव्रतसंपूर्णहेतवे ॥८०॥ नमस्कारंततःकुर्यान्नानाकार्यंप्रकल्प
येत् ॥ एवंव्रतंकृतंयेनयथेप्सितफलंलभेत् ॥८१॥ योवैनित्यंत्वदीयांचपूजांचैवस्वभक्तितः ॥ सिंदूरचंदनैश्चैवतंदुलैःश्वेतकैस्तथा॥ ८२ ॥ उपचारैरनेकै
श्चपूजयंतिचयेनराः ॥ तेषांसिद्धिर्भवेन्नित्यंविघ्ननाशोभवेदिह॥८३॥सर्ववर्णैःप्रकर्तव्यंस्त्रीभिश्चविविधेच्छया ॥ उदयाभिमुखैश्चैवराजभिश्चतथैवच ॥८४॥
यंयंकामयतेयोवैतेनसेव्यःसदाभवान् ॥ शिवेनैवंसदाप्रोक्तंगणेशायमहात्मने॥८५॥तदानींदैवतैश्चैवसर्वैश्चऋषिसत्तमैः ॥ तथेत्युक्त्वातुतैःसर्वैर्गाणपत्यं

प्रकल्पितम् ॥ ८६ ॥ ततश्चैवगणाःसर्वेप्रणेमुस्तंगणेश्वरम् ॥ गिरिजायाःसमुत्पन्नोयोवैहर्षस्तदाभृशम् ॥ ८७ ॥ कथंब्रुवेऽहंतंहर्षमुखेनैकेनभोद्विजाः ॥
देवदुंदुभयोनेदुःपुष्पवर्षपपातह ॥ जगत्स्वास्थ्यंतदाप्रापदेवेतस्मिन्प्रतिष्ठिते॥८८॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांगणेशोत्पत्तिर्नामचतुस्त्रिंशोऽ
ध्यायः ॥३४॥सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठाःकिंजातंतुततःपरम् ॥ येनश्रवणमात्रेणसर्वपापक्षयोभवेत् ॥१॥ ततोदेवगणाःसर्वेऋषीणांचगणास्तथा॥
समागताश्चयेतत्रजग्मुस्तेतुशिवाज्ञया ॥२॥ प्रशंसंतःशिवांतत्रगणेशंचततःपुनः॥शिवंचैवतथाप्रीतंकीदृशंयुद्धमेवच ॥३॥ जगत्स्वास्थ्यंतदालेभेशिवोऽ
पिचगणास्तदा ॥ यदाचगिरिजादेवीकोपहीनाबभूवह ॥ ४ ॥ शिवोपिगिरिजांतत्रप्रसाद्यपूर्ववत्तदा ॥ चकारविविधंसौख्यंलोकानांहितकाम्यया ॥ ५ ॥
विष्णुश्चशिवमापृच्छ्यचब्रह्मापिचतथैवच ॥ जगामभवनंस्वंचकृत्वाकार्यंसुदुष्करम् ॥ ६ ॥ नारदोभगवांस्तत्रप्रशस्यगिरिजांतदा ॥ जगामभगवांस्त
त्रगायन्यशअनुत्तमम् ॥ ७ ॥ एतद्वःसर्वमाख्यातंयत्पृष्टोहंमुनीश्वराः ॥ एतस्मिन्नंतरेतत्रपप्रच्छुर्ऋषयस्तदा ॥ ८ ॥ ऋषयऊचुः ॥ गणेशस्यश्रुतं
वृत्तंपुनःकिंचिन्निवेद्यताम् ॥ सूतउवाच ॥ साधुपृष्टंभवद्भिश्चश्रूयतामृषिसत्तमाः ॥ ९ ॥ शिवाचैवशिवश्चैवपरंप्रेमसमावहत ॥ पित्रोर्लालयतोस्तत्रसुखं
चैवविवर्धितम् ॥ १० ॥ तावपिचतयोस्तत्रपरिचर्यापरांगतौ ॥ षण्मुखश्चगणेशश्चपित्रोरधितरंतथा ॥ ११ ॥ स्नेहंचैवव्यवर्धेतांशुक्लपक्षेयथाशशी ॥
कदाचित्तौस्थितौतत्रविचारेचपरायणौ ॥ १२ ॥ विवाहश्चकथंकार्यउभयोःपुत्रयोःशुभः ॥ षण्मुखश्चप्रियतमोगणेशश्चतथैवच ॥ १३ ॥ अहंचपरि
णेष्यामिअहंचैवपुनःपुनः ॥ परस्परंचनित्यंवैवादेचतत्परावुभौ ॥ १४ ॥ तच्छुत्वावचनंतौचविस्मयंपरमंगतौ ॥ किंकर्तव्यंकथंकार्योविवाहविधिरेत
योः ॥ १५ ॥ इतिनिश्चित्यवैतत्रयुक्तिश्चरचितातदा ॥ कदाचित्समयेस्थित्वासमाहूयस्वपुत्रकौ ॥ १६ ॥ कथयामासतुस्तत्रपुत्रयोःपितरौतदा ॥
अस्माभिर्नियमःपूर्वंकृतश्चश्रूयतांपुनः ॥ १७ ॥ द्वावपिचसमौपुत्रौविशेषोनाऽत्रलभ्यते ॥ तस्माच्चैवंकृतंयेनपुत्रयोरुभयोरपि ॥ १८ ॥ तस्यैवप्रथमं
कार्योविवाहःशुभलक्षणः ॥ यश्चैवपृथिवींसर्वांक्रांत्वाशीघ्रमुपाव्रजेत् ॥ १९ ॥ तयोरेवंवचःश्रुत्वाशरजन्मास्वयंतदा ॥ जगाममंदिरात्तूर्णंपृथिवीक्रमणा
यवै ॥ २० ॥ गणपतिश्चतत्रैवविचार्यचपुनःपुनः ॥ किंकर्तव्यंक्वगंतव्यंलंघितुंनैवशक्यते ॥ २१ ॥ क्रोशमात्रंगतंस्याद्वैनगम्येतमयापुनः ॥ किं
पुनःपृथिवीमेतांक्रांत्वासुखमचिंत्यकम् ॥ २२ ॥ इतिविचार्यविप्रेंद्राःश्रूयतांतदनंतरम् ॥ विचार्यैवंगणेशस्तुयच्चकारपरंशुभम् ॥ २३ ॥ स्नानंकृ
त्वायथान्यायंसमागत्यस्वयंगृहम् ॥ उवाचपितरंतत्रमातरंपुनरेवच ॥ २४ ॥ आसनेस्थापितेह्यत्रपूजार्थंभवतोरिह ॥ इतिश्रुत्वावचस्तस्यपार्वतीपर
मेश्वरौ ॥ २५ ॥ अस्थातामासनेतत्रपूजायाग्रहणायवै ॥ तेनैवपूजितौतौचप्रक्रांतौचपुनःपुनः ॥ २६ ॥ एवंचकृतवान्सतत्कृत्वःप्रक्रमणंतुसः॥ बद्धांजलि

स्तदोवाचपितरौप्रेमलालसौ ॥ २७ ॥ भोमातर्भोपितस्त्वंचशृणुत्वंपरमंवचः ॥ शीघ्रंचैवाऽत्रकर्तव्योविवाहःशोभनोमम ॥ २८ ॥ इत्येवंवचनंश्रु
त्वापितरावूचतुस्तदा ॥ प्रक्रमेतभवान्सम्यक्पृथिवींचससागराम् ॥ २९ ॥ कुमारोगतवांस्तत्रत्वंचाऽपिपुनरेवच ॥ गच्छशीघ्रंतथाकृत्वाऽऽगच्छपू
र्वंतवैवहि ॥ ३० ॥ इत्येवंवचनंश्रुत्वावचनंक्रोधसंयुतः ॥ युवाभ्यांश्रूयतांसम्यग्वचनंममसत्तमौ ॥ ३१ ॥ मयातुपृथिवीक्रांतासप्तवारंपुनःपुनः॥ ए
वंकथंसमुच्येतांपुनश्चपितराविह ॥ ३२ ॥ तद्वचस्तुतदाश्रुत्वापितरावूचतुस्तदा ॥ कदाक्रांतात्वयापुत्रपृथिवीगहनैर्युता ॥ ३३ ॥ तयोरेवंवचः
श्रुत्वागणेशोवाक्यमब्रवीत्॥भवतोःपूजनंकृत्वाप्रक्रांताचमयापुनः॥३४॥सप्तवारंतुयच्चैवकिंतत्प्रक्रमणंनहि॥इत्येवंवचनंवेदेशास्त्रेवाधर्मसंचये ॥ ३५ ॥
वर्ततेकिंचतथ्यंनतर्हिकिंसत्यमेवच ॥ पित्रोश्चपूजनंकृत्वाप्रक्रांतिंचकरोतियः ॥ ३६ ॥ तस्यवैपृथिवीजन्यंफलंभवतिनिश्चितम् ॥ अपहायगृहेयोवैपि
तरौतीर्थंकंव्रजेत् ॥ ३७ ॥ तस्यपापंतथाप्रोक्तंहननेचतयोरिह ॥ पुत्रस्यचमहत्तीर्थंपित्रोश्चरणपंकजम् ॥ ३८॥ अन्यत्तीर्थंतुदूरेवैगत्वाप्राप्येतततपुनः ॥
इदंसंनिहितंतीर्थंसुलभंधर्मसाधनम् ॥ ३९ ॥ पुत्रस्यचस्त्रियाश्चैवतीर्थंगेहेसुशोभनम् ॥ पुत्रस्यपितरौप्रोक्तौस्त्रियाभर्ताउदाहृतः ॥ ४० ॥ इतिशास्त्रंत
थावेदोभाषतेयन्निरंतरम् ॥ भवद्भ्यांचप्रकर्तव्यमसत्यंपुनरेवच ॥ ४१ ॥ भवदीयंतथारूपमसत्यंचभवेदिह ॥ तदावेदोह्यसत्योवैभवेदितिनसंशयः॥४२॥
शीघ्रंयथाचभवतिविवाहःक्रियतांशुभः ॥ अथवावेदशास्त्रस्थंव्यलीकंकथ्यतांपुनः ॥ ४३ ॥ द्वयोःश्रेष्ठतमंयच्चकर्तव्यंतत्तथैवच ॥ इतिश्रुत्वावचस्त
स्यविस्मयंपरमंगतौ ॥ ४४ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांगणेशवचनंनामपंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ सूतउवाच ॥ शिवश्चगिरिजाचा
ऽपिपुत्रंबुद्धिविचक्षणम् ॥ ऊचतुस्तावृषिश्रेष्ठायथार्थंभाषितंध्रुवम् ॥ १ ॥ पुत्रतेविमलाबुद्धिःसमुत्पन्नामहात्मनः ॥ त्वयोक्तंयद्वचश्चैवतत्तथैवनचान्य
था ॥ २ ॥ समुत्पन्नेचदुःखेवैयस्यबुद्धिर्विशिष्यते ॥ तस्यदुःखंविनश्येतसूर्येदृष्टेयथातमः ॥ ३ ॥ वेदशास्त्रपुराणेषुयदुक्तंतत्त्वयाकृतम् ॥ पित्रोःप्रक्र
मणेजातेपृथिव्यास्तत्कृतंभवेत् ॥ ४ ॥ इतिवेदपुराणेषुशास्त्रेषुविविधेषुच ॥ सम्यक्त्वयाकृतंयच्चतत्केनाऽपिभवेदिह ॥ ५ ॥ आवाभ्यांमानितंतच्चनाऽ
न्यथाक्रियतेऽधुना ॥ इत्युक्त्वातुसमाश्वास्यगणेशंबुद्धिसागरम् ॥ ६ ॥ विवाहकरणेतौचमतिंचक्रतुरुत्तमाम् ॥[1] ( तस्मात्परीक्ष्यमतिमान्कन्यांलक्षणसं
युताम् ॥ विवाहेतयथानस्यात्सर्वथाऽनर्थभाजनम् ॥ १ ॥ तथाचसंप्रवक्ष्यामिकन्यादोषानशेषतः ॥ यान्विज्ञायसुधीःक्वापिनमज्जेद्दुःखसागरे ॥ २ ॥
कपिलाकेकराक्षीचहीनांगीरोगिणीखला ॥ अलोमाचातिलोम्नीचाधिकाङ्गीपिङ्गलातथा ॥ ३ ॥ वक्रनासाकृशादीर्घास्थपुटाखलतिस्तथा ॥
एताःकन्याःपरित्याज्याविवाहेतुकृतात्मभिः॥४॥ इमेकन्यागतादोषाश्चतुर्दशप्रकीर्तिताः ॥ बाह्याआभ्यन्तरादोषादुर्ज्ञानाअकृतात्मभिः॥५॥तस्माद्वेदो

१ रणवीरज्योतिर्महानिबंधे ' शिवपुराणे एकोनचत्वारिंशेऽध्याये गणेशप्रस्तावे' इत्युक्त्वा , ( ) ' एतच्चिह्नमध्यस्थिता इमेपंचदशसंख्याकाःश्लोका लिखिताःसंति ते चात्र टिप्पण्यां न निक्षिप्य किंचित्संगतत्वान्मूले एव निवेशिताः ॥

क्रमादत्त्यदोषज्ञानंभवेदिह ॥ अष्टौपिण्डान्विधायादौशुद्धमृत्संभवानिह ॥ तैश्चतस्याःपरीक्ष्येतलक्षणंह्यद्भुतञ्चयत् ॥ ६ ॥ क्षेत्राद्गोष्ठाद्वेदितःसिन्धु
तश्चद्यूतस्थानाद्वैरिणाच्चापिसम्यक् ॥ चतुष्पथात्पितृवणात्तथैवमृदोग्राह्याःशुद्धिमभीप्समानैः ॥ ७ ॥ इत्थमानीयमृत्कूटानगंकीर्णान्पृथक्पृथक् ॥
वेदमन्त्रेणसंमन्त्र्यपिण्डितांस्तान्गुरुर्वदेत् ॥ ८ ॥ एतन्मध्येत्वयाग्राह्यंपिण्डमेकंसुलक्षणे ॥ पिण्डेगृहीतेमतिमान्फलंब्रूयात्सुनिश्चितम् ॥ ९ ॥ क्षेत्र
पिण्डेन्नसंयुक्तापातिपुत्रसुखान्विता ॥ गोष्ठपिण्डेपतिमतीरूपिणीवेदिपिण्डतः ॥ १० ॥ नदीपिण्डेसमृद्धास्याद्द्यूतपिण्डेशठाभवेत् ॥ प्रव्राटसृतीपिण्डा
द्वैरिणाद्धनवर्ज्जिता ॥ ११ ॥ श्मशानपिण्डेसुक्रूरापतिघ्नीस्यान्नसंशयः ॥ आन्तरंलक्षणंवीक्ष्यकुर्याद्भार्यामनोरमाम् ॥ १२ ॥ इमेकन्यागतादोषामयाते
द्यप्रकीर्तिताः ॥ पितृसम्बन्धिनीदोषाञ्छृणुत्वंवरवर्णिनि ॥१३ ॥ हीनकर्माऽथानिश्छंदोलोमशोऽर्शसआमयी॥क्षयीनिष्पौरुषःश्वित्रीकुष्ठच्यपस्मारिणस्त
था ॥ १४ ॥ दशेमान्पितृदोषांश्चपरीक्ष्यविधिवद्बुधः ॥ कन्यांसुलक्षणवतींविवाहेतमुदान्वितः ॥ १५ ॥ ) एतस्मिन्नंतरेतत्रविश्वरूपसुतेउभे ॥ ७ ॥ सि
द्धिबुद्धीइतिख्यातेसर्वांगसुंदरेशुभे ॥ ताभ्यांचैवगणेशस्यविवाहंचक्रतुर्मुदा ॥ ८ ॥ संतुष्टादेवताःसर्वाविवाहेसमुपागमन् ॥ यथाचैवशिवस्यैवगिरिजाया
मनोरथः ॥ ९॥ तथाचविश्वकर्माऽसौविवाहंकृतवांस्तदा ॥ यथाचऋषयोदेवालेभिरेपरमांमुदम् ॥१०॥ गणेशोऽपितदाताभ्यांसुखंचैवाप्यचिंत्यकम् ॥
प्राप्तवांश्चतदातत्रवर्णितुंनैवशक्यते॥११॥कियताचैवकालेनतस्यपुत्रौबभूवतुः ॥ सिद्धेर्लक्षस्तथाबुद्धेर्लाभःपरमशोभनः॥१२॥ एवंसुखमचिंत्यंवैभुंजाने
चगणेश्वरे ॥ आजगामगुहश्चाऽथक्रांत्वाचपृथिवींतदा॥१३॥तावच्चनारदेनैवकैलासेप्रतिबोधितः ॥ त्वयाचश्रूयतांसर्वंपितृभ्यांतुकृतंहियत्॥१४॥निष्का
म्यत्वांतुतीर्थार्थमिषमुत्पाद्यवैशृणु॥गणेशश्चकृतोद्वाहोलब्धवान्स्त्रीद्वयंतथा॥१५॥पुत्रद्वयंतथालब्ध्वासुखंभुंक्तेनिरंतरम्॥ भवतापृथिवीक्रांतातस्यैवंकृत
मुत्तमम्॥१६॥पितृभ्यांक्रियतेचेद्वैअन्यःकिंनकरोतिच॥ असम्यक्चकृतंताभ्यांचित्तेननशुभंमतम्॥१७॥दद्याद्यदिविषंमातापित्राविक्रीयतेयदि॥राज्ञाचे
द्ध्रियतेसर्वंकस्मैकिंचब्रवामहे॥१८॥येनैवंचकृतंस्याद्वैतन्मुखंनविलोकयेत्॥इतिनीतिर्भवेदद्ययथेच्छसितथाकुरु॥१९॥ इत्युक्त्वानारदस्तस्माअंतर्द्धान
मुपागतः ॥ स्कंदोऽपिपितरौनत्वाकोपाग्निज्वलितस्तदा ॥ २० ॥ जगामपर्वतेक्रौंचेपितृभ्यांवारितोऽपिसन् ॥ वाग्दानंचकृतंतेऽद्यकथंचगम्यतेत्वया
॥ २१ ॥ इत्येवंचनिषिद्धोऽपिएवमुक्त्वाजगामसः ॥ नस्थातव्यंमयाह्यत्रयद्येवंकपटंकृतम् ॥ २२ ॥ एवमुक्त्वागतस्तत्रह्यद्यापिपर्वतेशुभे ॥ वर्ततेद
र्शनेनैवलोकानांपापहारकः ॥ २३ ॥ तद्दिनंहिसमारभ्यकुमारत्वंप्रतिष्ठितम् ॥ तन्नामशुभदंलोकेप्रसिद्धंभुवनत्रये ॥ २४ ॥ कार्तिक्यांचसदादेवाऋ
षयश्चतपोधनाः ॥ गत्वाक्रौंचनगेतत्रकुर्वंतिस्वामिदर्शनम् ॥ २५ ॥ कार्तिक्यांकृत्तिकायोगेयःकुर्यात्स्वामिदर्शनम् ॥ तस्यपापंदहेत्सर्वंमनेप्सितफलं

लभेत् ॥ २६ ॥ उमापिदुःखमापन्नास्कंदस्यविरहेसति ॥ तत्सुखार्थेस्वयंशंभुरंशेनपर्वतेगतः ॥ २७ ॥ मल्लिकार्जुननामाऽऽसीज्ज्योतिर्लिंगंसुखावहम्॥
अद्यापिदृश्यतेतत्रशिवयासहितःशिवः ॥ २८ ॥ तमागतंसविज्ञायततोगंतुंसमुत्सुकः ॥ देवैश्चप्रार्थितःसोऽपिदूरतोयोजनत्रयम् ॥ २९ ॥ पर्वणिपर्वणि
तत्रदर्शनार्थंचगच्छति ॥ अमावास्यादिनेशंभुःस्वयंगच्छतितत्रह ॥३०॥ पार्वतीगच्छतेतत्रपौर्णमासीदिनेशुभे ॥ एतत्तस्यचवृत्तांतंपृष्टंचकथितंमया ॥
यच्छ्रुत्वासर्वपापेभ्योमुच्यतेसर्वथानरः ॥ ३१ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांगणपतिपरिणयनंनामषट्त्रिंशोऽध्यायः ॥ ३६ ॥ ऋषयऊचुः ॥
सूतजानासिसकलंनाऽज्ञातंविद्यतेतव ॥ शिवमाहात्म्यंविशेषेणकथनीयंत्वयाऽधुना ॥ १ ॥ धन्योऽसिकृतकृत्योऽसिसार्थकंदेहधारणम् ॥ जातंतवैवसं
योगात्किंपुनर्वर्णयामहे ॥ २ ॥ इत्येवंवचनंतेषांश्रुत्वासूतोऽब्रवीदिदम् ॥ सूतउवाच ॥ साधुपृष्टंभवद्भिश्चलोकानांहितकाम्यया ॥ ३ ॥ भवंतश्चतथा
धन्याःपवित्राःकुलभूषणाः ॥ येषांचैवाशिवःसाक्षाद्दैवतंपरमंशुभम् ॥ ४ ॥ सदाशिवकथालोकेवल्लभाभवतांसदा ॥ तेधन्याश्चकृतार्थाश्चसफलंदेहधार
णम् ॥ ५ ॥ उद्धृतंचकुलंतैस्तुयेशिवंसमुपासते ॥ यस्यमुखेशुभंनामसदाशिवशिवेतिच ॥ ६ ॥ पापानिनस्पृशंतीहखदिरांगारकंयथा ॥ श्रीशिवाय
नमस्तुभ्यंमुखाद्व्याहरतेयदा ॥ ७ ॥ तन्मुखंचतदायोवैपश्यतितत्क्षणेनरः ॥ तीर्थजन्यंफलंतस्यभवतीतिसुनिश्चितम् ॥ ८ ॥ यत्रत्रयंसदातिष्ठेदेतच्छुभ
तरंनरे ॥ तस्यदर्शनमात्रेणवेणीस्नानफलंलभेत् ॥ ९ ॥ शिवनामविभूतिश्चरुद्राक्षात्तृतीयाशुभा ॥ एतत्त्रयंशरीरेचयस्यतिष्ठतिनित्यशः ॥ १० ॥
तस्यैवदर्शनंलोकेदुर्लभंपापहारकम् ॥ तद्दर्शनंगयावेणीगंगाचैवसरस्वती ॥ ११ ॥ एवंयोनविजानातितस्यैवदर्शनादिह ॥ नरोवाप्यथवानारीपापिष्ठोभ
वतिक्षणात् ॥ १२ ॥ विभूतिर्यस्यनोभालेगलेरुद्राक्षधारणम् ॥ नहिशिवमयीवाणीतंत्यजेदंत्यजंयथा ॥ १३ ॥ शैवंनामतथागंगाविभूतिर्यमुनातथा ॥
रुद्राक्षाविधिजाप्रोक्तासर्वपापप्रणाशिनी ॥ १४ ॥ शरीरेचत्रयंयस्यतत्फलंचैकतःस्मृतम् ॥ एकतोवेणिकायाश्चदर्शनेनफलंतुयत् ॥ १५ ॥ तदेवतुलि
तंपूर्वंब्रह्मणाहितकारिणा ॥ समतांचैवतद्यातंतस्माद्धार्यंसदाबुधैः ॥ १६ ॥ तद्दिनंहिसमारभ्यब्रह्मादिभिःपुरातनैः ॥ धार्यतेत्रितयंतच्चदर्शनात्पापहार
कम् ॥ १७ ॥ दर्शनस्यफलंह्येतत्किंपुनर्धारकस्यच ॥ ऋषयऊचुः ॥ ईदृशंहिफलंप्रोक्तंरुद्राक्षासंभवंत्वया ॥ १८ ॥ तन्माहात्म्यंविशेषेणवक्तुमर्हसित
त्वतः ॥ इत्येवंवचनंश्रुत्वासूतोवचनमब्रवीत् ॥ १९ ॥ सूतउवाच ॥ सम्यक्पृष्टमृषिश्रेष्ठाःकथयामिपुरातनम् ॥ रुद्रसंख्याशतंधृत्वारुद्ररूपोभवेन्नरः
॥ २० ॥ एकादशशतानीहधृत्वायत्फलमाप्यते ॥ तत्फलंशक्यतेनैववक्तुंवर्षशतैरपि ॥ २१ ॥ पंचभिश्चशतैश्चैवशतार्धेनतथापुनः ॥ रचित्वामुकुटं
योवैधारयेत्साशिवस्तथा ॥ २२ ॥ त्रिभिश्चैवशतैःप्रोक्तंषष्ट्यायुक्तैर्मुनीश्वराः ॥ उपवीतंतथातस्यत्रिरावृत्तंतथापुनः ॥ २३ ॥ शिखायांचतथाप्रोक्तंत्रयं

चऋषिसत्तमाः ॥ कर्णयोःपंचषट्चैवदक्षिणोत्तरयोस्तथा ॥ २४ ॥ शतमेकोत्तरंकंठेबाह्वोश्चरुद्रसंख्यया ॥ कर्णयोर्धारयेत्तत्रमणिबंधेतथापुनः ॥ २५ ॥
उपवीतेत्रयंधार्यंमुक्तिकामीभवेन्नरः ॥ शेषाश्चोर्वरिताश्चैवपंचशन्मुनिसत्तमाः ॥ २६ ॥ कटिसूत्रंतथाकृत्वानाभौचधारयेद्बुधः ॥ एवंसंख्याधृतायेनसशि
वोनात्रसंशयः ॥ २७ ॥ ध्यानंकृत्वायदातेनस्थितंस्यादासनेशुभे ॥ शिवेतिव्याहरंतंचदृष्ट्वापापैःप्रमुच्यते ॥ २८ ॥ एकासनेयदातेनलक्षाणांपंचकंध्रु
वम् ॥ मंत्रजाप्यंयथोक्तंचशापानुग्रहतांव्रजेत् ॥ २९ ॥ तद्दर्शनंतदाकृत्वागंगास्नानफलंलभेत् ॥ त्रिपुंडरेणयुक्तंचरुद्राक्षाभिःसमन्वितम् ॥ ३० ॥
मृत्युंजयंजपंतंचदृष्ट्वारुद्रफलंलभेत् ॥ कंठेचापितथाधृत्वासर्वपापैःप्रमुच्यते ॥३१॥ रुद्राक्षमालयायोवैमंत्रंस्मरतिनित्यशः ॥ तस्यनाम्नांशतेनैवसहस्र
स्यफलंलभेत् ॥ ३२ ॥ शिवस्यैवतथाविष्णोःसूर्यस्यैवाऽथवापुनः ॥ शक्तेर्गणपतेर्जाप्येरुद्राक्षाःशुभदाःस्मृताः ॥ ३३ ॥ सर्वेषांचैवदेवानांजाप्येह्येताः
प्रकीर्तिताः ॥ यस्यकस्यापिभक्तोपिरुद्राक्षाभिःफलंलभेत् ॥ ३४ ॥ मुक्तिकामीभवेद्योवैभुक्तिकामस्तथापुनः ॥ पुत्रार्थीचधनार्थीचविद्यार्थीचविशेषतः
॥ ३५ ॥ कन्याकामोभवेद्योवैयशस्कामस्तथापुनः ॥ यंयंकाममपेक्ष्यैवजपंकुर्यान्निरंतरम् ॥ ३६ ॥ तंतंकामंचरुद्राक्षायच्छंतिनात्रसंशयः ॥
रुद्रभक्तोविशेषेणधारयेन्मालिकांसदा ॥ ३७ ॥ विष्णोरपिचभक्तश्चजपंकुर्यात्तथैवच ॥ वस्तुतःसर्वदेवानांजाप्येमुख्याउदाहृताः ॥ ३८ ॥
कामतोऽकामतश्चैवरुद्राक्षाभिःफलंलभेत् ॥ तस्माच्छ्रेष्ठतमालोकेरुद्राक्षाश्चप्रकीर्तिताः ॥ ३९ ॥ सुवर्णगुलिकाभिस्तुलक्ष्मीकामोजपेन्नरः ॥ मुक्ताभि
स्तुयशस्कामःकुर्याज्जपमनुत्तमम् ॥ ४० ॥ स्फाटिकैःपुत्रकामस्तुप्रवालैर्वश्यतांव्रजेत् ॥ वाहनार्थंजपेद्रौप्यैरुद्राक्षामुक्तिदाःस्मृताः ॥ ४१ ॥ भुक्ति
दाश्चतथाप्रोक्ताःसर्वकामफलप्रदाः ॥ देवतांतरभेदेनमालानानाविधाःस्मृताः ॥ ४२ ॥ शिवस्यैवतथाविष्णोरुद्राक्षामालिकाशुभा ॥ सूर्यस्यस्फाटि
काप्रोक्ताजाप्येश्रेष्ठापुरातनैः ॥ ४३ ॥ मुक्ताभिस्तुप्रवालैश्चचंडीतुष्टिमवाप्नुयात् ॥ गणेशश्चतथातैस्तुसंतुष्टोभवतिक्षणात् ॥ ४४ ॥ रुद्राक्षाश्चविशेषे
णहरतुष्टिकराःस्मृताः ॥ मुक्ताभिर्वाऽथयुक्ताभीरुद्राक्षाभिर्हरिःस्वयम् ॥ ४५ ॥ नानोपासनभेदेनफलंनानाविधंस्मृतम् ॥ ईदृशंतत्फलंचैवरुद्राक्षाभि
रवाप्यते ॥ ४६ ॥ सुवर्णमालिकाप्रोक्तालक्ष्मीजाप्येसुखावहा ॥ सर्वैश्चऋषिभिश्चैवव्यासादिभिःपुरातनैः ॥ ४७ ॥ शास्त्राणिचविचार्यैवरुद्राक्षाःशुभदाः
स्मृताः ॥ रुद्राक्षाविविधाःप्रोक्तास्तासांभेदंवदाम्यहम् ॥४८॥ एकमुखीभवेद्यावैसर्वसिद्धिविधायिनी ॥ सिद्धयोऽष्टौचतत्रैवयत्रस्याच्छुभदाचसा ॥४९॥
द्विमुखीचभवेद्यावैलक्ष्मीदूरतरानहि ॥ त्रिमुखीचभवेद्यत्रविद्याःसर्वाःप्रतिष्ठिताः ॥५०॥ चतुर्मुखीचयास्याद्वैचतुर्वर्गफलप्रदा ॥ पंचमुखीचयत्रैवतत्रस्या
त्पापनाशनम् ॥५१॥ एकमुखीचरुद्राक्षादुर्लभाऋषिसत्तमाः ॥ बदरीफलमात्रासास्याच्चैवऋषिसत्तमाः ॥५२॥ तथापिफलदालोकेसुखसौभाग्यवर्धिनी ॥

आमलकसदृशीयातुसर्वारिष्टविनाशिनी ॥ ५३ ॥ चणकेनसमायातुवर्तुलाचशुभाकृतिः ॥ समणिर्बहुमूल्यःस्यात्किंपुनर्मालिकाततः ॥ ५४ ॥
प्रत्येकंचस्वयंशंभुर्नात्रकार्याविचारणा ॥ सार्वभौममिदंराज्यंनतेनतुल्यमर्हति॥५५॥दत्त्वातुहेमराशिंचशतंवामौक्तिकोत्तमान् ॥ धार्यासातुतदामालाना
न्यथाऋषिसत्तमाः ॥५६॥ मूल्याभावेतुसामालाविपरीतंफलंदिशेत् ॥ पुण्यदत्तातुसाग्राह्यामूल्याभावेपिमालिका॥५७॥चणकेनसमायाहिरुद्राक्षाबहुपु
ण्यदा ॥ पापघ्नीऋद्धिदाचैवभोगमोक्षप्रदायिनी ॥ ५८ ॥ सर्वस्वंतुप्रदत्त्वाचग्राह्यासामालिकोत्तमा ॥ गुंजयासदृशीयास्यात्सर्वार्थफलसाधनी ॥५९॥
यथायथालघुःस्याद्वैतथातथाऽधिकप्रदा ॥ एकैकस्यफलंप्रोक्तंदशांशैरधिकंबुधैः ॥ ६० ॥ यथाचदृश्यतेलोकेरुद्राक्षाफलदाशुभा ॥ तथानदृश्यतेऽ
न्याचमालिकाऋषिसत्तमाः ॥ ६१ ॥ रुद्राक्षाधारणंप्रोक्तंपापनाशनहेतवे ॥ तस्माच्चधारणीयावैसर्वार्थसाधनेप्सिता ॥ ६२ ॥ यस्यांऽगेनैवरुद्राक्षाजाप्यं
वाकुरुतेनच ॥ तदंगंनस्पृशेत्प्राज्ञोदृष्ट्वादूरतरोव्रजेत् ॥ ६३ ॥ रुद्रभक्तैर्विशेषेणधारणीयाशुभायवै ॥ यश्चब्रुवन्भवेच्चैवधारयेद्भक्तिमान्सदा ॥ ६४॥
सर्वेष्वपिचबीजेषुदृश्यतेविविधांकुरः ॥ रुद्राक्षबीजकेसृष्टादृश्यतेमुक्तिरुत्तमा ॥ ६५ ॥ अन्यानिचापिदृश्यंतेफलानिऋषिसत्तमाः ॥ तदहंकथया
म्यद्यधारकाणांहितायवै ॥ ६६ ॥ रुद्राक्षमालिनंदृष्ट्वाभूतप्रेतपिशाचकाः ॥ डाकिनीशाकिनीचैवयेचान्येद्रोहकारकाः ॥ ६७ ॥ कृत्रिमंचैवयत्किंचि
दभिचारादिकंचयत् ॥ रुद्राक्षमालिकांदृष्ट्वाशिवोविष्णुःप्रसीदति ॥ ६८ ॥ चिह्नैरेतैःशुभाज्ञेयाप्रेक्षावद्भिर्मुनीश्वराः ॥ एकमुखीचयास्याद्वैप्रतिपूरं
व्रजेदिह ॥ ६९ ॥ द्विमुखीचतथाज्ञेयाधारकोनैवदह्यते ॥ त्रिमुखीचयदास्याद्वैशस्त्रघातादिकंनहि ॥ ७० ॥ चतुर्मुखीतदाज्ञेयाचौराश्चान्धाभवंतिहि ॥
जलेतुमुच्यमानासामज्जतिनतरेदिह ॥ ७१ ॥ पंचमुखीतुयाप्रोक्तासर्वानर्थनिवर्तिनी ॥ जलेनमज्जतिसाचसर्वदाशुभदायिनी ॥ ७२ ॥ एवंज्ञात्वाफलं
सम्यग्धार्याधर्मविवृद्धये ॥ सूतकेमृतकेवापिमलमूत्रविसर्जने ॥ ७३ ॥ भोजनेरतिकालेचरुद्राक्षंतुविवर्जयेत् ॥ स्नानेदानेजपेहोमेस्वाध्यायेपितृतर्पणे
॥ ७४ ॥ विष्णुशिवादिपूजायांश्राद्धकालेक्षधारणम् ॥ एतत्सर्वंसमाख्यातंयत्पृष्टोहिमुनीश्वराः ॥ ७५ ॥ एवंयःशृणुयान्नित्यंमाहात्म्यंपरमंशुभम् ॥
रुद्राक्षमालिकायाश्चशिवस्यातिप्रियोभवेत् ॥ ७६ ॥इतिश्रीशिवमहापुराणेज्ञानसंहितायांरुद्राक्षमाहात्म्यंनामसप्तत्रिंशोऽध्यायः॥ ३७॥ ऋषयऊचुः ॥
सम्यगुक्तंत्वयासूतलोकानांहितकाम्यया ॥ पुनश्चकथ्यतांह्येतच्छिवमाहात्म्यमुत्तमम् ॥ १ ॥ शृण्वंतश्चमुखांभोजान्नतृप्ताःस्मवयंप्रभो ॥ पृथिव्यां
यानिलिंगानितीर्थेतीर्थेभवंतिहि ॥ २ ॥ अन्यत्रवास्थलेयानिप्रसिद्धानियथाप्रभो ॥ यत्रयत्रभवेल्लिंगंतत्तत्सर्वंनिवेद्यताम् ॥ ३ ॥ इतश्रुत्वावचस्ते
षांवचनंचेदमब्रवीत् ॥ सूतउवाच ॥ यत्पृष्टंहिऋषिश्रेष्ठालिंगानिकथयाऽधुना ॥ ४ ॥ सर्वेषांचैवलिंगानांसंख्यानंविद्यतेकुतः ॥ सर्वालिंगमयीभूमिः

सर्वंलिंगमयंजगत् ॥ ५ ॥ लिंगमयानितीर्थानिसर्वंलिंगेप्रतिष्ठितम् ॥ संख्यानविद्यतेतेषांतत्किंचैवब्रवीमिह ॥ ६ ॥ यत्किंचिद्दृश्यतेदृश्यंवर्ण्यतेस्मर्यतेचयत् ॥ तत्सर्वंशिवरूपंचनान्यदस्तीतिकिंचन ॥ ७ ॥ तथापिश्रूयतांद्येतत्कथयामियथाश्रुतम् ॥ लिंगानिचऋषिश्रेष्ठाःपृथिव्यांयानितानिह ॥ ८ ॥ पातालेचापिवर्ततेस्वर्गेचापितथैवह ॥ सर्वैश्चपूज्यतेशंभुःसदेवासुरमानुषैः ॥ ९ ॥ तथाऽपिशंभुनाव्याप्तंसदेवासुरमानुषम् ॥ अनुग्रहायलोकानांलिंगानिचमहेश्वरः ॥ १० ॥ दधातिविविधान्यत्रतीर्थेचैवस्थलेपुनः ॥ यत्रयत्रयदाशंभुर्भक्त्याभक्तैश्चसंस्मृतः ॥ ११ ॥ तत्रतत्राऽवतीर्याऽथकार्यंकृत्वाचसंस्थितः ॥ लोकानामुपकारार्थंलिंगंचैवाऽप्यकल्पयत् ॥ १२ ॥ तल्लिंगंपूजयित्वाचसिद्धिंसमधिगच्छति ॥ तेषांचापिनविद्येतसंख्याचऋषिसत्तमाः ॥ १३ ॥ तथाऽपिश्रूयतांसम्यग्यथाज्ञानंयथाश्रुतम् ॥ पृथिव्यांयानिलिंगानितेषांसंख्यानविद्यते ॥ १४ ॥ तथापिचप्रधानानिकथ्यंतेचमयापुनः ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्यतेमानवःक्षणात् ॥ १५ ॥ प्रधानेषुचयानीहमुखाच्चैववदाम्यहम् ॥ लिंगानिज्योतिषांचात्रविद्यंतेऋषिसत्तमाः ॥ १६ ॥ तान्यहंकथयाम्यद्यश्रुत्वापापंव्यपोहति ॥ सौराष्ट्रेसोमनाथंचश्रीशैलेमल्लिकार्जुनम् ॥ १७ ॥ उज्जयिन्यांमहाकालमोंकारपरमेश्वरम् ॥ केदारंहिमवत्पृष्ठेडाकिन्यांभीमशंकरम् ॥ १८ ॥ वाराणस्यांचविश्वेशंत्र्यंबकंगौतमीतटे ॥ वैद्यनाथंचिताभूमौनागेशंदारुकावने ॥ १९ ॥ सेतुबंधेचरामेशंघुश्मेशंचशिवालये ॥ द्वादशैतानिनामानिप्रातरुत्थाययःपठेत् ॥ २० ॥ सर्वपापविनिर्मुक्तोसर्वसिद्धिफलोभवेत् ॥ यंयंकाममपेक्ष्यैवपठिष्यंतिनरोत्तमाः ॥ २१ ॥ तस्यतस्यफलप्राप्तिर्भविष्यतिनसंशयः ॥ एतेषांदर्शनादेवपातकंनैवतिष्ठति ॥ २२ ॥ कर्मक्षयोभवेत्तस्ययस्यतुष्टोमहेश्वरः ॥ ज्योतिषांचैवलिंगानिदृष्टानिऋषिसत्तमाः ॥ २३ ॥ तेषांचजननीगर्भेवासोनैवभवेत्पुनः ॥ एतेषांपूजनेनैववर्णानांदूषणंस्मृतम् ॥ २४ ॥ नैवेद्यंचैवसंग्राह्यंभोजनीयंप्रयत्नतः ॥ भुक्तेसर्वाणिपापानिभस्मसाद्यांतितत्क्षणात् ॥ २५ ॥ ज्योतिषांचैवलिंगानांफलंवक्तुंनशक्यते ॥ एकंचपूजितंयेनषण्मासंचनिरंतरम् ॥ २६ ॥ तस्यदुःखंनजायेतमातृगर्भसमुद्भवम् ॥ हीनयोनौयदाजातोज्योतिर्लिंगंचपश्यति ॥ २७ ॥ तस्यजन्मभवेत्तत्रविमलेसत्कुलेपुनः ॥ सत्कुलेजन्मसंप्राप्यधनाढ्योवेदपारगः ॥ २८ ॥ शुभकर्मतदाकृत्वामुक्तिंयात्यनपायिनीम् ॥ म्लेच्छोवाप्यंत्यजोवापिषंढोवाऽथमुनीश्वराः ॥ २९ ॥ द्विजोभूत्वालभेन्मुक्तिंतस्माच्चदर्शनंचरेत् ॥ अतःपरंचतर्थिषुस्थलेचैवाथवापुनः ॥ ३० ॥ प्रधानानिचवर्ततेतेषांनामानिवैतथा ॥ ज्योतिषांचोपलिंगानिश्रूयतामृषिसत्तमाः ॥ ३१ ॥ सोमेश्वरस्ययल्लिंगमंधकेशमुदाहृतम् ॥ मह्याःसागरसंयोगेतल्लिंगमुपलिंगकम् ॥ ३२ ॥ मल्लिकार्जुनसंभूतंभृगुकच्छेऽथरुद्रकम् ॥ महाकालस्ययल्लिंगंदुग्धेशमितिविश्रुतम् ॥ ३३ ॥ ओंकारसंभवंलिंगंकर्दमेशमितिस्वयम् ॥ केदारेश्वरसंजातंभूतेशंय

मुनातटे ॥ ३४ ॥ भीमशंकरसंभूतंभीमेश्वरइतिस्मृतम् ॥ विश्वेश्वराच्चयज्जातंशरण्येश्वरविश्रुतम् ॥ ३५ ॥ त्र्यंबकस्यचयत्प्रोक्तंसिद्धेश्वरइतिश्रुतम् ॥
वैद्यनाथेश्वराज्जातंवैजनाथइतिश्रुतम् ॥३६॥ नागेश्वरसमुद्भूतंभूतेश्वरमुदाहृतम् ॥ झिल्लिकासरस्वतीतीरेदर्शनात्पापहारकम् ॥ ३७ ॥ रामेश्वराच्चय
ज्जातंगुप्तेश्वरमुदाहृतम् ॥ घुश्मेशाच्चैवयज्जातंव्याघ्रेश्वरइतिस्वयम् ॥ ३८ ॥ एतानिचप्रधानानिमुख्यतांचगतानिच ॥ अन्यान्यपिचमुख्यानिश्रूयता
मृषिसत्तमाः ॥ ३९ ॥ गंगातीरेचमुख्यत्वंप्राप्तंयेनविमुक्तिदम् ॥ कृत्तिवासेश्वरःसाक्षात्तत्तुल्योवृद्धकालकः ॥ ४० ॥ तिलभांडेश्वरश्चैवदशाश्वमेधएवच॥
गंगासागरसंयोगेसंगमेश्वरइतिस्मृतः ॥ ४१ ॥ यमुनातीरकेयश्चगोधूमेश्वरएवच ॥ नीलेश्वरइतिख्यातोवृंदावनसमीपगः ॥ ४२ ॥ भूतेश्वरइतिप्रोक्तः
सर्वार्थसाधकोनृणाम् ॥ नारीश्वरइतिख्यातःकौशिक्यास्तुसमीपतः ॥४३॥ कटुकेश्वरनामासीद्वर्ततेगल्कीतटे ॥ पूरेश्वरइतिख्यातःपुष्करस्यसमीपतः
॥ ४४ ॥ मंडकेशइतिख्यातःफल्गुतीरेसदाशिवः ॥ सिद्धनाथेश्वरश्चैवदर्शनात्सिद्धिदोनृणाम् ॥ ४५ ॥ दूरेश्वरइतिख्यातःपत्तनेचोत्तरेतथा ॥ मृगे
श्वरश्चनाम्नावैजननाथस्तथैवच ॥ ४६ ॥ नर्मदातीरकेसंतितेषांसंख्यानविद्यते॥साचरुद्रस्वरूपाहिवर्ततेपापहारिका ॥४७॥ तस्यांस्थिताश्चयेकेचित्पा
षाणाःशिवरूपिणः ॥ तथाऽपिचप्रवक्ष्यामिनामानिचमुनीश्वराः ॥४८ ॥ आवर्त्तेश्वरनामाऽपिवर्त्ततेपापहारकः ॥ पद्मेश्वरइतिख्यातःसिंहेश्वरस्तथैवच॥
॥ ४९ ॥ सुमेश्वरस्तथाचात्रकुमारेश्वरएवच ॥ पुंडरीकेशइतिख्यातोमंडपेश्वरएवच॥५०॥तीक्ष्णेशनामातत्रासीद्दर्शनात्पापहारकः ॥ धुंधरेश्वरनामाऽ
पिवर्त्ततेनर्मदातटे ॥ ५१ ॥ शूलेश्वरइतिख्यातःकुंभेश्वरस्तथाऽपिच ॥ कुबेरेश्वरनाम्नावैविख्यातोभुवनत्रये ॥ ५२ ॥ ततःसोमेश्वरोदेवोनीलकंठइतिस्व
यम् ॥ मंगलेशइतिप्रोक्तोमंगलायतनंमहत्॥५३॥ततश्चनंदिकोदेवोहत्याकोटिनिवारकः ॥ नंदिकेशंचयश्चैवपूजयेत्परयामुदा॥५४॥तस्यतस्याऽखिला
सिद्धिर्भविष्यतिनसंशयः ॥ तत्रतीरेचयःस्नातितस्यपापंविनश्यति॥५५॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांज्योतिर्लिंगनिरूपणंनामाऽष्टत्रिंशोऽध्या
यः॥ ३८ ॥ ॥ ऋषयऊचुः ॥ एवंमाहात्म्यकंतत्रकथ्यतांचत्वयाधुना॥अतःपरंचयज्जातंतत्तत्त्वंवक्तुमर्हसि॥१॥ सूतउवाच॥सम्यगुक्तंभवद्भिश्चकथयामि
यथाश्रुतम् ॥ पुरायुधिष्ठिरेणैवपृष्टश्चऋषिसत्तमः ॥ २ ॥ रेवायाःपश्चिमेतीरेकर्णकीनाममैपुरी ॥ तत्राद्विजवरःकश्चिदुतथ्यकुलसंभवः ॥ ३ ॥ काश्यांग
तश्चपुत्राभ्यामर्पयित्वास्वपत्निकाम् ॥ कदाचित्समृतस्तत्रपुत्राभ्यांचश्रुतंतदा ॥ ४ ॥ तदीयंचैवयत्कृत्यंसंपाद्यपुत्रकावुभौ ॥ पत्नीचपालयामासपुत्रौ
पुत्रहितैषिणी ॥ ५ ॥ पुत्रौपरिणायित्वातौविभक्तंचधनंतया ॥ स्वीयंचरक्षितंकिंचित्कियत्कालंस्थितातदा ॥ ६ ॥ कदाचिन्म्रियमाणासापुण्यंचविवि
धंतथा ॥ कृत्वाप्राणान्नमुच्येतकष्टंदृष्ट्वाऽथपुत्रकौ ॥ ७ ॥ ऊचतुर्मातरंतत्रकिंन्यूनंविद्यतेतव ॥ यन्न्यूनंम्रियतांमातस्तदावांकरवावहे ॥ ८ ॥ इत्युक्तंच

तयातत्रन्यूनंचविद्यतेबहु ॥ तदेवक्रियतेचेद्धिसुखेनमरणंभवेत् ॥ ९ ॥ ज्येष्ठपुत्रश्चयश्चासीत्तेनोक्तंकथ्यतांत्वया ॥ तयाचप्रार्थितंह्येतत्पुरामेमनसःस्पृहा ॥ १० ॥ काश्यांगंतुंतथानासीदिदानींम्रियतेपुनः ॥ ममास्थीनित्वयापुत्रक्षेपणीयान्यतंद्रितम् ॥ ११ ॥ गंगाजलेशुभंतेऽद्यभविष्यातिनसंशयः ॥ इत्युक्तेचतयापुत्रोवचनंचेदमब्रवीत् ॥ १२ ॥ मातस्त्वयासुखेनैवप्राणास्त्याज्यानसंशयः ॥ तवकार्यंपुराकृत्वापश्चात्कार्यंमदीयकम् ॥ १३ ॥ इतिहस्तेवचोदत्त्वायावत्पुत्रोगृहंगतः ॥ तावत्साचमृतातत्रहरिस्मरणतत्परा ॥ १४ ॥ तस्याश्चैवचयत्कृत्यंतत्सर्वंसंविधायवै ॥ मासिकंचैवकृत्वा तुगमनायोपचक्रमे ॥ १५ ॥ तयोःश्रेष्ठतमोयोवैसुवादोनामविश्रुतः ॥ तदस्थीनिसमादायानिःसृतस्तीर्थकाम्यया ॥ १६ ॥ संगृह्यसेवकंकंचित्तेनैवसाहितस्तदा ॥ आश्वास्यभार्यांपुत्रांश्चमातुःप्रियचिकीर्षया ॥ १७ ॥ श्राद्धंदानादिकंभोज्यंकृत्वाविधिमनुत्तमम् ॥ मंगलस्मरणंकृत्वानिर्जगामद्विजःस्वयम् ॥ १८ ॥ तद्दिनेयोजनंगत्वावसतिंग्रामकेशुभे ॥ द्विजगेहेतदाकृत्वासंध्यादिविधिपूर्वकम् ॥ १९ ॥ यामिनीचगतातत्रमुहूर्तद्वयसंमिता ॥ सेवकेनतदायुक्तोब्राह्मणःसंस्थितस्तदा ॥ २० ॥ स्तवनंकृतवांस्तत्रहरेरद्भुतकर्मणः ॥ एतास्मिन्नेवसमयेह्याश्चर्यंचाऽभवत्तदा ॥ २१ ॥ गौश्चैवचाऽभवत्तत्रह्यंगणेबंधिताशुभा ॥ एवंवैब्राह्मणस्तत्रह्याजगामबहिर्गतः ॥ २२ ॥ गौनैवचप्रियेदुग्धाइत्युक्त्वावत्समानयत् ॥ दोहनार्थसमाहूयास्त्रियंशीघ्रतरंतदा ॥ २३ ॥ वत्संकीलेस्वयंबंधुंयत्नंचैवाऽकरोत्तदा ॥ वत्सोपिकर्षमाणश्चपादेनपादपीडनम् ॥ २४ ॥ चकारब्राह्मणस्यैवब्राह्मणःक्रोधमूर्च्छितः ॥ वत्संचताडयामासकूर्परेणदृढंतदा ॥ २५ ॥ वत्सोऽपिपीडितस्तेनशांतश्चैवाऽभवत्तदा ॥ दुग्ध्वातुमोचितोनैवक्रोधेनचद्विजन्मना ॥ २६ ॥ गौर्दुःखंचमहत्प्राप्तारोदनंचाऽकरोत्तदा ॥ दृष्ट्वाचरोदनंतस्यावत्सोवाक्यमथाऽब्रवीत् ॥ २७ ॥ कथंचरुद्यतेमातःकिंदुःखंतेह्युपस्थितम् ॥ पुत्रस्यवचनंश्रुत्वागौश्चवाक्यमुपाददे ॥ २८ ॥ श्रूयतांपुत्रमेदुःखंवक्तुंशक्नोम्यहंनहि ॥ दुष्टेनताडितस्त्वंचतेनदुःखंसमागतम् ॥ २९ ॥ तद्वचस्तुतदाश्रुत्वावत्सश्चवचनंपुनः ॥ किंकर्तव्यंक्वगंतव्यंकर्मबद्धावयंयतः ॥ ३० ॥ कृतंचैवयथापूर्वंभुज्यतेचतथाऽधुना ॥ एतद्दशेयदाजातायादिच्छसितथाकुरु ॥ ३१ ॥ हसताक्रियतेकर्मरुदतापरिभुज्यते ॥ सुखंचजायतेतेनदुःखंतेनाऽपिसंभवेत् ॥ ३२ ॥ तस्माच्चपूज्यतेकर्मसर्वंचकर्मणिस्थितम् ॥ त्वंचैवाथाऽप्यहंचैवइमेजीवादयश्चये ॥ ३३ ॥ तेसर्वेकर्मणाबद्धानशोच्याःकर्हिचित्त्वया ॥ एवंवचस्तुपुत्रस्यश्रुत्वागौरिदमब्रवीत् ॥ ३४ ॥ वत्ससर्वंविजानामिकर्माधीनाःप्रजाःस्वयम् ॥ तथापिमाययाग्रस्तादुःखंप्राप्तास्म्यहंपुनः ॥ ३५ ॥ रोदनंचतदाकृत्वादुःखशांतिर्भवेन्नहि ॥ इत्येतद्वचनंश्रुत्वामातरंवाक्यमब्रवीत् ॥ ३६ ॥ यद्येवंचविजानासिपुनश्चरोदनंकथम् ॥ कृत्वाचसाध्यसेकिंचतस्माद्दुःखंत्यजाऽधुना ॥ ३७ ॥ एवंपुत्रवचःश्रुत्वामाताचैवाऽब्रवीदिदम् ॥ ममदुःखंतदागच्छेद्यदादुःखंतथाविधम् ॥ ३८ ॥

भवेच्चब्राह्मणस्यैवदुःखंदास्यामिवैसुखम् ॥ तथाचब्राह्मणश्चैवमनासिज्ञास्यातिस्वयम् ॥ ३९ ॥ पुत्रजन्यंचयद्दुःखमीदृशंतद्भवेत्पुनः ॥ प्रातश्चैवमया
पुत्रशृंगेणैवहनिष्यते ॥ ४० ॥ हतश्चजीवितंसद्योहास्यतिनात्रसंशयः ॥ इत्युक्तस्तुपुनर्वत्सोमातरंवाक्यमब्रवीत् ॥ ४१ ॥ प्रथमंचकृतंकर्मतत्फ
लंभुज्यतेऽधुना ॥ अस्याश्चब्रह्महत्यायामातःकिंप्राप्स्यसेपुनः ॥ ४२ ॥ मारितस्तेपुनर्मातर्मार्यतांत्वंवृथाकुथाः ॥ शुभेनप्राप्यतेस्वर्गोदुष्टेनपततेपुनः ॥
॥ ४३ ॥ समाभ्यांचभवेज्जन्मक्षयेमुक्तिरवाप्यते ॥ कदापिकर्मणोनाशेतत्रभोगःप्रजायते ॥ ४४ ॥ तस्माच्चपुनरेवत्वंमाकर्मकर्तुमुद्यता ॥
अहंक्वपुत्रतांतेऽद्यत्वंमाताकुतएवच ॥ ४५ ॥ क्वमाताक्वपितावंधुःक्वस्वामीक्वचबालकः ॥ नकोऽपिकस्यचाऽस्तीहसर्वेऽपिस्वकृतंभुजः ॥ ४६ ॥ एवं
ज्ञात्वात्वयाप्रातर्दुःखंत्याज्यंशुभंकुरु ॥ पुत्रवाक्यंपुनःश्रुत्वावचनंचेदमब्रवीत् ॥ ४७ ॥ एवंजानाम्यहंपुत्रमायाबलवतीप्रभोः ॥ अहंत्यजामितांमायां
मायामांनत्यजत्यसौ ॥ ४८ ॥ तेदुःखंचमयादृष्टंदुःखंचदहतेमम ॥ पुनश्चब्रह्महत्यायानाशोयत्रभवेदिह ॥ ४९ ॥ तत्स्थलंचमयादृष्टंहत्याचैवगमिष्यति ॥
द्विजपुत्रंतदाहत्वाश्यामममंगंभविष्यति ॥ ५० ॥ पश्चाच्चैवपुनःश्वेतमभिज्ञानमिदंध्रुवम् ॥ इत्येतद्वचनंश्रुत्वावत्सेनोक्तंनकिंचन ॥ ५१ ॥ तयोस्त
दद्भुतंवृत्तंश्रुत्वापांथोद्विजस्तदा ॥ इदंदृष्ट्वामयाप्रातर्गंतव्यंपुनरेवह ॥ ५२ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायामेकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
सूतउवाच ॥ प्रातःकालेतथाजातेगृहस्वामीसमुत्थितः ॥ किमर्थंसुप्यतेपांथह्यतिकालोभवेदिह ॥ १ ॥ तेनोक्तंश्रूयतांब्रह्मन्स्थित्वामुहूर्तंगम्यते ॥
व्यथाचपरिवर्त्तेतशरीरेसेवकस्यच ॥ २ ॥ इत्येवंचमिषंकृत्वासुष्वापपुरुषस्तदा ॥ दोहनस्यतदाकालेब्राह्मणःपुत्रकंप्राते ॥ ३ ॥ मयातुगम्यतेपुत्रका
र्यार्थंकुत्रचित्पुनः ॥ पुत्रःसमुत्थितस्तत्रवत्संचमुक्तवांस्तदा ॥ ४ ॥ माताचतस्यदोहार्थमाजगामस्वयंतदा ॥ द्विजपुत्रस्तदावत्संबध्नन्कीलेनताडय
न् ॥ ५ ॥ बंधनार्थयदानीचैर्जातोहिद्विजबालकः ॥ पुनर्गौश्चतदाकुद्धाशृंगेणाऽताडयच्चतम् ॥ ६ ॥ मर्मणिताडितःसोपिमूर्च्छांप्राप्यपपातह ॥ लोका
श्चमिलितास्तत्रगवाबालोविहिंसितः ॥ ७ ॥ जलंजलंवदंतस्तेपित्राद्यायेचसंस्थिताः ॥ यत्नश्चक्रियतेसर्वैस्तावद्बालोमृतस्ततः ॥ ८ ॥ मृतेचबालके
तत्रहाहाकारोमहानभूत् ॥ किंकरोऽस्यतदागांचताडयित्वाव्यमोचयत् ॥ ९ ॥ सागौश्चश्वेतवर्णाऽभूत्तदाश्यामाव्यदृश्यत ॥ अहोचदृश्यतांलोकादृ
ष्ट्वाचैवपरस्परम् ॥ १० ॥ ब्राह्मणश्चतदापांथोदृष्ट्वाश्चर्यविनिर्गतः ॥ यत्रगौश्चगतातत्रतामनुब्राह्मणोगतः ॥ ११ ॥ ऊर्ध्वपुच्छंतदाकृत्वाशीघ्रंगौर्नर्मे
दांप्रति ॥ आगत्यनंदिकेशस्यसमीपेविमलेजले ॥ १२ ॥ त्रिवारंमज्जयित्वातुश्वेतत्वंचगताहिसा ॥ यथागतागतासाचब्राह्मणोविस्मयंगतः ॥ १३ ॥
अहोमहत्तमंतीर्थंब्रह्महत्यानिवारकम् ॥ स्वयंचमज्जितस्तत्रब्राह्मणःसेवकस्तथा ॥ १४ ॥ मज्जयित्वागतौतौचप्रशंसंतौनदींतदा ॥ मार्गेचमिलिताका

चित्सुंदरीभूषणान्विता ॥ १५ ॥ तयोक्तंत्वंकुतोयासिसत्यंब्रूहिममाऽग्रतः ॥ एवंवचस्तदाश्रुत्वाद्विजेनोक्तंयथातथम् ॥ १६ ॥ पुनश्चाऽयंद्विजस्तत्र तयोक्तःस्थीयतांत्वया ॥ तयोक्तंचसमाकर्ण्यस्थितःकिंकथ्यतेवद ॥ १७ ॥ साचाहपुनरेवात्रनिवर्तस्वद्विजोत्तम ॥ त्वयादृष्टंस्थलंयच्चतत्राऽस्थीनि क्षिपाऽधुना ॥ १८ ॥ साक्षाद्दिव्यमयंदेहंधृत्वायास्यसिसद्गतिम् ॥ वैशाखेचैवसंप्राप्तेसप्तम्याश्चदिनेशुभे ॥ १९ ॥ सितेपक्षेसदागंगाआयातिद्विजसत्तम ॥ अद्यैवसप्तमीसाचगंगाहंयामितत्रवै ॥२०॥ इत्युक्त्वांऽतर्दधेदेवीद्विजोपिपरिवर्त्तितः ॥ आगत्याऽस्थिक्षिपेद्यावत्तावन्मातापदृश्यत ॥ २१ ॥ दिव्यदेहत्व मापन्नादत्त्वाशिषंदिवंगता ॥ धन्योऽसिकृतकृत्योऽसिपावितंचकुलंत्वया ॥ २२ ॥ धनंधान्यंतथाचायुर्वंशश्चवर्धतांतव ॥ इत्याशिषंपुनर्दत्त्वागतासाद्युत्त मांगतिम् ॥२३॥ ब्राह्मणश्चपुनस्तत्रक्षिप्त्वास्थीनिगृहंगतः ॥ तद्दिनंहिसमारभ्यप्रसिद्धंतीर्थमुत्तमम् ॥ २४ ॥ नंदिकेशसमीपेतुकृत्वास्नानंतुतत्फलम् ॥ प्राप्यतेनाऽत्रसंदेहोमहतांवचनादिह ॥ २५ ॥ ब्राह्मणीऋषिकानामबालवैधव्यमागता ॥ पार्थिवंपूजयित्वातुतपस्तप्तंसुदारुणम् ॥ २६ ॥ मूढो नाममहादैत्योपातयामासतांतदा ॥ नमानितंतयाचैवपश्चाच्छलमदर्शयत् ॥ २७ ॥ तदासाभयसंत्रस्ताशिवशिवेतिभाषिणी ॥ शरणागतरक्षा थैकर्तव्यंव्रतमाहितम् ॥ २८ ॥ आनंदार्थेसमायातंनंदीशेनमहात्मना ॥ लोकानामुपकार्थेस्थितश्चशंकरस्तदा ॥ २९ ॥ तदानींतीर्थमायातंपा र्थिवंशंकरःस्वयम् ॥ प्रसन्नश्चतयातत्रह्यंशेनस्थापितस्तदा ॥ ३० ॥ गंगाऽपिचप्रसन्नातांप्राहसाध्विवराऽधुना ॥ मदर्थंचैववैशाखेदिनमेकंत्वयापु नः ॥ ३१ ॥ सामीप्यंकरणीयंवैतथेतिचस्वयंवचः ॥ तद्दिनंहिसमारभ्यईदृशंतीर्थमुत्तमम् ॥ ३२ ॥ तत्रस्नातोनरःसम्यक्पापैश्चमुच्यतेध्रुवम् ॥ एतत्तेहिसमाख्यातंयत्पृष्टोऽहंमुनीश्वराः ॥ ३३ ॥ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांनंदिकेशमाहात्म्यंनामचत्वारिंशोऽध्यायः ॥ ४० ॥ ऋषयऊचुः ॥ पुनश्चकथ्यतांसूतलिंगानिसप्तमानिच ॥ सूतउवाच ॥ १ ॥ व्यासेश्वरश्चविख्यातःशुक्रेशश्चतथैवच ॥ भंडारेश्वरविख्यातोहुंकारेशस्तथै वच ॥२॥ सुरेश्वरश्चविज्ञेयोभूतेश्वरइतिस्वयम् ॥ संयमेश्वरइतिप्रोक्तोमहापातकनाशनः ॥३॥ ततश्चतत्रिकातीरेकुमारेश्वरएवच ॥ सिद्धेश्वरश्चविख्या तस्तनेश्वरस्तथैवच ॥ ४ ॥ रामेश्वरःपुनःप्रोक्तोदर्शनात्पापहारकः ॥ ऋषीश्वरस्तथाप्रोक्तःकुंभेश्वरःपरोमतः ॥ ५ ॥ नंदेश्वरस्तथापंचपुंजेशश्चतथाऽ पिहि ॥ पूर्णायांपूर्णकोनामवीरेश्वरस्तथापुनः ॥ ६ ॥ गोदातीरेकपालेशश्चकेशश्चतथैवच ॥ चंद्रेश्वरश्चविज्ञेयश्चंद्रकांतिफलप्रदः ॥ ७ ॥ धौतपापेश्वरः साक्षाद्दर्शनपरमेश्वरः ॥ भीमेश्वरइतिप्रोक्तःसूर्येश्वरस्तथाऽपिहि ॥ ८ ॥ त्र्यंबकस्तृत्रिकायांतुगोकर्णेशस्तथापिच ॥ नारूकेशोमहापुण्योरामेश्वरस्तथा पिहि ॥ ९ ॥ नंदेश्वरश्चविज्ञेयोज्ञानदोलोकपूजितः ॥ विमलेश्वरनामायःकंटकेश्वरएवच ॥ १० ॥ पूर्वसागरसंयोगेधर्मकेशस्तथैवच ॥ ११ ॥ पश्चि

मेसागरेचैवसिद्धेश्वरःस्वयंस्थितः ॥ बिलेश्वरश्चविख्यातोह्यंधकेशस्तथैवच ॥ १२ ॥ यत्रवैअंधकोदैत्योहतश्चशंकरेणच ॥ स्वयंस्वरूपमंशेनधृत्वाश
र्वःपुनःस्थितः ॥ १३ ॥ शंकरेश्वरविख्यातोलोकानांसुखदायकः ॥ कर्दमेशःपरःप्रोक्तःकोटीशश्चाऽर्बुदाचले ॥ १४ ॥ अचलेश्वरश्चविख्यातोबहूनांदुः
खहामतः ॥ नागेश्वरश्चकौशिक्यास्तीरेतिष्ठतिनित्यशः ॥ १५ ॥ अनंतेश्वरःसंप्रोक्तःकल्याणसुखभाजनम् ॥ योगेश्वरश्चविख्यातोवैद्यनाथेश्वरस्त
था ॥ १६ ॥ कोटीश्वरश्चविज्ञेयःसप्तेश्वरस्तथापिहि ॥ भद्रेश्वरश्चविख्यातोभद्रनामहरःस्वयम् ॥ १७ ॥ चंडीश्वरश्चयःप्रोक्तःसंगमेश्वरएवच ॥ तस्यै
वपश्चिमेतीरेगौतमेश्वरएवच ॥ १८ ॥ पूर्वस्यांचदिशियानितानीहकथितानिते ॥ दक्षिणस्यांदिशिकश्चिदत्रीश्वरइतिस्वयम् ॥ १९ ॥ लोकानामुप
कारार्थमनसूयासुखायच ॥ प्रादुर्भूतःस्वयंदेवोह्यनावृष्ट्यांसुपूजितः ॥२०॥ सएवशंकरःसाक्षादंशेनस्वयमेवहि ॥ इत्येवंवचनंतस्यश्रुत्वातुपरमर्षयः ॥
॥ २१ ॥ ऊचुस्तेवचनंतत्रकथमत्रीश्वरोहरः ॥ उत्पन्नःपरमोदेवस्तत्त्वंकथयसुव्रत ॥ २२ ॥ सूतउवाच ॥ साधुपृष्टमृषिश्रेष्ठाःकथयामिकथांशुभाम् ॥
यांकथांपरमांश्रुत्वापातकैर्मुच्यतेध्रुवम् ॥ २३ ॥ दक्षिणस्यांदिशियच्चकामदंनामवैवनम् ॥ विख्यातंचऋषिश्रेष्ठास्तपसेहितदंनृणाम् ॥२४॥ तत्रच
ब्रह्मणःपुत्रोह्यत्रिर्नामऋषिःस्वयम् ॥ तपस्तपतियःसाक्षादनसूयासमन्वितः ॥ २५ ॥ पूर्वंकदाचिदत्रैवह्यनावृष्टिरभूत्तदा ॥ शतवार्षिकीतदादैवाद्दुःखि
ताःप्राणिनस्तदा ॥ २६ ॥ जलंनैवपृथिव्यांतुदृश्यतेऋषिसत्तमाः ॥ वृक्षाःशुष्कास्तदासर्वेपल्लवानिफलानिच ॥ २७ ॥ नित्यार्थंनजलंक्कापिदृश्यतेदुः
खितोघृषिः ॥ सांद्रंपर्णंनलभ्येतखरवातादिशोदश ॥२८॥ आवर्त्तंचैवभूतानांदृष्ट्वाचऋषिसत्तमाः ॥ साध्वीचैत्राऽब्रवीद्देवीमयादुःखंनसह्यते ॥ २९ ॥
समाधौचविलीनोऽभूदासनेसंस्थितःस्वयम् ॥ प्राणायामंत्रिरावृत्तंकृत्वामुनिवरस्तदा ॥ ३० ॥ ध्यायतिस्मपरंज्योतिरात्मस्थमात्मनाचसः ॥ स्वामि
निध्यानलीनेचशिष्याश्चदूरतोगताः ॥ ३१ ॥ अन्नंविनातदातेतुमुक्तातेचगताःक्षणात् ॥ तदैकाकिनीसंजातासेवयामासतंमुदा ॥ ३२ ॥ पार्थिवंसुंदरं
कृत्वामंत्रेणविधिपूर्वकम् ॥ मानसैरुपचारैश्चपूजयित्वाशिवंपुरः ॥ ३३ ॥ संस्थाप्यस्वामिनंचैवसेवयामासवैतदा ॥ बद्धांजलिपुटाभूत्वाप्रक्रम्यस्वामि
नंशिवम् ॥ ३४ ॥ दंडवत्प्रणिपातेनप्रतिप्रक्रमणंतदा ॥ दैत्याश्चदानवाःसर्वेदृष्ट्वातुसुंदरींतदा ॥ ३५ ॥ विह्वलाश्चाऽभवंस्तत्रतेजसादूरतःस्थिताः ॥
अग्निंदृष्ट्वायथादूरेवर्त्तंतेतद्वदेवहि ॥ ३६ ॥ तथैनांचतदादृष्ट्वानायांतिहिसमीपगाः ॥ अत्रेश्चतपसश्चैवअनसूयाविशिष्यते ॥ ३७ ॥ यावत्कालंतुसादे
वीपरिचर्यांचकारह ॥ तौदंपतीतदातत्रनाऽन्यःकश्चित्पुरःस्थितः ॥ ३८ ॥ एवंजातेतदाकालेअत्रिश्चऋषिसत्तमः ॥ ध्यानेचपरमेलीनोनव्यबुध्यत
किंचन ॥ ३९ ॥ अनसूयापिसासाध्वीस्वामिनंवाशिवंतथा॥भेजेनाऽन्यत्परंकिंचिज्जानीतेस्मचसासती ॥४०॥ तस्यैवतपसासर्वैतस्याश्चभजनेनच ॥

देवाश्चऋषयश्चैवगंगाद्याःसरितस्तथा ॥ ४१ ॥ विस्मयंपरमंमत्वादर्शनार्थंसमाययुः ॥ तयोस्तदद्भुतंदृष्ट्वाऊचुस्तेचपरस्परम् ॥ ४२ ॥ उभयोःकिंवि
शिष्टंचतपसोभजनस्यच ॥ अत्रेश्चैवतपःप्रोक्तमनसूयाभजनंतथा ॥ ४३ ॥ एतत्सर्वंचतेदृष्ट्वाह्यूचुर्वैभजनंवरम् ॥ पूर्वैश्चऋषिभिश्चैवदुष्करंतुतपःकृतम्
॥ ४४ ॥ एतादृशंतुकेनाऽपिनभवत्येतदब्रुवन् ॥ धन्योयंचतथाधन्याताभ्यांचक्रियतेपुनः ॥ ४५ ॥ एतादृशंशुभंचैवक्रियतेकेनसांप्रतम् ॥ तयोरेवंप्र
शंसांचकृत्वातेतुयथागतम् ॥ ४६ ॥ गतास्तेचतदातत्रगंगांचगिरिशंविना ॥ गंगाचभजनेप्रीतासाध्वीधर्मविमोहिता ॥ ४७ ॥ एनांचैवोपकारंचकृत्वा
गच्छाम्यहंपुनः ॥ शिवोऽपिध्यानबद्धोवैगतोनैवकृपांविना ॥ ४८ ॥ एवंचक्रियमाणेचयज्जातंश्रूयतामिति ॥ पंचाशच्चतथाचाऽत्रचत्वारिऋषिसत्तमाः ॥
॥ ४९ ॥ वर्षाणिचगतान्यासन्वृष्टिर्नैवाऽभवत्तदा ॥ यावच्चाप्यत्रिणाह्येवंतपसाध्यानमाश्रितम् ॥ ५० ॥ अनसूयातदानैवगृह्णामीतीषणाकृता ॥ कदा
'चिच्चऋषिश्रेष्ठोह्यत्रिर्ब्रह्मविदांवरः ॥ ५१ ॥ जागृतश्चजलंदेहीत्युवाचचप्रियांप्रति ॥ सापिसाध्वीत्यवश्यंचगृहीत्वाचकमंडलुम् ॥ ५२ ॥ जगामचवने
तत्रजलंचनीयतेकुतः ॥ किंकरोमिक्वगच्छामिकुतोनीयतेवैजलम् ॥ ५३ ॥ इतिविस्मयमापन्नांदृष्ट्वागंगासरिद्वरा ॥ तामनुव्रजतियावत्साब्रवी
च्चतदाहिताम् ॥ ५४ ॥ प्रसन्नाऽस्मिचतेदेवितवाज्ञांहिकरोम्यहम् ॥ तद्वचश्चतदाश्रुत्वाऋषिपत्नीवचःस्वयम् ॥ ५५ ॥ कात्वंकमलपत्राक्षिकुतो
वात्वंसमागता ॥ इत्युक्तेचतयातत्रगंगावाक्यमथाऽब्रवीत् ॥ ५६ ॥ गंगोवाच ॥ स्वामिनःसेवनंदृष्ट्वाशिवस्यचतथैवच ॥ साध्वींधर्मवतींवीक्ष्यस्मिताऽ
स्मितवसन्निधौ ॥ ५७ ॥ अहंगंगासमायाताभजनात्तेशुचिस्मिते ॥ वशीभूताह्यहंजातायदिच्छसिवृणुष्वतत् ॥ ५८ ॥ इत्युक्तेगंगयासाध्वीनमस्कृत्वा
पुरःस्थिता ॥ उवाचचजलंदेहिप्रसन्नात्वंममाऽधुना ॥ ५९ ॥ इत्येतद्वचनंश्रुत्वागर्तंकुर्विंतिचाऽब्रवीत् ॥ शीघ्रंयावच्चतत्कृत्वास्थितंचक्षणमात्रतः ॥ ६० ॥
तत्रसाचप्रविष्टाचजलरूपमभूत्तदा ॥ आश्चर्यंपरमंगत्वाजलंचगृहीतंतया ॥ ६१ ॥ उवाचवचनंह्येतल्लोकानांसुखहेतवे ॥ यदित्वंचप्रसन्नामेकृपाचवर्ततेते
मयि ॥ ६२ ॥ तावत्त्वयाचस्थातव्यंयावत्स्वामीसमाव्रजेत् ॥ गंगोवाच ॥ शृणुदेविवचस्तथ्यंमयाचस्थीयतेतदा ॥ ६३ ॥ यदात्वंमासमात्रस्यफलं
दास्यसिमेऽनघे ॥ इत्युक्तेचतयातत्रह्यनयापिकृतंतथा ॥ ६४ ॥ गृहीत्वाचजलंतच्चदुर्लभंसर्वदेहिनाम् ॥ आनीयस्वामिनेदत्तंदत्त्वाचपुरतःस्थिता ॥ ६५ ॥
ऋषिश्चापिजलेनैवआचम्यविधिपूर्वकम् ॥ पपौशुभ्रंजलंतच्चपीत्वासुखमवापह ॥ ६६ ॥ सुखमात्यंतिकंलब्ध्वापरंविस्मयमागतः ॥ अहोनित्यंजलंयच्च
पीयतेतज्जलंनहि ॥ ६७ ॥ इतिविचार्यतेनैवपरितश्चावलोकितम् ॥ शुष्कान्वृक्षांस्तथालोक्यदिशोरूक्षतरास्तथा ॥ ६८ ॥ उवाचतामृषिश्रेष्ठोनजा
तंवर्षणंपुनः ॥ तदुक्तंतत्समाकर्ण्यनाथनेतिप्रियातदा ॥ ६९ ॥ तामुवाचपुनःसोपिजलंनीतंकुतस्त्वया ॥ इत्युक्तेचतदातेनविस्मयंपरमंगता ॥ ७० ॥

निवेद्यतेमयाचेद्वैतदोत्कर्षोभवेन्मम ॥ निवेद्यतेयदानैवव्रतभंगोभवेन्मम ॥ ७१ ॥ नोभयंचयथास्याद्वैनिवेद्यंतत्तथामया ॥ इतियावद्विचार्यै
ततावत्पृष्टापुनःपुनः ॥ ७२ ॥ उवाचश्रूयतांस्वामिन्यथार्थंकथयामिवै ॥ ॥ अनसूयोवाच ॥ ॥ शंकरस्यप्रतापाच्चतथैवसेवनात्तव ॥ ७३ ॥
गंगासमागताचैवतदीयंतुजलंशुभम् ॥ एवंवचस्तदाश्रुत्वामुनिर्विस्मितमानसः ॥ ७४ ॥ उवाचसुंदरित्वंचसत्यंवाऽथव्यलीककम् ॥ ब्रवीषिचयथार्थं
त्वंनमन्येदुर्लभंत्विदम् ॥ ७५ ॥ असाध्यंयोगिभिर्यच्चदेवैरपिसदाशुभे ॥ तच्चैवाऽद्यकथंजातंविस्मयःपरमोमम ॥ ७६ ॥ यद्येवंदृश्यतेचेद्वैतन्मन्येऽहं
चनाऽन्यथा ॥ इतितस्यवचःश्रुत्वास्वामिनोवचनंपुनः ॥ ७७ ॥ आगम्यतांत्वयानाथद्रष्टुमिच्छाभवेद्यदि ॥ इत्युक्त्वातुसमादायगतायत्रसरिद्वरा॥७८॥
दर्शयामासतांतत्रगर्तेचसंस्थितांस्वयम् ॥ तत्रगत्वाऋषिश्रेष्ठोगर्तंचजलपूरितम् ॥ ७९ ॥ आकंठंसुंदरंदृष्ट्वाधन्येयमितिचाब्रवीत् ॥ किंमदीयंतपश्चैवकिं
मन्येषांपुनस्तथा ॥ ८० ॥ स्तुत्वास्तुत्वाचसंस्नातःसुभगेदुर्लभेजले ॥ आचम्यपुनरेवाऽत्रस्तुतिंचक्रेपुनःपुनः ॥ ८१ ॥ अनसूयापिसंस्नातासुंदरेचजले
तदा ॥ नित्यंकृत्वापुनःसोपिसापिचैवतथापुनः ॥ ८२ ॥ तदोवाचपुनर्गंगागम्यतेचमयाऽधुनाऽ ॥ इत्युक्तेचपुनःसाध्वीतामुवाचसरिद्वराम् ॥ ८३ ॥
यदिप्रसन्नादेवेशियद्यस्तिचकृपामयि ॥ महतांचस्वभावश्चनांगीकृतंपरित्यजेत् ॥ ८४ ॥ यद्यपिचैवसम्यग्वाअसम्यग्वाभवेदिह ॥ तथात्वंचकृपांकर्तुम
र्हसिमेसरिद्वरे ॥८५॥ इत्युक्त्वाप्रणिपातेनस्तुत्वास्तुत्वापुनःपुनः ॥ ऋषिरात्रिरिमांतत्रकृत्वास्तवनमुत्तमम् ॥८६॥ ययाचेचपुनर्गंगांकृपांकुरुममोपरि ॥
तामुवाचपुनःसाध्वीत्वयास्थेयंतपोवने ॥ ८७ ॥ ऋषिश्चापितथाह्यत्रस्थेयंचैवसरिद्वरे ॥ तदीयंतद्वचःश्रुत्वागंगावाक्यमथाब्रवीत् ॥ ८८ ॥ शंकरार्चन
संभूतंफलंवर्षस्ययच्छसि ॥ स्वामिनश्चफलंचैवयच्छसिपूजनोद्भवम् ॥ ८९ ॥ तदास्थास्येवरारोहेलोकानामुपकारणात् ॥ यथादानेनमेतुष्टिःस्नानेनैवपु
नःपुनः ॥ ९० ॥ यज्ञैर्वाप्यथवायोगैर्यथापातिव्रतेनच ॥ पतिव्रतांयथादृष्ट्वामनसःप्रीणनंभवेत् ॥९१ ॥ तथानतुष्यतेदेवियथासाध्वींप्रदृश्यच ॥ ममापि
पापनाशोवैदृष्ट्वापातिव्रतांप्रिये ॥ ९२ ॥ तस्माच्चयदिलोकस्यहितार्थंत्वंप्रयच्छसि ॥ तस्माच्चस्थिरतांयास्येयदिकल्याणमिच्छसि ॥ ९३ ॥ इत्येवंवच
नंश्रुत्वाददौवर्षसमुद्भवम् ॥ महतांचस्वभावोऽस्तिपरेषांहितमावहेत् ॥ ९४ ॥ सुवर्णंतत्रवैदृष्टंचंदनेक्षुरसंतथा ॥ आत्मानंपीडयित्वातुपरेषामुपकार
कम् ॥ ९५ ॥ मनोलग्नंभवेन्नूनंनात्रकुर्याद्विचारणाम् ॥ पार्थिवेरूपकेशंभुःस्थितोयोवैतदास्वयम् ॥ ९६ ॥ प्रसन्नोस्मिवरंब्रूहिप्रियेप्रियतरासिमे ॥ पंच
वक्त्रादिसंयुक्तंहरंप्रेक्ष्यसुविस्मितौ॥९७॥ यदिप्रसन्नोदेवेशप्रसन्नाजगदंबिका ॥ तस्मात्त्वंचवनेदेवलोकानांसुखकारणात् ॥९८॥तिष्ठत्वंपूजयादेवलोकानां
सुखदोभव ॥ प्रसन्नाचयदागंगातदाचैवमहेश्वरः ॥ ९९ ॥ उभौतौचास्थितौतत्रयत्राऽऽसीदृषिसत्तमः ॥ अत्रीश्वरश्चनामासीदीश्वरःपरदुःखहा ॥ १०० ॥

गंगाचापितदातत्रस्थितापिचोमयासह ॥ तद्दिनंहिसमारभ्यतत्राऽक्षय्यंजलंसदा ॥ १०१ ॥ हस्तमात्रंचतद्गर्तमुदकंचाऽक्षयंतदा ॥ तत्रैवऋषयोदिव्याः
समाजग्मुःसहांगनाः ॥ १०२ ॥ तीर्थात्तीर्थांच्चयेसर्वेतेसर्वेचसमागताः ॥ यवाश्चव्रीहयश्चैवफलानिविविधानिह ॥ १०३ ॥ तत्राऽऽसंश्चमुनिश्रे
ष्ठावनंकामफलप्रदम् ॥ सर्वेतेऋषयश्चैवयज्ञयागपरायणाः ॥ १०४ ॥ कर्मभिश्चैवसंतुष्टावृष्टिंचक्रुःसदाशुभाम् ॥ आनंदंपरमंलोकेयत्रतेव्रतमु
त्तमम् ॥ अत्रीश्वरस्यमाहात्म्यंश्रुत्वाकल्याणमाप्नुयात् ॥ १०५ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांगंगावर्णनंनामैकचत्वारिंशोऽध्यायः ॥
॥ ४१ ॥ सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठाःकथांपापप्रणाशिनीम् ॥ व्यासस्यैवमुखाच्छ्रुत्वाकथयामियथाश्रुतम् ॥ १ ॥ ऋषयऊचुः ॥ सूतजानासिसक
लंवस्तुव्यासप्रसादतः ॥ तवाऽज्ञानंनविद्येततस्मात्पृच्छामहेवयम् ॥ २ ॥ लिंगंचपूज्यतेलोकैस्तत्त्वयाकथितंचयत् ॥ तत्तथैवनचान्यद्वाकारणंविद्यते
त्विह ॥ ३ ॥ सूतउवाच ॥ कल्पभेदकथाचैवश्रुताचैवमयापुनः ॥ तदेवकथयाम्यद्यश्रूयतामृषिसत्तमाः ॥ ४ ॥ पुरादारुवनेजातंयद्वृत्तंतुद्विजन्मनाम् ॥
तदेवश्रूयतांसम्यक्कथयामियथाश्रुतम् ॥ ५ ॥ दारुनामवनंश्रेष्ठंतत्राऽऽसन्नृषिसत्तमाः ॥ शिवभक्ताःसदानित्यंशिवध्यानपरायणाः ॥ ६ ॥ त्रिकालंशिव
पूजांचकुर्वंतिस्मनिरंतरम् ॥ स्तोत्रैर्नानाविधैर्देवंमंत्रैर्वाऋषिसत्तमाः ॥७॥ एवंसेवांप्रकुर्वंतोध्यानमार्गपरायणाः ॥ तेकदाचिद्वनेयाताःसमिदाहरणायच ॥
॥ ८ ॥ एतस्मिन्नंतरेसाक्षाच्छंकरोनीललोहितः ॥ विरूपंचसमास्थायपरीक्षार्थंसमागतः ॥ ९ ॥ दिगंबरोऽतितेजस्वीभूतिभूषणभूषितः ॥ चेष्टांचैवक
टाक्षंचहस्तेलिंगंचधारयन् ॥ १० ॥ मनांसिमोहयन्स्त्रीणामाजगामहरःस्वयम् ॥ तंदृष्ट्वाऋषिपत्न्यस्ताःपरंत्रासमुपागताः ॥ ११ ॥ विह्वलाविस्मिता
श्चैवसमाजग्मुस्तथापुनः ॥ आलिलिंगुस्तदाचान्याःकरंधृत्वातथाऽपराः ॥ १२ ॥ परस्परंतुसंहर्षाद्गतंचैवद्विजन्मनाम् ॥ एतस्मिन्नेवसमयेऋषिवर्याः
समागमन् ॥ १३ ॥ विरुद्धंवृत्तकंदृष्ट्वादुःखिताःक्रोधमूर्च्छिताः ॥ तदादुःखमनुप्राप्ताःकोऽयंकोयंऽतथाऽब्रुवन् ॥ १४ ॥ यदाचनोक्तवान्किंचित्तदातेपरम
र्षयः ॥ ऊचुस्तंपुरुषंतेवैविरुद्धंक्रियतेत्वया ॥ १५ ॥ त्वदीयंचैवलिंगंचपततांपृथिवीतले ॥ इत्युक्तेतुतदातैस्तुलिंगंचपतितंक्षणात् ॥ १६ ॥ तल्लिंगं
चाऽग्निवत्सर्वंददाहयत्पुरःस्थितम् ॥ यत्रयत्रचतद्यातितत्रतत्रदहेत्पुनः ॥ १७ ॥ पातालेचगतंतच्चस्वर्गेचापितथैवच ॥ भूमौसर्वत्रतद्भ्रांतंकुत्रापितत्स्थितंनहि
॥ १८ ॥ लोकाश्चव्याकुलाजाताऋषयस्तेऽपिदुःखिताः ॥ नशर्मलेभिरेकापिदेवाश्चऋषयस्तथा ॥ १९ ॥ तेसर्वेचतदादेवाऋषयोयेचदुःखिताः ॥ नज्ञात
श्चशिवोयैस्तुब्रह्माणंशरणंययुः ॥ २० ॥ तत्रगत्वातुतत्सर्वंकथितंब्रह्मणेतदा ॥ ब्रह्मातद्वचनंश्रुत्वाप्रोवाचऋषिसत्तमान् ॥ २१ ॥ ब्रह्मोवाच ॥ ज्ञातारश्चभवं
तोवैकुर्वंतिगर्हितंपुनः ॥ अज्ञातारोयदाकुर्युःकिंपुनःकथ्यतेतदा ॥ २२ ॥ विरुध्यैवंशिवंदेवाःकुशलंकःसमीहते ॥ गृहेसमागतंदूरादतिथिंयःपरामृषेत् ॥ २३ ॥

तस्यैवसुकृतंनीत्वास्वीयंचदुष्कृतंपुनः ॥ संस्थाप्यचातिथिर्यातिकिंपुनःशिवमेवच ॥ २४ ॥ यावल्लिंगंस्थिरंनैवजगतांत्रितयेशुभम् ॥ जायतेनतदा
कापिसत्यमेतद्वदाम्यहम् ॥ २५ ॥ भवद्भिश्चतदाकार्यंयथास्वास्थ्यंभवेदिह ॥ इत्युक्तास्तेप्रणम्योचुःकिंकार्यंतत्समादिश ॥ २६ ॥ इत्युक्तश्चतदाब्र
ह्मातान्प्रोवाचतदास्वयम् ॥ आराध्यगिरिजांदेवींप्रार्थयध्वंशुभांतदा ॥ २७ ॥ योनिरूपंभवेच्चैद्वैतदातात्स्थिरतांभजेत् ॥ तदाप्रसन्नांतांदृष्ट्वातदेवंकुरुत
पुनः ॥ २८ ॥ कुंभमेकंतदास्थाप्यकृत्वाऽष्टदलमुत्तमम् ॥ तदुपरिन्यसेत्तंचऔषधीभिःसमन्वितम् ॥ २९ ॥ दूर्वायवांकुरैस्तत्रतीर्थोदकंप्रपूरयेत् ॥
मंत्रैश्चवेदभूतैश्चमंत्रयेत्कुंभमुत्तमम् ॥ ३० ॥ तल्लिंगंतज्जलेनैवसेचयेत्परमर्षयः ॥ शतरुद्रियमंत्रैस्तुप्रोक्षितंशांतिमाप्नुयात् ॥ ३१ ॥ गिरिजायोनिरूपं
चबाणंस्थाप्यशुभंपुनः ॥ तत्रलिंगंचतत्स्थाप्यंपुनश्चैवाऽभिमंत्रयेत् ॥ ३२ ॥ गंधैश्चचंदनैश्चैवपुष्पधूपादिभिस्तथा ॥ दीपारात्रिकपूजाभिस्तोषयेत्प
रमेश्वरम् ॥ ३३ ॥ प्रणिपातैःस्तवैस्तंचवाद्यंगानंतदापुनः ॥ स्वस्त्ययनंततःकृत्वाजयेतिव्याहरेत्ततः ॥ ३४ ॥ प्रसन्नोभवदेवेशजगदाह्लादकारक ॥
कर्त्तापालयितात्वंचसंहर्त्तापुनरेवच ॥ ३५ ॥ जगदादिर्जगद्योनिर्जगदंतर्गतोऽपिच ॥ पालयन्सर्वलोकांश्चशांतोभवसदाशुभ ॥ ३६ ॥ एवंकृतेचस्वा
स्थ्यंवैभविष्यतिनसंशयः ॥ इत्युक्तास्तेतदादेवाःप्रणिपत्यपितामहम् ॥ ३७ ॥ शिवस्यशरणंगत्वाप्रार्थितःशंकरस्तदा ॥ पूजितःपरयाभक्त्याप्रसन्नः
शंकरस्तदा ॥ ३८ ॥ पार्वतींचविनानाऽन्यालिंगंधारयितुंक्षमा ॥ तयाधृतंचशांतिंचगमिष्यतिनसंशयः ॥ ३९ ॥ गृहीत्वाचैवब्रह्माणंगिरिजाप्रार्थिता
तदा ॥ प्रसन्नांगिरिजांकृत्वावृषभध्वजमेवच ॥ ४० ॥ पूर्वोक्तंचविधिंकृत्वास्थापितंलिंगमुत्तमम् ॥ मंत्रोक्तेनविधानेनदेवैश्चऋषिभिस्तदा ॥ ४१ ॥ स्त
वनैःपूजनैर्मंत्रैःसंतोष्यवृषभध्वजम् ॥ स्थिताःसम्यक्परंकृत्वासर्वेषांधर्महेतवे॥४२॥शिवोपिकृपयायुक्तोह्यब्रवीत्परमंवचः ॥ प्रसन्नंमांचजानीतसुखंस्या
त्सर्वदानृणाम्॥४३॥इत्युक्तेचतदातेनप्रसन्नाःसर्वदेवताः॥ऋषयश्चप्रणम्यैवस्तुत्वास्तुत्वापुनःपुनः॥४४॥ब्रह्मणाविष्णुनाचापिरुद्रेणैवपुनस्तथा ॥ कृतंस
र्वसुखंचात्रतैस्तदाचदयालुभिः॥४५॥लोकानांस्थापितेलिंगेकल्याणंचाऽभवत्तदा॥प्रसिद्धंचैवयल्लिंगंलिंगमेतत्तथापुनः ॥४६॥ विशेषोऽत्रकथंलभ्येच्छ्रूय
तामृषिसत्तमाः॥रुद्रेणस्थापितंयच्चतल्लिंगमिदमेवच।४७। अन्यच्चज्योतीरूपंचनाऽत्रकार्याविचारणा॥माक्षिकापादमात्रंहिशिवस्वंनस्पृशेत्क्वचित्॥४८॥
तंपप्रच्छुस्तदासर्वेशिवेनिर्माल्यताकथम् ॥ तच्छ्रुत्वावचनंतेषांसूतश्चैवाऽब्रवीदिदम् ॥ ४९ ॥ साधुपृष्टमृषिश्रेष्ठाःकथयामियथाश्रुतम् ॥ दक्षशापाच्चय
त्प्रोक्तंयच्चैवकथितंत्विह ॥ ५० ॥रुद्रेणैवकृतंयच्चतल्लिंगेदूषणंस्मृतम् ॥ तत्सर्वंचतथाज्ञेयंभक्तोनैवविदुष्यति ॥ रुद्रेणस्थापितंलिंगंसर्वदूषणकृद्भवेत्
॥५१॥इतिश्रीशिवमहापुराणेज्ञानसंहितायांलिंगविधानंनामद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ ऋषयऊचुः ॥ अंधकस्यवधःप्रोक्तोनश्रुतोविस्तरेणच ॥

तत्सर्वंचसमासेनकथयत्वंसुशोभनम् ॥ १ ॥ सूतउवाच ॥ सम्यक्पृष्टंभवद्भिस्तुश्रूयतामृषिसत्तमाः ॥ हिरण्याक्षसुतःप्रोक्तोअंधकोनामविश्रुतः ॥ २ ॥
ब्रह्माणंचसमाराध्यबलंप्राप्यसुदुर्लभम् ॥ स्मृतिंप्राप्ते शरीरेमेब्रह्मांडंवर्त्ततेयदा ॥ ३ ॥ तदामेजीवितंनैवह्यन्यथाजीवितंभवेत् ॥ एवंवरंतदालब्ध्वाब्रह्माणंप्र
णिपत्यच ॥ ४ ॥ त्रिलोकींचाऽजयत्कृत्स्नांदेवाश्चविजितास्तदा ॥ सर्वेचदिक्पालाश्चजितास्तेनमहात्मना ॥५॥ मंदरंचसमाश्रित्यकालक्षेपंतदानयन् ॥
अंधकोऽपितदातांस्तुश्रुत्वाचमंदराचले ॥ ६ ॥ जगामसैन्यसंयुक्तोदेवानांहननेच्छया ॥ तत्रयुद्धमतीवासीद्देवदानवयोरिह ॥ ७ ॥ देवैश्चपीडितादैत्याः
परितश्चदिशोदश ॥ अंधकोऽपिसमुद्रस्यनैर्ऋतेश्चसमीपतः ॥ ८ ॥ उपकंठेसुगर्त्तंतुकृत्वागर्तेन्यवेशयत् ॥ तस्माद्गर्ताच्चनिःसृत्यपीडयित्वापुनःप्रजाः
॥ ९ ॥ प्राविशच्चपुनर्दैत्योमहाबलपराक्रमः ॥ गर्तंत्रियोजनंतत्रजातंनगरसन्निभम् ॥ १० ॥ परःस्वर्गइवाभातितत्रतिष्ठतिनित्यशः ॥ देवाश्चदुःखिताः
सर्वेशिवंप्रार्थ्यपुनःपुनः ॥ ११ ॥ निवेद्यतस्मैतत्सर्वंश्रुत्वाप्रीतोहरस्तदा ॥ सैन्यंचनीयतांदेवाआयामिचगणैःसह ॥ १२ ॥ निःसृतेचतदातस्मिन्देवो
गर्तमुपाश्रितः ॥ दैत्यश्चदेवताश्चैवयुद्धंचक्रुःसुदारुणम् ॥ १३ ॥ देवैश्चपीडितःसोऽपियावद्गर्तमुपागतः ॥ तावच्छूलेनसप्रोतःशिवेनपरमात्मना॥१४॥
तत्रत्यश्चतदाशंभुंध्यात्वासंप्रार्थयत्तदा ॥ अंतकालेचत्वांदृष्ट्वात्वादृशोभवतिक्षणात् ॥ १५ ॥ इत्येवंसंस्तुतःसोपिप्रसन्नःशंकरस्तदा ॥ उवाचवचनंत
त्रवरंब्रूहिददामिते ॥ १६ ॥ इत्येवंवचनंश्रुत्वासदैत्यःपुनरब्रवीत् ॥ यदिप्रसन्नोदेवेशभक्तिंदेहिशुभांतव ॥ १७ ॥इदानींतुवरोलब्धःपरजन्मनितत्तथा॥
इत्युक्त्वातुतदादैत्यंगर्तेचैवाऽऽक्षिपत्तदा ॥ १८ ॥ सोपिशंभुःस्वयंतत्रसंस्थितोलोककाम्यया ॥ दैत्याश्चैवतदासर्वेहतास्तत्क्षणमात्रतः ॥ १९ ॥ जग
त्स्वास्थ्यंतदालेभेदेवानांपरमंसुखम् ॥ स्वंस्वंकार्यंतदासर्वेचक्रुर्वैदेवताःपुनः ॥ २० ॥ तत्रेश्वरश्चसंतस्थौपूज्यश्चैवांऽधकेश्वरः ॥ लोकानामुपकारार्थं
स्थितःशंभुःस्वयंतदा ॥ २१ ॥ अंधकेशंचयोनित्यंपूजयेत्परमेश्वरम् ॥ षण्मासाज्जायतेतस्यमनसोभीष्टमेवच ॥ २२ ॥ नित्यंचपूचयेद्योवैशिवंलोक
भयापहम् ॥ नदुःखीजायतेसोपिसुखंचैवाऽतुलंलभेत् ॥ २३ ॥ परद्रव्याभिलाषेणशिवमाराधयेन्नतु ॥ वृत्त्यर्थंपूजयेद्देवंलोकस्यहितकारकः ॥ २४ ॥
षण्मासंयोद्विजश्चैवसवैदेवलकःस्मृतः ॥ यथादेवलकश्चैवतथाऽसौवैभवेदिह ॥ २५ ॥ देवलकश्चयःप्रोक्तोनाऽधिकारेद्विजस्यच ॥ इत्येवंवचनंश्रु
त्वाऋषयश्चवचोऽब्रवन् ॥ २६ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायामंधकेश्वरमाहात्म्यंनामत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ छ ॥
॥ ऋषयऊचुः ॥ देवलकश्चयःप्रोक्तःकिंकार्यंतस्यविद्यते ॥ सूतउवाच ॥ दधीचिर्नामविप्रोवैधर्मिष्ठोवेदपारगः ॥ १ ॥ शिवभक्तिरतोनित्यंशिवशास्त्रप
रायणः ॥ यज्ञादिकर्मकर्ताचनित्यनैमित्तकारकः ॥ २ ॥ तस्यपुत्रस्तथाह्यासीन्नाम्नासुदर्शनःस्मृतः ॥ तस्यभार्याचदुष्कलपानाम्नादुष्टकुलोद्भवा ॥ ३ ॥

तद्वशेसचभर्त्ताऽऽसीत्तस्याःपुत्रचतुष्टयम् ॥ सोपिनित्यंशिवस्यैवपूजांचैवकरोत्यसौ ॥ ४ ॥ दधीचिस्तुयथापूर्वमृषयोब्रह्मणःसुतः ॥ तथाचशिवपूजायां
नित्यकर्मपरायणः ॥५॥ यथाकर्मप्रवक्ताचतथाकर्ताचकारकः ॥ एवंजातेतदाकालेतस्यैवऋषिसत्तमाः ॥६॥विपरीतंतदातस्यदैवाच्चैवाऽभवत्तदा॥यज्ञा
तंश्रूयतांश्रेष्ठाःकथयामियथाश्रुतम् ॥७॥ दधीचिस्तुतदाह्यासीद्ग्रामांतरमथापिह ॥ ज्ञातिसंयोगतश्चैवज्ञातिभिर्नसमोचितः ॥ ८ ॥ कथयित्वाचपुत्रंस
शिवभक्तिपरोभव ॥ इत्युक्त्वातुगतःसोऽपिपुत्रश्चापितथाऽकरोत् ॥९॥ एवंचशिवरात्रिश्चह्यागताऋषिसत्तमाः ॥ तस्यामुपोषिताःसर्वेस्वयंसंयोगतस्त
दा ॥ १० ॥ पूजांकृत्वाततःसोऽपिसुदर्शनइतिश्रुतः ॥ तदारात्रौचस्त्रीसंगंकृत्वापुनरिहागतः ॥ ११ ॥ नस्नातंचतदातेनकृतापूजामहात्मनः ॥ पश्चात्स
चतदाप्रातर्जडत्वंप्राप्तवान्क्षणात् ॥ १२ ॥ शिवरात्र्यांत्वयादुष्टसेवनंचस्त्रियाःकृतम् ॥ अस्नातश्चमदीयांत्वंपूजांचकृतवांस्तदा ॥ १३ ॥ ज्ञात्वाचैवंकृ
तंयस्मात्तस्मात्त्वंजडतांव्रज ॥ मास्पृशत्वंचपापिष्ठदर्शनंदूरतःकुरु ॥ १४ ॥ इत्युक्तस्तुतथाजातोयथोक्तंशंकरेणच ॥ द्विजोऽपिससमायातोवृत्तांतं
श्रुतवांस्तदा ॥ १५ ॥ दुःखितस्तुतदासोऽपिशिवेनपरिभर्त्सितः ॥ हाहतोऽस्मीतिदुःखेनकुपुत्रेणकुलंहतम् ॥ १६ ॥ एतस्मिन्समयेतस्यभार्यासुदर्शन
स्यच ॥ मृतायथाचपतितःसोऽत्यंतंदुःखमागतः ॥ १७ ॥ पिताचदुःखितःसोपिशिवेनपरिभर्त्सितः ॥ संतोष्यचशिवंसोपिशिवपूजांतदाकरोत् ॥१८॥
पुत्रोपिचतदाभार्यांपुंश्चलींकृतवांस्तदा ॥ पित्रापिगिरिजातत्रपूजितापुत्रहेतवे ॥ १९ ॥ प्रसन्नासातदादेवीपुत्रमंगीचकारह ॥ सुदर्शनोऽपिगिरिजांपूज
यामासचस्वयम् ॥ २० ॥ चंडींपूजनमार्गेणप्रसन्नामकरोत्तदा ॥ सुदर्शनंचपुत्रत्वेचकारगिरिजातदा ॥ २१॥ शिवंप्रसादयामासपुत्रार्थेचंडिकास्वयम् ॥
कृत्वाकृत्वापुनश्चंडीप्रसन्नंवृषभध्वजम् ॥ २२ ॥ नमस्कृत्यशिवंतत्रह्युत्संगेसंन्यवेशयत् ॥ घृतस्नानंतदाचक्रेपुत्रस्यगिरिजास्वयम् ॥ २३ ॥
त्रिरावृत्तोपवीतंचग्रंथिनैकेनसंयुतम् ॥ उपदिश्यशिवगायत्रींषोडशाक्षरसंयुताम् ॥ २४ ॥ ॐनमःशिवायैवश्रीशब्दपूर्वकायच ॥ वारान्षोडशसंकल्प्य
पूजांकुर्यादयंबटुः ॥ २५ ॥ जलादिनमस्कारांतंपूजयेद्वृषभध्वजम् ॥ मंत्रवादित्रपूजाभिःसंनिधावृषिणांतदा ॥ २६ ॥ नाममंत्राननेकांश्चपाठयामासवैत
दा ॥ तन्निमित्तंचयत्किंचित्तत्सर्वंतुतथैवच ॥२७॥ धान्यंफलंचवस्त्रंचघृतंतैलंभवेच्चयत् ॥ तत्तत्सर्वंत्वयाग्राह्यंनदोषायभवेत्पुनः ॥ २८ ॥ ममकृत्येभ
वान्मुख्योदेवीकृत्येविशेषतः ॥ प्राजापत्यंभवेद्यर्हितह्येकोपिभवान्भवेत् ॥ २९ ॥ यदिभवान्नपूज्येतततत्सर्वंनिष्फलंभवेत् ॥ तदापूजाचसंपूर्णायदास्तु
चभवान्वदेत् ॥ ३० ॥ चत्वारोबटुकास्तस्यसुदर्शनमहात्मनः ॥ अभिषिक्ताश्चतेदिक्षुशिवेनपरमात्मना ॥ ३१ ॥ तिलकंवर्तुलंकार्यंस्नानंकार्यंसदाशु
भैः ॥ शिवसंध्याचकर्तव्यागायत्रीचतदीयका ॥ ३२ ॥ मत्सेवांचैवकृत्वातुकार्यमन्यत्कुलोचितम् ॥ वेदमंत्रोनवाच्योवैमंत्राश्चभवदीयकाः ॥ ३३ ॥

चंडीचैवाऽथचंडश्चपुत्रंस्थाप्यसुदर्शनम् ॥ तत्पुत्रान्प्रेरयामासवरान्दत्त्वाह्यनेकशः ॥ ३४ ॥ उभयोर्व्यूहयोर्यत्रबटुकोवैभवेन्मम ॥ तत्रस्याद्द्विजयोनि
त्यंनाऽत्रकार्याविचारणा ॥ ३५ ॥ भवान्वैपूजितोयेनतेनाऽहंचप्रपूजितः ॥ एवंवरंतदादत्त्वावेदब्रह्मविवर्जितम् ॥ ३६ ॥ कर्तव्यंचभवद्भिश्चस्वीयंकर्मस
दाचयत् ॥ शिवाभ्यांस्थापितायस्मात्तस्मात्तेबटुकाःस्मृताः ॥ ३७ ॥ तपोभ्रष्टायतोजातास्तस्मात्तपोधमामताः ॥ शिवयोःकृपयासर्वैविस्तारंबहुधाग
ताः ॥ ३८ ॥ तेषांचप्रथमापूजाततःपूजामहात्मनः ॥ तेनयावत्कृतानैवपूजाचशंकरस्यच ॥ ३९ ॥ तावत्पूजानकर्त्तव्याशिवस्यवचनादिह ॥
शुभंवाप्यशुभंवापिबटुकंनपरित्यजेत् ॥ ४० ॥ प्राजापत्येचभोज्येचबटुरेकोविशिष्यते ॥ शिवयोश्चतथाकार्येविशेषोदृश्यतेत्विह ॥ ४१ ॥
तस्यैवनगरेराज्ञोभद्रस्यनित्यभोजने ॥ नियमेप्राजापत्यस्यह्यंधकेशसमीपतः ॥ ४२ ॥ यज्जातंश्रूयतांतच्चकथयामियथाश्रुतम् ॥ ध्वजएकश्चराज्ञोवैद
त्तश्चशंकरेणच ॥ ४३ ॥ प्रातश्चबध्यतांराजन्रात्रौचैवपतिष्यति ॥ ममकृत्येचसंपूर्णेप्राजापत्येतथापुनः ॥ ४४ ॥ अन्यथाचेत्तदातत्ररात्रावेवस्थिरो
भवेत् ॥ इतिनियमस्तस्याऽसीच्छिवपूजाविधानतः ॥ ४५ ॥ प्राजापत्यंततश्चैवकर्तव्यंचादिनोदिने ॥ प्रातर्ध्वजोनिबध्येतस्वयंचैवपतेदिति ॥ ४६ ॥
यदिकार्यंचसंपूर्णंजातंचैवभवेदिह ॥ अन्यथानपतत्येवतथैवातिष्ठतिध्रुवम् ॥ ४७ ॥ एकस्मिन्समयेचाऽत्रबटोःकार्यंतथाह्यभूत् ॥ राज्ञाचभोजयित्वातु
प्रेषितोबटुरेवच ॥ ४८ ॥ अभोजितेषुविप्रेषुध्वजश्चपतितोह्यभूत् ॥ दृष्ट्वातच्चतदातत्रपृष्टंराज्ञाकथंध्वजः ॥ ४९ ॥ पतितोब्राह्मणाह्यत्रभुंजतेनोत्थिता
इति ॥ कथंनिपतितश्चात्रब्राह्मणाःसत्यवादिनः ॥ ५० ॥ तेपृष्टाश्चतदाप्रोचुर्बटुकोभोजितःपुरा ॥ चण्डीपुत्रःशिवस्यैवतस्माच्चपतितोध्वजः ॥ ५१ ॥
एवंचमहिमातेषांवर्द्धितःशंकरेणच ॥ तस्माच्चबटुकाःश्रेष्ठाःपुराविद्भिःप्रकीर्तिताः ॥ ५२ ॥ शिवपूजातुतैःपूर्वंकर्तव्यासर्वतःशुभा ॥ उत्तारणंचपूजायाःपू
जापूर्णाभवत्विति ॥ ५३ ॥ एतावदेवतेषांतुकार्यंनान्यत्तथैवच ॥ एतत्सर्वंसमाख्यातंयत्पृष्टंचमुनीश्वराः ॥ यच्छ्रुत्वाशिवपूजायाः फलंतुलभतेनरः ॥ ५४ ॥
इतिश्रीशिवमहापुराणेज्ञानसंहितायांचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ऋषयऊचुः ॥ ज्योतिषांचैवलिंगानांमाहात्म्यंकथयाऽधुना ॥ उत्पत्तिंचतथातेषां
ब्रूहिसर्वंयथाश्रुतम् ॥ १ ॥ सूतउवाच ॥ अहंसर्वंप्रवक्ष्यामियथाबुद्धियथाश्रुतम् ॥ एतेषांचैवमाहात्म्यंवक्तुंवर्षशतैरपि ॥ २ ॥ शक्यतेनमुनिश्रेष्ठास्तथापि
कथयामिवः ॥ सप्तविंशतिकन्याश्चदक्षस्यचमहात्मनः ॥ ३ ॥ तेनचंद्रमसेदत्ताअश्विन्याद्यामुनीश्वराः ॥ चंद्रश्चस्वामिनंप्राप्यशोभमानाविशेषतः ॥ ४ ॥ चंद्रमा
अपिताःप्राप्यशोभतेस्मनिरंतरम् ॥ हेम्नाचैवमणिर्भातिमणिनाहेमएवच ॥ ५ ॥ एवंचसमयेतस्ययज्जातंश्रूयतामिति ॥ सर्वास्वपिचपत्नीषुएकाप्रियतमा
यथा ॥ ६ ॥ रोहिणीनामयाप्रोक्तातथाऽन्यानकदाचन ॥ अन्याश्चदुःखमापन्नाःपितरंशरणंययुः ॥ ७ ॥ तदातस्मैचयद्दुःखंताभिर्निवेदितंतथा ॥ दक्षोऽपिचत

थाश्रुत्वादुःखंचप्राप्तवांस्तदा ॥८॥ समागत्यतदादक्षश्चंद्रंविज्ञापयत्तदा॥विमलेचकुलेत्वंचसमुत्पन्नःकलानिधिः ॥९॥ आश्रितेषुचसर्वेषुन्यूनाधिक्यंकथं
तव ॥नकर्तव्यंत्वयातासुन्यूनाधिक्यंतथापुनः ॥१० ॥ दक्षश्चैवंचसंप्रार्थ्यचंद्रंजामातरंस्वयम् ॥ जगाममंदिरंस्वीयंनिश्चयंपरमंगतः॥११॥चंद्रोऽपिवचनं
तस्यनचकारविमोहितः॥ भाविशुभंयदायस्यतस्यभाविशुभंतदा॥१२॥ यदानजायतेभाविकथंतस्यशुभंभवेत् ॥ चंद्रोऽपिबलवद्भावित्दामेनेनतद्वचः
॥१३॥ रोहिण्यांचसमासक्तोनान्यांमेनेकदाचन ॥ दक्षोऽपिपुनरागत्यस्वयंदुःखसमन्वितः ॥ १४॥ श्रूयतांतुमयापूर्वंप्रार्थितोबहुधातथा..नमानितंत्वया
यस्मात्तस्मात्त्वंचक्षयीभव॥१५॥इत्युक्तेचैवचंद्रोऽपिक्षयीजातःक्षणादिह ॥ किंकर्तव्यंक्वगंतव्यंदुःखितस्तत्क्षणादिह॥१६॥हाहाकारस्तदाह्यासीच्चंद्रेचक्षी
णतांगते ॥ देवाश्चदुःखिताःसर्वेऋषयश्चपुरातनाः॥१७॥गंधर्वाप्सरसश्चैवकिंकार्यंहाकथंभवेत् ॥ इतिदुःखंसमापन्नादेवाइंद्रादयस्तदा ॥१८॥ विज्ञापिता
श्चचंद्रेणब्रह्माणंशरणंययुः ॥ गत्वातेतुतदाप्रोचुस्तेदेवाश्चतदापुनः ॥१९॥ वृत्तांतंचतदीयंवैब्रह्मणेतंन्यवेदयन् ॥ ब्रह्मापितद्वचःश्रुत्वाअहोदुष्टंकथंकृतम्
॥२०॥ चंद्रस्तुसर्वदादुष्टोदक्षश्चकृतवान्कथम् ॥ पूर्वंदुष्टेनदुष्टंचकृतंबहुतरंपुनः ॥२१॥ श्रूयतामृषयःश्रेष्ठाश्चंद्रकृत्यंपुरातनम् ॥ बृहस्पतेर्गृहेगत्वाताराद्दु
ष्टेनवैहृता ॥२२॥ हृत्वातारांपुनश्चैवयुद्धायसमुपस्थितः ॥ समाश्रित्यतदादैत्यान्स्पर्द्धीदेवैश्चकारह ॥२३॥ मयाचैवाऽत्रिणाचैवनिषिद्धस्तारकांददौ ॥
तांचगर्भवतींसोऽपिनगृह्णामीतितद्वचः ॥ २४ ॥ अस्माभिर्वारितःसोपिजग्राहतारकांतदा ॥ यदिगर्भंजहातीहतदेनांचाग्रहीत्पुनः ॥ २५ ॥ गर्भंमयापुन
स्तत्रत्याजितेऋषिसत्तमाः ॥ कस्याऽयंचपुनर्गर्भःसोमस्येतिवचःपुनः ॥ २६ ॥ पश्चात्तेनगृहीतासामयाचवारितेनच ॥ एवंविधानिचंद्रस्यचरित्राण्यप्य
नेकशः ॥२७॥ वर्ण्यतेकिंपुनस्तानिइदानींक्रियतेकथम् ॥ यज्जातंतत्तुतज्जातंनाऽन्यथाभवतिध्रुवम् ॥२८॥ अतःपरंशुभेक्षेत्रेमृत्युंजयविधानतः ॥ शिव
माराधयेत्तत्रदेवेशंचप्रभानिधिम् ॥२९॥ शंकरंलोककर्तारंभजेच्चंद्रःप्रभासके॥प्रसन्नश्चशिवःपश्चाद्दक्षयंचकरिष्यति ॥३० ॥ इतिश्रुत्वावचस्तस्माद्ब्रह्मणः
परमात्मनः॥इंद्राद्यादेवताःसर्वाऋषयश्चपुरातनाः॥३१॥गृहीत्वाचतथाचंद्रंदक्षंचाश्वास्यवैतदा॥प्रभासेचततोगत्वागर्तेचक्रुस्तथापुनः॥३२॥ आवाह्यती
र्थवर्याणिसरस्वत्यामतःपरम् ॥ पार्थिवेनतदापूजामृत्युंजयविधानतः ॥ ३३ ॥ तेदेवाश्चतदासर्वेऋषयोनिर्मालाशयाः ॥ स्थाप्यचंद्रंप्रभासेचस्वंस्वंधाम
ययुर्मुदा ॥ ३४ ॥ चंद्रेणचतपस्तप्तंषण्मासंचनिरंतरम् ॥ मृत्युंजयेनमंत्रेणपूजितोवृषभध्वजः ॥ ३५ ॥ दशकोटयाचमंत्रैर्वैसमावृत्यस्वयंप्रभुः ॥ प्रस
न्नोभगवान्देवःशंकरोलोकशंकरः ॥ ३६ ॥ वरंवृणीष्वभद्रंवैमनसोयत्समीप्सितम् ॥ चंद्रउवाच ॥ यदिप्रसन्नोदेवेशकिमसाध्यंभवेन्मम ॥ ३७ ॥ तथा
पिमेशरीरस्यक्षयंवारयशंकर ॥ क्षंतव्योमेऽपराधश्चकल्याणंक्रियतांत्वया ॥ ३८ ॥ इत्युक्तेचतदातेनशिवोवचनमब्रवीत् ॥ शिवउवाच ॥ पक्षेचक्षीयते

चंद्रकलातेचदिनेदिने ॥ ३९ ॥ पुनश्चवर्द्धतांपक्षेताःकलाश्चनिरंतरम् ॥ एवंसतितदादेवाहर्षनिर्भरमानसाः ॥ ४० ॥ ऋषयश्चतदासर्वेसमाजग्मुःपरस्प
रम् ॥ आगत्यचतदासर्वेचंद्रेचाऽऽशिषमावहन् ॥ ४१ ॥ शिवंचैवतुसंप्रार्थ्यस्वामिंस्त्वंहिस्थिरोभव ॥ उमयासहितःशंभुश्चंद्रेणसंस्कृतःपुरा ॥ ४२ ॥
निराकारश्चसाकारःपुनश्चैवाऽभवत्पुरा ॥ प्रसन्नश्चैवदेवानांक्षेत्रमप्यन्नहेतवे ॥ ४३ ॥ चंद्रस्ययशसेतत्रनाम्नाचंद्रस्यवैस्वयम् ॥ सोमेश्वरश्चनामासीद्वि
ख्यातंभुवनत्रये ॥ ४४ ॥ धन्योऽयंकृतकृत्योऽयंयन्नाम्नाशंकरःस्वयम् ॥ स्थितश्चजगतांनाथःपावयञ्जगतीतलम् ॥ ४५ ॥ तत्कुंडंचैवतैस्तत्रसर्वैश्चैव
प्रतिष्ठितम् ॥ शिवेनब्रह्मणातत्रह्यभिव्यक्तंतुतत्पुनः ॥ ४६ ॥ चंद्रकुंडंप्रसिद्धंचपृथिव्यांपापनाशनम् ॥ तत्रस्नातिनरोयस्तुसर्वपापैःप्रमुच्यते ॥ ४७ ॥
रोगाश्चैवक्षयंयांतिह्यसाध्यायेभवंतिहि ॥ तेचसर्वेक्षयंयांतिषण्मासंस्नपनादिह ॥४८॥ कुष्ठीचजायतेशुद्धःप्रायश्चित्तेकृतेसाति ॥ प्रभासंचपरिक्रम्यपृथिवी
संभवंफलम् ॥ ४९ ॥ यद्यत्फलंसमुद्दिश्यकरोतितीर्थमुत्तमम् ॥ तत्तत्फलमवाप्नोतिसर्वथानात्रसंशयः ॥ ५० ॥ इतितेऋषयोदेवाःफलंदृष्ट्वातथावि
धम् ॥ चंद्रंचैवगृहीत्वाचनमस्कृत्याशिवंमुदा ॥ ५१ ॥ परिक्रम्यचतत्तीर्थंययुस्तेचप्रशंसयन् ॥ चंद्रश्चाऽपिस्वकीयंचकार्यंचक्रेपुरातनम् ॥ ५२ ॥ इति
सर्वंसमाख्यातंसोमेशस्यकथानकम् ॥ एवंसोमेश्वरंलिंगंसमुत्पन्नंमुनीश्वराः ॥ ५३ ॥ यःशृणोतितदुत्पत्तिंसचपापैःप्रमुच्यते ॥ अतःपरंप्रवक्ष्यामिमल्लि
कार्जुनसंभवम् ॥ ५४ ॥ पूर्वंचकथितंयच्चतदहंकथयाम्यहम् ॥ कुमारस्यवियोगेनमाताचगिरिजायदा ॥ ५५ ॥ दुःखिताऽऽसीत्तदाशंभुस्तामुवाचकथं
प्रिये ॥ आयातिपुत्रकस्तेचत्यज्यतांदुःखमुत्कटम् ॥ ५६ ॥ सायदाचनतन्मेनेप्रेषितादेवतास्तदा ॥ ऋषयश्चैवगंधर्वाअप्सरसोमुदान्विताः ॥ ५७ ॥
तेसर्वेचसमाजग्मुःकुमारस्यास्यहेतवे ॥ विज्ञाप्यबहुधाह्येनंपरावृत्यपुनर्गताः ॥ ५८ ॥ तदाचगिरिजादेवीविरहंपुत्रसंभवम् ॥ शंभुश्चपरमंदुःखंप्राप्यचा
ऽऽशुस्वपुत्रकम् ॥ ५९ ॥ पुत्रश्चाऽपिततोदूरंयोजनत्रयमेवच ॥ गतश्चदूरतस्तस्मात्क्रौंचेचपर्वतेशुभे ॥ ६० ॥ तौचतत्रसमासीनौज्योतीरूपं
समाश्रितौ ॥ तद्दिनंचसमारभ्यमल्लिकार्जुनसंज्ञितम् ॥ ६१ ॥ लिंगंचैवशिवस्यैवसिद्धंचभुवनत्रये ॥ आसीत्तत्रमहान्देवोज्योतीरूपःसनातनः ॥
॥ ६२ ॥ तल्लिंगंचतथादृष्ट्वासर्वपापैःप्रमुच्यते ॥ दुःखंचदूरतोयातिसुखमात्यंतिकंलभेत् ॥ ६३ ॥ जननीगर्भसंभूतंफलमाप्नोतिवैपुनः ॥ धनंधान्यं
समृद्धिश्चप्रतिष्ठारोग्यमेवच ॥ ६४ ॥ अभीष्टंसकलंतस्यजायतेनात्रसंशयः ॥ द्वितीयंज्योतीरूपंचकथितंलोकहेतवे ॥ ६५ ॥ इतिश्रीशिवमहापु
राणेज्ञानसंहितायांपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ छ ॥ ऋषयऊचुः ॥ सूतसर्वंविजानासिवस्तुव्यासप्रसादतः ॥ ज्योतिषांचकथांश्रुत्वातृप्तिर्नैव
विजायते ॥ १ ॥ तस्मात्त्वयाविशेषेणतदेवकथ्यतांपुनः ॥ सूतउवाच ॥ धन्योऽहंकृतकृत्योहंश्रीमतांसंगयोगतः ॥ २ ॥ श्रूयतांकथयिष्यामिकथां

पापप्रणाशिनीम् ॥ अवंतीनगरीरम्यामुक्तिदासर्वदेहिनाम् ॥ ३ ॥ क्षिप्राचैवमहापुण्यावर्ततेलोकपावनी ॥ तत्रासीद्ब्राह्मणश्रेष्ठःसर्वकर्मपरायणः ॥ ४ ॥
वेदाध्ययनकर्ताचवेदकर्मरतःसदा ॥ अग्न्याधानसमायुक्तःशिवपूजारतःसदा ॥ ५ ॥ पार्थिवींप्रत्यहंमूर्तिंपूजयामासवैद्विजः ॥ सर्वकर्मफलंप्राप्यवेदप्रिय
द्विजस्तदा ॥ ६ ॥ सतांगतिंसमालेभेसम्यग्ज्ञानपरायणः ॥ तत्पुत्रास्तादृशाह्यासंश्चत्वारऋषिसत्तमाः ॥ ७ ॥ देवप्रियश्चश्रेष्ठोवैप्रियमेधस्ततःपरः ॥
तृतीयःसुवृतोनामधर्मवादीचसुव्रतः ॥ ८ ॥ तेधर्मधारकाह्यासन्शिवपूजापरायणाः ॥ पितुरनवमानित्यंधर्माश्रयास्तथाशुभाः ॥ ९ ॥ तेषांपुण्यप्रतापा
च्चपृथिव्यांसुखमैधत ॥ शुक्लपक्षेयथाचंद्रोवर्धतेचानिरंतरम् ॥१०॥ तथातेषांगुणास्तत्रवर्धतेस्मसुखावहाः ॥ ब्रह्मतेजोमयीसावैनगरीयाऽभवत्तदा॥११॥
एतस्मिन्नंतरेतत्रयज्जातंश्रूयतांपुनः॥पर्वतेरत्नमालेचदूषणोवैमहासुरः॥१२॥बलवान्दैत्यराजश्चधर्मद्वेषीनिरंतरम्॥ब्रह्मणोवरदानाच्चजगत्तुच्छीकरोतिच॥
॥ १३ ॥ पृथिव्यांवेदधर्माश्चस्मृतिधर्माश्चसर्वशः ॥ स्फोटितास्तेनदुष्टेनसिंहेनचशशाइव ॥ १४ ॥ यावंतोवेदधर्माश्चतावंतोदूरतः कृताः ॥
तीर्थेतीर्थेतदाक्षेत्रेअरण्येचैवयेपुनः ॥ १५ ॥ तेसर्वेदूरतोनीतास्तेनैकेनदुरात्मना ॥ नदृष्टःक्वापिधर्मोवैवेदसंभवएवच ॥ १६ ॥ अवंतीनगरी
रम्यातत्राऽदृश्यतवैपुनः ॥ इतिविचार्यतेनेहयत्कृतंश्रूयतामतः ॥ १७ ॥ बहुसैन्यसमायुक्तोब्राह्मणान्समुपाययौ ॥ किमेतेब्राह्मणाःपुष्टानकुर्वं
तिवचोमम ॥ १८ ॥ सर्वेदेवामयालोकेराजानश्चवशीकृताः ॥ वशेकिंब्राह्मणाःशक्यानभेतुंदैत्यसत्तमाः ॥ १९ ॥ यदिजीवितुमिच्छास्यात्तदाधर्मं
शिवस्यच ॥ देवानांचैवधर्मंचत्यक्त्वासुखविभागिनः ॥ २० ॥ अन्यथाजीवनेवासेसंशयश्चभविष्यति ॥ इतिनिश्चित्यतेदैत्याश्चत्वारोवैमहाबलाः॥२१॥
चतुर्दिक्षुतथायाताःप्रलयेचयथापुरः ॥ तेब्राह्मणास्तथाश्रुत्वावचनंरक्षसांचहि ॥२२॥ नदुःखंलेभिरेतत्रशिवध्यानपरायणाः ॥ धैर्यसमाश्रितास्तेचरेखा
मात्रंततोद्विजाः ॥ २३ ॥ नचेलुःपरमाद्ध्यानाद्धराकाःकेशिवाग्रतः ॥ एतस्मिन्नंतरेतैस्तुव्याप्तासानगरीशुभा ॥ २४ ॥ लोकाश्चपीडितास्तेनब्राह्मणान्
समुपाययुः ॥ स्वामिनःकिंचकर्त्तव्यंदुष्टाश्चसमुपागताः ॥२५॥ हिंसिताबहवोलोकाआगताश्चसमीपतः॥तेषांचवचनंश्रुत्वाप्यूचुस्तेब्राह्मणाःपराः ॥२६॥
श्रूयतांविद्यतेनैवबलंपरभयावहम् ॥ नशस्त्राणितथासंतियैश्चैतेविमुखाःपुनः ॥ २७ ॥ सामान्यस्याऽपिमानोवैआश्रयस्यभवेदिह ॥ किंपुनश्चस
मर्थस्यशिवस्यैवभवेन्नहि ॥ २८ ॥ शिवोरक्षांकरोत्वद्यनाऽन्यथाशरणंशिवात् ॥ इतिस्थैर्यंसमास्थायपूजांतुपार्थिवस्यच ॥ २९ ॥ कृत्वाचेतस्तथासम्य
क्स्थिताध्यानपरायणाः ॥ प्राणायामपरास्तेचकुंभपूरकरेचकैः ॥३०॥ दृष्ट्वादैत्येनतावच्चहन्यतांबध्यतामिति ॥ तच्छ्रुतंचतदानैवध्यानमार्गपरायणैः ॥
॥३१॥ तावच्चपार्थिवेस्थानेगर्तमासीत्सशब्दकम् ॥ महाकालःसमुत्पन्नोदृष्ट्वातांतादृशींगतिम्॥ ३२॥ मायांतुब्राह्मणानांहिसमीपंदूरतोव्रज ॥ इत्युक्त्वा

हुंकृतेनैवभस्मसात्कृतवांस्तदा ॥ ३३ ॥ कियत्सैन्यंहतंतेनकिंचित्सैन्यंपलायितम् ॥ दूषणश्चहतस्तेनशिवेनपरमात्मना ॥ ३४ ॥ सूर्यंदृष्ट्वायथाया
तितमश्चसंक्षयंपुनः ॥ तथैवचशिवंदृष्ट्वासैन्यंनाशमुपागमत् ॥ ३५ ॥ देवदुंदुभयोनेदुःपुष्पवृष्टिःपपातह ॥ ब्राह्मणांश्चसमाश्वास्यप्रसन्नोहिशिवःस्वयम्
॥ ३६ ॥ तेपिदेवंशिवंप्रोचुर्मुक्तिंदेवप्रयच्छनः ॥ अत्रैवलोकरक्षार्थंस्थातव्यंहिशिवत्वया ॥ ३७ ॥ इत्युक्तस्तुशिवस्तत्रतस्थौगर्तेसुशोभने ॥ भक्तानां
चैवरक्षार्थंदत्त्वामुक्तिंद्विजांस्तदा ॥ ३८ ॥ द्विजास्तेमुक्तिमापन्नाश्चतुर्दिक्षुशिवादनु ॥ क्रोशमात्रंतदाजातालिंगरूपिणएवच ॥ ३९ ॥ महाकालेश्वरोना
मख्यातश्चभुवनत्रये ॥ तंदृष्ट्वादुःखकंस्वप्नेनायातिऋषिसत्तमाः ॥ ४० ॥ यंयंकाममपेक्ष्यैवसेवतेतत्फलंलभेत् ॥ एतत्सर्वंसमाख्यातंश्रूयतांपरमंवचः ॥
॥ ४१ ॥ ओंकारंचयथाह्यासीत्तथाचश्रूयतांपुनः ॥ कस्मिंश्चसमयेचात्रनारदोभगवांस्तदा ॥ ४२ ॥ गोकर्णाख्यंशिवंगत्वाआगतोविंध्यकेस्वयम् ॥ तत्रैवपू
जितस्तेनबहुमानपुरःसरम् ॥ ४३ ॥ मयिसर्वंचविद्येतनन्यूनंहिकदाचन ॥ इतिमानंतदाश्रुत्वानारदोमानहातदा ॥ ४४ ॥ निःश्वस्यसंस्थितस्तत्रश्रु
त्वाविंध्योऽब्रवीदिदम् ॥ किन्न्यूनंचत्वयादृष्टंमयिनिःश्वासकारणम् ॥ ४५ ॥ तच्छ्रुत्वानारदोवाक्यमुवाचश्रूयतांपुनः ॥ त्वयितुविद्यतेसर्वंमेरुरुच्चतरःपुनः
॥ ४६ ॥ देवेष्वपिविभागोऽस्यनतवाऽस्तिकदाचन ॥ इत्युक्त्वानारदस्तत्रजगामचयथागतम् ॥ ४७ ॥ विंध्यश्चपरितप्तोवैधिग्वजीवितादिकम् ॥
विश्वेश्वरंतथाशंभुमाराध्यचजयाम्यमुम् ॥ ४८ ॥ इतिनिश्चित्यतत्रैवओंकारयंत्रकेस्वयम् ॥ कृत्वाचैवपुनस्तत्रपार्थिवींशिवमूर्तिकाम् ॥ ४९ ॥ आराध्य
चतदाशंभुंषण्मासंचनिरंतरम् ॥ नचचालतदास्थानाच्छिवध्यानपरायणः ॥ ५० ॥ तस्मैचदर्शयामासदुर्लभंयोगिनामपि ॥ रूपंयथोक्तंवेदेषुभक्ता
नामीप्सितंचयत् ॥ ५१ ॥ प्रसन्नश्चतदाशंभुर्ब्रूहित्वंचममेप्सितम् ॥ विंध्यउवाच ॥ यदिप्रसन्नोदेवेशवृद्धिंदेहियथेप्सितम् ॥ ५२ ॥ किंकरोमियदैतेन
ब्रियतेदीयतेमया ॥ नयुक्तंपरदुःखायवरदानंमयाशुभम् ॥ ५३ ॥ तथाऽपिदत्तवांस्तत्रयथेच्छसितथाकुरु ॥ एवंचसमयेदेवाऋषयश्चतथाऽमलाः ॥
॥ ५४ ॥ संपूज्यशंकरंतत्रस्थातव्यमितिचाऽब्रुवन् ॥ तथैवकृतवान्देवोलोकानांसुखहेतवे ॥ ५५ ॥ ओंकारेचैवयंत्रेवैलिंगमेकंतथापुनः ॥ पार्थिवेचतथा
रूपेलिंगमेकंतथापुनः ॥ ५६ ॥ एवंद्वयंसमुत्पन्नंलिंगमेकंद्विधाकृतम् ॥ प्रणवेचोंकारश्चनामासीत्ससदाशिवः ॥ ५७ ॥ पार्थिवेचैवयज्जातंतदासीदमरे
श्वरः ॥ संपूज्यचतदादेवाःसंतुष्यवृषभध्वजम् ॥ ५८ ॥ वरान्दत्त्वाह्यनेकांश्चऋषयोदेवतास्तदा ॥ यएनंपूजयेद्देवंनगर्भेवसतेनरः ॥ ५९ ॥ यदभीष्टं
फलंतच्चप्राप्नुयान्नात्रसंशयः ॥ इत्युक्त्वाचतदादेवाह्यंतर्धानंगताहिते ॥ ६० ॥ एतत्तेहिसमायाख्यातमोंकारसंभवंफलम् ॥ अतःपरंप्रवक्ष्यामिकेदारंपाप
नाशनम् ॥ ६१ ॥ इतिश्रीशिवमहापुराणे०ज्योतिर्लिंगोत्पत्तिवर्णनंनामषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ सूतउवाच ॥ ब्रह्मणश्चैवसंभूतोमनुःस्वायंभुवःपुरा ॥

तत्पुत्रश्चमहातेजानाम्नाप्रियव्रतस्तदा॥ १॥तस्यासन्पुत्रकाःसप्तपुत्रार्थेचस्वयंतदा ॥ रथंचभ्रामयामासमेरोरनुपुनःपुनः॥२॥ सप्तप्रक्रमणंकृत्वासतद्वीपान
कल्पयत् ॥ द्वीपसंख्यास्तदाजाताःसमुद्राःसप्तएवच ॥ ३ ॥ सप्तानामपिपुत्राणांद्वीपमेकमदात्पुनः ॥ प्रत्येकंचतदादत्तंराज्ञातेनमहात्मना ॥ ४ ॥
लब्धागतिर्मुनीनांचविस्तार्यवंशमुत्तमम् ॥ आग्नीध्रश्चैवतत्पुत्रोज्येष्ठःप्रियव्रतस्यह ॥ ५ ॥ जंबूद्वीपेतदातेनकृतंराज्यंयथासुखम् ॥ तत्पुत्रस्तुतदाना
भिर्नाम्नालोकसुखावहः ॥ ६ ॥ तेनचापितथाराज्यंपितृवत्परिपालितम् ॥ तस्यपुत्रास्तथाजाताऋषभाद्यामुनीश्वराः ॥ ७ ॥ तस्यपुत्रशतंह्यासीदृषभ
स्यमहात्मनः ॥ सर्वेषांचैवपुत्राणांज्येष्ठोभरतएवच ॥ ८ ॥ नवयोगींद्रतांप्राप्तावीतरागास्तथाऽभवन् ॥ जनकस्यचविज्ञानंतैर्दत्तंसुमहात्मभिः ॥ ९ ॥
एकाशीतिस्तदाजाताःकर्ममार्गपरायणाः ॥ क्षत्रियाणांयथाकर्मकृत्वामोक्षपरायणाः ॥ १० ॥ ऋषभश्चोर्वरितानांहितायऋषिसत्तमाः ॥ खंडानिकल्प
यामासनवनवहितायच ॥ ११ ॥ तत्रापिभरतंज्येष्ठंखंडेऽस्मिन्स्पृहणीयके ॥ तन्नाम्नाचैवविख्यातंखंडंचभारतंतदा ॥ १२ ॥ सर्वेष्वपिचखंडेषुश्रेष्ठंभा
रतमुच्यते ॥ अमराजन्मइच्छंतिसर्वकर्मसुखावहम् ॥ १३ ॥ सर्वेष्वपिचखंडेषुह्यवताराःप्रकीर्तिताः ॥ विष्णुनालोकरक्षार्थंखंडेखंडेमुनीश्वराः ॥
॥ १४ ॥ तत्रापिभारतेखंडेबदर्याश्रमसंज्ञके ॥ नृनारायणरूपेणतिष्ठतिपरमेश्वरः ॥१५॥ तपस्तप्यतिनित्यंवैलोकानांहितकाम्यया ॥ तत्रकेदारसंज्ञंवै
शृंगंहिमसमुद्भवम् ॥ १६ ॥ नरोनारायणश्चैवयत्रास्तेचनिरंतरम् ॥ ताभ्यांसंप्रार्थितोदेवःपार्थिवेपूजनायवै ॥ १७ ॥ आयातिचऋषिश्रेष्ठाभक्त्यधीन
तयाशिवः ॥ कस्मिंश्चित्समयेतत्रप्रसन्नःपरमेश्वरः ॥ १८ ॥ सम्यक्कृतंभवद्भ्यांतुपूज्याभ्यांपूजितोह्यहम् ॥ किंकार्यंविद्यतेलोकेभवतोस्तपसःफलम्
॥ १९ ॥ अवाप्तकामौश्रेष्ठौचकिंकार्यंभवतोःपुनः ॥ तथापिपूजितश्चाऽहंप्रसन्नोव्रियतामिति ॥ २० ॥ इत्युक्तेचतदातेननरोनारायणःस्वयम् ॥
उवाचवचनंतत्रलोकानांहितकाम्यया ॥ २१ ॥ यदिप्रसन्नोदेवेशयदिदेयोवरस्त्वया ॥ स्थीयतांस्वेनरूपेणपूजार्थंशंकरस्वयम् ॥ २२ ॥ इत्युक्तस्तुत
दाताभ्यांकेदारेहिमसंज्ञके ॥ स्वयंचशंकरस्तस्थौज्योतीरूपीमहेश्वरः ॥ २३ ॥ ताभ्यांचपूजितश्चैवसर्वदुःखभयापहः ॥ लोकानामुपकारार्थंभक्तानां
दर्शनायवै ॥ २४ ॥ स्वयंस्थितस्तदाशंभुःकेदारेश्वरसंज्ञकः ॥ देवाश्चपूजयंतीहऋषयश्चसनातनाः ॥ २५ ॥ भवस्यपूजनान्नित्यंबदर्याश्रमवा
सिनः ॥ पवित्रिताःसदायेवैनाम्नाशिवउदाहृतः ॥ २६ ॥ तद्दिनंहिसमारभ्यकेदारेश्वरएवच ॥ पूजितोयेनभक्त्यावैदुःखंस्वप्नेपिदुर्लभम् ॥ २७ ॥ तत्र
त्यंवलयंयोवैदधातिहरिवल्लभः ॥ हरिरूपांकितंतच्चहररूपसमन्वितः ॥ २८ ॥ तस्यैवरूपंदृष्ट्वाचसर्वपापैःप्रमुच्यते ॥ जीवन्मुक्तोभवेत्सोवैयोगतोबदरी
वने ॥ २९ ॥ दृष्ट्वारूपंनरस्यैवतथानारायणस्यच ॥ केदारेश्वरनाम्नश्चमुक्तिभाजीनसंशयः ॥ ३० ॥ एतद्वश्चसमाख्यातंयत्पृष्टमृषिसत्तमाः ॥ श्रुत्वापा

पंहरेत्सर्वंनाऽत्रकार्याविचारणा ॥ अतःपरंप्रवक्ष्यामिमाहात्म्यंभीमशंकरे ॥ ३१ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांज्योतिर्लिंगमहिमवर्णनंनामस
प्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ सूतउवाच ॥ ॥ कामरूपेश्वरेदेशेशंकरोलोककाम्यया ॥ अवतीर्णःस्वयंसाक्षात्कल्याणगुणभाजनः ॥ १ ॥
यदर्थमवतीर्णोऽसौकथयामिमुनीश्वराः ॥ भीमोनाममहावीर्योराक्षसोलोकनाशनः ॥ २ ॥ दुःखदःसर्वभूतानांधर्मनाशनतत्परः ॥ कुंभकर्णात्समुत्पन्नः
कर्कट्यांसुमहाबलः ॥ ३ ॥ सह्येचपर्वतेसोपिमात्रासहसमन्वितः ॥ कुंभकर्णेचरामेणहतेलोकभयंकरे ॥ ४ ॥ राक्षसीपुत्रयुक्ताचसह्येतिष्ठत्स्वयंतदा ॥
सबालोराक्षसोभीमःकर्कटीमातरंतदा ॥ ५ ॥ प्रपच्छमेपिताकोवाकथंचैकाकिनीपुनः ॥ एवंपृष्टातदातेनपुत्रेणराक्षसीवचः ॥ ६ ॥ उवाचपुत्रंदुष्टावैश्रू
यतांकथयाम्यहम् ॥ पितातेकुंभकर्णश्चरावणानुजएवच ॥ ७ ॥ रामेणमारितःसोऽयंभ्रात्रासहमहाबलः ॥ अत्राऽऽगतःकदाचिद्वैमद्रोगंकृतवान्पुरा॥८॥
मयानदृष्टालंकावैह्यत्रैववनिवसाम्यहम् ॥ पितामेकर्कटोनाममातामेपुष्कसीमता ॥ ९ ॥ भर्तामेचविराधोऽभूद्रामेणचहतःपुरा ॥ पित्रोःपार्श्वेस्थिताऽहं
चस्वामिनिनिहतेसति ॥ १० ॥ पितरौमेमृतौचाऽत्रऋषिणाभस्मसात्कृतौ ॥ भक्षणार्थंगतौतत्रक्रुद्धेनसुमहात्मना ॥ ११ ॥ सुतीक्ष्णोनामविख्यातोत
पसादग्धकल्मषः ॥ तेनैवमारितौपुत्रपितरौममवल्लभौ ॥ १२ ॥ एकाकिनीतदाजाताद‌ुःखितापर्वतेपुरा ॥ एतस्मिन्त्समयेह्यत्रराक्षसोरावणानुजः ॥
॥ १३ ॥ आगत्यकृतवान्संगंविहायसगतस्तदा ॥ ततस्त्वंचसमुत्पन्नोमहाबलपराक्रमः ॥ १४ ॥ अवलंब्यपुनस्त्वांचकालक्षेपंकरोम्यहम् ॥ इतिश्रु
त्वावचस्तस्याभीमोभीमपराक्रमः ॥ १५ ॥ क्रुद्धःसंचिंतयामासकिंकरोमिहरिंप्रति ॥ पितामेचहतश्चैवमातामहस्तथापुनः ॥ १६ ॥
विराधश्चहतोह्यत्रदुःखंबहुतरंकृतम् ॥ तत्पुत्रोऽहंभवेयंचेद्धरिंचपीडयाम्यहम् ॥ १७ ॥ इतिकृत्वामतिंतत्रतपस्तप्तंसुदारुणम् ॥ ब्रह्माणंचसमुद्दिश्यवर्ष
साहस्रकंतदा ॥ १८ ॥ ऊर्ध्वबाहुश्चैकपादःसूर्येदृष्टिंदधत्पुरः ॥ मनसाध्यानमाश्रित्यतपश्चक्रेमहत्तदा ॥ १९ ॥ शिरसस्तस्यसंजातंतेजःपरमदारु
णम् ॥ तेनदग्धास्तदादेवाब्रह्माणंशरणंगताः ॥ २० ॥ हेब्रह्मन्राक्षसस्तेजोलोकान्पीडितुमुद्यतम् ॥ यत्प्रार्थ्यंतेनदुष्टेनतत्त्वंदेहिपितामह ॥ २१ ॥ नोचे
दद्यवयंदग्धास्तेनैवसुमहात्मना ॥ यास्यामःसंक्षयंसर्वेतस्माद्देहिपितामह ॥ २२ ॥ इतितेषांवचःश्रुत्वाब्रह्मालोकपितामहः ॥ जगामवरदानार्थंराक्षसायदु
रात्मने ॥ २३ ॥ तदग्रेचतदायातोहंसवाहनसंयुतः ॥ प्रसन्नोऽस्मिवरंब्रूहियत्तेमनसिवर्त्तते ॥ २४ ॥ इतिश्रुत्वावचस्तस्यवचनंपुनरब्रवीत् ॥ राक्षसउवा
च ॥ यदिप्रसन्नोदेवेशयदिदेयोवरस्तदा ॥ २५ ॥ अतुलंचबलंमेऽद्यदेहित्वंकमलासन ॥ इत्युक्त्वातुनमश्चक्रेब्रह्मणेपरमात्मने ॥ २६ ॥ ब्रह्माचापितदात
स्मैवरंदत्त्वागृहंययौ ॥ राक्षसोबलवाँस्तत्रमातरंप्रणिपत्यच॥२७॥पश्यमातःकरोम्यद्यदेवानांप्रलयंह्यहम्॥इत्युक्त्वाप्रथमंतत्रकामरूपेश्वरंशुभम्॥२८॥

बवंधताडयामासभीमोभीमपराक्रमः॥गृहीतंचधनंसर्वंहस्त्यश्वरथसंकुलम्॥२९॥छत्रंचचामरंचैवसर्वोपस्करणानिच॥ तेनैवगृहीतंराज्यंतदीयंचमुनीश्व
राः॥३०॥राजाचापिशुचिःश्रेष्ठःप्रियधर्मोहरिप्रियः॥गृहीतोनिगडेतेनदुष्टेनसुरशत्रुणा॥३१॥एकांतेतुतदाकृत्वापार्थिवींमूर्तिमुत्तमाम्॥भजनंचशिवस्यैव
प्रारब्धंप्रियकाम्यया॥३२॥गंगायास्तवनंतेनबहुधाचतदाकृतम्॥मानसंस्नानकर्मादिकृत्वाचशिवपूजनम्॥३३॥ पार्थिवेनविधानेनचकारनृपसत्तमः॥
तद्ध्यानंचतथास्याद्वैकृत्वाचविधिपूर्वकम्॥३४॥प्रणिपातैःस्तवैःस्तोत्रैर्मुद्रासनपुरःसरम्॥कृत्वाचसकलंतत्रभेजेसशंकरंमुदा॥३५॥ पंचाक्षरमयींविद्यां
जजापप्रणवान्विताम्॥नाऽन्यत्कार्यंचवैकर्तुंलब्धवानंतरंतदा॥३६॥इदमेवतदातत्रचकारहितकाम्यया॥तत्पत्नीचतदासाध्वीदक्षिणानामविश्रुता॥३७॥
पार्थिवंचविधानंहिचकारनृपवल्लभा॥दंपतीह्येकभावेनशंकरंप्रियकारकम्॥३८॥ भजयामासतुस्तत्रनाऽन्यथामनसोगतिः॥राक्षसोवसुधांकृत्स्नांवशेचऋ
षिसत्तमाः॥३९॥वेदधर्मंशास्त्रधर्मंस्मृतिधर्मंपुरातनम्॥ लोपयित्वाचतत्सर्वंबुभुजेस्वयमात्मना॥ ४०॥ देवाश्चपीडितास्तेनऋषयःपीडिताभृशम्॥
अत्यंतंदुःखमापन्नाःशिवंचशरणंययुः॥ ४१॥ स्तुत्वास्तोत्रैरनेकैश्चहरंलोकसुखावहम्॥ प्रसन्नंकृतवंतस्तेमहाकोश्यास्तटेशुभे॥४२॥कृत्वाचपार्थिवीं
मूर्तिंपूजयित्वाविधानतः॥स्तुत्वाचविविधैःस्तोत्रैर्नमस्कारादिभिःक्रमात्॥४३॥एवंस्तुतस्तदाशंभुर्देवान्वचनमब्रवीत्॥प्रसन्नोऽस्मिवरंब्रूतकिंकार्यंकरवा
णिवः॥४४॥ इत्युक्तेचतदातेनदेवाह्यूचुःशिवंपुरः॥ सर्वंजानासिदेवेशनाऽज्ञातंविद्यतेतव॥४५॥तथापिश्रूयतांदेवराक्षसोभीमरूपकः॥ पीडयत्यतितरांदे
वान्कृपांकुरुसदाशिव॥ ४६॥ दुष्टंचराक्षसंत्वंचजहिशीघ्रंप्रियंकर॥इत्युक्तस्तुतदाशंभुःकरिष्यामिवचोऽब्रवीत्॥४७॥ राजाचापिमदीयोवैभक्तोभवति
नित्यशः॥ तस्मात्प्रब्रूतवैदेवाःकार्यंशीघ्रंभविष्यति॥ ४८॥ इत्युक्तास्तेतदादेवाआनंदंपरमंगताः॥ स्वंस्वमाश्रमकंसर्वेययुस्तेचमहर्षयः॥ ४९॥
शिवोपिस्वगणैःसार्धंजगामहितकाम्यया॥ एतस्मिन्नंतरेतत्रकामरूपेश्वरेणच॥ ५०॥ अत्यंतंध्यानमारब्धंपार्थिवस्यपुरस्तदा॥ कैश्चिच्चतत्रगत्वाच
राक्षसायानिवेदितम्॥ ५१॥ राजाकिंचित्करोत्येवंत्वदर्थेराक्षसोत्तम॥ अभिचारंकरोतिवैयथेच्छसितथाकुरु॥ ५२॥ राक्षसोपिचतच्छ्रुत्वाकुपितो
हननेच्छया॥ गृहीत्वाकरवालंचह्याजगामनृपंप्रति॥ ५३॥ तंदृष्ट्वाराक्षसोह्यत्रपार्थिवादिस्थितंचयत्॥ तदत्यंतविरूपंचदृष्ट्वाकिंचित्करो
त्यसौ॥ ५४॥ कुपितोराक्षसस्तत्रहन्यांसोपस्करंविभुम्॥ विचार्योवाचतंतत्रक्रियतेकिंत्वयाऽधुना॥ ५५॥ सत्यंवदनहन्यांत्वामन्यथाहन्मि
निश्चितम्॥ इतिश्रुत्वावचोह्यस्यसत्यपाशेनयंत्रितः॥ ५६॥ उवाचवचनंसत्यंभविष्यंतुभवेदिह॥ कृपालुःशंकरश्चात्रवर्ततेपार्थिवेध्रुवम्॥
॥ ५७॥ मदर्थेनकरोतीहह्यहंकियान्वराककः॥ स्वरूपातुप्रतिज्ञांचसत्यंचैवकरिष्यति॥ ५८॥ मद्भक्तंचयदाकश्चित्पीडयत्यतिदारुणम्॥ तदाहं

तस्यरक्षार्थंदुष्टंहन्मिनसंशयः ॥ ५९ ॥ एवंधैर्यंसमालंब्यध्यात्वादेवंचशंकरम् ॥ त्वदीयोऽस्मिमहाराजयथेच्छासितथाकुरु ॥ ६० ॥ एवंमनसितंध्यात्वा
राक्षसंचाऽवमानयन् ॥ सत्यंचवचनंह्यत्रह्यब्रवीत्प्रियकाम्यया ॥ ६१ ॥ भजामिशंकरंदेवंयथेच्छासितथाकुरु ॥ इतितस्यवचःश्रुत्वाभीमोवचनमब्रवीत्
॥ ६२ ॥ शंकरश्चमयाज्ञातःकिंकरिष्यतिमामिति ॥ योमेपितृव्यकेनैवस्थापितःकिंकरोयथा ॥ ६३ ॥ तद्बलंहिसमाश्रित्यविजेतुंत्वंसमाहसे ॥ तर्हि
त्वयाजितंसर्वंनाऽत्रकार्योविचारणा ॥ ६४ ॥ यावन्मयानदृष्टोऽस्तिशंकरस्त्वत्प्रपालकः ॥ तावत्त्वंस्वामिनंमत्वासेवसेनाऽन्यथाक्वचित् ॥ ६५ ॥ मया
दृष्टेनसर्वंवैस्फुटंस्यात्सर्वथानृपः ॥ तस्मात्त्वयाशिवस्येदंरूपंदूरतरंपुनः ॥ ६६ ॥ कर्तव्यंनान्यथाचेद्वैपश्यासिस्वामिनोमम ॥ इतितद्वचनंश्रुत्वानृपो
वाक्यमुपाददे ॥ ६७ ॥ अहंचपामरश्चैवमोक्ष्यामिशंकरंपुनः ॥ सर्वोत्कृष्टश्चसस्वामीनमांमुंचतिकर्हिचित् ॥ ६८ ॥ एवंवचस्तदाश्रुत्वाविहस्यराक्ष
सोत्तमः ॥ मत्तोभोगीसदाभिक्षेत्सकिंजानातिस्वीकृतम् ॥ ६९ ॥ योगिनांकाचनिष्ठाचभक्तानांप्रतिपालने॥इतिकृत्वामतिंत्वंचदूरतोभवसर्वथा॥ ७०॥
अहंचतवस्वामीचयुद्धंचकरवावहै ॥ इत्युक्तःसनृपश्रेष्ठोमयावक्तुंनशक्यते ॥ ७१ ॥ त्वयाचक्रियतेतर्हिकर्तव्यंशक्तिमानसि ॥ इत्युक्तःसैन्यमादायरा
जानंपरिभर्त्स्यतम्॥७२॥ करालंकरवालंचपार्थिवेप्राक्षिपत्तदा॥पश्यत्वंस्वामिनोऽद्यैवबलंभक्तसुखावहम्॥७३॥इत्युक्त्वातुविहस्यैवराक्षसःसमहाबलः॥
करवालंपार्थिवेयावत्स्पृशतिनमुनीश्वराः ॥ ७४ ॥ तावच्चपार्थिवात्तस्मादाविरासस्वयंहरः ॥ पश्यभीमेश्वरोहंसरक्षार्थंप्रकटाम्यहम् ॥ ७५ ॥ मम
पूर्वंव्रतंह्येतद्रक्षणीयोनृपोमया ॥ एतस्मात्पश्यमेशीघ्रंबलंभक्तसुखावहम् ॥ ७६ ॥ तदीयंचपिनाकेनकरालंशतधाकृतम् ॥ पुनश्चैवत्रिशूलंचक्षिप्तंतेनदुरा
त्मना ॥ ७७ ॥ तच्छूलंशतधानीतंदुष्टस्यपरमात्मना ॥ पुनश्चशक्तिकाक्षिप्तासाचैवलक्षधाकृता ॥ ७८ ॥ यदस्त्रंचततस्तेनक्षिप्तंतस्मैमहात्मने ॥ तेना
पिचत्रिशूलेनतिलशश्चकृतंक्षणात् ॥ ७९ ॥ ततश्चैवगणानांचराक्षसानांपरस्परम् ॥ युद्धमासीत्तदाघोरंपश्यतांदुःखमावहम् ॥ ८० ॥ ततश्चपृथिवीसर्वा
व्याकुलाह्यभवत्तदा ॥ समुद्राश्चतदासर्वेचुक्षुभुःसमहीधराः ॥ ८१ ॥ ग्रहनक्षत्रताराश्चद्यौश्चैवचतथाविधा ॥ देवाश्चऋषयःसर्वेदुःखिताह्यभवंस्तदा ॥
॥ ८२ ॥ नारदश्चसमागत्यशंकरंदुःखहारकम् ॥ प्रार्थयामासतत्रैवक्षम्यतांशंकरत्वया ॥ ८३ ॥ तृणेकश्चकुठारोवैहन्यतांशीघ्रमेवच ॥ इतिसंप्रार्थि
तःशंभुःसर्वान्रक्षोगणानिति ॥ ८४ ॥ हुंकारेणैवचाऽस्त्रेणभस्मसात्कृतवांस्तदा ॥ सर्वेतेराक्षसादग्धाभस्मराशयएवते ॥ ८५ ॥ दावानलगतोवह्निर्यथा
चवनमादहेत् ॥ तथाशिवेनक्रुद्धेनराक्षसानांवनंक्षणात् ॥ ८६ ॥ भीमस्यैवचकिंभस्मनज्ञातंकेनचित्तदा ॥ सपरिवारस्ततोदग्धोनामनश्रूयतेतदा ॥
॥ ८७ ॥ ततःशिवस्यक्रोधोनशांतिंप्रापमुनीश्वराः ॥ क्रोधज्वालाचफूत्कारान्निःससारवनाद्वनम् ॥ ८८ ॥ राक्षसानांचयद्भस्मसर्वंव्याप्तंवनेतदा ॥ ततश्चौ

षधयोजातानानाकार्यकरास्तथा ॥ ८९ ॥ रूपांतरंततोयावद्वेषांतरमथापिवा ॥ भूतप्रेतपिशाचादिदूरतश्चततोव्रजेत् ॥ ९० ॥ तत्तत्कार्यंचयच्चैवततो
नभवतिद्विजाः ॥ तैर्देवैःप्रार्थितःशंभुःशांतिसमधिगच्छवै ॥ ९१ ॥ स्थातव्यंस्वामिनाह्यत्रलोकानांसुखहेतवे ॥ अयंवैकुत्सितोदेशऔषध्योलोकदुःखदाः
॥ ९२ ॥ भवंतंचतदादृष्ट्वाकल्याणंसंभविष्यति ॥ भीमशंकरनामात्वंभवितासर्वसाधकः॥इत्येवंप्रार्थितःशंभुस्तत्रैवास्थितवांस्तदा ॥ ९३ ॥ इतिश्रीशि
वमहापुराणेज्ञानसंहितायांभीमशंकरमाहात्म्यवर्णनंनामाष्टचत्वारिंशत्तमोऽध्यायः॥४८॥सूतउवाच ॥ अतःपरंप्रवक्ष्यामिश्रूयतामृषिसत्तमाः॥ विश्वेश्वर
स्यमाहात्म्यंमहापातकनाशनम् ॥ १ ॥ यदिदंदृश्यतेकिंचिज्जगत्यांवस्तुमात्रकम् ॥ तत्सर्वंचयदानासीत्पंचक्रोशीतदाशुभा ॥ २ ॥ तदेवकथयाम्यद्य
तन्निर्माणंमुनीश्वराः ॥ यदाचनिर्गुणंतेजःसत्यंज्ञानमनंतकम् ॥ ३ ॥ चिदानंदस्वरूपंचनिर्विकारंसनातनम् ॥ ततश्चप्रकृतिर्देवीसापूरुषसमन्विता ॥४॥
आवाभ्यांकिंचकर्तव्यमावांकेनैवनिर्मितौ ॥ इतिसंशयमापन्नौप्रकृतिपुरुषौयदा ॥ ५ ॥ ताभ्यांवाणीसमुत्पन्नानिर्गुणात्परमात्मनः ॥ तपश्चैवप्रकर्त्तव्यं
ततःसृष्टिरनुत्तमा ॥ ६ ॥ प्रकृतिःपुरुषश्चैवतदैतदूचतुस्तथा ॥ तपसश्चस्थलंनास्तिकुत्रवास्थीयतेऽधुना ॥ ७ ॥ ततश्चतेजसःसारंपंचक्रोशात्मकंशु
भम् ॥ सर्वोपकारणैर्युक्तंसुंदरंनगरंयथा ॥ ८ ॥ निर्मायप्रेषितंताभ्यांनिर्गुणेनविराजितम् ॥ अंतरिक्षेस्थितंतच्चअधिष्ठायहरिःस्वयम् ॥ ९ ॥ तपश्चकार
विविधंसृष्टिकामस्तदाज्ञया ॥ तेनैवबहुकालंचतपस्तप्तंसुदारुणम् ॥ १० ॥ तपसःकरणाच्चैवश्रमस्तस्यमहात्मनः ॥ श्रमेणजलधाराश्चविविधाश्चाऽभवं
स्तदा ॥ ११ ॥ ताभिर्व्याप्तंचसर्वंवैनान्यत्किंचित्प्रदृश्यते ॥ ततश्चविष्णुनादृष्ट्वाअहोकिमेतदद्भुतम् ॥ १२ ॥ इत्याश्चर्यंतदादृष्ट्वाशिरसःकंपनंकृतम् ॥
ततश्चपतितःकर्णान्मणिश्चपुरतःप्रभोः ॥ १३ ॥ यत्राऽसौपतितश्चैवतत्रासीन्मणिकर्णिका ॥ जलौघैःप्लाव्यमानासापंचक्रोशीपुरातना ॥ १४ ॥ निर्गुणे
नशिवेनैवत्रिशूलेनधृतातदा ॥ विष्णुरपिचतत्रैवसुष्वापप्रकृत्यासह ॥ १५ ॥ कियत्कालंजलेतत्रसुप्तोऽसौचजनार्दनः ॥ तन्नाभिकमलाज्जातोब्रह्मालोक
पितामहः ॥ १६ ॥ शिवाज्ञांचसमासाद्यसृष्टिंचकृतवांस्तदा ॥ यत्किंचिद्दृश्यतेह्यत्रब्रह्मांडेसचराचरम् ॥ १७ ॥ तद्व्याप्तंचविशेषेणशिवेनतेजसातदा ॥
चेतनाचेतनंयच्चव्याप्तमासन्मुनीश्वराः ॥ १८ ॥ ततश्चसृष्टिकार्यंचप्रावर्ततसमंततः ॥ चतुर्दशभुवनानीहजातानिगोलकेतदा ॥ १९ ॥ योजनानांच
पंचाशत्कोटिसंख्याप्रमाणतः ॥ ब्रह्मांडस्यैवविस्तारोमुनिभिःपरिकीर्तितः ॥ २० ॥ यथाचैवजलेनौश्चतथाब्रह्मांडकंजले ॥ यथाचमसृणोगोलस्तक्रेचप
रिदृश्यते ॥२१॥ दिग्गजैश्चधृतंतच्चस्थिरंचपरिवर्तते ॥ मध्येप्रमाणंत्वर्धंचह्युक्तस्यचऋषीश्वराः ॥ २२ ॥ शेषस्याऽर्धंतथाचोर्ध्वंतथाऽधःपरिभाषितम् ॥
मध्येचभूर्लोकःस्यात्तदधःसप्तकंतथा ॥ २३ ॥ तलंचैवाऽतलंचैवसुतलंवितलंतथा ॥ महातलंचपातालंरसातलमथापिच ॥ २४ ॥ भूर्लोकादुपरियो

वैसुवर्लोकःप्रकीर्तितः ॥ स्वर्लोकादुपरियोवैमहर्लोकःप्रकल्पितः ॥ २५ ॥ ततोजनपदश्चैवतपश्चैवततःपरम् ॥ सत्यंचैवततःप्राद्रुमर्यादापरिकीर्तिता ॥
॥ २६ ॥ एकैकस्यचविस्तारोदृश्यतेचमुनीश्वराः ॥ बहुतरस्यभयेनैवनोक्तोग्रंथस्यएवच ॥ २७ ॥ कथितश्चपुराग्रंथेपुनःकिंकथयाम्यहम् ॥ येषांय
त्राधिकारोस्तितत्रतेचनिवासिनः ॥ २८ ॥ समुद्राःसप्तएवैतेद्वीपानिचतथापुनः ॥ मेर्वाद्यागिरयश्चाऽन्येनद्यश्चविविधास्तथा ॥ २९ ॥ वनानिचविचि
त्राणिविविधानितथैवच ॥ ब्रह्मांडेपरिवर्त्ततेउक्तानिचपुरामया ॥ ३० ॥ ब्रह्मणोद्विविधंरूपंनिर्गुणस्यपरात्मनः ॥ एकंचैवाक्षरंब्रह्मक्षरंचाद्वितीयंमतम्
॥ ३१ ॥ दृश्यंचैवक्षरंप्रोक्तंह्यक्षरंनिर्गुणंमतम् ॥ इदंभूतमयंयच्चरूपंचब्रह्मणोविदुः ॥ ३२ ॥ तदेवसगुणंप्रोक्तंमुनिभिस्तत्त्वदर्शिभिः ॥ निर्गुणेसगुणंचैवस
गुणेनिर्गुणंतथा ॥ ३३ ॥ परस्परंचसंलग्नंरूपद्वयमथापिच ॥ यथाचमणिसूत्रंचसंलग्नंचपरस्परम् ॥३४ ॥ पुष्पंचैवसुगंधश्चज्योतिस्तेजस्तथैवच ॥ विवे
किनोहिजानंतितत्वभागविचक्षणाः ॥ ३५ ॥ यैर्ज्ञातंसगुणंब्रह्मनिर्गुणंचततःपरम् ॥ निर्गुणेब्रह्मणिज्ञातेसगुणाद्विनिवर्तते ॥ ३६ ॥ तावच्चसगुणंधार्यं
यावच्चनिर्गुणंनहि ॥ निर्गुणेचतथालब्धेह्यहंभावोनिवर्तते ॥ ३७ ॥ निवृत्तेचाप्यहंकारेजीवभावोनिवर्तते ॥ सर्वंब्रह्ममयंपश्यन्मुच्यतेसर्वकिल्बिषैः ॥
॥ ३८ ॥ सोहंसोहंसुविज्ञानंजायतेयोगिनस्तदा ॥ विधिनिषेधराहित्यंभवतीतिसुनिश्चितम् ॥ ३९ ॥ एवंवैचापिब्रह्मांडंनिर्मितंगुणिनास्वयम् ॥ तदा
शिवेनलोकानांहितायपरिचिंतितम् ॥ ४० ॥ ब्रह्मांडेकर्मणाबद्धाःप्राणिनोमांकथंपुनः॥पश्यंतीतिविचार्यैवपंचक्रोशीविमोचिता ॥ ४१ ॥ इयंचशुभदा
लोकेकर्मनाशकरीमता ॥ अविमुक्तंस्वयंलिंगंस्थापितंपरमात्मना ॥ ४२ ॥ नकदाचित्त्वयात्याज्यमिदंक्षेत्रंममांशकम् ॥ इत्युक्त्वातुत्रिशूलाच्चअवता
र्यहरःस्वयम् ॥ ४३ ॥ मोचयामासभुवनेमृत्युलोकेमुनीश्वराः ॥ ब्रह्मणोपिदिनेविश्वंविनश्यतिसुनिश्चितम् ॥ ४४ ॥ तदाशिवस्त्रिशूलेनदधातिचमुनीश्व
राः॥ पुनश्चब्रह्मणासृष्टौकृतायांस्थाप्यतेपुनः ॥४५॥ कर्मणांकर्षणात्सावैकाशीतिपरिकथ्यते ॥ अविमुक्तेश्वरंलिंगंकाश्यांतिष्ठतिनित्यशः ॥४६॥ मुक्ति
दाताचलोकानांमहापातकिनामपि ॥ अन्यत्रप्राप्यतेमुक्तिःसारूप्याचमुनीश्वराः॥४७॥ अत्रैवप्राप्यतेजीवैःसायुज्यामुक्तिरुत्तमा ॥ येषांक्कापिगतिर्नास्तिते
षांवाराणसीपुरी ॥ ४८ ॥ पंचक्रोशीमतापुण्याहत्याकोटिविनाशिनी ॥ अमरामरणंतत्रवांछंतिचमुनीश्वराः ॥ ४९ ॥ ब्रह्माचश्लाघ्यतेचापिविष्णुश्चा
पितथैवच ॥ मुनयश्चतथाचाऽन्येसिद्धाश्चैवतथापुनः ॥ ५० ॥ वांछंतिमानुषाश्चैवसवैश्चपरिसेव्यते ॥ काश्याश्चैवतुमाहात्म्यंवक्तुंवर्षशतैरपि ॥ ५१ ॥
नशक्नोमिसदासर्वंतथापिचब्रुवेपुनः ॥ कैलासस्यपतिर्योवैनिर्गुणोगुणवान्भवः ॥ ५२ ॥ आजगामकदाचिद्वैकाश्यांदेवोमहेश्वर ॥ वाराणसीमनुप्राप्य
दर्शयामासशंकरः ॥ ५३ ॥ अविमुक्तेश्वरंलिंगंदर्शनात्पापहारकम् ॥ अविमुक्तस्यमाहात्म्यंयथाहभगवान्भवः ॥ ५४ ॥ विस्तरेणमयावक्तुंब्रह्मणाच

महात्मना ॥ शक्यतेनैवविप्रेंद्रावर्षकोटिशतैरपि ॥ ५५ ॥ अविमुक्तोपितंदृष्ट्वाआनंदंपरमंगतः ॥ पूजयामासतंदेवंपार्वत्यासहशंकरम् ॥ ५६ ॥ नम
स्कारैःस्तवैर्मंत्रैर्देवदेवंजगत्पतिम् ॥ प्रणिपातैरनेकैश्चत्वदीयोऽस्मिनसंशयः ॥५७॥ कृपांकुरुत्वंदेवेशलोकानांहितकाम्यया ॥ स्थातव्यंचत्वयादेवप्रार्थ
यामिजगत्पते ॥ ५८ ॥ अविमुक्तोपिहितदासंप्रार्थ्यचपुनःपुनः ॥ नेत्राश्रूणिप्रमुच्यैतच्चरणंनैवमोचितुम् ॥ ५९ ॥ काश्येवचत्वयादेवराजधानीप्रगृह्य
ताम् ॥ मयाध्यानितयास्थेयमचिंत्यसुखहेतवे ॥ ६० ॥ मुक्तिदाताभवाँल्लोकेवर्ततेनाऽन्यथाक्वचित् ॥ तस्मात्त्वमुपकारायतिष्ठोमासहितःसदा ॥
॥ ६१ ॥ अखिलाञ्जीवसंघातांस्तारयत्वंसदाशिव ॥ इत्येवंप्रार्थितस्तेनतस्थौदेवोजगत्पतिः ॥ ६२ ॥ लोकानामुपकारार्थंकपालमुक्तिहेतवे ॥ इत्येवं
वचनंश्रुत्वाऋषयोनिर्मलाशयाः ॥ ६३ ॥ पप्रच्छुःपरयाभक्त्याकपालंकिंब्रवीषिनः ॥ सूतउवाच ॥ साधुपृष्टमृषिश्रेष्ठाःकथयामियथाश्रुतम् ॥ ६४ ॥
पुराकदाचिद्देवेशःशंकरःप्रियकाम्यया ॥ बभ्रामगिरिजासार्द्धंब्रह्मलोकमुपागतः ॥ ६५ ॥ ब्रह्माचापितदातंवैबहुमानपुरःसरम् ॥ पूजयामासदेवेशमा
तिथ्यैर्धर्महेतवे ॥६६॥ पश्चात्तुष्टावतंदेवंचतुर्भिश्चमुखैस्तदा ॥ एकेनैवमुखेनैवदुःशब्दंश्रुतवांस्तदा ॥ ६७ ॥ दृष्ट्वाचतुर्मुखानीहसंतुष्टोभगवान्भवः ॥
पंचमंदुर्मुखंदृष्ट्वादुःखितःशंकरस्तदा ॥ ६८ ॥ अहोदुष्टंमुखंह्येतच्छिनद्मिसुविचारयन् ॥ इतिविचार्यतत्रैवाशिवोऽपिशिवकृन्नृणाम् ॥ ६९ ॥
चिच्छेदतच्छिरस्तत्रब्रह्मणोदुर्विभाषिणः ॥ अघोरंयांतदादृष्ट्वाचाब्रह्माणंचप्रपीडयन् ॥ ७० ॥ जगामपृष्ठतोलग्नंकपालंब्रह्मणस्तदा ॥ समर्थोऽपिशिव
स्तस्यदहनेचमुनीश्वराः ॥ ७१ ॥ लोकानामुपकारार्थंभ्रांत्वातांपृथिवीमिमाम् ॥ बभ्रामसर्वलोकेषुतेनैवसहितःशिवः ॥ ७२ ॥ यत्रयत्रसवैयातितत्रतत्र
गतंशिरः ॥ विचार्यभगवांस्तत्रमहिमानंप्रकाशयन् ॥ ७३ ॥ आजगामयदातत्राशिरश्चदूरतःस्थितम् ॥ अहोक्षेत्रस्यमाहात्म्यंकीदृशंमनसिस्वयम् ॥
॥ ७४ ॥ विचारयंस्तदालोकेख्यापयन्वृत्तमद्भुतम् ॥ तस्थौतत्रैवलोकेशोह्यविमुक्तेश्वराज्ञया ॥७५॥ इतितस्यवचःश्रुत्वापुनस्तंचमुनीश्वराः ॥ पप्रच्छुः
संशयात्मानःकथंब्रह्ममुखंत्विदम् ॥ ७६ ॥ सूतउवाच ॥ पुराब्रह्माविमोहेनसरस्वत्यारूपमद्भुतम् ॥ दृष्ट्वाजगामतांपश्चात्तिष्ठेतिविह्वलःस्वयम् ॥ ७७ ॥
तद्वचनंतदापुत्रीश्रुत्वाकोपसमन्विता ॥ उवाचकिंब्रवीषित्वंमुखेनाऽशुभभाषिणा ॥ ७८ ॥ ब्रवीषिचेद्विरुद्धंवैविभाषीभवसर्वदा ॥ तद्दिनंहिसमारभ्यपंच
मेनमुखेनच ॥ ७९ ॥ ब्रह्माचभाषतेदुष्टंशब्दंखरतरंतदा ॥ पश्चाच्छिवेनतच्छिन्नंदुष्टभाषियतोऽभवत् ॥ ८० ॥ शिवोऽपिस्मरणेनैवभजनेनपरस्यच ॥
पापंदूरीकरोतीहस्वयंदूरीकृतंनहि ॥ ८१ ॥ तत्कारणंचश्रूयतामृषयःकथयाम्यहम् ॥ श्रेष्ठश्चाचरतियच्चतदेवचनरःपुनः ॥८२॥ करोतिचरतिंयच्चप्रमाण
रक्षणायवै ॥ ईश्वरस्यतदालग्नंपातकंकिंनरेणहि ॥ ८३ ॥ शिवस्यतीर्थसंयोगाच्छिरश्चदूरतःस्थितम् ॥ तस्मात्तीर्थवरंह्येतन्महापातकनाशनम् ॥८४॥

इत्येवज्ञापितंलोकेमाहात्म्यंतीर्थसंभवम् ॥ अथवाईश्वरस्येच्छांकश्चजानातिचेष्टितम् ॥ ८५ ॥ काऽनंगदहनंचैवकांऽगेयुवतिधारणम् ॥ कंठेविषंधृतंयेनमृत्युंज यउदाहृतः ॥ ८६ ॥ दिगंबरःस्वयंचैवभक्तेभ्योह्यचलांश्रियम् ॥ स्वसैन्यंचपिशाचाश्चभक्तानांचचतुर्विधम् ॥ ८७ ॥ स्वांगेचरुंडमालांवैभक्तानांमौक्तिकानिच ॥ चिताभस्मनिजस्यैवभक्तेभ्यश्चंदनंददेत् ॥ ८८ ॥ स्ववाहनंवृषश्चैवभक्तानांहस्तिकानथ ॥ स्ववाद्यंचैवगह्वादिभक्तानांचानकानथ ॥ ८९ ॥ स्वशिरसिजटादि व्याभक्तानांमुकुटादिकम् ॥ स्वभूषणंचसर्पादिभक्तानांकुंडलादिकम् ॥ ९० ॥ स्वस्यवस्त्रंचचर्मादिभक्तेभ्यःसुंदरांबरम् ॥ स्वयंदधातिचाऽन्यच्चभक्तानांचान्य देवच ॥ ९१ ॥ यथाभिलाषंभक्तेभ्यःशंकरःसंप्रयच्छति ॥ तस्मात्तच्चेष्टितंनैवज्ञातुंशक्यंमुनीश्वराः ॥ ९२ ॥ पंचक्रोश्याःपरंनाऽन्यत्क्षेत्रंचभुवनत्रये ॥ अथवापापि नांपापस्फोटनायस्वयंहरः ॥ ९३ ॥ मृत्युलोकेशुभंक्षेत्रंसमास्थायस्थितःसदा ॥ यथातथापिधन्येयंपंचक्रोशीमुनीश्वराः ॥ ९४ ॥ यत्रविश्वेश्वरोदेवोह्याग त्यसंस्थितःस्वयम् ॥ यद्दिनंहिसमारभ्यहरःकाश्यामुपागतः ॥ ९५ ॥ तद्दिनंहिसमारभ्यकाशीश्रेष्ठतराह्यभूत् ॥ एतद्वश्चसमाख्यातंयत्पृष्टोहंमुनीश्वराः ॥ यइदंशृणुयान्नित्यंसर्वान्कामान्समाप्नुयात् ॥ ९६ ॥ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांकाशीवर्णनंनामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥

॥ ऋषयऊचुः ॥ एवंवाराणसीपुण्यायदिसूतमहामुने ॥ वक्तुमर्हसिचाऽस्माकंप्रभावंतस्यसांप्रतम् ॥ १ ॥ सूतउवाच ॥ वक्ष्येसंक्षेपतःसम्यग्वाराणस्याः सुशोभनम् ॥ विश्वेश्वरस्यमाहात्म्यंश्रूयतामृषिसत्तमाः ॥ २ ॥ कदाचित्पार्वतीदेवंशंकरंपरयामुदा ॥ पंचक्रोश्याश्चमाहात्म्यंपप्रच्छलोककाम्यया ॥ ॥ ३ ॥ पार्वत्युवाच ॥ अस्यक्षेत्रस्यमाहात्म्यंवक्तुमर्हस्यशेषतः ॥ ममोपरिकृपांकृत्वादेवदेववृषध्वज ॥ ४ ॥ देव्यास्तद्वचनंश्रुत्वादेवदेवोजगत्प्रभुः ॥ उवाचवचनंतत्रजीवानांप्रियहेतवे ॥ ५ ॥ श्रीभगवानुवाच ॥ साधुपृष्टंत्वयाभद्रेलोकानांसुखदंशुभम् ॥ कथयामियथैतस्यमाहात्म्यंश्रूयतांपुनः ॥ ६ ॥ इदंगुह्यतमंक्षेत्रंसदावाराणसीमम ॥ सर्वेषामेवजंतूनांहेतुर्मोक्षस्यसर्वदा ॥ ७ ॥ अस्मिन्सिद्धाःसदादेविमदीयंव्रतमास्थिताः ॥ ममलिंगधरानित्यंमम लोकाभिकांक्षिणः ॥ ८ ॥ अभ्यस्यंतिपरंयोगंयतात्मानोजितेंद्रियाः ॥ नानावृक्षसमाकीर्णंनानाविहगसेवितम् ॥ ९ ॥ कमलोत्पलपुष्पाद्यैःसरोभिः समलंकृतम् ॥ अप्सरोरगगंधर्वैःसदासंसेव्यतेशुभम् ॥ १० ॥ रोचतेमेसदावासोयेनकार्येणतच्छृणु ॥ मन्मनाममभक्तश्चमयिसर्वार्पितक्रियः ॥ ११ ॥ वीतरागभयक्रोधोनिर्द्वंद्वश्चविमत्सरः ॥ अध्यात्मनिरतोनित्यंतत्त्वानांचविवेचकः ॥ १२ ॥ सर्वंचमन्मयंपश्यन्योऽयंसोऽहंस्वयंहरः ॥ दुःखेदुःखीभवेन्नै वसुखेसुखीभवेन्नहि ॥ १३ ॥ शुभंप्राप्यनहृष्येतह्यशुभेद्विषतेनहि ॥ तस्यममैवभेदोनसयत्रतीर्थमुत्तमम् ॥ १४ ॥ तद्दर्शनंह्यहंविष्णुर्ब्रह्माचापितथापुनः ॥ कामयंतिचतीर्थानिपावनायात्मनस्तदा ॥ १५ ॥ सोंऽतकालेचयस्यैवपार्श्वेपरिविवर्तते ॥ तस्यमुक्तिर्भवेन्नूनंस्वस्यकिंनभवेत्पुनः ॥ १६ ॥ तस्यापेक्षान

तीर्थस्यनममैवहरेरपि ॥ जीवन्मुक्तःसविज्ञेयोविहिताविहितेसमः ॥ १७ ॥ यत्रयत्रमृतःसोपिमोक्षमाप्नोतिनिश्चितम् ॥ अत्रतीर्थैविशेषोऽस्तिश्रूयतांसुंद
रित्वया ॥ १८ ॥ ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चैवतथापुनः ॥ ब्रह्मचारीगृहस्थश्चवानप्रस्थोयतिस्तदा ॥ १९ ॥ बालश्चैवकुमारश्चयौवनान्वितएवच ॥
अशुचिश्चैवबालापिकुमारीपतितातथा ॥ २० ॥ विधवावाथवंध्यावारजोदोषयुतापिवा ॥ सूतिकालेमृतावापिसंस्कारैरहितातथा ॥ २१ ॥ अपापश्चस
पापोवाकर्मबंधगतोऽथवा ॥ अत्रचेच्चमृतःस्याद्वैमोक्षभागीनसंशयः ॥ २२ ॥ स्वेदजश्चांडजोवापिह्युद्भिदोऽथजरायुजः ॥ मृतोमोक्षमवाप्नोतिंअत्राऽन्य
त्रतथाक्वचित् ॥ २३ ॥ कर्मबंधगतोयोवैदेहीमोक्षायकल्पते ॥ ज्ञानापेक्षानचात्रैवध्यानापेक्षानकर्हिचित् ॥ २४ ॥ नामापेक्षानचाऽत्रैवस्वजनानांतथापु
नः ॥ यथातथामृतःस्याच्चेन्मोक्षमाप्नोतिनिश्चितम् ॥ २५ ॥ एतन्ममपुरंदिव्यंगुह्याद्गुह्यतमंमहत् ॥ ब्रह्मादयोहिजानंतियेचसिद्धामुमुक्षवः ॥ २६ ॥
अतःप्रियमिदंक्षेत्रंयस्माच्चेहगतिःशुभा ॥ विमुक्तंनमयायस्मान्मोक्ष्येऽहंनकदाचन ॥ २७ ॥ महत्क्षेत्रमिदंतस्मादविमुक्तमितिस्मृतम् ॥ नैमिषेचकुरु
क्षेत्रेगंगाद्वारेऽथपुष्करे ॥ २८ ॥ स्नानात्संसेवनाद्वापिमृतेमोक्षोभवेन्नहि ॥ इहसंप्राप्यतेयस्मात्तस्मादेतद्विशिष्यते ॥ २९ ॥ प्रयागेवाभवेन्मोक्षइहवाम
त्परिग्रहात् ॥ प्रयागादपितीर्थाग्र्यादिदमेवाविशिष्यते ॥ ३० ॥ धर्मस्योपनिषत्सत्यंमोक्षस्योपनिषच्छमः ॥ क्षेत्रतीर्थोपनिषदमविमुक्तंविदुर्बुधाः ॥
॥ ३१ ॥ कामंभुंजन्स्वपन्क्रीडन्कुर्वन्हिविविधाःक्रियाः ॥ अविमुक्तेत्यजन्प्राणाञ्जंतुर्मोक्षायकल्पते ॥ ३२ ॥ कृत्वापापसहस्राणिपिशाचत्वंवरंनृ
णाम् ॥ नतुक्रतुसहस्रंतुस्वर्गेकाशीपुरींविना ॥ ३३ ॥ तस्मात्संसेवनीयंवैअविमुक्तंविमुक्तये ॥ अव्यक्तलिंगैर्मुनिभिर्ध्यायतेचसदाशिवः ॥ ३४ ॥
इहसंप्राप्यतेमोक्षोदुर्लभोऽन्यत्रकर्हिचित् ॥ यद्यत्फलंसमुद्दिश्यतपंतेचनराःप्रिये ॥ ३५ ॥ तेभ्यश्चाऽहंप्रयच्छामिविविधांफलकामनाम् ॥ आत्मनश्चै
वसायुज्यमीप्सितंस्थानमेवच ॥ ३६ ॥ कुबेरश्चमहायक्षःसदासर्वार्पितक्रियः ॥ क्षेत्रसंसेवनादेवगणैश्वर्यमवाप्तवान् ॥ ३७ ॥ पराशरस्तुयोयोगीऋषि
र्व्यासोमहातपाः ॥ ममभक्ताभंविष्यतिवेदस्थानप्रवर्त्तकाः ॥ ३८ ॥वैकुंठेशोपिपद्मापिक्षेत्रेऽस्मिन्मुनिपुंगवाः ॥ ब्रह्मादेवर्षिभिःसार्द्धंवसवोपिदिवाकरः ॥
॥ ३९ ॥ देवराजस्तथाशक्रोयेचान्येपिदिवौकसः ॥ उपासतेमहात्मानःसर्वेमामिहसुव्रताः ॥ ४० ॥ अन्येऽपियोगिनोयेवैछन्नरूपामहाव्रताः ॥ अनन्यम
नसोभूत्वामामिहोपासतेसदा ॥ ४१ ॥ विषयासक्तचित्तोपित्यक्तधर्मरुचिर्नरः ॥ इहक्षेत्रेमृतोयोवैसंसारंनपुनर्विशेत् ॥ ४२ ॥ येपुनर्निर्ममाधीराःसत्व
स्थाविजितेंद्रियाः ॥ व्रतिनश्चनिरारंभाःसर्वेऽपिमयिभाविताः ॥ ४३ ॥ देहिभेदंसमासाद्यधीमंतःसंगवर्जिताः ॥ यांतितेपरमंमोक्षंप्रसादान्ममसुव्रते ॥
॥ ४४ ॥ जन्मांतरसहस्रेषुयंनयोगीसमाप्नुयात् ॥ तमिहैवपरंमोक्षंमरणादधिगच्छति ॥ ४५ ॥ गोप्रेक्षकमिदंक्षेत्रंब्रह्मणास्थापितंपुरा ॥ कैलासभवनंचात्र

पश्यदेविवरानने॥४६॥गोप्रेक्षेश्वरमागम्यदृष्टमात्रेचमानवः ॥ नदुर्गतिमवाप्नोतिकल्मषैश्चाविमुच्यते॥४७॥कापिलाह्रदमितिख्यातंब्रह्मणाचतथाकृतम् ॥
तस्यदर्शनमात्रेणपातकात्प्रविमुच्यते ॥ ४८ ॥ रुद्ररूपंचपश्येमंब्रह्मणाचकृतंपुरा ॥ सर्वदेवैरहंदेविअस्मिन्देशेप्रसादितः ॥ ४९ ॥ आजगामपुरादे
विलिंगरूपीनसंशयः ॥ तत्राऽहंब्रह्मणानीतःस्थापितःपरमेष्ठिना ॥ ५० ॥ ब्रह्मणश्चापिसंगृह्यविष्णुनास्थापितःपुनः ॥ ब्रह्मणासततोविष्णुरुक्तःसंविग्नचे
तसा ॥ ५१ ॥ मयाऽनीतमिदंलिंगंत्वंकिंस्थापितवानसि ॥ तमुवाचपुनर्विष्णुर्ब्रह्माणंतुपितामहम् ॥५२॥ रुद्रेदेवेपुरात्यंतंममभक्तिर्महत्तरा ॥ मयैवस्था
पितंलिंगंतवनाम्नाभविष्यति ॥ ५३ ॥ हिरण्यगर्भइत्येवमत्राऽहंसमुपागतः ॥ दृष्ट्वैनमपिदेवेशिममलोकंव्रजेन्नरः ॥ ५४ ॥ ततःपुनरपिब्रह्मामममलिंगमिदं
शुभम् ॥ स्थापयामासविधिवद्भक्त्याचपरयापुनः ॥ ५५ ॥ स्वलीनेश्वरइत्येवमत्राहंस्वयमास्थितः ॥ प्राणानिहनरस्त्यक्त्वानपुनर्जायतेक्वचित्॥५६॥
अस्मिन्नेवमयादेशेदैत्योदैवतकंटकः ॥ व्याघ्ररूपंसमास्थायनिहतोदर्पितोबली ॥ ५७ ॥ व्याघ्रेश्वरस्तथाख्यातोमहापातकनाशनः ॥ पित्रातेशैलराजेन
पुराहिमवतास्वयम् ॥ ५८ ॥ ममप्रियतमंस्थानंज्ञात्वालिंगंप्रतिष्ठितम् ॥ शैलेश्वरइतिख्यातंदृश्यतामिदमादरात् ॥ ५९ ॥ यदावाराणसीचेयंपुण्य
पापविनाशिनी ॥ क्षेत्रमेतदलंकृत्यजाह्नव्यासहसंगता ॥ ६० ॥ तदाचब्रह्मणातत्रस्थापितंलिंगमद्भुतम् ॥ संगमेश्वरविख्यातंदृश्यतांसुंदरित्वया ॥ ६१ ॥
मध्यमेशंततःपश्यजंबुकेशंततःपुनः ॥ शुक्रेश्वरंचालिंगंचशुक्रेणस्थापितंपुरा ॥ ६२ ॥ कृत्तिवासेश्वरंपश्यवृद्धकालेश्वरंतथा ॥ इंद्रादिदैवतैस्तत्रलिंगा
निस्थापितान्यतः ॥ ६३ ॥ तन्नाम्नाचैवविख्यातंलिंगंपापहरंतदा ॥ पश्यलिंगानिपुण्यानिसर्वकामप्रदानिच ॥ ६४ ॥ अमून्येतानिपूज्यानिसंतिस्था
नानिपार्वति ॥ कथितानिममक्षेत्रेगुह्यंचाऽन्यदिदंशृणु ॥ ६५ ॥ पंचक्रोशंचतुर्दिक्षुक्षेत्रमेतत्प्रकीर्तितम् ॥ समंताच्चतथाजंतोर्मृतिकालेऽमृतप्रदम् ॥६६॥
पंडितःश्रोत्रियोवापिचंडालःपतितोऽथवा ॥ संन्यासीवामृतःस्याद्वैसर्वैमोक्षमवाप्नुयुः ॥ ६७ ॥ इत्येतद्वचनंश्रुत्वापार्वतीवाक्यमब्रवीत् ॥ अत्रमेविस्मयो
ब्रह्मन्महांश्चपरिवर्त्तते ॥ ६८ ॥ संन्यासीकर्महीनश्चह्यन्यःकर्मसमन्वितः ॥ एकश्चपुण्यवाँल्लोकेएकःपापीभवेन्नरः ॥ ६९ ॥ उभयोःसमताप्रोक्तातेषां
भोगःकुतोगतः ॥ अन्यश्चसंशयोदेवश्रूयतांशंकरत्वया ॥ ७० ॥ अत्रैवाम्रियमाणस्यमनश्चेच्चगृहेगतम् ॥ पुत्रेस्त्रियांधनेवापिअन्याभीष्टतमेपुनः ॥ ७१ ॥
श्रुतंचैवमयापूर्वंह्यंतकालेमनःस्वकम् ॥ गच्छतितत्रजन्मस्यान्नाऽत्रकार्याविचारणा ॥ ७२ ॥ तीर्थेचैवमृतस्यैवतीर्थयज्ञफलंभवेत् ॥ उभयोःकिंचतथ्यं
स्यान्निवेद्यंशंकरत्वया ॥ एतच्छ्रुत्वावचस्तस्याउवाचशंकरस्तदा ॥ ७३ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांज्योतिर्लिंगनिरूपणेकाशीवर्णनंनाम
पंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ शंकरउवाच ॥ ॥ साधुपृष्टंत्वयासाध्विश्रूयतांकथयामिते ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्यतेमानवःक्षणात् ॥ १ ॥ अ
पापश्चमृतोयोवैसद्योऽमृतंसमश्नुते ॥ सपापश्चमृतोयःस्यात्कायव्यूहात्समश्नुते ॥ २ ॥ यातनाद्यनुभूयैवपश्चान्मोक्षमवाप्नुयात् ॥ येनक्षेत्रेकृतंकर्मापि

शाचोभवतिध्रुवम् ॥ ३ ॥ भैरवींयातनांप्राप्यवर्षाणामयुतंपुनः ॥ ततोमोक्षमवाप्नोतिभुक्त्वापापंचसुंदरि ॥ ४ ॥ इतितेचसमाख्यातंपापानांयाग
तिर्भवेत् ॥ एवंज्ञात्वानरःसम्यक्संसेवेदविमुक्तिकम् ॥ ५ ॥ यःसेवन्मृतकश्चैवअंतेमोक्षमवाप्नुयात् ॥ अन्यच्चाऽपीहवक्ष्यामिश्रूयतामृषिसत्तमाः ॥ ६ ॥
कृतकर्मक्षयोनास्तिकल्पकोटिशतैरपि ॥ अवश्यमेवभोक्तव्यंकृतंकर्मशुभाशुभम् ॥ ७ ॥ केवलंचाऽशुभंकर्मनरकायभवेदिह ॥ शुभंस्वर्गायजायेतउ
भाभ्यांक्षितिजन्मच ॥ ८ ॥ जन्मसम्यगसम्यक्तुन्यूनाधिक्येभवेदिह ॥ उभयोश्चक्षयेमुक्तिर्भवेच्चसुंदरीध्रुवम् ॥ ९ ॥ एकंक्षेत्रेकृतस्यैवकर्मणःसंक्षयाय
वै ॥ एकंचैवपुराजन्मकृतस्यसंक्षयायच ॥ १० ॥ एकंसर्वक्षयायैवभवतीतिसुनिश्चितम् ॥ कर्मचत्रिविधंप्रोक्तंकिंतच्चश्रूयतांपुनः ॥ ११ ॥ संचितंक्रिय
माणंचप्रारब्धंचत्रिधामतम् ॥ पूर्वजन्मसमुद्भूतंसंचितंसमुदाहृतम् ॥ १२ ॥ तेनजन्मांतरंयच्चक्रियतेकर्मसांप्रतम् ॥ शुभाशुभंचयच्चैवक्रियमाणंविदुर्बु
धाः ॥ १३ ॥ भुज्यतेचशरीरेणप्रारब्धंपरिकीर्तितम् ॥ प्रारब्धकर्मणोभोगात्क्षयश्चैवनचाऽन्यथा ॥ १४ ॥ पापंविनाशरीरस्यदुःखंनास्तिपदेपदे ॥
यत्किंचिद्दृश्यतेदुःखंसर्वंपापसमुद्भवम् ॥ १५ ॥ स्थूलंचैवाऽथसूक्ष्मंचदुःखंपापसमुद्भवम् ॥ अपापंचयदास्याद्वैशरीरंसुखभाजनम् ॥ १६ ॥ कुत्रचिच्चशु
भंवर्धेत्कुत्राचित्पापसंक्षयः ॥ सर्वेषांकर्मणांनाशोनास्तिकाशीपुरींविना ॥ १७ ॥ सर्वंचसुलभंतीर्थंदुर्लभाकाशिकापुरी ॥ अहंकाशींगमिष्यामिशतज
न्मकृतामतिः ॥ १८ ॥ ततःकाशीदर्शनंचजायतेनान्यथाक्वचित् ॥ पृथिव्यांयानितीर्थानिकृतानिपूर्वजन्मनि ॥ १९ ॥ तदामुक्तिपुरीलभ्येत्षण्मध्ये
चैवकाचन ॥ पूर्वजन्मकृताश्चेद्वैमुक्तिपुर्य्यःशुभानने ॥ २० ॥ तदाकाशीचलभ्येतनान्यथासुलभाप्रिये ॥ परजन्मनिकृताचेद्वैकाशीमुक्तिप्रदायिनी ॥ २१ ॥
प्राप्यकाशींतदातत्रमृतिःस्यान्नाऽन्यथाक्वचित् ॥ काशींप्राप्यनरोयस्तुगंगायांस्नानमाचरेत् ॥ २२ ॥ तदाचक्रियमाणस्यसंचितस्यापिकर्मणः ॥ क्षयश्चैव
भवेत्तत्रप्रारब्धंनविनश्यति ॥ २३ ॥ भोगंविनानप्रारब्धंगच्छतीतिसुनिश्चितम् ॥ तत्रमृतिश्चसंजातातदातस्यक्षयोभवेत् ॥ २४ ॥ अंतकालेमनश्चै
वतदागच्छतिसुंदरि ॥ यदाकर्मभवेन्नूनंचालनेमनसोध्रुवम् ॥ २५ ॥ कर्माणिमनसःपादाःशीर्णाश्चेत्तत्कुतोव्रजेत् ॥ तस्माद्विकाररहितंमनस्तीर्थेविली
यते ॥ २६ ॥ तदातीर्थसमुद्भूतंफलंतस्यभवेदिह ॥ तीर्थजन्यंफलंचैवध्यानजन्यंफलंपुनः ॥ २७ ॥ उभयंतेनसंप्राप्तंश्रुतिरेषासनातनी ॥ पूर्वंचैवकृ
ताकाशीपश्चात्पापंसमाचरेत् ॥ २८ ॥ बलवतातेनवीर्येणनीयतेकाशिकांपुनः ॥ तदासर्वाणिकर्माणिभस्मसाच्चभवंतिहि ॥ २९ ॥ तस्मात्काशींनरः
सेवेत्कर्मनिर्मूलनींध्रुवम् ॥ इतितस्यवचःश्रुत्वागिरिजावाक्यमब्रवीत् ॥ ३० ॥ कश्चित्कामीनरःस्वामिन्स्त्रियाराज्यधनस्यच ॥ कामुकश्चतदाभूत्वा
प्रयागेदेहमुत्सृजेत् ॥ ३१ ॥ वेणीप्रवेशंवाकुर्याच्छिरसःपूजनंशिवे ॥ यन्निमित्तंकृतंतच्चतेनकाश्यांमृतंयदा ॥ ३२ ॥ स्त्रियावापुरुषेणाऽपिराज्यंचोद्धर

तांगतम् ॥ तयोःसंयोगताकुत्रस्यादेवंसंशयोभवेत् ॥ ३३ ॥ एकश्चमोक्षतांप्राप्तस्त्वन्यश्चकामुकःस्मृतः ॥ मुक्तिदाताभवत्त्वंचकामदाताहरिःस्वयम् ॥ ३४ ॥ त्वंवासदाशिवःसाक्षात्कथंतस्यफलंभवेत् ॥ एवंमेसंशयंछिंधिदेवदेवमहेश्वर ॥ ३५ ॥ इत्येतद्वचनंश्रुत्वाहरोवाक्यमथाऽब्रवीत् ॥ त्वयाचश्रूयतांभद्रेयदेतत्कथयाम्यहम् ॥ ३६ ॥ काश्यांयोवैमृतश्चैवतस्यजन्मपुनर्नहि ॥ प्रयागेचमृतोयोवैतस्यकामःसदाध्रुवम् ॥ ३७॥ यदिसंयोगतांप्राप्तःकाशीजन्यंफलंवृथा ॥ यदिनप्राप्यतेतच्चतीर्थराजफलंगतम् ॥३८॥ तस्माच्चैवहरिःसाक्षान्नवीनांसृष्टिमुत्तमाम् ॥ विधायमनसोद्दिष्टांसिद्धिंयच्छतिनित्यशः ॥ ३९ ॥ स्त्रियंपुत्रंधनंवापिवाहनंराज्यमेवच ॥ यत्किंचित्कामयेद्वापितत्तद्यच्छतिवैहरिः ॥ ४० ॥ उभयोःसिद्धिरक्षार्थंक्रियतेहरिणास्वयम् ॥ इत्युक्तासातदादेवीआनंदंपरमंगता ॥ ४१ ॥ तद्दिनंहिसमारभ्यहरस्तस्थौतयासह ॥ इतिवश्चसमाख्यातंकाश्यागमनकारणम् ॥ ४२ ॥ अतःपरंप्रवक्ष्यामित्र्यंबकस्यसमुद्भवम् ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्यतेमानवःक्षणात् ॥ ४३ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांविश्वेश्वरवर्णनंनामैकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठाःकथांपापप्रणाशिनीम् ॥ कथयामियथाव्यासाच्छ्रुताचऋषिभिःसह ॥ १ ॥ पुराऋषिवरश्रेष्ठोगौतमोनामविश्रुतः ॥ यस्यपत्नीपरासाध्वीह्यहल्यानामविश्रुता ॥ २ ॥ तयासहऋषिश्रेष्ठस्तपश्चक्रेसुशोभनम् ॥ दक्षिणस्यांदिशियोवैगिरिर्ब्रह्मेतिसंज्ञितः ॥ ३ ॥ तत्रतेनतपस्तप्तंवर्षाणामयुतंध्रुवम् ॥ कदाचिद्वैह्यनावृष्टिरभवत्सर्वदुःखदा ॥ ४ ॥ वर्षाणांचशतंरौद्रंलोकादुःखमुपागताः ॥ आर्द्रंचपल्लवंनैवदृश्यतेपृथिवीतले ॥ ५ ॥ जलंनैवविदृश्येतजीवानांप्राणधारकम् ॥ तदातेऋषयश्चैवमनुष्याःपशवस्तथा ॥ ६ ॥ पक्षिणश्चमृताःसर्वेगताश्चैवदिशोदश ॥ तद्दृष्ट्वाऋषयोविप्राःप्राणायामपरायणाः ॥ ७ ॥ ध्यानेनैवतदाकेचित्कालंनिन्युःसुदारुणम् ॥ गौतमोऽपिस्वयंतत्रवरुणार्थंतपःशुभम् ॥ ८ ॥ चकारचैवषण्मासंप्राणायामपरायणः ॥ तस्मैतदावरंदातुंवरुणःसमागतः ॥ ९ ॥ प्रसन्नोऽस्मिवरंब्रूहिददामिऋषिसत्तम ॥ ततश्चगौतमस्तंवैवृष्टिंचैवार्थयत्तदा ॥ १० ॥ ततःसोपिवचस्तस्माउवाचऋषिसत्तमाः ॥ वरुणउवाच ॥ दैवाज्ञाचसमुल्लंघ्याब्रह्मणानकथंमया ॥ ११ ॥ अन्यत्प्रार्थयसुज्ञोसितदहंकरवाणिते ॥ इतितद्वचनंश्रुत्वागौतमोवाक्यमब्रवीत् ॥ १२ ॥ यदिप्रसन्नोदेवेशयदिदेयोवरोमम ॥ तदहंप्रार्थयाम्यद्यकर्तव्यंहित्वयातथा ॥ १३ ॥ महतामाश्रयःपुंसांमहत्त्वायोपजायते ॥ महांतश्चस्वरूपंचपश्यंतिनेतरेऽशुभाः ॥ १४ ॥ शुभस्याश्रयतस्तुच्छोलभतेविविधंफलम् ॥ दारिद्र्यंदूरतोयातिसूर्यंदृष्ट्वायथातमः ॥ १५ ॥ दुःखंशोकंभयंपापमुत्कर्षंलभतेनरः ॥ यथानरंचसेवेततादृशंफलमश्नुते ॥ १६ ॥ मृगेशमंदिरेसेवामुक्ताफलकरीमता ॥ शृगालमंदिरेसेवाह्यस्थिलाभकरीविदुः॥१७॥उत्तमानांस्वभावोऽयंपरदुःखसहिष्णुता ॥ स्वयंदुःखंचसंप्राप्तंसह्यतेऽन्यस्यवार्यते ॥१८॥

कल्पवृक्षस्वभावोहिसज्जनश्चजलाधिप ॥ वृक्षंचहाटकंचैवचंदनंचेक्षुकंतथा ॥ १९ ॥ पश्येद्बुविपरार्थंतुकुशलाःसंतिकेनच ॥ दुःखदग्धस्यय
दुःखनाशनंस्वसुखायवै ॥ २० ॥ परोपकारिणंदृष्ट्वापापंपापाविदूरतः ॥ भवंतिचऋषिश्रेष्ठाःश्रुतिरेषासनातनी ॥ २१ ॥ इयंचपृथिवीदेवीचतुर्भिर्धा
र्यतेशुभा ॥ येदीनेषुदयांनित्यंकुर्वंतिकृपयायुताः ॥ २२ ॥ येषांचैवनदर्पोवैजायतेचकदाचन ॥ उपकारपरायेचजितेंद्रियतयातथा ॥ २३ ॥ महायौ
वनव्याधौचस्वस्थास्तिष्ठंतिनित्यशः ॥ एतैश्चपुण्यस्तंभैश्चधार्यतेपृथिवीपुनः ॥२४॥ नकेवलंचशेषेणधृताचैवधरास्वयम् ॥ तस्माच्चजलराजोऽसिदेयंस
र्वंत्वयामम ॥ २५ ॥ इदंचप्रार्थ्यतेमेघजलंनित्यफलप्रदम् ॥ देहिमेत्वंमहाराजकृपांयदिकरिष्यसि ॥ २६ ॥ इतिसंप्रार्थितेतेनगौतमेनमहात्मना ॥
उवाचवचनंतस्मैगर्तंचक्रियतांत्वया ॥ २७ ॥ इत्युक्तंचकृतंतेनजलेनपूरितंतदा ॥ अक्षयंचजलंतेऽस्तुतीर्थभूतंभवेदिह ॥ २८ ॥तवनाम्नाचविख्यातंक्षेत्रं
चैवभविष्यति ॥ अत्रदत्तंहुतंजप्तंश्राद्धंचैवाऽक्षयंभवेत्॥२९॥इत्युक्त्वांतर्दधेदेवःस्तुतस्तेनमहात्मना ॥ ततश्चगौतमस्तत्रजलंप्राप्यसुदुर्लभम् ॥ ३० ॥
नित्यंनैमित्तिकंकर्मचकारविधिवत्तदा ॥ व्रीहींश्चैवयवांश्चैवनीवारानप्यनेकधा॥३१॥वापयामासतत्रैवहवनार्थमुनीश्वराः ॥ जलंचैवाऽक्षयंतत्रस्वतश्चैवऋ
षीश्वराः ॥३२॥ वृक्षाश्चविविधास्तत्रपुष्पाणिचफलानिच ॥ धान्यानिविविधानीह्यासंस्तत्राप्यनेकशः॥३३॥ऋषयोह्यागतास्तत्रगौतमानुमतास्तदा ॥
पशवःपक्षिणश्चैवसमाजग्मुःसुखायवै ॥ ३४ ॥ तद्वनंसुंदरंह्यासीत्पृथिव्यामंडलेपरम् ॥ ऋषयोऽपिवनेतत्रशुभकर्मपरायणाः ॥ ३५ ॥ वासंचक्रुरनेकेचपुत्र
शिष्यसमन्विताः॥वापयामासुर्धान्यानिकालक्रमणहेतवे॥३६॥ततश्चैवात्रतेतस्यदुःखंकालस्यनाऽविदन्॥आनंदंतद्वनेह्यासीत्प्रभावाद्गौतमस्यच ॥३७॥
एवंजातेतदातत्रयज्जातंश्रूयतांपुनः ॥ कदाचिद्गौतमेनैवजलार्थंप्रेषितागताः ॥३८॥ शिष्याञ्जलसमीपेतुगतान्दृष्ट्वान्यषेधयन् ॥ ऋषिपत्न्योवयंतत्रग्रही
ष्यामोविदूरतः ॥३९॥ पश्चाच्चैवजलंग्राह्यमित्येवंपर्यभर्त्सयन् ॥ परावृत्यतदातैश्चऋषिपत्न्यैर्निवेदितम् ॥४०॥ साचापितान्समादायसमाश्वास्यचताः
स्वयम् ॥ जलंनीत्वाददौतस्मैगौतमायतपस्विने ॥ ४१ ॥ नित्यंसंपादयामासजलेनऋषिसत्तमाः॥ताश्चैवऋषिपत्न्यश्चक्रुद्धास्तांपर्यभर्त्सयन् ॥ ४२ ॥
स्वाम्यग्रेविपरीतंचताभिःसर्वंनिवेदितम् ॥ अहल्यामानवीनाथभर्त्सतेचैवनित्यशः ॥ ४३ ॥ वयंचजीवितायूयंनिःस्थलाःस्थलतांगताः ॥ अनृतंसाह
संमायामूर्खत्वमतिलोभता ॥ ४४ ॥ अशौचत्वंनिर्दयत्वंस्त्रीणांदोषाःस्वभावजाः ॥ धिग्जीवितंचभवतांतपश्चकिंफलप्रदम् ॥ ४५ ॥ अस्माकंजीवि
तंधिक्चाहल्यानित्यंप्रकुप्यति ॥ इतितासांवचःश्रुत्वागांभीर्यमवलंबिताः ॥ ४६ ॥ तस्यावाक्यमिदंनैवभविष्यतिभवेदिति ॥ सत्यंवदतिसानोचेज्जीवि
तंचकुतोभवेत् ॥ ४७ ॥ कृतघ्नाश्चवयंसर्वेयद्येनांकुत्सितंवचः ॥ ब्रवीमश्चकथंपुष्टाययाचजीवितावयम् ॥४८॥ ताश्चपरस्परंनित्यंतस्यैक्लेशपरायणाः ॥

साचापिविनयेनैवतासांचकोमलंवचः ॥ ४९ ॥ दुष्टास्ताऋषिपत्न्यश्चस्वामिभ्यःपर्यभर्त्सयन् ॥ कदाचिद्वनचर्यायाऋषयस्तेगताःस्वयम् ॥ ५० ॥
दैवयोगात्तयातत्रतासांदुःखंनिवेदितम् ॥ गौतमाग्रेवचःश्रुत्वादुःखेनचसमन्विताः ॥ ५१ ॥ सत्यंवदंतिपत्न्यश्चमेनिरेतेवचस्तदा ॥ सर्वेतेचमिलित्वातुप
त्न्यःसर्वास्तथापुनः॥विचारतत्पराह्यासन्भाविकर्मप्रसंगतः॥५२॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांत्र्यंबकेश्वरमहिमवर्णनंनामद्विपंचाशत्तमोध्यायः
॥ ५२ ॥ ॥ सूतउवाच ॥ तैश्चविचारितंयच्चश्रूयतामृषिसत्तमाः ॥ मयाचकथ्यमानंतद्ब्राह्मणस्यविचेष्टितम् ॥ १ ॥ यूयंचजीवितामेद्यमानश्चामा
निनःकथम् ॥ तदादुःखंभवेदेवनात्रकार्याविचारणा ॥ २ ॥ तस्मात्तथाचकर्तव्यंयथामानोभवेन्नहि ॥ अंतरायैश्चतपसांनहन्येतकदाचन ॥ ३ ॥ तस्मा
च्छलंचकर्तव्यंयथास्वमाश्रमाद्बहिः ॥ अस्माभिर्बहुधाभर्त्स्यनिष्कास्येतयथातथा ॥ ४ ॥ एवंविचार्यतैस्तत्रपूजितोऽथविनायकः ॥ उपासनंचतस्यै
वचकुस्तेऋषिसत्तमाः ॥ ५ ॥ दूर्वादलैरनेकैश्चशतपत्रैश्चतंडुलैः ॥ सिंदूरैश्चंदनैश्चैवधूपारात्रिकपूजनैः ॥ ६ ॥ मोदकैर्विविधैश्चैवपूजयामासुर्वैतदा ॥
ततःप्रसन्नोहरजस्तेभ्यश्चेदंवचोब्रवीत् ॥ ७ ॥ गणपतिरुवाच ॥ प्रसन्नोऽस्मिवरंब्रूतयूयंकिंकरवाणिवः ॥ तदीयंतद्वचःश्रुत्वाऋषयोवाक्यमब्रुवन् ॥८॥
यदिप्रसन्नोदेवेशदेयोऽस्माकंवरस्त्वया ॥ तथाकार्यंत्वयादेवगौतमोह्याश्रमाद्बहिः ॥ ९ ॥ निष्कास्यतेचऋषिभिःपरिभर्त्स्यपुनःपुनः ॥ एवंसंपार्थित
स्तैस्तुविहस्यवचनंपुनः ॥ १० ॥ श्रूयतामृषयःश्रेष्ठाअयुक्तंक्रियतेऽधुना ॥ अपराधंविनातस्मैक्रुध्यतेहानिरेवच ॥ ११ ॥ उपकृतंपुरायैस्तुतेभ्योदुः
खंनदीयते ॥ यदाचदीयतेदुःखंतदानाशोभवेदिह ॥ १२ ॥ ईदृशंचतपःकृत्वासाध्यतेफलमुत्तमम् ॥ शुभंफलंस्वयंहित्वासाध्यतेनहितंपुनः ॥ १३ ॥
दत्त्वातुकांचनंचैवगृह्यतेकाचमेवच ॥ पश्चाद्युक्तंचयत्स्याद्वैकर्तव्यंतत्तथापुनः ॥ १४ ॥ इत्येवंवचनंश्रुत्वातस्यतेऋषिसत्तमाः ॥ बुद्धिमोहंतदाप्राप्ताइ
दमेववचोऽब्रुवन् ॥ १५ ॥ कर्त्तव्यंहित्वयास्वामिन्निदमेवनचाऽन्यथा ॥ इत्युक्तस्तुतदादेवोगणेशोवाक्यमब्रवीत् ॥ १६ ॥ असाधुःसाधुतांनैवयातिचै
वकदाचन ॥ साधुश्चासाधुतांनैवप्राप्नोतीतिसुनिश्चितम् ॥ १७ ॥ असाधुःसाधवेदुःखंददातिदुष्टयोगतः सुखंचमन्यतेसाधुरग्रेसुखविवृद्धये ॥ १८ ॥
दुःखदातुस्तदासाधुःसुखंचैवप्रयच्छति ॥ यदाचभवतांदुःखंजातंनाशनमात्मनः ॥ १९ ॥ तदासुखंप्रदत्तंचगौतमेनमहर्षिणा ॥ इदानींतुभवद्भिश्चतस्मै
दुःखंप्रदीयते ॥ २० ॥ नैतद्युक्ततमंलोकेसर्वथाऋषिसत्तमाः ॥ स्त्रीबलान्मोहितायूयंनूनमेवंकरिष्यथ ॥२१॥ एतद्धिततमंतस्यभविष्यतिनसंशयः ॥
पुनश्चाऽयमृषिश्रेष्ठोदास्यतिवःसुखंध्रुवम् ॥ २२ ॥ इत्येवंवचनंतेनयद्यप्युक्तंनमेनिरे ॥ भक्ताधीनतयातेनकृतंचश्रूयतांपुनः ॥ २३ ॥ भवद्भिः
प्रार्थ्यतेयच्चकरिष्येतत्तथाऽह्यहम् ॥ पश्चाद्भाविभवेदेवइत्युक्त्वांतरधीयत ॥ २४ ॥ गौतमश्चनजानातिऋषिकृत्यंदुराशयम् ॥ आनंदमनसातेनक्रियते

नित्यकर्मच ॥ २५ ॥ तदनंतरंयज्जातंश्रूयतामृषिसत्तमाः ॥ गौतमस्यचकेदारस्तत्राऽऽसन्व्रीहयोयवाः ॥ २६ ॥ गणपतिस्तत्रगौर्भूत्वाजगामदुर्बलः
किल ॥ कंपमानातदागत्वाकेदारेगौतमस्यच ॥ २७ ॥ व्रीहींश्चभक्षयामासयवांश्चऋषिसत्तमाः॥ एतस्मिन्नंतरेदैवाद्गौतमश्चसमागतः ॥ २८ ॥ केदारे
चैवदृष्टायांदयालुर्गौमतःस्वयम् ॥ तृणस्तंबंसमादायवारयामासतांतदा ॥ २९ ॥ तृणस्तंबेनस्पृष्टासापपातपृथिवीतले ॥ मृताचतत्क्षणादेवऋषेश्चप
श्यतस्तदा ॥ ३० ॥ ऋषयश्छन्नरूपास्तेऋषिपत्न्यस्तथाशुभाः ॥ ऊचुस्तेचतदासर्वेकिंकृतंगौतमेनच ॥ ३१ ॥ गौतमोऽपिस्वयंतत्रह्यहल्यासापि
विस्मिता ॥ किंजातंचकथंदेवःकुपितोमधुसूदनः॥३२॥किंकर्तव्यंक्वगंतव्यंहत्याचसमुपस्थिता ॥ एतस्मिन्नंतरेविप्रागौतमंपर्यभर्त्सयन् ॥ ३३ ॥ विप्र
पत्न्यस्तथाहल्यांदुर्वचोभिर्व्यथांददुः ॥ ऋषिपत्न्यऊचुः ॥ धिग्ज्ञानंतेऋषिश्रेष्ठधिक्तपस्तेबहुज्ञताम् ॥ ३४ ॥ धिग्घोमंतेत्रिकालेचधिक्कर्मविविधं
चयत् ॥ धिग्घ्येतत्तवचातुर्यंधिक्त्वांतेतुबहुश्रुतम् ॥ ३५ ॥ सर्वोधिकारतांयातुत्वदीयोगुणसंचयः ॥ इत्येवंपरिभर्त्स्यैवऋषयस्तेऽमलाशयाः॥ ३६ ॥
मुखंनदृश्यतांह्यस्यगोघ्नस्योचुःपरस्परम् ॥ अन्यच्चैवकृतंतैस्तुऋषिभिःसुदुरात्मभिः ॥ ३७ ॥ श्रूयतामृषयःश्रेष्ठाःकथयामियथाश्रुतम् ॥ ऋषयोऋषि
पत्न्यश्चशिष्याःपुत्रास्तथापुनः ॥ ३८ ॥ गौतमंपर्यभर्त्संतगम्यतांगम्यतामिति ॥ मुखंनदर्शनीयंचदृष्ट्वान्यूनंभवेदिह ॥ ३९ ॥ यावदाश्रमसमीपेत्वंताव
देवहविर्भुजः ॥ पितरश्चैवगृह्णंतिह्यस्मद्दत्तंनकिंचन ॥४०॥ तस्माद्गच्छपुनस्त्वंचपरिवारसमन्वितः ॥ इत्युक्त्वातेतदासर्वेपाषाणैःसमताडयन् ॥ ४१ ॥
गौतमोऽपितदातत्रहाहाकिंकिंभविष्यति ॥ सत्यंचऋषयःश्रेष्ठागच्छामीतिवचोऽब्रवीत् ॥ ४२ ॥ इत्युक्त्वागौतमस्तस्मात्स्थानाच्चनिर्गतस्तदा ॥
गत्वाक्रोशंतदाचक्रेआश्रमंतदनुज्ञया ॥ ४३ ॥ यावच्चैवाऽभिशापोवैतावत्कार्यंनकिंचन ॥ कर्मणिनाधिकारोस्तिदैवेपित्र्येचवैदिके ॥ ४४ ॥ तत्रैवसं
स्थितश्चैवगौतमोऋषिसत्तमः ॥ ऋषयोनैवभाषंतेऋषिपत्न्यस्तथैवच ॥ ४५ ॥ यथातेननगच्छंतियत्रासौऋषिसत्तमः ॥ कदाचित्पथिदृष्टोवैदृष्ट्वाप
त्न्योयथापुनः ॥ ४६ ॥ वस्त्रंकृत्वांतरीयंचगच्छंतिमायिनस्तदा ॥ तदादुःखंमहत्प्राप्तंगौतमेनमहर्षिणा ॥ ४७ ॥ मासार्द्धंचततोनीत्वाऋषीन्संप्रार्थ्य
तदा ॥ अनुकंप्योभवद्भिस्तुकथ्यतेक्रियतेमया ॥ ४८ ॥ यथामदीयंपापंचगच्छतीतिनिवेद्यताम् ॥ नोपदेशंविनासिद्धिर्जायतेकर्मणोनृणाम्॥४९ ॥
इत्युक्तास्तेतदाविप्रानोचुश्चैवपरस्परम् ॥ अत्यंतसेवयापृष्टामिलित्वाह्येकतःस्थिताः ॥ ५० ॥ गौतमोदूरतःस्थित्वानत्वाचऋषिसत्तमान् ॥ पप्रच्छ
विनयाविष्टःकिंकार्यंहिमयाऽधुना ॥ ५१ ॥ इत्युक्तेऋषिणातेनऋषयोवाक्यमब्रुवन् ॥ ऋषयऊचुः ॥ निष्कृतिंहिविनाशुद्धिर्जायतेनकदाचन ॥ ५२ ॥
तस्मात्त्वंदेहशुद्ध्यर्थंप्रायश्चित्तंसमाचर ॥ क्रांत्वाचपृथिवींसर्वांपापंस्वंचप्रकाशय ॥ ५३ ॥ पुनरागत्यचात्रैवचरमासव्रतंतथा ॥ शतमेकोत्तरंचैवब्रह्म

णश्चगिरेस्तथा ॥ ५४ ॥ प्रक्रमणंविधायैवशुद्धिस्तेनभविष्याति ॥ अथवातुसमानीयगंगास्नानंसमाचर ॥५५॥ पार्थिवानांतथाकोटिंकृत्वादेवंविशेषतः ॥
गंगायांचततःस्नात्वापूतश्चैवभविष्यसि॥५६॥प्रथमंदशतथाचैकंगिरेःप्रक्रमणंकुरु ॥ शतकुंभैस्तथास्नात्वापार्थिवीनिष्कृतिर्भवेत् ॥५७॥ इत्येवमृषिभिः
प्रोक्तंतथैवोमितितद्वचः ॥ पार्थिवानांतथापूजांगिरेःप्रक्रमणंतथा ॥५८॥करिष्यामिऋषिश्रेष्ठाआज्ञयाश्रीमतामिह ॥ इत्युक्त्वाऋषिवर्यश्चकृत्वाप्रक्रमणं
गिरेः ॥ ५९ ॥ तदाज्ञप्तऋषिस्तत्रपार्थिवानकरोत्तदा ॥ विधानपूर्वकंतच्चचकारगौतमःस्वयम् ॥ ६० ॥ ध्यानंचैवशिवस्यैवकृत्वाविधिविधानतः ॥
अहल्याचतथासाध्वीयुक्तंसर्वंचकारसा ॥ ६१ ॥ शिष्याश्चप्रतिशिष्याश्चचक्रुःसेवांतदातयोः ॥ शिवःप्रसन्नतांयातःकदाचिद्दषिसत्तमाः ॥ ६२ ॥
कैलासशिखरात्तत्रगिरिजागणकैःसह ॥ आगत्यवचनंतस्मैवरंब्रूहिमनेप्सितम् ॥ ६३ ॥ त्वदीयंसुंदरंरूपंशिवस्यपरमात्मनः ॥ दृष्ट्वाह्वदिमुदायुक्तोह्य
साध्यंकिंभवेन्मम ॥ ६४ ॥ नमस्कृत्यशिवायैवस्तुतिंचक्रेस्वयंतदा ॥ निर्गुणायनमस्तुभ्यंशंकरायनमःपुनः ॥ ६५ ॥ पश्चात्प्रकृतिरूपायपुरुषायन
मःपुनः ॥ पश्चाद्विष्णुस्वरूपायततश्चब्रह्मणेनमः ॥ ६६ ॥ ब्रह्मणाविष्णुनाचैवपूज्यायसंशयच्छिदे ॥ पश्चाद्रुद्रस्वरूपायततश्चव्यापकायच ॥ ६७ ॥
व्याप्यायचनमस्तुभ्यंब्रह्मणेपरमात्मने ॥ अकारादिक्षकारांतबीजरूपायतेनमः ॥ ६८ ॥ निर्गुणायगुणायैवस्वरूपायनमोऽस्तुते ॥ नमस्कारंततःकृत्वा
बद्धांजलिपुटःस्थितः ॥ ६९ ॥ निष्पापंकुरुमेदेवशिवोवाक्यमुपाददे ॥ धन्योऽसिकृतकृत्योऽसिनिष्पापोऽसिसदामुने ॥ ७० ॥ एभिर्दुष्टैःकिलत्वंच
छलितोऽसिमहामुने ॥ तवैवदर्शनाल्लोकानिष्पापाश्चभवंतिच ॥ ७१ ॥ कृतघ्नाश्चतथाजातानिष्कृत्यानैवशुद्धिताः ॥ दर्शनादेवशेषंयत्पापंचदूरतोग
तम् ॥७२॥ इत्युक्त्वाशंकरस्तस्मैतेषांदुश्चरितंतदा॥सर्वंनिवेदयामासश्रुत्वाविस्मितमानसः॥ ७३ ॥ आहपुनःशिवंसोऽपिउपकारःकृतोमहान्॥यद्येवंन
कृतंतैस्तुदर्शनंतेकुतोभवेत् ॥ ७४ ॥ धन्याश्चऋषयश्चैवमह्यंशुभतरंकृतम् ॥ इत्येवंवचनंश्रुत्वाप्रसन्नःशंकरःपुनः ॥ ७५ ॥ धन्योऽसित्वमृषिश्रेष्ठव्रिय
तांवरमुत्तमम् ॥ गौतमोऽपिविचार्यैवंलोकेविश्रुतमित्युत ॥७६॥ अन्यथानभवेदेवतस्मादुक्तंसमाचरेत्॥निश्चित्यैवंमुनिश्रेष्ठःशंकरंवाक्यमब्रवीत्॥७७॥
सत्यंनाथब्रवीषित्वंतथाऽपिपंचभिःकृतम् ॥ नान्यथाभवतीत्यत्रयज्जातंजायतांकुतः ॥ ७८ ॥ यदिप्रसन्नोदेवेशगंगाचदीयतांमम ॥ इत्युक्त्वावचनंतत्र
धृत्वाचरणपंकजम् ॥ ७९ ॥ नमश्चकारदेवेशंगौतमोलोककाम्यया ॥ ततस्तुशंकरोदेवःपृथिव्याश्चदिवश्चसः ॥ ८० ॥ सारंचैवसमुद्धृत्यरक्षितंपूर्वमेव
यत् ॥ विवाहेब्रह्मणेदत्तंह्यवशिष्टंचकिंचन ॥ ८१ ॥ तत्तस्मैदत्तवाञ्छम्भुर्भक्तवत्सलतांस्वयम् ॥ ख्यापयन्भुवनेतस्यगौतमस्यमहात्मनः ॥ ८२ ॥
गंगाजलंतदातत्रस्त्रीरूपमभवत्परम् ॥ तस्याश्चैवऋषिश्रेष्ठःस्तुतिंकृत्वानतिंव्यधात् ॥ ८३ ॥ धन्यासिकृतकृत्यासिपावितंभुवनंत्वया ॥ मांचपावयगंगे

त्वंपतितंनिरयेध्रुवम् ॥ ८४ ॥ शंभुरपितदातस्यैपावयत्वंमदाज्ञया ॥ ऊचिवान्वचनंतत्रसर्वेषांहितकृन्नृणाम् ॥ ८५ ॥ इतिश्रुत्वावचस्तस्यशंभोश्चगौ
तमस्यच ॥ उवाचैवपुनर्गंगाश्रूयतामृषिसत्तमाः ॥ ८६ ॥ ऋषिंचपावयित्वाऽहंसपरिवारंतुशंकरम् ॥ गमिष्यामिवचःसत्यंब्रवीमिऋषिसत्तमाः॥ ८७ ॥
इत्युक्तेगंगयातत्रईश्वरोवाक्यमब्रवीत् ॥ त्वयातत्रैवस्थातव्यंयावत्कलिःसमाव्रजेत् ॥ ८८ ॥ वैवस्वतेमनौदेविह्यष्टाविंशतिमेयुगे॥तावत्त्वयाचस्थातव्यं
लोकानांहितकाम्यया ॥ ८९॥ एवंश्रुत्वावचस्तस्यउवाचसासरिद्वरा ॥ मयाचैवस्थितंचाऽत्रकाश्यांचपावनायवै ॥९०॥ पुनरत्रैवकिंस्थास्येपावयित्वा
ऋषिंव्रजे ॥ तदानेतिऋषिश्चाऽपिशंकरश्चाऽऽहतांपुनः ॥९१॥ स्थित्वाकिंचित्पुनर्गंगावाक्यमूचेसुशोभनम् ॥ माहात्म्यमधिकंचेत्स्यात्सर्वेभ्यश्चमुनीश्वर
॥९२॥अन्यच्चैवऋषीनेतांछलकारणतत्परान् ॥ पावितुंनसमर्थाऽस्मिअंतर्धानंव्रजेह्यहम्॥९३॥इतिचाऽन्यच्छंकरश्चवपुषासुंदरेणह ॥ तिष्ठेच्चमत्समीपेहि
सगणोगिरिजासह ॥ ९४ ॥ एवंतस्यावचःश्रुत्वाशंकरोवाक्यमाददे ॥ धन्यासिश्रूयतांदेविअहंभिन्नोनकर्हिचित् ॥ ९५ ॥ तथापिस्थीयतेह्यत्रस्थीयतां
चत्वयापुनः ॥ इत्येवंवचनंश्रुत्वागंगाचप्रत्यपूजयत् ॥ ९६ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांत्र्यंबकमहिमानामत्रिपंचाशत्तमोऽध्यायः॥५३॥
सूतउवाच ॥ एतस्मिन्नंतरेदेवाऋषयश्चपुरातनाः ॥ सुतीर्थान्यप्यनेकानिक्षेत्राणिविविधानिच ॥ १ ॥ आगत्यगौतमंचैवगंगांचगिरिशंतथा ॥ जयज
येतिभाषंतोपूजयामासुःसादरम् ॥ २ ॥ स्तुतिंचविविधांतेषांचक्रुस्तेचमुदान्विताः ॥ गंगाप्रसन्नातेभ्यश्चगिरिशश्चतथैवच ॥ ३ ॥ वरंब्रूतऋषिश्रेष्ठाद
दामःप्रियकाम्यया ॥ ऋषयऊचुः ॥ यदिप्रसन्नोदेवेशप्रसन्नात्वंसरिद्वरे ॥ ४ ॥ स्थातव्यमत्रयुष्माभिःप्रियार्थंसत्कृतांनृणाम् ॥ गंगोवाच ॥ यूयंसर्वेप्रि
यार्थंचतिष्ठंतुकिंमयापुनः ॥ ५ ॥ गौतमंपावयित्वाऽहंगमिष्यामियथागतम् ॥ भद्रंवश्चसदाप्यस्तुपवित्रीक्रियतांजगत् ॥ ६ ॥ इत्युक्तास्तेतदासर्वेऊ
चुःशुभतरंवचः ॥ अस्माकंपावनायैवस्थातव्यंभुवनेत्विह ॥ ७ ॥ गंगोवाच ॥ भवत्सुमेविशेषोऽत्रज्ञेयश्चैवकथंभवेत् ॥ सूतउवाच ॥ इत्युक्तास्तेतदा
देवाऋषयःसरितस्तथा ॥ ८ ॥ क्षेत्राणितीर्थमुख्यानिप्रणिपत्याऽब्रुवंस्तदा ॥ सर्वेदेवाऊचुः ॥ सिंहराशौयदास्याद्वैगुरुःसर्वसुरोत्तमः ॥ ९ ॥ तदावयंच
सर्वेवैआगमिष्यामस्त्वांपुनः ॥ एकादशचवर्षाणिलोकानांपातकंत्विह ॥ १० ॥ क्षालितंयद्भवेदेवमलिनाःस्मसरिद्वरे ॥ तस्यैवक्षालनार्थंचयास्यामः
सर्वथाप्रिये ॥ ११ ॥ अनुग्रहायलोकानामस्माकंप्रियकाम्यया ॥ स्थातव्यंशंकरेणैवत्वयाचैवसरिद्वरे ॥ १२ ॥ यावत्सिंहेगुरुश्चैवस्थास्यामस्ताव
देवहि ॥ त्वयिस्नानंत्रिकालंचशंकरस्यचदर्शनम् ॥ १३ ॥ कृत्वापापंविमोक्ष्यामोनाऽत्रकार्याविचारणा ॥ इत्येवंप्रार्थितातैस्तुगौतमेनमहर्षिणा ॥१४॥
स्थितोऽसौशंकरश्चैवस्थितासाचसरिद्वरा ॥ तद्दिनंहिसमारभ्यसिंहस्थेचबृहस्पतौ ॥ १५ ॥ आयांतिसर्वतीर्थानिक्षेत्राणिदेवतानिच ॥ पुष्कराद्यानिती

र्थानिगंगाद्याःसरितस्तथा ॥ १६ ॥ वासुदेवादयोदेवावसंतिगौतमीतटे ॥ यावत्तत्रस्थितानीहतावत्तेषांफलंनहि ॥ १७ ॥ स्वप्रदेशेसमायातेह्येतेषांच
फलंलभेत् ॥ गंगारेवांगयांचैवगोमतींचऋषीश्वराः ॥ १८ ॥ गंतव्यंनाऽन्यथाक्वापियावत्सिंहेगुरुर्भवेत् ॥ गोमतींप्रथमंगत्वागोदावरींततोव्रजेत् ॥
॥ १९ ॥ पुनश्चगोमतींगत्वाहत्याभिःपरिमुच्यते ॥ त्र्यंबकंनामविख्यातंज्योतिषांलिंगमुत्तमम् ॥ २० ॥ गौतम्याश्चतटेप्रोक्तंमहापातकनाशनम् ॥
एवंवश्चसमाख्यातंयत्पृष्टोऽहंमुनीश्वराः ॥ २१ ॥ इत्येवंवचनंश्रुत्वापुनरूचुस्तदाहिते ॥ ऋषयऊचुः ॥ गंगाचजलरूपेणकुतोजातावदप्रभो ॥ २२ ॥
तन्माहात्म्यंविशेषेणवक्तुमर्हस्यशेषतः ॥ यैर्विप्रैर्गौतमायैवकृतंदुष्टंदुरात्मभिः ॥ २३ ॥ तेषांकिंचततोजातमुच्यतांव्यासशिष्यवै ॥ एवंश्रुत्वावचस्तेषा
मुवाचरोमहर्षणः ॥ २४ ॥ सूतउवाच ॥ श्रूयतामृषयःसम्यक्कथयामियथाश्रुतम् ॥ एवंसंप्रार्थितादेवैर्गौतमेनतदास्वयम् ॥ २५ ॥
ब्रह्मणश्चगिरेस्तस्मादवतारसरिद्वरा ॥ उदुंबरस्यशाखायाःप्रवाहोनिःसृतस्तदा ॥२६॥ तत्रस्नातऋषिश्रेष्ठोगौतमोनामविश्रुतः ॥ समागतश्चतेसर्वेस्नानं
चक्रुर्मुदान्विताः ॥ २७ ॥ गंगाद्वारंचतन्नामप्रसिद्धमभवत्तदा ॥ पश्चात्क्षेत्रेचऋषयोगौतमस्पर्द्धिनस्तदा ॥ २८ ॥ स्नानार्थमागतान्दृष्ट्वाह्यंतर्द्धानंगता
स्वयम् ॥ मामेतिगौतमस्त्वत्रव्याजहारमुनीश्वराः ॥ २९ ॥ गौतमउवाच ॥ इमेचैवमदीयाश्चसाधवोवाप्यसाधवः॥एतत्पुण्यप्रभावेनदर्शनंदीयतेत्वया॥
॥ ३० ॥ गंगोवाच ॥ एतेदुष्टतमाश्चैवनैवद्दश्यामयापुनः॥कृतघ्नाद्द्रोहिणश्चैववराकामानिनोध्रुवम् ॥ ३१ ॥ जाल्माःपाखंडिनश्चैववर्ज्यास्तेऋषिसत्तम॥
इतिवाणीसमुत्पन्नाह्याकाशेऋषिसत्तमाः ॥३२॥ तच्छुत्वावचनंतस्याऋषिर्वाक्यमुपाददे ॥ मातश्चश्रूयतामेतन्महतांरीतिरेवच॥३३॥ अपकारिषुयेलो
कउपकारंचरंतिवै॥तेनपूतोभवाम्यत्रभगवद्वाक्यतःश्रुतम्॥३४॥तस्मात्त्वयाचतत्कार्यंसत्यंचभगवद्वचः॥पुनर्वाणीसमुत्पन्नासत्यंचकथ्यतेत्वया ॥३५॥
तथापिसंग्रहार्थंचप्रायश्चित्तंचरंतिचेत् ॥ शतमेकोत्तरंचात्रकार्यंप्रक्रमणंगिरेः ॥ ३६ ॥ ततश्चैवाधिकारश्चजायतेदुष्टकर्मणाम् ॥ इतिश्रुत्वावचस्तस्या
श्चक्रुश्चैवंतथापुनः ॥ ३७ ॥ गौतमश्चततःश्रुत्वाक्षंतव्यश्चाऽपराधकः ॥ एवंकृतेतदातेनगौतमेनतदाज्ञया ॥ ३८ ॥ कुशावर्त्तंतदाचक्रेगंगाद्वारादधो
गतम् ॥ ततःप्रादुरभूत्तत्रतथैवप्रीतयेपुनः ॥ ३९ ॥ कुशावर्त्तंचविख्यातंतीर्थमासीदनुत्तमम् ॥ तत्रस्नातोनरोयस्तुमोक्षायपरिकल्पते ॥ ४० ॥ तत्रैव
ऋषयोदिव्यांस्तुतिंकृत्वापुनःपुनः ॥ अहल्यायाःपुरःकृत्वाऋषिपत्न्यस्तथापुनः ॥ ४१ ॥ चक्रुस्तेतुतदास्नानंकृतार्थाह्यभवंस्तदा ॥ शिवस्यदर्शनं
कृत्वाआनंदंपरमंगताः ॥ ४२ ॥ गंगाद्वारेकुशावर्त्तेशिवस्यत्र्यंबकस्यच ॥ निकटेकोटितीर्थेचस्नात्वागर्भेनगच्छति ॥ ४३ ॥ गंगांचसेवतेविष्णुर्गंगांच
सेवतेहरः ॥ गंगांचसेवतेब्रह्माकोवागंगांनसेवते ॥ ४४ ॥ सामान्योयोभवेच्चैवसेवयित्वासुखीभवेत् ॥ मुक्तिमायातिनिकटेयश्चैवचव्यवस्थितः ॥ ४५ ॥

गंगांचैवतदाहृष्ट्वापंचवट्यांहरिःस्वयम् ॥ पावनार्थंचजगतांस्थितोऽसौरघुनंदनः ॥ ४६ ॥ पूर्वंगंगाततोविष्णुःस्थितःकिंदुर्लभंभवेत् ॥ आजन्ममरणा
द्वासाद्वाराणस्यांचयत्फलम् ॥ ४७ ॥ तत्फलंयाममात्रेणपंचवट्यांनिवासिनः ॥ पूर्वंरामंततोदेवंत्र्यंबकंलोकशंकरम् ॥ ४८ ॥ गंगाद्वारंचतद्दृष्ट्वाकःपा
पोनप्रमुच्यते ॥ येस्नातास्तत्रतत्रैवजीवन्मुक्ताभवंतिते ॥ ४९ ॥ इतिवश्चसमाख्यातंगौतम्यामाहात्म्यमुत्तमम् ॥ गौतमोऋषयश्चान्येमिलिताश्चपरस्प
रम् ॥ ५० ॥ त्र्यंबकस्यचमाहात्म्यंकथितंचमुनीश्वराः ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः ॥ ५१ ॥ अतःपरंप्रवक्ष्यामिमाहात्म्यंश्रूयतांपुनः ॥
वैद्यनाथेश्वरस्यैवशृण्वतांपापहारकम् ॥ ५२ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांत्र्यंबकमाहिमवर्णनंनामचतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥
सूतउवाच ॥ रावणोराक्षसश्रेष्ठोमानीमानपरायणः ॥ आराध्यचहरंतत्रकैलासेपर्वतोत्तमे ॥ १ ॥ कियत्कालंसमाराध्यप्रसन्नोनहरोयदा ॥ ततश्चाऽयंहि
मवतोदक्षिणेवृक्षखंडके ॥२॥ भूमौगर्त्तंतदाकृत्वातत्राऽग्निंचसमादधौ ॥ तन्निकटेशिवंस्थाप्यहवनंविविधंतथा ॥३॥ चकारराक्षसश्रेष्ठोनप्रसन्नस्तथापिह॥
तदाशिरांसिच्छित्त्वासपूजनंशंकरस्यच ॥ ४ ॥ आरब्धंचतदातेनच्छिन्नानिनववैयदा ॥ एकस्मिन्नवशिष्टेतुप्रसन्नःशंकरस्तदा ॥ ५ ॥ शिवउवाच ॥
मनसश्चेप्सितंब्रूहिददामितवराक्षस ॥ राक्षसउवाच ॥ यदिप्रसन्नोदेवेशदेहिमेबलमुत्तमम् ॥ ६ ॥ शिरांसिपूर्ववत्स्वामिन्कुरुमेशंकरप्रभो ॥ इतितस्यव
चःश्रुत्वाभक्तिमत्त्वाच्चकारसः ॥ ७ ॥ यथेप्सितंददौतस्मैह्यतुलंबलमुत्तमम् ॥ शिरांसिपूर्ववत्कृत्वानीरुजानितथापुनः ॥ ८ ॥ प्रसादंतस्यसंप्राप्यजगा
मभवनंप्रति ॥ देवाश्चदुःखितास्तत्रऋषयोयेचसत्तमाः ॥ ९ ॥ किंकुर्मःक्वचगच्छामःकिंभविष्यतिवापुनः ॥ सार्थश्चपक्षतांप्राप्तःकिंकिंनसाधयिष्यति ॥
॥ १० ॥ इतिदुःखंसमापन्नाःपप्रच्छुर्नारदंतदा ॥ सर्वकार्यसमर्थोऽसिदुःखंदुष्टःकरिष्यति ॥ ११ ॥ क्वयास्यामोवयंचाऽत्रदुष्टेनपीडिताःप्रभो ॥ इतितद्व
चनंश्रुत्वानारदोवाक्यमब्रवीत् ॥१२॥ नारदउवाच ॥ दुःखंत्यजतभोदेवायुक्तिंचकथयाम्यहम् ॥ इत्युक्त्वाचपथितत्रयत्रैवगम्यतेऽमुना ॥१३॥ वीणांच
प्रेरयन्यातस्तावत्सराक्षसोगतः ॥ तंराक्षसंतदादृष्ट्वानारदोवचनंपुनः ॥ १४ ॥ उवाचदेवकार्यार्थंधन्यस्त्वंराक्षसोत्तम ॥ त्वांदृष्ट्वातुमनोमेऽद्यप्रसन्नंचय
थामया ॥ १५ ॥ वक्तुंनैवविशक्येतपृच्छचतेत्वंकुतोगतः ॥ शीघ्रंहृष्टतरोयासिकिंहृष्टोऽसिब्रवीषिमे ॥ १६ ॥ श्रोतुंकुतूहलंमेऽद्यकथ्यतांराक्षसोत्तम ॥
इतिपृष्टस्तदातेनराक्षसोवाक्यमब्रवीत् ॥ १७ ॥ रावणउवाच ॥ श्रूयतांचऋषिश्रेष्ठकथयामिशृणुष्वतत् ॥ अहंशिवंसमाराध्यप्रसन्नंतंविधायच ॥१८॥
अतुलंचबलंलब्ध्वागच्छामिचगृहंप्रभो ॥ पुनःपप्रच्छतत्रैवकथमाराधितःशिवः ॥ १९ ॥ तदेवकथयत्वंचआप्तत्वात्पृच्छचतेमया ॥ रावणउवा
च ॥ श्रूयतांचऋषिश्रेष्ठकथयामियथातथा ॥ २० ॥ पूर्वंमयातुकैलासेतपोऽर्थंचगतंमुने ॥ तत्रैवबहुकालंवैतपस्तप्तंसुदारुणम् ॥ २१ ॥ यदानशंकर

स्तुष्टस्ततश्चपरिवर्तितम् ॥ आगत्यवृक्षखंडेवैपुनस्तत्तंमयामुने ॥ २२ ॥ग्रीष्मेपंचाऽग्निमध्येतुवर्षासुस्थंडिलेशयः ॥ शीतेजलांतरस्थायीकृतंचैवत्रि
धातपः ॥ २३ ॥ एवंमयाकृतंयर्हितपश्चैवऋषीश्वर ॥ तथापिशंकरोमह्यंनप्रसन्नोमुनीश्वर ॥ २४ ॥ तदामयाचक्रुद्धेनभूमौगर्तंविधायच ॥ तत्राऽग्निंच
समाधायपार्थिवंपरिकल्प्यच ॥ २५ ॥ गंधैश्चचंदनैश्चैवधूपैश्चविविधैस्तथा ॥ नैवेद्यैःपूजितःशंभुरारात्रिकविधानतः ॥२६॥ प्रणिपत्यस्तवैःपुण्यैस्तोषि
तःशंकरस्तथा॥नृत्यैर्गीतैश्चवादित्रैर्मुखांगुलिसमर्पणैः॥२७॥यज्ञैश्चविविधैश्चाऽन्यैःपूजितोभगवान्हरः॥नतुष्टिसंमुखोजातस्तदाचदुःखितोह्यहम् ॥ २८॥
धिक्छरीरंबलंचैवाधिक्तपःकरणंमम ॥ इत्युक्त्वाचमयाह्यत्रस्थापितेग्नौहुतंबहु ॥ २९ ॥ पुनश्चैवशरीरंहित्यक्ष्याम्यग्नौविचार्यच ॥ शिरांसिचविशुद्धा
निकृत्वातुचंदनादिभिः ॥ ३० ॥ छित्त्वैकैकंशिरःसर्वाण्यर्पितानिमयानव ॥ यावच्चदशमंछेत्तुंप्रारब्धमृषिसत्तम ॥ ३१ ॥ तावच्चैवस्वयंदेवोज्योतीरू
पोहरःस्वयम् ॥ आविरासीत्तदातत्रमामेतिव्याहरञ्छिवः ॥ ३२ ॥ प्रसन्नश्चवरंब्रूहिददामितेसमीप्सितम् ॥ इत्युक्तेचऋषिश्रेष्ठमयाहृष्टोमहेश्वरः ॥३३॥
दृष्ट्वावृत्तंमयैतच्चह्यतुलंमेबलंप्रभो ॥ देहित्वंचप्रसन्नोसिदुर्लभंकिंभवेन्मम ॥ ३४ ॥ शिवेनपरितुष्टेनसर्वंदत्तंयथेप्सितम् ॥ अघोरयाचदृष्ट्याचावैपूर्ववद्यो
जितानिमे ॥ ३५ ॥ शिरांसिसंधयित्वातुदृष्ट्यानिपरमात्मना ॥ एवंकृतेतदातत्रशरीरंपूर्ववन्मम ॥ ३६ ॥ जातंतस्यप्रसादाच्चसर्वंप्राप्तंमयाफलम् ॥
दत्त्वाचप्रार्थितंसोवैस्थितोऽसौवृषभध्वजः ॥ ३७ ॥ वैद्यनाथेश्वरोलोकेप्रसिद्धोहितकारकः ॥ प्रणिपत्यागतश्चाहंविजेतुंभुवनत्रयम् ॥ ३८ ॥ इति
श्रीशिवमहापुराणेज्ञानसंहितायांवैद्यनाथोत्पत्तिवर्णनंनामपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ छ ॥ सूतउवाच ॥ तदीयंतद्वचःश्रुत्वाविहस्यनारदो
ब्रवीत् ॥ श्रीनारदउवाच ॥ श्रूयतांराक्षसश्रेष्ठकथयामिहितंतव ॥ १ ॥ त्वयोक्तंयच्छिवेनैवहितंदत्तंममाऽधुना ॥ तत्सर्वंचत्वयासत्यंनमंतव्यंकदा
चन ॥ २ ॥ अयंवैमत्ततांप्राप्तःकिंकिंनैवब्रवीतिच ॥ सत्यंभविष्यतिनैवकथंज्ञेयंप्रियोहिमे ॥ ३ ॥ इतोगत्वापुनश्चैवकुरुत्वंचहितायवै ॥ कैलासोद्धरं
णेयत्नःकर्तव्यश्चत्वयापुरः ॥ ४ ॥ यदिचैवधृतश्चायमुच्चैश्चैवभविष्यति ॥ तदावैसफलंसर्वंभविष्यतिनसंशयः ॥ ५ ॥ पूर्ववत्स्थापयित्वातंपुनरागच्छ
वैसुखम् ॥ निश्चयंपरमंगत्वायथेच्छसितथाकुरु ॥ ६ ॥ इत्युक्तःसहितंमेनेरावणोबलदर्पितः ॥ सत्यंमत्वामुनेर्वाक्यंकैलासमगमत्तदा ॥ ७ ॥ गत्वातत्र
समुत्थानंचक्रेतस्यागिरेरपि ॥ तत्रस्थंचैवतत्सर्वंविपर्यस्तंपरस्परम् ॥ ८ ॥ गिरिशोऽपितदादृष्ट्वाकिंजातंचतदाऽब्रवीत् ॥ गिरिजाचतदाशंभुंप्रत्युवाच
विहस्यतम् ॥ ९ ॥ तच्छिष्यस्यफलंप्राप्तंसम्यग्जातंसुशिष्यतः ॥ पश्चाच्छिवेनशप्तश्चरावणोबलदर्पितः ॥ १० ॥ शीघ्रंचतवहस्तानांदर्पघ्नश्चभवि
ष्यति ॥ इतितस्यतदाजातंनारदःश्रुतवांस्तदा ॥ ११ ॥ कैलासंपूर्ववत्स्थाप्ययथागतंतथाययौ ॥ निश्चयंपरमंगत्वाबलेबलविमोहितः ॥ १२ ॥

जगद्दशेतदाचक्रेरावणोलोकरावणः ॥ इत्येतच्चसमाख्यातंवैद्यनाथेश्वरस्यच ॥१३॥ माहात्म्यंश्रृण्वतांपापंगच्छतिभस्मसान्नृणाम् ॥ अतःपरंप्रवक्ष्यामि
नागेशंपरमात्मनः ॥ १४ ॥ ज्योतीरूपंयथाजातंतथाचविनिवेद्यते ॥ दारुकाराक्षसीकाचित्पार्वत्याबलदर्पिता ॥ १५ ॥ दारुकश्चतदातस्याःस्वामीच
बलवत्तरः ॥ बहुभीराक्षसैस्तत्रचकारकदनंमहत् ॥१६॥ यज्ञध्वंसंचलोकानांधर्मध्वंसंतदाऽकरोत् ॥ पश्चिमेसागरेतस्यवनंसर्वसमृद्धिमत् ॥१७॥योजना
नांषोडशैवविस्तृतंसर्वतोदिशम् ॥ दारुकायैतदादेवीवनस्यचलनेबलम् ॥१८॥ दारुकायत्रसायातितत्रगच्छतितद्वनम् ॥ भूम्याचतरुभिस्तत्रसर्वोपक
रणैःसह ॥ १९ ॥ प्रयातितद्वनंदेवित्वयासहयथेच्छसि ॥ तत्रस्थित्वातदासोऽपिसर्वेषांचभयंददौ ॥ २० ॥ तेसर्वेपीडितालोकाऔर्वस्यशरणंययुः ॥ म
हर्षेशरणंदेहिनोचेद्दुष्टेनमारिताः ॥२१॥ सर्वकर्त्तुंसमर्थोऽसितेजसादीप्तिमानसि ॥ पृथिव्यांवर्त्ततेकश्चित्त्वांविनाशरणंनहि ॥२२॥ यामोयस्यसमीपेतुस्थि
ताःसुखमवाप्नुमः ॥ दृष्ट्वात्वांराक्षसाःसर्वेविलीयंतेविदूरतः ॥२३॥ त्वयिशैवंतदातेजोभासतेज्वलनोयथा ॥ इष्टानांचंद्रवत्त्वंचसुखंतेभ्यःप्रयच्छसि ॥२४॥
इत्येवंप्रार्थितःसोऽपिमुहुर्मुहुर्मुनीश्वराः ॥ सोऽपिमानीशरण्यश्चकरिष्यामिवचोऽब्रवीत् ॥२५॥ इत्युक्त्वाचऋषिश्रेष्ठाःशापंतेषांददावृषिः ॥ पृथिव्यांय
दिरक्षांसिहिंसंतिप्राणिनोयदा ॥२६॥ तदाप्राणैर्वियुज्येरन्राक्षसाबलवत्तराः ॥ यदायज्ञान्विहंसंतितदाप्राणैर्वियुज्यते ॥ २७ ॥ इत्युक्त्वावचनंतेभ्यःसमा
श्वास्यप्रजाःपुनः ॥ तपश्चकारविधिवन्नौर्वोलोकसुखावहम् ॥२८॥ तदादेवास्तदाज्ञायशापस्यकारणंहितम् ॥ युद्धायचसमुद्योगंचक्रुर्देवारिभिःसह ॥२९॥
सर्वैश्चैवप्रयत्नैश्चयुद्धार्थंसमुपागताः ॥ तान्दृष्ट्वाराक्षसास्तत्रविचारेतत्पराःपुनः ॥३०॥ किंकर्तव्यंक्वगंतव्यंसंकटंसमुपागतम् ॥ युध्यतेम्रियतेचैवयुध्य
तेनाविहंस्यते ॥३१॥ दारुकाराक्षसीसापिज्ञात्वादुःखंसमागतम् ॥ भवान्याश्चवरंतत्रकथयामाससातदा ॥ ३२ ॥ मयाप्याराधितापूर्वंभवपत्नीवरंददौ ॥
वनंचगच्छतिसार्द्धंयत्रगंतुंत्वमिच्छसि ॥३३॥तद्वरश्चमयाप्राप्तःकथंदुःखंविषद्यते ॥ जलेवनंचनीत्वावैसुखंस्थेयंतुराक्षसैः ॥३४॥तस्यास्तद्वचनंश्रुत्वाराक्ष
साहर्षमागताः॥धन्येयंकृतकृत्येयंराज्ञ्यावैजीवितावयम् ॥३५॥और्वेणमारितानांचकागतिःस्यान्नसंशयः॥इतिविचार्यतेसर्वेतांज्ञात्वाहितकारिणीम् ॥३६॥
तस्यैनत्वाचतत्सर्वंकथयामासुरादरात् ॥ यदिगंतुंभवेच्छक्तिर्गम्यतांकिंविचार्यते ॥ ३७ ॥ तत्रगत्वाजलेदेविसुखंस्थास्यामनित्यशः ॥ एतस्मिन्नंतरे
लोकादेवैःसार्द्धंसमागताः ॥ ३८ ॥ युद्धायविविधैर्दुःखैःपीडिताराक्षसाःपुरा ॥ राक्षसीचतदातस्याभवान्याबलमाश्रिता ॥ ३९ ॥ समग्रंतद्वनंनीत्वा
जलेस्थलसमन्वितम् ॥ जयजयेतितदादेवीस्तुतिमुच्चार्यराक्षसी ॥ ४० ॥ उड्डयनंतुकृत्वासासपक्षोगिरिराड्यथा ॥ समुद्रस्यैवमध्येसासंस्थितानिर्भया
तथा ॥ ४१ ॥ वनंचोपवनंचैवजलंदुर्गंतथापुनः ॥ विहाररम्यस्थानानिहर्म्याणिविविधानिच ॥ ४२ ॥ स्वर्गादप्यधिकंतच्चराजतेचमुनीश्वराः ॥ तत्र

सिद्धौचतेस्थित्वानगरेचविलासिनः ॥ ४३ ॥ राक्षसाश्चसुखंप्रापुर्निर्भयाश्चविजह्रिरे ॥ राक्षसाश्चपृथिव्यांचनाजग्मुर्मुनिपुंगवाः ॥ ४४ ॥ मुनेःशापभया
देवजलेचबभ्रमुस्तदा ॥ नौषुस्थिताज्ञनान्नीत्वानगरेतत्रतांस्तदा ॥ ४५ ॥ चिक्षिपुर्बंधनागारेकांश्चिज्जघ्नुस्तदाहिते ॥ यथातथापुनःपीडांचक्रुस्ते
राक्षसास्तदा ॥ ४६ ॥ यथापूर्वस्थलेलोकेभयंचाऽऽसीन्निरंतरम् ॥ तथाजलेभयंतेषांह्यासीन्नित्यंमुनीश्वराः ॥ ४७ ॥ एवंजातेतदाकालेकदाचिद्राक्षसा
जले ॥ निःसृतालोकपीडार्थंरुद्ध्वामार्गंजलेतदा ॥ ४८ ॥ स्थितास्तेगुप्तरूपेणधरणार्थंमुनीश्वराः ॥ एतस्मिन्नंतरेतत्रनावोबहुतराःशुभाः ॥ ४९ ॥
आगताबहुधातत्रलोकैश्चसर्वतोवृताः ॥ तानावश्चतदादृष्ट्वाहर्षंप्राप्यतथाचतान् ॥ ५० ॥ जग्मुस्तेचतदासर्वेभयंचराक्षसोद्भवम् ॥ गतास्तेचतदातेषां
कृत्वाचधरणंपुनः ॥ ५१ ॥ आजग्मुर्नगरंतेचचिक्षिपुर्नगरेपुनः ॥ तेदुःखितास्तदादुःखमाजग्मुश्चमुनीश्वराः ॥ ५२ ॥ तेषांमध्येचयोऽधीशःशैवश्चाऽऽ
सीत्तदातुसः ॥ विनाचशिवपूजांचनतिष्ठतिकदाचन ॥ ५३ ॥ यदिपूजानजायेततदावैभुज्यतेनच ॥ कारागृहगतःसोऽपिबहूनशिक्षयत्तदा ॥ ५४ ॥
शिवमंत्रंचपूजांचपार्थिवीमृषिसत्तमाः ॥ तेसर्वेचतदातत्रपूजांशिवसमुद्भवाम् ॥ ५५ ॥ चक्रुश्चविधिवत्तत्रयथादृष्टंयथाश्रुतम् ॥ केचित्तत्रस्थिताध्यानेब
द्ध्वाऽऽसनमनुत्तमम् ॥ ५६ ॥ मानसींचतदापूजांकृत्वादुःखंव्यपोहयन् ॥ तदधीशेनतत्रैवप्रत्यक्षंशिवपूजनम् ॥ ५७ ॥ कृतंचपार्थिवस्यैवविधानेनमुनी
श्वराः ॥ अन्येचयेनजानंतिविधानस्मरणंपरम् ॥ ५८ ॥ नमःशिवायमंत्रेणध्यायंतःशंकरंस्थिताः ॥ सुप्रियोनामपश्चाद्वैवैश्यवर्यःशिवप्रियः
॥ ५९ ॥ ध्यानेनमनसातत्रमानसंह्युपचारकम् ॥ चकारप्रीतियुक्तोऽसौप्रत्यक्षंशिवआददे ॥ ६० ॥ यथोक्तरूपीशंभुश्चआगत्यसर्वमाददे ॥
सोपिस्वयंनजानातिगृह्यतेचाशिवेनवै ॥ ६१ ॥ एवंचक्रियमाणस्यषण्मासाःसंययुस्तदा ॥ कदाचित्सेवकैस्तस्यराक्षसस्यदुरात्मनः ॥ ६२ ॥
तदग्रेसुंदरंरूपंदृष्ट्वातुशंकरस्यच ॥ निवेदितंतदातस्मैराज्ञेसर्वंयथार्थकम् ॥ ६३ ॥ राजापिपुनरागत्यवैश्यायपर्यपृच्छत ॥ किंध्यायसिचवैश्याऽद्यस
त्यंवदनचाऽन्यथा ॥ ६४ ॥ तेनोक्तंत्वंचजानासितच्छ्रुत्वाकुपितःपुनः ॥ राक्षसान्प्रेरयामासहन्यंतांराक्षसाइमे ॥ ६५ ॥ इत्युक्तास्तेतदाहंतुंनानायुध
धरागताः ॥ तानागतांस्तदादृष्ट्वाभयवित्रस्तलोचनः ॥ ६६ ॥ पाहिशंकरदेवेशपाहिशिवशिवेतिच ॥ सर्वस्वंचभवानद्यवर्ततेदेवसत्तम ॥ ६७ ॥
इतिसंप्रार्थितःशंभुर्विवरान्निर्गतस्तदा ॥ भवनेनसुंदरेणचतुर्द्वारयुतेनच ॥ ६८ ॥ मध्येचज्योतीरूपंचशिवरूपमहाद्भुतम् ॥ परिवारसमायुक्तंदृष्ट्वाचाऽ
पूजयत्तदा ॥ ६९ ॥ पूजितश्चतदाशंभुःप्रसन्नोह्यभवत्स्वयम् ॥ पाशुपतंतदास्त्रंचदत्त्वाचराक्षसोत्तमान् ॥७०॥ जघानसोपकरणान्सर्वांश्चराक्षसांस्तथा ॥
सर्वांस्तांश्चतदाहत्वावरंप्रादाद्धरस्यच ॥ ७१ ॥ अस्मिन्वनेसदावर्णाधर्माश्चसंभवंतुवै ॥ ब्राह्मणक्षत्रियविशांशूद्राणांधर्मएवच ॥ ७२ ॥ भवत्व

त्रमुनिश्रेष्ठास्तामसानकदाचन ॥ एतस्मिन्समयेदेव्याराक्षसीतुस्तुतिंव्यधात् ॥ ७३ ॥ प्रसन्नाचतदासाचह्युवाचकिंकरोम्यहम् ॥ साप्युवाचपुनस्त
त्रवंशश्चरक्ष्यतांमम ॥ ७४ ॥ रक्षयिष्यामिवंशंतेसत्यंचकथ्यतेमया ॥ इत्युक्त्वाचशिवेनैवविग्रहंसाचकारह ॥ ७५ ॥ शिवोपिकुपितोदेवियथेच्छसित
थाकुरु ॥ इतिश्रुत्वावचस्तस्यपार्वतीवाक्यमब्रवीत् ॥ ७६ ॥ भवदीयंवचस्तथ्यंयुगांतेचभविष्यति ॥ तावच्चतामसीसृष्टिर्भवत्वितिमतंमम ॥ ७७ ॥
नान्यथाप्रलयःस्याद्धैसत्यंमेव्याहृतंशिव ॥ इयंचदारुकादेवीराक्षसीशक्तिकामम ॥ ७८ ॥ बलिष्ठाराक्षसानांचराज्ञीराज्यंप्रशास्यति ॥ इमाराक्षसपत्न्य
श्चप्रसविष्यंतिपुत्रकान् ॥ ७९ ॥ तेसर्वैमिलिताश्चैववनेवासायवैमताः ॥ इत्येवंवचनंश्रुत्वाभक्तानांपालनायच ॥ ८० ॥ स्थास्यामिचवनेह्यत्रशंकरो
वाक्यमब्रवीत् ॥ यदाचवर्णधर्मस्थोदर्शनंमेत्रसंस्थितम् ॥ ८१ ॥ करिष्यतितदासोवैचक्रवर्तीभवेन्नरः ॥ अन्यथाकलिपर्यासेसत्यस्यादौमुनीश्वराः ॥
॥ ८२ ॥ महासेनसुतोयोवैवीरसेनोतिविश्रुतः ॥ दर्शनंममकृत्वाचचक्रवर्तीभविष्यति ॥ ८३ ॥ इत्येवंदंपतीतौचकृत्वाहास्यंपरस्परम् ॥ स्थितौतत्र
स्वयंसाक्षान्नागेशोनामशंकरः ॥ ८४ ॥ ऋषयऊचुः ॥ वीरसेनःकथंतत्रयास्यतिदारुकावने ॥ सूतउवाच ॥ नैषधेसुंदरेदेशेक्षत्रियाणांकुलेचसः ॥८५॥
महासेनसुतोवीरसेनोवैक्षात्रसंभवः॥पार्थिवंभजनंकृत्वातपःपरमदुष्करम्॥८६॥ चकारवीरसेनोवैवर्षाणांद्वादशावधि॥ततःप्रसन्नोदेवेशःप्रत्यक्षंप्राहशंकरः
॥८७॥काष्ठस्यमत्सिकांकृत्वात्रपुधातुविलेपनाम् ॥ विधाययोगमायांचदास्यामिवीरसेनक ॥८८॥ तांगृहीत्वापुनश्चैकांनौभिःसहव्रजाऽधुना॥अन्येचम्ले
च्छरूपावैभविष्यंतिवनौकसः ॥ ८९ ॥ एकस्त्वंतत्रगत्वाचविवरेचकृतेमया ॥ प्रविश्यचतदापूजांकृत्वानागेश्वरस्यच ॥ ९० ॥ ततःपाशुपतंप्राप्य
हत्वाचराक्षसीमुखान् ॥ पार्वत्याश्चबलंचैवसंपूर्णंचभविष्यति ॥ ९१ ॥ मयिदृष्टेतदाकिंचिन्न्यूनंतेनभविष्याति ॥ इतिदत्तवरःसोऽपिशिवेनपरमात्मना ॥
॥ ९२ ॥ शक्तःसर्वंतदाकर्तुंभविष्यातिनसंशयः ॥ एवंनागेश्वरोदेवोह्युत्पन्नोज्योतिषांपतिः ॥ ९३ ॥ एवंयःशृणुयान्नित्यंमहापातकनाशनम् ॥ अतः
परंप्रवक्ष्यामिलिंगंरामेश्वरस्यच ॥ ९४ ॥ उत्पन्नंचयथापूर्वंतथाऽहंकथयाम्यहम् ॥ ९५ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांनागेशमहिमनिरूपणं
नामषट्पंचाशत्तमोऽध्यायः ॥५६॥ ॥ सूतउवाच ॥ ॥ श्रूयतामृषयःश्रेष्ठामाहात्म्यंशंकरस्यच ॥ कदाचिद्राघवोदेवोलक्ष्मणेनयुतोयदा ॥ १ ॥ सुग्रीव
प्रमुखैःपिंगैर्वानरैर्बलवत्तरैः ॥ पद्मोष्टादशसंख्यैश्चययौतीरंपयोनिधेः ॥ २ ॥ दक्षिणेसागरेयोवैदृश्यतेलवणाकरः ॥ तत्रगत्वास्वयंरामोवेलायांसंस्थितो
यदा ॥ ३ ॥ वानरैःसेव्यमानस्तुलक्ष्मणेनतथैवच ॥ जानकीचकुतोयाताकदाचेयंमिलिष्यति ॥ ४ ॥ अगाधःसागरश्चैवतीर्णसैन्यंचवानरम् ॥ राक्षसो
गिरिधर्तास्तिकिंवाकिंचभविष्याति ॥ ५ ॥ इत्येवचविचार्यैवतीरेस्थित्वासलक्ष्मणः ॥ आश्रितोवानरैःसर्वैरंगदादिपुरःसरैः ॥ ६ ॥ उवाचराघवस्तत्रज

लार्थीलक्ष्मणाऽभवम् ॥ इत्युक्तावानरास्तत्रह्यधावंतदिशोदश ॥ ७ ॥ नीत्वाजलंसमाजग्मुःप्रणिपत्यपुरःस्थिताः ॥ जलंचगृह्यतांस्वामिन्समानीतंत्व
दाज्ञया ॥ ८ ॥ तज्जलंचस्वयंनीत्वापातुमारब्धवान्यदा ॥ तदाचस्मरणंजातंनकृतंदर्शनंमया ॥ ९ ॥ शिवस्यवानरश्रेष्ठाःकथंचगृह्यतेजलम् ॥ इत्यु
क्त्वाचजलंमुक्तंरामेणपरमात्मना ॥१०॥ पश्चाच्चपार्थिवींपूजांचकाररघुनंदनः ॥ आवाहनादिकार्दींश्चह्युपचारान्प्रकल्प्यच ॥११॥ प्रणिपातैःस्तवैर्दिव्यैः
संतोष्यशंकरंपुनः ॥ प्रार्थयामासदेवेशंशंकरंपरयामुदा ॥ १२ ॥ स्वामिञ्जलमगाधंचराक्षसोबलवत्तरः ॥ वानराणांबलंह्येतच्चंचलंयुद्धसाधनम् ॥ १३ ॥
तस्माच्छंभोत्वयाकार्यंसाहाय्यंममसुव्रत ॥ त्वदीयोरावणश्चैवदुर्जयःसर्वथानृभिः ॥ १४ ॥ पुण्येचपक्षपातोवैत्वयाकार्यःसदाशिव ॥ इत्येवंचनमस्कृ
त्यप्रक्रम्यचपुनःपुनः ॥ १५ ॥ जयजयतदाप्युच्चैरुद्घोषैःशंकरेतिच ॥ इतिस्तुत्वाशिवंतत्रमंत्रध्यानपरायणः ॥ १६ ॥ पुनःपूजांतदाकृत्वागह्लनादं
यदाऽकरोत ॥ तदाचशंकरोदेवोज्योतीरूपोमहेश्वरः ॥ १७ ॥ सांगःसपरिवारश्चयथोक्तंरूपमुत्तमम् ॥ धृत्वाचप्रकटीभूयशिवमस्तुतदाऽब्रवीत् ॥ १८ ॥
तद्रूपंचतदादृष्ट्वासर्वपूजांपुनःस्वयम् ॥ कृतवान्राघवोदेवःशिवधर्मपरायणः ॥ १९ ॥ स्तुतिंचविविधांकृत्वाप्रणिपत्यशिवंमुदा ॥ जयंचप्रार्थयामासज
योऽस्तुपुनरब्रवीत् ॥ २० ॥ शिवदत्तंजलंप्राश्यह्यनुज्ञांसमवाप्यच ॥ पुनश्चप्रार्थयामासइहस्थेयंत्वयाप्रभो ॥ २१ ॥ लोकानामुपकारार्थंपावनायशिव
त्वया ॥ स्थातव्यमत्रदेवेशकरुणासागरप्रभो ॥ २२ ॥ इत्युक्तस्तुशिवस्तत्रलिंगरूपोऽभवत्तदा ॥ रामेश्वरश्चनाम्नावैप्रसिद्धोजगतीतले ॥ इतितेचस
माख्यातंशृण्वतांपापहारकम् ॥ २३ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांरामेश्वरमाहात्म्यंनामसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ सूतउवाच ॥
अतःपरंचघुश्मेशंज्योतिर्लिंगमुदाहृतम् ॥ तस्यैवचसुमाहात्म्यंश्रूयतामृषिसत्तमाः ॥ १ ॥ दक्षिणस्यामृषिश्रेष्ठागिरिर्देवेतिसंज्ञकः ॥ तस्यैवनिकटेक
श्चिद्भारद्वाजकुलोद्भवः ॥ २ ॥ सुधर्मानामविप्रश्चसर्वदाब्रह्मवित्तमः ॥ तस्यप्रियासुदेहाचसाध्वीधर्मपरायणा ॥ ३ ॥ सुधर्माचद्विजश्रेष्ठोदेवतातिथिपूज
कः ॥ वेदमार्गपरोनित्यमग्निसेवापरायणः ॥ ४ ॥ त्रिकालंश्रद्धयायुक्तःसूर्यरूपसमद्युतिः ॥ शिष्याणांपाठकश्चैववेदशास्त्रविचक्षणः ॥ ५ ॥ धनवांश्चप
रोदातासौजन्यगुणभाजनम् ॥ आयुर्बहुव्यतीतंचतस्यधर्मंप्रकुर्वतः ॥ ६ ॥ पुत्रश्चनाऽभवत्तस्यऋतुःस्यादफलःस्त्रियाः ॥ तेनदुःखंकृतंनैववस्तुज्ञानप
रायणः ॥ ७ ॥ आत्मनस्तारकश्चात्माह्यात्मनःपावकश्चसः ॥ इत्येवंमनसिधृत्वादुःखंनकृतवांस्तदा ॥ ८ ॥ सुदेहाहितदादुःखंचकारपुत्रसंभवम् ॥
नित्यंचस्वामिनंसावैप्रार्थयद्यनतांकुरु ॥ ९ ॥ सोपिस्त्रियंतदाभर्त्स्यकिंपुत्रश्चकरिष्यति ॥ कामाताकःपितापुत्रःकोवाबंधुःप्रियश्चकः ॥ १० ॥ सर्वं
स्वार्थपरंदेविजानीहित्वंनसंशयः ॥ तस्मादेवित्वयादुःखंत्यजनीयंसुनिश्चितम् ॥ ११ ॥ नित्यंमह्यंत्वयानैवकथनीयंशुभव्रते ॥ एवंतांसंनिवार्यैवभगव

द्धर्मतत्परः ॥ १२ ॥ आसीत्परमसंतुष्टोद्वंद्वदुःखंसमत्यगात् ॥ कदाचिच्चसुदेहावैगेहेचसहवासिनाम् ॥ १३ ॥ जगामप्रियगोष्ठचर्थैविवादःसंगतस्ततः ॥
तत्पत्न्यास्त्रीस्वभावाच्चभर्त्सितासातदागमत् ॥ १४ ॥ अपुत्रिणिकथंगर्वंकरोषिपुत्रिणीह्ययम् ॥ मद्धनंभोक्ष्यतेपुत्रस्तेधनंकश्चभोक्ष्यति ॥ १५ ॥
राजाहरिष्यतिनूनंधिङ्मानंतववंध्यके ॥ तदाचभर्त्सितासावैगृहमागत्यदुःखिता ॥ १६ ॥ स्वामिनंकथयामासतदुक्तंसर्वमादरात् ॥ ब्राह्मणोऽपितदा
दुःखंनचकारचबुद्धिमान् ॥ १७ ॥ कथितंकथ्यतामेवंयद्भावितद्भवेत्प्रिये ॥ इत्येवंचतदातेनह्याश्वस्ताऽपिपुनःपुनः ॥ १८ ॥ अत्यजन्नतदादुःखंह्याग्रहं
कृतवत्यसौ ॥ यथातथात्वयापुत्रःसमुत्पाद्यःप्रियोऽसिमे ॥ १९ ॥ अन्यथाचत्यजिष्यामिदेहंदेहभृतांवर ॥ एवमुक्तंतयाश्रुत्वाब्राह्मणश्चिंतयापुनः ॥
॥ २० ॥ अग्नेरग्रेतदाक्षिप्तंपुष्पद्वयमतंद्रितम् ॥ मनसिदक्षिणंपुष्पंधृतंपुत्रफलप्रदम् ॥ २१ ॥ एवंकृत्वास्वपत्नींचउवाचब्राह्मणस्तदा ॥ अनयोरेकत
रंग्राह्यंत्वयापुष्पंफलाप्तये ॥२२॥ तयाचमनसिधृत्वापुत्रश्चैवभवेन्मम ॥ तदाचस्वामिनायच्चधृतंपुष्पंसमेष्यतु ॥ २३ ॥ इत्युक्त्वाचतयातत्रनमस्कृ
त्यशिवंतदा ॥ नत्वाचाऽग्निंपुनःप्रार्थ्यगृहीतंपुष्पमेकतः ॥ २४ ॥ पुरुषेणचिंतितंयच्चतद्गृहीतंतयानहि ॥ तद्दृष्ट्वापुरुषश्चैवनिःश्वासंपर्यमोचयत् ॥
॥ २५ ॥ निर्मितंचेश्वरेणैवकथंचैवाऽन्यथाभवेत् ॥ आशांत्यजप्रियेत्वंचपरिचर्यांहरेःकुरु ॥ २६ ॥ इत्युक्त्वातुस्वयंविप्रआशांपरिविहायच ॥ धर्मका
र्यरतःसोऽभूद्भगवद्ध्यानतत्परः ॥ २७ ॥ इयंचैवाऽऽग्रहंनैवमुमोचपुत्रकाम्यया ॥ मयिपुत्रोनचाऽस्त्येवअन्यांकुरुमदाज्ञया ॥२८॥ तस्यांभविष्यतिनू
नंपुत्रश्चैवनसंशयः ॥ तयैवप्रार्थितःसोवैह्युवाचसुप्रियांतदा॥२९॥त्वदीयंचमदीयंचतदादुःखंगतंध्रुवम् ॥ तस्मात्त्वंधर्मविघ्नंचसांप्रतंमाकुरुप्रिये ॥ ३० ॥
इत्येवंवारितासाचस्वभ्रातुःपुत्रिकांतदा ॥ कन्यांचाऽऽनीयभर्तारंवृणुह्येनांनसंशयः ॥ ३१ ॥ इदानींवदसित्वंमेप्रियेयंचततःपुनः ॥ पुत्रसूश्चयदास्याद्वै
तदास्पर्द्धांकरिष्यसि ॥ ३२ ॥ इत्युक्तासावचस्तत्रप्रियाज्येष्ठतमामम ॥ घुश्मानामास्वसाविप्रह्यस्यादास्यमहंपुनः ॥ ३३ ॥ करिष्यामिनसंदेहस्त्व
याकार्यंसुनिश्चितम् ॥ इत्येवंप्रार्थितःसोऽपिचचालगृहीताप्रिया ॥ ३४ ॥ परिणाय्यततस्तांतुत्वदीयामितितांपुनः ॥ प्रार्थयामासधर्मात्माइयंपोष्यात्व
याऽनघे ॥ ३५ ॥ उक्त्वैवंसचकाराशुधर्मसंग्रहमात्मनः ॥ साचाऽपिभ्रातुःपुत्रींचदास्यवत्पर्यतिष्ठत ॥ ३६ ॥ कनिष्ठाचैवयापत्नीस्वाम्यनुज्ञामवाप्यच॥
पार्थिवान्साचकाराशुनित्यमेकोत्तरंशतम् ॥ ३७॥ विधानपूर्वकंतच्चह्युपचारसमन्वितम् ॥ कृत्वासाप्राक्षिपत्तत्रतडागेनिकटेस्थिते ॥ ३८ ॥ विसर्ज्य
पुनरेवाऽऽशुपूजांकृत्वाविधानतः ॥ एवंजातेतदाकालेलिंगंलक्षमभूत्तदा ॥ ३९ ॥ कृपयाचशिवस्यैवपुत्रस्तस्यामजायत ॥ सुंदरःसुभगश्चैवकल्याणगु
णभाजनः ॥ ४० ॥ तंदृष्ट्वापरमप्रीतोब्राह्मणोधर्मवित्तमः ॥ अनासक्तःसुखंभेजेज्ञानधर्मपरायणः ॥ ४१ ॥ सुदेहातावदस्यांतुस्पर्द्धांचैवचकारसा॥प्रथमं

शीतलंतस्याहृदयंह्यसिवत्पुनः ॥४२॥ तदनंतरंचयज्जातंश्रूयतामृषिसत्तमाः ॥ पुत्रंदृष्ट्वाकनिष्ठायाज्ज्येष्ठादुःखमुपागता ॥४३॥ सूतउवाच ॥ सर्वेपुत्रप्रसं चैवप्रशंसंतिनिरंतरम्॥ नसह्यतेतयातच्चरूपंचैवशिशोरथ॥४४॥सुदेहातनयंदृष्ट्वाहृदयंचाऽग्निसंयुतम्॥एतस्मिन्नंतरेविप्राःकन्यांदातुंसमागताः ॥४५॥ विवाहंतस्यचात्रैवचकारविधिवत्पुनः ॥ सुधर्माघुश्मयासार्धमानंदंपरमंगतः ॥ ४६ ॥ सर्वेसंबंधिनस्तस्याघुश्मायामानमादधुः ॥ तद्दृष्ट्वाचसुदेहावैमन सिज्वलितातदा ॥ ४७ ॥ गृहमागत्यसुधर्मावैवधूंपुत्रंमुनीश्वराः ॥ उत्संगेदर्शयामासप्रियाभ्यांहर्षयन्निव ॥ ४८ ॥ मनसिहर्षिताघुश्मासुदेहादुःखमाग ता ॥ गृहेचलंतींसाऽऽलोक्यवधूंपुत्रंसुदेहिका ॥ ४९ ॥ अत्यंतंदुःखमापन्नाहाहताऽस्मितदाऽपतत् ॥ घुश्माऽवदद्वधूश्चेयंत्वदीयानमदीयिका ॥ ५० ॥ पुत्रश्चैववधूश्चैवश्वश्रूंज्येष्ठाममन्यत ॥ भर्ताचैवतथाज्येष्ठांमेनेनैवकनिष्ठिकाम् ॥ ५१ ॥ तथाऽपिचतदाज्येष्ठाह्यंतर्मलवतीह्यभूत् ॥ तदाविचारयामास दुःखशांतिःकथंभवेत् ॥५२॥ मदीयोहृदयाग्निश्चघुश्मानेत्रजलेनच ॥ शांतोभविष्यतिनूनंनाऽन्यथाशांतिमाप्नुयात् ॥५३॥ एवंचमारयाम्यद्यसुप्रियंप्रि यवादिनम् ॥ अग्रेभाविभवेद्देवानिश्चयंपरमंगता ॥ ५४ ॥ कदर्याणांविचारश्चकृत्याकृत्येभवेन्नहि ॥ एकस्मिन्दिवसेज्ज्येष्ठासुप्तंपुत्रंवधूयुतम् ॥ ५५ ॥ छेदयामासचांऽगेषुगृहीत्वाछुरिकांचसा ॥ सर्वांगखंडमादायरात्रौसरसिप्राक्षिपत् ॥ ५६ ॥ यत्राक्षिप्तानिलिंगानिघुश्मयानित्यमेवच ॥ तत्राक्षिप्त्वासमा यातासुष्वापसुखतांगता ॥ ५७ ॥ प्रातश्चैवसमुत्थायघुश्मानित्यंतदाऽकरोत् ॥ सुधर्माचस्वयंश्रेष्ठोनित्यकर्मसमाचरत् ॥ ५८ ॥ स्नानादिकंतदातौ चकृत्वानित्यंप्रचक्रतुः ॥ एतस्मिन्नंतरेसाचज्ज्येष्ठाकार्यंगृहस्यच ॥ ५९ ॥ चकाराऽऽनंदयुक्ताचह्यग्निःशांतोऽभवत्तदा ॥ प्रातःकालेसमुत्थायवधूःशय्यां विलोक्यच ॥ ६० ॥ रुधिरार्द्रांदेहखंडैर्युक्तांदुःखमुपागता ॥ श्वश्रूंनिवेदयामासपुत्रस्तेचकुतोगतः ॥ ६१ ॥ शय्याचरुधिरार्द्रावैदृश्यतेदेहखंडकैः ॥ हाहताऽस्मिकृतंकेनदुष्टंकर्मशुचिव्रते ॥ ६२ ॥ ज्येष्ठादुःखंतदाऽऽपन्नाहाहताऽस्मिकिलेतिच ॥ दुःखंचकारयामासमनसिहर्षसंयुता ॥ ६३ ॥ घुश्माऽपितत्तदातस्यावध्वादुःखंनिशम्यच ॥ नचचालतदातस्मान्नित्यंपार्थिवपूजनात् ॥ ६४ ॥ मनश्चैवोत्सुकंनैवजातंतस्यामुनीश्वराः ॥ भर्त्ताऽपि चतथैवाऽऽसीद्यावद्व्रतविधिर्भवेत् ॥ ६५ ॥ मध्याह्नेचैवसंजातेदृष्ट्वाशय्यांभयावहाम् ॥ नतथापितयातत्रकृतंदुःखंमुनीश्वराः ॥ ६६ ॥ येनैवप्रा र्थितश्चाऽयंसोवैसंजायतेतदा ॥ यदिनरक्षिताचैवईश्वरःप्रभुरेवच ॥ ६७ ॥ मालाकारइवाऽसौवैजातान्युंक्तेवियुनक्तिच ॥ अत्रैवचिंतयामेऽद्यकिं स्यात्कृत्वाविचार्यंच ॥ ६८ ॥ नचकारतदादुःखंशिवेधैर्यमुपागता ॥ पार्थिवांश्चगृहीत्वावैजगामसरसस्तटे ॥ ६९ ॥ क्षिप्त्वाचपार्थिवांस्तत्रपरावर्त्तं तसातदा ॥ तदापुत्रस्तडागस्थोदृश्यतेस्मतटेतया ॥७०॥ मातरेहिमिलिष्यामिमृतश्चजीवितोह्यहम् ॥ तंदृष्ट्वाहर्षितानैवदुःखितानपुरायथा ॥ ७१ ॥

तदाशिवश्चसंतुष्टोज्योतीरूपोमहेश्वरः ॥ प्रसन्नोऽस्मिवरंब्रूहिदुष्टयामारितोह्ययम् ॥ ७२ ॥ एतांचमारयिष्यामित्रिशूलेनवरानने ॥ घुश्माचैनंवरंव
व्रेरक्षणीयास्त्वसामम ॥ ७३ ॥ अपकारःकृतस्तुभ्यमुपकारःकथंत्वया ॥ क्रियतेहननीयाचपापिष्ठादुष्टकारिणी ॥ ७४ ॥ तवदर्शनमात्रेणपातकंनैव
तिष्ठति ॥ इदानींचैवतांदृष्ट्वातत्पापंभस्मसाद्व्रजेत् ॥ ७५ ॥ अपकारिषुयश्चैवह्युपकारंकरोतिवै ॥ तस्यदर्शनमात्रेणपातकंनैवतिष्ठति ॥ ७६ ॥ इति
श्रुतंमयाचैववेदविद्भिःपुरातनैः ॥ लोकानांचैवरक्षार्थंत्वयास्थेयंसदाशिव ॥ ७७ ॥ इत्युक्तेतुतदातत्रप्रसन्नःपुनरेवच ॥ अन्यच्चव्रियतांघुश्मेददामिच
हितंतव ॥ ७८ ॥ सोवाचवचनंश्रुत्वायदिदेयोवरस्त्वया ॥ लोकानांचैवरक्षार्थंत्वयास्थेयंसदाशिव ॥ ७९ ॥ तदोवाचशिवस्तत्रतवनाम्नासुमध्यमे ॥
घुश्मेशंसुप्रसिद्धंवैनाममेजायतांशुभम् ॥ ८० ॥ इदंसरस्तुलिंगानामालयंसमजायत ॥ तस्माच्छिवालयंनामप्रसिद्धंभुवनत्रये ॥ ८१ ॥ तववंशेसुतंचै
कंपुरुषावधिसुव्रते ॥ ईदृशाःपुत्रकावंशेभविष्यंतिनसंशयः ॥ ८२ ॥ साग्निकाःसधनाश्चैवह्यायुष्मंतोविचक्षणाः ॥ विद्यावंतःसुदाराश्चस्वर्गमुक्तिफ
लाश्वते ॥ ८३ ॥ ईदृशोवंशविस्तारोभविष्यातिसुशोभनः ॥ इत्युक्त्वाचशिवस्तत्रलिंगरूपोऽभवत्तदा ॥ ८४ ॥ घुश्मेशोनामविख्यातोसरश्चैवशिवा
लयम् ॥ सुधर्माचैवघुश्माचसुदेहाचशिवस्यच ॥ ८५ ॥ शतमेकोत्तरंचैवपराक्रम्यतुवैतदा ॥ प्रदक्षिणांशिवायाश्चकारयामासतुस्तदा ॥ ८६ ॥ पूजां
कृत्वासमाश्वास्यमिलित्वाचपरस्परम् ॥ हित्वाचांऽतर्मलंतत्रसुखंचलेभिरेहिते ॥ ८७ ॥ ईदृशंचैवलिंगंचदृष्ट्वापापैःप्रमुच्यते ॥ सुखंसंवर्द्धतेनित्यंशुक्ल
पक्षेयथाशशी ॥ ८८ ॥ इतितेचसमाख्यातंलिंगानांकारणंमया ॥ ज्योतिषांयानिलिंगानिकथितानियथाश्रुतम् ॥ ८९ ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्यते
मानवःक्षणात् ॥ इतिश्रुत्वावचस्तस्यसूतस्यचमुनीश्वराः ॥ ९० ॥ ऊचुस्तस्मैपुनस्तत्रलोकानांहितकाम्यया ॥ ऋषयऊचुः ॥ अन्यान्यपिचरित्रा
णिशिवस्यपरमात्मनः ॥९१॥ कथयत्वंप्रसादेननतृप्तावयमेवाहि ॥ तस्मात्त्वंचविशेषेणध्यात्वादेवंपरंमुदा ॥ ९२ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायां
ज्योतिर्लिंगवर्णनंनामाष्टपंचाशत्तमोऽध्यायः ॥५८॥ सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठाश्चरितंपरमात्मनः ॥ आकाशस्यचताराणांभूमेश्चरेणूनांतथा ॥ १ ॥
वृष्टेरासारकाणांचसुकल्पैश्चकदाचन ॥ संख्याविशक्यतेकर्तुंनगुणानांशिवस्यच ॥ २ ॥ तथाऽपिचयथाबुद्धिकथयामियथाश्रुतम् ॥ नृसिंहश्चयदा
क्रुद्धःक्रोधाच्चविरतोनहि ॥ ३ ॥ तदाशिवेनदेवानांहितार्थंरूपमद्भुतम् ॥ शारभंचधृतंतत्रतंदृष्ट्वालीनतांगतः ॥ ४ ॥ शिवाद्भयंचसंप्राप्यसर्वेत्रस्यंति
वैतदा ॥ ऋषयऊचुः ॥ चरितंचनृसिंहस्यवक्तुमर्हसिसुव्रत ॥ ५ ॥ सूतउवाच ॥ लक्ष्म्याद्रष्टुंसमुत्पन्नायुद्धमिच्छामुनीश्वराः ॥ कोमलेनशरीरेणकथं
युद्धंचिकीर्षसि ॥ ६ ॥ इत्युक्तेप्रभुणाऽप्युक्तंदर्शयिष्यामिसुव्रते ॥ एकस्मिन्दिवसेविष्णुर्विचारेतत्परोऽभवत् ॥ ७ ॥ केनयुद्धंप्रकर्तव्यंमयाचैवंविचा

यंच ॥ जयश्वविजयश्चैवकुमारैःशापितौतदा ॥ ८॥ तेषांकोलाहलेजातेभगवान्वाक्यमब्रवीत् ॥ आगत्यद्वारपालौचकुमाराञ्छ्रूयतांपुनः ॥ ९ ॥
अयुक्तंचकृतंसर्वैर्जातंनैवाऽन्यथाभवेत् ॥ कुमारान्पुनरेवाहअनुग्राह्याविमौशुभौ ॥ १० ॥ कुमाराऊचुः ॥ भक्तिभावंसमासाद्यसप्तभिर्जन्मभिरिह ॥
वैरभावेतथात्रिभिरिदंस्थानमवाप्स्यथ ॥ ११ ॥ इत्युक्तेचतदातैस्तुविचार्यशीघ्रतावरा ॥ यथेच्छाचहरेरासीद्वृत्तंताभ्यांतथापुनः ॥ १२ ॥ त्रिभिरे
वावतारैश्चवैरभावेऽपितद्वरम् ॥ इत्युक्त्वापतितौतत्रकश्यपस्यगृहेतदा ॥१३॥ अवतीर्णौचदैत्यौवैप्रसिद्धौतौमहाबलौ ॥ हिरण्यकशिपुश्चैवहिरण्याक्षो
महाबलः ॥ १४ ॥ स्वयंचैवनृसिंहोऽपिकुमाराभक्तिसंयुताः ॥ प्रह्लादाद्यास्तदाजातापुनरन्यभवेयदा ॥ १५ ॥ रावणःकुंभकर्णश्चतावेवचबभूवतुः ॥
रामश्चैवनृसिंहोपिकुमारश्चतदाऽभवत् ॥ १६ ॥ विभीषणःपरेयेचतएवपुरतोऽभवन् ॥ अन्येचबहवोदेवाःसंबभूवुर्मुनीश्वराः ॥ १७ ॥ शिशुपालदंतव
क्रौभगवद्द्वेषतत्परौ ॥ दमघोषगृहेतत्रअवतीर्णौमहाबलौ ॥ १८ ॥ नृसिंहोऽपितदाकृष्णोह्यक्रूराद्याःकुमारकाः ॥ चरित्रंतुनृसिंहस्यश्रूयतांपापहारकम्
॥ १९ ॥ हिरण्याक्षश्चबालेवैक्रीडार्थंसूर्यमानयत् ॥ सिंहंचदंतिनंचैवआरुह्याऽऽखेलयत्तदा ॥ २० ॥ देवानांदुःखदानार्थंपृथिवीमाहरत्तदा ॥ मुखे
धृत्वाचतांसोवैश्वासुखेपिष्टपिंडिकाम्॥२१॥यथागतोजलेतस्मिन्ब्रह्माादुःखमुपागतः॥ध्यानंचक्रेतदाविष्णोःस्तुतिंकुर्वन्मुहुर्मुहुः ॥ २२ ॥ समुत्पन्नस्तदा
विष्णुर्नासारंध्राच्चब्रह्मणः॥वाराहंरूपमास्थायक्रमेणवृद्धितांगतः॥२३॥ततःस्तुतश्चतेनैवगतश्चैत्र जलेतदा॥नारदंचतदाऽपश्यत्संध्ययासंयुतंहरिः॥ २४॥
नारदोऽपितदास्तुत्वाह्याज्ञादेयाममाऽधुना ॥ वराहउवाच ॥ यावच्चयुद्धचतेतेनतावज्जलविशोषणम् ॥ २५ ॥ कर्त्तव्यंचत्वयाचाऽत्रइत्येवंकथ्यतेमया ॥
ततश्चांजलिनातेनजलंनीत्वामुखेतदा ॥ २६ ॥ पीतंचऋषिणातावद्यावद्युद्धंसमाप्यते ॥ ततश्चविष्णुनातत्रपंचवर्षशतंजले ॥ २७ ॥ स्थलेपंच
शतंचैवकृतंयुद्धंमहात्मना ॥ तंहत्वाचततश्चैवमुखेधृत्वाचगांतदा ॥ २८ ॥ निःससारवराहश्चब्रह्मणेप्रददौचगाम् ॥ लयंयातोहरिस्तत्रकृत्वाकार्यंसुदु
ष्करम् ॥ २९ ॥ इतिदुःखविनाशायहिरण्यकशिपुस्तदा ॥ वर्षाणामयुतंतेपेब्रह्मणेवरकाम्यया ॥ ३० ॥ वृक्षाश्चैवसमुत्पन्नाःपक्षिभिर्नीडकाःकृताः ॥
शरीरेचतदातस्यविरराम परंनहि ॥ ३१ ॥ ततोब्रह्माचदेवानांह्यनुज्ञांसमवाप्यच ॥ वरंदातुंसमायातोयत्राऽऽस्तेदितिजोऽसुरः ॥ ३२ ॥ प्रसन्नोऽस्मिवरं
ब्रूहिविचार्यासुरराट्तदा ॥ त्वयाचनिर्मितायांवैसृष्टौकश्चिन्नमारयेत् ॥ ३३ ॥ एतदस्तुवरंदत्त्वाजगामभवनंस्वकम् ॥ शोणिताख्येपुरेगत्वादैत्यानाहू
यसर्वतः ॥ ३४ ॥ आज्ञांप्रवर्तयामासपृथिव्यांसर्वतोदिशम् ॥ नकृतामारितास्तेचकृतासुरक्षिताहिते ॥ ३५ ॥ स्वर्गोपिचजितश्चैवपातालंवितलंतथा॥
त्रैलोक्यंस्ववशेकृत्वाराज्यंचैवाऽप्यकंटकम् ॥ ३६ ॥ चकारहरिविद्वेषीधर्मलोपपरायणः ॥ प्रह्लादोऽपिसमुत्पन्नस्तत्कुलेहरिसेवकः ॥ ३७ ॥ रोदनेपि

तदातेननत्यक्तंहरिसेवनम् ॥ पंचवर्षैतदाजातेपाठनार्थंनियोजितः ॥ ३८ ॥ वाद्यमानेषुतूर्येषुपाठकस्यगृहंगतः ॥ पाठकेनतदाविद्याह्यासुरीपरिपाठिता
॥ ३९॥ प्रह्लादेनतथाचैवनमोनारायणेतिच ॥ वारितःपाठकेनापिपपाठचपुनःपुनः ॥ ४० ॥ इदानींगम्यतांतावत्पुनर्नैवकरिष्यति ॥ यदातदा
तुप्रह्लादोहरिरेवनचाऽन्यथा ॥ ४१ ॥ पित्रोत्संगेचसंस्थाप्यकिमधीतंशिशोत्वया ॥ इतिपृष्टःपुनःसोऽपिनमोनारायणेतिच ॥ ४२ ॥ हाहतोऽस्मितदा
श्रुत्वाकिमधीतंदुरात्मना ॥ गुरुमाहूयतत्रैवरेदुष्टाशिक्षितःकथम् ॥ ४३ ॥ गुरुराहपुनस्तंचसर्वैनष्टादुरात्मनाम् ॥ ततःपुत्रंप्रगृह्यैवकयाधुंदैत्यस
त्तमः ॥ ४४ ॥ कथयामासतांदुष्टःपुत्राधीतंशृणुष्वतत् ॥ तदधीतंपुनस्तेनश्रुत्वामाताऽब्रवीदिदम् ॥ ४५॥ सर्वांचपृथिवींत्यक्त्वाकथंदुःखमवाप्यते ॥
त्यजदुष्टहरेर्नामह्यासुरींसमुपाश्रय ॥ ४६ ॥ पुत्रस्तुमातरंह्यूचेश्रूयतांत्यज्यतेनाहि ॥ मशकस्यभयात्किंवैद्वारंराज्ञोमहागजः ॥ ४७ ॥
वराकस्यभयेनैवत्यजिष्यामिहरिंपुनः ॥ जिह्वाचैवाद्यकर्णौचमस्तकंकरपादकम् ॥४८॥ सार्थकानींद्रियाणीहभजनाच्चहरेरपि ॥ यद्द्रव्यंतद्भवेदेवनत्या
ज्यंहरिकीर्तनम् ॥ ४९ ॥ इत्येतद्वचनंश्रुत्वामातादुःखमुपागता ॥ स्वामिनेकथयामासह्यसाध्योबालकोमया ॥ ५० ॥ राजाचमंत्रिणःसर्वान्समाहूयाऽब्र
वीदिदम् ॥ कुलांगारःसमुत्पन्नःपुत्ररूपेणमंत्रिणः ॥ ५१ ॥ तस्मादयंचहंतव्यःसर्वथाकुलदूषणम् ॥ अग्नौदाह्यश्चशस्त्रैश्चच्छेदनीयोह्ययंपुनः ॥ ५२ ॥
विषैश्चकलनीयोवैमज्जनीयोजलेपुनः ॥ अनेकैश्चप्रकारैश्चमारणीयःप्रयत्नतः ॥ ५३ ॥ हरिंत्यजतिप्राणान्वाइतिमेनिश्चयोमतः॥ इत्याज्ञांचसमासाद्यप्रधा
नाबालकंतदा ॥ ५४ ॥ शीघ्रंचदमयामासुर्यथाऽऽज्ञप्तंतथाहिते ॥ अग्निश्चशीततांयातोजलंचस्थलतांगतम् ॥ ५५ ॥ स्थलंचजलतांयातंविषंचा
मृततांगतम् ॥ शस्त्राणिपुष्पभावंचहरेर्नाम्नश्चकीर्तनात् ॥ ५६ ॥ पृथिव्यादीन्हरेश्चैवह्युपकारैःप्रबोधयन् ॥ नप्राप्तवांस्तदादुःखमानंदंपरमंगतः॥ ५७ ॥
तदातेचप्रधानावैविस्मयंपरमंगताः ॥ पीड्यतेनैवाकिंकार्यंगम्यतांचपुनःपुनः ॥ ५८ ॥ राज्ञोऽग्रेचकथंचैवगमिष्यामःपरस्परम् ॥ तथाविधांश्चतान्दृष्ट्वाप्र
ह्लादोवाक्यमब्रवीत् ॥ ५९ ॥ कथंवैविस्मयाविष्टायूयंचैवभविष्यथ ॥ ममपार्श्वेचतद्वस्तुयतोवैपीडनंनहि ॥६०॥ जलंचशयनंतस्यहरेश्चपरमात्मनः ॥
अग्निश्चैवमुखंतस्यविषंचमातुलोमम ॥ ६१ ॥ पृथिवीतुगुणांस्तस्यविस्मारयतिंकिंपुनः ॥ विनामत्पितुराज्ञांवैनाकिंचित्कर्तुमीहते ॥ ६२ ॥ सर्वंचै
वपराधीनंस्वतंत्रोनैवकश्चन ॥ इत्येवंवचनंश्रुत्वाप्रधानाविफलक्रियाः ॥ ६३ ॥ तत्राऽऽगत्यचतत्सर्वंराज्ञेग्रेविनिवेदितम् ॥ एतादृशंकदापीहश्रुतंदृष्टंनमे
प्रभो ॥ ६४ ॥ असाध्यंयातनायाश्चयत्नंचसामभिःकुरु ॥ तदीयंतद्वचःश्रुत्वाराजादुःखमुपागतः ॥ ६५ ॥ संमोहायतदापुत्रंलोभयन्वाहनादिभिः ॥
तथाचैवंहरेर्नामनमुक्तंतेनवैतदा ॥ ६६ ॥ सूतउवाच ॥ येषांचचेतसिह्येतत्सुखंस्वप्नसमंमतम् ॥ भजनंसेवनंध्यानंपूजनंस्मरणंप्रभोः ॥ ६७ ॥ अनंतसु

खदंतेवैमन्यंतेकृतनिश्चयाः ॥ नचलंतिचतेधर्मात्प्राणांतोयदिजायते ॥ ६८ ॥ किंपुनश्चैवप्रह्लादश्चलतीतिसुनिश्चितम् ॥ राजापुत्रंतदाश्रेष्ठःपुनश्चगुरवे
ह्यदात् ॥ ६९ ॥ गुरुस्तस्यवचःश्रुत्वागृहीत्वाबालकंपुनः ॥ पाठयामासभोविप्रास्तद्विद्यांबालकैःसह ॥ ७० ॥ एतेबालाःकथंबालपठंतिहृश्यतां
त्वया ॥ त्वमेवपठविद्यांचराजादास्यतितेसुखम् ॥ ७१ ॥ पुत्रस्यचपरोधर्मःपित्राज्ञापरिपालनम् ॥ पितुर्धुरंपुनस्त्वंचवहिष्यसिनसंशयः ॥ ७२ ॥
इत्येतद्वचनंश्रुत्वानमोनारायणेतिच ॥ पाठयामासतान्सर्वान्पालयामासवैतदा ॥ ७३ ॥ परोक्षेचगुरोस्तेषांज्ञानंचैवाऽप्यदर्शयत् ॥ नमातानपिताबंधु
र्नभ्रातानचसौहृदः ॥ ७४ ॥ नमित्रंनकलत्रंचह्येतत्सुखफलप्रदम् ॥ स्वप्नतुल्यंसुखंह्येतद्भजनीयोहरिःस्वयम् ॥ ७५ ॥ प्रह्लादस्यवचःश्रुत्वातेऽपिना
रायणेतिच ॥ ऊचुःपरस्परंसर्वेह्यानंदंपरमंगताः ॥ ७६ ॥ तच्छ्रुत्वाचगुरुर्दुःखंप्राप्तवांस्तमभर्त्सयत् ॥ ताडयामासक्रुद्धोवैजीवनंदूरतःकथम् ॥ ७७ ॥
तेऽपितत्ताडनादेवचलिताःसर्वबालकाः॥प्रह्लादोनैवचलितोधैर्यंपरममास्थितः ॥ ७८ ॥ गुरुश्चैवपुनःप्राहगण्यतेनपितात्वया ॥ ताडयिष्यामएवंचे
त्त्यज्यतांचहरिस्त्वया ॥ ७९ ॥ इत्येवंवचनंश्रुत्वाप्रह्लादोवाक्यमब्रवीत् ॥ त्वयोक्तंचैवतत्तथ्यंपितानलंघ्यतेमया ॥ ८० ॥ तावदेवपिताचाऽयंयावन्नप्रा
प्यतेपिता ॥ जगतांभाग्यसंयोगात्सर्वदुःखहरःपरः ॥ ८१ ॥ दीपस्यशिखयातावन्मोदतेऋषिसत्तम ॥ यावत्सूर्योनदृश्येतपुनर्दीपःकथंपिता ॥ ८२ ॥
सुखकरश्चलोकानांजायतेनकदाचन ॥ इदंचमामकंचैवपितुर्वृत्तंचपुत्रकः ॥ ८३ ॥ करोतिसर्वथाचेद्वैह्यगस्त्योजलहारकः ॥ येनैवतुचरित्रेणप्राप्यतेशा
श्वतंपदम् ॥ ८४ ॥ तदेवचप्रकर्तव्यंनाऽन्यथाकर्हिचित्पुमान् ॥ एवंचताड्यतेचेद्वैताड्यतांननिषिध्यते ॥८५॥ मत्पितायोभवेन्नित्यंसवैरक्षांकरिष्यति ॥
प्राणाश्चयदिमेविप्रगमिष्यंतितथापुनः ॥ ८६ ॥ गच्छन्तुचसुखेनैवनत्याज्यंहरिकीर्तनम् ॥ इत्येवंवचनंश्रुत्वागुरुःपीडांतथाऽकरोत् ॥ ८७ ॥ रोमाऽ
पिवक्रंनैवाऽऽसीत्प्रतापाच्चहरेःपुनः ॥ सामान्यस्यमनुष्यस्यमानश्चैवभवेदिह॥८८॥किंपुनर्नृहरेरेवजायतेऋषिसत्तमाः ॥ प्रयत्नंनिष्फलंज्ञात्वागृहीत्वाबा
लकंगुरुः ॥८९॥ आजगामगुरुर्दैत्यगृह्यतांपुत्रकस्त्वया ॥ अस्माकंबालकायेचतेसर्वेसदृशीकृताः ॥ ९० ॥ प्रयोजनंनपुत्रेणयथेच्छासितथाकुरु ॥ इत्यु
क्त्वाचगतःसोऽथराजादुःखमुपागतः ॥ तदनंतरंचयज्जातंश्रूयतामृषिसत्तमाः॥९१॥इतिश्रीशिवमहापुराणेज्ञानसंहितायांनृसिंहोपाख्यानेवाक्यनिरूपणं
नामैकोनषष्टितमोऽध्यायः ॥५९॥ सूतउवाच ॥ समाहूयतदासौवैमंत्रिपुत्रानथाऽब्रवीत् ॥ धन्याःस्थकृतकृत्याःस्थनत्यक्तंपितृशासनम् ॥ १ ॥ मत्पु
त्रंचतथायूयंशिक्षयंतुममाज्ञया ॥तथेतिवचनंगृह्यनीत्वातंरहसिस्वयम्॥२॥ऊचुस्तेश्रूयतांमित्रक्रियतांवचनंचनः॥ ईदृशंपितरंत्वंचरोषयित्वाकुतःसुखम्
॥३॥तस्मात्त्वंचतदीयंचवचनंकुरुसर्वथा ॥ अस्माकंचमतंह्येतद्यथेच्छसितथाकुरु ॥ ४ ॥ बहुधाशिक्षितःसोऽपिनमेनेवचनंपितुः॥ प्रत्युवाचतदातांस्तु

श्रूयतांमित्रसत्तमाः॥५॥ कःपिताकश्चबंधुर्वैकामाताभगिनीपुनः ॥ मित्रंकिंचकलत्रंवासर्वस्वार्थपरंत्विह॥६॥यथासायंचवृक्षेषुपक्षिणोविविधाःस्थिताः ॥
प्रातःकालेचतेयत्रस्वीयंकार्यंभवेदिह ॥७॥ तत्रैवचगमिष्यंतिउड्डीयंतिततस्ततः ॥ तद्वद्गृहेषुपित्रादिबध्यतेसंगयोगतः॥८॥कर्मयोगंस्वकंभुक्त्वागच्छं
तिदैवयंत्रिताः ॥ इदंसुखंचसंसारेदृश्यतेगृहसंभवम् ॥ ९ ॥ सर्वंस्वप्नमयंतच्चनाऽत्रकार्योविचारणा ॥ दिवामनोरथोयादृक्क्रियतेसुकृतेनच ॥ १० ॥
तथारात्रौप्रदृश्येततथेदंसुखमुत्तमम् ॥ एवंमत्वातथायूयंभजंतुवैहरिंसदा ॥ ११ ॥ अन्यथायमपाशेचपतिष्यथनसंशयः ॥ कतिधाचपितापुत्रंपितृत्वं
परिकल्पते ॥ १२ ॥ पुनश्चकतिधातंवैपुत्रत्वेपरिकल्पते ॥ जीवस्तुकर्मबद्धोवैभ्रमतेयोनिसंकटे ॥ १३ ॥ केवलंपातकंचेत्स्यात्तदासनरकंव्रजेत् ॥
केवलंचैवपुण्यंचस्वर्गंचलभतेतदा ॥ १४ ॥ उभयोःसमतायांवैमनुष्यत्वंभवेदिह ॥ उभयोश्चक्षयेमुक्तिर्भवतीतिसुनिश्चितम् ॥ १५ ॥ यावच्चकर्मसंबं
धस्तावन्मुक्तिःसुदुर्लभा ॥ तस्माच्चकर्मनाशार्थंभजनीयोहरिःसदा ॥ १६ ॥ हरेश्चभजनेनैवकर्मदूरीभवत्युत ॥ भोगेनैवतथाबालाःप्रायश्चित्तैःपुनस्त
था ॥ १७ ॥ देहीपवित्रतांयातिह्यन्यथाभ्रमणंभवेत् ॥ यावच्चमलिनंवस्त्रंतावद्रागोनशस्यते ॥ १८ ॥ क्षालितेचपुनर्वस्त्रेरागःसज्जतिवैदृढम् ॥ तथेदंच
शरीरंवैपापैर्मलिनतांगतम् ॥ १९ ॥ निर्मलंभजनेनैवजायतेनाऽत्रसंशयः ॥ यूयंचबालिशाःसर्वेतदाज्ञापालकादृढम् ॥ २० ॥ भवंतश्चप्रकुर्वंतुतदाज्ञां
सर्वथापुनः ॥ मयैवतुनकर्तव्यंवचनंराजसंभवम् ॥ २१ ॥ यदहंचकरोम्यत्रकरोमिगम्यतामितः ॥ इत्युक्तास्तेबलाच्चैवबोधितास्तंसमागमन् ॥ २२ ॥
समागत्यतदातेचराजानंचतथाऽब्रुवन् ॥ राजाऽपिवचनंतेषांश्रुत्वातंचसमाह्वयत् ॥२३॥ तमागतेस्वयंसोवैबोधयामाससत्तमाः ॥ शृणुपुत्रप्रवक्ष्यामिमूढ
भावंत्यजाऽधुना ॥ २४ ॥ यदर्थंचहरिंलोकाभजंत्येवनिरंतरम् ॥ तत्सर्वंचत्वयाप्राप्तंमत्तोऽहंहरिरेवच ॥ २५ ॥ देवाश्चदानवाःसर्वेगंधर्वानागसत्तमाः ॥
ऋषयश्चाऽपरेयेचवश्याःसंतिममाऽधुना ॥ २६ ॥ मत्तश्चैवहरिंकाऽत्रभजसित्वंवदाऽधुना ॥ निग्रहानुग्रहंकर्तुंसामर्थ्यंविद्यतेमम ॥ २७ ॥ तस्मान्मांच
विहायैवहरिःकोऽत्रभविष्यति ॥ कथंनभजसेमांचबालभावाद्वदाऽधुना ॥ २८ ॥ इत्येवंवचनंश्रुत्वाप्रह्लादोवाक्यमब्रवीत् ॥ शृणुदैत्यकथंब्रूषेअहंवि
ष्णुर्नचापरः ॥ २९ ॥ अंतरंबहुधाप्रोक्तंतवैवचहरेरथ ॥ मणौचैवयथाकाचेकोकिलेमंडुकेयथा ॥ ३० ॥ कर्दमेचंदनेचैवसात्विकेतामसेतथा ॥ सूर्ये
चैवाऽत्रखद्योतेवेदेचप्राकृतेतथा ॥ ३१ ॥ लोहेचैवसुवर्णेचगविचशूकरेतथा ॥ युवयोरंतरंतावन्नाऽत्रकार्याविचारणा ॥ ३२ ॥ अहंकृतिपरस्त्वंचमल
मूत्रविदूषितः ॥ कामीमानीचक्षुद्रश्चनाशवान्परदूषकः ॥ ३३ ॥ त्वयितुष्टेऽमृतंनास्तितस्मिंस्तुष्टेऽमृतंपरम् ॥ कस्मान्नलज्जसेत्वंचहरिंवक्तुंतुसांप्रतम्
॥ ३४ ॥ इत्येवंनिश्चयंत्वंचजानीहिदैत्यसत्तम ॥ गजस्यारोहणंहित्वाशृगालंकःसमारुहेत् ॥ ३५ ॥ सर्वदाभजनीयोवैहरिर्हरिर्हरिर्हरिःसदा ॥ कर्त्तुमिच्छ

११

सियत्त्वंचकुरुत्वंचनिरंतरम् ॥ ३६ ॥ इत्येवंभर्त्सितःसोवैपुनश्चैवाऽब्रवीदिदम् ॥ यंपुत्रभजसिसोवैविद्यतेकुत्रतद्वद ॥ ३७ ॥ इत्येवंवचनंश्रुत्वाप्रह्लादो
वचनंतदा॥आददेश्रूयतांश्रेष्ठाःश्रुत्वापापंभवेन्नहि॥३८॥इतिश्रीशिवमहापुराणेज्ञानसंहितायांप्रह्लादोपाख्यानंनामषष्टितमोऽध्यायः ॥६०॥ सूतउवाच ॥
श्रूयतामृषयःश्रेष्ठास्तेनोक्तंयद्वचोब्रुवे॥प्रह्लादउवाच ॥यत्पृष्टंचत्वयादैत्यश्रूयतांकथयामिते॥१ ॥पृथिव्यांचैवयत्किंचित्स्थूलंसूक्ष्मंचदृश्यते ॥ समुद्रेपर्व
तेवाऽपिवृक्षेदेवेसरित्सुच॥ २ ॥चेतनाचेतनेचैवग्रामेचनगरेतथा ॥ सूर्येचैवाऽप्यरण्येचचैत्रेचपितृकानने॥३॥ त्वयिचाऽस्तिसदायोवैमय्येवचनसंशयः॥
पश्चात्पूर्वंचमध्येचह्यंतेचैवभविष्यति ॥ ४ ॥ तद्रूपंवर्णितुंनैवशक्यतेदैत्यसत्तम॥इत्येवंवचनंश्रुत्वादैत्यश्चैवाऽब्रवीदिदम्॥५॥ शृणुपुत्रप्रवक्ष्ययामियदुक्तं
हित्वयापुनः ॥ प्रह्लादउवाच ॥ नस्थलंचैवविद्येतयत्रनैवहरिःस्वयम् ॥ ६ ॥ इतिश्रुत्वावचस्तस्यउवाचदैत्यसत्तमः ॥ यदिहरिश्चसर्वत्रस्तंभेऽस्मिन्वं
र्ततेवद ॥ ७ ॥ इत्युक्तःसोऽवदत्तंचवर्त्ततेहिसुनिश्चितम् ॥ इत्युक्तस्तुपुनस्तंवैह्यब्रवीत्पश्यपूजनम् ॥ ८ ॥ इत्युक्त्वातुचकाराऽसौश्रूयतामृषिसत्तमाः॥
नेत्रेचाऽऽरक्तकेकृत्वादंतान्दंतैश्चघर्षयन् ॥ ९ ॥ उच्चचालाऽऽसनात्तस्मात्खड्गमादायवैतदा ॥ बिभेदतंतथास्तंभंपश्यपूजांकरोम्यहम् ॥ १० ॥
तस्मिन्स्तंभेयदाखड्गोलग्नःशब्दोमहानभूत् ॥ पर्वताशनिसंयोगेयथाजातःपुरातथा ॥ ११॥ तस्मात्स्तंभात्स्वयंदेवोविष्णुराविरभूत्तदा ॥ संध्यायांक्रु
ध्यमानस्तुत्रासयन्दैत्यसत्तमान् ॥ १२ ॥ अर्द्धंचैवशरीरंचनरस्यार्धंहरेरपि ॥ नृसिंहंचतदारूपंधृत्वाध्वनिंचकारह ॥ १३ ॥ महाकालेयथामेघोगर्जति
ऋषिसत्तमाः ॥ तथाहडहडाशब्दंगड्गडेतिपुनःपुनः ॥ १४ ॥ केसराःशोभमानाश्चताभिर्मेघानखंडयत् ॥ नादेनचदिशःसर्वाःप्रतिशब्दंचचक्रिरे ॥
॥ १५ ॥ मुखस्यज्वालयासर्वाञ्ज्वालयन्दैत्यपुंगवान् ॥ हुंकारेणतथागर्भान्पातयन्सर्वथातथा ॥ १६ ॥ महद्भिश्चनखैश्चैवकरालंनृहरेर्वपुः ॥ तद्दृष्ट्वाभय
मापन्नादैत्याःसर्वेपुरःस्थिताः ॥ १७ ॥ युद्धायचक्रतोद्योगायुद्धंचक्रुःसुदारुणम् ॥ विष्णुनाचतदातेचहताःश्वासेनतत्क्षणम् ॥ १८ ॥ हिरण्यकशिपुश्चैव
युद्धंचक्रेसुदारुणम् ॥ पृथिवीसंशयंप्राप्तासमुद्राश्चचलास्तदा ॥ १९ ॥ द्यौश्चचालसनक्षत्रापर्वताश्चलतांगताः ॥ एवंयुद्धंतयोरासीन्मुहूर्तमृषिसत्तमाः ॥
॥ २० ॥ पश्चात्सोऽपिस्वयंज्ञात्वालोकानांदुःखमद्भुतम् ॥ सायंचकर्षयामासदेहल्यांदैत्यपुंगवम् ॥ २१ ॥ उत्संगेचतदाधृत्वानखैश्चहृदयंतदा ॥
विदार्यरुधिरंतस्यपपौचगर्जयंस्तदा ॥ २२ ॥ अंत्राणिचाऽपितस्यैवकंठेचैवव्यधारयत् ॥ मारितश्चतदातेनपश्यतांहिदिवौकसाम् ॥२३॥ जयजयेतिभा
षंतोपुष्पवृष्टिंपुरस्तदा ॥ चक्रुस्तेपरमप्रीतानृत्यंगीतंचचक्रिरे ॥ २४ ॥ कियंतोमारितादैत्याःकियंतश्चपलायिताः ॥ निर्दैत्यापृथिवीजातादुःखंचदूर
तोगतम् ॥ २५ ॥ जगत्स्वास्थ्यंतदालेभेह्यानंदंपरमंगताः ॥ लक्ष्मीश्चापितदातंचदृष्ट्वापिस्मयमागता ॥ २६ ॥अहोहिकीदृशंरूपंप्रभुणासंप्रदर्शितम्॥

देवदुंदुभयोनेदुःसर्वैनिश्चलतांगतम् ॥ २७ ॥ कयाधूश्चापिपुत्रंचशांतयंतीवदुःखिता ॥ प्रह्लादोविस्मयंप्राप्तोह्यहोधन्यःस्वयंहरिः ॥ २८॥ यद्यपिचह
तःसोऽपिज्वालानविनिवर्तिता ॥ तथाचव्याकुलंजातंसर्वंचैवजगत्तदा ॥ २९ ॥ देवाश्चदुःखमापन्नाःकिंभविष्यतिहापुनः ॥ इत्येवंचवदंतस्तेभयाद्दूर
मुपस्थिताः ॥ ३० ॥ परस्परंवदंतस्तेगंतव्यंहित्वयापुरा ॥ इंद्रंचैवब्रुवंतस्तेगंतव्यंचत्वयापुरः ॥ ३१ ॥ मयाचैवकथंप्राप्यंदर्शनंचपुनःशुभम् ॥ ब्रह्मा
वदतिश्मश्रूणिदहंतिनमयापुरः ॥ ३२ ॥ लक्ष्मीर्वदतिरूपंनमयादृष्टंकथंतुवै ॥ ऋषयश्चगतानैवदेवाश्चनगतास्तदा ॥ ३३ ॥ क्रोधशांतिःकथंतस्यजा
यतेऋषिसत्तमाः ॥ सर्वैर्मिलित्वाप्रह्लादःप्रार्थितोगतवान्पुरः ॥ ३४ ॥ तंदृष्ट्वानृहरिस्तस्यगात्रंचजिह्वयालिहन् ॥ दुःखितंदुःखितंवत्संजनेषुचख्यापयं
स्तदा ॥ ३५ ॥ उरसालिंगयामासशीतलंहृदयंतदा ॥ श्रीनृसिंहउवाच ॥ दुष्टेनज्वलितंमेऽद्यहृदयंशीतलंमम ॥ ३६ ॥ जातंतेपुत्रसंयोगात्पुत्रस्यां
गंसुशीतलम् ॥ पितुश्चैवाऽथपुत्रस्यसंयोगःसुखकारणम् ॥ तच्चतेपुत्रसंयोगाद्भविष्यतिचसद्गतिः ॥ ३७ ॥ इत्युक्त्वाचपुनस्तंचपुत्रपुत्रेतिलालयन् ॥
राज्यंपुत्रकुरुत्वंचपुत्रपौत्रविवर्धनम् ॥ ३८ ॥ भविष्यतिचतेवंशोह्यवध्योमेसदाकिल ॥ इतिवरंतदादत्त्वाफूत्कारान्मोचयत्तदा ॥ ३९ ॥ एतस्मिन्नंतरे
देवागणेशंप्रार्थयन्पुनः ॥ त्वंचबुद्धिमतांश्रेष्ठोगच्छदेवंशमंनय ॥ ४० ॥ इत्युक्तःसुमुखश्चाऽऽखुंसमारुह्यप्रचक्रमे ॥ गजाननःस्वयंश्रेष्ठआखुश्चवाहनंपुनः॥
॥ ४१ ॥ लंबंचैवोदरंतस्यरूपंहास्यकरंतदा ॥ दृष्ट्वादेवास्तदातेचवर्णयंतोऽतिविस्मिताः ॥ ४२ ॥ वाहनोत्फालनेसोऽपिपतितोवाहनात्तदा ॥ हास्यं
प्राप्तास्तदादेवानृहरिश्चविशेषतः ॥ ४३ ॥ हसितंचतदादृष्ट्वादेवाःसुखमुपागताः ॥ गतश्चैवहरेःक्रोधोहसितेचहरौसुराः ॥ ४४ ॥ तथापिननिवर्तेतज्वा
लाचनृहरेःपुनः ॥ दुःखंप्राप्तास्तदादेवाःशंभोश्चशरणंययुः ॥ ४५ ॥ गत्वाचस्तवयामासुर्लोकानांसुखहेतवे ॥ नमस्तेस्तुनमस्तेस्तुनमस्तेस्तुसदा
शिव ॥ ४६ ॥ पूर्वंदुःखंयदाजातंतदाचरक्षितावयम् ॥ समुद्रोमथितश्चैवरत्नानांतुविभागशः ॥ ४७ ॥ स्तुतोदेवैस्तदाशंभोगृहीत्वागरलंत्वया ॥ रक्षि
ताःस्मतदानाथनीलकंठइतिस्मृतः ॥ ४८ ॥ प्रसिद्धंचयदायस्यदुःखंचजायतेप्रभो ॥ तदातुभ्यंचनत्वाहिसर्वंदुःखंव्यलीयत ॥ ४९ ॥ इदानींनृहरेर्ज्वा
लापीडतेनःसदाशिव ॥ शमयितुंचत्वंदेवशक्तोसीतिसुनिश्चितम् ॥ ५० ॥ इतिस्तुतस्तदाशंभुर्गच्छंतुदेवसत्तमाः ॥ शमयिष्यामिवोदुःखंसर्वथाहिव्रतं
मम ॥ ५१ ॥ मच्छरणंयोगतश्चैवतस्यदुःखंक्षयंगतम् ॥ इत्युक्तास्तेतदादेवाआनंदंपरमंगताः ॥ ५२ ॥ यथागतंतदाजग्मुःश्रूयतामृषिसत्तमाः ॥ शिवोऽ
पिचविचार्यैवशारभंरूपमद्भुतम् ॥ ५३ ॥ धृत्वाजगामतत्रैवस्थितोऽसौनृहरिःस्वयम् ॥ दूरतश्चतदीयंवैदृष्ट्वारूपंभयंकरम् ॥ ५४ ॥ उवाचवचनंतेऽद्य
रक्षितादेवसत्तमाः ॥ जयजयेतिशंभुर्वैनमस्कृत्यव्यलीयत॥५५॥वाद्यानिचविचित्राणिनृत्यानिविविधानिच॥पुष्पवर्षमनेकंचजातंतत्रमहात्मानि॥ ५६॥

इत्युक्ताश्चतदादेवाआनंदंपरमंगताः ॥ शिवंविष्णुंचप्रन्हादंनृहरेरूपमद्भुतम् ॥ ५७ ॥ वर्णयित्वाह्युपास्यंचगताधामस्वकंस्वकम् ॥ शिवोऽपि
चतदादेवान्नृहरिंचयदापुनः ॥ ५८ ॥ दास्यतिसकलान्कामानुक्त्वैवांऽतरधीयत ॥ तौदैत्यौचपुनःश्रेष्ठौजातौचराक्षसोत्तमौ ॥५९॥ रावणःकुंभकर्ण
श्चरामेणनिहितौपुनः ॥ तावेवदमघोषस्यकृष्णेनमारितौपुनः ॥ ६०॥वैकुंठंचपुनःप्राप्तौशासनात्परमात्मनः॥इतिवश्चसमाख्यातंचरितंनृहरेःपुनः ॥६१॥
शिवस्यचमहच्चित्रंकथितमृषिसत्तमाः ॥ येचएतन्महाच्चित्रंविष्णोश्चैवशिवस्यच ॥ ६२ ॥ प्रह्लादस्यसुभक्तस्यश्रोष्यंतिऋषिसत्तमाः ॥ नतेदुःखस्य
पात्रंवैभविष्यंतिनसंशयः ॥ ६३ ॥ अनेकंचफलंतेषांपुत्रपौत्रादिसंपदः ॥ भविष्यंतिनसंदेहस्तस्माच्चकथितंमया ॥ अतःपरंप्रवक्ष्यामिश्रूयतामृषिसत्त
माः ॥ ६४ ॥ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांनृसिंहचरित्रवर्णनंनामैकषष्टितमोऽध्यायः ॥ ६१ ॥ ऋषयऊचुः ॥ सूतसूतमहाबाहोज्ञा
नवानसिसुव्रत ॥ पुनरेवशिवस्यैवचरितंब्रूहिविस्तरात् ॥१ ॥ पुरातनाश्चराजानऋषयोदेवतास्तथा ॥ आराधनंचकस्यैवचक्रुस्तेपरमर्षयः ॥ २ ॥
सूतउवाच ॥ साधुपृष्टमृषिश्रेष्ठाःश्रूयतांकथयामिवः ॥ ब्रह्मापितामहश्चैवतत्पुत्राःपरमर्षयः ॥ ३ ॥ अन्येचऋषयोयेचकश्यपादयएवते ॥ सर्वेचैवशि
वस्यैवपूजांचक्रुःपुरातनाः ॥ ४ ॥ पार्थिवींधातुकींवापिमानसींवापिसत्तमाः ॥ कृत्वासिद्धिंचसंप्राप्ताइदानीमपिपूज्यते ॥ ५ ॥ नारदोऽपिविशेषेणवसि
ष्ठऋषिसत्तमः ॥ अरुंधतीतथासाध्वीकश्यपोमुनिपुंगवः ॥ ६ ॥ अदितिश्चाऽपिनित्यंवैचकारपार्थिवंपुरा ॥ मनवश्चसदाचक्रुःस्वायंभुवपुरःसराः॥७॥
प्रियव्रतश्चतत्पुत्रश्चकारपूजनंशुभम् ॥ इक्ष्वाकुश्चापिमांधातासगरोनहुषस्तथा ॥ ८ ॥ दिलीपश्चैवतत्पुत्रोराजादशरथस्तथा ॥ यदाऽऽयुःसकलंत
स्यांकिंचिन्न्यूनंनपुत्रता ॥ ९ ॥ तदादुःखंसमापन्नःपुत्रार्थीपार्थिवांस्तदा ॥ पुत्रेष्टिंचचकाराऽसौतन्मध्येचस्वयंहरिः ॥ १० ॥ चतुर्भिश्चैवरूपैश्चसंभूयच
स्वयंतदा ॥ कौसल्यापार्थिवांश्चक्रेऋष्याऽऽदिष्टास्वयंसती ॥ ११ ॥ रामश्चैवतथानित्यंपार्थिवान्समपूजयत् ॥ तद्वंशेचसमुत्पन्नास्तेतेशर्वंमपूजयन् ॥
॥ १२ ॥ पुरूरवाश्चराजावैह्यैलःशर्वंस्वयंशुभः ॥ पार्वतीशापसंयोगात्स्त्रीत्वंतस्यन्यवर्तत ॥ १३ ॥ मासंस्त्रीमासमात्रंचपुरुषएवनसंशयः ॥ पूजनेपा
र्थिवानांचजातंतस्यमहात्मनः ॥ १४ ॥ भरतश्चमहापूजांशिवस्यैवतथाऽकरोत्॥अन्येऽपियेमहाभागाःपांडवाःप्रत्यपूजयन् ॥१५॥अर्जुनश्चविशेषेणव्या
सस्यवचनात्तदा ॥ कृष्णेनचतदानित्यंबटुकेपर्वतोत्तमे ॥ १६ ॥ पूजनंतुशिवस्यैवसप्तमासावधिस्वयम् ॥ प्रसन्नोभगवांस्तस्यवरानन्याननेकशः ॥
॥ १७ ॥ संप्राप्यचजगत्सर्वंवशेऽनयतवैतदा ॥ बिल्वेश्वरस्यसंपन्नोबिल्वराशिर्मुनीश्वराः ॥ १८ ॥ नलेनचतथापूजाकृताचशंकरस्यच ॥ पूर्वजन्मनिवै
विप्रास्तेनराज्यंसुशोभनम् ॥ १९ ॥ प्राप्तंचरक्षितस्तेनयतिर्हरसमीपतः ॥ तस्यपुण्यप्रभावेणराज्यंदत्तंहरेणच ॥ २० ॥ इतितस्यवचःश्रुत्वापुनरूचुर्ऋ

पीश्वराः ॥ नलेनचकथंपूर्वंपूजितःशंकरोमुदा ॥ २१ ॥ रक्षितश्चयतिःकोवैतत्त्वंब्रूहिसुविस्तरम् ॥ अन्यच्चैवाऽर्जुनस्यैवसेवनंशंकरस्यच ॥ २२ ॥
ब्रूहित्वंचाविशेषेणव्यासस्यैवोपदेशतः ॥ कथंजातंचतस्यैवकथंचपूजितस्तदा ॥ २३ ॥ इतितेषांवचःश्रुत्वासूतोवाक्यमथाददे ॥ शृणुविप्राःप्रवक्ष्या
मिनलस्यामिततेजसः ॥ २४ ॥ अर्बुदाचलसंज्ञेतुपर्वतेभिल्लवंशजः ॥ आहुकश्चतदाऽभ्याशेवसतिस्ममुनीश्वराः ॥ २५ ॥ तत्पत्नीह्याहुकीनाम्नीचकार
शिवपूजनम् ॥ निरंतरंचकोटीशेकृत्वाचजलसेचनम् ॥ २६ ॥ यौवनंचतयोःश्रेष्ठंतत्सुखंचनिरंतरम् ॥ आनंदेनसमायुक्तौभुंजानौप्रीतमानसौ ॥ २७ ॥
कस्मिंश्चसमयेस्वामीआराधनार्थंगतोयदा ॥ एतस्मिन्नंतरेकश्चिद्यतिर्जटिलआगतः ॥ २८ ॥ संध्यायांदर्शनंकृत्वाशंकरस्यस्थलेच्छया ॥ इमांरात्रिंस
माक्रम्यप्रातश्चैवयथागतम् ॥ २९ ॥ गमिष्यामिचतत्रैवविचार्यैवमुपागतः ॥ एकाकिनींतदादृष्ट्वाभयत्रस्तविलोचनः ॥ ३० ॥ तयापिचपितात्वंचह्यु
क्तश्चास्थिरतांगतः ॥ एतस्मिन्समयेसोवैह्याजगामगृहाधिपः ॥ ३१ ॥ पूजनंतस्यकृत्वाचब्रूहिकार्यंप्रभोइति ॥ यतिरुवाच ॥ अद्यस्थलंचमह्यंवैदीय
तांप्रातरेवहि ॥ ३२ ॥ गमिष्येसर्वथाभिल्लइत्युक्तेऽन्यद्वृणुप्रभो ॥ स्वल्पंचैवस्थलंमेद्यवर्ततेनान्यथाकथम् ॥ ३३ ॥ इत्युक्तश्चतदासौवैगमनायमतिंद
धे ॥ तावद्भिल्ल्यावचःप्रोक्तंधर्मश्चैवगमिष्यति ॥३४॥ स्वामिनंचतदाब्रूतयुवाभ्यांस्थीयतांगृहे ॥ अहंबहिःस्थितिंकुर्यामायुधानिदधत्यपि ॥ ३५ ॥
तद्वचश्चश्रुतंतेनस्वामिनाचविचारितम् ॥ स्त्रियंबहिश्चनिष्कास्यकथंस्थेयंमयागृहे ॥ ३६ ॥ यद्भावितद्भवेदेवमयास्थेयंबहिःस्वयम् ॥ इत्याग्रहंतदाकृ
त्वागृहेतौचसुरक्षितौ ॥ ३७ ॥ स्वयंचैवायुधान्यत्रधृत्वातिष्ठद्वनेचरः ॥ योगींद्रोध्यानयोगेनस्थितःकोणांतरेतदा ॥ ३८ ॥ सापिनिद्रांकरोतिस्मस्थि
तोबहिर्वनेचरः ॥ रात्रौचपशवस्तंवैपीडयामासुरुद्धताः ॥ ३९ ॥ तेनैवचयथाशक्तिकृतोयत्नश्चनिश्चलः ॥ तदनंतरंचयज्जातंभिल्लोव्याघ्रैश्चभक्षितः ॥
॥ ४० ॥ प्रातःकालेऽथयोगींद्रोदृष्ट्वाभिल्लंचभक्षितम् ॥ दुःखंप्रापतदासाचाकिमर्थंखिद्यतेप्रभो ॥ ४१ ॥ धन्योऽयंकृतकृत्योऽयंयज्जातमी
दृशंत्विह ॥ अहंवैदग्धयिष्यामिस्त्रीणांधर्मःसनातनः ॥ ४२ ॥ इत्येवंचाहितंमत्वातथाकृत्वास्वयंचितिम् ॥ विचार्यैत्थंस्वयंचाऽग्निंप्रविवेशहितायवै
॥ ४३ ॥ एतस्मिन्नंतरेसाक्षाच्छिवःप्रादुरभूत्पुरः ॥ धन्येधन्येइतिसाध्विप्रसन्नोऽस्मितवाऽनघे ॥ ४४ ॥ शिवउवाच ॥ एतस्मिन्नवतारेवैसुखंप्राप्तंनं
किंचन ॥ तस्माच्चजन्मतांयाहिह्येकवारंपुनर्नहि ॥ ४५ ॥ अयंचैवमहायोगीहंसरूपोभविष्यति ॥ परजन्मनिचयुवयोःसंयोगंचकरिष्यति ॥ ४६ ॥
भिल्लश्ववीरसेनस्यनैषधेनगरेवरे ॥ तत्पुत्रश्चनलोनामभविष्यतिनसंशयः ॥ ४७ ॥ त्वंचैवभीमराज्ञोवैवैदर्भेनगरेशुभे ॥ दमयंतीचविख्याताभविष्य
सिगुणान्विता ॥ ४८ ॥ युवांचोभौमिलित्वाचराज्यभोगंसुविस्तरम् ॥ भुक्त्वामुक्तिश्चयोगींद्रैर्दुर्लभावोभविष्यति ॥ ४९ ॥ इत्युक्त्वाचस्वयंशंभुरचले

शोऽभवत्तदा ॥ यस्मान्नचलितोधर्मादचलेशइतिस्मृतः ॥ ५० ॥ तदुक्तंचतदाह्यासीत्तेषांचैवमहात्मनाम् ॥ इतिवश्चसमाख्यातंश्रूयतांचाऽर्जुनस्यच
॥ ५१ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ सूतउवाच ॥ दुर्योधनजितास्तेचपांडवाःपंचएवच ॥ द्रौपद्याचत
थासाध्व्याद्वैतारुयंवनमाययुः ॥ १ ॥ तत्रैवसूर्यदत्तांवैस्थालींचाऽऽश्रित्यतेतदा ॥ कालंचवाहयामासुःसुखेनऋषिसत्तमाः ॥ २ ॥ दुर्वासाःप्रेरितस्तेन
च्छलार्थंचसमागतः ॥ शिष्यैश्चैवाऽयुतैःसार्द्धंयाचयामासतांतदा ॥ ३ ॥ मनोऽभीष्टंचभोज्यंवैश्रूयतामृषिसत्तमाः ॥ प्रेषितश्चैवस्नानार्थंतस्मिंश्चसमये
हिते ॥ ४ ॥ दुःखिताश्चतदापंचप्राणांस्त्यक्तुमुपाददुः ॥ द्रौपद्याचस्मृतःकृष्णोह्याजगामक्षणादपि ॥ ५ ॥ शाकंचभक्षयित्वातुतेषांसिद्धिंसमादधत् ॥
दुर्वासाश्चतदाशिष्यांस्तृप्ताञ्ज्ञात्वापलायत ॥ ६ ॥ यस्यैवभगवांस्तुष्टस्तस्यन्यूनंकथंभवेत् ॥ धन्याश्चैवकृतार्थाश्चयेषांचभगवत्कृपा ॥ ७ ॥ इत्यु
क्त्वावचनंसोपिआनंदंपरमंगतः ॥ पश्चात्तेपांडवाःकृष्णंपप्रच्छुःकिंभविष्यति ॥ ८ ॥ बलवाञ्छत्रुरुत्पन्नःकिंकरिष्यामहेप्रभो ॥ इत्युक्तस्तुतदाकृष्णः
पांडवानिदमब्रवीत् ॥ ९ ॥ श्रीकृष्णउवाच ॥ श्रूयतांपांडवाःश्रेष्ठाःश्रुत्वाकर्तव्यमेवाहि ॥ द्वारकांचमयागत्वाशत्रूणांचजिगीषया ॥ १० ॥ विचार्य
चोपदेशाच्चह्युपमन्योर्महात्मनः ॥ मयाह्याराधितःशंभुःप्रसन्नःपरमेश्वरः ॥ ११ ॥ बटुकेपर्वतेश्रेष्ठेसप्तमासंतुसेवितः ॥ इष्टान्कामांस्तदादत्त्वाबिलेबिल्वे
श्वरःस्थितः॥१२॥तत्प्रतापान्मयासर्वंसामर्थ्यंलब्धमुत्तमम्॥इदानींसेव्यतेदेवोभुक्तिमुक्तिफलप्रदः॥१३॥यूयंचैवसुसेवध्वंशिवंसर्वसुखावहम्॥इत्युक्त्वांऽ
तर्दधेकृष्णआश्वास्यपांडवानथ॥१४॥पांडवाअपिभिल्लंचप्रेषयामासुरोजसा ॥ गुणानांचपरीक्षार्थंतस्यदुर्योधनस्यच ॥ १५ ॥ सोऽपिसर्वंचतत्रत्यंदुर्यो
धनगुणोदयम्॥समीचीनंचतज्ज्ञात्वापुनःप्रापप्रभून्प्रति॥१६॥ तदुक्तंतेनिशम्यैवदुःखंप्रापुर्मुनीश्वराः ॥ किंकर्तव्यंक्वगंतव्यंसत्यपाशेनयंत्रिताः ॥१७॥
एतस्मिन्नंतरेव्यासोजटाजूटविभूषितः ॥ तेजसांचस्वयंराशिःसाक्षाद्धर्मइवापरः ॥ १८ ॥ तंदृष्ट्वातेतदाप्रीताउत्थायपुरतःस्थिताः ॥ दत्त्वाऽऽसनंतदात
स्मैकुशाजिनसुशोभितम् ॥ १९ ॥ तत्रोपविष्टंतंव्यासंपूजयांतिस्महर्षिताः ॥ पूजांकृत्वाविधानेनस्तुतिंचविविधांतदा ॥ २० ॥ कृत्वामुनिंचसंतोष्य
धन्याःस्मइतिचाऽब्रुवन् ॥ अद्यनःसफलंजन्मअद्यनःसफलाःक्रियाः ॥ २१ ॥ अद्यमेसफलादेवाब्राह्मणाःसत्यवादिनः॥ तपश्चैवतथादानंयोगाश्चसफलाः
कृताः ॥ २२ ॥ दानंचविविधंमेद्यपूजाश्चविविधास्तथा ॥ एतत्सर्वंचसफलंजातंतेदर्शनात्प्रभो ॥ २३ ॥ दुःखंचदूरतोयातंदर्शनात्तेपितामह ॥ दुष्टैश्चैव
महद्दुःखंदत्तंचक्रूरकर्मभिः ॥ २४ ॥ श्रीमतांदर्शनेजातेदुःखंचैवगमिष्यति ॥ कदापिनगतंतच्चनिश्चयंमेविचारितम् ॥ २५ ॥ महदाश्रयेचसंप्राप्तेसमर्थे
सर्वकारिणि ॥ यदिदुःखंनगच्छेत्तुदैवमत्रैवकारणम् ॥ २६ ॥ निश्चयंचैवगच्छेच्चदारिद्र्यंदुःखकारणम् ॥ महतांचस्वभावोऽयंयद्दीनप्रतिपालनम् ॥२७॥

तद्गुणानैवगण्यंतेमहिमावस्तुमात्रतः ॥ आश्रयस्यवशादेवपुंसोवैजायतेप्रभो ॥ २८ ॥ लघुत्वंचमहत्त्वंचनाऽत्रकार्याविचारणा ॥ उत्तमानांस्वभावो
ऽयंयद्दीनपरिपालनम् ॥ २९ ॥ रंकस्यरक्षणंलोकेह्यतिश्रेयस्करंमतम् ॥ पुरुषस्यप्रयत्नोवैसुजातानांचसेवनम् ॥ ३० ॥ अतःपरंचभाग्यंवैदोषःश्चैवनदी
यते ॥ एतस्मात्कारणात्स्वामिंस्त्वयिदृष्टेशुभंसदा ॥ ३१ ॥ त्वदागमनमात्रेणसंतुष्टंमानसंहिनः ॥ इत्येतद्वचनंश्रुत्वाव्यासश्चैवाऽब्रवीदिदम् ॥ ३२ ॥
इतिश्रीशिवमहापुराणेज्ञानसंहितायांत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ व्यासउवाच ॥ धन्याःस्थकृतकृत्याःस्थसत्यंनैवविलोपितम् ॥ सुजनानांस्व
भावोऽयंप्राणांतेऽपिसुशोभनः ॥ १ ॥ धर्मश्चत्यज्यतेनैवसत्यंसत्फलसाधनम् ॥ अस्माकंचैवयूयंचतेचाऽपितुल्यतांगताः ॥ २ ॥ तथापिपक्षपातोवैध
र्मिष्ठानांमतोबुधैः ॥ प्रथमंचैवदुष्टेनधृतराष्ट्रेणचक्षुषा ॥ ३ ॥ धर्मस्त्यक्तःस्वयंलोभाद्युष्माकंराज्यमाहृतम् ॥ तस्ययूयंचतेचाऽपिपुत्राएवनसंशयः ॥
॥ ४ ॥ पितरिचमृतेबालाह्यनुकंप्यामहात्मनः ॥ पश्चात्पुत्रश्चतेनैववारितोनकदाचन ॥५॥ अनर्थश्चैवजायेतयद्येवंचकृतंतदा ॥ अतःपरंचयज्जातंत
ज्जातंनाऽन्यथाभवेत् ॥ ६ ॥ अयंदुष्टोभवंतश्चधर्मिष्ठाःसत्यवादिनः ॥ तस्मादंतेशुभस्यैवशुभंचैवपुनःपुनः ॥ ७ ॥ यच्चैववापितंबीजंतत्प्ररोहोभवे
दिह ॥तस्माद्दुःखंनकर्त्तव्यंभवद्भिःसर्वथाशुभाः ॥ ८ ॥ इत्युक्ताःपांडवास्तंचपुनरेवाऽब्रुवन्वचः ॥ सत्यमुक्तंत्वयानाथदुष्टैर्दुःखंनिरंतरम् ॥ ९ ॥
दीयतेचवनेऽत्रैवमुहुर्मुहुर्दुरात्मभिः ॥ तन्नाशयशुभंकिंचिद्धयेयंदेयंत्वयाप्रभो ॥ १० ॥ कृष्णेनकथितंपूर्वमाराध्यःशंकरःसदा ॥ प्रमादश्चकृतोऽस्मा
भिरिदानीमुपदिश्यताम् ॥ ११ ॥ इत्येतद्वचनंश्रुत्वाव्यासोहर्षसमन्वितः ॥ उवाचश्रूयतांश्रेष्ठामयैवसेव्यतेशिवः ॥ १२ ॥ भवद्भिःसेव्यतांनित्यंसुखं
स्यादचलंसदा ॥ पंचसुपांडवेष्वेवविचार्यशंकरार्चने ॥ १३ ॥ विचार्यैवाऽर्जुनंव्यासःपुरातनमुनिस्त्विति ॥ तपःस्थानंविचार्यैवपुनरेवाऽब्रवीदिदम् ॥
॥ १४ ॥ श्रूयतांपांडवश्रेष्ठाःकथयामिहितंसदा ॥ ब्रह्मादितृणपर्यंतंयत्किंचिद्दृश्यतेजगत् ॥ १५ ॥ तत्सर्वंशिवरूपंचदृश्यंध्येयंचयत्पुनः ॥ सर्वेषांचैव
सेव्योवैशंकरःसर्वदुःखहा ॥ १६ ॥ विष्णुश्चवर्ततेयोवैतस्यैवरूपमद्भुतम् ॥ परंतुदीर्घकालेनप्रसन्नोभवतिस्फुटम् ॥ १७ ॥ शिवश्चैवतुस्वल्पेनकालेनैव
प्रसीदति ॥ भुक्तिंदत्त्वाचमुक्तिंहियच्छतिचसुनिश्चितम् ॥१८॥ तस्मात्सेव्यःसदाशंभुर्भुक्तिमुक्तिफलेप्सुभिः॥क्षत्रियस्यपरोक्षश्चइंद्रएवसदाहितः॥१९॥
सुप्रसन्नश्चविघ्नंवैनकरिष्यातिसर्वदा ॥ पुनश्चैवशिवस्यैवमंत्रंचैवप्रदास्यति ॥ २०॥इत्युक्त्वाऽर्जुनमाहूयतिंविद्रविद्यामुपादिशत् ॥ स्नात्वाचप्राङ्मुखोभू
त्वाजग्राहमुनिसत्तमात् ॥ २१ ॥ पार्थिवंचविधानंवैददौचऋषिपुंगवः ॥ प्रथमंचेंद्रमाराध्यतदाज्ञतःपुनःशिवम् ॥ २२ ॥ इतोगच्छाऽधुनापार्थइंद्रकी
लेसुशोभने ॥ जाह्नव्याश्चसमीपेवैस्थित्वाचैवतपःकुरु॥२३॥आयुधानिचसर्वाणिधृत्वामार्गेनदापयन् ॥ तस्यापिचस्तवंनित्यंपठनीयंशिवस्यच॥२४॥

अदृश्यांचैवविद्यांचदत्त्वाचहितकारिणीम् ॥ आशिषंचतदासौवैददौतस्मैमहामुनिः ॥ २५ ॥ धर्ममास्थायसर्वेवैतिष्ठंतुराजसत्तमाः ॥ सिद्धिः
स्यात्सर्वतःश्रेष्ठानाऽत्रकार्याविचारणा ॥ २६ ॥ इतिदत्त्वाऽऽशिषंतेभ्योव्यासश्चांतरधीयत ॥ अर्जुनोऽपितदातत्रदीप्यमानोव्यदृश्यत ॥ २७ ॥ मंत्रेण
शिवरूपेणतेजश्चाऽतुलमावहत् ॥ तेसर्वेतस्यतेजश्चदृष्ट्वातुनिश्चयंगताः ॥ २८ ॥ इदंकार्यंत्वयासाध्यंनाऽन्यैश्चैवकदाचन ॥ व्यासस्यवचनाद्भ्रातःस
फलंकुरुजीवितम् ॥ २९ ॥ इतिचैवाऽर्जुनंतेवैविरहोत्सुककातराः ॥ अनिच्छंतोऽपितत्रैवप्रेषयामासुरर्जुनम् ॥ ३० ॥ द्रौपदीदुःखसंयुक्तानेत्राश्रूणि
निरुध्यच ॥ प्रेषयंतीशुभंराजंस्त्वयाकार्यंप्रयत्नतः ॥ ३१ ॥ तेसर्वेपिचतंतत्रविसृज्याऽर्जुनमादरात् ॥ अत्यंतदुःखमापन्नामिलित्वापंचएवते ॥ ३२ ॥
स्थितास्तत्रवदंतिस्मश्रूयतामृषिसत्तमाः ॥ दुःखेपिप्रियसंगोवैनदुःखायप्रजायते ॥ ३३ ॥ वियोगेद्विगुणंतच्चकथंधैर्यंभवेदिह ॥ कुर्वंत्स्वेवंतदादुःख
मृषिवर्यःसमागतः ॥ ३४ ॥ तंनत्वाचैवसंपूज्यदत्त्वाऽऽसनंवचोऽब्रुवन् ॥ श्रूयतांचऋषिश्रेष्ठदुःखदग्धावयंप्रभो ॥ ३५ ॥ दर्शनंतेचसंप्राप्यह्यानंदंप्राप्नु
मोमुने ॥ कियत्कालंवसात्रैवदुःखनाशायवैप्रभो ॥ ३६ ॥ इत्युक्तःसऋषिश्रेष्ठोह्यवसत्तत्सुखायच ॥ कथाभिर्विविधाभिश्चदुःखंचनोदयंस्तदा ॥ ३७ ॥
वार्तायांक्रियमाणायांधर्मराजोऽब्रवीदिदम् ॥ धर्मराजउवाच ॥ शृणुत्वंचऋषिश्रेष्ठदुःखशांतिर्मतामम ॥ ३८ ॥ पृच्छामित्वांमहाबाहोकथनीयंत्वया
प्रभो ॥ ईदृशंचैवदुःखंहिपुराप्राप्तस्तुकश्चन ॥ ३९ ॥ वयमेवपरंदुःखभाजनंनापिकश्चन ॥ इतिपृष्टऋषिश्रेष्ठःप्रत्युवाचपुनस्तदा ॥ ४० ॥ श्रूयतां
धर्मराजत्वंतवदुःखंनकिंचन ॥ पूर्वंचनलराज्ञोवैजातंतस्यमहात्मनः ॥ ४१ ॥ हरिश्चंद्रेतथाराजन्रामस्यैवाथपांडव ॥ यज्जातंवर्णितुंचैवशक्यते
नमयापुनः ॥ ४२ ॥ शरीरंदुःखराशिंचमत्वात्याज्यंत्वयाऽधुना ॥ येनेदंचधृतंतेनप्राप्तमेवनसंशयः ॥ ४३ ॥ प्रथमंमातृगर्भेवैजातस्यदुःखसंभवः ॥
ततोपियौवनेकामान्भुंजानोदुःखरूपिणः ॥ ४४ ॥ गतागतैर्दिनस्यैवकार्यभारैरनेकशः ॥ आयुश्चक्षीयतेनित्यंनजानातिहिहितत्पुनः ॥ ४५ ॥ अंते
चमरणंचैवह्यतोदुःखमतःपरम् ॥ तस्मादिदमसत्यंचत्वंतुसत्यंसमाचर ॥ ४६ ॥ येनैवतुष्यतेशंभुस्तथाकार्यंनरेणच ॥ तस्यैवभजनेनैवसर्वदुःखंवि
लीयते ॥ ४७ ॥ एवंचविविधैर्ज्ञानैर्दिनातिवाहनंतदा ॥ चकुस्तेभ्रातरःसर्वेमनोरथपथैःपुनः ॥ ४८ ॥ अर्जुनोपिस्वयंगच्छन्दुर्गादिशकुनानथ ॥
क्षयंबुद्ध्वाचतेनैवपश्यत्रम्याण्यनेकशः ॥ ४९ ॥ मनसाहर्षयुक्तोवैजगामाऽचलमुत्तमम् ॥ तत्रगत्वाचगंगायाःसमीपंसुंदरंस्थलम् ॥ ५० ॥ अशोकका
ननंयत्रतिष्ठतिस्वर्गसन्निभम् ॥ तत्रतस्थौस्वयंज्ञात्वानत्वाचगुरुसत्तमम् ॥ ५१ ॥ यथोपदिष्टंवेषादितथाचैवाऽकरोत्स्वयम् ॥ पुरश्चपार्थिवंकृत्वा
सुंदरंसमसूत्रकम् ॥५२॥ तदग्रेचजपंकुर्वंस्तेजसोराशिमुत्तमम् ॥ त्रिकालंचैवसंस्नातःपूजनंविविधंतथा॥५३॥चकारोपासनंतत्रतपस्तप्त्वासुदारुणम् ॥

तस्यैवशिरसस्तेजोनिःसृतंचतदासुराः ॥ ५४ ॥ दृष्ट्वाभयंसमापन्नाःप्रविष्टश्चकदाह्वयम्॥पुनस्तेचविचार्यैवकथनीयंबिडौजसे ॥५५॥तत्क्षणंचगतास्तत्र
कथयामासुर्वैतदा॥देवोवाथऋषिश्चैवसूर्योवाथविभावसुः ॥५६॥ तपस्तपस्यतिदेवनजानीमोवनेतव॥तस्यैवतेजसादग्धाह्यागतास्तवसन्निधिम्॥ ५७ ॥
इत्युक्तस्तैःसुरैःसर्वैर्ज्ञात्वापुत्रचिकीर्षितम् ॥ संगोप्यतान्विसृज्यैवस्वयंचरूपमद्भुतम् ॥ ५८ ॥ धृत्वाजगामतत्रैववृद्धश्चजटिलोयथा ॥ तथैवयष्टिकां
धृत्वावृद्धोजर्जरतांगतः ॥ ५९ ॥ मृगचर्मोत्तरीयंचपतन्पतन्पदेपदे ॥ तमागतंतदादृष्ट्वापूजांचक्रुतवान्स्वयम् ॥ ६० ॥ स्थितोऽग्रेचस्तुतिंकृत्वाक्कग
तोऽसिवदाऽधुना ॥ इत्युक्तस्तुहरिःसोवैधैर्यार्थंचवचोऽब्रवीत् ॥ ६१ ॥ नवेचवयसिस्वामिन्किंतपस्यसिसांप्रतम् ॥ मुक्त्यर्थंनजयार्थंहिसर्वथातपएवते
॥ ६२ ॥ इतिपृष्टस्तदातेनसर्वंसंवेदितंपुनः ॥ इंद्रःस्तुत्वापुनर्वाक्यमुवाचश्रूयतांत्वया ॥ ६३ ॥ युक्तंनक्रियतेऽद्यैवसुखंस्वप्नसमंमतम् ॥ तदर्थंनतपो
युक्तंमुक्त्यर्थंकुरुसांप्रतम् ॥ ६४ ॥ इंद्रश्चसुखदातावैमुक्तिदाताभवेन्नहि ॥ तस्मात्त्वंसर्वथाश्रेष्ठकर्तुमर्हसिसुव्रत ॥ ६५ ॥ इत्येतद्वचनंश्रुत्वाक्रोधंचक्रेऽ
र्जुनस्तदा ॥ राज्यार्थीनचमुक्त्यर्थीकिमर्थंभाषसेत्विदम् ॥६६॥ व्यासस्यवचनेनैवक्रियतेतपईदृशम्॥इतोगच्छकिमर्थंमांपातयितुंत्वमिच्छसि ॥६७॥
इत्युक्तश्चप्रसन्नोवैरूपमद्भुतसुंदरम् ॥ स्वोपकरणसंयुक्तंदर्शयामासवैतदा ॥ ६८ ॥ इत्येवंचतदादृष्ट्वालज्जितश्चाऽर्जुनस्तदा ॥ इंद्रस्तंचसमाश्वास्यपुन
रेववचोऽब्रवीत् ॥ ६९ ॥ धन्योऽसिकृतकृत्योऽसिंसुस्थिरंहिमनस्तव ॥ बलिष्ठाःशत्रवस्तेचदुर्योधनपुरःसराः ॥ ७० ॥ द्रोणोभीष्मश्चकर्णश्चसर्वेतेदुर्जे
याध्रुवम् ॥ ममाऽसाध्याभवेयुर्वैसर्वथाचहितंशृणु ॥ ७१ ॥ एतज्जयंतुकर्तुंवैसमर्थःकश्चनाऽधुना ॥ वर्ततेचशिवंवर्ज्यंतस्माच्छंभुंभजाऽधुना ॥ ७२ ॥
सर्वंकर्तुंसमर्थोऽस्तिभुक्तिमुक्तिफलप्रदः ॥ अहमन्येचब्रह्माद्याविष्णुःसर्ववरप्रदः ॥ ७३ ॥ अन्येजिगीषवोयेचतेसर्वेशिवपूजकाः ॥ अद्यप्रभृतिमन्मंत्रंहि
त्वाचैवशिवंभज ॥ ७४ ॥ पार्थिवेनविधानेनध्यानेनैवशिवस्यच ॥ उपचारैरनेकैश्चसर्वभावेनभारत ॥ ७५ ॥ सिद्धिःस्यादचलातेऽद्यनात्रकार्याविचा
रणा ॥ इत्युक्त्वाचवरान्सर्वान्समाहूयाऽब्रवीदिदम् ॥ ७६ ॥ सावधानतयास्थेयमेतस्यरक्षणेध्रुवम् ॥ राजंस्त्वयाप्रमादोवैनकर्तव्यःकदाचन ॥ ७७॥
श्रेयसांबहवोविघ्नाभवंतिराजसत्तम ॥ धैर्यंचवर्ततेऽद्यैवतथैवरक्ष्यतांत्वया ॥ ७८ ॥ शिवःसम्यक्फलंतुभ्यंदास्यतिनाऽत्रसंशयः ॥ इतिदत्त्वावरंतस्य
जगामभवनंस्वकम् ॥ अर्जुनोऽपितपस्तेपेशिवमुद्दिश्यवैतदा ॥ ७९ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायामर्जुनतपःकरणंनामचतुःषष्टितमोऽ
ध्यायः ॥ ६४ ॥ छ ॥ सूतउवाच ॥ स्नानंचविधिवत्कृत्वान्यासादिविधिवत्तथा ॥ ध्यानंचैवयथोक्तंचव्यासोक्तंयत्तथाऽकरोत् ॥ १ ॥ एकपादतले
नैवतिष्ठन्मुनिवरोयथा ॥ सूर्येदृष्टिंनिबध्यैवमंत्रमावर्तयन्स्थितः ॥ २ ॥ तपसस्तेजसाव्याप्तादेवाश्चविस्मयंययुः ॥ पुनश्चैवशिवंयातास्त्व

दर्थेतपआहितम् ॥ ३ ॥ यदिच्छतिनरःसोऽर्थंकिंनयच्छसिवैप्रभो ॥ इत्युक्त्वाचस्तुतिंचक्रुर्विविधांदेवतास्तदा ॥ ४ ॥ तदीयंतुवचःश्रुत्वा
शिवोवचनमब्रवीत् ॥ गम्यतांवश्चकार्यंवैकरिष्यामिनसंशयः ॥ ५ ॥ परावृत्त्यगतास्तेवैनिश्चयंपरमंगताः ॥ एतस्मिन्नंतरेदैत्योमूकनामासमागतः
॥ ६ ॥ सौकरंरूपमास्थायप्रेषितश्चदुरात्मना ॥ दुर्योधनेनविप्रेंद्रमायिनाचाऽर्जुनंतदा ॥ ७ ॥ यत्राऽर्जुनश्चतिष्ठेततेनमार्गेणवैतदा ॥ शृंगंचपर्वतस्यै
वच्छिंदन्वृक्षाननेकशः ॥ ८ ॥ शब्दंचविविधंकुर्वञ्छीघ्रवेगेनसंयुतः ॥ अर्जुनोऽपिचतंदृष्ट्वाविचारेतत्परोह्यभूत् ॥ ९ ॥ कोऽयंचकुतआयातःक्रूरकर्मांच
दृश्यते ॥ ममाऽनिष्टंध्रुवंकर्तुंसमागच्छत्यसंशयम् ॥ १० ॥ ममैवंमनआख्यातिशत्रुरेवनसंशयः ॥ इत्युक्त्वामनसिपार्थोविचारपरमानसः ॥ ११ ॥ बह
वोमेहताःपूर्वंदैत्याश्चदानवास्तदा ॥ तदीयःकश्चिदायातिवैरंशोधयितुंपुनः ॥ १२ ॥ समायातिनसंदेहोनाऽत्रकार्याविचारणा ॥ अथवाचसखाकश्चि
दुर्योधनहितावहः ॥ १३ ॥ यस्मिन्दृष्टेप्रसीदेतमनःसहितमावहेत् ॥ यस्मिन्दृष्टेतदेवेहकलुषंशत्रुरेवच ॥ १४ ॥ आचारःकुलमाख्यातिवपुराख्याति
भोजनम् ॥ वचनंश्रुतमाख्यातिस्नेहमाख्यातिलोचनम् ॥ १५ ॥ आकारेणतथागत्याचेष्टयाभाषितैरिह ॥ मनसश्चतथावृत्त्याज्ञायतेंऽतर्गतंमनः ॥ १६ ॥
उज्ज्वलंसरसंचैववक्रमारक्तमेवच ॥ नेत्रंचतुर्विधंप्रोक्तंतस्यभावाःपृथग्विधाः ॥ १७ ॥ उज्ज्वलंमित्रसंयोगेसरसंपुत्रदर्शने ॥ वक्रंचकामिनीयोगेचाऽऽर
क्तंशत्रुदर्शने ॥ १८ ॥ तस्मिन्ममतुसर्वाणिकलुषाणींद्रियाणिच ॥ अयंशत्रुर्भवेदेवमारणीयोनसंशयः ॥ १९ ॥ गुरोश्चवचनंमेऽद्यवर्ततेदुःखदस्त्वया ॥
हंतव्यःसर्वथाराजन्नाऽत्रकार्याविचारणा ॥ २० ॥ एतदर्थेस्वायुधानिमयाचैवनसंशयः ॥ इतिविचार्यतत्रैवबाणंचसंधयन्स्थितः ॥ २१ ॥ शिवोऽपिस्वग
णैःसार्धंभिल्लरूपंविधायच ॥ अर्जुनस्यचरक्षार्थंपरीक्षार्थंसमागतः ॥ २२ ॥ बद्धकच्छश्चवल्लीभिर्बद्धाकेशान्हरस्तदा ॥ शरीरेश्वेतरेखाश्चधनुर्बाणयुतःस्वयम्
॥ २३ ॥ बाणानांतूणकंपृष्ठेधृत्वासोवैजगामह ॥ गणाश्चैवतथाजाताभिल्लराजोऽभवच्छिवः ॥ २४ ॥ शब्दांश्चविविधान्कृत्वाजगामवाहिनीपतिः ॥ शूकरस्यच
सेनायाःशब्दश्चप्रदिशोदिशः ॥ २५ ॥ व्यानशेवनशब्देनव्याकुलश्चाऽर्जुनस्तदा ॥ पर्वतस्थाश्चयेसर्वेतेसर्वेव्याकुलास्तदा ॥ २६ ॥ अहोकिंचभवेदेवशिवःशु
भंकरोतुच ॥ मयाचैवश्रुतंपूर्वंकृष्णेनकथितंपुनः ॥ २७ ॥ व्यासेनकथितंचैवस्मृत्यावेदैस्तथापुनः ॥ शिवःशुभकरःप्रोक्तःशिवःसुखकरःसदा ॥ २८ ॥ भुक्तिदश्च
परंप्रोक्तोमुक्तिदोनाऽत्रसंशयः ॥ तन्नामस्मरतांपुंसांकल्याणंजायतेध्रुवम् ॥ २९ ॥ भजतांसर्वभावेनदुःखंपापंचनश्यति ॥ यदिकदाचिज्जायेततदाकर्मसमुद्भ
वम् ॥ ३० ॥ बहुनिभाविनिनूनमल्पंचैवसयच्छति ॥ अथवाप्रारब्धस्यैवभोगश्चैवनसंशयः ॥ ३१ ॥ तदाबहुफलेऽल्पेनभोगंनिस्तीर्यशंकरः ॥ कदाचिदिच्छयात
च्चदूरीकुर्यान्नसंशयः ॥ ३२ ॥ विषंचैवाऽमृतंकुर्यादमृतंविषमेवच ॥ यदिच्छतिकरोत्येवसमर्थःकिंनिषिध्यते ॥ ३३ ॥ यथाचैवशुभंतस्यभावितत्त्वसमा

चरेत् ॥ एतेनचव्रतंपूर्वंगृहीतंभक्तरक्षणम् ॥ ३४ ॥ ततश्चैवशुभंभाविनाऽत्रकार्याविचारणा ॥ शुभस्यशरणेमानोभवतीतिसुनिश्चितम् ॥ ३५ ॥ इति
विचार्यमयापिह्येतैर्भक्तैःपुरातनैः ॥ भाविभिश्चसदाभक्तैरक्षणीयंमनःस्थिरम् ॥ ३६ ॥ लक्ष्मीर्गच्छतुवातिष्ठेन्मरणंनिकटेपुरः ॥ निंदांवाऽथप्रकुर्वंतुस्तु
तिंवादुःखसंचयः ॥ ३७ ॥ जायतांयदिजायेतशंकरःसुखदःसदा ॥ कदाचिच्चपरीक्षार्थंदुःखंयच्छतिवैशिवः ॥ ३८ ॥ अंतेचसुखदःप्रोक्तोदयालुत्वान्नसं
शयः ॥ यथाचैवसुवर्णंचशोधितंशुद्धतांव्रजेत् ॥ ३९ ॥ एवञ्चैवमयापूर्वंश्रुतंमुनिमुखात्तदा ॥ तद्भजनेनममाऽद्यैवशुभंस्यान्नात्रसंशयः ॥ ४० ॥
इत्येवंचविचारंचकरोतियावदेवहि ॥ तावच्चशूकरःप्राप्तोबाणस्यमोचनावधि ॥ ४१ ॥ शिवोऽपिपृष्ठतोलग्नोह्यायातिशूकरस्यह ॥ तयोर्मध्येतदा
सोयंदृश्यतेशृंगमद्भुतम् ॥४२॥ ममभक्तंचमाहन्याच्छिवःशीघ्रतरंगतः ॥ एकस्मिन्समयेताभ्यांकृतंबाणविमोक्षणम् ॥ ४३ ॥ शिवबाणश्चपुच्छेवैह्यर्जुन
स्यमुखेतदा ॥ शिवस्यपुच्छतोगत्वामुखेनिःसृत्यशीघ्रगः ॥ ४४ ॥ भूमौचलीनतांयातस्तस्यवैपुच्छतोगतः ॥ पपातपार्श्वेतस्यैवबाणश्चैवाऽर्जुन
स्यच ॥ ४५ ॥ शूकरस्तत्क्षणंश्रेष्ठामृतोभूमौपपातह ॥ देवाहर्षपरंप्रापुःपुष्पवृष्टिंप्रचक्रिरे ॥ ४६ ॥ शिवस्तुष्टमनाह्यासीदर्जुनःसुखतांगतः ॥ दैत्य
स्यचतदारूपंक्रूरंदृष्ट्वाचतौतदा ॥ ४७ ॥ अर्जुनश्चविशेषेणह्यहोकपटमद्भुतम् ॥ ईश्वरेणममाद्यैवबुद्धिर्दत्तानसंशयः ॥ ४८ ॥ इतिविचार्यतत्रैवतदा
शिवशिवेतिच ॥ ४९ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायामर्जुनदुःखशांतिसंभवोनामपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ सूतउवाच ॥ शि
वोऽपिचस्वभृत्यंवैप्रेरयामासवैतदा ॥ बाणार्थेचततःश्रेष्ठाअर्जुनोह्यागतस्तदा ॥ १ ॥ एकस्मिन्समयेप्राप्तौबाणार्थेचगणार्जुनौ ॥ अर्जुनस्तंपराभर्त्स्य
बाणंचैवाऽग्रहीत्तदा ॥ २ ॥ गणःप्रोवाचतंतत्रकिमर्थंगृह्यतेत्वया ॥ बाणश्चैवाऽस्मदीयोवैमुच्यतामृषिसत्तम ॥ ३ ॥ इत्युक्तश्चाऽर्जुनस्तर्हिवचनंचेदमब्र
वीत् ॥ अज्ञात्वावदसिकिंचमूर्खोसित्वंवनेचर ॥ ४ ॥ बाणश्चमोचितोमेऽद्यत्वदीयश्चकथंपुनः ॥ रेखारूपंचपिच्छानिमन्नामांकितएवच ॥ ५ ॥ त्वदीय
श्चकथंजातःस्वभावोदुस्त्यजस्तव ॥ इत्येवंचतदाश्रुत्वाभिल्लोवाक्यमुपाददे ॥ ६ ॥ विहस्यश्रूयतांरेत्वंनतपःक्रियतेत्वया ॥ वेषतश्चतपस्वीत्वंनय
थार्थंप्रदृश्यते ॥ ७ ॥ तपस्वीचकथंमिथ्याभाषणंकुरुतेनरः ॥ नैकाकिनंचमांत्वंचजानीहिवाहिनीपतिम् ॥ ८ ॥ बहुभिर्वनभिल्लैश्चयुक्तःस्वामीसआस
ते ॥ समर्थःसर्वथाकर्तुंनिग्रहानुग्रहौपुनः ॥९॥ तस्यबाणश्चवर्तेतयोनीतश्चत्वयाऽधुना ॥ अयंबाणश्चतेपार्श्वेस्थास्यतिनकदाचन ॥ १० ॥ तपःफलंकथं
त्वंचहातुमिच्छसितापस ॥ चौर्याच्छलाच्चमानाच्चविस्मयात्सत्यमोचनात् ॥ ११ ॥ तपश्चक्षीयतेसत्यमेतदेवश्रुतंमया ॥ तस्माच्चतपसस्तेऽद्यभविष्य
तिकुतःफलम् ॥ १२ ॥ तस्माच्चमुच्यतांबाणःकृतघ्नस्त्वंभविष्यासि ॥ ममैवस्वामिनाबाणोतवार्थेमोचितोध्रुवम् ॥ १३ ॥ शत्रुश्चमारितस्तेनपुनर्बाण

श्चरक्षितः ॥ अत्यंतंचकृतज्ञोऽसितपःशुभतरंयथा ॥ १४ ॥ सत्यंचभाषसेत्वंचकिमन्यांसिद्धिमिच्छसि ॥प्रयोजनंतेबाणेनस्वामीचियाच्यतांमम॥१५॥
ईदृशांश्चतथाबाणान्बहून्दातुंक्षमःस्वयम् ॥ राजाचवर्ततेमेऽद्यकिंनैवयाच्यतेत्वया ॥ १६ ॥ प्रार्थनीयोविशेषेणदास्यतिविविधंफलम् ॥ उपकारंपरि
त्यज्यह्यपकारंसमीहसे ॥ १७ ॥ नतद्युक्तंत्वयाद्यैवक्रियतेत्यजचापलम् ॥ इत्येवंवचनंश्रुत्वापार्थोवाक्यमथाऽब्रवीत् ॥ १८ ॥ शृणुभिल्लप्रवक्ष्या
मिह्यसत्यंतवभाषणम् ॥ यथाजातिस्तथात्वंचजानाम्येवंवनेचर ॥ १९ ॥ अहंराजाभवांश्चौरःकथंयुद्धमयुक्तता ॥ युद्धंमैत्र्यंसमैःकार्यंनाऽधमे
हिकदाचन ॥ २० ॥ तस्मात्तेचतथास्वामीभविष्यतिभवादृशः ॥ दातारश्चवयंप्रोक्ताश्चौराःप्रोक्तावनेचराः ॥ २१ ॥ कथंयाच्योमयाभिल्लो
राजाएवचसांप्रतम् ॥ तमेवयाचसेनैवबाणंमांत्वंवनेचर ॥ २२ ॥ ददामितेतथाबाणंसंतिमेबहवोध्रुवम् ॥ राजाचआग्रहेणैवनदास्यतितृणंभवेत्
॥ २३ ॥ किंपुनश्चतथाबाणंप्रयच्छामिवनेचर ॥ यदिचिकीर्षतिबाणंकथंनागम्यतेऽधुना ॥ २४ ॥ यथागच्छतितेभर्ताकिमर्थंभाषसेधुना ॥
आगत्यचमयासार्द्धंयुद्धेजित्वाचमांपुनः ॥ २५ ॥ नीत्वाबाणंसुखंयातुविलंबःक्रियतेकथम् ॥ इत्येतद्वचनंश्रुत्वाभिल्लोवाक्यमथाऽब्रवीत् ॥ २६ ॥
अज्ञोऽसित्वमृषिर्नासिमरणंत्वीहसेकथम् ॥ देहिबाणंसुखंतिष्ठह्यन्यथाक्लेशभाजनम् ॥ २७ ॥ इत्युक्तश्चपुनःप्राहशृणुत्वंचवनेचर ॥ आगमिष्यतियदा
स्वामीदर्शयिष्येफलंतदा ॥ २८ ॥ सिंहसृगालयोर्युद्धमुपहासकरंमहत् ॥ श्रुतंचपश्यसित्वंचयथेच्छसितथाकुरु ॥ २९ ॥ इत्युक्तश्चगतस्तत्रयत्राऽऽ
स्तेवाहिनीपतिः ॥ सर्वंनिवेदयामासश्रुत्वाहर्षमुपागतः ॥ ३० ॥ आजगामस्वसैन्येनशंकरोभिल्लरूपधृक् ॥ अर्जुनश्चतदासेनांदृष्ट्वासंमुखमाययौ ॥
॥ ३१ ॥ पुनर्गणंशिवश्चैवप्रेषयामासवैतदा ॥ पश्यसैन्यंतपस्विन्नस्त्वंचबाणंत्यजाऽधुना ॥ ३२ ॥ मरणंस्वल्पकार्यार्थेकथमिच्छासिसांप्रतम् ॥ भ्रातर
स्तवदुःखार्ताःकलत्रंचततःपरम् ॥ ३३ ॥ पृथिवीहस्ततस्तेद्ययास्यतिचमतिर्मम ॥ इत्युक्तस्तंतथाऽऽगत्यह्यर्जुनायनिवेदितम् ॥ ३४ ॥ तच्छुत्वाच
पुनःप्राहविपरीतंभविष्यति ॥ अद्याहंचैवतेबाणंददामिचमदीयकम् ॥ ३५ ॥ कुलस्यदूषणंचाऽहंभवामीतिनसंशयः ॥ भ्रातरश्चैवदुःखार्त्ताभवंतिनाऽ
न्यथाध्रुवम् ॥ ३६ ॥ विद्याश्चनिष्फलामेस्युस्तस्मादागच्छवैध्रुवम् ॥ सिंहश्चैवसृगालाद्वाभीतोनैवमयाश्रुतः ॥ ३७ ॥ इत्युक्तश्चपुनर्गत्वायदुक्तंचनि
वेदितम् ॥ सोपिहर्षसमायुक्तमर्जुनंचाऽगमत्तदा ॥ ३८ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांशिवागमनंनामषट्षष्टितमोऽध्यायः ॥ ६६ ॥
॥ सूतउवाच ॥ तमागतंतदादृष्ट्वाध्यानंकृत्वाशिवस्यच ॥ गत्वातत्रपुनःसोऽपियुद्धंचक्रेसुदारुणम् ॥ १ ॥ गणाश्चविविधैस्तत्रह्यायुधैस्तमपीडयन् ॥
शिवोऽपिचस्वयंतत्रयुद्धंचक्रेसुदारुणम् ॥ २ ॥ अर्जुनश्चतदातेषांबाणावलिमथाऽच्छिनत् ॥ यदायुधंचतैःक्षिप्तंतत्सर्वंचपरामृशत् ॥ ३ ॥ पीडितास्ते

तीरूपस्तदाशंभुर्हृदयेतिष्ठतेमम॥हृदयस्थःशरीरंमेपुनातुजपसिद्धये॥१०॥एवंकृत्वाशिवस्यैवकृत्यंचैवसमाचरेत्॥पितृकार्यंचप्रथमंसूर्यार्घंचततःपरम्
॥११॥गणपस्यततःपूजांपश्चाद्विष्णोस्तथैवच॥भवानीपूजनंचैवकारयेद्विधिवत्पुमान्॥१२॥पश्चाच्चपार्थिवस्यैवविधानंविधिवच्चरेत्॥शुद्धदेशसमुद्भूतांमृ
दमाहारयेत्ततः॥१३॥ओंश्रींअष्टमूर्तयेनमः॥इत्यनेनैवमंत्रेणमृदमादाययत्नतः॥संशोध्यमृत्तिकांतत्रस्थापयेद्विधिवत्पुमान्॥१४॥अथवाकृष्णपक्षस्यचतु
र्दश्यांसमानयेत् ॥ पुनश्चमासमात्रेणह्याहरेत्तावदेवच॥१५॥आचमनंविधायैवप्रयोगंतिथिपूर्वकम् ॥कृत्वान्यासविधिंकुर्यादंगानांकरयोस्तथा॥१६॥तत्र
शिवायअंगुष्ठाभ्यांनमः ॥ भवायतर्जनीभ्यांनमः ॥ शर्वायमध्यमाभ्यांनमः ॥ पशुपतयेअनामिकाभ्यांनमः ॥ महादेवायकनिष्ठिकाभ्यांनमः ॥ ईशाना
यकरतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादिन्यासः ॥ शिवायहृदयायनमः ॥ भवायशिरसेस्वाहा ॥ शर्वायशिखायैवषट् ॥ पशुपतयेकवचायहुम् ॥
महादेवायनेत्रत्रयायवौषट् ॥ ईशानायअस्त्रायफट् ॥ ततोध्यानम् ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसंरत्नाकल्पोज्ज्वलांगंपरशुमृगवरा
भीतिहस्तंप्रसन्नम् ॥ पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रम् ॥ १७ ॥ कर्पूरगौरंकरुणावतारं
संसारसारंभुजगेंद्रहारम् ॥ सदावसंतंहृदयारविंदेभवंभवानीसहितंनमामि ॥ १८ ॥ कैलासपीठासनमध्यसंस्थंभक्तैश्चनंद्यादिभिःसेव्यमानम् ॥ भक्ता
र्तिदावानलमप्रमेयंध्यायेदुमालिंगितविश्वरूपम् ॥ १९ ॥ एवंध्यात्वाहरंपश्चात्पूजनंचसमाचरेत् ॥ अथवा ॥ यथोक्तरूपिणंदेवंध्यायामिचशिवंमुदा ॥
॥ २० ॥ एवंध्यात्वाचयत्कार्यंतदेवश्रूयतांद्विजाः ॥ हरोमहेश्वरोदेवःशूलपाणिःपिनाकधृक् ॥ २१ ॥ पशुपतिःशिवश्चैवयजमानइतिक्रमात् ॥ मृदाह
रणंसंघट्टंप्रतिष्ठाह्वानमेवच ॥ २२ ॥ स्नपनंपूजनंचैवक्षमस्वेतिविसर्जनम् ॥ हरायनमइतिमृदाहरणम् ॥ महेश्वरायनमइतिलिंगसंघट्टनम् ॥ शूलपाणये
नमइतिप्रतिष्ठापनम् ॥ पिनाकपाणयेनमइत्यावाहनम् ॥ कैलासशिखराद्रम्यात्समागच्छममप्रभो ॥ २३ ॥ पूजांचेमांगृहीत्वाचयथोक्तवरदोभव ॥
यथोक्तरूपिणंशंभुमहमावाहयामिच ॥ २४ ॥ आहुतिंतद्दशांशेनभोज्यंचतद्दशांशतः ॥ महोदयंचवृषभंगणान्प्रियतमानथ ॥ २५ ॥ पूजयित्वाचय
त्कृत्यंकुर्याच्चशंकरस्यच ॥ श्रीपशुपतयेनमइतिस्नपनम् ॥नामभिर्विविधैःस्तोत्रैर्मृत्युंजयपुरःसरैः ॥२६॥ स्नापयेच्चशिवंसम्यग्देहिह्यर्घोदकेनच॥श्रीशि
वायनमइतिविविधद्रव्योपसमर्पणम् ॥ धूपंदीपंचनैवेद्यमारात्रिकमतःपरम्॥ २७ ॥यजमानायनमइतिक्षमस्वेतिततःपरम् ॥ पूर्वोक्तंचपुनर्ध्यानंकृत्वातु
जपमारभेत् ॥ २८ ॥ ओंअस्यश्रीसदाशिवमंत्रस्यवामदेवऋषिर्देवीपंक्तिश्छंदः श्रीशिवोदेवताममभुक्तिमुक्तिप्राप्तयेजपेविनियोगः ॥ यथोक्तंगुरुणा
मंत्रंजपेच्चशिवसन्निधौ ॥ अनंतफलसिद्ध्यर्थंजपेच्चविधिवत्पुमान् ॥ २९ ॥ अनन्यमनसातत्रध्यायेद्देवंचत्र्यंबकम् ॥ यथाशक्तिजपंकृत्वातर्पणंत

दशांशकम् ॥ ३० ॥ मार्जनंचदशांशंचकुर्याच्छिवफलेच्छया ॥ अष्टमूर्तिश्चपूज्येतसांगपूजाफलायच ॥ ३१ ॥ शर्वायक्षितिमूर्तयेनमः ॥ भवायजल
मूर्तयेनमः ॥ रुद्रायतेजोमूर्त्तयेनमः ॥ उग्रायवायुमूर्तयेनमः ॥ भीमायाऽऽकाशमूर्तयेनमः ॥ पशुपतयेयजमानमूर्तयेनमः ॥ महादेवायसोममूर्तयेनमः॥
॥ ईशानायसूर्यमूर्तयेनमः ॥ अक्षतैश्चंदनैर्वापिपूजांकुर्यात्सदाबुधः ॥ पश्चान्नृत्यंचगीतंचगल्लनादादिकंतथा ॥ ३२ ॥ पुनश्चाऽक्षतपुष्पंवागृहीत्वांऽ
जलिनातदा ॥ प्रार्थयेच्छंकरंतत्रमंत्रैरेतैर्ऋषीश्वराः ॥ ३३ ॥ तावकस्त्वद्गतप्राणस्त्वच्चित्तोऽहंसदामृड ॥ कृपानिधेइतिज्ञात्वाभूतनाथप्रसीदमे ॥ ३४ ॥
अज्ञानाद्यदिवाज्ञानाज्जपपूजादिकंमया ॥ कृतंतदस्तुसफलंकृपयातवशंकर ॥ ३५ ॥ अहंपापीमहानद्यपावनश्चमहान्भवान् ॥ इतिविज्ञायदेवेशयदि
च्छसितथाकुरु ॥ ३६ ॥ वेदैःपुराणैःसिद्धांतैर्ऋषिभिर्विविधैरपि ॥ नज्ञातोऽसिमहादेवकुतोऽहंत्वांसदाशिव ॥ ३७ ॥ यथातथात्वदीयोऽस्मिसर्वभावै
र्महेश्वर ॥ इत्येवंचाऽक्षतान्पुष्पाण्यारोप्यचशिवोपरि ॥ ३८ ॥ प्रार्थनांविविधांकृत्वाविसृजेच्चशिवंतदा ॥ यथेदानींचदेवेशकृपार्थंसमुपागतः ॥ ३९ ॥
तथात्वयापुनर्देवसमागंतव्यमेवच ॥ पुनर्मासंदिनंगृह्यप्रयोगंचसमाप्यच ॥ ४० ॥ संसारसंभवंकार्यंकुर्याच्चैवविचक्षणः ॥ एवंचैवविधानेनकृतापूजाफ
लप्रदा ॥ ४१ ॥ अलाभेब्राह्मणानांचमंत्रैःपूजांसमाचरेत् ॥ स्वयंचपार्थिवींकुर्यात्पूजासांगंफलंलभेत् ॥ ४२ ॥ तदक्षताशिषंचैवगृह्णीयाच्छंकराज्ञ
या ॥ तस्यन्यूनंभवेन्नैवयेनैवपूजितोहरः ॥ ४३ ॥ षण्मासंयोनरश्चैवपूजाचैवाशिवस्यच ॥ कुर्याच्चविधिवच्छ्रेष्ठोजीवन्मुक्तोभवेन्नरः ॥ ४४ ॥ शापानुग्र
हतातस्यजायतेनाऽत्रसंशयः ॥ तस्यदर्शनमात्रेणाशिवदर्शनजंफलम् ॥४५॥प्राप्नोतिनाऽत्रसंदेहऋषीणांशासनंत्विदम्॥ इत्येवंचसमाख्यातंयथाबुद्ध्य
नुसारतः ॥ ४६ ॥ एवंचक्रियतेसर्वैःकृष्णेंद्रमुनिसत्तमैः ॥ इदंयःशृणुयात्पुण्यंसिद्धिःस्यादनपायिनी ॥ ४७ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहि
तायांपार्थिवपूजाविधानंनामाष्टषष्टितमोध्यायः ॥ ६८ ॥ ॥ ऋषयऊचुः ॥ प्रष्टुमिच्छामहेसूतसर्वज्ञस्त्वंयतःस्मृतः ॥ कृष्णेनोक्तंमयानित्यंसेव्यते
शंकरःप्रभो ॥ १ ॥ कदाचसेवितःसोवैतत्वंब्रूहिविचक्षण ॥ सूतउवाच ॥ श्रूयतांकथयाम्यद्ययथाचसेवितःशिवः ॥ २ ॥ गोकुलान्मथुरांगत्वामारितेमा
तुलेस्वयम् ॥ मोचित्वावसुदेवादीनाहूययादवानथ ॥ ३ ॥ राज्यंचैवोग्रसेनायदत्वाकृष्णःशशासयत ॥ उपवीतंपितुःप्राप्यह्यवंतींगतवांस्तदा ॥ ४ ॥
सांदीपिनिंसमासाद्यततश्चाशिवमंत्रकम् ॥ संप्राप्यतत्प्रभावेनविद्याःसर्वाःस्वयंप्रभुः ॥ ५ ॥ स्वल्पेनैवचकालेनपुत्रंदत्वागुरोरथ ॥ मथुरांचसमायातोदै
त्यैर्युद्धंचकारसः ॥ ६ ॥ दैत्यैश्चसर्वतोव्याप्तानगरीऋषिसत्तमाः ॥ एतस्मिन्नंतरेतेनकारितानगरीशुभा ॥ ७ ॥ समुद्रेयोजनानांतुसंख्ययाद्वादशाव
धि ॥ तत्रतान्योगमायायाःप्रभावात्परमेश्वरः ॥ ८ ॥ गृहकार्यंचतत्रत्यान्सर्वोपकरणैःसह ॥ आरोप्याऽनुग्रहंकृत्वामुचुकुंदंस्वयंगतः ॥ ९ ॥ दैत्यैश्च

गणास्तेनययुश्चैवदिशोदश ॥ गणाश्चवारितास्तेननाजग्मुरर्ज्जुनंप्रति ॥ ४ ॥ शिवश्चैवाऽर्ज्जुनश्चैवयुयुधातेपरस्परम् ॥ शिवोपिमनसानूनंदयांकृ
त्वाऽर्ज्जुनंह्यगात् ॥ ५ ॥ अर्जुनश्चदृढंतत्रप्रहारंकृतवांस्तदा ॥ आयुधानिशिवश्चैवह्यर्जुनस्याऽऽहनत्तदा ॥ ६ ॥ कवचंचहतंतेनशरीरंकेवलंस्थितम् ॥
तदार्जुनःशिवेनैवयुद्धंमल्लसमुद्भवम् ॥ ७ ॥ चकारमेदिनीदुःखंप्राप्तासाससमुद्रका ॥ देवादुःखंसमायाताःकिंभविष्यतिहापुनः ॥ ८ ॥ एतस्मिन्नंतरे
देवःशिवोगगनमास्थितः ॥ युद्धंचकारतत्रस्थोह्यर्ज्जुनश्चतथाऽकरोत् ॥ ९ ॥ उड्डीयोड्डीयतौयुद्धंचक्रतुर्देवपार्थिवौ ॥ अर्जुनोप्यंतरंज्ञात्वादधारपादयोः
शिवम् ॥ १० ॥ धृत्वापादंतदासौवैभ्रामयामासवैतदा ॥ वश्यत्वदर्शनार्थायशिवेनैवंकृतंतदा ॥ ११ ॥ पश्चाद्विहस्यतत्रैवशंकरोरूपमद्भुतम् ॥ दर्श
यामासहस्ताच्चचलित्वासुंदरंशुभम् ॥ १२ ॥ यथोक्तंवेदशास्त्रेणपुराणपुरुषोत्तमम् ॥ तंदृष्ट्वाचऋषिश्रेष्ठाअर्जुनोलज्जितःस्वयम् ॥ १३ ॥ अहोशिवः
शिवःसोऽयंयोमेप्रभुतयावृतः ॥ त्रिलोकीशःस्वयंसाक्षाद्धाकृतंकिंमयाऽधुना ॥ १४ ॥ बलवतीप्रभोर्मायामायिनामपिमोहिनी ॥ किंकृतंरूपमाच्छा
द्यप्रभुणाछलितोह्यहम् ॥ १५ ॥ इतिविचार्यक्षंतव्यंक्षंतव्यंचपुनःपुनः ॥ उवाचपादयोस्तस्यपतित्वाशंकरस्यच ॥ १६ ॥ शंकरोसिमहादेवक्षंतव्यं
चमयाकृतम् ॥ इतिश्रुत्वातदाहास्यंकृत्वाचशंकरःपुनः ॥ १७ ॥ अर्ज्जुनंचसमाश्वास्यभक्तोऽसिपुत्रसत्तम ॥ परीक्षार्थंमयातेऽद्यकृतमेवंशुचंजहि ॥
॥ १८॥ इत्युक्त्वातंचहस्ताभ्यामुत्थाप्यार्ज्जुनमेवच ॥ विलज्जंकारयामासगणैश्चस्वामिनोगुणैः ॥ १९ ॥ पुनःशिवोऽर्ज्जुनंप्राहप्रसन्नोऽस्मिवरंशृणु ॥
प्रहारैस्ताडनंतेऽद्यपूजनंमानितंमयां ॥ २० ॥ इच्छयाचकृतंमेऽद्यनापराधस्तवाऽधुना ॥ नाऽदेयंविद्यतेतुभ्यंयदिच्छसिशृणुष्वतत् ॥ २१ ॥ शत्रुषु
तेयशोराजन्ख्यापनायाद्भुतंकृतम् ॥ दुःखंचैवनकर्तव्यंवैक्लव्यंचत्यजाऽधुना ॥ २२ ॥ इत्युक्तश्चपुनस्तत्रसावधानतयास्थितः ॥ उवाचशंकरंसोवै
प्रभुणाकिंसमीहितम् ॥२३॥ वर्णनीयोमहादेवःकृपालुस्त्वंसदाशिवः ॥ इत्युक्त्वाचस्तुतिंतस्यचकारवेदसंमताम् ॥ २४ ॥ अर्जुनउवाच ॥ नमस्तेदे
वदेवायकैलासवासिनेनमः ॥ सदाशिवनमस्तुभ्यंपंचवक्त्रायतेनमः ॥ २५ ॥ कपर्दिनेनमस्तुभ्यंत्रिनेत्रायनमोस्तुते ॥ कुंडलिनेनमस्तुभ्यंसुमुखायनमो
स्तुते ॥ २६ ॥ प्रसन्नायसदातुभ्यंसहास्यवदनायच ॥ नीलकंठनमस्तुभ्यंसद्योजातायतेनमः ॥ २७ ॥ वृषध्वजनमस्तेस्तुवामांगगिरिजायच ॥
दशभुजायतेदेवनमस्तेपरमात्मने ॥ २८ ॥ डमरुकपालहस्तायनमस्तेरुंडमालिने ॥ शुद्धस्फटिकसंकाशकर्पूरगौरवायच ॥ २९ ॥ पिनाकपाण
येतुभ्यंत्रिशूलवरधारिणे ॥ व्याघ्रचर्मोत्तरीयायगजांबरविधारिणे ॥ ३० ॥ नागांगायनमस्तुभ्यंगंगाधरनमोस्तुते ॥ सुपादायनमस्तेस्तुमुक्तिदायनमो
स्तुते ॥ ३१ ॥ अगुणायनमस्तेस्तुसगुणायनमोस्तुते ॥ यत्किंचिदृश्यतेरूपंतत्तेजस्तावकंस्मृतम् ॥ ३२ ॥ गुणांस्तेदेवसंख्यातुंवेदाश्चप्रभवंतिन ॥

किंपुनर्मंदबुद्धिश्च वर्णयामि सदाशिव ॥ ३३ ॥ योऽसि सोऽसि नमस्तुभ्यं कृपां कर्तुं ममार्हसि ॥ इतिश्रुत्वा पुनः शंभुः प्रोवाचार्जुनमेवचं ॥ ३४ ॥ किंवरं त्वं वृणोषीह शीघ्रं वद ददामि ते॥इत्युक्तश्चार्जुनस्तत्र प्रणिपत्य सदाशिवम् ॥ ३५ ॥ उवाच प्रीयतां त्वं च ह्यंतर्यामितयास्थितः ॥ तथापि व्रियते मेऽद्य श्रूयतां च प्रभो त्वया॥३६॥शत्रूणां संकटं यच्च तद्गतं दर्शनात्तव॥ऐहिकीं च परां सिद्धिं प्राप्नुयां च तथा कुरु॥३७॥इत्युक्त्वा तं नमस्कृत्य बद्धांजलिपुटः स्थितः ॥.शिवोऽपि च तथाभूतं ज्ञात्वा स्वीयं तदा ह्यदात्॥३८॥अस्त्रं पाशुपतं नाम ब्रह्मांडे दुर्जयं परैः॥तस्मै ददौ तदा शंभुर्दुर्जयस्त्वं भविष्यसि ॥ ३९॥ अनेन सर्वशत्रूणां जयं कृत्वा शुभं कुरु॥कृष्णं च कथयिष्यामि साहाय्यं ते करिष्यति॥४०॥सो वै ममांशभूतश्च स ते कार्यं करिष्यति ॥ राज्यं निष्कंटकं प्राप्य धर्मान्नानाविधान्कुरु ॥ ४१ ॥ हस्तं च शिरसि धृत्वा पूजयित्वाऽर्जुनं तदा॥हृदयालिंगनं कृत्वा भक्तवत्सलतां पुनः॥४२॥दर्शयित्वा जयं दत्वा पूजितोंऽतरधीयत॥शिवश्चांऽतर्दधे तत्र ह्यर्जुनोऽपि स्वमाश्रमम् ॥ ४३ ॥ गत्वा हर्षसमायुक्तः प्रणनाम युधिष्ठिरम् ॥ देवदुंदुभयो नेदुः पुष्पवृष्टिः पपात ह॥ ४४ ॥ अप्सरसां तथा नृत्यं जातं तत्रऋषीश्वराः ॥ देवाश्चैव तदा सर्वे ह्यायुधानि ददुः स्वयम् ॥ ४५ ॥ पूजितश्च वरं प्राप्य भ्रातॄनेवाऽगमत्तदा ॥ सर्वे ते भ्रातरश्चैव तन्वाः प्राणमिवाऽऽगतम् ॥ ४६ ॥ मिलित्वा च सुखं प्रापुर्द्रौपदी सुखमालभत् ॥ आश्रमे पुष्पवृष्टिश्च चंदनेन समन्विता ॥ ४७ ॥ पपात शकुनार्थं वै तेषां चैव महात्मनाम् ॥ तेऽपृच्छन्सर्ववृत्तांतं श्रुत्वा हर्षमुपागमन् ॥ ४८ ॥ शिवं परं च संतुष्टं पांडवाः सर्व एव हि ॥ धन्यश्च शंकरश्चैव नमस्कृत्य शिवं मुदा ॥ ४९ ॥ अवधिं चागतं ज्ञात्वा जयश्चैव भविष्यति ॥ एतस्मिन्नंतरे कृष्णः श्रुत्वाऽर्जुनं समागतम् ॥ ५० ॥ मिलनाय समायातः श्रुत्वा सुखमुपागतः ॥ अतश्चैव मया प्रोक्तः शंकरः सर्वदुःखहा॥५१॥ मया च सेव्यते सो वै भवद्भिरपि सेव्यताम् ॥ इत्युक्त्वा च गतस्तत्र कृष्णश्च द्वारकां प्रति ॥ ५२ ॥ ॥ इतिश्रीशिवमहापुराणे ज्ञानसंहितायामर्जुनवरप्रदानं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ऋषय ऊचुः ॥ सूतसूत महाभाग साधूक्तं हि त्वयाऽनघ ॥ विधानं पार्थिवस्यैव यथोक्तमृषिणा तदा ॥ अर्जुनाय सुखार्थं च तत्त्वं ब्रूहि विशेषतः ॥ १ ॥ सूत उवाच ॥ सम्यक्पृष्टमृषिश्रेष्ठास्तदहं कथयामि वः ॥ यदा दुःखं त्वसाध्यं वै जायते ऋषिसत्तमाः ॥ २ ॥ दुःखस्य नाशनायै वसुखार्थं मुक्तये ऽथवा ॥ सद्गुरुं च प्रपद्येत मंत्रं प्राप्य पुनस्ततः ॥ ३ ॥ शुद्धिं चैव शरीरस्य कृत्वा सुविधिवन्नरः ॥ मलोत्सर्गं ततः कृत्वा दंतधावनमाचरेत् ॥४॥ विश्वासं परमं लब्ध्वा शिवस्याराधनं चरेत् ॥ ब्राह्मे मुहूर्त्ते उत्थाय नत्वा च गुरुमेव च ॥ ५ ॥ शिवस्यैवाऽथवा नाम तीर्थानामथवा शुभाः ॥ मुखं प्रक्षाल्य तत्रैव स्नानकालावधि स्वयम् ॥ ६ ॥ आचमनं ततः कृत्वा मंत्रैर्नामपदैरपि ॥ तिलकं च तदा कृत्वा द्वादशांगेषु वै नरः ॥ ७ ॥ शास्त्रोक्तं च तथा नित्यं संपाद्य विधिवत्पुमान् ॥ भूतशुद्धिं विधायैव प्रतिष्ठां प्राणसंभवाम् ॥ ८ ॥ कृत्वा च सेवनं तस्या सिद्धिदं सर्वदा नृणाम् ॥ मंत्रेणाऽनेन तत्सर्वं संपाद्य ऋषिसत्तमाः ॥ ९ ॥ ज्यो

पीडितःसोऽपितत्रैवबलवत्तरैः ॥ कदाचित्पर्वतेतत्रनाम्नावैरैवतेततः ॥ १० ॥ उपमन्युंशिवगणंभक्तंचैवशिवस्यच ॥ पप्रच्छपरमंप्रीत्याकथंलोकेजया
म्यहम् ॥ ११ ॥ इतिश्रुत्वातुतस्यैववचनंगणसत्तमः ॥ त्वमपिविष्णुरूपोऽसिकथंनसेवसेशिवम् ॥ १२ ॥ सदासहायःशर्वश्चविद्यतेतवनिश्चितम् ॥ स
र्वंत्वंप्राप्स्यसेतस्मात्पूजांकुरुनिरंतरम् ॥ १३ ॥ इत्येवंचततःप्राप्यमंत्रमाराधनंकविः ॥ सेवयामासविप्रेंद्राःसप्तमासावधिस्वयम् ॥ १४ ॥ कुसुमैर्वि
विधैस्तंवैसेवयामासशंकरम् ॥ कमलैर्बिल्वपत्रैश्चशतपत्रैःकुशैस्तथा ॥ १५ ॥ करवीरैश्चदूर्वाभिरर्कपुष्पैःकुशेशयैः ॥ शंखीपुष्पैस्तथादेवंसंतोष्यपुरु
षोत्तमम् ॥ १६ ॥ आसनैर्विविधैर्ध्यानैःप्रसन्नःशंकरस्तदा ॥ उवाचकृष्णंतत्रैववव्रियतांवरमुत्तमम् ॥ १७ ॥ ततःप्रसन्नमनसावासुदेवोह्युवाचह ॥
॥ श्रीभगवानुवाच ॥ सांप्रतंसकलंमेऽद्यप्रभावात्तवशंकर ॥ १८ ॥ दैत्यैश्चपीडितश्चाऽहंत्वामहंशरणंगतः ॥ पूर्वैश्चसेवितःशंभुर्ब्रह्मणासेव्यतेधुना॥१९॥
एवंचप्रार्थितस्तेनपुनःप्रोवाचवैशिवः ॥ धनंधान्यंतथापुत्रान्स्त्रियश्चविविधास्तथा ॥ २० ॥ सामर्थ्यंह्यतुलंतेद्यभवतुसर्वथाहरे ॥ भवान्याविविधंतस्य
फलंदत्तंमुनीश्वराः ॥ २१ ॥ तदीयंतद्वचःश्रुत्वाआनंदंपरमंगतः ॥ पूर्वंचैवत्वयैवाहंपालितोदेवसत्तम ॥ २२ ॥ चक्रंसुदर्शनंनामदत्तंचप्रभुणात्वया ॥
तेनैवसर्वदेवादीञ्जयामिचनिरंतरम् ॥ २३ ॥ इदानींचत्वयादत्तंफलंचैवमनीप्सितम् ॥ इत्युक्त्वापूजितस्तेनप्रसन्नःपरमेश्वरः ॥ २४ ॥ गच्छकृष्णशुभं
तेऽद्यवर्धयिष्येनिरंतरम् ॥ तदाज्ञप्तःस्वयंकृष्णोजगामद्वारकांप्रति ॥ २५ ॥ संतुष्टमनसासर्वंपालयामासवैतदा ॥ बिल्वेश्वरश्चनाम्नावैजातस्तत्रसुशोभ
नः ॥ २६ ॥ अद्यापिवर्ततेसोवैलोकानांसुखदायकः ॥ सप्तमासावधिस्तेननित्यंबिल्वदलानिच ॥ २७ ॥ समर्पितानिदेवेशतस्माद्बिल्वेश्वरःस्मृतः ॥
उत्तार्यचशिवात्तत्रक्षिप्तानिह्येकतःप्रभो ॥ २८ ॥ ततःखंडात्स्वयंदेवःसंजातोऽनुग्रहायच ॥ तत्प्रार्थितस्तदातत्रतस्थौलोकहितायच ॥ २९ ॥
तद्दिनंहिसमारभ्यकृष्णेनपरमात्मना ॥ सेव्यतेशंकरोनित्यंभुक्तिमुक्तिफलप्रदः ॥ ३० ॥ एतत्सर्वंसमाख्यातंयत्पृष्टोहंमुनीश्वराः ॥ यच्छ्रुत्वासर्वपापे
भ्योमुच्यतेमानवोध्रुवम् ॥ ३१ ॥ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांशिवसाधनविधिर्नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ऋषयऊचुः ॥
सूतत्वंसर्वंजानासिपुनःपृच्छामहेशृणु ॥ कथंसुदर्शनंप्राप्तंविष्णुनाप्रभविष्णुना ॥ १ ॥ कथंतुष्टस्तदाशंभुश्चक्रंचदत्तवान्यदा ॥ इत्येवंवचनंश्रुत्वासूतो
वचनमब्रवीत् ॥ २ ॥ सूतउवाच ॥ श्रूयतांचऋषिश्रेष्ठाःकथयामियथाश्रुतम् ॥ कस्मिंश्चित्समयेदैत्याःसंजाताबलवत्तराः ॥ ३ ॥ पीडयामासुस्तॉंल्लो
कान्धर्मंलोपंतथापुनः ॥ तेदेवाःपीडिताविष्णुंप्रार्थयामासुर्वैतदा ॥ ४ ॥ कृपांकुरुप्रभोत्वंचमारितादैत्यकैर्वयम् ॥ कुत्रयामश्चकिंकुर्मःशरण्यंत्वांसमाग
ताः ॥ ५ ॥ इत्येवंवचनंश्रुत्वाविष्णुर्वचनमाददे ॥ करिष्यामिवचःकार्यमाराध्यशंकरंपुनः ॥ ६ ॥ बलिष्ठाःशत्रवोह्येतेविजेतव्याःप्रयत्नतः ॥ इत्युक्त्वा

स्तेतदात्वेचययुर्धामस्वकंस्वकम् ॥ ७ ॥ विष्णुरपिसुराणांतुजयार्थंचाऽभजच्छिवम् ॥ कैलासनिकटेगत्वातपस्तेपेस्वयंहरिः ॥ ८ ॥ कृत्वाकुंडंचसं
स्थाप्यजातवेदसमग्रतः ॥ पार्थिवेनविधानेनमंत्रैर्नानाविधैरपि ॥ ९ ॥ स्तोत्रैश्चैवाऽप्यनेकैश्चभेजेचशंकरंमुदा ॥ कमलैःसरसोजातैर्मानसाख्यान्मुनीश्व
राः ॥ १० ॥ बद्ध्वाचैवाऽऽसनंतत्रनचचालहरिःस्वयम् ॥ प्रसन्नावधिमेवाऽत्रस्थेयंचसर्वथामया ॥ ११ ॥ इत्येवंनिश्चयंकृत्वापूजयामासवैहरिः ॥
यदानैवहरस्तुष्टोविचारेतत्परोहरिः ॥ १२ ॥ विचार्यैवतपःकष्टंतेनैवबहुधाकृतम् ॥ सेवनंबहुविधंकृत्वापूजनंबहुधाकृतम् ॥ १३ ॥ तथापिनयदातुष्टः
सहस्रैर्नामभिस्ततः ॥ प्रत्येकंकमलंतस्मैनाममंत्रमुदीर्यच ॥ १४ ॥ समर्पयन्प्रभोर्मूर्ध्निप्रत्यहंपरयामुदा ॥ पूजयामासवैशंभुंतदाचशंकरेणच ॥
॥ १५ ॥ तद्भक्तेश्चपरीक्षार्थंकृतंतच्छ्रूयतामिति ॥ कमलानांसहस्रात्तुहृतमेकंहरेणच ॥ नज्ञातंविष्णुनातच्चमायाकरणमद्भुतम् ॥ १६ ॥ न्यूनंतच्चापि
तज्ज्ञात्वानेत्रमेकमुदाहृतम् ॥ तद्दृष्ट्वाचप्रसन्नोऽभूच्छंकरःसर्वदुःखहा ॥ १७ ॥ प्रसन्नोऽस्मिवरंब्रूहिनाऽदेयंविद्यतेतव ॥ तदाहर्षसमापन्नोह्यब्रवीद्व
चनंपुनः ॥ १८ ॥ याच्यतेकिंत्वदग्रेचह्यंतर्यामितयास्थितः ॥ दैत्यैश्चपीडितंविश्वंसुखंतस्मैसदाशिव ॥ १९ ॥ दैत्यान्हंतुंकथंदेवह्यायुधंनप्रवर्तते ॥
किंकरोमिक्वगच्छामिशरणंत्वांसमागतः ॥ २० ॥ इत्युक्त्वाचनमस्कृत्यशिवायपरमात्मने ॥ स्थितश्चैवाऽग्रतोदेवःस्वयंचाऽसुरपीडितः ॥ २१ ॥
तदातस्मैस्वयंशंभुश्चक्रंचदत्तवान्प्रभुः ॥ तेनैवपीडतेविष्णुर्दैत्यांश्चबलवत्तरान् ॥ २२ ॥ इतितस्यवचःश्रुत्वापुनरूचुर्ऋषीश्वराः ॥ किंतन्नामसहस्रं
चकथयत्वंसुशोभनम् ॥२३॥येनतुष्टःस्वयंदेवोहरःसाक्षान्महेश्वरः ॥ चक्रंचदत्तवांस्तस्मैहरयेप्रीतमानसः ॥ इतितेषांवचःश्रुत्वासूतोवचनमब्रवीत् ॥
॥ २४ ॥ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांविष्णुसुदर्शनदानंनामसप्ततितमोऽध्यायः ॥ ७० ॥ सूतउवाच ॥ श्रूयतामृषयः श्रेष्ठाःकथयामि
यथाश्रुतम् ॥ विष्णुनाप्रार्थितोयेनसंतुष्टःपरमेश्वरः ॥ तदहंकथयाम्यद्यपुण्यंनामसहस्रकम् ॥ १ ॥ श्रीविष्णुरुवाच ॥ शिवोहरोमृडोरुद्रःपुष्करःपुष्प
लोचनः ॥ अर्थिगम्यःसदाचारःशर्वःशंभुर्महेश्वरः ॥ २ ॥ चंद्रापीडश्चंद्रमौलिर्विश्वंविश्वामरेश्वरः ॥ वेदांतसारसंदोहःकपालीनीललोहितः ॥ ३ ॥
ध्यानाधारोऽपरिच्छेद्योगौरीभर्त्तागणेश्वरः ॥ अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गस्वर्गसाधनः ॥ ४ ॥ ज्ञानगम्योदृढप्रज्ञोदेवदेवस्त्रिलोचनः ॥ वामदेवोमहादेवःपटुः
परिवृढोदृढः ॥ ५ ॥ विश्वरूपोविरूपाक्षोवागीशःशुचिसत्तमः ॥ सर्वप्रमाणसंवादीवृषाङ्कोवृषवाहनः ॥६॥ईशःपिनाकीखट्वांगीचित्रवेषश्चिरंतनः॥तमोहरो
महायोगीगोप्ताब्रह्माचधूर्जटिः ॥ ७ ॥ कालकालःकृत्तिवासाःसुभगःप्रणवात्मकः ॥ उन्नध्रःपुरुषोजुष्योदुर्वासाःपुरशासनः ॥ ८ ॥ दिव्यायुधःस्कंदगुरुः
परमेष्ठीपरात्परः॥अनादिमध्यनिधनोगिरीशोगिरिजाधवः ॥९॥ कुबेरबंधुःश्रीकंठोलोकवर्णोत्तमोमृदुः ॥ समाधिवेद्यःकोदंडीनीलकंठःपरस्वधी ॥१०॥

विशालाक्षोमृगव्याधःसुरेशःसूर्यतापनः॥धर्मधामक्षमाक्षेत्रंभगवान्भगनेत्रभित्॥११॥उग्रःपशुपतिस्तार्क्ष्यःप्रियभक्तःपरंतपः ॥ दातादयाकरोदक्षःकर्मदी
कामशासनः॥१२॥श्मशाननिलयःसूक्ष्मःश्मशानस्थोमहेश्वरः॥लोककर्त्तामृगपतिर्महाकर्त्तामहौषधिः ॥ १३ ॥उत्तरोगोपतिर्गोप्ताज्ञानगम्यःपुरातनः ॥
नीतिःसुनीतिःशुद्धात्मासोमःसोमरतःसुखी॥१४॥सोमपोऽमृतपःसौम्योमहातेजामहाद्युतिः॥तेजोमयोऽमृतमयोऽन्नमयश्चसुधापतिः॥१५ ॥अजातशत्रुरा
लोकःसंभाव्योहव्यवाहनः॥लोककरोवेदकरःसूत्रकारःसनातनः॥१६॥महर्षिःकपिलाचार्योविश्वदीप्तिर्विलोचनः॥ पिनाकपाणिर्भूदेवःस्वस्तिदःस्वस्तिकृ
त्सुधीः॥१७॥धातृधामाधामकरःसर्वगःसर्वगोचरः॥ब्रह्मसृग्विश्वसृक्सर्गःकर्णिकारःप्रियःकविः॥१८॥शाखोविशाखोगोशाखःशिवोभिषगनुत्तमः ॥ गंगाप्लु
वोदकोभव्यःपुष्कलःस्थपतिःस्थिरः ॥१९॥ विजितात्माविषयात्माभूतवाहनसारथिः ॥ सगणोगणकायश्चसुकीर्तिश्छिन्नसंशयः ॥ २० ॥ कामदेवःका
मपालोभस्मोद्धूलितविग्रहः ॥ भस्मप्रियोभस्मशायीकामीकांतःकृतागमः ॥ २१ ॥ समावर्तोनिवृत्तात्माधर्मपुंजःसदाशिवः ॥ अकल्मषश्चतुर्बाहुर्दुरा
वासोदुरासदः ॥ २२ ॥ दुर्लभोदुर्गमोदुर्गःसर्वायुधविशारदः ॥ अध्यात्मयोगनिलयःसुतंतुस्तंतुवर्धनः॥ २३ ॥शुभांगोलोकसारंगोजगदीशोजनार्दनः ॥
भस्मशुद्धिकरोमेरुरोजस्वीशुद्धविग्रहः ॥२४॥ असाध्यःसाधुसाध्यश्चभृत्यमर्कटरूपधृक् ॥ हिण्यरेताःपौराणोरिपुजीवहरोबलः ॥२५ ॥ महाह्रदोमहा
गर्त्तःसिद्धवृंदारवंदितः ॥ व्याघ्रचर्मांबरोव्यालीमहाभूतोमहानिधिः ॥ २६ ॥ अमृताशोऽमृतवपुःपांचजन्यःप्रभंजनः ॥ पंचविंशतितत्वस्थःपारिजातः
परावरः ॥ २७ ॥ सुलभःसुव्रतःशूरोब्रह्मवेदनिधिर्निधिः ॥ वर्णाश्रमगुरुर्वर्णीशत्रुजिच्छत्रुतापनः ॥ २८ ॥ आश्रमःक्षपणःक्षामोज्ञानवानचलेश्वरः ॥
प्रमाणभूतोदुर्ज्ञेयःसुपर्णोवायुवाहनः ॥ २९ ॥ धनुर्धरोधनुर्वेदोगुणराशिर्गुणाकरः ॥ सत्यःसत्यपरोदीनोधर्मांगोधर्मसाधनः ॥ ३० ॥ अनंतदृष्टिरानंदो
दंडोदमयितादमः ॥ अभिवाद्योमहामायोविश्वकर्माविशारदः ॥ ३१ ॥ वीतरागोविनीतात्मातपस्वीभूतभावनः ॥ उन्मत्तवेषःप्रच्छन्नोजितकामोऽजि
तप्रियः ॥ ३२ ॥ कल्याणप्रकृतिःकल्पःसर्वलोकप्रजापतिः ॥ तरस्वीतारकोधीमान्प्रधानप्रभुरव्ययः ॥ ३३ ॥ लोकपालोऽतर्हितात्माकल्पादिःकम
लेक्षणः ॥ वेदशास्त्रार्थतत्वज्ञोऽनियमोनियताश्रयः ॥ ३४ ॥ चंद्रःसूर्यःशनिःकेतुर्वरांगोविद्रुमच्छविः ॥ भक्तिवश्यःपरब्रह्ममृगबाणार्पणोऽनघः ॥ ३५ ॥
अद्रिरद्र्यालयःकांतःपरमात्माजगद्गुरुः ॥ सर्वकर्मालयस्तुष्टोमंगल्योमंगलावृतः ॥ ३६ ॥ महातपादीर्घतपाःस्थविष्ठःस्थविरोध्रुवः ॥ अहःसंवत्सरोव्या
प्तिःप्रमाणंपरमंतपः ॥३७॥ संवत्सरकरोमंत्रप्रत्ययःसर्वदर्शनः ॥ अजःसर्वेश्वरःसिद्धोमहारेतामहाबलः ॥ ३८॥ योगीयोग्योमहातेजाःसिद्धिःसर्वादिरग्र
हः ॥ वसुर्वसुमनाःसत्यःसर्वपापहरोहरः ॥ ३९ ॥ सुकीर्तिःशोभनःश्रीमानवाङ्मनसगोचरः ॥ अमृतःशाश्वतःशांतोबाणहस्तःप्रतापवान् ॥ ४० ॥

कमंडलुधरो धन्वी वेदांगो वेदविन्मुनिः ॥ भ्राजिष्णुर्भोजनं भोक्तालोकनाथोदुराधरः ॥ ४१ ॥ अतींद्रियोमहामायःसर्ववासश्चतुष्पथः ॥ कालयो
गी महानादो महोत्साहो महाबलः ॥ ४२ ॥ महाबुद्धिर्महावीर्यो भूतचारी पुरंदरः ॥ निशाचरःप्रेतचारी महाशक्तिर्महाद्युतिः ॥ ४३ ॥ अनिर्देश्यव
पुःश्रीमान्सर्वाचार्यमनोगतिः ॥ बहुश्रुतोमहामायो नियतात्मा ध्रुवोऽध्रुवः ॥ ४४ ॥ ओजस्तेजोद्युतिधरो नर्तकःसर्वशासकः ॥ नृत्यप्रियो नृत्यनित्यः
प्रकाशात्मा प्रकाशकः ॥४५॥ स्पष्टाक्षरो बुधो मंत्रः समानःसारसंप्लवः ॥ युगादिकृद्युगावर्तो गंभीरो वृषवाहनः ॥४६॥इष्टो विशिष्टः शिष्टेष्टः शलभः
शरभो धनुः ॥ तीर्थरूपस्तीर्थनामा तीर्थादृश्यः स्तुतोर्थदः ॥४७॥ अपांनिधिरधिष्ठानं विजयो जयकालवित् ॥ प्रतिष्ठितः प्रमाणज्ञोहिरण्यकवचो
हरिः ॥४८॥ विमोचनःसुरगणोविद्येशोबिंदुसंश्रयः ॥ बालरूपोबलोन्मत्तोविकर्तागहनोगुहः ॥४९॥करणंकारणंकर्तासर्वबंधविमोचनः ॥ व्यवसायोव्यव
स्थानःस्थानदोजगदादिजः ॥५०॥ गुरुदोललितोऽभेदोभवात्मात्मनिसंस्थितः ॥वीरेश्वरोवीरभद्रोवीरासनविधिर्विराट् ॥५१॥ वीरचूडामणिर्वेत्तातीव्रा
नंदोनदीधरः ॥ आज्ञाधारस्त्रिशूलीचशिपिविष्टःशिवालयः ॥ ५२ ॥ वालखिल्योमहाचापस्तिग्मांशुर्बधिरःखगः ॥ अभिरामःसुशरणःसुब्रह्मण्यःसुधा
पतिः ॥ ५३ ॥ मघवान्कौशिकोगोमान्विरामःसर्वसाधनः ॥ ललाटाक्षोविश्वदेहःसारःसंसारचक्रभृत् ॥ ५४ ॥ अमोघदंडोमध्यस्थोहिरण्योब्रह्मवर्चसी॥
परमार्थःपरोमायीशंबरोव्याघ्रलोचनः॥५५॥रुचिर्विरंचिःस्वर्बंधुर्वाचस्पतिरहर्पतिः ॥ रविर्विरोचनःस्कंदःशास्तावैवस्वतोयमः ॥५६॥ युक्तिरुन्नतकीर्त्ति
श्सानुरागःपरंजयः ॥ कैलासाधिपतिःकांतःसवितारविलोचनः ॥ ५७ ॥ विद्वत्तमोवीतभयोविश्वभर्ताऽनिवारितः ॥ नित्योनियतकल्याणःपुण्यश्रवण
कीर्तनः ॥ ५८ ॥ दूरश्रवाविश्वसहोध्येयोदुःस्वप्ननाशनः ॥ उत्तारणोदुष्कृतिहाविज्ञेयोदुःसहोऽभवः ॥५९॥ अनादिर्भूर्भुवोलक्ष्मीःकिरीटीत्रिदशाधिपः॥
विश्वगोप्ताविश्वकर्तासुवीरोरुचिरांगदः ॥ ६० ॥ जननोजनजन्मादिःप्रीतिमान्नीतिमान्धवः ॥ वसिष्ठःकश्यपोभानुर्भीमोभीमपराक्रमः ॥ ६१ ॥ प्रणवः
सत्पथाचारोमहाकाशोमहाधनः ॥ जन्माधिपोमहादेवःसकलागमपारगः ॥ ६२ ॥ तत्त्वंतत्त्वविदेकात्माविभुर्विश्वविभूषणः ॥ ऋषिर्ब्राह्मणऐश्वर्यजन्म
मृत्युजरातिगः ॥ ६३ ॥ पंचयज्ञसमुत्पत्तिर्विश्वेशोविमलोदयः ॥ आत्मयोनिरनाद्यंतोवत्सलोभक्तलोकधृक् ॥ ६४ ॥ गायत्रीवल्लभःप्रांशुर्विश्वावासः
प्रभाकरः ॥ शिशुर्गिरिरतःसम्राट्सुषेणःसुरशत्रुहा ॥ ६५ ॥ अमोघोऽरिष्टनेमिश्चकुमुदोविगतज्वरः ॥ स्वयंज्योतिस्तनुज्योतिरात्मज्योतिरचंचलः ॥
॥ ६६ ॥ पिंगलःकपिलश्मश्रुर्भालनेत्रस्त्रयीतनुः ॥ ज्ञानस्कंदोमहानीतिर्विश्वोत्पत्तिरुपप्लवः ॥ ६७ ॥ भगोविवस्वानादित्योयोगपारोदिवस्पतिः ॥
कल्याणगुणनामाचपापहापुण्यदर्शनः ॥ ६८ ॥ उदारकीर्तिरुद्योगीसद्योगीसदसन्मयः ॥ नक्षत्रमालीनाकेशःस्वाधिष्ठानपदाश्रयः ॥ ६९ ॥

पवित्रःपापहारीचमणिपूरोनभोगतिः ॥ हृत्पुंडरीकमासीनःशक्रःशांतोवृषाकपिः ॥ ७० ॥ उष्णोगृहपतिःकृष्णःसमर्थोऽनर्थनाशनः ॥ अधर्मशत्रु
रज्ञेयःपुरुहूतःपुरुश्रुतः ॥ ७१ ॥ ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः ॥ जगद्धितैषीसुगतःकुमारःकुशलागमः ॥ ७२ ॥ हिरण्यवर्णो ज्योतिष्मान्ना
नाभूतरतो ध्वनिः ॥ अरागो नयनाध्यक्षोविश्वामित्रोधनेश्वरः ॥ ७३ ॥ ब्रह्मज्योतिर्वसुधामा महाज्योतिरनुत्तमः ॥ मातामहोमातरिश्वा नभस्वान्नागहा
रधृक्॥ ७४ ॥ पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः ॥ निरावरणनिर्वारो वैरंच्यो विष्टरश्रवाः ॥ ७५ ॥ आत्मभूरनिरुद्धोऽत्रिर्ज्ञानमूर्तिर्महाय
शाः ॥ लोकवीराग्रणीर्वीरश्चंडःसत्यपराक्रमः ॥ ७६ ॥ व्यालाकल्पोमहाकल्पःकल्पवृक्षःकलाधरः ॥ अलंकरिष्णुरचलोरोचिष्णुर्विक्रमोन्नतः ॥७७॥
आयुःशब्दपतिर्वेगीप्लवनःशिखिसारथिः ॥ असंसृष्टोऽतिथिःशक्रप्रमाथीपादपासनः ॥ ७८ ॥ वसुश्रवाहव्यवाहःप्रतप्ताविश्वभोजनः ॥ जप्योजरादिश
मनोलोहितात्मातनूनपात् ॥ ७९ ॥ बृहदश्वोनभोयोनिःसुप्रतीकस्तमिस्रहा ॥ निदाघस्तपनोमेघःस्वक्षःपरपुरंजयः ॥ ८० ॥ सुखानिलःसुनिष्पन्नः
सुरभिःशिशिरात्मकः ॥ वसंतोमाधवोग्रीष्मोनभस्योबीजवाहनः ॥ ८१ ॥ अंगिरागुरुरात्रेयोविमलोविश्वपावनः ॥ पावनःसुमतिर्विद्वांस्त्रैविद्योनरवाह
नः ॥ ८२ ॥ मनोबुद्धिरहंकारःक्षेत्रज्ञःक्षेत्रपालकः ॥ जमदग्निर्बलनिधिर्विगालोविश्वगालवः ॥ ८३ ॥ अघोरोऽनुत्तरोयज्ञःश्रेयोनिःश्रेयसांपथः ॥ शैलो
गगनकुंदाभोदानवारिररिंदमः ॥ ८४ ॥ रजनीजनकश्चारुविशल्योलोककल्पधृक् ॥ चतुर्वेदश्चतुर्भावश्चतुरश्चतुरप्रियः ॥ ८५ ॥ आम्नायोऽथसमाम्नाय
स्तीर्थदेवशिवालयः ॥ बहुरूपोमहारूपःसर्वरूपश्चराचरः ॥ ८६ ॥ न्यायनिर्मायकोन्यायीन्यायगम्योनिरंतरः॥सहस्रमूर्धादेवेंद्रःसर्वशस्त्रप्रभंजनः॥८७॥
मुंडोविरूपोविक्रांतोदंडीदांतोगुणोत्तमः ॥ पिंगलाक्षोजनाध्यक्षोनीलग्रीवोनिरामयः ॥ ८८ ॥ सहस्रबाहुःसर्वेशःशरण्यःसर्वलोकधृक् ॥ पद्मासनःपरं
ज्योतिःपरंपारःपरंफलम् ॥ ८९ ॥ पद्मगर्भोमहागर्भोविश्वगर्भोविचक्षणः ॥ चराचरज्ञोवरदोवरेशस्तुमहाबलः ॥ ९० ॥ देवासुरगुरुर्देवोदेवासुरमहाश्र
यः॥देवादिदेवोदेवाग्निर्देवाग्निसुखदःप्रभुः॥९१॥देवासुरेश्वरोदिव्योदेवासुरमहेश्वरः॥देवदेवमयोऽचिंत्योदेवदेवात्मसंभवः॥९२॥ सद्योनिरसुरव्याघ्रोदेवसिं
होदिवाकरः ॥ विबुधाग्रवरश्रेष्ठःसर्वदेवोत्तमोत्तमः ॥ ९३ ॥ शिवज्ञानरतःश्रीमाञ्छिखिश्रीपर्वतप्रियः ॥ वज्रहस्तःसिद्धखड्गीनरसिंहनिपातनः ॥ ९४ ॥
ब्रह्मचारीलोकचारीधर्मचारीधनाधिपः॥नंदीनंदीश्वरोऽनंतोनग्नव्रतधरःशुचि॥९५॥लिंगाध्यक्षःसुराध्यक्षोयोगाध्यक्षोयुगावहः॥स्वधर्माःस्वर्गतःस्वर्गःस्वरः
स्वरमयःस्वनः॥९६॥बाणाध्यक्षोबीजकर्ता धर्मकृद्धर्मसंभवः॥दंभोलोभोऽर्थविच्छंभुः सर्वभूतमहेश्वरः॥९७॥श्मशाननिलयस्त्र्यक्षः सेतुरप्रतिमाकृतिः॥
लोकोत्तरस्फुटालोकस्त्र्यंबकोनागभूषणः ॥ ९८ ॥ अंधकारिर्मखद्वेषी विष्णुकंधरपातनः ॥ हीनदोषोऽक्षयगुणो दक्षारिः पूषदंतभित् ॥ ९९॥ धूर्जटिः

खंडपरशुः सकलो निष्कलोऽनघः ॥ अकालः सकलाधारः पांडुराभो मृडो नटः ॥ १०० ॥ पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः ॥ सामगे यप्रियोऽक्रूरः पुण्यकीर्तिरनामयः ॥ १०१ ॥ मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः ॥ जीवितांतकरो नित्यो वसुरेता वसुप्रदः ॥ २ ॥ सद्गतिः सत्कृतिः सिद्धिः सज्जातिः कालकंटकः ॥ कलाधरो महाकालो भूतसत्यपरायणः ॥ ३ ॥ लोकलावण्यकर्ताचलोकोत्तरसुखालयः ॥ चंद्रसंजीवनः शास्ता लोकगूढो महाधिपः ॥ ४ ॥ लोकबंधुर्लोकनाथः कृतज्ञः कीर्तिभूषणः ॥ अनपायोऽक्षरः कांतः सर्वशस्त्रभृतांवरः ॥ ५ ॥ तेजोमयो द्युतिधरो लोकानामग्रणीरणुः ॥ शुचिस्मितः प्रसन्नात्मा दुर्जेयोदुरतिक्रमः ॥ ६ ॥ ज्योतिर्मयोजगन्नाथो निराकारो जलेश्वरः ॥ तुंबवीणो महाकोपो विशोकः शोकनाशनः ॥ ७ ॥ त्रिलोकपस्त्रिलोकेशः सर्वशुद्धिरधोक्षजः ॥ अव्यक्तलक्षणो देवोव्यक्ताव्यक्तो विशांपतिः ॥ ८ ॥ वरशीलो वरगुणः सारो मान धनोमयः ॥ ब्रह्मा विष्णुः प्रजापालोहंसो हंसगतिर्वयः ॥ ९ ॥ वेधा विधाता धाता च स्रष्टा हर्त्ता चतुर्मुखः ॥ कैलासशिखरावासी सर्वावासी सदाग तिः ॥ ११० ॥ हिरण्यगर्भो द्रुहिणो भूतपालोऽथभूपतिः ॥ सद्योगी योगविद्योगी वरदोब्राह्मणप्रियः ॥ ११ ॥ देवप्रियो देवनाथो दैवज्ञो देवचिंतकः ॥ विषमाक्षो विशालाक्षो वृषदो वृषवर्धनः ॥ १२ ॥ निर्ममोनिरहंकारो निर्मोहो निरुपद्रवः ॥ दर्पहा दर्पदोद्दृप्तः सर्वर्तुपरिवर्त्तकः ॥ १३ ॥ सहस्रजित्सहस्रार्चिः स्निग्धप्रकृतिदक्षिणः ॥ भूतभव्यभवन्नाथः प्रभवो भूतिनाशनः ॥ १४ ॥ अर्थोऽनर्थो महाकोशःपरकार्यैकपंडितः ॥ निष्कंटकः कृतानंदोनिर्व्याजो व्या जमर्दनः ॥ १५ ॥ सत्ववान्सात्विकः सत्यकीर्तिः स्नेहकृतागमः ॥ अकंपितो गुणग्राही नैकात्मानैककर्मकृत् ॥ १६ ॥ सुप्रीतः सुमुखः सूक्ष्मः सुकरो दक्षिणानिलः ॥ नंदिस्कंधधरो धुर्यः प्रकटः प्रीतिवर्धनः ॥ १७ ॥ अपराजितः सर्वसत्वो गोविंदः सत्ववाहनः ॥ अधृतः स्वधृतः सिद्धः पूतमूर्तिर्यशोधनः ॥ १८ ॥ वाराहशृंगधृक्छृंगीबलवानेकनायकः ॥ श्रुतिप्रकाशः श्रुतिमानेकबंधुरनेककृत् ॥ १९ ॥ श्रीवत्सल शिवारंभः शांतभद्रः समो यशः ॥ भूशयो भूषणो भूतिर्भूतकृद्भूतभावनः ॥ १२० ॥ अकंपो भक्तिकायस्तुकालहानीललोहितः ॥ सत्यव्रतमहात्यागी नित्यशांतिपरायणः ॥ २१ ॥ परार्थवृत्तिर्वरदो विविक्षुस्तुविशारदः ॥ शुभदः शुभकर्ताचशुभनामा शुभः स्वयम् ॥ २२ ॥ अनर्थितोऽगुणः साक्षीह्यकर्ता कनकप्रभः ॥ स्वभावभद्रो मध्यस्थःशीघ्रगःशीघ्रनाशनः ॥ २३ ॥ शिखंडी कवची शूली जटी मुंडी च कुंडली ॥ अमृत्युः सर्वदृक्सिंहस्तेजोराशिर्महामणिः ॥ २४ ॥ असंख्येयो ऽप्रमेयात्मा वीर्यवान्वीर्यकोविदः ॥ वेद्यश्चैववियोगात्मा परावरमुनीश्वरः ॥ २५ ॥ अनुत्तमो दुराधर्षो मधुरप्रियदर्शनः ॥ सुरेशः शरणं सर्वःशब्दब्रह्म सतांगतिः ॥ २६ ॥ कालपक्षःकालकारी कंकणीकृतवासुकिः ॥ महेष्वासो महीभ

र्ता निष्कलंको विशृंखलः ॥ २७ ॥ द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धसाधनः ॥ विश्वतःसंवृतस्तुत्यो व्यूढोरस्को महाभुजः ॥ २८ ॥ सर्व योनिर्निरातंकोनरनारायणप्रियः॥निर्लेपो निष्प्रपंचात्मा निर्व्यंगोव्यंगनाशनः॥२९॥स्तव्यःस्तवप्रियः स्तोतांव्यासमूर्तिर्निरंकुशः ॥ निरवद्यमयोपायो विद्याराशी रसप्रियः ॥ १३० ॥ प्रशांतबुद्धिरक्षुण्णःसंग्रही नित्यसुंदरः ॥ वैयाघ्रधुर्यो धात्रीशः शाकल्यःशर्वरीपतिः ॥ ३१ ॥ परमार्थगुरुर्दृष्टिःशरी राश्रितवत्सलः ॥ सोमोरसज्ञो रसदःसर्वसत्वावलंबनः ॥ ३२ ॥ एवंनाम्नांसहस्रेणतुष्टाववृषभध्वजम् ॥ प्रार्थयामासशंभुंचपूजयामासपंकजैः ॥ ३३ ॥ परीक्षार्थंहरेस्त्वीशःकमलेषुमहेश्वरः ॥ गोपयामासकमलंतदेकंभुवनेश्वरः ॥ ३४ ॥ हृदिविचारितंतेनकुतोवैकमलंगतम् ॥ यातुयातुसुखेनैवनेत्रंकिंक मलंनहि ॥ ३५ ॥ ज्ञात्वातुनेत्रमुद्धृत्यसर्वसत्वावलंबनम् ॥ पूजयामासभावेनस्तवेनाऽनेनसर्वथा ॥ ३६ ॥ मामेतिव्याहरन्नेवप्रादुरासीज्जगद्गुरुः ॥ ततःस्तवमथोदृष्ट्वातथाभूतंहरोहरिम् ॥ ३७ ॥ तस्मादवततराशुमंडलात्पार्थिवस्यसः ॥ यथोक्तरूपिणंशंभुंतेजोराशिंसमुत्थितम् ॥ ३८ ॥ नमस्कृ त्यपुरःस्थित्वास्तुतिंकृत्वाविशेषतः ॥ पूजयामासदेवेशःपार्वत्यासहितांशिवम् ॥ ३९ ॥ प्रसन्नवदनोभूत्वाशंभोश्चसंमुखस्थितः ॥ इत्थंभूतंहरोदृष्ट्वा कोटिभास्करभूषितः ॥ १४० ॥ प्राणिनामीश्वरःशंभुर्देवदेवोजनार्दनम् ॥ तदाप्राहमहादेवःप्रहसन्निवशंकरः ॥ संप्रेक्षमाणंतंविष्णुंकृतांजलिपुटंस्थितम् ॥ ४१ ॥ ॥ शंकरउवाच ॥ ॥ ज्ञातंमयेदंसकलंदेवकार्यंजनार्दन ॥ सुदर्शनाख्यंचक्रंचददामितवशोभनम् ॥४२॥ यद्रूपंभवताद्दृष्टंसर्वलोकसुखाव हम् ॥ हितायतवदेवेशकृतंभावयसुव्रत ॥ ४३ ॥ रणाजिरेपिसंस्मृत्यदेवानांदुःखनाशनम् ॥ इदंचक्रमिदंरूपमिदंनामसहस्रकम् ॥ ४४ ॥ येशृण्वंति सदाभक्त्यासिद्धिःस्यादनपायिनी॥एवमुक्त्वाददौचक्रंसूर्यायुतसमप्रभम् ॥४५॥ विष्णुरपिचसस्नात्वाजग्राहोदङ्मुखस्तदा ॥ नमस्कृत्यतदादेवंपुनर्व चनमंब्रवीत्॥४६॥शृणुदेवमयाध्येयंपठनीयंचमेप्रभो ॥ दुःखानांनाशनार्थंहिवदत्वंलोकशंकर॥४७॥इतिपृष्टस्तदातेनसंतुष्टस्तुशिवोऽब्रवीत् ॥ रूपंध्ये यंमदीयंवैसर्वानर्थप्रशांतये ॥ ४८ ॥ अनेकदुःखनाशार्थंपाठ्यंनामसहस्रकम् ॥ धार्यंचक्रंसदामेऽद्यसर्वानर्थप्रशांतये ॥ ४९ ॥ अन्येचयेपठिष्यंतिपा ठयिष्यंतिनित्यशः ॥ तेषांदुःखंनस्वप्नेऽपिजायतेनात्रसंशयः ॥ १५० ॥ राज्ञांचसंकटेप्राप्तेशतावर्तंचरेद्यदा ॥ सांगंचविधियुक्तोहिकल्याणंलभतेनरः ॥ ॥ ५१ ॥ रोगनाशकरंह्येतद्विद्यादायकमुत्तमम् ॥ समुद्दिश्यफलंश्रेष्ठंपठंतिफलमुत्तमम् ॥ ५२ ॥ लभंतेनाऽत्रसंदेहःसत्यमेतद्व्रतंमम ॥ प्रातःसमु त्थायसदापूजांकृत्वामदीयिकाम् ॥ ५३ ॥ पठतोमत्समक्षंवैनित्यंसिद्धिर्नदूरतः ॥ ऐहिकींसिद्धिमासाद्यपरलोकसमुद्भवाम् ॥ ५४ ॥ प्राप्नोतिपाठ कोनित्यमष्टमासात्सुरेश्वर ॥ सायुज्यमुक्तिमायातिनाऽत्रकार्याविचारणा ॥ ५५ ॥ एवमुक्त्वातदाविष्णुंशंकरःप्रीतमानसः ॥ उपस्पृश्यकराभ्यांच

उवाचशंकरःपुनः ॥ ५६ ॥ वरदोऽस्मिसुरश्रेष्ठवरान्वरयथेप्सितान् ॥ भक्त्यावशीकृतोनूनंस्तवेनानेनवैपुनः ॥ ५७ ॥ इत्युक्तोदेवदेवेनदेवदेवंप्रणम्य तम् ॥ यथेदानींकृपादेवक्रियतेचाऽप्यतःपरम् ॥ ५८ ॥ कार्याचैवविशेषेणकृपालुत्वात्त्वयाप्रभो ॥ त्वयिभक्तिंमहादेवप्रयच्छवरमुत्तमम् ॥ ५९ ॥ नाऽन्यमिच्छामिभगवन्पूर्णोऽहंतेप्रसादतः ॥ तच्छ्रुत्वावचनंतस्यदयावान्सुतरांभवः ॥ १६० ॥ प्राहत्वेनंमहादेवःपरमात्मानमच्युतम् ॥ मयिभ क्तिश्चवंद्यस्त्वंपूज्यश्चैवसुरैरपि ॥ ६१ ॥ विश्वंभरस्त्वदीयैर्वैनामपापहरंपरम् ॥ भविष्यतिनसंदेहोमत्प्रसादात्सुरोत्तम ॥ ६२ ॥ इत्युक्त्वांऽतर्दधेरुद्रो भगवान्नीललोहितः ॥ जनार्दनोऽपिभगवान्वचनाच्छंकरस्यच ॥ ६३ ॥ प्राप्यचक्रंशुभंध्यानंस्तोत्रमेतन्निरंतरम् ॥ पपाठाऽध्यापयामासभक्तेभ्यस्त दुपादिशत् ॥ ६४ ॥ अन्येऽपियेपठिष्यंतितेविंदंतुतथाफलम् ॥ इतिपृष्टंसमाख्यातंशृण्वतांपापहारकम् ॥ ६५ ॥ अतःपरंचकिंश्रेष्ठाःप्रष्टुमि च्छथवैपुनः ॥ १६६ ॥ ॥ इति श्रीशिवमहापुराणेज्ञानसंहितायांशिवसहस्रनामकथनंनामैकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ ऋषयऊचुः ॥ ॥ धन्योऽसिकृतकृत्योऽसिजीवितंसफलंतव ॥ बहुभ्यश्चऋषिभ्यश्चश्रुतंयद्यपिनोगतः ॥ १ ॥ संदेहश्चभवानद्यपृच्छचतेहितमीप्सुभिः ॥ कुशलः शिवकृत्येषुतस्मात्पृच्छामहेवयम् ॥ २ ॥ केनव्रतेनसंतुष्टःशिवोयच्छतितत्सुखम् ॥ यदनंतंप्रचक्ष्येततत्त्वंब्रूहिविशेषतः ॥ ३ ॥ भुक्ति र्मुक्तिश्चलभ्येतयेनवैव्यासशिष्यक ॥ एतद्वचस्तदीयंहिश्रुत्वावचनमाददे ॥ ४ ॥ ॥ सूतउवाच ॥ सम्यक्पृष्टमृषिश्रेष्ठाःकथयामियथाश्रुतम् ॥ यथाभवद्भिःपृष्टंवैतथापृष्टंचवेधसा ॥ ५ ॥ हरिणाचशिवायैवाशिवयाचतथापुनः ॥ कस्मिंश्चित्समयेतैस्तुपृष्टंचपरमात्मने ॥ ६ ॥ केनव्रतेनसंतुष्टोभु क्तिमुक्तिंचयच्छति ॥ इतिपृष्टस्तदातैस्तुयदुक्तंतेनवैतदा ॥७॥ तदहंकथयाम्यद्यशृण्वतांपापहारकम् ॥ शिवउवाच ॥ शृणुविष्णोप्रवक्ष्यामिव्रताना मुत्तमंव्रतम् ॥ ८ ॥ वेदानांह्युपवेदानांस्मृतीनांचतथापुनः ॥ पुराणानांचसर्वेषांधर्माणांतत्त्वमेवच ॥ ९ ॥ गुह्यानांचैवसर्वेषांसारमेकंसमुद्धृतम् ॥ व्रतानांचैवसर्वेषामेतदेवाहितंमम ॥ १० ॥ मुक्तेश्चप्रापकंह्येतच्चतुष्टयमुदाहृतम् ॥ शिवार्चनंरुद्रजपउपोष्यंचदिनत्रयम् ॥ ११ ॥ वाराणस्यांचमरणं मुक्तिरेषाचतुर्विधा ॥ अष्टमीसोमवारश्चकृष्णपक्षेचतुर्दशी ॥ १२ ॥ शिवतुष्टिकरंह्येतन्नात्रकार्याविचारणा ॥ चतुर्ष्वपिबलिष्ठंहिशिवरात्रिव्रतंहरे॥१३॥ तस्मादेतच्चकर्तव्यंभुक्तिमुक्तिफलेप्सुभिः ॥ एतस्माच्चव्रतादन्यन्नास्तिहिततरंहरे ॥ १४ ॥ इत्येवंतद्वचःश्रुत्वाहरिराहशिवंप्रति ॥ विष्णुरुवाच ॥ देव देवमहादेवकथयत्वंममाऽधुना ॥ १५ ॥ कथंकार्यंव्रतंह्येतत्कस्मिन्मासेऽथवापुनः ॥ केनैवविधिनादेवकथयत्वंममाऽधुना ॥ १६ ॥ लोकानामुपकारा र्थंपृच्छामित्वांसदाशिव ॥ कियत्कालंतदाकार्यंकथंपूजांसमाचरेत् ॥ चतुर्दशीकथंतेचवल्लभाचसदाशिव ॥ १७ ॥ एतत्सर्वंत्वयादेवकथनीयंहितायवै॥

एतच्चवचनंश्रुत्वाशिवोवचनमब्रवीत् ॥ १८ ॥ शिवउवाच ॥ इदंव्रतंचसर्वेषांधर्मसाधनमुत्तमम् ॥ वर्णानामाश्रमाणांचस्त्रीणांचशिशुनांतथा ॥ १९ ॥
दासानांदासिकानांचहितंव्रतमनुत्तमम् ॥ देवानांदानवानांचसर्वेषांचशरीरिणाम् ॥ २० ॥ सकामानांचसर्वेषांभुक्तिमुक्तिप्रदायकम् ॥ माघस्यैवाऽसि
तेपक्षेकृष्णाचैवचतुर्दशी ॥ २१ ॥ निशार्धव्यापिनीग्राह्याहत्याकोटिविनाशिनी ॥ तद्दिनेचैवयत्कार्यंश्रूयतांकथयामिते ॥ २२ ॥ प्रातश्चैवसमुत्थायह्या
नंदंपरमंगतः ॥ दुर्लभंमानुषंजन्मह्यसारंचंचलंपुनः॥२३॥सार्थकंचकरोम्यद्यव्रतेनानेनवैपुनः॥इतिनिश्चित्यमनसाअन्यान्संप्रेरयेन्नरः॥२४॥शिवरात्रिव्रतं
त्वद्यकर्तव्यंहितमीप्सुभिः॥शुभंचदंतकाष्ठंचकृत्वाकार्यंनरेणच ॥२५॥ नद्यादौस्नानमात्रंहिदेशकालाविरोधतः ॥ स्वीयंकर्मप्रकृत्यैवनैमित्तिकंसमाचरेत्
॥ २६ ॥ शिवस्याऽग्रेतदागत्वाह्येवंकुर्यात्सुरोत्तम॥समीपेचशिवस्यैवयत्कृतंतदनंतकम्॥२७॥तस्मात्तत्संनिधिंगच्छेदनंतफलहेतवे॥पूजांचप्रथमंकुर्या
दुपचारैर्यथाक्रमम् ॥ २८॥ नमस्कृत्यशिवंपश्चात्प्रीतिपूर्वंनरोत्तमः ॥ देवदेवमहादेवनीलकंठसदाशिव ॥ २९ ॥ कर्तुमिच्छाचसंजाताशिवरात्रिव्रतस्य
च ॥ तवप्रभावाद्देवेशनिर्विघ्नेनभवत्विति ॥ ३० ॥ कामाद्याःशत्रवोमह्यंपीडांददतुमापुनः ॥ दुःरालापंचटुस्पर्शंवासनांविविधांपुनः ॥ ३१ ॥ दिवा
स्वापंहिदेवेशजलंनैवव्रतावधि ॥ करिष्यामिचदेवेशप्रतापात्तवसुव्रत ॥ ३२ ॥ एवंनियममास्थायपूजाद्रव्यंसमाहरेत् ॥ शुद्धेस्थलेचयल्लिंगंप्रसिद्धंह्याग
मेषुच ॥ ३३ ॥ रात्रौतत्रस्वयंगत्वासंपाद्याविश्वमुत्तमम् ॥ शिवस्यपश्चिमेभागेदक्षिणेवास्थलंशुभम् ॥ ३४ ॥ विधायचैवतद्द्रव्यंनिधायशिवसन्निधौ ॥
पुनःस्नायात्तदातत्रविधिपूर्वंनरोत्तमः ॥ ३५॥ मौनीव्रतीभवेत्सद्यःकृत्वास्नानादिकंमुदा ॥ परिधायशुभंवस्त्रमंतर्वासस्तथापुनः ॥ ३६ ॥ आचम्यचात्रि
वारंहिपूजारंभंसमाचरेत् ॥ लिंगपूजांप्रयत्नेनह्युपचारैःसमंत्रकैः ॥ ३७ ॥ अमंत्रकंनकर्त्तव्यंपूजनंतुहरस्यच ॥ यस्यद्रव्यस्ययोमंत्रस्तेनपूजांसमाचरेत्॥
॥ ३८ ॥ गीतवाद्यैस्तथानृत्यैर्भक्तिभावसमन्वितः ॥ पूजनंप्रथमंयामेकृत्वामंत्रंजपेद्बुधः ॥ ३९ ॥ पार्थिवंचतदाश्रेष्ठंविधायमंत्रवान्सुधीः ॥ नित्यंच
क्रियतेचेद्वैपार्थिवंचतदाचरेत् ॥ ४० ॥ प्रथमंपार्थिवस्यैवपश्चाच्चास्थापितेचरेत् ॥ पार्थिवंचविधानंवैकर्तव्यंहितमिच्छता ॥ ४१ ॥ स्तोत्रैर्नानाविधैर्दि
व्यैर्हर्षयेद्वृषभध्वजम् ॥ माहात्म्यंव्रतसंभूतंश्रोतव्यंव्रतकारिणा ॥४२॥ चतुर्ष्वपिचयामेषुमूर्तीनांचचतुष्टयम् ॥ कृत्वावाहनपूर्वंवैविसर्जनावधिक्रमात्॥
॥ ४३ ॥ जागरणंतदाकृत्वामहोत्सवसमन्वितम् ॥ प्रातःकालेपुनस्तत्रस्थापितंपूजयेच्छिवम् ॥४४॥ पुनःस्नात्वाशिवस्यैवनियमंचविमोचयेत् ॥ निय
मोऽद्यमयादेवकृतश्चैवत्वदाज्ञया ॥ ४५ ॥ विसृज्यतेमयास्वामिञ्जातंव्रतमनुत्तमम्॥व्रतेनानेनदेवेशयथाशक्तिकृतेनच ॥४६॥ संतुष्टोभवदेवेशजातंव्रत
मनुत्तमम् ॥ शिवशंकरसर्वात्मन्कृपांकुरुममोपरि ॥ ४७ ॥ पुष्पांजलिंशिवेदत्वानियमंचविसृज्यच ॥ नमस्कारंशिवायैवतदादानंयथाविधि ॥ ४८ ॥

संकल्पंचततःकृत्वाजलंग्राह्यंततःपरम् ॥ यामेयामेचयापूजातांचैवकथयाम्यहम् ॥ ४९ ॥ प्रथमेचैवयामेचस्थापितंपार्थिवंपुनः ॥ पूजयेत्परयाभक्त्या
ह्युपचारैरनेकशः ॥ ५० ॥ प्रयोगादिविधायैवकामानांविनियुज्यच ॥ पंचद्रव्यैश्चप्रथमंपूजनीयोमहेश्वरः ॥ ५१ ॥ दुग्धंदधिमधुसर्पिःशर्कराणांक्रमेण
च ॥ तस्यतस्यचमंत्रेणतत्तद्द्रव्यंसमर्पयेत् ॥ ५२ ॥ तद्द्रव्यंतुसमर्प्यैवजलधारांप्रदापयेत् ॥ पश्चाच्चजलधाराभिर्द्रव्याण्युत्तार्यवैपुनः ॥५३॥ शतमष्टोत्त
रंमंत्रंपठित्वाजलधारया ॥ पूजयेच्चशिवंतत्रनिर्गुणंगुणरूपिणम् ॥ ५४ ॥ गुरुदत्तेनमंत्रेणपूजयेद्वृषभध्वजम् ॥ अन्यथानाममंत्रेणपूज्यश्चैवसदाशिवः ॥
॥ ५५ ॥ चंदनेनविचित्रेणतंडुलैश्चाऽप्यखंडितैः ॥ ततश्चैवतिलैःपूजाकार्यातस्यमहात्मनः ॥ ५६ ॥ पुष्पैश्चशतपत्रैश्चकरवीरैस्तथापुनः ॥ अष्टाभि
र्नाममन्त्रैश्चपुष्पाण्यारोपयेच्छिवे ॥ ५७ ॥ भवःशर्वस्तथारुद्रःपुनःपशुपतिस्तथा ॥ उग्रश्चैवततःप्रोक्तोमहादेवस्ततःपरम् ॥ ५८ ॥ भीमश्चैवतथेशा
नःश्रीपदंपूर्वतस्तथा ॥ चतुर्थ्यंतपदेनैवपूजयेत्पंचवक्त्रकम् ॥ ५९ ॥ पश्चाद्धूपंचदीपंचनैवेद्यंचततःपरम् ॥ प्रथमेचैवनैवेद्यंपक्वान्नंकारयेत्तदा ॥ ६० ॥
अर्घंचश्रीफलंदत्वातांबूलंविनिवेदयेत् ॥ नमस्कारंततोध्यानंजपःप्रोक्तस्ततःपरम् ॥ ६१ ॥ गुरूपदिष्टमंत्रेणतोषयेत्परमेश्वरम् ॥ जपंकृत्वाततःपश्चा
द्धेनुमुद्रांप्रदर्शयेत् ॥ ६२ ॥ पश्चाच्चतर्पणंतत्रब्राह्मणानांस्वशक्तितः ॥ एकस्त्वावश्यकःप्रोक्तोयतिरेकस्तथापुनः ॥ ६३ ॥ संकल्पंचतदाकृत्वागीतंवा
द्यंतथापुनः ॥ नृत्यंचैवतथाचाऽत्रगानंचविविधंतथा ॥ ६४ ॥ कर्तव्यंयाममात्रेणयावद्यामोभवेदिह ॥ तत्तत्पूजाफलंतस्मैनिवेद्यपरमात्मने ॥ ६५ ॥
नमस्कारंततःकृत्वासंकल्पंसंविधायच ॥ पुनश्चद्वितीयेयामेविसृज्यान्यांसमाचरेत् ॥ ६६ ॥ अथचैकस्मिन्रूपेचपार्थिवेद्वितीयेपुनः ॥ कुर्यात्पूजांत
थाविष्णोर्भुक्तिमुक्तिफलाप्तये ॥ ६७ ॥ एवंपूजाविधिंकृत्वाततोधारांसमर्पयेत् ॥ पूर्वतोद्विगुणंसर्वमुच्चार्यपूजयेच्छिवम् ॥ ६८ ॥ चंदनेनततःपूजातंडु
लैःपूजनंपुनः ॥ यवैश्चैवततःपूजाकर्तव्याशंकरस्यच ॥ ६९ ॥ पुष्पैश्चैवप्रकर्तव्याकमलैःपूजयेच्छिवम् ॥ बिल्वपत्रैस्तथाचाऽत्रकर्तव्यंपूजनंशिवे ॥
॥ ७० ॥ नैवेद्यंलड्डुकानांवैकर्तव्यंपरमात्मने ॥ एवंकृतंव्रतंयेनतज्जन्मसफलंभवेत् ॥ ७१ ॥ भुक्तिंदत्वाचमुक्तिंचयच्छाम्यत्रनसंशयः ॥ अर्घंचबीजपू
रेणकुर्याद्यामेद्वितीयके ॥ ७२ ॥ मयासर्वंयथापूर्वंकथितंतत्तथैवाहि ॥ धूपंदीपंचनैवेद्यंपायसान्नंप्रकल्पयेत् ॥ ७३ ॥ दत्वातांबूलकंतत्रदक्षिणांचसमर्प
येत् ॥ ध्यानंचैवपुनस्तत्रकृत्वाजाप्यंततःपुनः ॥ ७४ ॥ मंत्रावृत्तिंतुद्विगुणांपूर्वतोऽपिजनार्दन ॥ ततश्चब्राह्मणानांहिभोज्येसंकल्पमाचरेत् ॥ ७५ ॥
पूर्ववच्चनमस्कारंगीतंनृत्यंतथापुनः ॥ कुर्यादानंदसंयुक्तोयावच्चद्वितीयावधि ॥ ७६ ॥ यामेद्वितीयेयातेतुतृतीयेचसमागते ॥ विसृज्यचशिवंतत्रपुनर्मू
र्तिंप्रकल्पयेत् ॥ ७७ ॥ स्थापितेवाततःकुर्यात्तत्तत्पूजाविधिंहरे ॥ द्रव्यैःपूजांपुराकृत्वापश्चाद्धारांप्रदापयेत् ॥७८॥ पूर्वतोद्विगुणंकुर्यान्मंत्रेणविधिपूर्वं

कम् ॥ ततश्चचंदनेनैवसंपूज्यतंडुलैस्तथा ॥ ७९ ॥ गोधूमैःपूजनंकुर्याच्छिवप्रीणनतत्परः ॥ पुष्पैश्चैवाऽर्कसंभूतैःपूर्वोक्तैर्मंत्रसत्तमैः ॥ ८० ॥ धूपैश्चवि
विधैस्तत्रदीपैर्नानाविधैरपि ॥ नैवेद्यंपूपकैस्तत्रशाकैर्नानाविधैरपि ॥८१॥ कृत्वाचैवाऽथकर्पूरैरारात्रिकविधिंचरेत् ॥ अर्घंचदाडिमेनैवदद्याच्चशंकराय
च ॥ नमस्कारंततोध्यानंकृत्वामंत्रंजपेत्ततः॥८२॥ततोपिद्विगुणंजाप्यंकृत्वाचब्रह्मभोजनम् ॥ संकल्प्यदक्षिणांदत्वापूजाविधिंसमाचरेत्॥८३॥नृत्यंगीतं
तथाकृत्वायावद्यामावधिर्भवेत् ॥ यामेचतृतीयेजातेचतुर्थेचसमागते॥८४॥विसृज्यचपुनःपूजांकृत्वाचपार्थिवींहरे ॥ प्रयोगादिपुनःकृत्वापूजाविधिंसमाच
रेत् ॥ ८५ ॥ द्रव्यैश्चपूजनंकृत्वाजलधारांप्रदापयेत्॥पूर्वतोद्विगुणेनैवमंत्रजाप्येनवापुनः॥८६॥चंदनादानसंभूतांपूजांचतंडुलैस्तथा ॥ माषैश्चैवाथमुद्गैश्च
प्रियंगुभिश्चवापुनः ॥ ८७ ॥ अथवासप्तधान्यैश्चपूजयेत्परमेश्वरम्॥पुष्पैश्चप्रथमंपूज्यजातिजैःप्रतियामकम् ॥ ८८॥ शंखीपुष्पैस्तथापश्चाच्चंपकैर्वाविधा
यच ॥ एवंकृत्वानरेणैवरुद्रस्यहितमिच्छता ॥ ८९ ॥ पूर्वोक्तैर्मंत्रवर्गैश्चनामभिर्वाविशेषतः ॥ संपूज्यशंकरंदेवंधूपंदीपंक्रमेणच ॥ ॥९०॥ नैवेद्यंतत्रदद्या
द्वैमाधुर्यैर्विविधैरपि ॥ आमान्नेनाथवातत्रतोषयेच्चसदाशिवम् ॥ ९१ ॥ अर्घ्यंदद्यात्कदल्याश्चफलेनैवाथवाहरे ॥ विविधैश्चफलैस्तत्रदद्यादर्घ्यंशिवायच
॥९२॥नमस्कारंततोध्यानंकृत्वाजाप्यंसमाचरेत् ॥ पूर्वतोद्विगुणंतत्रकुर्याज्जाप्यंनरोत्तमः॥९३॥नमस्कारंततश्चैवसंकल्पंपूर्ववत्तथा॥गीतवाद्यंपुनश्चैवया
वत्स्यादरुणोदयः ॥ ९४ ॥ उदयेचतथाजातेसंप्रार्थ्यशंकरंपुनः ॥ स्नात्वापूजांपुनःकृत्वानानापुष्पाक्षतैरपि ॥ ९५ ॥ नानाधूपार्घ्यनैवेद्यैराभिषेकोयथा
भवेत् ॥ सर्वभावेनसंपूज्यतोषयेच्छंकरंमुदा ॥ ९६ ॥ नानाविधानिदानानिभोज्यंचविविधंतदा ॥ ब्राह्मणानांयतीनांचकर्तव्यंप्रहरसंख्यया ॥ ९७ ॥
शंकरायनमस्कृत्य स्तुतिंनानाविधांतदा ॥ पुष्पांजलिंतदातत्रमंत्रैरेतैःसुरोत्तम ॥ ९८ ॥ दद्यादात्महितार्थायशिवायपरमात्मने ॥ तावकस्त्वद्गतप्राण
स्त्वच्चित्तोहंसदामृड ॥ ९९ ॥ कृपानिधइतिज्ञात्वायथायोग्यंतथाकुरु ॥ अज्ञानाद्यदिवाज्ञानाज्जपपूजादिकंमया ॥ १०० ॥ कृपानिधइतिज्ञात्वाभूत
नाथप्रसीदमे ॥ अनेनैवोपचारेणयज्जातंफलमेवच ॥ १ ॥ तेनैवप्रीयतांदेवःशंकरःसुखदायकः ॥ अनेनैवचपुष्पाणामंजलिनाप्रभोमम ॥ २ ॥ न्यूनंसं
पूर्णतांयातुव्रतंचैवमहेश्वर ॥ पुष्पांजलिंसमर्प्यैवंतिलकाशिषमेवच ॥ ३ ॥ गृह्णीयाद्ब्राह्मणेभ्यश्चनत्वाताञ्छंकरायच ॥ विसर्जयेच्छिवंपश्चात्पुनरागम
नायच ॥४॥ ममकुलेदेवदेवभजनंतेस्तुसर्वदा ॥ मानसान्ममदेवेशदूरंनैवकदाचन ॥ ५ ॥ अहर्निशंक्षणंवापिविनाचस्मरणंतव॥श्वसनंनभवेदेवदूरंनैवक
दाचन ॥ ६ ॥ इत्येवंचनमस्कृत्यविसृज्यशंकरंमुदा ॥ ब्रह्मभोज्यंतदाकृत्वासर्वपापक्षयोभवेत् ॥ ७ ॥ एवंव्रतंकृतंयेनतस्माद्दूरेहरोनहि ॥ फलंवक्तुंनश
क्यतेवर्षाणामयुतैरपि ॥ ८ ॥ अनादरतयाचेद्वैकृतंव्रतमनुत्तमम्॥तस्यैवमुक्तिबीजंचजातंनात्रविचारणा ॥ ९ ॥व्रतमेतत्प्रतिमासंकर्तव्यमृषिसत्तमाः ॥

उद्यापनविधिंपश्चात्कृत्वासांगंविधिंनयेत् ॥ ११० ॥ व्रतस्यकरणान्नूनंशंकरःसर्वदुःखहा ॥ भुक्तिंदत्वाचमुक्तिंचददतेनात्रसंशयः ॥ ११ ॥ इतिव्रतफ
लंश्रुत्वादेवाविष्णुमुखास्तदा ॥ आनंदंपरमंप्राप्यस्वंस्वंधामययुस्तदा ॥ ११२ ॥ ॥ इतिश्रीशिवमहापुराणेशिवरात्रिमहिमनिरूपणंनामद्विसप्ततित
मोऽध्यायः ॥ ७२ ॥ ॥ ऋषयऊचुः ॥ ॥ उद्यापनविधिंब्रूहिशिवरात्रिव्रतस्यचँ ॥ यत्कृत्वाशंकरःसाक्षात्प्रसन्नोभवतिध्रुवम् ॥ १ ॥ इतितेषांवचः
श्रुत्वासूतोवचनमाददे ॥ सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठाविधिंवच्मियथाश्रुतम् ॥ २ ॥ शिवरात्रिदिनेप्रातेनित्यंसंपाद्यवैतदा॥शिवालयंततोगत्वापूजां
कृत्वायथाविधि ॥ ३ ॥ गृह्णीयान्नियमंतत्रव्रतस्याविधिवन्नरः ॥ रात्रौजागरणंकृत्वापूजांयामचतुष्टये ॥ ४ ॥ लिंगेचपार्थिवेवापिकृत्वाचविधिपूर्वकम् ॥
प्रातःकालेसमुत्थायसंकल्पंशिवसन्निधौ ॥ ५ ॥ कुर्याच्छिवप्रसादाच्चकरिष्येव्रतमुत्तमम् ॥ प्रतिमासंचकर्तव्यंमयादेवत्वदाज्ञया ॥ ६ ॥ निर्विघ्नेनव्रतंह्ये
तज्जायतांकृपयातव ॥ इतिशिवालयेनियमंकृत्वाभोज्यादिकंचरेत् ॥ ७ ॥ विप्राशिषंततोगृह्यनियमंपरिसमाप्यच ॥ पश्चाच्चतुर्दशींप्राप्यकृष्णपक्षसमु
द्भवाम् ॥ ८ ॥ प्रातःकालेसमुत्थायतीर्थादौवागृहेपुनः ॥ स्नानादिसर्वंनित्यंचसमाप्यनियमंचरेत् ॥ ९ ॥ शिवस्यसन्निधिंगत्वापूजांकृत्वायथाविधि ॥
अद्यव्रतंमयादेवकर्तव्यंचतवाज्ञया ॥ १० ॥ निराहारतयादेवनिर्जलंविधिवत्प्रभो ॥ कर्तुमिच्छाभवेदद्यधैर्यंरक्षममप्रभो ॥ ११ ॥ नमस्कृत्यतदाशंभु
कामक्रोधविवर्जितः ॥ दिनंनीत्वातथारात्रौपूजांयामसमुद्भवाम्॥१२॥कृत्वाजागरणंतत्रप्रातःकालावधिस्वयम्॥जपंमंत्रवरेणैवगीतंनृत्यंतथापुनः॥१३॥
कृत्वापुनस्तदास्नात्वापूजांचैवशिवस्यच ॥ विधायब्रह्मभोज्यंचभोजयेन्न्यासिनंतदा ॥१४॥ अशक्तयैकंतदाभोज्यंस्वयंभोज्यंततःपरम् ॥ तदाशिषंतदा
गृह्यनानाकार्यंसमाचरेत् ॥ १५ ॥ एवंचप्रतिमासंचकृत्वाचव्रतमुत्तमम् ॥ यावच्चशिवरात्रिर्वैपुनरायातिसत्तम ॥ १६ ॥ तस्मिन्दिनेस्वयंकार्यमुद्याप
नविधिंचरेत् ॥ ब्राह्मणांश्चतदापृष्ट्वाशास्त्रादौपरिशोध्यच ॥१७॥ कर्तव्यंयच्चतत्रैवसयथाकारयेत्स्वयम् ॥ तदहंकथयाम्यद्यविधानंविधिपूर्वकम् ॥१८॥
उद्यापनदिनेचैवकर्तव्यंश्रूयतांपुनः ॥ प्रातर्नित्यंतुसंपाद्यमंडलंतत्रकारयेत् ॥ १९ ॥ गौरीतिलकनाम्नावैप्रसिद्धंभुवनत्रये ॥ कुंभास्तत्रप्रकर्तव्याःप्राजा
पत्यविसंख्यया ॥ २० ॥ सवस्त्राःसफलास्तत्रदक्षिणासहिताःशुभाः ॥ मंडलस्यचपार्श्वेवैमोचनीयाःप्रयत्नतः ॥२१॥ मध्येचैकंचसंस्थाप्यतत्रोमासहि
तंशिवम् ॥ दीपंचदक्षिणेभागेकृत्वारात्रौप्रपूजयेत् ॥२२॥ जागरणंतदाकृत्वापूजांयामोद्भवांनरः॥रात्रिमाक्रामयेत्तत्रनृत्यगीतादिनाव्रती ॥२३॥ संपूज्य
विधिवद्देवंवेदोक्तविधिनादिवा ॥ संतोष्यप्रातरेवंचपुनःपूजातदाभवेत् ॥ २४ ॥ ऋषिभिश्चसमान्वित्तान्ब्राह्मणान्वेदपारगान् ॥ यज्ञोपवीतवस्त्रैश्चउपान
द्युगलेनच ॥ २५ ॥ स्वर्णमुद्रास्वलंकारैर्दत्वाहोमंचकारयेत् ॥ घृतेनपायसेनाथमंत्रैश्चरुद्रसंभवैः ॥२६॥ प्रारंभेचव्रतीहोमंनवग्रहपुरःसरम् ॥ तिलांश्च

यवसंमिश्रानाज्येनचपरिप्लुतान् ॥ २७ ॥ जुहुयाच्छिवमंत्रेणशिवायाश्चततःपरम् ॥ सौवर्णींरुद्रमूर्तिंश्चरौप्यांगौरींतथैवच ॥ २८ ॥ शय्यांचतूलिकांचै
वसप्तधान्यसमन्विताम् ॥ गोदानंचप्रदातव्यंब्राह्मणायव्रतात्तये ॥ २९ ॥ एवंसमाप्यहोमंतुतत्राचार्यंप्रपूजयेत् ॥ अर्घ्यपुष्पप्रदानैश्चवस्त्रालंकारभूषणैः
॥ ३० ॥ भक्त्याचदक्षिणादेयाब्राह्मणेभ्योविशेषतः ॥ धेनुंसदक्षिणांदद्यात्सुशीलांचपयस्विनीम् ॥ ३१ ॥ स्वर्णशृंगींरौप्यखुरांकारयेद्दोहसंयुताम् ॥
रत्नपुच्छांवस्त्रयुतांताम्रपृष्ठीमलंकृताम् ॥ ३२ ॥ सुवर्णेनसमोपेतामाचार्यायचसाधवे ॥ ब्राह्मणान्भोजयेच्चैवघृतपायसशर्करैः ॥ ३३ ॥ दानानिचवि
चित्राणिकुर्यात्तत्रशिवाज्ञया ॥ यथाशक्तिविधानंचप्राजापत्यविधिंचरेत् ॥३४॥ ब्राह्मणान्भोजयित्वातुशिवायफलमर्पयेत् ॥ देवदेवमहादेवशंभोशंक
रवेहर ॥ ३५ ॥ व्रतेनानेनदेवेशकृपांकुरुममोपरि ॥ ममशक्त्यनुसारेणव्रतमेतत्कृतंशिव ॥ ३६ ॥ अज्ञानाद्यदिवाज्ञानाज्जपपूजादिकंमया ॥ कृतंत
दस्तुसुफलंकृपयातवशंकर ॥ ३७ ॥ एवंपुष्पांजलिंदत्वाशिवायपरमात्मने ॥ नमस्कारंततःकृत्वाप्रार्थनांपुनरेवच ॥ ३८ ॥ चरणौचत्वदीयौमेचित्ते
दूरंनकर्हिचित् ॥ एवंव्रतंकृतंयेनन्यूनंतस्यनकिंचन॥३९॥मनेप्सितांचसिद्धिंवैलभतेनात्रसंशयः॥यथाशास्त्रंव्रतंह्येतन्मुक्तिबीजंप्रचक्षते ॥ ४० ॥ अज्ञा
नाज्ज्ञानतोवापिव्रतेनतुष्यतेशिवः॥एवंयःकुरुतेविप्राःप्राप्नोतिपरमंपदम् ॥ ४१ ॥ कायिकंमानसंवापिवाचिकंयच्चदुष्कृतम् ॥ तत्सर्वंविलयंयातिव्रतस्या
स्यप्रभावतः॥४२॥पुनःस्नानंप्रकर्तव्यममावास्यांद्विजोत्तमाः॥मध्याह्नेचप्रदातव्यंपिंडदानंविधायच॥४३॥पितॄनुद्दिश्यामावास्यांद्विजभोज्यंसमाचरेत् ॥
यदापक्षेभवेत्तृप्तिःपितॄणांयुगसंख्यया ॥४४॥ वैष्णवायप्रदातव्यंमिष्टान्नंव्याकृतायच॥शास्त्रज्ञायकुलीनायस्वदाराभिरतायच॥४५॥क्षुधितस्ययतेश्चापि
देयमन्नंजलंतथा ॥ पात्रायैवप्रदातव्यंमिष्टान्नंदक्षिणातथा ॥४६॥ततोनिरभिपाकान्नंभोक्तव्यंबंधुभिःसह ॥ एवंतेकथितंब्रह्मन्व्रतराजविधिर्मया ॥ ४७ ॥
तस्मात्सर्वप्रयत्नेनकर्तव्यंफलमीप्सुभिः ॥ पठनाच्छ्रवणाद्वापिसयातिपरमांगतिम्॥४८॥इतिश्रीशिवमहापुराणेशिवरात्र्युद्यापनविधिनिरूपणंनामत्रिसप्त
तितमोऽध्यायः॥ ७३ ॥ ॥ ऋषयऊचुः॥सूततेवचनंश्रुत्वाह्यानंदंपरमंगताः॥प्रभावश्चव्रतस्याऽस्यश्रुतोविस्तरशःपुनः॥१॥कथयत्वंमहाबाहोकेनैवफलमु
त्तमम्॥अज्ञानतश्चकृत्वाहिप्राप्तंकिंचवदाऽधुना॥२॥सूतउवाच॥ श्रूयतामृषयःश्रेष्ठाःकथयामिपुरातनम् ॥ इतिहासंनिषादस्यसर्वपापप्रणाशनम् ॥ ३ ॥
पुराकश्चिद्वनेभिल्लोह्यासीन्नाम्नारुरुद्रुहः ॥ कुटुंबीबलवान्क्रूरःक्रूरकर्मपरायणः ॥ ४ ॥ निरंतरंवनेगत्वामृगान्हन्यादनेकशः ॥ चौर्यंचविविधंतत्रकरोति
सवनेचरः ॥ ५ ॥ बाल्यादारभ्यतेनेहशुभंकृतंनकिंचन ॥ महान्कालोव्यतीयायवनेतस्यदुरात्मनः ॥ ६ ॥ कदाचिच्छिवरात्रिश्चह्यासीत्तत्रसुशोभना ॥
नदुरात्मासजानातिमहाव्रतमनुत्तमम् ॥ ७ ॥ एतस्मिन्दिवसेभिल्लोमात्रापित्रास्त्रियातथा ॥ प्रार्थितःक्षुद्रधर्मैश्चभक्ष्यंदेहिवनेचर ॥ ८ ॥ इतिसंप्रार्थितः

सोवैधनुरादायसत्वरम् ॥ जगाममृगहिंसार्थंबभ्रामसकलंवनम् ॥ ९ ॥ दैवयोगात्तदातेननप्राप्तंकिंचिदेवहि ॥ अस्तंप्राप्तस्तदासूर्यःसवैदुःखमुपागतः ॥
॥ १० ॥ किंकर्तव्यंक्कगंतव्यंनप्राप्तंवेतनंमया ॥ बालाश्चतेगृहेयेवैपित्रोश्चकिंभविष्यति ॥ ११ ॥ मदीयंचकलत्रंचतस्यकिंतुभविष्यति ॥ किंचिद्गृही
त्वाचमयागंतव्यंचतथाव्रजे ॥ १२ ॥ इतिविचार्यतत्रैवजलाशयसमीपगः ॥ जलावतरणंयत्रतत्रगत्वास्वयंस्थितः ॥ १३ ॥ अवश्यमत्रकश्चिद्वैजीवश्चै
वागमिष्यति ॥ इतिमत्वातदावृक्षमेकंबिल्वेतिसंज्ञितम् ॥ १४ ॥ समारुह्यास्थितस्तत्रजलमादायवैतदा ॥ रात्रौतत्रतदास्थित्वादृष्टिंबद्धातुसत्वके ॥
॥ १५ ॥ कदायास्यतिकश्चिद्वैकदाहन्यामहंपुनः ॥ इतिबुद्धिंसमास्थायस्थितोसौक्षुधयायुतः ॥ १६ ॥ दिवसेचोपवासश्चनप्राप्तंवेतनंतदा ॥ प्रथमेचैव
यामेचमृगीह्येकासमागता ॥ १७ ॥ तृषार्ताचकितासावैह्युत्फालंकुर्वतीतदा ॥ तांदृष्ट्वाचतदातेनशरोधनुषिसंदधे ॥ १८ ॥ तस्यैवंकुर्वतस्तत्रजलंबि
ल्वदलानिच ॥ पतितानिह्यधस्तत्रशिवलिंगमभूद्बुधाः ॥ १९ ॥ यामस्यप्रथमस्यैवपूजाजाताशिवस्यच ॥ तन्माहिम्नाचतस्यैवपातकंज्वालितंतदा ॥२०॥
तत्रत्यंचैवतच्छब्दंश्रुत्वासाहरिणीभिया ॥ व्याकुलाव्याधकंदृष्ट्वाहाबाणेनवधिष्यति ॥ २१ ॥ किंकरोमिक्कगच्छामिउपायंरचयाम्यहम् ॥ इतिविचार्य
सातत्रवचनंचेदमब्रवीत् ॥ २२ ॥ मृग्युवाच ॥ किंकर्तुमिच्छसिव्याधश्रुत्वाव्याधोऽब्रवीदिदम् ॥ व्याधउवाच ॥ कुटुंबंक्षुधितंमेऽद्यहत्वात्वांतर्पयाम्य
हम् ॥ २३ ॥ दारुणंतद्वचःश्रुत्वादुर्धरंतंवनेचरम् ॥ तच्छ्रुत्वासामृगीदृष्टाधन्याऽहंव्याधसत्तम ॥ २४ ॥ मृग्युवाच ॥ मन्मांसेनसुखंस्याद्वैदेहस्यानर्थ
कारिणः ॥ उपकारकरस्यैवयत्पुण्यंजायतेत्विह ॥ २५ ॥ तत्पुण्यंशक्यतेनैववक्तुंवर्षशतैरपि ॥ असारस्यशरीरस्यसाफल्यंमेभविष्यति ॥ २६ ॥
परंतुशिशवोमेऽद्यवर्ततेह्याश्रमेमम ॥ भगिनींचसमर्प्यैवस्वामिनेविधिवत्तदा ॥ २७ ॥ आयास्येचपुनर्मांसात्तृप्तिस्तेसर्वथाशुभा ॥ इत्युक्तोपित
दाव्याधोनमेनेवचनंततः ॥ २८ ॥ संकटेसमनुप्राप्तेसर्वेमिथ्याभिशंसिनः ॥ इत्येवंवचनंश्रुत्वामृग्याहवचनंपुनः ॥ २९ ॥ सत्येनसर्वथादेवाः
सत्येनैवसमुद्रकाः ॥ सत्येनजलधाराश्चसत्येसर्वंप्रतिष्ठितम् ॥ ३० ॥ नमेमिथ्यावचस्त्वंचजानीहिपशुघातक ॥ इत्युक्तेऽपिनमेनेतद्वचनंपुनर
ब्रवीत्॥ ३१ ॥ शृणुव्याधप्रवक्ष्यामिपापंमेशिरसिभवेत् ॥ यद्यहंनाऽऽगमेह्यत्रएतेषांपातकंमम ॥ ३२ ॥ ब्राह्मणोवेदविक्रेतासंध्याहीनास्त्रिकाल
कम् ॥ स्त्रियाश्चस्वामिनोह्याज्ञांसमुल्लंघ्यभवेच्चयत् ॥ ३३ ॥ कृतघ्नेचैवयत्पापंयत्पापंविमुखेहरेः ॥ द्रोहिणांचैवयत्पापंयत्पापंधर्मलंघने ॥ ३४ ॥
तेनपापेनलिप्यामियद्यहंनागमेपुनः ॥ इत्यादीनिह्यनेकानिकृत्वामृगीस्थितातदा ॥ ३५ ॥ व्याधोऽपिचस्वयंतत्रगच्छशीघ्रंवचोऽब्रवीत् ॥
मृगीदृष्टाजलंपीत्वागताह्याश्रममंडलम् ॥ ३६ ॥ तावच्चप्रथमोयामोगतोनिद्रांविनाशुभाः ॥ तदीयाभगिनीयावैमृगीचपरिभाषिता ॥ ३७ ॥

तस्यामार्गेविचिन्वंतीह्याजगामजलार्थिनी ॥ तांदृष्ट्वातुस्वयंभिल्लश्चक्रेबाणस्यकर्षणम् ॥ ३८ ॥ पूर्ववज्जलपत्राणिपतितानिशिवोपरि ॥ या
मस्यद्वितीयस्यैवपूजाजातामहात्मनः ॥३९॥ साभृग्यपिचतंदृष्ट्वाकिंकरोषिवनेचर॥पूर्ववत्कथितंतेनश्रुत्वाहर्षसमन्विता ॥४०॥ धन्याऽहंश्रूयतांश्रेष्ठसफ
लंदेहधारणम् ॥ अनित्येनशरीरेणह्युपकारोभविष्यति ॥ ४१ ॥ परंतुममबालाश्चगृहेतिष्ठंत्यथाऽर्भकाः ॥ भर्त्रेतान्वैसमर्प्यैवह्यागमिष्याम्यहंध्रुवम्
॥ ४२ ॥ तवोक्तंचनमन्येऽहंहन्यामितिनसंशयः॥शृणुव्याधप्रवक्ष्यामियद्यहंनागमेपुनः ॥४३॥ एतेषांपातकंमेऽद्यभवत्विातिनसंशयः ॥ वाचोविचलिताय
स्यसुकृतंतेनहारितम् ॥ ४४ ॥ मेदिनीतस्यपापेनकंपतेचमुहुर्मुहुः ॥ पतिव्रतांस्त्रियंहित्वाह्यन्यांगच्छतियःपुमान् ॥ ४५ ॥ तत्पापंशिरसिमेऽद्ययद्यहं
नागमेपुनः ॥ वेदधर्मान्समुल्लंघ्यकल्पितेनपथाव्रजेत् ॥ ४६ ॥ विष्णुभक्तिसमायुक्तःशिवनिंदांकरोतिह ॥ पित्रोःक्षयाहमासाद्यशून्यंचैवाक्रमेदिह
॥ ४७ ॥ दत्वाचपरितापंचकरोतिवंचनंपुनः ॥ तेनपापेनलिप्यामियद्यहंनागमेपुनः ॥ ४८ ॥ इत्युक्तश्चतदाव्याधोगच्छत्वंपुनरागमेः ॥ सामृगींचज
लंपीत्वाहृष्टासाचस्वमाश्रमम् ॥ ४९ ॥ जगामतावत्समृगःक्रमृग्यौचिंतयन्गतः ॥ तावच्चद्वितीयोयामोगतोनिद्रांविनाशुभाः ॥ ५० ॥ मृगोपिचमृगीं
पश्यञ्जलमार्गेसमागतः ॥ पुष्टंमृगंचतंदृष्ट्वाहृष्टोवचनमब्रवीत् ॥ ५१ ॥ बहुमांसंचविद्येततृप्तिःस्यादनपायिनी ॥ बाणमाकृष्यभिल्लोऽपिप्रयत्नंकृतवा
न्पुनः ॥ ५२ ॥ तदाचजलयुक्तानिपत्राणिचशिवोपरि ॥ तेनैवचतृतीयस्ययामस्यऋषिसत्तमाः ॥ ५३ ॥ पूजाजाताशिवस्यैवकृपालुत्वंचपश्यता ॥
तदीयंचैवतंशब्दंकिंकरोषिमृगोऽब्रवीत् ॥ ५४ ॥ व्याधोपिवचनंतत्रपूर्ववद्व्युक्तवान्पुनः ॥ तच्छ्रुत्वाहरिणःसोऽपिहृष्टोवचनमाददे ॥ ५५ ॥ धन्योऽहंपु
ष्टिमानद्ययेनतृप्तिर्भवाहृशाम् ॥ यस्यांऽगंनोपकारार्थंगतंवैपरमार्थतः ॥ ५६ ॥ तस्यसर्वंचव्यर्थंवैनाऽत्रकार्याविचारणा ॥ योवैसामर्थ्ययुक्तोऽपिनोप
कारंकरोतिच ॥ ५७ ॥ तत्सामर्थ्यंभवेद्व्यर्थंनाऽत्रकार्याविचारणा ॥ सम्यग्जातंशरीरेणतृप्तिस्तवभविष्यति ॥ ५८ ॥ परंतुबालकांश्चाऽहंसमर्प्यजन
नींपुनः ॥ आश्वास्याप्यथतान्सर्वानागमिष्याम्यहंध्रुवम् ॥ ५९ ॥ इत्युक्तोवैपुनस्तत्रव्याधोवचनमब्रवीत् ॥ येयेसमागताह्यत्रतेतेसर्वेत्वयायथा ॥६० ॥
कथित्वातुगतास्तेवैनाऽऽयांत्यद्यापिवंचितः॥त्वंचापिसंकटेह्युक्त्वाव्यलीकंचगमिष्यसि ॥ ६१ ॥ ममैवजीवनंचाऽद्यभविष्यतिकथंमृग ॥ इत्येवंवचनंश्रु
त्वामृगोवाक्यमुपाददे ॥ ६२ ॥ शृणुव्याधप्रवक्ष्यामिनाऽनृतंविद्यतेमयि ॥ सत्येनसर्वब्रह्मांडंतिष्ठतितुचराचरम् ॥ ६३ ॥ यस्यवाणीव्यलीकाहितत्पु
ण्यंज्वलितंक्षणात् ॥ तथापिमन्यतेनैवप्रातिज्ञांममभिल्लक॥६४॥संध्यायांमैथुनेचैवशिवरात्रिभोजनेकृते॥कूटसाक्ष्येन्यासहारेसंध्याहीनेद्विजेऽथवै ॥६५॥
शिवहीनंमुखंयस्यनोपकुर्यात्क्षमोऽपिसन् ॥ दिवामैथुनकारीचतस्यैवपातकंचयत् ॥ ६६ ॥ पर्वणिचकालादौचव्रतस्यैवदिनेतथा ॥ अभक्ष्यकारकेयच्च

तत्पापंशिरसामम ॥ ६७ ॥ यद्यहंनाऽऽगमेह्यत्रवंचयित्वाचत्वांपुनः ॥ इतिवचस्तदाश्रुत्वागच्छशीघ्रंसमाव्रज ॥ ६८ ॥ व्याधेनैवंसमुक्तस्तुजलंपीत्वा गतोमृगः ॥ तेसर्वेमिलितास्तत्रह्याश्रमेऋषिसत्तमाः ॥६९॥ वृत्तांतंचैवतत्सर्वंश्रुतंचैवपरस्परम् ॥ गंतव्यंनिश्चयेनैवसत्यपाशेनयंत्रिताः ॥७०॥ आश्वास्यबालकांस्तत्रगंतुमुत्कंठितास्तदा ॥ मृगीज्येष्ठाचयातत्रस्वामिनंवाक्यमब्रवीत् ॥ ७१ ॥ अनाथाबालकाह्यत्रकथंस्थास्यंतिवैमृग ॥ प्रथमंचमयातत्र प्रतिज्ञाचकृताप्रभो ॥ ७२ ॥ तस्मान्मयाचगंतव्यंभवद्भ्यांस्थीयतांत्विह ॥ इतिवचस्तदाश्रुत्वाकनिष्ठावाक्यमब्रवीत् ॥ ७३ ॥ अहंचसेवकीवांचगच्छामिस्थीयतांत्वया ॥ मृगोपिवचनंश्रुत्वागम्यतेचमयापुनः ॥ ७४ ॥ इतिश्रुत्वावचस्तस्यवैधव्यंजीवितंहिधिक् ॥ बालानाश्वास्यतांस्तत्रसमर्प्यसहवासिनः ॥ ७५ ॥ गतास्तेसर्वएवात्रयत्राऽऽस्तेव्याधसत्तमः ॥ प्रतीक्षांक्रियमाणश्चमार्गंचैवनिरीक्षते ॥ ७६ ॥ तावद्गताश्चतेसर्वेसत्यपाशेनयंत्रिताः ॥ तान्दृष्ट्वाहर्षितोव्याधोधनुषिचादधेशरम् ॥ ७७ ॥ बालाअपिचतेसर्वेपित्रोरनुसमागताः ॥ एतेषांयागतिःस्याद्वैह्यस्माकंसाभवेत्सदा ॥ ७८ ॥ पुनश्चजलपत्राणिपतितानिशिवोपरि ॥ तेनजाताचतुर्थस्यपूजायामस्यवैशुभा ॥ ७९ ॥ तस्यपापंतदासर्वंभस्मसादभवत्क्षणात् ॥ मृगोमृगीभ्यांप्रोवाचशीघ्रंत्वंव्याधसत्तम ॥ ८० ॥ अस्माकंसार्थकंदेहंकुरुष्वमांसभक्षणात् ॥ इतितेषांवचःश्रुत्वाव्याधोविस्मयमागतः ॥ ८१ ॥ शिवपूजाप्रभावेनज्ञानंतस्यसमागतम् ॥ धन्याएतेमृगाश्चैवज्ञानहीनाःसुसंमताः ॥ ८२ ॥ स्वीयेनैवशरीरेणपरोपकरणेरताः ॥ मानुष्यंजन्मसंप्राप्यसाधितंकिंमयाऽधुना ॥ ८३ ॥ परकायंचसंपीड्यशरीरंपोषितंमया ॥ कुटुंबंपोषितंमेऽद्यपूर्वंचबहुपीडितम् ॥ ८४ ॥ कृत्वाचपोषितंसर्वंकागतिश्चभविष्यति ॥ कांकांगतिंगमिष्यामिपातकंजन्मनःकृतम् ॥ ८५ ॥ इदानींचिंतयाम्येवधिक्कारोजीवनेमम ॥ इतिज्ञानसमापन्नोबाणंसंवारयंस्तदा ॥ ८६ ॥ गम्यतांचमृगश्रेष्ठाधन्याःस्थइतिचाऽब्रवीत् ॥ इत्युक्तेचतदातेनप्रसन्नःशंकरस्तदा ॥ ८७ ॥ पूजितश्चस्वरूपंहिदर्शयामाससंमतम् ॥ पंचवक्त्रादिकंयच्चमुनिभिर्ध्यायतेसदा ॥ ८८ ॥ तद्रूपंकृपयादेवःकरुणामृतसागरः ॥ दर्शयित्वावरंब्रूहिप्रसन्नोऽस्मिवनेचर ॥ ८९ ॥ व्याधोपिशिवरूपश्चजीवन्मुक्तोऽभवत्क्षणात् ॥ पपातशिवपादाग्रेसर्वंप्राप्तंमयाऽधुना ॥ ९० ॥ शिवोऽपितंगुहंनामस्थापयित्वावरंह्यदात् ॥ शृणुव्याधइदानींत्वंभुक्तिंभुंक्ष्वमनीप्सिताम् ॥९१ ॥ राजधानींचसंभुंक्ष्ववंशवृद्धिस्तथाशुभा ॥ अनपायिनीभवेन्नित्यंश्लाघनीदैवतैरपि ॥ ९२ ॥ गृहेरामस्तवव्याधसमायास्यत्यसंशयः ॥ तत्पूजांतस्यभक्तिंचकृत्वायास्यस्यसंशयम् ॥९३॥मुक्तिंसर्वजनैःसद्भिर्दुर्लभांमुनिसत्तमैः ॥ ममपूजारतास्तेचवंश्याःस्युर्बलवत्तराः॥९४॥ एतस्मिन्नंतरेतैस्तुशिवस्यदर्शनंकृतम् ॥ सबालास्तेतदामुक्तामृगयोनेर्ययुर्दिवम् ॥९५॥ विमानंचसमारुह्यादिव्यदेहंगतास्तदा ॥ शिवदर्शनमात्रेणपाशान्मुक्तादिवंगताः ॥९६॥ व्याधेश्वरःशिवोजातःपर्वते

ह्यर्बुदाचले ॥ व्याधोपितद्दिनान्नूनंभुक्तिंचैवऋषीश्वराः॥९७॥भुक्त्वारामकृपांप्राप्यशिवसायुज्यमागतः॥अज्ञानाच्चव्रतंह्येतत्कृत्वासायुज्यतांगतः॥९८॥
किंपुनर्भक्तिसंपन्नायांतितन्मयतांशुभाम् ॥ विचार्यसर्वशास्त्राणिधर्मांश्चैवाऽप्यनेकशः ॥ ९९ ॥ व्रतानिविविधान्यत्रतीर्थानिविविधान्यथ ॥ दानानिच
विचित्राणिविविधानिफलानिच ॥ १०० ॥ एतेनसमतांयांतिंशिवरात्रिव्रतेनच ॥ तस्माच्छुभतरंह्येतत्कर्तव्यंहितमीप्सुभिः ॥ १०१ ॥ एतत्सर्वंस
माख्यातंपुनश्चकथयाम्यहम् ॥ इतिहासमृषिश्रेष्ठाव्रतंपापहरंपरम् ॥ १०२ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांचतुःसप्ततितमोऽध्यायः॥७४॥
॥ सूतउवाच ॥ अवंतीनगरेरम्येदीक्षितोऋषिसत्तमाः ॥ सत्कुलीनःसदाचारःशुभकर्मपरायणः ॥ १ ॥ वेदेषुचैवशास्त्रेषुपरिष्णातोविचक्षणः ॥ तस्य
भार्याकुलीनाऽऽसीत्पतिधर्मपरायणा ॥२॥ आज्ञांचपालयामासभक्तिभावसमन्विता॥ तस्यपुत्रद्वयंह्यासीत्सुनिधिर्वेदनिधिस्तथा ॥ ३ ॥ ज्येष्ठश्चैवसुनि
धिस्तुमातापितृपरायणः ॥ वेदनिधिश्चयःप्रोक्तोवेदशास्त्रविशारदः ॥ ४ ॥ दुर्व्यसनंचतस्याऽऽसीन्नर्तक्याक्रीडनादिकम् ॥ भक्ष्यंभोज्यंचतत्रैवकरोतिस
निरंतरम् ॥ ५ ॥ पित्राज्ञातंनिषिद्धोऽपिनिवृत्तोनतदासुतः ॥ मात्राचापितथाभ्रात्राभर्त्सितोपिपुनःपुनः ॥ ६ ॥ नत्यक्तंव्यसनंतेनपापिष्ठेनदुरात्मना ॥
कदाचिद्दीक्षितायैवदत्तंराज्ञास्वलंकृतम् ॥ ७ ॥ अंगुल्याभरणंश्रेष्ठंप्रसन्नेनतदास्वयम् ॥ दीक्षितेनगृहंगत्वास्त्रियैदत्तंसुगोपितम् ॥ ८ ॥ स्त्रियामुक्तंगृहे
चैवतेनदृष्टंदुरात्मना ॥ हृत्वारात्रौचतच्चैवनर्तक्यैविनिवेदितम् ॥ ९ ॥ कदाचिन्नर्तकीसाचराज्ञेनृत्यंह्यदशर्यत् ॥ ततस्मिन्समयेराज्ञादृष्टंचभूषणं
शुभम् ॥ १० ॥ राज्ञातस्यैतदापृष्टंकुतोलब्धंत्वयाशुभम् ॥ तयाप्रतारितःसोऽपिभर्त्सयामासतांपुनः ॥ ११ ॥ अत्याग्रहतयापृष्टायथार्थंकथितंतया॥
बलात्ततोगृहीत्वातुस्थापितंपार्श्वकेस्वके ॥ १२ ॥ प्रातर्विप्रंसमाहूयवलयंदीयतांपुनः ॥ कार्यंचवर्ततेकिंचित्पुनश्चनीयतांत्वया ॥ १३ ॥ इत्युक्त
श्चद्विजश्चैवगृहमागत्यतांपुनः ॥ उवाचरेप्रियेदत्तंमयातद्दीयतांत्वया ॥ १४ ॥ तथेतिसावचःश्रुत्वागतामुक्तवतीयतः ॥ सापिगवेषयामासनलब्धंव
लयंतदा ॥ १५ ॥ स्वामिनेकथयामासलक्ष्यतेनमयाप्रभो ॥ श्रुत्वादुःखंसमापन्नोराज्ञोऽग्रेतन्निवेदितम् ॥ १६ ॥ नलब्धंतुमयाराजन्किंकरोमिकुतो
गतम् ॥ तच्छ्रुत्वाचतदाराज्ञासर्वंचविनिवेदितम् ॥ १७ ॥ दुःखितोब्राह्मणःश्रुत्वागृहंगत्वास्त्रियंतदा ॥ भर्त्सयामासपापिष्ठेकुभार्येकिंकृतंत्वया ॥ १८॥
उभाभ्यांभर्त्सितःसोऽपिपुत्रगच्छगृहादितः ॥ त्वयाप्रयोजनंनैवह्यस्माकंकुलदूषणम् ॥ १९ ॥ निष्कासितश्चपुत्रोवैनाम्नावेदनिधिश्चयः ॥ गतोबहिस्त
थासोपिकुत्रचिद्दिनमावहत् ॥ २० ॥ क्षुधितस्तृषितश्चैवनर्तक्यापितिरस्कृतः ॥ रात्रिर्जातायदातत्रक्षुधितस्तृषितस्तदा ॥ २१ ॥ तद्दिनेशिवरा
त्रिश्चलोकानांपालिनीशुभा ॥ कश्चिदाढ्योबहुविधांपूजामादायसत्वरम् ॥ २२ ॥ नैवेद्यंविविधंगृह्यगतवाञ्छिवमंदिरम् ॥ तंदृष्ट्वाचतदाहृष्टोभ

क्षयिष्याम्यहंपुनः ॥ २३ ॥ इतिविचार्यतुष्टोपिजगामानुपदंतदा ॥ इतिबुद्ध्यातदायातोदुष्टश्चक्षुधितस्तदा ॥ २४ ॥ शिवस्यमंदिरं गत्वापूजांलोकजनैःसह ॥ ददर्शक्षुधयाऽऽविष्टोअन्नभक्षपरायणः ॥ २५ ॥ अद्यैवतेगमिष्यंतिकदान्नंभक्षयाम्यहम् ॥ यथातथामयाचान्नंग्रहीतव्यं तथाऽधुना ॥ २६ ॥ इतिबुद्ध्यातदातेनजागृतंतुपरार्थतः ॥ तेपिलोकास्तदातत्रपूजांयामसमुद्भवाम् ॥ २७ ॥ कृत्वानृत्यंचगीतंचयामेचैवसु निद्रिताः ॥ केचिद्गतागृहेतत्रसुप्ताःकेचनमंदिरे ॥ २८ ॥ निद्रितांश्चतदादृष्ट्वाविप्रोवेदनिधिस्तदा ॥ अन्नंनिवेदितंतत्रपक्वान्नंविविधंतथा ॥ २९ ॥ जगृ हीषुस्तदातत्रसमीपेतुशिवस्यच ॥ शनैःशनैःसमागच्छद्भिच्छायादीपकास्तदा ॥ ३० ॥ सम्यगन्नंनदृश्येतदीपच्छायाशिवोपरि ॥ तेनैववस्त्रखंडंहिशि रोवेष्टनजंतदा ॥ ३१ ॥ दीपश्चरोचितस्तत्रह्यन्नार्थेनपरार्थतः ॥ अंधकारःशिवेयोवैदूरीभूतस्तदाशुभः ॥ ३२ ॥ संदीप्यदीपकंतत्रह्यन्नंदृष्टंसुसुंदरम् ॥ सर्वंचैवगृहीत्वाऽथशनैःशनैरुपागमत् ॥ ३३ ॥ शयानेषुपदास्पृष्टाविह्वलाह्युत्थितास्तदा ॥ कोऽयंकोयंब्रुवंतश्चचौरोऽयमितिचाऽपरे ॥ ३४ ॥ तेषांत द्वचनंश्रुत्वाभीतोविप्रःपलायितः ॥ तेऽपिपश्चाद्गतास्तत्रराज्ञश्चसेवकास्तदा ॥ ३५ ॥ पलायमानंतंदृष्ट्वाबाणांश्चप्राक्षिपंस्तदा ॥ बाणास्तंचतदालग्ना स्तस्मात्सोऽपिपपातह ॥ ॥ ३६ ॥ पतितश्चमृतःसोवैश्रूयतामृषिसत्तमाः ॥ अज्ञानतोव्रतंजातंरात्रौजागरणंतथा ॥ ३७ ॥ कृपालुत्वाच्छिवस्यैवसर्वं जातंसुशोभनम् ॥ तस्मिंश्चसमयेप्राप्ताद्दूतावैवस्वतस्यह ॥ ३८ ॥ शंकरस्यगणास्तत्रह्याजग्मुर्बलवत्तराः ॥ उभयेषांतदावादःसमजायतवैभृशम् ॥ ३९ ॥ गणाःशिवस्ययेतत्रवचनंचेदमब्रुवन् ॥ कथंसमागतायूयंदंडेनाघटिताइति ॥ ४० ॥ तेचोचुर्भगवद्भक्तायूयंकिंचसमागताः ॥ यमगणाऊचुः ॥ जन्मप्रभृतिपापंचपुण्यंतुह्यणुमात्रकम् ॥ ४१॥ शिवगणाऊचुः ॥ पापंबहुतरंचाऽऽसीद्भस्मसादभवत्क्षणात् ॥ शिवस्यचव्रतेनैवरात्रौजागरणेनच॥४२॥ अद्यापिपातकंतिष्ठेद्गतंसर्वंदुरासदाः ॥ इत्येवंविवदंतश्चधर्मराजंगतास्तदा ॥ ४३ ॥ यमेनोक्तंचसत्यंवैपापंचभस्मतांगतम् ॥ नमस्कारंचतान्कृत्वा कलिंगाधिपतिंतदा ॥ ४४ ॥ ब्राह्मणंचचकारासौप्रणम्यभाग्यवानसि ॥ कलिंगाधिपतिर्भूत्वाशिवपूजापरायणः ॥ ४५ ॥ शिवपूजापरोनित्यंशिवरात्रि व्रतेपरः ॥ स्वराज्येशिवपूजांचदीपांश्चैवतदालये ॥ ४६ ॥ कारयित्वातदामुक्तिंलेभेचऋषिसत्तमाः ॥ पश्यंतुव्रतमाहात्म्यमनायासेनवाकृतम् ॥४७॥ येपुनःपरयाभक्त्याकुर्वंतिव्रतमुत्तमम् ॥ तेलभंतेपरांमुक्तिंकिंतत्रविस्मयःपुनः ॥४८॥ चौर्यार्थेनसुबुद्ध्याचदीपंतुकृतवान्नहि ॥ ज्ञात्वादीपंचयेकुर्युर्ले भंतेतेशुभंपदम् ॥ ४९ ॥ एतस्मात्कारणाच्छ्रेष्ठाव्रतंत्वेतादृशंनहि ॥ शिवात्परोदयालुर्नपावनोनपरःस्मृतः ॥ ५० ॥ एतद्वश्चसमाख्यातंयत्पृष्टोऽहमृ षीश्वराः ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्यतेमानवःक्षणात् ॥ ५१ ॥ अतःपरंतुनास्त्येवमुक्तिःस्यादनपायिनी ॥ शिवएवपरोदेवःशिवएवपरंपदम् ॥ ५२ ॥

शिवएवपरामुक्तिर्नातःपरतरंव्रतम् ॥ ५३ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ऋषयऊचुः ॥ मुक्तिर्नो
मत्वयाप्रोक्तातस्यांकिंतुभवेदिह ॥ अवस्थाकीदृशीसूतभवोदितिवदस्वनः ॥ १ ॥ सूतउवाच ॥ मुक्तिश्चतुर्विधाप्रोक्ताश्रूयतांकथयामिवः॥ सारूप्याचैव
सालोक्यासान्निध्याचतथापुनः ॥ २ ॥ सायुज्याचऋषिश्रेष्ठाव्रतेनाऽनेनयाभवेत् ॥ किंलक्षणाहिसाचैवश्रूयतामृषिसत्तमाः ॥ ३ ॥ यतःसर्वसमुत्पद्येद्ये
नैवपाल्यतेहितत् ॥ यस्मिंश्चलीयतेसर्वंयेनसर्वमिदंततम् ॥ ४ ॥ तदेवशिवरूपंहिप्रोच्यतेचमुनीश्वराः ॥ विष्णुनातच्चनज्ञातंब्रह्मणानतथैवच ॥ ५ ॥
कुमारैर्नारदेनैवमार्कंडेयादिभिस्तथा॥शुकेनव्यासशिष्येणव्यासेनैवाऽथवापुनः॥६॥तत्पुत्रैश्चतदावेदैर्नज्ञातंनेतिनेतिच॥ सत्यंज्ञानमनंतश्चचिदानंदउदा
हृतः॥७॥निर्गुणोनिरुपाधिश्चनिरंजनोऽव्ययस्तथा॥नरक्तोनचपीतश्चनश्वेतोनीलएवच॥८॥यतोवाचोनिवर्ततेअप्राप्यमनसासह ॥ तदेवंप्रथमंप्रोक्तंब्रह्मैव
शिवसंज्ञितम् ॥ ९ ॥ आकाशंव्यापकंयद्वदिदंब्रह्मतथास्मृतम् ॥ नस्थूलंनचतत्सूक्ष्मंद्वंद्वातीतंविमत्सरम् ॥१०॥ विकाररहितंतच्चइहास्तिचपरत्रच॥
तत्प्राप्तिश्चभवेदत्रशिवस्यभजनादिह ॥ ११ ॥ तस्माच्छिवंचसेवेतमुक्त्यर्थमृषिसत्तमाः ॥ इतिपृष्टंभवद्भिश्चतदेवकथितंमया ॥ १२ ॥ यच्छ्रुत्वासर्वं
पापेभ्योमुच्यतेनात्रसंशयः ॥ १३ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांषट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ छ ॥ ॥ ऋषयऊचुः ॥ शिवःको
वाहरिःकोवारुद्रःकोवासमाहितः ॥ ब्रह्माकोवाभवेद्योवैकर्ताचजगतःस्मृतः ॥ १ ॥ एतेषुनिर्गुणःकोवासंशयंछेत्तुमर्हसि ॥ निर्गुणश्चगुणीचैवसर्वंचकथ्य
तांत्वया ॥ २ ॥ सूतउवाच ॥ यतःसर्वसमुत्पन्नंनिर्गुणात्परमात्मनः ॥ तदेवशिवसंज्ञंहिवेदवेदांतिनोविदुः ॥ ३ ॥ तस्मात्प्रकृतिरुत्पन्नापुरुषेणसमन्वि
ता ॥ ताभ्यांतपःकृतंतत्रशूलस्थेचस्थलेमुने ॥ ४ ॥ पंचक्रोशीतिविख्यातेहर्षाच्चप्रसृतेंऽबुना ॥ व्याप्तंचसकलंह्येतत्तत्रसुप्तोहरिःस्वयम् ॥ ५ ॥ नाराय
णेतिविख्यातंवदंतिमुनयस्तथा ॥ नारायणीतिविख्याताप्रकृतिर्यापुरोगता ॥ ६ ॥ तन्नाभिकमलेयोवैजातःसचपितामहः ॥ तेनैवतपसादृष्टःसवैविष्णुः
सनातनः ॥ ७ ॥ वैकुंठवासीयःप्रोक्तोमहालयेविलीयते ॥ उभयोर्वादनाशार्थंयद्रूपंदर्शितंबुधाः ॥ ८ ॥ महादेवेतिविख्यातंशिवाच्चनिर्गुणादिह ॥ तेन
चोक्तंह्यहंरुद्रोभविष्यामिकपोलतः ॥९॥ रुद्रोनामसविख्यातोलोकानुग्रहकारकः ॥ ध्यानार्थंचैवसर्वेषामरूपोरूपवानभूत् ॥१०॥ सएवचशिवःसाक्षाद्भ
क्तवात्सल्यकारकः॥अन्येचयेसमुत्पन्नायथानुक्रमतोलयम् ॥११॥ यांतिनैवतथारुद्रःशिवेरुद्रोविलीयते ॥ सर्वेरुद्रंमिलित्वाचनयांतिप्राकृताइमे ॥१२॥
रुद्रइमान्मिलित्वातुनयतिश्रुतिशासनम् ॥ सर्वेरुद्रंभजंत्येवरुद्रःकंचिद्भजेन्नहि ॥ १३ ॥ अन्यंभजंतियेनित्यंतास्मिंस्तेलीनतांगताः ॥ तेनैवमहत्त्वंप्राप्ताः
कालेनमहतापुनः ॥ १४ ॥ रुद्रभक्तास्तुयेकेचित्तत्क्षणंशिवतांगताः ॥ अन्यापेक्षानतेषांवैश्रुतिरेषासनातनी ॥ १५ ॥ अज्ञानंविविधंह्येतद्विज्ञानंवि

विधंनाहि ॥ ब्रह्मादितृणपर्यंतंयत्किंचिद्दृश्यतेत्विह ॥ १६ ॥ तत्सर्वंशिवएवाऽस्तिनाऽत्रकार्याविचारणा ॥ सृष्टेःपूर्वंशिवःप्रोक्तःसृष्टेर्मध्येशिवस्तथा ॥
॥ १७ ॥ सृष्टेरंतेशिवःप्रोक्तस्तेनप्रोक्तःसदाशिवः ॥ तस्माच्चनिर्गुणःप्रोक्तःशिवएवऋषीश्वराः ॥ १८ ॥ येनैवविष्णवेदत्ताश्वासेनवेदसंज्ञिता ॥
वाणीमंत्राह्यनेकेचध्यानंचपूजनंबुधाः ॥ १९ ॥ ईशानःसर्वविद्यानांश्रुतिरेषासनातनी ॥ सएवशंकरःसाक्षात्सर्वानुग्रहकारकः ॥ २० ॥ कर्ताचपालिता
साक्षीसंहर्तासउदाहृतः ॥ अन्येषांकालमानंचकालस्यकलनातथा ॥ २१ ॥ तस्यमानंनकालस्यकालस्यकलनानहि ॥ महाकालःस्वयंसाक्षान्महाका
लीसमाश्रिता ॥ २२ ॥ यथाचब्रह्मणोरुद्रस्तथाकालीप्रचक्षते ॥ सर्वस्यकारणंसोवैकार्यंभूताऽच्युतादयः ॥ २३ ॥ सर्वताभ्यांतथाव्याप्तमिच्छयो
त्पत्तिलीनता ॥ नोत्पादकश्चकश्चिद्वैनहर्ताकश्चनाप्रियः ॥ २४ ॥ स्वयंचकारणंचैवस्वस्यनैवकदाचन ॥ एकोह्यनेकतांयातोह्यनेकोप्येकतां
व्रजेत् ॥ २५ ॥ एकंबीजंबहुभूत्वापुनर्बीजंचजायते ॥ वस्तुत्वेचस्वयंसर्वंशिवरूपोमहेश्वरः ॥ २६ ॥ जानातिज्ञानवानेवनाऽन्यः
कश्चिदृषीश्वराः ॥ इत्येवंवचनंश्रुत्वापुनरूचुर्मुनीश्वराः ॥ २७ ॥ ॥ ऋषयऊचुः ॥ ॥ ज्ञानस्यलक्षणंब्रूहियज्ज्ञात्वाशिवतांव्रजेत् ॥
कथंशिवश्चसर्वंवैसर्वंचाशिवएवच ॥ २८ ॥ एतत्सर्वंत्वयासूतकथनीयंहितायवै ॥ २९ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांसप्तसप्ततितमोऽ
ध्यायः ॥ ७७ ॥ छ ॥ सूतउवाच ॥ श्रूयतामृषयःश्रेष्ठाःकथयामियथाश्रुतम् ॥ ब्रह्मनारदकुमाराणांव्यासस्यकपिलस्यच ॥ १ ॥ एतेषांचसमाजेवै
निश्चित्यसमुदाहृतम् ॥ ज्ञाताज्ञानंतथाज्ञेयंसर्वंशिवामिदंजगत् ॥ २ ॥ ब्रह्मादितृणपर्यंतंयत्किंचिद्दृश्यतेजगत् ॥ एतत्सर्वंसएवाऽस्तिनाऽत्रकार्याविचा
रणा ॥ ३ ॥ यदेच्छातस्यजायेततदाचक्रियतेत्विदम् ॥ सर्वंसएवजानातितंजानातिनकश्चन ॥ ४ ॥ रचित्वाचस्वयंचैवप्रविश्यदूरतःस्थितः ॥ यथा
चज्योतिषश्चैवजलादौप्रतिबिंबता ॥ ५ ॥ वस्तुतोनप्रवेशोवैतथैवचस्वयंशिवः ॥ वस्तुतस्तुस्वयंसर्वरूपेणैवतुभासते ॥ ६ ॥ अज्ञानंचमतेभेदोनास्त्य
न्यस्यद्वयंपुनः ॥ दर्शनेषुचसर्वेषुमतिभेदःप्रदृश्यते ॥७॥ परंवेदांतिनोनित्यमद्वैतप्रतिपादिनः ॥ स्वस्यैवांऽशश्चजीवोवैअविद्यामोहितोवशः ॥ ८ ॥ अ
हमन्यंचजानातितयामुक्तोभवेच्छिवः ॥ सर्वव्याप्यशिवःसाक्षाद्व्यापकःसर्वजंतुषु ॥ ९ ॥ चेतनाचेतनेसोवैसर्वत्रशंकरःस्वयम् ॥ उपायंयःकरोत्यस्यद
र्शनंसलभेद्ध्रुवम् ॥ १० ॥ यथाऽग्निर्व्यापकश्चैवकाष्ठेकाष्ठेचतिष्ठति ॥ योवैमथ्नातितत्काष्ठंसवैपश्यत्यसंशयम् ॥ ११ ॥ भक्त्यादिसाधनानीहकरोति
ऋषिसत्तमाः ॥ सवैपश्यत्यवश्यंवैनात्रकार्याविचारणा॥१२॥ शिवःशिवःशिवश्चैवनाऽन्यदस्तीहकिंचन॥नानाभातिस्वरूपोहिभासतेशंकरःसदा॥१३॥
यथासमुद्रोमृच्चैवसुवर्णमथवापुनः ॥ उपाधितोहिनानात्वंलभतेचतथैवच ॥ १४ ॥ कार्यकारणयोर्भेदोवस्तुतोनप्रवर्तते ॥ यथाबीजात्प्ररोहश्चनानावि

इयं शिवपुराणान्तर्गता ज्ञानसंहिता मुम्बय्यां श्रीकृष्णदासात्मजेन
खेमराजेन स्वकीये "श्रीवेंकटेश्वर" यन्त्रालयेऽङ्कित्वा
प्रकाशिता। संवत् १९५२ शके १८१७ सन् १८९५

धःप्रकाशते ॥ १५ ॥ अंतेचबीजमेवस्यान्नाऽत्रकार्याविचारणा ॥ ज्ञानेबीजंप्रदृश्येतह्यज्ञानेविविधंजगत् ॥ १६ ॥ सर्वंशिवःशिवःसर्वंनात्रभेदोऽस्तिकश्च
न ॥ कथंचविविधंपश्येदेकत्वंनकथंपुनः ॥ १७ ॥ यथैकंचंद्रसूर्याख्यंज्योतिर्नानाविधंपुमान् ॥ जलादौचविशेषेणदृश्यतेचतथैवसः ॥ १८ ॥ सर्वत्रव्या
पकःसोवैस्पर्शत्वेननिबद्धचते ॥ तथैवव्यापकोदेवोनबध्नातिपुनःक्वचित् ॥ १९॥ अहंकारतयाजीवस्तन्मुक्तःशंकरःस्वयम् ॥ यथैकंचसुवर्णंहिताम्रेणामि
लितंयदा ॥ २० ॥ अल्पमूल्यंप्रजायेततथाजीवोह्यहंपुनः ॥ तदेवचसुवर्णंहिक्षारादिशोधितंयदा ॥ २१ ॥ पूर्ववन्मूल्यतांयातितथाजीवस्यसंमतम् ॥
यथाचसद्गुरुंप्राप्यभक्तिभावसमन्वितः ॥२२॥ शिवबुद्धचाकरोत्युच्चैःपूजनंस्मरणंशुभम् ॥ ध्यानंस्तवंचतद्बुद्धचापापादिदूरतोगतम् ॥ २३ ॥ तदाऽज्ञा
नंचनश्येतशरीरंचाऽस्थिरंबुधः ॥ मत्वाचनित्यरूपंहिशिवमेवसनातनम् ॥ २४ ॥ अज्ञानाद्दूरतोभूत्वाज्ञानवाञ्जायतेयदा ॥ तदाऽहंकारनिर्मुक्तोयातिशं
करतांतुसः ॥ २५ ॥ यथाऽऽदर्शेस्वरूपंचस्वीयंचैवप्रदृश्यते ॥ तथासर्वत्रगंशंभुंपश्यतीतिसुनिश्चितम् ॥ २६ ॥ जीवन्मुक्तःसएवादौदेहेशीर्णेशिवे
लयेत् ॥ शुभंलब्ध्वानहृष्येतलब्ध्वाऽशुभंनकुप्यति ॥ २७ ॥ सुखदुःखेसमेकृत्वाज्ञानवाञ्जायतेतदा ॥ अथवाआत्मयोगेनतत्त्वानांचविवेकतः ॥
॥ २८ ॥ यथेष्टचारीसोवैस्याच्छरीरंचपतेद्यदा ॥ तदाशिवेविलीयेतमुक्तोविरहएवच ॥ २९ ॥ ज्ञानमूलंतथाऽध्यात्मंतस्यभक्तिःशिवस्यच ॥ भक्तेश्च
प्रेमसंप्रोक्तंप्रेम्णस्तुश्रवणंमतम् ॥३०॥ श्रवणस्यसतांसंगःसंगस्यसद्गुरुःस्मृतः ॥ संपन्नेचतथाज्ञानेमुक्तिर्भवतिनिश्चितम् ॥ ३१ ॥ इतिविज्ञानवान्सोवै
शंभुमेवसदाभजेत् ॥ अनन्ययाचभक्त्यावैशंभुंप्राप्नोत्यसंशयम् ॥ ३२ ॥ भवेद्भक्त्यंतरायश्चेत्पुनर्बीजेनसंयुतः ॥ उत्पद्यतेचभक्त्यावैयुक्तःशंभुंभजे
त्पुनः ॥ ३३ ॥ अंतेचमुक्तिमायातिनाऽत्रकार्याविचारणा ॥ अतोऽधिकोनदेवोस्तियंप्राप्यननिवर्तते ॥ ३४ ॥ सहस्रजन्मपर्यंततपोदानव्रतादिकम् ॥
कृतंपूर्वंभवेच्चेद्वैशिवेभक्तिःप्रजायते॥३५॥ जायतेचतथाभक्तोजीवन्मुक्तोभवेत्तुसः ॥ इतिमेविविधंवाक्यमृषीणांचसमागमे ॥ ३६ ॥ निश्चित्यचपुनश्चैव
कुमारैर्नारदादिभिः ॥ व्यासाग्रेकथितंतैस्तन्मह्यंव्यासेनपाठितम् ॥ ३७ ॥ प्रथमंविष्णवेदत्तंशिवेनलिंगसंभवे ॥ विष्णुनाब्रह्मणेदत्तंतेनैवसनकादिषु ॥
॥ ३८ ॥ ततस्तैर्नारदायैवकथितंनारदेनच ॥ व्यासायचऋषिश्रेष्ठास्तेनमह्यंकृपालुना ॥ ३९ ॥ मयाचैवभवद्भ्यश्चभवद्भिर्लोकहेतवे ॥ ख्यापनीयंप्रय
त्नेनशिवप्राप्तिकरंपरम् ॥ ४० ॥ इतिवश्चसमाख्यातंयत्पृष्टोहंमुनीश्वराः ॥ एतच्छ्रुत्वाचतेसर्वेआनंदंपरमंगताः ॥ ४१ ॥ हर्षगद्गदयावाचाप्रणेमुस्तंपु
नःपुनः ॥ अस्माकंचेतसोभ्रांतिर्गताचकृपयातव ॥ ४२ ॥ तच्छ्रुत्वाचपुनर्वाक्यमुवाचऋषिसत्तमान् ॥ व्यासशिष्यस्तदुक्तंहिकथयामासतांस्तदा ॥
॥ ४३ ॥ नास्तिकायनवक्तव्यंश्रद्धाहीनायवातथा ॥ अभक्तायनवाच्यंहिनचाऽशुश्रूषवेबुधाः ॥ ४४ ॥ अष्टादशपुराणानिइतिहासान्यनेकशः ॥ वे

दार्थाश्चाऽप्यनेकांश्वविचार्यचपुनःपुनः ॥४५॥ सारमेतत्समुद्धृत्यव्यासेनपरिभाषितम् ॥ अभक्तोभक्तिमायातिभक्तस्यभक्तिवर्धनम् ॥ ४६ ॥ एकवा
रंयदाश्रुत्वापापानिभस्मतांनयेत् ॥ पुनःश्रुतेचभक्तिश्वजायतेपुरुषस्यच ॥ ४७ ॥ पुनःश्रुतेविवृद्धिश्चभक्तेश्चैवनसंशयः ॥ पुनःश्रुतेशिवंसाक्षात्पश्यं
तिचमुनीश्वराः ॥ ४८ ॥ पुनःश्रुतेभवंतोवैपश्यंतीतिसुनिश्चितम् ॥ तस्मात्पुनःपुनःश्राव्यंभुक्तिमुक्तिफलेप्सुभिः ॥ ४९ ॥ पंचावृत्तिःप्रकर्तव्याव्यास
स्यवचनंत्विदम् ॥ समुद्दिश्यफलंश्रेष्ठंतत्तत्प्राप्नोत्यसंशयम् ॥ ५० ॥ नदुर्लभंतुतस्यैवयेनेदंश्रुतमुत्तमम् ॥ इत्युक्तास्तेऋषिश्रेष्ठाःशुश्रुवुःपरयामुदा ॥
॥ ५१ ॥ पंचकृत्वस्तुतच्छ्रुत्वालब्ध्वाचशिवदर्शनम् ॥ पुरातनाश्वराजानःश्रुत्वासिद्धिंपरांगताः ॥ ५२ ॥ इदानींश्रोष्यतेयोवैसवैसिद्धिंपरांव्रजेत् ॥
इतितस्यवचःश्रुत्वाह्यानंदंपरमंगताः ॥ ५३ ॥ तंचैवपूजयामासुर्नानावस्त्रैःसुशोभनैः ॥ चंदनैश्चविचित्रैश्चनानालंकरणैस्तथा ॥ ५४ ॥ नमस्कारैः
स्तवैश्चैवस्वस्तिवाचनपूर्वकम् ॥ आशीर्भिर्विविधैश्चैववर्द्धयामासुरंजसा ॥ ५५ ॥ संतुष्टाश्चैवतेसर्वेसंतुष्टःसूतएवच ॥ परस्परंचसंहृष्टाःशिवभक्तिपरा
यणाः॥५६॥एतदेवपरंमत्वानमंतिचभजंतिच॥एवंचशृणुयादत्रसर्वान्कामानवाप्नुयात्॥५७॥अंतेभक्तिंपरांप्राप्यमुक्तिंवैप्राप्नुयान्नरः॥ लिखित्वायस्तुदद्या
द्वैपुराणंशिवसंज्ञितम् ॥ ५८ ॥ हेमवृषसमायुक्तंचतुर्वेदैश्चसंमतम् ॥ तस्यवासोभवेन्नित्यंशिवलोकेनसंशयः ॥ ५९ ॥ सतुशिवसमाकारंलभतेनाऽत्रसं
शयः ॥ तस्मात्सर्वप्रयत्नेनदीयतांशैवकंद्विजाः ॥ ६० ॥ तत्रापिदक्षिणादेयासुवर्णानांचतुष्टयम् ॥ एवंददातियोभक्त्याशिवलोकेमहीयते ॥ ६१ ॥
तत्रस्थोनच्यवेत्क्वापिशिवसायुज्यमाप्नुयात् ॥ वाचकंतोषयेद्दानैर्वस्त्रालंकारभूषणैः ॥ ६२ ॥ मिष्टान्नभोजनैर्भक्त्यासर्वकामार्थसिद्धये ॥
शिवेभक्तिःशिवेभक्तिःशिवेभक्तिर्भवेभवे ॥ ६३ ॥ ॥ इतिश्रीशिवमहापुराणेज्ञानसंहितायांज्ञानप्रकरणनिरूपणंनामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

## समाप्ता चेयं ज्ञानसंहिता ॥

॥ अथ शिवमहापुराणे विद्येश्वरसंहिता द्वितीया प्रारभ्यते ॥

॥ श्रीगणेशायनमः ॥ ॥ अथविघ्नेश्वरसंहिताप्रारभ्यते ॥ आद्यन्तमंगलमजातसमानभावमार्यंतमीशमजरामरमात्मदेवम्॥पंचाननंप्रबलपंचविनोदशीलं
संभावयेमनसिशंकरमम्बिकेशम् ॥ १ ॥ व्यासउवाच ॥ धर्मक्षेत्रेमहाक्षेत्रेगंगाकालिन्दिसंगमे ॥ प्रयागेपरमेपुण्येब्रह्मलोकस्यवर्त्मनि ॥ १ ॥ मुनयः
शंसितात्मानस्सत्यव्रतपरायणाः ॥ महौजसोमहाभागामहासत्रंवितेनिरे ॥२॥ तत्रसत्रंसमाकर्ण्यव्यासशिष्योमहामुनिः॥आजगाममुनीन्द्रष्टुंसूतःपौराणि
कोत्तमः ॥ ३ ॥ तंदृष्ट्वासूतमायांतंहर्षितामुनयस्तदा ॥ चेतसासुप्रसन्नेनपूजांचक्रुर्यथाविधि ॥ ४ ॥ ततोविनयसंयुक्ताःप्रोचुस्सांजलयश्चते ॥ सुप्रसन्ना
महात्मानःस्तुतिंकृत्वायथाविधि ॥ ५ ॥ रोमहर्षणसर्वज्ञभवान्वैभाग्यगौरवात् ॥ पुराणविद्यामखिलांव्यासात्प्रत्यर्थमीयिवान् ॥ ६ ॥ तस्मादाश्चर्य्यभू
तानांकथानांत्वंहिभाजनम् ॥ रत्नानामुरुसाराणांरत्नाकरइवार्णवः ॥ ७ ॥ यच्चभूतंचभव्यंचयच्चान्यद्वस्तुवर्तते ॥नत्वयाऽविदितंकिंचित्रिषुलोकेषुविद्यते
॥ ८ ॥ त्वंमदिष्टिवशादस्यदर्शनार्थमिहागतः ॥ कुर्वन्किमपिनःश्रेयोनवृथागंतुमर्हसि ॥ ९ ॥ तत्वंश्रुतंस्मनःसर्वंपूर्वमेवशुभाशुभम् ॥ नतृप्तिमधिग
च्छामःश्रवणेच्छामुहुर्मुहुः ॥१०॥ इदानीमेकमेवास्तिश्रोतव्यंसूतसन्मते ॥ तद्रहस्यमपिब्रूहियदितेऽनुग्रहोभवेत् ॥ ११ ॥ प्राप्तेकलियुगेघोरेनराःपुण्य
विवर्जिताः ॥ दुराचाररताःसर्वेसत्यवार्तापराङ्मुखाः ॥ १२ ॥ परापवादनिरताःपरद्रव्याभिलाषिणः ॥ परस्त्रीसक्तमनसःपरहिंसापरायणाः ॥ १३ ॥
देहात्मदृष्टयोमूढानास्तिकाःपशुबुद्धयः ॥ मातृपितृकृतद्वेषाःस्त्रीदेवाःकामकिंकराः ॥ १४ ॥ विप्रालोभग्रहग्रस्तावेदविक्रयजीविनः ॥ धनार्जनार्थम
भ्यस्तविद्यामदविमोहिताः ॥ १५ ॥ त्यक्तस्वजातिकर्माणःप्रायशःपरवंचकाः ॥ त्रिकालसंध्ययाहीनाब्रह्मबोधविवर्जिताः ॥ १६ ॥ अदयाःपंडितंम
न्यास्स्वाचारव्रतलोपकाः ॥ कृष्युद्यमरताःक्रूरस्वभावामलिनाशयाः ॥ १७ ॥ क्षत्रियाश्चतथासर्वेस्वधर्मत्यागशीलिनः ॥ असत्संगाःपापरताव्यभिचा
रपरायणाः ॥ १८ ॥ अशूराअरणप्रीताःपलायनपरायणाः ॥ कुचौरवृत्तयःशूद्राःकामकिंकरचेतसः ॥१९॥शस्त्रास्त्रविद्ययाहीनाधेनुविप्रावनोज्झिताः॥
शरण्यावनहीनाश्चकामिन्यूतिमृगास्सदा ॥ २० ॥ प्रजापालनसद्धर्मविहीनाभोगतत्पराः ॥ प्रजासंहारकादुष्टाजीवहिंसाकरामुदा ॥ २१ ॥ वैश्याः
संस्कारहीनास्तेस्वधर्मत्यागशीलिनः ॥ कुपथाःस्वार्जनरतास्तुलाकर्मकुवृत्तयः ॥ २२ ॥ गुरुदेवद्विजातीनांभक्तिहीनाःकुबुद्धयः ॥ अभोजितद्विजाः
प्रायःकृपणाबद्धमुष्टयः ॥ २३ ॥ कामिनीजारभावेषुसुरतामलिनाशयाः ॥ लोभमोहविचेतस्काःपूर्तादिसुवृषोज्झिताः ॥ २४ ॥ तद्वच्छूद्राश्चयेके
चिद्ब्राह्मणाचारतत्पराः ॥ उज्ज्वलाकृतयोमूढाःस्वधर्मत्यागशीलिनः ॥ २५ ॥ कर्तारस्तपसांभूयोद्विजतेजोपहारकाः ॥ शिश्वल्पमृत्युकाराश्चमंत्रो
च्चारपरायणाः ॥ २६ ॥ शालिग्रामशिलादीनांपूजकाहोमतत्पराः ॥ प्रतिकूलविचाराश्चकुटिलाद्विजदूषकाः ॥ २७ ॥ धनवंतःकुकर्म्माणो

विद्यावन्तोविवादिनः ॥ आख्यायोपासनाधर्मवक्तारोधर्मलोपकाः ॥ २८ ॥ सुभूपाकृतयोदंभाःसुदातारोमहामदाः ॥ विप्रादीन्सेवकान्मत्वा
मन्यमानानिजंप्रभुम् ॥ २९ ॥ स्वधर्मरहितामूढाःशंकराःक्रूरबुद्धयः ॥ महाभिमानिनोनित्यंचतुर्वर्णविलोपकाः ॥ ३० ॥ सुकुलीना
न्निजान्मत्वाचतुर्वर्णैर्विवर्तनाः ॥ सर्ववर्णभ्रष्टकरामूढास्सत्कर्मकारिणः ॥ ३१ ॥ स्त्रियश्चप्रायशोभ्रष्टाभर्त्रवज्ञानकारिकाः ॥ श्वशुरद्रोहकारिण्यो
निर्भयामलिनासनाः ॥ ३२ ॥ कुहावभावनिरताःकुशीलास्स्मरविह्वलाः ॥ राजसंगरतानित्यंस्वस्वामिविमुखास्तथा ॥ ३३ ॥ तनयामातृ
पित्रोश्चभक्तिहीनादुराशयाः ॥ अविद्यापाठकानित्यंरोगग्रसितदेहकाः ॥ ३४ ॥ एतेषांनष्टबुद्धीनांस्वधर्मत्यागशीलिनाम् ॥ परलोकेपीह
लोकेकथंसूतगतिर्भवेत् ॥ ३५ ॥ इतिचिंताकुलंचित्तंजायतेसततंहिनः ॥ परोपकारसदृशोनास्तिधर्मोपरःखलु ॥ ३६ ॥ लघूपायेनयेनैषांभवेत्सद्यो
घनाशनम् ॥ सर्व्वसिद्धान्तवित्त्वंहिकृपयातद्वदाधुना ॥ ३७ ॥ ॥ व्यासउवाच ॥ ॥ इत्याकर्ण्यवचस्तेषांमुनीनांभावितात्मनाम् ॥ मनसाशंकरं
स्मृत्वासूतःप्रोवाचतान्मुनीन् ॥ ३८ ॥ ॥ इतिश्रीशैवेमहापुराणेविद्येश्वरसंहितायांमुनिप्रश्नवर्णनोनामप्रथमोऽध्यायः ॥ १ ॥ ॥ सूतउवाच ॥ ॥साधु
पृष्टंसाधवोवस्त्रैलोक्यहितकारकम् ॥ गुरुंस्मृत्वाभवेत्स्नेहाद्वक्ष्येतच्छृणुतादरात् ॥ १ ॥ वेदांतसारसर्वस्वंपुराणंशैवमुत्तमम् ॥ सर्वाघौघोद्धारकरंपरत्र
परमार्थदम् ॥ २ ॥ कलिकल्मषविध्वंसीयस्मिञ्छिवयशःपरम् ॥ विजृंभतेसदाविप्राश्चतुर्वर्गफलप्रदम् ॥३॥ तस्याध्ययनमात्रेणपुराणस्यद्विजोत्तमाः॥
सर्वोत्तमस्यशैवस्ययास्यंतितेसुसद्गतिम् ॥ ४ ॥ तावद्विजृंभतेपापंब्रह्महत्यापुरस्सरम् ॥ यावच्छिवपुराणंहिनोदेष्यतिजगत्यहो ॥ ५ ॥ तावत्कलिमहो
त्पाताःसंचरिष्यंतिनिर्भयाः ॥ यावच्छिवपुराणंहिनोदेष्यतिजगत्यहो ॥ ६ ॥ तावत्सर्वाणिशास्त्राणिविवदंतिपरस्परम् ॥ यावच्छिवपुराणंहिनोदेष्यति
जगत्यहो ॥ ७ ॥ तावत्स्वरूपंदुर्बोधंशिवस्यमहतामपि ॥ यावच्छिवपुराणंहिनोदेष्यतिजगत्यहो ॥ ८ ॥ तावद्यमभटाःक्रूराःसंचरिष्यंतिनिर्भयाः ॥
यावच्छिवपुराणंहिनोदेष्यतिजगत्यहो ॥ ९ ॥ तावत्सर्वपुराणानिप्रगर्जंतिमहीतले ॥ यावच्छिवपुराणंहिनोदेष्यतिजगत्यहो ॥ १० ॥ तावत्सर्वाणिती
र्थानिविवदंतिमहीतले ॥ यावच्छिवपुराणंहिनोदेष्यतिजगत्यहो ॥ ११ ॥ तावत्सर्वाणिमंत्राणिविवदंतिमहीतले ॥ यावच्छिवपुराणंहिनोदेष्यतिमही
तले ॥ १२ ॥ तावत्सर्वाणिक्षेत्राणिविवदंतिमहीतले ॥ यावच्छिवपुराणंहिनोदेष्यतिमहीतले ॥ १३ ॥ तावत्सर्वाणिपीठानिविवदंतिमहीतले ॥
यावच्छिवपुराणंहिनोदेष्यतिमहीतले ॥ १४ ॥ तावत्सर्वाणिदानानिविवदंतिमहीतले ॥ यावच्छिवपुराणंहिनोदेष्यतिमहीतले ॥ १५ ॥ तावत्सर्वेंचतेदे
वाविवदंतिमहीतले ॥ यावच्छिवपुराणंहिनोदेष्यतिमहीतले ॥ १६ ॥ तावत्सर्वेंचसिद्धान्ताविवदंतिमहीतले ॥ यावच्छिवपुराणंहिनोदेष्यतिमही

तले ॥ १७ ॥ अस्यशैवपुराणस्यकीर्तनश्रवणाद्द्विजाः ॥ फलंवक्तुंनशक्नोमिकात्स्न्र्येनमुनिसत्तमाः ॥१८॥तथापितस्यमाहात्म्यंवक्ष्येकिंचित्तुवोनघाः॥
चित्तमाधायशृणुतव्यासेनोक्तंपुरामम ॥ १९ ॥ एतच्छिवपुराणंहिश्लोकंश्लोकार्द्धमेवच ॥ यःपठेद्भक्तिसंयुक्तस्सपापान्मुच्यतेक्षणात् ॥ २० ॥ एतच्छि
वपुराणंहियःप्रत्यहमतंद्रितः ॥ यथाशक्तिपठेद्भक्त्यासजीवन्मुक्तउच्यते ॥ २१ ॥ एतच्छिवपुराणंहियोभक्त्यार्चयतेसदा ॥ दिनेदिनेश्वमेधस्यफलं
प्राप्नोत्यसंशयम् ॥ २२ ॥ एतच्छिवपुराणंयस्साधारणपदेच्छया ॥ अन्यतःशृणुयात्सोपिमत्तोमुच्येतपातकात् ॥ २३ ॥ एतच्छिवपुराणंयोनमस्कुर्या
ददूरतः ॥ सर्वदेवार्चनफलंसप्राप्नोतिनसंशयः ॥ २४॥ एतच्छिवपुराणंवैलिखित्वापुस्तकंस्वयम् ॥ योदद्याच्छिवभक्तेभ्यस्तस्यपुण्यफलंशृणु॥ २५ ॥
अधीतेषुचशास्त्रेषुवेदेषुव्याकृतेषुच ॥ यत्फलंदुर्लभंलोकेतत्फलंतस्यसंभवेत् ॥ २६ ॥ एतच्छिवपुराणंहिचतुर्दश्यामुपोषितः ॥ शिवभक्तसभायां
योव्याकरोतिसउत्तमः ॥ २७ ॥ प्रत्यक्षरंतुगायत्रीपुरश्चर्य्याफलंलभेत् ॥ इहभुक्त्वाखिलान्कामानंतेनिर्वाणतांव्रजेत् ॥ २८ ॥ उपोषितश्चतुर्दश्यांरात्रौ
जागरणान्वितः ॥ यःपठेच्छृणुयाद्वापितस्यपुण्यंवदाम्यहम् ॥ २९ ॥ कुरुक्षेत्रादिनिखिलपुण्यतीर्थेष्वनेकशः ॥ आत्मतुल्यधनंसूर्य्यग्रहणेसर्वतोमुखे
॥ ३० ॥ विप्रेभ्योव्यासमुख्येभ्योदत्वायत्फलमश्नुते ॥ तत्फलंसंभवेत्तस्यसत्यंसत्यंनसंशयः॥३१॥ एतच्छिवपुराणंहिगायतेयोप्यहर्निशम् ॥ आज्ञां
तस्यप्रतीक्षेरन्देवाइन्द्रपुरोगमाः ॥ ३२ ॥ एतच्छिवपुराणंयःपठञ्छृण्वन्हिनित्यशः ॥ यद्यत्करोतिसत्कर्मतत्कोटिगुणितंभवेत् ॥ ३३ ॥ समाहि
तःपठेद्यस्तुतत्रश्रीरुद्रसंहिताम् ॥ सब्रह्मघ्नोपिपूतात्मात्रिभिरेवदिनैर्भवेत् ॥ ३४ ॥ तांरुद्रसंहितांयस्तुभैरवप्रतिमांतिके ॥ त्रिःपठेत्प्रत्यहंमौनीसकामा
नखिलाँल्लभेत्॥३५॥तांरुद्रसंहितांयस्तुसंपठेद्वटबिल्वयोः॥प्रदक्षिणांप्रकुर्वाणोब्रह्महत्यानिवर्तते॥३६॥ कैलाससंहितातत्रततोपिपरमास्मृता॥ब्रह्मस्वरू
पिणीसाक्षात्प्रणवार्थप्रकाशिका ॥ ३७ ॥ कैलाससंहितायास्तुमाहात्म्यंवेत्तिशंकरः ॥ कृत्स्नंतदर्द्धंव्यासश्चतदर्द्धंवेद्म्यहंद्विजाः ॥ ३८ ॥ तत्रकिंचित्प्र
वक्ष्यामिकृत्स्नंवक्तुंनशक्यते ॥ यज्ज्ञात्वातत्क्षणाल्लोकश्चित्तशुद्धिमवाप्नुयात्॥३९॥ननाशयतियत्पापंसारौद्रीसंहिताद्विजाः ॥ तन्नपश्याम्यहंलोकेमार्ग
माणोपिसर्वदा ॥४०॥ शिवेनोपनिषत्सिंधुमन्थनोत्पादितांमुदा ॥ कुमारायार्पितांतांवैसुधांपीत्वामरोभवेत्॥४१॥ ब्रह्महत्यादिपापानांनिष्कृतिंकर्तुमु
द्यतः॥माससमात्रंसंहितांतांपठित्वामुच्यतेततः ॥ ४२ ॥ दुष्प्रतिग्रहदुर्भोज्यदुरालापादिसंभवम् ॥ पापंसकृत्कीर्तनेनसंहितासाविनाशयेत् ॥ ४३ ॥ शि
वालयेबिल्ववनेसंहितांतांपठेत्तुयः॥सतत्फलमवाप्नोतितद्वाचोपिनगोचरे ॥४४॥ संहितांतांपठन्भक्त्यायःश्राद्धेभोजयेद्द्विजान् ॥ तस्ययेपितरःसर्वेयांति
शंभोःपरंपदम् ॥ ४५ ॥ चतुर्दश्यांनिराहारोयःपठेत्संहितांचताम् ॥ बिल्वमूलेशिवःसाक्षात्सदेवैश्चप्रपूज्यते ॥ ४६ ॥ अन्यापिसंहितातत्रसर्वकामफल

प्रदा ॥ उभेविशिष्टेविज्ञेयेलीलाविज्ञानपूरिते ॥ ४७ ॥ तदिदंशैवमाख्यातंपुराणंवेदसंमितम् ॥ निर्मिंतंतच्छिवेनैवप्रथमंब्रह्मसंमितम् ॥ ४८ ॥ विद्येशं
चतथारौद्रंवैनायकमथौमिकम् ॥ मात्रंरुद्रैकादशकंकैलासंशतरुद्रकम् ॥ ४९ ॥ कोटिरुद्रसहस्राद्यंकोटिरुद्रंतथैवच ॥ वायवीयंधर्मसंज्ञंपुराणमिति
भेदतः ॥ ५० ॥ संहिताद्वादशमितामहापुण्यतरामता ॥ तासांसंख्यांब्रुवेविप्राःशृणुतादरतोखिलम् ॥ ५१ ॥ विद्येशंदशसाहस्रंरुद्रंवैनायकंतथा ॥
औमंमातृपुराणाख्यंप्रत्येकाष्टसहस्रकम् ॥ ५२ ॥ त्रयोदशसहस्रंहिरुद्रैकादशकंद्विजाः॥षट्सहस्रंचकैलासंशतरुद्रंतदर्द्धकम् ॥ ५३ ॥ कोटिरुद्रंत्रिगु
णितमेकादशसहस्रकम् ॥ सहस्रकोटिरुद्राख्यमुदितंग्रन्थसंख्यया ॥ ५४ ॥ वायवीयंखाब्धिशतंधर्मंरविसहस्रकम् ॥ तदेवंलक्षसंख्याकंशैवसंख्यावि
भेदतः ॥५५॥ व्यासेनतत्तुसंक्षिप्तंचतुर्विंशत्सहस्रकम् ॥ शैवंतत्रचतुर्थंवैपुराणंसप्तसंहितम् ॥ ५६ ॥ शिवेसंकल्पितंपूर्वंपुराणंग्रन्थसंख्यया ॥ शतकोटि
प्रमाणंहिपुरासृष्टौसुविस्मृतम् ॥ ५७ ॥ व्यस्तेष्टादशधाचैवपुराणेद्वापरादिषु ॥ चतुर्लक्षेणसंक्षिप्तेकृतेद्वैपायनादिभिः ॥ ५८ ॥ प्रोक्तंशिवपुराणंहि
चतुर्विंशत्सहस्रकम् ॥ श्लोकानांसंख्ययासप्तसंहितंब्रह्मसंमितम् ॥ ५९ ॥ विद्येश्वराख्यातत्राद्यारौद्रीज्ञेयाद्वितीयका ॥ तृतीयाशतरुद्राख्याकोटिरुद्रा
चतुर्थिका ॥ ६० ॥ पंचमीचैवमौमाख्याषष्ठीकैलाससंज्ञिका ॥ सप्तमीवायवीयाख्यासप्तैवंसंहितामताः ॥ ६१ ॥ ससप्तसंहितंदिव्यंपुराणंशिवसंज्ञकम्॥
वरीवर्तिब्रह्मतुल्यंसर्वोपरिगतिप्रदम् ॥ ६२ ॥ एतच्छिवपुराणंहिसप्तसंहितमादरात् ॥ परिपूर्णंपठेद्यस्तुसजीवन्मुक्तउच्यते ॥ ६३ ॥ श्रुतिस्मृतिपुरा
णेतिहासागमशतानिच ॥ एतच्छिवपुराणस्यनार्हंत्यल्पांकलामपि ॥ ६४ ॥ शैवंपुराणममलंशिवकीर्तितंतद्व्यासेनशैवप्रवणेनचसंगृहीतम् ॥ संक्षे
पतस्सकलजीवगुणोपकारंतापत्रयघ्नमतुलंशिवदंसतांहि ॥ ६५ ॥ विकैतवोधर्मइहप्रगीतोवेदान्तविज्ञानमयःप्रधानः ॥ अमत्सरांतर्बुधवेद्यवस्तुस
त्कलत्तमंत्रैषात्रिवर्गयुक्तम् ॥ ६६ ॥ शैवंपुराणतिलकंखलुसत्पुराणं वेदांतवेदविलसत्परवस्तुगीतम् ॥ योवैपठेच्चशृणुयात्परमादरेणशंभुप्रियस्सहिलभे
त्परमांगतिंवै ॥६७॥इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायांद्वितीयोऽध्यायः ॥२॥ व्यासउवाच ॥इत्याकर्ण्यवचस्सौतंप्रोचुस्तेपरमर्षयः ॥वेदान्तसार
सर्वस्वंपुराणंश्रावयाद्भुतम् ॥ १॥ इतिश्रुत्वामुनीनांसवचनंसुप्रहर्षितः ॥ संस्मरञ्छंकरंसूतःप्रोवाचमुनिसत्तमान् ॥ २ ॥ सूतउवाच ॥ शृण्वंतुऋषयः
सर्वेस्मृत्वाशिवमनामयम् ॥ पुराणप्रवणंशैवंपुराणंवेदसारजम् ॥ ३ ॥ यत्रगीतंत्रिकंप्रीत्याभक्तिज्ञानविरागकम् ॥ ४ ॥ वेदांतवेद्यंसद्वस्तुविशेषेणप्र
वर्णितम् ॥ ५ ॥ सूतउवाच ॥ शृण्वंतुऋषयःसर्वेपुराणंवेदसारजम् ॥ पुराकालेनमहताकल्पेऽतीतेपुनःपुनः ॥ ६ ॥ अस्मिन्नुपस्थितेकल्पेप्रवृत्तेसृष्टिक
र्मणि ॥ मुनीनांषट्कुलीनानांब्रुवतामितरेतरम् ॥७॥ इदंपरमिदंनेतिविवादःसुमहानभूत् ॥ तेऽभिजग्मुर्विधातारंब्रह्माणंप्रष्टुमव्ययम् ॥ ८ ॥ वाग्भिर्विन

यगर्भाभिःसर्वैप्रांजलयोऽब्रुवन् ॥ त्वंहिसर्वजगद्धातासर्वकारणकारणम् ॥ ९ ॥ कःपुमान्सर्वतत्वेभ्यःपुराणःपरतःपरः ॥ ब्रह्मोवाच ॥ यतोवाचोनिवर्तं
तेअप्राप्यमनसासह ॥ १० ॥ यस्मात्सर्वमिदंब्रह्मविष्णुरुद्रेंद्रपूर्वकम् ॥ सहभूतेंद्रियैःसर्वैःप्रथमंसंप्रसूयते ॥ ११ ॥ एषदेवोमहादेवःसर्वज्ञोजगदीश्वरः ॥
अयंतुपरयाभक्त्यादृश्यतेनाऽन्यथाक्वचित् ॥ १२ ॥ रुद्रोहरिर्हरश्चैवतथान्येचसुरेश्वराः ॥ भक्त्यापरमयातस्यनित्यंदर्शनकांक्षिणः ॥ १३ ॥ बहुनात्र
किमुक्तेनशिवेभक्त्याविमुच्यते ॥ प्रसादाद्देवताभक्तिःप्रसादोभक्तिसंभवः ॥ यथेहांकुरतोबीजंबीजतोवायथांकुरः ॥ १४ ॥ तस्मादीशप्रसादार्थंयूयंग
त्वाभुवंद्विजाः ॥ दीर्घसत्रंसमाकुर्ध्वंयूयंवर्षसहस्रकम् ॥ १५ ॥ अमुष्यैवाध्वरेशस्यशिवस्यैवप्रसादतः ॥ वेदोक्तविद्यासारंतुज्ञायतेसाध्यसाधनम् ॥१६॥
मुनयऊचुः ॥ अथकिंपरमंसाध्यंकिंवातत्साधनंपरम् ॥ साधकःकीदृशस्तत्रतदिदंब्रूहितत्वतः ॥ १७ ॥ ब्रह्मोवाच ॥ साध्यंशिवपदप्राप्तिःसाधनंतस्यसे
वनम् ॥ साधकस्तत्प्रसादाद्योऽनित्यादिफलनिस्पृहः ॥ १८ ॥ कर्मकृत्वातुवेदोक्तंतदर्पितमहाफलम् ॥ परमेशपदप्राप्तिःसालोक्यादिक्रमात्ततः ॥१९॥
तत्तद्भक्त्यनुसारेणसर्वेषांपरमंफलम् ॥ तत्साधनंबहुविधंसाक्षादीशेनबोधितम् ॥ २० ॥ संक्षिप्यतत्रवःसारंसाधनंप्रब्रवीम्यहम् ॥ श्रोत्रेणश्रवणंतस्यव
चसाकीर्तनंतथा ॥ २१ ॥ मनसामननंतस्यमहासाधनमुच्यते ॥ श्रोतव्यःकीर्तितव्यश्चमंतव्यश्चमहेश्वरः ॥ २२ ॥ इतिश्रुतिःप्रमाणंनःसाधनेनाऽमुना
परम् ॥ साध्यंव्रजतसर्वार्थसाधनैकपरायणाः ॥ २३ ॥ प्रत्यक्षंचक्षुषादृष्ट्वातत्रलोकःप्रवर्तते ॥ अप्रत्यक्षंहिसर्वत्रज्ञात्वाश्रोत्रेणचेष्टते ॥ २४ ॥ तस्माच्छ्र
वणमेवादौश्रुत्वागुरुमुखाद्बुधः ॥ ततःसंसाधयेदन्यत्कीर्तनंमननंसुधीः ॥ २५ ॥ क्रमान्मननपर्यंतेसाधनेऽस्मिन्सुसाधिते ॥ शिवयोगोभवेत्तेनसालो
क्यादिक्रमाच्छनैः ॥ २६ ॥ सर्वांगव्याधयःपश्चात्सर्वानंदश्चलीयते ॥ अभ्यासात्क्लेशमेतद्वैपश्चादाद्यंतमंगलम् ॥ २७ ॥ इतिश्रीशिवमहापुराणेविद्ये
श्वरसंहितायांसाध्यसाधनखंडेतृतीयोऽध्यायः॥३॥ मुनयऊचुः ॥ मननंकीदृशंब्रह्मञ्छ्रवणंचापिकीदृशम् ॥ कीर्तनंवाकथंतस्यकीर्तयैतद्यथायथम् ॥१॥
ब्रह्मोवाच ॥ पूजाजपेशगुणरूपविलासनाम्नांयुक्तिप्रियेणमनसापरिशोधनंयत् ॥ तत्संततंमननमीश्वरदृष्टिलभ्यंसर्वेषुसाधनवरेष्वपिमुख्यमुख्यम् ॥ २ ॥
गीतात्मनाश्रुतिपदेनचभाषयावाशंभुप्रतापगुणरूपविलासनाम्नाम् ॥ वाचास्फुटंतुरसवत्स्तवनंयदस्यतत्कीर्तनंभवतिसाधनमत्रमध्यम् ॥ ३ ॥ येना
पिकेनकरणेनचशब्दपुंजंयत्रक्वचिच्छिवपरंश्रवणेंद्रियेण ॥ स्त्रीकेलिवद्दृढतरंप्रणिधीयतेयत्तद्वैबुधाःश्रवणमत्रजगत्प्रसिद्धम् ॥ ४ ॥ सत्संगमेनभवतिश्र
वणंपुरस्तात्संकीर्तनंपशुपतेरथतद्दृढंस्यात् ॥ सर्वोत्तमंभवतितन्मननंतदंतेसर्वंहिसंभवतिशंकरदृष्टिपाते ॥ ५ ॥ सूतउवाच ॥ अस्मिन्साधनमाहा
त्म्येपुरावृत्तंमुनीश्वराः ॥ युष्मदर्थंप्रवक्ष्यामिशृणुध्वमवधानतः ॥ ६ ॥ पुराममगुरुर्व्यासःपराशरमुनेःसुतः ॥ तपश्चचारसंभ्रांतःसरस्वत्यास्तटे

शुभे ॥ ७ ॥ गच्छन्यदृच्छयातत्रविमानेनार्करोचिषा ॥ सनत्कुमारोभगवान्ददर्शममदेशिकम् ॥ ८ ॥ ध्यानारूढः प्रबुद्धोसौददर्शतमजात्मजम् ॥ प्रणिपत्याहसंभ्रांतःपरंकौतूहलंमुनिः ॥ ९ ॥ दत्त्वार्घ्यमस्मैप्रददौदेवयोग्यंचविष्टरम् ॥ प्रसन्नःप्राहतंप्रह्वंप्रभुर्गंभीरयागिरा ॥ १० ॥ सनत्कुमारउवाच ॥ सत्यंवस्तुमुनेदध्याःसाक्षात्करणगोचरः ॥ सशिवोथासहायोत्रतपश्चरसिकिंकृते ॥ ११ ॥ एवमुक्तःकुमारेणप्रोवाचस्वाशयंमुनिः ॥ धर्मार्थकाममोक्षाश्चवेदमार्गेकृतादराः ॥ १२ ॥ बहुधास्थापितालोकेमयात्वत्कृपयातथा ॥ एवंभूतस्यमेप्येवंगुरुभूतस्यसर्वतः ॥ १३ ॥ मुक्तिसाधनकंज्ञानंनोदेतिपरमाद्भुतम् ॥ तपश्चरामिमुक्त्यर्थंनजानेतत्रकारणम् ॥ १४ ॥ इत्थंकुमारोभगवान्व्यासेनमुनिनार्थितः ॥ समर्थःप्राहविप्रेंद्रानिश्चयंमुक्तिकारणम् ॥ १५ ॥ श्रवणंकीर्तनंशंभोर्मननंचमहत्तरम् ॥ त्रयंसाधनमुक्तंचविद्यतेवेदसंमतम् ॥ १६ ॥ पुराहमथसंभ्रांतोह्यन्यसाधनसंभ्रमः ॥ अचलेमंदरेशैलेतपश्चरणमाचरम् ॥ १७ ॥ शिवाज्ञयाततःप्राप्तोभगवान्नंदिकेश्वरः ॥ समेदयालुर्भगवान्सर्वसाक्षीगणेश्वरः ॥ १८ ॥ उवाचमह्यंसस्नेहंमुक्तिसाधनमुत्तमम् ॥ श्रवणंकीर्तनंशंभोर्मननंवेदसंमतम् ॥ १९ ॥ त्रिकंचसाधनंमुक्तौशिवेनममभाषितम् ॥ श्रवणादित्रिकंब्रह्मन्कुरुष्वेतिमुहुर्मुहुः ॥ २० ॥ एवमुक्त्वाततोव्यासंसानुगोविधिनंदनः ॥ जगामस्वविमानेनपदंपरमशोभनम् ॥ २१ ॥ एवमुक्तंसमासेनपूर्ववृत्तांतमुत्तमम् ॥ ऋषयऊचुः ॥ ॥श्रवणादित्रयंसूतमुक्त्युपायस्त्वयेरितः ॥ २२ ॥ श्रवणादित्रिकेऽशक्तःकिंकृत्वामुच्यतेजनः ॥ अयत्नेनैवमुक्तिःस्यात्कर्मणाकेनहेतुना ॥ २३ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायांसाध्यसाधनखण्डे चतुर्थोध्यायः ॥ ४ ॥ ॥ सूतउवाच ॥ श्रवणादित्रिकेऽशक्तोलिंगंबेरंचशांकरम् ॥ संस्थाप्यनित्यमभ्यर्च्यतरेत्संसारसागरम् ॥ १ ॥ अपिद्रव्यंवहेदेवयथाबलमवंचयन् ॥ अर्पयेल्लिंगबेरार्थमर्चयेदपिसंततम् ॥ २ ॥ मंडपंगोपुरंतीर्थंमठंक्षेत्रंतथोत्सवम् ॥ वस्त्रंगंधंचमाल्यंचधूपंदीपंचभक्तितः ॥ ३ ॥ विविधान्नंचनैवेद्यमपूपव्यंजनैर्युतम् ॥ छत्रंध्वजंचव्यजनंचामरंचापिसांगकम् ॥ ४ ॥ राजोपचारवत्सर्वंधारयेल्लिंगबेरयोः ॥ प्रदक्षिणांनमस्कारंयथाशक्तिजपंतथा ॥ ५ ॥ आवाहनादिसर्गांतं नित्यंकुर्यात्सुभक्तितः ॥ इत्थमभ्यर्चयन्देवंलिंगेबेरेचशांकरे ॥ ६ ॥ सिद्धिमेतिशिवप्रीत्याहित्वापिश्रवणादिकम् ॥ लिंगबेरार्चनामात्रान्मुक्ताःपूर्वेमहाजनाः ॥ ७ ॥ मुनयऊचुः ॥ बेरमात्रेतुसर्वत्रपूज्यंतेदेवतागणाः ॥ लिंगेबेरेचसर्वत्रकथंसंपूज्यतेशिवः ॥ ८ ॥ सूतउवाच ॥ अहोमुनीश्वराःपुण्यंप्रश्नमेतन्महाद्भुतम् ॥ अत्रवक्तामहादेवोनान्योऽस्तिपुरुषःक्वचित् ॥ ९ ॥ शिवेनोक्तंप्रवक्ष्यामिक्रमाद्गुरुमुखाच्छ्रुतम् ॥ शिवैकोब्रह्मरूपत्वान्निष्कलःपरिकीर्तितः ॥ १० ॥ रूपित्वात्सकलस्तद्वत्तस्मात्सकलनिष्कलः ॥ निष्कलत्वान्निराकारंलिंगंतस्यसमागतम् ॥ ११ ॥ सकलत्वात्तथाबेरंसाकारंतस्यसंगतम् ॥ सकलाकलरूप

त्वाद्ब्रह्मशब्दाभिधः परः ॥ १२ ॥ अपिलिंगेचबेरेचानित्यमभ्यर्च्यतेजनैः ॥ अब्रह्मत्वात्तदन्येषांनिष्कलत्वंनहिकाचित् ॥ १३ ॥ तस्मात्तेनिष्कलेलिंगे
नाराध्यंतेसुरेश्वरः ॥ अब्रह्मत्वाच्चजीवत्वात्तथान्येदेवतागणाः ॥ १४ ॥ तूष्णींसकलमात्रत्वादर्च्यंतेबेरमात्रके ॥ जीवत्वंशंकरान्येषांब्रह्मत्वंशंकरस्यच
॥ १५ ॥ वेदांतसारसंसिद्धंप्रणवार्थप्रकाशनात् ॥ एवमेवपुरापृष्टोमंदरेनंदिकेश्वरः ॥ १६ ॥ सनत्कुमारमुनिनाब्रह्मपुत्रेणधीमता ॥ सनत्कुमारउवाच ॥ शिवान्य
देववश्यानांसर्वेषामपिसर्वतः ॥ १७ ॥ बेरमात्रंचपूजार्थश्रुतंदृष्टंचभूरिशः ॥ शिवमात्रस्यपूजायांलिंगंबेरंचदृश्यते ॥ १८ ॥ अतस्तद्ब्रूहिकल्याणतत्त्वंमे
साधुबोधनम् ॥ नंदिकेश्वरउवाच ॥ अनुत्तरमिमंप्रश्नंरहस्यंब्रह्मलक्षणम् ॥ १९ ॥ कथयामिशिवेनोक्तंभक्तियुक्तस्यतेऽनघ ॥ शिवस्यब्रह्मरूपत्वान्निष्कल
त्वाच्चनिष्कलम् ॥ २० ॥ लिंगंतस्यैवपूजायांसर्ववेदेषुसंमतम् ॥ तस्यैवसकलत्वाच्चतथासकलनिष्कलम् ॥ २१ ॥ सकलंचतथाबेरंपूजायांलोकसंमत
म् ॥ शिवान्येषांचजीवत्वात्सकलत्वाच्चसर्वतः ॥ २२ ॥ बेरमात्रंचपूजायांसंमतंवेदनिर्णये ॥ स्वाविर्भावेचदेवानांसकलंरूपमेवहि ॥ २३ ॥ शिवस्य
लिंगंबेरंचदर्शनेदृश्यतेखलु ॥ सनत्कुमारउवाच ॥ उक्तंत्वयामहाभागलिंगबेरप्रचारणम् ॥ २४ ॥ शिवस्यचतदन्येषांविभज्यपरमार्थतः ॥ तस्मात्तदे
वपरमंलिंगबेरादिसंभवम् ॥ २५ ॥ श्रोतुमिच्छामियोगींद्रलिंगाविर्भावलक्षणम् ॥ नंदिकेश्वरउवाच ॥ शृणुवत्सभवत्प्रीत्यावक्ष्यामिपरमार्थतः ॥ २६ ॥ पुराकल्पे
महाकालेप्रपन्नेलोकविश्रुते ॥ अयुध्यतांमहात्मानौब्रह्मविष्णूपरस्परम् ॥ २७ ॥ तयोर्माननिराकर्तुंतन्मध्येपरमेश्वरः ॥ निष्कलस्तंभरूपेणस्वरूपंसमदर्शयत्
॥ २८ ॥ ततः स्वलिंगचिह्नत्वात्स्तंभतोनिष्कलंशिवः ॥ स्वलिंगंदर्शयामासजगतांहितकाम्यया ॥ २९ ॥ तदाप्रभृतिलोकेषुनिष्कलंलिंगमैश्वरम् ॥ सकलंचत
थाबेरंशिवस्यैवप्रकल्पितम् ॥ ३० ॥ शिवान्येषांतुदेवानांबेरमात्रंप्रकल्पितम् ॥ तत्तद्बेरंतुदेवानांतत्तद्भोगप्रदंशुभम् ॥ शिवस्यलिंगबेरत्वंभोगमोक्षप्र
दंशुभम् ॥ ३१ ॥ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायांपंचमोऽध्यायः ॥ ५ ॥ ॥ नंदिकेश्वरउवाच ॥ पुराकदाचिद्योगींद्रविष्णुर्विषधरास
नः ॥ सुष्वापरयाभूत्यास्वानुगैरपिसंवृतः ॥ १ ॥ यदृच्छयागतस्तत्रब्रह्माब्रह्मविदांवरः ॥ अपृच्छत्पुंडरीकाक्षंशयानंसर्वसुंदरम् ॥ २ ॥ कस्त्वंपुरुषव
च्छेषेदृष्ट्वामामपिदृप्तवत् ॥ उत्तिष्ठवत्समांपश्यतवनाथमिहागतम् ॥ ३ ॥ आगतंगुरुमाराध्यंदृष्ट्वायोदृप्तवच्चरेत् ॥ द्रोहिणस्तस्यमूढस्यप्रायश्चित्तंविधी
यते ॥ ४ ॥ इतिश्रुत्वावचः क्रुद्धोबहिः शांतवदाचरत् ॥ स्वस्तितेस्वागतंवत्सतिष्ठपीठमितोविश ॥ ५ ॥ किमुतेव्यग्रवद्वक्त्रंविभातिविषमेक्षणम् ॥
॥ ब्रह्मोवाच ॥ वत्सविष्णोमहामानमागतंकालवेगतः ॥ ६ ॥ पितामहश्चजगतः पाताचतववत्सक ॥ विष्णुरुवाच ॥ मत्स्थंजगदिदंवत्समनुषेत्वंहिचोर
वत् ॥ ७ ॥ मन्नाभिकमलाज्जातः पुत्रस्त्वंभाषसेवृथा ॥ नंदिकेश्वरउवाच ॥ एवंहिवदतोस्तत्रमुग्धयोरजयोस्तदा ॥ ८ ॥ अहमेववरोनत्वमहंप्रभुरहंप्रभुः ॥

परस्परंहंतुकामौचक्रतुःसमरोद्यमम् ॥ ९ ॥ युयुधातेऽमरौवीरौहंसपक्षींद्रवाहनौ ॥ वैरंच्यावैष्णवाश्चैवमिथोयुयुधिरेतदा ॥ १० ॥ तावद्विमानगतयः सर्वावैदेवजातयः ॥ दिदृक्षवःसमाजग्मुःसमरंतंमहाद्भुतम् ॥ ११ ॥ क्षिपंतःपुष्पवर्षाणिपश्यंतःस्वैरमंबरे ॥ सुपर्णवाहनस्तत्रक्रुद्धोवैब्रह्मवक्षसि ॥ १२ ॥ मुमोचबाणानसहानस्त्रांश्चविविधान्बहून् ॥ मुमोचाऽथविधिःक्रुद्धोविष्णोरुरसिदुःसहान् ॥ १३ ॥ बाणाननलसंकाशानस्त्रांश्चबहुशस्तदा ॥ तदाश्चर्य मितिरूपष्टंतयोःसमरगोचरम् ॥ १४ ॥ समीक्ष्यदैवतगणाःशशंसुर्भृशमाकुलाः ॥ ततोविष्णुःसुसंक्रुद्धःश्वसन्व्यसनकर्शितः ॥ १५ ॥ माहेश्वरास्त्रंमति मान्संदधेब्रह्मणोपरि ॥ ततोब्रह्माभृशंक्रुद्धःकंपयन्विश्वमेवहि ॥ १६ ॥ अस्त्रंपाशुपतंघोरंसंदधेविष्णुवक्षसि ॥ ततस्तदुत्थितंव्योम्नितपनायुतसन्निभम् ॥ १७ ॥ सहस्रमुखमत्युग्रंचंडवातभयंकरम् ॥ अस्त्रद्वयमिदंतत्रब्रह्मविष्ण्वोर्भयंकरम् ॥ १८ ॥ इत्थंबभूवसमरंब्रह्मविष्ण्वोःपरस्परम् ॥ ततोदेवगणाः सर्वेविषण्णाभृशमाकुलाः ॥ १९ ॥ ऊचुःपरस्परंतातराजक्षोभेयथाद्विजाः॥सृष्टिःस्थितिश्चसंहारस्तिरोभावोप्यनुग्रहः॥ २० ॥ यस्मात्प्रवर्ततेतस्मैब्रह्मणे चत्रिशूलिने ॥ अशक्यमन्यैर्यदनुग्रहंविनातृणक्षयोप्यत्रयदृच्छयाक्वचित् ॥ २१ ॥ इतिदेवाभयंकृत्वाविचिन्वंतःशिवक्षयम् ॥ जग्मुःकैलासशिखरंयत्रा स्तेचंद्रशेखरः॥२२॥दृष्ट्वैवममराहृष्टाःपदंतत्पारमेश्वरम्॥प्रणेमुःप्रणवाकारंप्रविष्टास्तत्रसद्मनि॥२३॥तेपितत्रसभामध्येमंडपेमणिविष्टरे॥ विराजमानमुम यादहशुर्देवपुंगवम् ॥२४॥सव्योत्तरेतरपदंतदर्पितकरांबुजम्॥स्वगणैःसर्वतोजुष्टंसर्वलक्षणलक्षितम् ॥२५॥ वीज्यमानंविशेषज्ञैःस्त्रीजनैस्तीव्रभावनैः ॥ शस्यमानंसदावेदैरनुगृह्णंतमीश्वरम्॥२६॥दृष्ट्वैवमीशममराःसंतोषसलिलेक्षणाः॥दंडवद्दूरतोवत्सनमश्चक्रुर्महागणाः॥२७॥तानवेक्ष्यपतिर्देवान्समीपेचाह्व यद्गणैः ॥ अथसंह्लादयन्देवान्देवोदेवशिखामणिः॥अवोचदर्थगंभीरंवचनंमधुमंगलम्॥२८॥इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायांषष्ठोऽध्यायः ॥ ६ ॥ ईश्वरउवाच ॥ वत्सकाःस्वस्तिवःकच्चिद्वर्ततेममशासनात् ॥ जगच्चदेवतावंशःस्वस्वकर्मणिकिंनवा ॥ १ ॥ प्रागेवविदितंयुद्धंब्रह्मविष्ण्वोर्मयासुराः ॥ भवतामभितापेनपौनरुक्तेनभाषितम् ॥ २ ॥ इतिसस्मितयामाध्व्याकुमारपरिभाषया ॥ समतोषयदंबायाःसपतिस्तत्सुरव्रजम् ॥ ३ ॥ अथयुद्धांगणं गंतुंहरिधात्रोरधीश्वरः ॥ आज्ञापयद्गणेशानांशतंतत्रैवसंसदि ॥ ४ ॥ ततोवाद्यंबहुविधंप्रयाणायपरेशितुः ॥ गणेश्वराश्चसंनद्धानानावाहनभूषणाः ॥ ५ ॥ प्रणवाकारमाद्यंतंपंचमंडलमंडितम् ॥ आरुरोहरथंभद्रमंबिकापतिरीश्वरः ॥ ससूनुगणमिंद्राद्याःसर्वेप्यनुययुःसुराः ॥ ६ ॥ चित्रध्वजव्यजनचामरपुष्प वर्षसंगीतनृत्यनिवहैरपिवाद्यवर्गैः ॥ संमानितःपशुपतिःपरयाचदेव्यासाकंतयोःसमरभूमिमगात्ससैन्यः ॥ ७ ॥ समीक्ष्यतुतयोर्युद्धंनिगूढोऽभ्रंशमास्थि तः ॥ समाप्तवाद्यनिर्घोषःशांतोरुगणनिःस्वनः ॥ ८ ॥ अथब्रह्माच्युतौवीरौहंतुकामौपरस्परम् ॥ माहेश्वरेणचाऽस्त्रेणतथापाशुपतेनच ॥ ९ ॥ अस्त्रज्वा

पातकसंघातैर्मुच्यतेचोपपातकैः ॥ ५२ ॥ ब्रह्मचारीगृहस्थोवावानप्रस्थोथवायतिः ॥ ब्रह्मक्षत्राश्चविट्शूद्रास्तथान्येपतिताधमाः ॥ ५३ ॥ उद्धूलनंत्रि
पुंड्रंचधृत्वाशुद्धाभवंतिच ॥ भस्मनोविधिनासम्यक्पापराशिंविहायच॥५४॥भस्मधारीविशेषेणस्त्रीगोहत्यादिपातकैः ॥वीरहत्याश्वहत्याभ्यांमुच्यतेना
त्रसंशयः॥५५॥परद्रव्यापहरणंपरदाराभिमर्शनम्॥परनिन्दापरक्षेत्रहरणंपरपीडनम् ॥५६॥ सस्यारामादिहरणंगृहदाहादिकर्मच॥गोहिरण्यमाहिष्यादि
तिलकम्बलवाससाम् ॥५७॥ अन्नधान्यजलादीनांनीचेभ्यश्चपरिग्रहः॥दशवेश्यामतंगीषुवृषलीषुनटीषुच॥५८॥ रजस्वलासुकन्यासुविधवासुचमैथुनम्॥
मांसचर्मरसादीनांलवणस्यचविक्रयः॥५९॥पैशुन्यंकूटवादश्चसाक्षिमिथ्याभिलाषिणाम्॥ एवमादीन्यसंख्यानिपापानिविविधानिच ॥ सद्यएवविनश्यंति
त्रिपुंड्रस्यचधारणात् ॥ ६० ॥ शिवद्रव्यापहरणंशिवनिंदाचकुत्रचित् ॥ निंदाचशिवभक्तानांप्रायश्चित्तैर्नशुद्ध्यति ॥६१॥ रुद्राक्षंयस्यगात्रेषुललाटेतु
त्रिपुंड्रकम् ॥ सचांडालोपिसंपूज्यःवर्णवर्णोत्तमोत्तमः ॥ ६२ ॥ यानितीर्थानिलोकेस्मिन्गंगाद्यास्सरितश्चयाः ॥ स्नातोभवतिसर्वत्रललाटेयस्त्रिपुंड्रकम् ॥
॥ ६३ ॥ सप्तकोटिमहामंत्राःपंचाक्षरपुरस्सराः ॥ तथान्येकोटिशोमंत्राःशैवकैवल्यहेतवः ॥ ६४ ॥ अन्येमंत्राश्चदेवानांसर्वसौख्यकरामुने ॥ तेसर्वेतस्य
वश्याःस्युर्योविभर्तित्रिपुंड्रकम् ॥ ६५ ॥ सहस्रंपूर्वजातानांसहस्रंजनयिष्यताम् ॥ स्ववंशजानांज्ञातीनामुद्धरेद्यस्त्रिपुंड्रकृत् ॥ ६६ ॥ इहभुक्त्वा
खिलान्भोगान्दीर्घायुर्व्याधिवर्जितः ॥ जीवितांतेचमरणंसुखेनैवप्रपद्यते ॥ ६७ ॥ अष्टैश्वर्यगुणोपेतंप्राप्यदिव्यवपुःशिवम् ॥ दिव्यंविमानमारु
ह्यदिव्यत्रिदशसेवितम् ॥ ६८ ॥ विद्याधराणांसर्वेषांगंधर्वाणांमहौजसाम् ॥ इंद्रादिलोकपालानांलोकेषुचयथाक्रमम् ॥ ६९ ॥ भुक्त्वाभोगान्सुविपु
लान्प्रजेशानांपदेषुच ॥ ब्रह्मणःपदमासाद्यतत्रकन्याशतंरमेत्॥७०॥तत्रब्रह्मायुषोमानंभुक्त्वाभोगाननेकशः॥विष्णोर्लोकेलभेद्भोगंयावद्ब्रह्मशतात्ययः॥
॥ ७१ ॥ शिवलोकंततःप्राप्यलब्ध्वेष्टंकाममक्षयम् ॥ शिवसायुज्यमाप्नोतिसंशयोनात्रजायते ॥ ७२ ॥ सर्वोपनिषदांसारंसमालोक्यमुहुर्मुहुः ॥ इदमे
वहिनिर्णीतंपरंश्रेयस्त्रिपुंड्रकम् ॥ ७३ ॥ विभूर्तिनिंदतेयोवैब्राह्मणःसोन्यजातकः॥ यातिचनरकेघोरेयावद्ब्रह्माचतुर्मुखः ॥ ७४ ॥ श्राद्धेयज्ञेजपेहोमेवैश्वदे
वेसुरार्चने ॥ धृतत्रिपुंड्रःपूतात्मामृत्युंजयतिमानवः ॥ ७५ ॥ जलस्नानंमलत्यागेभस्मस्नानंसदाशुचि ॥ मंत्रस्नानंहरेत्पापंज्ञानस्नानेपरंपदम् ॥ ७६ ॥
सर्वतीर्थेषुयत्पुण्यंसर्वतीर्थेषुयत्फलम् ॥ तत्फलंसमवाप्नोतिभस्मस्नानकरोनरः ॥ ७७ ॥ भस्मस्नानंपरंतीर्थंगंगास्नानंदिनेदिने ॥ भस्मरूपीशिवःसा
क्षाद्भस्मत्रैलोक्यपावनम् ॥ ७८ ॥ नतद्दूनंनतद्ध्यानंनतद्दानंजपोनसः ॥ त्रिपुंड्रेणविनोयनविप्रेणयदनुष्ठितम् ॥ ७९ ॥ बाणप्रस्थस्यकन्यानांदीक्षाहीं
ननृणांतथा॥मध्याह्नात्प्राग्जलैर्युक्तंपरतोजलवर्जितम् ॥ ८० ॥ एवंत्रिपुंड्रंयःकुर्य्यान्नित्यंनियतमानसः ॥ शिवभक्तःसविज्ञेयोभुक्तिंमुक्तिंचविंदति॥८१॥

यस्यांगेनैवरुद्राक्षएकोपिबहुपुण्यदः ॥ तस्यजन्मनिरर्थंस्यात्त्रिपुण्ड्ररहितोयदि ॥ ८२ ॥ एवंत्रिपुण्ड्रमाहात्म्यंसमासात्कथितंमया ॥ रहस्यंसर्व
जंतूनांगोपनीयमिदंत्वया ॥ ८३ ॥ तिस्रोरेखाभवंत्येवस्थानेषुमुनिपुंगवाः ॥ ललाटादिषुसर्वेषुयथोक्तेषुबुधैर्मुने ॥ ८४ ॥ भ्रुवोर्मध्यंसमारभ्ययावदंतो
भवेद्भ्रुवोः ॥ तावत्प्रमाणंसंधार्यंललाटेचत्रिपुंड्रकम् ॥ ८५ ॥ मध्यमानामिकांगुल्यामध्येतुप्रतिलोमतः ॥ अंगुष्ठेनकृतारेखात्रिपुण्ड्राख्याभिधीयते ॥
॥ ८६ ॥ मध्येंगुलिभिरादायतिसृभिर्भस्मयत्नतः ॥ त्रिपुण्ड्रंधारयेद्भक्त्याभुक्तिमुक्तिप्रदंपरम् ॥ ८७ ॥ तिसृणामपिरेखानांप्रत्येकंनवदेवताः ॥ सर्व
त्रांगेषुतावक्ष्येसावधानतयाशृणु॥८८॥अकारोगार्हपत्याग्निर्भूर्धर्मश्चरजोगुणः ॥ ऋग्वेदश्चक्रियाशक्तिःप्रातःसवनमेवच ॥८९॥ महादेवश्चरेखायाःप्रथमा
याश्चदेवता ॥ विज्ञेयामुनिशार्दूलाःशिवदीक्षापरायणैः ॥ ९० ॥ उकारोदक्षिणाग्निश्चनभस्तत्त्वंयजुस्तथा ॥ मध्यंदिनंचसवनमिच्छाशक्त्यंतरात्मकौ॥
॥ ९१ ॥ महेश्वरश्चरेखायाद्वितीयायाश्चदेवता ॥ विज्ञेयामुनिशार्दूलशिवदीक्षापरायणैः ॥ ९२ ॥ मकाराहवनीयौचपरमात्मातमोदिवौ ॥ज्ञानशक्तिः
सामवेदस्तृतीयंसवनंतथा ॥ ९३ ॥ शिवश्चैवचरेखायास्तृतीयायाश्चदेवता ॥ विज्ञेयामुनिशार्दूलशिवदीक्षापरायणैः ॥ ९४ ॥ एवंनित्यंनमस्कृत्यसद्भ
क्त्यास्थानदेवताः ॥ त्रिपुंड्रंधारयेच्छुद्धोभुक्तिंमुक्तिंचविंदति ॥ ९५ ॥ इत्युक्ताःस्थानदेवाश्चसर्वांगेषुमुनीश्वर ॥ तेषांसंबंधिनोभक्त्यास्थानानिशृणुसां
प्रतम् ॥ ९६ ॥ द्वात्रिंशत्स्थानकेवार्द्धषोडशस्थानकेपिच ॥ अष्टस्थानेतथाचैवपंचस्थानेपिनान्यसेत् ॥९७॥ उत्तमांगेललाटेचकर्णयोर्नेत्रयोस्तथा॥
नासावक्त्रगलेष्वेवंहस्तद्वयअतःपरम् ॥ ९८ ॥ कूर्परेमणिबंधेचहृदयेपार्श्वयोर्द्वयोः ॥ नाभौमुष्कद्वयेचैवमूर्वोर्गुल्फेचजानुनि ॥ ९९ ॥ जंघाद्वयेपदद्वन्द्वे
द्वात्रिंशत्स्थानमुत्तमम् ॥ अग्न्यब्भूवायुदिग्देशदिक्पालान्वसुभिःसह ॥ १०० ॥ धराध्रुवश्चसोमश्चअपश्चैवानिलोनलः ॥ प्रत्यूषश्चप्रभासश्चवसवोष्टप्रकी
र्तिताः ॥ १ ॥ एतेषांनाममात्रेणत्रिपुंड्रंधारयेद्बुधाः ॥ कुर्याद्वाषोडशस्थानेत्रिपुंड्रंतुसमाहितः ॥ २ ॥ शीर्षकेचललाटेचकंठेचांसद्वयेभुजे ॥ कूर्परेमणिबं
धेचहृदयेनाभिपार्श्वके ॥ ३ ॥ पृष्ठेचैवंप्रतिष्ठाययजेत्तत्राश्विदैवते ॥ शिवंशक्तितथारुद्रमीशंनारदमेवच ॥४॥ वामादिनवशक्तीश्चएताःषोडशदेवताः॥
नासत्योदस्रकश्चैवअश्विनौद्वौप्रकीर्तितौ ॥ ५ ॥ अथवामूर्द्धिकेशेचकर्णयोर्वदनेतथा ॥ बाहुद्वयेचहृदयेनाभ्यामूरुयुगेतथा ॥ ६ ॥ जानुद्वयेचपदयोः
पृष्ठभागेचषोडश ॥ शिवश्चन्द्रश्चरुद्रःकोविघ्नेशोविष्णुरेववा ॥ ७ ॥ श्रीश्चैवहृदयेशम्भुस्तथानाभौप्रजापतिः ॥ नागश्चनागकन्याश्चउभयोर्ऋषिकन्य
काः ॥८॥ पादयोश्चसमुद्राश्चतीर्थाःपृष्ठेविशालतः॥ इत्येवषोडशस्थानमष्टस्थानमथोच्यते ॥ ९ ॥ गुह्यस्थानंललाटश्चकर्णद्वयमनुत्तमम् ॥ अंसयुग्मं
चहृदयंनाभिरित्येवमष्टकम् ॥ ११० ॥ ब्रह्माचऋषयःसप्तदेवताश्चप्रकीर्तिताः ॥ इत्येवंतुसमुद्दिष्टंभस्मविद्भिर्मुनीश्वराः ॥ १११ ॥ अथवामस्तकंबाहू

हृदयंनाभिरेवच ॥ पंचस्थानान्यमून्याहुर्धारणेभस्मविज्ञनाः ॥११२॥ यथासंभवनंकुर्य्याद्देशकालाद्यपेक्षया॥ उद्धूलनेप्यशक्तश्चेत्त्रिपुंड्रादीनिकारयेत् ॥
॥ १३ ॥ त्रिनेत्रंत्रिगुणाधारंत्रिदेवजनकंशिवम् ॥ स्मरन्नमःशिवायेतिललाटेतुत्रिपुंड्रकम्॥१४॥ ईशाभ्यांनमइत्युक्त्वापार्श्वयोश्चत्रिपुंड्रकम्॥बीजाभ्यां
नमइत्युक्त्वाधारयेत्तुप्रकोष्ठयोः॥ १५ ॥ कुर्य्याद्धःपितृभ्यांचउमेशाभ्यांतथोपरि ॥ भीमायेतिततःपृष्ठेशिरसःपश्चिमेतथा ॥११६॥ इतिश्रीशैवेमहा
पुराणेविद्येश्वरसंहितायांभस्मधारणवर्णनोनामचतुर्विंशोऽध्यायः ॥ २४ ॥ सूतउवाच ॥ शौनकर्षेमहाप्राज्ञशिवरूपमहामते ॥ शृणुरुद्राक्षमाहात्म्यं
समासात्कथयाम्यहम् ॥ १ ॥ शिवप्रियतमोज्ञेयोरुद्राक्षःपरपावनः ॥ दर्शनात्स्पर्शनाज्जाप्यात्सर्वपापहरःस्मृतः ॥ २ ॥ पुरारुद्राक्षमहिमादे
व्यग्रेकथितोमुने ॥ लोकोपकरणार्थायशिवेनपरमात्मना ॥ ३ ॥ शिवउवाच ॥ शृणुदेविमहेशानिरुद्राक्षमहिमाशिवे ॥ कथयामितवप्रीत्याभ
क्तानांहितकाम्यया ॥४॥ दिव्यवर्षसहस्राणिमहेशानिपुनःपुरा ॥ तपःप्रकुर्वतस्त्रस्तंमनःसंयम्यवैमम ॥ ५ ॥ स्वतंत्रेणपरेशेनलोकोपकृतिकारिणा ॥
लीलयापरमेशानिचक्षुरुन्मीलितंमया ॥ ६ ॥ पुटाभ्यांचारुचक्षुर्भ्यांपतिताजलबिंदवः ॥ तत्राश्रुबिन्दवोजातावृक्षारुद्राक्षसंज्ञकाः॥७॥स्थावरत्वमनुप्रा
प्यभक्तानुग्रहकारणात् ॥ तेदत्ताविष्णुभक्तेभ्यश्चतुर्वर्णेभ्यएवच ॥ ८ ॥ भूमौगौडोद्भवांश्चक्रेरुद्राक्षाञ्छिववल्लभान् ॥ मथुरायामयोध्यायांलंकायां
मलयेतथा ॥९॥ सह्याद्रौचतथाकाश्यांदेशेष्वन्येषुवातथा ॥ परानसह्यपापौघभेदनाञ्छ्रुतिनोदनान् ॥१०॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्राजाताममाज्ञ
या ॥ रुद्राक्षास्तेपृथिव्यांतुतज्जातीयाःशुभाक्षकाः ॥११॥ श्वेतरक्ताःपीतकृष्णावर्णाज्ञेयाःक्रमाद्बुधैः ॥ स्वजातीयंनृभिर्धार्यंरुद्राक्षंवर्णतःक्रमात् ॥१२॥
वर्णैस्तुतत्फलंधार्यंभुक्तिमुक्तिफलेप्सुभिः ॥ शिवभक्तैर्विशेषेणशिवयोःप्रीतयेसदा ॥१३॥ धात्रीफलप्रमाणंयच्छ्रेष्ठमेतदुदाहृतम् ॥ बदरीफलमात्रंतुम
ध्यमंसंप्रकीर्त्तितम् ॥ १४ ॥ अधमंचणमात्रंस्यात्प्रक्रियैषापरोच्यते ॥ शृणुपार्वतिसुप्रीत्याभक्तानांहितकाम्यया ॥ १५ ॥ बदरीफलमात्रंचयत्स्या
त्किलमहेश्वरि ॥ तथापिफलदंलोकेसुखसौभाग्यवर्द्धनम् ॥ १६ ॥ धात्रीफलसमंयत्स्यात्सर्वारिष्टविनाशनम् ॥ गुंजयासदृशंयत्स्यात्सर्वार्थफलसाध
नम् ॥ १७॥ यथायथालघुःस्यात्तद्वैतथाधिकफलप्रदम् ॥ एकैकतःफलंप्रोक्तंदशांशैरधिकंबुधैः ॥१८॥ रुद्राक्षधारणंप्रोक्तंपापनाशनहेतवे ॥ तस्माच्चधा
रणीयोवैसर्वार्थसाधनोध्रुवम् ॥१९॥यथाचदृश्यतेलोकेरुद्राक्षःफलदःशुभः ॥ नतथादृश्यतेन्याचमालिकापरमेश्वरि ॥ २० ॥ समाःस्निग्धादृढाःस्थूलाः
कंटकैःसंयुताःशुभाः॥रुद्राक्षाःकामदादेविभुक्तिमुक्तिप्रदाःसदा॥२१॥क्रिमिदुष्टंछिन्नं[1]भिन्नंकंटकैर्हीनमेवच॥व्रणयुक्तमवृत्तंचरुद्राक्षान्षड्विवर्जयेत् ॥२२॥

१ छिन्नंखण्डितं भिन्नंविदीर्णम् ।

स्वयमेवकृतद्वारंरुद्राक्षंस्यादिहोत्तमम् ॥ यत्तुपौरुषयत्नेनकृतंतन्मध्यमंभवेत् ॥ २३ ॥ रुद्राक्षधारणंप्राप्तंमहापातकनाशनम् ॥ रुद्रसंख्याश
तंधृत्वारुद्ररूपोभवेन्नरः ॥ २४ ॥ एकादशशतानीहधृत्वायत्फलमाप्यते ॥ तत्फलंशक्यतेनैववक्तुंवर्षशतैरपि ॥ २५ ॥ शतार्द्धेनयुतैःपंचशतैर्वैमुकुटंम
तम् ॥ रुद्राक्षैर्विरचेत्सम्यग्भक्तिमान्पुरुषोवरः ॥ २६ ॥ त्रिभिःशतैःषष्टियुक्तैस्त्रिरावृत्त्यातथापुनः ॥ रुद्राक्षैरुपवीतंचनिर्मीयाद्भक्तितत्परः ॥ २७ ॥
शिखायांचत्रयंप्रोक्तंरुद्राक्षाणांमहेश्वरि॥ कर्णयोःषट्चषट्चैववामदक्षिणयोस्तथा ॥२८॥ शतमेकोत्तरंकंठेबाह्वोर्वैरुद्रसंख्यया ॥ कूर्परद्वारयोस्तत्रमणि
बंधेतथापुनः ॥ २९ ॥ उपवीतेत्रयंधार्यंशिवभक्तिरतैर्नरैः ॥ शेषानुर्वरितान्पंचसम्मितान्धारयेत्कटौ ॥ ३० ॥ एतत्संख्याधृतायेनरुद्राक्षाःपरमेश्वरि ॥
तद्रूपंतुप्रणम्यंहिस्तुत्यंसर्वैर्महेशवत् ॥ ३१ ॥ एवंभूतंस्थितंध्यानेयदाकृत्वासनैर्जनम् ॥ शिवेतिव्याहरंश्चैवदृष्ट्वापापैःप्रमुच्यते ॥ ३२ ॥ शताधिकसह
स्रस्यविधिरेषप्रकीर्त्तितः ॥ तदभावेप्रकारोन्यःशुभःसंप्रोच्यतेमया ॥ ३३ ॥ शिखायामेकरुद्राक्षंशिरसात्रिंशतंवहेत् ॥ पंचाशच्चगलेदध्याद्बाह्वोः
षोडशषोडश ॥३४॥ मणिबंधेद्वादशाद्विस्कंधेपंचशतंवहेत् ॥ अष्टोत्तरशतैर्माल्यमुपवीतंप्रकल्पयेत् ॥३५॥ एवंसहस्ररुद्राक्षान्धारयेद्योदृढव्रतः ॥ तंनमं
तिसुराःसर्वेयथारुद्रस्तथैवसः ॥ ३६ ॥ एकंशिखायांरुद्राक्षंचत्वारिंशत्तुमस्तके ॥ द्वात्रिंशत्कण्ठदेशेतुवक्षस्यष्टोत्तरंशतम् ॥ ३७ ॥ एकैकंकर्णयोःषट्
षड्बाह्वोःषोडशषोडश ॥ करयोरविमानेनाद्विगुणेनमुनीश्वर ॥ ३८ ॥ संख्याप्रीतिधृतायेनसोपिशैवजनःपरः ॥ शिववत्पूजनीयोहिवंद्यस्सर्वैरभीक्ष्ण
शः ॥ ३९ ॥ शिरसीशानमंत्रेणकर्णेतत्पुरुषेणच ॥ अघोरेणगलेधार्यंतेनैवहृदयेपिच ॥ ४० ॥ अघोरबीजमंत्रेणकरयोर्धारयेत्सुधीः ॥ पंचदशाक्षग्र
थितांवामदेवेनचोदरे ॥ ४१ ॥ पंचब्रह्मभिरंगैश्चत्रिमालांपंचसप्तच ॥ अथवामूलमंत्रेणसर्वानक्षांस्तुधारयेत्॥४२॥मद्यंमांसंतुलशुनंपलाण्डुंशिग्रुमेवच ॥
श्लेष्मांतकंविड्वराहंभक्षणेवर्जयेत्ततः ॥ ४३ ॥ वलक्षंरुद्राक्षंद्विजतनुभिरेवेहविहितंसुरक्तं क्षत्राणांप्रमुदितमुमेपीतमसकृत् ॥ ततोवैश्यैर्धार्यंप्रतिदिव
समावश्यकमहो तथाकृष्णंशूद्रैःश्रुतिगदितमार्गोयमगजे ॥ ४४॥ वर्णीवनीगृहयतीनियमेनदध्यादेतद्रहस्यपरमोनहिजातुतिष्ठेत् ॥ रुद्राक्षधारणमिदं
सुकृतैश्चलभ्यंत्यक्त्वेदमेतदखिलान्नरकान्प्रयांति ॥ ४५ ॥ आदावामलकात्स्वतोलघुतरारुग्णास्ततःकंटकैःसंदष्टाःक्रिमिभिस्तनूपकरणाच्छिद्रेणही
नास्तथा ॥ धार्यानैवशुभेप्सुभिश्चणकवद्रुद्राक्षमप्यंततोरुद्राक्षोममलिंगमंगलमुमेसूक्ष्मंप्रशस्तंसदा ॥ ४६ ॥ सर्वाश्रमाणांवर्णानांस्त्रीशूद्राणां
शिवाज्ञया ॥ धार्याःसदैवरुद्राक्षायतीनांप्रणवेनहि ॥ ४७ ॥ दिवाबिभ्रद्रात्रिकृतैरात्रौबिभ्रद्दिवाकृतैः ॥ प्रातर्मध्यान्हसायान्हेमुच्यतेसर्वपातकैः ॥
॥ ४८ ॥ येत्रिपुण्ड्रधरालोकेजटाधारिणएवये॥येरुद्राक्षधरास्तेवैयमलोकंप्रयांतिन ॥ ४९ ॥ रुद्राक्षमेकंशिरसाबिभर्तितथात्रिपुण्ड्रंचललाटमध्ये ॥ पंचा

क्षरंयेहिजपंतिमंत्रंपूज्याभवद्भिःखलुतेहिसाधवः ॥ ५० ॥ यस्याङ्गेनास्तिरुद्राक्षस्त्रिपुण्ड्रंभालपट्टके ॥ मुखेपंचाक्षरंनास्तितमानयममालयम् ॥
॥ ५१ ॥ ज्ञात्वाज्ञात्वातत्प्रभावंभस्मरुद्राक्षधारिणः ॥ तेपूज्याःसर्वदास्माकंनोनेतव्याःकदाचन ॥५२॥ एवमाज्ञापयामासकालोपिनिजकिङ्करान्॥
तथेतिमत्त्वातेसर्वेतूष्णीमासन्सुविस्मिताः ॥५३॥ अतएवमहादेविरुद्राक्षोत्यघनाशनः ॥ तद्धरोमत्प्रियःशुद्धोऽत्यघवानपिपार्वति ॥ ५४ ॥ हस्तेबा
हौतथामूर्ध्निरुद्राक्षंधारयेत्तुयः ॥ अवध्यःसर्वभूतानांरुद्ररूपीचरेद्भुवि ॥ ५५ ॥ सुरासुराणांसर्वेषांवंदनीयःसदासवै ॥ पूजनीयोहिदृष्टस्यपापहाचयथा
शिवः ॥ ५६ ॥ ध्यानज्ञानावमुक्तोपिरुद्राक्षंधारयेत्तुयः ॥ सर्वपापविनिर्मुक्तःसयातिपरमांगतिम् ॥ ५७ ॥ रुद्राक्षेणजपन्मन्त्रंपुण्यंकोटिगुणंभवेत् ॥
दशकोटिगुणंपुण्यंधारणाल्लभतेनरः ॥ ५८ ॥ यावत्कालंहिजीवस्यशरीरस्थोभवेत्सवै ॥ तावत्कालंस्वल्पमृत्युर्नतंदेविविबाधते ॥ ५९॥ त्रिपुंड्रेणच
संयुक्तंरुद्राक्षाविलसांगकम् ॥ मृत्युंजयंजपंतंचदृष्ट्वारुद्रफलंलभेत् ॥ ६० ॥ पंचदेवप्रियश्चैवसर्वदेवाप्रियस्तथा ॥ सर्वमन्त्राञ्जपेद्भक्तोरुद्राक्षमालया
प्रिये ॥६१॥ विष्णवादिदेवभक्ताश्चधारयेयुर्नसंशयः॥रुद्रभक्तोविशेषेणरुद्राक्षान्धारयेत्सदा॥६२॥ रुद्राक्षाविविधाःप्रोक्तास्तेषांभेदान्वदाम्यहम् ॥ शृणु
पार्वतिसद्भक्त्याभुक्तिमुक्तिफलप्रदान् ॥ ६३ ॥ एकवक्त्रःशिवःसाक्षाद्भुक्तिमुक्तिफलप्रदः ॥ तस्यदर्शनमात्रेणब्रह्महत्याव्यपोहति ॥ ६४ ॥
यत्रसंपूजितस्तत्रलक्ष्मीदूरतरानहि ॥ नश्यंत्युपद्रवाःसर्वेसर्वकामाभवंतिहि ॥ ६५ ॥ द्विवक्त्रोदेवदेवेशस्सर्वकामफलप्रदः ॥ विशेषतःसरुद्राक्षोगो
वधंनाशयेद्द्रुतम् ॥ ६६ ॥ त्रिवक्त्रोयोहिरुद्राक्षःसाक्षात्साधनदस्सदा ॥ तत्प्रभावाद्भवेयुर्वैविद्याःसर्वाःप्रतिष्ठिताः ॥ ६७ ॥ चतुर्वक्त्रःस्वयंब्रह्मा
नरहत्यांव्यपोहति ॥ दर्शनात्स्पर्शनात्सद्यश्चतुर्वर्गफलप्रदः ॥ ६८ ॥ पंचवक्त्रःस्वयंरुद्रःकालाग्निर्नामतःप्रभुः ॥ सर्वमुक्तिप्रदश्चैवसर्वकामफलप्र
दः ॥ ६९ ॥ अगम्यागमनंपापमभक्ष्यस्यचभक्षणम् ॥ इत्यादिसर्वपापानिपंचवक्त्रोव्यपोहति ॥ ७० ॥ षड्वक्त्रःकार्तिकेयस्तुधारणाद्दक्षिणेभुजे ॥
ब्रह्महत्यादिकैःपापैर्मुच्यतेनात्रसंशयः ॥ ७१ ॥ सप्तवक्त्रोमहेशानिह्यनंगोनामनामतः ॥ धारणात्तस्यदेवेशिदरिद्रोपीश्वरोभवेत् ॥ ७२ ॥
रुद्राक्षश्चाष्टवक्त्रश्चवसुमूर्तिश्चभैरवः ॥ धारणात्तस्यपूर्णायुर्मृतोभवतिशूलभृत् ॥ ७३ ॥ भैरवोनववक्त्रश्चकपिलश्चमुनिःस्मृतः ॥ दुर्गा
वातदधिष्ठात्रीनवरूपामहेश्वरी ॥ ७४ ॥ तंधारयेद्वामहस्तेरुद्राक्षंभक्तितत्परः ॥ सर्वेश्वरोभवेन्नूनंममतुल्योनसंशयः ॥ ७५ ॥ दशवक्त्रोमहे
शानिस्वयंदेवोजनार्दनः ॥ धारणात्तस्यदेवेशिसर्वान्कामानवाप्नुयात् ॥ ७६ ॥ एकादशमुखोयस्तुरुद्राक्षःपरमेश्वरि ॥ सरुद्रोधारणात्तस्यसर्वत्रवि
जयीभवेत् ॥ ७७ ॥ द्वादशास्यंतुरुद्राक्षंधारयेत्केशदेशके ॥ आदित्याश्चैवतेसर्वेद्वादशैवस्थितास्तथा॥७८॥ त्रयोदशमुखोविश्वेदेवस्तद्धारणान्नरः ॥

सर्वान्कामानवाप्नोतिसौभाग्यंमंगलंलभेत् ॥ ७९ ॥ चतुर्दशमुखोयोहिरुद्राक्षःपरमःशिवः ॥ धारयेन्मूर्द्धितंभक्त्यासर्वपापंप्रणश्यति ॥ ८० ॥ इतिरुद्राक्षभेदाहिप्रोक्तावैमुखभेदतः ॥ तत्तन्मंत्राञ्छृणुप्रीत्याक्रमाच्छैलेश्वरात्मजे ॥ ८१ ॥ ॐह्रींनमः १ ॐनमः २ क्लींनमः ३ ॐह्रींनमः ४ ॐह्रींनमः ५ ॐह्रींहुंनमः ६ ॐहुंनमः ७ ॐहुंनमः ८ ॐह्रींहुंनमः ९ ॐह्रींनमः १० ॐह्रींहुंनमः ११ ॐक्रोंक्षौंरौंनमः १२ ॐह्रींनमः १३ ॐनमः १४ भक्तिश्रद्धायुतश्चैवसर्वकामार्थसिद्धये ॥ रुद्राक्षान्धारयेन्मंत्रैर्देवनालस्यवर्जितः ॥ ८२ ॥ विनामंत्रेणयोधत्तेरुद्राक्षंभुविमानवः ॥ सयातिनरकंघोरंयावदिन्द्राश्चतुर्दश ॥ ८३ ॥ रुद्राक्षमालिनंदृष्ट्वाभूतप्रेतपिशाचकाः ॥ डाकिनीशाकिनीचैवयेचान्येद्रोहकारकाः ॥ ८४ ॥ कृत्रिमंचैवयत्किंचिदभिचारादिकंचयत् ॥ तत्सर्वंदूरतोयातिदृष्ट्वाशंकितविग्रहम् ॥ ८५ ॥ रुद्राक्षमालिनंदृष्ट्वाशिवोविष्णुःप्रसीदति ॥ देवीगणपतिस्सूर्यःसुराश्चान्येपिपार्वति ॥ ८६ ॥ एवंज्ञात्वातुमाहात्म्यंरुद्राक्षस्यमहेश्वरि ॥ सम्यग्धार्यास्समंत्राश्चभक्त्याधर्मविवृद्धये ॥ ८७ ॥ इत्युक्तंगिरिजाग्रेहिशिवेनपरमात्मना ॥ भस्मरुद्राक्षमाहात्म्यंभुक्तिमुक्तिफलप्रदम् ॥ ८८ ॥ शिवस्यातिप्रियौज्ञेयौभस्मरुद्राक्षधारिणौ ॥ तद्धारणप्रभावाद्धिभुक्तिर्मुक्तिर्नसंशयः ॥ ८९ ॥ भस्मरुद्राक्षधारीयःशिवभक्तस्सउच्यते ॥ पंचाक्षरजपासक्तःपरिपूर्णश्चसन्मुखे ॥ ९० ॥ विनाभस्मत्रिपुंड्रेणविनारुद्राक्षमालया ॥ पूजितोपिमहादेवोनाभीष्टफलदायकः ॥ ९१ ॥ तत्सर्वंचसमाख्यातंयत्पृष्टंहिमुनीश्वर ॥ भस्मरुद्राक्षमाहात्म्यंसर्वकामसमृद्धिदम् ॥ ९२ ॥ एतद्यःशृणुयान्नित्यंमाहात्म्यंपरमंशुभम् ॥ रुद्राक्षभस्मनोर्भक्त्यासर्वान्कामानवाप्नुयात् ॥ ९३ ॥ इहसर्वसुखंभुक्त्वापुत्रपौत्रादिसंयुतः ॥ लभेत्परत्रसन्मोक्षंशिवस्यातिप्रियोभवेत् ॥ ९४ ॥ विद्येश्वरसंहितेयंकथितावोमुनीश्वराः ॥ सर्वसिद्धिप्रदानित्यंमुक्तिदाशिवशासनात् ॥ ९५ ॥ इति श्रीशिवमहापुराणेविद्येश्वरसंहितायांसाध्यसाधनखण्डेरुद्राक्षमाहात्म्यवर्णनोनामपञ्चविंशोऽध्यायः ॥ २५ ॥

॥ विद्येश्वर संहिता समाप्ता ॥ ॥

इयं शिवपुराणान्तर्गता विद्येश्वरसंहिता मुम्बय्यां श्रीकृष्णदासात्मजेन
खेमराजेन स्वकीये " श्रीवेंकटेश्वर " यन्त्रालयेऽङ्कित्वा
प्रकाशिता। संवत् १९५२ शके १८१७ सन् १८९५.

## ॥ अथ शिवमहापुराणे कैलाससंहिता तृतीया प्रारभ्यते ॥

॥ श्रीगणेशायनमः ॥ ॐनमोभगवतेवासुदेवाय ॥ नारायणंनमस्कृत्यनरञ्चैवनरोत्तमम् ॥ देवींसरस्वतीञ्चैवततोजयमुदीरयेत् ॥ नमःशिवायसा
म्बायसगणायससूनवे ॥ प्रधानपुरुषेशायसर्गस्थित्यन्तहेतवे ॥ १ ॥ हिमवच्छिखरेपूर्व्वंतपस्यन्तोमहौजसः ॥ वाराणसींगन्तुकामामुनयःकृतसंविदः ॥
॥ २ ॥ निर्गत्यतस्मात्सम्प्राप्यगिरेःकाशींसमाहिताः ॥ स्नातव्यमेवेतितदादद्दशुर्मणिकर्णिकाम् ॥ ३ ॥ तत्रस्नात्वासुसन्तर्प्यदेवादीनथजान्हवीम् ॥
दृष्ट्वास्नात्वामुनीन्द्रास्तेविश्वेशंत्रिदशेश्वरम् ॥ ४ ॥ नमस्कृत्याथसम्पूज्यभक्त्यापरमयान्विताः ॥ शतरुद्रादिभिःस्तुत्वास्तुतिभिर्वेदपारगाः ॥ ५ ॥
आत्मानंमेनिरेसर्व्वेकृतार्थावयमित्युत ॥ तस्मिन्नवसरेसूतंपंचक्रोशदिदृक्षया ॥ ६ ॥ गत्वासमागतंवीक्ष्यमुदातेतंववन्दिरे ॥ सोऽपिविश्वेश्वरंसाक्षाद्देव
देवमुमापतिम्॥७॥नमस्कृत्याथतैःसाकंमुक्तिमण्डपमाविशत्॥तत्रासीनंमहात्मानंसूतंपौराणिकोत्तमम्॥८॥अर्घ्यादिभिस्तदासर्व्वेमुनयःसमुपाचरन्॥
अतःसूतःप्रसन्नात्मामुनीनालोक्यसुव्रतान् ॥ ९ ॥ पप्रच्छकुशलंतेऽपिप्रोचुःकुशलमात्मनः ॥ तेसुसन्तुष्टहृदयंज्ञात्वासर्व्वेमुनीश्वराः ॥ १० ॥ प्रणवा
र्थविगत्यर्थमूचुःप्रस्तावकंवचः ॥ मुनयऊचुः ॥ व्यासशिष्यमहाभागसूतपौराणिकोत्तम ॥ ११ ॥ भवन्तमेवभगवान्व्यासःसर्व्वजगद्गुरुः ॥ अभिषि
च्यपुराणानांगुरुत्वेसमयोजयत् ॥१२॥ तस्मात्पौराणिकीविद्याभवतोहृदिसंस्थिता ॥ पुराणानिचसर्वाणिवेदार्थंप्रवदन्तिहि॥१३॥वेदाःप्रणवसम्भूताः
प्रणवार्थोमहेश्वरः ॥ अतोमहेश्वरस्थानंत्वयिधिष्ण्यंप्रतिष्ठितम् ॥ १४ ॥ त्वन्मुखाब्जात्परिस्यन्दन्मकरंदमनोहरम् ॥ अपूर्व्वार्थामृतंपीत्वाभविष्यामो
गतज्वराः॥१५॥ विशेषतोगुरुस्त्वंहिनान्योऽस्माकंमहामते ॥ इतितेषांवचःश्रुत्वासूतोव्यासतपःफलम्॥१६॥गणेशंषण्मुखंसाक्षान्महेशानींमहेश्वरम्॥
शिलादतनयंदेवंनन्दीशंसुयशापतिम् ॥ १७ ॥ सनत्कुमारंव्यासञ्चप्रणिपत्येदमब्रवीत् ॥ सूतउवाच ॥ साधुसाधुमहाभागामुनयःक्षीणकल्मषाः ॥
॥ १८ ॥ मतिर्दृढतराजातादुर्लभासापिदुष्कृताम् ॥ पाराशर्य्येणगुरुणानैमिषारण्यवासिनाम् ॥ १९ ॥ मुनीनामुपदिष्टंयद्वक्ष्येऽहंमुनिपुंगवाः ॥
सावधानाभवन्तोयच्छृण्वन्तुपरयामुदा ॥ २० ॥ स्वारोचिषेऽन्तरेपूर्व्वंतपस्यन्तोदृढव्रताः ॥ ऋषयोनैमिषारण्येसर्व्वसिद्धनिषेविते ॥ २१ ॥ दीर्घसत्रं
वितन्वन्तोरुद्रमध्वरनायकम् ॥ प्रीणयन्तःपरंभावमैश्वरंज्ञातुमिच्छवः ॥ २२ ॥ निवसन्तिस्मतेसर्व्वेव्यासदर्शनकांक्षिणः ॥ तेषांभावंसमालोक्यभग
वान्बादरायणः ॥ २३ ॥ नारायणांशसम्भूतःसाक्षात्सर्व्वजगद्गुरुः ॥ प्रादुर्ब्बभूवसर्व्वात्मापराशरतपःफलम् ॥ २४ ॥ तंदृष्ट्वामुनयःसर्व्वेप्रहृष्टवदनेक्ष
णाः ॥ अभ्युत्थानादिभिःसर्व्वैरुपचारैरुपाचरन् ॥ २५ ॥ आसनंप्रददुस्तस्मैसौवर्णंविष्टरंशुभम् ॥ सुखोपविष्टःसतदातास्मिन्सौवर्णविष्टरे ॥ २६ ॥
प्राहगम्भीरयावाचापाराशर्य्योमहामुनिः ॥ व्यासउवाच ॥ कुशलंकिंनुयुष्माकंप्रवृत्तेऽस्मिन्महामखे ॥२७॥ अर्चितःकिंतुयुष्माभिःसम्यगध्वरनायकः॥

१९

किमर्थमत्रयुष्माभिरध्वरेपरमेश्वरः ॥ २८ ॥ अर्च्चितोभक्तिभावेनसांबःसंसारमोचकः ॥ युष्मत्प्रवृत्तिर्मेभातिशुश्रूषापूर्व्वमेवहि ॥ २९ ॥ एवमुक्तामुनी
न्द्रेणव्यासेनामिततेजसा ॥ मुनयोनैमिषारण्यवासिनःपरमौजसः ॥ ३० ॥ प्रणिपत्यमहात्मानमिदंवचनमब्रुवन् ॥ ऋषयऊचुः ॥ भगवन्मुनिशार्दूलसा
क्षान्नारायणांशज ॥ ३१ ॥ त्वंहिसर्व्वंजगद्भर्त्तुर्महादेवस्यवेधसः ॥ साम्बस्यसगणस्यास्यप्रसादानांनिधिःस्वयम् ॥ ३२ ॥ त्वत्पादाब्जरसास्वादमधुपा
यितमानसाः ॥ कृतार्थावयमद्यैवभवत्पादाब्जदर्शनात् ॥ ३३ ॥ त्वदीयचरणाम्भोजदर्शनंखलुपापिनाम् ॥ दुर्लभंलब्धमधुनातस्मात्सुकृतिनोवयम् ॥ ३४ ॥
अस्मिन्देशेमहाभागनैमिषारण्यसंज्ञके ॥ दीर्घसत्रंवितन्वन्तःप्रणवार्थप्रकाशकः ॥ ३५ ॥ ज्ञातव्यःपरमेशानइतिकृत्वाविनिश्चिताः ॥ पररूपरंवितन्व
न्तःपरंभावंमहेशितुः ॥ ३६ ॥ अज्ञातवन्तएवैतेवयंतस्माद्भवान्प्रभो ॥ छेत्तुमर्हतिनःसर्व्वान्संशयान्हृदयस्थितान् ॥ ३७ ॥ त्वदन्यःसंशयस्यास्य
च्छेत्तानहिजगत्त्रये ॥ तस्मादपारगम्भीरव्यामोहाब्धिनिमज्जितान् ॥ ३८ ॥ तारयस्वशिवज्ञानप्लवेनास्मान्दयानिधे ॥ एवमभ्यर्थितस्तत्रमुनिभिर्वेद
पारगैः ॥ ३९ ॥ सर्व्ववेदार्थविन्मुख्यःशुकतातोमहामुनिः ॥ वेदान्तसारसर्व्वस्वंप्रणवंपरमेश्वरम् ॥ ४० ॥ ध्यात्वाहृत्कर्णिकामध्येसाम्बंसंसारमोचक
म् ॥ प्रहृष्टमानसोभूत्वाव्याजहारतपोनिधिः ॥ ४१ ॥ इतिश्रीशैवेमहापुराणेकैलाससंहितायांप्रथमोऽध्यायः ॥ १ ॥ ॥ व्यासउवाच ॥
साधुपृष्टमिदंविप्राभवद्भिर्भाग्यवित्तमैः ॥ दुर्लभंहिशिवज्ञानंप्रणवार्थप्रकाशकम् ॥ १ ॥ येषांप्रसन्नोभगवान्साक्षाच्छूलवरायुधः ॥ तेषामेवशिवज्ञानंप्र
णवार्थप्रकाशकम् ॥ २ ॥ जायतेनहिसन्देहोनेतरेषामितिश्रुतिः ॥ दीर्घसत्रेणयुष्माभिर्भगवानम्बिकापतिः ॥ ३ ॥ उपासितइतीदंमेदृष्टमद्यविनिश्चित
म् ॥ तस्माद्वक्ष्यामियुष्माकमितिहासंपुरातनम् ॥ ४ ॥ उमामहेशसंवादरूपमद्भुतमास्तिकाः ॥ पुराकिलजगन्मातासतीदाक्षायणींतनुम् ॥ ५ ॥
शिवनिन्दाप्रसंगेनत्यक्त्वाहिमवतोगिरेः ॥ तपःप्रभावात्सादेवीसुताभून्मुनिसत्तमाः ॥ ६ ॥ तस्मिन्भूधरवर्य्यैतुस्वयंवरविधानतः ॥ देवेऽपिचकृतो
द्वाहेदेवीदेवमभाषत ॥ ७ ॥ श्रीदेव्युवाच ॥ भगवन्परमेशानपंचकृत्यविधायक ॥ सर्व्वज्ञभक्तिसुलभपरमामृतविग्रह ॥ ८ ॥ दाक्षायणींतनुंत्यक्त्वा
पुत्रीहिमवतोगिरेः ॥ आसमद्यमहेशानमन्त्रदीक्षाविधानतः ॥ ९ ॥ मांविशुद्धात्मतत्त्वस्थांकुरुनित्यंमहेश्वर ॥ व्यासउवाच ॥ इतिसञ्चोदितोदेव्या
देवःशीतांशुभूषणः ॥ १० ॥ प्रत्युवाचततोदेवींयदिस्यात्ताद्दशीमतिः ॥ कैलासशिखरंगत्वाकरिष्येताद्दशीमिति ॥ ११ ॥ ततोहिमवतोगत्वाकै
लासंभूधरेश्वरम् ॥ तत्रदीक्षाविधानेनप्रणवादीननुक्रमात् ॥ १२ ॥ उक्त्वामंत्रान्महादेवींकृत्वाशुद्धात्मनिस्थिताम् ॥ सार्द्धंदेव्यामहादेवोदेवोद्यानंग
तोऽभवत् ॥ १३ ॥ ततःसुमालिनीमुख्यैर्देव्याःप्रियसखीजनैः ॥ समाहृतैःप्रफुल्लैस्तैःपुष्पैःकल्पतरूद्भवैः ॥ १४ ॥ अलङ्कृत्यततोदेवींस्वाङ्कमारोप्य

शंकरः ॥ प्रहृष्टवदनस्तस्थौविलोक्यचतुराननम् ॥१५॥ ततःप्रियकथावृत्ताःपार्व्वतीपरमेशयोः ॥ हितायसर्व्वलोकानांसाक्षाच्छ्रुत्यर्थसम्मिताः॥१६॥
तदासर्व्वजगन्माताभर्त्तुरंगंसमाश्रिता ॥ विलोक्यवदनंभर्त्तुरिदमाहतपोधनाः ॥ १७ ॥ श्रीदेव्युवाच ॥ उपदिष्टास्त्वयादेवमंत्राःसप्रणवामताः ॥ त
त्रादौश्रोतुमिच्छामिप्रणवार्थविनिश्चयम् ॥ १८ ॥ कथंप्रणवउत्पन्नःकथंप्रणवउच्यते ॥ मन्त्राःकतिसमाख्याताःकथंवेदादिरुच्यते ॥ १९ ॥ देवतावा
कतिप्रोक्ताःकथंदेवादिभावना ॥ क्रियाःकतिविधाःप्रोक्ताव्याप्यव्यापकताकथम् ॥२०॥ ब्रह्माणिपञ्चमंत्रेऽस्मिन्कथंतिष्ठन्त्यनुक्रमात् ॥ कलाःकतिसमा
ख्याताःप्रपञ्चात्मकताकथम् ॥ २१ ॥ वाच्यवाचकसम्बधःस्थानानिचकथंशिव ॥ कोऽत्राधिकारीविज्ञेयोविषयःकउदाहृतः ॥ २२ ॥ सम्बन्धश्चैव
कःप्रोक्तःकिंप्रयोजनमुच्यते ॥ अनुष्ठानविधिःकोवापूजास्थानञ्चकिंप्रभो ॥ २३ ॥ पूजायांमण्डलंकिंवाकिंवाऋष्यादिकंहर ॥ न्यासजातविधिःकोवा
कोवापूजाविधिक्रमः ॥ २४ ॥ एतत्सर्व्वंवदेशानयद्यस्तिमयितेकृपा ॥ इतिदेव्यासमादिष्टोभगवानिन्दुभूषणः ॥ तांविलोक्यमहेशानींवक्तुंसमुपचक्र
मे ॥ २५ ॥ इतिश्रीशैवेमहापुराणेकैलाससंहितायांद्वितीयोऽध्यायः ॥२॥ ईश्वरउवाच ॥ शृणुदेविप्रवक्ष्यामियन्मांत्वंपरिपृच्छसि ॥ तस्यश्रवणमात्रेण
जीवःसाक्षाच्छिवोभवेत्॥१॥ प्रणवार्थपरिज्ञानमेवज्ञानंमदात्मकम् ॥ बीजंतत्सर्व्वविद्यानांमन्त्रंप्रणवनामकम् ॥२॥ अतिसूक्ष्मंमहार्थञ्चज्ञेयंतद्वटबीजव
त् ॥ देवोगुणत्रयातीतःसर्व्वज्ञःसर्व्वकृत्प्रभुः ॥ ३ ॥ ओमित्येकाक्षरेमन्त्रेस्थितःसर्व्वगतःशिवः ॥ यदस्तिवस्तुतत्सर्व्वंगुणप्राधान्ययोगतः ॥ ४ ॥
समस्तंव्यस्तमपिचप्रणवार्थंप्रचक्षते ॥ सर्व्वार्थसाधकंतस्मादेकंब्रह्मैतदक्षरम्॥५॥तेनोमितिजगत्कृत्स्नंकुरुतेप्रथमंशिवः ॥ शिवोवाप्रणवोह्येषप्रणवोवा
शिवःस्मृतः ॥ ६ ॥ वाच्यवाचकयोर्भेदोनात्यन्तंविद्यतेयतः ॥ तस्मादेकाक्षरंदेवंमांब्रह्मऋषयोविदुः ॥७॥ वाच्यवाचकयोरैक्यंमन्यमानामनस्विनः ॥
अतस्तदेवजानीयान्मुमुक्षुःपरमेश्वरि ॥ ८ ॥ तत्रादौसम्प्रवक्ष्यामिप्रणवोद्धारमम्बिके ॥ निवृत्तिमुद्धरेत्पूर्व्वमिन्धनाञ्चततःपरम् ॥ ९ ॥ कालंसमुद्ध
रेत्पश्चाद्दण्डमीश्वरमेवच ॥ वर्णपञ्चकरूपोऽयमेवंप्रणवउद्धृतः ॥ १० ॥ ब्रह्मादिस्थावरान्तानांसर्व्वेषांप्राणिनांखलु ॥ प्राणःप्रणवएवायंतस्मात्प्रणवई
रितः ॥ ११ ॥ अकारश्चाप्युकारोऽथमकारश्चत्रयंक्रमात् ॥ तिस्रोमात्राःसमाख्याताअर्द्धमात्राततःपरम् ॥ १२ ॥ अर्द्धमात्रामहेशानिबिन्दुनादस्वरूपि
णी ॥ ईशानःसर्व्वविद्यानामित्याद्याःश्रुतयःप्रिये ॥ १३ ॥ मत्तएवभवन्तीतिवेदाःसत्यंवदन्तिहि ॥ तस्माद्वेदादिरेवाहंप्रणवोममवाचकः ॥ १४ ॥
वाचकत्वान्ममैषोऽपिवेदादिरितिकथ्यते ॥ अकारस्तुमहद्बीजंरजःस्रष्टाचतुर्म्मुखः ॥ १५ ॥ उकारःप्रकृतिर्योनिःसत्वंपालयिताहरिः ॥ मकारःपुरुषो
बीजीतमःसंहारकोहरः ॥ १६ ॥ बिन्दुर्महेश्वरोदेवस्तिरोभावउदाहृतः ॥ नादःसदाशिवःप्रोक्तःसर्व्वानुग्राहकःप्रभुः ॥ १७ ॥ नादमूर्द्धनिसञ्चिन्त्यः

परात्परतरःशिवः ॥ सर्व्वज्ञःसर्व्वकर्ताचसर्व्वेशोनिर्म्मलोऽद्वयः॥१८॥ अकारादिषुवर्णेषुव्यापकश्चोत्तरोत्तरम् ॥ व्याप्यन्त्वधस्तनंवर्णमेवंसर्व्वत्रभावये
त् ॥ १९ ॥ सद्यादीशानपर्य्यन्तान्यकारादिषुपञ्चसु ॥ स्थितानिपञ्चब्रह्माणितानिमन्मूर्त्तयःक्रमात् ॥ २० ॥ अष्टौकलाःसमाख्याताअकारेसद्यजाः
शिवे ॥ उकारेवामरूपिण्यस्त्रयोदशसमीरिताः ॥ २१ ॥ अष्टावघोररूपिण्योमकारेसंस्थिताःकलाः ॥ बिन्दौचतस्रःसम्भूताःकलाःपुरुषगोचराः ॥
॥ २२ ॥ नादेपञ्चसमाख्याताःकलाईशानसम्भवाः ॥ षड्विधैक्यानुसन्धानात्प्रपञ्चात्मकतोच्यते ॥ २३ ॥ मंत्रोयंत्रंदेवताचप्रपञ्चोगुरुरेवच ॥ शि
ष्यश्चषट्पदार्थानामेषामर्थंशृणुप्रिये ॥ २४ ॥ पञ्चवर्णसमष्टिःस्यान्मंत्रःपूर्व्वमुदाहृतः ॥ सएवयन्त्रतांप्राप्तोवक्ष्येतन्मण्डलक्रमम् ॥ २५ ॥ यन्त्रन्तुद
वतारूपंदेवताविश्वरूपिणी ॥ विश्वरूपोगुरुःप्रोक्तःशिष्योगुरुवपुःस्मृतः ॥ २६ ॥ ओमितीदंसर्व्वमितिसर्व्वंब्रह्मेतिचश्रुतेः ॥ वाच्यवाचकसम्बन्धोऽ
प्ययमेवार्थईरितः ॥ २७ ॥ आधारोमणिपूरश्चहृदयञ्चततःपरम् ॥ विशुद्धिराज्ञाचततःशक्तिःशान्तमितिक्रमात् ॥ २८ ॥ स्थानान्येतानिदेवेशिशा
न्त्यतीतंपरात्परम् ॥ अधिकारीभवेद्यस्यवैराग्यंजायतेदृढम् ॥ २९ ॥ विषयःस्यामहंदेविजीवब्रह्मैक्यभावनात् ॥ जीवात्मनोमयासार्द्धमैक्यस्यप्रणव
स्यच ॥३०॥ बोध्यबोधकभावोऽत्रसम्बन्धःसमुदीरितः ॥ व्रतादिनिरतःशान्तस्तपस्वीविजितेन्द्रियः ॥३१॥ शौचाचारसमायुक्तोभूदेवोवेदनिष्ठितः ॥
विषयेषुविरक्तःसन्नैहिकामुष्मिकेषुच ॥ ३२ ॥ सर्व्वशास्त्रार्थतत्त्वज्ञंवेदान्तज्ञानपारगम् ॥ आचार्य्यमुपसङ्गम्ययतिंमतिमतांवरम् ॥ ३३ ॥ दीर्घदण्ड
प्रणामाद्यैस्तोषयेद्यत्नतःसुधीः ॥ योगुरुःसशिवःप्रोक्तोयःशिवःसगुरुःस्मृतः ॥ ३४ ॥ इतिनिश्चित्यमनसास्वविचारंनिवेद्यच ॥ लब्धानुज्ञस्तुगुरुणाद्वा
दशाहंपयोव्रती ॥ ३५ ॥ समुद्रतीरेनद्यांवापर्व्वतेवाशिवालये ॥ शुक्लपक्षेतुपञ्चम्यामेकादश्यामथापिवा ॥ ३६ ॥ प्रातःस्नात्वाविशुद्धात्माकृतनित्य
क्रियःसुधीः ॥ गुरुमाहूयविधिनानान्दीश्राद्धंविधायच ॥ ३७ ॥ क्षौरञ्चकारयित्वाथकक्षोपस्थविवर्जितम् ॥ केशश्मश्रुनखानान्तुस्नात्वानियतमानसः
॥ ३८ ॥ सक्तुंप्राश्याथसायाह्नेस्नात्वासन्ध्यामुपास्यच ॥ सायमौपासनंकृत्वागुरुणासहितोद्विजः ॥ ३९ ॥ वस्त्रादिदक्षिणांदद्याच्छिवायगुरुरूपिणे ॥
होमद्रव्याणिसम्पाद्यस्वसूत्रोक्तविधानतः ॥ ४० ॥ अग्निमाधायविधिवल्लौकिकादिविभेदतः ॥ आहिताग्निस्तुयःकुर्य्यात्प्राजापत्येष्टिमाहिते ॥ ४१ ॥
श्रौतेवैश्वानरेसम्यक्सर्व्ववेदसदक्षिणाम् ॥ अथाग्निमात्मन्यारोप्यब्राह्मणःप्रव्रजेद्गृहात् ॥ ४२ ॥ श्रपयित्वाचरुंतस्मिन्समिदन्नाज्यभेदतः ॥ पौरुषे
णैवसूक्तेनहुत्वाप्रत्यृचमात्मवान् ॥ ४३ ॥ हुत्वाचसौविष्टकृतींस्वसूत्रोक्तविधानतः ॥ हुत्वोपरिष्टात्तन्त्रञ्चतेनाग्नेरुत्तरेबुधः ॥ ४४ ॥ स्थित्वासनेज
पेन्मौनीचीराजिनकुशोत्तरे ॥ यावद्ब्राह्ममुहूर्तन्तुगायत्रींदृढमानसः ॥४५॥ ततःस्नात्वायथापूर्व्वंश्रपयित्वाचरुंततः ॥ पौरुषंसूक्तमारभ्यविरजान्तंहुनेद्

धः ॥ ४६ ॥ वामदेवमतेनापिशौनकादिमतेनवा ॥ तत्रमुख्यंवामदेव्यंगर्भमुक्तोयतोमुनिः ॥ ४७ ॥ होमशेषंसमाप्याथप्रातरौपासनंहुनेत् ॥ ततोऽग्नि
मात्मन्यारोप्यप्रातःसन्ध्यामुपास्यच ॥ ४८ ॥ सवितर्य्युदितेपश्चात्सावित्रींप्रविशेत्क्रमात् ॥ एषणानांत्रयंत्यक्त्वाप्रैषमुच्चार्य्यचक्रमात् ॥ ४९ ॥ शि
खोपवीतेसन्त्यज्यकटिसूत्रादिकंततः ॥ विसृज्यप्राङ्मुखोगच्छेदुत्तराशामुखोऽथवा ॥ ५० ॥ गृह्णीयाद्दण्डकौपीनाद्युचितंलोकवर्त्तने ॥ विरक्तश्चेन्नगृ
ह्णीयाल्लोकवृत्तिविचारणे ॥ ५१ ॥ गुरोःसमीपंगत्वाथदण्डवत्प्रणमेत्त्रयम् ॥ समुत्थायततास्तिष्ठेद्गुरुपादसमीपतः ॥ ५२ ॥ ततोगुरुःसमादायविरजान
लजंसितम् ॥ भस्मतेनैवतंशिष्यंसमुद्धूल्ययथाविधि ॥ ५३ ॥ अग्निरित्यादिभिर्मन्त्रैस्त्रिपुंड्रान्धारयेत्ततः ॥ हृत्पङ्कजेसमासीनंमांत्वयासहचिन्तयेत्
॥ ५४ ॥ हस्तंविधायशिरसिशिष्यस्यप्रीतमानसः ॥ ऋष्यादिसहितंतस्यदक्षकर्णेसमुच्चरेत् ॥ ५५ ॥ प्रणवंत्रिप्रकारंतुततस्तस्यार्थमादिशेत् ॥
षड्विधार्थंपरिज्ञायगुरुंप्रणम्यदण्डवत् ॥ ५६ ॥ तदधीनोभवेन्नित्यंवेदान्तंसम्यगभ्यसेत् ॥ मामेवचिन्तयेन्नित्यंपरमात्मानमात्मनि ॥ ५७ ॥ शमादि
धर्म्मनिरतोवेदान्तज्ञानपारगः ॥ अत्राधिकारीसप्रोक्तोयतिर्विगतमत्सरः ॥ ५८ ॥ हृत्पुंडरीकंविरजंविशोकंविशदंपरम् ॥ अष्टपत्रंकेशराढ्यंकर्णिकोप
रिशोभितम् ॥ ५९ ॥ आधारशक्तिमारभ्यात्रितत्त्वान्तमयंपदम् ॥ विचिन्त्यमध्यतस्तस्यदहरंव्योमभावयेत् ॥६०॥ ओमित्येकाक्षरंब्रह्मव्याहरन्मांत्व
यासह ॥ चिन्तयेन्मध्यतस्तस्यनित्यमुद्युक्तमानसः ॥ ६१ ॥ एवंविधोपासकस्यमल्लोकगतिरेवच ॥ मत्तोविज्ञानमासाद्यमत्सायुज्यफलंप्रिये ॥ ६२ ॥
ब्राह्मेमुहूर्त्तउत्थायशिरसिश्वेतपंकजे ॥ सहस्रारेसमासीनंगुरुंसञ्चिन्तयेद्यतिः ॥ ६३ ॥ शुद्धस्फटिकसङ्काशंद्विनेत्रंवरदाभये ॥ दधानंशिवसद्भावं
भावनातिमनोहरम् ॥ ६४ ॥ भावोपनीतैःसम्पूज्यगन्धादिभिरनुक्रमात् ॥ बद्धाञ्जलिपुटोभूत्वानमस्कृत्यगुरुंततः ॥ ६५ ॥ प्रातःप्रभृतिसाया
न्तंसायादिप्रातरन्ततः ॥ यत्करोमिजगन्नाथतदस्तुतवपूजनम् ॥ ६६ ॥ इतिविज्ञाप्यगुरवेलब्धानुज्ञस्ततोगुरोः ॥ निरुद्धप्राणआसीनोवि
जितात्माजितेंद्रियः ॥ ६७ ॥ मूलादिब्रह्मरन्ध्रांतंप्रणवंपरिचिन्तयेत् ॥ विद्युत्कोटिसमंधीमाञ्छिरोनासिकयासह ॥ ६८ ॥ विशोध्यदेहं
विधिवत्तृणमाधायभूतले ॥ गृहीतशिश्नउत्थायततोगच्छेज्जलाशयम् ॥ ६९ ॥ उद्धृत्यवायथान्यायंशौचंकुर्य्यादतन्द्रितः ॥ हस्तौपादौच
संशोध्यद्विराचम्योमितिस्मरन् ॥ ७० ॥ उत्तराभिमुखोमौनीदन्तधावनमाचरेत् ॥ तृणपर्णैःसदाकुर्य्यादमाएकादशींविना ॥ ७१ ॥ अपांद्वादशगण्डू
षैर्मुखंसंशोधयेत्ततः ॥ द्विराचम्यमृदातोयैःकटिशौचंविधायच ॥ ७२ ॥ अरुणोदयकालेतुस्नानंकुर्य्यान्मृदासह ॥ गुरुंसंस्मृत्यमांचैवस्नानसन्ध्याद्य
माचरेत् ॥७३॥ आबध्यशंखमुद्राञ्चप्रणवेनाभिषेचयेत् ॥ शिरसिद्वादशावृत्त्यातदर्द्धंवातदर्द्धकम् ॥ ७४ ॥ तीरमागत्यकौपीनंप्रक्षाल्याचम्यचाद्विधा ॥

त्वामंडलंरचयेत्पुनः ॥ ४ ॥ त्रिकोणंवृत्तंबाह्येतुचतुरस्रान्तकंक्रमात् ॥ अभ्यर्च्योंमितिसाधारंस्थाप्यशंखंसमर्च्चयेत् ॥ ५ ॥ आपूर्य्येशुद्धतो
येनप्रणवेनसुगन्धिना ॥ अभ्यच्चर्य्यगन्धपुष्पाद्यैःप्रणवेनचसप्तधा ॥ ६ ॥ अभिमन्त्र्यततस्तस्मिन्धेनुमुद्रांतुदर्शयेत् ॥ शङ्खमुद्रान्तुतेनैवप्रो
क्षयेदस्त्रमन्त्रतः ॥ ७ ॥ आत्मानंगन्धपुष्पादिपूजोपकरणानिच ॥ प्राणायामत्रयंकृत्वाऋष्यादिकमथाचरेत् ॥ ८ ॥ अस्यश्रीसौरमन्त्रस्यदे
वभागऋषिस्ततः ॥ छन्दोगायत्रमित्युक्तंदेवःसूर्य्यमहेश्वरः ॥ ९ ॥ देवतास्यात्षडङ्गानिह्रामित्यादीनिविन्यसेत् ॥ ततःसम्प्रोक्षयेत्पद्ममस्त्रेणा
ग्नेयगोचरम् ॥ १० ॥ तस्मिन्समर्च्चयेद्विद्वान्प्रभूतांविमलामपि ॥ साराञ्चाथसमाराध्यपूर्व्वादिपरितःक्रमात् ॥ ११ ॥ अथकालाग्निरुद्रञ्चशक्तिमाधार
संज्ञिताम् ॥ अनन्तंपृथिवीञ्चैवरत्नद्वीपंतथैवच ॥ १२ ॥ सङ्कल्पवृक्षोद्यानञ्चगृहंमणिमयंततः ॥ रक्तपीठञ्चसम्पूज्यपादेषुप्रागुपक्रमात् ॥ १३ ॥ धर्म्मं
ज्ञानञ्चवैराग्यमैश्वर्य्यञ्चचतुष्टयम् ॥ अधर्म्माद्यग्निकोणादिकोणेषुचसमर्च्चयेत् ॥१४॥ मायाधश्छदनंपश्चाद्विद्योर्ध्वच्छदनंततः ॥ सत्त्वंरजस्तमश्चैवसम
भ्यच्चर्य्ययथाक्रमम् ॥ १५ ॥ पूर्व्वादिदिक्षुमध्येचदीप्तांसूक्ष्मांजयामपि ॥ भद्रांविभूतिंविमलाममोघांवैद्युतामपि ॥ १६ ॥ सर्व्वतोमुखसंज्ञाञ्चकन्दना
लंतथैवच ॥ शुषिरञ्चततस्तन्तुकण्टकांस्तदनन्तरम् ॥ १७ ॥ मूलच्छदनकिञ्जल्कप्रकाशसकलात्मनः ॥ पञ्चग्रन्थिकर्णिकाञ्चदलानितदनन्तरे ॥
॥ १८ ॥ केशरान्ब्रह्मविष्णूचरुद्रमात्मानमेवच ॥ अन्तरात्मानमपिचज्ञानात्मपरमात्मनि ॥ १९ ॥ सम्पूज्यपश्चात्सौराख्यंयोगपीठंसमर्च्चयेत् ॥ पीठो
परिसमाकल्प्यमूर्तिंमूलेनमूलवित् ॥ २० ॥ निरुद्धप्राणआसीनोमूलेनैवस्वमूलतः ॥ शक्तिमुत्थाप्यतत्तेनप्रभावातिपिङ्गलाध्वना ॥ २१ ॥ पुष्पाञ्जलौ
निर्गमय्यमण्डलस्थस्यभास्वतः ॥ सिन्दूरारुणदेहस्यवामार्द्धदयितस्यच ॥२२॥ अक्षस्रक्पाशखट्वाङ्गकपालाङ्कुशपङ्कजम् ॥ शङ्खचक्रंदधानस्यचतु
र्व्वक्रस्यलोचनः ॥ २३ ॥ राजितस्यद्वादशभिस्तस्यहृत्पङ्कजोदरे ॥ प्रणवंपूर्व्वमुद्धृत्यह्रांह्रींसस्तदनन्तरम् ॥ २४ ॥ प्रकाशशक्तिसहितंमार्त्तण्डञ्च
ततःपरम् ॥ आवाहयामिनमइत्यावाह्यावाहनाख्यया ॥ २५ ॥ मुद्रयास्थापनाद्याश्चमुद्राःसन्दर्शयेत्क्रमात् ॥ विन्यस्याङ्गानिह्रांह्रींह्रूमन्तेनमनुना
ततः ॥ २६ ॥ पञ्चोपचारान्सङ्कल्प्यमूलेनाभ्यर्च्चयेत्त्रिधा ॥ केशरेषुचपद्मस्यषडङ्गानिमहेश्वरि ॥ २७ ॥ वह्नीशरक्षोवायव्यश्चपरितःक्रमशःसुधीः ॥
द्वितीयावरणेपूज्याश्चतस्रोमूर्त्तयःक्रमात् ॥ २८ ॥ पूर्व्वाद्युत्तरपर्य्यन्तंदलमूलेषुपार्व्वति ॥ आदित्योभास्करोभानूरविश्चेत्यनुपूर्व्वशः ॥ २९ ॥ अर्को
ब्रह्मातथारुद्रोविष्णुश्चेतिपुनःप्रिये ॥ ईशानादिषुसम्पूज्यास्तृतीयावरणेपुनः॥३०॥सोममंगारकञ्चैवबुधंबुद्धिमतांवरम्॥बृहस्पतिंबृहद्बुद्धिंभार्गवंतेजसां
निधिम्॥३१॥शनैश्चरंतथाराहुंकेतुंशत्रुभयंकरम्॥समन्ततोयजेदेतान्पूर्व्वादिदलमध्यतः॥३२॥अथवाद्वादशादित्यान्द्वितीयावरणेयजेत्॥ तृतीयावरणे

चैवशश्यादीनेवपूजयेत्॥३३॥ सप्तसागरगङ्गाश्चबाहिरस्यसमन्ततः ॥ ऋषीन्देवांश्चगन्धर्व्वान्पन्नगानप्सरोगणान् ॥३४॥ग्रामण्यश्चतथायक्षान्यातुधानां
स्तथाहयान्॥सप्तच्छन्दोमयांश्चैववालखिल्यांश्चपूजयेत् ॥३५॥एवंत्र्यावरणंदेवंसमभ्यच्चर्य्यदिवाकरम् ॥ विलिख्यमण्डलंपश्चाच्चतुरस्रंसमाहितः ॥३६॥
स्थाप्यसाधारकंताम्रपात्रंप्रस्थोदविस्तृतम् ॥ पूरयित्वाजलैःशुद्धैर्वासितैःकुसुमादिभिः ॥ ३७॥ अभ्यच्चर्य्यगन्धपुष्पाद्यैर्जानुभ्यामवनींगतः॥अर्घ्यपात्रं
समादायभ्रूमध्यान्तंसमुद्धरेत्॥ ततोब्रूयादिमंमन्त्रंसावित्रंसर्व्वसिद्धिदम्॥३८॥सिन्दूरवर्णायसुमण्डलायनमःसुवज्राभरणायतुभ्यम्॥पद्माभनेत्रायसुपङ्क
जायब्रह्मेन्द्रनारायणकारणाय ॥ ३९ ॥ सरक्तचर्णंससुवर्णतोयंस्रक्कुङ्कुमाढ्यंसकुशंसपुष्पम् ॥ प्रदत्तमादायसहेमपात्रंप्रशस्तमर्घ्यंभगवन्प्रसीद ॥४०॥
एवमुक्त्वाततोदत्त्वातदर्घ्यंसूर्य्यमूर्त्तये ॥ नमस्कुर्य्यादमुंमन्त्रंपठित्वातुसमाहितः ॥ ४१ ॥ नमःशिवायसाम्बायसगणायादिहेतवे ॥ रुद्रायविष्णवे
तुभ्यंब्रह्मणेसूर्य्यमूर्त्तये ॥ ४२ ॥ एवमुक्त्वानमस्कृत्यस्वासनेसमुपस्थितः ॥ ऋष्यादिकंपुनःकृत्वाकरंसंशोध्यवारिणा ॥४३॥ पुनश्चभस्मसन्धार्य्य
पूर्व्वोक्तेनैववर्त्मना ॥ न्यासजातंप्रकुर्व्वीतशिवभावविवृद्धये ॥ ४४ ॥ पञ्चोपचारैःसम्पूज्यशिरसाश्रीगुरुंबुधः ॥ प्रणवंश्रीचतुर्थ्यन्तं नमोऽन्तं
प्रणमेत्ततः ॥ ४५ ॥ पश्चात्मकंबिंदुयुतंपञ्चमस्वरसंयुतम् ॥ तदेवबिंदुसहितंपञ्चमस्वरवर्ज्जितम् ॥ ४६ ॥ पञ्चमस्वरसंयुक्तंमन्त्रीशश्चसबिन्दुकम् ॥
उद्धृत्यबिन्दुसहितंसंवर्त्तकमथोच्चरेत् ॥ ४७ ॥ एतैरेवंक्रमाद्बीजैरुद्धृतैःप्रणमेद्बुधः ॥ भुजयोरूरुयुग्मेचगुरुंगणपतिंतथा ॥ ४८ ॥ दुर्गांश्चक्षेत्रपालश्चब
द्धाञ्जलिपुटःस्वयम् ॥ ओमस्त्रायफडित्युक्त्वाकरौसंशोध्यषट्क्रमात् ॥ ४९ ॥ अपसर्पन्त्वितिप्रोच्यप्रणवंतदनन्तरम् ॥ अस्त्रायफडितिप्रोच्यपार्ष्णिघा
तत्रयेणतु ॥ ५० ॥ उद्धास्यविघ्नान्भूमिष्ठान्करतालत्रयेणतु ॥ अन्तरिक्षगतान्दृष्ट्वाविलोक्यदिविसंस्थितान् ॥ ५१ ॥ निरुद्धप्राणआसीनोहंसमन्त्रमनु
स्मरन् ॥ हृदिस्थंजीवचैतन्यंब्रह्मनाड्यासमानयेत् ॥५२॥ द्वादशान्तःस्थविशदसहस्रारमहाम्बुजे ॥ चिच्चन्द्रमण्डलान्तःस्थचिद्रूपंपरमेश्वरम् ॥५३॥
शोषदाहप्लवान्कुर्य्याद्रेचकादिक्रमेणतु ॥ सषोडशचतुःषष्टिद्वात्रिंशद्गणनायुतैः ॥ ५४ ॥ वाय्वग्निसलिलार्णैस्तैःस्ववेदाद्यैरनुक्रमात् ॥ प्राणप्रतिष्ठां
विधिवत्कुर्य्यादत्रसमाहितः ॥ ५५ ॥ एकाग्रमानसोयोगीविमृश्यान्तश्चमातृकाम् ॥ पुटितांप्रणवेनाथन्यसेद्बाह्येचमातृकाम् ॥ ५६ ॥ पुनश्चसंयतप्रा
णःकुर्य्यादृष्यादिकंबुधः ॥ प्रणवस्यऋषिर्ब्रह्मादेविगायत्रमीरितम् ॥ ५७ ॥ छन्दोऽत्रदेवताहंवैपरमात्मासदाशिवः ॥ अकारोबीजमाख्या
तमुकारःशक्तिरुच्यते ॥ ५८ ॥ मकारःकीलकंप्रोक्तंमोक्षार्थेविनियुज्यते ॥ अङ्गुष्ठद्वयमारभ्यतलान्तंपरिमार्ज्जयेत् ॥ ५९ ॥ ओमि
त्युक्त्वाथदेवेशिकरन्यासंसमारभेत् ॥ दक्षहस्तस्थिताङ्गुष्ठंसमारभ्ययथाक्रमम् ॥ ६० ॥ वामहस्तकनिष्ठान्तंविन्यसेन्नवसुक्रमात् ॥ अका

रमप्युकारञ्चमकारंबिन्दुसंयुतम् ॥ ६१ ॥ नमोऽन्तंप्रोच्यसर्व्वत्रहृदयादौन्यसेदथ ॥ अकारंपूर्व्वमुद्धृत्यब्रह्मात्मानमथोच्चरेत् ॥ ६२ ॥ ङेऽन्तंनमोऽ
न्तंहृदयेविनियुञ्ज्यात्तथापुनः ॥ उकारंविष्णुसहितंशिरोदेशेप्रविन्यसेत् ॥ ६३ ॥ मकारंरुद्रसहितंशिखायान्तुप्रविन्यसेत् ॥ एवमुक्त्वामुनिर्मन्त्रीकव
चंनेत्रमस्तकम् ॥ ६४ ॥ विन्यसेद्देवदेवेशिसावधानेनचेतसा ॥ अङ्गवक्त्रकलाभेदात्पञ्चब्रह्माणिविन्यसेत् ॥ ६५ ॥ शिरोवदनहृद्गुह्यपादेष्वेतानिवि
न्यसेत् ॥ ईशानस्यकलाःपञ्चपञ्चस्वेतेषुचक्रमात् ॥ ६६ ॥ ततश्चतुर्षुवक्त्रेषुपुरुषस्यकलाअपि ॥ चतस्रःप्रणिधातव्याःपूर्व्वादिक्रमयोगतः ॥ ६७ ॥
हृत्कण्ठांसेषुनाभौचकुक्षौपृष्ठेचवक्षसि ॥ अघोरस्यकलाश्चाष्टौपूजनीयायथाक्रमम् ॥ ६८ ॥ पश्चात्त्रयोदशकलाःपायुमेढ्रोरुजानुषु ॥ जङ्घास्फिक्कटि
पार्श्वेषुवामदेवस्यभावयेत् ॥ ६९ ॥ सद्यस्यापिकलाह्यष्टौपादयोरपिहस्तयोः ॥ प्राणेशिरसिबाह्वोश्चकल्पयेत्कल्पवित्तमः ॥ ७० ॥ अष्टत्रिंशत्कला
न्यासमेवंकृत्वातुसर्व्वशः ॥ पश्चात्प्रणवविद्धीमान्प्रणवन्यासमाचरेत् ॥ ७१ ॥ बाहुद्वयेकूर्परयोस्तथात्रमणिबन्धयोः ॥ पार्श्वतोदरजङ्घेषुपादयोःपृष्ठत
स्तथा ॥ ७२ ॥ इत्थंप्रणवविन्यासंकृत्वान्यासविचक्षणः ॥ हंसन्यासंप्रकुर्व्वीतपरमात्मप्रबोधिनि ॥ ७३ ॥ ॥ इतिश्रीशैवेमहापुराणेकैलाससंहितायां
पञ्चमोऽध्यायः ॥ ५ ॥ ईश्वरउवाच ॥ स्ववामेचतुरस्रन्तुमंडलंपरिकल्पयेत् ॥ ओमित्यभ्यर्च्चयेत्तस्मिंस्तुशङ्खमस्त्रोपशोधितम् ॥ १ ॥ स्थाप्यसा
धारकंतन्तुप्रणवेनार्च्चयेत्ततः ॥ आपूर्य्यशुद्धतोयेनचन्दनादिसुगन्धिना ॥ २ ॥ अभ्यर्च्चयेद्गन्धपुष्पाद्यैःप्रणवेनचसप्तधा ॥ अभिमन्त्र्यततस्तस्मिन्धे
नुमुद्रांप्रदर्शयेत् ॥ ३ ॥ शङ्खमुद्राञ्चपुरतश्चतुरस्रंप्रकल्पयेत् ॥ तदन्तरेऽर्द्धचन्द्रञ्चत्रिकोणञ्चतदन्तरे ॥ ४ ॥ षट्कोणवृत्तमेवेदंमंडलंपरिकल्पयेत् ॥
अभ्यर्च्चयेद्गन्धपुष्पाद्यैःप्रणवेनाथमध्यतः ॥ ५ ॥ साधारमर्घ्यपात्रञ्चस्थाप्यगन्धादिनार्च्चयेत् ॥ आपूर्य्यशुद्धतोयेनतस्मिन्पात्रेविनिक्षिपेत् ॥ ६ ॥
कुशाग्राण्यक्षतांश्चैवयवव्रीहितिलानपि ॥ आज्यसिद्धार्थपुष्पाणिभसितञ्चवरानने ॥७॥ सद्योजातादिभिर्मन्त्रैःषडङ्गैःप्रणवेनच ॥ अभ्यर्च्चयेद्गन्धपुष्पा
द्यैरभिमन्त्र्यचवर्म्मणा ॥ ८ ॥ अवगुण्ठ्यास्त्रमन्त्रेणसंरक्षायप्रदर्शयेत् ॥ धेनुमुद्रांचतेनैवप्रोक्षयेदस्त्रमन्त्रतः ॥ ९ ॥ स्वात्मानंगन्धपुष्पादिपूजोपक
रणान्यपि ॥ पद्मस्येशानदिक्पद्मेप्रणवोच्चारपूर्व्वकम् ॥ १० ॥ गुर्व्वासनायनमइत्यासनंपरिकल्पयेत् ॥ गुरोर्मूर्त्तिंचतत्रैवकल्पयेदुपदेशतः ॥ ११ ॥
प्रणवंगुंगुरुभ्योऽन्तेनमःप्रोच्याथदेशिकम् ॥ समाहूयततोध्यायेद्दक्षिणाभिमुखंस्थितम् ॥ १२ ॥ सुप्रसन्नमुखंसौम्यंशुद्धस्फटिकनिर्म्मलम् ॥ वरदाभ
यहस्तंचद्विनेत्रंशिवविग्रहम् ॥ १३ ॥ एवंध्यात्वायजेद्गन्धपुष्पादिभिरनुक्रमात् ॥ पद्मस्यनैर्ऋतेपद्मेगणपस्यासनोपरि ॥ १४ ॥ मूर्त्तिंप्रकल्प्यत
त्रवगणानांत्वेतिमन्त्रतः ॥ समावाह्यततोदेवंध्यायेदेकाग्रमानसः ॥ १५ ॥ रक्तवर्णमहाकायंसर्व्वाभरणभूषितम् ॥ पाशांकुशेष्टदशनान्दधानंक

रपंकजैः ॥ १६ ॥ गजाननंप्रभुंसर्व्वविघ्नौघास्त्रमुपासितुः ॥ एवंध्यात्वायजेद्गंधपुष्पाद्यैरुपचारकैः ॥ १७ ॥ कदलीनारिकेलाम्रफलल ड्डुकपूर्व्वकम् ॥
नैवेद्यंचसमर्प्याथनमस्कृत्यगजाननम् ॥ १८ ॥ पद्मस्यवायुदिक्पद्मेसंकल्प्यस्कान्दमासनम् ॥ स्कन्दमूर्त्तिंप्रकल्प्याथस्कन्दमावाहयेद्बुधः ॥
॥ १९ ॥ उच्चार्य्यस्कन्दगायत्रींध्यायेदादौकुमारकम् ॥ उद्यदादित्यसंकाशंमयूरवरवाहनम् ॥ २० ॥ चतुर्भुजमुदाराङ्गंमुकुटादिविभूषितम् ॥ वरदा
भयहस्तञ्चशक्तिकुक्कुटधारिणम् ॥ २१ ॥ एवंध्यात्वाथगन्धाद्यैरुपचारैरनुक्रमात् ॥ सम्पूज्यपूर्व्वद्वारस्यदक्षशाखामुपाश्रितम् ॥ २२ ॥ अन्तःपुरा
धिपंसाक्षान्नन्दिनंसम्यगर्च्चयेत् ॥ चामीकराचलप्रख्यंसर्व्वाभरणभूषितम् ॥ २३ ॥ बालेन्दुमुकुटंसौम्यंत्रिनेत्रञ्चचतुर्भुजम् ॥ दीप्तशूल मृगीटङ्कहेमवेत्रध
रंविभुम् ॥ २४ ॥ चन्द्रबिम्बाभवदनंहरिवक्रमथापिवा ॥ उत्तरस्यांतथातस्यभार्य्याञ्चमरुतांसुताम् ॥२५॥ सुयशांसुव्रतामम्बांपादमण्डनतत्पराम् ॥
सम्पूज्यविधिवद्गन्धपुष्पाद्यैरुपचारकैः ॥ २६ ॥ ततःसम्प्रोक्षयेत्पद्मंसास्त्रशङ्खोदबिन्दुभिः ॥ कल्पयेदासनंपश्चादाधारादियथा क्रमम् ॥ २७ ॥
आधारशक्तिंकल्याणींश्यामांध्यायेदधोभुवि ॥ तस्याःपुरस्तादुत्कण्ठमनन्तंकुण्डलाकृतिम् ॥ २८ ॥ धवलंपञ्चफणिनंलेलिहानमिवाम्बरम् ॥ तस्यो
पर्य्यासनंभद्रंकण्ठीरवचतुष्पदम् ॥ धर्म्मोज्ञानञ्चवैराग्यमैश्वर्य्यञ्चपदानिवै ॥ २९ ॥ आग्नेय्यादिश्वेतपीतरक्तश्यामानिवर्णतः ॥ अधर्म्मादीनिपूर्व्वादी
न्युत्तरान्तान्यनुक्रमात् ॥ ३० ॥ राजावर्त्तमणिप्रख्यान्यस्यगात्राणिभावयेत् ॥ अधोर्द्ध्वच्छदनंपश्चात्कन्दंनालञ्चकण्टकान् ॥ ३१ ॥ दलादिकंकर्णि
काञ्चविभाव्यक्रमशोऽर्च्चयेत् ॥ दलेषुसिद्धयःकल्प्याःकेशरेषुसशक्तिकाः ॥ ३२ ॥ रुद्रावामादयस्त्वष्टौपू र्व्वादिपरितःक्रमात् ॥ कर्णिकायाञ्चवैराग्यं
वजिषुनवशक्तयः ॥ ३३ ॥ वामाद्याएवपूर्व्वादितदन्तश्चमनोन्मनी ॥ कन्देशिवात्मकोधर्म्मोनालेज्ञानंशिवाश्रयम् ॥ ३४ ॥ कर्णिकोपरिवाह्नेयंमण्ड
लंसौरमैन्दवम् ॥ आत्मविद्याशिवाख्यञ्चतत्त्वत्रयमतःपरम् ॥ ३५ ॥ सर्व्वासनोपरिसुखंविचित्रकुसुमोज्ज्वलम् ॥ परव्योमावकाशाख्यंविद्ययातीवभा
स्वरम् ॥ ३६ ॥ परिकल्प्यासनंमूर्त्तिपुष्पविन्यासपूर्व्वकम् ॥ आधारशक्तिमारभ्यशुद्धविद्यासनावधि ॥ ३७ ॥ ओङ्कारादिचतुर्थ्यन्तंनाममन्त्रंनमो
ऽन्तकम् ॥ उच्चार्य्यपूजयेद्विद्वान्सर्व्वत्रैवंविधिक्रमः ॥ ३८ ॥ अङ्गवक्त्रकलाभेदात्पञ्चब्रह्माणिपूर्व्ववत् ॥ विन्यसेत्क्रमशोमूर्त्तौतत्तन्मुद्राविचक्षणः
॥ ३९ ॥ आवाहयेत्ततोदेवान्पुष्पांजलिपुटःस्थितः ॥ सद्योजातंप्रपद्यामीत्यारभ्योमन्तमुच्चरन् ॥ ४० ॥ आधारोत्थितनादन्तुद्वादशग्रन्थिभेदतः ॥
ब्रह्मरन्ध्रान्तमुच्चार्य्यध्यायेदोङ्कारगोचरम् ॥ ४१ ॥ शुद्धस्फटिकसङ्काशंदेवंनिष्कलमक्षरम् ॥ कारणंसर्व्वलोकानांसर्व्वलोकमयंपरम् ॥ ४२ ॥ अन्त
र्बहिःस्थितंव्याप्यअणोरणुमहत्तरम् ॥ भक्तानामप्रयत्नेनदृश्यमीश्वरमव्ययम् ॥ ४३ ॥ ब्रह्मेन्द्रविष्णुरुद्राद्यैरपिदेवैरगोचरम् ॥ वेदसारंचविद्वद्भिर

गोचरमितिश्रुतम्॥४४॥आदिमध्यान्तरहितंभेषजंभवरोगिणाम् ॥समाहितेनमनसाध्यात्वैवंपरमेश्वरम्॥४५॥ आवाहनंस्थापनञ्चसन्निरोधंनिरीक्षणम् ॥
नमस्कारञ्चकुर्व्वीतबद्ध्वामुद्राःपृथक्पृथक् ॥ ४६ ॥ ध्यायेत्सदाशिवंसाक्षाद्देवंसकलनिष्कलम् ॥ शुद्धस्फटिकसंकाशंप्रसन्नंशीतलद्युतिम् ॥ ४७ ॥ वि
द्युद्वलयसङ्काशंजटामुकुटभूषितम् ॥ शार्दूलचर्म्मवसनंकिञ्चित्स्मितमुखाम्बुजम् ॥ ४८ ॥ रक्तपद्मदलप्रख्यपाणिपादतलाधरम् ॥ सर्व्वलक्षण
संम्पन्नंसर्व्वाभरणभूषितम् ॥ ४९ ॥ दिव्यायुधवरैर्युक्तंदिव्यगन्धानुलेपनम् ॥ पञ्चवक्त्रंदशभुजंचन्द्रखण्डशिखामणिम् ॥ ५० ॥ अस्यपूर्व्वमुखंसौम्यं
बालार्कसदृशप्रभम्॥त्रिलोचनारविन्दाढ्यंबालेन्दुकृतशेखरम्॥५१॥दक्षिणंनीलजीमूतसमानरुचिरप्रभम्॥ भृकुटीकुटिलंघोरंरक्तवृत्तात्रिलोचनम्॥५२॥
दंष्ट्राकरालंदुष्प्रेक्ष्यंस्फुरिताधरपल्लवम् ॥ उत्तरंविद्रुमप्रख्यंनीलालकविभूषितम् ॥ ५३ ॥ सद्विलासंत्रिनयनंचन्द्रार्द्धकृतशेखरम् ॥ पश्चिमंपूर्णचन्द्राभं
लोचनत्रितयोज्ज्वलम् ॥ ५४ ॥ चन्द्रलेखाधरंसौम्यंमन्दस्मितमनोहरम् ॥ पञ्चमंस्फटिकप्रख्यमिन्दुरेखासमुज्ज्वलम् ॥ ५५ ॥ अतीवसौम्यमुत्फु
ल्ललोचनत्रितयोज्ज्वलम् ॥ दक्षिणेशूलपरशुवज्रखड्गानलोज्ज्वलम् ॥ ५६ ॥ सव्येपिनाकनाराचघण्टापाशांकुशोज्ज्वलम् ॥ निवृत्याजानुपर्य्यन्तमा
नाभिचप्रतिष्ठया ॥ ५७ ॥ आकण्ठंविद्ययातद्वदाललाटन्तुशान्तया ॥ तदूर्द्ध्वंशान्त्यतीताख्यकलयापरयातथा ॥ ५८ ॥ पञ्चाध्वव्यापिनंतस्मात्कला
पञ्चकविग्रहम् ॥ ईशानमुकुटंदेवंपुरुषास्यंपुरातनम् ॥ ५९ ॥ अघोरहृदयंतद्वद्वामगुह्यंमहेश्वरम् ॥ सद्यपादञ्चतन्मूर्त्तिमष्टत्रिंशत्कलामयम् ॥ ६० ॥
मातृकामयमीशानंपञ्चब्रह्ममयंतथा ॥ ओंकाराख्यमयञ्चैवहंसन्यासमयंतथा ॥ ६१ ॥ पञ्चाक्षरमयंदेवंषडक्षरमयंतथा ॥ अङ्गषट्कमयञ्चैवजातिषट्क
समन्वितम् ॥ ६२ ॥ एवंध्यात्वाथमद्वामभागेत्वाञ्चमनोन्मनीम् ॥ गौरीमिमायमन्त्रेणप्रणवाद्येनभक्तितः ॥ ६३ ॥ आवाह्यपूर्व्ववत्कुर्य्यान्नमस्कारा
न्तमीश्वरि ॥ ध्यायेत्ततस्त्वांदेवेशिसमाहितमनामुनिः ॥ ६४ ॥ प्रफुल्लोत्पलपत्राभांविस्तीर्णायतलोचनाम् ॥ पूर्णचन्द्राभवदनांनीलकुञ्चितमूर्द्धजा
म् ॥ ६५ ॥ नीलोत्पलदलप्रख्यांचन्द्रार्द्धकृतशेखराम् ॥ अतिवृत्तघनोत्तुङ्गस्निग्धपीनपयोधराम् ॥ ६६ ॥ तनुमध्यांपृथुश्रोणींपीतसूक्ष्मतराम्बराम् ॥
सर्व्वाभरणसम्पन्नांललाटतिलकोज्ज्वलाम् ॥ ६७ ॥ विचित्रपुष्पसंकीर्णकेशपाशोपशोभिताम् ॥ सर्व्वतोऽनुगुणाकारांकिञ्चिल्लज्जानताननाम् ॥
॥ ६८ ॥ हेमारविन्दंविलसद्दधानांदक्षिणेकरे ॥ दंडवच्चापरंहस्तंन्यस्यासीनांमहासने ॥ ६९ ॥ एवंमांत्वाञ्चदेवेशिध्यात्वानियतमानसः ॥ स्नापये
च्छुद्धतोयेनप्रणवप्रोक्षणक्रमात् ॥ ७० ॥ भवेभवेनातिभवइतिपाद्यंप्रकल्पयेत् ॥ वामायनमइत्युक्त्वादद्यादाचमनीयकम् ॥ ७१ ॥ ज्येष्ठायनमइत्यु
क्त्वाशुभ्रवस्त्रंप्रकल्पयेत् ॥ श्रेष्ठायनमइत्युक्त्वादद्याद्यज्ञोपवीतकम् ॥ ७२ ॥ रुद्रायनमइत्युक्त्वापुनराचमनीयकम् ॥ कालायनमइत्युक्त्वागंधंद

द्यात्सुसंस्कृतम् ॥ ७३ ॥ कलविकरणायनमोऽक्षतंपरिकल्पयेत् ॥ बलविकरणायनमइतिपुष्पाणिदापयेत् ॥ ७४ ॥ बलायनमइत्युक्त्वाधूपंदद्यात्प्रयत्न
तः ॥ बलप्रमथनायेतिसुदीपञ्चप्रदापयेत् ॥ ७५ ॥ ब्रह्मभिश्चषडङ्गैश्चततोमातृकयासह ॥ प्रणवेनाशिवेनैवशक्तियुक्तेनचक्रमात् ॥ ७६ ॥ मुद्राःसन्द
र्शयेन्मह्यंतुभ्यञ्चवरवर्णिनि ॥ मयिप्रकल्पयेत्पूर्व्वमुपचारांस्ततस्त्वयि ॥ ७७ ॥ यदात्वयिप्रकुर्व्वीतस्त्रीलिंगंयोजयेत्तदा ॥ पञ्चावरणपूजान्तुप्रारभेत
यथाक्रमम् ॥७८॥ प्रथमंपूजितौयत्रतत्रैवक्रमशःसुधीः ॥ गन्धाद्यैरर्च्चयेत्पूर्व्वंदेवौहेरम्बषण्मुखौ ॥७९॥ पञ्चब्रह्माणिपरितोवृत्तंसम्पूजयेत्क्रमात् ॥ ईशा
नदेशेपूर्व्वेचदक्षिणेचोत्तरेसदा ॥ ८० ॥ पश्चिमेचततस्तस्मिन्षडंगानिसमर्च्चयेत् ॥ आग्नेयेचतथैशानेनैर्ऋतेवायुदेशके ॥ ८१ ॥ मध्येनेत्रंतद्वदस्त्रं
पूर्व्वादिपरितःक्रमात् ॥ प्रथमावरणंप्रोक्तंद्वितीयावरणंशृणु ॥ ८२ ॥ अनन्तंपूर्व्वदिक्पत्रेसूक्ष्मंदक्षिणतस्ततः ॥ शिवोत्तमंपश्चिमतएकनेत्रंतथोत्तरे
॥ ८३ ॥ एकरुद्रंतथैशानेत्रिमूर्त्तिवह्निदिग्दले ॥ श्रीकण्ठंनैर्ऋतेवायौशिखण्डीशंसमर्च्चयेत् ॥ ८४ ॥ द्वितीयावरणेचैवंपूज्यास्तेचक्रवर्त्तिनः ॥ पूर्व्वद्वा
रस्यमध्येतुवृषेशानंप्रपूजयेत् ॥ ८५ ॥ तद्दक्षिणेनन्दिनञ्चमहाकालंतदुत्तरे ॥ भृंगीशंदक्षिणद्वारपाश्चिमेसम्प्रपूजयेत् ॥ ८६ ॥ तत्पूर्व्वकोष्ठेगन्धाद्यैः
सम्पूज्यचविनायकम् ॥ पश्चिमोत्तरकोष्ठेचवृषभंदक्षिणेगुहम् ॥ ८७ ॥ उत्तरद्वारपूर्व्वेतुप्रदक्षिणविधानतः ॥ भवंशर्व्वंतथेशानंरुद्रंपशुपतिंपुनः॥८८॥
उग्रंभीमंमहादेवंतृतीयावरणन्त्विदम् ॥ योवेदादौस्वरइतिसमावाह्यमहेश्वरम् ॥ ८९ ॥ पूजयेत्पूर्व्वदिग्भागेकमलेकर्णिकोपरि ॥ ईश्वरंपूर्व्वदिक्पत्रेवि
श्वेशंदक्षिणेततः ॥ ९० ॥ सौम्येतुपरमेशानंसर्व्वेशंपश्चिमेयजेत् ॥ दक्षिणेतुयजेद्रुद्रमावोराजानमित्यृचा ॥ ९१ ॥ आवाह्यगन्धपुष्पाद्यैःकर्णिकायां
दलेषुच ॥ शिवःपूर्व्वेदक्षिणतोहरउत्तरतोमृडः ॥ ९२ ॥ भवःपश्चिमदिक्पत्रेपूज्याएतेयथाक्रमम् ॥ उत्तरेविष्णुमावाह्यगन्धपुष्पादिभिर्यजेत् ॥ ९३ ॥
प्रताद्विष्णुरितिप्रोच्यकार्णिकायांदलेषुच ॥ वासुदेवंपूर्व्वभागेदक्षिणेचानिरुद्धकम् ॥ ९४ ॥ सौम्येसङ्कर्षणञ्चैवप्रद्युम्नंपश्चिमेयजेत् ॥ ब्रह्माणंपश्चिमेपद्मेसमा
वाह्यसमर्च्चयेत् ॥९५॥ हिरण्यगर्भःसमवर्त्ततेतिमन्त्रेणमन्त्रवित् ॥ हिरण्यगर्भंपूर्व्वस्यांविराजंदक्षिणेततः ॥ ९६ ॥ उत्तरेपुरुषञ्चैवकालंपश्चिमतोयजेत् ॥
सर्व्वोर्द्ध्वपंक्तौपूर्व्वादिप्रदक्षिणविधानतः ॥ ९७ ॥ तत्तत्स्थानेषुसंपूज्यालोकपालाअनुक्रमात् ॥ रान्तंयान्तंतथाज्ञान्तंलान्तंलान्तमपूर्व्वकम् ॥
॥ ९८ ॥ पान्तंसान्तञ्चवेदाद्यं श्रीबीजञ्चदशक्रमात् ॥ बीजानिलोकपालानामेतैरेतान्समर्च्चयेत् ॥ ९९ ॥ नैर्ऋतेउत्तरेतद्वदीशानस्यचदक्षिणे ॥
ब्रह्मविष्णूचविधिनापूजयेदुपचारकैः ॥ १०० ॥ बाह्यरेखासुदेवेशिपञ्चमावरणंयजेत् ॥ श्रीमत्त्रिशूलमीशानेवज्रंमाहेन्द्रदिङ्मुखे ॥ १०१ ॥ परशुंवह्निदि
ग्भागेयाम्येसायकमर्च्चयेत् ॥ नैर्ऋतेतुयजेत्खड्गंपाशंवरुणगोचरे ॥ १०२ ॥ अङ्कुशंमारुतेभागेपिनाकञ्चोत्तरेयजेत् ॥ पश्चिमाभिमुखंरौद्रंक्षेत्रपालंसमर्च्च

२०

येत् ॥ १०३ ॥ कृताञ्जलिपुटाःसर्व्वेचिन्त्याःस्मितमुखाम्बुजाः ॥ सादरंप्रेक्षमाणाश्चदेवंदेवीञ्चसर्व्वदा ॥ १०४ ॥ इत्थमावरणाभ्यर्च्चांकृत्वाव्याक्षेपशा
न्तये ॥ पुनरभ्यर्च्यदेवेशंप्रणवञ्चशिवंवदेत् ॥१०५॥ एवमभ्यर्च्यविधिवद्गन्धाद्यैरुपचारकैः ॥ उपचर्य्यततोदद्यान्नैवेद्यंविधिसाधितम् ॥१०६॥ पुनरा
चमनीयञ्चदद्यादर्घ्यंयथापुरा ॥ ततोनिवेद्यपानीयंताम्बूलञ्चोपदंशकैः ॥ १०७ ॥ नीराजनादिकंकृत्वापूजाशेषंसमापयेत् ॥ ध्यात्वादेवंचदेवींचमनु
मष्टोत्तरंजपेत्॥१०८॥ ततउत्थायरचितपुष्पाञ्जलिपुटःस्थितः॥जपेद्ध्यात्वामहादेवंयोदेवानामितिक्रमात् ॥ १०९ ॥ योवेदादौस्वरःप्रोक्तइत्यन्तंपरमे
श्वरि॥पुष्पाञ्जलिंततोदत्त्वात्रिःप्रदक्षिणमाचरेत् ॥११०॥ साष्टाङ्गंप्रणमेत्तञ्चभक्त्यापरमयान्वितः ॥ पुनःप्रदक्षिणंकृत्वाप्रणमेत्पुनरेकधा॥१११॥ स्थि
त्वासनेसमभ्यर्च्यदेवंनामाष्टकेनच ॥ साधुवासाधुवाकर्म्मयद्यदाचरितंमया ॥ ११२ ॥ तत्सर्व्वंभगवञ्छम्भोभवदाराधनंपरम् ॥ इतिशङ्खोदकेनैवसपु
ष्पेणसमर्च्चयेत् ॥ ११३ ॥ पूज्यांपुनःसमभ्यर्च्चयसार्थनामाष्टकंजपेत् ॥ शिवोमहेश्वरश्चैवरुद्रोविष्णुःपितामहः ॥ ११४ ॥ संसारवैद्यःसर्व्वज्ञःपरमा
त्मेतिमुख्यतः ॥ नामाष्टकमिदंनित्यंशिवस्यप्रतिपादकम् ॥ ११५ ॥ आद्यन्तुपंचकंतत्रशान्त्यतीताद्यनुक्रमात् ॥ संज्ञासदाशिवादीनांपंचोपाधिपरि
ग्रहात् ॥ ११६ ॥ उपाधिविनिवृत्तौतुयथास्वंविनिवर्त्तते ॥ पदमेवहितन्नित्यमनित्याःपदिनःस्मृताः ॥ ११७ ॥ पदानांपरिवृत्तिःस्यान्मुच्यन्तेपदि
नोयतः ॥ परिवृत्त्यन्तरेत्वेवंभूयस्तस्याप्युपाधिना ॥ ११८ ॥ आत्मान्तराभिधानंस्याद्यदाद्यंनामपंचकम् ॥ अन्यत्तुत्रितयंनाम्नामुपादानादियोग
तः ॥ ११९ ॥ त्रिविधोपाधिवचनाच्छिवएवतुवर्त्तते ॥ अनादिमलसंश्लेषप्रागभावात्स्वप्रभावतः ॥ १२० ॥ अत्यन्तपरिशुद्धात्मेत्यतोऽयंशिवउच्यते॥
अथवाशेषकल्याणगुणैकघनईश्वरः ॥ १२१ ॥ शिवइत्युच्यतेसद्भिःशिवतत्त्वार्थवेदिभिः ॥ त्रयोविंशतितत्त्वेभ्यःपराप्रकृतिरुच्यते ॥ १२२ ॥
प्रकृतेस्तुपरंप्राहुःपुरुषंपञ्चविंशकम् ॥ यंवेदादौस्वरंप्राहुर्वाच्यवाचकभावतः ॥ १२३ ॥ वेदैकवेद्यंयाथात्म्याद्वेदान्तेचप्रतिष्ठितम् ॥ सएवप्रकृतौ
लीनोभोक्तायःप्रकृतेर्यतः ॥ १२४ ॥ तस्यप्रकृतिलीनस्ययःपरःसमहेश्वरः ॥ तदधीनप्रवृत्तित्वात्प्रकृतेःपुरुषस्यच ॥ १२५ ॥ अथवात्रिगुणंतत्त्वंमायेय
मिदमव्ययम् ॥ मायान्तुप्रकृतिंविद्यान्मायिनन्तुमहेश्वरम् ॥१२६॥ मायाविक्षोभकोऽनन्तोमहेश्वरसमन्वयात् ॥ रुदुःखंदुःखहेतुर्वातद्द्रावयतियःप्रभुः ॥
॥ १२७ ॥ रुद्रइत्युच्यतेतस्माच्छिवःपरमकारणम् ॥ शिवतत्त्वादिभूम्यन्तंशरीरादिघटादिच ॥ १२८ ॥ व्याप्याधितिष्ठतिशिवस्तस्माद्विष्णुरुदाहृ
तः ॥ जगतःपितृभूतानांशिवोमूर्त्त्यात्मनामपि ॥ १२९ ॥ पितृभावेणसर्व्वेषांपितामहउदीरितः ॥ निदानज्ञोयथावैद्योरोगस्यविनिवर्त्तकः ॥ १३० ॥
उपायैर्भेषजैस्तद्वल्लयभोगाधिकारतः ॥ संसारस्येश्वरोनित्यंस्थूलस्यविनिवर्त्तकः ॥ १३१ ॥ संसारवैद्यइत्युक्तःशिवतत्त्वार्थवेदिभिः ॥ दशार्द्धज्ञान

सिद्ध्यर्थमिन्द्रियेषुचसत्स्वपि ॥ १३२ ॥ त्रिकालभाविनोभावान्स्थूलान्सूक्ष्मानशेषतः ॥ अणवोनैवजानन्तिमायार्णवमलावृताः ॥ १३३ ॥ असत्स्व
पिचसर्व्वेषुसिद्धसर्व्वार्थवेदिषु ॥ यद्यथावस्थितंवस्तुतत्तथैवसदाशिवः ॥ १३४ ॥ अयत्नेनैवजानातितस्मात्सर्व्वज्ञउच्यते ॥ सर्व्वात्मापरमैरेभिर्गुणै
र्नित्यसमन्वयात् ॥ १३५ ॥ स्वस्मात्परात्मविरहात्परमात्माशिवःस्वयम् ॥ इतिस्तुत्वामहादेवंप्रणवात्मानमव्ययम् ॥ १३६ ॥ दत्त्वापराङ्मुखार्घ्यं
चपश्चादीशानमस्तके ॥ पुनरभ्यर्च्यदेवेशंप्रणवेनसमाहितः ॥ १३७ ॥ हस्तेनबद्धाञ्जलिनापूजापुष्पंप्रगृह्यच ॥ उन्मनान्तंशिवंनीत्वावामनासापुटा
ध्वना ॥ १३८ ॥ देवीमुद्वास्यचततोदक्षनासापुटाध्वना ॥ शिवएवाहमस्मीतितद्दैवमनुभूयच ॥ १३९ ॥ सर्व्वावरणदेवांश्चपुनरुद्वासयेद्धृदि ॥ विद्यापू
जांगुरोःपूजांकृत्वापश्चाद्यथाक्रमम् ॥ १४० ॥ शङ्खार्घ्यपात्रमन्त्रांश्चहृदयेविन्यसेत्क्रमात् ॥ निर्म्माल्यञ्चसमर्प्याथचण्डेशायेशगोचरे ॥ १४१ ॥
पुनश्चसंयतप्राणऋष्यादिकमथोच्चरेत् ॥ कैलासप्रस्तरोनाममण्डलंपरिभाषितम् ॥ १४२ ॥ अर्च्चयेन्नित्यमेवैतत्पक्षेवामासिमासिवा ॥ षण्मासेवत्सरे
वापिचातुर्म्मास्यादिपर्व्वणि ॥ १४३ ॥ असमर्थःसमभ्यर्च्यान्नित्यंमल्लिङ्गमास्तिकः ॥ तस्मिन्क्रमेमहादेविविशेषःकोऽपिकथ्यते ॥ १४४ ॥ उपदेशदिने
लिङ्गंपूजितंगुरुणासह ॥ गृह्णीयादर्च्चयिष्यामिशिवमाप्राणसंक्षयम् ॥ १४५ ॥ एवंत्रिवारमुच्चार्य्यशपथंगुरुसन्निधौ ॥ ततःसमर्च्चयेन्नित्यंपूर्व्वोक्तविधि
नाप्रिये ॥ १४६ ॥ अर्घ्यंसमर्पयेल्लिङ्गमूर्द्धन्यर्घ्योदकेनच ॥ प्रणवेनसमभ्यर्च्यधूपदीपौसमर्पयेत् ॥ १४७ ॥ ऐशान्यांचण्डमाराध्यनिर्म्माल्यञ्चनिवे
दयेत् ॥ प्रक्षाल्यलिङ्गवेदीञ्चवस्त्रपूतैर्जलैस्ततः ॥ १४८ ॥ निक्षिप्यपुष्पंशिरसिलिङ्गस्यप्रणवेनतु ॥ आधारशक्तिमारभ्यशुद्धविद्यासनावधिं ॥ १४९ ॥
विभाव्यसर्व्वंमनसास्नापयेत्परमेश्वरम् ॥ पञ्चगव्यादिभिर्गव्यैर्यथाविभवसम्भृतैः ॥ १५० ॥ केवलैर्वाजलैःशुद्धैःसुरभिद्रव्यवासितैः ॥ पावमानेनरुद्रेण
नीलेनत्वरितेनच ॥ १५१ ॥ लिंगसूक्तादिसूक्तैश्चशिरसाथर्व्वणेनच ॥ ऋग्भिश्चसामभिर्वापिब्रह्मभिश्चैवपञ्चभिः ॥ १५२ ॥ स्नापयेद्देवदेवेशंप्रणवेन
शिवेनच ॥ विशेषार्घ्योदकेनापिप्रणवेनाभिषेचयेत् ॥ १५३ ॥ विशोध्यवाससापुष्पंलिङ्गमूर्द्धनिविन्यसेत् ॥ पीठेलिङ्गेसमारोप्यसूर्य्याद्यर्च्चासमाचरेत्
॥ १५४ ॥ आधारशक्त्यनन्तौद्वौपीठाधस्तात्समर्च्चयेत् ॥ सिंहासनंतदूर्द्ध्वन्तुसमभ्यर्च्ययथाक्रमम् ॥ १५५ ॥ अथोर्द्ध्वच्छदनंपीठपादेकन्दंसमर्च्चये
त् ॥ मूर्त्तिंलिङ्गेसमाकल्प्यमांत्वयासहरंजयेत् ॥ १५६ ॥ एवंमयातेकथितमतिगुह्यमिदंप्रिये ॥ गोपनीयंप्रयत्नेननदेयंयस्यकस्यचित् ॥ १५७ ॥
ममभक्तायदातव्यंयतयेवीतरागिणे॥गुरुभक्तायशान्तायमदर्थोद्योगभागिने॥१५८॥ममाज्ञामतिलङ्घ्यैतद्योददातिविमूढधीः ॥ सनारकीमद्द्रोहीभवि
ष्यतिनसंशयः ॥ १५९ ॥ मद्भक्तदानाद्देवेशिमत्प्रियश्चभवेद्ध्रुवम् ॥ व्यासउवाच ॥ एतच्छ्रुत्वामहादेवीदेवेनपरिभाषितम् ॥ १६० ॥ स्तुत्वातुविविधैः

स्तोत्रैर्देवंवेदार्थगर्भितैः ॥ श्रीमत्पादाब्जयोःपत्युःप्रणम्यपरमेश्वरी ॥ १६१॥ अतिप्रहृष्टहृदयामुमोदमुनिसत्तमाः॥ अतिगुह्यमिदंविप्राःप्रणवार्थप्रकाश
कम्॥१६२॥शिवज्ञानंपरंह्येतद्भवतामार्तिनाशनम् ॥ सूतउवाच ॥ इत्युक्त्वामुनिशार्दूलःपाराशर्य्योमहातपाः ॥१६३॥ पूजितःपरयाभक्त्यामुनिभिर्वे
दवादिभिः ॥ कैलासाद्रिमनुस्मृत्यययौतस्मात्तपोवनात् ॥ १६४ ॥ तेऽपिप्रहृष्टहृदयाःसत्रान्तेपरमेश्वरम् ॥ सम्पूज्यपरयाभक्त्यासोमंसोमार्द्धशेखर
म् ॥ १६५ ॥ यमादियोगनिरताःशिवध्यानपराभवन् ॥ गुहायकथितंह्येतद्देव्यातेनापिनन्दिने ॥ १६६ ॥ सनत्कुमारमुनयेप्रोवाचभगवानपि ॥
तस्माल्लब्धंमद्गुरुणाव्यासेनामिततेजसा ॥ १६७ ॥ तस्माल्लब्धमिदंपुण्यंमयापिमुनिपुङ्गवाः ॥ भवद्भिरपिदातव्यमेतद्गुह्यंशिवप्रियम् ॥ १६८ ॥ यति
भ्यःशान्तचित्तेभ्योभक्तेभ्यःशिवपादयोः ॥ एतदुक्त्वामहाभागःसूतःपौराणिकोत्तमः ॥ १६९ ॥ तीर्थयात्राप्रसंगेनचचारपृथिवीमिमाम् ॥ एतद्रहस्यं
परमंलब्ध्वासूतान्मुनीश्वराः ॥ काश्यामेवसमासीनामुक्ताःशिवपदंययुः ॥ १७० ॥ इतिश्रीशैवेमहापुराणेकैलाससंहितायांषष्ठोऽध्यायः ॥ ६ ॥ व्यास
उवाच ॥ गतेऽथसूतेमुनयःसुविस्मिताविचिन्त्यचान्योन्यमिदन्तुविस्मृतम् ॥ यद्वामदेवस्यमतंमुनीश्वरप्रसूचितंतत्खलुकष्टमद्यनः ॥ १ ॥ कदानुभू
यान्मुनिवर्य्यदर्शनंभवाब्धिदुःखौघहरंपरंहितत् ॥ महेश्वराराधनपुण्यतोऽधुनामुनीश्वरःसत्वरमाविरस्तुनः ॥ २ ॥ इतिचिन्तासमाविष्टामुनयोमुनिपुं
गवम् ॥ व्यासंसम्पूज्यहृत्पद्मेतस्थुस्तद्दर्शनोत्सुकाः ॥ ३ ॥ संवत्सरान्तेचपुनःकाशींप्रापमहामुनिः ॥ तंदृष्ट्वासूतमायान्तंमुनयोहृष्टचेतसः ॥ ४ ॥
अभ्युत्थानासनार्घ्यादिपूजयासमपूजयन् ॥ सोऽपितान्मुनिशार्दूलानभिनन्द्यास्मितोदरम् ॥ ५ ॥ अथस्नात्वाजाह्नवीयेजलेपरमपावने ॥ ऋषीन्सन्तर्प्य
चसुरान्पितॄंश्चतिलतण्डुलैः ॥६॥ तीरमागत्यसम्प्रोक्ष्यवाससीपरिधायच ॥ द्विराचम्यसमादायभस्मसद्यादिमन्त्रतः ॥ ७ ॥ उद्धूलनादिक्रमतोविधाया
थमुनीश्वरः ॥ रुद्राक्षमालाभरणःकृतनित्यक्रियःसुधीः ॥ ८ ॥ विश्वेश्वरमुमाकान्तंससुतंसगणाधिपम् ॥ सम्पूज्यपरयाभक्त्यास्तुत्वानत्वामुहुर्मुहुः॥
॥ ९ ॥ कालभैरवनाथञ्चसम्पूज्याथविधानतः ॥ प्रदक्षिणीकृत्यपुनस्त्रेधानत्वाचपञ्चधा ॥ १० ॥ पुनःप्रदक्षिणीकृत्यप्रणम्यभुविदण्डवत् ॥ श्रीमत्प
ञ्चाक्षरींविद्यामष्टोत्तरसहस्रकम् ॥ ११ ॥ संजप्यपुरतःस्थित्वाक्षमाप्यचमहेश्वरम् ॥ चण्डेशंसंप्रपूज्याथमुक्तिमण्डपमध्यतः ॥ १२ ॥ निर्दिष्टमासनं
भेजेमुनिभिर्वेदपारगैः ॥ एवंस्थितेषुसर्व्वेषुनमस्कृत्यसमन्त्रकम् ॥ १३ ॥ अथप्राहमुनीन्द्राणांभाववृद्धिकरंवचः ॥ सूतउवाच ॥ इतोनिर्गत्यसम्प्राप्य
तीरंदक्षपयोनिधेः ॥ १४ ॥ स्नात्वासम्पूज्यविधिवद्देवींकन्यामयींशिवाम् ॥ पुनरागत्यविप्रेन्द्राःसुवर्णमुखरीतटे ॥ १५ ॥ श्रीकालहस्तिशैलाख्यनगरे
परमाद्भुते ॥ सुवर्णमुखरीतोयेस्नात्वादेवानृषीनपि ॥ १६ ॥ सन्तर्प्यकालहस्तीशंचन्द्रकान्तसमप्रभम् ॥ पश्चिमाभिमुखंपञ्चशिरसंपरमाद्भुतम् ॥१७॥

सकृद्दर्शनमात्रेणसर्व्वाघक्षयकारकम् ॥ सम्पूज्यपरयाभक्त्यातस्यदक्षिणगांशिवाम् ॥ १८ ॥ ज्ञानप्रसूनकलिकामपिसम्पूज्यभक्तितः ॥ श्रीमत्पञ्चाक्षरीं
विद्यामष्टोत्तरसहस्रकम् ॥ १९ ॥ क्षणंप्रदक्षिणीकृत्यस्तुत्वानत्वामुहुर्मुहुः ॥ प्रदक्षिणीकृत्यगिरिंप्रत्यहंपरयामुदा ॥ २० ॥ एवंनियममास्थायास्थितोऽहं
क्षेत्रनायके ॥ नीत्वाचचतुरोमासानेतदन्तेमुनीश्वराः ॥ २१ ॥ ज्ञानप्रसूनकलिकामहादेव्याः प्रसादतः ॥ एकदातुसमास्तीर्य्यचैलाजिनकुशोत्तरम् ॥
॥ २२ ॥ आसनंपरमंतस्मिन्स्थित्वारुद्धेन्द्रियोमुनिः ॥ समाधिमास्थायसदापरमानन्दचिद्घनः ॥ २३ ॥ परिपूर्णःशिवोऽस्मीतिनिर्व्यग्रहृदयोऽभवम् ॥
एतस्मिन्नेवसमयेमद्गुरुःकरुणानिधिः ॥ २४ ॥ नीलजीमूतसङ्काशोविद्युत्पिङ्गजटाधरः ॥ प्रांशुःकमण्डलुदण्डकृष्णाजिनधरःस्वयम् ॥ २५ ॥ भस्मा
वदातसर्व्वाङ्गःसर्व्वलक्षणलक्षितः ॥ त्रिपुण्ड्रविलसद्भालोरुद्राक्षालङ्कृताकृतिः ॥२६॥ पद्मपत्रारुणायामविस्तीर्णनयनद्वयः॥ प्रादुर्भूयहृदम्भोजेतदानी
मेवसत्वरम् ॥ २७ ॥ व्यमोहयच्चभगवानेतदद्भुतमास्तिकाः ॥ आसीदुन्मील्यनयनेविलापंकृतवानहम् ॥ २८ ॥ आसीन्ममाश्रुपातश्चगिरिनिर्झरस
न्निभः ॥ एतस्मिन्नेवसमयेश्रुत्वावागशरीरिणी ॥ २९ ॥ व्योम्नःसूतमहाभागगच्छवाराणसींपुरीम् ॥ तत्रासन्मुनयःपूर्व्वमुपदिष्टास्त्वयाधुना ॥ ३० ॥
त्वदुपागमकल्याणंकाङ्क्षन्तेविवशाभृशम् ॥ तिष्ठन्तितेनिराहाराइतिसाविरराम च ॥३१॥ ततउत्थायतरसादेवंदेवींश्चभक्तितः ॥ प्रदक्षिणीकृत्यपुनः
प्रणम्यभुविदण्डवत् ॥ ३२ ॥ द्विषड्वारंगुरोराज्ञांविज्ञाप्याशिवयोरथ ॥ क्षेत्रान्निर्गत्यतरसाचत्वारिंशद्दिनान्तरे ॥ ३३ ॥ आगतोऽस्मिमुनिश्रेष्ठाअनु
गृह्णन्तुमामिह॥मयाकिमद्यवक्तव्यंभवन्तस्तद्ब्रुवन्तुमे ॥३४॥ इतिसूतवचःश्रुत्वाऋषयोहृष्टमानसाः॥अवोचन्मुनिशार्दूलंव्यासंनत्वामुहुर्म्मुहुः ॥ ३५ ॥
॥ ऋषयऊचुः ॥ सूतसूतमहाभागत्वमस्मद्गुरुरुत्तमः ॥ अतस्त्वांपरिपृच्छामःशिष्येषुगुरवःसदा ॥ ३६ ॥ स्निग्धीभावाइतिपुरादर्शितंभवताधुना ॥
विरजाहोमसमयेवामदेव्यमतंपुरा ॥३७॥ सूचितंभवतास्माभिर्नश्रुतंविस्तरान्मुने ॥ तदिदानींश्रोतुकामावयंतद्वक्तुमर्हसि ॥३८॥ इतितेषांवचःश्रुत्वा
सूतोहृष्टतनूरुहः ॥ नमस्कृत्वामहादेवंदेवींव्यासंचभक्तितः ॥ ३९ ॥ प्राहगम्भीरयावाचामुनीनाह्लादयन्निदम् ॥ सूतउवाच ॥ स्वस्त्यस्तुमुनयःसर्व्वे
सुखिनःसन्तुसर्व्वदा ॥ ४० ॥ तदतीवविचित्रंहिश्रुतंगुरुमुखाम्बुजात् ॥ इतःपूर्व्वमयानोक्तंगुह्यप्राकट्यशङ्कया ॥ ४१ ॥ यूयंखलुमहाभागाभवभक्ता
दृढव्रताः ॥ इतिनिश्चित्ययुष्माकंवक्ष्यामिश्रूयतांमुदा ॥ ४२ ॥ पुरारथन्तरेकल्पेवामदेवोमहामुनिः ॥ गर्भमुक्तःशिवज्ञानविदांगुरुतमःस्वयम्॥४३॥
वेदागमपुराणादिसर्व्वशास्त्रार्थतत्त्ववित् ॥ देवासुरमनुष्यादिजीवानांजन्मकर्म्मवित् ॥ ४४ ॥ भस्मावदातसर्व्वाङ्गोजटामण्डलमण्डितः ॥ निराश्रयो
निःस्पृहश्चनिर्द्वन्द्वोनिरहङ्कृतिः ॥ ४५ ॥ दिगम्बरोवीतभयोमहेश्वरइवापरः ॥ शिष्यभूतैर्मुनीन्द्रैश्चतादृशैःपरिवारितः ॥ ४६ ॥ पर्य्यटन्पृथिवीमेनां

स्वपादस्पर्शपुण्यतः ॥ पवित्रयन्परेधाम्निनिमग्नहृदयोऽन्वहम् ॥ ४७ ॥ कुमारशिखरंमेरोर्दक्षिणंप्राविशन्मुदा ॥ तत्रास्तेभगवानीशतनयःशिखिवा
हनः ॥ ४८ ॥ ज्ञानशक्तिधरोवीरःसर्व्वासुरविमर्द्दनः ॥ गजावल्लीसमायुक्तःसर्व्वदेवैर्नमस्कृतः ॥ ४९ ॥ तत्रस्कन्दसरोनामसरःसागरसन्निभम् ॥ शिशि
रस्वादुपानीयंस्वच्छागाधबहूदकम् ॥ सर्व्वाश्चर्य्यगुणोपेतंविद्यतेस्वामिसन्निधौ ॥ ५० ॥ तत्रस्नात्वावामदेवःसहशिष्यैर्महामुनिः ॥ कुमारशिखरा
धीशंमुनिवृन्दनिषेवितम् ॥ ५१ ॥ उद्यदादित्यसङ्काशंमयूरवरवाहनम् ॥ चतुर्भुजमुदाराङ्गंमुकुटादिविभूषितम् ॥ ५२ ॥ शक्तिरत्नद्वयोपास्यंशक्ति
कुक्कुटधारिणम् ॥ वरदाभयहस्तंचदृष्ट्वास्कन्दंमुनीश्वरः ॥ सम्पूज्यपरयाभक्त्यास्तोतुंसमुपचक्रमे ॥ ५३ ॥ वामदेवउवाच ॥ ॐनमःप्रणवार्थायप्रण
वार्थविधायिने ॥ प्रणवाक्षरपीठायप्रणवायनमोनमः ॥५४॥ वेदान्तार्थस्वरूपायवेदान्तार्थविधायिने ॥ वेदान्तार्थविदांनित्यंविदितायनमोनमः ॥ ५५ ॥
नमोगुहायभूतानांगुहासुनिहितायच ॥ गुह्यायगुह्यरूपायगुह्यागमविदेनमः ॥ ५६ ॥ अणोरणीयसेतुभ्यंमहतोऽपिमहीयसे ॥ नमःपरावरज्ञायपरमा
त्मस्वरूपिणे ॥ ५७ ॥ स्कन्दायस्कन्दरूपायसिन्दूरारुणतेजसे ॥ नमोमन्दारमालोद्यन्मुकुटादिभृतेसदा ॥ ५८ ॥ शिवशिष्यायपुत्रायशिवस्यशिवदा
यिने ॥ शिवप्रियायशिवयोरानन्दनिधयेनमः ॥ ५९ ॥ गाङ्गेयायनमस्तुभ्यंकार्त्तिकेयायधीमते ॥ मातृपुत्रायमहतेशरकाननशायिने ॥ ६० ॥ षड
क्षरशरीरायषड्विधार्थविधायिने ॥ षडध्वातीतरूपायषण्मुखायनमोनमः ॥ ६१ ॥ द्वादशायतनेत्रायद्वादशायतबाहवे ॥ द्वादशायुधधारायद्वाद
शात्मन्नमोऽस्तुते ॥ ६२ ॥ चतुर्भुजायशान्तायशक्तिकुक्कुटधारिणे ॥ वरदाभयहस्तायनमोऽसुरविदारिणे ॥ ६३ ॥ गजावल्लीकुचालिप्तकुङ्कुमाङ्कि
तवक्षसे ॥ नमोगजाननानन्दगरिमानन्दितात्मने ॥ ६४ ॥ ब्रह्मादिदेवऋषिकिन्नरगीयमानगाथाविशेषसुविचित्रितकीर्त्तिधाम्ने ॥ वृन्दारकामलकिरी
टविभूषणस्रक्पश्चाभिरामपदपङ्कजतेनमोऽस्तु ॥ ६५ ॥ इतिस्तुत्वावामदेवोदेवंसेनापतिंप्रभुम् ॥ प्रदक्षिणत्रयंकृत्वाप्रणम्यभुविदण्डवत् ॥ ६६ ॥
साष्टाङ्गंचपुनःकृत्वाप्रदक्षिणनमस्कृतीः ॥ अभवत्पार्श्वतस्तस्यविनयावनतोद्विजाः ॥ ६७ ॥ तमुवाचमहासेनःप्रीतोऽस्मितवपूजया ॥ भक्त्यास्तु
त्याचभद्रंतेकिमद्यकरवाण्यहम् ॥ ६८ ॥ मुनेत्वंयोगिनांमुख्यःपरिपूर्णश्चनिःस्पृहः ॥ भवादृशांहिलोकेऽस्मिन्प्रार्थनीयंनविद्यते ॥ ६९ ॥ तथापिलो
करक्षायैविचरन्तिहिसाधवः ॥ श्रोतव्यमस्तिचेद्ब्रह्मन्वक्तुमर्हसिसाम्प्रतम् ॥ ७० ॥ तदिदानीमहंवक्ष्येलोकानुग्रहहेतवे ॥ इतिस्कंदवचःश्रुत्वा
वामदेवोमहामुनिः ॥ ७१ ॥ प्रश्रयावनतःप्राहप्रेमगद्गदयागिरा ॥ भगवन्परमेशस्त्वंपरावरविभूतिदः ॥७२॥ सर्व्वज्ञःसर्व्वकर्त्ताचसर्व्वशक्तिधरःप्रभुः ॥
जीवावयन्तुतेवक्तुंसन्निधौपरमेशितुः ॥ ७३ ॥ तथाप्यनुग्रहीतव्याविज्ञानलवमात्रतः ॥ प्रेरितःपरिपृच्छामिक्षन्तव्योऽतिक्रमोमम ॥७४॥ प्रणवोहिपरः

साक्षात्परमेश्वरवाचकः ॥ वाच्यःपशुपतिर्देवःपशूनांपाशमोचकः॥७५॥वाचकेनसमाहूतःपशून्मोचयतिक्षणात् ॥ तस्माद्वाचकतासिद्धिःप्रणवेनशिवंप्र
ति ॥७६॥ ओमितीदंसर्व्वमितिश्रुतिराहसनातनी॥ओमितिब्रह्मसर्व्वंवैब्रह्मेतिचसमब्रवीत् ॥७७॥ देवसेनापतेतुभ्यंदेवानांपतयेनमः॥नमःपतीनांपतयेप
रिपूर्णायतेनमः॥७८॥एवंस्थितेजगत्यस्मिञ्छिवादन्यन्नविद्यते॥समष्टिव्यष्टिभावेनप्रणवार्थःश्रुतोमया॥७९॥नजातुचिन्महासेनतमर्थंवक्तुमर्हसि ॥ उपदे
शविधानेनसदाचारक्रमेणच॥८०॥स्वाम्येवंसर्व्वजन्तूनांपाशच्छेदकरोगुरुः॥अतस्त्वत्कृपयासोऽर्थःश्रोतव्योहिमयागुरोः॥८१॥इतिसमुनिनापृष्टःस्कंदः
प्रणम्यसदाशिवंप्रणववपुषंसाष्टत्रिंशत्कलास्वतिलाञ्छितम् ॥ सहितमुमयाशश्वत्पार्श्वेमुनिप्रवरार्थितंगदितुमुपचक्रामश्रेयःश्रुतिष्वपिगोपितम् ॥८२॥
इतिश्रीशैवेमहापुराणेकैलाससंहितायांसप्तमोऽध्यायः॥७॥ श्रीसुब्रह्मण्यउवाच ॥ साधुसाधुमहाभागवामदेवमुनीश्वर॥त्वमतीवशिवेभक्तःशिवज्ञानवतांव
रः ॥१॥ त्वयाह्यविदितंकिंचिन्नास्तिलोकेषुकुत्रचित् ॥ तथापितववक्ष्यामिलोकानुग्रहकारिणः ॥२॥ लोकेऽस्मिन्पशवःसर्व्वेनानाशास्त्रविमोहिताः ॥
वंचिताःपरमेशस्यमाययातिविचित्रया ॥ ३ ॥ नजानन्तिपरंसाक्षात्प्रणवार्थंमहेश्वरम् ॥ दक्षिणंबाहुमुद्धृत्यशपथंप्रब्रवीमिते ॥ ४ ॥ सत्यंसत्यंपुनःसत्यं
सत्यंसत्यंपुनःपुनः ॥ प्रणवार्थःशिवःसाक्षात्प्राधान्येनप्रकीर्त्तितः ॥ ५ ॥ यतोवाचोनिवर्त्तन्तेअप्राप्यमनसासह ॥ आनन्दंयस्यवैविद्वान्नबिभेतिकुतश्च
न ॥ ६ ॥ यस्माज्जगदिदंसर्व्वंविष्णुरुद्रेन्द्रपूर्व्वकम् ॥ सहभूतेन्द्रियग्रामैःप्रथमंसम्प्रसूयते ॥ ७ ॥ नसम्प्रयततेयोवैकुतश्चनकदाचन ॥ यस्मिन्नभासते
विद्युन्नसूर्य्योनचचन्द्रमाः ॥ ८ ॥ यस्यभासाविभातीदंजगत्सर्व्वंसमन्ततः ॥ सर्व्वैश्वर्य्येणसम्पन्नोनाम्नासर्व्वेश्वरःस्वयम् ॥ ९ ॥ योवैमुमुक्षुभिर्ध्येयः
शम्भुराकाशमध्यगः ॥ यस्यपुंसःपराशक्तिर्भावगम्यामनोहरा ॥ १० ॥ निर्गुणास्वगुणैरेवनिगूढानिष्कलाशिवा ॥ तदीयंत्रिविधंरूपंस्थूलंसूक्ष्मंपरं
ततः ॥ ११ ॥ निष्कलःसर्व्वदेवानामादिदेवःसनातनः ॥ ज्ञानक्रियास्वभावोयःपरमात्मेतिगीयते ॥ १२ ॥ तस्यदेवाधिदेवस्यमूर्त्तिःसाक्षात्सदाशि
वः ॥ पंचमन्त्रतनुर्देवःकलापञ्चकविग्रहः॥१३॥ शुद्धस्फटिकसङ्काशःप्रसन्नःशीतलद्युतिः ॥ पञ्चवक्त्रोदशभुजस्त्रिपञ्चनयनःप्रभुः ॥१४॥ईशानमुकुटोपे
तःपुरुषास्यःपुरातनः ॥ अघोरहृदयोवामदेवगुह्यःप्रदेशवान् ॥ १५ ॥ सद्यपादश्चतन्मूर्त्तिःसाक्षात्सकलनिष्कलः ॥ सर्व्वज्ञत्वादिषट्छक्तिषडंगीकृत
विग्रहः॥१६॥शब्दादिशक्तिस्फुरितहृत्पङ्कजविराजितः॥स्वशक्त्यावामभागेतुमनोन्मन्याविभूषितः॥१७॥मन्त्रादिषड्विधार्थानामर्थोपन्यासमार्गतः ॥
समष्टिव्यष्टिभावार्थंवक्ष्यामिप्रणवात्मकम् ॥ १८ ॥ उपदेशक्रमोह्यादौवक्तव्यःश्रूयतामयम् ॥ चातुर्व्वर्ण्यंहिलोकेऽस्मिन्प्रसिद्धंमानुषेमुने ॥ १९ ॥
त्रैवर्णिकानामेवात्रश्रुत्याचारसमन्वयः ॥ शुश्रूषामात्रसाराहिशूद्राःश्रुतिबहिष्कृताः ॥ २० ॥ त्रैवर्णिकानांसर्व्वेषांस्वस्वाश्रमरतात्मनाम् ॥ श्रुतिस्मृत्यु

दितोधर्म्मोऽनुष्ठेयोनापरःक्वचित् ॥ २१ ॥ श्रुतिस्मृत्युदितंकर्म्मकुर्व्वन्सिद्धिमवाप्स्यति ॥ वर्णाश्रमाचारपुष्पैरभ्यर्च्यपरमेश्वरम् ॥ २२ ॥ तत्सायु
ज्यंगताःसर्व्वेबहवोमुनिसत्तमाः ॥ ब्रह्मचर्य्येणऋषयोदेवायज्ञक्रियाध्वना ॥ २३ ॥ पितरःस्वधयातृप्ताइतिहिश्रुतिरब्रवीत् ॥ एवमृणत्रयान्मुक्तोवानप्र
स्थाश्रमंगतः ॥ २४ ॥ शीतोष्णसुखदुःखादिसहिष्णुर्विजितेन्द्रियः ॥ तपस्वीविजिताहारोयमाद्यंयोगमभ्यसेत् ॥ २५ ॥ यथादृढतराबुद्धिरविचाल्या
भवेत्तथा ॥ एवंक्रमेणशुद्धात्मासर्व्वकर्म्माणिविन्यसेत् ॥ २६ ॥ सन्न्यस्यसर्व्वकर्म्माणिज्ञानपूजापरोभवेत् ॥ साहिसाक्षाच्छिवैक्येनजीवन्मुक्तिफल
प्रदा ॥ २७ ॥ सर्व्वशास्त्रार्थतत्त्वज्ञंवेदान्तज्ञानपारगम् ॥ आचार्य्यमुपसङ्गम्ययतिंमतिमतांवरम् ॥ २८ ॥ दीर्घदण्डप्रणामाद्यैस्तोषयेद्यत्नतःसुधीः ॥
योगुरुःसशिवःप्रोक्तोयःशिवःसगुरुःस्मृतः ॥ २९ ॥ इतिनिश्चित्यमनसास्वविचारंनिवेद्यच ॥ लब्धानुज्ञस्तुगुरुणाद्वादशाहंपयोव्रती ॥ ३० ॥ शुक्लपक्षे
चतुर्थ्यांवादशम्यांवाविधानतः ॥ प्रातःस्नात्वाविशुद्धात्माकृतनित्यक्रियःसुधीः ॥ ३१ ॥ गुरुमाहूयविधिनानान्दीश्राद्धंसमारभेत् ॥ विश्वेदेवाःसत्यव
सुसंज्ञावन्तःप्रकीर्त्तिताः ॥ ३२ ॥ देवश्राद्धेब्रह्मविष्णुमहेशाःकथितास्त्रयः ॥ ऋषिश्राद्धेतुसम्प्रोक्तादेवक्षेत्रमनुष्यजाः ॥ ३३ ॥ दिव्यश्राद्धेतुवसुरुद्रा
दित्याःसम्प्रकीर्त्तिताः ॥ चत्वारोमानुषश्राद्धेसनकाद्यामुनीश्वराः ॥ ३४ ॥ भूतश्राद्धेपञ्चमहाभूतानिचततःपरम् ॥ चक्षुरादीन्द्रियग्रामोभूतग्रामश्चतुर्वि
धः ॥ ३५ ॥ पितृश्राद्धेपितातस्यपितातस्यापितात्रयः ॥ मातृश्राद्धेमातृपितामह्यौचप्रपितामही ॥ ३६ ॥ आत्मश्राद्धेतुचत्वारआत्मापितृपितामहौ ॥
प्रपितामहनामाचसपत्नीकाःप्रकीर्त्तिताः ॥ ३७ ॥ मातामहात्मकश्राद्धेत्रयोमातामहादयः ॥ प्रतिश्राद्धंब्राह्मणानांयुग्मंकृत्वोपकल्पितान् ॥ आहूयपा
दौप्रक्षाल्यस्वयमाचम्ययत्नतः ॥ ३८ ॥ समस्तसम्पत्समवाप्तिहेतवःसमुत्थितापत्कुलधूमकेतवः ॥ अपारसंसारसमुद्रसेतवःपुनन्तुमांब्राह्मणपादपांस
वः ॥ ३९ ॥ आपद्घनध्वान्तसहस्रभानवःसमीहितार्थार्पणकामधेनवः ॥ समस्ततीर्थाम्बुपवित्रमूर्त्तयोरक्षन्तुमांब्राह्मणपादपांसवः ॥ ४० ॥ इतिजप्त्वानम
स्कृत्यसाष्टाङ्गंभुविदण्डवत् ॥ स्थित्वाथप्राङ्मुखःशम्भोःपादाब्जयुगलंस्मरन् ॥ ४१ ॥ सपवित्रकरःशुद्धउपवीतीदृढासनः ॥ प्राणायामत्रयंकृत्वाश्रु
त्वातिथ्यादिकंपुनः ॥ ४२ ॥ मत्संन्यासांगभूतंयद्वैश्वदेवादिकंक्रमात् ॥ श्राद्धमष्टविधंमातामहान्तंपार्व्वणेनवै ॥ ४३ ॥ विधानेनकरिष्यामियुष्मदा
ज्ञापुरःसरम् ॥ एवंविधायसङ्कल्पंदर्भांनुत्तरतस्त्यजेत् ॥ ४४ ॥ उपस्पृश्याथउत्थायवरणक्रममारभेत् ॥ पवित्रपाणिःसंस्पृश्यपाणीब्राह्मणयोर्वदेत् ॥
॥ ४५ ॥ विश्वेदेवार्थइत्यादिभवद्भ्यांक्षणइत्यपि ॥ प्रसादनीयइत्यन्तंसर्व्वत्रैवंविधिक्रमः ॥ ४६ ॥ एवंसमाप्यवरणंमण्डलानिप्रकल्पयेत् ॥ उदगार
भ्यदशचकृत्वाभ्यर्च्चनमक्षतः ॥ ४७ ॥ तेषुक्रमेणसंस्थाप्यब्राह्मणान्पादयोःपुनः ॥ विश्वेदेवस्वरूपस्यब्राह्मणस्येदमासनम् ॥ ४८ ॥ इतिदर्भासनं

दत्त्वादर्भपाणिःस्वयंस्थितः ॥ अस्मिन्नान्दीमुखश्राद्धेविश्वेदेवार्थइत्यपि ॥ ४९ ॥ भवद्भ्यांक्षणइत्युक्त्वाक्रियतामितिसंवदेत् ॥ प्राप्नुतामितिसम्प्रो
च्यभवन्तावितिसंवदेत् ॥ ५० ॥ वदेतांप्राप्नवावेतितौचब्राह्मणपुङ्गवौ ॥ सम्पूर्णमस्तुसङ्कल्पसिद्धिरस्त्वितितान्प्रति ॥ ५१ ॥ भवन्तोऽनुगृह्णन्त्वि
तिप्रार्थयेद्द्विजपुङ्गवान् ॥ ततःशुद्धकदल्यादिपात्रेषुक्षालितेषुच ॥ ५२ ॥ अन्नादिभोज्यद्रव्याणिदत्त्वादर्भैःपृथक्पृथक् ॥ परिस्तीर्य्य
स्वयंतत्रपरिषिच्योदकेनच ॥ ५३ ॥ हस्ताभ्यामवलम्ब्याथपात्रंप्रत्येकमादरात् ॥ पृथिवितेपात्रमित्यादिकृत्वातत्रव्यवस्थितान् ॥ ५४ ॥
देवादींश्चचतुर्थ्यंतानन्नूद्याक्षतसंयुतम् ॥ उदंगृहीत्वास्वाहेतिदेवायान्नंत्यजेत्पुनः ॥ ५५ ॥ नममेतिवदेदन्तेसर्व्वत्रायंविधिक्रमः ॥ यत्पादप
द्मस्मरणाद्यच्छ्रीनामजपादपि ॥ ५६ ॥ न्यूनंकर्म्मभवेत्पूर्णंतंवन्देसांबमीश्वरम् ॥ इतिजप्त्वाततोब्रूयान्मयाकृतमिदंपुनः ॥ ५७ ॥ नान्दीमुखश्राद्धमि
तियथोक्तश्चवदेत्ततः ॥ अस्त्वितिब्रूतेतिचतान्प्रसाद्यद्विजपुंगवान् ॥ ५८ ॥ विसृज्यस्वकरस्थोदंप्रणम्यभुविदण्डवत् ॥ उत्थायचततोब्रूयादमृतंभवतु
द्विजान् ॥ ५९ ॥ श्रीरुद्रंचमकंसूक्तंपौरुषञ्चयथाविधि ॥ चित्तेसदाशिवंध्यात्वाजपेद्ब्रह्माणिपञ्चच ॥ ६० ॥ भोजनान्तेरुद्रसूक्तंसमापय्यद्विजान्पुनः ॥
तन्मन्त्रेणततोदद्यादुत्तरापोशनंपुनः ॥ ६१ ॥ प्रक्षालिताङ्घ्रिराचम्यपिण्डस्थानंव्रजेत्स्वयम् ॥ आसीनःप्राङ्मुखोमौनीप्राणायामत्रयंचरेत्
॥ ६२ ॥ नान्दीमुखोक्तश्राद्धांगंकरिष्येपिण्डदानकम् ॥ इतिसंकल्प्यदक्षादिसमारभ्योदगन्तकम् ॥ ६३ ॥ नवरेखाःसमालिख्यप्रागग्राद्दंद्वशः
क्रमात् ॥ संस्तीर्य्यदर्भान्दक्षादिदेवादिस्थानपञ्चके ॥ ६४ ॥ तूष्णींदद्यात्साक्षतोदंत्रिषुस्थानेषुचक्रमात् ॥ स्थानेष्वन्येषुमातृषुमार्जीय्यंतांततः
परम् ॥ ६५ ॥ अत्रेतिपितरःपश्चात्साक्षतोदंसमर्प्यच ॥ दद्यात्ततःक्रमेणैवदेवादिस्थानपञ्चके ॥ ६६ ॥ तत्तद्देवादिनामानिचतुर्थ्यन्तान्युदी
र्य्यच ॥ पिंडवर्य्यंततोदद्यात्प्रत्येकंस्थानपञ्चके ॥ ६७ ॥ तूष्णींदद्यात्साक्षतोदंपित्रादिस्थानपञ्चके ॥ स्वगृह्योक्तेनमार्गेणदद्यात्पिंडान्पृथक्पृथक्
॥ ६८ ॥ दद्यादुदंसाक्षतञ्चततःसाद्गुण्यहेतवे ॥ ध्यात्वासदाशिवंदेवंहृदयांभोजमध्यतः ॥ ६९ ॥ यत्पादपद्मस्मरणादितिश्लोकंपठेत्पुनः ॥
नमस्कृत्यब्राह्मणेभ्योदक्षिणाञ्चस्वशक्तितः ॥ ७० ॥ दत्त्वाक्षमापय्यचतान्विसृज्यचततःक्रमात् ॥ पिण्डानुत्सज्यगोग्रासंदद्यान्नोचेज्जले
क्षिपेत् ॥ ७१ ॥ पुण्याहवाचनंकृत्वाभुञ्जीयाद्दुचितैःसह ॥ अन्येद्युःप्रातरुत्थायकृतनित्यक्रियःसुधीः ॥ ७२ ॥ उपोष्यक्षौरकर्म्मादिकक्षो
पस्थविवर्ज्जितम् ॥ केशश्मश्रुनखान्येवकर्म्मार्थाविधिविसृज्यच ॥ ७३ ॥ सप्ताष्टकेशान्विधिवत्कारयित्वाविधानतः ॥ स्नात्वाधौतपटः
शुद्धोद्विराचम्याथवान्यतः ॥ ७४ ॥ भस्मसन्धार्य्यविधिनाकृत्वापुण्याहवाचनम् ॥ तेनसम्प्रोक्षणंप्राप्यशुद्धदेहस्वभावतः ॥ ७५ ॥ होम

द्रव्यार्थमाचार्यदक्षिणार्थंविहायच ॥ द्रव्यजातंमहेशायद्विजेभ्यश्चविशेषतः ॥ ७६ ॥ भक्तेभ्यश्चप्रदत्त्वाथशिवायगुरुरूपिणे ॥ वस्त्रादिदक्षिणांदत्त्वा प्रणम्यभुविदण्डवत् ॥ ७७ ॥ डोरकौपीनवसनंदण्डाद्यंक्षालितंशुचि ॥ आदायहोमद्रव्याणिसमिदादीनिचक्रमात् ॥ ७८ ॥ समुद्रतीरेनद्यांवापर्व्वतेवाशिवालये ॥ अरण्येवाथगोष्ठेवाविचार्य्यस्थानमुत्तमम् ॥ ७९ ॥ स्थित्वाचम्यततःपूर्व्वंकृत्वामानसमञ्जरीम् ॥ ब्राह्ममोङ्कारसहितंनमोब्रह्मण इत्यपि ॥ ८० ॥ जपित्वात्रिस्ततोब्रूयादग्निमीड़ेपुरोहितम् ॥ अथमहाव्रतमित्यग्निर्वैदेवानामवमः ॥ ८१ ॥ अथैतस्यसमाम्नायमिषेत्वोर्ज्जेत्वाचेति तत् ॥ अग्नआयाहिवीतयेशन्नोदेवीरभिष्टये ॥ ८२ ॥ पश्चात्प्रोच्यमयरसतजभनलगैःसह ॥ सम्मितश्चततःपञ्चसंवत्सरमयंततः ॥ ८३ ॥ समाम्नायःसमाम्नातःअथशिक्षांवदेत्पुनः ॥ प्रवक्ष्यामीत्युदीर्य्याथवृद्धिरादैच्चसंवदेत् ॥ ८४ ॥ अथातोधर्म्मजिज्ञासेत्युच्चार्य्यपुनरञ्जसा ॥ अथातोब्रह्मजिज्ञासावेदादीनपिसंजपेत् ॥ ८५ ॥ ब्रह्माणमिन्द्रंसूर्य्यञ्चसोमञ्चैवप्रजापतिम् ॥ आत्मानमन्तरात्मानंज्ञानात्मानमतःपरम् ॥ ८६ ॥ परमात्मानमपिच प्रणवाद्यंनमोऽन्तकम् ॥ चतुर्थ्यन्तंनमित्वाथसक्तुमुष्टिंप्रगृह्यच ॥ ८७ ॥ प्राश्याथप्रणवेनैवद्विराचम्याथसंस्पृशन् ॥ नाभिंमन्त्रान्वक्ष्यमाणान्प्रणवाद्यान्नमोऽन्तकान् ॥ ८८ ॥ आत्मानमन्तरात्मानंज्ञानात्मानंपरंपुनः ॥ आत्मानञ्चसमुच्चार्य्यप्रजापतिमतःपरम् ॥ ८९ ॥ स्वाहान्तान्प्रजपेत्पश्चात्पयोदधिघृतंपृथक् ॥ त्रिवारंप्रणवेनैवप्राश्याचम्यद्विधापुनः ॥ ९० ॥ प्रागास्यउपविश्याथप्राणायामत्रयंचरेत् ॥ ९१ ॥ इतिश्रीशैवेमहापुराणेकैलासंसहितायामष्टमोऽध्यायः ॥ ८ ॥ श्रीसुब्रह्मण्यउवाच ॥ अथमध्याह्नसमयेस्नात्वानियतमानसः ॥ गन्धपुष्पाक्षतादीनिपूजाद्रव्याण्युपाहरेत् ॥ १ ॥ नैर्ऋतेपूजयेद्देवंविघ्नेशंविधिपूजितम् ॥ गणानांत्वेतिमन्त्रेणसमावाह्यविधानतः ॥ २ ॥ रक्तवर्णमहाकायंसर्व्वाभरणभूषितम् ॥ पाशाङ्कुशाक्षाभीष्टञ्चदधानंकरपङ्कजैः ॥ ३ ॥ गजाननंप्रभुंध्यात्वागन्धादिभिरनुक्रमात् ॥ अभ्यर्च्चर्यपायसापूपनारिकेलगुडादिभिः ॥ ४ ॥ परितोष्यनमस्कृत्य निर्व्विघ्नंप्रार्थयेत्ततः ॥ औपासनाग्नौकर्त्तव्यंस्वगृह्योक्तविधानतः ॥ ५ ॥ आज्यभागान्तमग्नेर्यन्मखतन्त्रमतःपरम् ॥ भूःस्वाहेतिस्रुचापूर्णाहुतिंहुत्वा समाप्यच ॥ ६ ॥ गायत्रींप्रजपेद्यावदपराह्णमतन्द्रितः ॥ अथसायन्तनींसन्ध्यामुपास्यस्नानपूर्व्वकम् ॥ ७ ॥ सायमौपासनंहुत्वागुरुंविज्ञाप्यवाग्यतः ॥ श्रपयित्वाचरुंतस्मिन्समिदन्नाज्यभेदतः ॥ ८ ॥ हुत्वारौद्रेणसूक्तेनसद्योजातादिपञ्चभिः ॥ ब्रह्मभिश्चमहादेवंसाम्बंवह्नौविभावयेत् ॥ ९ ॥ गौरीर्मिमाय मंत्रेणहुत्वागौरीमनुस्मरन् ॥ ततोऽग्नयेस्विष्टकृतेस्वाहेतिजुहुयात्सकृत् ॥ १० ॥ हुत्वोपरिष्टात्तन्त्रन्तुततोऽग्नेरुत्तरेबुधः ॥ स्थित्वासनेजपेन्मौनीचैलाजिनकुशोत्तरे ॥ ११ ॥ यावद्ब्राह्ममुहूर्त्तन्तुगायत्रींदृढमानसः ॥ ततःस्नात्वात्वशक्तश्चेद्भस्मनावाविधानतः ॥ १२ ॥ श्रपयित्वाचरुंतस्मिन्नन्नावेवाभिघारितम् ॥

उदगुद्वास्यबर्हिष्यासाद्याज्येनततश्चरुम् ॥ १३ ॥ अभिघार्य्यव्याहृतीश्चरौद्रसूक्तञ्चपंचच ॥ जपेद्ब्रह्मणिसन्धार्य्यचित्तंशिवपदांबुजे ॥ १४ ॥
प्रजापतिमथेन्द्रंचविश्वान्देवांस्ततःपरम् ॥ ब्रह्माणञ्चचतुर्थ्यंतंस्वाहान्तान्प्रणवादिकान् ॥ १५ ॥ संजप्यवाचयित्वाथपुण्याहञ्चततःपरम् ॥
परस्तात्तन्त्रमग्नयेस्वाहेत्यग्निमुखावधि ॥ १६ ॥ निर्व्वर्त्त्यपश्चात्प्राणायस्वाहेत्यारभ्यपञ्चभिः ॥ हुत्वाततश्चरौद्रेणसूक्तेनब्रह्मभिःक्रमात् ॥ १७ ॥
स्वशाखाक्रमतोहुत्वासमिदन्नाज्यभेदतः ॥ महेशादिचतुर्व्यूहंस्वस्वव्यूहनमन्त्रतः ॥ १८ ॥ सशक्तिकमथोहुत्वासमिदन्नाज्यभेदतः ॥ साज्ये
नचरुणापश्चादग्निंस्विष्टकृतंहुनेत ॥ १९ ॥ पुनश्चप्रजपेत्सूक्तंरौद्रंब्रह्माणिपंचच ॥ महेशादिचतुर्व्यूहमन्त्रांश्चप्रजपन्पुनः ॥ २० ॥ हुत्वोपरिष्टात्त
न्त्रन्तुस्वशाखोक्तेनवर्त्मना ॥ तत्तद्देवान्समुद्दिश्यत्यागंकुर्य्याद्विचक्षणः ॥ २१ ॥ एवमग्निमुखाद्यंतत्कर्म्मतन्त्रंप्रवर्तितम् ॥ अतःपरंप्रजुहुया
द्विरजाहोममात्मनः ॥ २२ ॥ षड्विंशतत्त्वरूपेऽस्मिन्देहेलीनस्यशुद्धये ॥ तत्त्वान्येतानिमद्देहेशुध्यन्तामित्यनुस्मरन् ॥ २३ ॥ तत्रात्मत
त्त्वशुद्ध्यर्थंमन्त्रैरारुणकेतुके ॥ पठ्यमानैःपृथिव्यादिपुरुषान्तक्रमान्मुने ॥ २४ ॥ साज्येनचरुणामौनीशिवपादाम्बुजंस्मरन् ॥ पृथिव्यादिचश
ब्दादिवागाद्यंपञ्चकंपुनः ॥ २५ ॥ श्रोत्राद्यञ्चशिरःपार्श्वपृष्ठोदरचतुष्टयम् ॥ जङ्घाञ्चयोजयेत्पश्चात्त्वगाद्यंधातुसप्तकम् ॥ २६ ॥ प्राणाद्यंपञ्चकंपश्चा
दन्नाद्यंकोशपञ्चकम् ॥ मनोरेतश्चबुद्धिश्चाहङ्कृतिःख्यातिरेवच ॥ २७ ॥ संकल्पञ्चगुणाःपश्चात्प्रकृतिःपुरुषस्यतु ॥ भोक्तृत्वंप्रतिपन्नस्यभोजनेचप्रय
तनतः ॥ २८ ॥ अन्तरङ्गतयातत्त्वपञ्चकंपरिकीर्त्तितम् ॥ नियतिःकालरागश्चविद्याचतदनन्तरम् ॥ २९ ॥ कलाचपञ्चकमिदंमायोत्पन्नंमुनीश्वर ॥
मायान्तुप्रकृतिंविद्यान्मायाश्रुतिरितीरिता ॥ ३० ॥ तज्जान्येतानितत्त्वानिश्रुत्युक्तानिनसंशयः ॥ कालःस्वभावोनियतिरितिचश्रुतिरब्रवीत् ॥ ३१ ॥
एतत्पञ्चकमेवास्यपञ्चकञ्चकमुच्यते ॥ अजानन्पञ्चतत्त्वानिविद्वानपिविमूढधीः ॥ ३२ ॥ नियत्यधस्तात्प्रकृतेरुपरिस्थःपुमानयम् ॥ काकाक्षि
न्यायमाश्रित्यवर्त्ततेपार्श्वतोऽन्वहम् ॥ ३३ ॥ विद्यातत्त्वमिदंप्रोक्तंशुद्धविद्यामहेश्वरौ ॥ सदाशिवश्चशक्तिश्चशिवश्चेदन्तुपञ्चकम् ॥ ३४ ॥ शिवतत्त्व
मिदंब्रह्मन्प्रज्ञानब्रह्मवाक्यतः ॥ पृथिव्यादिशिवान्तंयत्तत्त्वजातंमुनीश्वर ॥ ३५ ॥ स्वकारणलयद्वाराशुद्धिरस्यविधीयताम् ॥ एकादशानांमन्त्राणां
परस्मैपदपूर्व्वकम् ॥ ३६ ॥ शिवज्योतिश्चतुर्थ्यन्तमिदंपदमथोच्चरेत् ॥ नममेतिवदेत्पश्चादुद्देशत्यागईरितः ॥ ३७ ॥ अतःपरंविविटीतिकषोत्काये
तिमन्त्रयोः ॥ व्यापकायपदस्यान्तेपरमात्मनइत्यपि ॥ ३८ ॥ शिवज्योतिश्चतुर्थ्यन्तंविश्वभूतपदंपुनः ॥ घसनोत्सुकशब्दञ्चचतुर्थ्यन्तमथोवदेत् ॥ ३९ ॥
लोकत्रयपदस्यान्तेव्यापिनेपरमात्मने ॥ परस्मैपदमुच्चार्य्यदेवायपदमुच्चरेत् ॥ ४० ॥ उत्तिष्ठस्वेतिमन्त्रस्यविश्वरूपायशब्दतः ॥ पुरुषायपदंब्रूया

दोंस्वाहेत्यस्यसंवदेत् ॥ ४१ ॥ लोकत्रयपदस्यान्तेव्यापिनेपरमात्मने ॥ शिवायेदंनममचपदंब्रूयादतःपरम् ॥ ४२ ॥ स्वशाखोक्तप्रकारेणपुरस्ता
तन्त्रकर्म्मच ॥ निर्व्वर्त्यसर्पिषामिश्रंचरुंप्राश्यपुरोधसे ॥ ४३ ॥ प्रदद्याद्दक्षिणांतस्मैहेमादिपरिबृंहिताम् ॥ ब्रह्माणमुद्वास्यततःप्रातरौपासनंहुनेत्
॥ ४४ ॥ समासिञ्चन्तुमरुतइतिमन्त्रंजपन्मुनिः ॥ यातेअग्नइत्यनेनमन्त्रेणाग्नौप्रताप्यच ॥ ४५ ॥ हस्तमग्नौसमारोप्यस्वात्मन्यद्वैतधामनि ॥ प्राभाति
कींततःसन्ध्यामुपास्यादित्यमप्यथ ॥ ४६ ॥ उपस्थायप्रविश्याशुनाभिदघ्नंप्रवेशयेत् ॥ आहिताग्निस्तुयःकुर्य्यात्प्राजापत्येष्टिमाहुते ॥ ४७ ॥ श्रौते
वैश्वानरेसम्यक्सर्व्ववेदसदक्षिणाम् ॥ अथाग्निमात्मन्यारोप्यब्राह्मणःप्रव्रजेद्गृहात् ॥ ४८ ॥ सावित्रीप्रथमंपादंसावित्रीमित्युदीर्य्यच ॥ प्रवेशयामिशब्दा
न्तंभूरोमितिचसंवदेत् ॥ ४९ ॥ द्वितीयंपादमुच्चार्य्यसावित्रीमितिपूर्व्वकम् ॥ प्रवेशयामिशब्दांतेभुवरोमितिसंवदेत् ॥ ५० ॥ तृतीयंपादमुच्चार्य्यसावि
त्रीमितिपूर्व्ववत् ॥ प्रवेशयामिशब्दांतेसुवरोमितिसंवदेत्॥५१॥ पादद्वयमथोच्चार्य्यसावित्रीमित्यतःपरम्॥प्रवेशयामिशब्दान्तेभूरोमितिवदेदथ ॥५२॥
तृतीयंपादमुच्चार्य्यसावित्रीमित्यतःपरम् ॥ प्रवेशयामीतिवदन्भुवरोमितिसंवदेत् ॥ ५३ ॥ त्रिपादमुच्चरेत्पूर्व्वंसावित्रीमित्यतःपरम् ॥ प्रवेशयामिश
ब्दान्तेसुवरोमित्युदीरयेत् ॥ ५४ ॥ इयंभगवतीसाक्षाच्छङ्कराद्धंशरीरिणी ॥ पञ्चवक्त्रादशभुजात्रिपञ्चनयनोज्ज्वला ॥५५॥ नवरत्नकिरीटोद्यच्चन्द्रले
खावतंसिनी ॥ शुद्धस्फटिकसंकाशादशायुधधराशुभा ॥ ५६ ॥ हारकेयूरकटकरशनानूपुरादिभिः ॥ भूषितावयवादेवऋषिगन्धर्व्वदानवैः ॥५७॥
मानवैश्चसदासेव्यासर्व्वात्मव्यापिकाशिवा ॥ सदाशिवस्यदेवस्यधर्म्मपत्नीमनोहरा॥५८॥योह्यन्यथानयेत्पापीगायत्रींशिवरूपिणीम् ॥ सपच्यतेमहाघोरे
नरकेकल्पसंख्यया॥५९॥साव्याहृतिभ्यःसंजातातास्वेवविलयंगता॥ताश्चप्रणवसम्भूताःप्रणवेविलयंगता॥६०॥प्रणवःसर्व्ववेदादिःप्रणवःशिववाचकः ॥
शिवोवाप्रणवोह्येषप्रणवोवाशिवःस्मृतः ॥ ६१ ॥ वाच्यवाचकयोर्भेदोनात्यन्तंविद्यतेयतः ॥ तस्मादेकाक्षरंदेवंशिवंपरमकारणम् ॥ ६२ ॥ उपासतेय
तिश्रेष्ठाहृदयाम्भोजमध्यगम् ॥ एवंविलाप्यगायत्रींप्रणवेशिववाचके ॥ ६३ ॥ अहंवृक्षस्यरेरिवेत्यनुवाकंजपेत्पुनः ॥ यश्छन्दसामृशभइत्यनुवाकमु
पक्रमात् ॥ ६४ ॥ गोपायान्तंजपन्पश्चादेषणानांत्रयंत्यजेत् ॥ पुत्रैषणायाश्चततोव्युत्थितोऽहमितिक्रमात् ॥ ६५ ॥ वित्तैषणायाश्चतथाव्युत्थितोऽ
हमितिब्रुवन् ॥लोकैषणायाश्चतथाव्युत्थितोऽहमितीरयेत् ॥६६॥ वदेज्जपेत्रिधामन्दमध्योच्चक्रायक्रमान्मुने ॥ प्रणवंपूर्व्वमुद्धृत्यसृष्टिस्थितिलयक्रमात्
॥६७॥तेषामथक्रमाद्ब्रूयाद्भूःसन्न्यस्तंभुवस्तथा॥सन्न्यस्तंसुवरित्युक्त्वासन्न्यस्तंपदमुच्चरन् ॥६८॥ सर्व्वमन्त्राधःप्रदेशेमयेतिचपदंवदेत्॥प्रणवंपूर्व्वमुद्धृ
त्यसमष्टिव्याहृतीर्वदेत् ॥ ६९ ॥ सन्न्यस्तमित्यतोब्रूयान्मयेतिचसमब्रवीत् ॥ सदाशिवंहृदिध्यात्वामन्दादीतिततोमुने ॥ ७० ॥ प्रैषमन्त्रांश्चजप्त्वैवंसा

वधानेनचेतसा ॥ अभयंसर्व्वभूतेभ्योमत्तःस्वाहेतिसंजपन् ॥ ७१ ॥ प्राच्यांदिश्यपउद्धृत्यप्रक्षिपेदञ्जलिंततः ॥ शिखांयज्ञोपवीतंचगायत्र्योत्पाट्यपा
णिना ॥ ७२ ॥ गृहीत्वाप्रणवंभूश्चसमुद्रंगच्छसंवदेत् ॥ वह्निजायांसमुच्चार्य्यसोदकाञ्जलिनाततः ॥ ७३ ॥ अप्सुहूयादथप्रैषैरभिमन्त्र्यत्रिधात्वपः ॥
प्राश्याचम्यसमागम्यभूमौवस्त्रादिकंत्यजेत् ॥ ७४ ॥ उदङ्मुखःप्राङ्मुखोवागच्छेत्सप्तपदाधिकम् ॥ किञ्चिद्दूरमथाचार्य्यस्तिष्ठतिष्ठेतिसंव
देत् ॥ ७५ ॥ लोकस्यव्यवहारार्थंकौपीनंदण्डमेवच ॥ भगवन्स्वीकुरुष्वेतिदद्यात्स्वेनैवपाणिना ॥ ७६ ॥ श्रुत्वासडोरंकौपीनंकाषायवसनंततः ॥
आच्छाद्याचम्यचद्वेधातंशिष्यमितिसंवदेत् ॥ ७७ ॥ इन्द्रस्यवज्रोऽसिततइतिमन्त्रमुदाहरन् ॥ सम्प्रार्थ्यदण्डंगृह्णीयात्सखामइतिसंजपन् ॥ ७८ ॥
अथगत्वागुरोःपार्श्वेशिवपादाम्बुजंस्मरन् ॥ प्रणम्यदण्डवद्भूमौत्रिवारंपुनरुत्थितः ॥ ७९ ॥ कृताञ्जलिपुटस्तिष्ठेद्गुरुपादसमीपतः ॥ कर्म्मारम्भात्पू
र्व्वमेवगृहीत्वागोमयंशुभम् ॥ ८० ॥ स्थूलामलकमात्रेणकृत्वापिण्डान्विशोष्यच ॥ सौरैस्तुकिरणैरेवहोमारम्भाग्निमध्यगान् ॥ ८१ ॥ निलिप्यहोम
सम्पूर्त्तौभस्मसंगृह्यगोपयेत् ॥ ततोगुरुःसमादायविरजानलजंसितम् ॥८२॥ भस्मतेनैवतंशिष्यमग्निरित्यादिभिःक्रमात्॥ मन्त्रैरङ्गानिसंस्पृश्यमूर्द्धादि
चरणान्ततः॥८३॥ईशानाद्यैःपञ्चमन्त्रैःशिरआरभ्यसर्व्वतः ॥ समुद्धूल्यविधानेनत्रिपुण्ड्रंधारयेत्ततः ॥८४॥ त्रियायुषैस्त्र्यम्बकैश्चमूर्द्ध्न्यारभ्ययथाक्रमम् ॥
हृत्पंकजेसमासीनंध्यात्वाशिवमुमासखम् ॥ ८५ ॥ हस्तंनिधायशिरसिशिष्यस्यप्रीतमानसः ॥ ऋष्यादिसहितंतस्यदक्षकर्णेसमुच्चरेत् ॥ ८६ ॥ प्रणवं
त्रिप्रकारन्तुततस्तस्यार्थमादिशेत् ॥ षड्विधार्थपरिज्ञानसहितंगुरुसत्तमः ॥ ८७ ॥ द्विषट्प्रकारंसगुरुंप्रणम्यभुविदण्डवत् ॥ तदधीनोभवेन्नित्यंवेदा
न्तार्थानुसारतः ॥ ८८ ॥ शिवज्ञानपरोभूयाच्छ्रवणाद्यङ्गपूर्व्वकम् ॥ प्राभातिकाद्यनुष्ठानंजपान्तंकारयेद्गुरुः ॥ ८९ ॥ पूजांचमण्डलेतस्मिन्कैलासप्र
स्तराह्वये ॥ शिवोदितेनमार्गेणशिष्यस्तत्रैवपूजयेत् ॥ ९० ॥ देवंनित्यमशक्तश्चेत्पूजितंगुरुणाशुभम् ॥ स्फाटिकंपीठिकोपेतंगृह्णीयाल्लिङ्गमैश्वरम् ॥
॥ ९१ ॥ वरंप्राणपरित्यागश्छेदनंशिरसोऽपिमे ॥ नत्वनभ्यर्च्यभुञ्जीयांभगवन्तंत्रिलोचनम् ॥ ९२ ॥ एवंत्रिवारमुच्चार्य्यशपथंगुरुसन्निधौ ॥ तस्मिन्नेव
महादेवंनित्यमुद्युक्तमानसः ॥ पूजयेत्परयाभक्त्यापञ्चावरणमार्गतः ॥९३॥ इतिश्रीशैवेमहापुराणेकैलाससंहितायांनवमोऽध्यायः॥९॥ वामदेवउवाच ॥
भगवन्षण्मुखाशेषविज्ञानामृतवारिधे ॥ विश्वामरेश्वरसुतप्रणतार्त्तिप्रभञ्जन ॥ १ ॥ षड्विधार्थपरिज्ञानमिष्टदंकिमुदाहृतम् ॥ केतत्रषड्विधाह्यर्थाः
परिज्ञानंचाकिंप्रभो ॥ २ ॥ प्रतिपाद्यश्चकस्तस्यपरिज्ञानेचकिंफलम् ॥ एतमर्थमविज्ञायपशुशास्त्रविमोहितः ॥ ३ ॥ अहंशिवपदाद्वैतज्ञानामृतरसाय
नम् ॥ पीत्वाविगतसम्मोहोभविष्यामियथातथा ॥ ४ ॥ कृपामृतार्द्रयादृष्ट्याविलोक्यसुचिरंमयि ॥ कर्त्तव्योऽनुग्रहःश्रीमत्पादाब्जशरणागते ॥ ५ ॥

इतिश्रुत्वामुनीन्द्रोक्तंज्ञानशक्तिधरोविभुः ॥ प्राहान्यदर्शनमहासन्त्रासजनकंवचः ॥ ६ ॥ श्रीसुब्रह्मण्यउवाच ॥श्रूयतांमुनिशार्दूलत्वयायत्पृष्टमादरात्॥
समष्टिव्यष्टिभावेनपरिज्ञानंमहेशितुः ॥ ७॥ प्रणवार्थपरिज्ञानरूपंतद्विस्तरादहम् ॥ वदामिषड्विधार्थैक्यपरिज्ञानेनसुव्रत ॥ ८ ॥ प्रथमोमन्त्ररूपःस्या
द्वितीयोयंत्रभावितः ॥ देवतार्थस्तृतीयोऽर्थःप्रपञ्चार्थस्ततःपरम् ॥ ९ ॥ चतुर्थःपञ्चमोऽर्थःस्याद्गुरुरूपप्रदर्शकः ॥ षष्ठःशिष्यात्मरूपोऽर्थःषडर्थाः
परिकीर्त्तिताः ॥ १० ॥ तत्रमन्त्रस्वरूपंतेवदामिमुनिसत्तम ॥ आद्यः स्वरःपञ्चमश्चपवर्गान्तस्ततःपरः ॥ ११ ॥ बिन्दुनादौचपञ्चार्णाःप्रो
क्तावेदैर्नचान्यथा ॥ एतत्समष्टिरूपोहिवेदादिःसमुदाहृतः ॥ १२ ॥ नादःसर्व्वसमष्टिःस्याद्बिन्द्वाद्यंयच्चतुष्टयम् ॥ व्यष्टिरूपेणसंसिद्धंप्रणवे
शिववाचके ॥ १३ ॥ यन्त्ररूपंशृणुप्राज्ञशिवलिङ्गंतदेवहि ॥ सर्व्वाधस्ताल्लिखेत्पीठंतदूर्द्ध्वंप्रथमंस्वरम् ॥ १४ ॥ उवर्णंचतदूर्द्ध्वस्थंपवर्गान्तं
तदूर्द्ध्वगम् ॥ तन्मस्तकस्थंबिन्दुंचतदूर्द्ध्वंनादमालिखेत् ॥ १५ ॥ एवंयन्त्रंसमालिख्यप्रणवेनैववेष्टयेत् ॥ तदुत्थेनैवनादेनभिन्द्यान्नादावसानकम्
॥ १६ ॥ देवतार्थंप्रवक्ष्यामिगूढंशङ्करभाषितम् ॥ सद्योजातंप्रपद्यामीत्युपक्रम्यसदाशिवोम् ॥ १७ ॥ इतिप्राहश्रुतिः साक्षाद्ब्रह्मप
ञ्चकवाचकम् ॥ प्रणवंब्रह्मरूपिण्यःसूक्ष्माःपञ्चैवदेवताः ॥ १८ ॥ एताएवशिवस्यापिमूर्तित्वेनोपबृंहिताः ॥ शिवस्यवाचकोमन्त्रःशिवमूर्त्ते
श्ववाचकः ॥ १९ ॥ मूर्त्तिमूर्तिमतोर्भेदोनात्यन्तंविद्यतेयतः ॥ ईशानमुकुटोपेतइत्यारभ्यपुरोदितः ॥ २० ॥ शिवस्यविग्रहःपञ्चवक्त्रा
णिशृणुसाम्प्रतम् ॥ पञ्चमादिसमारभ्यसद्योजाताद्यनुक्रमात् ॥ २१ ॥ ऊर्द्ध्वान्तमीशानान्तंचमुखपञ्चकमीशितुः ॥ ईशानस्यैवदेवस्यचतुर्व्यूहपदे
स्थितम् ॥ २२ ॥ पुरुषाद्यंचसद्यान्तंब्रह्मरूपचतुष्टयम् ॥ पञ्चब्रह्मसमष्टिःस्यादीशानंब्रह्मविश्रुतम् ॥२३॥ पुरुषाद्यन्तुतद्व्यष्टिःसद्योजातान्तकंमुने ॥
अनुग्रहमयंचक्रमिदंपञ्चार्थकारणम् ॥ २४ ॥ अनुग्रहोऽपिद्विविधस्तिरोभावादिगोचरः ॥ एकश्चान्यस्तुजीवानांपरापरविमुक्तिदः ॥ २५ ॥ एतत्सदा
शिवस्यैवकृत्यद्वयमुदाहृतम् ॥ अनुग्रहेऽपिसृष्ट्यादिकृत्यानांपञ्चकंविभोः ॥ २६ ॥ अस्तितत्रापिसद्याद्यादेवताःपरिकीर्त्तिताः ॥ अनुग्रहमयंचक्रं
शान्त्यतीतकलामयम् ॥ २७ ॥ सदाशिवाधिष्ठितंचपरमंपदमुच्यते ॥ एतदेवपदंप्राप्यंयतीनांभावितात्मनाम् ॥ २८ ॥ सदाशिवोपासकानांप्रणवा
सक्तचेतसाम् ॥ एतदेव पदंप्राप्यतेनसाकंमुनीश्वराः ॥ २९ ॥ भुक्त्वासुविपुलान्भोगान्देवेनब्रह्मरूपिणा ॥ महाप्रलयसम्भूतौशिवसाम्यंभजन्तिहि
॥ ३० ॥ तेब्रह्मलोकइतिचश्रुतिराहसनातनी ॥ ऐश्वर्यंसदाशिवस्यापिसमष्टिरिदमेवहि ॥ ३१ ॥ सर्व्वैश्वर्य्येणसम्पन्नइत्याहाथर्व्वणीशिखा ॥ सर्व्वैश्व
र्य्यप्रदातृत्वमस्यैवप्रवदन्तिहि ॥ ३२ ॥ चमकस्यपदंनान्यदधिकंविद्यतेपदम् ॥ ब्रह्मपञ्चकविस्तारःप्रपञ्चःखलुदृश्यते ॥३३॥ ब्रह्मभ्यएवसञ्जातानिवृ

त्याद्याःकलामताः ॥ सूक्ष्मभूतस्वरूपिण्यःकारणत्वेनविश्रुताः ॥ ३४ ॥ स्थूलरूपस्वरूपस्यप्रपञ्चस्यास्यसुव्रत ॥ पञ्चधावस्थितंयत्तद्ब्रह्मपञ्चकमि
ष्यते ॥ ३५ ॥ पुरुषःश्रोत्रवाण्यौचशब्दाकाशौचपञ्चकम् ॥ व्याप्तमीशानरूपेणब्रह्मणामुनिसत्तम ॥ ३६ ॥ प्रकृतिस्त्वचक्पाणिश्चस्पर्शौवायुश्चपञ्च
कम् ॥ व्याप्तंपुरुषरूपेणब्रह्मणैवमुनीश्वर ॥ ३७ ॥ अहङ्कारस्तथाचक्षुःपादौरूपंचपावकः ॥ अघोरब्रह्मणाव्याप्तमेतत्पञ्चकमञ्चितम् ॥ ३८ ॥ बुद्धि
श्चरसनापायूरसआपश्चपञ्चकम् ॥ ब्रह्मणावामदेवेनव्याप्तंभवतिनित्यशः ॥ ३९ ॥ मनोनासातथोपस्थगन्धौभूमिश्चपञ्चकम् ॥ सद्येनब्रह्मणाव्याप्तंपञ्च
ब्रह्ममयंजगत् ॥ ४० ॥ यन्त्ररूपेणोपादिष्टःप्रणवःशिववाचकः ॥ समष्टिःपञ्चवर्णानांबिन्द्वाद्यंयच्चतुष्टयम् ॥४१॥ शिवोपदिष्टमार्गेणयन्त्ररूपंविभावय ॥
सदाशिवःसमष्टिःस्यादाकाशाधिपतिःप्रभुः ॥ ४२ ॥ अस्यैवव्यष्टितापन्नंमहेशादिचतुष्टयम् ॥ सदाशिवसहस्रांशान्महेशस्यसमुद्भवः ॥ ४३ ॥ पुरुषा
नन्यरूपत्वाद्वायोरधिपतिश्चसः ॥ मायाशक्तियुतोवामेसकलश्चक्रियाधिकः ॥ ४४ ॥ अस्यैवव्यष्टिरूपंस्यादीश्वरादिचतुष्टयम् ॥ ईशोविश्वेश्वरःपश्चा
त्परमेशस्ततःपरम् ॥ ४५ ॥ सर्व्वेश्वरइतीदंतुतिरोधाचक्रमुत्तमम् ॥ तिरोभावोद्विधाभिन्नएकोरुद्रादिगोचरः ॥ ४६ ॥ अन्यश्चदेहभावेनपशुवर्गस्यस
न्ततम् ॥ भोगानुरञ्जनपरःकर्म्मसाम्यक्षणावधि ॥ ४७ ॥ कर्म्मसाम्येचएकःस्यादनुग्रहमयोविभोः ॥ अस्तिसर्व्वेश्वराद्यास्तेदेवताःपरिकीर्त्तिताः ॥
॥ ४८ ॥ तिरोभावात्मकंचक्रंभवेच्छान्तिकलामयम् ॥ महेश्वराधिष्ठितंचपदमेतदनुत्तमम् ॥४९॥ एतदेवपदंप्राप्यंमहेशपदसेविनाम् ॥ माहेश्वराणां
सालोक्यक्रमादेतच्चमुक्तिदम् ॥५०॥ महेश्वरसहस्रांशाद्रुद्रमूर्त्तिरजायत ॥ अघोरवदनाकारस्तेजस्तत्त्वाधिपश्चसः ॥ ५१ ॥ गौरीशक्तियुतोवामेसर्व्वसंहा
रकृत्प्रभुः ॥ अस्यैवव्यष्टिरूपंस्याच्छिवाद्यथचतुष्टयम् ॥ ५२ ॥ शिवोहरोमृडभवौविदितंचक्रमद्भुतम् ॥ संहाराख्यंतुसंहारस्त्रिधानित्यादिभेदतः
॥ ५३ ॥ नित्योजीवःसुषुप्ताख्योविधेर्नैमित्तिकःस्मृतः ॥ विलयस्तस्यसुमहानितिवेदान्दिर्शितः ॥ ५४ ॥ जीवानांजन्मदुःखादिश्रान्तानांमुषितात्म
नाम् ॥ विश्रान्त्यर्थंमुनिश्रेष्ठाःकर्म्मणांपाकहेतवे ॥ ५५ ॥ संहारःकल्पितस्त्रेधारुद्रेणामिततेजसा ॥ रुद्रस्यैवतुकृत्यानांत्रयमेतदुदाहृतम् ॥ ५६ ॥
संहृतावपिसृष्ट्यादिकृत्यानांपंचकंविभोः ॥ अस्तितत्रभवाद्यास्तेदेवताःपरिकीर्त्तिताः ॥ ५७ ॥ संहाराख्यमिदंचक्रंविद्यारूपकलामयम् ॥ अधिष्ठितं
चरुद्रेणपदमेतन्निरामयम्॥५८॥एतदेवपदंप्राप्यंरुद्राराधनकांक्षिणाम्॥रौद्राणांतद्धिसालोक्यक्रमात्सायुज्यदंमुने ॥५९॥ रुद्रमूर्त्तेःसहस्रांशाद्विष्णोरेवाभ
वज्जनिः ॥ सवामदेवचक्रात्मावारितत्त्वैकनायकः ॥ ६० ॥ रमाशक्तियुतोवामेसर्व्वरक्षाकरोमहान् ॥ अस्यैववासुदेवादिचतुष्कंव्यष्टितांगतम् ॥
॥ ६१ ॥ वासुदेवोऽनिरुद्धश्चततःसङ्कर्षणःपरः ॥ प्रद्युम्नश्चेतिविख्यातंस्थितिचक्रमिदंपरम् ॥ ६२ ॥ स्थितिःसृष्टस्यजगतस्तत्कर्त्तॄणांचपालनम् ॥

आरब्धकर्म्मभोगान्तंजीवानांफलभोगिनाम् ॥ ६३ ॥ विष्णोरेवेदमाख्यातंकृत्यंरक्षाविधायिनः ॥ स्थितावपितुसृष्ट्यादिकृत्यानांपञ्चकंविभोः ॥ ६४ ॥
अपिप्रद्युम्नमुख्यास्तेदेवतास्तत्रकीर्त्तिताः ॥ स्थितिचक्रमिदंब्रह्मन्प्रतिष्ठारूपमुत्तमम् ॥ ६५ ॥ जनार्दनाधिष्ठितंचपरमंपदमुच्यते ॥ एतदेवपदंप्रा
प्यंविष्णुपादप्रसेविनाम् ॥ ६६ ॥ वैष्णवानामिदंचक्रंसालोक्यादिपदप्रदम् ॥ विष्णोरेवसहस्रांशात्सम्बभूवपितामहः ॥६७॥ सद्योजातमुखात्मायःपृथि
वीतत्त्वनायकः ॥ वाग्देवीसहितोवामेसृष्टिकर्त्ताजगत्प्रभुः॥६८॥हिरण्यगर्भोद्यस्यैवव्यष्टिरूपंचतुष्टयम् ॥ हिरण्यगर्भोऽथविराट्पुरुषःकालएवच॥६९॥
सृष्टिचक्रमिदंब्रह्मपुत्रादिऋषिसेवितम् ॥ सृष्टिस्तुसंहृतस्यास्यजीवस्यप्रकृतौबहिः ॥ ७० ॥ अ[illegible]यकर्म्मभोगार्थसाधनाङ्गफलैःसह ॥ संयोजनमिती
दंतुकृत्यंपैतामहंविदुः ॥ ७१ ॥ जगत्सृष्टावपिमुनेकृत्यानांपञ्चकंविभोः ॥ अस्तिकालादयस्तत्रदेवताःपरिकीर्त्तिताः ॥ ७२ ॥ निवृत्तिरूपमाख्यातं
सृष्टिचक्रमिदंबुधैः॥पितामहाधिष्ठितंचपदमेतद्विशोभितम्॥७३॥एतदेवपदंप्राप्यंब्रह्मार्पितधियांनृणाम् ॥ पैतामहानामेतद्धिसालोक्यादिविमुक्तिदम्॥
॥७४॥ अस्मिन्नपिचतुष्केतुचक्राणांप्रणवोभवेत् ॥ महेशादिक्रमादेवगौण्यावृत्त्यासवाचकः॥७५॥इदंखलुजगच्चक्रंश्रुतिविश्रुतवैभवम्॥पञ्चारंचक्रमिति
हिस्तौतिश्रुतिरिदंमुने॥७६॥एकमेवजगच्चक्रंशम्भोःशक्तिविजृम्भितम्॥ सृष्ट्यादिपञ्चावयवंपञ्चारमितिकथ्यते॥७७॥अलातचक्रभ्रमिवदविच्छिन्नलयो
दयम्॥परितोवर्त्ततेयस्मात्तस्माच्चक्रमितीरितम् ॥७८॥ सृष्ट्यादेःपृथुशस्यत्वात्पृथुत्वेनोपदिश्यते ॥ हिरण्मयस्वरूपस्यशम्भोरमितवर्च्चसः ॥ ७९ ॥
शक्तिकार्य्यमिदंचक्रंहिरण्यज्योतिविश्रुतम् ॥ सलिलेनावृतामिदंसलिलंवह्निनावृतम् ॥ ८० ॥ आवृतोवायुनावह्निराकाशेनावृतोमरुत् ॥ भूतादिना
खमावातंभूतादिर्महतावृतः ॥ ८१ ॥ अव्यक्तेनावृतस्तद्वन्महानित्येवमास्तिकैः ॥ उक्तानिसप्तावरणान्यस्यचक्रस्यगुप्तये ॥ ८२ ॥ चक्राद्दशगुणाधि
क्यंसलिलस्यविधीयते ॥ उपर्य्युपरिचान्योन्यमेवंदशगुणाधिकम् ॥ ८३ ॥ इममर्थंहृदीकृत्यचक्रसामीप्यवर्त्तनात् ॥ सलिलस्यचतन्मध्येइतिप्राहश्रु
तिःस्वयम् ॥ ८४ ॥ अनुग्रहतिरोभावसंहृतिस्थितिसृष्टिभिः ॥ करोत्यविरतंलीलामेकःशक्तियुतःशिवः ॥ ८५ ॥ बहुनेहकिमुक्तेनमुनेसारंवदामि
ते ॥ शिवएवेदमखिलंशक्तिमानितिनिश्चितम् ॥ ८६ ॥ सूतउवाच ॥ श्रुत्वोपदिष्टंगुरुणावेदार्थंमुनिपुङ्गवः ॥ परमात्मनिसन्दिग्धमर्थंप्रपच्छसादर
म् ॥ ८७ ॥ वामदेव उवाच ॥ ज्ञानशक्तिधरस्वामिन्परमानन्दविग्रह ॥ प्रणवार्थामृतंपीतंश्रीमुखाब्जपरिस्रुतम् ॥ ८८ ॥ दृढप्रज्ञश्चजातोऽस्मिसन्दे
होविगतोमम ॥ सदाशिवादिकीटान्तरूपस्यजगतःस्थितिः ॥ ८९ ॥ स्त्रीपुंरूपेणसर्व्वत्रदृश्यतेनाहिसंशयः ॥ एवंरूपस्यजगतःकारणंयत्सनातनम्
॥ ९० ॥ स्त्रीरूपंतत्किमाहोस्वित्पुरुषंवानपुंसकम् ॥ उतमिश्रंकिमन्यद्वानजातस्तत्रनिर्णयः ॥ ९१ ॥ बहुधाविवदन्तीहविद्वांसःशास्त्रमोहिताः ॥

जगत्सृष्ट्यभिधायिन्यः श्रुतयोजगतासह ॥ ९२ ॥ यथैक्यभावंगच्छेयुरेतदन्यच्चवेदय ॥ जानामीतिकरोमीतिव्यवहारःप्रदृश्यते ॥ ९३ ॥ स
हिसर्व्वात्मसंसिद्धोविवादोनात्रकस्यचित् ॥ सचदेहेन्द्रियमनोबुद्ध्यहङ्कारसम्भवः ॥ ९४ ॥ आहोस्विदात्मनोरूपंमहानत्रापिसंशयः ॥
द्वयमेतद्धिसर्वेषांविवादास्पदमद्भुतम् ॥ ९५ ॥ उत्पाटयाज्ञानसम्भूतंसंशयाख्यविषद्रुमम् ॥ शिवाद्वैतमहाकल्पवृक्षभूमिर्यथा भवेत् ॥ ९६ ॥
चित्तंममतथादेवबोध्योऽस्मिकृपयातव ॥ सूतउवाच ॥ श्रुत्वैवंमुनिनापृष्टंवचोवेदान्तनिर्व्वृतम् ॥ ९७ ॥ रहस्यंप्रभुराहेदंकिंचि
त्प्रहसिताननः ॥ श्रीसुब्रह्मण्यउवाच ॥ एतदेवमुनेगुह्यंशिवेनपरिभाषितम् ॥ ९८ ॥ अम्बायाःशृण्वतस्तस्याःस्तन्यंपीत्वामुहुर्म्मुहुः ॥
ममापिनिश्चितंतत्तेवदामिशृणुसाम्प्रतम् ॥ ९९ ॥ कर्त्रस्तितात्वमारभ्यशास्त्रवादःसुविस्तरः ॥ त्वयोपादिष्टायेशिष्यास्तत्रकोवा
भवत्समः ॥ १०० ॥ कापिलादिषुशास्त्रेषुभ्रमन्त्यद्यापितेऽधमाः ॥ येशप्तामुनिभिःषड्भिःशिवनिन्दापराःपुरा ॥ १०१ ॥ नश्रोतव्याहि
तद्वार्त्तातेऽन्यथावादिनोयतः ॥ अनुमानप्रयोगस्याप्यवकाशोऽत्रविद्यते ॥ १०२ ॥ पञ्चावयवयुक्तस्यसतुधूमस्यदर्शनात् ॥ पर्व्वतस्याग्निमद्भा
वंवदत्यत्रापिसुव्रत ॥ १०३ ॥ प्रत्यक्षस्यप्रपञ्चस्यदर्शनालम्बनत्वतः ॥ ज्ञातव्यःपरमेशानःपरमात्मानसंशयः ॥ १०४ ॥ स्त्रीपुंरूपमयो
विश्वःप्रत्यक्षेणैवदृश्यते ॥ षट्कोशरूपपिण्डोहितत्रचाद्यत्रयंभवेत् ॥ १०५ ॥ पित्रंशजंपुनश्चान्यन्मात्रंशजमितिश्रुतिः ॥ एवंसर्व्वशरीरेषु
स्त्रीपुंभावविदोजनाः ॥ १०६ ॥ परमात्मन्यपितथास्त्रीपुंभावंविदुर्बुधाः ॥ सच्चिदानन्दरूपत्वंवदतिब्रह्मणःश्रुतिः ॥ १०७ ॥ असन्निवर्त्तकः
शब्दःसदात्मेतिनिगद्यते ॥ निवर्त्तनंजडत्वस्याचिच्छब्देनविधीयते ॥ १०८ ॥ त्रिलिङ्गवर्त्तिसच्छब्दःपुंरूपोऽत्रविधीयताम् ॥ प्रकाशवाचीस
भवेत्सन्प्रकाशइतिस्फुटम् ॥ १०९ ॥ ज्ञानशब्दस्यपर्य्यायाश्चिच्छब्दःस्त्रीत्वमागतः ॥ प्रकाशश्चिच्चमिथुनंजगत्कारणतांगतम् ॥ ११० ॥
सच्चिदात्मन्यपितथाजगत्कारणतांगते ॥ एकत्रैवशिवःशक्तिरितिभावोविधीयते ॥ १११ ॥ तैलवर्त्त्यादिमालिन्यात्प्रकाशस्यापिविद्यते ॥
मालिन्यमशिवत्वंचचिताग्न्यादिषुदृश्यते ॥ ११२ ॥ एतन्निवर्त्तनत्वेनशिवत्वंश्रुतिचोदितम् ॥ जीवाश्रितायाश्चिच्छक्तेर्दौर्ब्बल्यंविद्यतेसदा ॥ ११३ ॥
तन्निवृत्त्यर्थमेवात्रशक्तित्वंसार्वकालिकम् ॥ बलवाञ्छक्तिमांश्चेतिव्यवहारःप्रदृश्यते ॥ ११४ ॥ एवंशिवत्वंशक्तित्वंपरमात्मनिदर्शितम् ॥ शिवशक्त्यो
स्तुसंयोगादानन्दःसततोदितः ॥ ११५ ॥ प्रकाशतेतमुद्दिश्यमुनयःक्षीणकल्मषाः ॥ शिवेमनःसमाधायप्राप्ताःशिवमनामयम् ॥ ११६ ॥ सर्व्वात्मत्वं
तयोरेवब्रह्मेत्युपनिषत्सुच ॥ गीयतेब्रह्मशब्देनबृंहिधात्वर्थगोचरः ॥ ११७ ॥ बृंहणत्वंबृहत्त्वंचयथासदाख्यविग्रहे ॥ पञ्चब्रह्ममयेविश्वप्रतीतिर्ब्रह्मश

न्दिता ॥ ११८ ॥ प्रतिलोमात्मकेहंसेवक्ष्यामिप्रणवोद्भवम् ॥ व्यञ्जनस्यसकारस्यहकारस्यचवर्ज्जनात् ॥ ११९ ॥ ओमित्येवभवेत्स्थूलोवाचकःपर
मात्मनोः ॥ महामन्त्रोभवेत्सूक्ष्मस्तदुद्धारंवदामिते ॥ १२० ॥ आद्येत्रिपञ्चरूपेचस्वरेषोडशकेत्रिषु ॥ महामन्त्रोभवेदादौसकारोभवेद्यदा ॥ १२१॥
हंसश्चप्रतिलोमःस्यात्सकारार्थःशिवःस्मृतः ॥ शक्त्यात्मकोमहामंत्रवाच्यःस्यादितिनिर्णयः ॥ १२२ ॥ गुरूपदेशकालेतुसोऽहंशक्त्यात्मकःशिवः ॥
इतिजीवपरोभूयान्महामन्त्रस्तदापशुः ॥१२३॥ शक्त्यात्मकःशिवांशश्चशिवैक्याच्छिवसाम्यभाक् ॥ प्रज्ञानंब्रह्मवाक्येतुप्रज्ञानार्थःप्रदृश्यते ॥१२४॥
प्रज्ञानशब्दश्चैतन्यपर्य्यायःस्यान्नसंशयः ॥ चैतन्यमात्मेतिमुने शिवसूत्रंप्रवर्तितम् ॥ १२५ ॥ चैतन्यमितिविश्वस्यसर्व्वज्ञानक्रियात्मकम् ॥ स्वातं
त्र्यंतत्स्वभावोयःसआत्मापरिकीर्तितः ॥ १२६ ॥ इत्यादिशिवसूत्राणांवार्तिकंकथितंमया ॥ ज्ञानंबन्धइतीदंतुद्वितीयंसूत्रमीशितुः ॥ १२७ ॥ ज्ञान
मित्यात्मनस्तस्यकिञ्चिज्ज्ञानक्रियात्मकम् ॥ इत्याहाद्यपदेनेशः पशुवर्गस्यलक्षणम् ॥ १२८ ॥ एतद्द्वयंपराशक्तेःप्रथमस्पन्दतांगतम् ॥ एनामे
वपरांशक्तिंश्वेताश्वतरशाखिनः ॥ १२९ ॥ स्वाभाविकीज्ञानबलक्रियाचेत्यस्तुवन्मुदा ॥ ज्ञानक्रियेच्छारूपंहिशम्भोर्दृष्टित्रयंमतम् ॥ १३० ॥ एतन्म
नोमध्यगंसदिन्द्रियद्वारगोचरम् ॥ अनुप्रावेश्यजानातिकरोतिचपशुःसदा ॥ १३१ ॥ तस्मादात्मनएवेदंरूपमित्येवनिश्चितम् ॥ प्रपञ्चार्थंप्रव
क्ष्यामिप्रणवैक्यप्रदर्शकम् ॥ १३२ ॥ ओमितीदंसर्व्वमितिश्रुतिराहसनातनी ॥ तस्माद्वेतीत्युपक्रम्यजगत्सृष्टिःप्रकीर्तिता ॥ १३३ ॥ तस्याः श्रु
तेस्तुतात्पर्य्यंवक्ष्यामिश्रूयतामिदम् ॥ शिवशक्तिसमायोगःपरमात्मेतिनिश्चितम् ॥ १३४ ॥ पराशक्तेस्तुसंजाताचिच्छक्तिस्तुतदुद्भवा ॥ आ
नन्दशक्तिस्तज्जा स्यादिच्छाशक्तिस्तदुद्भवा ॥ १३५ ॥ ज्ञानशक्तिस्ततोजाताक्रियाशक्तिस्तुपञ्चमी ॥ एताभ्यएवसंजातानिवृत्त्याद्याःक
लामुने॥१३६॥चिदानन्दसमुत्पन्नौनादबिन्दूप्रकीर्तितौ ॥ इच्छाशक्तेर्मकारस्तुज्ञानशक्तेस्तुपञ्चमः॥१३७॥स्वरः क्रियाशक्तिजातो अकारस्तुमुनीश्वर॥
शिवादीशानउत्पन्नस्ततस्तत्पुरुषोद्भवः॥१३८॥ततोऽघोरस्ततोवामःसद्योजातोद्भवस्ततः ॥एतस्मान्मातृकादष्टत्रिंशन्मातृसमुद्भवः ॥१३९॥ ईशाना
च्छान्त्यतीताख्याकलाजाताथपूरुषात्॥उत्पद्यतेशान्तिकलाविद्याऽवीरसमुद्भवा॥१४०॥ प्रतिष्ठाचनिवृत्तिश्चवामसद्योद्भवेमते॥ईशचिच्छक्तिमुखतोवि
भोर्मिथुनपञ्चकम्॥१४१॥अनुग्रहादिकृत्यानांहेतुःपञ्चकमिष्यते ॥ वाच्यवाचकसम्बन्धान्मिथुनत्वमुपेयुषि॥१४२॥कलावर्णस्वरूपेऽस्मिन्पञ्चकेभूतप
ञ्चकम्॥वियदादिकमादासीदुत्पन्नंमुनिपुङ्गव ॥ १४३ ॥ आद्यंमिथुनमारभ्यपञ्चकंयन्मयंविदुः॥शब्दैकगुणआकाशःशब्दस्पर्शगुणोमरुत् ॥ १४४ ॥
शब्दस्पर्शरूपगुणप्रधानोवह्निरुच्यते ॥ शब्दस्पर्शरूपरसगुणकंसलिलंमतम् ॥ १४५ ॥ शब्दस्पर्शरूपरसगन्धाढ्यापृथिवीमता ॥ व्यापकत्वंच

भूतानामिदमेवंप्रकीर्त्तितम् ॥ १४६ ॥ व्याप्यत्वंवैपरीत्येनगन्धादिक्रमतोभवेत् ॥ भूतपञ्चकरूपोऽयंप्रपञ्चःपरिकीर्त्यते ॥ १४७ ॥ विराट्
सर्व्वसमष्ट्यात्मा ब्रह्माण्डमितिचस्फुटम् ॥ पृथिवीतत्त्वमारभ्यशिवतत्त्वावधिक्रमात् ॥ १४८ ॥ निलीयतत्त्वसन्दोहंजीवएवविलीयते ॥
सशक्तिकेपुनः सृष्टौशक्तिद्वाराविनिर्गतः ॥ १४९ ॥ स्थलप्रपंचरूपेण तिष्ठत्याप्रलयं सुखम् ॥ निजेच्छया जगत्स्रष्टुमुद्युक्तस्य महेशितुः ॥
१५० ॥ प्रथमो यः परिस्पन्दः शिवतत्त्वं तदुच्यते ॥ एषैवेच्छा शक्तितत्त्वं सर्व्वकृत्यानुवर्त्तनात् ॥ १५१ ॥ ज्ञानक्रियाशक्तियुग्मे ज्ञानाधिक्ये सदा
शिवः ॥ महेश्वरं क्रियोद्रेके तत्त्वं विद्धि मुनीश्वर ॥ १५२ ॥ ज्ञानक्रियाशक्तिसाम्यं शुद्धविद्यात्मकं मतम् ॥ स्वाङ्गरूपेषु भावेषु मायातत्त्वविभेदधीः
॥ १५३ ॥ शिवो यदा निजं रूपं परमैश्वर्य्यपूर्व्वकम् ॥ निगूह्य माययाखिलपदार्थग्राहको भवेत् ॥ १५४ ॥ तदापुरुषइत्याख्यातत्सृष्टेत्यभवच्छ्रु
तिः ॥ अयमेव हि संसारी मायया मोहितः पशुः ॥ १५५ ॥ शिवादभिन्नं न जगदात्मानं भिन्नमित्यपि ॥ जानतोऽस्य पशोर्दैवमोहो भवति न प्रभोः
॥ १५६ ॥ यथैन्द्रजालिकस्यापि योगिनो न भवेद्भ्रमः ॥ गुरुणा ज्ञापितैश्वर्य्यः शिवो भवति चिद्घनः ॥ १५७ ॥ सर्व्वकर्त्तृत्वरूपा च सर्व्वज्ञत्वस्वरू
पिणी ॥ पूर्णत्वरूपा नित्यत्वव्यापकत्वस्वरूपिणी ॥१५८॥ शिवस्य शक्तयः पञ्च सङ्कुचद्रूपभास्कराः ॥ अपि सङ्कोचरूपेण विभान्त्य इव नित्य
शः ॥ १५९ ॥ पशोः कलाख्यविद्येति राग कालौ नियत्यपि ॥ तत्त्वपञ्चकरूपेण भवन्त्यत्र कलेति सा ॥ १६० ॥ किञ्चित्कर्त्तृत्वहेतुः स्यात्किञ्चित्त
त्त्वैकसाधनम् ॥ सा विद्या तु भवेद्रागी विषयेष्वनुरञ्जकः ॥ १६१ ॥ कालो हि भावाभावानां भासनाभासनात्मकः ॥ क्रमावच्छेदको भूत्वा भूतादि
रिति कथ्यते ॥ १६२ ॥ इदंतु मम कर्त्तव्यमिदं नेति नियामिका ॥ नियतिः स्याद्विभोः शक्तिस्तदाक्षेपात्पतेत्पशुः ॥ १६३ ॥ एतत्पञ्चकमेवास्य
स्वरूपावारकत्वतः ॥ पञ्चकंचक्रमाख्यातमन्तरङ्गंचसाधनम् ॥ १६४ ॥ वामदेव उवाच ॥ नियत्यधस्तात्प्रकृतेरुपरिस्थः पुमानिति ॥ पूर्व्वत्र
भवताप्रोक्तमिदानींकथमन्यथा ॥ १६५ ॥ माययासङ्कुचद्रूपस्तदधःस्थइतिप्रभो ॥ श्रीसुब्रह्मण्यउवाच ॥ अद्वैतशैववेदोऽयंद्वैतंनसहतेक्वचित् ॥ १६६॥
सर्व्वज्ञःसर्व्वकर्त्ताचशिवएवस्वमायया ॥ सङ्कुचद्रूपइवसन्पुरुषःसम्बभूवह ॥ १६७ ॥ कलादिपञ्चकेनैवभोक्तृत्वेनप्रकल्पितः ॥ प्रकृतिस्थःपुमानेष
भुङ्क्तेप्रकृतिजान्गुणान् ॥ १६८ ॥ इतिस्थानद्वयान्तस्थःपुरुषोनविरोधकः ॥ सङ्कुचन्निजरूपाणांज्ञानादीनांसमष्टिमत् ॥ १६९ ॥ सत्त्वादिगुणसाध्यं
चबुद्ध्यादित्रितयात्मकम् ॥ चित्तंप्रकृतितत्त्वंतदासीत्सत्त्वादिकारणात् ॥ १७० ॥ सात्त्विकादिविभेदेनगुणाःप्रकृतिसम्भवाः ॥ गुणेभ्योबुद्धिरुत्पन्ना
वस्तुनिश्चयकारिणी ॥ १७१ ॥ अहङ्कारस्ततोबुद्धेःसञ्जातस्त्रिविधश्चसः ॥ जीवनंचाथसंरम्भोगर्व्वश्चास्यत्रिधावपुः ॥ १७२ ॥ सत्त्वादिभेदात्सपुनस्त्रै

जसादित्रिभेदवान् ॥ अहङ्कारात्तैजसात्तुमनोबुद्धींद्रिय॥ग्च ॥१७३॥ जातानिमनसोरूपंस्यात्सङ्कल्पविकल्पकम् ॥ बुद्धीन्द्रियाणिश्रोत्रंत्वक्चक्षुर्जिह्वा
चनासिका ॥ १७४ ॥ शब्दःस्पर्शश्चरूपंचरसोगन्धश्चगोचरः ॥ बुद्धीन्द्रियाणांकथिताःश्रोत्रादिक्रमतस्ततः ॥ १७५ ॥ वैकारिकादहङ्कारात्कर्म्मा
क्षाणिप्रजज्ञिरे ॥ तानिवाक्पाणिपादौचपायूपस्थौचतत्क्रियाः ॥ १७६ ॥ वदनादानगमनविसर्गानन्दसंज्ञिताः ॥ भूतादिकादहङ्कारात्तन्मात्राण्यभव
न्क्रमात् ॥ १७७ ॥ तानिसूक्ष्माणिरूपाणिशब्दादीनामितिस्थितिः ॥ तेभ्यश्चाकाशवाय्वग्निपाथोभूमिजनिःक्रमात् ॥ १७८ ॥ अवकाशप्रदानत्ववाह
कत्वंचपाचनम् ॥ संरम्भोधारणंतेषांव्यापाराःपरिकीर्त्तिताः ॥ १७९ ॥ वामदेवउवाच ॥ भूतसृष्टिःपुराप्रोक्ताकलादिभ्यःकथंपुनः ॥ आत्मतत्त्वम
कारःस्याद्विद्यास्यादुस्ततःपरम् ॥ १८० ॥ शिवतत्त्वंमकारःस्यात्सर्व्वतत्त्वार्थकावुभौ ॥ बिन्दुनादौतुतत्रत्यादेवताःशृणुसाम्प्रतम् ॥ १८१ ॥ ब्रह्मा
विष्णुश्चरुद्रश्चमहेश्वरसदाशिवौ ॥ तेहिसाक्षाच्छिवस्यैवमूर्त्तयःश्रुतिविश्रुताः ॥ १८२ ॥ तन्मात्रेभ्योभवन्तीतिसन्देहोऽत्रमहान्प्रभो ॥ श्रीसुब्रह्मण्यउ
वाच ॥ तस्माद्वेतिसमारभ्यभूतिसृष्टिक्रमेमुने ॥ १८३ ॥ जातानिपञ्चभूतानिकलाभ्यइतिनिश्चितम् ॥ स्थूलप्रपञ्चरूपाणितानिभूतपतेर्वपुः ॥१८४॥
शिवतत्त्वादिपृथ्व्यन्ततत्त्वानामुदयक्रमे ॥ तन्मात्रेभ्योभवन्तीतिवक्तव्यानिक्रमान्मुने ॥ १८५ ॥ तन्मात्राणांकलानामप्यैक्यंस्याद्भूतकारणात् ॥
अविरुद्धत्वमेवात्रविद्धिब्रह्मविदांवर ॥ १८६ ॥ स्थूलसूक्ष्मात्मके विश्वेचन्द्रसूर्य्यादयोग्रहाः ॥ सनक्षत्राश्चसञ्जातास्तथान्येज्योतिषांगणाः ॥ १८७ ॥
ब्रह्मविष्णुमहेशादिदेवताभूतजातयः ॥ इन्द्रादयोऽपिदिक्पालादेवाश्चपितरोऽसुराः ॥ १८८ ॥ राक्षसामानुषाश्चान्येजङ्गमत्वविभागिनः ॥ पशवः
पक्षिणःकीटाःपन्नगादिप्रभेदिनः ॥ १८९ ॥ तरुगुल्मलतौषध्यःपर्व्वताश्चाष्टविश्रुताः ॥ गङ्गाद्याःसरितःसप्तसागराश्चमहर्द्धयः ॥ १९० ॥
यत्किञ्चिद्वस्तुजातंतत्सर्व्वमत्रप्रतिष्ठितम् ॥ स्त्रीपुंरूपमिदंविश्वंशिवशक्त्यात्मकंबुधैः ॥ १९१ ॥ भवादृशैरुपास्यंस्याच्छिवज्ञानविदांवरैः ॥ सर्व्वंब्रह्मे
त्युपासीतसर्व्वोवैरुद्रइत्यपि ॥ १९२ ॥ श्रुतिराहमुनेतस्मात्प्रपञ्चात्मासदाशिवः ॥ अष्टत्रिंशत्कलान्याससामर्थ्याद्वैतभावनात् ॥ १९३ ॥ सदाशिवोऽ
हमेवेतिभावितात्मागुरुःशिवः ॥ प्रपञ्चदेवतायन्त्रमन्त्रात्मानहिसंशयः ॥१९४॥ एवंविधाचार्य्यकृपापाटिताखिलबन्धनः ॥ शिशुःशिवपदासक्तोगुर्व्वा
त्माभवतिध्रुवम् ॥ १९५ ॥ यदस्तिवस्तुतत्सर्व्वंगुणप्राधान्ययोगतः ॥ समस्तंव्यस्तमपिचप्रणवार्थंप्रचक्षते ॥ १९६ ॥ रागादिदोषरहितंवेदसारंशिवो
दितम् ॥ योह्यन्यथैतन्मनुतेमद्वचोमदगर्वितः ॥ १९७ ॥ देवोवामानवःसिद्धोगन्धर्व्वोमनुजोऽपिवा ॥ दुरात्मनस्तस्यशिरश्छिन्द्यासमनयाध्रुवम् ॥
॥ १९८ ॥ मच्छक्त्यारिपुकालाग्निकल्पयानहिसंशयः ॥ भवानेवमुनेसाक्षाच्छिवाद्वैतविदांवरः ॥ १९९ ॥ भवत्कटाक्षसम्पर्कात्पशुःपशुपतिर्ध्रुवम् ॥

इदंरहस्यंपरमंप्रतिष्ठितमतस्त्वयि ॥ २०० ॥ त्वमपिश्रद्धयाभक्त्याप्रणवेष्वेवसादरम् ॥ उपदिश्यचतान्सर्व्वान्संयोज्यपरमेश्वरे ॥ विचरँल्लोकरक्षायै
सुखमक्षयमाप्नुहि ॥ २०१ ॥ सूतउवाच ॥ श्रुत्वैवमद्भुतमतंहिषडाननोक्तंवेदान्तनिष्ठितमृषिस्तुविनम्रमूर्त्तिः ॥ भूत्वाप्रणम्यबहुशोभुविदण्डवत्तत्पा
दारविन्दविहरन्मधुपत्वमाप ॥२०२॥ इतिश्रीशैवेमहापुराणेकैलाससंहितायांदशमोऽध्यायः ॥१०॥ वामदेवउवाच ॥ ॥ भगवन्सर्व्वतत्त्वज्ञषण्मुखामृ
तवारिधे ॥ गुरुत्वंकथमेतेषांयतीनांभावितात्मनाम् ॥ १ ॥ जीवानांभोगमोक्षादिसिद्धिःसिद्ध्यतियद्वशात् ॥ पारम्पर्य्यंविनानैषामुपदेशाधिकारिता
॥ २ ॥ एतच्चक्षौरकर्म्माङ्गंस्नानंचकथमीदृशम् ॥ श्रीसुब्रह्मण्यउवाच ॥ योगपट्टंप्रवक्ष्यामिगुरुत्वंयेनजायते ॥ ३ ॥ वैशाखेश्रावणेवास्यान्मास्याश्वयु
जिकार्त्तिके ॥ मार्गशीर्षेचमाघेवाशुक्लपक्षेशुभेदिने ॥ ४ ॥ पञ्चम्यांपौर्णमास्यांवाकृतप्राभातिकक्रियः ॥ लब्धानुज्ञस्तुगुरुणास्नात्वानियतमानसः ॥
॥ ५ ॥ पर्य्यङ्कशौचंकृत्वातद्वाससाङ्गंप्रमृज्यच ॥ द्विगुणंडोरमाबध्यपरिधायचवाससी ॥ ६ ॥ क्षालिताङ्घ्रिर्द्विराचम्यभस्मसद्यादिमन्त्रतः ॥
समादायाथसन्धार्य्यसमुद्धूलनमार्गतः ॥ ७ ॥ गृहीतहस्तोगुरुणाहस्ताभ्यांप्राङ्मुखोयथा ॥ तथोपवेशितस्तिष्ठेन्मण्डपेसमलङ्कृते ॥ ८ ॥
गुर्व्वासनवरेशुद्धेचैलाजिनकुशोत्तरे ॥ अथदेशिकआदायशङ्खंसाधारमस्त्रतः ॥ ९ ॥ शोध्यतत्पुरतःस्थाप्यसम्पूज्यकुसुमादिभिः ॥ साधारंशङ्ख
मप्यस्त्रवर्म्मभ्यांशोधितंजलम् ॥ १० ॥ आपूर्य्यपूर्व्ववत्पूज्यषडङ्गोक्तक्रमेणच ॥ सप्तधैवाभिमन्त्र्याथप्रणवेनपुनश्चतत् ॥ ११ ॥ अभ्यर्च्यग
न्धपुष्पाद्यैर्धूपदीपौप्रदर्श्यच ॥ संरक्ष्यास्त्रेणावगुण्ठ्यवर्म्मणाथप्रदर्शयेत् ॥ १२ ॥ धेनुशङ्खाख्यमुद्रेचदेशिकःस्वपुरःपुनः ॥ शङ्खदक्षिणदेशेतुपूजा
र्घ्योक्तविधानतः ॥ १३ ॥ मण्डलंकृतमभ्यर्च्यसुगन्धकुसुमादिभिः ॥ साधारंशोधितंशुद्धघटंतन्तुपरिष्कृतम् ॥ १४ ॥ धूपितंस्थापितंशुद्धवासितो
दप्रपूरितम् ॥ पञ्चत्वक्पञ्चपत्रैश्चमृत्तिकाभिश्चपंचभिः॥१५॥मीलितंचसुगन्धेनलोलितंसमलङ्कृतम्॥वस्त्राम्रदलकूर्चाग्रनारिकेलसुमैस्ततः ॥ १६ ॥
पञ्चरत्नानिविन्यस्यनीलंमाणिक्यहेमनी ॥ प्रवालगोमेदकेचरत्नाभावेहिरण्मयम् ॥ १७ ॥ नृम्लुस्कमितिसम्प्रोच्यग्लूमित्यन्तेसमर्च्चयेत् ॥ आधारश
क्तिमारभ्ययजनोक्तविधानतः ॥ १८॥ देवमावाह्यसम्पूज्यपञ्चावरणमार्गतः ॥ निवेद्यपायसान्नंचताम्बूलादियथापुरा ॥ १९ ॥ नामाष्टकार्च्चनान्तंच
कृत्वातमभिमन्त्र्यच ॥ प्रणवाष्टोत्तरशतंब्रह्मभिःपञ्चभिःक्रमात् ॥ २०॥ सद्यादीशान्तमप्यस्त्ररहितंवर्म्मणापुनः ॥ अवगुण्ठ्यप्रदर्श्याथधूपदीपौप्रदर्श्य
च ॥ २१ ॥ धेनुयोन्याख्यमुद्रेचदर्भैराच्छाद्यमस्तकम् ॥ मण्डपस्यैशदिग्भागेचतुरस्त्रंप्रकल्पयेत् ॥२२॥ तदुपर्य्यासनंकल्प्यतत्रसंस्थाप्यतंशिशुम्॥
ततःकुम्भंसमुत्थाप्यस्वस्तिवाचनपूर्व्वकम् ॥ २३ ॥ अभिषिंचेद्गुरुःशिष्यंप्रादक्षिण्येनमस्तके ॥ प्रणवंपूर्व्वमुच्चार्य्यसप्तधाब्रह्मभिस्ततः ॥ २४ ॥ पंच

भिश्चाभिषेकंचशङ्खोदेनाभिवेष्टयेत् ॥ चरुंदीपंप्रदर्श्याथवाससापरिमृज्यच ॥२५॥ नूतनंडोरकौपीनंवाससीपरिधायच ॥ क्षालिताङ्घ्रिर्द्विराचम्यधृतभ
स्मगुरुःशिशुम् ॥२६॥ हस्ताभ्यामवलम्ब्याथहस्तौमण्डपमध्यतः॥ आसनेसम्प्रवेश्याथकल्पितेसुखमास्थितम् ॥२७॥ पूर्व्वाभिमुखमात्मीयतत्त्वज्ञाना
भिलाषिणम् ॥ स्वासनस्थोगुरुर्ब्रूयादमलात्माभवेतितम् ॥ २८ ॥ गुरुश्चपरिपूर्णोऽस्मिशिवइत्यचलस्थिति ॥ समाधिमास्थायततोमुहूर्त्तंगूढमानसः
॥ २९ ॥ पश्चादुन्मील्यनयनेपश्यञ्छिष्यमनाकुलः ॥ स्वहस्तंभसितालिप्तंविन्यस्यशिशुमस्तके ॥३०॥ दक्षश्रुतावुपदिशेद्धंसःसोऽहमितिस्फुटम् ॥
तत्राद्योऽहंपदस्यार्थःशक्त्यात्मासशिवःस्वयम् ॥ ३१ ॥ सएवाहंशिवोऽस्मीतिस्वात्मानंसंविभावय ॥ यइत्यणोरर्थतत्त्वमुपदिश्यततोवदेत् ॥ ३२ ॥
अवान्तराणांवाक्यानामर्थंतात्पर्य्यमादरात् ॥ वाक्यानिवच्मितेब्रह्मन्सावधानमतिःशृणु ॥ ३३ ॥ प्रज्ञानंब्रह्म । अहंब्रह्मास्मि । तत्त्वमसि । अयमा
त्माब्रह्म । ईशावास्यमिदंसर्व्वम् । प्राणोऽस्मि । प्रज्ञानात्मा । यदेवेहतदमुत्रयदमुत्रतदन्विह । अन्यदेवतद्विदितादथोअविदितादधि । एषतआत्मान्तर्याम्य
मृतः । सयश्चायंपुरुषेयश्चासावादित्येसएकः ॥ अहमस्मिपरंब्रह्मपरापरपरात्परम् ॥ वेदशास्त्रगुरुत्मातुस्वयमानन्दलक्षणम् ॥३४॥ सर्व्वभूतस्थितंब्रह्मत
देवाहंनसंशयः ॥ तत्त्वस्यप्राणोऽहमस्मिपृथिव्याःप्राणोऽहमस्मि ॥ ३५ ॥ अपांचप्राणोऽहमस्मितेजसश्चप्राणोऽहमस्मि ॥ वायोश्चप्राणोऽहमस्मिआ
काशस्यप्राणोऽहमस्मि ॥ त्रिगुणस्यप्राणोऽहमस्मि । सर्व्वोऽहंसर्व्वात्मकोऽहंसंसारीयद्भूतंयच्चभव्यंयद्वर्त्तमानंसर्व्वात्मकत्वादद्वितीयोऽहम् ॥ ३६ ॥
सर्व्वंखल्विदंब्रह्म । सर्व्वोऽहंविमुक्तोऽहम् । योऽसौसोऽहंहंसःसोहमस्मिइत्येवंसर्व्वत्रसदाध्यायेदिति ॥ ३७ ॥ प्रज्ञानंब्रह्मवाक्यार्थःपूर्व्वमेवप्रबोधितः ॥
अहंपदस्यार्थभूतःशक्त्यात्मापरमेश्वरः ॥ ३८ ॥ अकारःसर्व्ववर्णाग्र्यःप्रकाशःपरमःशिवः ॥ हकारोव्योमरूपःस्याच्छक्त्यात्मासम्प्रकी
र्त्तितः ॥ ३९ ॥ शिवशक्त्योस्तुसंयोगादानन्दःसततोदितः ॥ ब्रह्मेतिशिवशक्त्योस्तुसर्व्वात्मत्वमितिस्फुटम् ॥ ४० ॥ पूर्व्वमेवोप
दिष्टंतत्सोऽहमस्मीतिभावयेत् ॥ तत्त्वमित्यत्रतदितिसशब्दार्थःप्रबोधितः ॥ ४१ ॥ अन्यथासोऽहमित्यत्रविपरीतार्थभावना ॥ अहंशब्दस्तुपु
रुषस्तदितिस्यान्नपुंसकम् ॥ ४२ ॥ एवमन्योन्यवैरुद्ध्यादन्वयोनभवेत्तयोः ॥ स्त्रीपुंरूपस्यजगतःकारणंचान्यथाभवेत् ॥ ४३ ॥ सतत्त्वमसिइत्येवमु
पदेशार्थभावना ॥ अयमात्मेतिवाक्येचपुंरूपंपदयुग्मकम् ॥ ४४ ॥ ईशेनरक्षणीयत्वादीशावास्यमिदंजगत् ॥ प्रज्ञानात्मायदेवेहतदमुत्रेतिचिन्तयेत्
॥ ४५ ॥ यःसएवेतिविद्वद्भिःसिद्धान्तिभिरिहोच्यते ॥ उपरिस्थितवाक्येचयोऽमुत्रसइहस्थितः ॥ ४६ ॥ इतिपूर्व्ववदेवार्थःपुरुषोविदुषांमतः ॥ अन्य
देवतद्विदितादथोअविदितादधि ॥ ४७ ॥ अस्मिन्वाक्येफलस्यापिवैपरीत्यविभावना ॥ यथास्यात्तद्वदेवात्रवक्ष्यामिश्रूयतांमुने ॥ ४८ ॥

अयथाविदिताच्छब्दोअपूर्व्वविदितादिति।प्रवृत्तःस्यात्तद्विदितात्तथैवाविदितात्परम्॥४९॥अन्यदेवहिसंसिद्धचैनभवेदितिनिश्चितम्॥एषतआत्मान्तर्या
मीयोऽमृतश्चशिवःस्वयम्॥५०॥यश्चायंपुरुषेशम्भुर्यश्चादित्येव्यवस्थितः॥सचासौसेतिपार्थक्यंनैकएवसईरितः॥५१॥ सोपाधिद्वयमस्यार्थंउपचारात्तथो
च्यते ॥ तंशम्भुनाथंश्रुतयोवन्दतिहिहिरण्मयम् ॥ ५२ ॥ हिरण्यबाहवइतिसर्व्वाङ्गस्योपलक्षणम् ॥ अन्यथातत्पतित्वन्तुनभवेदितियत्नतः ॥ ५३ ॥
यएषोऽन्तरितिशम्भुश्छान्दोग्येश्रूयतेशिवः ॥ हिरण्यश्मश्रुवांस्तद्वद्धिरण्यमयकेशवान् ॥ ५४ ॥ नखमारभ्यकेशाग्रात्सर्व्वत्रापिहिरण्मयः ॥ अहम
स्मिपरंब्रह्मपरापरपरात्परम् ॥५५॥ इतिवाक्यस्यतात्पर्य्यंवदामिश्रूयतामिदम् ॥ अहंपदस्यार्थभूतःशक्त्यात्माशिवईरितः ॥५६॥ सएवास्मीतिवाक्या
र्थयोजनाभवतिध्रुवम् ॥ सर्व्वोत्कृष्टश्चसर्व्वात्मापरंब्रह्मत्वईरितः॥५७॥परश्चाथापरश्चेतिपरात्परमितित्रिधा॥रुद्रोब्रह्माचविष्णुश्चप्रोक्ताःश्रुत्यैवनान्यथा॥
॥५८॥तेभ्यश्चपरमोदेवःपरशब्देनबोधितः॥ वेदशास्त्रगुरूणांचवाक्याभ्यासवशाच्छिशोः॥५९॥पूर्णानन्दमयःशंभुःप्रादुर्भूतोभवेद्धृदि॥ सर्व्वभूतस्थितः
शंभुःसएवाहंनसंशयः ॥ ६० ॥ तत्त्वजातस्यसर्व्वस्यप्राणोऽस्म्यहमहंशिवः ॥ इत्युक्त्वापुनरप्याहशिवस्तत्त्वत्रयस्यच ॥ ६१ ॥ प्राणोऽस्मीत्यत्र
पृथ्व्यादिगुणान्तग्रहणान्मुने ॥ आत्मतत्वानिसर्व्वाणिगृहीतानीतिभावय ॥ ६२ ॥ पुनश्चसर्व्वग्रहणंविद्यातत्त्वशिवात्मनोः ॥ तत्त्वयोश्चास्म्यहप्राणःस
र्व्वःसर्व्वात्मकोह्यहम् ॥६३॥ जीवस्यचान्तर्यामित्वाज्जीवोऽहंतस्यसर्वदा ॥ यद्भूतंयच्चभव्यंयद्भविष्यत्सर्व्वमेवच ॥ ६४ ॥ मन्मयत्वादहंसर्व्वःसर्व्वोवै
रुद्रइत्यपि ॥ श्रुतिराहमुनेसाहिसाक्षाच्छिवमुखोद्गता ॥६५॥ सर्व्वात्मापरमैरेभिर्गुणैर्नित्यसमन्वयात्॥स्वस्मात्परात्मविरहाद्द्वितीयोऽहमेवहि ॥६६॥
सर्व्वंखल्विदंब्रह्मेतिवाक्यार्थःपूर्व्वमीरितः ॥ पूर्णोऽहंभावरूपत्वान्नित्यमुक्तोऽहमेवहि ॥ ६७ ॥ पशवोमत्प्रसादेनमुक्तामद्भावमाश्रिताः ॥ योऽसौसर्व्वात्म
कःशम्भुःसोऽहंहंसःशिवोऽस्म्यहम् ॥ ६८ ॥ इतीशश्रुतिवाक्याभ्यामुपदिष्टार्थमादरात् ॥ साक्षाच्छिवैक्यदंपुंसामुपदिश्यशिशोर्गुरुः ॥ ६९ ॥ आदा
यशङ्खंसाधारमस्त्रमन्त्रेणभस्मना ॥ शोध्यतत्पुरतःस्थाप्यचतुरस्रेसमर्च्चिते ॥ ७० ॥ ओमित्यभ्यर्च्चयगन्धाद्यैरस्त्रवस्त्रोपशोधितम् ॥ वासितंजलमापू
र्य्यसम्पूज्योमितिमन्त्रतः ॥ ७१ ॥ सप्तधैवाभिमन्त्र्याथप्रणवेनपुनश्चतत् ॥ यस्त्वन्तरंकिञ्चिदस्तिकुरुतेसतुभीतिभाक् ॥७२॥ इत्याहश्रुतिरातस्त्वंद्व
ढात्मागतभीर्भव ॥ इत्याभाष्यस्वयंशिष्यंदेवंध्यायन्समर्च्चयेत् ॥ ७३॥ शिष्यासनंसम्प्रपूज्यषडुत्थासनमार्गतः॥शिवासनञ्चसंकल्प्यशिवमूर्त्तिंप्रकल्प्य
च ॥ ७४ ॥ पञ्चब्रह्माणिविन्यस्याशिरःपादावसानकम् ॥ मुण्डवक्त्रकलाभेदैःप्रणवस्यकलाअपि ॥ ७५॥ अष्टत्रिंशन्मन्त्ररूपाःशिष्यदेहेऽथमस्तके ॥
समावाह्यशिवंशान्तंस्थापनीयाःप्रदर्श्यच ॥ ७६ ॥ मुद्राश्चाङ्गानिविन्यस्यसर्व्वज्ञानीत्यनुक्रमात् ॥ उपचारांश्चसंकल्प्यषोडशासनपूर्व्वकान् ॥ ७७ ॥

पायसान्नश्चनैवेद्यंसमर्प्योमाग्निजायया॥ गण्डूषाचमनार्घ्यादिधूपदीपान्तिकंक्रमात्॥७८॥नामाष्टकेनसंपूज्यब्राह्मणैर्वेदपारगैः॥ जपेद्ब्रह्मविदाप्नोतिभृगुर्वैवा
रुणेस्ततः॥७९॥योदेवानामुपक्रम्ययः परःसमहेश्वरः॥इत्यन्तंतस्यपुरतःकह्लारादिविनिर्म्मिताम् ॥८०॥आदायमालामुत्थायश्रीविरूपाक्षनिर्म्मिते॥ शा
स्त्रेपंचाशिकेरूपेसिद्धिस्कन्धंजपञ्छनैः॥८१॥ख्यातिःपूर्णाहमित्यन्तंकण्ठदेशेसमर्पयेत्॥मनोहरसुगन्धाढ्यामागुल्फान्तावलंबिनीम् ॥८२॥ तिलकंचन्द
नेनाथसर्वाङ्गालेपनंपुनः ॥ स्वसंप्रदायानुगुणंनामश्रीपादसंज्ञितम् ॥८३॥ छत्रंचपादुकांदद्याद्दूर्व्वाकल्पविकल्पनम् ॥ व्याख्यातृत्वंचकर्म्मादिगुर्व्वा
सनपरिग्रहम्॥८४॥अनुगृह्यगुरुस्तस्मैशिष्यायशिवरूपिणे ॥ शिवोऽहमस्मीतिसदासमाधिस्थोभवेतितम्॥८५॥संप्रोच्याथस्वयंतस्मैनमस्कारंसमाच
रेत्॥सम्प्रदायानुगुण्येननमस्कुर्य्युस्ततोऽपरे ॥ ८६ ॥ शिष्यस्तथासमुत्थायनमस्कुर्य्याद्गुरुंक्रमात्॥ गुरोरपिगुरुंतस्यशिष्यांश्चस्वगुरोरपि ॥ ८७ ॥
एवंकृतनमस्कारंशिष्यंजत्वागुरुःस्वयम् ॥ अद्यप्रभृतिलोकानामनुग्रहपरोभव ॥ ८८ ॥ परीक्ष्यवत्सरंशिष्यमङ्गीकुरुविधानतः ॥ रागादिदोषान्सन्त्य
ज्यशिवध्यानपरोभव॥८९॥सत्सम्प्रदायसंसिद्धैःसङ्गंकुरुनचेतरैः ॥ अनभ्यच्चर्यशिवंजातुमाभुङ्क्ष्वाप्राणसङ्क्षयम् ॥९०॥ गुरुभक्तिंसमास्थायसुखीभ
वसुखीभव ॥ इतिक्रमाद्गुरुवरःसमंशिष्यंसमाचरेत् ॥ ९१ ॥ योगपट्टप्रकारस्तेकथितोमुनिसत्तम ॥ सूतउवाच ॥ इत्युक्त्वाषण्मुखस्तस्मैक्षौरंस्नान
विधिक्रमम् ॥ ९२ ॥ वक्तुमारभतेयेनशुद्धिःस्याद्यतिनःपरम् ॥ श्रीसुब्रह्मण्यउवाच ॥ गुरुंनत्वाविशेषेणलब्धानुज्ञस्ततोगुरोः ॥ ९३ ॥
शिरःसङ्क्षाल्यवाचम्यसवासाःक्षौरमाचरेत् ॥ क्षालनंकारयेद्वासोमृदम्भोभिःक्षुरादिकम् ॥ ९४ ॥ तद्धस्तौचमृदालिप्यक्षालयेतिमृदंददेत् ॥ स्थापि
तंप्रोक्षितंतोयैःशिवंशिवमितीरयन् ॥ ९५ ॥ स्वनेत्रेपिहितेचैवानामाङ्गुष्ठाभिमन्त्रिते ॥ अस्त्रेणोन्मील्यसंदृश्यक्षुरादिक्षौरसाधनम् ॥ ९६ ॥ अभिम
न्त्र्यद्वादशाथप्रोक्षयेदस्त्रमन्त्रतः ॥ क्षुरंगृहीत्वातारेणदक्षभागेनिकृन्तयेत् ॥ ९७ ॥ केशांश्चकांश्चिदग्रेषुवप्त्वासर्व्वंचवापयेत् ॥ पृथिव्यांपर्णमादाय
विक्षिपेन्नभुवःस्थले ॥ ९८ ॥ श्मश्रूणिहस्तपादस्थनखानिचनिकृन्तयेत् ॥ बिल्वाश्वत्थतुलस्यादिस्थानेसंगृह्यमृत्तिकाम्॥ ९९ ॥ द्विषड्वारंनिमज्ज्या
प्सुतीरंगत्वोपविश्यच ॥ शुद्धदेशेतुसंस्थाप्यमृदंत्रेधाविभज्यच ॥ १०० ॥ एकांपुनस्त्रिधाकृत्वाप्रोक्ष्यास्त्रेणाभिमन्त्र्यच ॥ तत्रैकांमृदमादायदापयि
त्वान्यपाणिना ॥ १०१ ॥ करौद्वादशधालिप्यप्रत्येकंक्षाल्यवारिणा ॥ पुनरेकांपादयोश्चमुखेचान्यांकरक्रमात्॥ १०२ ॥ लेप्यसंक्षाल्यचाम्भोभिः
पुनश्चजलमाविशेत् ॥ अन्यांमृदंभागयित्वाशिरसिद्वादशक्रमात् ॥ १०३ ॥ आलिप्यमृदमास्यान्तंनिमज्ज्यचपुनःपुनः ॥ तीरंगत्वातुगण्डूषंषोडशा
चमनंद्विधा ॥ १०४॥प्राणानायम्यचपुनःप्रणवाद्यष्टसंख्यया ॥ मृदमन्यांपुनस्त्रेधाविभज्जेत्तदेकया ॥ १०५ ॥ कटिशौचंपादशौचंविधायाचम्यच

द्विधा ॥ प्रणवेनाथषोढ़ाचप्राणानायम्यवाग्यतः ॥ १०६ ॥ पुनरन्यांस्वोरुदेशेत्रिधाविन्यस्यचोमिति ॥ प्रोक्ष्याभिमन्त्रयेत्सप्तस्वपाण्योस्तलमेक
या ॥ १०७ ॥ त्रिधालिप्याथसंद्दश्यसूर्य्यमूर्त्तैःस्वकक्षयोः ॥ समालिप्यचपाणिभ्यांव्यत्यस्ताभ्यामथान्यया ॥ १०८ ॥ शिरआरभ्यपादान्तंविलि
प्यादित्यद्दष्टया ॥ गृहीत्वान्यांसमुत्थायदण्डमादायभूतले ॥ १०९ ॥ गुरूञ्छिवञ्चसंस्मृत्यसाष्टाङ्गंप्रणमेत्त्रयम् ॥ पश्चाङ्गेनैकवारञ्चसमुत्थायचवन्द
येत् ॥ ११० ॥ तीर्थंप्रविश्यतन्मध्येनिमज्ज्योन्मज्ज्यतांमृदम् ॥ स्कन्धेसंस्थाप्यपूर्व्वोक्तप्रकारेणविलिप्यच ॥ १११ ॥ तत्रावशिष्टांसंगृह्यजलमध्ये
विलोल्यच ॥ त्रिवारमोमितिस्नात्वाशिवपादाम्बुजंस्मरन् ॥ ११२ ॥ अथाभिषिच्यशङ्खाख्यमुद्रयाद्वादशोमिति ॥ तीरमागत्यसंशोध्यकरौपादौमृदा
न्यया ॥ ११३ ॥ पुनश्चसंशोध्यकरौद्विराचम्योमितिस्मरन् ॥ अभिषिच्योमितिजलं विरजाभस्मलोलितम् ॥ ११४ ॥ अङ्गोपमार्ज्जनंकृत्वासुस्नातोभ
स्मनाततः ॥ त्रिपुण्ड्रञ्चविधायाथकृतमाध्यन्दिनाक्रियः॥११५॥गुरुंतीर्थञ्चसंवन्द्यनमस्कृत्यमहेश्वरम्॥ सम्पूज्यपरमेशानंपञ्चधापरिकल्पिते॥११६॥
भैक्षंयथोचितंकुर्य्याद्दूषितान्नंविवर्ज्जयेत् ॥ क्षौरस्नानविधिःप्रोक्तःकिंभूयःश्रोतुमिच्छसि ॥ ११७ ॥ इतिश्रीशैवेमहापुराणेकैलाससंहितायामुत्तरभागेए
कादशोऽध्यायः ॥ ११ ॥ श्रीवामदेवउवाच ॥ येमुक्तायतयस्तेषांदाहकर्म्मनविद्यते ॥ खननंखलुतेषांतत्कर्म्माचक्ष्वगुरोमम ॥ १ ॥ पूर्णाहंभावमाश्रि
त्ययेमुक्तादेहपञ्जरात् ॥ येतूपासनमार्गेणदेहमुक्ताःपदंगताः ॥ २ ॥ तेषांगतिविशेषञ्चभगवन्वक्तुमर्हसि ॥ ॥ सूतउवाच ॥ मुनिविज्ञप्तिमाकर्ण्यशक्ति
पाणिःसुरारिहा ॥ ३ ॥ प्राहात्यन्तरहस्यञ्चऋभुणाश्रुतमीश्वरात् ॥ श्रीसुब्रह्मण्यउवाच ॥ इदमेवमुनेगुह्यमृभवेशिवयोगिने ॥ ४ ॥ उक्तंभगवतासा
क्षात्सर्व्वज्ञेनपिनाकिना ॥ वक्ष्येतदद्यतेब्रह्मन्नदेयंयस्यकस्यचित् ॥ ५ ॥ समाधिस्थोयतिःकश्चिच्छिवभावेनदेहमुक् ॥ अस्तिचेत्समहाधीरःप
रिपूर्णःशिवोभवेत् ॥ ६ ॥ अधैर्य्यचित्तोयःकश्चित्समाधिंनचविन्दाति ॥ त्रिपदार्थपरिज्ञानंवेदान्तागमवाक्यजम् ॥ ७ ॥ श्रुत्वागुरुमुखाद्योगंसमभ्य
स्यमादिकम् ॥ शिवध्यानपरो नित्यंप्रणवासक्तमानसः ॥ ८ ॥ देहदौर्ब्बल्यवशतोयद्यधैर्य्यस्ततुंत्यजेत् ॥ सदाशिवानुग्रहतोनन्दिनाप्रेरितामुने
॥ ९ ॥ आतिवाहिकरूपिण्योदेवताःपञ्चविश्रुताः ॥ अग्न्यहन्ताकृतःकाश्चिज्ज्योतिःपुञ्जवपुष्मती ॥ १० ॥ अहोऽभिमानिनीकाचिच्छुक्लपक्षाभिमा
निनी ॥ उत्तरायणरूपाचपश्चानुग्रहतत्पराः ॥ ११ ॥ धूमातमस्विनीरात्रिःकृष्णपक्षाभिमानिनी ॥ दक्षिणायनरूपाचकर्म्मानुष्ठानतत्परान् ॥ १२ ॥
गृहीत्वात्रिदिवंयान्तितेतुपुण्यक्षयेपुनः ॥ मानुषंलोकमासाद्यभजन्तेजन्मपूर्व्ववत् ॥१३॥ ताःपुनःपंचधामार्गंविभज्यारभ्यभूतलम् ॥ अग्न्यादिक्रमतो
गृह्यसदाशिवपदंयतिम् ॥ १४ ॥ निनीयवन्द्यचरणौदेवदेवस्यपृष्ठतः ॥ तिष्ठन्त्यनुग्रहाकारकर्म्मण्येवप्रयोजिताः ॥ १५ ॥ समागतमभिप्रेक्ष्यदेवदेवः

सदाशिवः ॥ विरक्तश्चेन्महामन्त्रतात्पर्य्यमुपादिश्यच ॥ १६ ॥ मृगटङ्कत्रिशूलाग्र्यवरदानविभूषितम् ॥ त्रिनेत्रंचन्द्रशकलगङ्गोल्लासिजटाधरम् ॥१७॥ स्वसाम्यश्चवपुर्दत्त्वागाणपत्येऽभिषिच्यच ॥ अनुगृह्यविमानाग्र्यंसर्व्वाङ्गंसर्व्वकामदम् ॥ १८ ॥ इतिशाखाविरक्तस्यरुद्रकन्यासमावृतम् ॥ नृत्यगीत मृदङ्गादिवाद्यघोषमनोहरम् ॥ १९ ॥ दिव्याम्बरस्रगालेपभूषणैरभिभूषितम् ॥ दिव्यामृतघटैःपूर्णंदिव्यपर्य्यङ्कपूरितम् ॥ २० ॥ सूर्य्यकोटिप्रतीका शंचन्द्रकोटिसुशीतलम् ॥ मनोवेगंसर्व्वगञ्चविमानमनुगृह्यच ॥ २१ ॥ भुक्तभोगस्यतस्यापिभोगकौतूहलक्षये ॥ निपात्यशक्तिंतीव्रतरांप्रकृत्याद्यति दुर्गमम् ॥ २२ ॥ कान्तारंदग्धुकामानांप्रलयानलसप्रभाम् ॥ अनुगृह्यमहामन्त्रतात्पर्य्यंपरमेश्वरः ॥ २३ ॥ पूर्णाहंभावनारूपःशम्भुरस्मीतिनिश्चल म् ॥ अनुगृह्यसमाधिश्चस्वदास्यस्पन्दरूपिणीः ॥ २४ ॥ रव्यादिकर्म्मसामर्थ्यरूपाःसिद्धीरनर्गलाः ॥ आयुःक्षयेपञ्चयोनेःपुनरावृत्तिवर्ज्जिताम् ॥२५॥ मुक्तिश्चपरमांतस्मैप्रयच्छातिजगद्गुरुः ॥ एतदेवपदंतस्मात्सर्व्वैश्वर्य्यसमष्टिमत् ॥२६॥ मुक्तिघण्टापथश्चेतिवेदान्तानांविनिश्चयः ॥ मुमूर्षोस्तत्रमन्दस्य यतेःसत्सम्प्रदायिनः ॥२७॥ यतयःपरितःस्थित्वाप्रणवादीन्यनुक्रमात् ॥ उपदिश्यचवाक्यानितात्पर्य्यंश्चसमाहिताः ॥२८॥ वर्णयेयुर्यतेस्तस्यप्राणस्य विलयावधि ॥ एतेषांसममेवात्रसंस्कारक्रमउच्यते ॥ २९ ॥ असंस्कृतशरीराणांदौर्गत्यंनैवजायते ॥ सन्न्यस्यसर्व्वकर्म्माणिशिवाश्रयपरायतः ॥३०॥ देहंदूषयतस्तेषांराज्ञोराष्ट्रञ्चनश्यति ॥ तद्ग्रामवासिनस्तेऽपिभवेयुर्भृशदुःखिनः ॥ ३१ ॥ तद्दोषपरिहाराय नमइरिण्यायचेतिसमारभ्यान्तंजपन् ॥ ओमित्यन्तेजपन्देवयजनंपूरयेत्ततः ॥ ३२ ॥ पुत्रादयोयथान्यायंकुर्य्युःसंस्कारमुत्तमम् ॥ अभ्यज्यस्थाप्यशुद्धोदैरभ्यर्च्चयेत्कुसुमादिभिः ॥ ३३ ॥ श्रीरुद्रचमकाभ्याञ्चरुद्रसूक्तेनचक्रमात् ॥ शङ्खञ्चपुरतःस्थाप्यतज्जलेनाभिषिच्यच ॥ ३४ ॥ पुष्पंनिधायशिरसिप्रणवेनप्रमृज्यच ॥ कौपीनादीनिस न्त्यज्यपुनरन्यानिधार्य्यंच ॥ ३५ ॥ भस्मनोद्धूल्यसर्वाङ्गंतदुक्तविधिनाततः ॥ त्रिपुण्ड्रंचविधानेनतिलकंचन्दनेनच ॥ ३६ ॥ विरच्यपुष्पैर्मालाभि रलंकृत्यकलेवरम् ॥ उरःकण्ठशिरोबाहुप्रकोष्ठश्रुतिषुक्रमात् ॥ ३७ ॥ रुद्राक्षमालाभरणैरलंकृत्यचमन्त्रतः ॥ धूपितंसमनुत्थाप्याशिक्योपरिनिधाय च ॥ ३८ ॥ पञ्चब्रह्ममयेस्थाप्यरथेसम्पूज्यतंरथम् ॥ ओमाद्यैःपञ्चभिर्ब्रह्ममन्त्रैःसम्पादितैःक्रमात् ॥ ३९ ॥ सुगन्धिकुसुमैर्माल्यैरलंकृत्यसमन्ततः ॥ नृत्यवाद्यैर्ब्राह्मणानांवेदघोषैश्चसर्व्वतः ॥ ४० ॥ ग्रामंप्रदक्षिणीकृत्यग्रामप्राच्यामथापिवा ॥ उदीच्यांपुण्यदेशेतुपुण्यवृक्षसमीपतः ॥ ४१ ॥ खनित्वादे वयजनंदंडमात्रप्रमाणतः ॥ प्रणवव्याहृतिभ्यांचप्रोक्ष्यचास्तीर्य्यचक्रमात् ॥ ४२ ॥ शमीपत्रैश्चसकुशैरुत्तराग्रांस्तदूर्ध्वतः ॥ आस्तीर्य्यदर्भांस्तत्पीठंचै लाजिनकुशोत्तरम् ॥ ४३ ॥ प्रणवेनब्रह्मभिश्चपंचगव्येनतांतनुम् ॥ प्रोक्ष्याभिषिच्यरौद्रेणसूक्तेनप्रणवेनच ॥ ४४ ॥ शंखतोयेनाभिषिच्यमूर्ध्निपुष्पंविनि

क्षिपेत् ॥ ओमित्यथसमुद्धृत्यस्वस्तिवाचनपूर्व्वकम्॥४५॥ गर्त्तेयोगासनेस्थाप्यप्राङ्मुखंस्याद्यथातथा ॥ गन्धपुष्पैरलंकृत्यधूपंगुग्गुलुनाततः ॥४६॥
विष्णोहव्यमितिप्रोच्यरक्षस्वेतिवदन्ददेत् ॥ दण्डंदक्षिणहस्तेतुवामेदद्यात्कमण्डलुम् ॥ ४७ ॥ प्रजापतेनत्वदेतान्यन्यमन्त्रेणसोदकम् ॥ ब्रह्मज
ज्ञानंप्रथममितिमन्त्रेणमस्तके ॥ ४८ ॥स्पृशञ्जप्त्वारुद्रसूक्तंभ्रुवोर्मध्येस्पृशञ्जपेत् ॥ मानोमहान्तमित्यादिचतुर्भिर्मस्तकंततः ॥ ४९ ॥ नालिकेरेण
निर्भिद्यादवटंपूरयेत्ततः ॥ ब्रह्मभिःपंचभिःस्पृष्ट्वाजेपत्स्थलमनन्यधीः ॥ ५० ॥ योदेवानामुपक्रम्ययःपरःसमहेश्वरः ॥ इतिजप्त्वामहादेवंसंसारभेषजंशिव
म् ॥ ५१ ॥ सर्व्वज्ञमपराधीनंसर्व्वानुग्राहकंपरम् ॥ एकारत्निसमुत्सेधमरत्निद्वयविस्तृतम् ॥ ५२ ॥ मृदापीठंप्रकल्प्याथगोमयेनोपलेपयेत् ॥ चतुर
स्रञ्चतन्मध्येगन्धाक्षतसमन्वितैः ॥ ५३ ॥ सुगन्धिकुसुमैर्बिल्वैस्तुलस्याचसमर्च्चयेत् ॥ प्रणवेनततोदत्त्वाधूपदीपौपयोहविः ॥ ५४ ॥ दत्त्वाप्रदक्षिणी
कृत्यनमस्कृत्यचपंचधा ॥ प्रणवंद्वादशावृत्त्यासञ्जप्यप्रणमेत्ततः ॥ ५५ ॥ दिग्विदिक्क्रमतोदद्याद्ब्रह्मार्घ्यंप्रणवेनच ॥ एवंदशाहपर्य्यन्तंविधिरेकादशेऽ
हनि ॥ ५६ ॥ सम्मार्ज्यवेदिमालिप्यकृत्वापुण्याहवाचनम् ॥ प्रोच्यपश्चिममारभ्यपूर्व्वान्तंपञ्चचक्रमात्॥५७॥मण्डलान्युत्तराशास्यःकुर्य्यात्स्वयमव
स्थितः ॥ प्रादेशमात्रंसंकल्प्यचतुरस्रञ्चमध्यतः ॥५८॥ बिन्दुत्रिकोणषट्कोणवृत्ताकाराणिचक्रमात् ॥ शंखञ्चपुरतःस्थाप्यपूजोक्तक्रममार्गतः ॥ ५९ ॥
प्राणानायम्यसंकल्प्यपूजयिष्येसुरेश्वरीः ॥ देवताःपञ्चपूर्व्वोक्ताआतिवाहिकरूपिणीः ॥ ६० ॥ सन्त्यज्योत्तरतोदर्भानपश्चसंस्पृशेत्ततः ॥ पश्चिमादिस
मारभ्यषडुत्थासनमार्गतः ॥ ६१ ॥मण्डलानिचतेष्वन्तःपुष्पाण्याधायपीठवत् ॥ ओंह्रीमित्युच्चार्य्याग्निरूपामातिवाहिकदेवताम् ॥ ६२ ॥ आवाहया
मिनमइत्यन्तंसर्व्वत्रभावयेत् ॥ स्थापनाद्यास्तुसंदर्श्यमुद्राःप्रत्येकमादरात् ॥ ६३ ॥ ह्रांह्रीमित्यादिनाकुर्य्यादासामङ्गानिचक्रमात् ॥ पाशाङ्कुशाभ
याभीष्टपाणिचन्द्रोपलप्रभाः॥६४॥रक्तांगुलीयकच्छायाराजिताखिलदिङ्मुखाः ॥ रक्ताम्बराधरकरपदपङ्कजशोभिताः ॥६५॥ त्रिनेत्रोल्लासिवदनपूर्णच
न्द्रमनोहराः ॥ माणिक्यमुकुटोद्भासिचन्द्रलेखावतंसिनीः ॥६६॥ कुण्डलामृष्टगण्डाश्चपीनोन्नतपयोधराः ॥ हारकेयूरकटककाञ्चीदाममनोहराः॥६७॥
तनुमध्याःपृथुश्रोण्योरक्तदिव्याम्बरावृताः ॥ माणिक्यमयमञ्जीरशिञ्जत्पदसरोरुहाः ॥६८॥ पादाङ्गुलीयकश्रेणीमंजुलातिमनोहराः ॥ अनुग्रहेणामूर्तेन
शिववत्किन्तुसाध्यते ॥६९॥ तस्माच्छक्त्यात्ममूर्त्तेनसर्व्वंसाध्यंमहेशवत् ॥ सर्व्वानुग्रहकर्त्र्यैवस्वीकृताःपञ्चमूर्त्तयः ॥७०॥ एवंध्यात्वातुताःसर्व्वाअनु
ग्रहपराःशिवाः ॥ पादयोःपाद्यमेतासांदद्याच्छङ्खोदबिन्दुभिः ॥ ७१ ॥ हस्तेष्वाचमनीयञ्चमौलिष्वर्घ्यंप्रदापयेत् ॥ शङ्खोदबिन्दुभिस्तासांस्नानकर्म्म
चभावयेत् ॥ ७२ ॥ रक्ताम्बराणिदिव्यानिसोत्तरीयाणिदापयेत् ॥ मुकुटादीन्यनर्घ्याणिदद्यादाभरणानिच ॥ ७३ ॥ सुवासितञ्चश्रीगन्धमक्षतांश्चा

तिशोभनान् ॥ सुरभीणिमनोज्ञानिकुसुमानिचदापयेत् ॥ ७४ ॥ धूपञ्चपरमामोदंसाज्यवर्त्तिञ्चदीपकम् ॥ सर्व्वंसमर्पयामीतिप्रणवंह्नीमुपक्रमात्
॥ ७५ ॥ नमोऽन्तञ्चततोदद्यात्पायसंमधुनायुतम् ॥ साज्यशर्करयापूपकदलीगुडपूरितम् ॥ ७६ ॥ प्रत्येकंकदलीपत्रेभरितञ्चसुवासितम् ॥ ॐभूर्भुवः
स्वरितिचप्रोक्षणादीनिकारयेत् ॥ ७७ ॥ ॐह्रीमितिसमुच्चार्य्यनैवेद्यंवह्निजायया ॥ पानीयंनमइत्युक्त्वासमर्प्योद्वास्यपूर्व्वतः ॥ ७८ ॥ स्थलं
विशोध्यगण्डूषाचमनार्घ्याणिदापयेत् ॥ ताम्बूलंधूपदीपौचप्रदक्षिणनमस्कृती ॥ ७९ ॥ विधायप्रार्थयेदेताःशिरस्यञ्जलिमादधत् ॥ श्रीमातरः
सुप्रसन्नायांताशिवपदैषिणम् ॥ ८० ॥ रक्षणीयंप्रभुवन्तु परमेशपदाब्जयोः ॥ इतिसम्प्रार्थ्यताःसर्व्वाविसृज्यचयथागतम् ॥ ८१ ॥ तासांप्रसादमुद्धृत्य
कन्यकाभ्यः प्रदापयेत् ॥ गवांवाजलमध्येवाविक्षिपेन्नान्यथाक्वचित ॥ ८२ ॥ अत्रैवपार्व्वणंकुर्य्यान्नैकोद्दिष्टंयतेःक्वचित् ॥ अत्रायंपार्व्वणश्राद्धेनियमः
प्रोच्यतेमया ॥ ८३ ॥ कर्त्तास्नात्वाधृतप्राणउपवीतीसमाहितः ॥ सपवित्रकरस्त्वस्यांपुण्यतिथ्यामितिब्रुवन् ॥ ८४ ॥ करिष्येपार्व्वणश्राद्धमितिसंक
ल्प्यचोत्तरे ॥ दत्त्वादर्भांतुपस्पृश्यसाभ्यङ्गकृतमज्जनान् ॥ ८५ ॥ आहूयचतुरोविप्रान्छिवभक्तान्दृढव्रतान् ॥ विश्वेदेवार्थेंभवताप्रसादःक्रियतामि
ति ॥ ८६ ॥ आत्मनेभवतापश्चादन्तरात्मनइत्यपि ॥ परमात्मनइत्येवंकृत्वावरणमादरात् ॥ ८७ ॥ पादौप्रक्षाल्यतेषान्तुप्राङ्मुखान्उपवेश्यच ॥ ग
न्धादिभिरलङ्कृत्यभोजयित्वाशिवाग्रतः ॥ ८८ ॥ गोमयेनोपलिप्यात्रदर्भान्प्रागग्रकाल्पितान् ॥ आस्तीर्य्यसंयतप्राणःपिण्डानाञ्चप्रदानकम् ॥८९॥
करिष्यइतिसंकल्प्यमण्डलत्रयमच्चर्य्यच ॥ आत्मानमन्तरात्मानंपरमात्मानमप्यतः ॥ ९० ॥ चतुर्थ्यन्तंवदन्पश्चादिदंपिण्डमितीरयन् ॥ ददामीतिच
सम्प्रोच्यदद्यात्पिण्डान्कुशोदकम् ॥ ९१ ॥ दत्त्वोत्थायविधायाथप्रदक्षिणनमस्कृती ॥ कृत्वादत्त्वाब्राह्मणेभ्योदक्षिणाञ्चयथाविधि ॥ ९२ ॥ नाराय
णबलिंकुर्य्यात्तस्मिन्नेवस्थलेदिने ॥ रक्षार्थमेवसर्व्वत्रविष्णोःपूजाविधिःस्मृतः ॥ ९३ ॥ कुर्य्याद्विष्णोर्महापूजांपायसान्नंनिवेद्यच ॥ द्वादशाथसमाहूयब्रा
ह्मणान्वेदपारगान् ॥९४॥ केशवादिभिरभ्यच्चर्य्यगन्धपुष्पाक्षतादिभिः ॥ उपानच्छत्रवस्त्रादिदत्त्वातेभ्योऽथभूतले ॥ ९५ ॥ आस्तीर्य्यदर्भान्पूर्व्वाग्रान्भूः
स्वाहाचभुवःसुवः ॥ प्रणवादिसमुच्चार्य्यपायसान्नंबलिंहरेत् ॥९६॥ द्वादशाहेसमुत्थायप्रातःस्नात्वाकृताह्निकः॥ शिवभक्तान्यतीन्वापिब्राह्मणान्वाशिवप्रि
यान्॥९७॥निमन्त्र्यतान्समाहूयमध्याह्नेऽभ्यज्यचाप्लुतान् ॥ सन्निधौपरमेशस्यपञ्चावरणमार्गतः॥९८॥सम्पूज्यतस्यसंस्थाप्यप्राणानायम्यचत्रिधा॥महा
संकल्पमार्गेणसंकल्प्यास्मद्गुरोरिह॥९९॥पूजांकरिष्यइत्युक्त्वाततोदर्भांनुपस्पृशेत् ॥ पादौप्रक्षाल्यचाचम्यस्वयंकर्त्ताचवाग्यतः॥१००॥ तानासनेषु
संस्थाप्यप्राङ्मुखान्भस्मभूषितान् ॥ सदाशिवादिक्रमतोध्यात्वाष्टौतत्रचेतरान् ॥ १०१ ॥ गुरुंचपरमंतस्मात्परात्परगुरुंततः ॥ परमेष्ठिगुरुंध्यात्वा

साम्बबुद्ध्यास्वनामतः ॥ १०२ ॥ इदमासनमित्युक्त्वाचासनानिसमर्पयेत् ॥ प्रणवादिद्वितीयान्तंस्वस्वनामसमुच्चरन् ॥ १०३ ॥ आवाहयामिनम
इत्यावाह्यार्घोदकेनतु ॥ पाद्यमाचमनंचार्घ्यंवस्त्रगन्धाक्षतानपि ॥ १०४ ॥ दत्त्वापुष्पैरलंकृत्यप्रणवाद्यैःस्वनामभिः ॥ सचतुर्थीनमोऽन्तैश्चसुगन्धिकुसु
मैस्ततः ॥ १०५ ॥ धूपदीपौप्रदत्त्वाचसकलाराधनंकृतम् ॥ सम्पूर्णमस्त्वितिप्रोच्यनमस्कृत्यसमुत्थितः ॥ १०६ ॥ पात्राणिकदलीपत्राण्यास्ती
र्य्याद्भिर्विशोध्यच ॥ शुद्धान्नपायसापूपसूपव्यञ्जनपूर्व्वकान् ॥ १०७ ॥ दत्त्वापदार्थान्कदलीनालिकेरगुडान्वितान् ॥ पात्रासनानिचपृथग्दत्त्वासम्प्रो
क्ष्यचक्रमात् ॥ १०८ ॥ परिषिच्यचसम्प्रोक्ष्यविष्णोहव्यामीतिब्रुवन् ॥ रक्षस्वेतिकरस्पर्शंकारयित्वासमुत्थितः ॥ १०९ ॥ आपोऽशनंसमर्प्याथप्रा
र्थयेत्तानिदंप्रति ॥ सदाशिवादयःप्रीतावरदाश्चभवन्तुमे ॥ ११० ॥ येदेवाइतिचततोजप्त्वेदंसाक्षतंत्यजेत् ॥ नमस्कृत्यसमुत्थायसर्व्वत्रामृतमस्त्वि
ति ॥ १११ ॥ उक्त्वाप्रसाद्यचजपेद्व्रणानांत्वेत्युपक्रमात् ॥ वेदादीन्रुद्रचमकौरुद्रसूक्तंचपञ्चच ॥ ११२ ॥ ब्रह्माणिभोजनान्तंचयावन्मन्त्रांश्च
शाङ्करान् ॥ दत्त्वोत्तरापोऽशानंचहस्ताङ्घ्रिमुखशोधनम् ॥ ११३ ॥ कृत्वाचान्तांश्चासनेषुस्थापयित्वायथासुखम् ॥ शुद्धोदकंप्रदत्त्वाथ
कर्पूरादियथोचितम् ॥ ११४ ॥ मुखवासंदाक्षिणांचपादुकामातपत्रकम् ॥ व्यजनंफलकान्दण्डंवैणवंचप्रदायतान् ॥ ११५ ॥ प्रदक्षिणनम
स्कारैःसन्तोष्याशिषमावहम् ॥ पुनःप्रणम्यसम्प्रार्थ्यगुरुभक्तिमचञ्चलाम् ॥ ११६ ॥ सदाशिवादयःप्रीतागच्छन्तुचयथासुखम् ॥ इत्यु
द्वास्यद्वारदेशावधिसम्यगनुव्रजन् ॥ ११७ ॥ निरुद्धस्तैःपरावृत्यद्वाःस्थैर्विप्रैश्चबन्धुभिः ॥ दीनानाथैश्चसहितोभुक्त्वातिष्ठेद्यथासुखम् ॥ ११८ ॥ प्रत्यब्दमे
वंकुर्व्वाणोगुर्व्वाराधनमुत्तमम् ॥ इहभुक्त्वामहाभोगाञ्छिवलोकमवाप्नुयात् ॥ ११९ ॥ सूतउवाच ॥ एवंकृतानुग्रहमात्मशिष्यंश्रीवामदेवंपुनराहदेवः ॥
यन्नैमिषारण्यमुनीश्वराणांप्रोक्तंपुराव्यासमुनीश्वरेण ॥ १२० ॥ तस्मादसावादिगुरुर्भवांस्तुद्वितीयआर्य्योभवतोमुखाब्जात् ॥ श्रुत्वामुनीन्द्रस्तुसनत्कु
मारःशुकायवक्ताभविताचभूमौ ॥ १२१ ॥ प्रत्येकंमुनिशार्दूलशिष्यवर्गचतुष्टयम् ॥ वैशम्पायनएवस्यात्पैलोजैमिनिरेवच ॥ १२२ ॥ सुमन्तुश्चेतिचत्वारो
व्यासशिष्यामहौजसः ॥ अगस्त्यश्चपुलस्त्यश्चपुलहःक्रतुरेवच ॥ १२३ ॥ तवशिष्यामहात्मानोवामदेवमहामुने ॥ सनकश्चसनन्दश्चसनातनमुनिस्ततः
॥ १२४ ॥ सनत्सुजातइत्येतेयोगिवर्य्याःशिवप्रियाः ॥ सनत्कुमारशिष्यास्तेसर्व्ववेदार्थवित्तमाः ॥ १२५ ॥ गुरुश्चपरमश्चैवपरात्परगुरुस्ततः ॥ पर
मेष्ठिगुरुश्चैतेपूज्याःस्युःशुकयोगिनः ॥ १२६ ॥ इदंप्रणवविज्ञानंस्थितंवर्गचतुष्टये ॥ १२७ ॥ एतन्मण्डलमद्भुतंपरशिवाधिष्ठानरूपंसदावेदान्तार्थ
विचारपूर्णमतिभिःपूज्यंयतीन्द्रैःपरम् ॥ वेदादिप्रविभागकल्पितमहाकाशादिनाप्यावृतंत्वत्सन्तोषकरंतथास्तुजगतांश्रेयस्करंश्रीप्रदम् ॥ १२८ ॥
इदंरहस्यंपरमंशिवोदितंवेदान्तसिद्धान्तविनिश्चितंपरम् ॥ मत्तः श्रुतंयद्भवताततोमुनेभवन्मतंप्राज्ञतमावदन्ति ॥ १२९ ॥ तस्मादनेनैवपथागतःशिवं

शिवोऽहमस्मीतिशिवोभवेद्यतिः ॥ पितामहादिप्रविभागमुक्तयो नद्योयथासिन्धुमिमाःप्रयान्ति ॥ १३० ॥ सूतउवाच ॥ एवंमुनीश्वरायैतदुपदिश्यसुरे
श्वरः ॥ स्मृत्वाश्रीचरणाम्भोजंपित्रोःसर्व्वसुरार्चितम् ॥ १३१ ॥ कैलासशिखरंप्रापकुमारःशिखरावृतम् ॥ वामदेवोऽपिसच्छिष्यैःसंवृतःशिखिवाहन
म् ॥ १३२ ॥ गत्वाकैलासशिखरंदृष्ट्वाचरणमीशयोः ॥ भक्त्यावेपितसर्वाङ्गोविस्मृत्यस्वकलेवरम् ॥ १३३ ॥ पपातसन्निधौभूयोनत्वानत्वासमुत्थि
तः ॥ स्तुत्वाबहुविधैःस्तोत्रैर्वेदागमरसोत्कटैः ॥ १३४ ॥ निधायचरणाम्भोजंदेवदेव्योःस्वमूर्द्धनि ॥ पूर्णानुग्रहमासाद्यतत्रैवन्यवसत्सुखम् ॥ १३५ ॥
भवन्तोऽपिविदित्वैवंप्रणवार्थमहेश्वरम् ॥ अत्रैवसुखमासीनाःश्रीविश्वेश्वरपादयोः ॥१३६॥ सायुज्यरूपामतुलांभजध्वंमुक्तिमुत्तमाम् ॥ अहंगुरुपदाम्भो
जसेवायैबादराश्रमम् ॥ १३७॥ गमिष्येभवतांभूयःसत्सम्भाषणमस्तुमे ॥ इतिवश्वसमाख्यातंयत्पृष्टोऽहंमुनीश्वराः ॥१३८॥ पुराणंरुद्रसाहस्रंशिवसंज्ञं
शिवप्रदम् ॥ सर्व्वपापप्रशमनंसर्व्वारिष्टनिवारणम् ॥ १३९ ॥ सर्वाभीष्टप्रदंनृणांपरत्रेहचसौख्यदम् ॥ एतच्छ्रुत्वाचतेसर्व्वेआनन्दंपरमंगताः ॥ १४०॥
हर्षगद्गदयावाचाप्रणेमुस्तंपुनःपुनः ॥ अस्माकंचेतसोभ्रान्तिर्गतावैकृपयातव ॥ १४१॥ तच्छ्रुत्वाचपुनर्वाक्यमुवाचऋषिसत्तमान् ॥ व्यासशिष्यस्तदु
क्तंहिकथयामासतांस्तदा ॥ १४२ ॥ नास्तिकायनवक्तव्यंश्रद्धाहीनायवैसदा ॥ अभक्तायनवाच्यंहिनचाशुश्रूषवेतथा ॥ १४३ ॥ अष्टादशपुराणानि
इतिहासान्यनेकशः ॥ वेदार्थाश्चाप्यनेकांश्चविचार्य्यचपुनःपुनः ॥ १४४ ॥ सारमेतत्समुद्धृत्यव्यासेनपरिभाषितम् ॥ अभक्तोभक्तिमाप्नोतिभक्तेभक्तिश्च
वर्द्धते ॥ १४५ ॥ एकवारंश्रुतवतःपापंनिर्भस्मतांव्रजेत् ॥ पुनःश्रुतेचतद्भक्तिर्जायतेपुरुषस्यहि ॥ १४६ ॥ पुनःश्रुतेविवृद्धिःस्याद्भक्तेश्चैवनसंशयः ॥
पुनःश्रुतेशिवंसाक्षात्पश्यन्तिज्ञानचक्षुषः ॥ १४७ ॥ पुनःश्रुतेसोऽहमितिपश्यन्तीतिसुनिश्चितम् ॥ तस्मात्पुनःपुनःश्राव्यंभुक्तिमुक्तिफलेप्सुभिः ॥
॥ १४८ ॥ पञ्चावृत्तिःप्रकर्त्तव्याव्यासस्यवचनंत्विदम् ॥ यदुद्दिश्यफलंश्रेष्ठंतत्प्राप्नोतिसुनिश्चितम् ॥ १४९ ॥ नदुर्लभंभवेत्तस्ययेनेदंश्रुतमुत्तमम् ॥
इत्युक्तास्तेमुनिश्रेष्ठाःशुश्रुवुःपरयामुदा ॥ १५० ॥ पञ्चकृत्वस्तुतच्छ्रुत्वालब्ध्वाचशिवदर्शनम् ॥ पुरातनाश्चमुनयःसिद्धिंचपरमांगताः ॥ १५१ ॥
इत्यवंपञ्चशःश्रुत्वाह्यानन्दंपरमंगताः ॥ तत्रैवपूजयामासुर्नानावस्त्रैःसुशोभनैः ॥ १५२ ॥ चन्दनैःसुविचित्रैश्चनानालंकरणैस्तथा ॥ नमस्कारैःस्तवैश्चै
वस्वस्तिवाचनपूर्व्वकम् ॥ १५३ ॥ आशीर्भिर्विविधैश्चैववर्द्धयामासुरञ्जसा ॥ सन्तुष्टाश्चैवतेसर्व्वेसन्तुष्टःसूतएवच ॥ १५४ ॥ परस्परंचसन्तुष्टाः
शिवभक्तिपरायणाः ॥ एतदेवपरंमत्वानमन्तिचभजन्तिच ॥ १५५ ॥ एवंयःशृणुयादत्रसर्व्वान्कामानवाप्नुयात् ॥ अन्तेभक्तिंपरांप्राप्यमुक्तिंवैप्रा
प्नुयात्पुनः ॥ १५६ ॥ शिवेभक्तिःशिवेभक्तिःशिवेभक्तिर्भवेभवे ॥ १५७ ॥ ॥ इति श्रीशिवेमहापुराणेकैलाससंहितायां द्वादशोऽध्यायः ॥ १२ ॥

समाप्तेयं कैलाससंहिता तृतीया ॥ ३ ॥

इयं शिवपुराणान्तर्गता तृतीयासंस्कृता कैलाससंहिता मुम्बय्यां श्रीकृष्णदासात्मजेन खेमराजेन स्वकीये " श्रीवेंकटेश्वर " मुद्रायन्त्रालयेऽङ्कित्वा प्रकाशिता।

संवत् १९५२ शके १८१७ सन् १८९५.

॥ श्रीगणेशायनमः ॥ ॐनमोभगवतेवासुदेवाय ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ १ ॥ प्रपद्येदेवमी
शानंसर्व्वज्ञमपराजितम् ॥ सम्भवंसर्व्वभूतानामनादिंविश्वतोमुखम् ॥ १ ॥ वेदादौयःस्वरःप्रोक्तओङ्काराख्योमहेश्वरः ॥ सृजतेसर्व्वभूतानिपञ्चभूतैः
सदाशिवः ॥ २ ॥ सांख्यानांपरमंयोगंव्रतैःपाशुपतैस्तथा ॥ सर्व्वज्ञानस्यकर्त्तारमादिदेवमुमापतिम् ॥ ३ ॥ सृजतेभगवान्देवोमूर्त्तित्रयविकारजान् ॥
रक्षार्थंसर्व्वजन्तूनांत्रिधात्मानंसृजत्यजः ॥ ४ ॥ ससंज्ञयातुभगवानेकएवमहेश्वरः ॥ त्रैलोक्यहितकारार्थीनित्यमुक्तःशिवोऽव्ययः ॥ ५ ॥ प्रज्वलन्तं
महाशूलंघोररूपंमहाशनिम् ॥ नानाक्रीडनकैर्देवःक्रीडतेयोगमायया ॥ ६ ॥ दयितार्द्धवपुःकृत्वानृत्यारम्भेस्थितोहरः ॥ जगत्स्थितिंचकुरुतेलोक
स्यानुग्रहंशिवः ॥ ७ ॥ तस्यचिन्ताप्रभावेननतस्यविदितंजगत् ॥ तद्वत्त्यासम्प्रवक्ष्यामिपुराणंशिवभाषितम् ॥ ८ ॥ नैमिषस्थाश्रमपदेपुण्यंपूर्व्वं
मयोदिते ॥ पराशरस्यदायादःश्रीमान्सत्यवतीसुतः ॥९॥ ब्रह्मर्षिःसचधर्म्मात्माकालयोगविदांवरः ॥ गुरुर्लोकस्यधर्म्मात्माब्रह्मचारीतपोनिधिः॥१०॥
ऋषिसङ्घैःपरिवृतःश्रुतैरिवपितामहः ॥ भारतेशतसाहस्र्यांसंहितायांकवीश्वरः ॥ ११ ॥ देवोयोब्रह्मणाप्रोक्तंब्रह्मैवपुनरन्यथा ॥ चतुर्द्धाव्यस्यमतिमा
ञ्छिष्यांश्चाध्यापयत्पृथक् ॥ १२ ॥ तेषांसुखोपविष्टानांकथांकथयतांपराम् ॥ तत्रचाध्यात्मधर्म्मात्माब्रह्मणस्तनयःशुभः ॥ १३ ॥ अनुग्रहार्थमृषीणां
दर्शनंकृतवानृषिः ॥ सददर्शसुखासीनान्ब्रह्मर्षीनमितौजसः ॥ १४ ॥ प्रतिजग्राहविधिवत्सचापिमुनिपुङ्गवः ॥ अर्घ्यमाचमनीयंचतेषांदत्तंचधर्म्मवित्
॥ १५ ॥ ततःसम्पूजयामासब्रह्मर्षीन्संशितव्रतान् ॥ विधिनाब्रह्मणोक्तेनभगवान्ब्रह्मणःसुतः ॥ १६ ॥ अनुज्ञातश्चतैःसर्व्वैरुपविष्टःकुशासने ॥ पृष्टस्तु
ऋषिभिस्तत्रब्रह्मपुत्रोमहामुनिः ॥ १७ ॥ लिङ्गार्च्चनविधिश्चैवदेवदेवस्यपूजनम् ॥ प्रासादस्यचयत्पुण्यंदेवदेवस्यधीमतः ॥ १८ ॥ संवत्सरस्ययत्पू
जांशिवस्यपरमंफलम् ॥ आवर्त्तकविधिश्चैवपुनरावर्त्तकंतथा ॥ १९ ॥ मूर्तीनांतुविभागस्यमन्त्रस्यपरमंविधिम् ॥ स्थानानिद्यष्टावस्यापिरुद्रस्यतुम
हात्मनः ॥ २० ॥ उपविष्टैस्तुभगवान्योगीशोब्रह्मणःसुतः ॥ तपोवेशानुरूपेषुआसनेषुयथायथम् ॥ २१ ॥ सनत्कुमारस्तैःसर्वैर्दिवाकरसमप्रभैः ॥
विराजत्यधिकंब्रह्मातैश्चब्रह्मर्षिभिःसदा ॥ २२ ॥ सतांमध्येचधर्म्मात्माभगवान्सूक्ष्मयोगवित् ॥ कृताञ्जलिपुटाःसर्व्वेऋषयस्तमथाब्रुवन् ॥ २३ ॥
इति श्रीशैवेमहापुराणेसनत्कुमारसंहितायां प्रथमोऽध्यायः ॥ १ ॥ ऋषयऊचुः ॥ त्वत्तश्चश्रोतुमिच्छामस्त्वत्रपुण्यंसनातनम् ॥ शैवंपुराणंदेवस्ययद्वृ
त्तंतद्ब्रवीहिनः ॥ १ ॥ नहिकिञ्चिदविदितंत्रैलोक्यज्ञानवानसि ॥ सएवमुक्तस्तैर्विप्रैर्ब्रह्मपुत्रोऽब्रवीत्तदा ॥ २ ॥ सनत्कुमारउवाच ॥ शैवंपुराणंभवंतःशृ
णुध्वंद्विजसत्तमाः ॥ मयोच्यमानंतत्त्वेनदेवगुह्यंसनातनम् ॥३॥ यच्छ्रुत्वानिर्म्मलाःसन्तस्तच्चित्तास्तत्परायणाः ॥ भवन्तिभावितात्मानःकृतकृत्याविशे

पतः ॥४॥ धन्यंयशस्यमायुष्यंस्वर्ग्यमारोग्यमेवच॥स्वर्गकामप्रदंपुण्यंपुराणंवेदसम्मितम् ॥५॥ कीर्त्तनंदेवदेवस्यहरस्यपरमंशिवम् ॥ पावनंश्रद्दधानाना
मिहलोकेपरत्रच ॥६॥ प्रकृत्यार्थाधिकारेणप्रधानपुरुषेश्वरम् ॥ कीर्त्तयिष्यामिवोविप्राःपुराणंशिवभाषितम् ॥७॥ श्रुतंपुरामयाव्यासाद्देवदेवस्यधीमतः॥
यदहंतत्प्रवक्ष्यामियथापूर्व्वंश्रुतंमया ॥ ८ ॥ नशक्यंविस्तराद्वक्तुमपिवर्षशतैरपि ॥ संक्षेपाच्चैववक्ष्यामिपृथिव्यादियथातथा ॥ ९ ॥ ब्रह्मविष्णुसमुत्प
त्तिसंवादंहरिब्रह्मणोः ॥ सप्तद्वीपस्यचाख्यानंवर्षाणांचतथैवच ॥ १० ॥ अधस्तादथचोर्द्ध्वंचचन्द्रसूर्य्यग्रहादिच ॥ सनत्कुमारविक्रान्तंरुद्रस्यविहि
तंकृतम् ॥ ११ ॥ आराधितंमहादेवंब्रह्मणस्तनयेनतु ॥ वरदानेनसम्बन्धोमुनिशिष्यसमागमः ॥ १२ ॥ भवनंमेरुशृङ्गस्यब्रह्मविष्णुमहेश्वरान् ॥ विभी
षणस्यसंवादंरुद्रस्यचमहात्मनः ॥१३॥ सर्व्वतीर्थफलंपुण्यंशिवलिङ्गस्यपूजनम् ॥ शिवलिङ्गसमुत्पत्तिंलिङ्गेप्रलयमेवच ॥ १४ ॥ लिङ्गार्च्चनविधिंचैवदे
वस्यपूजनंतथा ॥ प्रासादस्यचयत्पुण्यंमहादेवस्यधीमतः ॥१५॥ संवत्सरस्ययत्सूक्ष्मंशिवस्यपरमंफलम् ॥ आवर्त्तनविधिंचैवपुनरावर्त्तिकंतथा॥१६॥
मूर्त्तीनांप्रविभागेनरुद्रस्यपरमंविधिम् ॥ स्थानादिज्यैष्ठचमस्यापिरूपस्यतुमहात्मनः ॥ १७ ॥ शिवस्यपरमंदिव्यंतत्त्वंचपरमात्मनः ॥ देवस्यचपवि
त्रंतुगुह्यञ्चैवतथाष्टकम् ॥१८॥ लिङ्गोद्भवश्चदेवस्यब्रह्मविष्णवोश्चमोहनम् ॥ लिङ्गसंस्थापनेपुण्यंपुष्पदानस्ययत्फलम् ॥ १९ ॥ धूपस्यचविधिश्चैवमासा
नाञ्चपरंफलम् ॥ अनाशकविधिश्चैवदानस्यविधिमुत्तमम् ॥ २० ॥ चतुर्द्दश्यामथाष्टम्यांविधानेविहितेफलम् ॥ नामाष्टमीविधानंचतथावैलक्षणाष्ट
मीम् ॥ २१ ॥ विभूतिंदेवदेवस्यईश्वरस्यचधीमतः ॥ शौचाचारविधिंप्रोक्तंयोगस्यविधिमुत्तमम् ॥ २२ ॥ योगनाड्यास्तथाख्यानंमयाप्रोक्तंपुरातनम् ॥
अविमुक्तस्यमाहात्म्यंतथाचोङ्कारवर्णनम् ॥ २३ ॥ यज्ञेश्वरस्यमाहात्म्यंतथातीर्थानुवर्णनम् ॥ भगवदाराधनंनन्देस्तथानन्द्यभिषेचनम् ॥२४॥ नील
कण्ठस्यमाहात्म्यंत्रिपुरस्यतथावधः ॥ वासुदेवस्यमाहात्म्यंविधानञ्चैवतस्यच॥२५॥सर्व्वधर्म्मंहरस्यापिमहादेवस्यकीर्त्तनम्॥ज्ञानप्रशंसनञ्चैवमोक्षंपर
मसम्पदम् ॥ २६ ॥ इतिसंग्रहणंप्रोक्तंतथावस्तुपरिग्रहम् ॥ इदानींविस्तरंचित्रंविभागंरूपमैश्वरम् ॥ २७ ॥ आसीत्तमोमयंसर्व्वमप्रज्ञातमलक्षणम् ॥
तत्ररक्तोमहायोगीरुद्रःपरमकारणम् ॥ २८ ॥ आत्मनासर्व्वमात्मानंसञ्चिन्त्यभगवान्हरः ॥ मनःसंसृजतेपूर्व्वमहङ्कारन्तुपृष्ठतः ॥ २९ ॥ अहङ्कारात्प्र
जातानिमहाभूतानिपञ्चच ॥ अष्टौप्रकृतयःप्रोक्ताविकाराश्चैवषोडश ॥ ३० ॥ शब्दःस्पर्शश्चरूपञ्चरसोगन्धस्तथैवच ॥ प्राणोऽपानःसमानश्चउदानो
व्यानएवच ॥ ३१ ॥ सत्त्वंरजस्तमश्चैवगुणाःप्रोक्तास्तुतेत्रयः ॥ तस्माद्भगवतोब्रह्मातस्माद्विष्णुरजायत ॥ ३२ ॥ ब्रह्मविष्णवोर्मोहनार्थंततःसम्भवातम
हान् ॥ अशरीरोमहादेवोअनुत्पत्तिरयोनिजः ॥३३॥ व्यामोहयित्वातत्सर्व्वंतेजसामोहितंजगत् ॥ तस्मात्परतरंनास्तिनास्तितस्मात्परंशिवम् ॥३४॥

ब्रह्माविष्णुश्चद्वावेताबुद्भूतौशंकराच्चुतौ ॥ कल्पेकल्पेतुतत्सर्व्वंसृजतोमोहयञ्जगत् ॥ ३५ ॥ तपसाहरतेचैवनानाभूतानिसर्व्वशः ॥ एकसप्त
तियुगान्येवमन्वन्तरइतिस्मृतः ॥ ३६ ॥ चतुर्दशतुतान्येवकल्पमेकंविधीयते ॥ दिनैकंब्रह्मणःप्रोक्तंनिशाकल्पस्तथोच्यते ॥ ३७ ॥ एवंमासश्चवर्षं
चतथावर्षशतंद्विजाः ॥ एवमादिपरार्द्धान्तोहरस्यानिमिषःस्मृतः ॥ ३८ ॥ ब्रह्मादिस्तम्बपर्य्यन्तंनिमिषश्चमहेश्वरः ॥ निमिषंजीवितंसर्व्वंचन्द्रादी
नांग्रहैःसह ॥ ३९ ॥ निमिषार्द्धप्रसुप्तस्यदैवतैर्ऋषिभिःसह ॥ एवंविश्वमिदंसर्व्वंसप्तलोकंचराचरम् ॥ ४० ॥ भूर्लोकोऽथभुवर्लोकःस्वर्लोकश्चम
हस्तथा ॥ जनस्तपश्चसत्यंचब्रह्मलोकश्चसप्तमः ॥ ४१ ॥ पातालंसुतलंतालंवितलंतलमेवच ॥ पंचमंविद्धिपातालंरुक्मसौवर्णिकंस्मृतम् ॥ ४२ ॥
सप्तमंशर्कराभूमिरष्टमंविजयंस्मृतम् ॥ एतेषुधर्म्मप्रख्याताअष्टौपातालवासिनः ॥ ४६ ॥ एषामादौचमध्येचअन्तेरुद्रःप्रकीर्त्तितः ॥ एवंप्रकुरुतेलोका
न्क्रीडार्थन्तुमहेश्वरः ॥ ४४ ॥ ब्रह्मलोकपरीमाणगतिरूर्द्ध्वंविवर्णिता ॥ पृथिवीचान्तरिक्षंचदिशश्चविदिशस्तथा ॥ ४५ ॥ समुच्चयंगिरीणाञ्चअनुक्रमण
संख्यया ॥ समुद्राणाञ्चविस्तारंप्रमाणंचतथाशृणु ॥ ४६ ॥ स्थावराणांचराणाञ्चदेवानांचदिवौकसाम् ॥ चतुष्पादद्विपादानांधार्म्मिकान्कर्म्ममो
क्षकान् ॥ ४७ ॥ सहस्रगुणमाख्यातंस्थावराणांप्रकीर्त्तितम् ॥ सहस्रंपादहीनाश्चइत्याहभगवाञ्छिवः ॥ ४८ ॥ महेश्वरःपरस्तेषांसर्व्वेषांदेवमानुषात् ॥
एवंसंख्यात्रसंख्यातासर्व्वज्ञेनस्वयम्भुवा ॥४९॥एषांमाहेश्वरंज्ञानंभक्तिमन्त्रैःप्रकीर्त्तितम् ॥ सर्व्वकर्म्मसुवर्त्तन्तेयतस्तुशिवमव्ययम् ॥ ५० ॥ एकंज्ञानं
नमस्यन्तिअभूतंभूतसंज्ञकम् ॥ निर्गुणंनिर्म्मलंज्ञानंशङ्करेणप्रचोदितम् ॥ ५१ ॥ ऋषीणांश्रोतुकामानांभक्तानांचदृढव्रत ॥ श्रावितंज्ञानसर्व्वस्वंपुरा
णेषुचगीयते ॥ ५२ ॥ ततोज्ञानंपरंश्रेष्ठंप्रोक्तमीशेनधीमता ॥ ब्राह्मणानांहितार्थायसर्व्ववर्णेविशेषतः ॥ ५३ ॥ यथासम्भवतिज्ञानंतथाईशःप्रवर्त्तते ॥
अहमादिश्चमध्यश्चअहश्चान्तेचसंस्थितः ॥ ५४ ॥ क्रीडार्थमीहतेव्यासउत्पन्नमतिरव्ययः ॥ एकएवशिवस्तत्रतस्मात्कालोयथाभवत् ॥ ४५ ॥
कालएवहितत्सर्व्वंकालादन्योनविद्यते ॥ ततःकालोहिभगवान्सोऽभिध्यायशिवाज्ञया ॥ ५६ ॥ सृष्टिन्तुप्रथमंकुर्व्वन्प्रकृतिंनामनामतः ॥ तस्माद्ब्रह्मा
प्रकृत्यास्तुउत्पन्नःसहविष्णुना ॥ ५७ ॥ ततःस्वमुखतोब्रह्माब्राह्मणान्समकल्पयत् ॥ पादहीनान्क्षत्रियांश्चतस्माद्धीनांस्तुवैश्यकान् ॥ ५८ ॥ चतुर्थ
पादहीनांश्चआचारैश्चवहिष्कृतान् ॥ समुद्रान्पर्व्वतान्ब्रह्माचोद्यमानःशिवेनवै ॥ ५९ ॥ पृथिवींचान्तरिक्षंचदिशश्चैवमकल्पयत् ॥ लोकालोकस्यसंख्या
नंद्विपदासुदधेस्तथा ॥६०॥ सरितांसागराणांचतीर्थान्यायतनानिच ॥ विद्युत्स्तनितनिर्घोषरोहितेन्द्रधनूंषिच ॥६१॥ उल्कानिपातंकेतुंचज्योतिषांपत
नान्यपि ॥ सस्वेदजसहस्राणियूकामक्षिकमत्कुणान् ॥ ६२ ॥ एवंसर्व्वार्थस्रष्टावैचोद्यमानःशिवेनवै ॥ उत्पन्नंचैवतत्सर्व्वंभूयःकालेनपीड्यते । ६ ॥

व्यासउवाच ॥ कथंब्रह्मासमुत्पन्नःकथंसृष्टिःप्रवर्त्तते ॥ कथंभूमिधरोदेवःकथंब्रह्मत्वमागतः ॥ ६४ ॥ सनत्कुमारउवाच ॥ आसीत्तमोमयंचैतन्नप्रा
ज्ञायतकिंचन ॥ ततःशिवोमहादेवोयोगधृक्सतुसर्वशः ॥ ६५ ॥ क्रीडार्थमभियुक्तश्चतेजोगुह्यमकल्पयत् ॥ तत्तेजोवह्निमाधत्तआत्मनाचैवसंस्थि
तम् ॥ ६६ ॥ तस्मात्पृथ्वीत्वमापन्नंतस्मादापस्ततोभुवः ॥ तस्मात्कालत्वमापन्नोयस्यभासातुबोध्यते ॥ ६७ ॥ तत्तमोदारयामासआपोभूत्वातुश
ङ्करः ॥ तस्मात्तुतेजसाचैववायुनाचसदाक्षिपन् ॥ ६८ ॥ तस्मादण्डसमुत्पत्तिस्ततोनारायणःस्मृतः ॥ अपाश्चाग्नेश्चसंयोगादग्निस्तेजश्चसम्भवः ॥
॥ ६९ ॥ वायोरपिविकुर्व्वाणादाकाशमभवत्तदा ॥ संघातश्चाभवत्पृथ्वीएषामाहेश्वरीतनुः ॥ ७० ॥ अत्रप्रविश्यहिजलंनिमिषार्धप्रमाणतः ॥
ततोब्रह्मासमुत्पन्नोअद्भिर्नारायणःस्मृतः ॥ ७१ ॥ ततोऽण्डमभवद्धैमंसहस्रादित्यसम्प्रभम् ॥ तस्मिन्नण्डेसभगवानुषित्वापरिवत्सरान् ॥ ७२ ॥
ततोवैब्राह्मणोजज्ञेकालेकालेनचोदितः ॥ अथव्योमदिशश्चाष्टौअपांस्थानंचशाश्वतम् ॥ ७३ ॥ ततःसकालमध्येतुसोऽथसृष्टिमथाकरोत् ॥ ७४ ॥
इति श्रीशैवेमहापुराणेसनत्कुमारसंहितायां द्वितीयोऽध्यायः ॥ २ ॥ सनत्कुमारउवाच ॥ अव्यक्तंमहदुत्पन्नंब्रह्माण्डममितौजसम् ॥ महतस्तुततो
ब्रह्मातस्माद्ब्रह्माण्डतांगतः ॥ १ ॥ समुद्रास्तस्यरुधिरमाकाशमुदरंतथा ॥ पवनश्चैवनिश्वासस्तेजोऽग्निर्निम्नगारसः ॥ २ ॥ आकाशतम
सौश्रोत्रेचन्द्रार्कौनयनौस्मृतौ ॥ ऊरूचैवाभवन्मेरुर्वक्षस्तस्यतुमेदिनी ॥ ३ ॥ पृथिव्यन्तेसमुद्राश्चसमुद्रान्तेतमःस्मृतम् ॥ तमसोऽन्तेऽग्निरुत्पन्नो
जलंप्राहुर्मनीषिणः ॥ ४ ॥ रसातलान्तेसलिलंतस्यान्तेपन्नगाधिपाः ॥ तदन्तेपुनराकाशंतस्याप्यन्तेपुनर्जलम् ॥ ५ ॥ जलस्यान्तेतमःप्राहुस्त
मसोऽन्तेऽग्निरेवच ॥ तेजसोऽन्तेतदापृथ्वीपृथ्वीसप्तभिरावृता ॥ ६ ॥ अण्डस्यधारणात्सद्मंमहतश्चमहात्मनः ॥ एवंब्रह्माण्डमित्युक्तंमहाधारणमु
च्यते ॥ ७ ॥ योयथायस्ययोनित्वेतंप्रवक्ष्याम्यशेषतः ॥ आपोनरेणवैसृष्टाआपोवैनरसूनवः ॥ ८ ॥ तायदस्यायनंपूर्व्वंतेननारायणःस्मृतः ॥ द्वावेतौ
पुरुषौलोकेक्षरश्चाक्षरएवच ॥ ९ ॥ कल्पेकल्पेतथातीतेयुगसाहस्रसंख्यया ॥ तदालोकास्ततोजीवाःसत्त्वाःपंचात्मकाःस्मृताः ॥ १० ॥ जरायुजाण्ड
जोद्भिज्जाःस्वेदजाश्चचतुर्विधाः ॥ अष्टविधादेवयोनिर्मानुषास्त्वेकविधया ॥११॥ मानुष्यंचैकविधन्तुचातुर्वर्ण्यमनेकधा ॥ पृथिवीचान्तरिक्षश्चत्रिदिवं
भुवनंस्मृतम् ॥ १२ ॥ पृथिव्यास्तुपरीमाणेभूयस्तुल्योविधिःस्मृतः ॥ समुद्राःसरितश्चैवसचराचरमेवच ॥ १३ ॥ एकंचदिव्यंभुवनंत्रिधादेवैरुपास्य
ते ॥ एकन्तुकोट्याविख्यातमेवंत्रिभुवनंमतम् ॥ १४ ॥ रुद्राणांकोटिरेकातुपुरेचान्तर्व्यवस्थिता ॥ ब्रह्माविष्णुश्चद्वावेतौउपासातेमहेश्वरम् ॥ १५ ॥
पृथिव्यादिप्रसंख्यानंतपसासमुदाहृतम् ॥ तदिदंसंप्रवक्ष्यामिपुरुषाँल्लोकविश्रुतान् ॥ १६ ॥ शिवक्रीडनसंस्थानंशिवेनपरिकल्पितम् ॥ तत्रतत्रमहे

शस्यालिङ्गार्चनमनुत्तमम् ॥ १७ ॥ कामाराधनकंशम्भोःपूजनंद्वीपवासिभिः ॥ सार्द्धपञ्चाशीतिशतयोजनादिविसारिषु ॥ १८ ॥ जम्बूद्वीपादिद्वी
पेषुमयाव्यात्तमिदंद्विज ॥ जम्बूद्वीपेमहादेवोगोमेदेगिरिजेश्वरः ॥ १९ ॥ शाल्मलिद्वीपमध्यस्थोदेवःपशुपतिःस्वयम् ॥ कुशद्वीपेहरोभूत्वाक्रौंञ्चेप्रोक्तो
वृषध्वजः ॥ २० ॥ शाकेशङ्करनामायंपुष्करेभाललोचनः ॥ तत्रतत्रमहादेवंपूजयन्तःस्थिरान्बहून् ॥ २१ ॥ भोगान्महौषधीस्तेभ्यःप्राप्नुवन्ति
शिवाज्ञया॥जम्बूद्वीपश्चगोमेदःशाल्मलिश्चकुशस्तथा॥२२॥क्रौंचद्वीपस्तथाशाकःपुष्करःसप्तमःस्मृतः॥अतःपरंप्रवक्ष्यामिद्वीपानांतुपृथक्पृक्॥२३॥
परिमाणंचसंख्यांचद्वीपप्रवरमेवच ॥ जम्बूद्वीपेजम्बुवृक्षोयोजनैस्तंनिबोधत ॥ २४ ॥ सहस्रंशतमेकंचयोजनानांसमुच्छ्रितः ॥ तस्यजम्बूफलरसश्चा
मृतस्वादुरुच्यते ॥ २५ ॥ प्रमाणादायतोद्वीपोद्विगुणःपरिणाहतः ॥ द्विगुणेनसमुद्रेणलवणेनसमावृतः ॥ २६ ॥ तस्यवर्षाणिसप्तेहकामगाश्च
यथार्हतः ॥ भारतस्यतुवर्षस्यनवभेदाःप्रकीर्त्तिताः ॥ २७ ॥ सप्तवर्गाःप्रसंख्याताःसप्तैवकुलपर्व्वताः ॥ मध्यमस्यतुवर्षस्यप्राक्प्रतीच्यांनिबोधत ॥
॥ २८ ॥ दक्षिणेनाविसंख्यातामिलावृत्तंप्रकीर्त्तितम् ॥ उत्तरंदक्षिणंचैवइन्द्रधन्वाकृतिर्यथा ॥ २९ ॥ चत्वारोद्रोणसंस्थानांवर्षाणांचप्रमाणतः ॥
कुरवोहिमवांश्चैवरम्यःक्रौंचोभवस्तथा ॥ ३० ॥ गिरिवर्षःकिम्पुरुषोभारतंदक्षिणेनतु ॥ पूर्व्वेणमाल्यवांश्चैवपश्चिमेगन्धमादनः ॥ ३१ ॥ चतुरस्रंत
तोद्वारंमध्यमंपरिमण्डलम् ॥ नीलःपर्व्वतराजश्चश्वेतःशुक्लोमहागिरिः ॥ ३२ ॥ शृङ्गादुत्तरतःपार्श्वंसमन्तात्समुपोत्थितौ ॥ सहस्राणांप्रसंख्यानंकाल
ज्ञानविशारदैः ॥ ३३ ॥ तस्मिञ्जम्बूदकेत्येवकनकंदेवभूषणम् ॥ तस्यजम्बूत्तरेपार्श्वंमेरुर्नाममहागिरिः ॥ ३४ ॥ मेरुंप्रदक्षिणंकृत्वाजम्बूमूलेविशे
त्पुनः ॥ तस्यद्वीपस्यमध्येतुकर्णिकेवविराजते ॥ ३५ ॥ योजनानांसहस्राणिचतुरशीतिरुच्छ्रयः ॥ अधस्तादशसहस्राणिषड्विंशच्चैवपार्श्वतः॥३६॥
मेरुंप्रदक्षिणंकृत्वाकैलासाख्यस्ततोगिरिः॥चतुरशीतिस्ततोव्यासोगिरीन्द्रस्यमहात्मनः॥३७॥ तस्यसानुषुचित्रेषुकन्दरेषुदरीषुच॥नतत्रसूर्य्यस्तपति
नचन्द्रोनैवतारकाः॥३८॥नचवर्षतिपर्ज्जन्योगिरेस्तस्यप्रभावतः॥तत्रायान्तिजितक्रोधाजितलोभाजितेन्द्रियाः॥३९॥ रुद्रेनिरुद्धहृदयारुद्रसक्ताजितक्ल
माः॥येगृहस्थाःस्वधर्म्मज्ञागोब्राह्मणहितेरताः ॥४०॥ तेयान्तिपरमंस्थानंप्रसादात्परमेष्ठिनः ॥ शतंशतसहस्राणियोजनानांसमन्ततः॥४१॥ नीलश्चनि
षधश्चैवहेमकूटश्चपर्व्वतः ॥ हिमवान्दक्षिणेपार्श्वेतावत्परमसुच्छ्रितः ॥ ४२ ॥ पञ्चविंशत्सहस्राणिविस्तरेणसदोच्यते ॥ तथैववृक्षसिन्धुश्चतिस्रस्तावै
प्रतीच्यगाः ॥ ४३ ॥ नलिनीह्लादिनीचैवप्लावनीचैवपूर्व्वगाः ॥ गङ्गायातुसमंतासांजम्बूद्वीपसरिद्वरा ॥ ४४ ॥ तस्यांनद्युपनद्यश्चशतशोऽथसहस्रशः ॥
गङ्गासमानरूपाश्चपुण्यतीर्थशिलोच्चयाः ॥ ४५ ॥ देवतीर्थाःसुपुण्याश्चपृथिव्यामनुकीर्त्तिताः ॥ जम्बूद्वीपःप्रसंख्यातोयाथातथ्येनवैद्विजाः ॥ ४६ ॥

षण्णामितरद्वीपानांशेषंप्रामाण्यतःशृणु ॥ जम्बूद्वीपप्रमाणेनद्विगुणान्तरतःस्मृतः ॥ ४७ ॥ उत्तरेणस्मृताःसर्व्वेंअन्तरेस्वर्गवासिनः ॥ द्वीपाद्वीपसमान
स्यनामधेयानिसर्व्वशः ॥ ४८ ॥ क्षारइक्षुःसुरासर्पिर्दध्योदानामनामतः ॥ मण्डोदश्चप्रसंख्यातस्ततःस्वादूदकोत्तरः ॥ ४९ ॥ द्वीपानांतुसहस्राणिअ
विज्ञातानितानितु ॥ सप्तैवतुसमासेनव्याख्यातानिमयाद्विजाः ॥ ५० ॥ अपिवर्षशतैर्विप्रानशक्यंकथितुंमया ॥ प्लक्षद्वीपेप्लक्षवृक्षःशाल्मलेशाल्मलिः
स्मृतः ॥ ५१ ॥ कुशद्वीपेकुशस्तम्बःक्रौञ्चद्वीपेमहागिरिः ॥ शाकद्वीपेशाकवृक्षःपुष्करेपुष्करःस्मृतः ॥ ५२ ॥ जम्बूवृक्षप्रमाणेनद्विगुणोत्तरतःस्मृताः॥
सर्व्वेषामेववृक्षाणाममृतस्वादउच्यते ॥ ५३ ॥ तंतुपीत्वामृतरसंदीर्घायुष्ट्वञ्चगच्छति ॥ नतत्ररोगोनजरानशोकोनपरिश्रमः ॥ ५४ ॥ समश्चैवतुजाय
न्तेसमेनम्रियतेतथा ॥ नान्यंप्रियंविजानन्तिचक्रवाकसधर्म्मिणः ॥ ५५ ॥ सर्व्वामणिमयीभूमिःसूक्ष्मकाञ्चनवालुका ॥ सर्व्वकालफलावृक्षाःस्वस्वग
न्धफलाश्रयाः ॥ ५६ ॥ सर्व्वेषाञ्चैवद्वीपानांसप्तानांकुलपर्व्वताः ॥ सप्तैवनद्यस्तेषान्तुसप्तैवकल्पिताःशुभाः ॥ ५७ ॥ तासांनद्युपनद्यस्तुशतशोऽथसह
स्रशः ॥ तेषांपर्व्वतराजानंपरिवार्य्यसमन्ततः ॥ ५८ ॥ रञ्जिताःशृङ्गवन्तश्चशोभन्तेगिरयस्तथा ॥ ततःसिद्धाश्चऋषयोगन्धर्व्वादानवाःखगाः ॥ ५९ ॥
विद्याधरोरगायक्षारमन्तेतत्रतत्रच ॥ नचवर्षतिपर्ज्जन्योनचकालस्यपर्य्ययः ॥ ६० ॥ महाकल्पेतुदह्यन्तेइत्याहभगवाञ्छिवः ॥ तेषांपर्व्वतजालानिदी
प्यन्तिप्रभयास्वया ॥ ६१ ॥ वृताःपर्व्वतराजानंपरिवार्य्यसमन्ततः ॥ षष्टिंगिरिसहस्राणिएतेतस्यसमंतदा ॥ ६२ ॥ तेभ्यःसहस्रशश्चान्येपरिसंख्यान
विद्यते ॥ तत्रतेपुरुषादिव्याःशुक्लदन्ताःप्रियंवदाः ॥ ६३ ॥ तेषांनदुःखंनग्लानिर्नकाश्चित्परिबाधते ॥ तेषुद्वीपेषुजायन्तेपुरुषास्तेतपोधनाः ॥ ६४ ॥
दीर्घायुष्ट्वंवृतंतेषांविद्यतेकामगागतिः ॥ जम्बूद्वीपस्यपर्य्यायंकथयिष्यामिवैद्विजाः ॥ ६५ ॥ कृतंत्रेताद्वापरश्चकलिश्चैवचतुर्य्युगम् ॥ मानुषाणांचवर्षा
णांयुगानाञ्चैवसंख्यया ॥ ६६ ॥ कीर्त्तयिष्यामिवोविप्राःपुराणेयद्विभाव्यते ॥ लक्षाःसप्तदशप्रोक्ताअयुतेद्वेतथैवच ॥ ६७ ॥ अष्टवर्षसहस्रान्तकालंकृत
युगंविदुः ॥ लक्षाद्वादशवैप्रोक्ताःषट्सहस्राणिवत्सराः॥ ६८ ॥त्रेतायुगस्यप्रामाण्यंपुराणेपरिकीर्त्तितम् ॥ अष्टवर्षसहस्रान्तालक्षाश्चाष्टौप्रकीर्त्तिताः ॥ ६९ ॥
द्वापरेतियुगञ्चैवपुराणेपरिकीर्त्तितम् ॥ लक्षाश्चाष्टौचलक्षौद्वौअयुतेद्वेतथैवच ॥ ७० ॥ अष्टवर्षसहस्रान्तेकालःकलियुगेस्मृतः ॥ द्वासप्ततियुगान्तेनमन्व
न्तरमितिस्मृतम् ॥ ७१ ॥ चतुर्दशतुतान्येवकल्पमेकंविधीयते ॥ दिनैकंब्रह्मणःप्रोक्तंतथानिशिकलोच्यते ॥ ७२ ॥ एवमादिचवर्षञ्चतथावर्षशतंद्वि
जाः ॥ एवमायुर्जितेन्द्रस्यहरस्यनिमिषःस्मृतः ॥ ७३ ॥ ब्रह्मादिस्तम्बपर्य्यन्तंनिमिषोत्पत्तिरीश्वरः ॥ निमेषजीविनःसर्व्वेचन्द्रादित्यौग्रहैःसह ॥
॥ ७४ ॥ महाकल्पंचविख्यातंशिवस्यनिमिषस्तथा ॥ द्वीपानाञ्चैववर्षाणांकथयामिसमासतः ॥ ७५ ॥ अन्येषाञ्चैवद्वीपानांविविधाविहितागतिः ॥

भारतस्यतुवर्षस्यनवभेदाःप्रकीर्त्तिताः ॥ ७६ ॥ इन्द्रद्वीपःकशेरुश्चताम्रपर्णोगभस्तिमान् ॥ नागद्वीपस्तथासौम्योगान्धर्व्वश्चारणस्तथा ॥ ७७ ॥
अयंतुनवमस्तेषांद्वीपःसागरसङ्गतः ॥ स्वादूदकोनामनाम्नासागरोत्तरतोमहान् ॥ ७८ ॥ तस्यचाद्यापरापृथ्वीद्विगुणेनप्रमाणतः ॥ तस्मात्परंचवैलो
कोलोकालोकश्चनामतः ॥ ७९ ॥ लोकांन्विंशतितल्लोकप्रमाणंलोकविस्तरात् ॥ मनसासिद्धिसंपन्नानीरोगाश्चिरजीविनः ॥ ८० ॥ प्राकारस्थितय
श्चैवसौवर्णाश्चमहार्णवाः ॥ लोकेशाश्चैवचत्वारोलोकालोकेस्थितास्तथा ॥ ८१ ॥ एवंसभुविविस्तारास्त्रिगुणःपरिमाणतः ॥ ८२ ॥ इतिश्री
शैवेमहापुराणेसनत्कुमारसंहितायांसप्तद्वीपवर्णनंनामतृतीयोऽध्यायः ॥ ३ ॥ सनत्कुमारउवाच ॥ पृथिव्यास्तुमयाख्यातोविस्तारोदीर्घतातथा ॥
अधस्ताद्यत्प्रवक्ष्यामिपातालतलवासिनाम् ॥१॥ तत्रभोगवतीरम्यानानारत्नोपशोभिता ॥ सर्व्वेचनागराजानोविश्रमन्तेमुदान्विताः ॥ २ ॥ तत्रसिद्धा
मुनिगणाभरताद्याःप्रकीर्त्तिताः ॥ वासुकिस्तक्षकश्चैवककर्कोटकधनंजयौ ॥ ३ ॥ कालियःपवनोनामनागःपूरणएवच ॥ मणिमालश्चैवभद्रोनागश्चैवाथ
कौशिकः ॥ ४ ॥ वसुश्चबन्धुमारश्चकम्बलाश्वतरावुभौ ॥ तित्तिरिर्हरिभद्रश्चजम्बुभद्रोबलाहकः ॥ ५ ॥ करवीरपुण्डरीकौसंवृतोऽथमहोरगः ॥
येचान्येनागपतयोअनन्ताद्याःप्रकीर्त्तिताः॥६॥पुरीभोगवतीरम्यानानारत्नोपशोभिता॥विचित्राभिःपताकाभिर्विमानैश्चसहस्रशः ॥७॥ दोलालम्बितवा
साश्चमुक्तादामैरलङ्कृताः ॥ हास्यनाट्यविचित्राभिर्गानवादित्रनिस्वनैः॥८॥सर्व्वकामप्रसिद्धार्थाःस्त्रियश्चाप्सरसोपमाः॥ नैवतेषांभवेद्ग्लानिर्नशोकोनज
रातथा॥९॥ईर्ष्यायाश्चभयंनास्तिसर्व्वकामहितेरताः ॥ पुष्टिदानस्यरहिताःसर्व्वकामेषुपूजिताः ॥ १० ॥ तत्रभोगवतीरम्याप्रभालोकाद्विशिष्यते॥तत्र
स्तम्भसहस्राणिसौवर्णानिसमन्ततः ॥११॥ वज्रवैदूर्य्यकल्पानिमहारत्नानिशोभिता ॥इन्द्रनीलमहानीलैःसर्व्वतश्चाभिमण्डिता॥१२॥सर्व्वकालफलान
द्यःसर्व्वपायसकर्द्दमाः ॥ कुल्याश्चघृतसम्पूर्णाःसदावृक्षोपशोभिताः ॥ १३ ॥ अन्नपर्व्वतकूटाश्चशङ्खकुन्देन्दुपाण्डुराः ॥ कल्पिताब्रह्मणापूर्णाःशंकर
स्याज्ञयापुरा ॥ १४ ॥ पयसानित्यपूर्णानिभाजनानिसमन्ततः ॥ मधुकुल्याश्चसंन्यस्तारक्तदन्तातिशोभिताः ॥ १५ ॥ प्रियंवदास्तथाचान्याभा
र्य्यायौवनसम्पदः ॥ भुक्ताभुक्ताःप्रियैस्तत्रयोनिस्तासांनचक्षता ॥ १६ ॥ प्रसूतायास्तुकन्यायायौवनंनापिहीयते ॥ परस्त्रियोनजानन्तिस्वदारानिरताः
सदा ॥ १७ ॥ इष्टभुक्स्वजनाकीर्णानागलोकेप्रकीर्त्तिताः ॥ ऊर्द्ध्वंतिर्य्यग्गतिःख्याताताासांतेषामनेकशः ॥ १८ ॥ नागलोकस्यविस्तारंद्विगुणंपरिकी
र्त्तितम् ॥ एकदेशप्रमाणेनमयाख्यातंयथातथा ॥ १९ ॥ योजनैःकोटिरेकातुनागलोकःप्रकीर्तितः ॥ ऊर्द्ध्वंतिर्य्यक्प्रसंख्यातंचतुरस्त्रंतथाद्विजाः ॥२०॥
अनन्तरंप्रवक्ष्यामिहिरण्यपुरवासिनाम् ॥ तत्रापिकोटिःसंख्यातायोजनैःपरिमाणतः ॥ २१ ॥ तत्रासन्सफलावृक्षाःपुष्पैश्चैवसुगन्धिनः ॥ नानाविचित्र

निर्घोषनिस्वनैःपूर्णकन्दरैः ॥ २२ ॥ यौवनस्थाःस्त्रियस्तत्रसुकुमाराःप्रियंवदाः ॥ पुरुषारूपसम्पन्नाःस्वदारनिरतेन्द्रियाः ॥ २३ ॥ सौवर्णाश्चगृहास्तत्रमानशुभ्रैर्विभूषिताः ॥ विमानचारिणःसर्व्वेसर्व्वेचास्थितयौवनाः ॥ २४ ॥ अक्षतप्रतिमास्तत्रस्त्रियश्चाप्सरसोपमाः ॥ शुक्लदन्ताम्बरधराश्चन्द्रांशुविमलप्रभाः ॥ २५ ॥ मनोरमाःसुसिद्धार्थाश्चक्रवाकसधर्म्मिणः ॥ नोद्वेगोनचकोपस्तुईर्ष्यासूयाविवर्जिताः ॥ २६ ॥ तोरणैश्चसुसम्पन्नैर्मणिमौक्तिकमालिभिः ॥ सर्व्वैर्द्रुमयैःसिद्धैर्मोदन्तेप्रमदैःसह ॥ २७ ॥ वर्वैरनेकैःसंख्यातागुणास्तास्मिन्पुरोत्तमे ॥ दैत्यास्तत्रवसन्त्येतेप्रह्लादाद्याःप्रकीर्त्तिताः ॥ २८ ॥ तेषांप्रसादाज्जीवन्तिसर्व्वलोकानसंशयः ॥ ब्रह्माद्यादेवताःसर्व्वाधार्य्यन्तेसमनन्तरम् ॥ २९ ॥ परापराणांलोकानांधारणैर्लोकधारणैः ॥ सर्व्वानिमान्वारयतिसुरभिर्नामनामतः ॥ ३० ॥ पृथ्वींधारयतिसर्व्वांसुधन्वानामनामतः ॥ सर्व्वाङ्गश्चसुसर्व्वाङ्गःसुलभाचोत्तरांदिशम् ॥ ३१ ॥ दक्षिणांचषकानामधारयन्तीदिशंसदा ॥ तेषांप्रसादाज्जीवन्तिब्रह्माद्यास्त्रिदिवौकसः ॥ ३२ ॥ तस्मिन्दिव्यानिवेश्मानिचित्राणिचलघूनिच ॥ पताकाध्वजचित्राणिप्रासादानांचपङ्क्तयः ॥ ३३ ॥ सर्व्वकामफलावृक्षारम्याश्चित्राश्चपादपाः ॥ स्वर्गादतितरांरम्याःसुखस्पर्शाजलाशयाः ॥ ३४ ॥ काम्यानामपुरीह्येषासदासम्पूर्णमानसा ॥ ब्रह्मणाविहितापूर्व्वकामरूपगुणान्विता ॥ ३५ ॥ पायसेनचपूर्णानिभाजनानिसहस्रशः ॥ सर्व्वैचैवसुखस्पर्शाश्चारणस्यापिवेश्मनि ॥ ३६ ॥ अरुणस्यापिविप्रेन्द्रशोभितालयवोऽपिच ॥ प्रासादपङ्क्योभान्तिशरदोवह्नदाःशुभाः ॥ ३७ ॥ अमृतानिचकुण्डानिदिशोदिव्याःप्रकीर्तिताः ॥ पायसेनचपूर्णानिभाजनानिसहस्रशः ॥ ३८ ॥ संन्यस्तानिचदृश्यन्तेअम्बुदिव्यामृतोपमम् ॥ भक्तानानाविधास्तत्रभूषणाःपूर्णकल्पिताः ॥ ॥ ३९ ॥ अपिवर्षशतैर्विप्रागुणास्त्वास्मिन्सुरोत्तमैः ॥ नशक्यानाममात्रेगआख्यातुंसुसमाहितैः ॥ ४० ॥ उद्देशमात्रंकथिताःपातालेऽस्मिन्गुणामया ॥ तेषांवक्ष्यामिवैविप्रानागपातालवासिनाम् ॥ ४१ ॥ चित्राविचित्राःकुर्व्वाणाःसूक्ष्माणिचगृहाणिच ॥ दृश्यन्तेतानिनित्यंहिअव्यक्ताव्यक्तसंज्ञिताः ॥ ४२ ॥ पुरीगुह्याअनन्तस्यपातालेपरिकीर्तिता ॥ गुणाःसंख्यानरहितास्तास्मिन्पुरवरेतदा ॥ ४३ ॥ यथाब्राह्मीचविष्णोश्चपुरीन्द्रस्यतुतत्त्वतः ॥ अनन्तस्याप्यनन्तस्यसर्व्वकामसुपूजिता ॥ ४४ ॥ अतःपरन्तुविप्रेन्द्रशृणुष्वैकमनाःकथाम् ॥ यमस्याविषयंदिव्यंमन्वन्तरमुपस्थितम् ॥ ४५ ॥ नरकोरौरवोबोधःशूकरोबालएवच ॥ कुम्भीपाकश्चनरकस्तथाचैवगलग्रहः ॥ ४६ ॥ प्रवाह्यधोमुखीचैवनदीवैतरणीयतः ॥ असिपत्रवनश्चैवयमशूलीभयावहा ॥ ४७ ॥ भैरवाणिचरूपाणिएकपाषाणमेवच ॥ असितालवनंविप्राअसिपत्रवनंतथा ॥ ४८ ॥ ऊर्द्धकश्चतथाशूलंतथावैतरणीनदी ॥ करम्भवालुकाचैवशृङ्गाटकवनंतथा ॥ ४९ ॥ अन्धकारंतमोघोरंनरकोमक्षिकातथा ॥ नरकाबहुशःप्रो

कायमस्याविषयेस्मृताः ॥ ५० ॥ स्वेनकर्म्मविपाकेनप्राप्यन्तेचपृथक्पृथक् ॥ सर्व्वाधोरैरनेकैश्चक्लिश्यन्तेचपुनःपुनः ॥ ५१ ॥ आशीभिंस्त
क्षणेश्चैवक्रकचैश्चैवपाटनम् ॥ वैतरण्यास्तथाक्षारंशाल्मलीकर्षणंतथा ॥ ५२ ॥ आदानंयन्त्रसूत्रस्यकुम्भीपाकेचमर्द्दनम् ॥ रौरवेकूटसाक्षिणांपातनं
नात्रसंशयः ॥ ५३ ॥ परहिंसानिविष्टानांबोधकेपतनंभवेत् ॥ शूकरेऽथविभेदेचतारेचनरकाधमे ॥ ५४ ॥ ब्रह्मस्वहरणाच्चैवकुम्भीपाकेचपातनम् ॥
परदत्तंस्वयंहृत्यगलग्रहंविशेन्नरः ॥ ५५ ॥ वर्षाणांचसहस्राणिपीड्यतेचनराधमः ॥ वर्षाणांशतसाहस्रंपीडचमानःपुनःपुनः ॥ ५६ ॥ स्त्रीघातीपूतिमां
सेचनिक्षिप्तःपच्यतेध्रुवम् ॥ धनधान्यसुवर्णानिहिरण्यंवाविशेषतः ॥ ५७ ॥ हृत्वानरकमाप्नोतियमशूलंभयावहम् ॥ मातृघ्नःसूचिमुखेनशतंवर्षाणिपी
डनम् ॥ ५८ ॥ पितृहन्ताह्यधोमुखेपीडचतेचसुदुःखितः ॥ सर्पेषुवैतरण्यांचदेयद्रव्यविनाशकः ॥ ५९ ॥ पच्यतेनरकेघोरेवर्षाणामेकविंशतिम् ॥
असिपत्रवनेघोरेपुरघ्नःपच्यतेनरः ॥६०॥ मलापहस्यमूलानिहिंस्यमानोहिमानवः ॥ भैरवाणिचरूपाणिघोरंपरमदारुणम् ॥ ६१॥ अधोमुखेनपततिवर्षा
णांचसहस्रशः ॥ एकपाषाणनरकेमित्रभार्य्याभिलाषिणः ॥६२॥ तथाचास्याभयंदत्त्वाभयमुत्पाद्यतेपुनः ॥ असितालवनेघोरेपच्यतेनात्रसंशयः ॥६३॥
परस्त्रीगामिनश्चैवपरद्रव्याभिलाषुकाः ॥ असिपत्रवनेघोरेपेच्यतेनात्रसंशयः ॥ ६४ ॥ साक्षीभूतस्तुयःकश्चिन्मिथ्यासम्भाषतेतदा ॥ ऊर्द्ध्वपादस्तथा
शूलेमहानरकपातने ॥ ६५ ॥ जिह्वाचोत्पाटचतेतस्यहलैस्तीक्ष्णैश्चप.टचते ॥ ब्राह्मणानाश्चलिङ्गानांनिन्दांयश्चकरोतिसः ॥ ६६ ॥ वैतरण्यांमहान
द्यांपच्यतेसनराधमः ॥ शृङ्गाटकवनेतीव्रेकर्ष्यतेयमशासनैः ॥ ६७ ॥ हस्तच्छेदंचयःकुर्य्यात्स्त्रियावापुरुषस्यवा ॥ करम्भवालुकाश्चैवघोरंपरमदा
रुणम् ॥ ६८ ॥ गृहदाहञ्चकुर्व्वाणःपच्यतेसनराधमः ॥ अन्धकारेमहाघोरेनरकेमाक्षिकेतथा ॥६९ ॥ पच्यतेचमहाघोरेदुःखार्णवमहालये ॥ वर्षाणांच
सहस्राणिअसिभिःकल्पकोटयः ॥ ७० ॥ एवंशुभप्रदश्चैवनानारूपमवस्थितम्॥ पापानामतिदूरस्थंदुर्व्वेदमपिदारुणम् ॥ ७१ ॥ जनानांपुण्यकर्म्मणां
क्षणेनगमनंप्रति ॥ सौम्यपथश्चशोभाश्चगमनंध्रुववर्णितम् ॥ ७२ ॥ सङ्क्षेपान्नरकाःख्यातादुस्तराश्चमहामुने ॥ गर्भवासेचयःक्लेशोम्रियमाणेऽपिवैतथा
॥ ७३ ॥ जायमानस्ययत्क्लेशमज्ञानस्यचयद्भयम् ॥ अविद्याबाधतेदुःखमज्ञानांवनवासिनाम् ॥ ७४ ॥ यद्दुःखंयाज्ञिकानान्तुयद्दुःखंसांख्ययोगिनाम् ॥
यद्दुःखंमोक्षकांक्षिणांरागादीनामवर्ज्जनात् ॥ ७५ ॥ तस्मात्सर्व्वप्रयत्नेनदुःखमेवविवर्ज्जयेत् ॥ सिद्धान्नेनयजेद्यज्ञंतस्माद्यज्ञंसमाचरेत् ॥ ७६ ॥ ज्ञानमेवा
श्रयेद्विद्वाञ्जातिदोषविनाशकम् ॥ जातिदोषविनाशेनसर्व्वक्लेशविनाशनम् ॥ ७७ ॥ रौरवेकूटसाक्षिणांपातनंनात्रसंशयः ॥ आयुघ्नश्चापिनिष्पातो
वैतरण्यामुदीरितः ॥ ७८ ॥ स्थितिभेदनकारीचअसिपत्रवनंव्रजेत् ॥ सिद्धेनयजतेयज्ञंहिंसादोषमवाप्नुवन् ॥ ७९ ॥ अहिंसादोषमाप्नोतिमहापाशुप

तेस्थितः ॥ अन्येऽपिदुर्वृत्ताःप्रोक्तामोहिताःशिवमायया ॥८०॥ययाप्राणाहिगच्छन्तिनरकंस्वर्गमेवच॥प्रविशन्तितमोघोरमविद्याकर्म्मसम्भवम् ॥८१॥
मोक्षंधर्म्मविदोयान्तिविद्याधर्म्मफलोदयम् ॥ सर्व्वेब्रह्माण्डकादेवाःस्थावराणांचकारकाः ॥ ८२ ॥ बद्धावेदयन्तेधर्म्मंनसुखंप्राप्नुवन्तिते ॥ दुःखादुःखं
विशन्त्येतेअविद्यातमसाकुलाः ॥ ८३ ॥ दुर्ज्जयंकाममोक्षाणामविद्याकर्म्मसम्भवाः ॥ मोक्षंधर्म्मविदोविप्रामन्यन्तेब्रह्मचोदिताः ॥ ८४ ॥ यमस्यविष
यंसर्व्वेदुःखंप्राप्यपुनःसुखम् ॥ यथायेनेहभुञ्जन्तिनरकंस्वर्गमेववा ॥ ८५ ॥ कथंमानुषभावोऽयंक्लेशःसंसर्गवासिनाम् ॥ गर्भवासविनिर्म्मुक्तोनरकंचैव
पश्यति ॥ ८६ ॥ नरकाच्चविनिर्म्मुक्तादेवमानुष्यतिर्य्यगाः ॥ सर्व्वेहिपरिवर्त्तन्तेसर्व्वेनरकमुच्यते ॥ ८७ ॥ तस्मादेवंप्रवृत्तानांब्राह्मणानांहितैषि
णाम् ॥ सुखानांखलुकर्त्तव्याःसर्व्वज्ञानसमाद्विजाः ॥ ८८ ॥ नरकाच्चविनाशायजातिदुःखविनाशनम् ॥ संसारचक्रमारूढाभ्रमन्तेयन्त्रचक्रवत्॥८९॥
तस्माच्चक्रविनाशायशिवचक्रंसमाश्रयेत् ॥ शिवचक्रंसमारूढोज्ञानीदोषैर्नलिप्यते ॥ ९० ॥ अविद्याकर्म्मजान्दोषान्वंचयामाससमायया ॥ एवंमाहेश्वरे
ज्ञानेभक्तिमान्यःप्रियोभवेत् ॥ ९१ ॥ पापराशिंदहेदेवंतृणराशिमिवानलः ॥ ९२ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांचतुर्थोऽध्यायः ॥ ४ ॥
सनत्कुमारउवाच ॥ ॥ पृथिव्यांप्राक्प्रतीच्यांतुदक्षिणस्यांतथैवच ॥ सप्तद्वीपसमुद्राश्चव्याख्याताहिमयाद्विज ॥ १ ॥ ऊर्द्ध्वंतावत्प्रवक्ष्यामिया
वद्ब्रह्मकुलंभवेत् ॥ प्रथमंभवनंभूयोव्याख्यातंतद्द्विजन्मनाम् ॥ २ ॥ द्वितीयंभवनंभूमेर्व्याख्यास्यामियथाभवेत् ॥ महीतलेसहस्राणांशतेनोर्द्ध्वंवि
भाव्यते ॥ ३ ॥ तत्रभानुश्चचन्द्रश्चग्रहास्तारागणैःसह ॥ उपर्य्युपरिसंसृष्टंयथोक्तंग्रहतारकाः ॥ ४ ॥ एकमन्वन्तरंविप्रायस्यवैग्रहतारकाः ॥
यथान्तरिक्षेसिंचन्तिभान्तिवान्तियथाग्रहाः ॥ ५ ॥ सर्व्वेनानाविधास्तत्रमेघानानाविधाःस्मृताः ॥ दशयोजनसाहस्रंदशयोजनमुन्नतम् ॥ ६ ॥ आग्ने
यानवजानन्तिपर्ज्जन्याश्चप्रकीर्त्तिताः ॥ वरुणस्यघनाःप्रोक्ताविचरन्तियथापुरे ॥ ७ ॥ एतेषामुपरिष्टात्तुभानोर्लोकोविभाव्यते ॥ तस्माद्भानोर्महो
त्साहलोकाःसुरनमस्कृताः ॥ ८ ॥ तत्रदेवविमानानिसर्व्वेतेसूर्य्यवर्च्चसः ॥ षष्टिश्चैवसहस्राणिऋषीणांभावितात्मनाम् ॥९ ॥ उपासतेरथवरंभानोरक्लिष्ट
कर्म्मणः ॥ तत्रतेषांमहात्मानोनागगन्धर्व्वराक्षसाः ॥ १० ॥ षष्टिश्चैवसहस्राणिअप्सराणांप्रसंख्यया ॥ गीतगन्धर्व्वघोषश्चहाहाहूहूरनेकशः ॥ ११ ॥
शतशोऽथविमानानिशतघंटायुतानिच ॥ नानारत्नविचित्राणिपताकैःशोभितानिच ॥ १२ ॥ किङ्किणीजालचित्राणिनानारत्नोज्ज्वलानिच ॥ सर्व्वकाम
समृद्धानिकाव्यशब्दान्वितानिच ॥ १३ ॥ स्त्रीसहस्रैरुपेतानिकल्पवृक्षयुतानिच ॥ एतेवायुरथारम्याअन्तरिक्षचराःस्मृताः ॥ १४ ॥ विचरन्तिपराह्ने
तेक्षरन्तिसलिलंबहु ॥ वायव्याःशतशस्तत्रसप्तस्कन्धेषुवैतथा ॥ १५ ॥ एवंगणायान्तितान्स्वान्भागानाकाशमेवच ॥ स्वर्गपन्थानमाश्रित्यचरन्ति

विमलोदकाः ॥ १६ ॥ देवैःसहाप्सरोभिश्चसिद्धैश्चाप्सरसान्वितैः ॥ तत्रदिव्यानिवेश्मानिविचित्राणिबहूनिच ॥ १७ ॥ पुण्यकृद्भिरुपेतानिभास्वरा
णिसहस्रशः ॥ तत्रदेवाविमानस्थारमन्तेकेलिकारकाः ॥ १८ ॥ दिव्यभोगयुताःसर्व्वेअन्तरिक्षेविराजते ॥ यत्तद्वारिदिविख्यातमादित्यंतेजसंवदेत्
॥ १९ ॥यत्रगच्छन्तिसुकृतःसर्व्वेसङ्गजितोनराः ॥ एतेलोकामयाख्याताआदित्यस्यमहात्मनः ॥ २० ॥ आदित्यस्योपरिष्टात्तुलोकावैवस्वताः
स्मृताः ॥ तत्रादिव्याःशुचिमयाविमानशतशोभिताः ॥२१॥ सञ्चरन्तिस्वकेलोकेपुण्यकृद्भिर्निषेविते ॥ तस्माद्दिव्यश्चसुमहान्सोमलोकःस्मृतस्ततः ॥
॥ २२ ॥ क्षत्रियाश्चैवयज्वानोमन्त्रिणःसोमपायिनः ॥ वसन्तितत्रसुखिनःसस्यवस्त्राहरण्यदाः ॥ २३ ॥ तस्मादूर्ध्वंततोलोकोभास्वरःसमवस्थितः ॥
विप्राभवन्तियज्वानोविमानशतशोभिताः ॥ २४ ॥ यान्तिलोकाश्चतत्रस्थाऋषीणांसुमहात्मनाम् ॥ दिव्याम्बरधराःसर्व्वेउपरिष्टाद्विभूषिताः ॥२५॥
आकाशगङ्गातत्रस्थासर्व्वेचैवग्रहास्तथा ॥ तस्मादूर्द्धमृषीणांवैलोकःपरमपूजितः ॥ २६ ॥ तत्रशूरारणेप्राणान्परित्यज्यमहाहवे ॥ त्रिविष्टपेचविख्या
तेशक्रस्यैवामरावती ॥ २७ ॥ उपरिष्टादृषीणांतुशक्रलोकंतुतत्स्मृतम् ॥ तस्मादूर्ध्वंध्रुवंलोकंसूर्य्यकोटिसमप्रभम् ॥२८॥ कोटिशतसहस्रेणसाध्या
नांपरिवारितम् ॥ चतुर्गुणंतुविख्यातंदेवलोकप्रमाणतः ॥ २९ ॥ अतःसनत्कुमारश्चकार्त्तिकेयश्चनन्दनः ॥ एवंभवन्तिसुखिनःशय्यावस्त्रहिरण्यदाः
॥ ३० ॥ तस्मादूर्द्धंजनलोकोयोऽस्त्यंतंभुविभाव्यते ॥ उपरिष्टात्तारकाणांब्रह्मलोकेतितत्स्मृतम् ॥ ३१ ॥ तत्रसिद्धामुनिगणाब्रह्माचैवचतुर्म्मुखः ॥
सप्तर्षयोध्रुवश्चैवविष्णुश्चैवमहामतिः ॥ ३२ ॥ ब्रह्मलोकात्परंसत्यंसत्यमेतद्ब्रवीम्यहम् ॥ तस्योर्द्धंविष्णुलोकश्चगोलोकश्चप्रतिष्ठितः ॥ ३३ ॥ पृथिवी
मण्डलादूर्द्धंयोजनावर्णितंतथा ॥ अथाण्डस्योर्द्धभागेतुब्रह्मलोकइतिस्मृतः ॥ ३४ ॥ ऊर्द्धमेकंतुवैलोकंकोटीनांशतयोजनम् ॥ एषोऽध्वगप्रचारोवै
ज्ञानंज्ञानंतथैवच ॥ ३५ ॥ नशक्यंप्राप्यतेगंतुंवर्ज्जयित्वाशिवानुगान् ॥ अनुग्रहाद्वायोगाद्वानैष्ठिकाद्वातथाद्विजाः ॥ ३६ ॥ स्वयंमूर्त्त्याचभगवान्ब्रह्मा
भवन्विराजते ॥ एतस्मिन्नन्तरेदेवाःसर्व्वइंद्रपुरोगमाः॥३७॥पादयोःपतिताःसर्व्वेब्रह्माणमृषयस्तथा॥ब्रह्मणाचाप्यनुज्ञाताःसर्व्वेसुखमयाःस्थिताः॥३८॥
ब्रह्मोवाच॥स्वागतंवोमहाभागाःशृणुध्वंकिमिहेच्छथ॥येनकार्य्येणवायातास्तद्ब्रुवन्तुसुरोत्तमाः॥३९॥ देवाऊचुः॥कृतंवरेणपर्य्याप्तंस्रष्टात्वंपरिपृच्छसि ॥
वराणांवैसहस्रात्तुदर्शनंदेवशस्यते ॥ ४० ॥ महान्नःसंशयोऽत्यन्तंभगवान्वक्तुमर्हति ॥ दुर्लभंपरमंगुह्यंप्रष्टव्यंप्रश्नमुत्तमम् ॥ ४१ ॥ सनत्कुमार
उवाच ॥ यदहंपृष्टवान्पूर्वंरुद्रस्यपरमात्मनः ॥ तादिदंसम्प्रवक्ष्यामिइतिहासंपुरातनम् ॥ ४२ ॥ नैमिषेयास्तुऋषयोजितक्रोधाजितेन्द्रियाः ॥ इच्छा
द्वेषविनिर्म्मुक्ताध्यानयोगपरायणाः ॥ ४३ ॥ ईश्वरज्ञानसम्पन्नागताब्रह्मसभांपराम् ॥ भृग्वङ्गिरसवृद्धाश्चपुरस्तात्कृतवाञ्छुचिः ॥ ४४ ॥ तत्रकामम

यानामसभापरमभाविनी ॥ पुरुषास्तत्रपश्यन्तिपरमात्मैक्यतांगताः ॥ ४५ ॥ नसूर्य्यस्तत्रतपतिनचन्द्रोनैवतारकाः ॥ वर्ज्जयित्वाशिवंदेवंकःशक्त
स्तमसःपरः ॥ ४६ ॥ सर्व्वेपापसमाचाराःसदाचारविवर्ज्जिताः ॥ तमसापिहितंकृत्वानिर्णयंपापपुण्ययोः ॥ ४७ ॥ योगएवमहामायांसर्व्वंहरतिकि
ल्बिषम् ॥ जन्मान्तरगतस्यापियोगध्यानात्क्षयोभवेत् ॥ ४८ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांभुवनकोषवर्णनंनामपञ्चमोऽध्यायः ॥ ५ ॥
सूतउवाच ॥ विनयादागतोव्यासःसद्भावंभक्तिमाश्रितः ॥ सनत्कुमारंसर्व्वज्ञंसन्देहमथपृष्टवान् ॥ १ ॥ भगवञ्छ्रोतुमिच्छामित्वत्प्रसादाद्द्विजोत्तम ॥
एषमेसंशयोब्रह्मन्ब्रूहिमेत्वंमहामुने ॥ २ ॥ कच्चिद्यस्त्रिषुलोकेषुपृष्टोमयैवमर्थतः ॥ समर्थोवेदितुंलोकेकःपुमान्कथयिष्यति ॥ ३ ॥ भगवन्भूतभव्येश
शक्त्याश्रावयितुंक्षमः ॥ आख्याहिरुद्रमाहात्म्यंशृणुमःसंशितव्रताः ॥ ४ ॥ ॥ सनत्कुमारउवाच ॥ ॥ इदंसर्व्वंपुराभूतंसर्व्वमासीन्महार्ण
वम् ॥ नाग्निर्नवायुरादित्योनभूमिर्नदिशोदश ॥ ५ ॥ नचन्द्रोनचनक्षत्रंमुहूर्त्तकरणेतथा ॥ नदेवासुरगन्धर्व्वानपिशाचानराक्षसाः ॥ ६ ॥
छादितास्तेजसातस्यनकिञ्चिद्दकुमुत्सहे ॥ दृष्ट्वाहंमोहमापन्नोनिश्चेष्टश्चिरमास्थितः ॥ ७ ॥ लक्षकोटिसहस्राणांलोकानांहितकाम्यया ॥ कृत्वाकरालं
दंष्ट्रान्तंमुखपद्मंसुशोभनम् ॥ ८ ॥ दुन्दुभिस्वरनिर्घोषपर्ज्जन्यनिनदोपमम् ॥ प्रहस्यभगवान्रुद्रइदंवचनमब्रवीत् ॥ ९ ॥ रुद्रउवाच ॥ अहमे
कस्तुनान्योवैममसर्व्वंयुगेयुगे ॥ सममायान्तिसंमूढाःकिमर्थंपरिशुष्यथ ॥ १० ॥ लोकान्ससर्ज्जरुद्रोवैमायार्थंनिर्मितोमया ॥ एवमुक्त्वातदारु
द्रस्तत्रैवान्तरधीयत ॥ ११ ॥ श्रूयतांवोमहाभागाउपदेशंयथाक्रमम् ॥ यथावस्थानिभूतानिस्थावराणिचराणिच ॥ १२ ॥ प्राजापत्यंभवेदन्नमन्ने
प्राणाःप्रतिष्ठिताः ॥ अन्नाद्भवन्तिभूतानिअन्नंवैयज्ञसम्भवम् ॥ १३ ॥ यज्ञाद्भवतिपर्ज्जन्योयज्ञःकर्म्मसमुद्भवः ॥ तत्रसर्व्वमिदंयज्ञंब्रह्मयज्ञेप्रति
ष्ठितम् ॥ १४ ॥ ऋचोयजूंषिसामानिकल्पोपनिषदस्तथा ॥ मन्त्राण्यारण्यकंचैवरहस्याथर्व्वणंतथा ॥ १५ ॥ एकाक्षरंपरंब्रह्मओङ्कारःपरउच्यते ॥
षडङ्गैःसहसम्प्रोक्तःसांख्ययोगविशारदैः ॥ १६ ॥ सावित्रीसम्भवोह्येषब्रह्माक्षरमयोमहान् ॥ मयाशक्त्याब्रह्मणाचविष्णुनापिसइज्यते ॥ १७ ॥
यज्ञलोकस्तदासाम्नांप्रतिपत्तिःस्वयम्भुवा ॥ उपदेशंततःकृत्वामहादेवोमहेश्वरः ॥ १८ ॥ उक्त्वावचनमीशानस्तत्रैवान्तरधीयत ॥ तस्यतद्वचनंश्रु
त्वाब्रह्माकमलसम्भवः ॥ १९ ॥ आप्तवानप्रयत्नेननित्यमुक्तंमहेश्वरम् ॥ तस्यवैमूर्त्तयःपञ्चब्रुवतस्तानिबोधमे ॥ २० ॥ एकाभगवतोमूर्त्तिरूर्द्ध्वरोमा
भयावहा ॥ द्वितीयातस्यवैमूर्त्तिःसूर्य्यज्योतिःसमप्रभा ॥ २१ ॥ तृतीयाभगवतोमूर्त्तिःशशिनःपरमात्मनः ॥ चतुर्थीभगवतोमूर्त्तिःकुबेरस्यमहातनुः
॥ २२ ॥ पञ्चमीभगवतोमूर्तिस्तद्वैब्रह्मपरंपदम् ॥ बत्तुपश्यन्तिविद्वांसःसूक्ष्मध्यानविचिन्तकाः ॥ २३ ॥ इत्येषभगवान्रुद्रःपञ्चधापरिपच्यते ॥ लोके

वेदेचसंयुक्ताशैवीचैवपृथक्पृथक् ॥ २४ ॥ क्रीडतेप्रथमामूर्त्तिर्द्वितीयातप्यतेतपः ॥ तृतीयाहरतेलोकांश्चतुर्थीसृजतेप्रजाः ॥ २५ ॥ पञ्चमीज्ञानसङ्घा
वंसर्व्वमावृत्यातिष्ठति ॥ सर्व्वेशःसर्व्वभूतस्थःसर्गप्रलयविक्रमः ॥ २६ ॥ सएषसर्व्वभूतानांगोप्ताईशानउच्यते ॥ उत्पत्तिप्रलयञ्चैवभूतानांसङ्गतिंगतिम्
॥ २७ ॥ वेत्तिविद्यामविद्याञ्चतेनोक्तोभगवानिह ॥ महांश्चमहतोयस्मान्महद्भिश्चमहीयते ॥ २८ ॥ यस्मादिदंमहन्नित्यंमहादेवइतिस्मृतः ॥ यस्मान्ना
शयतेपूर्णंत्रैलोक्यंसचराचरम् ॥ २९ ॥ पशूनांपाशनञ्चैवतस्मात्पशुपतिःस्मृतः ॥ स्वयंमातास्वयंभूत्वाप्रियोलोकैरनुत्तमः ॥ ३० ॥ लोकेषुचस्वयं
भूत्वास्वयम्भूरितिहिस्मृतः ॥ यस्मादेकंशिरश्छित्त्वातत्कपालमधारयत् ॥ ३१ ॥ कपालीतिततःप्रोक्तोब्रह्माद्यैर्ऋषिभिस्तथा ॥ यस्मात्क्षयान्तेत्रैलो
क्यंशङ्करेयातिसंक्षयम् ॥ ३२ ॥ तस्मात्संवर्त्तकोधाताशङ्करेत्यभिधीयते ॥ यस्मादिमानिभूतानिपश्यन्तेनाधिकंततः ॥ ३३ ॥ सर्व्वविश्वेश्वरोदेवस्त
स्मादीशानतोऽभवत् ॥ महद्भ्योमहतोयस्मान्महद्भिश्चमहीयते ॥ ३४ ॥ महदैश्वर्य्यमिच्छन्तिमहेश्वरइतिस्मृतः ॥ ब्रह्मविज्ञायतेयस्मात्त्रैलोक्यंस
चराचरम् ॥ ३५ ॥ बृहत्त्वाद्बृंहणत्वाच्चतस्माद्ब्रह्मोतिसंस्मृतः ॥ यत्तद्गुह्यतमंब्रह्मनिर्द्देष्टुंनैवशक्यते ॥ ३६ ॥ अक्षरंप्रतितस्मात्तंब्रुवन्तिनीललोहितः ॥
एतत्समावृतंब्रह्मयावत्प्राणमयोध्रुवः ॥ ३७ ॥ यंदृष्ट्वादेवदेवेशमुपगच्छतिनिर्व्वृतिम् ॥ अक्षराद्व्यापरोरुद्रोह्यक्षराश्चवयंपुरा ॥ ३८ ॥ अस्माकंदेव
तारुद्रोवयंदेवेषुदेवताः ॥ देवादेवाद्द्विजातीनांद्विजाःशेषस्यदेवताः ॥ ३९ ॥ इत्येवंदेवदेवस्यरुद्रःपरमदैवतम् ॥ यएवंवेत्तितत्त्वेनानित्यञ्चपरिकीर्त्तये
त् ॥ ४० ॥ आपद्भावःसमापन्नोमुच्यतेनात्रसंशयः ॥ ४१ ॥ इति श्रीशैवेमहापुराणेसनत्कुमारसंहितायांषष्ठोऽध्यायः ॥६॥सनत्कुमारउवाच ॥ क्षपणो
द्रुपदश्चैवतपनोलवणस्तथा॥ एतत्कारणसंजातंनिश्चलंकेवलंध्रुवम् ॥ १ ॥ सर्व्वमेतद्विरूपाक्षाज्जगत्सर्व्वंप्रवर्त्तते ॥ विष्णुःपार्श्वात्तुसम्भूतोलिङ्गेभूताः
सुरास्तथा ॥ २ ॥ लिङ्गात्प्रसवधर्म्मेणजगत्स्थावरजङ्गमम् ॥ लिङ्गमूर्त्तिश्चभगवाननादिनिधनःशिवः ॥ ३ ॥ बहुवाक्यप्रमुक्तेनहेतुनानेनवैद्विजाः ॥
अल्पाक्षरमिदंगुह्यंममैकान्तेनिशम्यताम् ॥ ४ ॥ अहंविष्णुःपुराशक्रोअन्येवासुरपुङ्गवाः ॥ विरूपाक्षस्यनेत्राभ्यांनिमिषोन्मेषणेस्थिताः ॥ ५ ॥ यन्न
शक्यंमयाकर्त्तुंयदेवपरमंध्रुवम्॥ तच्चवक्ष्यामिविप्रेन्द्राईश्वरंसम्प्रचक्षते ॥ ६ ॥ अचिन्त्यनियमोरुद्रोअचिन्त्यबलपौरुषः ॥ अचिन्त्यश्चतदज्ञानंनशक्यं
भक्तिवत्सलम् ॥ ७ ॥ रुद्रंसंस्मरतेनित्यंरुद्रेचपरमंपदम् ॥ रुद्रेणसदृशंदेवंनान्यंपश्यामहेवयम् ॥ ८ ॥ सर्व्वथावर्त्तमानाश्चयेभक्ताःपरमेश्वरे ॥ तेऽ
वश्यवासिनांतुल्यामुनीनांभावितात्मनाम् ॥९॥ सर्व्वपातकसंयुक्तायेप्रपन्नामहेश्वरे ॥ भवपापंनविन्दन्तितेयान्तिपरमांगतिम् ॥१०॥ अजस्रश्चाश्वमे
धेनयेयजन्तिद्विजोत्तमाः॥ताल्लँलोकांस्तेनगच्छन्तिरुद्रभक्तस्तुयान्व्रजेत् ॥ ११ ॥ नदेवासुरगन्धर्व्वानयक्षानचराक्षसाः ॥ निर्भयाःसर्व्वलोकेस्मिन्सञ्चर

न्तिहिनित्यशः ॥ १२ ॥ विष्णुत्वंवासवत्वञ्चअमरत्वंसुरैःसह ॥ त्रैलोक्येचाधिपत्यंवातुष्टोरुद्रःप्रयच्छति ॥ १३ ॥ अनल्पावसातिस्तस्यरुद्रभक्त
स्यसुव्रताः ॥ रुद्रभक्तास्तुविप्रेन्द्राःप्राप्नुवन्तिशिवालयम् ॥ १४ ॥ अशुभाःपापकर्म्माणोयेनराःकल्मषीकृताः ॥ ईश्वरंप्रतिपश्यन्तेद्विजाभा
वितभावनाः ॥ १५ ॥ आदिदेवंमहादेवंप्रभुंप्रभवतामपि ॥ येस्मरन्तिसदारुद्रंभयंतेषांनविद्यते ॥ १६ ॥ येकीर्त्तयन्तिसततंदेवदेवंमहेश्वरम् ॥
नमोहमधिगच्छन्तियेऽपिस्युःपापयोनयः ॥ १७ ॥ कीर्त्तनाद्देवदेवस्यतेजस्वीब्राह्मणोभवेत् ॥ मुच्यतेसर्व्वपापेभ्योरुद्रलोकमवाप्नुयात् ॥ १८ ॥
रुद्ररुद्रेतित्रिसन्ध्यंयश्चब्रूयाद्विचक्षणः ॥ कीर्तनान्नीलकण्ठस्यसर्व्वपापैःप्रमुच्यते ॥ १९ ॥ सर्व्वलक्षणहीनोऽपियुक्तोवासर्व्वपातकैः ॥ सर्व्वंतरतित
त्पापंभावतःशिवमास्थितः ॥ २० ॥ संसारेभ्रममाणानांपापयोनिषुयद्भवेत् ॥ महादेवप्रपन्नानांभयंतेषांनविद्यते ॥ २१ ॥ मनसापिशिवंदेवंयेप्रप
द्यन्तिमानवाः ॥ विधूताःसर्व्वपापेभ्योदेवैःसहरमन्तिते ॥ २२ ॥ अग्निहोत्रंचयेनित्यंयज्ञांश्चैवसुदक्षिणान् ॥ रुद्रभक्तश्चविप्रेन्द्राःकलांनार्हन्तिषोड
शीम् ॥ २३ ॥ सर्व्वेषांध्यानयोगानांयेचान्येमोक्षकांक्षिणः ॥ महादेवप्रसादेनप्राप्नुवन्तिपरांगतिम् ॥ २४ ॥ सांख्ययोगोद्भवकरंसंचितंध्रुवमव्ययम् ॥
अप्राप्यचविरूपाक्षंकःपुमान्सिद्धिमर्हति ॥ २५ ॥ तीर्थानांचमहातीर्थंमङ्गलानाञ्चमङ्गलम् ॥ यत्पवित्रंपवित्राणांसम्प्रपद्येतमीश्वरम् ॥ २६ ॥ एषदे
वोविरूपाक्षःसर्व्वभूतपतिर्भवः ॥ हृदिस्थःसर्व्वभूतानामोङ्कारमधिगच्छति ॥ २७ ॥ निष्कलंपुरुषवरंसमहालिङ्गलक्षणम् ॥ अशाम्यशमनकरंकथं
तत्फलंविद्महे ॥ २८ ॥ यथाघृतञ्चपयसियथाग्निश्चैवदारुणे ॥ क्षितौजलंजलेसस्यंयथाहिसर्व्वतोऽनिलः ॥ २९ ॥ यथावयंतथाचान्येतथासनत्कुमा
रादयः ॥ आध्यात्मिकैःसुरवरैर्ब्रह्मणःस्वात्मसम्भवैः॥३०॥प्रकृत्यजाप्यंस्तुतिहोमलिङ्गंनतोब्रवीम्यत्रमहामहेश्वरम् ॥ पुनस्तुतत्रापिददर्शलिङ्गमनामयं
लिङ्गमलक्षणञ्च॥३१॥नदेवगन्धर्व्वनभूतसंघानसिद्धयक्षाधिपपन्नगाधिपाः ॥ विभुंप्रपश्यंतिमहेश्वरंपरंमहाविषंयोऽजरयत्क्षणेन॥३२॥पितृमानुषनागानां
नभयंविद्यतेक्वचित्॥वैवस्वतंनपश्यंतिनपच्यन्तेचकुम्भिषु॥३३॥कामगेषुविमानेषुविचरन्तिहिमानवाः॥यत्रैवचशक्रलोकःसर्व्वेचसुरपुङ्गवाः॥३४॥अर्च्च
यन्तिविरूपाक्षंलिङ्गमूर्त्तिंमहेश्वरम् ॥३५॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांसप्तमोऽध्यायः॥७॥ऋषयऊचुः ॥ कथंप्रसाद्यतेरुद्रःकथंवापिप्रसी
दति॥सर्व्वंकथयचास्माकमेतदिच्छामवेदितुम् ॥ १ ॥ ब्रह्मोवाच ॥ षष्टिवर्षसहस्राणिषष्टिवर्षशतानिच॥हृषीकेशेनविप्रेन्द्रावर्षकोटिंप्रसादितः ॥ २ ॥
आराधितोमहादेवःशूलपाणिर्महेश्वरः ॥ तुष्टेनचतथाविष्णुर्वरैःश्रेष्ठैस्तुयोजितः ॥ ३ ॥ साम्नाचद्वन्द्वभिन्नाममहाचक्रधरोबली ॥ ममतुल्यबलोभूया
भक्त्याचबहुशोहरे ॥ ४ ॥ ईश्वरस्यप्रसादेनविष्णुःपरमतैजसः ॥ रक्ष्यतेपृथिवींसर्व्वामजेयश्चबलीततः ॥ ५॥ प्रसादितोविरूपाक्षःपुष्कराक्षोमहेश्वरः ॥

इष्टाभिःस्तुतिपूजाभिर्व्विविधैःकर्म्मभिस्तथा ॥ ६ ॥ आराधितोमहादेवःशूलपाणिर्हिरण्मयः ॥ तुष्टेनचकृतोब्रह्मासंहर्त्ताविश्वतोमुखः ॥ ७ ॥ दाताह
र्त्ताचगोप्ताचसंहर्त्ताचयुगेयुगे॥८॥पितामहत्वंचसुरासुराणांब्रह्माधिपत्यंपरमव्ययञ्च ॥ अनागतंवर्त्तमानंचविश्वंसर्व्वेषुलोकेषुचराचरत्वम् ॥९॥ सर्व्वेचवे
दाःसहषड्भिरङ्गैःसांख्यञ्चयोगंचसपारिभाषम् ॥ विप्रप्रसादेनचनिष्कलत्वंप्राप्तंमयाब्रह्मलोकंचदिव्यम् ॥ १० ॥ शक्रेणापिपुराचीर्णंदिव्यंपाशुपतंम
हत् ॥ वायुभक्षोऽम्बुभक्षश्चदुर्व्वासाश्चर्म्मसंवृतः ॥ ११ ॥ एवमासीद्विरूपाक्षोरुद्रःशृङ्गाट्टहासतः ॥ कपर्द्दीतस्यतुष्टोवैकृत्तिवासाःपिनाकधृक् ॥
॥ १२ ॥ गणेशोवैकृतःशक्रोमहावज्रधरोबली ॥ भूयश्चक्रतुराजेनदत्तश्चैवात्रिविष्टपम् ॥ १३ ॥ ईश्वरस्यप्रसादेनस्वर्गेमोदतिवृत्रहा ॥ सनत्कुमारःपु
त्त्रोमेव्याख्यातोमानसोद्विजाः ॥ १४ ॥ सहस्रंचविमानानांसप्तसंख्यासुयत्पुरा ॥ चन्द्रसूर्य्यप्रकाशेषुविमानेषुप्रतिष्ठितः ॥ १५ ॥ स्त्रीसहस्रसमाकीर्णो
दीप्यमानःसुतेजसा ॥ गायद्भिर्नृत्यमानैश्चवादयद्भिश्चसर्व्वशः ॥ १६ ॥ क्रीडन्नप्सरसांमध्येतद्दत्तबलगर्व्वितः ॥ वज्रहाटकसर्व्वांगैरप्रमेयगृहोत्तमैः ॥
॥ १७ ॥ पुरुषैःसूर्य्यसङ्काशैर्दीप्यमानैःस्वतेजसा ॥ उपविष्टःस्थितस्तत्रागिरिंपादेनपीडयन् ॥ १८ ॥ यजमानाश्चयेदृष्टालोकयात्राकराश्चये ॥ पा
र्थिवास्तेतमासाद्यसर्व्वधिष्ण्येष्वधिष्ठिताः ॥ १९ ॥ उद्योगिनाश्चताञ्जित्वंभीरूणांचनिवारणम् ॥ पुष्पकालेचपुष्प्यन्तिफलकालेफलप्रदाः ॥ २० ॥
पाककालेचपच्यन्तेद्वारेषुचसुसंवृताः ॥ शैलेषुनिरतायेचपातालेचसमाश्रिताः ॥ २१ ॥ अन्तरिक्षेचरायेचचरन्तिदिविसंश्रिताः ॥ येचनक्षत्रमार्गे
षुनक्षत्राणिसमाश्रिताः ॥ २२ ॥ ह्रासवृद्धिकरायेचचन्द्रसूर्य्यौग्रसन्तिये ॥ स्वस्थानेप्रस्थिताश्चान्येसांख्ययोगमनुव्रताः ॥२३॥ असंख्याताह्यनेकाश्च
जङ्गमाजङ्गमाःस्थिताः॥रुद्रस्यपार्श्वेयेचान्येदेवदेवस्यधीमतः॥२४॥ज्वलन्तमुष्णंमुंचन्तिनभयंतेसमाश्रिताः॥ दिव्याःपार्श्वगताःसर्व्वेगृहास्तुपादपास्त
था ॥ २५ ॥ कुन्देन्दुकुमुदप्रख्यांमालांपद्मसुगन्धिनीम् ॥ जिघ्रन्तिचैवधावन्तिरुद्रपार्श्वगतागणाः ॥ २६ ॥ तेषांवर्णविशेषोऽस्तिप्रमाणञ्चैवदृश्यते ॥
एकैकस्यगणेशस्यशरीरंप्रतितिष्ठति ॥ २७ ॥ मेरुमन्दरशैलानांगणानांपरिमाणतः ॥ तेषांपरिवृतोदेवोग्रहाणामिवभास्करः ॥ २८ ॥ सनत्कुमारोदे
वेशोगणेशायमहात्मने ॥ एवंदृष्टंमयाख्यातंभीमस्यामिततेजसः॥२९॥शृणुयाद्गणसंख्यानम्मनसापिसदास्मरेत्॥ प्रयत्नमानसोभूत्वापठेत्पर्व्वणिपर्व्वणि
॥ ३० ॥ सर्व्वान्कामानवाप्नोतिअमृतत्वंचविन्दति ॥ शतंशतसहस्राणिरुद्रलोकेमहीयते ॥ ३१ ॥ ऋतुकालेचनारीणांतथैवसमुदाहरेत् ॥ अमोघरे
ताभवतिसंग्रामेचजयोभवेत् ॥ ३२॥ आहारकालेतुपठेद्ब्राह्मणानांचसन्निधौ ॥ नित्यमेवंपठतियःश्रद्दधानोजितेन्द्रियः ॥ ३३ ॥ शतरुद्रफलंतस्यलभ
तेनात्रसंशयः ॥ वेदकोटिफलंयच्चसर्व्वंप्राप्नोत्यसंशयम्॥३४॥अनन्तपापयुक्तोवासगच्छेद्रुद्रलोकताम् ॥पठतस्तुततःपुण्यंगणसंख्याञ्चानित्यशः॥३५॥

शृणुयाद्वापियोभक्त्यासर्व्वपापैःप्रमुच्यते ॥ प्रभातसमयेकालेसमुत्थायमहामनाः ॥ ३६ ॥ ब्रह्माणंदेवकर्त्तारंसर्व्वशास्त्रविशारदम् ॥ उवाच विधिनादेवोब्रह्मणेभगवान्वचः ॥ ३७ ॥ इमांसिद्धिंप्रपश्यन्तःसिद्धास्तगर्व्विताःपुरा ॥ अहंकाराभिभूतेनवरंतत्त्वंनबुध्यते ॥ ३८ ॥ ऊर्द्ध्वंचनयनंदृष्ट्वादे वतेजोमयंस्थितम् ॥ पिताचपितरोमेऽद्यदृष्ट्वापात्रमुपागताः ॥ ३९ ॥ वासितादेवदेवेननकिञ्चिद्वक्तुमुत्सहे ॥ एवंदृष्ट्वासमांपुत्रोव्याजहारससम्भ्रमः ॥ ॥ ४० ॥ सनत्कुमारउवाच ॥ निगृहीतोऽस्मिभद्रंतेबालेनाकृतकर्म्मणा ॥ विमानानिचरत्नानिअजस्रंचसुसंस्कृतम् ॥ ४१ ॥ तेनाहंदुःखसन्तापादेहं त्यक्ष्येनसंशयः ॥ पुत्रस्यवचनंश्रुत्वाब्रह्मावचनमब्रवीत् ॥४२॥आत्मानंगमयामासध्यानयोगेनदृष्टवान्॥ सपारइतितंज्ञात्वाततोदृष्टनरोऽभवत् ॥४३॥ उत्थायचासनाद्ब्रह्माप्राञ्जलिःप्रगतःस्थितः॥नमस्कृत्वामहादेवमीश्वरंसर्व्वतोमुखम्॥४४॥प्रभवंनिधनंचैवभूतानांपतिमव्ययम् ॥ इदमाहमहातेजाब्रह्मा लोकपितामहः॥४५॥अपिदेवोमहादेवःप्रभुःप्रभवतामपि॥तस्मात्कृत्स्नमिदंसर्व्वंजगत्स्थावरजङ्गमम्॥४६॥योगानामधिकोयोगीदेवानामम्बिकापतिः॥ दृष्ट्वापुरानन्दिमुखंदेवदेवेनभाषितम् ॥ ४७ ॥ पुत्रशोकोनकर्त्तव्योजातःकस्त्वजरोऽभवत् ॥ अनुग्रहंमहादेवःकर्त्तुकामोमहेश्वरः ॥ ४८ ॥ सर्व्वंवैदर्श यामासआत्माचैवसुदुर्लभः ॥ गाणपत्यंलभन्त्वेतेविष्णुनाचप्रकीर्त्तिताः ॥ ४९ ॥ नकिंचिद्ब्रह्मचारीचपश्यत्यकृतबुद्धयः ॥ भक्तिमानपिदेवस्यस्मृति श्चापिमहीयते ॥ ५० ॥ ऐकान्तेनचसौख्येवानास्तिततत्रविचारणा ॥ गच्छप्रपद्यस्वेशानंसतेयोगंप्रदास्यति ॥ ५१ ॥ वृणीष्वात्मंमहादेवंगाणपत्यंसुदु र्लभम् ॥ गाणपत्यञ्चभद्रन्तेविष्णुनासादितंपुरा ॥ ५२ ॥ जपन्प्रयत्नवान्भूत्वायतोद्रक्ष्यसिशङ्करम् ॥ ब्रह्मणोवचनंश्रुत्वाप्रयतोमानसंजपन् ॥ ५३ ॥ प्रसन्नश्चमहादेवःशूलपाणिर्महेश्वरः ॥ ससम्यक्स्तुतिभिर्मन्त्रैर्ऋग्यजुःसामभिस्तथा ॥ ५४ ॥ तुष्टःप्रसन्नोदेवेशःकर्म्मभिश्चामितौजसः ॥ स्थितःप्रदक्षि णंकृत्वादेवदेवस्यधीमतः ॥ ५५ ॥ चराचरप्रीतिचारीधर्म्मिष्ठोवरदोवरः ॥ धारणंसर्व्वभूतानांधराधरपतिर्यमः ॥ ५६ ॥ भूतसंसारकरणोगोपतिस्त्रिद शेश्वरः ॥ सांख्ययोगेश्वरःकर्म्मकुमारःकमलेक्षणः ॥ ५७ ॥ शतसूर्य्याग्निनेत्रश्चचारुनेत्रविभूषितः ॥ चतुर्म्मुखश्चतुर्द्दंष्ट्रश्चतुर्व्बाहुश्चतुर्य्युगः ॥ ५८ ॥ चतुर्म्मूर्त्तिश्चतुर्व्वक्त्रश्चतुर्नेत्रश्चतुष्पथः ॥ वायुकालाग्निरुद्रश्चदिग्वासामेघवाहनः ॥ ५९ ॥ जलाधारोह्यनन्तश्चधर्म्माधर्म्मभृतेश्वरः ॥ कार्त्तिकःशुभ कर्त्ताचश्रीकण्ठःकलिनाशनः ॥ ६० ॥ विष्णुप्रसाददश्चैवसमुद्रेवडवामुखः ॥ देवासुरविनिर्जितादेवासुरपरायणः ॥ ६१ ॥ कपर्द्दीशूलहस्तश्चअ जातःपरमागतिः ॥ तापसानांपरंतत्त्वंतथाचपरमंपदम् ॥ ६२ ॥ परावरज्ञोलोकानांसर्व्वदाहरिवाहनः ॥ असिताङ्गःसिताङ्गश्चअसितायतलोचनः॥ ॥६३ ॥ ब्रह्मणाधीयतेब्रह्मासंस्थितोनाभिपंकजे ॥ नीलोग्रजटिलःश्रीमाञ्छङ्खचक्रगदाधरः ॥ ६४ ॥ गृहस्थोब्रह्मचारीचवानप्रस्थोऽथभिक्षुकः ॥

ऋचोयजूंषिसामानिकल्पोपनिषदस्तथा ॥ ६५ ॥ मन्त्राणांभवनंचैवपरस्याथर्व्वणस्यच ॥ सर्व्वलोकेश्वरोदेवोविभुःसर्व्वस्यसम्भवः ॥ ६६ ॥ सहस्र
वाड्पशुपतिःसहस्रशतयोजनः ॥ भूतंभव्यंभविष्यश्चभगवानेवसर्व्वशः ॥ ६७ ॥ त्वद्गात्रेभ्यःप्रसूयन्तेत्रयोलोकाःसनातनाः ॥ नहिचैवंविजानन्तिगतिं
वचनमेवच ॥ ६८ ॥ योगेश्वरोमहायोगीयोगेशोऽसिनमोऽस्तुते ॥ एवंसंस्तूयमानःसव्यक्तीभूतोमहेश्वरः ॥ ६९ ॥ उपगम्यमुदायुक्तस्तदाहृष्टःसद्दृष्टि
मान् ॥ कमण्डलुधरोदण्डीशशाङ्ककृतशेखरः ॥ ७० ॥ व्याघ्रचर्म्माम्बरधरःसिंहचर्म्माम्बरच्छदः ॥ नागयज्ञोपवीतीचअक्षमालाविभूषितः ॥ ७१ ॥
जटीशिखण्डीखट्वाङ्गीपट्टिशाशनिशूलधृक् ॥ पुरःशरधरोदेवःशक्तिचापसमुद्गरैः ॥ ७२ ॥ शङ्खचक्रगदापाणिःपद्मशूलहलायुधः ॥ शशिकृष्णाजिन
धरःकपालीघोरचापधृक् ॥ ७३ ॥ वृषारूढोदीप्यमानोगणैःपरिवृतोहरः ॥ नन्दिनाशूलहस्तेनपुरस्ताद्दर्शितःप्रभुः ॥ ७४ ॥ ददृशेभगवान्देवःसूर्य्या
ग्निशशिनादृशा ॥ ततस्तुभगवानीशइदंवचनमब्रवीत् ॥ ७५ ॥ सनत्कुमारप्रीतोऽस्मिपश्यमांद्विजसत्तम ॥ दृढव्रतोऽसिभद्रंतेअतिशुद्धोऽसिभो
द्विज ॥ ७६ ॥ वरयस्वेप्सितंकामंमत्तःश्रेयोह्यवाप्स्यसि ॥ प्रसन्नसुमुखोभूत्वात्वामेवेदंब्रवीम्यहम् ॥ ७७ ॥ सनत्कुमारउवाच ॥ वरएषमहादेवयत्त्वां
द्रक्ष्येमहेश्वरम् ॥ ब्रह्मणाकथितंपूर्व्वंयथागुह्यंयथोद्भवम् ॥ ७८ ॥ यदिचाहमनुग्राह्योयदिदेयोवरोमम ॥ भक्तिर्भवतुदेवेशत्वयिनित्यंमहेश्वरे ॥ ७९ ॥
अन्यथामनसिध्यातंत्वमेवक्षन्तुमर्हसि ॥ मनसःकामलोभौमेलोभान्मेहर्षणंचयत् ॥ ८० ॥ इन्द्रियाणांचसर्व्वेषामिन्द्रियाणिमनांसिच ॥ प्राणायामेसमा
नेषुउदानोदानमेवच ॥ ८१ ॥ कालेनसर्व्वभूतानांनिष्पत्तिःसमुदाहृता ॥ नाश्नन्तितर्पितादेवाःसदाविशदमानसाः ॥ ८२ ॥ त्वयाचविहितोब्रह्माब्रह्मत्व
मपिनोत्सहे ॥ त्वमेवोरगगन्धर्वपिशाचयक्षराक्षसाः ॥ ८३ ॥ प्रभुस्त्वमसिदेवेशजगत्सर्वमिदंप्रभो ॥ त्वदृतेनान्यभक्तोऽस्मिमनसाकर्म्मणागिरा ॥८४॥
तस्यैवंवचनंश्रुत्वाउमापतिर्महेश्वरः ॥ इत्युवाचमहादेवःसर्व्वभूतपतिर्भवः ॥ ८५ ॥ महायोगीशभद्रंतेमहामुनिपतिस्तथा ॥ ममनामानिसर्व्वाणिगो
चराणिभवन्तुते ॥ ८६ ॥ दीप्यन्तेममलोकस्यनामगुह्यानितत्त्वतः ॥ सुसंग्रहाणिसर्व्वाणिनास्तिकाचिद्विचारणा ॥ ८७ ॥ पाराशर्य्यइतिख्यातउत्प
त्स्यतिमहातपाः ॥ वेदव्यासःसधर्म्मात्माज्ञानवान्दीर्घदर्शनः ॥ ८८ ॥ व्यासःकमलपत्राक्षःसतेशिष्योभविष्यति ॥ निर्म्मलंविमलंशुद्धंज्ञानंचन्द्र
समप्रभम् ॥ ८९ ॥ रथंकामगमंदिव्यंसाररत्नविभूषितम् ॥ मुक्ताजालपरिच्छन्नंहेमजालसमावृतम् ॥ ९० ॥ सुवर्णवेदिरचितंदिव्यधूपसुधूपितम् ॥
पताकैरमणंतत्रसेव्यमानंसुरासुरैः ॥ ९१ ॥ विमानंसूर्य्यसंकाशंसर्व्वलोकोज्ज्वलंशुभम् ॥ तेनयास्यसितंतेनपूज्यमानंसुरासुरैः ॥ ९२ ॥ अक्षरंतत्रऐ
श्वर्य्यंभविष्यतिममाज्ञया ॥ इत्युक्त्वाभगवान्देवस्तत्रैवान्तरधीयत ॥ ९३ ॥ इति श्रीशैवेमहापुराणेसनत्कुमारसंहितायामष्टमोऽध्यायः ॥ ८ ॥

सनत्कुमारउवाच ॥ सनत्कुमारोऽपितदादेवेनकृतविग्रहः ॥ ससञ्चारलोकांस्त्रीन्ब्रह्मपुत्रोऽम्बिकासुतः ॥१॥ एषदाताचकर्त्ताचसंहर्त्ताचयुगेयुगे ॥ एतस्य
त्रिविधंसर्व्वमीशानस्यमहात्मनः ॥ २ ॥ एषयज्ञपतिर्देवःकृतान्तःसउमापतिः ॥ एषहोताचहोम्यश्चएवंयज्ञविदोविदुः ॥ ३ ॥ इन्द्रियाणीन्द्रियार्थैषुस
र्व्वएवमहेश्वरः ॥ एवंज्ञानंपरंब्रह्मप्रशान्तंनिर्म्मलंशिवम् ॥ ४ ॥ अव्यक्तश्चैवव्यक्तश्चज्ञानश्चाज्ञानमेवच ॥ सांख्यंयोगंपरंसाख्यंयःपश्यतिसपश्यति ॥५॥
ततोज्ञानेनशुद्धास्तुप्राणायामजितेन्द्रियाः ॥ ध्यायन्तिपरमोङ्कारंयोगिनांपरमंपदम् ॥ ६ ॥ भवमोक्षपतिंनित्यंप्रयोगंयोगमेवच ॥ तपसाश्चप्रसा
देनलभन्तेयोगचिन्तकाः ॥ ७ ॥ ध्रुवममलमतीत्ययोगधर्म्मंत्रिदशशतैरपिदुर्लभंयदेतत् ॥ व्यवसितचरितंव्रतंचरन्तिशिववदनेविगतक्लमं
विशन्ति ॥ ८ ॥ कमलमिवपुष्करेणचयद्वस्तुमहासरोगतंनलिप्यतेतत् ॥ श्रुतिरियंपरमाशिवस्यगुह्यंश्रुत्वापरमैनसानलिप्यतेसः ॥ ९ ॥
एवंश्रुत्वाततःसर्व्वेऋषयोधर्म्मवत्सलाः ॥ पादयोःपतिताःसर्व्वेसदसिब्रह्मणोऽवदन् ॥ १० ॥ ध्यानंहिपरमंधर्म्मंकथितंपरमंपदम् ॥
अभ्यनुज्ञाप्यतांदेवगच्छामोविगतैषणाः ॥ ११ ॥ जप्यैर्धूपैरलंकारैःस्तूयतेविविधैःशिवः ॥ ॐकारादिनमस्कारैःसहितैर्गीतवादनैः ॥ १२ ॥ अथस
व्यापसव्यैश्चवामदेवन्तुसुव्रताः ॥ आराधयन्तिमुनयोरुद्रस्यहृदयप्रियैः ॥ १३ ॥ नज्ञानेननतपसाचिन्तनाद्भावितात्मनाम् ॥ सांख्यादेवपरंमोक्षंयच्चान्यै
र्विविधैस्तथा ॥ १४ ॥ ऋषिभिर्विप्रयुक्तान्वैऋषीणांप्रददौवरान् ॥ एवमन्येऽपियेभक्तामहेश्वरेध्रुवेऽव्यये ॥ १५ ॥ तेषामपियथाकामंमनसाईप्सितंद
देत् ॥ सर्व्वकामवरोदेवःसर्व्वथाभक्तवत्सलः ॥ १६ ॥ सर्व्ववर्णानुकम्पीचसर्व्वतीर्थमयोऽव्ययः ॥ त्रिरात्रमपियोभक्तईश्वरंध्रुवमव्ययम् ॥ १७ ॥ चि
त्ताकुलप्रवृत्तोऽपिनासौनिष्फलतांव्रजेत् ॥ येषान्तुकलुषाबुद्धिर्नराणांभावितात्मनाम् ॥१८॥तेवैसूक्ष्मांयोगमूर्त्तिंविशन्तिविदुषोजनाः॥निष्कलाविरजाः
ख्याताभविष्यन्तिशिवाश्रिताः ॥१९॥यतीनांब्रह्मगीताचब्रह्मणासमुदाहृता ॥ यश्चैनांपठतेनित्यंयश्चैनांशृणुयात्सदा॥२०॥एवंहिब्राह्मणोब्रह्मन्रुद्रलोकं
सगच्छति॥देवागारेपठेन्नित्यंसदाब्राह्मणसन्निधौ॥२१॥नित्यमेवंसदाकार्य्यंपठमानस्यसिद्ध्यति ॥ २२॥ इदमखिलमिहार्थतोविदित्वापठतियःप्रयतोमहे
श्वरस्यभक्तः॥सभवतिजरामरणनिर्म्मुक्तबन्धःसशिवमुपैतिगतक्लमस्ततःसः ॥२३॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांब्रह्मगीतानामनवमोऽध्या
यः ॥ ९ ॥ व्यासउवाच ॥ ब्रह्मलोकंविष्णुलोकंरुद्रस्यभुवनोत्तमम् ॥ तदहंज्ञातुमिच्छामिविस्तरेणमहामुने ॥ १ ॥ सनत्कुमारउवाच ॥ आसीद्गि
रिवरोव्यासयोजनानांसमन्ततः ॥ अष्टाशीतिसहस्राणिनदीप्रस्रवणैर्युतः ॥ विष्कम्भेणस्थितोब्रह्मंस्तावानेवोच्छ्रितःस्मृतः ॥२॥ पातालमपिसव्याप्यति
र्य्यगूर्ध्वमवस्थितः॥सुरस्यसगिरिश्रेष्ठश्चामीकरसमप्रभः॥३॥तस्यकुम्भेषुकुम्भेषुकन्दरेषुदरीषुच ॥ नानाकुसुमचित्रेषुशिखिनांमधुरागिरः॥४॥भेरुण्डैः

स्वर्णयूथैश्चचकोरैरन्वितेषुच॥गजवृन्दावकीर्णेषुमदेनवासितेषुच॥ ५ ॥ व्याघ्राणांचैवऋक्षाणांखगानांभवनेषुच ॥ हर्म्म्यस्तम्भेषुकीर्णेषुसिंहानांरूपशा
लिनाम् ॥ ६ ॥ शोभितेगिरिवर्य्येचदेवानाञ्चसुरागणाः ॥ कुबेरप्रमुखायक्षाःक्रीडन्तिचसमन्ततः ॥ ७ ॥ चित्रसेनादयस्तत्रयोषिद्भिःसहिताः
सुखम् ॥ विचरन्तिमुदायुक्ताविद्याधरगणान्विताः ॥ ८ ॥ हाहाहूहूश्चगन्धर्व्वास्तुम्बुरुप्रमुखास्तथा ॥ समेत्यविश्वावसुनाविचरन्तिमुदान्विताः ॥ ९ ॥
यन्त्रधारानिपातेषुनिनदन्तिशिखण्डिनः ॥ तास्तुचन्द्रांशुभाःकामंज्योत्स्नायाःसरिदुत्तमाः ॥ १० ॥ यत्रसापततेगङ्गादेवतानांकुलानिवै ॥
तेषुचात्मनिवाभान्तिउदितानिसमन्ततः ॥ ११ ॥ तंप्राप्यसर्व्वभूतानिसौवर्णानिमहान्तिवै ॥ वर्द्धितान्यप्रमेयस्यगिरिराजस्यमूर्द्धनि ॥ १२ ॥ यत्रपु
ण्योववौवायुःसुरभिर्मधुरस्वनः ॥ स्वर्गपरमकंतत्रत्वप्राप्यंयत्सुरैरपि ॥ १३ ॥ नतत्रभास्करोभातिनचन्द्रोनचवैग्रहाः ॥ नचापिसप्तऋषयोवान्तिवै
मारुताःशुभाः ॥ १४ ॥ नतत्रमेघाविद्यन्तेनचवर्षतिवासवः ॥ मनसातन्नपश्यंतिदेवताद्यामहर्षयः ॥ १५ ॥ तत्रदेवातिदेवस्यन्यस्तकर्म्ममहात्मनः॥
भुवनंकांचनंश्रीमद्द्विजयंविजयानदी ॥ १६ ॥ योजनानांसहस्राणिदशचाष्टौप्रकीर्त्तिताः ॥ तापनीयेनमहताप्राकारेणसमावृताः ॥ १७ ॥ गृहास्तत्रसुर
म्याश्चपताकाशोभिमालिकाः ॥ दिवाकरकराभाश्चसुप्रभाअमितौजसः ॥ १८ ॥ तत्रद्वारसहस्राणितावन्तश्चद्विजोत्तमाः ॥ सर्व्वाणिपुण्यकर्माणितरु
णार्कसमप्रभाः ॥ १९ ॥ बहूनिस्वस्तिकादीनिस्रग्दामकलितानिच ॥ विन्यस्तैःपूर्णकुम्भैश्चशोभितानियथातथा ॥२०॥ मुक्तादामैःसुविपुलैर्भूषितानि
समन्ततः ॥ पुष्पोपहारैर्विविधैर्धूपैश्चागरुसम्भवैः ॥ २१ ॥ रक्षिभिश्चसमागुप्तंविपुलैश्वर्य्यशालिभिः ॥ प्राकारप्रतिसञ्छन्नप्रासादैर्गृहपंक्तिभिः ॥
॥ २२ ॥ कैलासशिखरप्रख्याविराजन्तेसहस्रशः ॥ अन्याजाम्बूनदमयाःप्रासादानांचपंक्तयः ॥ २३ ॥ पावकाइवदीप्यन्तेज्वालाविपुलमालिनः ॥
केचिन्मणिमयास्तत्रप्रासादाभवनोत्तमाः ॥ २४ ॥ प्रेरयन्तिदिशःसर्व्वाःशरदीवोदिताग्रहाः ॥ तस्मिन्सुरवरश्रेष्ठेशिवस्यभवनंमहत् ॥ २५ ॥
मध्येक्षितितलस्यास्यसर्व्वएवनरोत्तमाः ॥ सप्तस्तम्भसहस्राणिसहस्रेणसमुत्थितम् ॥ २६ ॥ भूमिकाभिःपरिच्छिन्नंकाननैश्चसमन्ततः ॥ गवा
क्षमालाकलितंमुक्तादामैर्विभूषितम् ॥ २७ ॥ विचित्रैर्भूषितैर्नद्धंशिवेनमनसाकृतम् ॥ द्वारैःसुविपुलैश्चित्रैःशोभितंसपरिच्छदैः ॥ २८ ॥ नाना
रत्नशतैश्चित्रैःपताकाशतशोभितैः ॥ वृक्षैःपुष्पैःफलाद्यैश्चफलानाञ्चसुवर्णितैः ॥ २९ ॥ पारिजातकवर्णैश्चसौवर्णकदलीवनैः ॥ नदीभिश्चतडागैश्चपल्वलै
श्चसमन्ततः ॥ ३० ॥ वापीभिर्दीर्घिकाभिश्चह्रदैःकूपैश्चशोभितैः ॥ पद्मोत्पलपरिच्छन्नैर्मत्तषट्पदनादितैः ॥ ३१ ॥ कदम्बपल्लवैश्चापिबलाकानांचप
ङ्क्तिभिः ॥ मयूरैश्चक्रवाकैश्चतथैवशुकसारिकैः ॥ ३२ ॥ तस्मिन्द्वारपुराण्यष्टौपुरश्रेष्ठेद्विजोत्तम ॥ श्रीद्वारंप्रथमंतत्रमहासिद्धोव्यवस्थितः ॥ ३३ ॥

पूर्व्वस्यांदिशिवैशैवः पद्ममालाविभूषितः ॥ पुरान्तरालेरुद्रस्याखिलस्यतपसोनिधिः ॥ ३४ ॥ लक्ष्मीद्वारंततस्तस्ययत्राम्बुदसमप्रभः ॥ महाकालो
महाकायःस्थितःशूलीमहाबलः ॥ ३५ ॥ शिवंनामपुरंतत्रदक्षिणेनव्यवस्थितम् ॥ गण्डकर्णःस्थितस्तत्रमहावीर्य्यःशिवाज्ञया ॥ ३६ ॥ सन्निधानेत
थाचान्येतस्यामेवदिशिद्विजाः ॥ पालितंभीमनादेनगणेशेनमहात्मना ॥ ३७ ॥ पश्चिमंवारुणंद्वारंतत्रनन्दीश्वरःश्रुतः ॥ पालितंहविर्ज्जिह्वेनगणनाथेन
धीमता ॥ ३८ ॥ कीर्त्तिद्वारंतथोदीच्यांतस्यामेवदिशिद्विजाः ॥ यत्रार्कवरुणप्रख्योद्वाराध्यक्षोमहेश्वरः ॥ ३९ ॥ उपक्रीडनकैश्चित्रैःक्रीडतेभगवान्प्र
भुः ॥ यत्रयान्तिजितक्रोधाजितलोभाजितेन्द्रियाः ॥४०॥ श्रूयन्तेपशुपतेर्भक्त्यारुद्रभक्तिपराद्विजाः ॥ येचैवागमसंयुक्ताःसांख्याश्चश्रुतबुद्धयः ॥ ४१ ॥
येगृहस्थाश्चधर्म्मस्थारुद्रभक्ताजितक्लमाः ॥ न्यायतोयुध्यमानाश्चसंग्रामाभिमुखेहताः ॥ ४२ ॥ क्षत्रियागोग्रहस्यार्थेमित्रार्थेराष्ट्रपालने ॥ वैश्याश्चनिर
ताधर्म्मेसत्यवाचोजितेन्द्रियाः ॥ ४३ ॥ रुद्रेन्द्रविष्णुहृदयायेब्राह्मणहितेरताः ॥ गोसहस्रप्रदातारोभूमिदातारएवच ॥ ४४ ॥ येसुवर्णस्यदातारस्तथा
सर्व्वप्रियंवदाः ॥ वेदाध्ययनसम्पन्नाध्यायिनोव्रतचारिणः ॥ ४५ ॥ यजन्तिविधिनायज्ञैःक्रतुभिश्चारुदक्षिणैः ॥ तेतत्रगत्वाहृष्टास्तुनिवसन्तियथासुख
म् ॥ ४६ ॥ कल्पायुतसहस्राणांसहस्राणिचतुर्द्दश ॥ विचरित्वासुरपुरेपुनःप्राप्यमहीतलम् ॥ ४७ ॥ जायन्तेश्रेष्ठवर्णेषुसुखैश्चपरमैर्युताः ॥ जगतीञ्चाभि
नन्दन्तिचिरंप्रमुदितास्तथा ॥ ४८ ॥ तत्पुरंदेवदेवस्यसर्व्वकामसमन्वितम् ॥ सर्व्वर्द्धिकामदञ्चैवसमासेनप्रकीर्त्तितम् ॥ ४९ ॥ ततःपरंप्रवक्ष्यामिरौप्य
शृङ्गनिवासितम् ॥ पद्मपत्रायताक्षस्यविष्णोर्भुवनमुत्तमम् ॥ ५० ॥ यत्तत्प्रभावमुदितंचन्द्राच्छकिरणप्रभम् ॥ राजतंगिरिराजस्यशृङ्गंश्रीसागरंमहत्
॥ ५१ ॥ योजनानांसहस्राणित्रीण्येवन्तुपरंहितम् ॥ प्राकारेणाथमहताराजतेनसमावृतम् ॥ ५२ ॥ अलङ्कृतेनदिव्येनपताकाध्वजमालिना ॥ यत्रगोपुर
चित्रेणमणिरत्नान्वितेनच ॥ ५३॥ राजतद्वारसाहस्रैर्मणिचित्रैश्चचित्रितम् ॥ यत्रस्तम्भसहस्राभ्यांद्वाभ्यांप्रासादमुत्तमम् ॥ ५४ ॥ पुरमध्येस्थितंकान्तं
राजतंधातुभूषितम् ॥ नाम्नाविष्णुपदंनामतत्सुरैरपिकीर्त्तितम् ॥ ५५ ॥ चतुर्द्वारंचतुःशृङ्गंकैलासशिखरप्रभम् ॥ नानारत्नसमाकीर्णनानाद्रुमलतावृतम्
॥ ५६ ॥ तस्यमूर्ध्निस्थितेद्वारेकृष्णरूपःप्रतापवान् ॥ द्वाराध्यक्षःस्थितस्तत्रहृदयज्ञकरोबली ॥ ५७ ॥ प्रतीहारोमहाकायोहरिप्राणसमोजवे ॥ पश्चिमे
चततोद्वारेहरिभद्रइतिस्मृतः ॥ ५८ ॥ तस्मिन्मधुमतीनामनदीस्वार्थप्रकाशिका ॥ काञ्चनैःकमलैश्चापिनानापक्षिनिनादिता ॥ ५९ ॥ तेवसन्ति
चतत्रस्थाःपुरमध्येनिवासिनः ॥ अग्निहोत्ररतानित्यंदेवदैवतपूजकाः ॥ ६० ॥ तत्राथसुचिरंकालंभयशोकविवर्ज्जिताः ॥ सम्प्राप्यमानुषेलोकेजायन्ते
चसुकर्म्मसु ॥ ६१ ॥ पुनरेवचताँल्लोकान्व्रजन्तिनचिरादिव ॥ तैस्तैःकर्म्मभिरादिष्टाःशक्तितःसमनुष्ठितैः ॥ ६२ ॥ एतत्सविस्तरंनोक्तंसमासेनप्रकी

र्त्तितम् ॥ प्राजापत्यंप्रवक्ष्यामितन्मेनिगदतःशृणु ॥ ६३ ॥ तृतीयंसुस्थिरंशृङ्गंमणिरत्नमयप्रभम् ॥ नगरंपद्मगर्भस्यपद्माकारंव्यवस्थितम् ॥ ६४ ॥
योजनानांसहस्रेद्वेविशोकंनामनामतः ॥ प्राकारेणसुवर्णेनमणिरत्नमयेनच ॥ ६५ ॥ चन्द्रार्कग्रहसङ्काशंप्रभाकरमनुत्तमम् ॥ त्रिभिश्चित्रैःसुविपुलैःशिख
रैश्चाप्यलङ्कृतम् ॥ ६६ ॥ तस्मिन्नगवरेश्रेष्ठेमध्येश्रीभवनोत्तमम् ॥ स्थितंस्तम्भसहस्रेणप्रासादपुरमालिनम् ॥ ६७ ॥ हर्म्याट्टालकसंयुक्तंवलभीनां
शतेनच ॥ गवाक्षाणांसहस्रेणशोभितंपंक्तिमालया ॥ ६८ ॥ द्वारैश्चतुर्भिःसंयुक्तंस्वप्रमाणैःसुशोभितम् ॥ अलङ्कारैर्विशिष्टाढ्यैःसर्व्वतःपरिविस्तृतः ॥
॥ ६९ ॥ नाम्नाद्वाराधिपःश्रीमाञ्ज्वलनार्कसमप्रभः ॥ द्वाराध्यक्षोद्विजश्रेष्ठसजलाम्बुदसन्निभः ॥ ७० ॥ उत्तरेतुशुभेद्वारेब्रह्मयोनिरितिस्मृतः ॥ नाम्ना
परमयस्तस्मिन्स्थितःसन्ध्यारुणप्रभः ॥ ७१ ॥ तस्मिन्पुरवरेश्रेष्ठेरमभगवान्प्रभुः ॥ प्रजापतिःसुरश्रेष्ठोवेदसांख्यविशारदः ॥ ७२ ॥ अमृतानामवि
ख्यातानदीतस्मिन्पुरोत्तमे ॥ पद्मनीलोत्पलयुताशुभकाञ्चनवालुका ॥ ७३ ॥ पिवन्तितेसुसंहृष्टास्तत्तोयंपुरवासिनः ॥ तत्पीत्वाचजरानैवनशोको
नपरिश्रमः ॥ ७४ ॥ तत्रयान्तिमहात्मानोवेदाध्ययनचिन्तकाः ॥ सुप्रभाःशुभकर्म्माणःसत्यसिद्धाजितेन्द्रियाः ॥ ७५ ॥ क्रतुदानप्रसक्ताश्चगुरूणांच
प्रियेरताः ॥ येचभिक्षामुपासन्तेतीर्थायतनवासिनः ॥७६॥ धर्म्मेषुनिरतायेचविप्राःक्रोधविवर्जिताः ॥ येचध्यानपरानित्यंयोगेचनिरताःसदा ॥७७॥
सांख्यध्यानपराविप्रास्तेषांवैप्रत्ययोमहान् ॥ विशुद्धानिचकर्म्माणियेचरन्तितदर्थिनः ॥ ७८ ॥ तेयान्तिपरमंस्थानंशोकमोहविवर्जिताः ॥ कल्पायुत
सहस्राणिवर्त्तयन्तिसुखान्विताः ॥७९॥ कर्म्मलोकान्तरंप्राप्ययजन्तिविधिपूर्व्वकम्॥शौचाचारसमायुक्तास्तेलभन्तेपरंसुखम् ॥८० ॥ ज्ञानेनैवचतत्स्था
नंप्रयान्तिपरमार्च्चितम् ॥ सत्त्वयुक्तामहात्मानोजितक्रोधाजितेन्द्रियाः ॥८१॥ प्राजापत्यमिदंस्थानंकीर्त्तितञ्चसनातनम् ॥एवमेतानिविप्रर्षेभूधरेन्द्रस्यधी
मतः ॥८२॥ त्रीणित्रिभिश्चभुवनैरात्मस्थानिकृतानिवै॥तेवैभद्रादिकयुतायावद्भ्रान्तिसुरेश्वराः॥८३॥मेघाभूत्वानुगर्ज्जन्तिविद्युन्मालाइवाम्बरे ॥ग्रहनक्षत्र
ताराश्चतेभवन्तिमहेश्वराः ॥ ८४ ॥ कामगाःसर्व्वसिद्धार्थारमन्तेभवनेसुराः॥इदंस्वयम्भुवाख्यातंपठेत्पर्व्वणिपर्व्वणि ॥८५॥लभतेऽभीप्सितान्कामान्मो
हशोकविवर्जितः ॥ ८६ ॥ इदंपरमंपवित्रंशुभंतच्चकथितंविपुलंमयामुनीन्द्र ॥ पठतिसमहापातकोऽपिब्रह्मन्परमपदमुपैतिशिवप्रसादात् ॥ ८७ ॥ इति
श्रीशैवेमहापुराणेसनत्कुमारसंहितायांशिवपुरवर्णनंनामदशमोऽध्यायः ॥ १० ॥ व्यासउवाच ॥ भगवञ्छ्रोतुमिच्छामिमाहात्म्यंपुण्यकर्म्मणः ॥ यानि
स्थानानिरुद्रस्ययथावदनुपूर्व्वशः ॥ १ ॥ भूराद्याब्रह्मलोकान्ताःसत्यलोकाःप्रकीर्त्तिताः ॥ अण्डस्याभ्यन्तरेसर्व्वमुत्पन्नंतद्ब्रवीहिमे ॥ २ ॥ सनत्कुमार
उवाच ॥ ॥ एवंशतसहस्राणियोजनानांप्रमाणतः ॥ उत्थितंब्रह्मसदनंद्विधावैष्णवमुच्यते ॥ ३ ॥ वैष्णवात्कोटिविज्ञेयंयोजनानांप्रमाणतः ॥

महेश्वरपदंव्यासयत्रदेवउमापतिः ॥ ४ ॥ ब्रह्मलोकंचवैषष्ठंविष्णुलोकंतुसप्तमम् ॥ अष्टमंरुद्रलोकंतुएतदुक्तंत्रिविष्टपम् ॥ ५ ॥ एवंत्रिविष्टपंतत्रदेवानाम
मितौजसाम्॥ब्रह्मविष्णुमहेशानांमनुभिश्चसमन्वितम् ॥६ ॥ तस्मात्रिविष्टपस्यैवद्विजार्द्धेनप्रमाणतः ॥ रुद्रलोकेतिविख्यातेयोगिनांगतिरुच्यते ॥ ७ ॥
शतंरुद्रसहस्राणिविष्णुकोटिशतानिच॥शिवप्रसादात्क्रीडन्तिसर्व्वेविगतकल्मषाः॥८॥सर्व्वेकुसुमगन्धाढ्याःखड्गयष्टिधराअपि ॥ शूलिनोदंष्ट्रिणश्चैवसर्व्वे
विगतमत्सराः ॥९॥ चन्द्रार्द्धमौलिनःसर्व्वेसर्व्वेवृषभगामिनः ॥ सर्व्वेब्रह्मपुरस्थाश्चसर्व्वेविष्णुपुरस्यच॥१०॥अमलास्तेमहात्मानस्त्रैलोक्येसुविशारदाः॥
सर्व्वामणिमयीभूमिःसूक्ष्मकाञ्चनवालुका ॥ ११ ॥ नतत्रचन्द्रार्कौवायुश्चप्रकाशेतेनवातिच ॥ नयान्तिदेवतास्तत्रचन्द्राङ्कितविभूषणाः ॥ १२ ॥
स्वयंप्रत्यक्षवरदाःसर्व्वेएवप्रकाशन्ते ॥ प्रासादहर्म्यमालानिगोपुरेलक्षणानिच ॥ १३ ॥ तत्रवैब्राह्मणैःसार्द्धंगृहस्थाःसत्पथेस्थिताः ॥ अर्च्चयन्तिमहादे
वंजपन्तिशतरुद्रियम् ॥ १४ ॥ गन्धधूपादिभिश्चैवसदायजन्तिशूलिनम् ॥ सर्व्वपापविनिर्म्मुक्तागृहस्थाःसूर्य्यवर्च्चसः ॥ १५ ॥ महादेवप्रसादेनरुद्रलो
कंव्रजन्तिते ॥ सर्व्वेलोकाअधस्तात्तुद्विगुणेनप्रमाणतः ॥ १६ ॥ भुवनानांप्रभुस्थानंद्वितीयंसमुदाहृतम् ॥ तृतीयेतुमहायोगीभूतैःपरिवृतोऽरमत् ॥
॥ १७ ॥ तत्रापिभवनंदिव्यंमायेशवसतिःस्मृता ॥ गृहाणिचैवदिव्यानिप्रचुराणिमहान्तिच ॥ १८ ॥ भवलोकोहरेश्चैवद्विगुणेनप्रमाणतः ॥ सर्व्वनाम
प्रभुस्थानंचतुर्थंसमुदाहृतम् ॥ १९ ॥ अग्निस्थानंपरंदिव्यंपञ्चमंसमुदाहृतम् ॥ अग्निप्रवेशंयःकुर्य्यात्सिद्धेऽग्नौजुहुयाच्चिरम् ॥ २० ॥ अग्निस्थाना
त्परत्वेनद्विगुणंतत्प्रमाणतः ॥ उग्रंनामप्रभुस्थानंषष्ठंतत्समुदाहृतम् ॥ २१ ॥ तत्रपाशुपतैः सार्द्धंयोगिभिःपरमेश्वरः ॥ अनुग्रहार्थंलोकानांक्रीडतेभस्म
गुण्ठितः ॥ २२ ॥ दमप्रशमसंयुक्ताभूतानामभयप्रदाः ॥ यथोक्तकारिणोदान्तायोगिनस्तत्परायणाः ॥ २३ ॥ भैक्षचर्य्याव्रतानित्यंध्यानतत्परपूज
काः ॥ यान्तिपाशुपतंस्थानंपुनरावृत्तिदुर्लभम् ॥ २४ ॥ तस्मात्पाशुपतात्स्थानाद्द्विगुणेनप्रमाणतः ॥ माहेश्वरंपरंस्थानंसप्तमंसमुदाहृतम् ॥ २५ ॥
तत्रदेवोमहादेवोमहाकालोमहेश्वरः ॥ माहेश्वरैःपरिवृतोवसतेभूतभावनः ॥ २६ ॥ तत्रवैसर्व्वलोकेशईश्वरःकामरूपधृक् ॥ आविश्यसर्व्वभूतानिलोका
नन्दंकरोतिवै ॥ २७ ॥ नतेषांपरिसंख्यानंप्रमाणंवापिविद्यते ॥ देवलोकसहस्राणिब्रह्मलोकशतानिच ॥ २८ ॥ ईप्सितांस्तुसृजत्येषभूतानामीश्वरो
यतः ॥ अतःपरंद्विजश्रेष्ठस्थिरस्थानमितिस्मृतम् ॥ २९ ॥ इति श्रीशैवेमहापुराणेसनत्कुमारसंहितायामेकादशोऽध्यायः ॥ ११ ॥
॥ व्यासउवाच ॥ यत्परंतच्छिवस्थानंत्वयाप्रोक्तंमहामुने ॥ तदहंश्रोतुमिच्छामियदिगुह्यंनतेप्रभो ॥ १ ॥ सनत्कुमारउवाच ॥ शृणुविप्रइदंस्थानंशि
वस्यपरमात्मनः ॥ यन्नपश्यन्तिदुर्वृत्ताब्रह्माद्यादेवसत्तमाः ॥ २ ॥ सांख्यावाप्यथवायोगानविदुस्तद्विदोजनाः ॥ नचविन्दन्तिगूह्यास्तुउमानचगणेश्व

रः ॥ ३ ॥ नविष्णुर्नचरुद्रश्चनचान्येद्विजसत्तमाः ॥ तस्यैवचप्रसादेनयथाज्ञातंतथाशृणु ॥ ४ ॥ शतंकोटिसहस्राणांयोजनानांप्रमाणतः ॥ तत्रोपपीठंदेव
स्ययत्रयुक्तःशिवोऽव्ययः ॥ ५ ॥ तस्योन्नतेशुभेनेत्रेसितासितसमप्रभे ॥ सद्भावप्रभवेणादौउमाचैवयशस्विनी ॥ ६ ॥ वामनेत्राद्विनिष्क्रान्ताउमादेवी
चसुव्रता ॥ वामपार्श्वोपविष्टाचतस्माद्वैवामलोचना ॥ ७ ॥ दक्षिणान्नयनान्मुक्तोजलबिन्दुःसितप्रभा ॥ सासर्व्वेषुचलोकेषुगतावैभूर्भुवादिकम् ॥ ८ ॥
उपस्थायेमांगांप्राप्तातस्माद्गङ्गेतिचोच्यते ॥ नेत्राभ्यांप्रथमाञ्जातागङ्गेतिद्विजसत्तमाः ॥ ९ ॥ हरस्ययोगयुक्तस्यद्वितीयंकामखोद्भवः ॥ ब्रह्मणोयत्नशी
लस्यईश्वरेणमहात्मना ॥ १० ॥ तत्तृतीयंतुविज्ञेयंकपालवदनंमया ॥ विष्णुचक्रंचतुर्थंतुपंचमंदक्षसम्भवः ॥ ११ ॥ षष्ठकंतुयदादेवोहिमवन्तंमहा
मुने ॥ तरुणादित्यसङ्काशैरुद्रैःपरिवृतोऽवसत् ॥ १२ ॥ द्वितीयंतुपरीवारंततोद्विगुणविस्तरात् ॥ रुद्राणांहेमवर्णानांत्रिंशत्कोट्यःप्रकीर्त्तिताः ॥ १३ ॥
अपराह्नष्टवर्णानांकोट्योऽशीतिर्द्विजोत्तम ॥ पञ्चमंतुपरीवारंततोद्विगुणविस्तरम् ॥ १४ ॥ षष्ठंतुसप्तमंचैवंयेरुद्रास्तान्निबोधत ॥ मनःशिलाभाविम
लाह्नष्टानिर्द्दिश्यतेसदा ॥ १५ ॥ एवमष्टपरीवारंमानसन्तुमहात्मनः ॥ नशक्यंतस्यविज्ञानंदृष्टान्तेतद्विचारणा ॥ १६ ॥ सर्व्वेब्रह्मपुरोगाश्चसर्व्वेविष्णु
पुरःसराः ॥ समर्थास्तेमहात्मानस्त्रैलोक्यस्यसुरेश्वराः ॥ १७ ॥ एवंयोवदतिस्थानंशुद्धंपरमनामयम् ॥ सुरापोऽथपितृघ्नोवागोघ्नोवागुरुतल्पगः ॥१८॥
सोऽपिगच्छेत्परंस्थानंलिङ्गंशिवमनामयम्॥किंपुनःशुचयोदान्तामहेश्वरपरायणाः॥१९॥एवंब्रह्मक्रियायोगीलोकानांभूतिवादिनाम् ॥ २० ॥ इतिश्रीशैवे
महापुराणेसनत्कुमारसंहितायांशिवमाहात्म्यंनामद्वादशोध्यायः ॥१२॥ व्यासउवाच॥माहात्म्यंसर्व्वभूतानांप्रभुत्वंवर्त्ततेशिवे॥विधिनातुष्यतेकेनकपर्द्दी
वृषवाहनः॥१॥सनत्कुमारउवाच॥शृणुव्यासइमांवाणींसर्व्वपापभयापहाम् ॥ विधिनायेनतुष्येतलोकानांभुवनेश्वरः ॥२॥ तमहंकीर्त्तयिष्यामिशृणुतत्त्वे
नमेद्विज ॥ मेरुपर्व्वतमासाद्यदेवायक्षामहोरगाः॥३॥ ईश्वरस्यचमाहात्म्यंश्रोतुकामाःस्थिताःपुरा॥नमस्कृत्वाप्रवक्ष्यामिपुराणंब्रह्मनिर्म्मितम् ॥४॥तस्मि
न्विभीषणोगत्वासत्यशान्तोजितेन्द्रियः॥विनीतवेशोभवनमीशानंपरिपृच्छति॥५॥विधिनाकेनधर्म्मेणतुष्येत्सपरमेश्वरः ॥ एतन्मेसंशयंदेवब्रूहित्वंवृषभ
ध्वज॥६॥ईश्वरउवाच॥ सत्यंशृणुमहाबाहोयस्मात्त्वंपरिपृच्छसि॥ विभीषणमहाराजशृणुगुह्यंपरंमम॥७॥छागलाङ्गंभद्रकर्णंगोकर्णंचविशेषतः ॥ अविमु
क्तञ्चओंकारंपंचायतनमुत्तमम् ॥ ८ ॥ एतान्दृष्ट्वालभेन्मोक्षंगुह्यमेतदुदाहृतम् ॥ अविमुक्तेविशेषेणसदासन्निहितोह्यहम् ॥ ९ ॥ ओंकारंचिन्तयानस्य
तस्यतुष्टोऽस्म्यहंसदा ॥ सोऽश्वमेधफलंचैवलभतेनात्रसंशयः ॥ १० ॥ यत्रसाक्षात्स्थितोदेवोरुद्रावासेतुमुक्तिदः ॥ ममचैवपुरंतत्रदुर्लभंचाकृतात्म
भिः ॥ ११ ॥ अग्निप्राकारसंयुक्तंपरिक्षिप्तंसमन्ततः ॥ हरिश्चन्द्रपदेरम्येरुद्रकोटिर्महामुनिः ॥ १२ ॥ योगीश्वरेसुवर्णाख्येतथैववातिकेशवः ॥ भद्र

दण्डीमहाकालींदेवस्तरुवनेसदा ॥ १३ ॥ भैरवेकमलेचैवविल्हिकारोहणेतथा ॥ कालञ्जरेउग्रसंवैकर्कटेश्वरनामच ॥ १४ ॥ भूतेश्वरेवामकूटोविश्व
स्थानेश्वरेतिच ॥ गुह्यातिगुह्यकेदारेतयोर्मध्येमहेश्वरः ॥ १५ ॥ देवदारुवनेपुण्येवासोयत्रसदामम ॥ गुह्यस्थानपवित्राणिममैतानिविभीषण ॥ १६ ॥
येतुव्रजन्तिमचित्तामद्भक्तामत्परायणाः ॥ तेश्रेष्ठाःसर्व्वभूतानांभवन्तीहविभीषण ॥ १७ ॥ अयुतान्यर्ब्बुदान्कोटीस्तथापद्मायुतानिच ॥ क्रीडन्ति
रुद्रलोकांस्तान्सधर्म्मौयैस्तुराध्यते ॥ १८ ॥ तेषांसमस्तयुक्तानांपुरुषाणांविभीषण॥ म्लेच्छस्त्रीनपुंसकानान्तुक्रूराणांपापकर्म्मणाम् ॥ १९ ॥ यत्रतत्र
मृतानान्तुध्रुवंमाहेश्वरीगतिः ॥ अष्टौगुह्यपवित्राणियेयजन्तिंक्षितौनराः ॥ २० ॥ तेषांतुष्टःप्रयच्छामिगाणपत्यंविभीषण ॥ तेतुमांप्रतिपद्यन्तेमद्भक्ता
मत्परायणाः ॥ २१ ॥ सर्व्वपापविनिर्म्मुक्तालभन्तेपरमांगतिम् ॥ किंतेषांयज्ञदानेनंक्रियाभिश्चविभीषण॥२२॥मांप्रपद्यलभन्त्येवयज्ञदानफलान्यपि॥
कृत्वातपोमहाघोरंयत्फलंलभतेनरः ॥ २३ ॥ सवैममार्च्चनादेवलभतेफलमुत्तमम् ॥ प्रयागेमाघमासस्यस्नात्वायल्लभतेफलम् ॥ २४ ॥ तत्फलं
व्याससकलंलभतेनात्रसंशयः ॥ अहोरात्रशतंस्नात्वायत्फलंलभतेनरः ॥ २५ ॥ चान्द्रायणशतंकृत्वायत्फलंलभतेनरः ॥ तत्फलंलभतेमर्त्त्योंम
मलिङ्गादिपूजने ॥ २६ ॥ हिरण्यानांसहस्रेणयत्फलंप्राप्यतेनरैः ॥ गोमूत्रयावकाहारशाकभिक्षाशनैस्तथा ॥ २७ ॥ यत्फलंलभतेमर्त्त्योंलभते
तन्ममार्च्चनात् ॥ तिलप्रस्थशतान्यष्टौदत्त्वाविप्राययत्फलम् ॥ २८ ॥ तत्फलंलभतेमर्त्त्योंममलिङ्गार्च्चनेकृते ॥ ब्रह्मघ्नःपितृहागोघ्नःसुरापोगुरुतल्प
गः ॥ २९ ॥ लिङ्गार्च्चनरतास्तेयेप्राप्स्यन्तिगतिमुत्तमाम् ॥ पुण्यन्तुलभतेनित्यंलिङ्गार्च्चनाद्विभीषण ॥ ३० ॥ तपसामनसाचैवदानेनैवतुयत्सदा ॥
अभ्यासेनैवतत्त्वज्ञैर्व्रतैर्योगपरायणैः ॥ ३१ ॥ तत्सर्व्वंलभतेप्राज्ञोममलिङ्गार्च्चनेरतः ॥ अहंकर्त्ताचहर्त्ताचस्रष्टाचापियुगेयुगे ॥ ३२ ॥ प्रभवःसर्व्वभू
तानांमहात्मानात्रसंशयः ॥ अहंब्रह्माचविष्णुश्चसोमश्चाहंमहामुने ॥ ३३ ॥ यत्किञ्चिद्दृश्यतेलोकेसर्व्वश्चाहंविभीषण ॥ कामश्चैवाथवायुश्चनानाऋषय
एवच ॥ ३४ ॥ पूज्यमानेप्रमाणेचअहंकृतिरसंशयः ॥ एवंहिधनदोवज्रीभास्करःसोम एवच ॥ ३५ ॥ वृषोधर्म्मश्चस्कन्दश्चसर्व्वश्चाहंविभीषण ॥ वस
न्तोग्रीष्मकालश्चहेमन्तःशिशिरस्तथा ॥ ३६ ॥ प्रावृट्कालश्चविज्ञेयःशरत्कालोमहानदी ॥ वासुकीतक्षकश्चैवअनन्तोनागराट्तथा ॥ ३७ ॥ पर्व्वतो
मन्दरोमेरुःकैलासोगन्धमादनः ॥ मेरुश्चाहंत्रिकूटश्चपारियात्रश्चपर्व्वतः ॥ ३८ ॥ चन्द्रोबुधश्चशैलेन्द्रोमैनाकश्चविभीषण ॥ प्रह्लादश्चगतह्लादःक्षीरोदे
क्षुरसस्तथा ॥ ३९ ॥ लवणश्चैवविज्ञेयोलोहितश्चविभीषण ॥ स्थावरंजङ्गमश्चैवअहमेकोनसंशयः ॥ ४० ॥ वर्षमासाश्चपक्षाश्चअहोरात्रंविभीषण ॥
ममार्च्चनरतोनित्यंयश्चकामयतेनरः ॥ ४१ ॥ ममसत्यपरोयश्चलभतेतद्विभीषण ॥ दीपप्रदानंयोदद्याद्विप्रायशुद्धमानसः ॥ ४२ ॥ तेनदीपप्रदानेनम

तपुरंयातिमानवः ॥ स्वर्णदानन्तुयोदद्याद्गाणपत्यंनयाम्यहम् ॥ ४३ ॥ अर्घ्यपात्रप्रदानेनधूपदानेनयत्फलम् ॥ दास्यामिचगतिंपुण्यांगाणपत्यञ्चदु
र्लभम् ॥ ४४ ॥ यज्ञैर्बहुविशिष्टान्नैर्यत्फलंलभतेद्विज ॥ तत्फलंलभतेविप्रोममलिङ्गाभिषेचनात् ॥ ४५ ॥ यथाभिलषितंपुण्यंततःसत्फलवान्भवेत् ॥
एवंप्रक्षाल्यदोषांस्तुनेष्यामिपरमांगतिम् ॥ ४६ ॥ कर्म्मणामनसावाचादेहेनापिचयत्कृतम् ॥ ममार्च्चनरतानाञ्चतेषांपापंनविद्यते ॥ ४७ ॥ यस्तुसंव
त्सरंपुण्यंपूजयेदेकलिङ्गके ॥ तस्यतुष्टःप्रयच्छामिगाणपत्यंनसंशयः ॥ ४८ ॥ प्रभासञ्चप्रयागञ्चनैमिषंपुष्करंतथा ॥ मनोयस्यनमुह्येततस्यतीर्थं
स्वकेगृहे ॥ ४९ ॥ तीर्थकोटिसहस्रेषुनकदाचिन्नराधमाः ॥ ममार्च्चनगतंपुण्यंलभन्तेचविभीषण ॥ ५० ॥ नमांपश्यन्तितेमूढामनसायेमलीकृताः ॥
अग्निप्रवेशनंकृत्वातथामासोपवासकम् ॥ ५१ ॥ यत्फलंलभतेमर्त्त्योलभतेतन्ममार्च्चनात् ॥ कन्दरेष्वथवारण्येगृहेवापिसमाहितः॥ ५२ ॥ योमाम
र्च्चयतेनित्यंतस्यगाणेश्वरीगतिः ॥ यश्चैनंपठतेनित्यंयश्चैनंकीर्त्तयेन्नरः ॥ ५३ ॥ सर्व्वपापविनिर्म्मुक्तोरुद्रलोकेगतिंलभेत् ॥ यश्चैवंनियतो
भूत्वामाहात्म्यंधारयिष्यति ॥ ५४ ॥ नगच्छेन्नरकंविद्वान्महाघोरंभयावहम् ॥ चन्द्रार्कौनप्रकाशेतेयस्मिन्देशेपुरासदा ॥ ५५ ॥ प्रकाशन्ते
हिमनुजास्तस्मिन्देशेसुतेजसा ॥ एषमन्त्रोहिजप्यश्चहव्यकव्येविभीषण ॥ ५६ ॥ माहात्म्यन्तुसुरश्रेष्ठसर्व्वभूतनमस्कृतम् ॥ माहात्म्यंमेततः
पुण्यंपठिष्यन्तिनराःशुचि ॥ ५७ ॥ धारयिष्यन्तियेचान्येखड्गधारसुधाशुचि ॥ नतेषांकिल्बिषंकिञ्चिन्मयितुष्टेभविष्यति ॥ ५८ ॥
विभीषणउवाच ॥ नमस्तेसर्व्वभूतेशसर्व्वतोविश्वतोमुख ॥ अक्षयश्चाप्रमेयश्चपुराणःपुरुषोत्तमः ॥ ५९ ॥ त्वंवायुस्त्वंहुताशश्चत्वंशिवोद
क्षिणामुखः ॥ त्वंशुचिःसागरश्चैवभक्तानाञ्चसुरेश्वरः ॥ ६० ॥ एषोऽहंतेसुरश्रेष्ठसर्व्वभूतनमस्कृत ॥ अष्टौकामान्प्रयच्छस्वअक्षहस्तम
हाप्रभो ॥ ६१ ॥ त्वंगतिःसर्व्वभूतानांशरणंत्वंनसंशयः ॥ रक्षस्ववरमुख्यैस्त्वंपरमोऽस्यृषिपूजितः ॥ ६२ ॥ भवान्मोक्षोभवानिन्द्रो
भवानग्निःसनातनः ॥ भवान्धर्म्मेषुपुण्येषुसङ्कल्पश्चमनीषिणाम् ॥ ६३ ॥ त्वञ्चतुष्टिर्वपुर्मेधाबुद्धिःकाम्येमनस्तथा ॥ शिवंपुण्यंप्रपश्यन्तिदेवाऋषि
गणास्तथा ॥ ६४ ॥ भवान्मोक्षश्चशान्तिश्चभवान्क्षेत्रज्ञआत्मनः ॥ भवांस्तुसर्व्वलोकानांनित्यंहर्षविवर्द्धनः ॥ ६५ ॥ भवान्क्षेत्रंविनिर्ज्जित्यसिद्धत्वाय
गमिष्यति ॥ नमस्तेभगवन्रुद्रनमस्तेभगवञ्छिव ॥ ६६ ॥ नमस्तेत्रिषुलोकेषुनमस्तेपरतन्त्रिषु ॥ सर्व्वतःपाणिपादान्तसर्व्वतोऽक्षिशिरोमुख ॥ ६७ ॥
सर्व्वतःसर्व्वतोमूर्त्तिरप्रमेयनमोऽस्तुते॥ अनागतंनजानामिगतिंनैवचनैवच ॥६८॥ योगेश्वरमहादेवयोऽसिसोऽसिनमोऽस्तुते ॥ ॥ महेश्वरउवाच ॥ ॥
यश्चैनंपठतेनित्यंशिवप्रोक्तमनिन्दितः ॥ ६९ ॥ विभीषणयथान्यायंनित्यंदेवेनपूजितम् ॥ अश्वमेधस्ययज्ञस्यफलंप्राप्नोतिमानवः ॥ ७० ॥ व्रतंब्रह्मस

मायुक्तोलिङ्गंयोऽभ्यर्च्चयेत्सदा ॥ पठेद्वाशृणुयाच्चैवचतुर्दश्यष्टमीषुच ॥ ७१ ॥ यस्तुलिङ्गेभवेद्भक्तःश्रद्धधानश्चयोभवेत् ॥ तस्यदेयमिदंशास्त्रम
न्यथानप्रकाशयेत् ॥ ७२ ॥ महेश्वरस्तवंश्रुत्वास्वर्गंगच्छेन्नसंशयः ॥ ७३ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांत्रयोदशोऽध्यायः ॥
॥ १३ ॥ व्यासउवाच ॥ ॥ देवयज्ञफलानीहदानतीर्थफलानिच ॥ उपवासफलञ्चैवदानानांतपसःफलम् ॥ १ ॥ अकृत्वाफलमेतेषां
ब्राह्मणोविन्दतेकथम् ॥ एतन्मेसंशयञ्चैवतत्सर्व्वंवक्तुमर्हसि ॥ २ ॥ सनत्कुमारउवाच ॥ ॥ यत्रवाकौशिकीगङ्गादेवीकामार्थमोक्षदा ॥ कुरुक्षेत्रं
प्रयागञ्चनैमिषंपुष्करंतथा ॥ ३ ॥ त्रिस्रोताचपयोष्णीचतृतीयागण्डकीतथा ॥ ब्रह्मावर्त्तानदीशुभ्रायमुनाचातिपावनी ॥ ४ ॥ गङ्गाद्वारंसहस्रा
श्वंभद्रकर्णह्रदस्तथा ॥ दृषद्वतीकरतोयालोहिताचमहानदी ॥ ५ ॥ सरयूर्गण्डकीचैवसागरःसरितांपतिः ॥ कोकानद्यारुणाताम्रारम्यःशोणोमहाह्रदः
॥ ६ ॥ गोदावरीनर्म्मदाचनदीवेत्रवतीतथा ॥ कावेरीकृष्णवर्णाचवितस्ताचमहानदी ॥ ७ ॥ सारस्वतानितीर्थानिकीर्त्तितानिमनीषिभिः ॥ शिवलि
ङ्गप्रणामस्यकलांनार्हन्तिषोडशीम् ॥ ८ ॥ षष्टिकोटिसहस्राणिषष्टिकोटिशतानिच ॥ षष्टितीर्थसहस्राणिपरिसंख्याप्रकीर्त्तिता ॥ ९ ॥ विविधानिचती
र्थानिब्राह्मणोयोऽधिगच्छति ॥ अक्रोधनःशुचिर्दक्षःसर्व्वतीर्थफलंलभेत् ॥ १० ॥ सर्व्वेषामेवतीर्थानांयत्फलंपरिकीर्त्तितम् ॥ मासेनतदवाप्नोतिलिङ्गं
योऽर्च्चयतेध्रुवम् ॥ ११ ॥ मुच्यतेविधिनायुक्तोमुहूर्त्तात्तदवाप्नुयात् ॥ लिङ्गोद्भवमिदंदिव्यंत्रैलोक्यंसचराचरम् ॥ १२ ॥ व्यासउवाच ॥ कथंलिङ्गोद्भवं
नामत्रैलोक्यंसचराचरम् ॥ कथञ्चप्रलयंवापिलिङ्गेगच्छतिनित्यशः ॥ १३ ॥ लिङ्गार्च्चनविधिःकोवागतिर्वाकुत्रशाश्वती ॥ कथञ्चतुष्यतेदेवोभक्तिमा
न्भक्तिवत्सलः ॥ १४ ॥ कस्माच्चदक्षिणांमूर्त्तिमीश्वरस्यामितौजसः ॥ ऋषयःपितरोदेवायजन्तेसंशितव्रताः ॥ १५ ॥ रुद्रलोकंनरोगत्वापुनरावर्त्ततेकथम् ॥ कथं
नपुनरावृत्तिर्ज्ञातुमिच्छामितत्त्वतः ॥ १६ ॥ सनत्कुमारउवाच ॥ अहंतेकथयिष्यामिश्रूयतांमेद्विजोत्तम ॥ यथालिङ्गोद्भवंव्यासत्रैलोक्यंसचराचरम् ॥ १७ ॥
लिङ्गञ्चयादृशंतस्यदेवदेवस्यधीमतः ॥ प्रलयंचयथालिंगेतन्मेनिगदतःशृणु ॥ १८ ॥ यथाचपुनरावृत्तिर्यथानावर्त्ततेपुनः ॥ मयाश्रुतंयथापूर्व्वंगदतोब्र
ह्मणःस्वयम् ॥ १९ ॥ महेश्वरश्चसृष्ट्यादौप्रकृत्यासहसङ्गतः ॥ प्रादुर्भूतोमहावायुस्तस्मादग्निरजायत ॥ २० ॥ लिंगंतस्मात्समुद्भूतंसूर्य्यराशिसमप्रभम् ॥
तच्चसम्भवतेलिङ्गंकाञ्चनंरत्नभूषितम् ॥ २१ ॥ शतयोजनविस्तीर्णंशतसाहस्रमुत्थितम् ॥ लिङ्गराजंसुविपुलंप्रशान्तादित्यवर्च्चसम् ॥ २२ ॥ तत्रब्रह्माद
योदेवायज्ञाश्चसहविष्णुना ॥ तल्लिङ्गंसमनुप्राप्ताहृतसंज्ञाःसुदुःखिताः ॥ २३ ॥ उमापतिविरूपाक्षोनीलकण्ठोविलोहितः ॥ सत्त्वंरजस्तमश्चैवक्षेत्रज्ञःप्र
कृतिस्तथा ॥ २४ ॥ सांख्ययोगस्तथानद्योगिरयःसागराह्रदाः ॥ पृथिवीह्यन्तरिक्षञ्चदिशश्चविदिशस्तथा ॥ २५ ॥ नक्षत्राणिग्रहाश्चैवमासाःसंवत्सरास्तथा ॥

लीयंतेतत्रींलगचईश्वरस्यमहात्मनः ॥ २६ ॥ लिंगादुत्पादयामासत्रींल्लोकान्सचराचरान् ॥ ब्रह्माणमसृजत्पुत्रंप्राजापत्येऽभ्यषेचयत् ॥ २७ ॥ कृत्वा
प्रजापतिंदेवोदेवलोकाग्र्यमीश्वरम् ॥ पुनर्विष्णुञ्चसृजतेलीलयागर्भसम्भवम् ॥ २८ ॥ स्मृतिंसंक्षिप्यसर्व्वेषांतत्रैवान्तरधीयत ॥ एवंलिङ्गोद्भवंसर्व्वत्रै
लोक्यंसचराचरम् ॥ २९ ॥ प्रलयश्चयथालिङ्गेतन्मेनिगदतःशृणु ॥ पुराह्येकार्णवेव्यासहस्रस्यामिततेजसः ॥ ३० ॥ प्रभूतंमध्यवृत्तंचजलेलिङ्गम
दृश्यत ॥ ज्वालामालार्च्चिभिर्व्याप्तंसर्व्वभूतभयङ्करम् ॥ ३१ ॥ योह्यग्निरूपमत्यर्थंविभर्त्त्यपिचरोदसी ॥ एवंभूतश्चविष्टभ्यतिष्ठतिज्वालमण्डले ॥ ३२ ॥
ज्वालाभिस्तस्यलिङ्गस्यत्रैलोक्यंसचराचरम् ॥ दह्यन्तेसर्व्वभूतानिरुद्रमायाविमोहिताः ॥३३॥ ससुरासुरगन्धर्व्वाःसयक्षोरगराक्षसाः ॥ पृथिव्यापस्तथा
वायुराकाशस्तेजएवच॥३४॥यानियानिचभूतानिस्थावराणिचराणिच ॥ तान्याकृष्यन्तेसर्व्वाणिचराणिचभयस्थले॥३५॥ तेषामाकृष्यमाणानांवेगार्थं
मूर्च्छितोऽनिलः॥करोतिभैरवंनादमाकाशंपूरयन्निव॥३६॥ जीवमात्राणिसर्व्वाणिदग्धानितुयथाग्निना ॥ संवृत्तानीहतिष्ठन्तिधान्यानिचदहन्निव॥३७॥
ततोब्रह्मासुरश्रेष्ठोदेवाश्चसहविष्णुना ॥ लिङ्गंतेसमनुप्राप्तानष्टसंज्ञाःसुदुःखिताः ॥ ३८॥ भीताश्चैवनिरीक्षन्तःशिवमायाविमोहिताः ॥ अवशास्तत्रते
सर्व्वेचन्द्रादित्यैर्ग्रहैःसह ॥ ३९ ॥ दिवौकसश्चब्रह्माचरुद्रस्यामिततेजसः ॥ ततःसुप्ताश्चतेदेवाश्चक्षुष्मन्तोयशस्विनः ॥ ४० ॥ उपलभ्यस्मृतिंदेवास्त
त्रैवशरणंगताः ॥ स्तुवन्तिचमहादेवंसर्व्वभूतपतिंशिवम् ॥ ४१ ॥ ब्रह्माविष्णुश्चशक्रश्चऊचुस्तत्रउमापातिम् ॥ त्वंकुमारःकुमारस्त्वंजातस्त्वंसर्व्वतो
मुखः ॥ ४२ ॥ ओङ्कारस्त्वंवषट्कारोदण्डनीतिस्तथैवच ॥ विशन्तिहृदयंसर्व्वेबृहस्पतिपुरोगमाः ॥ ४३ ॥ ब्रह्मादेवाश्चयज्ञाश्चशक्रश्चसहविष्णुना ॥
त्वत्तःप्रसूतादेवेशसर्व्वभूतभवोद्भव ॥ ४४ ॥ एवंमायापरासूक्ष्मायययापश्यामईश्वरम् ॥ शिवउवाच ॥ योगिनश्चमहारूपाज्ञानैश्वर्य्यसमन्विताः॥ ४५॥
अजराश्चामराश्चैवमत्प्रसादाद्भविष्यथ ॥ स्वच्छन्दगतयोनित्यंस्वर्गलोकेमहेश्वराः ॥ ४६ ॥ एवमुक्त्वातुभगवांस्तत्रैवान्तरधीयत ॥ एवमेकार्णवेघोरे
सर्व्वभूतविनाशने ॥ ४७ ॥ आत्महाघप्रयुक्तांस्तुभगवान्व्यथतेध्रुवम् ॥ सर्गान्तेप्रलयेवृत्तेसर्गकालउपस्थिते ॥ ४८ ॥ पुनःसृष्टेषुलोकेषुब्रह्मातत्र
प्रजापतिः ॥ वाजपेयशतैरिष्ट्वायल्लभेतद्द्विजोत्तम ॥ ४९ ॥ विप्रोलिङ्गंत्रिरात्रेषुरुद्रभक्त्यातदश्नुते ॥ अश्वमेधसहस्रस्यसम्यगिष्टस्ययत्फलम् ॥ ५० ॥
मासेनतदवाप्नोतिरुद्रलिङ्गार्च्चनेरतः ॥ राजसूयसहस्रस्यसम्यगिष्टस्ययत्फलम् ॥ ५१ ॥ त्रिभिर्मासैरवाप्नोतिशिवलिङ्गार्चनेरतः ॥ सर्व्व
तीर्थाभिषेकश्चसर्व्वदानफलानिच ॥ ५२ ॥ सर्व्वयज्ञफलश्चैवउपवासफलानिच ॥ ततोऽपिविधिनाव्यासव्रतानिविविधानिच ॥ ५३ ॥
सम्यग्यष्टुश्चयत्पुण्यंत्रिभिर्मासैर्लभेन्नरः ॥ सम्यक्फलमवाप्नोतिशिवलिङ्गार्च्चनेरतः॥५४॥सम्यगिष्टफलाःसर्व्वेशान्तादान्ताःसमाधितः ॥ नवमासान्समा

राध्यब्राह्मणोविजितेन्द्रियः ॥ ५५ ॥ सर्व्वमेवतदाप्नोतिलिङ्गंयोऽर्चयतेभवम् ॥ हिमवान्मन्दरोमेरुःकैलासोगन्धमादनः ॥ ५६ ॥ विन्ध्योऽर्बुदःपुरश्च
न्द्रोमहेन्द्रोमलयस्तथा ॥ वालखिल्ल्याश्चऋषयोनैमिषेयास्तपोधनाः ॥ ५७॥ याश्चैवाप्सरसोदिव्यायेचमातृगणास्तथा ॥ तारागणाग्रहगणाःसर्व्वेपितृ
गणास्तथा ॥ ५८ ॥ चारणोदुम्बराश्चैवविद्यासिद्धास्तथैवच ॥ प्रमाणंपरमंज्ञात्वालिङ्गंयोऽर्चयतेनरः ॥ ५९ ॥ तस्मिन्बहुगुणांप्रीतिंकरोतिवृषभध्व
जः ॥ यत्फलंपाकयज्ञेषुहविर्यज्ञेषुयत्फलम् ॥ ६० ॥ एकाह्नितदवाप्नोतिविप्रोलिङ्गार्चनेरत ॥ त्रीण्यष्टौयानिस्थानानियत्फलंलभतेनरः ॥ ६१ ॥
एकाहंतदवाप्नोतिविप्रोलिङ्गार्चनेरतः ॥ कुमारोब्रह्मणःपुत्रःपुलस्त्यःपुलहःक्रतुः ॥ ६२ ॥ नन्दीश्वरोगणश्रेष्ठोमहाकालश्चवीर्य्यवान् ॥ भृग्वङ्गिरामरी
चिश्चदधीचिश्चयमस्तथा ॥ ६३ ॥ संवर्त्तःसञ्जिगीषुश्चतथाशुक्रबृहस्पती ॥ च्यवनोजमदग्निश्चउत्तङ्कोऽगस्तिरेवच ॥ ६४ ॥ दक्षःप्रजापतिःश्रेष्ठोदक्षपु
त्रास्तुसत्तवै ॥ तथामनुश्चभगवान्प्रह्लादोनमुचिस्तथा ॥ ६५ ॥ अत्रिर्वसिष्ठोभगवान्काश्यपश्चमहातपाः ॥ गौतमश्चभरद्वाजोविश्वामित्रश्चकोविदः
॥ ६६ ॥ आदित्यावसवोरुद्रामरुतश्चतथाश्विनौ ॥ साध्याविद्याधरानागाऋषयोविश्वदेवताः ॥६७॥ अर्थोधर्म्मश्चकामश्चवासुकिस्तक्षकस्तथा ॥ कम्ब
लाश्वतरोनागएलापत्रस्तथैवच ॥६८॥ क्षारोदःपुष्करोगङ्गाश्मशानानिचसर्व्वशः ॥ एवंतेकथितोव्यासउद्भवप्रलयौतथा ॥ ६९ ॥ क्रीडतेभगवान्भूतैर्बा
लःक्रीडनकैरिव॥एषकारयतेकर्म्मतेनस्मोव्याकुलीकृताः॥७०॥यजामहेतमेवेशंतस्मादिच्छामवेदितुम्॥ब्रह्माद्याऋषयोदेवास्तन्मेनिगदतःशृणु ॥७१॥
ब्रह्माविष्णुश्चशक्रश्चचन्द्रादित्यौसमीरणः ॥ यमःकालश्चमृत्युश्चवरुणोधनदोऽनलः ॥ ७२ ॥ ऋग्वेदःसामवेदश्चयजुर्व्वेदस्तथैवच ॥ इतिहासोऽथर्व्ववे
दस्तथागायत्रिरेवच ॥ ७३ ॥ संवत्सरंतपोभक्त्यावल्मीकमृत्तिकासुच ॥ कर्त्तव्यमुपलेपञ्चशिवलिङ्गस्यचाग्रतः ॥ ७४ ॥ शतंसम्मार्ज्जनेविद्धिसहस्रमु
पलेपने ॥ पुष्पोपहारधूपैश्चतुल्यंफलमवाप्नुयात् ॥ ७५ ॥ दशापराधांस्तोयेनक्षीरेणैवशतंक्षमेत् ॥ अपराधसहस्रेतुसर्पिषास्नपनंभवेत् ॥ ७६ ॥ क्षी
रस्नानंघृताभ्यङ्गःसघृतंगुग्गुलंतथा ॥ एतद्भवायदातव्यंसदैववरमिच्छता ॥ ७७ ॥ दशसौवर्णिकंपुष्पंयोभवायप्रयच्छति ॥ यंयंकामयतेकामंतंतंपूर
यतेशिवः ॥ ७८ ॥ मालयाशतसाहस्रंजाप्यंदशगुणंस्मृतम् ॥ विधियज्ञाज्जपयज्ञोविशिष्टोदशभिर्गुणैः ॥ ७९ ॥ उपांशुस्याच्छतगुणःसहस्रोमानसः
स्मृतः ॥ तृणान्यौषधिगुल्मानिलतावल्लीस्तथैवच ॥८० ॥ देवार्थंयस्तुहिंसेतधार्म्मिकोनतुहिंसकः ॥ तथैवसर्व्ववृक्षाणांपुष्पंपत्रंफलंत्वचम् ॥ ८१ ॥
कालजानिसुपुष्पाणिबीजानिशतधातथा ॥ महादेवोपयुक्तानिस्वर्गंयान्तिनसंशयः ॥ ८२ ॥ श्रद्दधानस्तुयःकुर्य्याच्छुचिःप्रयतमानसः ॥ सर्व्वमेतदवा
प्नोतिलिङ्गेयोऽर्चयतेभवम् ॥ ८३ ॥ प्राप्यदुःखंनतेसर्व्वेस्वर्गंयान्तिद्विजोत्तमाः ॥ विश्वेदेवाश्चकार्य्येणश्रुतंपूर्व्वंयथानरैः ॥ ८४ ॥ लिङ्गञ्चस्थापयेत्तत्र

विधिपूर्व्वसमाहितः ॥ संवत्सरन्तुशुश्रूषांकृत्वातत्रशुचिर्नरः ॥ ८५ ॥ पूजाश्चकारयेन्नित्यंतस्यभक्त्याशिवेनवै ॥ कल्पकोटिसहस्राणिरुद्रलोकेमहीयते ॥ ८६ ॥ पूजार्थंप्रत्यहंयस्तुगन्धमाल्याक्षतंशुभम् ॥ योनसम्पादयेन्मोहात्पापकृन्नसधार्मिकः ॥ ८७ ॥ संपादयेद्‌तःपूजांप्रहृष्टेनान्तरात्मना ॥ तस्याःपरिचयंकुर्य्यात्तदेवफलमश्नुते ॥ ८८ ॥ तच्चसर्व्वगतंभक्तोभक्तानांभक्तिवत्सलम् ॥ सर्व्वभूतोद्भवंसर्व्वसर्व्वभूतपतिंशिवम् ॥ ८९ ॥ अर्च्चयेत्सततंलिङ्गेयदीच्छेत्सिद्धिमात्मनः ॥ चिरपर्य्युषितंमाल्यंभवस्यापनयेच्चयः ॥ ९० ॥ गोसहस्रफलंपुण्यंप्राप्नुयान्नात्रसंशयः ॥ अपूर्व्वस्यचलिङ्गस्यशुचिःप्रयतमानसः ॥ ९१ ॥ शतजाप्योपहारेणतदेवफलमश्नुते ॥ स्त्रियःशूद्राश्चम्लेच्छाश्चयेचान्येपापयोनयः ॥ ९२ ॥ नमस्कारसहस्रेणतदेवफलमाप्नुयुः ॥ नमस्कारोऽप्यनुज्ञातोमन्त्रप्रणववर्ज्जितः ॥ ९३ ॥ शूद्राणांदेवभक्तानांमहादेवेनधीमता ॥ पुण्याभिरद्भिःस्नानंचचंदनेनानुलेपनम् ॥ ९४ ॥ मनोरमैश्चसततंगन्धमाल्यैर्विभूषितम् ॥ कुर्य्याद्वैसततंरुद्रेयदीच्छेच्छुभमात्मनः ॥ ९५ ॥ धर्म्मलुब्धश्चसततंशिवमभ्यर्च्चयेत्ततः ॥ पुष्पवासोपहारैश्चसततञ्चनिवेदनैः ॥ ९६ ॥ तस्मैप्रीतोमहादेवःसर्व्वान्कामान्प्रयच्छति ॥ सौवर्णैराजतैःकुम्भैर्मृण्मयोदुम्बरैस्तथा ॥ ९७ ॥ स्नापयेद्भगवंतंहिनियतात्माचयद्भवेत् ॥ अर्घ्यैश्चविविधैःशुद्धैःसशृङ्गारैर्हिरण्मयैः ॥९८॥ इन्द्रनीलैर्महानीलैर्वज्रवैदूर्य्यकैस्तथा ॥ सुकेतकैःप्रवालैश्चतथामारकतैरपि ॥ ९९ ॥ अर्च्चयेच्चसदारुद्रंसर्व्वभूतसुखावहम् ॥ सर्व्ववादित्रनिर्घोषैर्गीतैर्वाविविधैस्तथा ॥ १०० ॥ स्तुतिवाद्यनमस्कारैर्मुखवाद्यैस्तथैवच ॥ पशुभिर्धनधान्यैश्चइष्टदारैश्चयैःप्रियैः ॥ १०१ ॥ प्राप्तभावप्रयत्नैश्चइष्टदानैर्महेश्वरम् ॥ एभिश्चान्यैश्चबहुभिर्विविधैर्नियमैस्तथा ॥ १०२ ॥ सततञ्चार्च्चयेद्देवंशुचिःप्रयतमानसः ॥ सर्व्वपापविशुद्धात्मासर्व्वदुःखविवर्ज्जितः ॥ १०३ ॥ लोकान्कामानिहप्राप्यरुद्रलोकेमहीयते ॥ एतैश्चान्यैश्चबहुभिर्विचित्रनियमव्रतैः ॥ १०४ ॥ त्रिकालमर्च्चयेद्देवंशुचिःप्रयतमानसः ॥ सर्व्वपापविशुद्धात्मासर्व्वदुःखविवर्ज्जितः ॥ १०५ ॥ शिवेनकथितंसर्व्वमुपपन्नायब्रह्मणे ॥ सतेनविधिनायुक्तोऽपूजयच्चमहेश्वरम् ॥ १०६ ॥ मूर्त्तयोऽपिशिवस्यैतास्तन्मेनिगदतःशृणु ॥ योगमूर्त्तिश्चप्रथमाऐन्द्रीइन्द्रसमास्थिता ॥ १०७ ॥ द्वितीयादक्षिणामूर्त्तिर्यासमावृत्त्यातिष्ठति ॥ तृतीयावारुणीमूर्त्तिःपश्चिमातुष्टिदामम ॥ १०८ ॥ चतुर्थीस्यात्तुवरदाधनदासुसुखावहा ॥ अधस्तात्पञ्चमीमूर्त्तिश्चारविधिनातपः ॥ १०९ ॥ वेदयज्ञगतिःषष्ठीवैष्णवीगतिरिष्यते ॥ ऊर्द्धाचमूर्त्तिराग्नेयीसर्व्वभूतप्रमर्द्दिनी ॥ ११० ॥ प्रशान्तानिष्कलामूर्त्तिःसर्व्वभूतसुखावहा ॥ यतिभिःसेव्यतेव्यासजरामरणभीरुभिः ॥ १११ ॥ अनेनविधिनाव्यासयश्चजानातिईश्वरम् ॥ तेनपाशुपतंचीर्णंविमलंव्रतमव्ययम् ॥ ॥११२॥ शिवंसर्व्वगतंज्ञात्वासर्व्वदुःखैःप्रमुच्यते ॥ एवंविज्ञायमेधावीभैक्ष्यवृत्तिसमाचरेत् ॥ ११३ ॥ एषतेकथितस्तातसंभवःप्रलयस्तथा ॥ मूर्त्तीनां

प्रविभागश्चशिवलिङ्गार्च्चनंतथा ॥ ११४ ॥ विधयोविविधाःश्रेष्ठायैश्चतुष्यतिशङ्करः ॥ सर्व्वासामपिमूर्त्तीनांपूजार्हादक्षिणापरा ॥ ११५ ॥ साचसृजति
भूतानितथासंहरतेप्रजाः ॥ वृत्तिंश्रद्धांसुखंकामंमेधाञ्चैवप्रयच्छाति ॥११६॥ विविधान्विन्दतेकामान्मूर्त्तिःसादक्षिणापरा ॥ पाराशर्य्यसदायुक्तोदक्षिणा
मूर्त्तिमर्च्चयेत् ॥११७॥ भावोनयतिसर्व्वस्वंनिष्कलंचाक्षयंददेत् ॥ एतत्तेकथितंव्यासशिवलिङ्गार्च्चनंपरम् ॥ ११८ ॥ श्रद्धाकामसमायुक्तास्तेयान्तिप
रमांगतिम् ॥ सर्व्वव्याधिप्रशमनंसर्व्वदुःखविनाशनम् ॥ ११९ ॥ दर्शनाच्छ्रवणाद्वापिनामसंकीर्त्तनादपि ॥ प्रमाणञ्चैवलिङ्गस्यश्रुत्वापापैःप्रमुच्यते ॥
॥१२०॥ स्त्रियःशूद्राश्चम्लेच्छाश्चयेचान्येपापयोनयः ॥ अश्वमेधफलंसम्यग्लभन्तेनात्रसंशयः ॥ १२१ ॥ श्रद्धाकामसमायुक्तास्तेयान्तिपरमांगतिम् ॥
शिवनामेतिहासोऽयंब्रह्मणासमुदाहृतः ॥१२२॥ क्रोधमोहप्रशमनोमहापातकनाशनः ॥सकृदावर्त्तयेदेवंभवस्यभवनेशुचिः ॥ १२३॥ अश्वमेधफलंसम्य
ग्लभतेनात्रसंशयः ॥ यश्चैनंपठतेनित्यंयश्चैनंशृणुयान्नरः ॥ १२४॥ वियुक्तःसर्व्वपापेभ्योरुद्रलोकमवाप्नुयात् ॥१२५॥ इति श्रीशैवेमहापुराणेसनत्कुमार
संहितायांचतुर्दशोऽध्यायः ॥ १४ ॥ व्यासउवाच ॥ भगवञ्छ्रोतुमिच्छामित्र्यम्बकस्यमहात्मनः ॥ स्थानानियानिलोकेऽस्मिन्येषुसन्निहितःसदा ॥१॥
प्रमाणञ्चैवसर्व्वेषांतेषुयच्छत्यनुग्रहम् ॥ सतान्तुभजनेसम्यक्तुष्यतेवाकथंततः ॥ २॥ सनत्कुमारउवाच ॥ नमस्तेआदिदेवायपिङ्गलायकपर्द्दिने ॥ भ
क्तानुकंपिनेनित्यंसर्व्वदेवस्तुतायच ॥ ३ ॥ शृणुव्यासपरांवार्णींसर्व्वलोकहितांशुभाम् ॥ येषुस्थानेषुभगवान्सान्निध्यंकुरुतेसदा ॥ ४ ॥ नानारूपधरो
देवःसर्व्वभूतेषुवर्त्तते ॥ नामभिर्विविधैश्चैवस्वयंवैप्राप्यतेसदा ॥ ५ ॥ ब्रह्मादिवाकरोविष्णुःस्कन्दश्चाग्निःपुरंदरः ॥ अर्कःसोमःकुबेरश्चवरुणश्चाप्युमाप
तिः ॥ ६ ॥ मरुतःकपिलश्चैवअव्यक्तंबुद्धिरेवच ॥ एतैर्नामभिरन्यैश्चअर्च्चयन्तिसदाभवम् ॥७॥ योहियांदेवतांभक्त्याआराधयतिसर्व्वतः ॥ तस्यतांमूर्त्ति
मास्थायमहादेवःप्रसीदति ॥ ८ ॥ स्थानानांपरिसंख्यानंवक्तुंशक्तोनचक्वचित् ॥ अपिवर्षसहस्रैर्वासमासेनतुमेशृणु ॥ ९ ॥ इहलोकेतुयान्यष्टौस्थानानि
शृणुतानिमे ॥ प्रमाणञ्चैवसर्व्वेषांतेषुयोवाप्यनुग्रहः ॥१०॥माहेश्वरीमिमांसृष्टिंशुचिर्भूत्वानिशामय ॥ नाम्नारुद्रपदंश्रेष्ठंतथामाहेश्वरंपदम् ॥११॥श्लेष्मा
तकंतथाप्रोक्तमविमुक्तंमहालयम् ॥ गोकर्णंभद्रकर्णञ्चस्वर्णाख्यंस्थानमष्टमम् ॥१२ ॥ स्थानेष्वेतेषुसततंसान्निध्यंकुरुतेभवः ॥ अनुग्रहञ्चकुरुतेभक्तानां
भक्तवत्सलः ॥ १३ ॥ देवैर्देवर्षिभिःसिद्धैस्तथान्यैःपरमर्षिभिः ॥ माहेश्वरेतुभगवान्नित्यंपूज्यस्तुशङ्करः ॥ १४ ॥ द्वियोजनन्तुतत्क्षेत्रंदक्षिणोत्तरतः
स्मृतम् ॥ विस्तरेणतुतावद्धिएवंमाहेश्वरंपदम् ॥१५॥ प्रविशन्तिमृतास्तत्रपरांमाहेश्वरींतनुम् ॥ तस्यदेवस्यतोषेणउमयाविहितंपुरा ॥ १६ ॥
अपिपापप्रसक्तोऽपिरुद्रलोकंव्रजेन्नरः ॥ यक्षैश्चराक्षसैश्चैवपिशाचैःपन्नगैस्तथा ॥ १७ ॥ श्लेष्मातकेचवैदेवोनित्यमेवमुपास्यते ॥ चतुर्दशंयोजनञ्चतत्तु

श्लेष्मातकंस्मृतम् ॥ १८ ॥ रुद्रसायुज्यमाप्नोतितत्रयस्त्यजतेतनुम् ॥ देवदानवगन्धर्व्वाऋषयश्चतपोधनाः ॥ १९ ॥ सम्पूज्यसततंश्रेष्ठाःसदारुद्रपदे
भवम् ॥ द्वियोजनन्तुतत्क्षेत्रंसमन्तात्स्थानमुच्यते ॥ २० ॥ गाणपत्यंसलभतेमृतोरुद्रपदेनरः ॥ त्रिसन्ध्यंतत्रभगवान्सान्निध्यंकुरुतेसदा ॥ २१ ॥
विष्णुःसोमश्चशक्रश्चआदित्यामरुतोऽश्विनौ ॥ अर्च्चयन्तिसुवर्णाख्येमेरौनित्यंत्रिलोचनम् ॥ २२ ॥ अर्द्धयोजनविस्तीर्णसुवर्णाख्यंविदुर्बुधाः ॥ वारा
णस्यान्तुओंकारगम्योविश्वेश्वरःसदा ॥ २३ ॥ पूज्यतेभगवान्देवःपरमात्मासनातनः ॥ लिङ्गन्तुदेवदेवस्यसर्व्वतेजोमयंशुभम् ॥ २४ ॥ दुर्लभन्तु
सुरैःसिद्धैस्तस्मिन्स्थानेतुतिष्ठति ॥ अन्तर्भूतःकलौव्यासतस्मिन्नायतनेप्रभुः ॥ २५ ॥ अनुग्रहञ्चकुरुतेभक्तानामतिवत्सलः ॥ विश्वेश्वरन्तुओंकारं
प्रणमन्तिस्तुवन्तिच ॥ २६ ॥ अविमुक्तेचओंकारोनित्यंसन्निहितोहरः ॥ देवाश्चऋषयश्चैवतथाराजर्षयःसदा ॥ २७ ॥ ध्यानिनोनित्ययोगाश्चप्रशा
न्तावीतकल्मषाः ॥ वेदविद्याव्रतपराःसिद्धाश्चपरमर्षयः ॥ २८ ॥ उपासतेसदाव्यासपञ्चायतनवासिनम् ॥ अचिन्त्यानामतत्रस्थातनुर्देवस्यनिर्वृतिः
॥ २९ ॥ विशन्तिचमहात्मानःपरांमाहेश्वरींतनुम् ॥ द्वियोजनंततःक्षेत्रंसमन्तात्सर्व्वतोमुखम् ॥ ३० ॥ अतुल्यमितितत्क्षेत्रमविमुक्तंततःस्मृतम् ॥
ब्रह्माचाग्निश्चसोमश्चविष्णुरिन्द्रोबृहस्पतिः॥३१॥समुद्राश्चैवसरितोद्वीपाओषधयस्तथा ॥ उपासतेमहाभागंभद्रकर्णंसदाशिवम् ॥३२॥ उज्ज्वलंचसुपु
ण्यंचकथितंपूर्व्वमेवच ॥ तस्मान्नसदृशंकिंचित्स्थानमन्यत्रविद्यते ॥ ३३ ॥ पुण्यत्वादथरम्यत्वात्संयोगाच्छङ्करस्यतु ॥ तत्राहंनियतोव्यासगङ्गाद्वारे
भवप्रिये ॥ ३४ ॥ईशानदैवतेतस्मिन्नित्यंसिद्धगणैर्वृते ॥ अधर्म्ममानसोवापिनाधर्म्मावसतेनरः ॥३५॥ सिद्धास्तपस्यनुरताब्रह्मावर्त्तस्यदक्षिणे॥एतन्म
हाधनंनामपुराणंपुण्यमुत्तमम्॥३६॥तेषुस्थानेषुवैपूर्व्वमृषयःसिद्धिमागताः॥दिव्यामाहेश्वराभोगाःशक्तिर्यत्राक्षयापरा ॥ ३७ ॥ एतत्तेकथितंव्यासयन्मां
त्वंपरिपृच्छसि ॥ स्थानमाहात्म्यमतुलंपुण्यंपापप्रणाशनम् ॥ ३८ ॥ अध्येतव्यंब्राह्मणेनयोवाभक्तोमहेश्वरे॥ यथैववेदाध्ययनंतथाचेदंप्रशस्यते॥३९॥
नान्यभक्तायदातव्यंपिशुनायशठायच ॥ श्लाधिनेश्लाघमानायइमंधर्म्मंप्रकाशयेत् ॥ ४० ॥ इति श्रीशैवेमहापुराणेसनत्कुमारसंहितायांपञ्चदशोऽध्या
यः ॥ १५ ॥ व्यासउवाच ॥ ब्रह्मन्यद्भगवन्सम्यक्स्थानमाहात्म्यमुत्तमम् ॥ सर्व्वाणियानितीर्थानिगुप्तान्यायतनानिच ॥ १ ॥ अनुग्रहश्चयत्तेषांपुण्य
श्चैवहिशंसमे ॥ नहिमेतृप्तिरस्तीहशृण्वतोवाक्यमुत्तमम् ॥ २ ॥ माहात्म्यंदेवदेवस्यशङ्करस्यमहात्मनः ॥ हृष्यामिसततंब्रह्मन्परंकौतूहलंहिमे ॥ ३ ॥
सएवमुक्तोभगवान्व्यासेनामिततेजसा ॥ सनत्कुमारःप्रोवाचवाचामधुरयातदा ॥ ४ ॥ सनत्कुमारउवाच ॥ शृणुव्यासपरांवाणींविचित्रांपापनाशिनी
म् ॥ मङ्गलांचपवित्रांचपठेत्पर्व्वसुपर्व्वसु ॥ ५ ॥ इन्द्रलोकंसगच्छेत्तुधारयंस्तुसदाशुचिः ॥ यान्युक्तानिपवित्राणिस्वयंदेवेनधीमता ॥ ६ ॥ तानितेकथ

यिष्यामितस्मादेकमनाःशृणु॥छागलाण्डंकुरुण्डंवामुकुटंमण्डलेश्वरम्॥७॥कालञ्जरंवनञ्चैवगदगण्डंस्थलेश्वरम्॥ एतेषुचसदाव्यासभूतसङ्घैर्वृतःप्रभुः
॥ ८ ॥ वसतेपरयाप्रीत्यापूज्यमानोदिवौकसैः ॥ चतुर्द्दशयोजनानांसर्व्वेषांहिपरिग्रहः ॥९॥ ऋषिगन्धर्व्वजुष्टानिसिद्धैर्वाचारितानिच ॥ स्थानान्येतानि
गुह्यानिरुद्रेणसगणेनवै ॥ १० ॥ व्युषितानिसदाव्यासदेवदेवेनशम्भुना ॥ प्रथममधिगच्छेत्तुशुचिर्विगतकिल्बिषः ॥ ११ ॥ अहोरात्रंवसेच्चैवरुद्रेचै
वनिवेदयेत् ॥ पितॄंश्चतर्पयेत्तत्रशृणुतस्यापियत्फलम् ॥ १२ ॥ राजसूयाश्वमेधानिप्राप्नुवन्तिनसंशयः ॥ उक्तोह्यनुग्रहस्तेषांपुण्यंवैमुक्तिरेवच ॥ १३ ॥
योवैपातयतेप्राणाञ्छृणुतस्यापियागतिः ॥ असुरोवासुरोवापिदेवेशस्यहितश्वसः ॥ १४ ॥ अनौपम्यमथैश्वर्य्यमिहलोकेतुप्राप्यवै ॥ विशन्तितुमहादे
वंपतितास्त्यक्तजीविताः ॥ १५ ॥ मुनिगणपरिवृतंमहात्रिदशगणैरभिष्टुतंप्रियम् ॥ सदैवभवमिहशृण्वतोभवेत्सुदुर्लभागतिः ॥ १६ ॥ इतिश्रीशैवेम
हापुराणेसनत्कुमारसंहितायांश्रेष्ठाख्यानंनामषोडशोऽध्यायः ॥ १६ ॥ व्यासउवाच ॥ उक्तंभगवतासम्यक्पवित्रंस्थानमुत्तमम् ॥ फलभोगाःसकामा
नांबहुशश्चमहायशाः ॥ १ ॥ प्रोक्तानियानिगुह्यानितानिवैवक्तुमर्हसि ॥ सनत्कुमारउवाच ॥ गुह्यानामपिगुह्यानिशृणुव्याससमाहितः ॥ २ ॥
यथाचभगवान्देवःकृतवांश्चाप्यनुग्रहम् ॥ पुरावैऋषयोव्यासंपप्रच्छुर्दग्धकिल्बिषाः ॥ ३ ॥ वालखिल्याश्चमुनयस्तथाभागवताभवन् ॥ भक्त्यातुतोष
भगवान्भक्तानांभक्तवत्सलः ॥ ४ ॥ कृतवाननुग्रहंतेषांदर्शनेनमहेश्वरः ॥ तेप्रणम्यमहात्मानोभूतानामीश्वरंप्रभुम् ॥ ५ ॥ ऊचुःप्रांजलयोभूत्वावाल
खिल्यास्तपोधनाः ॥ मनसाप्रार्थितंयच्चतत्कर्त्तासौनसंशयः ॥ ६ ॥ ततस्तेप्रीतमनसोदृष्ट्वादेवंवृषध्वजम् ॥ एषदेवपरःपारोयद्दृष्टोभगवान्स्वयम्
॥ ७ ॥ वरैर्वरसहस्रैर्वादुर्लभंतवदर्शनम् ॥ अनुग्राह्यायदिवयंयदिदेयोवरःपरम् ॥ ८ ॥ इच्छामोभगवञ्ज्ञातुंगुह्यान्यायतनानिच ॥ नित्यमुक्तोऽ
व्ययोदेवोभक्तेर्भक्तजनप्रियः ॥ ९ ॥ एवंप्रसादितस्तैस्तुमुनिभिःपुण्यकांक्षिभिः ॥ उवाचतानृषीन्सर्व्वान्वाक्येनजीवयन्निव ॥ १० ॥ श्रीमहारु
द्रउवाच ॥ श्रूयतांपरमंगुह्यंयेषुनित्यंवसाम्यहम् ॥ सृजामिह्यनुगृह्णामिभक्त्यापरमयासदा ॥ ११ ॥ तानिवःसम्प्रवक्ष्यामितीर्थानिचमहीतले ॥
शृण्वन्तुऋषयःसर्व्वेशुचिश्रद्धासमन्विताः ॥ १२ ॥ महापुरंचक्रपुरंगुह्यंश्रीपर्व्वतंतथा ॥ जाप्येश्वरंततोगुह्यंगुह्यमाम्राडिकेश्वरम् ॥ १३ ॥ तथाम
हाकालपुरंगुह्यंमध्यमकेश्वरम् ॥ देवदारुवनंगुह्यंमहाभैरवमेवच ॥ १४ ॥ गुह्यान्येतानिविप्रेन्द्रायःकाश्चिदधिगच्छति ॥ भक्त्यापरमयायुक्तोभक्तोवै
श्रद्धयान्वितः ॥ १५ ॥ एतान्दृष्ट्वातुयोभक्त्यातस्यतुष्याम्यहंसदा ॥ गुह्यस्थानेऽर्च्चयेद्योमांभक्त्यावैश्रद्धयान्वितः ॥ १६ ॥ बलिपुष्पोपहारैर्वा
गन्धपुष्पैर्विलेपनैः ॥ प्रणिपातेनचैवान्योयोमांसमधिगच्छति ॥ १७ ॥ अकामोवासकामोवागुह्येष्वेषुचयोनरः ॥ ब्राह्मणःक्षत्रियोवापिवैश्यःशूद्रस्तथै

वच ॥ १८ ॥ म्लेच्छावाक्रूरकर्म्माणःस्त्रियोवापिनसंशयः ॥ गाणपत्यंध्रुवस्थानमिन्द्रलोकेमहीयते ॥ १९ ॥ अक्षय्यस्तस्यलोकोवैतथाप्यन्येप्रिय
न्तिये ॥ पितॄणाञ्चैवमक्षय्यंस्थानेष्वेतेषुयोनरः ॥ २० ॥ श्राद्धंदद्यान्महाभागोदद्याद्वापितिलोदकम् ॥ दर्भास्तरणसङ्कीर्णौपिण्डंस्थानेनिवेश्यच
॥ २१ ॥ स्वयंस्वपितृभिःसार्द्धंस्वर्गलोकेमहीयते ॥ एतत्सर्व्वंसमाख्यातंदुर्लभंसर्व्वदेहिनाम् ॥ २२ ॥ यइदंनियमात्कश्चिद्देवस्याग्रेतुश्रावयेत् ॥
श्रुत्वैवंगुह्यमाख्यानंयेनराःपापयोनयः ॥ २३ ॥ स्त्रियःशूद्राश्चम्लेच्छाश्चप्राप्नुवन्तिपरांगतिम् ॥ तस्माद्विद्वानधीयीतावयश्रेच्चसमाहितः ॥ २४ ॥
नाप्रशान्तायदातव्यंनचान्याहितकारिणे ॥ कर्कशायाविशुद्धायपिशुनायशठायच ॥ २५ ॥ चपलायनृशंसायनदेयंस्यात्कथञ्चन ॥ इदन्तुश्रेष्ठपुत्राय
शिष्यायचहितायच ॥ २६ ॥ श्लाधिनेश्लाघमानायप्रशान्तायतपस्विने ॥ प्रियंवदायश्रोत्रियायभक्तायचमहेशितुः ॥ २७ ॥ यतिनेचतथादेयंतथाज्ञा
नवतेसदा ॥ श्रावयेद्यस्तुविप्रायसदापर्व्वसुपर्व्वसु ॥ २८ ॥ रुद्रलोकंसगच्छेत्तुधारयेद्यस्तुवैपुमान् ॥ सम्प्रोक्तंवेदशास्त्रेषुतस्माद्गुह्यमितिस्मृतम् ॥
॥२९॥ रहस्यन्तुरहस्यानामितिगुह्यविदोविदुः ॥ रहस्यंदेवदेवस्यगुह्यमित्यभिसंज्ञितम् ॥३०॥ तस्माद्विप्रमहान्नित्यंकीर्त्तितंगुह्यमुत्तमम् ॥ स्थानेष्वे
तेषुसततमभिगम्यमहेश्वरः ॥ ३१ ॥ गत्वातपस्यतोनित्यंमानसंविमलंशिवम् ॥ तत्राहंनियतोविप्रगङ्गाद्वारेचनित्यशः ॥ ३२ ॥ आद्यस्थानेषुएतेषु
पूजयन्तिसदाशिवम् ॥ गच्छन्तिविमलाःशुद्धाःपदंमाहेश्वरंहिते ॥ ३३ ॥ नतेषांपुनरावृत्तिर्भवमृत्युर्महात्मनाम् ॥ एषईश्वरसद्भावःकथितस्तेसमासतः
॥ ३४ ॥ यंश्रुत्वाक्रूरकर्म्माणःप्राप्नुवन्तिपरांगतिम् ॥ यइमांश्रावयेद्वापिब्राह्मणःसत्पथेस्थितः ॥ ३५ ॥ सर्व्वकामादिकंवक्तुःश्रोतुस्तस्योपतिष्ठति ॥
एतत्तेकथितंपुण्यंगुह्यानाञ्चैवकीर्त्तनम् ॥ ३६ ॥ देवदेवस्ययत्स्थानंगुह्यानांगुह्यमुत्तमम् ॥ कीर्त्तितंसुमहापुण्यंसत्येनैवमहामुने ॥ ३७ ॥ यइदंश्राव
येद्विप्रःसदापर्व्वसुपर्व्वसु ॥ नदुर्गतिमवाप्नोतिरुद्रलोकञ्चगच्छति ॥ ३८ ॥ इति श्रीशैवेमहापुराणेसनत्कुमारसंहितायांसप्तदशोऽध्यायः ॥ १७ ॥
व्यासउवाच ॥ महादेवश्चविष्णुश्चब्रह्माचैवहिसुव्रत ॥ प्रभावैःकर्म्मणाञ्चैवकोऽधिकोवदईश्वरः ॥ १ ॥ एतन्मेसंशयतातब्रूहिबुद्धिमतांवर ॥
अनागतमतिक्रान्तंवर्त्तमानञ्चबुध्यसे ॥ २ ॥ सनत्कुमारउवाच ॥ अत्राप्युदाहरन्तीममितिहासंपुरातनम् ॥ पुरात्रैलोक्यविजयेविष्णुनाप्रभविष्णु
ना ॥ ३ ॥ बलिर्बद्धोमहाराजस्त्रैलोक्यंप्राप्तवांस्तदा ॥ सन्त्रस्तेषुचदैत्येषुप्रह्लादप्रमुखासुराः ॥ ४ ॥ अथाजग्मुःप्रभुंद्रष्टुंदेवदेवंसनातनम् ॥ यत्रासौ
विश्वरूपाक्षःक्षीरोदस्यसमीपतः ॥ ५ ॥ सिद्धाविद्याधरानागानद्यःसर्व्वाश्चपर्व्वताः ॥ साध्याब्रह्मर्षयोयेचगन्धर्व्वाप्सरसस्तथा ॥ ६ ॥ दृष्ट्वाम्बरगता
विष्णुंदेवदेवंसनातनम् ॥ स्तुवन्तिवरदंदेवंप्रहृष्टेनान्तरात्मना ॥ ७ ॥ त्वंधातात्वंहिकर्त्तात्वंकामंक्रोधंभयंमदम् ॥ त्वंधारयसिलोकांस्त्रींस्त्वमेव

सृजसिप्रभो ॥ ८ ॥ त्वत्प्रसादाच्चकल्याणंप्राप्तंत्रैलोक्यमव्ययम् ॥ असुराश्चहताःसर्व्वेबद्धश्चैवबलिस्तथा ॥ ९ ॥ स्थापितश्चत्वयापूर्व्वंजगत्स्थावरज
ङ्गमम् ॥ त्वंगतिःसर्व्वदेवानांत्वंयोगीप्रभुरव्ययः ॥ १० ॥ एवमुक्तःसुरैर्विष्णुःसिद्धैश्चपरमर्षिभिः ॥ प्रत्युवाचततोविष्णुःसर्व्वगःपुरुषोत्तमः ॥ ११ ॥
विष्णुरुवाच ॥ श्रूयतामभिधास्यामिकारणंसुरपुङ्गवाः ॥ यस्तुष्टःसर्व्वभूतानांस्रष्टृत्वमददाच्छिवः ॥ १२ ॥ सृष्टाश्चब्रह्मणाचैवसप्तलोकाश्चमायया ॥
तस्यैवचप्रभावेणअहंश्रेष्ठत्वमागतः ॥ १३ ॥ पुरातमासिअव्यक्तेत्रैलोक्यंग्रसितंमया ॥ तदवस्थेषुभूतेषुएकोऽहंशयितस्तथा ॥ १४ ॥ सहस्रशीर्षो
वैभूत्वासहस्राक्षःसहस्रपात् ॥ शङ्खचक्रगदापाणिर्माययाविमलाम्भसि ॥ १५ ॥ एतस्मिन्नन्तरेदूरात्पश्यामिविमलंप्रभुम् ॥ कृष्णाजिनधरंदेवंकमण्ड
लुविभूषितम् ॥ १६ ॥ निमिषान्तरमात्रेणप्राप्तवान्पुरुषोत्तमः ॥ ततोमामब्रवीद्ब्रह्मासर्व्वलोकपितामहः ॥ १७ ॥ कस्त्वंकुतोवाकिंशेषेतत्त्वतोवद
किंचिरम् ॥ अहंकर्त्तास्मिलोकानांस्वयम्भूर्विश्वतोमुखः ॥ १८ ॥ मयाप्युदाहृतंब्रह्मन्नहंनारायणःप्रभुः ॥ धाताकर्त्ताचलोकानांसंहर्त्ताचजगत्प्रभुः ॥
॥ १९ ॥ एवंसम्भाषमाणौतुपरस्परमितितदा ॥ उत्तरांदिशमास्थायज्वालांपश्यामितिष्ठतीम् ॥ २० ॥ ततस्तांज्वालमालोक्यविस्मयाविष्टमा
नसः ॥ तेजसातस्यज्वालस्यसर्व्वंज्योतिस्ततोऽज्वलत् ॥ २१ ॥ वर्त्तमानेमहाज्वालेअत्यर्थंपरमाद्भुते ॥ तद्दृष्ट्वापरमाश्चर्यमुभौविस्मितमानसौ ॥
॥ २२ ॥ दिवंभुवश्चविष्टभ्यतिष्ठतेज्वालमण्डलम् ॥ तस्यमध्येतुपश्यावोलिङ्गन्तुविमलप्रभम् ॥ २३ ॥ प्रादेशमात्रंदुष्प्रेक्ष्यंदुर्निरूप्यश्चदुःसहम् ॥
महाकायंमहातेजोवर्द्धमानमिवौजसा ॥ २४ ॥ ज्वालमालादिभिर्व्याप्तंसर्व्वभूतभयङ्करम् ॥ घोरंदारुणमत्युग्रंनिर्दहन्निवरोदसी ॥ २५ ॥ ततोमांप्रा
ब्रवीद्ब्रह्माअप्यहंत्वत्समन्वितः ॥ अत्यन्तश्चविजानीयांलिंगस्यास्यमहात्मनः ॥ २६ ॥ अहमूर्द्ध्वंगमिष्यामियावदन्तोऽस्यविद्यते ॥ त्वञ्चाधस्ताद्वि
जानीहिअन्तंतस्यमहात्मनः ॥ २७ ॥ एवञ्चसमयंकृत्वागतऊर्द्ध्वंह्यधोह्यहम् ॥ मनोजवगतिर्भूत्वायोगयुक्तोमहाव्रती ॥ २८ ॥ वर्षाणान्तुसहस्राणि
विमृशन्तौपरस्परम् ॥ नचपश्यामितस्यान्तंततःश्रमवशादहम् ॥ २९ ॥ तथैवब्रह्मासंश्रान्तोअन्तश्चैवनपश्यति ॥ समागतोमयासार्द्धंतथैवविमला
म्भसि ॥ ३० ॥ ततोविस्मयमापन्नौभीतौचापिमहाबलौ ॥ माययामोहितौतेननष्टसंज्ञावुभौतथा ॥ ३१ ॥ ध्यानाद्ध्वामहादेवमीश्वरंसर्व्वतोमु
खम् ॥ प्रभवंनिधनञ्चैवभूतानांभूतमव्ययम् ॥ ३२ ॥ ब्रह्माञ्जलिपुटोभूत्वातस्मैशर्व्वायशूलिने ॥ अव्यक्तायअनन्तायनमस्कारंप्रचक्रमे ॥ ३३ ॥
नमस्त्रैलोक्यनाथायसुरेश्वरनमोऽस्तुते ॥ भूतपतयेऽनन्तायसत्त्वायसत्त्वयोनये ॥ ३४ ॥ परमेष्ठिपरंब्रह्मपरमात्मापरंपदम् ॥ तेजस्त्वंका
मदेवस्त्वंरुद्रस्कन्दविभोऽक्षय ॥ ३५ ॥ त्वंयज्ञस्त्वंवषट्कारस्त्वमोङ्कारःपरंपदम् ॥ स्वाहाकारोनमस्कारःसर्व्वकर्म्मसुसूक्तवान् ॥ ३६ ॥

स्वाहाकारश्चजाप्यश्चव्रतानिनियमानिच ॥ वेदेसांख्येचयोगेचभगवानेवसर्व्वगः ॥३७॥ कामक्रोधोद्भवंदुःखमिच्छाद्वेषोदमःशमः ॥ क्रियाचव्याधय
श्चैवत्वंपश्चात्सुखदुःखयोः ॥ ३८ ॥ ऋतवोवत्सराश्चैवविद्याविद्येऽनलस्तथा ॥ इन्द्रियाणाञ्चसर्व्वेषामिन्द्रियार्थाश्चतेस्मृताः ॥ ३९ ॥ स्थविष्ठाश्चैवसू
क्ष्माश्चभगवानेवसर्व्वेशः ॥ विश्वरूपोमहारूपःसर्व्वरूपस्तथैवच ॥ ४० ॥ तेजसांतेपरंतेजःस्पर्शानांस्पर्शमेवच ॥ रूपगन्धरसाआपोऽधिपश्चभुवनेश्व
रः ॥ ४१ ॥ आकाशस्त्वञ्चवैछन्दोभूतानांप्रभुरव्ययः ॥ त्वंकर्त्तासर्व्वभूतानांलोकेषुप्रलयान्तकृत् ॥४२॥ त्वंधारयसिलोकांस्त्रींस्त्वमेवसृजसिप्रभो ॥
पश्चिमेनतुवक्त्रेणवरुणस्त्वंप्रकाशसे ॥ ४३ ॥ उत्तरेणतुसौम्येनभूर्भुवस्त्वंप्रजाविधिः ॥ रमसेबहुधादेवप्रजानांप्रवरोह्यसि ॥ ४४ ॥ आदित्यावसवोरु
द्रावरुणश्चतथाऽश्विनौ ॥ सिद्धाविद्याधरानागाअप्सरोयक्षराक्षसाः ॥ ४५ ॥ सिद्धाब्रह्मर्षयश्चैवचारणाश्चतपोधनाः ॥ वालखिल्याश्चऋषयस्तपःसिद्धाः
सहस्रशः ॥ ४६ ॥ त्वत्तःप्रसूतादेवेशअक्षराश्चमहाबलाः ॥ सहस्रशीर्षोऽनन्तश्चवसुर्वासुकिरेवच ॥ ४७ ॥ वरुणश्चमहातेजागरुडश्चमहाबलः ॥ अर्थो
धर्म्मश्चकामश्चयशोमोहःसमीरणः ॥ ४८ ॥ अग्निश्चैवमहाब्धिश्चप्रजातास्तेमहेश्वर ॥ रमासीतातथाकालीदेवीगायत्रिरेवच ॥ ४९ ॥ लक्ष्मीःकीर्त्तिर्धृ
तिःसिद्धिर्मेधालज्जावपुःस्मृतिः ॥ तुष्टिःपुष्टिस्तथानन्दाजयादेवीसरस्वती ॥ ५० ॥ त्वत्तोजातामहाभागअन्येचापिमहाबलाः ॥ ऋतुःसंवत्सरोमासः
पक्षोऽहोरात्रएवच॥५१॥ कलाकाष्ठानिमेषाश्चमुहूर्त्ताश्चलवास्तथा ॥ नक्षत्राणिग्रहाश्चैवअश्वागावोअजाविकाः॥५२॥यज्ञहव्यञ्चयत्किञ्चित्त्वत्तोजातंसुरे
श्वर ॥ रजोभिर्माययाच्छन्नंनत्वांपश्यन्तिकेवलम् ॥५३॥ योगिनोनित्यमुक्तायेपश्यन्तित्वांबुधास्तथा ॥माययामोहितंलोकंत्वत्पदञ्चसनातनम् ॥५४॥
नत्वांपश्यन्तिसंमूढामग्नास्तमसिदारुणे ॥ त्वत्तोब्रह्माअहंचैवप्रसूतःपुरुषोत्तमः ॥ ५५ ॥ आदौमध्येतथाचान्तेनविदन्तिकदाचन ॥ नवेदयंतित्वांके
चित्पुराणंचमहेश्वरम् ॥ ५६ ॥ ध्येयंपुराणंपरमंपवित्रंपरात्परस्त्वंपुरुषोत्तमस्त्वम् ॥ परंचसूक्ष्मंमुनिभिश्चगीतंपरात्परस्त्वंपरमंचशाश्वतम् ॥५७॥
नमोऽस्तुआदित्यसमानवक्त्रनमोऽस्तुआदित्यसमानमौलिन् ॥ नमोऽस्तुतेवज्रपिनाकधारिन्नमोऽस्तुतेभूतपतेंऽशुधारिन् ॥ ५८ ॥ नमोऽस्तुते
भस्मविभूतिशीलनमोऽस्तुतेकामशरीरनाशिन् ॥ नमोऽस्तुतेसूक्ष्मअनन्तरूपिन्नमोऽस्तुतेविधेअनन्तरूपिन् ॥ ५९ ॥ नमोऽस्तुतेयमानन्तरूपि
न्नमोऽस्तुतेभूतभविष्यभाव्य ॥ नमोऽस्तुतेऽपूर्व्वनिकेतवासनमोऽस्तुतेवैअविमुक्तवासिने ॥ ६० ॥ नमोऽस्तुतेपरममूर्ध्निवासिन्नमोऽस्तुतेलोकसमु
द्रवासिन् ॥ नमोऽस्तुतेआत्मशरीरवासिन्नमोऽस्तुतेसर्व्वंहिरण्यगर्भ ॥ ६१ ॥ नमोऽस्तुतेदेवहिरण्यरेतोनमोऽस्तुतेदेवहिरण्यवासिन् ॥ नमोऽस्तुतेदे
वहिरण्यपादनमोऽस्तुतेदेवहिरण्यमौले ॥ ६२ ॥ नमोऽस्तुतेदेवहिरण्यवर्णनमोऽस्तुतेदेवहिरण्यकर्ण ॥ नमोऽस्तुतेदेवहिरण्यनेत्रनमोऽस्तुतेदेवहिरण्य

पाणे ॥ ६३ ॥ नमोस्तुतेदेवहिरण्यदंष्ट्रनमोऽस्तुतेदेवहिरण्यकर्म्मन् ॥ नमोनगेंद्रात्मकदेवनित्यंनमोऽस्तुतेशङ्करनीलकण्ठ ॥ ६४ ॥ नमोऽस्तुते
देवसहस्रधारनमोऽस्तुतेपिङ्गलनीललोचन ॥ नमोस्तुतेसर्व्वजगद्गुरोभवनमोऽस्तुतेभूतगणान्त्रशोभित ॥ ६५ ॥ नमोस्तुतेकर्म्मसहस्रपूजितनमोस्तुते
चारणसिद्धसेवित ॥ नमोऽस्तुतेऋषिगणैःसुपूजितनमोऽस्तुतेयज्ञसहस्रकल्प ॥६६॥नमोस्तुतेकल्पसहस्रभूषितनमोस्तुतेऋषभपद्मनाभाव्ययात्मन् ॥
॥ ६७ ॥ एवंसंस्तूयमानोहिकीर्त्त्यमानोमहेश्वरः ॥ बभाषेचतथातुष्टईशानोवरदःप्रभुः ॥ ६८ ॥ वज्रकोटिसहस्रेणग्रसमानइवाम्बरम् ॥ आदिदेवोम
हायोगीसूर्य्यकोटिसमप्रभः ॥ ६९ ॥ एकग्रीवःसुजठरोनानाभरणभूषिसः ॥ नानामणिविचित्रांगोनानागन्धानुलेपनः ॥ ७० ॥ पिनाकदीपितकरःप
ट्टिशाशनिशूलधृक् ॥ व्यालयज्ञोपवीतीचचीरवस्त्रभयंकरः ॥ ७१ ॥ दुन्दुभिस्वननिर्घोषःपर्ज्जन्यनिनदोपमः ॥ मुक्तोहासस्तदातेनलोकास्तत्रप्रक
म्पिताः ॥ ७२ ॥ तेनशब्देनमहताभयत्रस्तामहात्मनः ॥ ततःप्रोवाचभगवान्प्रीतोऽथाप्यावयोस्तथा ॥ ७३ ॥ पश्यध्वंवैमहात्मानोभयंसर्व्वत्रमुच्यता
म् ॥ अयंमेदक्षिणोबाहुर्ब्रह्मात्वंहिममात्मजः ॥ ७४ ॥ वामबाहुश्चमेविष्णुःसंयुगेत्वपराजितः ॥ मुनयःसदृशंसम्यग्वरंवृणुतंसुव्रतौ ॥ ७५ ॥ ततःप्रहृ
ष्टमनसौपादयोःपतितावुभौ ॥ यदिप्रीतोऽसिभगवन्यदिदेयोवरश्चमे ॥ ७६ ॥ भक्तिर्भवेद्भवेनित्यंत्वयिदेवसुरेश्वर ॥ एवमुक्तःसुरश्रेष्ठःसृजध्वंविपुलाः
प्रजाः ॥ ७७ ॥ इत्युक्त्वाभगवान्देवस्तत्रैवान्तरधीयत ॥ एवंसंक्षेपतःप्रोक्तःप्रभावस्तस्ययोगिनः ॥ ७८ ॥ तेनसर्व्वमिदंदृष्टंहेतुर्भूत्वातुसर्व्वजित् ॥ इदं
चस्वर्ग्यमायुष्यमिदंशान्तिकरंतथा॥७९॥ तस्यविघ्नंनकुर्व्वंतिदानवाग्रहराक्षसाः ॥ पिशाचायातुधानाश्चगुह्यकाभुजगास्तथा ॥ ८० ॥ यःपठेतशुचिः
प्रातर्ब्रह्मचारीजितेन्द्रियः ॥ अभग्नयोगमाहात्म्यःसोऽश्वमेधफलंलभेत् ॥ ८१ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांलिङ्गोद्भवनामाष्टादशोऽ
ध्यायः ॥ १८ ॥ व्यासउवाच ॥ लिङ्गस्यस्थापनेकिञ्चपुष्पदानेचकिंफलम् ॥ अभ्यङ्गेचैवकिंप्रोक्तंक्षीरस्नानेचकिंफलम् ॥ १ ॥ एतन्मेतत्त्वतोब्रूहिप्रश्नं
बुद्धिमतांवर ॥ अनागतमतिक्रान्तंवर्त्तमानंचबुध्यसे ॥२॥ त्वत्समोनास्तिलोकेऽस्मिन्संशयंब्रूहितत्त्वतः ॥ सनत्कुमारउवाच ॥ सप्तानांसोमसंस्थानां
यत्फलंसमुदाहृतम् ॥ ३ ॥ फलंवैसर्व्वकाम्यानांफलंबहुसुवर्णकम् ॥ तत्फलंदेवदेवस्यलिंगसंस्थापनाद्भवेत् ॥ ४ ॥ अयुतार्ब्बुदकोटीनांतेषामष्टौयुता
निच ॥ क्रीडन्तेरुद्रपार्श्वेतुपुत्रवत्परिपालिताः ॥५॥ स्त्रियोवापुरुषोवापियदिवाथनपुंसकः ॥ स्थापयेल्लिंगमेकन्तुवियोगंनैवगच्छति ॥६॥ मासेमासे
तुयःस्नायाद्यावज्जीवंकृतीशुचिः ॥ गन्धदानेनतत्पुण्यंप्राप्नुयान्नात्रसंशयः ॥ ७ ॥ भूमिदानेनयत्पुण्यंकनकंचप्रयच्छति ॥ चतुर्गुणंसहस्रन्तुगन्धदानस्यत
त्फलम् ॥ ८ ॥ गन्धादभ्यंगदानेनषष्टिकोट्यस्तथैवच ॥ रुद्रलोकेवसेत्सोऽपिघृताभ्यंगेनमानवः ॥ ९ ॥ चतुःषष्टिसहस्राणिगवांवैहेममालिनाम् ॥ यो

दद्यात्कपिलानान्तुक्षरिस्नानस्ययत्फलम् ॥ १० ॥ मासेमासेत्रिषवणंयःस्नायान्मुनिपुंगवः ॥ यावज्जीवन्तुतत्कुर्व्वन्देवदेवस्ययत्फलम् ॥११॥ पक्षेपक्षे
चयःस्नायाद्यावज्जीवंद्विजःशुचिः ॥ उदकस्नापनंकुर्य्यान्मुखवाद्यैस्तथैवच ॥ १२ ॥ अपराधशतंदेवःक्षमतेनात्रसंशयः ॥ गवांशतसहस्रस्यसम्यग्दत्तस्य
यत्फलम् ॥१३॥ पुष्पदानेनतत्पुण्यंप्राप्नुयान्नात्रसंशयः ॥ उत्पलंकरवीरश्चअर्कपल्लवकांस्तथा ॥ १४ ॥ चम्पकंबिल्वपत्रञ्चदेवेदेयंसदानरैः ॥ कालश्चते
षांसम्प्रोक्तस्तन्मेनिगदतःशृणु ॥ १५ ॥ श्रावणेप्रथमेपक्षेउत्पलन्तुनिवेदयेत् ॥ भाद्रेतुप्रथमेपक्षेपद्मञ्चैवनिवेदयेत् ॥ १६ ॥ अपामार्गकुशांश्चैवआश्वयु
क्तेनिवेदयेत् ॥ सदासितानिपुष्पाणियावत्कालंनिवेदयेत् ॥ १७ ॥ वकस्यकरवीरस्यअर्कस्योन्मत्तकस्यच ॥ चतुर्णांपुष्पजातीनांगन्धमाघ्रातिशङ्करः
॥१८॥ वकपुष्पञ्चपद्मञ्चनिर्म्माल्यंनचगच्छति ॥ करवीरसहस्रेतुउत्पलञ्चविशिष्यते ॥१९॥ उत्पलानांसहस्रेणअर्कमेकंविशिष्यते ॥ चम्पकानांसहस्रे
णधत्तूरञ्चविशिष्यते॥ २० ॥ धत्तूरकसहस्रेणनागपुष्पंविशिष्यते ॥ सिन्धुपुष्पसहस्रेणपुन्नागन्तुविशिष्यते ॥२१॥ पुन्नागानांसहस्रेणकर्णिकारंविशिष्य
ते ॥ सिन्धुपुष्पसहस्रैस्तुबृहतीनांविशिष्यते ॥ २२ ॥ बिल्वपत्रात्परंनास्तियेनतुष्यतिशङ्करः ॥ सर्व्वेशुद्धाःसुगन्धाढ्याःकृष्णंनैवनिवेदयेत् ॥ २३ ॥
यत्रैकंबिल्वपत्रस्यचतुःषष्टिरुदाहृतम् ॥ यथालाभंयथापक्षंपुष्पाणितुनिवेदयेत् ॥ २४ ॥ अलाभेनतुपुष्पाणांपर्णानितुनिवेदयेत् ॥ विशेषेणतुयोभ
क्त्यातेषामेकफलंशृणु ॥ २५ ॥ नदुर्गतिमवाप्नोतिपुष्पपत्रनिवेदने ॥ तस्माच्चैवरुद्रपरःकुर्य्यात्पुष्पनिवेदनम् ॥ २६ ॥ योदद्यादीश्वरेदीपंरुद्रंसमधिग
च्छति ॥ ईश्वरस्यतुनैवेद्यंस्वर्गलोकेमहीयते ॥ २७ ॥ ईश्वरंयेनभावेनपूजयेत्तस्यतत्फलम् ॥ यस्तुसर्व्वगतंज्ञात्वातत्रतत्रार्च्चयेच्छिवम् ॥ २८ ॥
सविन्दतिमहापुण्यंरुद्रसायुज्यमाव्रजेत् ॥ २९ ॥ इति श्रीशैवेमहापुराणेसनत्कुमारसंहितायांपुष्पसारसमुद्देशोनामैकोनविंशोऽध्यायः ॥ १९ ॥
व्यासउवाच ॥ भूयएवाहमिच्छामिईश्वराराधनंकथम् ॥ कथंचतुष्यतेदेवःकर्म्मणाचैवभक्तिमान् ॥ १ ॥ एतन्मेसंशयंतातब्रवीहिभगवन्मम ॥ सन
त्कुमारउवाच ॥ नन्दिनेपृच्छतेब्रह्मन्कथितश्चाप्यनुग्रहात् ॥ २ ॥ गणेश्वरपतिर्नन्दीसूर्य्यायुतसमप्रभः ॥ ईश्वरस्यतुमाहात्म्यंपृच्छतेनन्दिकेश्वरः॥३॥
यथोक्तंपृच्छतेदेव्याईश्वरेणमहात्मना ॥ श्रोतुर्ममपरातुष्टिर्भगवन्वक्तुमर्हसि ॥ ४ ॥ नन्दिकेश्वरउवाच ॥ श्रूयतामभिधास्यामितवस्नेहान्महामुने ॥
महेश्वरेणपार्व्वत्याःपुरतोऽभिहितंपुरा ॥ ५ ॥ मद्भक्तयास्थापयेल्लिङ्गंयथोक्तंवरवर्णिनि ॥ अर्पयेत्परमंरम्यंगृहंकैलाससप्रभम् ॥ ६ ॥ यश्चदेवकुलंदे
वात्कुर्य्यान्मेकुसुमेक्षणे ॥ यत्राहंतत्रसोनित्यंभवेदष्टगुणान्वितः ॥ ७ ॥ योमेप्रयच्छतिदेवित्रुटिमात्रञ्चकाञ्चनम् ॥ तस्यहैमवतेशृङ्गेगृहंबालार्कसन्नि
भम् ॥ ८ ॥ तस्यदेविप्रयच्छामिगृहंबालार्कसन्निभम् ॥ यस्तुगावोहिरण्यंवासमुद्दिश्यप्रदापयेत् ॥ ९ ॥ तस्यकामदुघांपृथ्वींददामिनिरुपद्रवाम् ॥

वृषभंसप्रयच्छेतअन्नंकुसरमेवच ॥ १० ॥ रत्नेनवृषयुक्तेनतस्यपापंनकिञ्चन ॥ उपहारैश्चजाप्यैश्चभावितैश्चापिनित्यशः ॥ ११ ॥ तपोपवासनियमै
र्बलिभिश्चैवपुष्कलम् ॥ गीतवादित्रशब्देनयोमामर्च्चयतेसदा ॥ १२ ॥ ब्रह्मलोकमवाप्नोतिपूज्यतेब्रह्मवादिभिः ॥ अग्निष्टोमादिभिर्यज्ञैर्योमार्च्चयति
शोभने ॥ १३ ॥ शक्रस्यार्द्धासनंप्राप्यसुरलोकेमहीयते ॥ पूर्व्वांसन्ध्यांश्रियादेविकैवल्यमधिगच्छति ॥ १४ ॥ सयक्षाणांगुरुर्भूत्वायक्षोभवतिवीर्य्य
वान् ॥ सन्ध्यांमध्यन्दिनेचैवयोऽभिगच्छतिशंकरम् ॥ १५ ॥ लोकपालगुरुर्भूत्वापूज्यतेदैवतैःसह ॥ स्थापनाभ्यर्च्चनामाल्यैर्धूपगंधानुलेपनैः ॥ १६ ॥
योमामर्च्चयतेदेविसमायाश्चातिवर्त्तते ॥ संमार्ज्जनेपञ्चशतंसहस्रमुपलेपने ॥ १७ ॥ जातरूपैश्चरूप्यैश्चअर्च्चयन्तिसुरेश्वरम् ॥ लिङ्गेपूजान्तुयोदेविकरो
तिममशोभने ॥ १८ ॥ गाणपत्यमवाप्नोतिरुद्रलोकंचगच्छति ॥ अभ्यङ्गेनपञ्चशतंस्नापनेद्विगुणंभवेत् ॥ १९ ॥ गन्धोदकेपञ्चगव्येकर्पूरेचचतुर्गुण
म् ॥ क्षीरंपञ्च शतंदेविस्नापनेतुचतुर्गुणम् ॥ २० ॥ माल्येपञ्चशतंदेविगीतवाद्यवरप्रिये ॥ रुद्रलोकमनुप्राप्यगाणपत्येनियोजयेत् ॥ २१ ॥ अगरुंश
तसाहस्रंदशगुणंचन्दनंभवेत् ॥ गन्धंदशगुणंसर्व्वंयथोक्तंतदनन्तरम् ॥ २२ ॥ माल्यंपञ्चशतंदेविनिर्म्माल्यंतदनन्तरम् ॥ चतुर्गुणसहस्राणिधूपःकृष्णा
गुरुःस्मृतः ॥ २३ ॥ अनेनाद्विगुणंचैवसघृतंचचतुर्गुणम् ॥ अपराधसहस्रंचक्षमतेमृदुभाषिणि ॥ २४ ॥ यदिदंकृष्णसारन्तुगुग्गुलंसघृतंदहेत् ॥ देवे
संवत्सरेपूर्णेततोनान्दिसमोभवेत् ॥ २५ ॥ दक्षिणायान्तुमन्मुक्तौदिव्यानाञ्चघृतप्रदौ ॥ निवेदयातिगायत्र्याततःस्कन्दनिवेदिता ॥ २६ ॥ पुनन्तिपि
तरःसर्व्वेभैक्ष्यंदेविनिवेदितम् ॥ घृतमन्नमसंख्येयमिहप्रत्यक्चशाश्वतम् ॥ २७ ॥ अक्षभक्तसमानन्तुदेवंसर्व्वहरंशिवम् ॥ घृताभिषेकंयःकुर्य्यात्संवत्स
रमतन्द्रितः ॥ २८ ॥ नासौमृत्युवशंगच्छेद्गाणपत्यन्तुभोक्ष्यते ॥ यस्तुदीपंप्रयच्छेतममार्च्चनैककौशिकम् ॥ २९ ॥ रुद्राणांसहशोभूत्वावृषेणविचरेद्धु
वि ॥ यस्तुच्छंत्रप्रयच्छेतममभावाद्विषादिने ॥ ३० ॥ तेजोमण्डलसङ्काशंदेवंव्रजतिशक्रवत् ॥ चतुर्दश्यामथाष्टम्यासुभौपक्षौविधानतः ॥ ३१ ॥
अनियमयुक्तस्यापिब्रह्मचर्य्यपुरःसरम् ॥ ब्राह्मणस्यसुवासिन्याममभक्तिपदस्यच ॥ ३२ ॥ तस्यपुण्यफलंदेविमत्प्रसादादिदंशृणु ॥ स्वच्छन्दनिरतो
भूत्वाव्योमचारीविहङ्गवत् ॥ ३३ ॥ अजितःसर्व्वभूतेषुसुरलोकेमहीयते ॥ श्रुतिमात्रेणयेदेविममभक्तिपरायणाः ॥ ३४ ॥ गाणपत्यंहितेषांवैददामिक
मलानने ॥ यथास्थानानिसर्व्वाणिमयाभिरचितानिवै ॥ ३५ ॥ महेश्वरितथातेषुमृत्युतोनकदाभयम् ॥ यस्तुकामकृतंत्यक्त्वाएकभक्तिकृतोनरः ॥
॥३६॥ कायवाङ्मनःसंयुक्तोयावज्जीवन्तुगच्छति ॥ देवितिष्ठतितावच्चयावदाभूतसंप्लवम् ॥ ३७ ॥ अनेकविघ्नसम्भूतास्तमसाबहुलीकृताः ॥ व्याधि
तानित्ययोगस्थाःसत्यसन्धाजितेन्द्रियाः ॥ ३८ ॥ एकाग्रमनसोनित्यंपश्यन्तितिनिश्चिताश्चये ॥ तेषांनप्रलयोदेवियुगकोटिशतैरपि ॥ ३९ ॥ नराणाम

ल्पवित्तानांविधिनाभावनांविना ॥ यथाभक्त्यार्च्चितोदेवितस्यदास्यामिनान्यथा ॥ ४० ॥ एतद्गुह्यतरंदेविदुर्व्विज्ञेयंसुरैरपि ॥ अर्च्चनंचयथोक्तंवैगुह्यंवा
पिमतंशृणु ॥ ४१ ॥ अर्च्चार्च्चितोनतुष्यामितवस्कन्दस्यचप्रिये ॥ लिङ्गार्च्चितोयथातस्यतुष्यामिहरिणेक्षणे ॥ ४२ ॥ अर्च्चितोऽहंवरारोहेपूजितःसर्व्वदे
वतैः ॥ सत्यंदेविप्रयच्छामिजरामृत्युविवर्ज्जितः ॥ ४३ ॥ धूपैर्गन्धैश्चमाल्यैश्चरक्तकाञ्चनवाससैः ॥ योमाञ्चयजतेदेविगाणपत्येनयुज्यते ॥ ४४ ॥
एकरात्रोषितोमर्त्त्यःपुण्डरीकफलंलभेत् ॥ सर्व्वयज्ञफलंतस्यस्वर्गेचविपुलंफलम् ॥ ४५ ॥ शुचिस्तुस्नापनंकृत्वायोमेभक्त्यानियच्छति ॥
त्रींस्तुलोकानतिक्रम्यरुद्रलोकंसगच्छति ॥ ४६ ॥ भक्त्यापरमयायुक्ताःसांख्ययोगविशारदाः ॥ गच्छन्तिममलोकांस्तुभिन्नोमत्तःसुदारुणः ॥
॥ ४७ ॥ तपसातुनशक्नोतिद्रष्टुंमांदेवताअपि ॥ ध्यानेनैवनियुक्तामांपश्यन्तिदेविनान्यथा ॥ ४८ ॥ सर्व्वलोकेषुसर्व्वेषांसांख्यानारायणीस्तुतिः ॥
मद्भक्तानान्तुसर्व्वेषांसंख्यादेविनाविद्यते ॥ ४९ ॥ क्षीयन्तेसर्व्वभूतानिस्थावराणिचराणिच ॥ विनाशोममभक्तानांसंहारेऽपिनविद्यते ॥ ५० ॥
योभूयोदेवतायुक्तःश्रद्धयार्च्चयतेनरः ॥ तस्यतांमूर्त्तिमास्थायप्रसीदामिनसंशयः ॥ ५१ ॥ योहिसर्व्वगतंपश्येत्सर्व्वञ्चमयिपश्यति ॥
तस्याहंनप्रणश्यामिसचमेनप्रणश्यति ॥ ५२ ॥ सत्यार्पितमनोबुद्धिर्मयिभावेनभावितः ॥ ममैवचप्रसादेननरःपापात्प्रमुच्यते ॥ ५३ ॥ सर्व्वथावर्त्त
मानोऽपियोमांदेविसदास्मरेत् ॥ रुद्रलोकंसमाप्नोतिपश्यतेतुवृषध्वजम् ॥ ५४ ॥ सर्व्वारम्भेतुयोनित्यंसततंध्यानकर्म्मणा ॥ यदिवाञ्छतिमांदेविच
तुर्व्वर्गसमोभवेत् ॥ ५५ ॥ षडङ्गेनतुयोगेनयोमामर्च्चयतेसदा ॥ समांप्रविशतेदेविनास्तितत्रविचारणा ॥ ५६ ॥ धत्तूरकैश्चपुष्पैश्चबिल्वपत्रैश्चशोभनैः॥
चम्पकैश्चमहाभागेयोमेकुर्य्यान्निवेदनम् ॥ ५७ ॥ चम्पकपुष्पैश्चमांदेविअर्च्चयेद्योह्यतन्द्रितः ॥ गाणपत्यमवाप्नोतिउग्रैर्भीमगणैःसह ॥ ५८ ॥ पुष्पैःप
द्मार्च्चितैर्वापिकुर्य्याद्योऽभ्यर्च्चनंमम ॥ अर्कपुष्पैस्तथादेवियोमामर्च्चयतेनरः ॥ ५९ ॥ करवीरसहस्रंवायोमेदद्याद्विशेषतः ॥ करवीरसहस्रेतुयत्फलंशृणु
साम्प्रतम् ॥ ६० ॥ अर्काणांतुसहस्रेणपद्ममेकंविशिष्यते ॥ पद्मानांतुसहस्रेणफलंतस्यैवयद्भवेत् ॥ ६१ ॥ वकस्यकुन्दपुष्पस्यतत्फलंतुनिवेदयेत् ॥
कुन्दपुष्पसहस्रंतुवकपुष्पन्तुतत्समम् ॥ ६२ ॥ वकानान्तुसहस्रेणउत्पलंतुनिवेदयेत् ॥ एकतोबिल्वपत्रस्यतत्फलंसमुदाहृतम् ॥ ६३ ॥ चम्पकस्य
महाभागेपुष्पंधत्तूरकैःस्मृतम् ॥ एवमेतानिसर्व्वाणिनिवेदयतियस्तुमे ॥ ६४ ॥ तथापर्व्वसुसुश्रोणितस्यपुण्यफलंशृणु ॥ संवत्सरेणचैकेनपुष्पाणां
यत्फलंलभेत् ॥ ६५ ॥ दिवसेनतुतत्सर्व्वंविख्यातंचवरानने ॥ शोभनैर्दिव्यगन्धाढ्यैःशृणुतस्यापियत्फलम् ॥ ६६ ॥ वकपुष्पप्रदानेनअशीतिस्वर्णजं
फलम् ॥ कामेनाभ्यर्च्चमानस्यशृणुचैवफलंमहत् ॥ ६७ ॥ ममतुल्योनरोभूत्वात्रिशूलीवृषवाहनः ॥ नहन्यतेगतिस्तस्यअनिलस्याम्बरेयथा ॥ ६८ ॥

यस्तुशंकरनिर्माल्यंपादेनाक्रमतेनरः ॥ षष्टिवर्षसहस्राणितिर्य्यग्योनिषुजायते ॥ ६९ ॥ त्रयस्त्रिंशत्सहस्राणिदेवदानवराक्षसाः ॥ पूजयन्तितुमांनित्यं
धर्म्मकामार्थसिद्धये ॥ ७० ॥ अकामात्पठतेनित्यंयश्चैवंशृणुयान्नरः ॥ रुद्रलोकमवाप्नोतितुष्टस्तस्यवृषध्वजः ॥ ७१ ॥ इतिश्रीशैवेमहापुराणेसनत्कु
मारसंहितायांपुष्पसमुद्देशोनामविंशोऽध्यायः ॥ २० ॥ व्यासउवाच ॥ श्रोतुमिच्छामिभगवन्येनतुष्यातिशङ्करः ॥ पुष्पंचकीदृशंप्रोक्तंपुष्पमूल्यं
तुकीदृशम्॥१॥ केनपुष्पेणकिंपुण्यंपरिमाणंप्रकीर्त्तितम् ॥ तेषांचकीदृशंयोगमुपयुक्तंमहत्फलम् ॥ २ ॥ येनकेनप्रकारेणआर्य्यपूर्य्यश्चशंकरः ॥ धू
पस्यैवविधिंकृत्स्नमुपोष्येचैवकीदृशम् ॥ ३ ॥ सनत्कुमारउवाच ॥ महात्मानंमहादेवंस्वयंदेवीतपःस्थिता ॥ विज्ञापयतिदेवेशंभूतानामादिमव्ययम् ॥
॥ ४ ॥ त्वंनाथदेवदेवेशयेनतुष्यसिशंकर ॥ अनावर्त्तभवेद्येनमनसाकर्म्मणापिवा ॥ ५ ॥ एतदिच्छाम्यहंश्रोतुंसर्व्वदेवनमस्कृत ॥ एतत्प्रश्नवरंब्रूहिय
थापृष्टंमहर्षिभिः ॥ ६ ॥ ततःप्रहस्यभगवान्देवदेवोमहेश्वरः ॥ शंकरउवाच ॥ साधुसाधुमहाभागेयथोक्तंप्रश्नमुत्तमम् ॥ ७ ॥ भक्तानामनुकम्पार्थंय
थात्वंहिनिबोधमे ॥ पुष्पाणिरक्तपीतानिअसितानितथापरे ॥ ८ ॥ लोमशादम्भमायेचदुर्गन्धाश्चसुगन्धिनः ॥ अगन्धावासुगन्धाश्चनानागन्धास्तथैव
च ॥ ९ ॥ तेषांप्रसंख्यांवक्ष्यामिदेविएकमनाःशृणु ॥ देवानांशुक्लपुष्पेतुदुर्गन्धादानवेषुच ॥ १० ॥ कर्कशालोमशाश्चैवराक्षसानांप्रकीर्त्तिताः ॥ उद्ध
रेद्धाप्यवेलायांयेचान्येपुष्पितावने ॥ ११ ॥ पुष्पितास्तेचपितॄणांसत्यंदेविब्रवीम्यहम् ॥ देव्युवाच ॥ प्रयच्छंतिचयेमर्त्त्याःपुष्पाणिविविधानिच ॥ १२ ॥
तेषान्तुकीदृशोधर्म्मःसम्मार्ज्जनोपलेपने ॥ धूपस्यस्थापनेऽभ्यंगेगीतवादित्रनिःस्वने ॥ १३ ॥ एतत्सर्व्वंसमाख्याहियदिचेद्भक्तिरस्तिमे ॥ शंकरउवा
च ॥ शृणुदेवियथातथ्यंकीर्त्यमानमिदंशृणु ॥ १४ ॥ सर्व्वद्रव्येषुयेऽपिस्युःसुवर्णंश्रेष्ठमुच्यते ॥ शक्तितोऽस्यप्रदानेनभक्तिमानीश्वरेद्विजः ॥ १५ ॥
तस्मादेवप्रसादेनममलोकेमहीयते ॥ दशचैवसहस्राणिअप्सरोभिश्चक्रीडते ॥ १६ ॥ रुद्रलोकमुपासिद्धःपततेकालपर्य्ययात् ॥ कर्षाशीतिकाविज्ञे
याभाषाएकादशाप्यथ ॥ १७ ॥ एतद्देविप्रमाणेनसुवर्णाशीतिंभक्तिमान् ॥ एतत्तेदेविमन्तव्यंभक्तानांभक्तिवत्सले ॥ १८ ॥ प्रतिसौवर्णिकंपुष्पंतत्रैव
कथयाम्यहम् ॥ द्रोणपुष्पश्चकुन्दंचकुरुतेशंकरार्च्चनम् ॥ १९ ॥ प्रतिसौवर्णिकंदेविबिल्वपत्रंचपार्व्वति ॥ जपाकुसुमसौवर्णंतथाउरगमेवच ॥
॥ २० ॥ द्विसौवर्णंचविज्ञेयंसत्यंचकथयाम्यहम् ॥ जातिमल्लिकपुष्पाश्चपंचसौवर्णिकाःस्मृताः ॥ २१ ॥ वर्षकोटिंशतगुणंममलोकेमहीयते ॥ तैलेना
पिप्रियेदद्याद्धृताभावेतुमानवः ॥ २२ ॥ तेनदीपप्रदानेनशशिवद्राजतेद्विजः ॥ शतंसंमार्ज्जनेविद्धिसहस्रमुपलेपने ॥ २३ ॥ पुष्पोपहारधूपैश्चशतंयो
गिनमुत्तमम् ॥ मालाशतसहस्रस्यजप्यंशतगुणंस्मृतम् ॥ २४ ॥ अगुरुंगन्धधूपश्चचन्दनश्चविलेपनम् ॥ एकविंशत्सुवर्णानिमयातेकीर्त्तितंपृथक् ॥ २५ ॥

चन्दनेनानुलिम्पेतसघृतेनापिधूपयेत् ॥ क्षीरेणस्नापयेल्लिंगंघृताभ्यंगंचकारयेत् ॥ २६ ॥ एषएवविधिर्देवैकर्त्तव्योदेवमानुषैः ॥ पितृगन्धर्व्व
यक्षाणांनागानांरक्षसांतथा ॥ २७ ॥ सर्व्वलोकहितार्थायमयातेकीर्त्तितंतथा ॥ तथानन्दीमहाकालेगणैःसहवृषध्वजः ॥ २८ ॥ त्रिलोचनोभवेद्देवियो
मांविधिवदर्च्चते ॥ सनत्कुमारउवाच ॥ एषपुष्पविधिःप्रोक्तःस्वयमीशेनवैद्विज ॥ २९ ॥ लोकानांहितकामायकिमन्यच्छ्रोतुमिच्छसि ॥ ३० ॥ यइ
दंपठतेनित्यंश्रावयेत्सर्व्वपर्व्वसु ॥ विमुक्तःसर्व्वपापेभ्योरुद्रलोकंसगच्छति ॥३१॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायामेकविंशोऽध्यायः ॥२१॥
॥ व्यासउवाच ॥ भगवञ्छ्रोतुमिच्छामिउपवासस्ययोविधिः ॥ तीर्थानांचैवमासानांविधानंपरमंतथा ॥ १ ॥ तत्त्वेनकथयस्वामिन्ब्रह्मणस्तनयप्रभो ॥
॥ सनत्कुमारउवाच ॥ श्रुत्वापूर्व्वतरंगुह्यमुपवासविधिंपरम् ॥ २ ॥ हिमवत्पर्व्वतेशैलेसिद्धगन्धर्व्वसेविते ॥ उपविष्टास्तुदेवाद्यारुयक्षंत्रिपुरशासनम् ॥
॥ ३ ॥ देवगन्धर्व्वसहितामुनिसङ्घसमाकुलाः ॥ प्रष्टुंचपरमेशानंपरममृषिपूजितम् ॥ ४ ॥ परेशोभगवानिन्द्रोभवानाग्निःसनातनः ॥ भवान्धर्म्मश्च
कामश्चसङ्कल्पश्चमनीषिणः ॥ ५ ॥ त्वंतुष्टिस्त्वंधृतिर्मेधाश्रद्धाकामोमनस्तथा ॥ नगच्छेन्नरकंविद्वान्महाघोरंभयावहम् ॥ ६ ॥ चन्द्रार्कौनप्रकाशेतेय
स्मिन्देशेगतामम ॥ प्रकाशन्तेचमद्भक्तास्तस्मिन्देशेसुतेजसा ॥ ७ ॥ एषमन्त्रोहिजप्यश्चहव्यकव्येमनीषिभिः ॥ माहात्म्यंतेसुरश्रेष्ठयःपठेन्नियतोन
रः ॥ ८ ॥ धारयिष्यन्तियेचान्येश्रद्दधानाश्चमानवाः ॥ नतेषांकिल्बिषंकिञ्चित्त्वयितुष्टेभविष्यति ॥ ९ ॥ नमोऽस्तुसर्व्वभूतेशसर्व्वतोविश्वतोमुख ॥
अक्षयश्चाप्रमेयश्चपुराणपुरुषोत्तम ॥ १० ॥ त्वंवायुरनलश्चैवंत्वंजलंत्वंमहीस्मृता ॥ जातिमल्लिकयूथ्यश्चपंचसौवर्णिकाःस्मृताः॥११॥रक्तोत्पलंतथाचा
न्येसप्तसौवर्णिकाःस्मृताः॥दशसौवर्णिकाज्ञेयाबिल्वाशोकमितिस्मृताः॥१२॥एकादशसुवर्णानिनागपुष्पंसकेशरम्॥वृक्षोत्पलन्तुविज्ञेयंसुवर्णानितुद्वाद
श॥१३॥कनकस्यचगन्धस्यसुवर्णानित्रयोदश॥द्वात्रिंशत्सुवर्णानिपद्मपुष्पंप्रकीर्त्तितम्॥१४॥अष्टाशीतिसहस्राणिकुशपुष्पंप्रकीर्त्तितम्॥ द्विसहस्रन्तुवि
ज्ञेयंशङ्करंवैनिगद्यते ॥१५॥ त्रिसुवर्णसहस्राणिअर्कपुष्पंनिगद्यते ॥ सहस्राशीतिविज्ञेयंबकपुष्पंनिगद्यते ॥१६॥ शतसाहस्रिकोज्ञेयोधत्तूरकइतिस्मृतः॥
अर्कस्यकरवीरस्यकुशोन्मत्तबकस्यच ॥ १७ ॥ योमेप्रयच्छतेदेविलभतेगाणपत्यताम् ॥ एतावत्पुष्पजातीनांगन्धमाघ्राम्यहंसदा ॥ १८ ॥ अष्टमी
चापराह्नेतुतथाकृष्णचतुर्द्दशी ॥ एतैःपुष्पविशेषैश्चकुर्य्यान्नामार्च्चनंसदा ॥ १९ ॥ तस्यपुण्येनयाँल्लोकान्ममलोकनिवासिनः ॥ यथेष्टमर्च्चतेसोऽपियत्र
देवःशिवोऽव्ययः ॥ २० ॥ आद्यमार्गेसिंहारूढमाञ्छतोव्यापकंफलम् ॥ शैवात्तरन्त्येकमनाःपूजयेन्मान्तुयोनरः ॥ २१ ॥ नतस्यदेवताःकाश्चिद्विघ्नंकु
र्व्वन्तिसर्व्वदा ॥ इहलोकेसुखंतस्यपुनस्तस्यचजायते॥२२॥ किंव्रतैःकिंतपोभिर्वामहासांख्यैःपृथग्विधैः॥बध्यन्तेतुमहात्मानोनचैवमुनियातनैः॥२३॥

आकाशेनैवपाशेनबध्यन्तेब्रह्मवादिनः ॥ धारोष्णेनतुक्षीरेणपूजयित्वाममाग्रतः ॥ २४ ॥ निवेदयेद्यथाकामंतस्यपुण्यफलंशृणु ॥ कोटिशतस
हस्राणिवर्षाणान्तुहिमालये ॥ २५ ॥ कृष्णाष्टमीमर्च्चयित्वायत्रतत्रयथातथा ॥ सर्व्वेषाञ्चैवपुष्पाणांविशेषेणोपलभ्यते ॥ २६ ॥ तस्यबिन्दुंनरोयस्तु
लिङ्गमर्च्चयतेसदा ॥ एकाहंमत्प्रियोदेवियुगकोटिममाग्रतः ॥ २७ ॥ वसतेममलोकेचयदिदीक्षानुवर्त्तते ॥ शबलंदेवदारुंवाभक्त्याधूपंप्रदापयेत्॥२८॥
सहस्रंदेविलिङ्गानांतस्यपुण्यफलंशृणु ॥ द्वात्रिंशत्तुसुवर्णानिसार्द्धाशीतिपुनःपुनः ॥ २९ ॥ षष्टिवर्षसहस्राणिमोदतेचममालये ॥ सघृतंगुग्गु
लंवापिअगुरुञ्चैवयोदहेत् ॥ ३० ॥ युगकोटिसहस्राणिममलोकेमहीयते ॥ कालदीपंततोदद्यात्संवत्सरंममापिच ॥ ३१ ॥ हृदयस्थंशिवश्चै
वभक्तानान्तुसुरेश्वरः ॥ यवोहस्तेसुरश्रेष्ठसर्व्वभूतनमस्कृतः ॥ ३२ ॥ अष्टौकामान्प्रयच्छस्वअक्षयाणिमहामते ॥ त्वंगतिःसर्व्वभूतानांशरणं
त्वंनसंशयः ॥ ३३ ॥ ऋषिभिःस्नापयेद्धर्मलभतेमहतींश्रियम् ॥ भवपार्श्वमुपागम्यप्राञ्जलिःप्रयताकरैः ॥ ३४ ॥ उपवासंपरंधर्म्मंस्पृशन्ति
मनसास्मृताः ॥ देव्युवाच ॥ सर्व्वलोकपतेदेवसर्व्वलोकनमस्कृत ॥ ३५ ॥ सर्व्वलोकहितंवाक्यंत्वंसमर्थोऽसिभाषितुम् ॥ सर्व्वेषामेववर्णानांकिंफलं
लभतेनरः ॥ ३६ ॥ ततःकथयमेदेवविधिंविस्तरतस्तथा ॥ एतत्सर्व्वंविधिंसम्यक्छ्रोतुमिच्छामितत्त्वतः ॥ ३७ ॥ श्रीमहादेवउवाच ॥ शृणुदेवियथा
न्यायमुपवासफलंशुभम् ॥ यथाचवालखिल्यानांनैमिषारण्यवासिनाम् ॥ ३८ ॥ उपवासफलंदिव्यंकथितंभावितात्मनाम् ॥ समृद्धानांदरिद्राणांजन्तू
नांदुःखजीविनाम् ॥ ३९ ॥ यथाध्रुवंमहादेविइदमाख्यानमुच्यते ॥ शृणुवक्ष्यामितत्त्वेनममवक्राद्विशेषतः ॥ ४० ॥ उपवासफलञ्चैवमोक्षंवापिविशे
षतः ॥ सर्व्वमेतदशेषेणप्रवक्ष्याम्यनुपूर्व्वशः ॥ ४१ ॥ यथापिदेविसम्प्रोक्तास्तथात्वेकमनाःशृणु ॥ पञ्चमीचैवषष्ठीचपौर्णमासीतथैवच ॥ ४२ ॥ उपो
ष्याममभक्तेनशृणुतस्यापियत्फलम् ॥ सुभगोदर्शनीयश्चज्ञानभागीभविष्यति ॥ ४३ ॥ कृष्णायाञ्चचतुर्दश्यांतथैवचाष्टमीभवेत् ॥ उपोष्याएकरा
त्रेणशृणुतस्यापियत्फलम् ॥ ४४ ॥ वस्वाढ्योबहुपुत्रश्चविद्याभागीचजायते ॥ शुक्लांचतुर्दशीञ्चैवयावच्छुक्लाष्टमीभवेत् ॥ ४५ ॥ उपोष्याएकरात्रेण
शृणुतस्यापियत्फलम् ॥ सुभगोदर्शनीयश्चज्ञानभागीभवेन्नरः ॥ ४६ ॥ नवम्यान्तुसदाव्यासएकभक्तेनपूजयेत् ॥ कृषिभागीधनाढ्यश्चबहुपुत्रोभवे
न्नरः ॥ ४७ ॥ द्वादश्यान्तुसदाव्यासएकभक्तेनपूजयेत् ॥ विद्याभागीधनाढ्यश्चधनभागीतुनिर्दिशेत् ॥ ४८ ॥ अमावास्यांत्रिरात्रेणयस्तुसंवत्सरंक्षि
पेत् ॥ शतंवर्षसहस्राणिस्वर्गलोकेमहीयते ॥ ४९ ॥ मासेमासेत्रिरात्रेणयस्तुसंवत्सरंक्षिपेत् ॥ अप्सरोगणसंघृष्टेविमानेदिविराजते ॥ ५० ॥ यदिका
लात्क्षयंप्राप्यजायतेविपुलेकुले ॥ एतत्तेकथितंव्यासउपवासस्ययत्फलम् ॥ ५१ ॥ योदीपोदीप्यमानस्तुकार्त्तिकेचविचक्षणः ॥ संयमैरुपवासैश्चएक

भक्तेनयःक्षिपेत् ॥ ५२ ॥ अपश्चैवपिबेन्मासंनिवृत्तोभोजनान्तरे ॥ पौषमासंमहाभागेतस्यापित्वंविधिंशृणु ॥ ५३ ॥ एकभक्तन्तुयःकुर्य्यादेवंपरिच
रेन्नरः ॥ तस्मिन्मासेसमस्तेतुप्रियेशृणुचतान्यपि ॥ ५४ ॥ विधिनातेनपानेनतर्पयित्वाचब्राह्मणान् ॥ शक्त्यातुदक्षिणांदद्याच्छृणुतस्यापियत्फलम् ॥
॥ ५५ ॥ हंससारससंयुक्तविमानेनसगच्छति ॥ महात्मानःशुभाँल्लोकान्सर्व्वदेवेनवन्दिताः ॥ ५६ ॥ शतवर्षसहस्राणांसुखंतत्रवसन्तिच ॥ ततश्चापि
च्युतोभूयोजायतेविपुलेकुले ॥ ५७ ॥ जातिस्मरत्वमाप्नोतिसधर्म्मंकुरुतेसदा ॥ सतथादुर्गतिंनैवतेनमासस्यमेप्रियः ॥ ५८ ॥ त्रिरात्रंक्षपयेद्यस्तुमाघे
मासेतुयोनरः ॥ तस्मिन्मासेसमाप्तेतुपूजयेच्चममप्रिये ॥ ५९ ॥ विविधेनान्नपानेनतर्पयित्वातुब्राह्मणान् ॥ शक्तितोदक्षिणांदद्याच्छृणुतस्यापियत्फ
लम् ॥ ६० ॥ नियोगादपरंविद्वान्किंनपश्यतुमांप्रिये ॥ षष्टिवर्षसहस्राणित्रिंशद्वर्षशतानिच ॥ ६१ ॥ भागशःकामचारीसकामरूपीवलोकते ॥ दीप्य
तेऽत्यग्निलोकेषुसलोकश्चैवनित्यशः ॥ ६२ ॥ तत्रचापिच्युतोभूयोब्रह्मत्वंलभतेनरः ॥ सर्व्वेषामेवसम्मानंराजराजेनपूजितः ॥ ६३ ॥ फाल्गुनन्तुय
दामासमेकभक्तेनयःक्षिपेत् ॥ तस्मिन्मासेसमाप्तेतुपूजयित्वातुमांप्रिये ॥ ६४ ॥ शक्तितोदक्षिणांदद्याच्छृणुतस्यापियत्फलम् ॥ दिव्येनाग्निसुवर्णेन
विस्तीर्णेशतयोजने ॥ ६५ ॥ दीप्यतेचारविन्दाक्षिब्रह्मलोकगतोनरः ॥ तत्रवाविच्युतोभूयोमुखतस्तत्रजायते ॥ ६६ ॥ ब्रह्मत्वंलभतेचैवचतुर्व्वेदश्चजा
यते ॥ ज्ञानविज्ञानसम्पन्नाविनीताश्चभवन्तिते ॥ ६७ ॥ धर्म्मज्ञाश्चसुभार्य्याश्चअनेकक्रतुयाजकाः ॥ चैत्रमासंमहाभागेएकभक्तेनयःक्षिपेत् ॥ ६८ ॥
तस्मिन्मासेसमाप्तेतुपूजयित्वातुमांप्रिये ॥ विधिनान्नेनपानेनतर्पयित्वातुब्राह्मणान् ॥ ६९ ॥ शक्त्यातुदक्षिणांदद्याच्छृणुतस्यापियत्फलम् ॥ अशीति
न्तुसहस्राणिशतवर्षाणिपंचच ॥ ७० ॥ वारुणंलोकमाप्नोतियानेनममतेजसा ॥ वैशाखन्तुयदामासमेकभक्तेनयःक्षिपेत् ॥ ७१ ॥ तस्मिन्मासेसमाप्तेतु
पूजयित्वातुमांप्रिये ॥ विधिनान्नेनपानेनतर्पयित्वातुब्राह्मणान् ॥ ७२ ॥ शक्त्यातुदक्षिणांदद्याच्छृणुतस्यापियत्फलम् ॥ त्रिंशद्वर्षसहस्राणिस्वर्गलोके
महीयते ॥ ७३ ॥ ततश्चापिच्युतोभूयोगवांकोटिप्रदोभवेत् ॥ ज्येष्ठमासेचैकभक्तंमद्भक्तेनान्तरात्मना ॥७४॥ एकाहंचैवकुर्व्वाणोमुच्यतेसर्व्वकिल्बिषैः॥
भ्रूणहाब्रह्महाचैवतथैवगुरुतल्पगः ॥ ७५ ॥ तस्मिन्मासेसमाप्तेतुपूजयित्वातुमांप्रिये ॥ विधिनान्नेनपानेनतर्पयित्वाचब्राह्मणान् ॥ ७६ ॥ नतेषांपुनरावृ
त्तिर्विद्यतेतुमहात्मनाम् ॥ एषईश्वरसम्भावःकथितस्तेसमासतः ॥७७॥ उपवासस्ययत्पुण्यंसांवत्सरंयथोदितम् ॥ यच्छ्रुत्वाशुभकर्म्माणःप्राप्स्यन्तेध
र्म्ममुत्तमम् ॥ ७८ ॥ इदंतुश्रावयेद्वापिब्रह्मसंसद्यथोदितम् ॥ सार्व्वकामिकमक्षय्यंपितृभ्यश्चोपतिष्ठति ॥ ७९ ॥ गांचैवकपिलांयश्चदद्यादेकस्यब्राह्म
णः ॥ तत्रसूर्य्यप्रतीकाशमप्सरोगणसेवितम् ॥ ८० ॥ विमानंलभतेशुभ्रंसनरोनात्रसंशयः ॥ दशवर्षसहस्राणिस्वर्गलोकेमहीयते ॥ ८१ ॥

सुखंवसतिधर्म्मज्ञःसर्व्वंदुःखविवर्ज्जितः ॥ तत्रचापिच्युतोभूयोजायतेविपुलेकुले ॥ ८२ ॥ राजत्वंलभतेमर्त्त्यःसंवत्सरशतान्यपि ॥ सर्व्वबन्धुवि
निर्म्मुक्तःसर्व्वदुःखविवर्ज्जितः ॥ ८३ ॥ इत्थंचपरमंदेविगुह्यंसर्व्वसनातनम् ॥ एकविंशतिकल्पानिजातिमेवंनचाप्नुयात् ॥ ८४ ॥ नजहा
तिचतंधर्म्मंराजधर्म्मसमाश्रितः ॥ आषाढमासेसप्तम्यामेकभक्तउपोषितः ॥ ८५ ॥ शृङ्गाटकंतदापार्श्वेदक्षिणांमूर्त्तिमास्थितः ॥ लभतेबहुशो
धर्म्मंयोह्युपोषतिचाष्टमीम् ॥ ८६ ॥ श्रावणन्तुयदाव्यासएकभक्तेनयःक्षिपेत् ॥ तस्मिन्मासेसमाप्तेतुपूजयित्वातुमांप्रिये ॥ ८७ ॥ विविधान्नेनपानेन
तर्पयित्वाचब्राह्मणान् ॥ शक्त्यातुदक्षिणांदद्याच्छृणुतस्यापियत्फलम् ॥ ८८ ॥ दशवर्षसहस्राणिसोमलोकेमहीयते ॥ हंससारसयुक्तेनविमानेनसग
च्छति ॥ ८९ ॥ पितरस्तस्यतुष्यन्तिविंशद्वर्षशतानिच ॥ तत्रचापिच्युतोभूयोजायतेविपुलेकुले ॥ ९० ॥ गन्धर्व्वंदेवविनुतंसर्व्वभूतसमन्वितम् ॥
ब्रह्मत्वञ्चैवब्रह्मत्वंविज्ञानञ्चैवजायते ॥ ९१ ॥ यस्तुभाद्रपदंव्यासएकभक्तेनसंक्षिपेत् ॥ तस्मिन्मासेसमाप्तेतुपूजयित्वातुमांप्रिये ॥ ९२ ॥ विविधेनान्नपा
नेनतर्पयित्वाचब्राह्मणान् ॥ शक्त्यातुदक्षिणांदद्याच्छृणुतस्यापियत्फलम् ॥ ९३ ॥ शतवर्षसहस्राणिवायुलोकेमहीयते ॥ ततोवापिच्युतोभूत्वाजायते
विपुलेकुले॥९४॥गन्धर्व्वंदेवंनिखिलंसर्व्वभूतसमन्वितम्॥प्रमाणेनचतुर्व्वेदाध्यापनीयश्चयोभवेत्॥९५॥आश्विनन्तुयदाव्यासएकभक्तेनयःक्षिपेत् ॥ त
स्मिन्मासेसमाप्तेतुपूजयित्वातुमांप्रिये॥९६॥शक्त्यातुदक्षिणांदद्याच्छृणुतस्यापियत्फलम्॥श्रद्धातुराजसूयस्यत्रिगुणंलभतेफलम्॥९७॥षष्टिवर्षसहस्रा
णिसुरलोकेमहीयते॥तत्रचापिच्युतोभूयोजायतेविपुलेकुले ॥ ९८ ॥ मेधावीवीर्य्यसम्पन्नोधनीभवतिमानवः ॥ मासेमासेयदाव्यासअनुकूलेनकीर्त्तितम्
॥९९ ॥ अष्टवर्षस्यकालस्यपञ्चधासभवेन्नरः ॥ ममभक्तिरतादीनाञ्चैकान्तरोपवासिनाम् ॥ १०० ॥ पक्षोपवासिनाञ्चैवतथामासोपवासिनाम् ॥ शाक
भक्षाम्बुभक्षाणांवसेत्तुजलशायिनाम् ॥ १०१ ॥ ब्रह्मचारिव्रतानाञ्चफलमूलाशिनांतथा ॥ यस्तुषष्ठेतुकालेतुसंवत्सरमुपोषति ॥ १०२ ॥
एवंविधंप्रवक्ष्यामिशृणुतस्यापियत्फलम् ॥ अश्वमेधसहस्रस्यफलंप्राप्नोतिमानवः ॥ १०३ ॥ वाजपेयस्यधर्म्मज्ञफलंप्राप्नोतिमानवः ॥ यस्तुकल्यंच
सायंचभुञ्जानोनान्तरंपिबेत् ॥ १०४ ॥ अहिंसानिरतश्चैवशृणुतस्यापियत्फलम् ॥ पौण्डरीकस्ययज्ञस्यफलंप्राप्नोतिमानवः ॥ १०५ ॥ यस्तुचत्वा
रिमासानिवीरासनगतोभवेत् ॥ अहिंसानिरतश्चैवशृणुतस्यापियत्फलम् ॥ १०६ ॥ दशवर्षसहस्राणिस्वर्गलोकेमहीयते ॥ यदिकालेक्षयंगच्छेज्जायते
विपुलेकुले ॥ १०७॥ अव्याधितोनिरोगश्चदीर्घायुश्चैवजायते ॥ यस्तुद्वादशवर्षाणिएकाहारोभवेन्नरः ॥ १०८॥ अहिंसानिरतश्चैवशृणुतस्यापिय
त्फलम् ॥ सर्व्वयज्ञफलञ्चैवलभतेनात्रसंशयः ॥ १०९ ॥ हंससारसयुक्तेनाविमानेनसगच्छति ॥ शतवर्षसहस्राणिषष्टिवर्षशतानिच ॥ ११० ॥ इहलोके

सुखंप्राप्यपश्चात्स्वर्गेमहीयते ॥ यदिकालक्षयंगत्वाजायतेविपुलेकुले ॥ १११ ॥ अव्याधितोनिरोगश्चदीर्घायुश्चैवजायते ॥ सनरोव्याधिरहितःसभवे
त्सुखभाजनः ॥ ११२ ॥ पदेपदेयज्ञफलंलभतेचानुपूर्व्वशः ॥ तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ॥ ११३ ॥ पुष्पकेणविमानेनदेवलोकंप्रतिक्रमेत् ॥
स्त्रीसहस्रवृतेरम्येरमतेनात्रसंशयः ॥ ११४ ॥ काञ्चीनूपुरशब्दैश्चसुप्तःसम्प्रतिबुध्यते ॥ मृदङ्गवेणुशब्देनवंशैश्चध्रुवमुत्थितः ॥ ११५ ॥ तपसश्चकृत
स्यापिफलमस्याप्यनुत्तमम् ॥ व्याधिश्चसविनिर्जित्यशोकरागविवर्ज्जितः ॥ ११६ ॥ दिवसंपञ्चशतिकंरात्रौसाहस्रिकंजपेत् ॥ वज्रवैदूर्य्ययुक्तेन
विमानेनसगच्छति ॥११७॥ यदिकालक्षयंगत्वाजायतेविपुलेकुले ॥ बलवान्रूपसम्पन्नोलभतेविपुलांश्रियम् ॥११८॥ दीपप्रदानंयोदद्याद्दैवतेब्राह्मणेषु
च ॥ तेनदीपप्रदानेनअक्षय्याश्चगतिंलभेत्॥११९॥अतऊर्द्ध्वंप्रवक्ष्यामिशृणुतस्यापियत्फलम् ॥ ब्राह्मणेभ्योददातीहपानीयंश्रद्धयान्वितः ॥ १२० ॥
तेनपुण्योदकानामनदीमध्येवसन्तिते ॥ चंद्रप्रदानंयोदद्याद्द्विजायज्वलितानिच ॥ १२१ ॥ गृहाणिहर्म्म्ययूथानिलभतेनात्रसंशयः ॥ धेनुप्रदानंयोद
द्याद्ब्राह्मणेषुविशेषतः ॥ १२२ ॥ यावन्तिरोमकूपाणितस्यागात्रेषुतिष्ठति ॥ तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ॥ १२३ ॥ रूपवान्शीलसम्पन्नोविद्या
वांश्चभवेन्नरः ॥ वस्त्रदानश्चयोदद्याद्ब्राह्मणेषुविशेषतः ॥ १२४ ॥ नववस्त्रप्रदानेनलभतेअक्षयंफलम् ॥ नववर्षसहस्राणिस्वर्गेमोदतिमानवः ॥ १२५ ॥
यदिकालक्षयंगत्वाजायतेविपुलेकुले ॥ कपिलादानंयोदद्याद्ब्राह्मणेषुविशेषतः ॥ १२६ ॥ यावन्तिरोमकूपाणितस्यागात्रेषुवैद्विज ॥ तावद्वर्षसहस्राणि
स्वर्गलोकेमहीयते ॥ १२७ ॥ यदिकालक्षयंगत्वाजायतेविपुलेकुले ॥ कन्यादानन्तुयोदद्याद्ब्राह्मणेभ्योविशेषतः ॥ १२८ ॥ ब्राह्मणानांविवाहेचविधिना
द्विजसत्तम ॥ तस्यस्वर्गेभवेद्वासोदेवलोकेमहीयते ॥ १२९ ॥ यदिकालक्षयंयातिजायतेविपुलेकुले ॥ शय्याप्रदानंयोदद्याद्ब्राह्मणेषुविशेषतः॥१३०॥
षष्टिवर्षसहस्राणिस्वर्गलोकेमहीयते ॥ यदिकालक्षयंगत्वाजायतेविपुलेकुले ॥ १३१ ॥ यत्तुदानंमयाव्यासतवस्नेहादुदीरितम् ॥ उववासस्ययत्पुण्यं
सारश्चैवसनातनम् ॥ १३२ ॥ एतत्पुण्यमवाप्नोतियःपठेत्सर्व्वपर्व्वसु ॥ धर्म्मश्चलभतेनित्यंमुच्यतेपापकर्म्मभिः ॥ १३३ ॥ श्रुत्वाचनियतोधर्म्मंनरो
रोगविवर्ज्जितः ॥ नतुदुर्गमवाप्नोतिदुःखंनतुभयाद्भयम् ॥ १३४ ॥ बहुधर्म्मंसमाश्रित्यअहिंसाःसत्यवादिनः ॥ सतुस्वर्गमवाप्नोतिदेवलोकेमहीयते ॥
॥ १३५ ॥ यःपठेत्तुसदासम्यक्कल्यमुत्थायमानवः ॥ धर्म्मश्चलभतेनित्यंसर्व्वकामसमन्वितः ॥ १३६ ॥ नचदुःखमवाप्नोतिपुत्रपौत्रप्रतिष्ठितः॥१३७॥
इति श्रीशैवेमहापुराणेसनत्कुमारसंहितायामुपवासविधिर्नामद्वाविंशोध्यायः ॥ २२ ॥ देव्युवाच ॥ त्र्यक्षत्रिभुवनश्रेष्ठत्र्यम्बकत्रिदशेश्वर ॥ त्रिपुरस्यरणे
जेतर्हरत्रिपथगाधर ॥ १ ॥ यक्षरक्षःप्रमथनशूलपाणेरिपुञ्जय ॥ प्रमथाधिपतेदेवनीलकण्ठवसूत्तम ॥ २ ॥ कपर्द्दिन्भूतसङ्घेशव्याघ्रचर्म्मनिवासक ॥

भगवंस्तुष्यसेकेनभक्तानांभक्तवत्सलः ॥ ३ ॥ कोवा विधिःकिंव्रतञ्चकथञ्चैवअनाशकः ॥ ४ ॥ परिचर्य्यानियमायमाःकथंपुष्पाणिगन्धानिफलानिकिं
स्वित् ॥ कस्यांतिथौवातवपूजनंस्यात्प्रब्रूहिदेवेश्वरशूलपाणे ॥ ५ ॥ श्रीमहादेवउवाच ॥ चतुर्दशीमष्टमीञ्चमद्भक्तोयःक्षिपेन्नरः ॥ नैवेद्यैर्विविधैश्चैवश्रू
यतांचारुलोचने ॥ ६ ॥ अष्टम्यान्तुवरारोहेगवांक्षीरेणयोमम ॥ स्नापयेच्चनिराहारःप्रसन्नात्माजितेन्द्रियः ॥ ७ ॥ देवस्योत्पादनंकृत्वाअमुनाविविधाः
क्रियाः॥ गन्धमाल्यमथस्नानंजप्यंवाथप्रचिन्तयेत् ॥ ८ ॥ सिद्धमन्त्रंसाधयेतशाकमूलफलानिच ॥ अग्रमुद्धृत्यविधिनाईश्वरायनिवेदयेत् ॥९॥ चतुर्वि
धायांमूर्त्तौतुस्थण्डिलेवाथचिन्तयेत् ॥ जानुभ्यांजानुनावापिमहींगत्वासमाश्रितः ॥ १० ॥ यथाश्रितोपविष्टोवाश्रद्धयापरयायुतः ॥ ताउतत्वेनगृह्णा
तिभक्तानांभक्तिवत्सले ॥ ११ ॥ श्रद्धयाईदृशीचेष्टाभक्तिसम्बोधलक्षणा ॥ खण्डखाद्यविचित्राणिदिव्यान्यन्नानियानिच ॥ १२ ॥ भक्तिहीनान्यदेया
निसद्योद्भूतरसानिच ॥ तस्याहंनैवतुष्यामिविमुखोऽहंवरानने ॥ १३ ॥ मन्त्रञ्चैवप्रवक्ष्यामिशृणुष्वायतलोचने ॥ यस्यसिंहरथैर्युक्तंव्याघ्रस्यान्युञ्ज
गामिनः ॥१४॥ तमहंपुण्डरीकाक्षंरुद्रमोङ्कारयाम्यहम् ॥ आयान्तुदेवाःसगणाउमादेवीमहेश्वरी ॥१५॥ भगवतेमहादेवायपार्श्वगतायअनुचरायस्वाहा ॥
आमलकंसूक्ष्ममयंशिवस्नानंपुनर्भजस्वाहा ॥ १६ ॥ प्रदक्षिणंपरावर्त्तंसर्व्वमेवउमायुतेस्वाहा ॥ इमाआपःशान्ताःशान्ततमाअमृताअमृततमाआपः
पूताः ॥ १७ ॥ ब्रह्मपवित्रेणपूताःसूर्य्यस्यरश्मिभिः ॥ आहारःसर्व्वदेवानांगन्धोऽयंप्रतिगृह्यतांस्वाहा॥१८॥गन्धंदत्तंमयाभक्त्याप्रतिगृह्णनमोऽस्तुते ॥
सुगन्धंसुमनोदिव्यैःसर्व्वगन्धैरलङ्कृतम् ॥ १९ ॥ पूतंब्रह्मपवित्रेणपूतंसूर्य्यस्यरश्मिभिः ॥ पुष्पंदत्तंमयाभक्त्याप्रतिगृह्णनमोऽस्तुते ॥ २० ॥ नमःप्र
जानांपतयेनमोभक्तगणार्चित ॥ प्रतिगृह्णइमंधूपंशिवलिङ्गनमोस्तुतेस्वाहा ॥ २१ ॥ आपोज्योतिश्चतेजश्चदेवानांप्रभवःस्मृतः ॥ पूतोब्रह्मपवित्रेणपूतः
सूर्य्यस्यरश्मिभिः ॥ २२ ॥ प्रतिगृह्णइमंदीपंशिवलिङ्गनमोस्तुते ॥ निवेद्यमनसायुक्तंदेवानांगन्धमुत्तमम् ॥ २३ ॥ पूतोब्रह्मपवित्रेणपूतःसूर्य्यस्यर
श्मिभिः ॥ आहारःसर्व्वदेवानांनैवेद्यंप्रतिगृह्यतांस्वाहा ॥ २४ ॥ अर्च्चितःपूजितश्चैवमयाभक्त्यानिवेदिताः ॥ गन्धपुष्पोपहारेणतत्कृपांकर्त्तुमर्हसि ॥
॥ २५ ॥ चतुर्दशींप्रवक्ष्यामिनैवेद्यस्यविधिंशृणु ॥ रक्तचन्दनगन्धैश्चहरितालानुलेपनैः ॥ २६ ॥ ममर्मूर्त्तिंवरारोहेमद्भक्तश्चसमालभेत् ॥ अर्च्चयेत्क
रवीरेणसुगन्धकुसुमैस्तथा ॥ २७ ॥ कदम्बैःकिंशुकाशोकैर्गन्धपुष्पातिमुक्तकैः ॥ पत्रैश्चममसान्निध्यंफलैःपुष्पैस्तृणैस्तथा ॥ २८ ॥ आपद्भावेननैवेद्य
मद्भिःक्रियांकरिष्यति ॥ मन्त्रेणचदहेद्धूपंघृतेनसहगुग्गुलम् ॥२९॥ ओंनमोऽस्तुमहादेवभक्तानांभक्तिवत्सल ॥ त्रैलोक्याधिपतेविष्णोनमोहरिहरेश्वर
॥ ३० ॥ नमःश्रीवत्सधारायनमोज्येष्ठभुजायच ॥ नमःपिनाकधारिंस्तेनमश्चक्रगदाधर ॥ ३१ ॥ गङ्गाधरनमस्यामिदेवंत्रिभुवनेश्वरम् ॥ उमापतिंन

मस्यामिजम्बूद्वीपपतेप्रभो ॥ ३२ ॥ द्वावेतौदेवसङ्घातौप्रसीदेतामनेकधा ॥ यश्चैनंपठतेनित्यमुभेसन्ध्येयशस्विनि ॥ ३३ ॥यदह्नाक्रियतेपापंतद्रात्रौप्र
तिमुच्यते ॥ नचेदंतत्रवक्तव्यंयत्रनारीरजस्वला ॥ ३४ ॥ शृणुयात्कुत्सितोवापियत्रवामृतसूतकम् ॥ स्वगेहेवाप्रवासेवायत्रतत्रपठेत्तुयः ॥ ३५ ॥ त
स्याहंसततंप्रीतोभविष्यामियशस्विनि ॥ नहितस्याशुभंकिञ्चिद्भुविस्वर्गेचविद्यते ॥ ३६ ॥ एतत्तेकथितंदेविचतुर्दश्यष्टमीषुच ॥ ब्रूहिब्रूहिविशाला
क्षिकिमन्यच्छ्रोतुमिच्छसि ॥ ३७ ॥ व्यासउवाच ॥ भगवञ्छ्रोतुमिच्छामिदेवदेवस्यधीमतः ॥ उपवासःकथंचैवकथंदेवस्यपूजनम् ॥ ३८ ॥ नामाष्ट
मीकथंचैवकर्त्तव्यामानुषेणवै ॥ तदहंश्रोतुमिच्छामित्वत्प्रसादान्महामुने ॥ ३९ ॥ सनत्कुमारउवाच ॥ श्रुतंपूर्व्वमयाव्यासरुद्रस्यतुमहात्मनः ॥ दे
व्याचसंशयंपृष्टोहिमवतिनगोत्तमे ॥ ४० ॥ यथाश्रुतंमयाव्यासकथयामिचसुव्रत ॥ नामाष्टमींप्रवक्ष्यामिदेवस्यविधिमुत्तमम् ॥ ४१ ॥ यांश्रुत्वानि
र्मलंयातिरुद्रस्यचमहात्मनः ॥ मार्गशीर्षेतुवैमासेअष्टम्यांशंकरंनरः ॥ ४२ ॥ पूजयित्वाचविविधैर्गन्धपुष्पोपशोभितैः ॥ गोमूत्रप्राशनंकृत्वासर्व्वपा
पैःप्रमुच्यते ॥ ४३ ॥ लभतेचाक्षयंपुण्यंयउपोष्यतिचाष्टमीम् ॥ पौषमासेतथाष्टम्यांदेवदेवंप्रपूजयेत् ॥ ४४ ॥ घृतंचैवसदाप्राश्यधर्म्मंचलभतेबहु ॥
अक्षयंलभतेपुण्यंयद्युपोष्यतिचाष्टमीम् ॥ ४५ ॥ माघमासेतथाष्टम्यांमहेश्वरंप्रपूजयेत् ॥ क्षीरंचपायसंचैवदक्षिणामूर्त्तिमाश्रितः ॥ ४६ ॥ लभतेबहु
शःपुण्यंयउपोष्यतिचाष्टमीम् ॥ फाल्गुनेचतथाष्टम्यांत्र्यंबकंचैवपूजयेत् ॥ ४७ ॥ तिलस्यप्राशनंकृत्वादक्षिणामूर्त्तिमाश्रितः ॥ लभतेबहुशोधर्म्मंयउ
पोष्यतिचाष्टमीम् ॥ ४८ ॥ चैत्रेमासेतथाष्टम्यांसनातनन्तुपूजयेत् ॥ यवांश्चप्राशयेत्तत्रदक्षिणामूर्त्तिमाश्रितः ॥ ४९ ॥ लभतेबहुशोधर्म्मंयउपोष्य
तिचाष्टमीम् ॥ वैशाखेचतथाष्टम्यांसदाशिवेतिपूजनम् ॥ ५० ॥ जलस्यप्राशनंकुर्य्याद्दक्षिणामूर्त्तिमाश्रितः ॥ लभतेबहुशोधर्म्मंयउपोष्यतिचाष्टमीम्
॥ ५१ ॥ ज्येष्ठमासेतथाष्टम्यांभगवानितिपूजयेत् ॥ गोमयप्राशनंकुर्य्याद्दक्षिणामूर्त्तिमाश्रितः ॥ ५२ ॥ लभतेबहुशोधर्म्मंयउपोष्यतिचाष्टमीम् ॥
आषाढेतुतथाष्टम्यांनीलकंठंप्रपूजयेत् ॥ ५३ ॥ शृङ्गाटकप्राशनंचदक्षिणामूर्त्तिरेवच ॥ लभतेबहुशोधर्म्मंयउपोष्यतिचाष्टमीम् ॥ ५४ ॥ श्रावणेतुस
दाव्यासअष्टम्यांस्थाणुमेवच ॥ पूजांचमहतींकृत्वाप्राशयेल्लवणोदकम् ॥ ५५ ॥ दक्षिणामूर्त्तिमास्थायप्राशयेच्चविचक्षणः ॥ लभतेबहुशोधर्म्मंयउपो
ष्यतिचाष्टमीम् ॥ ५६ ॥ भाद्रपदेयदाव्यासअष्टम्यांशम्भुमेवच ॥ दध्नश्चप्राशनंकृत्वादक्षिणामूर्त्तिमाश्रितः ॥ ५७ ॥ लभतेबहुशोधर्म्मंयउपोष्यति
चाष्टमीम् ॥ आश्विनेतुयदाव्यासअष्टम्यामीश्वरेतिच ॥ ५८ ॥ तण्डुलोदकमश्नीयाद्दक्षिणामूर्त्तिमाश्रितः ॥ लभतेबहुशोधर्म्मंयद्युपोष्यतिचाष्टमीम् ॥
॥ ५९ ॥ कार्त्तिकेतुयदाव्यासअष्टम्यांरुद्रमर्च्चयेत् ॥ दधिचैवेहप्राश्नीयाद्दक्षिणामूर्त्तिमाश्रितः ॥ ६० ॥ लभतेबहुशोधर्म्मंयउपोष्यतिचाष्टमीम् ॥ अह

न्यहनियोभक्त्यादेवदेवमुमापतिम् ॥ ६१ ॥ अर्च्चयेत्सततंरुद्रंप्रसन्नात्मासमाहितः ॥ गन्धैर्माल्यैश्चधूपैश्चपुष्पैश्चैवविशेषतः ॥ ६२ ॥ समाप्तेभोजये द्विप्रान्दद्यात्सौवर्णदक्षिणाम् ॥ भक्षयेच्चयथाशक्त्याशिवयोगीविशेषतः ॥ ६३ ॥ ततोमृत्युवशंप्राप्यशिवलोकंसगच्छति ॥ चन्द्रार्द्धमौलिनस्तत्रत्रिने त्रवृषभध्वजाः ॥ ६४ ॥ सङ्गच्छन्तिशिवंलोकंस्वच्छन्दोगतिमुत्तमाम् ॥ रुद्राण्याचैवसहितोगच्छेत्तुपरमंपदम् ॥ ६५ ॥ दिव्याप्सरःसमाकीर्णेक्रीडते चमहात्मना ॥ वसतेचअनुद्विग्नःशिवलोकमनुत्तमम् ॥ ६६ ॥ वृषयुक्तेनयानेनस्वच्छन्दोललितःसदा ॥ तत्रपुण्यक्षयंप्राप्यजायतेविपुलेकुले ॥ ६७ ॥ सर्व्वसौभाग्यसंयुक्तःसर्व्वलोकपरायणः ॥ प्रार्थितंलभतेराज्यंप्रज्ञायुक्तोबहुश्रुतः ॥ ६८ ॥ शृणुमानीतुधर्म्मज्ञोमिथ्यादम्भविवर्ज्जितः ॥ पूजांचस्मरतेनि त्यंदेवंपूजयतेपुनः ॥ ६९ ॥ सगच्छतिपुनःस्वर्गेरुद्रलोकेमहीयते ॥ ७० ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांनामाष्टमीविधिकथनंनामत्रयो विंशोऽध्यायः ॥ २३ ॥ व्यासउवाच ॥ रहस्यंश्रोतुमिच्छामिहरस्यवक्तुमर्हसि ॥ कुब्जाश्चरोगिणोरौद्राजायन्तेयेनमानवाः ॥ १ ॥ सर्व्वलक्षणसम्पन्नाः सौभाग्याःशिवदर्शनाः ॥ केनवाकर्म्मणादेवजायन्तेऽपूर्व्वलक्षणाः ॥ २ ॥ ब्रूहितत्त्वेनकथयप्रमाणंलक्षणाष्टमीम् ॥ सनत्कुमारउवाच ॥ श्रुतंपूर्व्वंमया व्यासयद्देव्यैप्रोक्तवान्हरः ॥ ३ ॥ महेश्वरउवाच ॥ शृणुदेविपरंदिव्यमुपवासंपरंमम ॥ लक्षणाष्टमींप्रवक्ष्यामितच्छृणुत्वंत्रिलोचने ॥ ४ ॥ कार्त्तिकस्य तथाष्टम्यामुपोष्यममभक्तिमान् ॥ अहोरात्रोषितोभूत्वाशिवेतिचप्रपूजयेत् ॥ ५ ॥ गन्धमाल्यैश्चविविधैःपूजयेद्भक्तिमान्हरम् ॥ रोचनंतस्यदेवस्यमुखे नैवानिवेदयेत् ॥ ६ ॥ ततोविष्णुपदंदेविरुद्रस्यभवनोत्तमम् ॥ यत्रवैरमणंदिव्यंमत्प्रसादाद्भविष्याति ॥ ७ ॥ सर्व्वसर्व्वांगयुक्तस्ययावद्द्वैशिवउच्यते ॥ ततोयजेतमांदेविममभक्तस्तुसर्व्वशः ॥ ८ ॥ सर्व्वलक्षणसंयुक्तोजायतेमानवोत्तमः ॥ देव्युवाच ॥ त्वयाप्रोक्तंदेवदेवसंक्षेपेणतथैवच ॥ ९ ॥ नैवंबुध्यामिशूलांकनि खिलंतद्ब्रवीहिमे ॥ नामनामतथाष्टम्यांविस्तरेणब्रवीहिमे ॥ १० ॥ महेश्वरउवाच ॥ विस्तरंतेप्रवक्ष्यामिशृणुदेविनगात्मजे ॥ नाथंशिरसिवैदेविपादेशंकरमेवच ॥ ११ ॥ जङ्घेऽतिरुद्रंमेदेविईशानंकाटिरुच्यते ॥ त्र्यम्बकेतिचमेद्रन्तुयथोक्तेनविधानतः ॥ १२ ॥ त्र्यम्बकश्चततोदेविकपर्द्दचेष्टाङ्गमेवच ॥ शूलपाणिस्तुवक्षोगः स्कन्धेतुवृषभध्वजम् ॥ १३ ॥ त्र्यम्बकेतिकक्षंदेविश्रोत्रेत्र्यम्बकउच्यते ॥ उमापतिश्चमेदेविनासापशुपतिस्तथा ॥ १४ ॥ पुरहाकर्णयोर्देवित्रिपुर घ्नश्चचक्षुषी ॥ श्मशानवासिभ्रूमध्येभूतेशेतिकपोलयोः ॥ १५ ॥ दक्षयज्ञविनाशीतुदन्तसेवनमेवच ॥ जटिलंजिह्वयादेविशिरःपशुपतीतिच ॥ १६ ॥ शशाङ्काङ्केतिचमूर्ध्निललाटेतुउमाप्रियः ॥ गङ्गाधरेतिकेशेषुसर्व्वाङ्गेशिवमेवच ॥ १७ ॥ अहन्यहनियोभक्त्याउपोष्यविधिनाष्टमीम् ॥ अर्च्चयेन्मांततो रुद्रंप्रयतात्मासमाहितः ॥ १८ ॥ गन्धदीपैश्चमाल्यैश्चधूपैश्चैवविशेषतः ॥ समाप्तेभोजयेद्विप्रान्यथाविभवमेवच ॥ १९ ॥ दद्यात्ताम्रघटान्पूर्णान्ब्राह्मणा

यविशेषतः ॥ दक्षिणाञ्चयथाशक्त्यासुवर्णानांयथामति ॥ २० ॥ मृण्मयंभाजनंपूर्णंतैलेनचविशेषतः ॥ ततःस्वर्गंसमारुह्यवसेद्वासवसन्निधौ ॥ २१ ॥
दिव्यवर्षसहस्राणिवसतेऽप्सरसैःसह ॥ स्वर्गलोकेउषित्वातुदिव्यैर्भवनभूषणैः ॥२२॥ ततःकालक्षयंप्राप्यजायतेचपुनःक्रमात् ॥ महाभागकुलेचैवजन्म
लोकेविधीयते ॥२३॥ सर्व्वलक्षणसम्पन्नोजायतेमानवोत्तमः ॥ नकश्चिल्लक्षणैर्हीनोभवतेपुरुषोत्तमः ॥ २४ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायां
नामलक्षणाष्टमीकथनंनामचतुर्व्विंशोऽध्यायः॥२४॥महेश्वरउवाच ॥ अत्रचैवहितार्थायलोकानाञ्चैवसुव्रते ॥ कथयिष्याम्यहंधर्म्मंयथावदनुपूर्व्वशः ॥१॥
अन्नदानात्परंदानंनैवकिञ्चिद्विशिष्यते ॥ अन्नाद्भवन्तिभूतानितस्मात्तदधिकंस्मृतम् ॥२॥ अन्नंयस्तुसुसंस्कृत्यप्रार्थकेभ्यःप्रयच्छति ॥ मयूरहंससंयुक्तं
सर्व्वकामसमृद्धिमत् ॥ ३ ॥ विमानंसूर्य्यसङ्काशमन्नदोलभतेशुभम् ॥ यदिमानुष्यमायातिकदाचित्पुरुषोत्तमः ॥ ४ ॥ धनधान्यसमाकीर्णेकुलेयाति
सुरूपवान् ॥ यथाशक्त्यातुयोदद्याद्विप्रायान्नंवरोनरः ॥ ५ ॥ सतेनकर्म्मणाप्नोतिप्रजापतिसलोकताम् ॥ कदाचिदपियोदद्यादन्नंविप्रायसंस्कृतम् ॥६॥
तस्यशतगुणंपुण्यंसहस्रगुणमेवच ॥ उपतिष्ठतिलोकेषुइहचापिसुखीभवेत् ॥ ७ ॥ अवघ्रातमवज्ञातमसंस्कृतमथापिवा ॥ अन्नंप्रदद्याद्योदेवियादृशं
तादृशंशुभे ॥ ८ ॥ तस्यापिनरकेघोरेपात्यमानस्यराक्षसैः ॥ उपतिष्ठेद्बहुविधासिद्धिर्येनास्यजायते ॥ ९ ॥ यदिमानुष्यमायातिकदाचित्सनरःपुनः ॥
म्लेच्छेषुभोगीभवतिरमतेचयथानरः ॥ १० ॥ अन्नमेवविशिष्टंहितस्मात्परतरंनहि ॥ अन्नंप्रजापतिःप्रोक्तंसचसंवत्सरःपुनः ॥ ११ ॥ संवत्सरश्चयज्ञोऽ
सौयज्ञेसर्व्वंप्रतिष्ठितम् ॥ तस्माद्भवन्तिभूतानिस्थावराणिचराणिच ॥ १२ ॥ तस्मादन्नंविशिष्टंवैसर्व्वेभ्यइतिविश्रुतिः ॥ अन्नदानात्परंदानंनैवकिंचिद्वि
शिष्यते ॥ १३ ॥ अन्नाद्भवन्तिभूतानितस्मात्तद्वैविशिष्यते ॥ सुगन्धाःशीतलाश्चापोरसैर्दिव्यैःसमन्विताः ॥ १४ ॥ यःप्रयच्छतिविप्रेभ्यस्तस्यदानफ
लंशृणु ॥ विमानंसूर्य्यसंकाशमप्सरोगणनादितम् ॥ १५ ॥ सोऽधिरुह्यदिवंयातिवरुणस्यसलोकताम् ॥ तत्रासावयुतान्यष्टौउषित्वादेववत्सुखी॥१६॥
कुलेमहतिसंकीर्णेजायतेधनधान्यवान् ॥ तथान्नपूर्णंयोभाण्डंब्राह्मणायप्रयच्छति ॥ १७ ॥ रसास्तस्योपतिष्ठन्तिपूज्यतेचदिवंगतः ॥ भाजनानिचयो
दद्यादन्नपूर्णंशुभानने ॥ १८ ॥ भोजनस्यार्थभोगानांतारयेच्चपितॄन्भयात् ॥ तडागंयस्तुकुर्व्वीतवापिकाञ्चसमृद्धिमान् ॥ १९ ॥ गावःपिबन्तिवै
तत्रसर्व्वेजन्तवएवच ॥ तारयित्वाचसपितॄंस्तथैवचपितामहान् ॥ २० ॥ प्रपितामहलोकेषुकामगेषुविहङ्गमः ॥ वसतेदेववन्नित्यंवर्षायुतशतानिच ॥
॥ २१ ॥ पुनश्चमानुषेलोकेसर्व्वरोगविवर्ज्जितः ॥ भोगीभवतिभोग्यानांराजामात्यश्चजायते ॥ २२ ॥ दातायज्वाचबलवान्सुभगःप्रियदर्शनः ॥ अवटं
योनरःकुर्य्यादपांपूर्णंशुचिस्मिते ॥ २३ ॥ दद्याच्चब्राह्मणेभ्यस्तुभोजयित्वायथार्थवत् ॥ अष्टभिःसुविचित्राभिःपताकाभिरलङ्कृतम् ॥ २४ ॥ ध्वजेनवै

जयन्त्यातुपुष्पैश्चसमलङ्कृतम् ॥ सन्तर्पयित्वातुपितॄन्विमानेननरोत्तमः ॥ २५ ॥ यात्यप्सरोपगीतेनवरुणस्यसलोकताम् ॥ हिरण्यंहेमभूमिंचतिलान्र
त्नानिवापियः ॥ २६ ॥ प्रदद्यात्सर्व्वभूतेभ्यस्तस्यपुण्यफलंशृणु ॥ सविमानेनमहतासर्व्वकामसमन्वितः ॥ २७ ॥ इंद्रस्यलोकंसम्प्राप्यमोदतेविबुधोय
था ॥ ततश्च्युतश्चधर्म्मात्मासर्व्वकामसमृद्धिमान् ॥ २८ ॥ कुलेमहतिलोकेशोजायतेऽदुःखतापसः ॥ यस्तुवृक्षंचकुरुतेच्छायापुष्पफलान्वितम् ॥
॥ २९ ॥ पथिदेवनरःसौम्यंसतारयतिवैपितॄन् ॥ तथैवदद्याद्विप्रेभ्योनिष्कलश्चपुनर्नरः ॥ ३० ॥ यत्फलंसमवाप्नोतितच्छृणुष्वमहामते ॥ यावद्वृक्षस्य
पत्राणिउपयुञ्जन्तिदेहिनः ॥ ३१ ॥ फलानिचैवभक्ष्यन्तेजन्तुभिःफलितस्यच ॥ तावद्वर्षसहस्राणितारयित्वापितॄनपि ॥ ३२ ॥ सोमलोकंसमासाद्यसमृ
द्धंफलमाप्नुयात् ॥ फलानियःप्रयच्छेतहेमरत्नसमन्वितम् ॥ ३३ ॥ फलानांसतुभागीस्याद्रूपवान्सुभगश्चह ॥ भाजनंयःप्रयच्छेत्तुहेमरत्नसमन्वितम् ॥
॥ ३४ ॥ सोऽप्सरःशतसङ्कीर्णेविमानेदिविमोदते ॥ राजतंयःप्रयच्छेतविप्रेभ्योभाजनंशुभम् ॥ ३५ ॥ सगन्धर्व्वपदंप्राप्यउर्व्वश्यासहमोदते ॥ ताम्रं
योभाजनंदद्याद्ब्राह्मणेभ्योविशेषतः ॥ ३६ ॥ लभतेयक्षराजस्यपदंबलसमन्वितः ॥ गृहंयस्तुप्रयच्छेतसर्व्वकामसमृद्धिमत् ॥ ३७ ॥ सलोकंब्रह्मणःप्रा
प्यसर्व्वकामैश्चसंवृतः ॥ वर्षकोटिशतंचैवतत्प्रशस्तेनकर्म्मणा ॥ ३८ ॥ गृहमेधीसदादाताभोगवांश्चैवजायते ॥ ओषधीर्यःप्रयच्छेतब्राह्मणायमहात्मने
॥ ३९ ॥ सर्व्वकामसमृद्धस्तुसोमलोकंसमश्नुते ॥ तत्रवर्षसहस्राणिसप्तस्थित्वापुनर्नरः ॥ ४० ॥ इहसत्त्वंततःप्राप्तोभोगवानभिजायते ॥ भूमिंचैवप्रय
च्छेतब्राह्मणेभ्योमहामुने ॥ ४१ ॥ सर्व्वलोकेषुसुमुखोविमानेनसुवर्च्चसा ॥ बहुवर्षसहस्राणिचरतेकामरूपवान् ॥ ४२ ॥ यदिमानुष्यमायातिसनरःका
लपर्य्ययात् ॥ सर्व्वकामदुघातस्यमहीभवतिसर्व्वशः ॥ ४३ ॥ पशुंयस्तुप्रयच्छेतब्राह्मणायसमाहितः ॥ ससोमलोकमाप्नोतिक्रीडतेकालमक्षयम् ॥
॥ ४४ ॥ अन्नंयस्तुप्रयच्छेतसंस्कृतंब्राह्मणायच ॥ राज्यस्थानमवाप्नोतिस्वर्गंचाप्नोतिविज्वरः ॥ ४५ ॥ यस्तुशय्यांप्रयच्छेतब्राह्मणायस्वलङ्कृताम् ॥
सगत्वापितृलोकेवैवर्षायुतशतंवसेत् ॥ ४६ ॥ इहवापिकुलेजातःसर्व्वकामसमन्वितः ॥ भार्य्यांप्राप्नोतिभद्राङ्गींप्रजावांश्चोपजायते ॥ ४७ ॥ अश्वंय
स्तुप्रयच्छेतहेमचित्रंसलक्षणम् ॥ सतेनकर्म्मणादेविमारुतंलोकमश्नुते ॥ ४८ ॥ रथमश्वयुजंदासींकन्यांगृहमथापिवा ॥ भूमिंयश्चप्रयच्छेतसराजाभुवि
जायते ॥ ४९ ॥ विधिनामन्त्रयुक्तेनतस्यधर्म्मफलंभवेत् ॥ सर्व्वकामदुघातस्यधेनुर्भूत्वोपतिष्ठते ॥ ५० ॥ जलधेनुञ्चयोदद्यात्तस्यदानफलंशृणु ॥
प्रपांगवांतडागंवाकूपंतस्यसुपुष्कलम्॥५१॥कृत्वाकुम्भांश्चसम्पूर्णान्माल्यैश्चसमलङ्कृतान्॥ पुष्पैश्चविविधाकारैरभ्यर्च्चर्य्यद्विजसत्तमान्॥५२॥भक्ष्यभो
ज्यैःसुसंतृप्तांस्तिलपात्राणिदापयेत्॥दक्षिणांपुष्कलांदद्यात्तेभ्यस्तान्दर्शयेद्बुधः॥५३॥ आपःशिवाश्चसौम्याश्चतर्पयन्तिपितॄन्यथा ॥ कामदाःकामदाता

रोभवंतिचपदेपदे॥५४॥एवंदत्त्वाचगांधेनुंपुरस्कृत्यचवैतदा॥वाहयेच्चप्रपांदेविब्रह्मलोकसमर्पिणीम् ॥ ५५ ॥ तिलपात्राणियोदद्यात्तथावस्त्रयुगंनरः ॥
सुवर्णस्यचसान्निध्यंफलानिविविधानिच ॥ ५६ ॥ ततोघृतंप्रदद्याद्वैब्राह्मणेभ्योयथाविधि ॥ घृतंगावःप्रसूयन्तेघृतंभूम्यांप्रतिष्ठितम् ॥ ५७ ॥ घृतमग्नि
श्चदेवाश्चघृतंमेसम्प्रदीयताम् ॥ ब्राह्मणांस्तर्पयित्वातुगन्धमाल्यैरलङ्कृतान् ॥ ५८ ॥ दानकालेततस्तस्यांसुरागात्राणिसंश्रिताः ॥ ब्रह्मातस्याःश्रितो
मूर्ध्निशक्रोभालंसमाश्रितः ॥ ५९ ॥ चन्द्रादित्यौनेत्रदेशेप्राणेवायुःप्रभञ्जनः ॥ मुखंतस्याःश्रितोवह्निर्जिव्हांसोमःस्वयम्भवः ॥ ६० ॥ कर्णयोश्चाश्वि
नौदेवौशिरोरुद्राःसमाश्रिताः ॥ पादयोर्लोकपालाश्चसर्व्वेचैवतुपन्नगाः ॥ ६१ ॥ समुद्राःसप्तजठरेग्रीवायांतपनाःश्रिताः ॥ स्तनेगङ्गासरिच्छ्रेष्ठापार्श्वेतु
वसवस्तथा ॥ ६२ ॥ उपस्थश्चगुदंतीर्थाःप्रजापतिःसमाश्रितः ॥ पुरीषंश्रीर्बभूवास्यानागाःश्वासानिलाश्रिताः ॥ ६३ ॥ साध्याविश्वेऽथलोकाश्चपुच्छमे
वतुसंस्थिताः ॥ मन्त्रायज्ञाश्चदानानियमश्चऋषिभिःसह ॥ ६४ ॥ नक्षत्राणिग्रहाश्चैवताराऋपाणियानिच ॥ गायत्रीचैवविष्णुश्चजगतीपङ्क्तिरेव
च ॥६५॥ अनुष्टुप्चैवयज्ञश्चसामान्याथर्व्वणस्तथा ॥ लोकस्यमातरश्चैवमेघवर्षमथापिवा ॥ ६६ ॥ धर्म्मोनारायणश्चैवभूतानिसरितस्तथा ॥ रोमकूपाणि
संश्रित्यतस्यांदेव्यांव्यवस्थिताः ॥६७॥ यक्षाश्चराक्षसाश्चैवपिशाचाश्चैवपक्षिणः ॥ यज्ञस्तथादक्षिणाश्चतथाअप्सरसःशुभाः ॥ ६८ ॥ गन्धर्व्वाश्चमहात्मा
नोयेचान्येऽप्येवमादयः ॥ तस्याविषाणयोर्व्यासस्सर्व्वएवसमाश्रिताः ॥६९॥ फलानिसर्व्वदानानांपतयश्चपृथग्विधाः ॥ समाश्रिताःसर्व्वएवसर्व्वदेवमयी
भुवि ॥७०॥ विप्रेभ्योमेध्यधेनुंतांप्रदद्यात्सुसमाहितः ॥ कुशाःसुवर्णबीजानितिलाःसिद्धार्थकास्तथा ॥ ७१ ॥ प्रदेयास्तुततोऽद्भिस्तुमन्त्रेणानेनसुव्रते ॥
सर्व्वदेवमयींदोग्ध्रींसर्व्वलोकमयींतथा ॥७२॥ सर्व्वलोकनिमित्ताञ्चसर्व्वलोकनमस्कृताम् ॥ प्रयच्छामिमहामूर्त्तिमक्षयांमेशुभामिति ॥७३॥ एवंसदत्त्वातां
गान्तुयत्रयत्रप्रजायते ॥ तत्रतत्रगतासातंतारयेत्तुभयात्तथा ॥७४॥ सर्व्वान्कामान्संवृणोतिगोदानेनयथामरः ॥ इहजातश्चतामेवकामगांप्रतिपद्यते ॥
॥७५॥ मनसामानुषोभूत्वागोसहस्रीमहाबलः ॥ रूपवान्बलवांश्चैवबहुपुत्रश्चजायते ॥७६॥ प्रसूयमानांयोगान्तुदद्यादुभयतोमुखीम् ॥ हेमशृङ्गींरौप्य
खुरींसजातिस्मरतांलभेत् ॥ ७७ ॥ यस्तुगांसम्प्रयच्छेतब्राह्मणेभ्योयथाविधि ॥ तस्यसागौर्महाघोरैस्त्रायतेनरकादिभिः ॥७८॥ कृष्णाजिनन्तुयोदद्या
द्व्रतिनेब्रह्मचारिणे ॥ पृथिवीफलमाप्नोतियोगश्चास्यप्रवर्त्तते ॥७९॥ योगिभ्योब्रह्मचारिभ्योगृहस्थेभ्योयथातथा ॥ यःप्रयच्छतिआवासमश्वमेधफलंल
भेत् ॥८०॥ प्राप्नुयात्पुण्डरीकन्तुगोसहस्रन्तुविन्दाति ॥ सस्मृतिश्चपरांलब्ध्वायोगमाप्नोतिसुव्रते ॥८१॥ कमण्डलुञ्चयोदद्याद्ब्राह्मणायनरोत्तमः ॥ सते
नकर्म्मणादेविधर्म्मंनित्यमवाप्नुयात् ॥८२॥ व्याधितंयस्तुविप्रर्षेदीनंमूढमचेतनम् ॥ उद्धरेत्तुयथाशक्त्यासमुच्येद्ब्रह्महत्यया ॥८३॥ यःसुवर्णंप्रयच्छेतद

रिद्रायद्विजातये ॥ दशानामश्वमेधानांफलंप्राप्नोतिमानवः ॥ ८४ ॥ यश्चैवैतानिरम्याणिदानान्युक्तानिकृत्स्नशः ॥ सर्व्वाणियुगपच्चैवपृथिव्यामेकराड्
भवेत् ॥ ८५ ॥ इदंयःशृणुयान्नित्यंदद्याच्चैवस्वशक्तितः ॥ पश्यतिचमहाभागःसोऽपिगच्छेत्त्रिविष्टपम् ॥ ८६ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहि
तायांदानधर्म्मविधिनिरूपणंनामपञ्चविंशोऽध्यायः ॥ २५ ॥ ईश्वरउवाच ॥ देविशृणुष्वभूयोऽपियथादानंविनाशुभम् ॥ स्तोकमेवोपवासेनयथाध
र्म्मोऽपिलभ्यते ॥१॥ एकभक्तेनयोदेविमासंमार्गशिरेक्षिपेत् ॥ सतेनकर्म्मणादेविमांभजन्निवनित्यशः ॥२॥ पौषेमासेतुयोदेविब्रह्मशब्दाभिधायकम् ॥
माघमासेतुकुर्व्वाणःश्रियमाप्नोतिवैप्रिये ॥ ३ ॥ एकभक्तन्तुकुर्व्वाणःफाल्गुनेमासिनित्यशः ॥ स्त्रीषुसौभाग्यमाप्नोतिस्त्रियश्चपरमांश्रियम् ॥ ४ ॥ यः
क्षिपेदेकभक्तेनचैत्रमासंनरोत्तमः ॥ धनधान्यसमृद्धेचकुलेजायतिरूपवान् ॥ ५ ॥ वैशाखंयःक्षिपेन्मासमेकभक्तेनमानवः ॥ ज्ञातिसंश्रेष्ठतांप्राप्यपूजि
तोधनवानपि ॥ ६ ॥ ज्येष्ठमासंक्षिपेद्योवैएकभक्तंसमाचरन् ॥ ज्येष्ठोभवतिभ्रातॄणांभोगानाप्नोतिपुष्कलान् ॥ ७ ॥ आषाढंवापियोमासमेकभक्तंसमा
चरेत् ॥ सराज्ञोमान्यतांप्राप्यकामानाप्नोतिपुष्कलान् ॥ ८ ॥ श्रावणेदेवियोमासेएकभक्तंसमाचरेत् ॥ सैनापत्यञ्चसम्प्राप्यबलवानपिजायते ॥ ९ ॥
यस्तुभाद्रपदंमासमेकभक्तंसमाचरेत् ॥ सतेनकर्म्मणादेविधनवानपिजायते ॥ १० ॥ योऽपिचाश्वयुजंमासमेकभक्तेनतिष्ठति ॥ वाणिज्यंलभतेतस्य
कृषिःपशुगणास्तथा ॥ ११ ॥ कार्त्तिकंवापियोमासमेकभक्तेनतिष्ठति ॥ सोऽश्वमेधफलंप्राप्यवह्निलोकेमहीयते ॥ १२ ॥ यःक्षिपेदेकभक्तेनमार्गशीर्षं
नसंशयः ॥ विमानेनार्कवर्णेनसगच्छेच्छक्रलोकताम् ॥ १३ ॥ संवत्सरन्तुयःपूर्णमेकभक्तेनतिष्ठति ॥ सपार्थिवसमोभूत्वामहींपातिमहेंद्रवत् ॥ १४ ॥
अहोरात्रन्तुयोदेविकुर्य्यादेकंनरोत्तमः ॥ दशानांससुवर्णानांफलमाप्नोतिमानवः ॥ १५ ॥ मासेमासेअहोरात्रंसर्व्वपापविवर्ज्जितः ॥ नयातिनरकं
घोरंयमञ्चसनपश्यति ॥१६॥ मासेमासेचयःकुर्य्यात्त्रिरात्रंक्षेपयेन्नरः ॥ कौबेरंलोकमासाद्यसविन्देत्परमंसुखम् ॥ १७ ॥ चतुर्थेऽहनियोभुंक्तेप्रयता
त्माशुचिर्नरः ॥ सगन्धर्व्वपदंप्राप्यमोदतेस्वर्गिवद्बुधः ॥१८॥ पञ्चमेऽहनियोभुंक्तेप्रतिमासमतन्द्रितः ॥वायुलोकंसमासाद्यस्वर्गलोकञ्चगच्छति ॥ १९ ॥
योभुङ्क्तेदिवसेषष्ठेनित्यंनियममास्थितः ॥ वारुणंलोकमासाद्यसचविन्देन्महापदम् ॥ २० ॥ सप्तमेऽहनियोभुङ्क्तेजितद्वन्द्वोदृढव्रतः ॥ आदित्यलो
कंप्राप्नोतिसर्व्वदेवंमहाफलम् ॥ २१ ॥ अष्टमेऽहनियोभुङ्क्तेप्रतिमासमतन्द्रितः ॥ वायुलोकंसमासाद्यस्वर्गलोकंसगच्छति ॥ २२ ॥ योभुङ्क्तेनवमेऽहनि
नित्यंनियममास्थितः ॥ वारुणंलोकमास्थायसचाविन्देन्महत्फलम् ॥ २३ ॥ दशमेऽहनियोभुङ्क्तेदशाहस्यफलंलभेत् ॥ अग्निभ्याश्चसमोभूत्वासूर्य्यव
ज्ज्वलतेसदा ॥ २४ ॥ मानुष्यञ्चपुनःप्राप्यदशभार्य्यालभेतसः ॥ एकादशेंतुयोभुंक्तेदिवसेमानवःशुचिः ॥ २५ ॥ एकादश्याःफलंप्राप्ययज्ञवानिहजा

यते ॥ दिनेद्वादशमेदेविभुंक्तेयस्तुसदानरः ॥ २६ ॥ वसेत्सभार्गवस्थानेप्राप्तदिव्यसुखान्वितः ॥ अथेहमानुषोभूत्वासनरोजायतेशुचिः ॥ २७ ॥ धन
धान्यसमायुक्तोजायतेसुकुलेशुभे ॥ चतुर्दशचयोरात्रीर्नित्यमुत्क्षिपतेनरः ॥ २८ ॥ नैमिषंलोकमास्थायभवेद्रणपतिर्नरः ॥ अर्द्धमासंक्षिपेद्यस्तुनि
त्यमेवह्यतन्द्रितः ॥ २९ ॥ देवराजेनतुल्योऽसौभूत्वास्वर्गेचतिष्ठति ॥ इहराजामहान्भूमौयत्रतत्राभिजायते ॥ ३० ॥ यस्तुमासंक्षिपेद्धीरोजितक्रोधो
जितेंद्रियः ॥ विमानेनसदिव्येनअप्सरोभिःसमन्वितः॥३१॥पूज्यमानोयथादेवःस्तूयमानोऽथसर्व्वशः॥ज्वलनादित्यसंकाशःसनित्यंसुखमश्नुते ॥ ३२ ॥
सर्व्वलेकेषुवसतेराजन्यवसनानिच ॥ततःपद्मासनंप्राप्यदशभार्य्यालभेतसः॥३३॥ब्रह्मलोकनिवासेनयथाब्रह्मानरोत्तमः॥अथवापुनरावृत्तिर्ब्राह्मणोभवती
श्वरः॥३४॥योगंचतत्रलभतेयेनैश्वर्य्यंलभेत्तुसः॥स्नातश्चशुचिरथवाहुत्वाग्नींश्वसमाहितः ॥३५॥ दीक्षयित्वातथात्मानमुपवासंचरेद्द्विजः॥तंयान्तिशरणंचै
वदुर्गपालोऽग्निरेवच॥३६॥योजपन्देवगायत्रींपवित्राणिचनित्यशः॥रुद्रनामगुणान्वापिरात्रौचस्थण्डिलेशयः॥३७॥कुशानास्तीर्य्यविधिवत्स्त्रीशूद्रपरिव
र्जितः॥समश्रीयात्तुवैरात्रौवीतरागोविमत्सरः॥३८॥यावन्त्यहानिसन्तिष्ठेत्तावद्विप्रांस्तुभोजयेत् ॥ ततःपूर्णेतुकालेवैब्राह्मणानांशतंगवाम् ॥३९॥ सहस्र
मथवाशक्त्यापूजयित्वातुसर्व्वशः ॥ हविष्यंभोजनंदद्याद्वावोवासांसिचक्रमात् ॥ ४० ॥ सुवर्णतिलपात्रंवाएकैकस्यतुदापयेत् ॥ ततस्तुवरमाप्नोतियद
न्यैर्दुर्लभंभवेत् ॥ ४१ ॥ वृषभंयस्तुनीलाङ्गंगांदद्याच्चपयस्विनीम् ॥ यावद्रोमसहस्राणिवर्षाणांदेविमोदते ॥ ४२ ॥ तिलपात्राणियोदद्याद्विप्रेभ्यःश्रद्ध
यानरः ॥ अमावास्यांसमासाद्यकृष्णाष्टमींसमाहितः ॥ ४३ ॥ यस्तुचान्द्रायणंकुर्य्याद्यथोक्तंसुसमाहितः ॥ सपितॄंस्तर्पयित्वातुअक्षयंनरपुङ्गवः॥४४॥
पितृलोकमवाप्नोतिदेववत्सुखमश्नुते ॥ उपवासविधिस्त्वेषकथितोमेसुशोभने ॥ ४५ ॥ पवित्राणांविधिंभूयएकचित्तावधारय ॥ प्रजापतिसमोभूत्वात
स्यलोकेमहीयते ॥ ४६ ॥ यस्तुसान्तपनंकृच्छ्रंकरोतिनरसत्तमः ॥ आत्मानमुद्धरेत्कृच्छ्रादाग्निलोकंसगच्छति ॥ ४७ ॥ महासान्तपनंयस्तुकरोतिसु
महामनाः ॥ सर्व्वज्ञानमवाप्नोतिब्रह्मलोकंसगच्छति ॥ ४८ ॥ तुलापुरुषकंयश्चददातिद्विजसत्तमे ॥ विमुक्तःसर्व्वपापैस्तुस्वच्छन्दोदेवपूजितः ॥ ४९ ॥
अतिकृच्छ्रेणतुनरःशर्व्वस्यभुवनंव्रजेत् ॥ कृच्छ्रातिकृच्छ्रेणतथागाणपत्यमवाप्नुयात् ॥ ५० ॥ यश्चसर्व्वाणिदानानिकुरुतेनरसत्तमः ॥ यंयंप्रार्थयतेका
मंतंतमेवसमश्नुते ॥ ५१ ॥ यस्यकस्यचिदेवेहकृच्छ्रस्यसुसमाहितः ॥ सतेनसिद्धोभवतिदेवत्वंचापिविन्दति ॥ ५२ ॥ जपीभजंस्तपोनित्यंनरःसर्व्वं
त्सरंवसेत् ॥ यावकश्चोपयुंजानोगोमूत्रेणापिसंस्कृतम् ॥ ५३ ॥ पिण्याकमात्रभक्षोवावायुभक्षोऽथवापुनः ॥ अश्वमेधफलंभुक्त्वाब्रह्मलोकंसमश्नुते
॥ ५४ ॥ सर्व्वपापविनिर्म्मुक्तोविमुक्तःसर्व्वबन्धनैः ॥ विमानेनार्कवर्णेनब्रह्मवच्चरतेसदा ॥ ५५ ॥ यस्त्वेतानिचसर्व्वाणिव्यस्तानिनरसत्तमः ॥

यावदुक्तंसमासेनमहात्मानष्टकिल्बिषः ॥ ५६ ॥ सालोक्यंवामहाशब्दंयथेष्टंमोक्षमेवच ॥ ऐश्वर्य्यंचमहत्प्राप्यदीप्यमानोऽवतिष्ठते ॥ ५७ ॥ वरंप्रा
प्यचसर्व्वाणिदानानिचयथेप्सितम् ॥ विनामन्त्रेणसततंशूद्राणामिहसर्व्वशः ॥ ५८ ॥ विधीयन्तेनसंदेहएवमाहप्रजापतिः ॥ अमन्त्रास्तेस्मृताःसर्व्वैःशू
द्राविगतकल्मषाः ॥ ५९ ॥ स्त्रीणांचदैवतंभर्त्ताततोनान्योविधीयते ॥ सगतिःपरमोधर्म्मःसधामपरमंस्मृतम् ॥ ६० ॥ तेनसाअभ्यनुज्ञाताइदंधर्म्मंस
माचरेत् ॥ साफल्यंतस्यधर्म्मस्यप्राप्नोतिसुसमाहिता ॥ ६१ ॥ यातुतेनाननुज्ञाताधर्म्मंकुर्य्याच्छुचिस्मिता ॥ नतत्फलंसालभतेलभतेचसतीफलम् ॥
॥ ६२ ॥ याचभर्त्राभ्यनुज्ञाताकृत्वाधर्म्मंसुपुष्कलम् ॥ दद्याच्चपठतेनारीतस्यानन्तंहितत्फलम् ॥ ६३ ॥ यच्चप्रार्थयतेकिञ्चिदिहलोकेपरत्रच ॥ त
त्सर्व्वंप्राप्यतेचैवसुभगाचापिजायते ॥ ६४ ॥ वश्यश्चास्याभवेद्भर्त्ताप्रियातस्यचसातथा ॥ पुत्रप्रजाचभवतिनचदुःखंसमश्नुते ॥ ६५ ॥ एषधर्म्मोमया
ख्यातस्तवस्नेहाद्वरानने ॥ ६६ ॥ इतिश्रीशिवमहापुराणेसनत्कुमारसंहितायांषड्विंशोऽध्यायः ॥ २६ ॥ देव्युवाच ॥ लोककर्त्तारमीशानंसर्व्वज्ञमपरा
जितम् ॥ प्रणमामित्रिनयनंभवन्तंशूलपाणिनम् ॥ १ ॥ भूतंभव्यंभविष्यञ्चयच्चवेद्यंपरंहर ॥ विदितंतवतत्सर्व्वंतेनसर्व्वगतोह्यसि ॥ २ ॥ यदितेऽहमनु
ग्राह्यायदितेमयिसौहृदम् ॥ यत्पृच्छामिमहादेवतन्मेब्रूहियथातथा ॥ ३ ॥ यांश्चवैनियमांश्चकुर्ब्राह्मणाःक्षत्रियाविशः ॥ येचान्येनियमाःकेचित्तेषांवै
ब्रूहियत्फलम् ॥ ४ ॥ येषुतीर्थेषुसर्व्वेषांसमृद्धाःफलवृद्धयः ॥ दृश्यन्तेनियमानाञ्चयोगध्यानतपोलयाः ॥ ५ ॥ एषमेसंशयोदेवचित्तव्या
कुलकारकः ॥ शमयस्वमहाबुद्धेनीहारमिवभास्करः ॥ ६ ॥ ॥ श्रीमहेश्वरउवाच ॥ ॥ एकएवात्रनियमोनियमार्थप्रदर्शनैः ॥ बहुधादृश्यतेलोके
नियमोनियमाद्भवेत् ॥ ७ ॥ नियमन्तुनरःकृत्वानियमान्नियतेन्द्रियः ॥ दुष्करंदेविकुरुतेसतस्यफलमश्नुते ॥ ८ ॥ अनित्यंसुखमित्येवंमानुष्यं
बुद्बुदोपमम् ॥ दुष्करंनियमंकर्त्तुमनुष्येणविशेषतः ॥ ९ ॥ नरालोभाभिभूताश्चनराधर्म्मोपहिंसकाः ॥ वर्त्तमानसुखासक्तानधर्म्मरुचयोऽ
भवन् ॥ १० ॥ उच्यमानश्चनियमंकरोत्यभिमतंनरः ॥ सतुवर्षसहस्राणिबहुवैफलमश्नुते ॥ ११ ॥ असिपत्रवनेयत्तुनियमस्यकुशीलता ॥ तेनधारणतु
ल्येननियमस्यानुपालनम् ॥ १२ ॥ देवत्वंदेवताःप्राप्तानियमान्नियमान्विते ॥ तारारूपोज्ज्वलज्ज्योतिर्नियमश्चतपोधने ॥ १३ ॥ नियमेनवरारोहेवेलां
नाक्रमतेनरः ॥ नियमाज्ज्वलतेचाग्निस्तपतेनियमाद्रविः ॥ १४ ॥ नियमात्प्रववौवायुर्नियमाद्ध्रियतेमही ॥ निष्कल्मषातपःकृत्वानियमश्चयथातथा
॥ १५ ॥ ममपत्नीत्वमायासित्वंशुभेनात्रसंशयः ॥ वर्षञ्चनियमंयश्चकुरुतेनियमांस्ततः ॥ १६ ॥ सब्रह्माद्येषुलोकेषुचरतेदेववत्सुखम् ॥ नियमस्यफ
लंप्राप्तंयथातुनियमान्विते ॥ १७ ॥ द्विजातीनांप्रियंतन्मेनिशामयनगात्मजे ॥ वाराणस्यामभूद्विप्रःकेवलंनामधारकः ॥ १८ ॥ विकृतःकर्म्ममूढश्चप

रद्रव्यापहारकः ॥ निष्ठुरोकरुणोदेविजातिकर्म्मविघट्टकः ॥ १९ ॥ सूचकोह्यान्ध्रजःपापोऽविशुद्धोभातिमत्सरः ॥ मिथ्याविनीतोदुर्म्मेधादेवदानवधि
क्कतः ॥ २० ॥ विकत्थनोऽधर्म्मरुचिर्नास्तिकोवेदनिन्दकः ॥ परद्रव्येणसन्तुष्टःपरद्रव्याविचारकः ॥ २१ ॥ उद्वेजनीयःसर्व्वस्यदुष्टाहिरिवपार्व्वति ॥
अशुद्धोनिर्नमस्कारोनिरोङ्कारोह्यपङ्क्तिभाक् ॥ २२ ॥ मिथ्याविनीतोदुर्म्मेधावेदवादबहिष्कृतः ॥ छिन्नदंष्ट्रोयथासर्पःशृङ्गहीनोयथावृषः ॥ २३ ॥
तुन्नपक्षोयथापक्षीविपुष्पइवपादपः ॥ वाराणस्यांसवैविप्रोविप्रकोटिशतार्द्दनः ॥ २४ ॥ आस्तेस्मशतपत्राक्षिसोऽलसश्चार्थहारकः ॥ तस्यांपुर्य्यानसोऽ
स्तीहपुरुषःप्रमदोत्तमे ॥ २५ ॥ यस्येष्टःसभवेद्धीरुर्दुष्टाहिरिवदुःखदः ॥ वणिगापणगःसोथनियतंरुचिरानने ॥ २६ ॥ तस्यवर्षशतान्येववणिगापण
गस्यवै ॥ अतिक्रान्तानिविप्रस्यनवाशिष्टस्यपार्व्वति ॥ २७ ॥ अथाम्बुजपदःसिद्धःसिद्धगन्धर्व्वपूजितः ॥ वाराणसींगतोद्रष्टुमोङ्कारंसिद्धवन्दितम् ॥
॥२८॥ व्रतमास्थायकाश्यांतुमुनिसिद्धैस्तुसत्कृतः ॥ आगच्छतितथातस्मिन्पञ्चायतनदर्शने ॥ २९ ॥ आर्त्तभूताःकलावासन्सर्व्वेतंप्रणमन्तिच ॥ म
त्स्योदर्य्यास्तटेदेवंपञ्चायतनसंस्थितम् ॥ ३० ॥ प्रदक्षिणंप्रकुर्व्वन्तिजन्मपापक्षयावहम् ॥ रुद्रावासेतुपानीयंपिबन्तिविहरन्तिच ॥ ३१ ॥ वाराण
स्यांविशालाक्षिभ्रमन्तेत्रिदिवालयाः ॥ सतत्रभ्रममाणश्चासिद्धोविकृतरूपधृक् ॥ ३२ ॥ तमायान्तमनुप्राप्तोयत्रास्तेऽसौद्विजाधमः ॥ सतंविकृतमायान्तं
सिद्धरूपंस्वमागतम् ॥ ३३ ॥ प्रहसन्निवचाहेदमभ्युत्थायाभिवादयन् ॥ अपूर्व्वदर्शनंत्वांतुपृच्छाम्यहमथोभवान् ॥ ३४ ॥ कुतःकथन्तुप्राप्तोऽसिश
ङ्केस्वर्गात्समागतः ॥ नहीदृशेनरूपेणकान्तेनचतुरेणतु ॥३५॥ दृश्यतेऽन्यस्ततःशङ्केस्वर्गभ्रष्टोभवानिति ॥ सिद्धउवाच ॥ साधुभोःस्वर्गविज्ञातमहाज्ञा
नमयोह्यसि ॥३६॥ स्वर्गादहमनुप्राप्तःसत्यंसत्यंनसंशयः ॥ प्रियंतेकथयिष्यामिवदसर्व्वंतथेप्सितम् ॥३७॥ ब्राह्मणउवाच ॥ यदिस्वर्गेऽस्तिवसतिस्ति
ष्ठसाद्विजसत्तम ॥ रम्भामप्सरसांश्रेष्ठांयदिजानासिकथ्यताम् ॥३८॥ सिद्धउवाच ॥ अभिज्ञांस्वर्गसंस्थानामप्सराणांनसंशयः ॥ प्रियंवाकथयाम्येषजाने
सर्व्वंयथेप्सितम् ॥३९॥ ब्राह्मणउवाच ॥ यदित्वमेवावससिकथयस्वममाग्रतः ॥ कोहिस्वर्गालयांरम्भांनविन्देच्चेन्दुसन्निभाम् ॥४०॥ परियासिपुनःस्वर्गं
कदाचिद्ब्राह्मणर्षभ ॥ रम्भामनामयंपृच्छवचनान्ममसत्तम ॥४१॥ सिद्धउवाच ॥ यदियास्येदिवंब्रह्मन्द्रष्टुमप्सरसोत्तमाम् ॥ अपक्रामन्दिवंकान्तांवायुरव्या
हतोयथा ॥४२॥ सतुगृह्याद्विनिष्क्रान्तांचन्द्रलेखांयथाम्बरात् ॥ अपश्यत्सुकृतींरम्भांभ्रष्टपद्मामिवश्रियम् ॥४३॥ पूर्णचन्द्राभवदनांमदनाङ्गमयीमिव ॥
गजकुम्भनिभाभ्याञ्चस्तनाभ्यान्तूपशोभिताम् ॥ ४४ ॥ पीनविस्तीर्णजघनवक्षोरुमुखनासिकाम् ॥ फुल्लताम्रारविन्दाभ्यांपादाभ्यांसम्प्रतिष्ठिताम् ॥
॥४५॥ रम्भांवीणान्वितांतेषांसुराणांस्वान्तचारिणीम् ॥ सिद्धोदृष्ट्वानवद्याङ्गीमिदंवचनमब्रवीत् ॥४६॥ वारणस्यांनिवसतिब्राह्मणोहिवराङ्गने ॥ सत्वां

पृच्छतिसुश्रोणियदिजानासिकथ्यताम् ॥ ४७ ॥ रम्भोवाच ॥ तंनजानाम्यहंविप्रचिन्तयन्त्यपिसन्ततम् ॥ इत्येवमुक्तोऽप्सरसाउवाचसिद्धवन्दितः ॥ ॥ ४८ ॥ स्वमेवावसथंतूर्णमानिवेशाब्जलोचने ॥ अथभूतःससिद्धोवैसिद्धःसिद्धशतस्तुतम् ॥ ४९ ॥ वाराणसीमनुप्राप्तःपश्चायतनमास्थितः ॥ द्विजातिनाचसंपृष्टश्चिरेणपुनरागतः ॥ ५० ॥ सतंप्रहस्यप्रोवाचवाराणस्यांनिकेतनः ॥ कथंब्राह्मणदृष्टासात्वयारम्भावराप्सराः ॥ ५१ ॥ कानिसावदते दृष्टापृच्छतोवासुराङ्गना ॥ सिद्धउवाच ॥ रम्भादृष्टाततस्तुभ्यंप्रहस्यवचनान्मम॥५२॥ चिरंविचिन्त्यमामाहनैवजानामिकोऽप्यसौ ॥ ब्राह्मणउवाच ॥ ब्राह्मणोऽस्मिपुनःस्वर्गेयदानाममहाद्युते ॥ ५३ ॥ गच्छसिद्धततोवाच्यानवेत्तिभवतीकथम् ॥ एवंभवतुचेत्युक्त्वाससिद्धस्तंद्विजोत्तमम् ॥ ५४ ॥ स्वर्गेसुकृतिनांवासेसङ्गतोरम्भयाचसः ॥ सारम्भापृथुसुश्रोणीस्तनभारानतामुदा ॥ ५५ ॥ अपश्यत्पश्यतांचित्तंहरन्तीमिवसुभ्रुवम् ॥ सतांपद्मरागवर्णामुन्नतस्तनशालिनीम् ॥ ५६ ॥ उवाचसिद्धःप्रहसन्रम्भांभावप्रचञ्चलाम् ॥ पृच्छतिस्माप्सरोरम्भेब्राह्मणस्तेप्रियोवरः ॥ ५७ ॥ वाराणस्यांपुनश्चाहंनाद्रियेतुपुनःकथम् ॥ स्मितंविहसितंकृत्वाततःसर्व्वाप्सरोवरा ॥ ५८ ॥ रम्भासिद्धंसहस्राणामुवाचामन्त्र्यकारणम् ॥ सिद्धतंब्राह्मणंब्रूहियदिज्ञातुंकिलेच्छसि ॥ ५९ ॥ नियमंकुरुविज्ञानंततःस्वर्गेभविष्यसि ॥ इत्युक्त्वासिद्धमामन्त्र्यनमस्कृत्वातुसाप्सराः ॥ ६० ॥ नन्दनंवनमागत्यसङ्गतातत्रचाप्सराः ॥ सवैसिद्धःपुनर्देविदेवगन्धर्व्वसेवितः ॥ ६१ ॥ रुद्रावासमनुप्राप्यतंब्राह्मणमपश्यत ॥ अथैनंब्राह्मणंप्राहस्मरित्वासुखसम्पदः ॥ ६२ ॥ सिद्धउवाच ॥ यदीच्छसिपरिज्ञातुमात्मानंकिलरम्भया ॥ देवैश्चनियमंज्ञात्वानियमंकुर्व्वसंशयम् ॥ ६३ ॥ ब्राह्मणउवाच ॥ अद्यप्रभृतिपाषाणंनखादामिद्विजोत्तम ॥ पश्यसेयादिचोपेतांरम्भामप्सरसंदिवि ॥ ६४ ॥ पाषाणंखादतिनयःसत्वांपृच्छतिब्राह्मणः ॥ इतीदंवचनंश्रुत्वासिद्धस्तस्मैद्विजातये ॥ ॥ ६५ ॥ दिवमेवगतस्तूर्णवायुरव्याहतोयथा ॥ सरम्भामब्रवीद्देविसत्वांपृच्छतिब्राह्मणः ॥ ६६ ॥ रम्भेतंवैविजानीहिपाषाणंयोनखादति ॥ यमेवादिवसंतेननियमेषुकृतामतिः ॥ ६७ ॥ तमेवदिवसंरम्भातांपुरीमस्यचिन्तयत् ॥ तस्याथाप्रकृतेनापिनियमेनाद्विजन्मनः ॥ ६८ ॥ प्रकाशाजाज्ञिरेदेविप्रदीपेनयथानिशि ॥ यस्ययस्याप्रियोह्यासीत्तस्यांपुर्य्यांसवैद्विजः ॥ ६९ ॥ तस्यतस्यप्रियोजज्ञेनियमेनप्रभावितः ॥ सयस्यनायातिगृहंयस्यवायातिवैगृहात् ॥ ७० ॥ कथंजीवामिकोवाहमितितस्याभवन्मतिः ॥ नियमंसततंविप्रोह्यवाह्यमनुपाल्यच ॥ ७१ ॥ सिद्धिंपारमिकांप्राप्यब्रह्मलोकमयंगतः ॥ नियमोवायमोदेविअल्पोवायदिवाबहुः ॥ ७२ ॥ तनोत्युपासितःस्वर्गंनयतेनरमम्बिके ॥ नियमाद्ब्रह्मलोकंवाप्राप्यतेनापिपार्व्वति ॥ ७३ ॥ प्राप्नुवन्तिनराःशुभ्रंकृत्वाचिरमयन्त्रणाः ॥ वचनंकिमितितेचशतपत्रमुखिपर्व्वतात्मजे ॥ ७४ ॥ नियममनिन्द्यलोचनेगतःसमुत्पत्यब्राह्मणः ॥ कमलपुरगृ

हंगतोरतोवसतिशचीपतिवद्दिवि ॥ ७५ ॥ इतिचतपनेन्दुसन्निभेनियमफलंगदितंमयाचाब्जलोचने ॥ कुरुकुरुसदाहिनियमेनियमानिन्दितभावबन्धन
म् ॥ ७६ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांनियमनिरूपणंनामसप्तविंशोऽध्यायः ॥ २७ ॥ सनत्कुमारउवाच ॥ नियमस्यफलश्चोक्तंश्रु
त्वाप्रीताभवत्सती ॥ भर्त्तारंलोककर्त्तारंपुनरप्याहपार्व्वती ॥ १ ॥ भगवन्नियमानांहिफलंप्रोक्तंमहोदयम्॥केनकर्म्मकृतेनापिब्रह्मलोकंगतोद्विजः ॥ २ ॥
नियमस्यफलंदेवश्रुतंनित्यंमयाप्रभो ॥ यथाचोङ्कारदेवस्यप्रसङ्गेनत्वयेरितम् ॥ ३ ॥ एकन्तुश्रोतुमिच्छामिरहस्यंभुवनेश्वर ॥ धार्य्यतेचन्द्रवर्णाभच
न्द्रस्यार्द्धंत्वयाकथम् ॥ ४ ॥ कारणञ्चैवकथययेनत्वंचन्द्रशेखर ॥ बिभर्त्तिउत्तमाङ्गेनमांदेहार्द्धेभवान्यथा ॥ ५ ॥ कथमेतत्कृतोह्येषतवचन्द्रःशिरोग
तः ॥ एतदाख्याहिभगवन्सहधर्म्मचरीतिमे ॥ ६ ॥ सनत्कुमारउवाच ॥ एवमम्बिकयाप्रोक्तस्तदर्थेनीललोहितः ॥ उमामाहपरिष्वज्यशृणुदेविशुभा
नने ॥ ७ ॥ त्वयासद्योविनिर्म्मुक्तोअरण्याभ्युदितस्तथा ॥ ८ ॥ निर्व्वेदंपरमंगत्वामोक्ष्यसेनान्तरात्मना ॥ अहंतपसिसश्चार्य्यंचरामिविनिकेतनः ॥ ९ ॥
गुहासुरमणीयासुनदीनांपुलिनेषुच ॥ वनवासिषुवृक्षेषुदेवोद्यानवनेषुच ॥ १० ॥ अहमिन्दीवराभ्याशेवसामिविचरामिच ॥ नियमंतीव्रमास्थायघनपी
नोन्नतस्तनि ॥ ११ ॥ यत्रयत्रचतिष्ठामिगिरौवृक्षेचपार्व्वति ॥ ससवृक्षोगिरिश्चापिदह्यतेस्मतपोऽग्निना ॥ १२ ॥ क्वचिद्धूमायमानानिक्वाचित्प्रज्वलिता
निच ॥ शृङ्गाणिधरणीधारादह्यन्तेममतेजसा ॥ १३ ॥ निष्प्रभंग्रहचन्द्रार्कंजरार्द्दितामिवान्तकम् ॥ त्रैलोक्यमभवत्सर्व्वंपर्य्युत्सुकसुरासुरम् ॥ १४ ॥
ततोदेवगणाःसर्व्वेसशक्राःसपितामहाः ॥ समीयुर्मन्दरस्याग्रेममतेजःपरिप्लुते ॥ १५ ॥ अथब्रह्माणमामन्त्र्यमहेन्द्रोदेवताधिपः ॥ किमिदंभगवन्केनवय
मग्न्यधिराधिताः ॥ १६ ॥ कथयस्वभवेद्वह्निःकथमव्ययसत्तम ॥ इतीन्द्रेवदमानेतुनदमानेतथाम्बुदे ॥ १७ ॥ चतुर्म्मुखस्त्रिलोकेशमाहेदंचपिताम
हः ॥ नरुद्रस्यगतिंज्ञातुंप्रभवामिमहात्मनः ॥ १८ ॥ शक्रयस्यप्रभावेणदह्यतेजगदाविलम् ॥ नवयंप्रमुखादस्यनचवाय्योंस्यनिश्चयः ॥ १९ ॥
अवश्यञ्चमयातुभ्यंहितंकार्य्यंजगद्धितम् ॥ हरेणेन्दुर्नलब्धोहिसौम्यंपश्यतिनैवसः ॥ २० ॥ प्रगृह्ययामतत्रेदंयदिनिर्व्वाणमिच्छसि ॥ सहिजाया
विरहितोदिवादीप्तइवानलः ॥ २१ ॥ प्रदहिष्यतिनःसर्व्वानेकंभूतन्तुदैवतम् ॥ वहिष्यतीदंशिरसासौम्यप्रीतंनसंशयः ॥ २२ ॥ तेजोऽभिभवितासौ
म्यंचन्द्रचूडाश्रितोमणिः ॥ एवंनःसुकृतंकार्य्यंसचप्रीतोभविष्यति ॥ २३ ॥ प्रभावाच्छशिनश्चापिसशीतश्चभविष्यति ॥ एतत्पितामहेनो
क्तमुपायंजनितंहितम् ॥ २४ ॥ गृहीतंदैवतैःसेन्द्रैर्मणिवर्णशुभंस्थितम् ॥ तेनसब्रह्मकाःसेन्द्रादेवादैवतवन्दिते ॥ २५ ॥ एवंकुर्म्मःप्रयामोऽ
थइतिकृत्वाप्रचक्रिरे ॥ ततोऽमृतसमापूर्णमेकमेकंविषस्यच ॥ २६ ॥ कुम्भात्कुम्भादुपादायदेवास्तेसमुपस्थिताः ॥ तौसापिधानौकलशावुदग्रौ

निम्नहस्तकौ ॥ २७ ॥ अमुश्चेतांशुभंगन्धंचन्दनाविवपुष्पितौ ॥ ततोदेवाःसमरुतःप्रसन्नेन्द्रियमानसाः ॥ २८ ॥ देवेतिपूर्व्वमामन्त्र्यप्राहदेवंपि
तामहः ॥ देवामृतमिदश्चापिकुम्भंहालाहलाभिधम् ॥ २९ ॥ ततोग्राह्यंगृहाणत्वंततःपश्यन्तुदेवताः ॥ ततोमयामृतंदेविप्रथमंप्रमथार्च्चिते ॥ ३० ॥
पुनश्चन्द्रंशिरोभागेलेखामात्रोविनिर्म्मितः ॥ ततोऽपिचपुनर्देविविषंजलरुहानने ॥ ३१ ॥ स्पृश्यग्रीवासमालब्धाप्रदेशिन्यामयानघे ॥ अमृतेनैवच
न्द्रश्चकण्ठश्चैवविषेणमे ॥ ३२ ॥ युगपज्जनितौमूर्ध्निललाटेदेहजाविव ॥ सौम्यासौम्येनचन्द्रेणउत्तमाङ्गगतेनवै ॥ ३३ ॥ तत्तेजोऽमृततांनीतंमहीरजइ
वाम्बुना ॥ तेनहालाहलेनापिविषेणममपार्व्वति ॥ ३४ ॥ कण्ठोममकृतःश्यामोयस्यमेवामलोचने ॥ ततःशिवश्चसौम्यश्चदेवानामस्मिसुन्दरि ॥३५॥
दर्शनीयश्चसंवृत्तोवृत्तपीनकुचोदरि ॥ इत्येवंतेमयाप्रोक्तंयथाचन्द्रःशिरोगतः ॥ ३६ ॥ यइदंशृणुयाद्देविचन्द्राद्धोत्पत्तिसम्भवम् ॥ गाणपत्यंमहत्तस्य
दिव्यंदेहविपर्य्यये ॥ ३७ ॥ कलिकलुषंनिहन्तियश्चेदंपुण्यफलदं सर्व्वकालंपितृणांसुखप्रापकम् ॥ चन्द्रजन्माद्भुतंयोद्विजोऽधीतेऽधोमुखंशु
चिस्तस्यदद्याच्छरीरात्ययेगाणपत्यंमहदिति ॥ ३८ ॥ इतिश्रीशिवमहापुराणेसनत्कुमारसंहितायामष्टाविंशोऽध्यायः ॥ २८ ॥ सनत्कुमार
उवाच ॥ विषदोषफलंश्रुत्वागिरीशतनयाव्यया ॥ इदमाहमहाभागासर्व्वदेवपतिंपतिम् ॥ १ ॥ आशावसनदेवेशनास्तिधन्यतरामया ॥ यस्या
एवमहादेवोभूतदेवपतिःपतिः ॥ २ ॥ विभूत्यापरयायुक्तंभूत्याचसुविभूषितम् ॥ पश्यामित्वांश्मशानस्थंनृत्यन्तंप्रमथैःसह ॥ ३ ॥ एवंवि
दितवेशस्यप्रभूतवरदस्यच ॥ कथंतेलेपनंजातंतवभस्मरजोऽन्वितम् ॥ ४ ॥ गोशीर्षकनकश्यामैरन्यैश्चवरचन्दनैः ॥ मत्तःप्रियतरादेवभूतिरेषा
हिवैकथम् ॥ ५ ॥ कुतएषाकथञ्चैषावल्लभत्वमुपागता ॥ भूतिर्भूतिविदांश्रेष्ठवदबालेन्दुभूषण ॥ ६ ॥ एवमुक्तःप्रभुर्देवःसोमयासोमभूषणः ॥
उवाचसम्परिष्वज्यगौरींदीप्ताग्निसन्निभाम् ॥ ७ ॥ चन्द्राभेचन्द्रवदनेचन्द्रपङ्कजहासिनि ॥ शृणुदेवियथाभूतिर्विलेपनमभून्मम ॥ ८ ॥
ब्रह्मणोब्राह्मणोह्यासीद्भृगुवंशेप्रभावतः ॥ नियमंतीव्रमास्थायततापविपुलंतपः ॥ ९ ॥ ग्रीष्मेपञ्चतपाभूत्वाहेमन्तेचजलेशयः ॥ वर्षास्वाकाश
गश्चापिसोऽभवच्चबुभुक्षितः ॥ १० ॥ चतुर्थेपञ्चमेषष्ठेसप्तमेदशमेऽपिच ॥ कालेकालेमितालापेऽपूर्णमाहारमाहरत् ॥ ११ ॥ तमृक्षाःशरभाः
सिंहाःशृगालाद्याश्चजन्तवः ॥ फलान्यादायसर्व्वेवैतत्रगच्छान्तिदूतवत् ॥ १२ ॥ येचसस्यकुशाहारायेचमांसाशिनोमृगाः ॥ तेतेप्रभावात्तस्याथानिर्वै
राःसहचारिणः ॥ १३॥ सचापितपसादीप्तोदीप्ताग्निसदृशप्रभः॥ ततापलोकान्ब्रह्मर्षिस्तापयन्सयथापुरा॥१४॥ शाकमक्षारलवणंतस्याहारमतःप्रियम्॥
नाम्नापर्णादइत्येवततोलोकेषुविश्रुतः ॥ १५ ॥ एकपर्णाशिनस्तस्ययथापूर्णाशिनस्तथा ॥ बहून्यहानियातानिवर्षाण्यमृतवार्षीणि ॥ १६ ॥ तस्यध

र्म्मरतेरासीन्मानसंसम्प्रतिष्ठितम् ॥ तपश्चरणयुक्तस्यसत्यधर्म्मरतात्मनः ॥१७॥ यदाशाकरसाभासंभवेद्धिरुधिरंमम॥ तदानिष्ठस्यधर्म्मस्यभवेन्निष्क
ल्मषंतथा ॥ १८ ॥ अथधर्म्मप्रसङ्गेनकदाचित्सतपोधनः॥नुन्नवान्पद्मगर्भाभेदर्भान्वैदूर्य्यसन्निभान् ॥ १९ ॥ तस्यनुन्नवतोदर्भान्दर्भच्छेदेनपार्व्वति ॥
असितीक्ष्णेनदर्भेणपाटिताथप्रदेशिनी ॥ २० ॥ ततोऽङ्गुलीव्रणात्तस्यशाकनिर्याससन्निभम् ॥ सुस्रावशोणितंतावद्दृसंदृष्ट्वाप्रहस्यच ॥ २१ ॥ सहसनृ
त्यमानश्चनर्द्दमानश्चब्राह्मणः ॥ त्रासयामाससहसामृगांस्तानतुगानपि ॥ २२ ॥ तस्यापूर्व्वविकारन्तुदृष्ट्वासर्व्वमृगाम्बिके ॥ त्रस्ताभूत्वासमुत्सृष्टामृगाः
सिंहार्द्दिताइव ॥ २३ ॥ तस्यमाचित्तविभ्रंशोभवेदितिततोऽम्बिके ॥ मयात्माविप्ररूपेणतस्यविप्रस्यदर्शितः ॥ २४ ॥ अहंभोइतिचाप्युक्तोमयावि
प्रःसपार्व्वति ॥ सनृत्यन्निनर्दंश्चापिनचमामप्यभाषत ॥ २५ ॥ यदातस्यानुवृत्त्याचविरराममतपोधनः ॥ ततोमयाकरेगृह्यइदमुक्तोवचोऽङ्गने ॥ २६ ॥
किमिदंवर्त्ततेविप्रविकारेऽपूर्व्वएवते ॥ नहिलभ्यमिदंतुभ्यंचन्द्रादिवयथातमः ॥ २७ ॥ तपोधनंमहद्धित्वाप्रशंसामश्रमंलभेत् ॥ तपोयज्ञश्चकीर्त्तिश्च
माहिंसीश्चिरसञ्चिताम् ॥ २८ ॥ नसौम्योऽहमितीवेन्दुर्नोग्रोऽहमितिभास्करः ॥ नदहामीतिवाप्यग्निःस्वयंकुर्व्वन्तिकर्हिचित् ॥ २९ ॥ तत्तुधर्म्मतपो
दानैर्धौतंतेजन्मसञ्चितम् ॥ तेजसाकलुषंसर्व्वंतपोमदमिमंजहि ॥ ३० ॥ अनन्तरात्मापृथिवीमातेभूद्विस्मयोमुने ॥ तपस्विनःस्थिताह्येतेभवतोऽपि
तपोधनाः ॥ ३१ ॥ निष्कल्मषंशरीरंमेतपसापश्यब्राह्मण ॥ अहंतवानुपश्यामिकिल्बिषस्त्वंसकिल्बिषम् ॥ ३२ ॥ शरीरंस्रवतेभस्मदह्यमानंतृणंय
था ॥ ततःप्रदेशिनींदेवीमयासुन्दरसुन्दरि ॥ ३३ ॥ स्वकैःकररुहैश्छिन्नासमक्षंब्राह्मणस्यच ॥ क्षीरधाराःपतन्त्यस्मादङ्गुल्यांतादृशीसिता ॥ ३४ ॥
भूरिधाराप्रसुस्राववसुधाराइवाध्वरे ॥ ममांगुलिव्रणात्तस्माद्भस्मधारांसमीक्ष्यसः ॥ ३५ ॥ साध्वित्युच्चैरितिप्रोक्त्वाइदमाहसविस्मयः ॥
अनन्तवीर्य्यापृथिवीयदुक्तंतादिदंतथा ॥ ३६ ॥ स्वयंशाकरसोद्भूतंभूत्याप्रशमितंहिमे ॥ कोभवान्किञ्चतेगोत्रंनामकिंकिंचतेतपः ॥ ३७ ॥
यस्यतेस्रवतेभस्मअंगुल्यग्रेनिकृन्तनात् ॥ नूनंवर्षसहस्राणिबहूनिममब्राह्मण ॥ ३८ ॥ महादेवप्रसादाच्चकुर्व्वतःपरमंतपः ॥ मेघश्यामोच्यु
तोवापिभवान्मेघरथोहरः ॥ ३९ ॥ एवमेवब्रुवाणस्यमयातस्यततोऽम्बिके ॥ दर्शितंदर्शनीयाक्षिरूपंरूपसहस्रदे ॥ ४० ॥ ततःसुवलितैर्गात्रैः
सम्भ्रमाच्चलितेक्षणे ॥ समेपद्भ्यांपपाताशुतुष्टावचसमांप्रिये ॥ ४१ ॥ ॥ पर्णादउवाच ॥ ॥ नमोब्राह्मणरूपायमहादेवायशूलिने ॥ ब्रह्मेन्द्रविष्णु
पूज्यायशंकरायनमोऽस्तुते ॥ ४२ ॥ नमोभस्माङ्गरागायभस्मोत्पत्तिविकारिणे ॥ भस्मलिप्तांगदेहायदुःखान्तफलदायिने ॥ ४३ ॥ देवि
स्तोत्रेणतुष्टावतमब्रुवमहंद्विजम् ॥ तंभावशुद्धभावंतंभावशुद्धेनचेतसा ॥ ४४ ॥ त्वयासन्तोषितोऽस्म्यद्यस्तोत्रस्यशृणुमेफलम् ॥ अमराश्चरमायुक्ताः

सर्व्वदुःखविवर्ज्जिताः ॥४५॥ गणाधिपपतिर्मह्यंभवस्यपरमप्रियः॥ममाद्यवैयथाचेष्टंममेष्टोऽसिगणाधिपः ॥ ४६ ॥ गोषुविप्रेषुभक्तेषुदेवेष्वस्तुचतेदया ॥
योगात्प्रमुदितोभूत्वामांप्रणम्यगणेश्वर ॥ ४७ ॥ मयैवदत्तमावासंसुमेरौसुरसन्निभम् ॥ एतस्मात्कारणादेषाममामृतसुगन्धिनि ॥ ४८ ॥ भूतिर्विलेप
नंजातास्नानंचानुत्तमंप्रिये ॥ पुण्येकनखलेयच्चप्रयागेयच्चसुन्दरि ॥ ४९ ॥ तत्फलंसकलंदेविभूतिस्नानेविधीयते ॥ पुष्करेचप्रभासेचयच्चसप्तमले
फलम् ॥ ५० ॥ भूतिस्नानेनतत्पुण्यंलभतेयत्नतोनरः ॥ तत्फलंलभतेदेविभूतिस्नानेविधीयते ॥ ५१ ॥ पुष्करेचप्रभासेचयच्चसप्तमकेफलम् ॥
भूतिस्नानेनतद्धीरुलभतेशतगुणंप्रिये ॥ ५२ ॥ ब्रह्माविष्णुरनन्तश्चशक्रोऽग्निर्वरुणोयमः ॥ स्नानेनानेनसंपन्नाःसर्व्वेषामुपरिस्थिताः ॥ ५३ ॥
आदित्यावसवोरुद्रामरुतश्चाश्विनावपि ॥ एतत्स्नानमुपासन्तोदेवादेवत्वमागताः ॥ ५४ ॥ तपोधनाश्चयेचान्येसिद्धाश्चोरगचारणाः ॥
स्नानस्यचप्रभावेणजाताजातिविवर्ज्जिताः ॥ ५५ ॥ पिशाचेभ्योराक्षसेभ्योयक्षेभ्यश्चापिपार्व्वति ॥ नभवेत्तद्भयंदेविभूतिस्नानेनसर्व्वशः ॥ ५६ ॥ येचे
मेमद्विधायोगेममतुल्यप्रभाःप्रिये ॥ ममानुगाभवन्त्येतेभस्मस्नानेनपार्व्वति ॥ ५७ ॥ तुलयैवधृतंस्वर्गेममभूतेश्चसम्भवम् ॥ भूतिलक्षणवश्यानिधना
निविविधानिच ॥ ५९ ॥ राक्षसानामहिंस्याश्चभवन्तिगिरिनन्दिनि ॥ येजनास्तूपजीवन्तिभूतिंपारमिकांद्विजाः ॥ ५९ ॥ तेचरिष्यन्तिगणपाममलो
केमदाज्ञया ॥ भूतिस्नानसमंस्नानंनास्तिवैवामलोचने ॥ ६० ॥ स्नानस्यचफलंयच्चतद्विदन्तिगणेश्वराः ॥ नास्तिगङ्गासमंतीर्थंनास्तिवेदसमाश्रुतिः ॥
॥ ६१ ॥ नास्तिमृत्युसमःशास्तानास्तिभूतिसमंतपः ॥ उच्छिष्टंवाप्रमत्तंवाहिंसतेनचाहिंसकाः ॥ ६२ ॥ ननरंभूतिसंसृष्टंधर्षयन्तिविनायकाः ॥ एवं
पर्णादसुदिश्यममैषाशुभगन्धिनी ॥ ६३ ॥ भूतिर्विलेपनंजातादेवितामरसेक्षणे ॥ एतत्तेकथितंदेविमयाऽपूर्व्वंशुचिस्मिते ॥ ६४ ॥ यथोत्पन्नाचजाता
चममभूतिर्विलेपनम् ॥ ६५ ॥ अवनिधरवरात्मजेयोहिकश्चिन्मानवासुरेषुच ॥ ६६ ॥ निषेवेतवैभस्मस्नानंममैतत्प्रियंसाहिजलरुहपत्रतुल्येक्षणे ॥ सनो
गणेशत्वमापद्यतेसूर्य्याग्निसोमद्युतिर्देवगन्धर्व्वसिद्धार्च्चितोरम्योऽतीव ॥६७॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांविभूतिकीर्त्तनंनामैकोनत्रिंशोऽ
ध्यायः॥२९॥सनत्कुमारउवाच॥भूत्युत्पत्तिंशुभांश्रुत्वाततोगिरिवरात्मजा ॥ पतिंपतिव्रताप्राहविकसत्कमलेक्षणा ॥१॥ लोकनिष्ठागृहेचैवशवधूमारुणे
क्षणे॥चिताशतसहस्रेषुप्रज्वालितेचितानले॥२॥सिद्धचारणसम्पत्तौसङ्कुलीकृतसन्ततौ॥आन्त्रगन्धवसाधारेनिन्दितेभूतभूषिते ॥३॥ प्रेतभूतसमाक्रान्तेमे
दोरुधिरपङ्किले॥शिवारुदितगम्भीरेकाकोलूकशताकुले॥४॥नानापक्षिमृगाकीर्णेसारमेयकृतस्वने ॥पशुक्षतवपुःपृष्ठशवमाल्यैरलङ्कृते ॥५॥ कुशकाश
कृतोद्देशेब्रह्मसूत्रानुभूषिते॥मुशलोलूखलयुतेशिवाशतरवोत्कटे॥६॥आज्याहुतिंनिपातैश्चवर्द्धमानचिताकुले॥नानापक्षिमृगाकीर्णेसारमेयकृतस्वने ॥७

खट्वाभिः पिटकैः शूर्पैरपवित्रैर्निरन्तरे ॥ नानाभरणवस्त्रैश्च भूषणैश्च विभूषिते ॥ ८ ॥ रौद्रैरद्भुतबीभत्सैर्भयदैः सर्व्वदेहिनाम् ॥ दुरन्तकालप्रतिमे दुर्व्विगाह्ये
दुरासदे ॥ ९ ॥ बालहस्तकृतापीडे भूषिते वनमालया ॥ गजचर्म्मावृतत्रस्तव्याघ्रचर्म्मविभूषिते ॥ १० ॥ वसापूर्णकपालैश्च चिंताग्नौ माहिषं पचन् ॥ नृत्यमानो
ऽट्टहासांश्च सृजमानो भयङ्करान् ॥ ११ ॥ त्रासयन्सर्व्वभूतानि पातयन्निवदानवान् ॥ उन्मत्तवदनुन्मत्तः प्रभुः प्रभवतामपि ॥ १२ ॥ रात्रौ श्मशाने सुप्तो ऽ
सि किं कर्म्मैतत्तवेश्वर ॥ श्रुतौ त्रैलोक्यनाथस्य विश्रुतस्य हरस्य च ॥ १३ ॥ तव नाम महादेव चिन्तितं वृत्तमीश्वर ॥ तव भार्य्या नियुक्ताहं भार्य्या त्रैलोक्य
भाविनी ॥ १४ ॥ भ्रमतीवहि मे चित्तं दूयते वहि मे मनः ॥ साध्वाचारस्य विकृतं तवाचारं निशाम्य हि ॥ १५ ॥ सर्व्वदैवतपूज्यस्य सर्व्वदेवमयस्य च ॥ तव
नाम महादेव गर्हितं वृत्तमीश्वर ॥ १६ ॥ ईशः को नाम जगतस्तव दैवमसाधनम् ॥ ध्रुवमत्र महादेव कारणं महदस्ति वै ॥ १७ ॥ कौतूहलमतीवेदं ममायत्त
मिदं प्रभो ॥ देवगुह्यं महागुह्यं पृच्छन्त्या मम वेदय ॥ १८ ॥ इत्येवमभियुक्तस्तु सतया थ पतिर्भवः ॥ हासोत्फुल्लमुखो देवो हासोत्फुल्लहृदब्रवीत् ॥ १९ ॥
अहं शोणितपः कालः करालवदनोऽम्बिके ॥ रौद्रे मुहूर्त्ते सम्भूते देवि रोदिमि विस्वरम् ॥ २० ॥ ततो मामवदद्देवः पुराणोऽनादिरव्ययः ॥ कुमार किमिदं
घोरं रोदिषीति भयातुर ॥ २१ ॥ तदावोचमहं देवं वदन्तं वदतां वरम् ॥ देहि मे नाम सदृशं तेन त्वं देव रोदिषि ॥ २२ ॥ रुद्रस्त्वमिति तेनाहमुक्तो वै मत्तका
शिनि ॥ न तिष्ठामि रुदाम्येव ततो मां पुनरब्रवीत् ॥ २३ ॥ किमिदं रुद्यते भूयो नीललोहित मा रुद ॥ ब्रूहि मां किमतो भूयः करवाणि तवानघ
॥ २४ ॥ नाम मे देहि तमहं रुदन्नेव तदाब्रुवम् ॥ सप्त नामानि मे तेन जनितानि गुहारणि ॥ २५ ॥ अन्यानि तैरपि कृतै रोदिम्येव ततोऽम्बिके ॥ ततो मां
पाणिना स्पृष्ट्वा लोकेशः प्राह केशवः ॥ २६ ॥ किमिदं रुद्यतेऽत्यर्थं रोदन्तं रोदनस्यते ॥ तथैव चान्यान्सोऽदान्मे नामधेयानि पार्व्वति ॥ २७ ॥ समां
विदितवेद्यस्तु विदितात्माब्रवीद्वचः ॥ महादेवोऽसि देवानां ततोऽहं नारुदं प्रिये ॥ २८ ॥ अशुचीन्प्रार्थये यस्मात्सुभुवांश्च समन्ततः ॥ द्रावयामि च य
ल्लोकं तेन रुद्रोऽस्मि विश्रुतः ॥ २९ ॥ संहरामि च संहारे हरस्तेनास्मि नामतः ॥ कालो भूत्वा महाकालस्तेनाहं कालसंज्ञितः ॥ ३० ॥ धातुद्वय
मिति प्रोक्तं लक्षणाग्रसितात्मकम् ॥ सर्व्वलोकान्ग्रसाम्यन्ते तेन सर्व्वोऽहमम्बिके ॥ ३१ ॥ यच्छुक्रमिममादाय लोकान्सज्जनपण्डितान् ॥ भयं
करोमि भावाय भवस्तेनास्मि पार्व्वति ॥ ३२ ॥ छागानृपवसादिग्धेयत्क्षिणोमि तृणेवरम् ॥ यदुग्रशान्तिमाप्नोति तेनोग्रोऽहमनिंदिते ॥ ३३ ॥ महत्स्व
पि महांश्चाहं मह्यादिपतिरेव च ॥ महाशब्देन निरतो महादेवस्ततो ह्यहम् ॥ ३४ ॥ अहं पीनायतश्रोणि ईश्वराणामपीश्वरः ॥ कर्त्तुं हर्त्तुं च दातुं च तेनाहं
परमेश्वरः ॥ ३५ ॥ गुह्यान्येतानि नामानि मम मे ष्टानीह पार्व्वति ॥ येन चापि हितात्मा वैस्तुतस्तुष्याम्यतीव हि ॥ ३६ ॥ अन्यथाहं यदा कुर्य्यां प्रजामनु

ममप्रिये ॥ रौद्रभावंयदाकुर्य्यांरौद्रकर्म्मांततोह्यहम् ॥ ३७ ॥ ततश्चितासुमांदेवियोऽप्यर्च्चयतिनामभिः ॥ अर्च्चितास्त्रिदशैर्य्यातिविधीशैरेवतुल्यताम् ॥
॥ ३८ ॥ यएतानितुनामानिधारयेतममप्रिये ॥ शाश्वतंपदमाप्नोतिगाणपत्यञ्चसंक्षये ॥ ३९ ॥ यःकर्म्मणिविसृष्टोऽस्तिविधिनादेविभाविनि ॥ सकर्म्म
कुरुतेनात्रदृश्यादृश्येनियोज्यते ॥ ४० ॥ यद्यदभ्युदितंकर्म्मपुरुषस्यगिरेःसुते ॥ तत्तेनावश्यकर्त्तव्यंमृदुवायदिवेतरत् ॥ ४१ ॥ प्रजापतिश्चकःश
क्तआदेशंकर्त्तुमन्यथा ॥ निदेशेतस्यभूतानिसकरोत्युपदेशताम् ॥ ४२ ॥ सोऽहंतेनवरारोहेपुरुषेणवरानने ॥ नियुक्तःकलिकालेनकर्म्मादेशंततःप्रिये
॥ ४३ ॥ अहंसंवत्सरःकालःप्रजासंहारकारकः ॥ कालरात्रिश्चभवतीसहधर्म्मचरीमम ॥ ४४ ॥ अहंहित्वांविजानामिमांचत्वंपर्व्वतात्मजे ॥ त्वन्मयं
मन्मयंचैवनारायणपदत्रयम् ॥ ४५ ॥ ममैतत्कर्म्मउचितंविधात्राहिसमाहितम् ॥ नयनान्नयनाच्चैवयथानास्तिव्यतिक्रमः ॥ ४६ ॥ पुण्यंचरमणीयंच
सिद्धक्षेत्रंचपार्व्वति ॥ इष्टंश्मशानमेवंमेतत्रतत्ररमाम्यहम् ॥ ४७ ॥ इमेचात्रगणाध्यक्षारमणीयायतेक्षणे ॥ रमयन्तिरमन्तीमांश्मशानंतेनमेमतम् ॥ ४८ ॥
योयस्यदीयतेदेविविषयोविपर्यैषिणि ॥ सतत्ररमतेजन्तुर्भूतिरेषाप्रकीर्त्तिता ॥ ४९ ॥ सतस्मिन्पश्यमानस्तुगुणांश्चगुणवर्णिनि ॥ स्नेहंसदाचकुरुते
श्मशानेऽहमिवानघे ॥ ५० ॥ यच्चागमेषुतीर्थेषुश्रुतिषुचफलंविदुः ॥ फलञ्चस्नानचर्य्यायामनघेप्रवदाम्यहम् ॥ ५१ ॥ असौहिसाधकश्चाहंवेदादि
रनुकीर्त्तितः ॥ तेनदृष्टोमयैवैषदेवदेवोजगत्पतिः ॥ ५२ ॥ सनत्कुमारउवाच ॥ उवाचपुनरप्याशुप्रमथार्त्तिहरंहरम् ॥ कालकालकलेशानवचो
मेवदतांवर ॥ ५३ ॥ अहोकालत्वमापन्नत्वयाहेतुरुदीरितः ॥ ज्वालाज्वालेक्षितौव्योम्निसूर्य्येन्दुपवनेगतौ ॥ ५४ ॥ लिङ्गेचयेऽर्च्चांकुर्व्वन्तिसदाभ
क्तियुतानराः ॥ अन्येतुयेऽर्च्चयन्तित्वांनृत्यगीतैश्चमानवाः ॥ ५५ ॥ अन्येतुयेनमस्कारंकुर्व्वन्त्यनिमिषेक्षणाः ॥ घृतेनदध्नाक्षीरेणजले
नचसुगन्धिना ॥ ५६ ॥ गोमयेनतथाचान्येनरास्त्वांस्नापयन्तिच ॥ गन्धैर्धूपैश्चमाल्यैश्चउपहारैश्चपुष्कलैः ॥ ५७ ॥ पूजयन्तिफलंतेषांकिंभवे
द्धित्रिलोचन ॥ येचपर्य्युषितंमाल्यंनददतितवानघ ॥ ५८ ॥ तेषामपिफलंदेववदवाचस्पतेःपते ॥ इत्येवंदेविवचनंनिशम्योमापतिर्ह
रः ॥ ५९ ॥ सम्बोध्यवाचयाभार्य्यामार्य्यांवचनमब्रवीत् ॥ वामोक्तासम्भवेदेविगजनासोरुमेशृणु ॥ ६० ॥ यदेवप्रश्नंविविधंयन्मासंपरिकीर्त्तितम् ॥
त्वद्भक्तोमयिभक्तेषुयोगश्चनियमादयः ॥ ६१ ॥ त्वमेववेदवेदाद्येनान्योवेदविदांवरः ॥ यथायोभक्तिमान्भक्तोममभक्तिमतांवरे ॥ ६२ ॥ तंतथाविपुल
श्रोणितारयामिभवाम्बुधेः ॥ यथाप्येतत्त्वयाप्रश्नंस्नापनार्च्चनपूर्व्वकम् ॥ ६३ ॥ सम्भावितंमयासम्यगुच्यमानंनिशामय ॥ जलेनसाधिवासेनस्नपयेद्यो
हिमांनरः ॥ ६४ ॥ अग्निष्टोमफलंतस्मैददामिमदनावनि ॥ सुगन्धेनचतैलेनस्नपनंयःकरोतिमे ॥ ६५ ॥ अतिरात्रफलंतस्यससुगन्धोददाम्यहम् ॥

स्नपनंयस्तुमधुनाकरोतियदिमानवः ॥ ६६ ॥ वाजपेयस्ययज्ञस्यफलंप्राप्नोतिमानवः ॥ सोऽश्वमेधफलंप्राप्यगवांलोकेमहीयते ॥ ६७ ॥ योऽर्च्चयार्च्च
यतेदेविपुरुषोमांगिरेःसुते ॥ लोकंलिङ्गात्मकंज्ञात्वालिङ्गेयोऽर्च्चयतेहिमाम् ॥ ६८ ॥ नमेतस्मात्प्रियतरःप्रियोवाविद्यतेततः ॥ घृतेनपयसादध्नातैले
नचजलेनवा ॥ ६९ ॥ गोक्षीरेणचतुर्दश्यांलिङ्गस्नापनकारणात् ॥ तेनमेष्टाश्वजायन्तेअक्षयास्तेजरामराः ॥ ७० ॥ तथाविश्वजितोदेवियेलिङ्गार्च्चन
तत्पराः ॥ब्रह्मलोकंविष्णुलोकंगोलोकंमामकंतथा ॥ ७१ ॥ अव्याहताश्चरन्त्येवलिंगार्च्चनरतानराः ॥ इन्द्रःसोमोभगःपूषावायुरग्निर्दिवाकरः ॥ ७२ ॥
अर्च्चयन्तितमभ्रान्तालिंगार्च्चनरतानराः ॥ योमामर्च्चयतेलिङ्गेमानवोममचन्द्रभे ॥ ७३ ॥ गन्धर्व्वाप्सरसांवृन्दैःसेव्यतेगीतवादिभिः ॥
नरनारायणोदेविजैगीषव्योबलिःसदा ॥ ७४ ॥ तुष्टिमेतांविजानन्तिलिङ्गेमामर्च्चयन्तिये ॥ योऽर्च्चायामर्च्चयेन्मांहिपूर्णवर्षशतंनरः ॥ ७५ ॥ एकश्चदिव
संलिङ्गंसममेतन्नसंशयः ॥ उपहारानुपहरेद्यस्तुमेपुरुषोऽम्बिके ॥ ७६ ॥ सोपहारैःशुभैरिष्टैर्महागणपतिर्भवेत् ॥ यस्तुपर्य्युषितंमाल्यंममापनयतेनरः ॥
॥ ७७ ॥ सभवेत्स्वर्गलोकस्थोअनन्तसुखभाजनः ॥ बहुमाल्यप्रदायेचउपहारपराश्चये ॥ ७८ ॥ दधिक्षीरघृतैर्येचस्नपनंममकुर्व्वते ॥ यश्चापिप्रयतो
भूत्वालिङ्गमेवार्च्चयेत्पुनः॥७९॥ तेचस्वर्गगणाभूत्वाशुचयोविप्रवत्सले॥रमन्तेचप्रियासार्द्धंरमेऽहञ्चयथात्वया॥८०॥ ततोवैपिंगलंरुद्रंरुद्रंयःपूजयेत्सदा॥
सभवेदेवदेवस्यसुपुत्रोमेमृगेक्षणे ॥८१ ॥ अभ्यर्च्चर्यलिङ्गार्च्चनतोषितोह्यहंददेद्विजत्वंकिमुयत्ततःपरम् ॥ तदेवमुत्तापितहाटकप्रभेशुभाननेचन्द्रदिवाक
रप्रभे ॥८२॥ मयातवाख्यातमनिंदितेक्षणेमनोहरप्रश्नकुतूहलञ्च ॥ नमोऽर्च्चयापर्व्वसुपर्व्वतात्मजेपठेत्सहब्राह्मणवेदसंसदि॥८३ ॥सदेहपर्य्यायमवाप्यपू
जितोवसेच्चिरंचारुतमेमयासह॥८४॥इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांत्रिंशोऽध्यायः॥३०॥व्यासउवाच ॥ अष्टषष्टिस्तुयाप्रोक्ताशिवस्यपरमा
त्मनः॥तामहंश्रोतुमिच्छामितत्त्वेनकथयप्रभो॥१॥सनत्कुमारउवाच॥मन्दरस्थंसुखासीनंब्रह्मापृच्छतिशङ्करम्॥केषुकेषुचभावेषुद्रष्टव्योऽसिमयाप्रभो॥
॥२॥महेश्वरउवाच ॥ वाराणस्यांमहादेवंप्रयागेतुमहेश्वरम् ॥ नैमिषेदेवदेवंतुगयायांप्रपितामहम् ॥३॥ कुरुक्षेत्रेतुकालेशंप्रभासेशशिभूषणम्॥ पुष्करेतु
अयोगन्धंविश्वञ्चविमलेश्वरे ॥ ४ ॥ अट्टहासेमहानादंमरुकोटेमहोत्कटम् ॥ शंकुकर्णेमहातेजंगोकर्णेतुमहाबलम् ॥ ५ ॥ रुद्रकोट्यांमहायोगीमहालिंगं
स्थलेश्वरे ॥ अवंत्यान्तुमहाकालंसर्व्वंमध्यमकेश्वरे ॥ ६ ॥ केदारेदेवमीशानंरुद्रंचैवाहिमालये ॥ सुवर्णाक्षेसहस्राक्षंवृषेतुवृषभध्वजम् ॥ ७ ॥ भैरवेभै
रवाकारंभद्रंभद्रपथेविदुः ॥ उग्रंकनखलेचैवभद्रकर्णह्रदेशिवम् ॥ ८ ॥ देवदारुवनेभिन्नंचण्डंचकभिजङ्गले ॥ ऊर्द्ध्वकेतुंसुरण्डेतुमङ्गलाण्डेकपर्द्दिन
म् ॥ ९ ॥ कृत्तिवासेतुवरदंसूक्ष्मममाम्राडिकेश्वरे ॥ कालञ्जरेनीलकण्ठंश्रीकण्ठंमण्डलेश्वरे ॥ १० ॥ ध्यानसिद्धेश्वरेयोगंगायत्रंचोत्तरेश्वरे ॥ विजयंचैव

काश्मीरेजयंचमरुकेश्वरे ॥ ११ ॥ यमस्यांगेविदुःस्थाणुंकापिलंकरवीरके ॥ कायावतारेलगुडिंदेविकायामुमापतिम् ॥ १२ ॥ हरिश्चन्द्रेश्वरंचैवपुर
चन्द्रेतुशङ्करम् ॥ जटिंकालेश्वरेविद्यात्सौम्यंकुक्कुटकेश्वरे ॥ १३ ॥ ताम्रकंचैवसन्ध्यायांबदर्य्यांचत्रिलोचनम् ॥ जलेश्वरेत्रिशूलन्तु श्रीशैलेत्रिपुरान्त
कम् ॥ १४ ॥ लेपनेवैपशुपतिंदीप्तमंगेश्वरेविदुः ॥ गंगासागरेह्यमरमोङ्कारममरकंटके ॥ १५ ॥ सप्तगोदावरीभीमंपातालेहाटकेश्वरम् ॥ कर्णिकारे
गणाध्यक्षंकैलासेत्रिपुरान्तकम् ॥ १६ ॥ हेमकूटेविरूपाक्षंभूर्भुवंगन्धमादने ॥ दिंडीश्वरेऽनलंप्राहुर्ज्वलंल्लिङ्गंस्थलेश्वरे ॥ १७ ॥ भूतेश्वरेगणाध्यक्षंकैरा
तश्चकिरातके॥दानवानांविनाशायवाराहंविन्ध्यपर्व्वते॥१८॥गङ्गाह्रदेहिमस्थानंमानवंवडवामुखे॥श्रेष्ठिकोटीश्वरंतीर्थेविंशिष्टंचेष्टकापथे॥१९॥कुकुसुपु
रेप्रहासंलंकायामलकेश्वरम्॥अष्टषष्टिस्तुनामानितत्रदेवस्यचाश्रयात् ॥२०॥ पुराणेचोपगीतानिब्रह्मणाचमहात्मना॥यःशुचिःप्रयतोभूत्वाउभेसन्ध्येपठे
न्नरः॥२१॥दशानामश्वमेधानांफलंप्राप्नोतिमानवः॥व्यासउवाच॥श्रुतंब्रह्मन्मयासर्व्वंरहस्यंद्विजसत्तम ॥२२॥ विभूतिंदेवदेवस्यश्रोतुमिच्छाम्यहंद्विज ॥
सनत्कुमारउवाच ॥ आसीनंमन्दरस्याग्रेनानारत्नविभूषिते ॥ २३ ॥ तत्रनन्दीश्वरोदेवंविभूतिंपर्य्यपृच्छत ॥ नन्दीश्वरउवाच ॥ भगव
न्देवदेवेशत्रिपुरान्तसुराधिप ॥ २४ ॥ विभूतिंमेमहादेवपृच्छतोवक्तुमर्हसि ॥ महेश्वरउवाच ॥ शृणुनन्दीश्वरमत्तोविभूतिर्यादृशीमम ॥ २५ ॥
एकाग्रमानसोभूत्वानिशामयसमाहितः ॥ अग्निप्राकारकोटिस्थआवृतोऽहंनसंशयः ॥ २६ ॥ चरामिपृथिवींसर्व्वांमासमुद्रंसुरासुरम् ॥ यथेष्टंचैव
तिष्ठामिचत्वरेषुध्रुवस्थितः ॥ २७ ॥ पर्वतेषुसदाहृष्टोदेव्यासहवसाम्यहम् ॥ प्रदक्षिणंसदाकुर्य्याद्गोशतस्यफलंलभेत् ॥ २८ ॥ गवांशतसहस्रस्यफलं
प्राप्नोतिमानवः ॥ चन्द्रोऽस्मिवरुणश्चाहंवसामिपृथिवीमहम् ॥ २९ ॥ दिनंक्षपाचसन्ध्याचकालोऽहंमृत्युनासह ॥ प्रलयेऽस्मिध्रुवश्चैवच्छन्दो
ऽहंवेदवादिनाम् ॥ ३० ॥ इन्द्रियाणीन्द्रियार्थेषुक्षयश्चैवाहमक्षयम् ॥ वृत्तीनांवृत्तिरेवाहंजयोऽहंसर्व्वभूतिषु ॥ ३१ ॥ विनाशश्चसुरादैत्याःपव
नोदहनस्तथा ॥ मारुतोऽहंजलश्चाहंक्षिपामिबलवत्सदा ॥ ३२ ॥ अहंसृजामिभूतानिसंक्षिपामियुगेयुगे ॥ योनिशतसहस्रेषुभ्राम्यतेह्यात्मलीलया
॥ ३३ ॥ मयाक्रुद्धेनतत्सर्व्वंखेचरत्वंप्रहण्यते ॥ मयातेनिहतादैत्यास्तारकाद्यामहाबलाः ॥ ३४ ॥ येषांनिःश्वासवातेनत्रयोलोकाःप्रकम्पिताः ॥
सर्व्वभूतक्षयंह्येवंकृतवान्नात्रसंशयः ॥ ३५ ॥ सर्व्वभूतेषुवैनित्यंवसामिमुदितःसदा ॥ इतिहासपुराणेषुवेदेचैववसाम्यहम् ॥ ३६ ॥ नतंदेशंविजानामि
मयाशून्यंहियद्भवेत् ॥ भक्तानांसर्व्वभूतानांयेचमांशरणागताः ॥ ३७ ॥ अनन्यमानसोभूत्वायोमांपूजयतेनरः ॥ सन्तुष्टोऽहंप्रदास्यामिगाणपत्यंसु
दुर्लभम् ॥ ३८ ॥ वसाम्यहंपुष्पितेषुवृक्षेषुचलतासुच ॥ नन्दिकेश्वरनारीणांस्थितोऽहंरूपयौवने ॥ ३९ ॥ समंजीवश्चदासश्चसर्व्वेषांनियमैःसह ॥

अहङ्कारोऽस्मिदर्पोऽस्मिरजःसत्त्वंतमस्तथा ॥ ४० ॥ सर्व्वतीर्थाभिगमनंकृतंभवतिभारत ॥ सर्व्वोपवासंयःकृत्वातत्फलंप्रतिपद्यते ॥ ४१ ॥
नतस्यभवतेव्याधिर्नचकामंजहेन्नरः ॥ ब्रह्मचारिषुयत्पुण्यंसत्यवादिषुयत्फलम् ॥ ४२ ॥ तत्फलंलभतेनन्दिन्विभूतिंममयःपठेत् ॥ महात्मासजनश्रे
ष्ठोजरामरणवर्ज्जितः ॥ ४३ ॥ विमुक्तःसर्व्वपापेभ्योरुद्रलोकेमहीयते ॥ सनत्कुमारउवाच ॥ सुखासीनायथाशान्तिक्रीडन्तेचयथासुखम् ॥ ४४ ॥
यथाहिभगवान्पक्षैःसर्व्वदानस्ययत्फलम् ॥ प्राप्नुवन्तिशुभाँल्लोकान्कृतैर्वैकर्म्मभिःशुभैः ॥४५॥ चण्डालाद्याश्चमांभक्ताःशूकरीपक्षिपोषकाः ॥ मत्प्र
पन्नाश्चक्रव्यादाःसर्पदंशोपजीवनाः॥४६॥तेऽपिसर्व्वेप्रमुंचन्तिप्राप्स्यन्तेगतिमुत्तमाम्॥ब्रह्मपुत्रस्यतद्वाक्यंश्रुत्वानन्दीगणाधिपः ॥ ४७ ॥ प्रत्युवाचशुभं
वाक्यंयथापूजंयथाविधि ॥ अध्यात्मध्यानयुक्ताश्चयेनासिध्यान्तिमानवाः ॥४८॥ तत्सर्व्वंसम्प्रवक्ष्यामिनमस्कृत्वापिनाकिनम् ॥ मानवास्तेषुतत्त्वेषुतु
ल्यकर्म्मवशानुगाः॥४९॥तावद्भ्रमन्तिसंसारेयावद्ध्यानंनविन्दति॥असुराश्चैवदेवाश्चऋषयःपितरस्तथा॥५०॥यथाब्रह्मादयोदेवादीप्यन्तेध्यानतेजसा॥
गृहस्थोब्रह्मचारीचवानप्रस्थोऽथभिक्षुकः॥५१॥ एतेध्यानेनदीप्यन्तेनचलिप्यन्तिकर्म्मभिः ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्राद्यावर्णसंकराः॥५२॥ एतेध्या
नेनद्योतन्तेनचलिप्यन्तिकर्म्मभिः ॥ चाण्डालाश्चअन्त्यजाश्चसर्व्वेतेपापकर्म्मणः ॥५३॥ तेचरन्तिशुभाँल्लोकान्ध्यानंदहतिकिल्बिषम् ॥ अल्पग्रंथमि
मंगुह्यंसारभूतंसमुच्चयम् ॥ ५४ ॥ सर्व्वपापेषुसक्तायेतेचासिन्ध्यातिमानवाः ॥ तत्सर्व्वंसम्प्रवक्ष्यामितवस्नेहान्महामुने ॥५५॥ ध्यानयोगविधिंकृत्स्नंमोक्ष
द्वारविधिंशृणु ॥ अवज्ञानंगुरुषुयोकरोतिनचविन्दति ॥ ५६ ॥ अगम्यागामीब्रह्मघ्नःसुरापोगुरुतल्पगः ॥ शतंशकटभाराणांजन्तूनांयेनहिंसितम् ॥
॥ ५७ ॥ तत्पापंहरतेध्यानीकाष्ठराशिमिवानलः ॥ कुमारीदूषणंकृत्वामातङ्गीगमनंतथा ॥ ५८ ॥ एकेनध्यानरूपेणतत्पापंनयतेक्षयम् ॥ अभक्ष्यभ
क्षणंकृत्वाअपेयंपीतमेवच ॥ ५९ ॥ तद्विशोधयतेध्यानीदीप्ताग्निरिवकाञ्चनम् ॥ उदधिंप्राप्यनद्यास्तुयथामार्गंनपश्यति ॥ ६० ॥ तत्वज्ञानान्तरंप्राप्य
सर्व्वपापैःप्रमुच्यते ॥ ध्यानयोगविधिंज्ञात्वायदिमोक्षंनगच्छति ॥ ६१ ॥ ब्रह्मलोकेऽपिवावासोविष्णुलोकेयदृच्छया ॥ सोमसूर्य्याग्निदेवेन्द्राविशेषंस्था
नमाप्नुयात् ॥ ६२ ॥ यमलोकेऽपिवावासःपूज्यमानस्यदैवतैः ॥ यथोक्तेनविधानेनविशुद्धेनान्तरात्मना ॥ ६३ ॥ सदैवंध्यानयुक्तस्यशिवंप्राप्नोतिना
न्यथा ॥ अधीत्यचतुरोवेदान्साङ्गोपनिषदोद्विजः ॥ ६४ ॥ ध्यानस्यदेवगुह्यस्यकलांनार्हतिषोडशीम् ॥ विनादेववरंध्यानंशौचाचारसमन्वितम् ॥
॥ ६५ ॥ अश्वमेधसहस्रेणराजसूयशतेनच ॥ सहस्रमुपवर्त्ततेध्यानमेकंविशिष्यते ॥ ६६ ॥ नतच्छक्यंफलंप्राप्तुंक्रतुकोटिशतैरपि॥यत्फलंध्यानयोगे
नएकेनतुसमाधिना ॥ ६७ ॥ अधीत्यचतुरोवेदान्ध्यानयोगंविशिष्यते ॥ आकाशमिवपंकेननसपापैर्विलिप्यते ॥ ६८ ॥ यःसहस्रंसहस्राणांभोजयेद्द्वि

द्विजांस्तथा ॥ एकस्तुमन्त्रवित्प्रीतःसर्व्वमर्हतिवैद्विजः ॥ ६९ ॥ यःसहस्रंसहस्राणांभोजयेत्सत्यवादिनाम् ॥ एकस्तुमन्त्रवित्प्रीतःसर्व्वमर्हतिब्राह्म
णः ॥ ७० ॥ सङ्कल्पिनांसहस्रेणस्नातकानांशतेनच ॥ एकस्तुमन्त्रवित्प्रीतःसर्व्वमर्हतिवैद्विजः ॥ ७१ ॥ गृहस्थानांसहस्रेणब्रह्मचारिशतेनच ॥ वान
प्रस्थसहस्रेणयतिरेकोविशिष्यते ॥ ७२ ॥ सांख्ययोगविशुद्धानांभुञ्जानोयस्ययोगवित् ॥ पवित्रोग्रसतेपिण्डांस्तावत्तस्यहविर्मखः ॥ ७३ ॥ सर्व्वपा
परतिस्तस्ययस्यध्यानंनविद्यते ॥ प्रतिग्रहेणमूढात्मानविमुच्येतकिल्बिषम् ॥ ७४ ॥ यस्यवैक्रुध्यतेध्यानीनास्तितस्यसमुद्भवः ॥ यस्यतुष्यति
वैध्यानीकुलंतस्यप्रवर्द्धते ॥ ७५ ॥ नियतोध्यानयोगेनगच्छतेवैदिशोदश ॥ पुनातिध्यानिनस्तेषामितिज्ञानपरिग्रहे ॥ ७६ ॥ नसलिप्यतिपापेनतपसा
कल्मषेणच ॥ यथापर्व्वतमासाद्यआश्रयन्तिमृगाधिपाः ॥ ७७ ॥ तत्त्वविश्वविदोयोगमाश्रयन्तिद्विजोत्तमाः ॥ ग्रामवाटेयथावह्निःसर्व्वंदग्ध्वानलिप्यते
॥ ७८ ॥ विश्ववित्सर्व्वकर्म्माणितथाकृत्वानलिप्यते ॥ ७९ ॥ इतिश्रीशिवमहापुराणेसनत्कुमारसंहितायामेकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ सनत्कुमारउवाच ॥ नंदिन्यदुक्तंदेवेनध्यानस्यफलमुत्तमम् ॥ तदहंश्रोतुमिच्छामिकेनमन्त्रेणध्यायते ॥ १ ॥ ध्यानंकतिविधंदेवप्रतिगृह्णन्तितत्तथा ॥
अक्षराश्चकथंदेवारुद्रविष्णुपितामहाः ॥ २ ॥ एतन्मेसंशयंदेवतत्त्वमाख्याहिसुव्रत ॥ नन्दीश्वरउवाच ॥ ब्रह्मावैवामपार्श्वेतुदक्षपार्श्वेतुकेशवः
॥ ३ ॥ उभाभ्यांमध्यतोरुद्रस्तिष्ठतेह्येकविग्रहः ॥ पूर्व्वाह्णेध्यायतेब्रह्मामध्याह्नेचजनार्दनः ॥ ४ ॥ पश्चिमायांस्थितोरुद्रस्त्रयस्तेचैकविग्रहाः ॥
त्रैलोक्यंदेवदेवस्यरुद्रविष्णुपितामहाः ॥ ५ ॥ अनुग्रहार्थंलोकानांभक्तानामनुकम्पया ॥ आत्मदेहंत्रिधादेवःसकरोतिपृथक्पृथक् ॥ ६ ॥ एकमेवत्रयं
ह्येतद्यदिध्यायन्तिध्यायिनः ॥ रुद्रसायुज्यतांयान्तिइत्याहभगवाञ्छिवः ॥ ७ ॥ येनित्यंदेवदेवस्यहृदयेनस्मरन्तिवै ॥ नतान्संक्रमतेपापंम्रियतेचे
द्दिवंगतः ॥ ८ ॥ अकारोभगवान्विष्णुरुकारश्चपितामहः ॥ मकारश्चस्वयंरुद्रोविज्ञेयाध्यानतत्परैः ॥ ९ ॥ अकारंचत्वधःकृत्वाओंकारंचप्रयोजयेत् ॥
उकारंचमकारंचमात्रयासहयोजयेत् ॥ १० ॥ अकारेहृदिउत्पन्नउकारंविनियोजयेत् ॥ मकारंतुशनैःकृत्वायोजपेत्रिविधंतथा ॥ ११ ॥ अकारो
कारसंयुक्तमकारोबुद्धिरुच्यते ॥ अकारोकारनिर्म्मुक्तोमकारःप्रत्यवस्थितः ॥ १२ ॥ गच्छेतपरमंस्थानंपुनर्जन्मनविद्यते ॥ अक्षरंस्मृतमोंकारस्तस्मा
द्ब्रह्मप्रकीर्त्तितम् ॥ १३ ॥ ब्रह्माविष्णुश्चरुद्रश्चद्वाभ्यामेकतरंसदा ॥ ओंकारंहृदयेकृत्वाध्यानंयुञ्जीतयोगवित् ॥ १४ ॥ ओंकारंवैदिकानांतुयोगि
नांचतथैवच ॥ ओंकारंध्यायमानस्यजन्मसूत्रंनविद्यते ॥ १५ ॥ तथाप्रवृत्तमोंकारंप्रत्यवस्थितमूर्द्धनि ॥ ततओंकारयोगीचअक्षरादक्षरंभवेत्
॥ १६ ॥ एवंप्रयोज्यमानस्तुमनोविजयतेपरम् ॥ निगृह्यसर्व्वेन्द्रियाणिध्यानंयुंजीतयोगवित् ॥ १७ ॥ अंगुष्ठमात्रंपुरुषंहृदिकृत्वाशिवंप्रभुम् ॥

भ्रुवोर्मध्येचविख्यातंसांख्यतत्त्वगुणान्वितम् ॥ १८ ॥ ललाटमध्येचन्द्राभमच्युतंलोकपावनम् ॥ अव्ययंसूक्ष्मभावंतंमूर्द्धिकृत्वाशिवंप्रभुम् ॥ १९ ॥
ओमितिब्रह्मयुञ्जीतविश्रान्तोयोगमास्थितः ॥ उच्चार्य्यमाणंक्षरतेप्रशान्तंब्रह्मउच्यते ॥ २० ॥ तस्मान्नोच्चारयेद्ब्रह्ममात्रब्रह्मक्षरतांव्रजेत् ॥ त्रिब्रह्मत्रिगुणश्चै
वत्रिस्थानंत्र्यक्षरंतथा ॥ २१ ॥ त्रिमात्रंसार्द्धमात्रश्चयस्तंवेदसवेदवित् ॥ उच्चार्य्यमाणमपिचेत्संयम्यात्मानमात्मवित् ॥ २२ ॥ प्राणायामेचिरंप्राणंसं
यम्यचपुनःपुनः॥ निमेषमात्रमपिचेद्ध्यानंयुञ्जीतयोगवित् ॥ २३ ॥ ओङ्कारेप्रथमंयोगंनित्यंध्यायीतमानवः ॥ विमुक्तःसर्व्वसंसारात्प्राप्नोतिशिवमव्यय
म् ॥ २४ ॥ कूर्म्मोऽङ्गानीवसंहृत्यइन्द्रियाणिसुखानिच ॥ प्रकाशयेत्तदात्मानंनिर्व्वातेदीपवद्बुधः ॥ २५ ॥ तैलधारामिवाच्छिन्नांसुप्तस्तानितानिस्वनः ॥
ओङ्कारंध्यायतेधीरोविशुद्धेनान्तरात्मना ॥ २६॥ नकम्पयेन्नोच्छ्वसेच्चनचगात्राणिविक्षिपेत् ॥ धारयित्वायथाशक्त्यातातःप्रत्याहरेत्पुनः ॥ २७ ॥ प्राणा
यामैर्वशंकृत्वामनश्चास्थिरमेवच ॥ अकारश्चउकारश्चमकारश्चैवतेत्रयः ॥ २८ ॥ एकैकशस्त्रयोदेवाविष्णुरुद्रपितामहाः ॥ नन्दीश्वरंपरिष्वज्यहृष्टःपृष्ट
स्तपोधनः ॥ २९ ॥ अभिवाद्यतुवाग्भिस्तंतंरुद्रंचन्द्रमौलिनम् ॥ योगंगुह्यतमंश्रुत्वास्थानेषुचयथातथम् ॥ ३० ॥ इतिश्रीशैवेमहापुराणेसनत्कुमार
संहितायांनन्दीश्वरयोगाख्यानंनामद्वात्रिंशोऽध्यायः ॥ ३२ ॥ व्यासउवाच ॥ भगवञ्छ्रोतुमिच्छामिध्यानयोगस्यविस्तरम् ॥ कथयस्वमहाब्रह्मन्नैपु
ण्येनमहामुने ॥ १ ॥ सनत्कुमारउवाच ॥ महेश्वरेणयत्प्रोक्तंयत्तद्धर्म्मंसनातनम् ॥ तत्सर्व्वंक्रमयोगेनकथ्यमानंनिबोधमे ॥ २ ॥ प्राणायामंयथाध्यानं
प्रत्याहारंचधारणाम् ॥ योगंचपरमंप्रोक्तंपञ्चधर्म्मप्रकीर्त्तितम् ॥ ३॥ तेषांक्रमविशेषेणयोगानांलक्षणंपरम् ॥ प्रवक्ष्यामियथातत्त्वंस्वयंरुद्रेणभाषित
म् ॥ ४ ॥ प्राणायामस्तथाचापिप्राणस्यायामउच्यते ॥ सर्व्वंतुत्रिविधंप्रोक्तंमन्दंमध्यममुत्तमम् ॥ ५ ॥ प्राणापाननिरोधैस्तुमन्त्रैर्द्वादशभिस्तथा ॥ मन्दं
द्वादशमात्रंतुउद्घातःप्रथमंस्मृतम्॥६॥मध्यमश्चाद्विरुद्घातश्चतुर्व्विंशतिमात्रकः ॥ उत्तमस्तुत्रिरुद्घातोमात्राःषट्त्रिंशतिःस्मृताः ॥७॥ इत्येषविविधःप्रोक्तः
प्राणायामस्यलक्षणः॥सिंहोवाकुञ्जरोवापितथान्योवामृगोवने ॥८॥ नैवग्राहोनवान्योवादुराधर्षश्चजायते॥योगंनिविशमानस्तुनदोषंप्राप्नुयात्क्वचित् ॥९॥
यथैवतुरगःसिंहःकुञ्जरोवाथदुर्म्मदः ॥ कालान्तरवशाद्योगादभीक्ष्णंपरिमर्द्दनात् ॥१०॥ परिचीयमानःकालेनवश्यत्वश्चैवगच्छति ॥ परिचीयमानयो
गस्यतथाजायेतमारुतः ॥११॥ वशित्वञ्चतथाचापिगच्छतेयोगमास्थितः ॥ यथास्वयंदत्तप्राणोनयन्तमनुगच्छति॥१२॥यथासिंहोमृगोवापिनीयमानो
व्यवस्थितः ॥ अभयञ्चमनुष्याणांमृगेभ्यःसम्प्रवर्त्तते ॥१३॥ तथापरिचीयमानःशरीरेकिल्बिषंदहेत् ॥ प्राणायामेनयुक्तस्यविप्रस्यनियतात्मनः॥१४॥
सर्व्वदोषाःप्रणश्यन्तिसत्त्वस्थश्चैवजायते ॥ तीर्थानियानिपञ्चन्तेनियमानिव्रतानिच ॥ १५ ॥ सर्व्वयज्ञफलञ्चैवप्राणायामस्यतत्समम् ॥ प्राणायामैर्दहे

द्दोषान्धारणाभिश्चकिल्बिषम् ॥ १६ ॥ प्रत्याहारेणविषयान्ध्यानेनानश्वरान्गुणान् ॥ तस्माद्युक्तःसदायोगीप्राणायामान्समाचरेत् ॥ १७ ॥ सर्व्वं
पापविशुद्धात्मापरंब्रह्माधिगच्छति ॥ अतःपरंप्रवक्ष्यामिप्राणायामस्यलक्षणम् ॥ १८ ॥ आसनंस्वस्तिकंकुर्य्यात्पद्मंभद्रासनंतथा ॥ समजानुमेकपादं
पाण्योत्तानंचसंस्थितः ॥ १९ ॥ मनोग्रीवासमोभूत्वासंगृह्यचरणावुभौ ॥ जानूर्व्वोरन्तरेविप्रकृत्वापादतलेउभे ॥ २० ॥ समग्रीवशिरस्कस्यस्वस्ति
कंतत्प्रचक्षते ॥ अंगुष्ठावपिगृह्णीयाद्धस्ताभ्यांव्युत्क्रमेणतु ॥२१॥ ऊर्व्वोरुपरिविप्रेन्द्रकृत्वापादतलद्वयम् ॥ पद्मासनंभवेदेतत्पापरोगभयापहम्॥२२॥
गुल्फौतुवृषणस्याधःसीवन्याःपार्श्वयोःक्षिपेत् ॥ पार्श्वपादौचपाणिभ्यांदृढंबद्धासुनिश्चलः ॥ २३ ॥ भद्रासनंभवेदेतद्विषरोगविनाशनम् ॥ संवृतास्यो
मीलिताक्षउपविष्टश्चवाग्यतः ॥ २४ ॥ पार्ष्णिभ्यांवृषणंरक्षेत्तथाशेफेननित्यशः ॥ किञ्चिदुन्नामितमुखोदन्तैर्दन्तान्नसंस्पृशेत् ॥ २५ ॥ जिह्वांनचालये
त्क्वापिपाषाणइवनिश्चलः ॥ तमःप्रच्छाद्यरजसारजःसत्त्वेनसंस्थितौ ॥२६॥ कृत्वाभूत्वास्थिरोयोगीसंयुक्तःसुसमाहितः ॥ इन्द्रियाणीन्द्रियार्थाश्चमनः
पञ्चचवायवः ॥ २७ ॥ निरुध्यसमभावेनकूर्म्मोऽङ्गानीवसर्व्वशः ॥ निवृत्तिंविषयाणांतुप्रत्याहारमुपक्रमेत् ॥ २८ ॥ ततोमात्रास्तुविज्ञेयानिमेषोन्मेषमे
वच ॥ तथाद्वादशमात्रस्तुप्राणायामोविधीयते ॥ २९ ॥ धारणाद्वादशायामेसेवेच्चधारणाद्वयम् ॥ दशद्वादशविंशत्याचतुर्व्विंशतिधारणाः ॥ ३० ॥
धारणाधारयेद्योगीनित्यमध्यात्मचिन्तकः ॥ पश्यतेपरमात्मानंदिव्यमेवंकुतोजानिः ॥ ३१ ॥ धारयित्वायथाशक्त्याशनैःप्रत्याहरेत्पुनः ॥ जित्वाजित्वा
शनैर्भूयआरभेच्चसदामुनिः ॥३२॥ अजितोहिसदाभूमिंदोषंवाकुरुतेमहान् ॥ विवर्द्धयतिसंमूढंतस्मादेवजितामही ॥३३॥ प्राणायामस्यसंरोधात्प्राणाया
मस्तुपठ्यते ॥धारयेच्चापियद्वायुंधारणामितिनिर्द्दिशेत् ॥३४॥ निवृत्तविषयाणांतुप्रत्याहारंनसंशयः ॥ सर्व्वेषांसमवायेनसिद्धिःस्याद्योगलक्षणा ॥३५ ॥
ध्यानयुक्तास्तुपश्यन्तिआत्मानंजलचन्द्रवत् ॥ तथासंदर्शनंप्राप्तेक्षेमप्राप्तिंविनिर्द्दिशेत् ॥ ३६ ॥ देशकालविदेशस्तंविज्ञेयंतत्त्वलक्षणम् ॥ आदेशकाले
तत्त्वस्यदर्शनंतुनविद्यते॥३७॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांयोगविधिर्नामत्रयस्त्रिंशोऽध्यायः॥३३॥ व्यासउवाच ॥ श्रोतुमिच्छामिभग
वन्योगस्यपरमंविधिम् ॥ तदहंश्रोतुमिच्छामित्वत्प्रसादाद्द्विजोत्तम॥१॥सनत्कुमारउवाच॥सुखोपविष्टमासीनंमहादेवंस्वयम्भुवम् ॥ पप्रच्छमुनिशार्द्दूलो
दुर्व्वासास्तुमहामुनिः ॥ २ ॥ भगवन्तंभवोद्विग्नइदमाहकृताञ्जलिः ॥ भगवन्केनमुच्यन्तेनराःपापेषुयेरताः ॥ ३ ॥ ब्राह्मणाःक्षात्रियावैश्याःशूद्राश्चैवत
थाविभो ॥ श्वपाकाम्लेच्छमातङ्गाःशूकराःपक्षिघातकाः ॥ ४ ॥ पापाश्रयाःकृतघ्नाश्चलोलुपाश्चहविर्घ्नकाः ॥ कन्यानांदूषकाश्चैवकुलघ्नाःस्त्रीनपुंसकाः
॥ ५ ॥ मातृत्यागीपितृत्यागीराजघ्नाश्चैवयेनराः ॥ परद्रव्यापहारीचयुद्धेचापिपराङ्मुखाः ॥ ६ ॥ अशक्ताबहुशश्चैववशत्त्याद्वृत्तिभुजश्चये ॥ चाण्डा

लामतस्यबद्धाश्चअगम्यागमनेरताः ॥ ७ ॥ एतेचान्येचबहवःसर्व्वपापेषुयेनराः ॥ गच्छन्तेनकथंतातपापिष्ठांगातिमेवच ॥ ८ ॥ एतन्मेसंशयंतातवक्तु
मर्हसितत्वतः ॥ महेश्वरउवाच ॥ ब्राह्मणाःक्षत्रियाःवैश्याशूद्राश्चैवतथापरे ॥ ९ ॥ श्वपाकाम्लेच्छमातङ्गायेचान्येपापकर्म्मिणः ॥ एवंतेध्यानिनोविप्रा
दहन्तेपापकंक्षणात् ॥ १० ॥ पितृपत्नींभ्रातृपत्नींभगिनींगावमेवच ॥ ध्यानिनांशुद्धबुद्धीनांध्यानेनविदितात्मनाम् ॥ ११ ॥ लभ्यतेब्रह्मनिर्व्वाणंशुद्ध
ध्यानेनसाध्यते ॥ ध्यानंचिन्तयमानस्यएकचित्तेनध्यानिनः ॥ १२ ॥ एकेनध्यानयोगेनतत्पापंनिर्दहेत्क्षणात् ॥ पितृपत्नींभ्रातृपत्नींभगिनींगावमेवच ॥ १३ ॥
शुद्धाशुद्धोनरोविप्रध्यानेनतुनसंशयः ॥ ध्यानहीनोयस्तुनित्यंदृढयुक्तोदृढव्रतः ॥ १४ ॥ लभतेधारणाद्योगंयेनासिध्यातिवैयतिः ॥ लब्ध्वासर्व्वप्रयत्नेन
सयातिस्तत्परोभवेत् ॥ १५ ॥ अतत्त्यागेनसिध्यन्तितस्मादेतत्परोभवेत् ॥ तन्मनास्तत्परश्चैवमूर्ध्निनिर्व्वाणमृच्छति ॥ १६ ॥ अथवारुद्रलोकेषुसू
र्य्यलोकेतथैवच ॥ अग्निलोकंवायुलोकमिंद्रलोकंप्रजापतिः ॥ १७ ॥ विष्णुलोकांतरंगत्वाब्रह्मलोकात्परांगतिम् ॥ १८ ॥ इतिश्रीशैवेमहापुराणेसनत्कु
मारसंहितायांचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ दुर्व्वासाउवाच ॥ किञ्चध्यानंसुरश्रेष्ठकश्चध्याताचानित्यशः ॥ एतदिच्छाम्यहंश्रोतुंत्वत्प्रसादाद्ब्रवीहिमे ॥ १ ॥
महेश्वरउवाच ॥ ध्यानयोगविधिंकृत्स्नंमोक्षद्वारविघट्टनम् ॥ अहंवक्ष्यामितत्सर्व्वंशृणुष्वावहितोमम ॥ २ ॥ ओङ्कारंपरमंध्यानंयोगंयुञ्जीतयोगवित् ॥
गुरवश्चनमस्कार्य्यामन्त्रमेवमनुस्मरेत् ॥ ३ ॥ उपविश्यासनंतत्रसोममण्डलकंतथा ॥ शासनेतुप्रयत्नेनबुध्यायुञ्जीतयोगवित् ॥ ४ ॥ पद्ममण्डलकं
चैवस्वस्तिकंसमुदाहृतम् ॥ रुद्रपीठश्चवज्रश्चवज्रदण्डोन्नतंतथा ॥ ५ ॥ इत्येतेआसनाप्रोक्तानानारूपगुणान्विताः ॥ एतेषामेकमास्थायआसनंतुविच
क्षणः ॥ ६ ॥ लब्धाहारोजितक्रोधएकान्तेचनिरामयः ॥ शिष्टसंसर्गवर्ज्जित्वेदर्शनाभ्यागमंतथा ॥ ७ ॥ चिन्तयेद्ध्यानिनोनित्यंशास्त्रदृष्टेनकर्म्मणा ॥
यमस्तेनैवमार्गेणएकाग्रमानसोभवेत् ॥ ८ ॥ एकाग्रमानसोभूत्वाउत्पत्तिंप्रलयंतथा ॥ युञ्जीतस्वशरीरस्ययुञ्जानोनचहिंसकः ॥ ९ ॥ यथाह्यहंशरीरस्य
शुक्रशोणितसम्भवः ॥ किमस्माकंशरीरार्थेऽनित्येचैवशरीरके ॥ १० ॥ मज्जामेदोऽस्थिसम्पूर्णेशिराजालेनसंवृते ॥ नवद्वारपुरेदेहेममचैवशरीरके ॥
॥ ११ ॥ श्लेष्ममूत्रपुरीषेषुदुर्गन्धेजन्मसम्भवे ॥ व्याधिशोकगणेघोरेममत्वंहिशरीरके ॥ १२ ॥ चिन्तयित्वाशरीरस्यनित्यानित्यंहियोगवित् ॥ यो
गमेतत्प्रवक्ष्यामिबाह्याभ्यन्तरमेवच ॥ १३ ॥ अविमुक्तेस्थितोदेवोरुद्रावासेतुईश्वरः ॥ प्राणास्तुरुद्राविज्ञेयाअविमुक्तंपरंस्मृतम् ॥ १४ ॥ तस्मिन्स्थाने
वसेद्देवोरुद्रवासेतिचोच्यते ॥ एषआभ्यन्तरोयोगोमयातेकथितोमुने ॥ १५ ॥ बाह्यन्तुकथयिष्यामिहितार्थंसर्व्वजन्तुषु ॥ आन्तरंशृणुयाद्योगंयोग
विद्यंवरंसदा ॥ १६ ॥ श्रोत्रंत्वक्चक्षुषीजिह्वानासिकाचेतिपञ्चमी ॥ अव्यक्तंबुद्धचहङ्कारंमनश्चेतिचपञ्चमी ॥ १७ ॥ पृथिव्यापस्तथातेजोवायुराकाशपञ्च

मा: ॥ महाभूतानिकर्त्तव्यंज्ञानार्थंज्ञानमेवच ॥१८॥अव्यक्तंपरिसंख्यातुंप्राणायामस्तुधारणा ॥ प्राणायामैर्वशंकृत्वासर्व्वामिन्द्रस्यवाहिनीम् ॥ १९ ॥
ततोयुंजीतमेधावीप्राणंचमनसामुनिः ॥ मनःपूर्व्वंमनःसर्व्वंमनस्तस्मान्नलङ्घयेत् ॥ २० ॥ पृथग्भावनतत्त्वानांपश्चाद्युंजीतमूर्द्धनि ॥ एकत्वंप्राणमन
सोरिन्द्रियाणांसमन्वितः ॥ २१ ॥ आत्मनैवात्मनोविप्रधारयन्नात्मनोमिति ॥ २२ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांदुर्व्वासउपनिषन्नामप
ञ्चत्रिंशोऽध्यायः ॥ ३५ ॥ महेश्वरउवाच ॥ प्राणोऽपानःसमानश्चउदानोव्यानएवच ॥ तान्हित्वावायवःपञ्चधारयन्त्यात्मनात्मनि ॥ १ ॥ नखेऽगुलि
षुसर्व्वासुसर्व्वासुपर्व्वसन्धिषु ॥ पादेचैवोरुजंघासुशिश्नेवृषणयोस्तथा ॥ २ ॥ पायूपस्थकटीबाह्वोर्हृदयेपार्श्वयोस्तथा ॥ हृदयेविपुलेमध्येपृष्ठेचाथल
लाटयोः ॥ ३ ॥ जिह्वाग्रेतालुमध्येतुचक्षुर्नासिकयोस्तथा ॥ भ्रुवोर्मध्येतथाश्रोणौललाटेतुसुमूर्द्धनि ॥ ४ ॥ नाभिमध्येशरीरस्यविदितंसूर्य्यमण्डलम्॥
ज्वालामालासहस्रैस्तुआप्यमानेषुतेजसा ॥ ५ ॥ तस्यमध्येतुविहितंसौम्यंसोमस्यमण्डलम् ॥ सोममण्डलमध्येतुपरमात्माभितिष्ठति ॥ ६ ॥ अस्थि
स्नायुशिरामांसवर्ज्जितोदुःखवर्ज्जितः ॥ नचश्यामोनचरक्तोनकृष्णोनचपाण्डुरः ॥ ७ ॥ नापिङ्गलोनापिङ्गश्चलोहितोननशाबलः ॥ आदित्यवर्णपुरुषं
सतंविद्याद्विचक्षणः ॥ ८ ॥ ईश्वरश्चभवश्चैवाचिन्त्यःकर्त्तासकीर्त्यते ॥ शुद्धस्फटिकवर्णाभोदृश्यतेनचचक्षुषा ॥ ९ ॥ येनसर्व्वमिदंव्याप्तंपयोदधिचस
र्पिषा ॥ क्रीडार्थंसृजतेलोकान्व्यात्यर्थंचमहेश्वरः ॥ १० ॥ लोकेषुक्रीडतेनित्यंबालःक्रीडनकैरिव ॥ पलाशस्ययथापत्रंसर्व्वंव्याप्तंहितन्तुभिः ॥
परमात्मातथालोकाञ्जगत्कृत्स्नंहितिष्ठति ॥ ११ ॥ सूर्य्यैरश्मिर्यथाह्येषसर्व्वतेजांसिधारयन् ॥ एवंतेनतथाव्याप्तंशरीरंपरमात्मना ॥ १२ ॥ परमात्मे
तिविज्ञेयोज्ञानाभ्यासेनभोद्विज॥अभ्यासात्पश्यतेसर्व्वंपरमात्मानमात्मनि ॥ १३ ॥ इमंयोगविधिंकृत्वाशृणुतत्त्वंमनीषिणः ॥ दशप्राणवहानाड्योदेहिदे
हेषुसंस्थिताः ॥१४॥ चतस्रोऽधस्तुविज्ञेयाद्वेचनाड्यौचपार्श्वयोः ॥ ऊर्ध्वंतुचतुरोज्ञेयानाड्यस्तुपरिकीर्त्तिताः ॥१५॥ नाडीनांतुसहस्राणिद्वासप्ततिरितिश्रु
तिः॥शरीरंव्याप्यतिष्ठन्तेस्नेहेनपललंयथा॥१६॥पद्मसङ्काशसंस्थानंहृदयेतत्रदृश्यते॥सूक्ष्मोहिपुरुषोज्ञेयःपरात्माहृदिसंस्थितः ॥१७॥ शुद्धस्फटिकव
र्णाभंनिर्गुणंशाश्वतंध्रुवम् ॥ निरंजनोऽथमद्धक्तःपरमक्षरमव्ययम् ॥१८॥ त्वंसर्व्वाङ्गेषुसर्व्वगामीतीर्थस्रष्टाधाताचप्रयुक्तवान्प्रसूतः॥प्रथिताभावानांस्रष्टा
हर्त्ताप्रसविताधर्म्मोत्सुकस्तदेवाग्निस्तदादित्यः ॥१९॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांषट्त्रिंशोऽध्यायः॥३६॥महेश्वरउवाच॥ प्राणाद्याश्च
तस्रोज्ञेयावासाःप्रोक्तास्तुऊर्द्धगाः॥नाभिःसञ्चरतेविप्रपरमात्मानमव्ययम् ॥१॥ क्षणेप्रोक्तातदायोगीनित्यध्यानपरायणः ॥ एवंहिपरमात्मानंपापकर्म्मा
नपश्यति ॥ २ ॥ पापकर्म्मापियोनित्यंनित्यंध्यानपरायणः ॥ ध्यानाग्निःसर्व्वकर्म्माणिदहत्यग्निरिवेन्धनम् ॥ ३ ॥ नवेदयज्ञैर्नजपैर्नयोगैर्नशौ

चजप्यैर्नचवेदचर्य्यया ॥ प्राप्तंवरंतत्तुनरेणलोकेध्यानार्णवंयस्तुनिषेवतेध्रुवम् ॥ ४ ॥ ननदीस्नानमात्रेणनतीर्थाभिगमेनच ॥ नचदीक्षाविधानेनन
शिरोमुण्डनेनच ॥ नवेदार्च्चनमात्रेणत्रिदण्डानांविधारणात् ॥ ५ ॥ प्राप्तंपदंकस्यनरेणलोकेध्यानार्णवंयस्तुनसेवतेबुधः ॥६॥ सर्व्वतःसमचित्तस्तुसर्व्व
मात्मनएवच ॥ चिन्तयन्सर्व्वभूतानितदासिध्यतिसद्विजः ॥ ७ ॥ इतिश्रीमहापुराणेसनत्कुमारसंहितायांसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ दुर्व्वासाउवाच॥
ज्ञापयामिपुनर्देवप्रसादंकुरुशङ्कर ॥ कीदृशोऽथभवेद्देहेषडङ्गोयोगउच्यते ॥ १ ॥ महेश्वरउवाच ॥ प्राणायामस्तथाध्यानंधारणायोगउच्यते ॥ प्राण
स्यग्रहणंनित्यंप्राणायामःसउच्यते ॥२॥ ओंकारंमनसाध्यायेदेकाग्रमनसास्मरन् ॥ ध्यानेनतुसदायोगीध्यानसंवित्ततापरः ॥३॥ सर्व्वेषामिन्द्रियाणांतु
विषयाणांतथैवच॥ प्रणिपत्त्याहरंकृत्वाप्रत्याहारःसउच्यते॥४॥दशानामिन्द्रियणांतुओंकारेप्रीतमानसः॥ योजनानांजपैश्चैवयोगोवैकीर्त्तितोबुधैः ॥५॥
अहिंसासत्यवचनमस्तेयश्चाप्यकल्पता॥पंचमंब्रह्मचर्य्यंचइत्येतेनियमाःस्मृताः ॥६॥ अक्रोधोगुरुशुश्रूषाशौचंसन्तोषमर्थवत् ॥ एतेतुनियमाःपञ्चविज्ञे
याब्रह्मवादिषु ॥ ७॥ षडङ्गोयोगइत्येषशुद्धेविज्ञानउच्यते ॥ सगच्छेत्परमंस्थानंशाश्वतंपदमव्ययम् ॥ ८ ॥ अतिशून्यंतुयस्यार्थैशरीरंकीर्त्तितंबुधैः ॥
यस्यचान्तेशरीरस्यसशरीरःसउच्यते ॥९॥ ज्ञानंनिरंजनश्चैवअव्यक्तंत्रिगुणःस्मृतः ॥ द्रष्टास्रष्टाचसपितामन्ताबोद्धातथैवच ॥१०॥ पुरुषंशाश्वतंसूक्ष्मं
द्रष्टव्यंध्यानचक्षुषा ॥ यततेध्यानयोगेनयदिलभ्येतपश्यति॥११॥शरीरेचस्थिताबुद्धिर्मनोऽहंकारएवच ॥ अव्यक्तंत्रिगुणंभद्रपुरुषश्चात्रशाश्वतः॥१२॥
रजस्तमोभ्यांसंच्छन्नोयदाकिञ्चिन्नचिन्तयेत् ॥ वर्त्तमानस्तुविज्ञेयश्चतुर्थींगतिरेवच ॥ १३ ॥ पञ्चविंशत्तुविज्ञेयमीशमीशानमव्ययम् ॥ सम्भूतिश्चवि
नाशंचभावाभावौतथैवच ॥ १४ ॥ यस्तुवेत्तिनरःप्राज्ञःसर्व्वद्रष्टाष्टविंशकः ॥ नतुमानैस्तुविज्ञेयाचतुर्थगतिरेवच ॥ १५ ॥ पञ्चविंशकतत्त्वानिज्ञायन्ते
तुसदानरैः ॥ पञ्चविंशत्तदाज्ञेयमीशानमव्ययंपरम् ॥ १६ ॥ पुरुषःसञ्चरन्तंतंयस्तुवेत्त्युपरिस्थितम् ॥ रुद्रवासेतुओंकारंत्वविमुक्तःसउच्यते ॥ १७ ॥
माहात्म्यंतस्यतत्प्रोक्तंसम्पन्नंतत्रविद्यते ॥ यंविदित्वाचज्ञात्वाचसगच्छेत्परमांगतिम् ॥ १८ ॥ सएवंपञ्चविंशतिकःषड्विंशकस्तथैवच ॥ ऊनविंश
तिकंविद्यात्तत्त्वज्ञानार्थचिन्तकः ॥ १९ ॥ विंशकंतुतदाज्ञात्वाअमृतत्वायकल्पते ॥ चतुर्व्विंशगृहंयोगएषवैपञ्चविंशकः ॥ २० ॥ षड्विंशतिस्तथा
ज्ञेयाअध्यक्षःसप्तविंशकः ॥ अष्टविंशकःपुरुषस्त्रिंशत्पुरुषलोकधृक् ॥ २१ ॥ यंविदित्वानशोचन्तितंशिवंकथयामिते ॥ एषवैकथितोब्रह्मन्मयाहितव
सुव्रत ॥ २२ ॥ अच्छेद्योऽपिहियोनित्यंस्वरव्यंजनवर्ज्जितः ॥ यंचिन्तयेद्यतिर्नित्यंमात्राक्षरविवर्ज्जितम् ॥ २३ ॥ अविमुक्तेस्थितोदेवोमत्स्योदर्य्यास्तु
दक्षिणे ॥ ओंकारंपरमंदेवंपञ्चायतनवासिनम् ॥ २४ ॥ तस्यचैवप्रसादेननिष्कलत्वंप्रपद्यते ॥ चिन्तयेद्योगवान्नित्यमेषवैनिष्कलोध्रुवम् ॥ २५ ॥

दुर्वासाउवाच ॥ कथंज्ञेयंहिभगवन्मात्राक्षरविवर्ज्जितम् ॥ एतन्मेवदगुह्यंचब्रूहितत्त्वंवृषध्वज ॥ २६ ॥ महेश्वरउवाच ॥ शृणुविप्रयथान्यायंमात्राक्षर
विवार्ज्जितम ॥ शरीरंहितदाब्रह्मयज्ज्ञात्वामुच्यतेयतिः ॥ २७ ॥ ओंकारंपरमंब्रह्मकिञ्चिदन्यन्नविद्यते ॥ तद्ब्रह्ममुच्यतेपञ्चमात्रञ्चपरिकीर्त्तितम् ॥ २८॥
प्रथमावैद्वितीयाचविज्ञेयाक्षरमालिनी ॥ तृतीयाऽनिमिषाचैवविज्ञेयायोगचिन्तकैः ॥ २९ ॥ पिपीडितार्धमात्रावैविज्ञेयागुणवर्ज्जिता ॥ प्रशान्ताचाक्षरं
चैवैतांविदित्वातुमुच्यते ॥ ३० ॥ अकारोवैद्युताचैवउकारोऽक्षरगामिनी ॥ मकारोनिमिषानामप्रशान्तंतुपिपीडिता ॥ ३१ ॥ अकारोब्रह्मइत्याह
उकारोविष्णुरुच्यते ॥ मकारस्तुउमाज्ञेयाप्रशान्तंशाश्वतंध्रुवम् ॥ ३२ ॥ ओंकारन्तुयदायोगीयुञ्जानःसमुदाहरेत् ॥ विज्ञानाख्यातदाज्ञेयानित्यमक्षर
गामिनी ॥ ३३ ॥ चिन्त्यमानंतुवहुशोमणिसूत्रनिदर्शनैः ॥ इषुकारइवासक्तोयथाग्निंनतुपश्यति ॥ ३४ ॥ तादृशंभावयेद्ब्रह्मतदाविंदतितत्परम् ॥
॥ ३५ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांदुर्व्वासउपनिषत्सुअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ महेश्वरउवाच ॥ इदंशरीरंविप्रेन्द्रसर्व्वदेवमयंशृणु॥
तदहंतेप्रवक्ष्यामितस्मिंस्तस्मिंश्चदेवतम् ॥ १ ॥ विष्णुस्तुपादेविज्ञेयोजंघयोर्मरुतस्तथा ॥ जानुभ्यामश्विनौज्ञेयौऊरुभ्यांवरुणस्तथा ॥ २ ॥ पायौ
मित्रोऽथवरुणउपस्थेतुप्रजापतिः ॥ कुबेरोहिकटिस्थानेयक्षैश्चसहितस्तथा ॥ ३ ॥ अन्तेसमुद्राविप्रेन्द्रउदरेपञ्चदेवताः ॥ हृदिस्थानेतुसावित्री
उरःसोमस्तथैवच ॥ ४ ॥ हस्तयोरिन्द्रमित्याहुस्त्वचिवैविद्युतस्तथा ॥ औषध्यश्चवनस्पत्योनखेकेशीषुवैद्विज ॥ ५ ॥ रोमकूपेधर्म्मएवमूर्ध्न्या
दित्योनसंशयः ॥ सन्धिसप्तपर्वयोज्ञेयाश्चक्षुभ्यांसूर्य्यएवच ॥ ६ ॥ श्रोत्राणिचदिशःसर्व्वाविज्ञेयाब्रह्मवादिभिः ॥ भ्रुवोस्तुपर्व्वताज्ञेयाललाटे
वसवस्तथा ॥७॥ शिवःस्वयम्भूर्विज्ञेयोनित्यमेवप्रतिष्ठितः ॥ अपरान्तेयमश्चैवतथावेधाःप्रतिष्ठितः॥८॥अपरांगेरात्रयश्चदेवताश्चैवपार्श्वयोः ॥ शुभेप्राण
गतिःकण्ठेभवन्तिवृषभध्वजः ॥ ९ ॥ अहंकारेतथारुद्रोबुद्धौब्रह्माप्रजापतिः ॥ इत्येवंहिमयाप्रोक्तंसर्व्वदेवमयंपरम् ॥ १०॥ एतज्ज्ञात्वाचबुद्ध्वाचगच्छ
न्तिपरमांगतिम् ॥ दुर्व्वासाउवाच ॥ एतेप्रोक्ताःशरीरस्थादेवताऋषयस्तथा ॥११ ॥ प्राणाहुतिंकथंसर्व्वेलभन्तेवृषभध्वज ॥ १२ ॥ महादेवउवाच ॥
प्राणोऽपानःसमानश्चउदानोव्यानएवच ॥ इत्येतेवायवःपञ्चशरीरेचप्रतिष्ठिताः ॥ १३ ॥ एतेभ्योजुहुतेयस्तुप्रथमामाहुतिंद्विजः ॥ सावित्रीचतुरो
वेदाःसषडङ्गपदक्रमाः ॥१४॥ ओषध्यश्चवनस्पत्यःसोमभास्करमारुताः ॥ तेनान्नेनतुतृप्यन्तियत्प्राणेजुह्वतिद्विजाः ॥ १५ ॥ अपानेजुहुतेयस्तुद्विती
यामाहुतिंद्विजः ॥ तेननागाःसमुद्राश्चसरितःसागरास्तथा ॥ १६ ॥ ऋषयःपितरश्चैवसर्व्वेदेवाःसवासवाः ॥ तेनान्नेनतुतृप्यन्तेअपानेजुह्वतेयदि॥१७॥
समानेजुहुतेयस्तुतृतीयामाहुतिंद्विजः ॥ अश्विनौमरुतोविष्णुर्वरुणश्चयमस्तथा ॥ १८ ॥ प्रजापतिःकुबेरश्चसर्व्वेदेवगणास्तथा ॥ तेनान्नेनतुतृप्यन्तेस

मानेजुहुतेयदि ॥ १९ ॥ उदानेजुहुतेयस्तुचतुर्थीमाहुतिंद्विजः ॥ तेनाहंचभवश्चैवह्युभौनन्दीगणेश्वरः ॥ २० ॥ उमाब्रह्मापिविप्रेन्द्रमनःप्राणास्तथैव
च ॥ तेनतेनतुतृप्यन्तेउदानेजुहुतेयदि ॥ २१ ॥ व्यानेवैजुहुतेयान्तुपञ्चमीमाहुतिंद्विजः ॥ तेनसर्व्वासनक्षत्रासप्तद्वीपाचमेदिनी ॥ २२ ॥ सप्तलोका
श्चब्रह्माण्डाःसयक्षोरगराक्षसाः ॥ तेनान्नेनतुतृप्यन्तेव्यानेवैजुहुतेयदि ॥ २३ ॥ एवंतुसततंविप्राजुहुतेप्रणवेनवै ॥ श्वपाकस्यापिभुञ्जानोनसपापेन
लिप्यते ॥ २४ ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्रावायदिवापठेत् ॥ वियुक्तःसर्व्वपापेभ्यःश्रद्धधानस्ततोभवेत् ॥ २५ ॥ वेदाहमेतंपुरुषंमहान्त
मादित्यवर्णंतमसःपरस्तात् ॥ तमेवविदित्वानभवेन्मृत्युर्नान्यःपन्थाविद्यतेऽयनाय ॥ २६ ॥ यदिजीवंपरिरक्षेदमृतवस्तुसमीहते ॥ विषं
हालाहलंपीत्वानध्रुवंमृत्युमाप्नुयात् ॥ २७ ॥ एतमेवमिदंज्ञात्वाअमृतत्वमवाप्नुयात् ॥ २८ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांदुर्व्वास
उपनिषत्सुएकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ व्यासउवाच ॥ यत्त्वयोक्तंभगवतासांख्ययोगविशारद ॥ योगनाडीमिमांब्रह्मञ्छ्रोतुमिच्छामित द्द्रुतम्
॥ १ ॥ सनत्कुमारउवाच ॥ प्रणम्यशिरसादेवमक्षयंभुवनेश्वरम् ॥ कात्यायनींनमस्कृत्वारुद्रपत्नींविशेषतः ॥ २ ॥ हरिहरहिरण्यगर्भैर्योगशास्त्रमु
दाहृतम् ॥ पारमेष्ठ्यमिदंज्ञानंनाडीसञ्चारसंस्थितम् ॥३॥ विश्वमूर्त्तिर्यदाश्रीमान्देहस्थःक्रीडतेतदा ॥ अनन्तारश्मयस्तस्यजगद्देहाश्रितास्तथा ॥४॥
योगनाडीःप्रवक्ष्यामिहृदयस्थानमाश्रिताः ॥ पूर्व्वदक्षिणपश्चार्द्धमुत्तरांमूर्त्तिमाश्रिताः ॥ ५॥ अधस्तादेवनाड्यस्तुतासांवर्णान्निबोधमे ॥ पीतलोहितकृ
ष्णाश्चउत्तराःपाण्डुपिङ्गलाः ॥६॥ पूर्व्वाःश्वेतास्तथानाड्योदक्षिणाःकृष्णपिङ्गलाः ॥ ऊर्द्ध्वन्तुनिष्ठितायास्तुकृष्णानाड्यस्तुचोदिताः ॥७॥ पञ्चपञ्चस्मृता
नाड्योहृदिसंस्थानसंश्रिताः ॥ शतमेकोत्तरंनाडीमुपासन्तेचयोगिनः ॥८॥ सर्व्वाश्चताःसमुत्सृज्यब्रह्मनाडींसमाश्रयेत् ॥ रश्मयोयेतुसूर्य्यस्यदृश्यन्तेचन
भःस्थले ॥ ९ ॥ परमात्माहृदिस्थोहिसचसर्व्वंप्रकाश्यते ॥ नाभिनाडीभिरत्यर्थंक्रीडामोहविसर्ज्जनम् ॥ १० ॥ षण्णवत्यःसहस्राणिनाडीनांहृदिसं
स्थिताः ॥ पूर्व्वनाड्यस्तुयाःपञ्चप्राणाद्याःपरिकीर्त्तिताः ॥ ११ ॥ दक्षिणायाःस्थितानाड्यस्तासांपञ्चजलाइति ॥ पश्चिमोत्तरनाड्योस्तुउदानंचोत्तरा
णिच ॥ १२ ॥ समानस्थानिबोध्यानिअधस्ताद्याःसमाश्रिताः ॥ द्विगुणन्तुप्रविष्टास्तुहृदयानन्तरंतताः ॥ १३ ॥ एतन्नाडीप्रमाणन्तुविश्वंयत्रप्र
तिष्ठितम् ॥ १४ ॥ उक्ताश्चतुर्भिःसंयुक्तमणोरणीयोनाडीह्यधस्तात्सतुविश्वकर्म्मणा ॥ तेनैवनाड्यन्तरसञ्चरेणशुद्धस्यनाडिंहृदिमूर्ध्निलक्षयेत्
॥ १५ ॥ साब्रह्मनाडीतिवदन्तितज्ज्ञाःपरापरज्ञाननिधानभूताः ॥ १६ ॥ बुद्धींद्रियाणिरक्षतिमनस्तत्रप्रयोजितम् ॥ पञ्चेन्द्रियाणिसंयुक्तापञ्च
ञ्चकर्म्मभिरिन्द्रियैः ॥ १७ ॥ सर्व्वेतेहृदिसम्बद्धायोगेनहृदिपादयोः ॥ सर्व्वनाडीसहस्राणांगुणानेवचतुष्टयम् ॥ १८ ॥ ध्रुवंनदृश्यतेस्वां

गेवसुसप्तचतुष्टयम् ॥ नाडीरश्मिस्तथाचैवसर्व्वेभ्योनश्वरंजगत् ॥ १९ ॥ यज्ञश्चसर्व्ववेदाश्चहृदिसर्व्वेव्यवस्थिताः ॥ ताभिर्भावयतेविश्वंप्रणवे
नोर्द्ध्वमृच्छति ॥ २० ॥ मूर्ध्निभित्त्वानभोयातिनासिकामूर्द्धएवच ॥ शुक्रमूत्रवहानाडीएकीभूतातुमिश्रिता ॥ २१ ॥ रेतसासम्प्रसूयन्तेमूत्रश्चै
वतथैवच ॥ ब्रह्मनाडीमुखेयस्यमनसाहृदिचेश्वरम् ॥२२ ॥ त्रीणिचास्थिसहस्राणिवर्णसृष्टिःप्रकीर्त्तिता ॥ स्नायूनांतुसहस्राणिपरंसंवत्सरंस्मृतम् ॥२३॥
नभएवैतिवैविश्वंमनसःसर्व्वतोमुखम् ॥ एकचित्तपरोनित्यंस्मरतोनिर्म्मलीभवेत् ॥ २४ ॥ सूक्ष्मात्सूक्ष्मतरोभावोयंविदित्वानयुज्यते ॥ सोमसूर्य्यां
शुभिःपीतंपद्मश्चैवसविन्दति ॥ २५ ॥ तत्रोपरिनयन्त्येवयोगिनांमूर्ध्निशायिनाम् ॥ २६ ॥ तेनैवमार्गेणवियोजितंभवाननेकशस्तादिविदेवसर्व्वान् ॥
ज्ञानेनविज्ञायनिवृत्तकल्मषाभित्त्वास्थितिंब्रह्मविदःप्रयान्ति ॥ २७ ॥ सनत्कुमारेणेदन्तुनाडीसञ्चारसूचितम् ॥ योगशास्त्रमिदंपुण्यंमोक्षशास्त्रंसुनि
श्चितम् ॥२८॥ ब्रह्माद्यैर्ऋषिभिर्गीतंयोगशास्त्रंविनिश्चितम् ॥ पुण्यात्पुण्यतरंह्येतत्पवित्रंपापनाशनम्॥२९॥नाडीमुखेतुचिन्तात्मासर्व्वपापैःप्रमुच्यते ॥
नाडीमध्यगतंविश्वंशुध्यतेपितृमातृजम् ॥ ३० ॥ गोमूत्रंसप्तमेपापंदहतेचाष्टमेतथा ॥ तेनापिश्रद्धयानाडीमूर्ध्न्यधस्ताद्विनिःसृता ॥ ३१ ॥ सनाडीतोऽ
थमन्तव्योयेनविश्वंहृदिव्रजेत् ॥ पूर्व्वास्तेहृदितिष्ठन्तितन्मनस्तत्परायणाः ॥ ३२ ॥ तावत्संचिन्तयेदुग्रंयावतातन्मतोमतः ॥ एवंचिन्तनयोगेनयाव
द्भावयतेपरम् ॥ ३३ ॥ नाडीसूक्ष्मेणमार्गेणऊर्द्ध्वंयात्युत्तरायणम् ॥ ताभ्यामधस्ताद्यत्कार्यंतद्गतंतस्यसंस्मृतम् ॥ ३४ ॥ उभौमार्गौतुविज्ञेयौदेहंसंव
त्सरंस्मृतम् ॥ सगत्वातेनमार्गेणजायतेनकदाचन ॥ ३५ ॥ नित्याभ्यउत्तमंचैवअविमुक्तंपरंपदम् ॥ निधानंचैवनाड्यास्तुशरीरेयाःप्रकीर्त्तिताः
॥ ३६ ॥ स्नायुस्त्रीणिसहस्राणिसर्व्वास्तानाभिजाःस्मृताः ॥ षण्णवत्यःसहस्राणिशिराणांहृदिसंस्थिताः ॥ ३७ ॥ तेवैशिवानिमार्गाणिविश्वोयत्रप्रति
ष्ठितः ॥ सर्व्वंनाडीःपरित्यज्यब्रह्मनाडींसमाश्रयेत् ॥ ३८ ॥ सानाडीसर्व्वदुर्गाणितारयेन्नौरिवार्णवम् ॥ एकनाडीनिरालम्बातालुमध्येशिरोगता ॥
॥३९॥ सानाडीयोगयुक्तानांमोक्षदासादिवंगता ॥ शुक्रमज्जावसामेदःकफंपित्तंशरीरयोः ॥४०॥ शिरांसितस्यस्रोतांसिएकैकंशुक्ररन्ध्रयोः॥धूतपापादि
वंयान्तिमूर्ध्निभित्त्वातमीश्वरम् ॥४१॥ सूर्य्योग्निमुपरिस्थानमुपैतिद्युतिमानिव ॥४२॥ देवैःसदिव्यैर्ऋषयःसमग्राब्रह्माचविष्णुश्चमहेश्वरश्च ॥ वायुर्यमोऽ
ग्निर्वरुणःशशाङ्कःसर्व्वान्निरीक्ष्यैवदिवंप्रयान्ति ॥४३॥ गुणैःस्तुवन्तोऽपिमुखाभिमुख्यैर्ध्यायन्तिगायन्तिचपूजयन्ति ॥ सयुक्तयोगःसचपूज्यमानःपरंपदं
गच्छतिचेश्वरालयम्॥४४॥इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांचत्वारिंशोऽध्यायः॥४०॥व्यासउवाच ॥ अविमुक्तस्यमाहात्म्यंश्रोतुमिच्छामित
त्वतः॥तथाचोंकारदेवस्यमहाभाग्यंवदस्वमे ॥१॥ ॥ सनत्कुमारउवाच ॥ अविमुक्तस्यमाहात्म्यंश्रोतुमिच्छसितत्त्वतः ॥ शृणुव्यासपरंगुह्यंरहस्यंयोग

मुत्तमम् ॥ २ ॥ यद्देवापिनविदन्तिकाङ्क्षमाणाःपरंपदम् ॥ दुर्ल्लभापिकथातस्यअविमुक्तस्यसुव्रत ॥ ३ ॥ सत्येप्रसादसर्व्वस्यवृद्धिस्तत्रनजायते ॥
तदहंसंप्रवक्ष्यामियन्मयातुश्रुतंपुरा ॥ ४ ॥ पार्व्वत्यासहसंवादंदेवदेवस्यशूलिनः ॥ देव्युवाच ॥ कथयदेवदेवत्वंरहस्यज्ञानमुत्तमम् ॥ ५ ॥ तीर्थोप
निषदंपुण्यंमोक्षदंसर्व्वदेहिनाम् ॥ कथयामासदेवेशोरहस्यंज्ञानमुत्तमम् ॥ ६ ॥ स्वपुरंचिन्तयामाससोऽविमुक्तगणाधिपः ॥ वाराणसींविनादेवोनर
तिंप्राप्यकुत्रचित् ॥ ७ ॥ उवाचवाक्यंवरदोजगन्नाथपिनाकधृक् ॥ तस्मिन्नववरेनित्यंरतिर्मेवर्द्धतेपुनः ॥ ८ ॥ येनकार्य्येणसुश्रोणितदिहैकमन[illegible]शृणु ॥
सिद्धान्तानांचसर्व्वेषांस्मृतीनांचैवसुन्दरि ॥ ९ ॥ चतुर्दशानांभवनानांयश्चसारःप्रकीर्त्तितः ॥ आत्मज्ञानंपरंगुह्यंयज्ज्ञात्वामोक्षमश्नुते ॥ १० ॥ सोऽयं
देविस्थितःसाक्षाद्रुद्रावासेस्वयंप्रभुः ॥ तेनैवचतुसुश्रोणितस्मिन्स्थानेस्थितंसदा ॥ ११ ॥ पञ्चायतनमासाद्यमनस्तपतितंयजेत् ॥ त्रिधास्थानंत्रिभो
क्तारंत्रिभोज्यंचतथापरम् ॥ १२ ॥ यतयोश्चपरंविद्यात्सिद्धचन्तेप्रणवंविभुम् ॥ येषुपाशुपताःश्रेष्ठामयपुत्राद्दृढव्रताः ॥ १३ ॥ तेऽविमुक्तंपरंस्थानंरु
द्रावासंहिसर्व्वदा ॥ द्रक्ष्यन्तिपरयाभक्त्यासद्भावंपरमास्थिताः ॥ १४ ॥ ओङ्कारंपरमंब्रह्मपरमंचविदुर्बुधाः ॥ पंचब्रह्मसमायुक्तंपंचायतनवासिनाम् ॥
॥ १५ ॥ येद्रक्ष्यन्तिशिवंतत्रतेद्रक्ष्यन्तिपरंपदम् ॥ ब्राह्मणास्तवमुंचन्तिवेदवेदाङ्गपारगाः ॥ १६ ॥ यतयःपुण्यकर्म्माणोयेचान्येवेदसंस्थिताः ॥
नानालिंगधराविप्रवेदशास्त्रपरायणाः ॥ १७ ॥ गृहस्थाश्चैवयतयस्तस्मात्तीर्थउपासकाः ॥ एकदण्डास्त्रिदण्डाश्चहंसव्रतधराश्चये ॥ १८ ॥ शैवाःपाशु
पतायेचकपालव्रतचारिणः ॥ उपासतेचमांनित्यंमूकंचव्रतमास्थिताः ॥ १९ ॥ अविमुक्तेपरेक्षेत्रेउभावगतमानसाः ॥ कर्म्मभेदेनतेषांतुसर्व्वेषामास्थि
तोह्यहम् ॥ २० ॥ विभजामिपरंस्थानंतन्मोक्षंपरमंपदम् ॥ श्मशानंतत्रविख्यातमविमुक्तस्यमुक्तिदम् ॥ २१ ॥ द्विजैःपाशुपतैर्जुष्टंदेवगन्धर्व्वसेवितम् ॥
यत्रनित्यंशिवःसाक्षादविमुक्तेश्वरःप्रभुः ॥ २२ ॥ नित्यंसन्निहितोदेवोजन्तूनांचैवतारकः ॥ तस्यांपुर्य्यांव्यवस्थानात्प्रख्यातामेऽविमुक्तता ॥ २३ ॥
अव्यक्तलिङ्गंभित्त्वैवतथासंसारभीरुभिः ॥ तत्रविश्वेश्वरंदृष्ट्वासंसारेनपतेत्पुनः ॥ २४ ॥ विश्वेश्वरंचओङ्कारमेतत्सारंप्रकीर्त्तयेत् ॥ सिद्धक्षेत्रंतपःक्षेत्रं
यथावाराणसीमुने ॥ २५ ॥ अविमुक्तेश्वरंदेवंसंस्मरेद्भवमोचनम् ॥ वापीजलन्तुतत्रस्थंदेवदेवस्यसन्निधौ ॥ २६ ॥ स्पर्शनाद्दर्शनात्तस्यकृतार्थामानवाभु
वि ॥ दुर्ल्लभन्तुकलौदिव्यैस्तज्जलंह्यमृतोपमम् ॥ २७ ॥ तारणंसर्व्वजन्तूनांनानापापस्यनाशनम् ॥ जैगीषव्येणमुनिनायत्रकुद्धोऽपयोधितः ॥ २८ ॥
यत्रसन्ध्यामुपासित्वाब्रह्मत्वक्षरदेवता ॥ सन्ध्योपासिताभवतिसकृत्वादशमासकृत् ॥ २९ ॥ देवदेवीनदीगङ्गासृष्टिमन्त्रःस्तुतापतिः ॥ वाराणस्यांमहापुण्यं
कस्यवासोनरोचते ॥ ३० ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायामेकचत्वारिंशोऽध्याय ः ॥ ४१ ॥ सनत्कुमारउवाच ॥ पूर्णभद्रसुतःश्रीमानासीद्यक्षःप्र

तापवान्॥ हरिकेशइतिख्यातोब्राह्मणोधर्म्मकश्चह ॥१॥ तस्यजन्मप्रभृत्येवशर्व्वेभक्तिरनुत्तमा ॥ तदासीतन्नमस्कारस्तद्भक्तस्यपरायणः ॥२॥ आसी
नश्चशयानश्चगच्छंस्तिष्ठन्ननुव्रजन् ॥ भुञ्जानोवापिधावंश्चरूपमेवानुचिन्तयन् ॥ ३ ॥ तस्यैवंयुक्तमनसःपूर्णभद्रःपिताब्रवीत् ॥ नत्वांपुत्रमहंमन्येप्रजातो
यस्त्वमन्यथा ॥४॥नहियक्षकुलीनानामेवंवृत्तिर्भवेत्सुत ॥ गुह्यकास्तयूयंवैस्वभावात्क्रूरचेतसः ॥ ५ ॥ क्रव्यादाश्चैवकिंतत्रौंहिसाशीलाश्चपुत्रक॥ नैव
कार्य्यांनतेवृत्तिरेवंदृष्टामहात्मनाम् ॥६॥ स्वयम्भुवायथादृष्टात्यक्तवान्माहितेभवेत् ॥ आश्रमान्तरजंकर्म्मनकुर्य्याद्गृहिणस्ततः ॥७॥ हित्वामनुष्यभा
वञ्चकर्म्मभिर्विविधैश्चह॥ देवत्वंनोऽधिमार्गेषुमानुष्यंजातिमेवच॥८॥अनुविद्धिइदंतेषांधर्म्मस्तत्प्राप्तिचेतसा ॥नमयाविहितंतस्यकर्म्मतन्नात्रसंशयः॥९॥
सनत्कुमारउवाच ॥ इत्येवमुक्त्वापुत्रन्तुपूर्णभद्रःप्रतापवान् ॥ उवाचनिष्क्रमक्षिप्रंगच्छयत्रत्वमिच्छसि ॥ १० ॥ ततःसनिर्गतस्तस्यगृहाभ्यन्तरत
स्तथा ॥ वाराणसींसमासाद्यतपस्तेपेमहात्मवान् ॥ ११ ॥ स्थाणुभूतोह्यविशेषःशुष्ककाष्ठोपलोपमः ॥ त्यक्त्वागोत्रकृतांवृत्तिंतथाजातिकृतास्ततः
॥ १२ ॥ इहागत्यचधर्म्मात्मागोकर्णायतनेशुभे ॥ आराधयन्येयोगीशंगोकर्णदेवमीश्वरम् ॥ १३ ॥ तस्मिन्स्थानेस्थितोव्यासएकचित्तःप्रसन्नधीः ॥
संनियम्येन्द्रियग्राममवातिष्ठतनिश्चलः ॥ १४ ॥ अथतस्यैवंवसतस्तस्यरक्तःसदाशिवः ॥ सहस्रमेकंवर्षाणांदिव्यंसंन्यातिवर्त्तत ॥ १५ ॥ वल्मीकेन
समाक्रान्तोभक्ष्यमाणःपिपीलकैः ॥ राजसूचीमुखैस्तीक्ष्णैर्विध्यमानस्तथैवच ॥ १६ ॥ निर्म्मांसरुधिरोऽन्नैवकुन्दशङ्खेन्दुसंप्रभः ॥ अस्तिगोपाभवेत्स
र्व्वंदेवंवैचिन्तयन्नपि ॥१७॥ एतस्मिन्नन्तरेदेवीविज्ञापयातशङ्करम् ॥ उद्यानंपुनरेवेदंद्रष्टुमिच्छामितेवर॥१८॥ इतिविज्ञापितोदेवःपार्व्वत्यापरमेश्वरः ॥
शर्व्वःपृष्टोयथान्यायमाख्यातुमुपचक्रमे ॥ १९ ॥ निर्ज्जगामचदेवेशःपार्व्वत्यासहशंकरः ॥ उद्यानंदर्शयामासदेव्यादेवःपिनाकधृक् ॥ २० ॥ देवदेव
उवाच ॥ प्रज्वालनानाद्रुमगुल्मशोभितंलताप्रतानावनतंमनोरमम् ॥ विरूढपुष्पैःपरितःसुगन्धितंसुपुष्पितैःकण्टकिभिश्चकेतकैः ॥ २१ ॥ तमालगु
ल्मैर्निचितंसुगन्धिभिःसकर्णिकारैर्बकुलैश्चसर्व्वतः ॥ अशोकपुन्नागवनैःसुपुष्पितैर्द्विरेफमालाकुलसंचयैःक्वचित् ॥ २२ ॥ क्वचित्प्रफुल्लाम्बुजरेणुभू
षितैर्विहङ्गमैश्चारुफलप्रणादिभिः ॥ निनादितंसौरभमत्सुनादितैःप्रसन्नजम्बूहरितैश्चपार्णिभिः ॥ २३ ॥ क्वचिद्विहङ्गाकुरुतोपनादितंक्वचित्तु[illegible]दम्बर
वेणशोभितम् ॥ क्वचिच्चकारण्डवरावनादितंक्वचिच्चमत्तालिकुलाकुलीकृतम् ॥ २४ ॥ महाकलाभिर्भ्रमराङ्गनाभिर्निषेवितंचारुसुगन्धिपुष्पितम् ॥
क्वचित्सपुष्पैःसहकारवृक्षैर्नतप्रसूनैस्तिलकैश्चवृक्षैः ॥ २५ ॥ प्रगीतविद्याधरचारणंचप्रवृत्तनृत्यानुगताप्सरोगणम् ॥ प्रहृष्टनानाविधपक्षिसेवितंप्रमत्त
हारीतकुलोपमोदितम् ॥ २६ ॥ मृगेन्द्रनानाकुलमानसैःक्वचिद्गजैःक्वचिद्धद्धकदम्बकंमृगैः ॥ प्रफुल्लनानाविधचारुपंकजैःसरस्तडागैरुपशोभितंक्वचि

चित् ॥२७॥ निबिड़निचुलनीलंनीलकण्ठाभिवासंमदमुदितविहङ्गव्रातनादाभिरामम् ॥ कुसुमिततरुशाखालीनमत्तद्विरेफंनवकिसलयशाखाशोभितप्रा
न्तशाखम्॥२८॥ क्वचिच्चदन्तक्षतचारुवीरुधंक्वचिल्लतालिंगितचारुवृक्षम् ॥ क्वचिद्विशालालसगामिनीभिर्निषेवितंकिम्पुरुषाङ्गनाभिः ॥२९॥ पारावतध्व
निनिकूजितचारुशृङ्गैरभ्रङ्कषःसितमनोहरचारुरूपैः ॥ आकीर्णपुष्पनिकरैःप्रविमुक्तहासैर्विभ्राजितंत्रिदशदेवकुलैरनेकैः ॥३०॥ फुल्लोत्पलैःसारसहंसयु
क्तैस्तोयाशयैःसमनुशोभितदेवमार्गम् ॥ मालान्तरागलितपुष्पविचित्रभक्तिसम्बद्धगुल्मविटपैर्विहगैश्चयुक्तम् ॥ ३१ ॥ नीलैःपुष्पस्तबकतरलप्रान्तशा
खैरशोकैर्मत्तालिव्रातगीतश्रुतिसुखजनकैर्भासितान्तंमनोज्ञैः ॥ रात्रौचन्द्रस्यभासाकुसुमिततिलकैरेकभासंप्रयातंछायासुप्तप्रबुद्धस्थितहरिणकुलालुप्तद
र्भाङ्कुराग्रम् ॥३२॥ हंसानांपक्षवातप्रचलितकमलस्वच्छविस्तीर्णतोयंतोयानांतीरजातप्रविकचकदलीवाटनृत्यन्मयूरम् ॥ मायूरैःपक्षचन्द्रैःक्वचिदपिप
तितैरंजितंक्ष्माप्रदेशंदेशेदेशेमुदितविलसन्मत्तहारीतनृत्यम्॥३३॥ सारङ्गैःक्वचिदुपशोभितप्रदेशंस्वच्छन्दंकुसुमचयैःक्वचिद्विचित्रैः ॥ कृष्णाभिःक्वचिद
पिकिन्नराङ्गनाभिःक्षीराभिःसमधुपपीतवृक्षखण्डम् ॥ ३४ ॥ संसृष्टैःक्वचिदुपलिप्तकर्णपुष्पैरावासैःपरिवृतपादपंमुनीनाम् ॥ अश्रान्तोत्पलनिचितैःक्वचि
द्विशालैःस्वीकर्त्तुंसरलमहीरुहैरुपेतम्॥३५॥फुल्लातिमुक्तकलतागृहलौल्यासिद्धंसिद्धाङ्गनाजनविकस्वरचाटुरम्यम्॥ फुल्लप्रियङ्गुतरुमञ्जरिसक्तभृङ्गंभृङ्गा
वलीसरलिताढ्यकदम्बपुष्पम् ॥ ३६ ॥ पुष्पोत्करानिलविघूर्णितपादपाग्रमग्रेसरैर्भुविनिपातितवंशगुल्मम् ॥ गुल्मान्तरप्रसृततीरमृगीसमूहंवल्लीलतात
नुभृतामपवर्गदंतम् ॥ ३७ ॥ चन्द्रांशुजालधवलैस्तिलकैर्मनोज्ञैःसिन्दूरकुङ्कुमकुसुम्भनिभैरशोकैः ॥ चामीकरप्रतिसुमैर्नवकर्णिकारैःफुल्लारविन्दपद
चित्रविशालशाखैः ॥ ३८ ॥ क्वचिदञ्जनवर्णाभैःक्वचिद्वैदूर्य्यसन्निभैः ॥ क्वचित्सकाशैःशोभाढ्यैःपुष्पैराचितभूतलम् ॥ ३९ ॥ पुन्नागेषुद्विजगणविरुतं
रक्ताशोकस्तबकतरलितम् ॥ रम्योपान्तश्रमहरपवनंफुल्लाब्जेषुभ्रमरविलसितम् ॥ ४० ॥ सकलभुवनकर्त्तालोकनाथस्तदानींतुहिनशिखरसंवास्यर्द्ध
निष्ठैर्गणेशैः ॥ विविधतरुविशालंमत्तहृष्टान्यरूपैरुपवनतरुरम्यंदर्शयामासदेव्याः ॥ ४१ ॥ देव्युवाच ॥ उद्यानंदर्शितंदेवशोभयापरयायुतम् ॥
क्षेत्रस्यतुगणान्सर्वान्पुनर्वक्तुमिहार्हसि ॥ ४२ ॥ अस्यक्षेत्रस्यमाहात्म्यमविमुक्तस्यतांकथाम् ॥ श्रुत्वापिनहिमेतृप्तिरथभूयोवदस्वमे ॥ ४३ ॥
देवदेवउवाच ॥ इदंगुह्यतरंक्षेत्रंसदावाराणसीमम ॥ सर्वेषामेवजन्तूनांहेतुर्मोक्षस्यसर्व्वदा ॥ ४४ ॥ अस्मिन्सिद्धाःसदादेविमदीयंव्रतमाश्रिताः ॥ नाना
लिङ्गधरानित्यंममलोकाभिकांक्षिणः ॥ ४५ ॥ अभ्यस्यन्तिपरंयोगंयुक्तात्मानोजितेन्द्रियाः ॥ नानावृक्षसमाकीर्णेनानाविहगराजिते ॥ ४६ ॥ कमलो
त्पलपुष्पाढ्यैःसरोभिःसमलंकृते॥अप्सरोगणगन्धर्वैःसदासंशोभितेशुभे॥४७॥रोचतेमेसदावासोयेनकार्य्येणतच्छृणु ॥ मन्मनाममभक्तश्चमयिसर्व्वार्पित

क्रियः ॥ ४८ ॥ यथामोक्षमिहाप्नोतिअन्यथानतथाक्वचित् ॥ एतन्ममपुरंदिव्यंगुह्याद्गुह्यतरंमहत् ॥ ४९ ॥ ब्रह्मादयोविजानन्तियेचसिद्धामुमुक्षवः ॥
नातःप्रियतरंक्षेत्रंतस्मान्मेहरतेमनः ॥ ५० ॥ विमुक्तंनमयायस्मान्मोक्ष्यतेनकदाचन ॥ महाक्षेत्रमिदंतस्मादविमुक्तमितिस्मृतम् ॥ ५१ ॥ नैमिषेषुकु
रुक्षेत्रेगङ्गाद्वारेतुपुष्करे ॥ स्नानात्संसेवनाद्वापिनमोक्षःप्राप्यतेयतः ॥ ५२ ॥ इहसम्प्राप्यतेयेनततएताद्विशिष्यते ॥ प्रयागेवाभवेन्मोक्षइहवामत्परिग्रहात्
॥ ५३ ॥ प्रयागादपितीर्थाग्ग्र्यादिदमेवमहत्स्मृतम् ॥ जैगीषव्यःसतांसिद्धिंयोगतःसमहातपाः ॥ ५४ ॥ अस्यक्षेत्रस्यमाहात्म्यंतद्भक्त्यामम भावनात् ॥
जैगीषव्योमहाश्रेष्ठोयोगिनांज्ञानमिच्छाति ॥ ५५ ॥ ध्यायतेह्यत्रमांनित्यंयोगाग्निर्व्वाप्यतेभृशम् ॥ कैवल्यंपरमंयातिदेवानामपिदुर्लभम् ॥ ५६ ॥
अव्यक्तलिङ्गंमुनिभिःसर्व्वसिद्धान्तवेदिभिः ॥ इहसम्प्राप्यतेमोक्षोदुर्लभोऽन्यत्रकुत्राचित् ॥ ५७ ॥ तेभ्यश्चाहंप्रयच्छामियोगैश्वर्य्यमनुत्तमम् ॥ आत्मन
श्चैवसायुज्यमीप्सितंस्थानमेवच ॥ ५८ ॥ कुबेरःसमहायक्षस्तथासर्व्वार्पितप्रियः ॥ क्षेत्रस्यवन्दनादेवगणेशत्वमवापह ॥ ५९ ॥ संवर्त्तोभावितार्थश्च
सोऽपिभक्त्याममैवहि ॥ इहैवाराध्यमांदेविसिद्धिंयास्यत्यनुक्रमात् ॥ ६० ॥ पराशरसुतोयोगीऋषिर्व्यासोमहातपाः ॥ धर्म्मवक्ताभविष्यश्चवेदशास्त्र
प्रवर्त्तकः ॥ ६१ ॥ रमतेसोऽपिपद्माक्षिक्षेत्रेऽस्मिन्मुनिपुङ्गवः ॥ ब्रह्माचऋषिभिःसार्द्धंविष्णुर्वायुर्दिवाकरः ॥ ६२ ॥ देवराजस्तथाशक्रोयेचान्येचदिवौक
सः ॥ उपासतेमहात्मानःसर्व्वेषामिहसुव्रते ॥ ६३ ॥ अन्येचयोगिनःसिद्धाश्छन्नरूपामहाव्रताः ॥ अनन्यमनसोभूत्वामामिहोपासतेसदा ॥ ६४ ॥
अलंकारपुरीमेनांमत्प्रसादादवाप्स्यसि ॥ तेनैवंपूर्व्वतःकृत्वाचतुर्व्वर्णसमाकुलाम् ॥ ६५ ॥ स्फीतांजनपदाकीर्णांभूत्वाचवसतिंनरः ॥ मयिसर्व्वार्पित
प्राणोमामेवप्रतिपद्यते ॥ ६६ ॥ ततःप्रभृतिचार्व्वङ्गियेयेक्षेत्रनिवासिनः ॥ गृहिणोलिङ्गिनोवापिमद्भक्तामत्परायणाः ॥ ६७ ॥ मत्प्रसादाद्गमिष्यंतिमो
क्षंपरमदुर्लभम् ॥ विषयसक्ताचित्तोपित्यक्तधर्म्मश्चयोनरः ॥ ६८ ॥ इहक्षेत्रेमृतःसोऽपिसंसारेनपुनर्विशेत् ॥ येपुनर्विममाधीराःसत्त्वस्थाविजितेन्द्रि
याः ॥ ६९ ॥ व्रतिनश्चनिरावस्थाःसर्व्वथामयिभाविताः ॥ देहभङ्गंसमासाद्यधीमन्तःसङ्गवर्ज्जिताः ॥ ७० ॥ गताएवपरंमोक्षंप्रसादान्ममसुव्रताः ॥
जन्मान्तरसहस्रेषुयुञ्जन्योगीसमाप्नुयात् ॥ ७१ ॥ तमिहैवपरंमोक्षंमरणादपिगच्छति ॥ एतत्संक्षेपतोदेविक्षेत्रस्यचमहाफलम् ॥ ७२ ॥ अविमुक्तस्यक
थितंमयातेगुह्यमुत्तमम् ॥ अतःपरतरंनास्तिसिद्धगुह्यंमहेश्वरि ॥७३॥ एतद्बुध्यन्तियोगंतेयेचयोगेश्वराभुवि ॥ एतदेवपरंज्ञानमेतदेवपरंशिवम् ॥७४॥
एतदेवपरंब्रह्मएतदेवपरंपदम् ॥ ७५ ॥ वाराणसीतुभुवनत्रयसारभूतारम्यापुरीममसदागिरिराजपुत्रि ॥ अत्रागताविविधदुष्कृतकारिणोऽपिपापक्षया
द्विरजसःप्रातिभा न्तिमर्त्त्याः ॥ ७६ ॥ एतत्स्मृतंप्रियतमंममदेविनित्यंपुण्यंपवित्रतरुगुल्मनिकायजुष्टम् ॥ यस्मिन्मृतास्तनुभृतःपदमाप्नुवन्तिमूर्खा

गमेनरहितानहिसंशयोऽत्र ॥ ७७ ॥ सनत्कुमारउवाच ॥ एतस्मिन्नन्तरेदेवोदेवींप्राहगिरीन्द्रजाम् ॥ दातुंप्रसादंयक्षायवरभक्तायभावितम् ॥ ७८ ॥
भक्तोममवरारोहेतपसाहतकिल्बिषः ॥ अहोअसौवरंलब्धाअस्मत्तोभुवनेश्वरि ॥ ७९ ॥ सनत्कुमारउवाच ॥ एवमुक्त्वाततोदेवःसहदेव्याजगत्प
तिः॥ जगामयक्षोयत्रास्तेकृशोधमनिसन्ततः ॥ ८० ॥ तंदृष्ट्वाप्रणतंभक्त्याहरिकेशंवृषध्वजः ॥ दिव्यंचक्षुरदात्तस्मैयेनापश्यतशंकरम् ॥ ८१ ॥
अथयक्षस्तदातत्रशनैरुन्मील्यलोचने ॥ अपश्यत्सगणंदेवंवृषयुक्तमुमापतिम् ॥ ८२ ॥ देवदेवउवाच ॥ वरंददामितेपुत्रत्रैलोक्येदुर्लभंप्रभो ॥ साम
र्थ्यश्चशरीरस्ययाहिमांविगतज्वरः ॥ ८३ ॥ सनत्कुमारउवाच ॥ अतःसलब्ध्वातुवरंशरीरेणाक्षतेनतु ॥ पादयोःप्रणतस्तस्थौकृत्वाशिरसिचाञ्जलिम्
॥ ८४ ॥ उवाचाथतथाचैनंवरदोऽस्मीतिचोदितः ॥ भगवन्भक्तिमव्यग्रांत्वय्यनन्यांविधत्स्वमे ॥ ८५ ॥ अन्नदत्वञ्चलोकानांगाणपत्यंतथाक्षयम् ॥
अविमुक्तेवनेस्थानंपश्येयंसर्व्वदायदा ॥ ८६ ॥ एतदिच्छामिदेवेशवरंदत्तमनुत्तमम् ॥ देवदेवउवाच ॥ जरामरणनिर्म्मुक्तःसर्व्वशोकविवर्ज्जितः ॥८७॥
भविष्यसिगणाध्यक्षोवरदःसर्व्वपूजितः ॥ अजेयश्चापिसर्व्वेषांयोगैश्वर्य्यसमन्वितः ॥ ८८ ॥ अन्नदश्चापिलोकेभ्यःक्षेत्रपालोभविष्यसि ॥ महाबलोमहा
सत्त्वोब्रह्मणोममचप्रियः ॥ ८९ ॥ त्र्यक्षश्चदण्डपाणिश्चमहायोगीतथैवच ॥ उद्भ्रमःसम्भ्रमश्चैवगणौतेपरिचारकौ ॥ ९० ॥ तवाज्ञयाकरिष्येतेलोकस्यो
द्भ्रमसम्भ्रमौ ॥ सनत्कुमारउवाच ॥ एवञ्चभगवांस्तत्रयक्षंकृत्वागणेश्वरम् ॥ ९१ ॥ जगामवासंदेवेशोरुद्रावासंसुरेश्वरः ॥ ९२ ॥ इतिश्रीशैवेमहापुरा
णेसनत्कुमारसंहितायांदण्डपाणिवरप्रदानेद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ सनत्कुमारउवाच ॥ आश्चर्य्यंतत्रयद्वृत्तंपञ्चायतनमुत्तमम् ॥ पुराकल्पेद्वि
जश्रेष्ठतदिहैकमनाःशृणु॥१॥चरतेतत्रमण्डूकीपञ्चायतनमुत्तमम्॥निर्म्माल्यंदेवदेवस्यओङ्कारेश्वरसन्निधौ॥२॥पञ्चत्वमागताब्रह्मन्कालेनकतिनाञ्जसा॥
जातिस्मरत्वंसम्प्राप्ताराज्ञःसुमनसोगृहे॥३॥यौवनन्तुयदाजातातदाराजासविस्मयः॥दातुकामस्तदाराजातयाचविनिवारितः॥४॥ वैराग्यंमनसागत्वावा
राणस्यामुपागता॥ओङ्कारंदृष्टवान्देवंपञ्चायतनवासिनम्॥५॥तत्रैवचतनुंत्यक्त्वाशिवलोकमुपागता॥मण्डूकीचापितत्रैवसिद्धिञ्चैवमुपागता॥६॥ एतत्ते
कथितंब्रह्मन्यद्वृत्तंतत्रवैपुरा ॥ अन्यच्चैवतुयद्वृत्तंतस्मिन्नायतनेमहत् ॥७॥ आसीत्प्रतापमुकुटोराजापरमधार्म्मिकः॥तस्यपुत्रस्तुधर्म्मात्माआत्मज्ञानसम
न्वितः ॥ ८ ॥ कालेनगच्छताशश्वद्राजापुत्रंतमुक्तवान् ॥ दारसंग्रहणंपुत्रत्वयाकार्य्यञ्चशाश्वतम् ॥ ९ ॥ येनाहंनिर्व्वृतोवत्सभवामिचयथासुखम् ॥
एवमुक्तस्तदातेनसपुत्रःपितरंब्रवीत् ॥ १० ॥ मयानशक्यतेकर्तुंतवाज्ञापरिपालनम् ॥ राजोवाच ॥ कुरुमद्वचनंपुत्रप्रभुरस्मिपितातव ॥ ११ ॥ मानि
मज्जीःकुलंमह्यंनरकेसततंक्षणात् ॥ सहितांपितुरादेशंश्रुत्वानृपसुतोबली ॥१२॥ प्राहसंस्मृत्यपौराणींसंसारस्यविचित्रताम् ॥ शृणुतातवचोमह्यंतत्त्ववा

क्यंसहेतुकम् ॥१३॥ मयाजन्मसहस्राणिजरामृत्युशतानिच ॥ प्राप्तानिदारसंयोगवियोगानिचसर्व्वशः ॥ १४ ॥ तृणगुल्मलतावल्लीसरीसृपमृगद्विजाः ॥
पशुस्त्रीपुरुषाद्यानिप्राप्तानिगतयोमया ॥ १५ ॥ गणाःकिन्नरगन्धर्व्वविद्याधरमहोरगाः ॥ यक्षगुह्यकरक्षांसिदानवाप्सरसस्तथा ॥ १६ ॥ तत्रेश्वरेश्वर
त्वञ्चप्राप्तंतातपुनःपुनः ॥ सृष्टस्तुबहुशःसृष्टौसंहारेचापिसंहृतः ॥ १७ ॥ दारसंयोगयुक्तस्यजाताचैवविडम्बना ॥ नराज्यंद्रव्यमुत्सृज्यसिद्धिर्भवतिस
र्व्वदा ॥ १८ ॥ शरीरंद्रव्यमुत्सृज्यसिद्धिर्भवतिसर्व्वदा ॥ राज्यद्रव्यविमुक्तस्यशरीरेतातगृह्यते ॥ योधर्म्मोयत्सुखंतातद्विषतांयत्तुतत्तथा ॥ १९ ॥
द्व्यक्षरस्तुभवेन्मृत्युरक्षरंब्रह्मशाश्वतम् ॥ ब्रह्ममृत्यूउभौराजंस्तस्मान्मन्येव्यवस्थिता ॥ २० ॥ अतर्क्यमाणौभूतानियोजयेतामसंशयम् ॥ अविना
शोऽस्यसर्व्वस्यनिधनंयादिवापितः ॥ २१ ॥ भित्त्वाशरीरंभूतानामहिंसांप्रतिपद्यते ॥ लब्ध्वावापृथिवींसर्व्वांसहस्थावरजङ्गमाम् ॥ २२ ॥ ममत्वंयस्य
नैवस्यात्किंतयासकरिष्यति ॥ अथवासततंराजन्वनेवन्येनजीवतः ॥ २३ ॥ द्रव्येतुममतायस्यमृत्योर्वश्येसवर्त्तते ॥ वीक्षान्तराणांशत्रूणांस्वभावा
यस्यमेमतिः ॥ २४ ॥ यस्तुपश्यतितद्भूतंमुच्यतेमहतोभयात् ॥ कामात्मानंप्रशंसन्तिलोकेकामात्मनोजनाः ॥ २५ ॥ तीर्थानिवेदाध्ययनंकाचिद
स्तिप्रवर्त्तना ॥ केचित्तपश्चकामेनकर्म्मणावाऽमृतोत्सुकः ॥ २६ ॥ ततोऽहंकामयेनित्यंपंचायतनमीश्वरम् ॥ अविमुक्तेस्थितंदेवमोङ्कारंपरमंपदम् ॥
॥ २७ ॥ तत्रमांप्रस्थितंविद्धिपंचायतनमीश्वरम् ॥ इतस्तृतीयेयद्वृत्तंतस्मिन्नायतनेमम ॥ २८ ॥ कथयामिसमासेनतीर्थमाहात्म्यमुत्तमम् ॥ २९ ॥
अतीत्यजन्मानिबहूनितातभूदेवगन्धर्व्वमहोरगाणाम् ॥ विद्याधराणांखगकिन्नराणांजातोऽस्म्यहंवैश्यकुलेविशुद्धे ॥ ३० ॥ ततोममाभूदचलाचभक्तिः
शर्व्वेशिवेशंकरेत्रिपुरघ्ने॥व्रतोपवासैर्विविधैःस्तवैश्चसन्तोषितःशूलशिताग्रधारी॥३१॥एवंहिसुमहत्कालंभ्रमतस्तीर्थकारणात् ॥ ततःकदाचिद्बह्वंतदवि
मुक्तंगतोऽस्म्यहम्॥३२॥ओङ्कारंदृष्टवांस्तत्रपंचायतनवासिनम्॥रुद्रावासकृतस्थानंदेवदेवस्यचाग्रतः॥३३॥रात्रिजागरणंतत्रवैशाखेचकृतंमया॥ तत्स
र्व्वंचमयादृष्टंदेवगन्धर्व्वकिन्नरैः॥३४॥तेनैवकर्म्मणाजातोभवतोऽहंगृहेशुभे ॥तत्रयास्याम्यहंशीघ्रंरचितोऽयंमयांजलिः ॥३५॥ ओंकारेश्वरदेवस्यप्रसादे
नमयापितः॥प्रादुर्भूतंमहाज्ञानंदुर्लभंयत्सुरैरपि॥३६॥संसारेचप्रपश्यामिआत्मानंप्रकृतेःपरम्॥ तत्रचैवगमिष्यामिअविमुक्तेतुईश्वरम् ॥ ३७ ॥ ओंकारं
निष्कलंब्रह्मपञ्चायतनवासिनम्॥द्रक्ष्यामिशंकरंदेवंयंदृष्ट्वानोद्भवःपुनः॥३८॥एवमुक्तस्तुपुत्रेणपितावचनमब्रवीत्॥ राजोवाच ॥ अहंतत्रगमिष्यामियत्र
त्वंप्रस्थितोऽनघ ॥ ३९ ॥ जातिस्मरत्वंसम्प्राप्यउद्विग्नमानसोह्यहम् ॥ संसारेचसदापुंसांवैराग्यंजायतेपुनः ॥ ४० ॥ तदागोत्रकृतांवृत्तिंयथाजातिकृ
तामपि ॥ प्रियाप्रियाणिसर्व्वाणिनिर्म्ममोनिरहंकृतिः ॥४१॥ त्यक्त्वाकर्म्माणिसर्व्वाणिआत्मशुद्धानिधारयेत् ॥ सन्न्यस्यसर्व्वकर्म्माणिअविमुक्तंततोत्र

जत् ॥ ४२ ॥ अविमुक्तप्रविष्टस्यविहारोनैवविद्यते ॥ कृत्वापिक्षेत्रसन्न्यासमविमुक्तमुपासकाः ॥ ४३ ॥ शान्तादान्ताजितक्रोधास्तितिक्षापरमायुधाः ॥
आत्मन्यात्मानमाधायओंकारेश्वरसर्व्वगम् ॥ ४४ ॥ सर्व्वभूतेषुचात्मानंपश्यन्तिविजितेन्द्रियाः ॥ अव्यक्तलिङ्गिनश्चैवतस्मिन्क्षेत्रउपासकाः ॥ ४५ ॥
सद्भावभाविताःसर्व्वेजपन्तिशतरुद्रियम् ॥ विशन्तिपरमंदेवमोंकारंपरमंपदम् ॥ ४६ ॥ सर्व्वेवेदायत्पदमामनन्तितपांसिसर्व्वाणिचयद्वदन्ति ॥ यदि
च्छन्तोब्रह्मचर्य्यंचरन्तितत्पदमविमुक्तेनिहितम् ॥४७ ॥ एवमुक्तस्तदाराजाओंकारंमनसास्मरन् ॥ राज्येऽभिषेचयामासपुत्रंचैवकनीयसम् ॥ ४८ ॥
संस्मरन्पूर्व्वचरितंततोनिर्व्वेदमागतः ॥ प्रणम्यमनसादेवंपञ्चायतनवासिनम् ॥४९॥ ओंकारंपरमंब्रह्मवाराणस्यामुपागतम् ॥ पूर्व्वजन्मकपोतोऽसौत
स्मिन्नायतनेसदा ॥ ५० ॥ प्रदक्षिणंप्रकुरुतेओंकारंदेवमीश्वरम् ॥ स्तुवंश्चपरमंदेवमोंकारंचस्तवेनतम् ॥ ५१ ॥ पञ्चत्वमागतस्तत्रराजयोनिसमागतः ॥
आराधयन्तौदेवेशंपञ्चायतनमीश्वरम् ॥ ५२ ॥ स्तुवन्तौपरमंदेवमोंकारंपरमेश्वरम् ॥ व्यासउवाच ॥ कीदृशश्चव्रतंताभ्यांकृतंदेवस्यशूलिनः ॥
॥ ५३ ॥ यस्यचोच्चारमात्रेणआत्मासम्प्रकटीभवेत् ॥ सनत्कुमारउवाच ॥ शृणुव्यासपरंगुह्यंरहस्ययोगमुत्तमम् ॥ ५४ ॥ मृत्युंजयंपरंयोगमविमुक्ते
स्थितंपरम् ॥ ओंकारजंशिवपदमनादिमजमव्ययम् ॥ ५५ ॥ स्वयम्भुवमनिर्देश्यंकारणंपरमंविभुम् ॥ भवाभावस्वभावस्थमचिन्त्यमचलंपदम् ॥
॥ ५६ ॥ निर्भयंनिर्म्मलंनित्यंनिरपेक्षमनाश्रयम् ॥ निस्तुतिर्निर्नमस्कारांनिःसङ्गंनिरुपद्रवम् ॥ ५७ ॥ निरंजनंनिरुत्पादंनिरालम्बञ्चनिर्म्मलम् ॥ अ
पवर्गभविज्ञेयमनौपम्यमनामयम् ॥ ५८ ॥ अनित्यंकारणंदेवमलग्नंसर्वतोमुखम् ॥ नमस्कृत्यमहादेवंविशुद्धंज्ञाननिर्म्मलम् ॥ ५९॥ शिवंसर्व्वात्मकंसू
क्ष्ममनादिंपञ्चदैवतम् ॥ आत्माधिकोपविषयंस्तुतमाचारवर्ज्जितम् ॥६०॥ शब्दावकाशरहितंब्रह्मनिर्व्वाणकेवलम् ॥ शंकाविशेषनिर्म्मुक्तंविद्यापतितमो
चनम् ॥ ६१ ॥ चितंतेजोह्यनन्ताख्यंस्थितंस्थावरवर्ज्जितम् ॥ निष्क्रम्यचात्मनात्मानंप्रकटंज्ञानदीपकम् ॥ ६२ ॥ मुक्तोपदेशविज्ञातंप्रत्यस्तमितविग्र
हम्॥आत्मोपलब्धिविज्ञेयंचित्तांचित्यवलोकनम् ॥ ६३ ॥ समागमविनिर्म्मुक्तंबहिरन्तश्चकेवलम् ॥ नित्यावकाशरहितंशब्दाशब्दाद्यगोचरम् ॥ ६४॥
सकृद्विस्तीर्णंविपुलंदेवदेवंसुरात्मकम् ॥ हेतुप्रमाणरहितंकल्पनाजालवर्ज्जितम् ॥ ६५ ॥ चिन्ताविलोकविषयंव्योमवत्प्रबलंस्थितम् ॥ अनिस्पन्दंमहा
त्मानंनिरानन्दावलोकनम् ॥६६॥ लोकालोकनमार्गस्थमनेकाकारवर्ज्जितम् ॥ स्वभावंभावनाग्राह्यंभावातीतंसुलक्षणम् ॥६७॥ वाक्यापवादरहितंनि
ष्प्रपंचात्मकंशिवम् ॥ ज्ञानज्ञेयावलोकस्यहेतुंपरमकारणम् ॥६८॥ अनाहतंसर्व्वगतंशब्दादिगुणसम्भवम् ॥ शब्दब्रह्मगतंशान्तंशब्दशब्दान्तमास्पदम्
॥ ६९ ॥ शब्दातिरिक्तविषयंसर्व्वज्ञानपदेस्थितम् ॥ अनादिमच्युतंदिव्यंप्रमाणातीतगोचरम् ॥ ७० ॥ अधश्चोर्द्ध्वगतंनित्यंजीवाख्यंहेतुसंस्थितम् ॥

हृदादिद्वादशान्तस्थंप्राणापानोदयाष्टकम् ॥७१॥ अग्राह्यमिन्द्रियात्मानंनिष्कलंकात्मकंविभुम् ॥ स्वरादिव्यंजनातीतंवर्णादिपरिवर्ज्जितम् ॥७२॥
वाचामवाच्यविषयमोंकाराद्दूर्द्ध्वरूपिणम् ॥ अप्रतर्क्यमतत्कार्य्यंकलनाकालवर्ज्जितम् ॥७३॥ निःशब्दंनिश्चलंसौम्यंदेहातीतंपरात्परम् ॥ भूतावगाहर
हितंनिःशब्दमेकधास्थितम् ॥ ७४ ॥ अचिन्त्यंपरमंसूक्ष्मंपञ्चतन्त्रादिसंवृतम् ॥ अप्रमेयमनन्ताक्षमक्षयंकामरूपिणम् ॥ ७५ ॥ प्रभवंसर्व्वभूतानां
बीजांकुरसमुद्भवम् ॥ व्यापकंसर्व्वकामाख्यमक्षरंपरमंमहत् ॥ ७६ ॥ स्थूलसूक्ष्मविभागस्थंव्यक्ताव्यक्तंसनातनम् ॥ आदिमध्यान्तरहितमनादिनि
धनंमहत् ॥ ७७ ॥ महाभूतंमहाकायंशिवंनिर्व्वाणभैरवम् ॥ योगक्रियाविनिर्म्मुक्तंमृत्युंजयमहेश्वरम् ॥ ७८ ॥ सर्व्वोपसर्गरहितंसर्व्वतःसूर्य्यसन्नि
भम् ॥ अव्यक्तंपरतोनित्यंकेवलंद्वैतवर्ज्जितम् ॥ ७९ ॥ अनन्यतेजःसंक्रांतमविमुक्तनिवासिनम् ॥ भुविसूर्य्यसमप्रख्यंपञ्चायतनमीश्वरम् ॥ ८० ॥
शरण्यंदेवमीशानमोङ्कारंशिवरूपिणम् ॥ देवदेवंमहादेवंपंचवक्त्रंवृषध्वजम् ॥ ८१ ॥ सदाशिवंविरूपाक्षंशूलहस्तंजटाधरम् ॥ हृत्पद्मकोशमध्यस्थं
नमस्यामिशिवात्मकम्॥८२॥वाराणस्यांस्थितंदेवमोङ्कारंपरमंपदम्॥ भावकंसर्व्वजन्तूनांनमस्यामिनमोनमः॥८३॥सनत्कुमारउवाच॥ एवन्तुस्तुवत
स्तस्यदिव्यंतेजोबभूवह॥वह्निभास्करसङ्काशंसूर्य्यकोटिसमप्रभम्॥८४॥स्तोत्रान्तेत्वत्रसञ्जातेसराजासस्तुतस्तदा॥ एकदोङ्कारनिर्दिष्टंस्तोत्रंशम्भोःप
ठिष्यति॥८५॥अविमुक्तेमहाक्षेत्रेसर्व्वात्मनाभिसंस्कृतः॥तस्यसिद्धिःसदाव्यासदिव्याकरतलेस्थिता॥८६॥ब्राह्मणःक्षत्रियोवैश्यःशूद्रोऽपियदिवापठेत्॥
मुच्यतेसर्व्वपापेभ्यःश्रद्धावान्यःस्तवेभवेत् ॥ ८७ ॥ वेदाहमेतंपुरुषंमहान्तमादित्यवर्णंतमसःपरस्तात् ॥ तमेवविदित्वानभवेन्मृत्युर्नान्यःपन्थाविद्य
तेहिजनानाम् ॥ ८८ ॥ यदिवक्त्रसहस्राणिलक्षकोटिर्भवन्तिहि ॥ तदाचोङ्कारदेवस्यशक्यंमाहात्म्यमीरितुम् ॥ ८९ ॥ इतीरितंतेतुमयासमस्तंमाहा
त्म्यमोङ्कारकृतैकदेशम् ॥ शक्यंनवक्त्रैर्बहुभिःसहस्रैरपीहकेनापिसुखेनवक्तुम् ॥ ९० ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायामोङ्कारेश्वरव
र्णनंनामत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ व्यासउवाच ॥ अहोकथेयंसुभगामहापुण्यफलोदया ॥ नतृप्तिमधिगच्छामिओङ्कारस्यकथांपराम्
॥ १ ॥ शृण्वंस्ततःपुनर्ब्रह्मन्यद्यनुग्रहवानसि ॥ तस्यमाहात्म्यमाचक्ष्वविस्तरेणतपोधन ॥ २ ॥ सनत्कुमारउवाच ॥ शृणुव्यासकथांदिव्यां
पौराणींवेदसम्मिताम् ॥ शम्भोर्गिरिसुतादेवीभार्य्याकालीतिविश्रुता ॥ ३ ॥ अत्यर्थदयितासाध्वीशीलवृत्तगुणान्विता ॥ तयासहारमद्देशेअवि
मुक्तेपुरोत्तमे ॥ ४ ॥ पञ्चायतनसंस्थस्यकालोयातिद्विजोत्तम ॥ सदानित्यक्रियार्थञ्चसोपास्तेशङ्करोवशी ॥ ५ ॥ सन्ध्यांपूर्व्वांपश्चिमाञ्चओङ्कारे
संस्थितोहरः ॥ गन्धर्व्वाप्सरसश्चैवविद्याधरगणास्तथा ॥ ६ ॥ नृत्यमानाःस्थिताःसर्व्वेगीतवादित्रसंवृताः ॥ शतवर्षसहस्रेणस्वेदभूतागणास्तथा ॥ ७ ॥

प्रेतभूतास्तथादेवाद्दष्टाननृतुरुत्तमम् ॥ तत्तद्रासश्चमुश्चान्तिस्खलन्तश्चपदेपदे ॥ ८ ॥ तंताद्दशमथोद्दष्ट्वागौरीवचनमब्रवीत् ॥ किंविरू
पाक्षनृत्योऽयंममविस्मयकारकः ॥ ९ ॥ अनेकैर्बहुभिः स्थानैर्द्दष्टंनृत्यंमयापुरा ॥ मन्दराद्यैर्गिरिवरैस्तथापर्य्यन्तभूधरैः ॥ १० ॥ कैलासे
नैवसंद्दष्टंकदाचित्तुमयापुरा ॥ कारणंकथयत्वद्ययद्यनुग्रहभागहम् ॥ ११ ॥ एवमुक्तस्तदादेवोदेव्याचपरमेश्वरः ॥ उवाचप्रहसन्देवोदेव्याःसमुखपङ्कज
म् ॥ १२ ॥ उद्यम्यपाणिनादेवःस्वंगुलेनमहात्मना ॥ सान्त्वयन्प्राहवचनमिदंसान्त्वेनतन्महत् ॥ १३ ॥ विशिष्टंकारणंमेऽत्रस्थानेगिरिसुतेशृणु ॥
योऽसौपरावरोदेवःसाक्षिकःपरिकीर्तितः ॥ १४ ॥ नादाख्यःसुव्रतेभद्रेसोऽस्मिन्स्थानेस्थितःस्वयम् ॥ एतदत्राद्वयंब्रह्मपंचास्यंसंस्थितंप्रभुम् ॥ १५ ॥
पंचपंचस्थितंदेवंपंचायतनवासिनम् ॥ तेननृत्याम्यहंदेविपरमानन्दमास्थितः ॥ १६ ॥ ब्रह्माण्डोदरवर्त्तीनितीर्थानिगिरीशोद्भवे ॥ तेषामत्यधिकंस्था
नंपंचायतनमुत्तमम् ॥ १७ ॥ ममचाप्यधिकाप्रीतिर्येनकार्य्येणतच्छृणु ॥ योऽसौपञ्चवनेलोकआनन्दोब्रह्मणःपरः ॥ १८ ॥ सोऽयंस्थानेपरेदेविमन्त
व्योनात्रसंशयः ॥ अस्मिन्स्थानेस्थितस्यापिपुरुषस्याजितात्मनः ॥ १९ ॥ दिव्यंचक्षुःप्रवर्तेतयेनपश्यत्यसौपरम् ॥ प्रत्यक्षंज्ञातवान्भद्रेपुरुषस्यच
तुर्भुजः ॥ २० ॥ त्रिनेत्रंशूलहस्तंचललाटाक्षंवृषध्वजम् ॥ द्रक्ष्यन्तिमानवाःपूर्व्वंपञ्चायतनसंस्थिताः ॥ २१ ॥ शिवलोकस्यसञ्चारंपञ्चायतनसंस्थित
म् ॥ रहस्यंसर्व्वजन्तूनांपञ्चायतनमुत्तमम् ॥ २२ ॥ सर्व्वभूतकलौदेविअविमुक्तेरतिंप्रति ॥ नराणामल्पबुद्धीनांविषयाक्रांतचेतसाम् ॥ २३ ॥ अंतर्भू
तंतुसंस्थानंवेदशास्त्रबहिष्कृताः ॥ शांतादांताजितक्रोधाःपञ्चायतनपूजया ॥ २४ ॥ सद्भावभाविताःसर्वेद्रक्ष्यंतिपरमेश्वरम् ॥ यैस्तुजन्मान्तरेदेविपु
राआराधितोह्यहम् ॥ २५ ॥ तेविदंतिपरंस्थानमविमुक्तंपरंपदम् ॥ ब्रह्माण्डोदरमध्येचयानितीर्थानिसुव्रते ॥ २६ ॥ वाराणस्यांगमिष्यंतिवैशाखस्य
चतुर्दशीम् ॥ द्रक्ष्यन्तिपरमंदेवंपञ्चायतनवासिनम् ॥ २७ ॥ देवाश्चऋषयश्चैवरुद्राःपाशुपताश्चये ॥ परिवार्य्यस्थिताःसर्व्वेओङ्कारेशंतुसुव्रते ॥ २८ ॥
मत्स्योदर्य्यास्तुपरितआदिदेवस्तुकेशवः ॥ यस्मिन्क्षेत्रेस्वयम्भूश्चस्थितःपूर्व्वेणकेशवः ॥ २९ ॥ रुद्राणाञ्चैवकोटिस्तुकाशीपुर्य्येवसंस्थिता ॥ ध्याय
मानाचओङ्कारंस्थितातस्यैवदक्षिणे ॥ ३० ॥ वामदेवश्चसावर्णिरघोरःकपिलःपरे ॥ देहल्याख्यस्तुदेवस्यास्थितोदेवस्यचोत्तरे ॥ ३१ ॥ ध्यायमानस्तु
ओङ्कारंपञ्चायतनवासिनम् ॥ सप्तकोट्यस्तुमंत्राणांसर्व्वेषांतपसाधिकः ॥ ३३ ॥ कृत्तिवासाःस्थितोभद्रेतस्यदेवस्यपश्चिमे ॥ एवंरक्षन्तितत्स्थानंमदीयंशा
श्वतंशुभम् ॥ ३३ ॥ मनोबुद्धिस्त्वहङ्कारःकामलोभौतथापरे ॥ एभ्योरक्षन्तिसततंपञ्चायतनवासिनम् ॥ ३४ ॥ ओङ्कारदर्शनादेवगतिंप्राप्नोतिदुर्लभा
म् ॥ ३५ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायामोङ्कारनिर्णयोनामचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ सनत्कुमारउवाच ॥ अस्मिन्स्थानेपुरावृ

त्तंतदिहैकमनाःशृणु ॥ रथन्तरेपुराकल्पेराजासीत्पुष्पवाहनः ॥ १ ॥ नाम्नालोकेषुविख्यातस्तेजसासूर्य्यसन्निभः ॥ तपसातस्यतुष्टेनदेवदेवेनशम्भु
ना ॥ २ ॥ कमलंकाञ्चनंदत्तंयथाकामगमंमुने ॥ सतेनविचरँल्लोकान्सप्तद्वीपनिवासिनाम् ॥ ३ ॥ द्वीपानिसुरलोकंचयथेष्टंविचरन्सदा ॥ कल्पादौसप्त
द्वीपेषुतस्यपुष्करवासिनः ॥ ४ ॥ तस्यनाम्नातुतद्वीपंपुष्करद्वीपमुच्यते ॥ तदेवब्रह्मणादत्तंयानमस्यमनोजवम् ॥ पुष्पवाहनमित्याहुस्तस्मात्तंदेव
दानवाः ॥ ५ ॥ नागम्यमस्यास्तिजगत्त्रयेऽपिब्रह्माम्बुजस्यापिजगत्रयेऽपि ॥ पत्नीचतस्याप्रतिमानरूपानारीसहस्रैरभितोऽभिमान्या ॥ ६ ॥ नाम्नाच
लावण्यवतीबभूवसापार्वतीचेष्टतमाभवस्य ॥ तस्यात्मजानामयुतंबभूवधर्म्मात्मनामग्र्यधनुर्द्धराणाम् ॥ ७ ॥ तदात्मनःसर्व्वमवेक्ष्यराजामुहुर्म्मुहुर्वि
स्मयमाससाद ॥ सोऽप्यागतंवीक्ष्यमुनिप्रवीरंप्रचेतसंवाक्यमिदंबभाषे ॥ ८ ॥ कस्माद्विभूतिरमलाचममाद्यपूजाजाताचसर्व्वविदितामममसुन्दरीयम् ॥
भार्य्यामामालपतपसैवसुतोषितेनदत्तंममाम्बुजगृहंचसुधीरधात्रा ॥ ९ ॥ यस्मिन्प्रविष्टमपिकोटिशतंनृपाणांसामात्यकुञ्जररथौघधनावृतानाम् ॥ नाल
क्ष्यतेक्कगतमम्बररत्नपूर्णवीथीगणैरथविचित्रमनुत्तमञ्च ॥ १० ॥ तस्मात्त्वमन्यजनुषीववरोद्भवेनधर्म्मादिकंकृतमशेषजनाभिगम्यम् ॥ यद्यस्तितत्कथ
यमेप्रविनाम्यकीर्त्तेर्मद्वीर्य्यमेतदखिलञ्चवदप्रचेतः ॥ ११ ॥ मुनिरप्यवोचतभवान्तरितांपृथिवीपतेननुनिशम्यकथाम् ॥ तवजन्मलुब्धककुलेपरुषा
मतिरप्यनेकजनघातकरी ॥ १२ ॥ वपुरप्यवृत्तिपरुषंकुनखाभरणंकुसन्धिनवनेसुकृतम् ॥ नचसूनुरभून्नचबन्धुजनोनपितास्वसानजननीचतथा॥ १३ ॥
अभूदनावृष्टिरतीवरौद्राकदाचिदाहारमविन्दताते ॥ क्षुत्पीडितेनभ्रमतानकिञ्चिदासादितंवन्यफलादिसद्यः ॥ १४ ॥ अथाभ्यपश्यन्महदम्बुजाढ्यंसरोवरं
पङ्कपरीतरोधः ॥ पद्मान्यथादायततोबहूनिगतःपुरंसोऽविमुक्तनामधेयम् ॥ १५ ॥ तन्मूल्यलाभायपुरंसमस्तंभ्रान्तंतदाशेषमभूत्तदानीम् ॥ १६ ॥ उप
विष्टस्त्वमेकस्मिन्सभार्य्योभवताङ्गणे ॥ रुद्रावासेतुसंस्थायत्वयारात्रौमहाश्रुतिः ॥ १७ ॥ सभार्य्यस्तुसभगवांस्तत्रासौमङ्गलध्वनिः ॥ तत्रदृष्टस्त्वया
देवोदिव्याश्वर्य्यविभूतिमान् ॥ १८ ॥ ओङ्कारपरमंब्रह्मदेवगन्धर्व्वकिन्नरैः ॥ ब्राह्मणैर्वेदतत्त्वज्ञैःसिद्धैःपाशुपतैःपरैः ॥ १९ ॥ हृत्पद्मकोषसंहारैर्मूर्द्ध
न्यंजलिभिस्तथा ॥ तद्भावगतसङ्कल्पैरोङ्कारगतमानसैः ॥ २० ॥ अन्यैश्चविविधैःसिद्धैस्तस्मिन्देशउपस्थितः ॥ ध्यायमानःपरंब्रह्मओंकाराख्यंतु
ईश्वरम् ॥ २१ ॥ त्वयाद्यावगतंसर्व्वंपञ्चायतनदर्शनात् ॥ भक्तिश्चैवतदाजातासापत्यस्यनरेश्वर ॥ २२ ॥ किमेभिःकमलैःकार्य्यवरंशम्भुरलङ्कृतः ॥
निवेदितास्तथापुष्पाःपञ्चायतनवासिने ॥ २३ ॥ दीयमानश्चदेवायसुवर्णस्यशतंपरम् ॥ नगृहीतंततःक्षेत्रेमहासत्त्वमहात्मना ॥ २४ ॥ तत्रजागरणंचै
वप्रसङ्गेनत्वयाकृतम् ॥ प्रभातेचत्वयातस्मिन्दृष्टःशम्भुर्यदृच्छया ॥ २५ ॥ आश्चर्य्यपरमंमत्वातस्मिन्नायतनेस्थितः ॥ सम्मार्ज्जयन्सपत्नीकउपलेपनत

त्परः ॥ २६ ॥ कालेनगच्छतातत्ररुद्रावासपदेश्रुते ॥ पञ्चत्वंप्राप्तवांस्तत्रदेवदेवस्यसन्निधौ ॥ २७ ॥ अग्नौप्रविश्यसुश्रोणितदागृह्यकलेवरम् ॥
कर्म्मणातेनराजेन्द्रइयंव्युष्टिस्तवागता ॥ २८ ॥ सभवाँल्लुब्धकोजातःसपत्नीकोनरेश्वरः ॥ पुष्पानुकल्पनात्तस्माच्छङ्करस्यचपूजनात् ॥ २९ ॥
इयंव्युष्टिस्तथाजातापञ्चायतनपूजनात् ॥ ओंकारेश्वरमाहात्म्यादल्पेनतपसानृप ॥ ३० ॥ यथाकाशगतेसत्यञ्यर्यानेचतुर्म्मुखैः ॥ सन्तुष्टस्तवराजे
न्द्रब्रह्मरूपीचईश्वरः ॥ ३१ ॥ तस्माद्रक्षस्वराजेंद्रपुष्करंत्वंमहीतले ॥ अविमुक्तंसमासाद्यओंकारंशरणंव्रज ॥ ३२ ॥ प्रसादात्तस्यदेवस्यद्रष्टासिपदमै
श्वरम् ॥ इत्युक्तःसतुराजावैतेनैवतुमहर्षिणा ॥ ३३ ॥ रोमाञ्चसर्व्वगात्रस्तुहर्षाविष्टस्तमब्रवीत् ॥ जन्मान्तरंत्वयाख्यातंब्रह्मणांकुलवर्द्धन ॥ ३४ ॥
संसारेत्वत्समैःसङ्गःपुण्यभारात्तुजायते ॥ एवंप्रसाद्यतंविप्रंराजातुकृतनिश्चयः ॥ ३५ ॥ सपत्नीकोजगामाशुवाराणस्यांमहामुने ॥ शम्भोःप्रियतमेदे
शेपञ्चायतनमुक्तिदे ॥ ३६ ॥ मत्स्योदर्य्यास्तटेब्रह्मन्रुद्रावासस्यचोत्तरे ॥ दक्षिणांमूर्त्तिमास्थायओंकारस्तत्रसंस्थितः ॥ ३७ ॥ तत्रदेवह्रदोनामदे
वस्याग्रेस्थितःपुरा ॥ दुर्लभंचपरंस्थानंमानुषैरकृतात्मभिः ॥ ३८ ॥ रुद्रावासेतिविख्यातंपुण्यदंसर्व्वदेहिनाम् ॥ दिव्यैरपितदन्यैश्चकाम्यञ्चक्षेत्रपूज
कैः ॥ ३९ ॥ रुद्रावासेकृतस्नानःपञ्चायतनवासिनम् ॥ द्रक्ष्यामिईश्वरंदेवंयंदृष्ट्वानोद्भवःपुनः ॥ ४० ॥ मनोरथंप्रकुर्व्वन्तितस्यदेवस्यदर्शने ॥ दुराधा
र्य्यंदुःसहंचसमन्ताद्दुरतिक्रमम् ॥ ४१ ॥ कलिकल्मषभूतैस्तुयेषांनोपगतामतिः ॥ तेषांदृश्यश्चगम्यश्चतत्स्थानंशशिमौलिनः ॥ ४२ ॥ तीर्थंचस्थापि
तंव्यासदेवदेवेनशूलिना ॥ नकैश्चिद्दृश्यतेतत्रदृष्टेकलियुगेभये ॥ ४३ ॥ गन्धर्व्वैःकिन्नरैर्यक्षैरप्सरोभिस्तथोरगैः ॥ सिद्धैःसम्पूज्यतेतत्रदैत्यदानवनाय
कैः ॥ ४४ ॥ अन्तर्ध्यानशतैर्नित्यंपूज्यतेपरमेश्वरः ॥ तत्रगत्वातुराजार्षिःपरमंभावमास्थितः ॥ ४५ ॥ आराधयानोदेवेशंपञ्चायतनमीश्वरम् ॥
शान्ताकारंविनिर्वृत्यज्ञानदीपेनईश्वरम् ॥ ४६ ॥ दृष्ट्वोवासतुराजर्षिरोंकारंपरमंपदम् ॥ तेनव्याप्तमिदंविश्वंगिरेवपरमात्मना ॥ ४७ ॥ जपन्तियोगि
नोदेवितस्मिन्नेवलयंगताः ॥ एतत्तेकथितंदेवियन्मांत्वंपरिपृच्छसि ॥ ४८ ॥ वाराणस्यांतुओंकारंपञ्चायतनसंस्थितम् ॥ यद्दर्शनान्नरालोकेविज्ञानै
श्वर्य्यभाजनाः ॥ ४९ ॥ दुर्लभंतपसादेवियत्रास्तेदुर्लभंपदम् ॥ दानानांदुर्लभंदानंव्रतानांदुर्लभंपरम् ॥ ५० ॥ सर्व्वत्रदुर्लभंस्थानमित्याहभगवा
ञ्छिवः ॥ भक्त्यापरमयायुक्तोमहादेवंविशन्तिच ॥ ५१ ॥ पूजयिष्यन्तियेतत्रसर्व्वभावेनशंकरम् ॥ विज्ञेयास्तेगणाभद्रेमानुषींप्रकृतिंस्थिताः
॥ ५२ ॥ सिद्धयोगस्यसोपानमेषलक्ष्म्याश्चसुन्दरि ॥ वाराणस्यांतुयेकेचित्तीर्थान्यायतनानिच ॥ ५३ ॥ तेषांचैवतुसर्व्वेषामोंकारंप्रथमंस्मृ
तम् ॥ ओंकारदर्शनादेविसर्वेदृष्टानसंशयः ॥ ५४ ॥ सनत्कुमारउवाच ॥ ततःसभगवान्देवोदेवदेवस्यमातरम् ॥ उवाचदेविपश्येदमुद्यानं

निर्म्मितंपुरा ॥ ५५ ॥ यन्नास्तिदेवलोकेऽपिवस्तुसत्तत्कृतंमया ॥ तद्भूतमस्तिलोकेनयस्यनोविस्मयेन्मनः ॥ ५६ ॥ देव्युवाच ॥ एवं भवतुदेवेशयथात्थत्वंसनातन ॥ नहिमेऽन्यत्रगन्तव्यंतद्यतस्वमनोहर ॥ ५७ ॥ सनत्कुमारउवाच ॥ सहदेव्याततोव्यासवाराणस्यांवृषध्वजः ॥ देवोद्यानंहिदिदृक्षुर्भगवांस्तत्समन्ततः ॥ ५८ ॥ पूर्व्वस्मिंस्त्वसिगेभागेदेवोदेव्याःपरात्परः ॥ उद्यानंदर्शयामासनानाकिन्नरनादितम् ॥ ५९ ॥ नाना वृक्षसमाकीर्णंनानाकुसुमशोभितम् ॥ नानावृक्षसमांकीर्णंनानापक्षिविनादितम् ॥६०॥ चम्पकाशोकपुन्नागप्रियंगुशतसङ्कुलम् ॥ बिल्वार्ज्जुनकदम्बैश्च न्यग्रोधोदुम्बरैरपि ॥ ६१ ॥ गन्धवद्भिश्चकुसुमैर्जातिकेशरकेतकैः ॥ रम्यैःसुरभिपुष्पैश्चसदासेवितषट्पदैः ॥ ६२ ॥ संयुक्तंसर्व्वतःश्रीमद्वनंतद्राजस न्निभम् ॥ सतदुद्यानमासाद्यदेवींप्राहजगत्पतिः ॥ ६३ ॥ पश्यदेविविमानस्थान्किन्नरांश्चमनोरमे ॥ पारिजातकखण्डानितथाकल्पद्रुमाणिच ॥ ६४ ॥ ममलोकेचयेवृक्षाविष्णुलोकेचयेशुभे ॥ ब्रह्मणस्त्वपियेलोकेतान्सर्व्वान्पश्यसुव्रते ॥ ६५ ॥ इयंवाराणसीदेवीशिवलोकंसमाश्रिता ॥ अत्रहिभारतोद्या नेदेवदेवोजनार्द्दनः ॥ ६६ ॥ तिष्ठतेसर्व्वलोकेशोब्रह्माकमलसम्भवः ॥ परिवार्य्यस्थिताःसर्व्वाओंकारंचादिमुक्तिदम् ॥ ६७ ॥ अस्मिन्देशेसुरादेवि तिष्ठन्तिममशोभने ॥ ऊर्द्ध्वंगोलोकसंस्थानंगवांघासःस्वयम्भुवैः ॥ ६८ ॥ गवांयत्रसवर्णानांपयोमूर्द्ध्निसमापतत् ॥ ततोमयोर्द्ध्वंतोदृष्टागावस्ताःसोमपातु गाः ॥ ६९ ॥ ततस्तावीक्षितास्तत्रभीतागावस्तदाभवन् ॥ तेजसाममनिर्द्दग्धानैकवर्णाभृशार्द्दिताः ॥ ७० ॥ गावःपूर्व्वमिमादेविआसन्कपिलवंशजाः ॥ नैकवर्णास्तथाभूतायदेताःप्रोक्षितामया ॥ ७१ ॥ तंवैशरण्यतांगत्वामामेवंलोकमातरः ॥ आश्रिताःसोममागत्यसोमोत्पत्तिंसमाययुः ॥ ७२ ॥ प्रसाद यित्वातागावोब्रह्मामामब्रवीत्ततः ॥ प्रसादंकुरुदेवेशगावस्तवतुतेजसा ॥ ७३ ॥ नविनाशंयथायान्तितथाकुरुसुरार्च्चित ॥ ततोऽहमास्थितोदेविस्थानेऽ स्मिन्स्वयमेवतत् ॥ ७४ ॥ गोप्रेक्षकइतिख्यातोयस्ततःसर्व्वदैवतैः ॥ गोप्रेक्षकेश्वरंगत्वादृष्ट्वाचाभ्यर्च्यमानवः ॥ ७५ ॥ नदुर्गतिमवाप्नोतिकल्मषाच्चैवमुच्यते ॥ ततस्तावीक्षमाणास्तुप्रसन्नेसुव्रतेमयि ॥ ७६ ॥ ह्रदेसिश्चितुमारेभेशान्ताःस्थिरचरास्ततः ॥ यथाभक्त्याहिताःसर्व्वाब्रह्मणापिमहात्मना ॥ ७७ ॥ धन्याः पूज्याश्चमान्याश्चभविष्यथममाज्ञया ॥ कपिलाह्रदमाश्चर्य्यंतदाप्रभृतिकथ्यते ॥ ७८ ॥ अत्रापिस्वयमेवाहंवृषध्वजइतिस्मृतः ॥ सान्निध्यंकृतवान्देविसतां वैदृश्यतांगतः ॥ ७९ ॥ कपिलाह्रदविख्यातंदेवानामपिदुर्लभम् ॥ अस्मिन्नपिप्रदेशेतुदर्शितंब्रह्मणास्वयम् ॥ ८० ॥ शान्त्यर्थंधर्म्मलोकानांसर्व्वदुग्धं पयोऽमृतम् ॥ आसांक्षीरेणसंजातंह्रदमेतन्मनोहरम् ॥ ८१ ॥ रुद्रह्रदमितिख्यातंतेनदेवह्रदंशुभम् ॥ सर्वदैवरहंदेविअस्मिन्स्थानेप्रसादितः ॥ ॥ ८२ ॥ गच्छेयमहमीशेतिउपशान्तःस्थितस्तदा ॥ शिवोभूत्वास्थितोऽहंचपुण्यमस्यापिदर्शनम् ॥ ८३ ॥ प्रेक्षतेप्रयतस्तंवैसुरलोकमवाप्नुयात् ॥

अत्राहंब्रह्मणानीयस्थापितःपरमेष्ठिना ॥ ८४ ॥ ब्रह्मणाचापिसंगृह्यविष्णुनास्थापितःपुनः ॥ तंदृष्ट्वाब्रह्मणाविष्णुःप्रोक्तःसंविग्नचेतसा ॥ ८५ ॥ समानी
तमिदंलिङ्गंकस्मात्स्थापितवानसि ॥ तमुवाचपुनर्विष्णुर्ब्रह्माणंकुपितानलम् ॥ ८६ ॥ काममेवसदोत्पन्नंपरंभावमहाद्भुतम् ॥ मयैवस्थापितस्ते
नसाम्प्रतञ्चभविष्यति ॥ ८७ ॥ हिरण्यगर्भइत्येवततोऽभूवंसमाहितः ॥ दृष्टेचमयिदेवेशेशमनंकोव्रजेन्नरः ॥ ८८ ॥ पुनरेवततोब्रह्मामममलिङ्ग
मिदंततः ॥ स्थापयामासविधिवद्भक्त्यापरमयायुतः ॥ ८९ ॥ देवदेवंमहादेवंप्रहृष्टेनान्तरात्मना ॥ स्वयमेवमहादेविनयस्वेतिपुनःपुनः ॥ ९० ॥
ततोऽहंसर्व्वदेवानांपश्यतांतत्रतत्रच ॥ प्रविष्टोलिङ्गमध्येतुविष्णुब्रह्मप्रचोदितः ॥ ९१ ॥ माननार्थंहिताभ्यांचसूक्ष्मोभूत्वास्वलीलया ॥ सुनीलेश्वर
नाम्नावैलोकानांसर्व्वेनत्रगः ॥ ९२ ॥ तस्मात्सुनीलमित्येवंगुह्यक्षेत्रमिदंमम ॥ प्राणानित्यजतेयोऽत्रनपुनर्जायतेभुवि ॥ ९३ ॥ एवंदेविततोविष्णुर्ब्र
ह्मालोकपितामहः ॥ प्रसन्नमनसौद्वौचसुवर्णौसुमहात्मनौ ॥ ९४ ॥ अशक्यासागतिस्तस्ययोगिनांचैवशाश्वती ॥ अस्मिन्नपिस्थितादैत्याःसर्व्वेते
देवकण्टकाः ॥ ९५ ॥ व्याघ्ररूपंसमास्थायनिर्दग्धास्तेजसामया ॥ व्याघ्रेश्वरस्ततःख्यातोनित्यंतत्राहमास्थितः॥९६॥ नपुनर्दुर्गतिंयान्तिदृष्ट्वेमंव्याघ्र
मीश्वरम् ॥ उत्पलोविमलश्चैवद्वौदैत्यौब्रह्मणापुरा॥९७॥अवध्यौदैवतैःसृष्टौत्वयैवनिहतौशुभे ॥ तवाज्ञयाम्बिकेचात्रतस्येदंह्रदमास्थितम्॥९८॥निर्व्वा
णंनामविख्यातंसुरासुरनमस्कृतम् ॥ दृष्ट्वेमंमनुजःसत्यंपशुपाशैर्विमुच्यते ॥९९ ॥आदावत्राहमासाद्यप्रस्थितोगणपैःसह॥ ज्येष्ठस्थानमिदंतस्मादेतन्मे
पुण्यदर्शनम् ॥१००॥ दृष्ट्वातदमलंलिङ्गंज्येष्ठस्थानेसमास्थितम् ॥ नशोचतिपुनर्मर्त्त्योनास्थितोमृत्युजन्मनी॥१०१॥आसमंतात्तुदेवेशिलिङ्गानिस्था
पितानिच॥ दृष्ट्वातन्नियतोमर्त्त्योदेहभेदगुणोभवेत् ॥१०२॥ इदानीमहमागत्यस्वयमात्मन्यवस्थितः ॥ नचमुक्तंमयातस्मादविमुक्तमिदंततः ॥ १०३ ॥
अविमुक्तेतदादेविपुराकल्पेसुरासुरैः ॥ स्तुतोऽहंविविधैःस्तोत्रैर्महादेवेतिभावितैः ॥ १०४ ॥ उत्पन्नंममलिङ्गंतुभित्त्वाभूमिंसुरालयम् ॥ प्रदत्तंदर्शनंते
षांसर्व्वेषाञ्चदिवौकसाम् ॥ १०५ ॥ महादेवेतितेसर्व्वेध्यायमानाःसुरोत्तमाः ॥ वाराणस्यांततोदेविदेवानांमानितोऽभवम् ॥ १०६ ॥ क्षेत्रंवाराणसीपु
ण्यामुक्तिदासाभविष्यति ॥ अविमुक्तेश्वरंमांवैयोऽत्रद्रक्ष्यतिमानवः ॥ १०७ ॥ ममलोकेगतिस्तस्ययत्रतत्रमृतस्यच ॥ प्राणानिहतुसंन्यस्ययास्यन्ति
गतिमुत्तमाम् ॥ १०८ ॥ पित्रातेगिरिराजेनपुराहिमवतास्वयम् ॥ ममप्रियमिदंस्थानंज्ञात्वालिङ्गंप्रतिष्ठितम् ॥ १०९ ॥ शैलेश्वरमितिख्यातंदृश्यता
मिदमास्थितम् ॥ दृष्ट्वैवशैलजंदेविममलोकमवाप्नुयात् ॥ ११० ॥ पुरावाराणसीचेयंपुण्यभागाप्रमोदिनी ॥ क्षेत्रागतमलङ्कृत्यजाह्नव्यासहसङ्गता
॥ १११ ॥ वरणानामतत्रैवगङ्गाऽसिश्चसरिद्वरा ॥ स्थापितंसङ्गमेताभ्यांब्रह्मणालिङ्गमुत्तमम् ॥ ११२ ॥ सङ्गमेश्वरमित्येवख्यातंजगतिदुर्लभम् ॥ सङ्ग

मेश्वरंदृष्ट्वैवस्नात्वाचमनुजःशुचिः ॥ ११३ ॥ अर्च्चयेत्सङ्गमेशानंतस्यजन्मगतंपुनः ॥ इदमत्राद्भुतंक्षेत्रंनिवासंयोगिनांपरम् ॥ ११४ ॥ क्षेत्रमध्येचयत्रा
हंस्वयंभूत्वासमास्थितः ॥ मध्यमेश्वरमित्येवख्यातंसर्व्वैःसुरासुरैः ॥ ११५ ॥ सिद्धानांस्थानमित्येवंमदीयव्रतचारिणाम् ॥ योगिनांमोक्षलिप्सानांज
न्ममृत्यूनशोचति ॥ ११६ ॥ स्थापितंलिङ्गमेतच्चशुक्रेणभृगुसूनुना ॥ नाम्नाशुक्रेश्वरंपुण्यंसर्व्वसिद्धैःपुरार्च्चितम् ॥ ११७ ॥ दृष्ट्वेदंमानवःसद्योमुक्तः
स्यात्सर्व्वकिल्बिषैः ॥ मृतस्तुनपुनर्जन्मसंसारश्चलभेन्नरः ॥ ११८ ॥ पुराजम्बुकरूपेणअसुरौदेवकण्टकौ ॥ ब्रह्मणाचतलेनद्याघातितौदैवतैःसह ॥
॥ ११९ ॥ प्रतिषिद्धामयातेतुगोमायुवधशङ्किताः ॥ मयाजम्बुकरूपेणसादितादानवाःपुरा ॥ १२० ॥ ममाज्ञयापुनस्तैस्तुलिङ्गानिस्थापितानिच ॥
यस्यलिंगानिपुण्यानिसर्व्वकामप्रदानितु ॥ १२१ ॥ गम्भीरेश्वरविख्यातंलिंगंसूर्य्येणस्थापितम् ॥ कल्पेशिवंमहापुण्यंलिङ्गंयमभयापहम् ॥
॥ १२२ ॥ यमेनस्थापितंभद्रेदृष्ट्वावैतस्यमोक्षणम् ॥ ईशेनस्थापितंलिंगंयस्माद्गत्वाचक्रीडया ॥ १२३ ॥ यश्चेमंदेवमीशानंदृष्ट्वावाभ्यच्चर्यमानवः ॥
सद्यःपापैर्विनिर्म्मुक्तःपशुपाशैर्विमुच्यते ॥ १२४ ॥ ईशानस्तत्रतत्तस्मात्परंसुरनमस्कृतम् ॥ एवमेतानिपुण्यानिसन्तिस्थानानिसुव्रते ॥ १२५ ॥
कथितानिमहाक्षेत्रेगुह्यकस्थमिदंशृणु ॥ क्रोशंक्रोशंचतुर्द्दिक्षुक्षेत्रमेतत्प्रकीर्त्तितम् ॥ १२६ ॥ योजनंविधिक्षेत्रस्यमृत्युकालेऽमृतप्रदम् ॥ महानदी
गिरिस्थंमांकेदारेचवरेस्थितम् ॥ १२७ ॥ गणत्वंलभतेदृष्ट्वास्वयंमोक्षमवाप्स्यति ॥ गाणपत्यंततोयातिगतिःसामुक्तिरुत्तमा ॥ १२८ ॥ ततोमहालयो
यस्मात्केदारान्मुक्तिमाप्नुयात् ॥ व्यासउवाच ॥ उमाहरौतुदेवेशौचक्रतुर्यंच्चसन्ततम् ॥ १२९ ॥ तन्मेसर्व्वमशेषेणकथयस्वमहामुने ॥ सनत्कु
मारउवाच ॥ उमाहरौतुसंगम्यपरस्परमनिन्दितौ ॥ १३० ॥ शिलादस्यात्मजंपुत्रंप्रयुंजानंप्रचक्रतुः ॥ सचाप्ययोनिजंचैवसर्व्वगोभगवान्प्रभुः ॥
॥ १३१ ॥ आराध्यसर्व्वकल्याणंजगत्पातिमानिन्दितम् ॥ रुद्रेणसततंलब्ध्वामहागणंविनिर्व्वभौ ॥ १३२ ॥ व्यासउवाच ॥ कथंनन्दीसमुत्पन्नःकथं
वाराध्यशङ्करम् ॥ समानत्वमगाच्छम्भोःप्रतीहारत्वमेवच ॥ १३३ ॥ सनत्कुमारउवाच ॥ अभूदृषिःसधर्म्मात्माशिलादोनामवीर्य्यवान् ॥ तस्यासी
च्छिलकैर्वृत्तिःशिवलोकेचसोऽभवत् ॥ १३४ ॥ अपश्यल्लम्बमानान्स्वान्निरयेऽसतिसद्विजः ॥ विच्छिन्नसन्ततिस्तत्तोनिरयेपततेतुसः ॥ १३५ ॥ तैरु
क्तोऽपत्यकामस्तुदेवलोकादिमव्ययम् ॥ आराधयमहादेवंपुत्रार्थंद्विजसत्तम ॥ १३६ ॥ योऽस्मत्सन्तारणेशक्तःसतेपुत्रंप्रदास्यति ॥ तेषांवाक्यंततः
श्रुत्वाजगामशरणंशिवम् ॥ १३७ ॥ दिव्येनतुसहस्रेणतप्यमानस्यशूलधृक् ॥ सर्व्वदेववरस्तस्यवरदोऽस्मीत्यभाषत ॥ १३८ ॥ तंदृष्ट्वासोममीशानं
प्रणतःपदयोर्गतः ॥ हर्षगद्गदयावाचातुष्टावविबुधेश्वरम् ॥ १३९ ॥ नमःपरमदेवायमहेशायमहात्मने ॥ स्रष्ट्रेसर्व्वसुरेशानांब्रह्मणःपतयेनमः ॥ १४० ॥

कामाङ्गनाशनायैवयोगसम्भवहेतवे ॥ नमःपर्व्वतवासायध्येयगम्यायवेधसे ॥ १४१ ॥ ऋषीणांपतयेनित्यंदेवानांपतयेनमः ॥ देवानांपतयेचैवयोगिनां
पतयेनमः ॥ १४२ ॥ प्रधानायनमोनित्यंतत्त्वायपरसङ्गिने ॥ वरदायचभक्तानांनमःसर्व्वगतायच ॥ १४३ ॥ तन्मात्रेन्द्रियभूतानांविकाराणांगणैःसह॥
प्रबोधपतयेचैवनमस्तेप्रभविष्णवे ॥ १४४ ॥ जगतःपतयेचैवजगत्स्रष्ट्रेनमःसदा ॥ प्रकृतेःपतयेनित्यंपूज्यायपरगामिने ॥ १४५ ॥ ईश्वरायनमोनित्यं
योगगम्यायरंहसे ॥ संसारोत्पत्तिनाशायसर्व्वकामप्रदायच ॥ १४६ ॥ अवश्यायनमोनित्यंनमोभस्माङ्गधारिणे ॥ नमस्तेयोगरूपायतेजसांपतयेनमः
॥ १४७ ॥ सूर्य्यानलाम्बुजाक्षायअर्द्धचन्द्रधरायच ॥ स्थितायचनमोनित्यंनमस्त्रैलोक्यवेधसे ॥ १४८ ॥ स्तोतव्यस्यमुनेदेवविश्रामस्तेनविद्यते
यस्मादुक्तस्त्वमेवास्यजगतःस्थितिनाशयोः ॥ १४९ ॥ अशरण्यस्यदेवेशत्वत्तश्चशरणार्थिनः ॥ प्रसीदपरमानन्दवरदोभवविश्वकृत् ॥ १५० ॥ त
स्यैवंवदतोव्यासदेवदेवस्त्रिलोचनः ॥ वरदोऽस्मीतितंप्राहशिलादंमुनिसत्तमम् ॥ १५१ ॥ यःस्तोत्रमेतदखिलंपठतिद्विजन्माप्रातःशुचिर्नियमवा
न्द्विजसत्तमानाम् ॥ तंब्रह्मराक्षसपिशाचकभूतसङ्घाहिंसन्तिनोद्विपदपन्नगपूतनाश्च ॥ १५२ ॥ ततःसभगवान्देवःस्तूयमानोमहोदयः ॥ उवाचवरदोऽ
स्मीतिब्रूहियत्तेमनोगतम् ॥ १५३ ॥ तमेवंवादिनंदेवंशिलादोऽभ्यवदत्प्रभुम् ॥ उवाचदेवदेवेशंवाचासंसज्जमानया ॥ १५४ ॥ भगवन्यदितु
ष्टोऽसियदिवावरदश्चमे ॥ इच्छामित्वत्समंपुत्रंमृत्युहीनमयोनिजम् ॥ १५५ ॥ एवमुक्तस्ततोदेवःप्रीयमाणस्त्रिलोचनः ॥ एवमस्त्वितितंप्रोच्यतत्रै
वान्तरधीयत ॥ १५६ ॥ गतेतस्मिन्महादेवेऋषिःपरमपूजितः ॥ स्वमाश्रममुपागम्यऋषिभ्यःकथयंस्ततः ॥ १५७ ॥ तैर्भृशंसंस्तुतश्चैवकालेनमुनि
सत्तमः ॥ सदिदृक्षुर्यज्ञभूमिंलाङ्गलेनचकर्षताम् ॥ १५८ ॥ तस्यतूत्कर्षमाणस्यसीतायांसमुपस्थितः ॥ संवर्त्तकानलप्रख्यःकुमारःप्रत्यदृश्यत ॥
॥ १५९ ॥ सतंदृष्ट्वातदोद्भूतंकुमारंदीप्ततेजसम् ॥ राक्षसोऽयमितिज्ञात्वाभयान्नोपससारह ॥ १६० ॥ कुमारोऽपितथोद्भूतःपितरंदीप्ततेजसम् ॥ उपा
सर्पतदीनात्मातातततातेतिसोऽब्रवीत् ॥ १६१ ॥ सतथेत्युच्यमानोऽपियदातंनाभ्यनन्दत ॥ ततोवायुस्तदाकाशेशिलादंप्राहसत्वरम् ॥ १६२ ॥ सा
लंकायनपुत्रस्तेयोऽसौदेवेनशम्भुना ॥ अयोनिजःपुरादत्तःसएषप्रतिनन्दय ॥ १६३ ॥ यस्मान्नन्दकरस्तेऽयंसदैवद्विजसत्तम ॥ तस्मान्नन्दीतिनाम्नायं
भविष्यतिनसंशयः ॥ १६४ ॥ ततःसवायुवचनान्नन्दिनंपरिषस्वजे ॥ गृहीत्वाचाश्रमंनीतोनन्दीशस्तुष्टिवर्द्धनः ॥ १६५ ॥ चूडोपनयनादीनिकर्म्मा
ण्यपिचकारह ॥ कृत्वाचाध्यापयामासवेदान्साङ्गपदक्रमान् ॥ १६६ ॥ आयुर्व्वेदंधनुर्व्वेदंगान्धर्व्वशास्त्रमुत्तमम् ॥ शिल्पानिचैवसर्व्वाणिनिमित्तज्ञा
नमेवच ॥ १६७ ॥ भूतग्रामचिकित्सांचमातृणांचरितञ्चयत् ॥ भुजङ्गानाञ्चसर्व्वेषांयत्किञ्चित्परिचेष्टितम् ॥ १६८ ॥ सर्व्वशास्त्रंसदाचारमष्टौ

व्याकरणानिच ॥ तथैवचपुराणानिइतिहासमशेषतः ॥ १६९ ॥ पञ्चयज्ञानियानिस्युर्ज्योतिर्गणविचिन्तनम् ॥ मातृतत्त्वंमहामन्त्रंयोगिनांशास्त्रमुत्त
मम् ॥ १७० ॥ पञ्चभिर्दिवसैर्व्यासपरिज्ञानमशेषतः॥दक्षःशुचिरदीनात्माप्रियवागनसूयकः ॥ १७१ ॥ सर्व्वलोकप्रियोनित्यंमनोनयननन्दनः ॥
तस्याथसप्तमेवर्षेऋषीदिव्यौतपोधनौ ॥ १७२ ॥ आश्रमंसमनुप्राप्तौशिलादस्यमहौजसौ ॥ तावभ्यर्च्चययथान्यायंशिलादःसुमहातपाः ॥ १७३ ॥
तावालक्ष्यसुखासीनावासनेपरमार्चिते ॥ मित्रावरुणनामानौतपोयोगबलान्वितौ ॥ १७४ ॥ अभिज्ञौसर्व्वजन्तूनांसर्व्वलोकेचराचरे ॥ तेनान्वितौ
सुविस्रब्धौनिषण्णौतुवरासने ॥ १७५ ॥ उपविष्टौततःप्राप्ताविष्टाभिर्वाग्भिरस्तुवत् ॥ ताभ्यांपृष्टस्तुकच्चित्तेपुत्रस्तुष्टिप्रदःप्रभुः ॥ १७६ ॥ स्वाध्या
यनिरतःकच्चित्कच्चिद्धर्म्मस्यसन्ततिः ॥ कच्चिद्दुर्वृत्तबालानांनात्रमन्येतकर्हिचित् ॥ १७७ ॥ कच्चिन्नियमवादेनकच्चित्तुष्टिप्रदःप्रभुः ॥ सएवमुक्तस्तेज
स्वीशिलादःपुत्रवत्सलः ॥ १७८ ॥ उवाचगुणसम्पन्नःसमेवंशविवर्द्धनः ॥ समानयतसन्तुष्टःपुत्रंनन्दिनमच्युतम् ॥ १७९ ॥ तयोःपादेस्वशिरसापात
यन्तमनिन्दितम् ॥ तौतुतस्याशिषंदेवौप्रायुङ्क्तांधर्म्मनित्यताम् ॥ १८० ॥ गुरुशुश्रूषणेभावंलोकांश्चैवतथाक्षयान् ॥ शिलादस्तौतथालक्ष्यआशिषं
देवयोस्तयोः ॥ १८१ ॥ विसृज्यनन्दिनंभीतःसोपृच्छदृषिसत्तमौ ॥ शिलादउवाच ॥ तपोवन्तौऋषीसत्यौगतिज्ञौसर्व्वदेहिनाम् ॥ १८२ ॥ किमर्थं
ममपुत्रस्यदीर्घमायुरुभावपि ॥ प्रयुक्तवन्तौसम्यकुनाशिषोमुनिसत्तमौ ॥ १८३ ॥ मित्रावरुणावूचतुः ॥ तवैषतनयस्तातअष्टायुःपूर्व्वधर्म्मतः ॥
अद्यारभ्याष्टमेवर्षेजीवितुंनभविष्यति ॥ १८४ ॥ ततःसशोकसन्तप्तोन्यपतद्भुविदुःखितः ॥ विसृज्यमुनिशार्दूलावेकाकीविललापह ॥ १८५ ॥ तस्य
शोकाद्विलपतःस्वरंश्रुत्वासुतःशुभः ॥ क्रन्दमानंचतंदृष्ट्वापितरंदुःखितंभृशम् ॥ १८६ ॥ नन्द्युवाच ॥ केनत्वंतातदुःखेनवेपमानश्चरोदिषि ॥ दुःखंते
कुतउद्भूतंज्ञातुमिच्छामितत्त्वतः ॥ १८७ ॥ शिलादउवाच ॥ पुत्रत्वंकिलवर्षेणजीवितंसम्प्रहास्यसि ॥ ऊचतुस्तादृशंसर्व्वंततोमांदुःखमाविशत् ॥
॥ १८८ ॥ अन्यंहिनोचतुर्विप्रौनतावनृतभाषिणौ ॥ तेनाहंपुत्रशोकेनभृशंपीडितमानसः ॥ १८९ ॥ नन्द्युवाच ॥ देवोवादानवोवापियमोवापिकदाच
न ॥ तथापिनचमृत्युर्मेप्रभविष्यतिमारुदः ॥ १९० ॥ शिलादउवाच ॥ किंतपःकिंपरिज्ञानंकोयोगःकःसमाश्रितः ॥ येनत्वंदारुणंमृत्युंवंचयिष्यसि
पुत्रक ॥ १९१ ॥ नन्द्युवाच ॥ नताततपसामृत्युंवंचयिष्येनविद्यया ॥ महादेवेननाथेनमृत्युंजेष्यामिनान्यथा ॥ १९२ ॥ नसकश्चिदुपायोऽस्तितत्य
क्त्वादेवंपिनाकिनम् ॥ द्रक्ष्यामिशंकरंदेवंसमेमृत्युंविजेष्यति ॥१९३ ॥ शिलादउवाच ॥ मयावर्षसहस्रेणतपस्तप्त्वासुदुश्चरम् ॥ महादेवःपुरादृष्टोलब्ध
स्त्वंमेयतःसुतः ॥ १९४ ॥ भवांस्तुवर्षेणैकेनकथंद्रक्ष्यतिशंकरम् ॥ वर्षेणकिंतपःपुत्रशक्यंकर्त्तुंवृषध्वजात् ॥ १९५ ॥ कातेशक्तिर्महाभागयेनमृत्युं

विजेष्यसि ॥ नन्द्युवाच ॥ नताततपसादेवोदृश्यतेनचविद्यया ॥ १९६ ॥ शुद्धेनमनसाभक्त्यादृश्यतेपरमेश्वरः॥ अहमेवचजानामियेनद्रक्ष्यामिशंकर
म् ॥ १९७ ॥ त्वयाविसृष्टोगच्छामिअचिरेणत्रिलोचनम् ॥ द्रष्टुंतातनसन्देहोविसृजस्वसुतंतुमाम् ॥ १९८ ॥ अचिरेणैवकालेनजन्ममृत्युविवर्जितम् ॥
द्रक्ष्यसेमांकृतार्थंचतस्मान्मांत्वंविसर्जय ॥ १९९ ॥ तिष्ठत्वंनिर्भयोऽत्रेहपश्यतस्तेऽतिसम्मतः ॥ नहिंसावायथातेस्यादितितातव्रजाम्यहम् ॥ २०० ॥
तिष्ठन्तंवाशयानंवाधावन्तंपतितंतथा ॥ नप्रतीक्षतिवैमृत्युरितिबुद्ध्याविसर्जय ॥ २०१ ॥ यदिमृत्युसहस्राणियमकोटिशतानिच ॥ अभिद्रवन्तिसं
क्रुद्धादण्डपाशोद्यतायुधाः ॥ २०२ ॥ तत्रापिनान्यथातातभयंत्वंमेकरिष्यसि ॥ नममैतेकरिष्यंतिव्यथांलोम्नोऽपिचैवहि ॥ २०३ ॥ अवतीर्य्यजले
तातभावशुद्धिंसमास्थितः ॥ अभ्यर्च्यरुद्रमध्यायंतथाचशतरुद्रियम् ॥ २०४ ॥ द्रक्ष्यामिवरदंनाथंदेवंमृत्युहरंपरम् ॥ जपतश्चापियुक्तस्यरुद्रभावा
न्वितस्यच ॥ २०५ ॥ नमृत्युकालोयाम्योवाकरिष्यतिममव्यथाम् ॥ तमेवंवादिनंमत्वाब्रुवाणंशुद्धयागिरा ॥२०६॥ व्यसर्ज्जयददीनात्माकृच्छ्रात्पुत्रं
महातपाः ॥ प्रणम्यसपितुःपादौशिरसाचमहायशाः ॥ २०७ ॥ प्रदक्षिणंसमावृत्यसम्प्रतस्थेऽतिनिश्चितम् ॥ नमस्कार्य्यपितुःपादौसदिदृक्षुरुदारधीः
॥ २०८ ॥ ध्यायतेमनसादेवंप्रणतार्त्तिहरंहरम् ॥ २०९ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांपञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥ सनत्कुमारउ
वाच ॥ निर्गतोऽथतदानन्दीजगामसरितांवराम् ॥ भुवनामितिविख्यातांसर्व्वलोकसुखावहाम् ॥ १ ॥ तांप्रविश्यततोधीमानेकाग्रोहृदिसंस्थितः ॥
जजापसतदानन्दीरुद्रंपरमकारणम् ॥ २ ॥ भयान्मृत्योस्ततोध्यानैरेकचित्तःसमाहितः ॥ ध्यायतातेनतत्रैवतत्परेणतदाम्भसि ॥ ३ ॥ कोटिरेकायदा
जप्तातदादेवस्तुतोषह ॥ तदागत्याहभगवान्गृहेशर्व्वःकपर्दधृक् ॥ ४ ॥ नन्दिस्तुष्टोऽस्मिभद्रंतेवरंवृणुयथेप्सितम् ॥ एतच्छ्रुत्वावचस्तत्रमहादेवस्यतु
द्विजः ॥ ५ ॥ उवाचप्रणतोभूयःप्रयतात्मातदैवह ॥ द्वितीयांतप्तुमिच्छामिकोटिंपरमकारण ॥ ६ ॥ एवमुक्तस्तुदेवोऽपिउक्त्वागच्छद्यथागतम् ॥ सोऽ
वतीर्य्यततोभूयःप्रणतोऽतिबभूवहं ॥ ७ ॥ जजापकोटिमन्यांतुरुद्रमेवानुचिन्तयन् ॥ द्वितीयायांततःकोट्यांसम्पूर्णायांवृषध्वजः ॥ ८ ॥ आजगामच
तत्रैववरदोऽस्मीत्यभाषत ॥ अन्याश्चभगवान्कोटिंतृतीयामपिजापितम् ॥ ९ ॥ इच्छामिदेवदेवेशत्वत्प्रसादादहंविभो ॥ एवमस्त्वितिभूयोपिभगवा
न्प्रत्युवाचह ॥ १० ॥ उक्त्वाजगामदेवेशोदेव्यासहमहाद्युतिः ॥ ततस्तृतीयांतत्रैवकोटिमन्यांजजापह ॥ ११ ॥ युगान्तादित्यसंकाशंततःसमभवद्व
पुः ॥ तस्यांकोट्यांतृतीयायामज्वलद्दिव्ययासह ॥१२॥ सर्व्वैर्गणैर्देवैर्वृतःसगन्तुमुपचक्रमे ॥ सतंकरेणसंगृह्यउद्धृत्याशिरसातथा ॥ १३ ॥ संस्पृशंश्चाग्रह
स्तेननन्दिनंकाममब्रवीत् ॥ शैलादेवरदोऽहंतेतपसानेनतोषितः ॥१४॥ साधुजप्तंत्वयाधीमन्ब्रूहियत्तेमनोगतम् ॥ नन्द्युवाच ॥ जपेयंकोटिमन्यांवैभूयोऽ

पितवतेजसा ॥१५॥ वरमेतंवृणेदेवतुष्टोऽसियादिमेविभो ॥ देवदेवउवाच ॥ किंतेजपेनभूयोऽपितुष्टोस्मितवसर्व्वदा ॥१६॥ यंयंहिवृणुषेकामंसर्व्वंवदद
दामिते ॥ ब्रह्मत्वमथविष्णुत्वमन्यैरपितुकाकथा ॥१७॥ आदित्योभवरुद्रोवामोक्षोवाममतुल्यता ॥ सएवमुक्तोदेवेनशिरसापादयोर्नतः ॥१८॥ तुष्टाव
परमेशानंजराशोकविनाशनम् ॥ नमोदेवादिदेवायमहादेवायवैनमः ॥१९॥ नमःकामाङ्गनाशायत्रैलोक्यहननायच ॥ नमःकालोग्रदण्डायउग्रदण्डायवै
नमः ॥२०॥ नमोनीलशिखण्डायसहस्रशिरसेनमः ॥ सहस्रपाणयेचैवसहस्रचरणायच ॥२१॥ सर्व्वतःपाणिपादायसर्व्वतोऽक्षिमुखायच ॥ सर्व्वतःश्रुतये
चैवसर्व्वमावृत्यतिष्ठते ॥२२ ॥ नमस्तेरुद्रतत्त्वायतथैवातीन्द्रियायच ॥ नमःकपर्द्दिनेतुभ्यंकनकपिङ्गायवैनमः ॥ २३ ॥ नमश्चन्द्रार्कनेत्राययोगीशाया
जितायच ॥ पिनाकपाणयेचैवशूलमुद्गरपाणये ॥ २४ ॥ खड्गिनेगदिनेचैवपरश्वधधरायच ॥ रथिनेचर्म्मिणेचैवमहेष्वासायवैनमः ॥ २५ ॥
नमस्त्रिशूलहस्तायउग्रदण्डधरायच ॥ नमोदेवाधिपतयेरुद्राणांपतयेनमः ॥ २६ ॥ सहस्रनेत्रायवैतुभ्यंसहस्रबाहवेनमः ॥ आदित्यानांचपतये
वसूनांपतयेनमः ॥ २७ ॥ नमःस्वर्लोकपतयेमहर्लोकपतेनमः ॥ नमोयोगाधिगम्यायसर्व्वयोगप्रदायच ॥ २८ ॥ ध्यानिनेध्यायमानायध्या
निभिःसंस्तुतायच ॥ मृत्यवेकालदण्डाययमायचमहात्मने ॥ २९ ॥ देवाधिपतयेचैवदिव्यसंहननायच ॥ यज्ञायचसदानायस्वर्गजन्मप्रदा
यच ॥ ३० ॥ अविन्त्रेसर्व्वदेवानांधर्म्मायानेकनेत्रिणे ॥ अमृतायचवेण्यायसर्व्वदेवस्तवायच ॥ ३१ ॥ उमारुद्रेन्द्ररूपायतथानारायणायच ॥ ब्रह्मणः
शिरसश्चेन्द्रयज्ञस्यपरिपन्थिने ॥ ३२ ॥ त्रिपुरघ्नचरोग्रायसर्व्वाशुभहरायच ॥ ललाटांकितनेत्रायततोर्द्ध्वजननायच ॥३३॥ महिषान्तकहर्त्रेचस्रग्वि
णेचनमोनमः ॥ ब्रह्मणोगुरवेचैवब्रह्मणोजनकायच ॥ ३४ ॥ कुमारगुरवेचैवकुमारवरदायच ॥ हलिनेमुसलघ्नायमहाहासायवैनमः ॥ ३५ ॥ मृत्युपा
शोग्रहस्तायनक्षत्रालोकसूत्रिणे ॥ सरित्प्रधानवाहायतथैववृषयायिने ॥ ३६ ॥ हिमवद्विन्ध्यवासायमेरुपर्व्वतवासिने ॥ कैलासवासिनेचैवधनेश्वरसखा
यच ॥ ३७ ॥ विष्णुदेहार्द्धसंस्थायतस्मिंश्चवरदायच ॥ सर्व्वभूतायसंज्ञायसर्व्वभूतानुकम्पिने ॥ ३८ ॥ अन्तर्भूताधिवासायप्राणिनांजीवनायच ॥
वाचेचवाग्मिनेचैवसूक्ष्मायतनवेनमः ॥ ३९ ॥ नमस्तेऽपशवेनित्यंक्षेत्रज्ञायाविटायच ॥ विष्णवेलोककर्त्रेचप्रजानांपतयेनमः ॥ ४० ॥ नमोरात्रेसप्तर्षे
येतप्यमानायतापिने ॥ ब्राह्मणांयविशुद्धायतथादुर्व्वाससेनमः ॥ ४१ ॥ शिल्पिनेशिल्पनाशायविदुषेविश्वकर्म्मणे ॥ अत्रयेभृगवेचैवतथैवांगिरसेन
मः ॥ ४२ ॥ पुलहायपुलस्त्यायक्रत्वाह्वानायतापिने ॥ धर्म्मायरुचयेचैववसिष्ठायनमोऽस्तुते ॥ ४३ ॥ भूतायभूतनाथायकूष्माण्डपतयेनमः ॥
तिष्ठतेद्रवतेचैवगायतेनृत्यतेतथा ॥४४॥ अवश्यायाप्यवध्यायअजरायामरायच ॥ अक्षयायाव्ययायैवतथाऽप्रतिहतायच ॥ ४५ ॥ अनाथस्थायसर्व्वे

षांतथैवपुण्यरूपिणे ॥ सूक्ष्मेभ्यश्चातिसूक्ष्मायसर्व्वगायमहात्मने ॥ ४६ ॥ नमस्तेभगवंस्त्र्यक्षनमस्तेभगवञ्छिव ॥ नमस्तेसर्व्वलोकेशनमस्तेसर्व्वभावन ॥ ४७ ॥ नमोदेवाधिपतयेब्रह्मणेवायवेनमः ॥ नविष्णुत्वंनदेवत्वंनापीन्द्रत्वंचकामये ॥ ४८ ॥ इच्छाम्यहंविश्वनाथसंसाराद्विनिवर्त्तनम् ॥ नित्यंतेशरणंनाथप्रसन्नोऽव्यपरिच्छदम्॥४९॥द्रष्टुमिच्छामियोगेनएषमेदीयतांवरः ॥ त्वंनोगतिःपुरादेवत्वंवानाथायनंमहत् ॥५०॥ त्वयात्यक्तस्यचैवास्तेविनाशोनात्रसंशयः ॥ अन्यांगतिंनपश्यामिपश्याम्यात्यन्तिकंसुखम् ॥ ५१ ॥ अनुरक्तंचभक्तंचत्वत्परंत्वदपाश्रयम् ॥ पश्यामिसर्व्वलोकेशसंसारमतिदुस्तरम् ॥ ५२ ॥ भवाम्यहंमहादेवंयथातत्रतथाकुरु ॥ प्रतीच्छमांमहादेवएषमेदीयतांवरः ॥ ५३ ॥ यइदंप्रातरुत्थायपठेदविमनानरः ॥ चतुर्द्दश्यांविशेषणब्राह्मणोवायतिस्तथा ॥ ५४ ॥ सदेहभेदमासाद्यनन्दीश्वरसमोभवेत् ॥ यास्त्विमंशृणुयान्नित्यंश्रावयेद्वाद्विजोत्तमः ॥५५॥ सोऽश्वमेधफलंप्राप्यरुद्रलोकेमहीयते ॥ श्रुत्वासकृदपिह्येनंस्तवंपापप्रणाशनम् ॥ ५६ ॥ यत्रतत्रमृतोव्यासदुर्गतिंनसमाप्नुयात् ॥५७॥ योऽधीत्यनित्यंस्तवमेतदग्र्यंदेवंसदाभ्यर्च्चयतेयतात्मा ॥ किंतस्ययज्ञैर्विविधैश्चदानैस्तीर्त्रैःसुतप्तैश्चतथातपोभिः ॥ ५८ ॥ समाप्तकृत्योद्विजपुङ्गवोहिगृहस्थधर्म्मोपियतेर्नरःसमः ॥ ५९ ॥ एषमन्त्रजपश्चैवसंसारविनिवर्त्तकः ॥ ६० ॥ इति श्रीशैवेमहापुराणेसनत्कुमारसंहितायांषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ सनत्कुमारउवाच ॥ ततस्तंदेवदेवेशोभक्त्यापरमयायुतम् ॥ अश्रुपूर्णेक्षणंदीनंपादयोःशिरसानतम् ॥ १ ॥ कराभ्यांसम्मुखाभ्यांतुसंगृह्यभुवनेश्वरः ॥ उत्थाप्यपरमेशानोमुखंतस्यममार्ज्जह ॥ २ ॥ उवाचजगतांनाथोवचसातोषयंश्चतम् ॥ निरीक्ष्यगणपान्सर्व्वान्महादेवोऽवदत्पुनः ॥ ३॥ नभेतव्यंनभेतव्यंतुष्टोऽहंतवपुत्रक ॥ नचजन्मजरामृत्युर्मत्प्रसादाद्भविष्यति ॥ ४ ॥ तवभक्तिमहंवत्सजानेचार्त्तितवानघ ॥ तस्यसर्व्वस्यशैलादेर्यदुक्तंतान्निशामय ॥ ५ ॥ अमरोजरयामुक्तःसर्वदुःखविवर्ज्जितः ॥ अक्षयश्चाव्ययश्चैवसपितासुसुहृज्जनः ॥ ६ ॥ येचत्वांसहसंदृष्टाःस्निग्धभावंगताश्चये ॥ तेसर्व्वेचत्वयासार्द्धंममलोकेप्रयान्तुते ॥ ७ ॥ ममेष्टोगणपश्चैवमद्वीर्य्योमत्पराक्रमः ॥ इष्टोममसदाचैवममपाश्वगतःसदा॥८॥मद्रूपश्चैवभवितामहायोगबलान्वितः ॥ ऋद्धियुक्तंसहद्वीपंक्षीरोदममृताकरम् ॥ ९ ॥ सवाससंप्रयच्छामितत्रत्वंवसपुत्रक ॥ कुशेशयमयींमालांस्वयम्भूरात्मनःशुभाम् ॥ १० ॥ आबवंधमहादेवोनन्दिनेदेवरूपिणे ॥ सतयामालयानन्दीबभौकण्ठावसक्तया ॥ ११ ॥ त्र्यक्षोदशभुजःश्रीमान्द्वितीयइवशंकरः ॥ ततएनंसमादायहस्तेनभगवान्हरः ॥ १२ ॥ उवाचब्रूहिकिंतेऽद्यददामिवरमुत्तमम् ॥ आश्रमश्चायमत्यर्थंतपसातवभावितः ॥ १३ ॥ जाप्येश्वरसमास्थातोममगुह्योभविष्यति ॥ समन्ताद्योजनंक्षेत्रंदिव्यासिद्धिप्रदायकम् ॥ १४ ॥ सिद्धचारणसंकीर्णमप्सरोगणसेवितम् ॥ सिद्धक्षेत्रंपरंगुह्यंभविष्यतिनसंशयः ॥ १५ ॥

कर्म्मणामनसावाचायत्किञ्चित्कुरुतेनरः ॥ अशुभंवाशुभंवात्रसर्व्वंभवतिभस्मसात् ॥ १६ ॥ जपमानस्यतौल्यंवैरुद्राणांतद्भविष्यति ॥
यत्रयत्रमृतास्तत्रयास्यन्तिममलोकताम् ॥ १७ ॥ ततोजप्यंश्रुतंवारिगृहीत्वाहारनिर्म्मलम् ॥ उक्त्वानन्दीभवश्चेतिविससर्ज्जमहातपाः ॥ १८ ॥ सा
तदादिव्यतोयाचपुण्यामानजनाशुभा ॥ हंसकारण्डवाकीर्णाचक्रवाकोपशोभिता ॥ १९ ॥ फुल्लपद्मवराचैवप्रावर्त्ततमहानदी ॥ स्त्रीरूपधारिणीचैवप्रा
ञ्जलिःशिरसानता ॥ २० ॥ पद्मोत्पलदलाभाक्षीमहादेवमुपस्थिता ॥ महादेवउवाच ॥ यस्माद्यज्ञोदकाद्देविप्रवृतात्वंशुभानने ॥ २१ ॥ तस्माद्यज्ञोद
कानामभविष्यसिसरिद्वरा ॥ त्वयिस्नानंतुयःकुर्य्याच्छुचिःप्रयतमानसः ॥ २२ ॥ सोऽश्वमेधफलंप्राप्यरुद्रलोकेमहीयते ॥ तस्यादेव्यामहादेवोनन्दा
श्वरपातिःप्रभुः ॥ २३ ॥ पुत्रेस्नेहमितिप्राहपादयोस्तंव्यनामयन् ॥ सातमाघ्रायशिरसिपाणिभ्यांपरिमार्ज्जती ॥ २४ ॥ पुत्रप्रेम्णाभिषिञ्चतीस्रोतोभिस्त
नुजैस्तथा ॥ पयसाशङ्खगौरेणदेवंदेवीनिरीक्षती ॥ २५ ॥ तानिस्रोतांसित्रीणिस्याच्छ्रोत्रेभ्यःपतितानदी॥नदींत्रिस्रोतसंपुण्यांततस्तामन्ववीक्षत॥२६॥
नन्दीत्रिस्रोतसंदृष्ट्वाभूयःपरमहर्षितः ॥ ननादनादंतस्माच्चसरिदन्याततोऽभवत् ॥ २७ ॥ यस्मादुपप्रणादेनप्रवृत्तासामहानदी ॥ तस्माच्छिवेनकान्ता
वैउवाचवृषभध्वजः ॥ २८ ॥ जाम्बूनदमयंचित्रंसदेवःपरमाद्भुतम् ॥ मुकुटंदचदौतस्मैकुण्डलेचामृतोद्भवे ॥ २९ ॥ तंतथाभ्यर्च्चितंव्योम्निदृष्ट्वाऽमेय
प्रभाकरम् ॥ देवोऽपिराज्येऽभिषिञ्चन्ननादशततद्गणम् ॥ ३० ॥ तस्याभिषिक्तस्यतदाप्रवृत्तेस्रोतासिभृशम् ॥ यस्मात्सुवर्णान्निःसृत्यनदीयंसम्प्रवर्त्तते
॥ ३१ ॥ तत्सुवर्णोदकानाम्नामहादेवोऽभ्यभाषत ॥ जाम्बूनदमयाद्यस्माद्देषामुकुटतःप्रभा ॥ ३२ ॥ प्रावर्त्ततनदीपुण्याप्रोक्ताजाम्बूनदीततः ॥
तच्चजाम्बूनदंनामजाप्येश्वरसमीपतः ॥ ३३ ॥ विख्यातंफलमेतेषांयज्ञोदानंमहात्मनाम् ॥ तच्चजाबूनदंदिव्यंदेवंजाप्येश्वरंचयः ॥ ३४ ॥
त्रिरात्रोपोषितोगत्वास्नात्वाभ्यर्च्यचशूलिनम् ॥ ब्राह्मणांस्तर्पयित्वाचयत्रतत्रमृतोनरः ॥ नन्दीश्वरस्यानुचरःक्षीरोदनिलयोभवेत् ॥ ३५ ॥ यस्तुज
प्येश्वरेप्राणान्परित्यजतिदुस्त्यजान् ॥ निशाम्यनान्यथावापिसमेगणपतिर्भवेत् ॥ ३६ ॥ नन्दीश्वरसमोनित्यंशाश्वतोह्यक्षयोऽव्ययः ॥ यश्चप्रियस्तेदे
वेशप्रियःसममएवच ॥ ३७ ॥ जाप्येश्वरंपञ्चनदञ्चतद्द्वैयोमानवोऽभ्येत्यजहातिदेहम् ॥ समेसदास्याद्गणपोवरिष्ठस्त्वयासमःकान्तवपुर्भवेदिति ॥
॥ ३८ ॥ ॥इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांनन्दीश्वरोत्पत्तिर्नामसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ सनत्कुमारउवाच ॥ एतत्तेकथितंव्यास
नन्दीशस्यसमुद्भवम् ॥ फलेनजीवितेनापिसैनापत्येऽभिषेचितः ॥ १ ॥ भगवान्देवदेवेशःसर्व्वभूतपतिर्भवः ॥ उवाचदेवीमीशानीमुमांगिरिवरात्म
जाम् ॥ २ ॥ देवोनन्दीश्वरंदेवंचाभिषिच्यविभूषितम् ॥ गणेश्वराणांसर्व्वेषांकिंतत्त्वेमन्यसेशुभे ॥ ३ ॥ देव्युवाच ॥ सप्तलोकाधिपत्यंचगणेशा

नांतथैवच ॥ सर्व्वेषामितिदेवेशनन्दीपुत्रोमहात्मनः ॥ ४ ॥ ततःसभगवान्देवःसुरसिद्धगणार्च्चितः ॥ प्राङ्मुखःसगणेशोवैभूत्वादेवोमहेश्वरः ॥ चिन्त
यामाससगणान्रुद्रांश्चदिशिवासिनः ॥ ५ ॥ एवंचिन्तितमात्रास्तेगणाध्यक्षामुदान्विताः ॥ सम्प्राप्ताःसतलोकेशायेरुद्राःस्वर्गवासिनः ॥ ६ ॥ अग्निरूप
धराव्यासत्रिनेत्रशूलधारिणः ॥ आगतास्तेमहाभागअसंख्यातामुदायुताः ॥ ७ ॥ येस्थितादक्षिणामाशांपश्चिमामुत्तरांतथा ॥ पूर्वांचोर्द्धमधस्तेतुशू
लहस्तानिषङ्गिणः ॥८॥नीलकण्ठासितग्रीवाःशुद्धप्रज्वलनेक्षणाः ॥ समागतास्तदाव्यासयेषांसंख्यानविद्यते ॥ ९ ॥ ब्रह्माण्डावरणाःपञ्चअतऊर्द्ध्वादयो
मुने॥१०॥कपालीशोविशोकश्चशतनेत्रःशतानिलः ॥ अनन्तरुद्राःशतशःशतपादाःशताननाः ॥ सम्प्राप्ताःसर्व्वलोकेशास्ताञ्छृणुष्वमहामुने ॥ ११ ॥
ततःकरालवदनोभृकुटीभूषिताननः ॥ पञ्चयोजनविस्तीर्णोदैर्घ्यतस्ताहृगेवच ॥१२॥ ततश्चत्वारिवक्त्राणिबिभ्रच्छंखेन्दुपाण्डुरः ॥ पञ्चजिह्वोर्द्ध्वकर्णश्च
पाशहस्तोमनोजवः ॥ १३ ॥ वृतःकोटिशतैनैवसहृशानांमहात्मनाम् ॥ भारभूतिरितिख्यातोमहायोगबलान्वितः ॥ १४ ॥ खड्गवेगधरश्चैवध्यान
योगपरायणः ॥ सोमवर्षेतिविख्यातःकोटीरथसमावृतः ॥ ताहृशानांगणाध्यक्षोदेवस्यचस्थितोऽग्रतः ॥ १५ ॥ अम्बाशिवोमहाकायःशूलपाणिर्महाब
लः ॥ युगान्तानलसङ्काशःस्थितःस्थिरयशोबलः ॥१६॥ चन्द्रमौलिर्महाकायश्चतुर्बाहुविलोहितः ॥ एकपादैर्महाकायैरुयक्षैस्तैःशूलपाणिभिः ॥ १७ ॥
वृतःकोटिशतैनैवस्थाणुस्तत्राभ्यवर्त्तत ॥ सपार्षदोऽयंरुद्रस्यसर्व्वासुरसुपूजितः ॥ १८ ॥ नतोदरःपद्मासनोह्रस्वपादोहरःशुचिः ॥ सहस्रबाहुचरणःस
हस्राक्षःसहस्रपात् ॥ १९ ॥ करालवदनश्चैवमहासर्पपरिच्छदः ॥ त्र्यक्षश्चन्द्रकृतापीडःशिरोमालाविभूषितः ॥ २० ॥ चन्द्रमौलिर्महाकेशःकोटिशःप
रिवारितः ॥ ततःपरिवृतःसोमआजगाममहाबलः ॥ २१ ॥ ततःपरंसमीपेतंदेवदेवंवरप्रदम् ॥ चतुर्व्वक्त्रोमहातेजाश्चतुर्व्विंशतिलक्षणैः ॥ २२ ॥ सहस्र
बाहुर्व्याप्तास्योमहादेवोर्द्ध्ववाहनः ॥ करालवदनश्चैवशंकुकर्णोमहाबलः ॥ २३ ॥ असिपाणिर्महातेजाःशतपादःकृशोदरः ॥ विद्युत्केशोमहास्यश्चत
थैवोभयतोगतिः ॥ २४ ॥ अजैकपादविख्यातोवृतःकोटिशतेनसः ॥ कांचनोत्पलवृक्षाब्योह्यजेयइवपर्व्वतः ॥ २५ ॥ आगात्ततोऽपरोव्यासगणपःस
महाबलः ॥ सर्व्वतोवदनःश्रीमान्सर्व्वतःपाणिपादधृक् ॥ २६ ॥ ह्रस्वबाहुरपादश्चअशनिंधारयञ्छुभाम् ॥ शतैर्वृतस्तुकोटीनामष्टभिश्चात्मनःसमैः ॥
॥ २७ ॥ निकुम्भइतिविख्यातःशतपादःशताननः ॥ आगतोह्यपरश्चात्रतडित्केशोमहाबलः ॥ २८ ॥ चन्द्रमालाधरोदेवःसहस्रकरपल्लवः ॥ दण्डधा
रीमहाचक्रःशंखकुन्दसमप्रभः ॥ २९ ॥ गणकोटिशतवृतोदेवस्यपुरतःस्थितः ॥ ततोऽपरःसहस्रेणकोटीनांगणपैर्वृतः ॥ ३० ॥ सर्पमालाशतंबिभ्रदा
जगाममहातपाः॥ससूर्य्याप्यायनोनामदेवस्यपरमप्रियः ॥३१॥ सर्वज्ञानमहातेजाविश्रुतःसुमहाद्युतिः ॥ तथान्यःसर्व्वमानीचवज्राभरणएवच ॥ ३२ ॥

चन्द्रायुधोमहातेजाश्चक्रबाहुःकटाकटः ॥ गणकोटिशतैःषड्भिर्वृतःसमनुधावति ॥ ३३ ॥ शंकुकर्णोऽभ्ययाच्चैवगणकोट्यामहाबलः ॥ नन्दिकश्चैवदशभिःपिङ्गाक्षोऽष्टभिरेवच ॥३४ ॥ विनायकश्चतुःषष्ट्याकूष्माण्डोनामविश्रुतः ॥ हिरण्यवर्णःषड्भिश्चएकपादस्तथैवच ॥ ३५ ॥ धूम्रकेशोद्वादशभिःपताकोदशभिस्तथा ॥ शतमुक्तोऽष्टादशभिःशतपञ्चभिरेवच ॥ ३६ ॥ सहस्रशीर्षःषड्भिश्चगणकोटिशतैर्वृतः ॥ वीरोदशभिरायातःकुम्भकर्णस्तथाष्टभिः ॥ ३७ ॥ विश्वबलःसहस्रेणमनुस्तस्याःशतेनवै ॥ नादेऽशनिस्तथाष्टाभिःसप्तभिश्चन्द्रवर्त्तनः ॥३८ ॥ महीधरःसहस्रेणकोटीनांगणपैर्वृतः ॥ प्रणवादित्यमूर्तिश्चकोटचाचैववृतोबहिः ॥ ३९ ॥ सन्तोषश्चशतेनैवककुदोऽष्टभिरेवच ॥ कुम्भश्चपञ्चदशभिस्तथासंकोचतःपरः ॥ ४० ॥ अमोघोभूतकोटचाचतथाद्रौमेवभूतिकौ ॥ एकपादोऽष्टषष्ट्याचतथासप्तशिरोगणः ॥ ४१ ॥ महाबलश्चदशभिरपस्मारश्चविश्रुतः ॥ नीलोद्भवश्चदेवेशकण्वभद्रस्तथैवच ॥ ४२ ॥ विकृतिश्चापिसप्तत्याकोटीनामाजगामह ॥ कोटीनांचसहस्राणांशतैर्विंशातिभिर्वृतः ॥ ४३ ॥ इतश्चेतश्चआजग्मुर्महायोगबलान्विताः ॥ भूतकोटिसहस्रेणप्रमथैःकोटिभिर्वृतः ॥ ४४ ॥ वीरभद्रश्चतुःषष्ट्यादूषकश्चमहाबलः ॥ मेघसौदामनीनामनवत्याकोटिभिर्वृतः॥ ४५ ॥ प्रभाकारश्चविंशत्याविद्युद्भिस्तुमहाबलः ॥ मृत्युश्चैवयमश्चैवकालोविषधरस्तथा ॥ ४६ ॥ शतमायोमहामायःपर्व्वताभरणस्तथा ॥ एकशृङ्गाभिविख्यातस्तथाभृङ्गिरिटिश्चयः ॥ ४७ ॥ एतेचान्येचबहवोगणपाश्चमहाबलाः ॥ मुखेनवाद्यानितथावादयन्तोमुदान्विताः ॥ ४८ ॥ रथैर्नागैर्हयैश्चैवऋक्षमर्कटवाहनाः ॥ व्याघ्रसिंहविमानैस्तुसर्पपक्षिभिरेवच ॥ ४९ ॥ श्वापदैश्चतथानेकैरन्यैश्चविविधैरपि ॥ विमानेषुतथारूढानानारूपधराःपरे ॥ ५० ॥ पुष्पकेणविमानेनतथामहाद्रिपेनच ॥ एकीकृत्यतदाकाशंसकिन्नरमहोरगम् ॥ ५१ ॥ मत्तमायूरयुक्तेनहंसयुक्तेनचापरे ॥ भेरीशङ्खमृदंगैश्चपणवानकगोमुखैः ॥ ५२ ॥ वादित्रैर्विविधैश्चित्रैःपटहैरेकपुष्पकैः ॥ भेरीगम्भीरसन्नादैर्नानाडमरुडिण्डिमैः ॥ ५३ ॥ मङ्गलैर्वेणुवीणाभिर्विविधैश्चस्वनैरपि ॥ दर्दुरैस्तलधातैश्चकराग्रैःपणवैरपि ॥ ५४ ॥ वाद्यमानैर्महाघोरैराजग्मुर्यत्रशङ्करः ॥ इन्द्रासनेनदिव्येनपद्मयोनिःपितामहः ॥ ५५ ॥ मुनिभिर्व्यासससंसिद्धैर्वृताःसर्व्वेसमन्ततः ॥ ऋग्वेदोदक्षिणेभागेदिव्यकुण्डलभूषितः ॥ ५६ ॥ पश्चिमेसामवेदश्चनानारूपधरःशुभः ॥ अथर्व्वाचोत्तरेचैववह्निनासदृशप्रभः ॥ ५७ यजुर्व्वेदश्चपूर्व्वेणविद्युद्रूपधरःसदा ॥ इतिहासपुराणानिनानारूपधराणिच ॥ ५८ ॥ अग्रतोदिव्यपाशेनतोषितास्तत्रजग्मतुः ॥ देवदेवोमहादेवोयज्ञरूपधरःशुभः ॥ ५९ ॥ दृष्ट्वानारायणंदेवंमहादेवोऽब्रवीत्तदा ॥ वाचागम्भीरयातन्तुसदेवंलोकभावनम् ॥ ६० ॥ शृणुविष्णोवचोमह्यंयद्वक्ष्यामिसुरेश्वर ॥ अभिषेकंप्रयच्छत्वंनन्दिनेसुरपूजित ॥ ६१ ॥ यदितेचप्रियंकृष्णअभिषेकंकुरुष्वमे ॥

प्रहस्यचमहादेवंततोनारायणोऽब्रवीत् ॥ ६२ ॥ यथावदसिदेवेशकरिष्येऽहंतथाविभो ॥ देवानामपिदेवस्त्वंप्रमाणन्तुनसंशयः ॥ ६३ ॥ शक्रऐरावता
रूढआजगामशिवान्तिकम् ॥ वसुभिर्मारुतैश्चैवप्राणिवासान्महाबलैः ॥ ६४ ॥ पृथग्विमानसंस्थैश्चनादयित्वानभस्तलम् ॥ ६५ ॥ तेविश्वकर्म्माद्यवि
चित्रदेहाविश्वेशमेकाक्षरमव्ययंच ॥ सहस्रनेत्रप्रतिमानभास्वराःप्रणेदुरुच्चैरपिचातिनेदुः ॥ ६६ ॥ इतिश्रीशैवेमहापुराणेनन्द्युपाख्यानेअष्टचत्वारिंशोऽ
ध्यायः ॥ ४८ ॥ सनत्कुमारउवाच ॥ तेगणेशामहासत्त्वाःसर्व्वदेवेश्वरेश्वरम् ॥ प्रणम्यदेवदेवंचइदंवचनमब्रुवन् ॥ १ ॥ भगवन्देवदेवेशसर्व्वभूतनम
स्कृत ॥ यदर्थंश्चसमाज्ञप्ताआज्ञापयवचोमम ॥ २ ॥ किंसागरान्छोषयामःपाटयामःसुपर्व्वतान् ॥ हन्मएतादिशःसर्व्वायमंवासहबान्धवैः ॥ ३ ॥ क
स्याद्यव्यसनंघोरंकरिष्यामस्तवाज्ञया ॥ कस्यवाऽद्योत्सवंदेवसर्व्वकामसमृद्धिमत् ॥ ४ ॥ तांस्तथावादिनःसर्व्वान्सततंभक्तवत्सलः ॥ उवाचदेवःस
म्पूज्यगणान्रुद्रोमहेश्वरः ॥ ५ ॥ शृणुध्वंयत्कृतेपूर्व्वमिहाहूताजगद्धिताः ॥ श्रुत्वाचप्रणतात्मानःकुरुध्वंतदशङ्किताः ॥ ६ ॥ नन्दीश्वरोऽयंपुत्रोनःसर्व्वे
षामीश्वरेश्वरः ॥ प्रियोगणाग्रणीर्दैवैःक्रियतांवचनान्मम ॥ ७ ॥ सैनापत्येऽभिषिञ्चध्वंमहागणपतिंपतिम् ॥ अद्यप्रभृतियुष्माकमयंनन्दीश्वरःप्रभुः ॥८॥
एवमुक्तेभगवतारुद्राणीगणकाःशुभाः ॥ एवमस्त्वितिसम्मन्त्र्यसम्भारांस्तेह्यकुर्व्वत ॥ ९ ॥ तत्सर्व्वंश्चस्वयंदिव्यंजाम्बूनदसमप्रभम् ॥ आसनंमेरुस
ङ्काशंशुभंसमुपकल्पयन् ॥ १० ॥ शातकुम्भमयञ्चापिवरंचामीकरप्रभम् ॥ मुक्तादामनिभश्चैवमणिरत्नविभूषितम् ॥ ११ ॥ स्तम्भैश्चवैदूर्य्यमयैः
किंकिणीजालसङ्कुलम् ॥ चतुरङ्गकसंयुक्तंमण्डपंविश्वतोमुखम् ॥ १२ ॥ कृत्वाचध्रुवमप्येतदासनप्रवरेशुभे ॥ तस्मिन्संस्थाप्यदेवेशमभ्यषिञ्चन्त
नन्दिनम् ॥ १३ ॥ वासोयुगंततोदिव्यांर्दव्यगन्धांस्तथैवचं ॥ केयूरंकुण्डलेचैवमुकुटंहारमेवच ॥ १४ ॥ पट्टिशंशूलवज्रंचरशनाश्चस्वयंहरः ॥ छत्र
श्चैवास्यजग्राहवालव्यजनमेवच ॥ १५ ॥ ऋषयस्तुष्टुवुश्चैनंपितामहपुरोगमाः ॥ नमःकुष्माण्डरागायवज्रोद्यतकरायच ॥ १६ ॥ सालंकायनपुत्राय
हलमार्गोत्थितायच ॥ शिलादस्यचपुत्रायरुद्रजाप्यपरायच ॥ १७ ॥ रुद्रभक्तायदेवायनमस्तेजलशायिने ॥ नमोगणाधिपतयेमहायोगीश्वरायच ॥
१८ ॥ दण्डघण्टायचण्डायएकादशशतायच ॥ अक्षयायामृतायैवअजरायाव्ययायच ॥ १९ ॥ पशूनांपतयेचैवरुद्ररूपधरायच ॥ नमःप्रबलवेशाय
सर्व्वज्ञायाजितायच ॥ २० ॥ अनेकशिरसेचैवअनेकवदनायच ॥ किरीटिनेकुण्डलिनेमहापरिघबाहवे ॥ २१ ॥ पाहिसर्व्वगणांश्चैवपाहिदेवनमोऽस्तु
ते ॥ एवंस्तुत्वातदादेवस्तस्मिन्व्यासमहात्मने ॥ २२ ॥ प्राञ्जलिःप्रणतोभूत्वाजयशब्दंचकारह ॥ ततोदेवाजयेत्यूचुस्ततोदैत्यास्ततोऽसुराः ॥२३॥
ततःसर्व्वाणिभूतानिब्रह्माशक्रस्तथैवच ॥ डिण्डिमाधेनुकाश्चैवमर्दनाश्चसहस्रशः ॥ २४ ॥ ततःशङ्खाश्चभेर्य्यश्चमर्दलाश्चसहस्रशः ॥ वंशाश्चवांशिका

श्चैवकर्क्करागोविषाणिकाः ॥ २५ ॥ अवादयन्तगणपाःसयक्षासुरपन्नगाः ॥ नन्दीश्वरस्ययइमंस्तवंदैवतानिर्म्मितम् ॥ २६ ॥ यःपठेत्सततंमर्त्त्यःसगच्छे
न्ममलोकताम् ॥ नमोनन्दीश्वरायेतियःकृत्वास्तुतिमाचरेत् ॥ २७ ॥ तस्यकुष्माण्डराजेभ्योनभयंविद्यतेक्वचित् ॥ प्रभातेयःपठेन्नित्यंस्वयंवैभाव
संयुतः ॥ २८ ॥ तस्यदेवोवरंदद्यात्स्तवेनानेनपूजितः ॥ नभयंतत्रभवतिभयेभ्योव्याससर्व्वदा ॥ २९ ॥ नन्दीश्वरंयेप्रणमन्तिनित्यंप्रसन्नसर्व्वेन्द्रिय
शुद्धसत्त्वाः ॥ तेदेवदेवस्यसदातिपूज्याइष्टाविशिष्टाश्चगणाभवन्ति ॥ ३० ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांनन्दीश्वराभिषेकोनामैकोन
पञ्चाशोऽध्यायः ॥४९॥ सनत्कुमारउवाच ॥ ततस्तानागतान्देवान्देवानामधिपोहरः ॥ मारुतान्प्राहसम्पूज्यकन्यार्थंसत्पतिःप्रभुः ॥१॥ आमन्त्र्यनाम्ना
तान्देवान्सर्व्वाञ्छक्रपुरोगमान् ॥२॥ मारुतावोमहाभागामहासत्त्वामहौजसः ॥ युष्माकंप्रीतिदाकन्यासुभगादिव्यरूपिणी ॥ दातुमर्हथतांशुद्धांस्नुषामे
तांसतींमम ॥३॥ देवाऊचुः ॥ युष्माकश्चैवतस्याश्चसर्व्वस्यजगतःसदा ॥ प्रभुरिष्टस्त्रिलोकेशनत्वंयाचितुमर्हसि ॥४॥ तथैवदेवदेवश्चत्वंनोगतिरनुत्तमा ॥
मान्यःपरावरेशानयस्यत्वंसदसद्गुरुः ॥ ५ ॥ पितानकश्यपःश्रीमान्मरीचिश्चापितामहः ॥ पिताब्रह्माचतस्यापिदेवत्वंप्रपितामहः ॥ ६ ॥ सत्वंपिताम
होऽस्माकंनत्वंयाचितुमर्हसि ॥ ईश्वरउवाच ॥ नाहमर्हामिकल्याणींसत्यंवोभाषितंवचः ॥ ७ ॥ किन्तुलोकहितार्थायमुनीनाञ्चेदृशंतथा ॥ अदत्तांनग्रही
ष्यामिएषधर्म्मःसनातनः ॥८॥ श्रुत्वावाक्यंतुदेवेशान्मरुद्भिर्देवसत्तमात् ॥तत्क्षणान्मनसिध्यात्वादेवदेववरंतदा ॥९॥ स्वयंहोतातुतत्रासीद्ब्रह्मालोकपिता
महः ॥वृत्तेचपाणिग्रहणेगन्धर्व्वाःसहचारणैः ॥ १० ॥ नारदःपर्व्वतश्चैवचित्रासनःसपार्षदः ॥सर्व्वाश्वःसुरुचिश्चैवहाहाहूहूस्तथैवच ॥ ११ ॥ एतेचान्येचगन्ध
र्व्वाजग्मुर्मधुतरस्वराः ॥ उर्व्वशीचैवरम्भाचघृताचीलोकविश्रुता ॥ १२ ॥ तिलोत्तमाचविख्याताअन्याश्चाप्सरसःशुभाः ॥ अनृत्यन्तमहाभागानृत्यं
देवमनोहरम् ॥ १३ ॥ एवंसमभवद्व्यासविवाहस्तस्यधीमतः ॥ नन्दिनोगणमुख्यस्यअनौपम्योमनोहरः ॥ १४ ॥ ततःससत्कृतोद्वाहोनन्दीगत्वाम
हात्मनः ॥ पादौववन्देदेवस्यतथाविष्णोर्जगत्पतेः ॥ १५ ॥ पुनर्देव्याःसवैव्यासब्रह्मणःसतथापुनः ॥ शिलादस्यकुलेचायंश्रियापरमयायुतः ॥ १६ ॥
ईश्वरउवाच ॥ वरंवृणीष्वपुत्रत्वंस्नुषाचेयंतवप्रिया ॥ ददामितेवरंतुष्ट्यामनसायदभीप्सितम् ॥ १७ ॥ नन्दीश्वरउवाच ॥ भगवन्यदितुष्टोऽसित्वयि
भक्तिर्दृढास्तुमे ॥ सदाकालंमहादेवभवतुष्टोभवोद्भव ॥ १८ ॥ पितरंममदेवेशमहेश्वरजगत्पते ॥ अनुग्रहेणदिव्येनयोक्तुमर्हसिकामद ॥ १९ ॥ देवदेव
उवाच ॥ सदाहंतवनन्दीशसन्तुष्टस्तुगणेश्वर ॥ देव्याचसहितोवत्सशृणुमेपरमंवचः ॥ २० ॥ सदेष्टश्चवरिष्ठश्चपरमैश्वर्य्यसंयुतः ॥ महायोगीमहेष्वा
सःप्रपितासपितामहः ॥ २१ ॥ अजयश्चैवजेतास्यपूज्येशश्चमहाबलः ॥ अहंयत्रभवांस्तत्रयत्रत्वंतत्रचाप्यहम् ॥ २२ ॥ अयञ्चतेपितापुत्रपरमैश्वर्य्य

संयुतः ॥ भविष्यतिगणाध्यक्षोयन्तागणपतिर्ध्रुवम् ॥ २३ ॥ पितामहोऽपितेवत्सयेचान्येतववंशजाः ॥ मत्समीपंगमिष्यन्तिमयादत्तवरास्तथा ॥२४॥
पर्व्वतश्चैववैभ्राजंकामगंसर्व्वकामदम् ॥ उपपन्नंवनैर्दिव्यैःप्रयच्छामिजलावृतम् ॥ २५ ॥ ततोदेवीमहाभागानन्दिनंवरदाब्रवीत् ॥ वरंब्रूहिचतेपुत्रमत्तः
कामान्यथेप्सितान् ॥ २६ ॥ नन्दीश्वरउवाच ॥ वरंमेदेविभक्तिर्मेसदातुभ्यंभवेदिति ॥ ततोमरुत्सुताचैवदेव्याभ्येत्यन्यवेदयत् ॥ २७ ॥ पादयोः
पतितांदृष्ट्वातुष्टादेवीततोऽब्रवीत् ॥ वत्सेवरंयथेष्टंहित्रिनेत्राजन्मवर्जिता ॥ २८ ॥ पुत्रपौत्रैस्तुभक्तिर्मेतथाभर्त्तरिचैवहि ॥ नित्यंध्यानपरास्यान्मेज्ञाने
चमतिरुत्तमा ॥ २९ ॥ एतद्भवन्तुतेपुत्रिदेवौतेचवरप्रदौ ॥ देव्याश्चवचनंश्रुत्वाब्रह्मनारायणावुभौ ॥ ३० ॥ ऊचतुर्मुदितौदेवावेवमस्त्वितिभाविनि ॥
नारायणमथालोक्यब्रह्मणासहितंहरः ॥ ३१ ॥ उवाचसहितौदेवौप्रहृष्टेनान्तरात्मना ॥ अद्यप्रभृतिनन्दीशःपुत्राभ्यांमानितःसदा ॥ ३२ ॥ प्रभुश्चैव
हिदेवानांप्रतीहारश्चमेसदा ॥ एवंभवतुदेवेतिसहितौतावभाषताम् ॥ ३३ ॥ देवारुद्रागणाश्चैवसर्व्वदेवप्रियेसमान् ॥ वरान्ददुर्महासत्त्वाएवमेतद्भवि
ष्यति ॥ ३४ ॥ ततोनन्द्यब्रवीत्सर्व्वान्भवतांभक्तिरस्तुमे ॥ ऐश्वर्य्यंचममाक्षय्यंभवद्भिश्चानुमोदितम् ॥ ३५ ॥ सर्व्वेप्रियामेसततंभवताञ्चाप्यहंप्रियः॥
एकत्रवासश्चसदानचकालविपर्य्ययः ॥ ३६ ॥ रुद्रगणाऊचुः ॥ भवान्मन्ताचयन्ताचगतिश्चागतिरेवच ॥ अस्माकमीशसर्व्वेषांदेवानामपिचेश्वरः॥३७॥
चरिष्यतांहरस्याग्रेरुद्राणांरुद्रसत्तमः ॥ ऋषीणांदेवतानाञ्चप्रमथानांतथैवच ॥ ३८ ॥ महाबलीमहायोगीभविष्यसिनसंशयः ॥ अस्माकंभवनाथस्य
नायकोऽथविनायकः ॥ ३९ ॥ त्वंवैमहासेनसमःसुराणांनारायणेनामरपूजितेन ॥ स्वयम्भुवाचैवतुवानलेनदेव्यायुतस्त्वंभवतातदेव ॥ ४० ॥ यदुक्तं
भवतायस्तुसर्व्वजाप्येश्वरेश्वरः ॥ महाक्षेत्रंतदत्रास्तुहरस्येतिनमोनमः ॥ ४१ ॥ जाप्येश्वरनिकेतश्चजाप्येश्वरविभावितः ॥ त्वञ्चैवसर्व्वदाताचवरदो
भवदीक्षितः ॥ ४२ ॥ सर्व्वतःसर्व्वलोकेशोदेवदेवपतिर्वरः ॥ सएवंसर्व्वदेवैस्तुवरदैःप्रतिबोधितः ॥ ४३ ॥ उवाचवचनंसर्व्वान्ब्रूतकिंकरवाणिवः ॥
एवमुक्ताश्चगणपारुद्राश्चभावभाषितम् ॥ ४४ ॥ तमब्रुवन्दिव्यज्ञानाज्ञानंदेवस्यसन्निधौ ॥ त्वमस्माकंगणाध्यक्षःस्तुतोदेवेनशूलिना ॥ ४५ ॥ अस्मा
भिश्चाभिषिक्तस्तुनायकोमोक्षदायकः ॥ सत्वंशिशुश्चसौम्यश्चगुणवान्निर्गुणोऽपिच ॥ ४६ ॥ क्षमाशौचदमोपेतोभवान्नःप्रियकृत्सदा ॥ एवमुक्तस्तदान
न्दीसर्व्वान्प्रबलमानितः ॥ ४७ ॥ शिरस्यञ्जलिमाधायगणपानस्तुवत्तदा ॥ नमोवःसर्व्वभूतेभ्योनमोयोगिभ्यएवच ॥ ४८ ॥ नमःपरमयोगिभ्योजटिले
भ्यश्चवोनमः ॥ नमोविश्वस्वरूपेभ्योविश्वपेभ्यस्तथैवच॥४९॥नमोवल्कलवासिभ्यःकृत्तिवासिभ्यएवच ॥ नमोदेवेश्वरेभ्यश्चबहुरूपेभ्यएवच ॥५०॥
धीरेभ्यश्चयुमद्भ्यश्चसंछिन्नेभ्योनमोनमः ॥ नमोमुनिभ्योमौनिभ्योविप्रेभ्यश्चनमोनमः ॥ ५१ ॥ नमःसहस्ररूपेभ्यःशतरूपेभ्यएवच ॥ नमःसंयतरूपे

भ्योवायुरूपेभ्यएवच ॥ ५२ ॥ नमोमार्जाररूपेभ्यःकालरूपेभ्यएवच ॥ देवासुरमनुष्याणामाप्यायिभ्योनमोनमः ॥ ५३ ॥ नमोदैवतकायेभ्यःपवने
भ्यस्तथैवच ॥ नमोऽग्निभ्यस्तुवायुभ्योवरुणेभ्यस्तथैवच॥५४॥नमश्चादित्यरूपेभ्यःसर्व्ववायुभ्यएवच॥नमोवामनरूपेभ्यःकामरूपेभ्यएवच ॥ ५५॥
नमोऽद्भ्यःसर्व्वदेवानांनमःसर्व्वगताःशुभाः ॥ ग्रहेभ्यश्चनमोवोऽस्तुमोक्षेभ्यश्चनमस्तथा ॥ ५६ ॥ समानेभ्योऽसमानेभ्यःसुशुभेभ्यस्तथैवच ॥ नमः
सौम्यगिरिभ्यश्चभवन्तुगणनायकाः ॥ ५७ ॥ इतिस्तुतागणपतयोमहाबलाःशुभैर्वचोभिःसुरसिद्धपूजिताः ॥ दिशन्तुमेसुखमतुलंसुखप्रदाबलंचवी
र्य्यंस्थिरतांचसंयुगे ॥ ५८ ॥ ततोऽक्षयंज्ञानमनुत्तमागतिर्यमस्तथावाबहुधर्म्मनित्यताम् ॥ दिशन्तुसर्व्वंमनसेप्सितंचयत्सुरेश्वरायक्षपिशाचगुह्यकाः
॥ ५९ ॥ इदंनन्दिकृतंस्तोत्रंयोवाचयतिनित्यशः ॥ सोऽश्वमेधावभृथवत्सर्व्वपापैःप्रमुच्यते ॥ ६० ॥ सन्ध्यायामपरस्यांतुयत्पापंचकृतंदिने ॥ पूर्व्वं
स्यांसन्त्यजेच्चापिसर्व्वरात्रंनसंशयः ॥ ६१ ॥ ततस्तेगणपाःसर्व्वैसंयुतास्तेनधीमता ॥ विसृष्टास्तेतथाजग्मुःप्रणिपत्यवृषध्वजम् ॥ ६२ ॥ देवाश्चऋष
यश्चैवसदेवोऽपिमहेश्वरः ॥ ईप्सितंसहदेव्यावैजगामाकाशमव्ययम्॥६३॥यइदंनन्दिनोजन्मवरदानंतथैवच॥अभिषेकंविवाहंचपठेद्वाश्रावयेत्तथा॥६४॥
ब्राह्मणःपाठतोयातिनन्दीश्वरसलोकताम् ॥ ६५॥ योनियतस्तुपठेत्प्रयतात्मासर्व्वमिदंशृणुतेभवभक्त्या॥सोऽपिभवेत्परलोकनिवासीनन्दिसमोऽनुचरो
ऽपिभवस्य ॥६६॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांनन्दिविवाहोनामपंचाशोऽध्यायः ॥५०॥ ऋषयऊचुः ॥ कस्मिन्देशेमहापुण्यमेतदाख्या
नमुत्तमम् ॥ वृत्तंब्रह्मपुरोगाणांकस्मिन्कालेमहाद्युते ॥१॥ एतदाख्याहिनःसर्व्वंयथावृत्तंतपोधन ॥ सनत्कुमारउवाच ॥ यथाश्रुतंमयासर्व्वंवायुनाजग
दात्मना ॥२॥ कथ्यमानंद्विजश्रेष्ठाःशतवर्षसहास्रिके ॥ नीलतायेनकण्ठस्यदेवदेवस्यशूलिनः ॥ ३ ॥ तदहंकीर्त्तयिष्यामिशृणुध्वंशंसितव्रताः ॥ उत्तरे
शैलराजस्यसरःसुचसरित्सुच॥४॥पुण्योद्यानेषुतीर्थेषुदेवतायतनेषुच॥गिरिशृङ्गेषुतुङ्गेषुशंकरोपवनेषुच॥५॥एवंभक्त्यामहात्मानंमुनयःसंशितव्रताः॥
स्तुवन्त्येवंमहादेवंतत्रतत्रयथाविधि ॥ ६ ॥ ऋग्यजुःसामरूपाभिर्गीर्भिश्चाथर्व्वणादिभिः ॥ ओंहूंकारनमस्कारैरर्च्चयन्तिसदाशिवम् ॥ ७ ॥ प्रवृत्तेज्यो
तिषांचक्रेमध्यंप्राप्तेदिवाकरे ॥ देवतानियतात्मानःसर्व्वेतिष्ठन्तितांकलाम् ॥ ८ ॥ अथवैनियमस्यान्तेप्राणिनांजीवनोद्भवः ॥ नमस्तेनीलकण्ठायइ
त्युवाचसदागतिः ॥ ९ ॥ तंश्रुत्वाभावितात्मानोमुनयःसंशितव्रताः ॥ वालखिल्येतिविख्याताःपतंगसहचारिणः ॥ १० ॥ अष्टाशीतिसहस्राणिऋषी
णामूर्द्ध्वरेतसाम् ॥ तेस्मपृच्छंतिवैवायुंवायुपर्णाम्बुभोजनाः ॥ ११ ॥ ऋषयऊचुः ॥ नीलकण्ठेतियत्प्रोक्तंत्वयापवनसत्तम ॥ एतद्गुह्यंपवित्राणांपुण्यं
पुण्यवतांवर ॥ १२ ॥ श्रोतुमिच्छामतत्सर्वंत्वत्प्रसादात्प्रभञ्जन ॥ नीलताकेनकण्ठस्यप्रकारेणाम्बिकापतेः ॥ १३ ॥ श्रोतुमिच्छामहेसम्यक्त्वद्वक्रा

त्तुविशेषतः ॥ यावैवाचःप्रवर्त्तन्तेसर्व्वास्ताःप्रेरितास्त्वया ॥ १४ ॥ वर्णस्थानेगतेवायोवाग्विधौसम्प्रवर्त्तते ॥ ज्ञानपूर्व्वंयथोत्साहंत्वत्तोवायुःप्रवर्त्तते ॥
॥ १५ ॥ त्वयिनिष्पद्यमानेतुसर्व्वेवर्णाःप्रकीर्त्तिताः ॥ यतोवाचोनिवर्त्तन्तेदेहबन्धाश्चदुर्लभाः ॥ १६ ॥ तत्रापितेऽस्तिसद्भावःसर्व्वगस्त्वंसदानिलः ॥
नान्यःसर्व्वगतोदेवस्त्वद्दतेऽस्तीहसर्व्वतः ॥ १७ ॥ अथतेजीवलोकस्तुप्रत्यक्षंजीवनोद्भवः ॥ वेत्तितावत्स्मृतिर्मेधासमानोऽयंत्वमीश्वर ॥ १८ ॥
ब्रूहिमङ्गलसंयुक्तांकथांपापप्रणाशिनीम् ॥ श्रुत्वावाचंततस्तेषांमुनीनांभावितात्मनाम् ॥ १९ ॥ प्रत्युवाचमहातेजावायुर्लोकनमस्कृतः ॥ वायुरुवा
च ॥ शृणुध्वमृषयोविप्रावेदवेदाङ्गपारगाः ॥ २० ॥ वसिष्ठोनामधर्म्मात्मामानसोवैप्रजापतेः ॥ पप्रच्छकार्त्तिकेयंवैमयूरवरवाहनम् ॥ २१ ॥
क्रौंचजीवितहर्त्तारंगौरीहृदयनन्दनम् ॥ महिषासुरनारीणांनयनाञ्जनतस्करम् ॥ २२ ॥ महासेनंमहात्मानंमेघस्तनितनिस्वनम् ॥ तमानतः
प्रहर्षेणबालकंस्वच्छरूपिणम् ॥ २३ ॥ ब्रूहिमङ्गलसंयुक्तांकथांपुण्यांजनप्रियाम् ॥ एतदाप्तायदान्तायभक्तायब्रूहिपृच्छते ॥ २४ ॥ श्रुत्वा
वाक्यंततस्तस्यवसिष्ठस्यमहात्मनः ॥ प्रत्युवाचमहातेजादैत्यारिःपावकोपमः ॥ २५ ॥ श्रूयतांवदतांश्रेष्ठकथ्यमानमिदंमया ॥ उमोत्सङ्गोपविष्टेनय
थापूर्व्वंश्रुतंमया ॥ २६ ॥ पार्व्वत्याश्चैवसंवादंशर्व्वस्यचमहात्मनः ॥ तदहंकीर्त्तयिष्यामित्वत्प्रियार्थंमहामुने ॥ २७ ॥ कैलासशिखरेरम्येनानाधातु
विचित्रिते ॥ तरुणादित्यसंकाशेतप्तकाञ्चनभूषिते ॥ २८ ॥ वज्रस्फटिकसोपानेचित्रपट्टशिलातले ॥ जाम्बूनदमयेदिव्येनानाधातुविभूषिते ॥ २९ ॥
नानाद्रुमलताकीर्णेनित्यंपुष्पफलाश्रये ॥ हंसकारण्डवाकीर्णेकिन्नरैरुपशोभिते ॥ ३० ॥ जीवञ्जीवकजातीनांविरुतैश्चैवकूजिते ॥ कोकिलालापबहुले
सिद्धचारणसेविते ॥ ३१ ॥ सौरभेयनिनादाढ्येमेघस्तनितनिस्वने ॥ विनायकभयोद्विग्नैःकिन्नरैर्मुक्तकन्दरे ॥३२॥ वंशवादित्रनिर्घोषैःश्रोत्रेन्द्रियमनोह
रैः ॥ दोलालम्बितसम्पातसुरसंघनिषेविते ॥ ३३ ॥ ध्वजालम्बितदोलानांघण्टानांनिनदावृते ॥ वर्णकीघोषबहुलेनित्यंव्यापारसंकुले ॥ ३४ ॥
सुखप्रयत्नवाद्यैश्चवर्णितास्फोटितैस्तथा ॥ क्रीडाचेष्टितवाद्यानांनिर्घोषैःपूर्णकन्दरे ॥ ३५ ॥ हासैःसन्त्रासजननैर्विकरालमुखैस्तथा ॥ देहवर्णैर्विचित्रै
श्चप्रक्रीडितगणेश्वरैः ॥ ३६ ॥ व्याघ्रसिंहमुखैर्घोरैर्भीमरूपैर्दुरासदैः ॥ मृगमेषमुखैश्चान्यैर्गजवाजिमुखैस्तथा ॥ ३७ ॥ बिडालवदनैश्चोग्रैःक्रोष्टुवानर
मूर्त्तिभिः ॥ ह्रस्वैर्दीर्घैःकृशैःस्थूलैर्लम्बोदरमहोदरैः ॥ ३८ ॥ ह्रस्वजंघैःप्रलम्बोष्ठैःस्थूलजंघैस्तथापरैः ॥ गोकर्णैरेककर्णैश्चमहाकर्णैरकर्णकैः ॥ ३९ ॥
एकपादैर्महापादैर्बहुपादैरपादकैः ॥ एकशीर्षैश्चतुःशीर्षैर्बहुशीर्षैरशीर्षकैः ॥ ४० ॥ एकनेत्रैर्महानेत्रैश्चतुर्नेत्रैरनेत्रकैः ॥ विविधैश्चमहाघो
रैर्भूतैर्भूतपतिर्वृतः ॥ ४१ ॥ विचित्ररत्नाङ्गविभूषणार्च्चितेशिलातलेहेममयेमनोरमे ॥ सुखोपविष्टंमदनाङ्गनाशनंजगादवाक्यंगिरिराजपुत्री ॥ ४२ ॥

देव्युवाच ॥ भगवन्देवदेवेशगोवृषाङ्कितवाहन ॥ तवकण्ठेमहादेवभ्राजतेऽम्बुदसन्निभम् ॥ ४३ ॥ नात्युल्वणंशुभंशुद्धंनीलाञ्जनचयोपमम् ॥
किमिदंदेवदीप्तंतेकण्ठेकामाङ्गनाशन ॥ ४४ ॥ हेतुःकःकारणंकिंवायेनेदंनीलमीश्वर ॥ एतत्सर्व्वंयथान्यायंश्रोतुमिच्छामितत्त्वतः ॥ ४५ ॥
श्रुत्वावाक्यंततस्तस्याःपार्व्वत्याःपार्व्वतीप्रियः ॥ कथांमङ्गलसंयुक्तांकथयामासशङ्करः ॥४६ ॥ महेश्वरउवाच ॥ मथ्यमानेऽमृतेपूर्व्वंक्षीरोदेसुरदान
वैः ॥ अग्रेसमुत्थितंतस्माद्विषंकालानलप्रभम् ॥ ४७ ॥ तद्दृष्ट्वासुरसंघाश्चदैत्याश्चैववरानने ॥ विषण्णवदनाःसर्व्वेगतास्तेब्रह्मणोऽन्तिकम् ॥ ४८ ॥
दृष्ट्वासुरगणान्भीतान्ब्रह्मोवाचमहाद्युतिः ॥ किमर्थंवैमहाभागाभीताउद्विग्नमानसाः ॥ ४९ ॥ मयाष्टगुणमैश्वर्य्यंभवतांसम्प्रवर्त्तितम् ॥ त्रैलोक्यस्येश्व
रायूयंसर्व्वेचविगतज्वराः ॥ ५० ॥ विमानचारिणःसर्व्वेसर्व्वेस्वच्छन्दचारिणः ॥ अध्यात्मेचाधिभूतेचअधिदैवेचसर्व्वशः ॥ ५१ ॥ प्रजाःकर्म्मविपा
केनशक्तायूयंप्रवर्त्तितुम् ॥ येनयूयंसमुद्विग्नामृगाःसिंहार्दिताइव ॥ ५२ ॥ एतत्सर्व्वंयथान्यायंशीघ्रमाख्यातुमर्हथ ॥ श्रुत्वावाक्यंततस्तस्यब्रह्मणः
परमात्मनः ॥ ५३ ॥ ऊचुस्तेऋषिभिःसार्द्धंदेवदैत्येन्द्रदानवाः ॥ सुरासुरैर्मथ्यमानेक्षीरोदेसुरसत्तम ॥ ५४ ॥ अभवन्मेघसङ्काशंनीलाञ्जनचयोपमम् ॥
प्रादुर्भूतंविषंघोरंसंवर्त्ताग्निसमप्रभम् ॥ ५५ ॥ कालकूटमितिख्यातंविषंविषमवेगधृक् ॥ तंदृष्ट्वासुरसंघाश्चदैत्याश्चैववरानने ॥ ५६ ॥ विषण्णवदनाः
सर्व्वेत्वामेवशरणंगताः ॥ ब्रह्मोवाच ॥ नमस्तुभ्यंविरूपाक्षनमस्तेदिव्यचक्षुषे ॥ ५७ ॥ नमःपिनाकहस्तायवज्रहस्तायवैनमः ॥ सांख्यायचैवयोगाय
भूतग्रामायवैनमः ॥ ५८ ॥ नमस्त्रैलोक्यनाथायभूतानांपतयेनमः ॥ नमःसुरारिहन्त्रेचसोमसूर्य्याग्निचक्षुषे ॥५९॥ ब्रह्मणेचैवरुद्रायविष्णवेचैवतेनमः ॥
मदनाङ्गविनाशायकालकालायवैनमः ॥ ६० ॥ रुद्रायवसुरेतायदेवदेवायरंहसे ॥ कपर्दिनेकरालायशंकरायहरायच ॥ ६१ ॥ कपालिनेविरूपाय
शिवायवरदायच ॥ त्रिपुरघ्नेमखघ्नायमन्त्राणांपतयेनमः ॥ ६२ ॥ बुद्धायचैवशुद्धायमुक्तायकेवलायच ॥ नमःकपालहस्तायदिग्वासायशिख
ण्डिने ॥ ६३ ॥ अग्रायचैवचोग्रायविप्रायानेकचक्षुषे ॥ रजसेचैवसत्त्वायनमस्तेऽव्यक्तयोनये ॥ ६४ ॥ अनित्यायचनित्यायनित्यानित्यायवैनमः ॥
अचिन्त्यायचचिन्त्यायचिन्त्याचिन्त्यायवैनमः ॥ ६५ ॥ भक्तानामार्त्तिनाशायनारायणप्रियायच ॥ उमाप्रियायसर्व्वायनन्दिवक्त्रानलायच ॥ ६६ ॥
पक्षमासार्द्धमासायऋतुसंवत्सरायच ॥ बहुरूपायमुण्डायदण्डिनेचसवल्किने ॥ ६७ ॥ वल्किनेधन्विनेचैवजटिनेब्रह्मचारिणे ॥ ऋग्यजुःसामरूपाय
पुरुषायेश्वरायच ॥ ६८ ॥ लोकक्षयनिपातायइन्द्रायवरुणायच ॥ इत्येवमादिचरितंततस्तुभ्यंनमोऽस्तुते ॥ ६९ ॥ क्षितेःपितःस्तुत्यंतमभवंतंकस्तु
प्रसादेनविनाददर्श ॥ ज्ञानन्तुभक्तिंममदेवदेवप्रसीदगङ्गाद्युतिसिक्तकेन ॥ ७० ॥ सूक्ष्मोऽसिदेवातिमयादिचिन्त्योनाहिप्रभुव्यक्तमपैहि

रुद्र ॥ ७१ ॥ महेश्वरउवाच ॥ एवंभगवतापूर्व्वंब्रह्मणालोककर्त्तृणा ॥ स्तुतोऽहंविविधैःस्तोत्रैर्वेदवेदाङ्गसम्भवैः ॥ ७२ ॥ ततःप्रीतोह्यहंतस्मै ब्रह्मणेसुमहात्मने ॥ दत्त्वासुमुखयाप्रीत्याविद्ययाहमथाब्रवम् ॥ ७३ ॥ भगवन्भूतभव्येशभूताधिपमहातपः ॥ किंकार्य्यंतेमयाब्रह्मन्कर्त्तव्यं ममसुव्रत ॥ ७४ ॥ श्रुत्वावाक्यंततोब्रह्माप्रत्युवाचाम्बुजेक्षणः ॥ भूतभव्यभवन्नाथश्रूयतांकारणंमम ॥ ७५ ॥ सुरासुरैर्मथ्यमानेपयोधौपंकजे क्षण ॥ अभवन्मेघसंकाशंनीलाञ्जनचयोपमम् ॥ ७६ ॥ प्रादुर्भूतंविषंघोरंसंवर्त्ताग्निसमप्रभम् ॥ कालमृत्युमिवोद्भूतंयुगान्तादित्यवर्च्चसम् ॥ ७७ ॥ त्रैलोक्यंष्वादिसूर्य्याभंविस्फुरन्तंसमन्ततः ॥ दृष्ट्वासर्व्वैवयंभीताद्रष्टुंवृषभवाहनम् ॥ ७८ ॥ तंपिबस्वमहादेवलोकानांहितकाम्यया ॥ भवानग्र्यश्च भोक्तावैभवान्देववरप्रदः ॥ ७९ ॥ भवांस्तस्यमहावेगंसमर्थःसंनियाच्छितुम् ॥ नहिकाश्चित्पुमाञ्छक्तास्त्रिषुलोकेषुविद्यते ॥ ८० ॥ येनाभ्युद्धतमात्रेण कृतःकृष्णोजनार्द्दनः॥ब्रुवतस्तुवरारोहेब्रह्मणःपरमेष्ठिनः॥८१॥बाढमित्येवतद्वाक्यंप्रतिगृह्यवरानने॥ततोऽहंपातुमारब्धोविषमन्तकसन्निभम् ॥८२॥ पीतञ्चमेमहाघोरंविषंसुरगणार्द्दनम्॥कण्ठंसमभिरक्षन्तुदृष्ट्वाकृष्णाम्बुजेक्षणे॥८३॥तद्दृष्ट्वोत्पलपत्राभंविषंकालानलप्रभम्॥तक्षकंनागराजानंलेलिहानमिवा परम्॥८४॥तदोवाचमहातेजाब्रह्मालोकपितामहः॥शोभसेत्वंमहादेवकण्ठेनानेनसुव्रत॥८५॥इतितस्यवचःश्रुत्वामयागिरिवरात्मजे॥पश्यतांसुरसंघानां दैत्यानाञ्चवरानने॥८६॥यक्षगन्धर्व्वनागानांपिशाचोरगरक्षसाम् ॥ धृतंकण्ठेविषंघोरंततःश्रीकण्ठतामम ॥८७॥ तत्कालकूटंविषमुग्रतेजोधृतञ्चयत्पर्व्व तराजपुत्रि॥सम्पश्यमानाःसुरदैत्यसंघाहृष्टाःपरंविस्मयमागताश्च॥८८॥ततःसुरगणाःसर्व्वेसयक्षोरगराक्षसाः ॥ ऊचुःप्राञ्जलयोभूत्वामत्तमातङ्गगामिनि ॥८९॥अहोबलंवीर्य्यंपराक्रमंतेअहोवपुर्योगबलंतदेव ॥ अहोविभूतिस्तवदेवदेवगङ्गाजलप्लावितकेशपाश ॥९०॥त्वमेवविष्णुश्चतुराननस्त्वंत्वमेवमृत्यु र्धनदस्त्वमेव ॥ त्वमेववह्निःपरमस्त्वमेवत्वमेवसूक्ष्मंपरमञ्चसूक्ष्मम् ॥ ९१ ॥ त्वमेवयोगैरभिगम्यएकस्त्वमेवसर्व्वस्यचराचरस्य॥पृथग्विभोक्ताप्रलये चगोप्ताइतीदमुक्त्वावचनंसुरेन्द्राः ॥ ९२ ॥ प्रपद्यसोमंप्रणिपत्यतस्थुःसमेत्यसर्व्वेविषदोषमुक्ताः ॥ गताविमानैरनिलोग्रवेगैर्निनादयन्तोविदिशो दिशश्च ॥ ९३ ॥ अध्यावसन्नाकमुपेत्यसर्व्वेमहेश्वरस्यस्तवनंप्रचक्रुः ॥ ९४ ॥ इत्येतत्परमंगुह्यंगुह्याद्गुह्यतरंमहत् ॥ नीलकण्ठेतियत्प्रोक्तंत्रिषुलो केषुविश्रुतम् ॥ ९५ ॥ स्वयंस्वयम्भुवाप्रोक्तांकथांपापप्रमोचनीम् ॥ यस्तुधारयतेचैनांब्रह्मोद्गीतांकथांशुभाम् ॥ ९६ ॥ तस्यवक्ष्याम्यहंसम्यग्ग तिञ्चेहाप्यमुत्रच ॥ विषंतस्यवरारोहेस्थावरंजङ्गमंचयत्॥९७॥गात्रंप्राप्यचसुश्रोणिक्षिप्रंचप्रतिहन्यते ॥ शमयत्यशुभंघोरंदुःस्वप्नञ्चापकर्षति ॥ ९८ ॥ स्त्रीणांवल्लभतांयातिसभायांपार्थिवस्यच॥विवादेजयमाप्नोतियुद्धेशूरत्वमेवच॥९९॥गच्छतिक्षेममध्वानंशरीरेनास्तितद्भयम् ॥ शरीरभेदेवक्ष्यामिगतिं

तस्यवरानने॥१००॥हरिश्मश्रुर्नीलकण्ठःशशांकांकितमूर्द्धजः ॥नन्दितुल्यबलःश्रीमान्नन्दितुल्यपराक्रमः ॥ १०१ ॥ अभेद्यस्त्रिशिरारुयक्षस्त्रिशूलीवर
वाहनः॥विचरत्यखिलान्सिद्धःसप्तलोकान्ममाज्ञया॥१०२॥नहन्यतेगतिस्तस्यअनिलस्ययथाम्बरे ॥ ममतुल्यबलोभूत्वातिष्ठत्याभूतसंप्लवम् ॥ १०३ ॥
ममभक्त्यावरारोहेयेचशृण्वन्तिमानवाः ॥ तेषांगतिंप्रवक्ष्यामिइहलोकेपरत्रच ॥ १०४ ॥ गवांशतसहस्रस्यसम्यग्दत्तस्ययत्फलम् ॥ तत्फलंलभतेम
र्त्त्यःश्रुत्वादिव्यामिमांकथाम् ॥ १०५ ॥ पादंवायदिवाप्यर्द्धंश्लोकंश्लोकार्द्धमेवच ॥ यस्तुधारयतेनित्यंरुद्रलोकंसगच्छति ॥ १०६ ॥ इतीतिहासंगि
रिराजपुत्रिमयासुतुष्टेनतवाम्बुजानने ॥ निवेदितंपुण्यफलादियुक्तंस्वयंचगीतंचतुराननेन ॥ १०७ ॥ कथामिमांपुण्यफलादियुक्तांनिवेद्यदेव्याःशशि
बद्धमूर्द्धजः ॥ वृषस्यपृष्ठेनसहोमयाप्रभुर्जगामकैलासगुहांगुहप्रियः ॥ १०८ ॥ श्रुतंमयापापहरंमहत्परंनिवेद्यतेभ्यःप्रययौप्रभंजनः ॥ अधीत्यसर्व्वंलि
खितंसतत्क्षणंजगामचादित्यपथंद्विजोत्तमाः ॥ १०९ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांनीलकण्ठस्तवोनामैकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ व्यासउवाच ॥ इच्छामिवेत्तुंत्रिपुरंचदग्धमेकेषुणाविप्रपिनाकधन्वना ॥ यथापुराभक्तवरप्रदेनतन्मेमुनेब्रूहियथाप्रवृत्तम् ॥१॥ पृष्टस्तथैवंमुनिनामुनी
न्द्रःप्रश्नंयथावत्कथयाञ्चकार ॥ दग्धंयथाततत्रिपुरंतथातच्छृणुष्वपुत्रेतियथाब्रुवन्वचः ॥ २ ॥ तस्मिन्हतेदैत्यवरेनृसिंहेपुराहिरण्याक्षसुतेप्रवीरे ॥
भग्नेषुदैत्येषुसदानवेषुमयोऽथदध्यावतिदुःखतप्तः ॥ ३ ॥ सविश्वकृद्दानवराजलक्ष्म्यारत्येवहीनोमकरध्वजोऽभूत् ॥ आदायदैत्यंसहतारकाख्यंवि
द्युत्प्रभंविष्णुसमप्रभावम् ॥ ४ ॥ तपश्चकारोग्रसुघोरकर्म्मादैत्यौचतावन्तकतुल्यकल्पौ ॥ तेशीतकालेहिमपर्व्वतस्थाग्रीष्मेचपंचज्वलनाभितप्ताः ॥
॥ ५ ॥ अभ्रेपयःप्लावितभूमिभागेचेरुस्तपःप्रागृषयःप्रयत्नात् ॥ तेषामगाद्दिव्यसमासहस्रंतथायुतंचोग्रतपःस्थितानाम् ॥ ६ ॥ चर्म्मास्थिशेषाज्वल
नप्रभावाःसुखादिहीनादितिपुत्रसिंहाः ॥ आदित्यतेजःप्रतिमानवीर्य्याबभूवुरादित्यतपःप्रकाशाः ॥ ७ ॥ पितामहस्तानभिगम्यसर्व्वान्प्रियंवदस्तान्व
चनंबभाषे ॥ तप्तंतपोवोऽघशतप्रमोचनंवरन्त्विदानींवृणुतेहहृष्टाः ॥ ८ ॥ तंप्रांजलिर्भूमिनिविष्टजानुर्मयःसुरेशंप्रणतोऽभ्युवाच ॥ अवध्यतामप्रतिमंब
लञ्चस्थानञ्चदिव्यंपरमंसुखञ्च॥९॥मृत्युर्यथानैवभवेत्तदेववरंप्रयच्छैतमभीप्सितंनः॥ करोम्यहंयन्नगरंशुभाङ्गएभिःपुरैर्दिव्यविमानकल्पम् ॥१०॥ तन्मे
भवेत्सर्व्वनरैरगम्यंस्वच्छन्दसंस्थानगतिःपुरीयम् ॥ इत्येवमुक्तेदनुजाधिपेनब्रह्मावचस्तंमयमावभाषे॥ ११ ॥ दातुंनशक्योवरएषतुभ्यंतस्माद्वरंसान्तर
मेतदेव ॥ त्वंपुन्नयाचस्वततःप्रदास्येचित्तंचमातेदनुजान्यथाभूत् ॥१२॥ ततोमयःप्राहतथापिमूढोवरोयथाप्रार्थितएषनोऽस्तु ॥ ब्रवीमियच्चान्यदहंसुरे
शतन्मेहसिद्धंप्रतियातुमह्यम् ॥१३॥ पूर्णेसहस्रेतुपुरंसमानांसङ्गीभवत्यर्द्धनिमेषमात्रम् ॥ तस्मिन्क्षणेयास्त्रिषुसंगतेषुपुरेषुदिव्येषुसुरप्रवीरः ॥१४॥ एके

षुणायास्त्रिपुरंदहेतसनोविनाशस्त्रिपुरस्यभूयात् ॥ श्रुत्वाततस्तद्वचनंमयस्यब्रह्मावरंतंह्यषितान्तरात्मा ॥१५॥ ददावभीष्टंदनुजाधिपायदत्त्वा वरञ्चस्वपु
रंजगाम ॥ ततोमयस्तुत्रिपुरंससर्ज्जजगद्विघातेचपुरादिकल्पे ॥ १६ ॥ अयोमयंतत्प्रथमंचकारततःपरंराजतमग्निकल्पम् ॥ तृतीयमन्यत्पुरमाशुहैमं
ससर्ज्जमेरोरिवशृंगमुग्रम् ॥१७॥सृष्टंतदातत्त्रिपुरंमयेनस्वर्गस्यरूपंप्रजहारदिव्यम्॥द्वारैर्मनोज्ञैर्वलभीगवाक्षैर्वीथ्यंगणैर्हैममयैःसुयुक्तम् ॥१८॥ चंद्रांशुसं
मृष्टतमैश्चहर्म्यैःशीतानिलाह्लादसुखप्रवेशैः ॥ मुक्ताप्रवालैर्मणिखण्डचित्रैरालम्बितैश्चित्रतडित्प्रकाशैः ॥१९॥ वज्रैर्विचित्रैःपवनावधूतैश्चलत्पताकाभि
रतीवरेजे॥प्रासादपंक्तिस्थितरत्नखण्डैर्महामहीध्रद्युतिसन्निकाशैः ॥ २० ॥ सतोरणाभ्युच्छ्रितहर्म्ययूथैरलङ्कृतंतत्त्रिपुरञ्चरेजे ॥ सर्व्वर्त्तुपुष्पैःफलिभिर्म
नोज्ञैर्वृतंसमन्तात्तरुभिर्मनोज्ञैः ॥ २१ ॥ रत्नैस्तथोद्यानशतैरुपेतंवन्यैरुपेतंततुभिःफलाढ्यैः ॥ वापीभिराक्रान्तविशुद्धभाभिःप्रफुल्लनीलोत्पलसंवृता
भिः॥२२॥ दैत्यालयंतच्छुशुभेतथैवप्रवृत्तकेकाविहगैर्महद्भिः ॥ तत्पुंनखाभिन्नपयोधराभिराकीर्णरक्तान्तविलोचनाभिः ॥२३॥ सव्रीडमीषच्चपलेक्षणा
भिर्योषिद्भिराकीर्णमतीवरेजे॥लौहंपुरंयत्तुमयश्चकारतत्तारकाख्यायददौमयश्च॥२४॥पुरंद्वितीयंरजतालयंयद्विद्युत्प्रभायासुरराट्प्रदाय॥हैमंतृतीयंस्वय
मेवदिव्यंजग्राहराजामयआत्मनोऽर्थे ॥ २५ ॥ अधिष्ठितंतत्त्रिपुरंतदाभूत्समंत्रिभिस्तैर्दनुराजसिंहैः ॥ तेसर्व्वतःशत्रुबलान्विजित्यप्रियासहायाःसहविप्र
भृत्यैः॥२६॥ सुखानितस्मिन्विविधानिचापुस्त्रैलोक्यसौख्यानिविनाशयन्तः ॥ तेदर्पमोहप्रतिबद्धरागाजितानमन्यन्तततोहिदेवान् ॥२७॥ मत्वातुतेषां
प्रसभंनिपत्यनानाविधाश्चक्रुरतीवपीडाः ॥ वनानिवैभ्राजपुरःसराणिसंभिद्यतान्यात्तसुमानिचक्रुः ॥२८॥ तेषामतीतःसमयोमहानलंप्रकुर्व्वतांदेवविना
शनानि॥ततोमयंतेप्रतिजातकोपाइन्द्रादयोदेवगणास्तदैव ॥२९॥ वृत्तंयथासर्व्वमशेषमेतन्न्यवेदयन्नाशुपितामहाय ॥ तानाहदेवःकमलासनस्तुसव्व
न्सुरेशान्प्रतिसान्त्वयित्वा॥३०॥ महाबलास्तेत्रिपुरासुरेन्द्राहन्तुंनशक्याःस्वबलाद्भवद्भिः ॥तस्मादयंविष्णुरहञ्चयुष्मान्प्रगृह्यशम्भुंशरणंप्रयामः॥३१॥
गतिःसदानःशशिभृत्सुरेशःसर्व्वान्बलान्धक्ष्यतिशूलपाणिः ॥ तथैवतेतुप्रतिपद्यदेवाब्रह्मार्कशक्रानिलपावकाद्याः॥३२॥कैलासमागम्यसुरेश्वरंतेदृष्ट्वाहरं
तुष्टुवराहतास्ते ॥ नमस्त्रिलोकेश्वरवन्दितायप्रियामरायामितविक्रमाय ॥ ३३ ॥ नमस्तुचन्द्रार्द्धजटाकलापकान्तिप्रभाद्योतितशेखराय ॥ त्रैलोक्यदे
वायनमोऽस्तुनित्यंपिनाकहस्तायनमस्तथैव ॥३४॥ नमःप्रदीप्ताग्रपरश्वधायत्रिशूलहस्तायनमोऽस्तुनित्यम्॥नमोनमोनन्दिवरप्रदायजगच्छरण्यायसु
रेश्वराय ॥ ३५ ॥ नमःसदाहर्षवरप्रदायनमोस्तुयज्ञेशवरप्रदाय ॥ स्थितायनित्यंहिमवद्गिरीन्द्रेकैलासवासायनमःसदैव ॥ ३६ ॥ नमोऽस्तुमुक्ताशय
केतनायनमोऽस्तुनित्यंवृषभस्थिताय ॥ दिग्वाससेश्वेतवरप्रदायसम्पाद्विमुक्तायजगद्विधात्रे ॥ ३७ ॥ चन्द्रार्कशक्राग्निपितामहानांस्रष्ट्रेनमोदेववरेश्वरा

य ॥ सूक्ष्मायनित्यंपरमेश्वरायनित्यंनमःसर्गगतायगात्रे ॥३८॥ नमःपरायातिपरात्मनेपरःशतंनमःशंकरसंज्ञिताय ॥ नमोऽस्तुशर्व्वायधराध्वरायनमोऽस्तुसर्व्वप्रभवायनित्यम्॥३९॥ सोमानिलार्कज्वलनाम्बुभूमिव्योमात्मकादिंसृजतेनमोऽस्तु॥पूष्णोनमोदन्तविनाशनायकामांगनाशायनमोऽस्तुनित्यम् ॥ ४० ॥ नमःप्रधानायनमोनमोऽस्तुनमोऽस्तुनित्यंपुरुषोत्तमाय ॥ रुद्रायसौम्यायवपुष्मतेचनमोनमःसर्व्वजगत्सृजेच ॥ ४१ ॥ नमःसृजेयक्षसुरासुराणांनमस्तृतीयेक्षणधारिणेच ॥ नमोनमोनीलशिखण्डिनेचनमोऽस्तुनित्यंपुरुषोत्तमाय ॥ ४२ ॥ श्मशानवासायनमःसदैवनमोऽस्तुदैत्याङ्गविनाशनाय ॥ नमःसदामोहविनाशनायअज्ञाननाशायचतेनमोऽस्तु ॥ ४३ ॥ नमःसदामोक्षवरप्रदायनमःसदाचामृतसंस्थिताय ॥ भर्त्रेनमोभूमिधरेन्द्रपुत्र्याःपित्रेकुमारस्यनमोऽस्तुनित्यम् ॥ ४४ ॥ नमोऽस्तुविश्वेशवरप्रदायब्रह्मात्मनेविश्वसृजेनमोऽस्तु ॥ नमोनमोदेवसृजेविधात्रेनमोऽस्तुदक्षस्यचयज्ञहन्त्रे ॥ ४५ ॥ नमोऽस्तुचण्डेशवरप्रदात्रेयोगेश्वराणांवरदायतुभ्यम् ॥ नमोऽस्तुतेशर्व्वदिगम्बरायनमोऽस्तुरुद्रायसदैवधात्रे ॥ ४६ ॥ हरायशर्व्वायनमोनमोऽस्तुभीमायशम्भोचनमःसदैव ॥ प्रसाद्यमानःकुरुनःप्रसादंतुष्टःपरेषांतुवरप्रदाय ॥ ४७ ॥ एवंचतेषांस्तुवतांसुराणांब्रह्मेन्द्रविष्णवर्कपुरःसराणाम् ॥ प्रीतस्तयास्तोत्रविशेषभक्त्याजगादवाक्यंपरमेप्सितार्थम् ॥ ४८ ॥ तुष्टोऽस्मिदेवावृणुताद्यशीघ्रंसमाहितंचापदिकिञ्चिदस्ति ॥ दातास्मिसर्व्वंतदशेषतोऽद्यकिञ्चिन्नयुष्माकमदेयमस्ति ॥ ४९ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांत्रिपुरोपाख्यानेद्विपञ्चाशोऽध्यायः ॥ ५२ ॥ देवाऊचुः ॥ ब्रह्मलब्धवरैर्देवमयाद्यैर्दानवैस्त्रिभिः ॥ हृताश्चाप्सरसःसर्व्वाध्वंसितानिवनानिच॥ १॥सर्व्वान्देवान्निहन्मोऽद्यश्वोहन्मेतिचतेऽब्रुवन् ॥ नतेषांनिग्रहेशक्तोब्रह्माप्येषपितामहः॥२॥विष्णुर्वापिमहादेवतेननःसुमहद्भयम् ॥तद्यथात्रिपुरंनश्येद्देवाःस्युर्जयिनस्तथा ॥ ३ ॥ तथाकुरुसुरश्रेष्ठवरोयंनःप्रदीयताम् ॥ इतिविज्ञापितःसर्व्वैस्तैर्देवैर्हिसुरोत्तमैः ॥ ४ ॥ इदमाहमहातेजाःसर्व्वान्नाश्वासयन्निव ॥ अर्द्धमंशंसुरगणागृहीत्वाममतेजसः ॥ ५ ॥ रुद्रतेजोमयाभूत्वादानवान्विनिहंस्यथ ॥ ततस्तेपुनरेवेशंप्राहुर्वाक्यमिदंसुराः ॥ ६ ॥ शक्ताःसहस्रमप्यंशंवोढुंनचवयंभव ॥ कानःशक्तिःसुरेशानतेजोमाहेश्वरंपरम् ॥ ७ ॥ द्रष्टुंधारयितुंवापिप्रसादंकुरुनःप्रभो ॥ नकथञ्चिद्वयंशक्ताग्रहीतुंदानवान्बलात् ॥ ८ ॥ भगवन्स्वयमेवत्वंत्रिपुरंजहिशंकर ॥ तेभ्यःकिलवरोदत्तोब्रह्मणातेनशूलधृक् ॥ ९ ॥ दिव्येवर्षसहस्रेतुसमेष्यातिपुरत्रयम् ॥ निमेषार्द्धक्षणेतास्मिन्यएवत्रिपुरंबलात् ॥ १० ॥ सकृदेकमिषुंक्षिप्त्वासम्प्रधक्ष्यतिदानवान् ॥ भविष्यतिततोमृत्युर्नान्यथामरणंहिवः ॥ ११ ॥ तच्चकर्त्तुंनशक्ताःस्मप्रसादंतेननःकुरु ॥ ततःसभगवान्देवःप्रणतान्वृषभध्वजः॥ १२॥पुनराश्वासयन्प्राहसमुद्विग्नान्दिवौकसः॥यद्येवंसुरशार्दूलास्त्रिपुरंदुर्ग

मंमहत् ॥ १३ ॥ इषुमेकंततःक्षिप्त्वाप्रधक्ष्यामिपुरोत्तमम् ॥ ब्रह्मविष्णुप्रियार्थंहिशक्रस्यानुग्रहायच ॥ १४ ॥ त्रिपुरंरथमास्थायहिंसामिस्वयमेवतु ॥
क्रियतांसरथःसज्जोयत्रारुह्यदिवौकसः ॥१५॥ धक्ष्यामित्रिपुरंदुर्गमाक्रान्तंदानवैस्त्रिभिः॥यादृशश्चहिमांवोढुंशक्तःस्यात्सुरपुङ्गवाः ॥१६॥ बलवान्हिमव
त्कल्पःकर्त्तव्यस्तादृशोरथः ॥ ततोदेवाःप्रणम्यैतंप्रहृष्टमनसोऽभवन् ॥ १७ ॥ रथञ्चसहिताःसर्व्वेकल्पयामासुरुत्तमम् ॥ ततःसभगवान्ब्रह्मातथावि
ष्णुहुताशनौ ॥ १८ ॥ सर्व्वदेवमयंदिव्यंचक्रुस्तंरथसुत्तमम् ॥ धातारंभास्करंचोग्रंपवनंधनदंयमम् ॥ १९ ॥ वसून्रुद्रांस्तथादित्यान्गन्धर्व्वानश्विना
वपि ॥ गरुडंपर्व्वतान्नागान्गुह्यकान्समहोरगान् ॥ २० ॥ ऋषीन्सिद्धांस्तथायक्षान्ग्रहांश्चसुमहाबलान्॥ पर्ज्जन्यंशशिनंकालंतथाचैववनस्पतीन्॥२१॥
दिवसांश्चमुहूर्त्तांश्चक्षणान्काष्ठालवांस्तथा ॥ अयनेचऋतून्मासान्विषुवंवत्सरांस्तथा ॥ २२ ॥ स्थावरंजङ्गमंयच्चनक्षत्राणितथैवच ॥ अष्टौदेव
निकायांश्चरथेतस्मिन्नकल्पयन् ॥ २३ ॥ कांश्चिच्चक्रद्वयंचक्रुःप्रतोदंचमहासुरान् ॥ ध्वजान्कांश्चिद्रथेतस्मिन्बबन्धुःसुरपुङ्गवाः ॥ २४ ॥ कृत्वाश्वांश्च
तुरोवेदान्रथेतस्मिन्नयोजयन् ॥ संवत्सरमयंचक्रंधनुर्गिरिवरंतथा ॥ २५ ॥ ज्याञ्चैवधनुषश्चक्रुर्देवदेवंजगत्पतिम् ॥ तेतमेवंविधंदेवारथमग्र्यमचीकरन्
॥ २६ ॥ सर्व्वदेवमयंकृत्वागिरिकल्पंरथोत्तमम् ॥ विष्णुःपितामहोऽग्निश्चप्रणम्यपरमेश्वरम् ॥ २७ ॥ रथंसज्जमितिप्राहुर्विनाशायसुरद्विषाम् ॥
ततःसभगवाञ्छम्भुःस्तूयमानःसुरासुरैः ॥ २८ ॥ अवेक्ष्यतंरथंदिव्यंसर्व्वतेजोमयंपरम् ॥ अधश्चोर्ध्वंचसंप्रेक्ष्यत्वशेषभुवनेश्वरः ॥ २९ ॥
पितामहंततोवीक्ष्यप्रोवाचवचसांपतिम् ॥ रथएषधनुश्चैवत्वयाब्रह्मन्प्रकल्पितौ ॥ ३० ॥ दग्धव्यंत्रिपुरंयेनतमिषुंशीघ्रमानय ॥ ततःप्रो
वाचतंब्रह्माप्रणम्यवृषभध्वजम् ॥ ३१ ॥ रथएषकृतोदेवधनुश्चतेमयाकृतम् ॥ तमिषुंभगवन्देवउद्योगंकर्त्तुमर्हसि ॥ ३२ ॥ ततःपार्श्वस्थितो
दृष्ट्वाशम्भुर्विष्णुहुताशनौ ॥ दृष्टिपातेनतौदेवौसहाह्वयदरिन्दमौ ॥ ३३ ॥ द्वौतावञ्जलिमाधायसुरेशानमुपस्थितौ ॥ स्वयमेवततश्चक्रेशम्भुर्विष्णुंश
रोत्तमम् ॥ ३४ ॥ ओषधीनांपतिंसोमंमुखेतस्यन्ययोजयत् ॥ शल्यंचपावकंचक्रेसब्रह्माणंततोऽब्रवीत् ॥ ३५ ॥ सारथिःकोरथेब्रह्मंस्त्वयहपरिकल्पि
तः ॥ तमुवाचततोब्रह्माप्रांजलिर्जगतांपतिम् ॥ ३६ ॥ मह्यंददासियद्याज्ञांस्वयमेवहिसारथिः ॥ प्राप्तंकिमधिकंदेवसारथ्यादधिकंततः ॥ ३७ ॥ सर्व्वं
शोभनमित्युक्त्वाततोदेवःपिनाकधृक् ॥ हस्तेप्रगृह्यदेवेशमारुरोहरथोत्तरम् ॥ ३८ ॥ रुद्रस्यपार्षदायेचनन्दीश्वरपुरोगमाः ॥ शंकुकर्णपुरोगाश्चयेचच
ण्डेश्वरादयः ॥ ३९ ॥ गणेश्वरामहायोगारुयक्षाःपट्टिशपाणयः ॥ नानाशस्त्रप्रहरणानानायुद्धविशारदाः ॥ ४० ॥ वादयन्तस्तथावाद्यंभेरीशङ्खस्वरा
न्बहून् ॥ आजग्मुर्गणमुख्यास्तेसहस्राणिचतुर्द्दश ॥ ४१ ॥ नानाविधानांपुष्पाणामुपरिष्टात्सहस्रशः ॥ निपेतुर्वृष्टयोमूर्ध्निदेवदेवस्यशूलिनः ॥ ४२ ॥

अशक्ताभारमुद्वोढुंमुमुहुर्देवताभृशम् ॥ ततस्तान्देवदेवेशोज्ञात्वायुक्तान्दिवौकसः ॥ ४३ ॥ सहनीयंवपुश्चक्रेसुराःसर्व्वेविदुद्रुवुः ॥ एतस्मिन्नन्तरेव्या
सनारदोऽभ्यागमन्मुनिः ॥ ४४ ॥ प्रसादितःससर्व्वैस्तुसदेवोवृषभध्वजः ॥ आयातित्रिपुरंदग्धुमत्रयत्साधुतत्कुरु ॥ ४५ ॥ रथेदेवमयेदिव्येसमारुह्य
जगत्पतिः ॥ ब्रह्माणंसारथिंकृत्वास्वयमायातिशङ्करः ॥ ४६ ॥ नारदस्यवचःश्रुत्वासतदादानवाधिपः ॥ तारकाख्यंसमाहूयविद्युन्मालिनमेवच ॥ ४७ ॥
तथान्यानतुजान्भृत्यान्दानवोऽपिपुरःसरान् ॥ नारदेनयथाख्यातंसर्वमाख्यातवांस्तदा ॥ ४८ ॥ ततःश्रुत्वादैत्यराजस्तारकाख्योऽब्रवीदिदम् ॥
किमर्थंचिन्त्यतेराजन्सर्व्वैवध्यायथार्थतः ॥ ४९ ॥ कस्येहत्रिपुरंहन्तुंशक्तिर्विद्येतदानव ॥ सङ्गत्यदेवताःसर्व्वैसर्व्वैर्योद्धुमिहागताः ॥ ५० ॥ दुर्व्वलः
कुरुतेभेदंदानंसान्त्वमथापिवा ॥ प्रमाणंयशसःसन्तोवीर्य्यंतुबलिनःसदा ॥ ५१ ॥ दुर्व्वलस्यरिपोर्दंडोबलिनाविजिगीषया ॥ कर्त्तव्योविक्रमेणेदंप्रा
हशुक्रस्तथागुरुः ॥ ५२ ॥ यथेमेबलिनोदैत्यानतथापिदिवौकसः ॥ जित्वादंडेनतान्सर्वान्स्थास्यामोनिर्वृताःसुखम् ॥ ५३ ॥ तारकाख्यवचःश्रुत्वावि
द्युन्मालीमहाबलः ॥ सम्मान्यतदतीवेष्टंराज्ञोऽस्यवचनंशुभम् ॥ ५४ ॥ नशक्तायोद्धुमस्माभिर्देवताबलवर्जिताः ॥ तेचेद्योत्स्यन्तिसंमूढाःप्रयास्यन्ति
ततःक्षयम् ॥ ५५ ॥ अन्योन्यंतुवयंबुद्ध्याउपायंतेषुयोत्स्यते ॥ युद्धेनैवसदादैत्याःप्राप्नुवन्तिजयंपरम् ॥ ५६ ॥ प्रत्याहत्यसुरान्सर्वान्कुरुराज्यंत्रि
विष्टपे ॥ त्रैलोक्यनिर्व्वृतोभूत्वाइन्द्रोभवसिविश्वकृत् ॥ ५७ ॥ सप्तलोकेश्वरंह्यद्यपश्यामत्वांपुरःसरम् ॥ हिरण्यकशिपुंचैवहिरण्याक्षंचदैत्यपम्॥ ५८ ॥
भोक्ताचजगतोराजात्वंप्रयाहितयोर्गतिम् ॥ ततःश्रुत्वामयोव्यासविद्युन्मालिविभाषितम् ॥ ५९ ॥ नैतदेवमितिप्राहकम्पयन्नसकृच्छिरः ॥ यस्तुल्यस्व
बलःशत्रुर्हीनोवादैत्यपुङ्गवाः ॥६०॥ तैर्देवैःसार्द्धमस्माकंयुक्तंसामादियोजनम्॥ यएषभगवानीशःसर्व्वभूतेश्वरःप्रभुः ॥६१॥ अस्माकंदेवतानांचस्रष्टाह
र्त्ताचसप्रभुः ॥ सहन्तुंस्वयमायातिउपायस्तस्यकीदृशः ॥६२॥ प्रणामःसंश्रयश्चैवगुणोपायैःकपर्दिनः ॥द्वाविमौसाधनेतस्यप्रयोज्याविंतिमेमतिः॥६३॥
यदिकार्कंश्यमास्थाययोधयामपिनाकिनम्॥तस्यजिह्मेक्षणेनैवनिहताःस्थततोऽसुराः ॥६४॥ ब्रह्माद्याःशरणंसन्तमर्दितायान्तिशान्तये॥योऽभियुक्तःस्व
यंतेनशरणंतस्यकोभवेत् ॥ ६५ ॥ तस्यसर्व्वमिदंदैत्याब्रह्मादिप्रथितंजगत्॥अभिध्यानात्क्षणेनैवप्रणश्येतभवेदपि ॥६६॥ योहेतुरपवर्गस्यकारणंजगतः
स्वयम् ॥ कीदृशंतेनयुद्धंनोदेवदेवेनशम्भुना॥६७॥किंतपोऽपिविशुद्धंनोनष्टंकियदनन्तरम्॥भवन्तोलोष्टवोभूत्वागिरिकल्पसमाशिनः ॥६८॥ इच्छन्ति
सहितायोद्धुंकालपाशेनचोदिताः ॥ अहंभक्तोमहादेवंजानेतस्यचनान्तरम् ॥ ६९ ॥ सप्रणामःस्वयंस्थास्येनयोत्स्येशम्भुनासह ॥ यदियूयमपिप्राज्ञा
ममशुश्रूषवोयदि ॥ ७० ॥ माक्रुध्वंशम्भुनायुद्धंगच्छध्वंशरणंशिवम् ॥ तमेवंवादिनंश्रुत्वाविश्वकर्म्माणमूर्ज्जितम् ॥ ७१ ॥ नारदोभगवानाहदानवान्त

करंवचः ॥ नत्वयाविश्वकर्म्मेदमुक्तंविस्तरतोऽर्थवत् ॥ ७२ ॥ सर्व्वंयुक्तमिदंकिन्तुकालोऽयंनास्यसम्प्रति ॥ भवतांतुतपःक्षीणमैश्वर्य्यंभुक्तमेवच ॥
॥ ७३ ॥ क्लीबतामपिकुर्व्वन्तोयूयंनश्यथदानवाः ॥ वृतःसर्व्वामरैःशम्भुर्वधार्थंभवतामिह ॥ ७४ ॥ प्रणतानप्यसौयुष्मांस्तत्प्रियार्थंहनिष्यति ॥ कथं
दनुसुताभूत्वाराजानोबलगर्व्विताः ॥ ७५ ॥ भीतामृत्युंजिगीषध्वंकृपणाइवदानवाः ॥ प्राप्यनाधिकमैश्वर्य्यंयशसोमूलनेयादि ॥ ७६ ॥ विनायुद्धंप्रपन्ना
नामशुभावोगतिर्भवेत् ॥ अथप्राप्स्यथविध्वंसंदेवदेवेनशूलिना ॥ ७७ ॥ प्रमथेन्द्रास्ततोयूयंभवितारोनसंशयः ॥ गुणसिद्धिस्ततोनास्तियुष्माकंदैवतैः
सह ॥ ७८ ॥ विग्रहेवोमतिर्युक्तासामत्यक्त्वाभवेनच ॥ शौर्य्येणभवतांप्रीतःकदाचिद्वृषभध्वजः ॥ ७९ ॥ भवेद्वरप्रदोदैत्याःश्रेयोवस्तेनविक्रमः ॥ क
रिष्यामिचरक्षांवःशस्त्रघातनिवारिणीम् ॥ ८० ॥ उत्तिष्ठतदनोःपुत्राविजयाययुयुत्सया ॥ नारदस्यवचःश्रुत्वातारकाख्योमहाबलः ॥ ८१ ॥ विद्युन्मा
लीचदैत्येन्द्रोबाणाद्याश्चमहासुराः ॥ कालेननोदितामूढाःक्षीणपुण्यागतायुषः ॥८२॥ सर्व्वंतच्छोभनंप्रोक्तंनारदेनेतितेऽब्रुवन् ॥ मयोऽपितद्वचोबुद्ध्वाज्ञा
त्वानाशमुपस्थितम् ॥८३॥ शोभनंनारदेनोक्तमितिवाक्यमुवाचह ॥ नारदोऽपिततोहृष्टोरक्षांबद्ध्वातुमायया ॥८४॥ युयुत्सूनसुरान्कृत्वाययौशर्व्वरथंप्र
ति ॥ततस्तेदानवाःसर्व्वेयुद्धायकृतनिश्चयाः ॥ ८५ ॥ नानाप्रहरणोपेताबभूवुर्युद्धलालसाः ॥ तारकाक्षोबलोबाणोविद्युन्मालीचदानवः ॥८६॥ संनद्धस
हिताःसर्व्वेराजानस्तस्थुरग्रतः ॥ अवाद्यन्तततःशङ्खास्तूर्य्याणिचसहस्रशः ॥ ८७ ॥ दानवानांबलेघोरेकातराणांभयप्रदे ॥ सरथःसहसायातिअयंकेतु
श्चदृश्यते ॥ ८८ ॥ कथमागतइत्येवंतेचऊचुःपरस्परम् ॥ ८९ ॥ विगतभयविषादास्त्रैपुरादैत्यसंघाःप्रकुपितवदनास्तेयुद्धसज्जाबभूवुः ॥ प्रहरणवरह
स्तास्तद्रथंवीक्षमाणाःपशवइवयथाग्नेरन्वगच्छन्समीपम् ॥ ९० ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांत्रिपुराख्यानेत्रिपञ्चाशोऽध्यायः॥ ५३ ॥
॥ सनत्कुमारउवाच ॥ अथाभ्ययात्पश्चिमसागरस्यमूर्द्ध्निस्थितंतत्त्रिपुरंरथोऽसौ ॥ नानापताकोज्ज्वलचित्रमौलिर्हैमोऽपरोमेरुरिवाधिराजः ॥ १ ॥ ते
वीक्ष्यदुर्गंत्रिपुरंगणेशानन्दीश्वराद्याःप्रमथाःसपत्नाः ॥ नादंप्रचक्रुःसहिताःप्रवीरायुयुत्सवोदानवसिंहमुख्याः ॥ २ ॥ चण्डेश्वरश्चण्डवपुर्महात्माज्वलत्प्र
दीप्तोग्रकुठारपाणिः ॥ व्यादायवक्त्रंपुरतःस्थितोऽभूद्देवस्यशम्भोःप्रमथेन्द्रवीरः ॥ ३ ॥ दीप्तंत्रिशूलंपरिगृह्यनन्दीत्र्यक्षःप्रतस्थेहरतुल्यधर्म्मा ॥ पार्श्वे
स्थितोऽभूत्सचशंकुकर्णःप्रगृह्यदीप्तंमुशलंगणेन्द्रः ॥ ४ ॥ भृङ्गीमहात्मासचवीरभद्रस्तथागणेन्द्राःशतशःप्रवीराः ॥ वज्रत्रिशूलासिगदर्ष्टिहस्ताःप्रतस्थि
रेतेविजयात्तहस्ताः ॥ ५ ॥ समागतंतंरथमीक्ष्यदैत्यायुद्धायतेजग्मुरुपेतमोहाः ॥ तेतारकाक्षप्रमुखाःसुवीराःसंनह्यनानायुधदीप्तहस्ताः ॥ ६ ॥
सार्द्धंगणेन्द्रैःसमरंप्रचक्रुर्दनोःसुताःकोपवशंप्रयाताः ॥ देवोऽपिचन्द्रार्द्धनिकेतमौलिःसर्व्वंसमीक्ष्यत्रिपुरंप्रदग्धुम् ॥ ७ ॥ तस्थौसहासंकृतवान्स्वनंचप

श्यन्रणंतद्गणदैत्यपानाम् ॥ ततःसनन्दीगणपैःप्रवीरैरचीकरद्युद्धमहीनसत्त्वैः ॥ ८ ॥ विव्याधभृङ्गीदशभिःपृषत्कैर्विद्युत्प्रभंकोपसरक्तनेत्रः ॥ भृङ्गिं
समासाद्यशिलायुधास्तेनाशक्नुवंस्तस्यरुजंप्रकर्त्तुम् ॥९॥ विद्युत्प्रभंभृङ्गिरिटिस्ततोऽसौशूलेनदीप्तेनजघानपृष्ठे॥शितेनशूलेनहतोऽस्तपूर्णफूत्कारभृङ्गी
प्रययौभयार्त्तः ॥ १० ॥ भग्नस्तदासौदितिजाधिपेशोभृङ्गिंसमुत्सृज्यगणेन्द्रमुख्यम् ॥ विव्याधतीक्ष्णैर्निशितैःपृषत्कैर्विनायकंसप्तभिरंसदेशे ॥ ११ ॥
पुनस्त्रिषष्ट्यादशभिश्चभूयोविद्युत्प्रभस्तंगजराजवक्रम् ॥ जघानमर्म्मस्वविलक्षरूपंततश्चुकोपास्यविनायकेन्द्रः ॥ १२ ॥ सपुष्कराग्रेणगजेन्द्रसिंहो
ग्रीवांतदादैत्यपतेर्विपिष्य ॥ उत्पाटयामासशिरःशरीरात्पद्मंयथानागइवाद्रिपेन्द्रः॥ १३ ॥ दैत्यस्यकृत्तंशुशुभेशिरस्तुदन्तावलेन्द्रप्रतिभाच्छरीरात् ॥
महोत्सवेभृङ्गवरोपगीतंह्रदाह्लतोत्खातमिवाशुपद्मम् ॥ १४ ॥ ततोऽपरौदैत्यपतीसपत्नौनेमिर्बलश्चान्धकतुल्यवीर्यौ ॥ क्रुद्धावुपागम्यचशंकुकर्णंशि
लीमुखैर्विव्यधतुर्गणेन्द्रम् ॥१५॥ तौशंकुकर्णःप्रसभंनिपात्यच्छिन्नध्वजाश्वौविरथौचकार ॥ अन्यौसमारुह्यरथौपुनस्तौभूयःसमागम्यगणप्रवीरम्॥१६॥
तंजघ्नतुर्नैकविधैःपृषत्कैर्वज्राभिघातप्रतिमैःसुतीक्ष्णैः ॥ क्रुद्धस्तदासप्रसभंगणेशस्तौदैत्यराजौसुचिरंनिरीक्ष्य ॥ १७ ॥ दीप्तेनहत्वामुशलेनवीरौसम्प्रे
षयामासपुरंयमस्य॥अन्येचदैत्यास्त्रिपुराधिवासाःक्रुद्धाविनिष्क्रम्यगणेन्द्रमुख्यैः ॥१८॥ नाराचवज्रासिकुठारहस्ताघोरंमहायुद्धमतीवचक्रुः॥दैत्येश्वरा
स्तैर्हरकल्पतुल्यैर्गणेश्वरैःप्राप्तशिवप्रसादैः ॥१९॥ हताबभूवुर्विगतासवस्तुमृगायथाकेसरिभिर्वनान्ते ॥ प्रभ्रष्टनानायुधवक्रधाराश्छिन्नैर्भुजःशोणितमुद्व
मन्तः॥२०॥वात्याहतास्तेतुपयोधराइवपेतुःसमुद्रेगिरिशृङ्गकल्पाः॥श्रुत्वाचदैत्यौबलनेमिसंज्ञौतौशंकुकर्णेनहतौप्रसह्य ॥२१॥ पुराद्विनिष्क्रम्यसतार
काक्षःक्रुद्धोगणेन्द्रंस्वयमभ्यधावत्॥२२॥तंशंकुकर्णोदितिजाधिकल्पंजघानमूर्ध्निप्रसभंगणेन्द्रः ॥ निपत्यकिञ्चिन्महितस्यवीर्य्यंभल्लेनदैत्याधिपतिंनिह
त्य॥२३॥प्रोत्थायतूर्णंसहितारकाक्षश्चिक्षेपतस्मैगणपायचक्रम् ॥क्रुद्धस्ततःसोऽभिहतोगणेन्द्रस्तंतारकाक्षंसतुशंकुकर्णः॥२४॥ निपत्यमुष्ट्यानिजघान
मूर्ध्निसमाहतःसोऽपिजगामकृच्छ्रम् ॥ जघ्नंस्तुबभ्राममुमोहतस्मैपपाततत्याजवरायुधञ्च ॥२५॥ मुमोचरोषंविरराजतीव्रंममारपश्चादसुरःप्रसक्तः॥दृष्ट्वा
विपन्नंदितिजाधिपेन्द्रंप्रगृह्यदैत्याभवनंमयस्य ॥ २६ ॥ गत्वानिवेद्यासुरराजभर्त्रेनादान्प्रचक्रुर्विविधैर्विलापैः ॥ ततोमयस्तान्रुदतोऽसुरेशानाश्वासय
न्प्राहवचोऽसुरेन्द्रः ॥ २७ ॥ गृहेमयाऽक्षेप्यमृतंतदस्तितेनैनमुत्थापयताशुदैत्याः ॥ ततोगृहीत्वामृतमुत्तमंतेदैत्याधिपंदैत्यवृषाःप्रहृष्टाः ॥ २८ ॥
चक्रुःसजीवंहियथापुराणंमयंप्रणेमुश्चमुहुःशिरोभिः॥सतारकाक्षस्ततआशुभूयोयुयुत्सयायुद्धपथंजगाम ॥२९॥आयान्तमालक्ष्यपितामहस्तंपूर्व्वंमृतंजी
वितमाशुभूयः ॥ प्रोवाचवाक्यंससुरासुरेशंनिवेदयन्वामकरेणदैत्यम्॥३०॥ हतोऽप्ययंशङ्करतारकाक्षःकृतोमयेनाशुसजीवएव ॥ अस्यास्तिदेवामृत

मुत्तमंहितेनासुराञ्जीवयतेऽसुरेन्द्रः ॥ ३१ ॥ देवोमहानेषसुरेन्द्रकेनमृतान्मृताञ्जीवयतेसदासौ ॥ ततोऽमृतंतन्मयसंस्थमाशुप्रहारमात्रेणहरास्यशम्भो
॥३२॥श्रुत्वावचस्तस्यपितामहस्यप्रहारमात्रेणजहारसद्यः॥तदामृतंतद्गमितंतदास्तुगृहाणदेवेशशरोऽव्ययस्तदा ॥३३॥पितामहस्तत्पुनरेवहृष्टःपिना
किनंप्राहवचःप्रणम्य ॥ दृष्टंमयायुद्धमिदंगणानांदैत्याधिपैःसार्द्धमहीनसत्त्वैः ॥ ३४ ॥ दिव्यंसहस्रंहिगतंसमानांक्षयंनचैतात्त्रिपुरंजगाम ॥ क्षिपप्रदीप्तंत
मिषुंसुरेशप्रयान्तुनाशंसुरविद्विषस्ते ॥३५॥ पूर्णेसहस्रेत्रिपुरंसमेत्यपुनर्विपर्य्यस्तमभूत्सुरेश ॥ क्षिप्तस्त्वयेषुर्नचदेवदेवयोगेनकिंवातवदेवनाथ ॥३६॥
संकल्पमात्रादपिनाशमेतिदैत्याधिवासंत्रिपुरंतदेव ॥ यदित्वहंमानयितव्यईशविमुञ्चतन्तुत्रिपुरेनिबद्धे ॥ ३७ ॥ विज्ञप्तएवंचतुराननेनप्रलीढमालीढम
नङ्गहन्ता ॥ कृत्वाधनुस्तद्बलवन्निकृष्यप्रायोजयद्दीप्तमिषुंपिनाके ॥ ३८ ॥ संकल्पमात्रेणतदासमानिपुराणिदैत्यैःसहितानितानि ॥ चक्रेजगत्सृष्टिवि
नाशकर्त्ताजगच्चनिष्पन्दमभूत्तदाशु ॥ ३९ ॥ विश्वात्मकंपावकसोमपुङ्खंत्रैलोक्यसंहारमिषुंप्रदीप्तम् ॥ चिक्षेपदेवस्तमिषुंतथोग्रंक्षिप्त्वाचकष्टंधिगितीति
चाह ॥ ४० ॥ नन्दीसमागम्यततःसुरेशंप्रोवाचवाक्यंकिमितिप्रणम्य ॥ नन्दीश्वरस्तंभगवानुवाचमयस्यभक्तस्यशुभंचिकीर्षुः ॥ ४१ ॥ नन्दीशभक्तो
ममविश्वकर्म्मादहेत्पुरंतस्ययथानवह्निः ॥ तथानलंसोमहरञ्चदेवशीघ्रंसमागच्छनिवारयस्व ॥ ४२ ॥ नन्दीप्रगृह्याथसुरेश्वराज्ञांतूर्णंययौविश्वकृतःपुरं
तत् ॥ सयोगशक्त्यानिलतुल्यवेगोज्योतिष्मतःपूर्व्वपुरंजगाम ॥ ४३ ॥ दृष्ट्वामयंतत्रसदानवेन्द्रंमूर्द्धानताङ्गंवृषभध्वजाय ॥ मृत्योर्भयात्तंशरणार्थिनं
चनन्दीसमाश्वासयदीशभक्तम् ॥४४॥ भयंकृथामासुपरीक्षितस्त्वंभक्त्याभवेनेतिवचोऽभ्युवाच ॥ नन्दीश्वरंदानवराट्सदृष्ट्वाश्रुत्वामयस्तंशिवसम्प्रसा
दम् ॥ ४५ ॥ यथैवरुद्रायननाममूर्ध्नाचक्रेप्रणामंसतथैवतस्य ॥ अथाग्निरागात्त्रिपुरंदिधक्षुःप्रदीपयित्वासकलंसमन्तात् ॥ ४६ ॥ संवर्त्तवह्निप्रतिमो
युगान्तेजगत्प्रसंहर्त्तुमिवप्रदीप्तः ॥ तमागतंविश्वकृतोनिवासंविश्वेन्द्रयुक्तंज्वलनंसनन्दी ॥ ४७ ॥ दग्धव्यमेतन्नहुताशनेतिवचोऽभ्युवाचाथविभोर्नियो
गात् ॥ ततःसवह्निस्तमुवाचदेवंकस्मान्नदग्धव्यमिदंमयेति ॥४८॥ नन्दीहुताशंसततोह्युवाचमयोऽत्रतिष्ठत्यमरेशभक्तः ॥ तंवह्निराहासुरराजमाशुपु
राद्विनिर्गच्छमयेतिवाक्यम् ॥ ४९ ॥ हैमंगृहीत्वासमहेशलिङ्गंपुराद्विनिष्क्रममयोऽसुरेन्द्रः ॥ पातालमार्त्तःसहसाप्रविष्टःकुर्वन्नमस्कारमुमाप्रियाय ॥
॥ ५० ॥ नन्दीश्वरःसोऽपिसुरेशपार्श्वमागम्यचाख्यायचसंस्थितोऽभूत् ॥ ततःप्रदीप्तंत्रिपुरंबभूवविसृष्टनष्टाकुलवेदिवेश्म ॥५१॥ नैकासुरोन्मुक्तमभोग
नादंविवस्त्रदैत्येन्द्रवधूजनार्त्तम् ॥ वातायनेहर्म्म्यविमानसंस्थाश्चन्द्राननाःपीतपयोधराढ्याः ॥ ५२ ॥ पर्य्यङ्कसुप्तामदविह्वलाक्ष्योमानांप्रियाणांसह
वीक्षमाणाः ॥ विलोचनैस्ताम्रनितान्तरागैःश्यामावदातानयनैर्विशालैः॥५३॥ दैत्याङ्गनास्तंददृशुःप्रदीप्तमालिङ्ग्यमानाःशरपावकेन ॥प्रासादसंस्थाः

प्रययुर्भयार्त्तास्त्रासेनकिन्नर्य्यइवाचलस्थाः ॥५४॥प्रियास्तथोद्वीक्ष्यसमातगांस्तान्मोहंसमालिङ्ग्य भृशंस्म जग्मुः॥प्रियागृहीतादितिजास्ततस्तप्रनष्टका
मांस्तरसाभिजग्मुः॥५५॥निष्क्रांतिमूढाःशिवभक्तिमूढाःपेतुःसमुद्रेबलविप्रयुक्ताः॥दैत्यान्समुद्रेपतितान्प्रनष्टान्मत्स्यामहान्तोगिरिसन्निकाशाः ॥५६॥
तीव्राश्चनक्रामकराश्चघोराःसंजग्रसुर्नष्टबलान्विनष्टान् ॥ जलेचरास्तांस्त्वपरेमहान्तःसंछिन्नहाराःपतिताःस्त्रियस्ताः ॥ ५७ ॥ हीनाःपरैर्भक्षयितुंप्रवृ
त्ताःकरालदंष्ट्राविकृताननास्ताः ॥ ताभक्ष्यमाणाःपतितास्तरुण्यःप्रियान्सरोषंबहुशोनिरीक्ष्य ॥ ५८ ॥ रुजाहतान्याःपरिभिद्यमानाःसंचुक्रुशुर्दीनतरंयु
वानः॥ तासांतदादैत्यविलासिनीनांरेजेभृशंक्रोधनिरीक्षितंतत् ॥ ५९ ॥ रतावसानेपरिखेदितानांप्रियैरिवासामभिगन्तुकामैः ॥ सर्व्वेततोदैत्यवृषाः
सभार्य्याःप्रदह्यमानास्त्रिपुरानलेन॥६०॥मग्नाःसमुद्रेमकरैर्विभिन्नागतासवोमृत्युवशंप्रजग्मुः॥शरश्चसोऽग्नीन्दुजनार्दनात्माप्रदह्यकृत्स्नंत्रिपुरंततोऽसुम् ॥
॥ ६१ ॥ क्षिप्त्वासमुद्रस्यसमंप्रयातःसमन्ततःशम्भुकरंजगाम ॥ दैत्यैर्हतैस्तैस्त्रिपुरेचदग्धेदेवानवस्थाप्यपुरेवदेवः ॥ ६२ ॥ पूर्व्वंयथादिव्यशरीरधारी
चकारसृष्टिप्रलयादिहेतुः ॥ ब्रह्मादयस्तेत्रिदिवौकसेशानेमुर्वचश्चेदमथोचुरीशम् ॥ ६३ ॥ कृतंत्वयेदंभगवन्नशक्यंशुभंमहद्रौद्रकरंचकर्म्म ॥
दैत्याहतास्तत्रिपुरंप्रदग्धंशान्तिःकृतानश्चसुरासुरेश ॥ ६४ ॥ नमोऽस्तुसर्व्वत्रसदास्थितायस्रष्ट्रेसुराणांप्रमथेशतुभ्यम् ॥ नित्यंचावेज्ञानलसत्क्रियाय
नमोनमःसर्व्वगतायतुभ्यम् ॥६५॥ तानाहदेवःसतदासुरेन्द्रान्ब्रह्मार्कविष्णिवन्द्रयमेश्वरादीन् ॥ सदैवयूयंपरिपालनीयारक्ष्याश्चदेवाःसुतवत्सदैव॥६६॥
पूर्णाभिलाषाहतविद्विषश्चप्रयातहृष्टाश्चनिवेशनानि ॥ देवास्ततोदेववरंप्रणम्यजग्मुःस्वकोयानिनिवेशनानि ॥ ६७ ॥ देवोऽपिसाध्यैरभिनन्द्यमानः
कैलासशृंगेसहितोगणेन्द्रैः ॥ चण्डीशनन्दीश्वरवीरभद्रैर्जगामकर्त्ताजगतास्त्रिनेत्रः ॥ ६८ ॥ इतिकथितमशक्यंदेवदेवस्यकर्म्मत्रिपुरदहनसंज्ञंव्यास
तुभ्यंमयैतत्॥मनुजइदमधीतेयःशुचिःशर्व्वभक्तःसभवतिगतपापःस्वर्गभाग्देवजन्मा ॥ ६९ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांत्रिपुरदहनोत्रि
पञ्चाशोऽध्यायः ॥ ५४ ॥ व्यासउवाच ॥ गत्वाहिमवतःशृङ्गंपार्वत्यासहितोहरः ॥ किंचकारमुनेतत्रमहादेवःसहोमया ॥ १ ॥ सनत्कुमारउवाच ॥
प्रयातेहिमवच्छृङ्गंदेवदेवेसहोमया ॥ बभाषेगिरिजादेवंप्रणम्यपरमेश्वरम् ॥ २ ॥ उञ्छवृत्तेर्हिरण्यस्यनैमिषारण्यवासिनः ॥ शौचेनतपसाभक्त्या
युक्तस्यचशमेनहि ॥ ३ ॥ स्वयमेवप्रयाताहंद्विजातपूजांप्रतीच्छितुम् ॥ माहात्म्यंतस्यतद्दृष्ट्वाब्राह्मणस्यतपस्विनः ॥ ४ ॥ गताहंविस्मयंदेवद्विजाः
श्रेष्ठतमाइति ॥ देवेभ्योऽपिगरीयांसोब्राह्मणाइतिमेमतिः ॥ किन्त्वस्यश्रोतुमिच्छामिद्विजमाहात्म्यमुत्तमम् ॥ ५ ॥ देवदेवउवाच ॥ एवमेवजगद्धाचतुः
सुरासुरनमस्कृते ॥ श्रेष्ठास्तपस्विनोविप्रादेवेभ्योऽपिगरीयसः॥६॥मदीयायांपुरासृष्टौप्रथमःप्रभवोह्यहम्॥ रुद्राद्द्विजातयःपूर्व्वंमयासृष्टामहौजसः ॥७॥

मदीयांसृष्टिमादायब्रह्मणोऽपिसिसृक्षया ॥ ब्रह्मणामूर्द्धतःसृष्टाःपूर्व्वमेवमहाव्रताः ॥ ८ ॥ अग्निमोह्यहमेतेषांद्विजाःश्रेष्ठास्ततोऽभवन् ॥ ततस्तेमन्मनाः
सर्व्वैबभूवुर्द्विजसत्तमाः ॥ ९ ॥ धर्म्मादिकश्चतुर्व्वर्गःसर्व्वस्तेषुप्रतिष्ठितः ॥ यज्ञहूतिर्हविर्विप्रास्तेनतृप्यन्तिदेवताः ॥ १० ॥ जगत्प्रतिष्ठितंसर्व्वंब्राह्म
णानांहितेतदा ॥ लक्षणंसम्प्रवक्ष्यामिद्विजातीनामिदंकलौ ॥ ११ ॥ शौचाचारविधानञ्चप्रभावंकर्म्मवैभवम् ॥ १२ ॥ ब्राह्मणस्तुभवेज्जात्यासंस्कारा
द्विजउच्यते ॥ विद्ययाविप्रतांयातिब्राह्मणस्त्रिविधःस्मृतः ॥ १३ ॥ संस्काराद्योभवेद्विप्रोयश्चस्याद्वेदपारगः ॥ तयोस्त्राणेवधेचापिपुण्यपापौसमौस्मृतौ
॥ १४ ॥ जात्याचयोभवेद्विप्रःसर्व्वागमविशारदः ॥ तपःशौचसमायुक्तरूयवोनाम्नासउच्यते ॥ १५ ॥ तादृशंभोजयेच्छ्राद्धेदैवेकर्म्मणिचापियः ॥ अ
क्षयंभक्तरक्तस्यत्र्यवतातस्यतत्क्षणात् ॥ १६ ॥ वेदविद्योभवेद्विप्रोवह्निहोमपरायणः ॥ सोऽपिश्रेष्ठःस्मृतोदेविपूजितस्तारयेत्समम् ॥ १७ ॥ सर्व्वपू
जातिमात्रेणयोऽपिस्याद्ब्राह्मणःक्वचित् ॥ सोऽपिलोकगुरुर्देविपूजितःसुलभोभवेत् ॥१८॥ अग्निहोत्रंतपोयोगःशौचमार्ज्जवमेवच ॥ सत्यंवेदप्रसंगश्चद्विज
कर्म्मपरंस्मृतम् ॥ १९ ॥ नानृतंब्राह्मणोब्रूतेनहन्तिप्राणिनंद्विजः ॥ नसेवांकुरुतेविप्रोनद्विजःपापकृद्भवेत् ॥ २० ॥ ब्राह्मणस्तुतपस्वीचनजन्मपुनराप्नु
ते ॥ २१ ॥ विद्याब्राह्मणतांलब्ध्वाकिंनरत्वंचदेहिनाम् ॥ मूर्त्तयोहिस्मृताह्यष्टावर्कसोमादयोमम ॥ २२ ॥ सर्व्वास्तानिवसन्तिस्मब्राह्मणेभागसेविते ॥
प्रस्रवन्तिमहादेविविप्राःक्लिष्टतमास्ततः ॥ २३ ॥ नासाध्यंविद्यतेतेषांद्विजानांपरमौजसाम् ॥ रुषितास्तेप्रसन्नावाप्रयच्छन्तिशुभाशुभम् ॥ २४ ॥
द्विजास्तपस्विनोयेतुवेदविद्याविशारदाः ॥ वृत्तिदास्तेभवेयुस्तुदेवानामपिदेवताः ॥ २५ ॥ अहंपितामहश्चैवतेषांयोनिर्द्वयंस्मृतम् ॥ २६ ॥ सत्त्वप्रवृ
त्तास्तेविप्रास्तदादेविपितामहात् ॥ प्रकृतिस्त्वंसमाख्यातापुरुषःपरमोह्यहम् ॥ २७ ॥ रजस्त्वंव्यापितंविद्धिगुणभूतेषुकर्म्मसु ॥ मोहात्मकौस्मृ
तावेतौतमोवामस्तथैवच ॥ २८ ॥ सत्त्वंनाशयतेमोहंसचाग्नौसम्प्रवर्त्तते ॥ २९ ॥ वह्नितेजःसमाह्येतेमहात्मानोद्विजातयः ॥ सर्व्वतःप्रभवन्तस्ते
नास्तितेषांनिवारणम् ॥ ३० ॥ आर्ज्जवंसमताचैवविद्धितेजोद्विजातिषु ॥ तपोविद्यासमायुक्तादार्ज्जवन्तुविशिष्यते ॥ ३१ ॥ असाध्यंहन्तिपापानि
समतामोहबन्धनम् ॥ उभेऽप्येतेऽतिहन्तिस्मआर्ज्जवंसेवितंद्विजैः ॥३२॥ पुराभागीरथीतीरेद्विजःपरमधर्म्मवित् ॥ नाम्नादानरुचिर्नामउञ्छवृत्तिर्बभूव
ह ॥ ३३ ॥ सर्व्वविद्याविनीतात्मासर्व्वभूताभयप्रदः ॥ सहपत्न्यासमभवद्वह्निहोमपरायणः ॥ ३४ ॥ अतिथिंभोजयित्वातुपूर्व्वदेवियथागतम् ॥
षष्ठेकालेततोऽश्नातितस्येदंव्रतमुत्तमम् ॥ ३५ ॥ तथैववर्त्तमानस्यभूयान्कालोजगामह ॥ अतिथावागतेतस्यनविकल्पःप्रजायते ॥ ३६ ॥ सतपः
शौचसंयुक्तआर्ज्जवैकरतोद्विजः ॥ बभूवात्यर्थमर्चिष्मानर्काग्न्योरपितेजसा ॥ ३७ ॥ तस्यैवंतपसावह्निःप्रीतस्तुष्टिमगात्पराम् ॥ गुरुतुष्टिर्बभूवास्य

समीहितफलप्रदः ॥ ३८ ॥ कदाचिदथकालेनषष्ठेकालेसमागते ॥ हिमवद्वेगजैःशीतैर्दुर्दिनंपर्य्यटन्द्विजः ॥ ३९ ॥ नापश्यदतिथिंकंचित्तपसाचस
खेदितः ॥ यदानासादितस्तेनदिनान्तेऽप्यतिथिःक्वचित् ॥ ४० ॥ अप्राप्यैवतुतंकंचिदुपवासपरायणः ॥ बभूवद्विजमुख्योऽसौवासुदेवमचिन्तयत् ॥
॥ ४१ ॥ पत्नीचास्यमहाभागापतिभक्तिव्रतेस्थिता ॥ यथाचास्याःपतिश्चक्रेतथैवाप्यकरोत्सदा ॥ ४२ ॥ शीतवातादितप्ताङ्गोनैकद्वन्द्वसमावृतः॥
क्लेशेनमहतातीवखिन्नोऽभूद्देविसद्विजः ॥ ४३ ॥ शीतदुर्दिनदोषात्तुनैवातिथिमविन्दत ॥ तथाग्निस्तस्यतंज्ञात्वानिश्चयंपरमंमहत् ॥ ४४ ॥ श्वपाक
सदृशंरूपंविकृतंकुत्सितंबहिः ॥ कृत्वापादपमूलस्थःप्रददौतस्यदर्शनम् ॥ ४५ ॥ क्षुधार्त्तोऽथसविप्रेन्द्रःपर्य्यटन्नतिथीप्सया ॥ अपश्यद्वृक्षमूलस्थं
घोरंविकृतरूपिणम् ॥ ४६ ॥ श्वपाकंशीतसंक्षुब्धंनैकव्रणशतार्दितम् ॥ ददृशेतस्यगात्रेचप्रस्रवत्क्रिमिशोणितम् ॥ ४७ ॥ विक्रोशन्तंचतातेतिस
चापश्यद्द्विजोत्तमः ॥ कृपणंतंसदादृष्ट्वास्वपन्तंद्विजसत्तमः ॥ ४८ ॥ समाश्वसिहिभद्रेतिप्रोवाचमधुरंवचः ॥ शीतापनयनार्थंचवह्निंप्रज्वालयन्द्विजः
॥ ४९ ॥ विशीतंवह्निसंसर्गात्समाश्वस्तमुवाचसः ॥ एहिभद्रातिथेमेऽन्नंभुङ्क्ष्वचात्रेतिसादरम् ॥ ५० ॥ तमुवाचततोदीनःश्वपाकस्तपसांनिधिम् ॥
श्वपाकोऽहंद्विजश्रेष्ठमह्यमन्नमिहैवहि ॥ ५१ ॥ कुत्सितायप्रयच्छस्वयथैवमृगपक्षिणे ॥ नाहंसंस्कृतमाहर्त्तुंयोग्योऽन्नमितिचाब्रवीत् ॥ ५२ ॥ तमेवं
वादिनंध्यानाज्ज्ञात्वावह्निमुपस्थितम् ॥ प्रोवाचद्विजशार्दूलइदंवचनकोविदः ॥ ५३ ॥ नाहंजातिंतवार्च्चाभिःपूजयामितवानघ ॥ आत्मावैसर्व्वतो
ज्येष्ठःसर्व्वप्राणिष्वयंस्थितः ॥ ५४ ॥ आत्मानंतमहंभद्रपूजयामिपरंशिवम् ॥ सर्व्वत्रसंस्थितंमत्वापुरुषंपरमेश्वरम् ॥ ५५ ॥ तिर्य्यक्त्वेनहिमेकुत्सा
त्वद्विधेषुविशेषतः ॥ सर्व्वमेवहिदेवेतितपःशौचपरायणः ॥ ५६ ॥ पूजयाम्यहमव्यग्रंतत्रानिःसंशयोभव ॥ क्रिमिकीटादिसर्पेषुश्वपाकेषुद्विजातिषु
॥ ५७ ॥ यदासर्व्वगतोह्यात्मातदाकुत्साकथंचन ॥ नहिमेकुत्सितेभेदोनहिमेत्वमकुत्सितः ॥ ५८ ॥ भुक्त्वासंस्कृतमन्नंत्वंपावयास्माननुग्रहात् ॥
एवमुक्तोद्विजेन्द्रेणश्वपाकःप्रीतिमांस्तदा ॥ ५९ ॥ गृहंगतःसविप्रस्यविप्रानुग्रहलिप्सया ॥ अथभावरुचिस्तस्यातिथेरेवप्रपूजने ॥ ६० ॥ आतिथ्यं
विधिवच्चक्रेभावशुद्धेनचेतसा ॥ मूर्त्तिमान्सोऽभवत्प्रीतोभोजितोहव्यवाहनः ॥ ६१ ॥ प्रददावीप्सितंतस्ययोगैश्वर्य्यमनुत्तमम् ॥ सयोगंपरमंप्राप्य
उञ्छवृत्तिर्द्विजोत्तमः ॥ ६२ ॥ विमुक्तःसहपत्न्यातुप्राप्तवानमृतंपदम् ॥ यथैवकपिलःसिद्धस्तत्त्ववित्परमोमुनिः ॥ ६३ ॥ एवमार्ज्जवसम्पन्नो
ब्राह्मणःकृतलक्षणः ॥ नकिंचित्प्राप्नुयाद्देविशुभाशुभपरंपदम् ॥ ६४ ॥ एवंतेकथितंनगेन्द्रतनयेमाहात्म्यमत्युत्तमंशृण्वन्नित्यमिदंपठंश्च
विधिवत्सिद्धःशुचिर्मानवः ॥ पुण्यंसौख्यमथाप्यभीप्सितफलंतेजोबलंप्राप्नुयात (?) ॥ ६५ ॥ आख्यानमेतत्कथितंयथावन्महामहीध्रेन्द्रसुते

द्विजानाम् ॥ दृष्टप्रभावाममतेद्विजेन्द्रामहामुनीनांपदमध्यवात्सुः ॥ ६६ ॥ सनत्कुमारउवाच ॥ द्विजमाहात्म्यमुल्लिख्यपार्व्वतीपरमेशयोः ॥
बभूवचैवंसंवादः पुण्यःपापभयापहः ॥ ६७ ॥ यच्चान्यदम्बुदश्यामपाराशर्य्यतपोधन ॥ श्रोतव्यंमन्यसेमत्तस्तच्छृणुष्वसमाहितः ॥ ६८ ॥
॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांपञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥ व्यासउवाच ॥ भगवन्यत्त्वयाप्रोक्तंनाडीचक्रस्यनिश्चयम् ॥
प्राप्यपाशुपतंज्ञानंब्रह्माद्यास्तेसुरोत्तमाः ॥ १ ॥ लेभिरेपरमंतत्त्वंज्ञानंचापिमहाद्युते ॥ तन्मेकथयतत्त्वज्ञशिष्यायपरिपृच्छते ॥ २ ॥ कीदृशंवा
भवेद्योगंज्ञानंपाशुपतंशुभम् ॥ सनत्कुमारउवाच ॥ ब्रह्माद्यादेवताव्यासदक्षयज्ञमुखेपुरा ॥ ३ ॥ शङ्करंशरणंजग्मुर्वीरभद्रभयार्दिताः ॥ गणेन्द्रैरभियु
क्तास्तेभस्मकूटाजिरेस्थितैः ॥ ४ ॥ यथाभस्मप्रदीप्तास्तेतेजसःशरमुत्तमम् ॥ अभयंतेतथारौद्राःपशवोदीक्षिताइव ॥ ५ ॥ भस्मरूषितगात्राणांश
ङ्करव्रतधारिणाम् ॥ स्वयोगंचददौतेषांतदादेवउमापतिः ॥ ६ ॥ सर्व्वासांमोक्षविद्यानांयत्तत्त्वमितिहोच्यते ॥ हिरण्यगर्भप्रमुखैर्योगिमुख्यैःप्रवर्त्तितः
॥ ७ ॥ योयोगःसकलोव्याससकृच्छ्रोपायसाधनः ॥ जन्मान्तरसहस्रैस्तुतमभ्यस्यमहामुने ॥ ८ ॥ सर्व्वकर्म्मबहिःकृत्वानिष्कलस्यप्रभावतः ॥
दीक्षांपाशुपतींप्राप्यप्रविशन्तिमहेश्वरम् ॥ ९ ॥ सर्व्वज्ञानसमायुक्तन्तपोधर्म्मनमस्कृतम् ॥ सेवनादस्यमुच्यन्तेतान्निबोधमहाव्रतम् ॥ १० ॥
नाधर्म्मेणविनाधर्म्मोनधर्म्मेणविनाऽशुभम् ॥ एतौपरस्परंवृद्धौत्यक्तातस्मादिमावुभौ ॥ ११ ॥ धर्म्माधर्म्मपरित्यक्तःस्मरेत्पाशुपतंव्रतम् ॥ ततोयोग
मिमंप्राप्यमहदैश्वर्य्यमश्नुते ॥ १२ ॥ भस्मग्रहणमात्राद्धिसर्व्वबन्धप्रमोचनम् ॥ मुच्यतेस्पृष्टमात्रस्तुब्रह्मभूतेनभस्मना ॥ १३ ॥ दहेत्सोमकृतंवह्निरि
न्धनंचानलंविदुः ॥ कृताकृतंदहत्याग्निर्भूयःसोमसमाहृतः ॥ १४ ॥ भस्मनासंचिताःसर्व्वैब्रह्माद्याअभिमानिनः ॥ भस्मनस्तेजसावीर्य्यंयस्मात्पावन
मीश्वरम् ॥ १५ ॥ आत्मानंशङ्करंन्यस्ययत्स्नानंभस्मनाचरेत् ॥ भस्मनाशिवयोगेनमुच्यतेपापबन्धनात् ॥ १६ ॥ प्रभवन्तिसुराःसोमात्पितरोवह्निस
म्भवाः ॥ अग्नीषोमात्मकंतस्माज्जगत्सर्व्वंप्रतिष्ठितम् ॥ १७ ॥ ईश्वरोऽग्निश्चसोमश्चभस्मनस्तेजउच्यते ॥ तेजसातस्यसंसृष्टोमुच्यतेभस्मना
द्विजः ॥ १८ ॥ सांख्यंविद्यांतपश्चैवत्यक्त्वाधर्म्मांश्चवैदिकान् ॥ केवलंभस्मसंस्नानात्प्रभोर्गच्छतितत्पदम् ॥ १९ ॥ पापयुक्तोऽप्यधर्मात्माबहुधर्म्मर
तोऽपिसन् ॥ यस्माद्भक्तिपरःशम्भोर्भस्मनैवविशुद्ध्यति ॥ २० ॥ शीघ्रमेवपरंयोगंप्राप्यमुच्यतिबन्धनात् ॥ एवंव्रतंमहत्प्राप्यशूरःपाशुपतोमुनिः
॥ २१ ॥ इदंमाहेश्वरंज्ञानंगुह्यंपरममभ्यसेत् ॥ ज्ञेयंज्ञानंतथाज्ञातात्रयंदेहेतथास्थितम् ॥ २२ ॥ आत्मायश्चयथावासस्थानत्रयसमन्वितः ॥ नाडीषु
चयथाह्यात्माआत्मन्येवावतिष्ठते ॥ २३ ॥ सर्व्वतःसर्व्वभूतेषुनिगूढस्तिष्ठतेतथा ॥ पयःसोमघृतंव्यासविदित्वाचसमुच्यते ॥ २४ ॥ नसेवितुंविना

ज्ञानंसम्यगात्माकथञ्चन ॥ रूपशब्दरसातीतंकस्तंवेत्तिमहेश्वरम् ॥ २५ ॥ तथाह्यहंमहाभागप्रसादाञ्यम्बकस्यतु ॥ आत्मज्ञानेपरोपायंकथया
मितवानघ ॥ २६ ॥ सर्व्वमेवतमःशून्यमिदमासीज्जगत्किल ॥ नदेवानासुराश्चैवनद्यःसूर्य्यश्चचंद्रमाः ॥ २७ ॥ नकिञ्चित्सर्व्वथाभूतंदृश्यतेजगति
स्थितम् ॥ शुद्धंमहच्चविमलमक्षरंपरमीश्वरम् ॥ २८ ॥ सर्व्वमात्रगुणातीतंनिर्व्विकारंनिरंजनम् ॥ बहिरन्तश्चरंदीप्तमविकारंपरंध्रुवम् ॥ २९ ॥ विज्ञा
नंपरमंयत्तदक्षरंब्रह्मतच्छृणु ॥ ओमित्येकाक्षरंपूर्व्वाक्षरंतस्माद्विनिर्गतम् ॥ ३० ॥ त्र्यक्षरश्चत्रिमात्रश्चओङ्कारोब्रह्मशस्यते ॥ अकारेतत्रविष्णुःस्यादुका
रेतुपितामहः ॥ ३१ ॥ मकारेभगवानीशोमात्रायांप्रकृतिःस्मृता ॥ पत्नीरूपेणसाशम्भुंभुंजतेप्रकृतिंपुनः ॥ ३२ ॥ ब्रह्मविष्णूस्थितौतौचदेवावीश्वर
संहितौ ॥ सम्पद्विरूपंप्रकृतिःसर्व्वंविष्णुःप्रजापतिः ॥ ३३ ॥ तावाक्रम्यमहेशस्तंप्रकृतिस्तौगुणात्मकौ ॥ महाबलोविभुर्भूत्वानक्तंसंहारमेवहि ॥३४॥
गुह्यमेतत्परंज्ञानंमयोक्तन्तुमुनेऽक्षरम् ॥ ओंकारंध्यायतेयेनअतीत्यप्रकृतिंमुने ॥ ३५ ॥ सतमादित्यमुक्तात्माकृतार्थोजायतेमुनिः ॥ नैवंजनाविमा
र्गस्थाःशुद्धहेतुपरायणाः ॥ ३६ ॥ भोक्तारंप्रकृतेरीशंपरंतत्त्वेषुसंस्थितम् ॥ ओंकारंप्रकृतेर्नित्यंतन्मध्येभास्वरंस्वयम् ॥ ३७ ॥ पयोमध्येयथाव्या
ससर्पिरन्तर्गतंस्थितम् ॥ ईश्वरोऽसौददातीशःसमुक्तःपशुबन्धनैः ॥ ३८ ॥ नेश्वराप्रकृतिःख्यातागुणकर्म्मादिभेदिनी ॥ बृहत्त्वाद्बृहतीश्यामाविष्णु
त्वाद्विभवास्मृता ॥ ३९ ॥ साभिमानाभवेत्सृष्टिर्भोक्तातस्यामहेश्वरः ॥ अष्टबाहुस्त्रिपादाचपंचदेहमुखीतथा ॥ ४० ॥ त्रिनेत्रापंचकर्म्मस्थासप्तवाजि
रथोत्तमा ॥ जगन्मातास्मृताह्येषागुणत्रयविकारजा ॥ ४१ ॥ उभेशुभाशुभेतस्यांविद्याविद्येतथाह्युभे ॥ उभयार्थप्रमायागःक्रियानुष्ठानमेवच ॥
॥ ४२ ॥ निमित्तंभवनेयानेताराःसंक्षेपतस्त्वमी ॥ ईश्वराज्जातओंकारःसचतस्मिन्प्रतिष्ठितः ॥ ४३ ॥ अतःकृत्वामहायोगंयोगिनःकपिलादयः ॥
ओंकारंपरमंब्रह्मनिर्विकल्पमुपासते ॥ ४४ ॥ सएवसर्व्वयोगात्माकारणंसचएवतु ॥ एवंप्रकृतिभूतौतावोङ्कारप्रभवौस्थितौ ॥ ४५ ॥ ईशभोज्यौ
गुणात्मानौकृत्वाविष्णुपितामहौ ॥ उत्सृष्टौवेदयज्ञाख्यौत्यक्तधर्म्मादिबन्धनौ ॥ ४६ ॥ महामोहतमोविष्टौविद्ययासङ्गयुक्कृतौ ॥सत्त्वपूर्वौरजोमुख्यः
सुखदुःखान्वितःसदा ॥ ४७ ॥ संसारताडनौमूढौसर्व्वंनित्यसमावुभौ ॥ ईश्वरेतुभवेद्विद्वान्ध्यानयोगपरायणः ॥ तस्मात्प्रकृतिरुत्पन्नातस्मिन्नेवप्रण
श्यति ॥४८॥ येनासावीश्वरोभिन्नोयोगेनात्मनिसंस्थितः ॥ प्रकृतिस्तंनबध्नातिमुच्यतेचभवार्णवात् ॥४९॥इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायां
विभूतियोगोनामषट्पञ्चाशोऽध्यायः ॥ ५६ ॥ सनत्कुमारउवाच ॥ आत्मासूक्ष्मोमनोबुद्धिरहंकारोगुणास्तथा ॥ भूतानीन्द्रियसम्भारस्तन्मात्राणिद
शानिलाः ॥ १ ॥ विभक्ताःक्रमशोदेहेविभागेनयथास्वयम् ॥ स्वप्नजाग्रत्सुषुप्तेषुस्थानेष्वेतेषुसुव्रत ॥ २ ॥ हृदयेकर्णिकायान्तुयत्पद्मंसर्व्वतोमुखम् ॥

वेष्टितंदशभिःसूक्ष्मंतद्वन्द्वंसर्व्वदेहिनाम् ॥ ३ ॥ आत्मातत्रसजीवस्तुसुमनःसुप्रातिष्ठितः ॥ यत्स्वप्नस्थमितिप्राहुःसंसिद्धाःशिवयोगिनः ॥ ४ ॥
ज्वालिनीस्तिमिताचोस्राविद्याविद्याविशालिनी ॥ मालिनीशंकरीचैवसुमित्राबोधिनीतथा ॥ ५ ॥ एतादशमहानाड्योजीवेऽस्मिस्ताःप्रतिष्ठिताः ॥ श
यानंप्रतिचोद्बुद्धोभावैर्भाषैःसमाहितः ॥ ६ ॥ शब्दादिविषयेभ्यस्तुआत्मसर्व्वंगतास्त्रयः ॥ सद्भिर्वापूर्व्वसंयुक्तौजीवईक्षयतेपुनः ॥ ७ ॥ अहंकारोमनो
बुद्धिर्भावश्चतस्रोदेहजाः ॥ सहनैवनातिष्ठन्तिवारयन्तिशरीरिणम् ॥ ८ ॥ तएवंविहिताःसर्व्वेजीवश्चैवतुपंचमः ॥ कर्णिकायांतातिव्योम्निसंस्थितः
सर्व्वतोमुखः ॥ ९ ॥ स्थितोमनसिसूक्ष्मस्तुसतद्गुणमनन्तकम् ॥ चेतःसएवसम्प्रोक्तंसएवपुरुषःस्मृतः ॥ १० ॥ अहंकारोऽप्यजारम्भभू
तोभास्करसंचरः ॥ ममसोमस्त्वयंब्रह्माज्ञानंधर्म्मोरतिस्तथा ॥ ११ ॥ रसमात्मामहौषध्यःसानुगोभावविस्तरः ॥ अहङ्कारोगताश्चमृत्युदुः
खमनामयम् ॥ १२ ॥ कामरोषजवादुष्टाःसुधर्म्माश्चाभिताःसमाः ॥ विष्णुर्बुद्धिर्यथाकार्य्यंकारणंभूमिरेवच ॥ १३ ॥ ज्ञानवैराग्यमाकाशंराजसंभावविस्तरम् ॥
जीवमध्येस्थितासूक्ष्माविधूमापावकंशिखा ॥ १४ ॥ अमृतंसर्व्वभूतानांगतिश्चैवाहिसापरा ॥ मध्येतस्याग्निसङ्काशोजीवःप्रोतोनदृश्यते ॥ १५ ॥ सरसालो
हितामुख्याप्रोतारसवतीतथा ॥ विधूमाचामृताचैवनान्दिनीबभ्रुविस्तरा ॥ १६ ॥ एताःसूक्ष्मतरानाड्यःसम्भिद्यदशपावकम् ॥ पर्य्यटन्तिसदासो
मंभूताधारंपयोवृतम् ॥ १७ ॥ सताभिस्तर्पितःसोमःसर्व्वान्तरसमीपतः ॥ शब्दापयातिवृद्धस्तांजीवमध्यंगतांशिवाम् ॥ १८ ॥ तदेवामृतमाख्यातं
यच्चैवात्मदमुत्तमम् ॥ तयायदाहिसोमस्यशिखयाकल्पिताप्लुवः ॥ १९ ॥ जागर्त्तोऽपिपुनःप्राज्ञःसर्व्वयोगसमन्वितः ॥ याभूतेषुसुरानाडीसासुषुम्नाप्रति
ष्ठिता ॥ २० ॥ यदायोगोऽयमायातिसुप्तइत्युच्यतेतदा ॥ उभावेतौमुनिर्जित्वासुप्तजाग्रदवस्थयोः ॥ २१ ॥ अजाग्रतंस्वयश्चैवध्यानयोगंचचिन्तयेत् ॥
गमनाद्याश्चयेभावामनसश्चैवयाघृणा ॥ २२ ॥ नबुद्धोह्यध्ववैराग्यंतेनबुध्यन्तियोगिनः ॥ यन्मन्यतेमनःकिंचिद्द्वंद्वंयच्चाविकल्पते ॥ २३ ॥ यत्त्वङ्कुर्य्या
दहङ्कारस्तज्ज्ञात्वामरणंत्यजेत् ॥ निक्षिप्यचकुतःकर्म्मतद्विनाकुशलंकुतः ॥ २४ ॥ कर्म्मबद्धाविषादस्तुसंशुद्धोमुच्यतेध्रुवम् ॥ यइमेविषयाःकिंचि
द्विद्याःसोमस्यसम्भवाः ॥ २५ ॥ भोक्तावह्निःस्मृतस्तेषांत्वचानाल्पेनबाध्यते ॥ इतिज्ञात्वात्यजेच्चिन्तांसर्व्वयोगरतःसदा ॥ २६ ॥ साहिजीवदवस्थाया
महमेवमहेश्वरः ॥ धर्म्मवादक्षयंलोकानिच्छामांबध्यतेकथम् ॥ २७ ॥ क्रिययायोगविदुषःशङ्करंव्रतमास्थिताः ॥ गच्छन्तिस्वतनुंत्यक्त्वाभित्त्वामायां
परंपदम् ॥ २८ ॥ इदमन्यत्परंज्ञानमस्यसूक्ष्मतरंस्फुटम् ॥ प्रवक्ष्यामितवव्यासभक्तस्त्वमासिशंकरे ॥ २९ ॥ योगिनोयंनजानन्तियत्सूक्ष्मंपरमोत्त
मम् ॥ मुक्त्वापाशुपताञ्छुद्धान्यन्नभूतेषुविद्यते ॥ ३० ॥ मनोबुद्धिरहङ्कारइन्द्रियाणिगुणःक्षयम् ॥ नस्पृशन्तिसदात्मानंविकारास्तस्यतेबहिः ॥ ३१ ॥

सर्व्वत्रविद्यतेसोऽथनचसर्वेषुदृश्यते ॥ सदृश्यतेचभगवान्नतुप्रायःकथंचन ॥ ३२ ॥ सर्व्वभावगुणानान्तमचिन्त्यंपरमेश्वरम् ॥ ज्ञानेनयेप्रपश्यन्तियो
गिनस्तेपरामताः ॥ ३३ ॥ छायैषांदृश्यतेयातुचक्षुर्व्विषयसङ्गता ॥ कनीन्यन्तःस्थितिर्व्यासहेतुःसर्व्वशरीरिणाम् ॥ ३४ ॥ अत्रास्तेसक्षरोज्ञात्वासू
क्ष्मोमध्यगतोनयः ॥ सहस्रकर्णिकायन्तिनाड्योजीवेचसंस्थिताः ॥ ३५ ॥ गान्धारीविजयाचैवएताःप्राणवहाःस्मृताः ॥ पाणिनातालगन्धायानाड्यो
नाभौचसंयुते ॥ ३६ ॥ योगादयोदशोष्मान्तानाड्योनागेनसम्भृताः ॥ सप्राणोबहिरन्तश्चतर्पयन्हव्यवाहनः ॥ ३७ ॥ वृद्धस्यवारयेद्वायुंवहन्पुंसाव
लेनच ॥ नाडीत्वन्यासुषुम्नेतिसोमवह्निष्ववस्थिता ॥ ३८ ॥ तस्मिन्सहेतुकेदेहकुमारेचातिलम्भिता ॥ तस्मिंश्चातुरकेदेहेकुमारेचानलंस्थिताः ॥
॥ ३९ ॥ शुध्यतेवातवासन्नानित्यवातप्रसारिणी ॥ समानध्यानसंयुक्तारक्तमात्मात्रपूर्य्यते ॥ ४० ॥ तदावायोःपरोवायुःसचकूर्म्मइहोच्यते ॥ नाड्यां
नाभिनिबद्धायांनतायांतौप्रतिष्ठितौ ॥ ४१ ॥ अधरावधरेनाड्यांवायुरलपास्तदूर्ध्वतः ॥ अधस्तात्पादसंनद्धःकूर्म्मःशिरसिचस्थितः ॥ ४२ ॥ योवायु
र्देवदत्तारूयःकृतकार्य्यार्यबोधिनः ॥ वह्निसोमनिबद्धौतुप्राणदेवमहाबलौ ॥ ४३ ॥ एकोविवर्द्धयत्यग्निमन्यःसोममतर्पयत् ॥ देवदत्तमहानागकृकलू
र्म्मधनञ्जयाः ॥ ४४ ॥ प्राणास्तेमयिविरूयाताश्चक्रयोगाभिपालिनः ॥ हुतशेषंप्रदिष्टंवासोमंतत्रप्रतिष्ठति ॥ ४५ ॥ सोमंविधित्सतेयज्ज्ञान्नतेषांमुक्ति
लक्षणम् ॥ दीप्तिरग्निःस्मृतायान्तुस्रवितश्चात्रयत्रसा ॥ ४६ ॥ तर्पणंपर्व्वणातस्यकर्णिकायांतदास्मृतम् ॥ नेत्रेपश्यतियज्ज्योतिस्तारारूपंप्रकाश
कम् ॥ ४७ ॥ सजीवःसर्व्वभूतानामात्मानंचसमास्थितः ॥ ज्योतिषश्चक्षुषःसूक्ष्मंतत्त्वंतत्परमंस्मृतम् ॥४८॥ तच्चामृतंसमारूयातंज्ञानलभ्यंतदुच्य
ते ॥ तस्मात्परतरंनास्तियोगविज्ञानदागतिः ॥ ४९ ॥ ज्ञात्वैवंसन्त्यजेन्मोहंगुणत्रयँविकारजम् ॥ अभिन्नस्यात्मनस्तस्यबहिर्गम्येश्वरस्यच ॥५०॥
भेदंभगवतःकुर्य्यात्कोऽन्योयोगविशारदः ॥ निरंजनंविर्विकल्पंप्रभूतंनविकल्पयेत् ॥ ५१ ॥ विमोहंत्यजसंसर्गात्क्रियाःकार्य्याविवर्जिताः ॥ तंविशन्ति
महेशानमीश्वरंकृतकारिणी ॥ ५२ ॥ इतितत्त्वंसमारूयातंव्यासमाहेश्वरंतव ॥ तद्ब्रह्मपरिपूर्णन्तुनामरूपंचनास्तिते ॥ ५३ ॥ इतिश्रीशैवेमहापुराणे
सनत्कुमारसंहितायांपसप्तञ्चाशोऽध्यायः ॥ ५७ ॥ व्यासउवाच ॥ भगवन्सर्व्वयोगेशसर्व्वामरनमस्कृत ॥ अहोज्ञानंत्वयारूयातमज्ञानविनिवर्त्तनम्
॥ १ ॥ अद्याहंगतसन्देहोमहादेवंपरंप्रति ॥ शंकरात्प्रकृतिर्जाताब्रह्मविष्णूशिवात्मकौ ॥ २ ॥ ज्ञात्वाषडीशमीशानंमुच्यतेसर्व्वबन्धनात् ॥
सर्व्वयोगंयथापूर्व्वंत्यक्त्वासकलसंहिताम् ॥ ३ ॥ निष्कलंसकलंज्ञात्वासद्यएवप्रकाशते ॥ श्रवणादस्यविप्रेन्द्राहितमुक्तमथाधिकम् ॥ ४ ॥ त्वत्प्र
सादादहंतातप्राप्तज्ञानोगताशुभः ॥ निःसन्देहोऽभवंशान्तःप्रष्टव्यंनान्यदस्तिमे ॥ ५ ॥ तथापिज्ञापयामीदंतत्त्वमारूयातुमर्हसि ॥ एवंविज्ञा

नसम्पन्नःप्राप्तयोगोमुनिर्मुनिम् ॥ ६ ॥ विनाक्लेशंतनुंत्यक्त्वायोगीयोगबलान्वितः ॥ कथमाप्नोतितद्वस्तुनिष्कलंपुरुषोत्तमम् ॥ ७ ॥ ईश्वरध्यान
सम्प्राप्तमुपायंयोगलक्षणम् ॥ कथयस्वमुनिश्रेष्ठप्रष्टव्यंनान्यदस्तिमे ॥ ८ ॥ एवमुक्तःसशिष्येणव्यासेनसुमहात्मना ॥ सनत्कुमारउवाच ॥
कथयामिचविप्रेन्द्रशिवसिद्धान्तनिश्चयम् ॥ ९ ॥ शृणुव्यासपरंज्ञानमीश्वरध्यानकारणम् ॥ स्वेच्छयायेनमुच्यन्तेयोगिनोज्ञानतत्पराः ॥ १० ॥
विद्योक्तमितिमांज्ञात्वामुहुरभ्यस्यचैवहि ॥ स्वदेहंविघ्नवत्त्यक्त्वाषड्विंशेनयमाप्नुयात् ॥ ११ ॥ यानाड्योवायुसंरुद्धाःसंचरन्तिशरीरिणः ॥ सेतु
स्तासांततानान्तुकर्णिकामध्यमाश्रिताः ॥ १२ ॥ तमाश्रित्यतुसानाडीबाह्यपादेषुसंस्थिता ॥ स्मृताभूयस्तुयानाड्यस्ताएककरमाश्रिताः ॥ १३ ॥
निःसमानेसहस्राणिनाडीनांपरमात्मनि ॥ तासामेकैकशोभेदःसूक्ष्मसूक्ष्मतरःस्मृतः॥१४॥ तासुसंचरतेप्राणःकर्णिकामध्यसम्भवः ॥ तत्रात्मासूक्ष्मसं
लक्ष्यःप्रागुक्तस्तिष्ठतिद्विज ॥ १५ ॥ विद्ययादिशिपश्यंस्तास्तंपश्येद्योगमास्थितः ॥ तत्तेजःसर्व्वनाडीषुविभक्तंसर्व्वदेहिनाम् ॥ १६ ॥ ताश्चनाड्यो
मनःसङ्गान्मनःकुर्व्वन्तिविप्लुतम् ॥ तत्तेजश्चक्षुराहत्यसर्व्वनाडीसमाश्रितम् ॥ १७ ॥ मनएकमतंकृत्वातथात्मनिनियोजयेत् ॥ वायुर्वर्णजयोनामयो
हृदीहस्फुरेत्सदा ॥ १८ ॥ त्रीणितस्यमुखान्याहुःशिरोनाभिर्हृदेवहि ॥ येप्रमाणास्तवाख्यातावायवःकीर्तितामया ॥ १९ ॥ धनञ्जयस्यतेसर्व्वेवश
गास्तन्निबन्धनाः ॥ नवशागन्तुमन्यत्रतस्मिंस्तिष्ठन्तिसंस्थिताः ॥ २० ॥ नाभिबन्धनमासाद्यनाडीचक्रंसमाश्रिताः ॥ द्वितीयंकर्णिकायान्तुतृतीयंता
लुसंस्थितम् ॥ २१ ॥ भ्रूविकारपरंशूलंत्रिविधात्क्रान्तिरुच्यते ॥ हृदिशूलंपरंनाड्यांतालौपरशुरास्थितः ॥ २२ ॥ तासुकेहृदिबद्धश्चपद्मनाड्यांनियो
जितः ॥ भानौवियोजितंसर्व्वंप्राणमेवविमुञ्चति ॥ २३ ॥ आक्षिप्यत्रितयंनाड्यांकर्णिकायांनियोजनम् ॥ चित्तमात्मनिसंयोज्यविक्षिपेत्पूर्व्वतोमम ॥
॥ २४ ॥ प्रयोगादस्यविप्रेन्द्रमुच्यतेतत्क्षणान्मुनिः ॥ धर्म्माधर्म्मनिबन्धैस्तुकर्म्मभिःप्रागनुष्ठितैः ॥ २५ ॥ यथाजीवानबाध्यन्तेयोगिनस्तदिदंशृणु ॥
बाह्यःशरीरजश्चेतिमृत्युर्द्विविधउच्यते ॥ २६ ॥ विषशस्त्रादिवेगैस्तुश्वापदैर्वह्निभिर्जलैः ॥ बाह्योमृत्युरितिख्यातःशारीरन्तुनिबोधमे ॥ २७ ॥
रोगजःकालजोवापिमृत्युरभ्यन्तरेभवेत् ॥ कालजोजरयायुक्तोरोगजोव्याधिसंज्ञितः ॥ २८ ॥ दुर्लभोमृत्युरभ्यासाद्योगसाधनजोमुनेः ॥ योगोपायकृ
तोयश्चयश्चकालकृतःक्षयः ॥ २९ ॥ तयोर्भेदाधिकारौवाशृणुव्याससमासतः ॥ कालक्षोभाद्भवेदेकोद्वितीयोमनसिस्थितः ॥ ३० ॥ योगमाक्रामतः
शब्दःश्रूयतेश्रोत्रसन्धिजः ॥ सपूर्व्वंनीयतेकूर्म्मैतेनवह्निस्त्यजेत्प्रभाम् ॥ ३१ ॥ निष्प्रभःसततोवह्निःशब्दयोगाद्विमुच्यते ॥ शब्दरूपशोंगुणातीतोरूप
योगांविमुंचति ॥ ३२ ॥ एवमग्नौप्रविष्टेतुसर्व्वएवानितास्ततः ॥ एकतोयोगमिच्छन्तोमर्म्माणिविनिकृन्तति ॥ ३३ ॥ किर्म्मिरोदेवदत्तश्चकृकरोनाग

एवच ॥ उदानोनामसंयुज्यकर्णिकायांविशन्तिहि ॥ ३४ ॥ अध्वजार्द्धंभवेत्स्थाणौमनोजीवतिनिर्गमः ॥ इन्द्रियाणिमनोयान्तिमनःप्राणविनिर्गतम् ॥
॥ ३५ ॥ तेषुसर्व्वेषुलीनेषुप्राणवायुंनिपीडयेत् ॥ पीडचमानास्ततःसर्व्वेभवन्त्येकशतानिलाः ॥ ३६ ॥ सुसंयुक्तंततःस्थानंततःकर्म्मयदात्मकम् ॥
एकस्थावायवःसर्व्वेपूरयन्तिधनंजयम् ॥ ३७ ॥ शेषस्तदीयकूर्म्माद्याजीवंत्यक्त्वासतिष्ठति ॥ एककालकृताद्येषासर्व्वभूतगुणास्थितिः ॥ ३८ ॥
विनायोगंनजीर्य्येतसूक्ष्मंमाहेश्वरंपदम् ॥ उपविष्टःप्रसुप्तोवाउत्क्रान्तस्तुनसंशयः ॥ ३९ ॥ स्वेच्छयामुच्यतेव्यासज्ञात्वातत्त्वंमहेश्वरम् ॥ छुरिकांपर
शुंवापिशूलंवाधारयेन्मुनिः ॥ ४० ॥ ततःसर्व्वेविलीयन्तेविकाराःकरणैःसह ॥ वीक्ष्यतेचेश्वरंब्रह्मसर्व्वतत्त्वंमहेश्वरम् ॥ ४१ ॥ मनस्तावद्दुजंजन्तोःप्र
यच्छतिविपद्गतः ॥ सरुजोमोहमापन्नोज्ञानवस्तुनविन्दति ॥ ४२ ॥ अनेनकर्म्मणाविप्रसर्व्वदुःखविवर्ज्जितः ॥ सुखमारोहतिब्रह्मकर्म्मपूतस्तलादिव
॥ ४३ ॥ यदानपंचविज्ञायदृष्ट्वातुपरिनिष्ठितः ॥ पंचभिर्ब्रह्मभिःपूतोभस्मनादीक्षितोद्विजः ॥ ४४ ॥ शंकरैकमनायोगीज्ञानमेतदवाप्नुते ॥माहेश्वरमिमं
योगंनिष्कलंमुक्तिकारणम् ॥ ४५ ॥ यज्ञादपिनमुञ्चन्तिव्रतमप्राप्यशांकरम् ॥ सर्व्वज्ञातेप्रबुद्धेनेनेहपाशुपतंव्रतम् ॥ ४६ ॥ महादेवपरोभूत्वासर्व्वज्ञा
नमवाप्नुहि ॥ नैवामत्यापरंब्रह्मअन्येविन्दन्तियोगिनः॥ ४७॥ महादेवप्रसादेननमुक्ताःशिवयोगिनः ॥ एषमोक्षविधिःकृत्स्नःसर्व्वप्रत्ययवर्ज्जितः॥४८॥
सकलस्यापदंदिव्यंब्रह्मलोकात्परस्थितम् ॥ महादेवस्यवक्ष्यामितद्भक्त्यायेनयान्तिहि ॥ ४९ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायांयोगध्या
नेऽष्टपञ्चाशोऽध्यायः ॥ ५८ ॥ सनत्कुमारउवाच ॥ सत्यस्यमहतश्चैवजनस्यतपसस्तथा ॥ भूतभव्यभवानाञ्चसप्तानामूर्द्धतःस्थिताः ॥ १ ॥ लोका
भगवतःशम्भोर्यत्रास्तेसततंशिवः ॥ नासौतर्कविनिर्देश्योलोकास्तस्मिन्प्रतिष्ठिताः ॥ २ ॥ उर्द्धंतिर्य्यगधस्ताच्चलोकास्तद्विनिबन्धनाः ॥ ब्रह्माण्डंस
कलंतस्मिञ्छिवलोकेप्रतिष्ठितम् ॥ ३ ॥ नासौनश्यतिसंहारेध्रुवस्थानंसुरालयः ॥ यत्राहंसनकाद्याश्चब्रह्माचैवपितामहः ॥ ४ ॥ वालखिल्यपुरोगाश्च
सिद्धाश्चकपिलादयः ॥ शिवयोगंपरिप्राप्ताःसत्त्वादिगुणवर्ज्जिताः ॥ ५ ॥ निष्कामानिष्ठिताव्याससेवमानाश्चईश्वरम् ॥ परमात्माचभावोऽसौपरमोऽ
सौमनीषिणाम् ॥६॥ परमैश्वर्य्यसंयुक्तस्तत्रास्तेविग्रहेश्वरः ॥ क्षमासत्यंधृतिश्चैवतपोवैराग्यमेवच ॥ ७ ॥ विष्णुत्वञ्चविधातृत्वमाद्यबोधोमहेशता ॥
नित्यमेतानितिष्ठन्तितस्मिन्देवेमहेश्वरे ॥ ८ ॥ अतःपरम्परोदिव्येपरमाणोःपदेस्थितः ॥ मनसःप्राकृतस्यादौतत्तेजःसम्प्रकाशनः ॥ ९ ॥ यथासिद्धे
र्मण्डलन्तुलौकिकंसापवर्गिकम् ॥ महान्तःसर्व्वतोनित्याईश्वरात्तदभूत्तदा ॥ १० ॥ तस्माद्द्विजस्यनिर्भेदक्षेत्रतःसविभुःस्मृतः ॥ प्रकृतिर्वैष्णवीप्रोक्ता
साचतस्माद्विनिर्गता ॥ ११ ॥ अमुष्यपुरतोब्रह्माब्रह्मणःशङ्करात्मनः ॥ ब्रह्मलोकपुरस्ताच्चपुरंतेजोमयंपरम् ॥ १२ ॥ यत्स्थानंविग्रहेशस्यईश्वरस्यम

हात्मनः ॥ नाम्नाशिवपुरंव्यासगतिरीश्वरयोगिनाम् ॥ १३ ॥ शतंशतसहस्राणांयोजनानांतदुच्यते ॥ महामण्डलसंस्थानंतन्मध्येविमलंशुभम् ॥
॥ १४ ॥ स्फुरदादित्यरूपोऽसौवह्नितोऽधिकतेजसा ॥ महताजातरूपेणप्राकारेणसवेष्टितः ॥ १५ ॥ बहुभिर्हैमजैर्द्वारैर्मणिमुक्ताविभूषितैः ॥ शोभितं
तत्पुरंरम्यंशुशुभेसिद्धसेवितम् ॥ १६ ॥ जरामृत्युश्रमव्याधिमोहकोपमहाभयम् ॥ एतेतत्रनविद्यन्तेतस्मिञ्छिवपुरेमुने ॥ १७॥ शतंशतसहस्राणां
योजनानांयथादिशम् ॥ तत्पुरंवृषभांकस्यसर्व्वस्यातिसमृद्धिमत् ॥ १८ ॥ दिव्यामरावतीभूमिःस्पर्शमात्रसुखावहा ॥ विमलेन्दुविकाशानिबालार्कस
दृशानिच ॥ १९ ॥ क्वचिद्रक्तानिपद्मानिक्वचिच्छ्वेतानिरेजिरे ॥ महाह्रदप्रमाणानिनानावैदूर्य्यसन्निभाः ॥ २० ॥ गन्धवन्तिमहार्हाणिविन्यस्तानिमही
तले ॥ इन्द्रनीलनिकाशानिमहामणिनिभानिच ॥ २१ ॥ क्वचित्कृष्णानिरक्तानिदिव्यगन्धवहानिच ॥ कान्तानिरेजिरेतत्रउत्पत्राणिसमन्ततः॥२२॥
प्रवहन्तिमहानद्योपुरेऽस्मिन्नमृतोदकाः ॥ पुरेभगवतःशम्भोःपरिवार्य्यनिबोधताः ॥ २३ ॥ वरदाचवरेण्याचवरेशावरवर्णिनी ॥ वराहावारिभद्राच
वराचैवमहापगा ॥ २४ ॥ नानाकुसुमसंमिश्रंबहुतानिजलामृतम् ॥ नदेवानमुनीन्द्राश्चनासुराःपशवोनच ॥ २५ ॥ नचैवान्येमहेशस्यज्ञातुंतत्परमा
द्भुतम् ॥ अन्तर्भावविशुद्धायेसर्व्वतोभक्तिभाविताः ॥ २६ ॥ शिवैकमनसोव्यासतस्मिन्मोदन्तितेनराः ॥ तस्यमध्येपुरेन्द्रस्यसूर्य्यज्वलनवर्चसः ॥
॥ २७ ॥ मेरुशृङ्गप्रतीकाशोदृश्यतेचपुनःपुनः ॥ प्रासादोनक्षपादिस्तुकामदःकनकामयः ॥ २८ ॥ अनिरीक्ष्योमहालुब्धैःसमन्तात्परिशोभितः ॥
वैदूर्य्यव्योमसङ्काशैःस्फटिकैश्चन्द्रसप्रभैः ॥ २९ ॥ प्रबालैरर्कसंकाशैरिन्द्रनीलमयैःशुभैः ॥ शिखिरश्मिप्रकाशाभिःक्वचिदर्कस्वरूपिभिः ॥ ३० ॥
शोभितन्तुपताकाभिर्विरराजसुखानिलम् ॥ सर्व्वर्त्तुकुसुमैश्चित्रैर्विविधैश्चफलैरपि ॥ ३१ ॥ शुशुभेतत्पुरंदिव्यंपादपैःकामदैश्चितम् ॥ यथैवकांचनो
मेरुःसर्व्वेषांप्रवरोमहान् ॥ ३२ ॥ तथैवतत्पुरंरेजेसर्व्वलोकोपरिस्थितम् ॥ तत्रविश्वेश्वरःसाक्षान्महाभूतपरिग्रहः ॥ ३३ ॥ सदास्तेसहितःपत्न्याषड्
विंशःसपरिग्रहः ॥ लक्ष्मीर्मेधाधृतिश्चैवश्रीःकीर्त्तिश्चसरस्वती ॥ ३४ ॥ उमयासहितास्तत्रमोदन्तेलोकमातरः ॥ तास्तामुनीश्वरादिव्यारूपिण्योयो
गसंयुताः ॥ ३५ ॥ गणेशैःसहमोदन्तेदेवतासहितामुने ॥ गणानामधिपास्तत्रकुब्जवामनरूपिणः ॥ ३६ ॥ कामरूपामहावेशामहायोगपरायणाः ॥
प्रमथानांमहात्मानस्तत्रातिष्ठन्तिसुव्रताः ॥ ३७ ॥ महाकालेश्वरस्तत्रनन्दीश्वरगणेश्वरौ ॥ गृहीतपट्टिशौदिव्यौसदेवौदेवपार्श्वगौ ॥ ३८ ॥ जयाचवि
जयाचैवदिव्ययोगबलान्विते ॥ देव्याःपार्श्वेस्थितेनित्यमसिहस्तेमहाबले ॥ ३९ ॥ ककुद्मीचमहानादोमहानीश्वरवाहनः ॥ तत्रास्तेमेघसंकाशोगोप
तिःकामरूपधृक् ॥ ४० ॥ घण्टाशक्तिधरःश्रीमान्पितृपार्श्वेव्यवस्थितः ॥ शाखश्चैवविशाखश्चनैगमीचैवसुव्रत ॥ ४१ ॥ कुमाराश्चस्थिताःपार्श्वेलो

कानुग्रहहेतवः ॥ दशसूर्य्यसहस्राणिरथेसूक्ष्मेजगत्पतेः ॥ ४२ ॥ शार्दूलाःकाञ्चनास्तत्रसिंहाश्वरजतप्रभाः ॥ प्राज्ञानांमणितुल्यानांमहायोगबलौ
जसाम् ॥ ४३ ॥ असंख्याताःस्थिताःकोट्योरुद्राणांतत्रसुव्रत ॥ कांचनैःसुव्रतैश्चित्रैर्दिव्यैर्मणिमयैरपि ॥ ४४ ॥ शुभैःप्रतिष्ठितःश्रीमाञ्छु
शुभेस्यन्दनोत्तमः ॥ सरथोदेवदेवस्ययोगेशोयोगवाहनः ॥ ४५ ॥ सर्व्वलोकसमोदिव्योरत्नभित्तियुतःक्षणात् ॥ सकलांकोगृहेशस्यदे
वदेवजगत्सृजः ॥ ४६ ॥ एतदाख्यानमव्यग्रंसर्व्वाशुभनिवर्त्तनम् ॥ सर्व्वभावार्पितात्मानोयेयोगारुद्रतत्पराः ॥ ४७ ॥ यत्रतत्रमृताव
त्सतेषांतत्रास्पदंस्मृतम् ॥ येचमाहेश्वराव्यासातिष्ठन्तेशङ्करालये ॥ ४८ ॥ अन्येयेशङ्करेभक्तास्ताञ्छृणुष्वसमाहितः ॥ अहंसनन्दनश्चै
वसनकश्चसनातनः ॥ ४९ ॥ धाताब्रह्मासतुज्येष्ठोनरनारायणावपि ॥ कपिलोयोगसिद्धस्तुसिद्धःपंचशिखस्तथा ॥ ५० ॥ मुनिर्हयशिराय
श्चयाज्ञवल्क्यादयस्तथा ॥ ऋषयःशुकधर्म्माणःपरमैश्वर्य्यसंयुताः ॥ ५१ ॥ तिष्ठन्तीश्वरमूलेतुगुणातीतादिदृक्षवः ॥ परसंहारकालेतुअन्यत्रलयसं
ज्ञिते ॥ ५२ ॥ ईश्वरंतेसमाविश्यप्राप्नुवन्त्यापराह्णिकम् ॥ यैश्चदृष्टानिविप्रेन्द्रहरस्यायतनानितु ॥ ५३ ॥ महाकालेश्वरश्चैवगोकर्णश्चतथा
शुभौ ॥ अविमुक्तेचओङ्कारंविश्वेश्वरमिहापिच ॥ ५४ ॥ वैकर्णश्चेश्वरोदेवःश्रीगिरौवामहेश्वरः ॥ कारोहनेचदेवेशोमहाकालेचशङ्करः ॥ ५५ ॥
भद्रेशश्चमहादेवःशब्दकर्णेश्वरस्तथा ॥ महाकालेश्वरश्चैवगोकर्णेचतथाशुभौ ॥ ५६ ॥ अविमुक्तेचओङ्कारंयैश्चदृष्टंमहामुने ॥ तेऽपियान्तिमृताः
कालेपुरेचगिरिजापतेः ॥ ५७ ॥ योगःपाशुपतोयस्यमयातेपरिकीर्त्तितः ॥ व्रतंपाशुपतंयस्यसोऽपितत्रप्रवर्त्तते ॥ ५८ ॥ भक्तिर्येषांभवे
न्नित्यंकृतार्थास्तेनरोत्तमाः ॥ मृताःशिवपुरेव्यासभिक्षापट्टिशपाणयः ॥ ५९ ॥ नन्दीशस्कन्दसङ्काशायोगैश्वर्य्यबलान्विताः ॥ रुद्राभवन्तिविप्रेन्द्रस
दाशङ्करपार्श्वगाः ॥ ६० ॥ एषतेकथितःसर्व्वोयोगोमाहेश्वरःपरः ॥ सकलंचैवज्ञात्वैवंविज्ञायपरमेश्वरम् ॥ ६१ ॥ सर्व्ववेधविनिर्म्मुक्तःपरंमोक्षमवाप्स्यसि ॥
भविष्यसिचयोगीचज्ञानस्यास्यप्रभावतः ॥ ६२ ॥ जगत्स्थितिकरोयोगीतस्माद्धर्म्मप्रवर्त्तकः ॥ ज्ञानसिद्ध्यास्मृतिंप्राप्यब्रह्माण्डोद्भवकारणे ॥ ६३ ॥ स्थिति
धर्म्मनिरोधानांपुराणंचकरिष्यसि ॥ यज्ञकर्म्मप्रचारार्थंवदमेत्वंस्वयम्भुवम् ॥ ६४ ॥ विज्ञानार्थमनुस्मृत्यचतुर्द्धाविकरिष्यसि ॥ मन्वन्तरमिदं
कृत्स्नंवैवस्वतमनिन्दितम् ॥ ६५ ॥ लोकेस्थितिकराधर्म्मावेदस्मृतिपुरोगमाः ॥ त्वत्कृताःप्रकरिष्यन्तितीर्थकृत्त्वंभविष्यसि ॥ ६६ ॥ तस्माद्व्रतंच
सम्प्राप्यपशुपाशविमोचनम् ॥ शङ्करज्ञानसम्पन्नईश्वरेलयमाप्स्यसि ॥ ६७ ॥ एवमुक्तस्तदाव्यासमुनिनाब्रह्मसूनुना ॥ उपसेव्यमुनीन्द्रन्तुभस्मसं
स्कारमाप्नुवत् ॥ ६८ ॥ तत्क्षणाच्चास्ययोगोऽसौप्रादुर्भूतोमहामुनेः ॥ अभिवाद्यगुरुंव्यासोब्रह्मपुत्रंमहातपाः ॥ ६९ ॥ सवायतेनदीक्षार्थंविवेशचमही

तलम् ॥ एवंसनत्कुमारस्तुपृष्टोव्यासेनधीमता ॥ ७० ॥ मुनीन्द्रंकथयामासपुराणंशिवसम्भवम् ॥ सर्व्वागमसमायुक्तंमन्वन्तरजगत्स्थितम् ॥ ७१ ॥ शिवयोगधरंधीरंसर्व्वज्ञानार्णवंमहत् ॥ तस्माद्यूयमपिप्राप्यव्रतंपाशुपतंद्विजाः ॥ ७२ ॥ अभ्यस्यसकलंयोगमीश्वरेलयमाप्स्यथ ॥ इदमागत्य चाभ्यस्यव्यासोऽसौमुनिसत्तमः ॥ ७३ ॥ वेदार्थस्मृतिसम्पन्नश्चिन्ताश्वक्रेमहाद्युतिः ॥ अतोविनिर्गतोधर्म्मोयोगविद्यास्तथैवच ॥ ७४ ॥ पुराणंप्रथमं प्राहश्लाघ्यंनन्दीश्वरोद्विजः ॥ ससर्व्ववित्समाख्यातोयइमंवेत्तिसर्व्वतः ॥ ७५ ॥ त्रिवर्गःप्राप्यतेतेनमुक्तिरेतेनजायते ॥ आयुःप्रवर्द्धतेयोगोवर्त्ततेतेनल भ्यते ॥ ७६ ॥ कृत्स्नस्यजगतोविद्यास्वादिकर्त्तायथाहरः ॥ तथासर्व्वपुराणानांपुराणोऽयंपरःस्मृतः ॥ ७७ ॥ अधीतोयैरिदंविप्रैस्तत्परैश्चापिसे वितः ॥ मृत्युकालमनुप्राप्यनतेशोचन्तिजन्मिनः ॥ ७८ ॥ श्रवणाद्देवदेवस्यसायुज्यंधारणाद्विभोः ॥ सेवनाद्योगसंसिद्धिंमोक्षञ्चपरमंलभेत् ॥ ७९ ॥ श्लाघ्यात्पुण्यमुमापतेर्हिजगतांस्तोत्रानुवादंपरं देव्याश्चापिमहाप्रभावकथनंसर्व्वागमैरर्च्चितः ॥ श्रुत्वैवंपरमंनराःपदमिदंयक्षालयंप्राप्नुयुर्नाकेन्द्रैश्च सुरेन्द्रयक्षविबुधैःसिद्धैर्द्विजैःसेवितम् ॥ ८० ॥ शम्भावर्पितसर्व्वभावहृदयैर्यैर्यैरयंसेवितः सर्व्वेतेज्वलदर्कवह्निवपुषस्त्र्यक्षाःशशाङ्कत्विषः ॥ देवस्या नुचराश्चतुर्दशवरानिर्म्मुक्तसर्व्वाशुभाःसर्व्वेहर्षसमन्विताःश्रुतधियोनानागणैरन्विताः ॥ ८१ ॥ ततइहपरमंप्राप्ययोगंमुनीन्द्राःपरमपरमनन्तंप्राप्यदे वाधिवासम् ॥ त्रिपुरहरमिमंयेज्ञातवन्तःप्रयत्नाद्गतकलुषचयास्तेप्राप्नुवन्तेचमोक्षम् ॥ ८२ ॥ इदंपुराणंपरमंपवित्रंशुचिःपठेद्यःशृणुयाच्चयोनरः ॥ स सर्व्वकामान्समवाप्यदुर्लभाञ्छिवस्यचान्तेपदमुत्तमंव्रजेत् ॥ ८३ ॥ पितॄणांतृप्तिदंश्राद्धेपठ्यमानामिदंभवेत् ॥ दुष्टस्वप्नादिदुष्कर्म्मकलिकल्मषनाशनम् ॥ ८४ ॥ अधीतेचास्ययःश्लोकंश्लोकार्द्धंवासमाहितः ॥ श्रद्धयाभक्तियुक्तोवातस्यप्रीतोभवेच्छिवः ॥ ८५ ॥ इतिश्रीशैवेमहापुराणेसनत्कुमारसंहितायां मेकोनषष्टितमोध्यायः ॥ ५९ ॥ ॥ समाप्तेयं सनत्कुमारसंहिता ॥ ४ ॥ ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ ७ ॥ ॥ ७ ॥

खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" छापाखाना-खेतवाडी-बंबई.

ॐनमोभगवतेवासुदेवाय ॥ ॥नारायणंनमस्कृत्यनरञ्चैवनरोत्तमम्॥ देवींसरस्वतीञ्चैवततोजयमुदीरयेत्॥१॥ ॥नमःसमस्तसंसारचक्रभ्रमणहेतवे ॥
गौरीकुचतटद्वन्द्वकुंकुमांकितवक्षसे ॥ १ ॥ उक्त्वाभगवतोलब्धंप्रसादादुपमन्युना ॥ नियमादुत्थितोवायुर्मध्यंप्राप्तेदिवाकरे ॥ २ ॥ ऋषयश्चापितेस
र्वेनैमिषारण्यवासिनः ॥ अथायमर्थःप्रष्टव्यइतिकृत्वाविनिश्चयम् ॥ ३ ॥ कृत्वायथास्वकंकृत्यंप्रत्यागत्ययथापुरा ॥ भगवन्तमुपायान्तंसमीक्ष्यसमु
पाविशन् ॥ ४ ॥ अथासौनियमस्यान्तेभगवानम्बरोद्भवः ॥ मध्येमुनिसमाजस्यभेजेक्लृप्तंवरासनम् ॥ ५ ॥ सुखासनोपविष्टश्चवायुर्लोकनमस्कृतः ॥
श्रीमद्विभूतिमीशस्यहृदिकृत्वेदमब्रवीत् ॥ ६ ॥ तंप्रपद्येमहादेवंसर्व्वज्ञमपराजितम् ॥ विभूतिःसकलंयस्यचराचरमिदंजगत ॥ ७ ॥ इत्याकर्ण्यशुभां
वाणीमृषयःक्षीणकल्मषाः ॥ विभूतिविस्तरंश्रोतुमूचुस्तेपरमंवचः ॥ ८ ॥ ऋषयऊचुः ॥ उक्तंभगवतावृत्तमुपमन्योर्महात्मनः ॥ क्षीरार्थेनापितपसा
यत्प्राप्तंपरमेश्वरात् ॥ ९ ॥ दृष्टोसौवासुदेवेनकृष्णेनाक्लिष्टकर्म्मणा ॥ धौम्याग्रजस्ततस्तेनकृतंपाशुपतंव्रतम् ॥ १० ॥ प्राप्तश्चपरमंज्ञानमितिप्रागेव
शुश्रुम ॥ कथंसलब्धवान्कृष्णोज्ञानंपाशुपतंपरम् ॥ ११ ॥ वायुरुवाच ॥ स्वेच्छयाह्यवतीर्णोऽपिवासुदेवःसनातनः ॥ निन्दयन्निवमानुष्यंददर्शमुनि
सत्तमम् ॥ १२ ॥ रुद्राक्षमालाभरणंजटामण्डलमण्डितम् ॥ तच्छिष्यभूतैर्मुनिभिःशास्त्रैर्वेदमिवावृतम् ॥ १३ ॥ शिवध्यानरतंशान्तमुपमन्युंमहाद्यु
तिम् ॥ नमश्चकारतंदृष्ट्वाहृष्टसर्व्वतनूरुहः ॥ १४ ॥ बहुमानेनकृष्णोऽसौत्रिःकृत्वातुप्रदक्षिणम् ॥ तस्यावलोकनादेवमुनेःकृष्णस्यधीमतः ॥ १५ ॥
नष्टमासीन्मलंसर्व्वंमायेयंकर्म्मएवच ॥ ततःक्षीणमलंकृष्णमुपमन्युर्यथाविधि ॥ १६ ॥ भस्मनोद्धूल्यतंमन्त्रैरग्निरित्यादिभिःक्रमात् ॥ अथपाशुपतं
साक्षाद्व्रतंद्वादशमासिकम् ॥ १७ ॥ कारयित्वामुनिस्तस्मैददौज्ञानमनुत्तमम् ॥ ततःप्रभृतितंकृष्णंमुनयःशंसितव्रताः ॥ १८ ॥ दिव्याःपाशुपताःस
र्व्वेपरिवृत्योपतस्थिरे ॥ ततोगुरुनियोगाद्वैकृष्णःपरमशक्तिमान् ॥ १९ ॥ तपश्चकारपुत्रार्थंसाम्बमुद्दिश्यशंकरम् ॥ तपसातेनवर्षान्तेदृष्ट्वादेवंमहे
श्वरम् ॥ २० ॥ साम्बंसगणमव्यग्रोलब्धवान्पुत्रमात्मनः ॥ यस्मात्साम्बोमहादेवःप्रददौपुत्रमात्मनः॥२१॥ तस्माज्जाम्बवतीसूनुंसाम्बंचक्रेसनामतः॥
पुराणंधर्म्मशास्त्रञ्चविद्याह्येताश्चतुर्दश ॥ २२ ॥ आयुर्वेदोधनुर्वेदोगान्धर्वश्चेत्यनुक्रमात ॥ अर्थशास्त्रंपरंतस्माद्विद्याह्यष्टादशस्मृताः ॥ २३ ॥ अष्टा
दशानांविद्यानामेतासांभिन्नवर्त्मनाम् ॥ आदिकर्त्ताकविःसाक्षाच्छूलपाणिरितिश्रुतिः ॥ २४ ॥ सहिसर्व्वजगन्नाथःसिसृक्षुरखिलंजगत ॥ ब्रह्माणंविदधे
साक्षात्पुत्रमग्रेसनातनम् ॥ २५ ॥ तस्मैप्रथमपुत्रायब्रह्मणेविश्वयोनये ॥ विद्याश्चेमाददौपूर्व्वंविश्वसृष्ट्यर्थमीश्वरः ॥ २६ ॥ लब्धविद्येनतेनापिप्रजासृ
ष्टिंवितन्वता ॥ प्रथमंसर्व्वशास्त्राणांपुराणंब्रह्मणास्मृतम् ॥ २७ ॥ अनन्तरन्तुवक्त्रेभ्योवेदास्तस्यविनिर्गताः ॥ प्रवृत्तिःसर्व्वशास्त्राणांतन्मुखादभवत्त

तः ॥ २८ ॥ यदास्यविस्तरंशक्तानाधिगन्तुंप्रजाभुवि ॥ तदाविद्यासमासार्थंविश्वेश्वरनियोगतः ॥ २९ ॥ द्वापरान्तेषुविश्वात्माविष्णुःसर्व्वजगन्मयः॥ व्यासनाम्नाचरत्यस्मिन्नवतीर्य्यमहीतले ॥ ३० ॥ सपुनर्द्वापरेचास्मिन्कृष्णद्वैपायनाख्यया ॥ अरण्यामिवहव्याशीसत्यवत्यामजायत ॥ ३१ ॥ मतिमन्थानमाविध्ययेनवेदमहार्णवात् ॥ प्रकाशोजनितोलोकेमहाभारतचन्द्रमाः ॥ ३२ ॥ संक्षिप्यसपुनर्वेदांश्चतुर्द्धाकृतवान्मुनिः ॥ व्यस्तवेदतयालोकेवेदव्यासइतिश्रुतः ॥ ३३ ॥ पुराणमपिसंक्षिप्तंचतुर्लक्षप्रमाणतः ॥ अद्यापिदेवलोकेतच्छतकोटिप्रविस्तरम् ॥३४॥ योविद्याच्चतुरोवेदान्साङ्गोपनिषदोद्विजः ॥ नचेत्पुराणंसंविद्यान्नैवसस्याद्विचक्षणः ॥ ३५ ॥ इतिहासपुराणाभ्यांवेदंसमुपबृंहयेत् ॥ बिभेत्यल्पश्रुताद्वेदोमामयंप्रतरिष्यति ॥ ३६ ॥ सर्गश्चप्रतिसर्गश्चवंशोमन्वन्तराणिच ॥ वंशानुचरितञ्चेतिपुराणंपञ्चलक्षणम् ॥ ३७ ॥ दशधाचाष्टधाचैतत्पुराणमुपदिश्यते ॥ ब्राह्मंपाद्मंवैष्णवञ्चशैवंभागवतंतथा ॥ ३८ ॥ भविष्यंनारदीयंचमार्कण्डेयमतःपरम् ॥ आग्नेयंब्रह्मवैवर्त्तंलैङ्गंवाराहमेवच ॥ ३९ ॥ स्कान्दञ्चवामनञ्चैवकौर्म्मंमात्स्यञ्चगारुडम् ॥ ब्रह्माण्डञ्चातिपुण्योऽयंपुराणानामनुक्रमः॥४०॥तत्रशैवंतुरीयंयच्छार्व्वंसर्व्वार्थसाधकम् ॥ ग्रन्थलक्षप्रमाणंतद्व्यस्तंद्वादशसंहितम् ॥४१॥ निर्म्मितंतच्छिवेनैवतत्रधर्म्मःप्रतिष्ठितः॥ तदुक्तेनैवधर्म्मेणशैवास्त्रैवर्णिकानराः॥४२॥ एकजन्मनिमुच्यन्तेप्रसादात्परमेष्ठिनः ॥ तस्माद्विमुक्तिमन्विच्छञ्छिवमेवसमाश्रयेत् ॥ ४३ ॥ तमाश्रित्यैवदेवानामापिमुक्तिर्नचान्यथा ॥ यदिदंशैवमाख्यातंपुराणंवेदसम्मितम्॥४४॥तस्यभेदान्समासेनब्रुवतोमेनिबोधत॥विद्येश्वरंतथारौद्रंवैनायकमनुत्तमम्॥४५॥औमंमातृपुराणञ्चैवरुद्रैकादशकंतथा॥कैलासंशतरुद्रञ्चकोटिरुद्राख्यमेवच॥४६॥ सहस्रकोटिरुद्राख्यंवायवीयंततःपरम्॥धर्म्मसंज्ञंपुराणञ्चेत्येवंद्वादशसंहिताः॥४७॥विद्येशंदशसाहस्रमुदितंग्रन्थसंख्यया॥रौद्रंवैनायकञ्चौमंमातृकाख्यंततःपरम् ॥४८॥ प्रत्येकमष्टसाहस्रंत्रयोदशसहस्रकम्॥रुद्रैकादशकाख्यंयत्कैलासंषट्सहस्रकम्॥४९॥शतरुद्रंदशप्रोक्तंकोटिरुद्रंतथैवच ॥ सहस्रकोटिरुद्राख्यंदशसाहस्रकंतथा ॥ ५० ॥ यदेतद्वायुनाप्रोक्तंचतुःसाहस्रमीरितम् ॥ तथापञ्चसहस्रन्तुयदेतद्धर्म्मनामकम् ॥ ५१ ॥ तदेवंलक्षमुद्दिष्टंशैवंशाखाविभेदतः ॥ चतुःसहस्रकंयत्तुवायुनासमुदीरितम् ॥ ५२ ॥ तदिदंवर्त्तयिष्यामिभागद्वयसमन्वितम् ॥ नावेदविदुषेवाच्यमिदंशास्त्रमनुत्तमम् ॥ ५३ ॥ नचैवाश्रद्दधानायनापुराणविदेतथा ॥ परीक्षितायशिष्यायधार्म्मिकायानसूयवे ॥ ५४ ॥ प्रदेयंशिवभक्तायशिवधर्म्मानुसारिणे ॥ पुराणसंहितायस्यप्रसादान्मयिवर्त्तते ॥५५॥ नमोभगवतेतस्मैव्यासायामिततेजसे ॥५६॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेविद्यावतारकथनंनामप्रथमोऽध्यायः ॥१॥

॥ सूतउवाच ॥ पुराकालेनमहताकल्पेऽतीतेपुनःपुनः ॥ अस्मिन्नुपस्थितेकल्पेप्रवृत्तेसृष्टिकर्म्मणि ॥ १ ॥ प्रतिष्ठितायांवार्त्तायांप्रबुद्धासुप्रजासु

च ॥ मुनीनांषट्कुलीयानांब्रुवतामितरेतरम् ॥ २ ॥ इदंपरमिदंनेतिविवादःसुमहानभूत् ॥ परस्यदुर्निरूपत्वान्नजातस्तत्रनिश्चयः ॥ ३ ॥ तेऽभिजग्मु
र्विधातारंद्रष्टुंब्रह्माणमव्ययम् ॥ यत्रास्तेभगवान्ब्रह्मास्तूयमानःसुरासुरैः ॥ ४ ॥ मेरुशृङ्गेशुभेरम्येदेवदानवसंकुले ॥ सिद्धचारणसम्बाधेयक्षगन्धर्व्वसे
विते ॥ ५ ॥ विहङ्गसङ्घसंघुष्टेमणिविद्रुमभूषिते ॥ निकुंजकन्दरदरीगुहानिर्झरशोभिते ॥ ६ ॥ तत्रब्रह्मवनंनामनानामृगसमाकुलम् ॥ दशयोजन
विस्तीर्णंशतयोजनमायतम् ॥ ७ ॥ सुरसामलपानीयपूर्णरम्यसरोवरम् ॥ मत्तभ्रमरसंछन्नरम्यपुष्पितपादपम् ॥ ८ ॥ तरुणादित्यसङ्काशंतत्रचारुम
हत्पुरम् ॥ दुर्द्धर्षंबलदृप्तानांदैत्यदानवरक्षसाम् ॥ ९ ॥ तप्तजाम्बूनदमयंप्रांशुप्राकारतोरणम् ॥ निर्व्यूहवलभीकूटप्रतोलीशतमण्डितम् ॥ १० ॥
महार्हमणिचित्राभिर्लेलिहानमिवाम्बरम् ॥ महाभवनकोटीभिरनेकाभिरलङ्कृतम्॥११॥तस्मिन्निवसतिब्रह्मासाध्यैःसार्द्धंप्रजापतिः ॥ तत्रगत्वामहात्मा
नंसाक्षाल्लोकपितामहम् ॥ १२ ॥ ददृशुर्मुनयोदेवादेवर्षिगणसेवितम् ॥ शुद्धचामीकरप्रख्यंसर्व्वाभरणभूषितम् ॥ १३ ॥ प्रसन्नवदनंसौम्यंपद्मपत्राय
तेक्षणम् ॥ दिव्यकान्तिसमायुक्तंदिव्यगन्धानुलेपनम्॥१४॥दिव्यशुक्लाम्बरधरंदिव्यमालाविभूषितम् ॥ सुरासुरेन्द्रयोगीन्द्रवन्द्यमानपदाम्बुजम्॥१५॥
सर्व्वलक्षणयुक्ताङ्ग्याल्ब्धचामरहस्तया ॥ भ्राजमानंसरस्वत्याप्रभयेवदिवाकरम् ॥ १६ ॥ तंदृष्ट्वामुनयःसर्व्वेप्रहृष्टवदनेक्षणाः ॥ शिरस्यञ्जलिमा
धायतुष्टुवुःसुरपुङ्गवम् ॥ १७ ॥ मुनयऊचुः ॥ नमस्त्रिमूर्त्तयेतुभ्यंसर्गस्थित्यन्तहेतवे ॥ पुरुषायपुराणायब्रह्मणेपरमात्मने ॥ १८ ॥ नमः
प्रधानदेहायप्रधानक्षोभकारिणे ॥ त्रयोविंशतिभेदेनविकृतायाविकारिणे ॥ १९ ॥ नमोब्रह्माण्डजातायब्रह्माण्डोदरवर्तिने ॥ तत्रसंसिद्धकार्य्यायसंसि
द्धकरणायच ॥ २० ॥ नमोऽस्तुसर्व्वलोकायसर्व्वलोकविधायिने ॥ सर्व्वात्मदेहसंयोगवियोगविधिहेतवे ॥ २१ ॥ त्वयैवनिखिलंसृष्टंसंहृतंपालितं
जगत् ॥ तथापिमाययानाथनविद्मस्त्वांपितामह ॥ २२ ॥ सूतउवाच ॥ एवंब्रह्मामहाभागैर्महर्षिभिरभिष्टुतः ॥ प्राहगम्भीरयावाचामुनीन्प्रह्लादय
न्निव ॥ २३ ॥ ब्रह्मोवाच ॥ ऋषयोहेमहाभागामहासत्वामहौजसः ॥ किमर्थंसहिताःसर्व्वेयूयमत्रसमागताः ॥२४॥तमेवंवादिनंदेवंब्रह्माणंब्रह्मवित्तमाः॥
वाग्भिर्विनयगर्भाभिःसर्व्वेप्राञ्जलयोऽब्रुवन्॥२५॥मुनयऊचुः॥भगवन्नन्धकारेणमहतावयमावृताः ॥ खिन्नाविवदमानाश्चनपश्यामोऽत्रयत्परम् ॥ २६ ॥
त्वंहिसर्व्वजगद्धातासर्व्वकारणकारणम् ॥ त्वयाह्यविदितंनाथनेहकिंचनविद्यते ॥ २७ ॥ कःपुमान्सर्व्वसत्त्वेभ्यःपुराणःपुरुषःपरः ॥ विशुद्धःपरिपूर्ण
श्चशाश्वतःपरमेश्वरः ॥ २८ ॥ केनैवचित्रकृत्येनप्रथमंसृज्यतेजगत् ॥ अन्तकालेपुनःसर्व्वंकस्मिन्प्रलयमेष्यति ॥ २९ ॥ कस्यभूतानिवश्यानिक
सर्व्वविनियोजकः ॥ कथंसपुरुषःशक्योद्रष्टुमस्माभिरीश्वरः॥३०॥सूतउवाच॥ एवंपृष्टस्तदाब्रह्माविस्मयस्मेरवीक्षणः ॥ देवानांदानवानांचमुनीनामपि

सन्निधौ ॥३१॥ उत्थायसुचिरंध्यात्वारुद्रइत्युच्चरन्गिरम् ॥ आनन्दक्लिन्नसर्व्वाङ्गःकृताञ्जलिरभाषत ॥ ३२॥ ब्रह्मोवाच ॥ यतोवाचोनिवर्त्तन्तेअप्राप्य
मनसासह ॥ आनन्दंयस्यवैविद्वान्नबिभेतिकुतश्चन ॥ ३३ ॥ यस्मात्सर्व्वमिदंब्रह्मविष्णुरुद्रेन्द्रपूर्व्वकम् ॥ सहभूतेन्द्रियैःसर्व्वैःप्रथमंसम्प्रसूयते ॥३४॥
कारणानाञ्चयोधाताध्यातापरमकारणम् ॥ नसम्प्रसूयतेऽन्यस्मात्कुतश्चनकदाचन ॥ ३५ ॥ सर्व्वैश्वर्य्येणसम्पन्नोनाम्नासर्व्वेश्वरःस्वयम् ॥ सर्व्वैर्मुमु
क्षुभिर्ध्येयःशम्भुराकाशमध्यगः ॥ ३६ ॥ योऽग्रेमांविदधेपुत्रंज्ञानञ्चप्राहिणोतिमे ॥ यत्प्रसादान्मयालब्धंप्राजापत्यमिदंपदम् ॥ ३७ ॥ ईशोवृक्ष
इवस्तब्धोयएकोदिवितिष्ठति ॥ येनेदमखिलंपूर्णंपुरुषेणमहात्मना ॥ ३८ ॥ एकोबहूनांजन्तूनांनिष्क्रियाणाञ्चसत्क्रियः ॥ यएकोबहुधाबीजं
करोतिसमहेश्वरः ॥ ३९ ॥ जीवैरेभिरिमाँल्लोकान्सर्व्वानीशोयईशते ॥ यएकोभगवान्रुद्रोनद्वितीयोऽस्तिकश्चन ॥ ४० ॥ सदाजनानांहृदये
सन्निविष्टोऽपियःपरैः ॥ अलक्ष्योलक्षयन्विश्वमाधितिष्ठतिसर्व्वदा ॥ ४१ ॥ यस्तुकालात्मयुक्तानिकारणान्यखिलान्यपि ॥ अनन्तशक्तिरे
कोवैभगवानाधितिष्ठति ॥ ४२ ॥ यदातमस्तन्नदिवानरात्रिर्नसदप्यसत् ॥ केवलःशिवएवैकोयस्मात्प्रज्ञाविनिःसृता ॥ ४३ ॥ यस्यपुंसः
पराशक्तिर्भावगम्यामहीयसी ॥ निर्गुणास्वगुणैरेवनिगूढानिष्कलाशिवा ॥ ४४ ॥ नतस्यकार्य्यंकरणेनसमानोनचाधिकः ॥ स्वाभाविकी
पराशक्तिर्नित्याज्ञानक्रियाअपि ॥ ४५ ॥ यच्चेदंक्षरमव्यक्तंयदप्यमृतमक्षरम् ॥ तावुभावक्षरात्मानावेकोदेवःस्वयंहरः ॥ ४६ ॥ ईशतेतदभिध्याना
द्योजनात्तत्त्वभावतः ॥ भूयोऽप्यस्यपशोरन्तेविश्वमायानिवर्त्तते ॥ ४७ ॥ यस्मिन्नभासतेविद्युन्नसूर्य्योनचचन्द्रमाः ॥ यस्यभासाविभातीदमित्येषा
शाश्वतीश्रुतिः ॥४८॥ एकोदेवोमहादेवोविज्ञेयस्तुमहेश्वरः ॥ नतस्यपरमंकिञ्चित्पदंसमधिगम्यते ॥४९॥ अयमादिरनाद्यन्तःस्वभावादेवनिर्म्मलः ॥
स्वतन्त्रःपरिपूर्णश्चस्वेच्छाधीनचराचरः ॥ ५० ॥ अप्राकृतवपुःश्रीमाँल्लक्ष्यलक्षणवर्ज्जितः ॥ अमुक्तोमोचकश्चायमकालःकालचोदकः ॥ ५१ ॥
सर्व्वोपरिकृतावासःसर्व्वावासश्चसर्व्ववित् ॥ षड्विधाध्वमयस्यास्यसर्व्वस्यजगतःपतिः ॥ ५२ ॥ उत्तरोत्तरभूतानामुत्तरश्चनिरुत्तरः ॥ अनन्तमहि
माभूमिरनवच्छिन्नवैभवः ॥ ५३ ॥ अशेषविषयामोघशुद्धबुद्धिविजृम्भणः ॥ आत्मशक्त्यमृतास्वादप्रमोदरसिकोयुवा ॥ ५४ ॥ अनन्तानन्दसन्दोह
मकरन्दमधुव्रतः ॥ अखण्डजगदण्डानांपिण्डीकरणपण्डितः ॥ ५५ ॥ औदार्य्यवीर्य्यगाम्भीर्य्यमाधुर्य्यमकरालयः ॥ नैवास्यसदृशंवस्तुनाधिक
ञ्चापिकिञ्चन ॥ ५६ ॥ अतुलःसर्व्वभूतानांराजराजश्चतिष्ठति ॥ अनेनचित्रकृत्येनप्रथमंसृज्यतेजगत् ॥ ५७ ॥ अन्तकालेपुनश्चेदंतस्मिन्प्रलयमेष्य
ति ॥ अस्यभूतानिवश्यानिअयंसर्व्वनियोजकः ॥५८॥ अयन्तुपरयाभक्त्यादृश्यतेनान्यथाक्वचित्॥ व्रतानिसर्व्वदानानितपांसिनियमास्तथा ॥५९॥

कथितानिपुरासद्भिर्भावार्थेनात्रसंशयः ॥ हरिश्चाहंचरुद्रश्चतथान्येचसुरासुराः ॥ ६० ॥ तपोभिरुग्रैरद्यापितस्यदर्शनकांक्षिणः ॥ अदृश्यः
पतितैर्मूढैर्दुर्ज्जनैरपिकुत्सितैः ॥ ६१ ॥ भक्तैरन्तर्बहिश्चापिपूज्यःसम्भाष्यएवच ॥ तदिदंत्रिविधंरूपंस्थूलंसूक्ष्मंततःपरम् ॥ ६२ ॥ अस्मदाद्यम
रैर्दृश्यंस्थूलंसूक्ष्मन्तुयोगिभिः ॥ ततःपरन्तुयन्नित्यंज्ञानमानन्दमव्ययम् ॥ ६३ ॥ तन्निष्ठैस्तत्परैर्भक्तैर्दृश्यंतद्व्रतमास्थितैः ॥ बहुनात्रकिमुक्तेनगुह्या
द्गुह्यतरंपरम् ॥ ६४ ॥ शिवेभक्तिर्नसन्देहस्तथायुक्तोविमुच्यते ॥ प्रसादादेवसाभक्तिःप्रसादोभक्तिसम्भवः ॥ ६५ ॥ यथावांकुरतोबीजंबीजतो
वायथांकुरः ॥ प्रसादपूर्व्विकाएवपशोःसर्व्वत्रसिद्धयः ॥ ६६ ॥ सएवसाधनैरन्तेसर्व्वैरपिचसाध्यते ॥ प्रसादसाधनंधर्म्मःसचवेदेनदर्शितः ॥ ६७ ॥
तदभ्यासवशात्साम्यंपूर्व्वयोःपुण्यपापयोः ॥ साम्यात्प्रसादसम्पर्कोधर्म्मस्यातिशयस्ततः ॥ ६८ ॥ धर्म्मातिशयमासाद्यपशोःपापपरिक्षयः ॥ एवंप्र
क्षीणपापस्यबहुभिर्जन्मभिःक्रमात् ॥ ६९ ॥ साम्बेसर्व्वेश्वरेभक्तिर्ज्ञानपूर्व्वाप्रजायते ॥ भावानुगुणमीशस्यप्रसादोव्यतिरिच्यते ॥ ७० ॥ प्रसादात्क
र्म्मसन्त्यागःफलतोनस्वरूपतः ॥ तस्मात्कर्म्मफलत्यागाच्छिवधर्म्मान्वयःशुभः ॥ ७१ ॥ सचगुर्व्वनपेक्षश्चतदपेक्षइतिद्विधा ॥ तत्रानपेक्षात्सापे
क्षोमुख्यःशतगुणाधिकः ॥ ७२ ॥ शिवधर्म्मान्वयस्यास्यशिवज्ञानसमन्वयः ॥ ज्ञानान्वयवशात्पुंसःसंसारेदोषदर्शनम् ॥ ७३ ॥
ततोविषयवैराग्यंवैराग्याद्भावसाधनम् ॥ भावसिद्ध्युपपन्नस्यध्यानेनिष्ठानकर्म्मणि ॥ ७४ ॥ ज्ञानध्यानाभियुक्तस्यपुंसोयोगःप्रवर्त्तते ॥
योगेनतुपराभक्तिःप्रसादस्तदनन्तरम् ॥ ७५ ॥ प्रसादान्मुच्यतेजन्तुर्मुक्तःशिवसमोभवेत् ॥ अनुग्रहप्रकारस्यक्रमोऽयमविवक्षितः॥ ७६ ॥ यादृशी
योग्यतापुंसस्तस्यतादृगनुग्रहः॥गर्भस्थोमुच्यतेकश्चिज्जायमानस्तथापरः॥७७॥बालोवातरुणोवाथवृद्धोवामुच्यतेपरः ॥ तिर्यग्योनिगतःकश्चिन्मुच्य
तेनारकोऽपरः॥७८॥अपरस्तुपदंप्राप्तोमुच्यतेस्वपदक्षयात्॥कश्चित्क्षीणपदोभूत्वापुनरावर्त्त्यमुच्यते ॥ ७९ ॥ कश्चिदूर्द्ध्वगतस्तस्मिन्स्थित्वास्थित्वाऽवि
मुच्यते॥तस्मान्नैकप्रकारेणनराणांमुक्तिरिष्यते॥८०॥ज्ञानभावानुरूपेणप्रसादेनैवनिर्वृतिः॥तस्मादस्यप्रसादार्थंवाङ्मनोदोषवर्ज्जिताः॥८१॥ध्यायन्तः
शिवमेवैकंसदारतनयाग्नयः ॥ तन्निष्ठास्तत्पराःसर्व्वेतद्युक्तास्तदुपाश्रयाः ॥ ८२ ॥ सर्व्वक्रियाःप्रकुर्व्वाणास्तमेवमनसागताः ॥ दीर्घसत्रंसमासध्वंदि
व्यंवर्षसहस्रकम् ॥ ८३ ॥ सत्रान्तेमन्त्रयोगेनवायुस्तत्रागमिष्यति ॥ सएवभवतांश्रेयःसोपायकथयिष्यति ॥ ८४ ॥ ततोवाराणसीपुण्यापुरीपरम
शोभना ॥ गन्तव्यायत्रविश्वेशोदेव्यासहपिनाकधृक् ॥ ८५ ॥ सदाविहरतिश्रीमान्भक्तानुग्रहकारणात् ॥ तत्राश्चर्य्यमहद्दृष्ट्वामत्समीपंगमिष्यथ ॥
॥ ८६ ॥ ततोवःकथयिष्यामिमोक्षोपायंद्विजोत्तमाः ॥ येनैकजन्मनामुक्तिर्युष्मत्करतलेस्थिता ॥ ८७ ॥ एतन्मनोमयंचक्रंमयासृष्टंविसृज्यते ॥ यत्रा

स्यशीर्य्येतेनेमिःसदेशस्तपसःशुभः ॥ ८८ ॥ इत्युक्त्वासूर्य्यसङ्काशंचक्रंदृष्ट्वामनोमयम् ॥ प्रणिपत्यमहादेवंविससर्ज्जपितामहः ॥ ८९ ॥
तेऽपिहृष्टतराविप्राःप्रणम्यजगतांप्रभुम् ॥ प्रययुस्तस्यचक्रस्ययत्रनेमिरशीर्य्यत ॥ ९० ॥ चक्रंतदपिसंक्षिप्तंश्लक्ष्णंचारुशिलातले ॥ विमलस्वादुपा
नीयेनिपपातवनेक्वचित् ॥ ९१ ॥ तद्वनंतेनविख्यातंनैमिशंमुनिपूजितम् ॥ अनेकयक्षगन्धर्व्वविद्याधरसमाकुलम् ॥ ९२ ॥ अष्टादशसमुद्रस्यद्वीपान
श्नन्पुरूरवाः ॥ विलासवशमुर्व्वश्यायातोदैवेनचोदितः ॥ ९३ ॥ अक्रमेणाहरन्मोहाद्यज्ञवाटंहिरण्मयम् ॥ मुनिभिर्यत्रसंक्रुद्धैःकुशवज्रैर्निपातितः ॥
॥९४॥ विश्वंसिसृक्षमाणावैयत्रविश्वसृजःपुरा ॥ सत्रमारेभिरेदिव्यंब्रह्मज्ञागार्हपत्यगाः ॥९५॥ ऋषिभिर्यत्रविद्वद्भिःशब्दार्थन्यायकोविदैः ॥ शक्तिप्रज्ञा
क्रियायोगैर्विधिरासीदनुष्ठितः ॥ ९६ ॥ यत्रवेदविदोनित्यंवेदवादबहिष्कृतान् ॥ वादजल्पबलैर्घ्नन्तिवचोभिःप्रतिवादिनः ॥ ९७ ॥ स्फटिकमयमही
भृत्पादजाभ्यःशिलाभ्यःप्रसरदमृतकल्पस्वच्छपानीयरम्यम् ॥ अतिरसफलवृक्षप्रायमव्यालसत्त्वंतपसउचितमासीन्नैमिशंतन्मुनीनाम् ॥ ९८ ॥
इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेद्वितीयोऽध्यायः ॥ २ ॥ सूतउवाच ॥ तस्मिन्देशेमहाभागामुनयःसंशितव्रताः ॥ अर्चयन्तोमहादेवं
सत्रमारेभिरेतदा ॥ १ ॥ तच्चसत्रंप्रववृतेसर्व्वाश्चर्य्यंमहर्षिणाम् ॥ विश्वंसिसृक्षमाणानांपुराविश्वसृजामिव ॥ २ ॥ अथकालेगतेसत्रेसमाप्तेभूरिदक्षिणे॥
पितामहनियोगेनवायुस्तत्रागमत्स्वयम् ॥ ३ ॥ शिष्यःस्वयंभुवोदेवःसर्व्वप्रत्यक्षदृग्वशी ॥ आज्ञायांमरुतोयस्यसंस्थिताःसप्तसप्तकाः ॥ ४ ॥ प्रेर
यञ्छश्वदङ्गानिप्राणाद्याभिःस्ववृत्तिभिः ॥ सर्व्वभूतशरीराणांकुरुतेयश्चधारणम् ॥ ५ ॥ अणिमादिभिरष्टाभिरैश्वर्य्यैश्चसमन्वितः ॥ तिर्य्यक्करादिभि
र्मेघैर्भुवनानिबिभर्त्तियः ॥ ६ ॥ आकाशयोनिर्द्विगुणःस्पर्शशब्दसमन्वयात् ॥ तजसांप्रकृतिश्चेतियमाहुस्तत्त्वचिन्तकाः ॥ ७ ॥ तमाश्रमगतंदृष्ट्वामुन
योदीर्घसत्रिणः ॥ पितामहवचःस्मृत्वाप्रहर्षमतुलंययुः ॥ ८ ॥ अभ्युत्थायततःसर्व्वेप्रणम्याम्बरसम्भवम् ॥ चामीकरमयंतस्मैविष्टरंसमकल्पयन् ॥
॥९॥सोऽपितत्रसमासीनोमुनिभिःसम्यगर्च्चितः॥प्रतिनंद्यचतान्सर्व्वान्पप्रच्छकुशलंततः॥१०॥वायुरुवाच॥अत्रवःकुशलंविप्राःकच्चिद्वृत्तेमहाक्रतौ॥कच्चि
द्यज्ञहनोदैत्यानबाधेरन्सुरद्विषः ॥ ११ ॥ प्रायश्चित्तंदुरिष्टंवानकच्चित्समजायत ॥ स्तोत्रशस्त्रग्रहैर्देवान्पितृन्पित्र्यैश्चकर्मभिः ॥ १२ ॥ कच्चिदभ्यर्च्ययु
ष्माभिर्विधिरासीत्स्वनुष्ठितः॥निवृत्तेचमहासत्रेपश्चात्किंवाश्चिकीर्षितम् ॥१३ ॥ सूतउवाच ॥ इत्युक्तामुनयःसर्व्वेवायुनाशिवभाविना ॥ प्रहृष्टमनसः
पूताःप्रत्यूचुर्विनयान्विताः ॥ १४ ॥ मुनयऊचुः ॥ अद्यनःकुशलंसर्व्वमद्यसाधुभवेत्तपः ॥ अस्मच्छ्रेयोविवृद्ध्यर्थंभवानत्रागतोयतः ॥ १५ ॥
श्रृणुचेदंपुरावृत्तंतमसाक्रान्तमानसैः ॥ उपासितःपुरास्माभिर्विज्ञानार्थंप्रजापतिः॥१६॥सोऽप्यस्माननुगृह्याहशरण्यःशरणागतान् ॥ सर्व्वस्मादधिको

विप्रारुद्रः परमकारणम् ॥ १७ ॥ तमप्रतर्क्ययाथार्थ्यं भक्तिमानेवपश्यति ॥ भक्तिश्चास्यप्रसादेनप्रसादादेवनिर्वृतिः ॥ १८ ॥ तस्मादस्यप्रसादार्थंनैमिषेम
न्त्रयोगतः ॥ यजध्वंदीर्घसत्रेणरुद्रंपरमकारणम् ॥ १९ ॥ तत्प्रसादेनसत्रान्तेवायुस्तत्रागमिष्यति ॥ तन्मुखाज्ज्ञानलाभोवस्ततश्रेयोभविष्यति ॥ २० ॥ इत्या
दिश्यवयंसर्व्वेप्रेषिताःपरमेष्ठिना ॥ अस्मिन्देशेमहाभागत्वदागमनकाङ्क्षिणः ॥ २१ ॥ दीर्घसत्रंसमासीनादिव्यवर्षसहस्रकम् ॥ अतस्तवागमादन्यत्प्रार्थ्यं
नोनास्तिकिञ्चन ॥ २२ ॥ इत्याकर्ण्यपुरावृत्तमृषीणांदीर्घसत्रिणाम् ॥ वायुःप्रीतमनाभूत्वातत्रास्तेमुनिसंवृतः ॥ २३ ॥ ततस्तैर्मुनिभिःपृष्टस्तेषांभाव
विवृद्धये ॥ सर्गादिशार्व्वमैश्वर्य्यंसमासादवदद्विभुः ॥ २४ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेतृतीयोऽध्यायः ॥ ३ ॥ सूतउवाच ॥
तत्रपूर्व्वंमहाभागानैमिषारण्यवासिनः ॥ प्रणिपत्ययथान्यायंपप्रच्छुःपवनंप्रभुम् ॥ १ ॥ नैमिषीयाऊचुः ॥ भवान्कथमनुप्राप्तोज्ञानमीश्वरगोचरम् ॥
कथंचशिष्यभावस्तेब्रह्मणोऽव्यक्तजन्मनः ॥ २ ॥ एकोनविंशतिःकल्पोविज्ञेयःश्वेतलोहितः ॥ तस्मिन्कल्पेचतुर्व्वक्त्रःस्रष्टुकामोऽतपत्तपः ॥ ३ ॥
तपसातेनतीव्रेणतुष्टस्तस्यपितास्वयम् ॥ दिव्यंकौमारमास्थायरूपंरूपवतांवरः ॥ ४ ॥ श्वेतोनाममुनिर्भूत्वादिव्यांवाचमुदीरयन् ॥ दर्शनंप्रददौ
तस्मैदेवदेवोमहेश्वरः ॥ ५ ॥ तंदृष्ट्वापितरंब्रह्माब्रह्मणोऽधिपतिंपतिम् ॥ प्रणम्यपरमंज्ञानंगायत्र्यासहलब्धवान् ॥ ६ ॥ ततःसलब्धविज्ञानोविश्वकर्म्मा
चतुर्म्मुखः ॥ असृजत्सर्व्वभूतानिस्थावराणिचराणिच ॥ ७ ॥ यच्छ्रुत्वाद्यमृतंलब्धंब्रह्मणापरमेश्वरात् ॥ ततस्तद्वदनादेवमयालब्धंतपोबलात् ॥
॥ ८ ॥ मुनयऊचुः ॥ किंतज्ज्ञानंत्वयालब्धंतथ्यात्तथ्यतरंशुभम् ॥ यत्रकृत्वापरांनिष्ठांपुरुषःसुखमृच्छति ॥ ९ ॥ वायुरुवाच ॥ पशुपाशपतिज्ञानं
यल्लब्धन्तुमयापुरा ॥ तत्रनिष्ठापराकार्य्यापुरुषेणसुखार्थिना ॥ १० ॥ अज्ञानप्रभवंदुःखंज्ञानेनैवनिवर्त्तते ॥ ज्ञानंवस्तुपरिच्छेदोवस्तुचत्रिविधंस्मृतम्
॥ ११ ॥ अजडंचजडञ्चैवनियन्तृचतयोरपि ॥ पशुःपाशःपतिश्चेतिकथ्यतेतत्त्रयंक्रमात् ॥ १२ ॥ अक्षरंचक्षरञ्चैवक्षराक्षरपरंतथा ॥ तदेतत्त्रितयं
भूयःकथ्यतेतत्त्ववेदिभिः ॥ १३ ॥ अक्षरंपशुरित्युक्तःक्षरंपाशउदाहृतः ॥ क्षराक्षरपरंयत्तत्पतिरित्यभिधीयते ॥ १४ ॥ मुनयऊचुः ॥ किंतदक्षरमि
त्युक्तंकिंचक्षरमुदाहृतम् ॥ तयोश्चपरमंकिंवातदेतद्ब्रूहिमारुत ॥ १५ ॥ वायुरुवाच ॥ प्रकृतिःक्षरमित्युक्तंपुरुषोऽक्षरउच्यते ॥ ताविमौ
प्रेरयत्यन्यःसपरःपरमेश्वरः ॥ १६ ॥ मुनयऊचुः ॥ कैषाप्रकृतिरित्युक्ताकएषपुरुषोमतः ॥ अनयोःकेनसम्बन्धःकोऽयंप्रेरकईश्वरः ॥ १७ ॥
वायुरुवाच ॥ मायाप्रकृतिरुद्दिष्टापुरुषोमाययावृतः ॥ सम्बन्धोमलकर्म्मभ्यांशिवःप्रेरकईश्वरः ॥ १८ ॥ मुनयऊचुः ॥ केयंमायासमाख्याताकिंरूपो
माययाकृतः ॥ मूलंकीदृक्कृतोवास्यकिंशिवत्वंकुतःशिवः ॥ १९ ॥ वायुरुवाच ॥ मायामाहेश्वरीशक्तिश्चिद्रूपोमाययावृतः ॥ मलश्चिच्छादकोनैजोवि

शुद्धिःशिवतास्वतः ॥ २० ॥ मुनयऊचुः ॥ प्राप्नोति कथमात्माऽव्यापि कं हेतुना ॥ किमर्थंवावृतिःपुंसःकेनवाविनिवर्त्तते ॥ २१ ॥ वायुरुवाच ॥
आवृतिर्व्यापिनोऽपिस्याद्व्यापियस्मात्कलाद्यपि ॥ हेतुःकर्म्मैवभोगार्थंनिवर्तेतमलक्षयात् ॥ २२ ॥ मुनयऊचुः ॥ कलादिकथ्यतेकिंतत्कर्म्मवा
किमुदाहृतम् ॥ तत्किमादिकिमन्तंवाकिंफलंवाकिमाश्रयम् ॥ २३ ॥ कस्यभोगश्चकिंभोग्यंकिंवातद्भोगसाधनम् ॥ मलक्षयस्यकोहेतुःकीदृक्क्षीण
मलःपुमान् ॥ २४ ॥ वायुरुवाच ॥ कलाविद्याचरागश्चकालोनियतिरेवच ॥ कलादयःसमाख्यातायोभोक्तापुरुषोभवेत् ॥ २५ ॥ पुण्यपापात्मकं
कर्म्मसुखदुःखफलन्तुयत् ॥ अनादिमलभोगान्तमज्ञानात्मसमाश्रयम् ॥ २६ ॥ भोगःकर्म्मविनाशायभोग्यमव्यक्तमुच्यते ॥ बाह्यान्तःकरणद्वारं
शरीरंभोगसाधनम् ॥ २७ ॥ भावातिशयलभ्येनप्रसादेनमलक्षयः ॥ क्षीणेचात्ममलेतस्मिन्पुमाञ्छिवसमोभवेत् ॥ २८ ॥ मुनयऊचुः ॥
कलादिपंचतत्त्वानांकिंकर्म्मपृथगुच्यते ॥ भोक्तेतिपुरुषश्चेतियेनात्माव्यपदिश्यते ॥२९॥ किमात्मकंतदव्यक्तंकेनाकारेणभुज्यते ॥ किंतस्यशरणंभुक्तौ
शरीरंचकिमुच्यते ॥३०॥ वायुरुवाच ॥ दृक्क्रियाव्यंजिकाविद्याकलेरागःप्रवर्तकः ॥ कालोऽवच्छेदकस्तत्र नियतिस्तुनियामिका ॥३१॥ अव्यक्तंकारणं
यत्तत्त्रिगुणंप्रभवाप्ययम् ॥ प्रधानंप्रकृतिश्चेतियदाहुस्तत्त्वचिन्तकाः ॥३२॥ कलातस्तदभिव्यक्तमनभिव्यक्तलक्षणम् ॥ सुखदुःखविमोहात्माभुज्यतेगुणवां
स्त्रिधा ॥३३॥ सत्त्वंरजस्तमइतिगुणाःप्रकृतिसम्भवाः ॥ प्रकृतौसूक्ष्मरूपेणतिलेतैलमिवस्थिताः ॥३४॥ सुखंचसुखहेतुश्चसमासात्सात्त्विकंस्मृतम् ॥
राजसंतद्विपर्य्यासः स्तम्भमोहौतुतामसौ ॥३५॥ सात्त्विक्यूर्द्ध्वगतिःप्रोक्तातामसीस्यादधोगतिः ॥ मध्यमातुगतिर्यासाराजसीपरिपठ्यते ॥३६॥ तन्मा
त्रापंचकञ्चैवभूतपंचकमेवच ॥ ज्ञानेन्द्रियाणिपंचैवपंचकर्म्मेन्द्रियाणिच ॥३७॥ प्रधानबुद्ध्यहङ्कारमनांसिचचतुष्टयम् ॥ समासादेवमव्यक्तंसविकारमु
दाहृतम् ॥ ३८ ॥ तत्कारणदशापन्नमव्यक्तमितिकथ्यते ॥ व्यक्तंकार्य्यदशापन्नंशरीरादिघटादिवत् ॥३९॥ यथाघटादिकंकार्य्यंमृदादेर्नातिभिद्यते ॥
शरीरादितथाव्यक्तमव्यक्तान्नातिभिद्यते ॥ ४० ॥ तस्मादव्यक्तमेवैकंकारणंकरणानिच ॥ शरीरंचतदाधारंतद्भोग्यंचापिनेतरत् ॥४१॥ ऋषयऊचुः ॥
बुद्धीन्द्रियशरीरेभ्योव्यतिरिक्तस्यकस्यचित् ॥ आत्मशब्दाभिधेयस्यवस्तुतोऽपिकुतःस्थितिः ॥ ४२ ॥ वायुरुवाच ॥ बुद्धीन्द्रियशरीरेभ्योव्यतिरि
क्तोविभुर्ध्रुवः ॥ अस्त्येवकश्चिदात्मेतिहेतुस्तत्रसुदुर्गमः ॥ ४३ ॥ बुद्धीन्द्रियशरीराणांनात्मतासद्भिरिष्यते ॥ स्मृतेरनियतज्ञानादयावद्देहवेदनात्
॥ ४४ ॥ अतःस्मर्त्तानुभूतानामशेषज्ञेयगोचरः ॥ अन्तर्यामीतिवेदेषुवेदान्तेषुचगीयते ॥ ४५ ॥ सर्व्वंतत्रससर्व्वत्रव्याप्यतिष्ठतिशाश्वतः ॥ तथापिक्वापि
केनापिव्यक्तमेषनदृश्यते ॥ ४६ ॥ नैवायंचक्षुषाग्राह्योनापरैरिन्द्रियैरपि ॥ मनसैवप्रदीप्तेनमहानात्मावसीयते ॥ ४७ ॥ नचस्त्रीनपुमाने

षनैवनापिनपुंसकः ॥ नैवोर्द्धंनापितिर्य्यक्चनाधस्तान्नकुतश्चन ॥ ४८ ॥ अशरीरंशरीरेषुचलेषुस्थाणुमव्ययम् ॥ सदापश्यतितंधीरोनरः
प्रत्यवमर्शनात् ॥ ४९ ॥ किमत्रबहुनोक्तेनपुरुषोदेहतःपृथक् ॥ अपृथग्येतुपश्यंतिअसम्यक्तेषुदर्शनम् ॥ ५० ॥ यच्छरीरमिदंप्रोक्तंपुरुषस्यततःपर
म् ॥ अशुद्धमवशंदुःखमध्रुवंचनविद्यते ॥ ५१ ॥ विपदांबीजभूतेनपुरुषस्तेनसंयुतः ॥ सुखीदुःखीचमूढश्चभवतिस्वेनकर्म्मणा ॥ ५२ ॥ अद्भिराप्ला
वितंक्षेत्रंजनयत्यंकुरंयथा ॥ अज्ञानप्लावितंकर्म्मदेहंजनयतेतथा ॥ ५३ ॥ अत्यन्तमसुखावासंरुग्णंचैकान्तमृत्यव ः ॥ अनागताअतीताश्चतनवोऽस्य
सहस्रशः ॥ ५४ ॥ आगत्यागत्यशीर्णेषुशरीरेषुशरीरिणः ॥ अत्यन्तवसतिःक्वापिनकेनापिचलभ्यते ॥ ५५ ॥ छादितश्चवियुक्तश्चशरीरैरेषलक्ष्यते ॥
चन्द्रबिम्बवदाकाशेतरलैरभ्रसंचयैः ॥ ५६ ॥ अनेकदेहभेदेनभिन्नावृत्तिरिहात्मनः ॥ अष्टापदपरिक्षेपेह्यक्षमुद्रेवलक्ष्यते ॥ ५७ ॥ नैवास्यभविताक
श्चिन्नासौभवतिकस्यचित् ॥ पथिसङ्गमएवायंदारैरन्यैश्चबन्धुभिः ॥ ५८ ॥ यथाकाष्ठंचकाष्ठंचसमेयातांमहोदधौ ॥ समेत्यचव्यपेयातांतद्वद्भूतसमाग
मः ॥ ५९ ॥ सपश्यतिशरीरंतच्छरीरंतंनपश्यति ॥ तौपश्यतिपरःकश्चित्तावुभौतंनपश्यतः ॥ ६० ॥ ब्रह्माद्याःस्थावरान्ताश्चपशवःपरिकी
र्त्तिताः ॥ पशूनामेवसर्व्वेषांप्रोक्तमेतन्निदर्शनम् ॥ ६१ ॥ यएषबध्यतेपाशैःसुखदुःखाशनःपशुः ॥ लीलासाधनभूतोऽयमीश्वरस्येतिसूरयः ॥
॥ ६२ ॥ अज्ञोजन्तुरनीशोऽयमात्मनःसुखदुःखयोः ॥ ईश्वरप्रेरितोगच्छेत्स्वर्गंवाश्वभ्रमेववा ॥ ६३ ॥ मुनयऊचुः ॥ योऽयंपशुरितिप्रोक्तोय
श्चपाशउदाहृतः ॥ आभ्यांविलक्षणःकश्चित्कोऽयमस्त्यनयोःपतिः ॥ ६४ ॥ वायुरुवाच ॥ अस्तिकश्चिदपर्य्यन्तरमणीयगुणाश्रयः ॥ पति
र्विश्वस्यनिर्म्माताशुपाशविमोक्षणः ॥ ६५ ॥ अभावेतस्यविश्वस्यसृष्टिरेषाकथंभवेत् ॥ अचेतनत्वादज्ञानादनयोःपशुपाशयोः ॥ ६६ ॥ प्र
धानपरमाण्वादियावत्किञ्चिदचेतनम् ॥ नतत्कर्त्तृस्वयंदृष्टंबुद्धिमत्कारणंविना ॥ ६७ ॥ जगच्चकर्त्तृसापेक्षंकार्य्यंसावयवंयतः ॥ तस्मात्कार्य्यस्यक
र्त्तृत्वंपत्युर्नपशुपाशयोः ॥ ६८ ॥ पशोरपिचकर्त्तृत्वंपत्युःप्रेरणपूर्व्वकम् ॥ अयथाकरणज्ञानमन्धस्यगमनंयथा ॥ ६९ ॥ आत्मानञ्चपृथङ्मत्वाप्रे
रितारंततःपृथक् ॥ असौजुष्टस्ततस्तेनह्यमृतत्वायकल्पते ॥ ७० ॥ पशोःपाशस्यपत्युश्चतत्त्वतोऽस्तियदन्तरम् ॥ ब्रह्मवित्तद्विदित्वैवयोनिमुक्तो
भविष्यति ॥ ७१ ॥ संयुक्तमेतद्द्वितयंक्षरमक्षरमेवच ॥ व्यक्ताव्यक्तंविभर्त्तीशोविश्वंविश्वविमोचकः ॥ ७२ ॥ भोक्ताभोग्यंप्रेरयितामन्तव्यंत्रिविधंस्मृत
म् ॥ नातःपरंविजानद्भिर्वेदितव्यंहिकिञ्चन ॥ ७३ ॥ तिलेषुवायथातैलंदध्निवासर्पिरर्पितम् ॥ यथापःस्रोतसिव्याप्तायथारण्यांहुताशनः ॥ ७४ ॥
एवमेवमहात्मानमात्मन्यात्मविलक्षणम् ॥ सत्येनतपसाचैवनित्ययुक्तोऽनुपश्यति ॥ ७५ ॥ यएकोजालवानीशईशनीभिःस्वशक्तिभिः ॥ सर्व्वाँल्लोका

निमान्कृत्वाएकएवसईशते ॥ ७६ ॥ एकएवतदारुद्रोनद्वितीयोऽस्तिकश्चन ॥ संसृज्यविश्वभुवनंगोप्तान्तेसंचुकोचसः ॥ ७७॥ विश्वतश्चक्षुरेवायमुतायं
विश्वतोमुखः ॥ तथैवविश्वतोबाहुर्विश्वतःपादसंयुतः ॥ ७८ ॥ द्यावाभूमीचजनयन्देवएकोमहेश्वरः ॥ सएवसर्व्वदेवानांप्रभवश्चोद्भवस्तथा ॥ ७९ ॥
हिरण्यगर्भंदेवानांप्रथमंजनयेदयम् ॥ विश्वस्मादधिकोरुद्रोमहर्षिरितिहिश्रुतिः॥८०॥वेदाहमेतंपुरुषंमहान्तममृतंध्रुवम् ॥ आदित्यवर्णंतमसःपरस्तात्सं
स्थितंप्रभुम्॥८१॥अस्मान्नास्तिपरंकिञ्चिदपरंपरमात्मनः॥नाणीयोऽस्तिनचज्यायस्तेनपूर्णमिदंजगत्॥८२॥सदैकोवृक्षवत्स्तब्धःकेवलोदिवितिष्ठति ॥
संकल्पप्रभवंतस्यचराचरमिदंजगत् ॥ ८३ ॥ सर्व्वाननशिरोग्रीवःसर्व्वभूतगुहाशयः ॥ सर्व्वव्यापीचभगवांस्तस्मात्सर्वगतःशिवः ॥ ८४ ॥ सर्वं
तःपाणिपादोऽयंसर्व्वतोऽक्षिशिरोमुखः ॥ सर्व्वतःश्रुतिमाँल्लोकेसर्व्वमावृत्यतिष्ठति ॥ ८५॥ सर्व्वेन्द्रियगुणाभासःसर्व्वेन्द्रियविवर्जितः ॥ सर्व्वस्यप्रभुरी
शानःसर्व्वस्यशरणंसुहृत् ॥ ८६ ॥ अचक्षुरपियःपश्यत्यकर्णोऽपिशृणोतियः ॥ सर्व्वंवेत्तिनवेत्तास्यतमाहुःपुरुषंपरम् ॥ ८७ ॥ अणोरणीयान्महतोम
हीयानयमव्ययः ॥ गुहायांनिहितश्चापिजन्तोश्चास्यमहेश्वरः ॥ ८८ ॥ तमक्रतुंक्रतुप्रायंमहिमातिशयान्वितम् ॥ धातुःप्रसादादीशानंवीतशोकःप्रप
श्यति ॥ ८९ ॥ वेदाहमेनमजरंपुराणंसर्व्वगंप्रभुम् ॥ निरोधंजन्मनोयस्यवदन्तिब्रह्मवादिनः ॥ ९० ॥ एकोऽपित्रीनिमाँल्लोकान्बहुधाशक्तियोगतः ॥
विदधातिविचेत्यन्तेविश्वमादौमहेश्वरः ॥९१॥ विश्वधात्रीत्यजाख्याचशैवीचित्प्रकृतिःस्मृता ॥ तामजांलोहितांशुक्लांकृष्णामेकांत्वजःप्रजाः ॥ ९२ ॥
जनित्रीमनुशेतेऽन्योजुषमाणःसरूपिणीम् ॥ तामेवाजामजोऽन्यस्तुभुक्तभोगांजहातिच ॥ ९३ ॥ द्वौसुपर्णौचसयुजौसमानंवृक्षमास्थितौ ॥ एकोऽत्ति
पिप्पलंस्वादुपरोऽनश्नन्प्रपश्यति ॥ ९४ ॥ वृक्षेऽस्मिन्पुरुषोमग्नोमुह्यमानश्चशोचति ॥ जुष्टमन्यंयदापश्येदीशंपरमकारणम् ॥ ९५ ॥ तदास्यम
हिमानंचवीतशोकःसुखीभवेत् ॥ छन्दांसियज्ञाःक्रतवोयद्भूतंभव्यमेवच ॥ ९६ ॥ मायीविश्वंसृजत्यस्मिन्निविष्टोमाययापुरः ॥ मायांतुप्रकृतिंविद्या
न्मायिनंतुमहेश्वरम्॥९७॥तस्यास्त्ववयवैरेवव्याप्तंसर्व्वमिदंजगत्॥सूक्ष्मातिसूक्ष्ममीशानंकललस्यापिमध्यतः॥९८॥स्रष्टारमपिविश्वस्यचेष्टितारन्तुत
स्यच॥शिवमेवेश्वरंज्ञात्वाशान्तिमत्यन्तमृच्छति॥९९॥सएवकालोगोप्ताचविश्वस्याधिपतिःप्रभुः॥तंविश्वाधिपतिंज्ञात्वामृत्युपाशात्प्रमुच्यते॥१००॥
घृतात्परंमण्डमिवसूक्ष्मंज्ञात्वाधिपंशिवम् ॥ सर्व्वभूतेषुगूढञ्चसर्व्वपापैःप्रमुच्यते ॥ १०१ ॥ एषएवपरोदेवोविश्वकर्म्मामहेश्वरः ॥ हृदयेसन्निविष्टंतं
ज्ञात्वैवामृतमश्नुते ॥ १०२ ॥ यदासमस्तंनदिवानरात्रिर्नसदप्यसत् ॥ केवलःशिवएवैकोयतःप्रज्ञापुरातनी ॥ १०३ ॥ नैनमूर्द्ध्वंनतिर्य्यञ्चंनमध्येप
रिजगृहत्॥नतस्यप्रतिमाचास्तियस्यनाममहद्यशः ॥१०४॥ अजातमिममेवैकंबुद्ध्वाजन्मनिभीरवः ॥ रुद्रस्यास्यप्रपद्यन्तेरक्षार्थंदक्षिणंमुखम्॥१०५॥

द्वेअक्षरब्रह्मपरेत्वनन्तेसमुदाहृते ॥ विद्याविद्येसमाख्यातेनिहितेयत्रगूढवत् ॥ १०६ ॥ क्षरन्त्वविद्याह्यमृतंविद्येतिपरिगीयते ॥ तेउभेई
शतेयस्तुसोऽन्यःखलुमहेश्वरः ॥ १०७॥ एकैकंबहुधाजालंविकुर्व्वन्नेकवच्चयः ॥ सर्व्वाधिपत्यंकुरुतेसृष्ट्वासर्व्वान्प्रतापवान् ॥ १०८ ॥ दिशमूर्द्धमधस्ति
र्य्यग्भासयन्भ्राजतेस्वयम् ॥ योनिस्वभावादप्येकोवरेण्यस्त्वाधितिष्ठाते ॥ १०९ ॥ स्वभावंवाचकान्सर्व्वान्वाच्यांश्चपरिणामयन् ॥ गुणांश्चभोग्य
भोक्तृत्वेताद्विश्वमधितिष्ठति ॥ ११० ॥ तंवैगुह्योपनिषदिगूढंब्रह्मपरात्परम् ॥ ब्रह्मयोनिंजगत्पूर्व्वंविदुर्देवामहर्षयः ॥ १११॥ भावग्राह्यमनीडाख्यंभावा
भावकरंशिवम्॥ कलासर्गकरंदेवंयेविदुस्तेजहुस्तनुम्॥११२॥स्वभावमेकेमन्यन्तेकालमन्येविमोहिताः॥देवस्यमहिमाह्येषयेनेदंभ्राम्यतेजगत्॥११३॥
येनेदमावृतंनित्यंकालकालात्मनायतः ॥ तेनेरितमिदंकर्म्मभूतैःसहविवर्त्तते ॥११४॥ यत्कर्म्मभूयशःकृत्वाविनिवर्त्त्यचभूयशः ॥ तत्त्वस्यसहसत्त्वेन
योगंचापिसमेत्यवै ॥ ११५ ॥ अष्टाभिश्चत्रिभिश्चैवद्वाभ्यांचैकेनवापुनः ॥ कालेनात्मगुणैश्चापिकृत्स्नमेवजगत्स्वयम् ॥ ११६ ॥ गुणैरारभ्यकर्म्मा
णिस्वभावान्विनियोजयेत् ॥ तेषामभावेनाशःस्यात्कृतस्यापिचकर्म्मणः ॥ ११७ ॥ कर्म्मक्षयेपुनश्चान्यत्ततोयातिसतत्त्वतः ॥ सएवादिःस्वयंयोगनि
मित्तंभोक्तृभोगयोः॥११८॥परस्त्रिकालादकलःसएवपरमेश्वरः॥तंविश्वरूपप्रभवंभवमीड्यंप्रजापतिम्॥११९॥देवदेवंजगत्पूज्यंस्वचित्तस्थमुपास्महे ॥
कालादिभिःपरोयस्मात्प्रपंचःपरिवर्त्तते ॥ १२० ॥ धर्म्मावहंपापनुदंभगेशंविश्वधामच ॥ तमीश्वराणांपरमंमहेश्वरंतंदेवतानांपरमंचदैवतम् ॥१२१॥
पतिंपतीनांपरमंपरस्ताद्विदामदेवंभुवनेश्वरेश्वरम् ॥ नतस्यविद्यतेकार्य्यंकारणंचनविद्यते ॥ १२२ ॥ नतत्समोऽधिकश्चापिक्वचिज्जगतिदृश्यते ॥परा
स्यविविधाशक्तिःश्रुतौस्वाभाविकीश्रुता ॥ १२३ ॥ ज्ञानंबलंक्रियाचैवयाभ्योविश्वमिदंकृतम् ॥ नतस्यास्तिपतिःकश्चिन्नैवालिङ्गंनचेशिता ॥
॥ १२४ ॥ कारणंकारणानांचसतेषामधिपाधिपः ॥ नचास्यजनिताकश्चिन्नचजन्मकुतश्चन ॥ १२५ ॥ नजन्महेतवस्तद्वन्मलमायादिसंज्ञकाः ॥ सए
कःसर्व्वभूतेषुगूढोव्यातश्चसर्व्वतः ॥ १२६ ॥ सर्व्वभूतान्तरात्माचधर्म्माध्यक्षःसकथ्यते ॥ सर्व्वभूताधिवासश्चसाक्षीचेताचनिर्गुणः ॥ १२७ ॥एकोवशी
निष्क्रियाणांबहूनांविवशात्मनाम्॥एकस्तुबहुधाबीजंकरोतिसमयोचितम्॥१२८॥तमेवात्मनिंतिष्ठन्तंयेपश्यन्तिमुमुक्षवः॥तेषामेवसुखंनित्यंनेतरेषामि
हात्मनाम् ॥ १२९॥ नित्यानामप्यसौनित्यश्चेतनानांचचेतनः॥एकोबहूनांचाकामःकामानीशःप्रयच्छति ॥ १३० ॥ सांख्ययोगाधिगम्यंतत्कारणंजग
तःपतिम् ॥ ज्ञात्वादेवंपशुःपाशैःसर्व्वैरेवविमुच्यते ॥ १३१ ॥ विश्वकृद्विश्ववित्स्वात्मयोनिज्ञःकालकृद्गुणी ॥ प्रधानक्षेत्रज्ञपतिर्गुणेशःपाशमोचकः ॥
॥ १३२ ॥ ब्रह्माणंविदधेपूर्व्वंवेदांश्चोपादिशत्स्वयम् ॥ योदेवस्तमहंबुद्ध्वास्वात्मबुद्धिप्रसादतः ॥ १३३॥मुमुक्षुरस्मात्संसारात्प्रपद्येशरणंशिवम् ॥

निष्कलंनिष्क्रियंशान्तंनिरवद्यंनिरंजनम् ॥ १३४ ॥ अमृतस्यपरंसेतुंदग्धेन्धनमिवानलम् ॥ यदाचर्म्मवदाकाशंवेष्टयिष्यन्तिमानवाः ॥ १३५ ॥
तदाशिवमविज्ञायदुःखस्यान्तोभविष्यति ॥ तपःप्रभावाद्देवस्यप्रसादाच्चमहर्षयः ॥ १३६ ॥ अत्याश्रमोचितंज्ञानंपवित्रंपापनाशनम् ॥ वेदान्तेपरमं
गुह्यंपुराकल्पप्रचोदितम् ॥ १३७ ॥ ब्रह्मणोवदनाल्लब्धंमयेदंभाग्यगौरवात् ॥ नाप्रशान्तायदातव्यमेतज्ज्ञानमनुत्तमम् ॥ १३८ ॥ नापुत्रायासुवृत्ता
यनाशिष्यायचसर्व्वथा ॥ यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ १३९ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशन्तेमहात्मनः ॥ १४० ॥ अतश्चसंक्षेपमिदंशृ
णुध्वंशिवःपरस्तात्प्रकृतेश्चपुंसः ॥ ससर्गकालेचकरोतिसर्व्वंसंहारकालेपुनराददाति ॥ १४१ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेशैव
तत्त्वकथनंनामचतुर्थोऽध्यायः ॥ ४ ॥ मुनयऊचुः ॥ कालादुत्पद्यतेसर्व्वंकालादेवविपद्यते ॥ नकालनिरपेक्षंहिक्वचित्किंचनविद्यते ॥ १ ॥ यदा
स्यान्तर्गतंविश्वंशश्वत्संसारमण्डलम् ॥ सर्गसंहृतिमुद्राभ्यांचक्रवत्परिवर्त्तते ॥ २ ॥ ब्रह्माहरिश्चरुद्रश्चतथान्येचसुरासुराः ॥ यत्कृतांनियतिंप्राप्यप्रभ
वोनातिवर्तितुम् ॥ ३ ॥ भूतभव्यभविष्याद्यैर्विभज्यजरयन्प्रजाः ॥ अतिप्रभुरितिस्वैरंवर्त्ततेऽतिभयङ्करः ॥ ४ ॥ कएषभगवान्कालः कस्यवावशव
र्त्त्ययम् ॥ कएवास्यवशेनस्यात्कथयैतद्विचक्षण ॥ ५ ॥ वायुरुवाच ॥ कलाकाष्ठानिमेषादिकलाकलितविग्रहम् ॥ कालात्मेतिसमाख्यातंतेजोमाहे
श्वरंपरम् ॥६॥ यदलङ्घ्यमशेषस्यस्थावरस्यचरस्यच ॥ नियोगरूपमीशस्यबलंविश्वनियामकम्॥७॥तस्यांशांशमयीशक्तिःकालात्मनिमहात्मनि ॥
ततोनिष्क्रम्यसंक्रान्ताविसृष्टाग्नेरिवायसी ॥ ८ ॥ तस्मात्कालवशेविश्वंनसविश्ववशेस्थितः ॥ शिवस्यतुवशेकालोनकालस्यवशेशिवः ॥९॥ यतोऽप्र
तिहतंशार्व्वंतेजःकालेप्रतिष्ठितम् ॥ महतीतेनकालस्यमर्य्यादाहिदुरत्यया ॥ १० ॥ कालंप्रज्ञाविशेषेणकोऽतिवर्त्तितुमर्हति ॥ कालेनतुकृतंकर्म्मनक
श्चिदतिवर्त्तते ॥ ११ ॥ एकच्छत्रांमहींकृत्स्नांयःपराक्रम्यशासति ॥ सोऽपिनैवातिवर्त्तेतकालंवेलामिवोदधिः ॥ १२ ॥ येनिगृह्येन्द्रियग्रामंजयन्तिसक
लंजगत् ॥ नजयन्त्यपितेकालंकालोजयतितानपि ॥ १३ ॥ आयुर्व्वेदविदोवैद्यास्त्वनुष्ठितरसायनाः ॥ नमृत्युमतिवर्त्तन्तेकालोहिदुरतिक्रमः ॥
॥ १४ ॥ श्रियारूपेणशीलेनबलेनसकलेनच ॥ अन्यच्चिन्तयतेजन्तुःकालोऽन्यत्कुरुतेबलात् ॥ १५ ॥ अप्रियैश्चप्रियैश्चैवअचिन्तितगमागमैः ॥
संयोजयतिभूतानिवियोजयतिचेश्वरः ॥ १६ ॥ यदैवदुःखितःकश्चित्तदैवसुखितःपरः ॥ दुर्व्विज्ञेयस्वभावस्यकालस्याहोविचित्रता ॥ १७ ॥
योयुवासभवेद्वृद्धोयोबलीयान्सदुर्व्बलः ॥ यःश्रीमान्सोऽपिनिःश्रीकश्चित्रःकालविपर्य्ययः ॥ १८ ॥ नाभिजात्यंनवैशीलंनबलंनचनैपुणम् ॥ भवेत्का
र्य्यायपर्य्याप्तंकालश्चेत्प्रतिरोधकः ॥ १९ ॥ येचनिष्परुषैस्तूर्यैर्गीतवाद्यैरुपस्थिताः ॥ येचानाथाःपरान्नादाःकालस्तेषुसमक्रियः ॥ २० ॥ फल

न्त्यकालेनरसायनानिसम्यक्प्रयुक्तान्यपिचौषधानि ॥ तान्येवकालेनसमाहृतानिसिद्धिंप्रयान्त्याशुसुखंदिशन्ति ॥ २१ ॥ नाकालतोऽयंम्रियतेजाय
तेवानाकालतःपुष्टिमग्र्यामुपैति ॥ नाकालतःसुखितंदुःखितंवानाकालिकंवस्तुसमस्तिकिंचित् ॥ २२ ॥ कालेनशीतःप्रतिवातिवातःकालेनवृष्टिर्जल
दानुपैति ॥ कालेनसस्यानिभवन्तितस्मात्कालेनसञ्जीवतिजीवलोकः ॥ २३ ॥ इत्थंकालात्मनस्तत्त्वंयोविजानातितत्त्वतः ॥ कालात्मानमतिक्र
म्यकालातीतंसपश्यति ॥ २४ ॥ नयस्यकालोनचबन्धमुक्तीनयःपुमान्नप्रकृतिर्नविश्वम् ॥ विचित्ररूपायशिवायतस्मैनमःपरस्मैपरमेश्वराय ॥२५॥
इतिश्रीशिवमहापुराणेवायवीयसंहितायांपूर्वभागेपंचमोऽध्यायः॥५॥ऋषयऊचुः ॥ केनमानेनकालेऽस्मिन्नायुःसंख्याप्रकल्प्यते ॥संख्यारूपस्यकालस्य
कःपुनःपरमोऽवधिः ॥१॥ वायुरुवाच ॥ आयुषोऽत्रनिमेषाख्यमाद्यमानंप्रचक्षते ॥ संख्यामयस्यकालस्यशांत्यतीतकलावधिः॥२॥अक्षिपक्ष्मपरिक्षेपो
निमेषःपरिकीर्तितः ॥ तादृशानांनिमेषाणांकाष्ठादशचपंचच॥३॥काष्ठात्रिंशत्कलानामकलात्रिंशन्मुहूर्तकम्॥ मुहूर्तानामपित्रिंशदहोरात्रंप्रचक्षते॥४॥
त्रिंशत्संख्यैरहोरात्रैर्मासःपक्षद्वयात्मकः ॥ ज्ञेयःपित्र्यमहोरात्रंमासःकृष्णसितात्मकः ॥५॥ मासैस्तैरयनंषड्भिर्वर्षंद्वेचाऽयनेमते ॥ लौकिकेनैवमानेन
अब्दोयोमानुषःस्मृतः ॥ ६ ॥ एतद्दिव्यमहोरात्रमितिशास्त्रस्यनिश्चयः ॥ दक्षिणंचाऽयनंरात्रिस्तथोदगयनंदिनम् ॥ ७ ॥ मासस्त्रिंशदहोरात्रैर्दिव्योमा
नुषवत्स्मृतः ॥ संवत्सरोपिदेवानांमासैर्द्वादशभिस्तथा ॥ ८ ॥ त्रीणिवर्षशतान्येवषष्टिवर्षयुतान्यपि ॥ दिव्यसंवत्सरोज्ञेयोमानुषेणप्रकीर्तितः ॥ ९ ॥
दिव्येनैवप्रमाणेनयुगसंख्याप्रवर्तते ॥ चत्वारिभारतेवर्षेयुगानिकवयोविदुः ॥ १० ॥ पूर्वंकृतयुगंनामततस्त्रेताविधीयते ॥ द्वापरंचकलिश्चैवयुगान्येता
निकृत्स्नशः ॥ ११ ॥ चत्वारितुसहस्राणिवर्षाणांतत्कृतंयुगम् ॥ तस्यतावच्छतीसंध्यासंध्यांशश्चतथाविधः ॥ १२ ॥ इतरेषुससंध्येषुससंध्यांशेषुचात्रि
षु ॥ एकापायेनवर्ततेसहस्राणिशतानिच ॥१३॥ एतद्द्वादशसाहस्रंसाधिकंचचतुर्युगम् ॥ चतुर्युगसहस्रंयत्सकल्पइतिकथ्यते ॥ १४ ॥ चतुर्युगैकसप्त
त्यामनोरंतरमुच्यते ॥ कल्पेचतुर्दशैकस्मिन्मनूनांपरिवृत्तयः ॥१५॥ एतेनक्रमयोगेनकल्पमन्वंतराणिच ॥ सप्रजानिव्यतीतानिशतशोऽथसहस्रशः॥
॥१६॥अज्ञेयत्वाच्चसर्वेषामसंख्येयतयापुनः ॥ शक्योनैवाऽऽनुपूर्व्याद्वैतेषांवक्तुंसुविस्तरः ॥ १७ ॥ कल्पोनामदिवाप्रोक्तोब्रह्मणोव्यक्तजन्मनः ॥ कल्पा
नांवैसहस्रंचब्राह्मंवर्षमिहोच्यते ॥ १८॥ वर्षाणामष्टसाहस्रंयच्चतद्ब्रह्मणोयुगम् ॥ सवनंयुगसाहस्रंब्रह्मणःपद्मजन्मनः ॥ १९ ॥ सवनानांसहस्रंचत्रिगुणंत्रि
वृतंतथा ॥ कल्प्यतेसकलःकालोब्रह्मणःपरमेष्ठिनः ॥ २० ॥ तस्यवैदिवसेयांतिचतुर्दशपुरंदराः ॥ शतानिमासेचत्वारिविंशत्यासहितानिच ॥ २१ ॥
अब्दे पंचसहस्राणिचत्वारिंशद्युतानिच ॥ चत्वारिंशत्सहस्राणिपंचलक्षाणिचाऽऽयुषि ॥ २२ ॥ ब्रह्माविष्णोर्दिनेचैकोविष्णूरुद्रदिनेतथा ॥ ईश्वरस्यादि

नेरुद्रःसदाख्यस्यतथेश्वरः ॥ २३ ॥ साक्षाच्छिवस्यतत्संख्यस्तथासोपिसदाशिवः ॥ चत्वारिंशत्सहस्राणिपंचलक्षाणिचाऽऽयुषि ॥२४॥ तस्मिन्साक्षा
च्छिवेनैषकालात्मासंप्रवर्तते ॥ यत्तत्सृष्टेःसमाख्यातंकालांतरमिहद्विजाः ॥ २५ ॥ एतत्कालांतरंज्ञेयमहर्वैपारमेश्वरम् ॥ रात्रिश्चतावतीज्ञेयापरमेश
स्यकृत्स्नशः ॥ २६ ॥ अहस्तस्यतुयासृष्टीरात्रिश्चप्रलयःस्मृतः ॥ अहर्नविद्यतेतस्यनरात्रिरितिधारयेत् ॥ २७ ॥ एषोपचारःक्रियतेलोकानांहितका
म्यया ॥ प्रजाःप्रजानांपतयोमूर्तयश्चसुरासुराः ॥ २८ ॥ इंद्रियाणींद्रियार्थाश्चमहाभूतानिपंचच ॥ तन्मात्राण्यथभूतादिर्बुद्धिश्चसहदैवतैः ॥ २९ ॥
अहस्तिष्ठंतिसर्व्वाणिपरमेशस्यधीमतः ॥ अहरन्तेप्रलीयन्तेरात्र्यन्तेविश्वसम्भवः ॥ ३० ॥ योविश्वात्माकर्म्मकालस्वभावाद्यर्थेशक्तिर्यस्यनोल्लङ्घ
नीया ॥ यस्यैवाज्ञाधीनमेतत्समस्तं नमस्तस्मैमहतेशङ्कराय ॥ ३१ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायां पूर्व्वभागेब्रह्माद्यायुर्मानकथनंनाम
षष्ठोऽध्यायः ॥ ६ ॥ मुनयऊचुः ॥ कथंजगदिदंकृत्स्नंविधायचनिधायच ॥ आज्ञयापरमांक्रीडांकरोतिपरमेश्वरः ॥ १ ॥ किंतत्प्रथमसम्भूतंकेनेदमखि
लंततम् ॥ केनवापुनरेवेदंग्रस्यतेपृथुकुक्षिणा ॥ २ ॥ वायुरुवाच ॥ शक्तिः प्रथमसम्भूताशान्त्यतीतपदोत्तरा ॥ ततोमायाततोऽव्यक्तंशिवाच्छक्तिमतः
प्रभोः ॥ ३ ॥ शान्त्यतीतपदंशक्तेस्ततः शान्तिपदक्रमात् ॥ ततोविद्यापदंतस्मात्प्रतिष्ठापदसम्भवः ॥ ४ ॥ निवृत्तिपदमुत्पन्नंप्रतिष्ठापदतः क्रमात्॥
एवमुक्तासमासेनसृष्टिरीश्वरचोदिता ॥ ५ ॥ आनुलोम्यात्तथैतेषांप्रातिलोम्येनसंहृतिः ॥ अस्मात्पञ्चपदोद्दिष्टानसृष्टचन्तरमिष्यते ॥ ६ ॥ कलाभिः
पञ्चभिर्व्याप्तंयस्माद्विश्वमिदंजगत् ॥ अव्यक्तंकारणंयत्तदात्मनासमधिष्ठितम् ॥ ७ ॥ महदादिविशेषान्तंसृजतीत्यपिसम्मतम् ॥ किन्तुतत्रापिकर्त्तृ
त्वंनाव्यक्तस्यनचात्मनः ॥ ८ ॥ अचेतनत्वात्प्रकृतेरज्ञत्वात्पुरुषस्यच ॥ प्रधानपरमाण्वादियावत्किञ्चिदचेतनम् ॥ ९ ॥ नतत्कर्त्तृस्वयंदृष्टंबुद्धिम
त्कारणंविना ॥ जगच्चकर्त्तृसापेक्षंकार्यंसावयवंयतः॥ १० ॥तस्माच्छक्तःस्वतन्त्रोयःसर्व्वशक्तिश्चसर्व्ववित् ॥ अनादिनिधनश्चायंमहदैश्वर्य्यसंयुतः॥ ११॥
सएवजगतः कर्त्तामहादेवोमहेश्वरः ॥ परिणामः प्रधानस्यप्रवृत्तिः पुरुषस्यच ॥ १२ ॥ सर्व्वंसत्यव्रतस्यैवशासनेनप्रवर्त्तते ॥ इतीयंशाश्वतीनिष्ठा
सतांमनसिवर्त्तते ॥ १३ ॥ नचैनंपक्षमाश्रित्यवर्त्ततेस्वल्पचेतनः ॥ यावदादिसमारम्भोयावच्चप्रलयोमहान् ॥ १४ ॥ तावदत्येतिसकलंब्रह्मणःशरदां
शतम् ॥ परमित्यायुषोनामब्रह्मणोऽव्यक्तजन्मनः ॥ १५ ॥ यत्पराख्यंतदर्द्धंच्चपरार्द्धमभिधीयते ॥ परार्द्धद्वयकालान्तेप्रलयेसमुपस्थिते ॥ १६ ॥
अव्यक्तमात्मनः कार्य्यमादायात्मनितिष्ठति ॥ आत्मन्यवस्थितेऽव्यक्तेविकारेप्रतिसंहृते ॥ १७ ॥ साधर्म्येणाधितिष्ठेतेप्रधानपुरुषावुभौ ॥ तमःसत्व
गुणावेतौसमत्वेनव्यवस्थितौ ॥ १८ ॥ अनुद्रिक्तावनूनौतावोतप्रोतौपरस्परम् ॥ गुणसाम्येतदातस्मिन्नविभागेतमोदये ॥ १९ ॥ शान्तवातैकनीरेच

नप्राज्ञायतकिञ्चन ॥ अप्रज्ञातेजगत्यस्मिन्नेकएवमहेश्वरः ॥ २० ॥ उपास्यरजनीं कृत्स्नांपरोमाहेश्वरींततः ॥ प्रभातायान्तुशर्व्वर्य्यांप्रधानपुरुषा
वुभौ ॥ २१ ॥ प्रविश्यक्षोभयामासमायायोगान्महेश्वरः ॥ ततःपुनरशेषाणांभूतानांप्रभवाप्ययात्॥अव्यक्तादभवत्सृष्टिराज्ञयापरमेष्ठिनः ॥ २२॥ वि
श्वोत्तरोत्तरविचित्रमनोरथस्य यस्यैकशक्तिशकलेसकलःसमाप्तः ॥आत्मानमध्वपतिमध्वविदोवदन्तितस्मैनमः सकललोकविलक्षणाय ॥ २३ ॥ इति
श्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेसप्तमोऽध्यायः ॥ ७ ॥ वायुरुवाच ॥ पुरुषाधिष्ठितात्पूर्व्वमव्यक्तादीश्वराज्ञया ॥ बुद्ध्यादयोविशेषान्तावि
काराश्चाभवन्क्रमात् ॥ १ ॥ ततस्तेभ्योविकारेभ्योरुद्रोविष्णुःपितामहः ॥ जगतःकारणत्वेनत्रयोदेवाविजज्ञिरे ॥ २ ॥ सर्व्वतोभुवनव्याप्तिशक्तिम
व्याहतांक्कचित् ॥ ज्ञानमप्रतिमंशश्वदैश्वर्य्यंचाणिमादिकम् ॥३॥ सृष्टिस्थितिलयाख्येषुकर्म्मसुत्रिषुहेतुताम् ॥ प्रभुत्वेनसहैतेषांप्रसीदतिमहेश्वरः
॥ ४ ॥ कल्पान्तरेपुनस्तेषामस्पर्द्धांबुद्धिमोहिनाम् ॥ सर्गरक्षालयाचारंप्रत्येकंप्रददौचसः ॥ ५ ॥ एतेपरस्परोत्पन्नाधारयन्तिपरस्परम् ॥ परस्परेण
वर्द्धन्तेपरस्परमनुव्रताः ॥ ६ ॥ क्कचिद्ब्रह्माक्कचिद्विष्णुः क्कचिद्रुद्रःप्रशस्यते ॥ नाऽनेनतेषामाधिक्यमैश्वर्य्यंचातिरिच्यते ॥ ७ ॥ अयंपरस्त्वयंनेति
संरम्भाभिनिवेशिनः ॥ यातुधानाभवन्त्येवपिशाचाश्चनसंशयः ॥८ ॥ देवोगुणत्रयातीतश्चतुर्व्यूहोमहेश्वरः ॥ सकलःसकलाधारः शक्तेरुत्पत्तिकारणम्
॥ ९ ॥ सोऽयमात्मत्रयस्यास्यप्रकृतेः पुरुषस्यच ॥ लीलाकृतजगत्सृष्टिरीश्वरत्वेव्यवस्थितः ॥ १० ॥ यःसर्व्वस्मात्परोनित्योनिष्कलःपरमेश्वरः ॥
सएवतत्तदाधारस्तदात्मातदधिष्ठितः ॥ ११ ॥ तस्मान्महेश्वरश्चैवप्रकृतिःपुरुषस्तथा ॥ सदाशिवोभवोविष्णुर्ब्रह्मासर्व्वंशिवात्मकम् ॥ १२ ॥ प्रधा
नात्प्रथमंजज्ञेबुद्धिःख्यातिर्मतिर्महान् ॥ महत्तत्त्वस्यसंक्षोभादहङ्कारस्त्रिधाभवत् ॥१३॥अहङ्काराच्चभूतानितन्मात्राणीन्द्रियाणिच ॥ वैकारिकादहङ्का
रात्सत्त्वोद्रिक्तात्तुसात्विकः ॥ १४ ॥ वैकारिकःससर्गस्तुयुगपत्सम्प्रवर्त्तते ॥ बुद्धीन्द्रियाणिपञ्चैवपञ्चकर्म्मेन्द्रियाणिच ॥ १५ ॥ एकादशं
मनस्तत्रस्वगुणेनोभयात्मकम् ॥ तमोयुक्तादहङ्काराद्भूततन्मात्रसम्भवः ॥ १६ ॥ भूतानामादिभूतत्वाद्भूतादिः कथ्यतेतुसः ॥ भू
तादेः शब्दमात्रंस्यात्ततआकाशसम्भवः ॥ १७ ॥ आकाशात्स्पर्शउत्पन्नः स्पर्शाद्वायुसमुद्भवः ॥ वायोरूपंततस्तेजस्तेजसोरससम्भवः ॥
॥ १८ ॥ रसादापः समुत्पन्नास्ताभ्योगन्धसमुद्भवः ॥ गन्धाच्चपृथिवीजाताभूतेभ्योऽन्यच्चराचरम् ॥ १९ ॥ पुरुषाधिष्ठितत्वाच्चअव्यक्तानुग्रहेणच ॥
महदादिविशेषान्ताह्यण्डमुत्पादयन्तिते ॥ २० ॥ तत्रकार्य्यंञ्चकरणंसंसिद्धंब्रह्मणोयदा ॥ तदाण्डेऽस्विन्प्रवृद्धोऽभूत्क्षेत्रज्ञोब्रह्मसंज्ञितः ॥ २१ ॥ सवै
शरीरीप्रथमःसवैपुरुषउच्यते ॥ आदिकर्त्तासभूतानांब्रह्माग्रेसमवर्त्तत ॥ २२ ॥ तस्येश्वरस्याप्रतिमाज्ञानवैराग्यलक्षणा ॥ धर्म्मैश्वर्य्यंकराबुद्धिर्ब्राह्मी

जज्ञेऽभिमानिनः ॥ २३ ॥ अव्यक्ताज्जायतेतस्यमनसायद्यदीप्सितम् ॥ वशीकृतत्वात्त्रैगुण्यात्सापेक्षत्वात्स्वभावतः ॥ २४ ॥ त्रिधाविभज्यचात्मा
नंत्रैलोक्येसम्प्रवर्त्तते ॥ सृजतेग्रसतेचैववीक्षतेचत्रिभिःस्वयम् ॥ २५ ॥ चतुर्म्मुखस्तुब्रह्मत्वेकालत्वेचान्तकःस्मृतः ॥ सहस्रमूर्द्धापुरुषस्तिस्रोऽवस्थाः
स्वयम्भुवः ॥ २६ ॥ सत्त्वंरजश्चब्रह्मत्वेकालत्वेचतमोरजः ॥ विष्णुत्वेकेवलंसत्त्वंगुणवृद्धिस्त्रिधाप्रभोः ॥ २७ ॥ ब्रह्मत्वेसृजतेलोकान्कालत्वेसंक्षिपत्य
पि ॥ पुरुषत्वेऽप्युदासीनःकर्म्मचत्रिविधंविभोः ॥ २८ ॥ एवंत्रिधाविभिन्नत्वाद्ब्रह्मात्रिगुणउच्यते ॥ चतुर्द्धाप्रविभक्तत्वाच्चतुर्व्यूहःप्रकीर्त्तितः ॥ २९ ॥
आदित्वादादिदेवोऽसावजातत्वादजःस्मृतः ॥ पातियस्मात्प्रजाःसर्व्वाःप्रजापतिरितिस्मृतः ॥ ३० ॥ हिरण्मयस्तुयोमेरुस्तस्योल्बंसुमहात्मनः ॥
गर्भोदकंसमुद्राश्चजरायुश्चापिपर्व्वताः ॥३१॥ तस्मिन्नण्डेत्विमेलोकाअन्तर्विश्वमिदंजगत्॥चन्द्रादित्यौसनक्षत्रौसग्रहौसहवायुना ॥३२॥अद्भिर्दशगुणा
भिस्तुबाह्यतोऽण्डंसमावृतम्॥आपोदशगुणेनैवतेजसाबहिरावृताः॥३३॥तेजोदशगुणेनैववायुनाबहिरावृतम् ॥ आकाशेनावृतोवायुःखंचभूतादिनावृतम्
॥३४॥भूतादिर्महतातद्वदव्यक्तेनावृतोमहान्॥एतैरावरणैरण्डंसप्तभिःप्राकृतैर्वृतम्॥३५॥एतदावृत्यचान्योन्यमष्टौप्रकृतयःस्थिताः ॥ एवंपरस्परोत्पन्ना
धारयन्तिपरस्परम्॥३६॥आधाराधेयभावेनविकारास्तुविकारिषु॥कूर्म्मोऽङ्गानियथापूर्व्वंप्रसार्य्यविनियच्छति॥ ३७॥विकारांश्चतथाव्यक्तंसृष्ट्वाभूयोनि
यच्छति॥अव्यक्तप्रभवंसर्व्वमानुलोम्येनजायते ॥३८॥प्राप्तेप्रलयकालेतुप्रातिलोम्येनलीयते॥गुणाःकालवशादेवभवन्तिविषमाःसमाः॥३९॥गुणसाम्ये
लयोज्ञेयोवैषम्येसृष्टिरुच्यते॥तदिदंब्रह्मणोयोनिरेतदण्डंघनंमहत् ॥४०॥ ब्रह्मणःक्षेत्रमुद्दिष्टंब्रह्माक्षेत्रज्ञउच्यते॥इतीदृशानामण्डानांकोट्योज्ञेयाःसहस्रशः
॥४१॥सर्व्वगत्वात्प्रधानस्यतिर्य्यगूर्ध्वमधःस्थिताः॥तत्रतत्रचतुर्व्वक्राब्रह्माणोहरयोभवाः॥४२॥सृष्टाःप्रधानेनतथालब्ध्वाशम्भोस्तुसन्निधिम्॥महेश्वरः
परोऽव्यक्तादण्डमव्यक्तसम्भवम्अण्डाज्जज्ञेविभुर्ब्रह्मालोकास्तेनकृतास्त्विमे ॥ ४३ ॥ अबुद्धिपूर्व्वःकथितोमयैषप्रधानसर्गःप्रथमप्रवृत्तः ॥ आत्यन्ति
कश्चप्रलयोऽन्तकालेलीलाकृतःकेवलमीश्वरस्य॥४४॥यत्तत्स्मृतंकारणमप्रमेयंब्रह्मप्रधानंप्रकृतेःप्रसूतिः ॥ अनादिमध्यान्तमनन्तवीर्य्यंशुक्लंसुरक्तंपुरुषे
णयुक्तम् ॥ ४५ ॥ उत्पादकत्वाद्रजसोऽतिरेकाल्लोकस्यसन्तानविवृद्धिहेतून् ॥ अष्टौविकारानपिचादिकालेसृष्ट्वासमश्नातितथान्तकाले ॥ ४६ ॥
प्रकृत्यवस्थापितकारणानांयावत्स्थितिर्याचपुनःप्रवृत्तिः॥तत्सर्व्वमप्राकृतवैभवस्यसङ्कल्पमात्रेणमहेश्वरस्य ॥ ४७ ॥ इतिश्रीशैवेवायवीयसंहितायां
पूर्व्वभागेलोकोत्पत्तिवर्णनंनामाष्टमोऽध्यायः ॥८॥ मुनयऊचुः॥ मन्वन्तराणिसर्व्वाणिकल्पभेदांश्चसर्वशः॥तेष्ववान्तरसर्गंश्चप्रतिसर्गंश्चनोवद ॥१॥वायु
रुवाच ॥ कालसंख्याविवृत्तस्यपरार्द्धोब्रह्मणःस्मृतः ॥ तावांश्चैवास्यकालोऽन्यस्तस्यान्तेप्रतिसृज्यते ॥ २ ॥ दिवसेदिवसेतस्यब्रह्मणःपूर्व्वजन्मनः ॥

चतुर्द्दशमहाभागामनूनांपरिवृत्तयः ॥ ३ ॥ अनादित्वादनन्तत्वादज्ञेयत्वाच्चकृत्स्नशः ॥ मन्वन्तराणिकल्पाश्चनशक्यवचनाःपृथक् ॥ ४ ॥ उक्तेष्वपि
चसर्व्वेषुशृण्वतांवोऽथवाममः ॥ किमिहास्तिफलंतस्मान्नपृथग्वक्तुमुत्सहे ॥ ५ ॥ यएवखलुकल्पेषुकल्पःसम्प्रतिवर्त्तते ॥ तत्रसंक्षिप्यवर्त्तन्तेसृष्टयःप्रतिसृ
ष्टयः ॥ ६ ॥ यस्त्वयंवर्त्ततेकल्पोवाराहोनामनामतः ॥ अस्मिन्नपिद्विजश्रेष्ठामनवस्तुचतुर्द्दश ॥७॥ स्वायम्भुवादयःसप्तसप्तसावर्णिकादयः ॥ तेषुवैव
स्वतोनामसप्तमोवर्त्ततेमनुः॥८॥मन्वन्तरेषुसर्व्वेषुसर्गसंहारवृत्तयः॥प्रायःसमाभवन्तीतितर्कःकार्य्योविजानता॥९॥पूर्व्वकल्पेपरावृत्तेप्रवृत्तेकालमारुते ॥
समुन्मूलितमूलेषुवृक्षेषुचवनेषुच ॥ १० ॥ जगन्तितृणवत्त्रीणिदेवेदहातिपावके ॥ वृष्ट्याभुविनिषिक्तायांविवेलेष्वर्णवेषुच ॥ ११ ॥ दिक्षुसर्व्वासुम
ग्नासुवारिपूरेमहीयसि ॥ तरद्भिश्चटुलाक्षेपैस्तरङ्गभुजमण्डलैः ॥ १२ ॥ प्रारब्धचण्डनृत्येषुततःप्रलयवारिषु ॥ ब्रह्मानारायणोभूत्वासुष्वापसलिलेसु
खम् ॥ १३ ॥ इमंचोदाहरन्मन्त्रंश्लोकंनारायणंप्रति ॥ आपोनाराइतिप्रोक्ताआपोवैनरसूनवः ॥ १४ ॥ अयनंतस्यतायस्मात्तेननारायणःस्मृतः ॥
शिवयोगमयींनिद्रांकुर्व्वन्तंत्रिदशेश्वरम् ॥ १५ ॥ बद्धांजलिपुटाःसिद्धाजनलोकनिवासिनः ॥ स्तोत्रैःप्रबोधयामासुःप्रभातसमयेसुराः ॥ १६ ॥ ततः
प्रबुद्धउत्थायशयनात्तोयमध्यगात् ॥ उदैक्षतदिशःसर्व्वायोगनिद्रालसेक्षणः ॥ १७ ॥ नापश्यत्सतदाकिंचित्स्वात्मनोव्यतिरेकियत् ॥ सविस्मयइवा
सीनःपरांचिन्तामुपागमत् ॥ १८ ॥ क्वसाभगवतीयातुमनोज्ञामहतीमही ॥ नानाविधमहाशैलनदीनगरकानना ॥ १९ ॥ एवंसंचिन्तयन्ब्रह्माबुबुधेनै
वभूस्थितिम् ॥ तदासस्मारपितरंभगवन्तंत्रिलोचनम् ॥२०॥ स्मरणाद्देवदेवस्यभवस्यामिततेजसः ॥ ज्ञातवान्सलिलेमग्नांधरणींधरणीपतिः ॥ २१॥
ततोभूमेःसमुद्धारंकर्त्तुकामःप्रजापतिः ॥ जलक्रीडोचितंदिव्यंवाराहंरूपमस्मरत् ॥ २२ ॥ महापर्व्वतवर्ष्माणंमहाजलदनिस्वनम् ॥ नीलमेघप्रतीका
शंदीप्तशब्दम्भयानकम् ॥ २३ ॥ पीनवृत्तघनस्कन्धंपीनोन्नतकटीतटम् ॥ ह्रस्ववृत्तोरुजंघाग्रंसुतीक्ष्णखुरमण्डलम् ॥ २४ ॥ पद्मरागमणिप्रख्यंवृत्त
भीषणमीक्षणम् ॥ वृत्तदीर्घमहागात्रंस्तब्धकर्णस्थलोज्ज्वलम् ॥ २५ ॥ उदीर्णोच्छ्वासनिश्वासघूर्णितप्रलयार्णवम् ॥ विस्फुरत्सुसटाच्छन्नकपोलंस्कन्ध
बन्धुरम् ॥ २६ ॥ मणिभिर्भूषणैश्चित्रैर्महारत्नैःपरिष्कृतैः ॥ विराजमानंविद्युद्भिर्मेघसङ्घमिवोन्नतम् ॥२७॥ आस्थायविपुलंरूपंवाराहममितंविधिः ॥ पृ
थिव्युद्धरणार्थायप्रविवेशरसातलम्॥२८॥सतदाशुशुभेऽतीवसूकरोगिरिसन्निभः॥लिंगाकृतेर्महेशस्यपादमूलगतोयथा ॥२९॥ततःससलिलेमग्नांपृथिवीं
पृथिवीधरः ॥ उद्धृत्यालिङ्गचदंष्ट्राभ्यामुन्ममज्जरसातलात्॥३०॥ तंदृष्ट्वामुनयःसिद्धाजनलोकनिवासिनः॥मुमुदुर्ननृतुर्मूर्ध्नितस्यपुष्पैरवाकिरन् ॥३१॥
वपुर्महावराहस्यशुशुभेपुष्पसंवृतम्॥पतद्भिरिवखद्योतैःप्रांशुरंजनपर्व्वतः॥३२॥ततःसंस्थानमानीयवराहोमहतीमहीम् ॥ स्वमेवरूपमास्थायस्थापया

मासवैप्रभुः ॥ ३३ ॥ पृथिवींचसमीकृत्यपृथिव्यांस्थापयन्गिरीन् ॥ भूराद्यांश्चतुरोलोकान्कल्पयामासपूर्व्ववत् ॥ ३४ ॥ इतिसहमहतींचमहींमहीध्रैः
प्रलयमहाजलधेरधस्थमध्यात् ॥ उपरिचविनिवेश्यसविश्वकर्म्माचरमचरंचजगत्ससर्ज्जभूयः ॥ ३५ ॥ इतिश्रीशैवेवा०सं०पू०नवमोऽध्यायः ॥ ९ ॥
वायुरुवाच ॥ सर्गंचिन्तयतस्तस्यतदावैबुद्धिपूर्व्वकम् ॥ प्रध्यानकालेमोहस्तुप्रादुर्भूतस्तमोमयः ॥ १ ॥ तमोमोहोमहामोहस्तामिस्रश्चान्धसंज्ञितः ॥
अविद्यापञ्चमीचैषाप्रादुर्भूतामहात्मनः ॥ २ ॥ पञ्चधावस्थितःसर्गोध्यायतस्त्वभिमानिनः ॥ सर्व्वतस्तमसातीवबीजकुम्भवदावृतः ॥ ३ ॥ बहिरन्त
श्चाप्रकाशःस्तब्धोनिःसंज्ञएवच ॥ तस्मात्तेषांवृताबुद्धिर्मुखानिकरणानिच ॥ ४ ॥ तस्मात्तेसंवृतात्मानोनगामुख्याःप्रकीर्तिताः ॥ तंदृष्ट्वाऽसाधकंब्र
ह्माप्रथमंसर्गमीदृशम् ॥ ५ ॥ अप्रसन्नमनाभूत्वाद्वितीयंसोऽभ्यमन्यत॥ तस्याभिध्यायतःसर्गतिर्य्यक्स्रोतोऽभ्यवर्त्तत ॥६॥ अन्तःप्रकाशास्तिर्य्यञ्चआ
वृताश्चबहिःपुनः ॥ पशवात्मानस्ततोजाताउत्पथग्राहिणश्चते ॥ ७॥ तमप्यसाधकंज्ञात्वासर्गमन्यममन्यत॥तदोर्ध्वस्रोतसोवृत्तोदेवसर्गस्तुसात्त्विकः ॥
॥ ८ ॥ ते सुखप्रीतिबहुलाबहिरन्तश्चनावृताः ॥ प्रकाशाबहिरन्तश्चस्वभावादेवसंज्ञिताः ॥ ९॥ ततोऽभिध्यायतोव्यक्तादर्व्वाक्स्रोतस्तुसाधकः ॥ मनु
ष्यनामासञ्जातःसर्गोदुःखसमुत्कटः ॥ १० ॥ प्रकाशाबहिरन्तस्तेतमोद्रिक्तारजोऽधिकाः ॥ पञ्चमोनुग्रहःसर्गश्चतुर्धासंव्यवस्थितः ॥ ११ ॥ विपर्य्यये
णशक्त्याचतुष्ट्यासिद्ध्यातथैवच ॥ तेऽपरिग्राहिणःसर्व्वेसंविभागरताःपुनः ॥१२॥ खादनाश्चाप्यशीलाश्चभूताद्याःप्ररिकीर्त्तिताः ॥ प्रथमोमहतः सर्गो
ब्रह्मणःपरमेष्ठिनः ॥ १३ ॥ तन्मात्राणांद्वितीयस्तुभूतसर्गःसउच्यते॥ वैकारिकस्तृतीयस्तुसर्गऐन्द्रियकःस्मृतः॥१४॥ इत्येषप्रकृतेःसर्गःसम्भूतोऽबुद्धि
पूर्व्वकः ॥ मुख्यसर्गश्चतुर्थस्तुमुख्यावैस्थावराःस्मृताः ॥१५॥ तिर्य्यक्स्रोतस्तुयःप्रोक्तस्तिर्य्यग्योनिःसपञ्चमः॥तदोर्ध्वस्रोतसःषष्ठोदेवसर्गस्तुसस्मृतः
॥१६॥ततोऽर्वाक्स्रोतसांसर्गःसप्तमःसतुमानुषः॥अष्टमोऽनुग्रहःसर्गःकौमारोनवमःस्मृतः॥१७॥प्राकृताश्चत्रयःपूर्व्वेसर्गास्तेऽबुद्धिपूर्व्वकाः॥बुद्धिपूर्व्वंप्रव
र्त्तन्तेमुख्याद्याःपञ्चवैकृताः॥ १८ ॥ अग्रेससर्ज्जवैब्रह्मामानसानात्मनःसमान् ॥ सनन्दंसनकञ्चैवविद्वांसञ्चसनातनम् ॥ १९ ॥ ऋभुंसनत्कुमारञ्चपूर्व्वमे
वप्रजापतिः ॥ सर्व्वेतेयोगिनोज्ञेया वीतरागाविमत्सराः ॥ २० ॥ ईश्वरासक्तमनसोनचक्रुःसृष्टयेमतिम् ॥ तेषुसृष्ट्यनपेक्षेषुगतेषुसनकादिषु ॥ २१ ॥
स्रष्टुकामःपुनर्ब्रह्मातताापपरमंतपः॥तस्यैवंतप्यमानस्यनकिंचित्समवर्त्तत ॥ २२ ॥ ततोदीर्घेणकालेनदुःखात्क्रोधोव्यजायत ॥ क्रोधाविष्टस्यनेत्राभ्यां
प्रापतन्नश्रुबिन्दवः ॥२३॥ ततस्तेभ्योऽश्रुबिन्दुभ्योभूताःप्रेतास्तदाभवन् ॥ सर्व्वांस्तानश्रुजान्दृष्ट्वाब्रह्मात्मानमनिन्दत॥२४॥तस्यतीव्राभवन्मूर्च्छाक्रो
धामर्षसमुद्भवा॥मूर्च्छितस्तुजहौप्राणान्क्रोधाविष्टःप्रजापतिः॥२५॥ततःप्राणेश्वरोरुद्रोभगवान्नीललोहितः॥प्रसादमतुलंकर्त्तुंप्रादुरासीत्प्रभोर्मुखात्२६

दशधाचैकधाचक्रेस्वात्मानंप्रभुरीश्वरः ॥ तेतेनोक्तामहात्मानोदशधाचैकधाकृताः ॥ २७ ॥ यूयंसृष्टामयावत्सालोकानुग्रहकारणात् ॥
तस्मात्सर्व्वस्यलोकस्यस्थापनायहितायच ॥ २८ ॥ प्रजासन्तानहेतोश्चप्रयतध्वमतन्द्रिताः ॥ एवमुक्ताश्चरुरुदुर्दुद्रुवुश्चसमन्ततः ॥२९ ॥ रोदनाद्द्रा
वणाच्चैवतेरुद्रानामतःस्मृताः ॥ येरुद्रास्तेखलुप्राणायेप्राणास्तेमहात्मकाः ॥ ३० ॥ ततोमृतस्यदेवस्यब्रह्मणःपरमेष्ठिनः ॥ घृणीददौपुनःप्राणान्ब्रह्मपु
त्रोमहेश्वरः ॥ ३१ ॥ प्रहृष्टवदनोरुद्रःप्राणप्रत्यागमाद्विभोः ॥ अभ्यभाषतविश्वेशोब्रह्माणंपरमंवचः ॥ ३२ ॥ माभैर्माभैर्महाभागविरिंचजगतांगुरो ॥
मयातेप्राणिताःप्राणाःसुखमुत्तिष्ठसुव्रत ॥ ३३ ॥ स्वप्नानुभूतमिवतच्छ्रुत्वावाक्यंमनोहरम् ॥ हरंनिरीक्ष्यशनकैर्नेत्रैःफुल्लाम्बुजप्रभैः ॥ ३४ ॥
तथाप्रत्यागतप्राणःस्निग्धगम्भीरयागिरा ॥ उवाचवचनंब्रह्मातमुद्दिश्यकृताञ्जलिः ॥ ३५ ॥ भोवदमहाभागआनन्दयसिमेमनः ॥ कोभवान्विश्वमू
र्त्तिस्त्वंस्थितएकादशात्मकः ॥ ३६ ॥ तस्यतद्वचनंश्रुत्वाव्याजहारमहेश्वरः॥स्पृशन्कराभ्यां ब्रह्माणंसुमुखाभ्यांसुरेश्वरः ॥ ३७ ॥ मांविद्धिपरमात्म
नंतवपुत्रत्वमागतम् ॥ एतेचैकादशारुद्रास्त्वांसुरक्षितुमागताः ॥ ३८ ॥ तस्मात्तीव्रामिमांमूर्च्छांविधूयमदनुग्रहात्॥प्रबुद्धश्चयथापूर्व्वंप्रजावैस्रष्टुमर्हसि
॥ ३९ ॥ एवंभगवताप्रोक्तोब्रह्माप्रीतमनाह्यभूत् ॥ नामाष्टकेनविश्वात्मातुष्टावपरमेश्वरम् ॥४०॥ ब्रह्मोवाच ॥ नमस्तेभगवन्रुद्रभास्करामिततेजसे॥
नमोभवायदेवायरसायाम्बुमयात्मने ॥ ४१ ॥ शर्व्वायक्षितिरूपायनंदीसुरभिणेनमः ॥ ईशायवसवेतुभ्यंनमःस्पर्शमयात्मने ॥ ४२ ॥ पशूनांपतये
चैवपावकायातितेजसे ॥ भीमायव्योमरूपायशब्दमात्रायतेनमः ॥ ४३ ॥ उग्रायोग्रस्वरूपाययजमानात्मनेनमः ॥ महादेवायसोमायनमोऽस्त्वमृतमू
र्त्तये ॥ ४४ ॥ एवंस्तुत्वामहादेवंब्रह्मालोकपितामहः ॥ प्रार्थयामासविश्वेशंगिराप्रणतिपूर्व्वया ॥ ४५ ॥ भगवन्भूतभव्येशममपुत्रमहेश्वर ॥ सृष्टिहे
तोस्त्वमुत्पन्नोममाङ्केऽनङ्गनाशन ॥ ४६ ॥ तस्मान्महतिकार्य्येऽस्मिन्व्यापृतस्यममप्रभो ॥ साहाय्यंकुरुसर्वत्रस्रष्टुमर्हसिसप्रजाः ॥ ४७ ॥ तेनैवंया
चितोदेवो रुद्रस्त्रिपुरमर्द्दनः ॥ बाढमित्येवतांवाणींप्रतिजग्राहशङ्करः ॥ ४८ ॥ ततःसभगवान्ब्रह्माहृष्टस्तमभिवन्द्यच ॥ स्रष्टुंतेनाभ्यनुज्ञातस्तथान्या
श्चासृजत्प्रजाः ॥ ४९ ॥ मरीचिभृग्वङ्गिरसःपुलस्त्यंपुलहंक्रतुम् ॥ दक्षमत्रिंवसिष्ठश्चसोऽसृजन्मनसैवच ॥ ५० ॥ पुरस्तादसृजद्ब्रह्माधर्म्मंसङ्कल्पमेव
च ॥ इत्येतेब्रह्मणःपुत्राद्वादशादौप्रकीर्त्तिताः ॥ ५१ ॥ सहरुद्रेणसम्भूताःपुराणागृहमेधिनः ॥ तेषांद्वादशवंशाःस्युर्दिव्यादेवगणार्च्चिताः ॥ ५२ ॥
प्रजावन्तःक्रियावन्तोमहर्षिभिरलंकृताः ॥ अथदेवासुरपितॄन्मनुष्यांश्चचतुष्टयम् ॥५३ ॥ सहरुद्रेणसिसृक्षुरम्भस्येतानिवैविधिः ॥ सृष्ट्यर्थंवैसमाधाय
ब्रह्मात्मानमयूयुजत् ॥ ५४ ॥ मुखादजनयद्देवान्पितॄंश्चैवोपपक्षतः॥ जघनादसुरान्सर्व्वान्प्रजनादपिमानुषान् ॥५५॥ अवस्करेक्षुधाविष्टाराक्षसास्तस्य

जज्ञिरे ॥ पुत्रास्तमोरजःप्रायाबलिनस्तेनिशाचराः ॥५६॥ सर्पायक्षास्तथाभूतागन्धर्व्वाःसम्प्रजज्ञिरे॥वयांसिपक्षतःसृष्टाःपक्षिणोवक्षसोऽसृजत् ॥५७॥
मुखतोऽजांस्तथापार्श्वादुरगांश्चविनिर्म्ममे ॥ पद्भ्याञ्चाश्वान्समातङ्गाञ्छरभान्गवयान्मृगान् ॥५८॥उष्ट्रानश्वतरांश्चैवन्यङ्कूनन्यांश्चजातयः॥ओषध्यः
फलमूलानिरोमभ्यस्तस्यजज्ञिरे ॥ ५९ ॥ गायत्रीञ्चऋचञ्चैवत्रिवृत्स्तोमंरथन्तरम् ॥ अग्निष्टोमञ्चयज्ञानांनिर्म्ममेप्रथमान्मुखात् ॥ ६० ॥ यजूंषित्रैष्टु
भंछन्दःस्तोमंपञ्चदशंतथा ॥ बृहत्सामतथोक्थञ्चदक्षिणादसृजन्मुखात् ॥ ६१ ॥ सामानिजगतीच्छन्दःस्तोमंसप्तदशंतथा ॥ वैरूपमतिरात्रञ्चपश्चिमा
दसृजन्मुखात् ॥ ६२ ॥ एकविंशमथर्व्वाणमाप्तोऽर्य्यामाणमेवच ॥ अनुष्टुभंसवैराजमुत्तरादसृजन्मुखात् ॥ ६३ ॥ उच्चावचानिभूतानिगात्रेभ्यस्तस्यज
ज्ञिरे ॥ यक्षाःपिशाचागन्धर्व्वास्तथैवाप्सरसांगणाः॥६४॥नरकिन्नररक्षांसिवयःपशुमृगोरगाः॥ अव्ययञ्चैवयदिदं जगत्स्थावरजङ्गमम् ॥६५॥ तेषांवैया
निकर्म्माणिप्राक्सृष्ट्यांप्रतिपेदिरे ॥ तान्येवतेप्रपद्यन्ते सृज्यमानाःपुनःपुनः ॥ ६६ ॥ हिंस्राहिंस्रेमृदुक्रूरेधर्म्माधर्म्मावृतानृते ॥ तद्भाविताःप्रपद्यन्ते
तस्मात्तत्तस्यरोचते ॥६७॥ महाभूतेषुनानात्वमिन्द्रियार्थेषुमुक्तिषु ॥ विनियोगञ्चभूतानांधातैवविदधत्स्वयम् ॥ ६८ ॥ नामरूपञ्चभूतानांप्राकृतानां
प्रपञ्चनम् ॥ वेदशब्देभ्यएवादौनिर्म्ममेऽसौपितामहः ॥६९॥ आर्षाणिचैवनामानियाश्चवेदेषुदृष्टयः ॥ शर्व्वर्य्यन्तेप्रसूतानांतान्येवैभ्योददावजः ॥७०॥
यथर्त्तुंऋतुलिङ्गानिनानारूपाणिपर्य्यये ॥ दृश्यंतेतानितान्येवतथाभावायुगादिषु ॥ ७१ ॥ इत्येषकरणोद्भूतोलोकसर्गःस्वयंभुवः ॥ महदाद्योविशेषा
न्तोविकारःप्रकृतेःस्वयम् ॥ ७२ ॥ चन्द्रसूर्य्यप्रभाजुष्टोग्रहनक्षत्रमण्डितः ॥ नदीभिश्चसमुद्रैश्चपर्व्वतैश्चसमण्डितः ॥ ७३ ॥ पुरैश्चाविविधैरम्यैःस्फीतै
र्जनपदैस्तथा ॥ तस्मिन्ब्रह्मवनेव्यक्तोब्रह्माचरतिसर्व्ववित् ॥ ७४ ॥ अव्यक्तबीजप्रभवईश्वरानुग्रहेस्थितः ॥ बुद्धिस्कन्धमहाशाखइन्द्रियान्तरकोटरः
॥ ७५ ॥ महाभूतप्रमाणश्चविशेषामलपल्लवः ॥ धर्म्माधर्म्मसुपुष्पाढ्यःसुखदुःखफलोदयः ॥ ७६ ॥ आजीव्यःसर्व्वभूतानांब्रह्मवृक्षःसनातनः ॥
द्यांमूर्द्धानंतस्यविप्रावदन्तिखंवैनाभिंचन्द्रसूर्य्यौचनेत्रे ॥ दिशःश्रोत्रेचरणौचक्षितिंचसोऽचिन्त्यात्मासर्व्वभूतप्रणेता ॥ ७७ ॥ वक्त्रात्तस्यब्राह्मणाःसम्प्र
सूतास्तद्वक्षसःक्षत्रियाःपूर्व्वभागात् ॥ वैश्याऊरुभ्यांतस्यपद्भ्यांचशूद्राःसर्व्वेवर्णागात्रतःसम्प्रसूताः ॥ ७८ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायां
पूर्व्वभागेसृष्टिनिरूपणंनामदशमोध्यायः ॥ १० ॥ ऋषयऊचुः ॥ भवताकथितासृष्टिर्भवस्यपरमात्मनः ॥ चतुर्म्मुखमुखात्तत्रसंशयोनःप्रजायते
॥ १ ॥ देवश्रेष्ठोविरूपाक्षोदीप्तःशूलधरोहरः ॥ कालात्माभगवान्रुद्रःकपर्द्दीनीललोहितः ॥ २ ॥ सब्रह्मकमिमंलोकंसविष्णुंचसपावकम् ॥
यःसंहरतिसंक्रुद्धोयुगांतेसमुपस्थिते ॥ ३ ॥ यस्यब्रह्माचविष्णुश्चप्रणामंकुरुतोभयात् ॥ लोकसंकोचकस्यास्ययस्यतौवशवर्त्तिनौ ॥ ४ ॥

योऽयंदेवःस्वकादङ्गाद्ब्रह्मविष्णूपुरासृजत् ॥ सएवहितयोर्न्नित्यंयोगक्षेमकरःप्रभुः ॥ ५ ॥ सकथंभगवान्रुद्रआदिदेवःपुरातनः ॥ पुत्रत्वमगमच्छम्भुर्ब्रह्म
णोऽव्यक्तजन्मनः ॥ ६ ॥ प्रजापतिश्चविष्णुश्चरुद्रस्यतौपरस्परम् ॥ सृष्टौपरस्परस्याङ्गादितिप्रागपिशुश्रुमं ॥ ७ ॥ कथंपुनरशेषाणांभूतानांहेतुभूत
योः ॥ गुणप्रधानभावेनप्रादुर्भावःपरस्परात् ॥ ८ ॥ नापृष्टंभवताकिञ्चिन्नाश्रुतञ्चकथञ्चन ॥ भगवच्छिष्यभूतेनभवतासकलंश्रुतम् ॥ ९ ॥ यथाहभ
गवान्ब्रह्मावदत्वमपिनस्तथा॥सर्व्वमेतद्यथावृत्तंवक्तुमर्हसिमारुत ॥१०॥ सूतउवाच ॥ एवंपृष्टःसभगवान्वायुराकाशसम्भवः ॥ सर्व्वमेतत्समासेनमुनी
नामवदद्विभुः॥११॥वायुरुवाच॥स्थानेपृष्टमिदंविप्राभवद्भिःप्रश्नकोविदैः॥इदमेवपुरापृष्टोममप्राहपितामहः॥१२॥तदहंसम्प्रवक्ष्यामियथारुद्रसमुद्भवः॥
यथाचपुनरुत्पत्तिर्ब्रह्मविष्णवोःपरस्परम् ॥१३॥ त्रयस्तेकारणात्मानोजाताःसाक्षान्महेश्वरात् ॥ चराचरस्यविश्वस्यसर्गस्थित्यन्तहेतवः ॥१४॥ परमै
श्वर्य्यसंयुक्ताःपरमेश्वरभाविताः ॥ तच्छक्त्याधिष्ठितानित्यंतत्कार्य्यकरणक्षमाः ॥१५॥ पित्रानियमिताःपूर्व्वंत्रयोऽपित्रिषुकर्म्मसु ॥ ब्रह्मासर्गेहरिस्त्राणे
रुद्रःसंहरणेपुनः॥१६॥यथाप्यन्योऽन्यमात्सर्य्यादन्योऽन्यातिशयाशिनः॥तपसातोषयित्वास्वंपितरंपरमेश्वरम्॥१७॥लब्धासर्व्वात्मतातस्यप्रसादात्प
रमेष्ठिनः॥ ब्रह्मनारायणौपूर्व्वंरुद्रःकल्पान्तरेऽसृजत्॥१८॥ कल्पान्तरेपुनर्ब्रह्मारुद्रविष्णुजगन्मयः॥ विष्णुश्चभगवान्रुद्रंब्रह्माणमसृजत्पुनः ॥१९॥नारा
यणंपुनर्ब्रह्माब्रह्माणञ्चपुनर्भवः॥ एवंकल्पेषुकल्पेषुब्रह्मविष्णुमहेश्वराः॥२०॥परस्परेणजायन्तेपरस्परजयैषिणः॥ तत्तत्कल्पान्तवृत्तान्तमधिकृत्यमह
र्षिभिः॥२१॥प्रभावःकथ्यतेतेषांपरस्परसमुद्भवात्॥शृणुतेषांकथांचित्रांपुण्यांपापप्रमोचनीम्॥२२॥कल्पेतत्पुरुषेवृत्तांब्रह्मणःपरमेष्ठिनः ॥ पुरानारा
यणोनामकल्पेवैमेघवाहने ॥२३॥दिव्यंवर्षसहस्रन्तुमेघोभूत्वावहद्धराम् ॥ तस्यभावंसमालक्ष्यविष्णोर्विश्वजगद्गुरुः ॥२४॥ शर्व्वःसर्व्वात्मभावेनप्रददौ
शक्तिमव्ययाम् ॥ शक्तिंलब्ध्वातुसर्व्वात्माशिवात्सर्व्वेश्वरेश्वरात् ॥ २५ ॥ ससर्ज्जभगवान्विष्णुर्विश्वंविश्वसृजासह॥ विष्णोस्तद्वैभवंदृष्ट्वासृष्टस्तेनापिता
महः ॥ २६ ॥ ईर्ष्ययापरयाग्रस्तःसहसान्निदमब्रवीत् ॥ गच्छविष्णोमयाज्ञातंतवसर्गस्यकारणम्॥२७॥ आवयोरधिकश्चास्तिसरुद्रोनास्तिसंशयः॥
तस्यदेवादिदेवस्यप्रसादात्परमेष्ठिनः ॥ २८ ॥ स्रष्टात्वंभगवानाद्यःपालकःपरमार्थतः ॥ अहंचतपसाराध्यरुद्रंत्रिदशनायकम् ॥ २९ ॥ त्वयासहजग
त्सर्वंस्रक्ष्याम्यत्रनसंशयः ॥ एवंविष्णुमुपालभ्यभगवानब्जसम्भवः ॥ ३० ॥ एवंविज्ञापयामासतपसाप्राप्यशङ्करम् ॥ भगवन्देवदेवेशविश्वेश्वरमहेश्वर
॥ ३१ ॥ तववामाङ्गजोविष्णुर्दक्षिणाङ्गभवोह्यहम् ॥ मयासहजगत्सर्व्वंतथाप्यसृजदच्युतः ॥३२॥ समत्सरादुपालब्धस्त्वदाश्रयबलान्मया ॥ मद्भावा
दधिकस्तस्यभावस्त्वयिमहेश्वर ॥ ३३ ॥ त्वत्तएवसमुत्पत्तिरावयोःसदृशीयतः ॥ तस्यभक्त्यायथापूर्व्वंप्रसादंकृतवानसि ॥ ३४ ॥ तथाममापित्व

त्सर्वंदातुमर्हसिशङ्कर ॥ इतिविज्ञापितस्तेनभगवान्भगनेत्रहा ॥ ३५ ॥ स्मयेनवैददौसर्व्वंतस्यापिसघृणानिधिः ॥ लब्ध्वैवमीश्वरादेवब्रह्मासर्व्वात्म
तांक्षणात् ॥ ३६ ॥ त्वरमाणोऽथसङ्गम्यददर्शपुरुषोत्तमम् ॥ क्षीरार्णवालयेशुभ्रेविमानेसूर्य्यसन्निभे ॥ ३७ ॥ हेमरत्नान्वितेदिव्येमनसातेन
निर्मिते ॥ अनन्तभोगशय्यायांशयानंपङ्कजेक्षणम् ॥ ३८ ॥ चतुर्भुजमुदाराङ्गंसर्व्वाभरणभूषितम् ॥ शङ्खचक्रधरंसौम्यंचन्द्रबिम्बसमाननम् ॥ ३९ ॥
श्रीवत्सवक्षसंदेवंप्रसन्नमधुरस्मितम् ॥ धरामृदुकराम्भोजस्पर्शरक्तपदाम्बुजम् ॥ ४० ॥ क्षीरार्णवेऽमृतमिवशयानंयोगनिद्रया ॥ तमसाकालरुद्राख्यं
रजसाकनकाण्डजम् ॥ ४१ ॥ सत्त्वेनसर्व्वगंविष्णुंनिर्गुणत्वेमहेश्वरम् ॥ तंदृष्ट्वापुरुषंब्रह्माप्रगल्भमिदमब्रवीत् ॥ ४२ ॥ ग्रसामित्वामहंविष्णोत्वमात्मा
नंयथापुरा ॥ तस्यतद्वचनंश्रुत्वाप्रतिबुध्यपितामहम् ॥ ४३ ॥ उदैक्षतमहाबाहुःस्मितमीषच्चकारच ॥ तस्मिन्नवसरेविष्णुर्ग्रस्तस्तेनमहात्मना ॥ ४४ ॥
सृष्टश्चब्रह्मणासद्योभ्रुवोर्मध्यादयत्नतः ॥ तस्मिन्नवसरेसाक्षाद्भगवानिन्दुभूषणः ॥ ४५ ॥ शक्तितयोरपिद्रष्टुमरूपोरूपमास्थितः ॥ प्रसादमतुलंकर्त्तुंपुरा
दत्तवरस्तयोः ॥ ४६ ॥ आगच्छत्तत्रयत्रेमौब्रह्मनारायणौस्थितौ ॥ अथतुष्टुवतुर्देवंप्रीतौभीतौचकौतुकात् ॥ ४७ ॥ प्रणेमतुश्चबहुशोबहुमानेनदूरतः ॥
भवोऽपिभगवानेतावनुगृह्यपिनाकधृक् ॥ सादरंपश्यतोरेवतयोरन्तरधीयत ॥ ४८ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्वभागेशेषशायि
नारायणवर्णनंनामैकादशोऽध्यायः ॥ ११ ॥ वायुरुवाच ॥ प्रतिकल्पंप्रवक्ष्यामिरुद्राविर्भावकारणम् ॥ यतोविच्छिन्नसन्तानाब्रह्मसृष्टिःप्रवर्त्तते ॥ १ ॥
कल्पेकल्पेप्रजांसृष्ट्वाब्रह्माब्रह्माण्डसम्भवः ॥ अवृद्धिहेतोर्भूतानांमुमोहभृशदुःखितः ॥ २ ॥ तस्यदुःखप्रशान्त्यर्थंप्रजानांचविवृद्धये ॥ तत्तत्कल्पेषुका
लात्मारुद्रोरुद्रगणाधिपः ॥ ३ ॥ निर्दिष्टःपरमेशेनमहेशोनीललोहितः ॥ पुत्रोभूत्वानुगृह्णातिब्रह्माणंब्रह्मणोऽनुजः ॥ ४ ॥ सएवभगवानीशस्तेजोरा
शिरनामयः ॥ अनादिनिधनोधाताभूतसंकोचकोविभुः ॥ ५ ॥ परमैश्वर्य्यसंयुक्तःपरमेश्वरभावितः ॥ तच्छक्त्याधिष्ठितःशश्वत्तच्चिह्नैरपिचिह्नितः ॥
॥ ६ ॥ तन्नामनामातद्रूपस्तत्कार्य्यकारणक्षमः ॥ तत्तुल्यव्यवहारश्चतदाज्ञापरिपालकः ॥ ७ ॥ सहस्रादित्यसंकाशश्चन्द्रावयवभूषणः ॥ भुजङ्गहारके
यूरवलयोमुंजमेखलः ॥ ८ ॥ जलन्धरविरंचीन्द्रकपालशकलोज्ज्वलः ॥ गङ्गातुङ्गतरङ्गार्द्रपिङ्गलाननमूर्द्धजः ॥ ९ ॥ भग्नदंष्ट्राङ्कुराक्रान्तप्रान्तकान्तधराध
रः ॥ सव्यश्रवणपाशान्तमण्डलीकृतकुण्डलः ॥ १० ॥ महावृषभनिर्याणोमहाजलदनिस्वनः ॥ महानलसमप्रख्योमहाबलपराक्रमः ॥ ११ ॥ एवंघोरमहा
रूपोब्रह्मपुत्रोमहेश्वरः ॥ विज्ञानंब्रह्मणेदत्त्वासर्गेसहकरोतिच ॥ १२ ॥ तस्माद्रुद्रप्रसादेनप्रतिकल्पंप्रजापतेः ॥ प्रवाहरूपतोनित्याप्रजासृष्टिःप्रवर्तते ॥ १३ ॥
कदाचित्प्रार्थितःस्रष्टुंब्रह्मणानीललोहितः ॥ स्वात्मनासदृशान्सर्व्वान्ससर्ज्जमनसाविभुः ॥ १४ ॥ कपर्दिनोनिरातङ्कान्नीलग्रीवांस्त्रिलोचनान् ॥

जरामरणनिर्म्मुक्तान्दीप्तशूलवरायुधान् ॥ १५ ॥ तैस्तुसञ्छादितंसर्व्वंचतुर्द्दशविधंजगत् ॥ तान्दृष्ट्वाविविधान्रुद्रान्रुद्रमाहपितामहः ॥ १६ ॥
नमस्तेदेवदेवेशमास्राक्षीरीदृशाःप्रजाः ॥ अन्याःसृजहभद्रंतेप्रजामृत्युसमन्विताः ॥ १७ ॥ इत्युक्तःप्रहसन्प्राहब्रह्माणंपरमेश्वरः ॥ नास्ति
मेतादृशःसर्गःसृजत्वमशुभाःप्रजाः ॥ १८ ॥ येत्विमेमनसासृष्टामहात्मानोमहाबलाः ॥ चरिष्यन्तिमयासार्द्धंसर्व्वएवहियाज्ञिकाः ॥ १९ ॥
इत्युक्त्वाविश्वकर्म्माणंविश्वभूतेश्वरोहरः ॥ सहरुद्रैःप्रजासर्गान्निवृत्तात्माव्यतिष्ठत ॥ २० ॥ ततःप्रभृतिदेवोऽसौनप्रसूतेशुभाःप्रजाः ॥
ऊर्द्ध्वरेताःस्थितःस्थाणुर्यावदाभूतसंप्लवम् ॥ २१ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेरुद्रोत्पत्तिर्नामद्वादशोऽध्यायः ॥ १२ ॥ छ ॥
वायुरुवाच ॥ यदापुनःप्रजाःसृष्टानव्यवर्द्धन्तवेधसः ॥ तदामैथुनजांसृष्टिंब्रह्माकर्त्तुममन्यत ॥ १ ॥ ननिर्गतंपुरायस्मान्नारीणांकुलमीश्वरात् ॥ तेनमै
थुनजांसृष्टिंनशशाकपितामहः ॥ २ ॥ ततःसविदधेबुद्धिमर्थनिश्चयगामिनीम् ॥ प्रजानामेववृद्ध्यर्थंप्रष्टव्यःपरमेश्वरः ॥ ३ ॥ प्रसादेनविनातस्यनवर्द्धेर
न्निमाःप्रजाः ॥ एवंसञ्चिन्त्यविश्वात्मातपःकर्त्तुंप्रचक्रमे ॥ ४ ॥ तदाद्यापरमाशक्तिरनन्तालोकभाविनी ॥ आद्यासूक्ष्मतराशुद्धाभावगम्यामनोहरा ॥५॥
निर्गुणानिष्प्रपञ्चाचनिष्कलानिरुपप्लवा ॥ निरन्तरतरानित्यानित्यमीश्वरपार्श्वगा ॥६॥ तयापरमयाशक्त्याभगवन्तंत्रियम्बकम् ॥ सञ्चिन्त्यहृदये
ब्रह्माततापपरमंतपः ॥ ७ ॥ तीव्रेणतपसातस्ययुक्तस्यपरमेष्ठिनः ॥ अचिरेणैवकालेनपितासम्प्रतुतोषह ॥ ८ ॥ ततःकेनचिदंशेनमूर्त्तिमाविश्यकाम
पि ॥ अर्द्धनारीश्वरोभूत्वाययौदेवःस्वयंहरः ॥ ९ ॥ तंदृष्ट्वापरमंदेवंतमसःपरमव्ययम् ॥ अद्वितीयमनिर्द्देश्यमदृश्यमकृतात्मभिः ॥ १० ॥ सर्वलो
कविधातारंसर्व्वलोकेश्वरेश्वरम् ॥ सर्व्वलोकविधायिन्याशक्त्यापरमयायुतम् ॥ ११ ॥ अप्रतर्क्यमनाभासममेयमजरंध्रुवम् ॥ अचलंनिर्गुणंशा
न्तमनन्तमहिमास्पदम्॥ १२ ॥ सर्व्वदंसर्व्वगंसर्व्वसदसद्व्यक्तिवर्ज्जितम् ॥ सर्व्वोपमाननिर्म्मुक्तंशरण्यंशाश्वतंशिवम् ॥ १३ ॥ प्रणम्यदण्डवद्ब्रह्मास
मुत्थायकृताञ्जलिः ॥ श्रद्धाविनयसम्पन्नैःश्राव्यैःसंस्कारसंयुतैः ॥ १४ ॥ यथार्थयुक्तसर्व्वार्थैर्वेदार्थपरिबृंहितैः ॥ तुष्टावदेवंदेवीञ्चसूक्तैःसूक्ष्मार्थ
गोचरैः ॥ १५ ॥ ब्रह्मोवाच ॥ जयदेवमहादेवजयेश्वरमहेश्वर ॥ जयसर्व्वगुणश्रेष्ठजयसर्व्वसुराधिप ॥ १६ ॥ जयप्रकृतिकल्याणिजयप्रकृ
तिनायिके ॥ जयप्रकृतिदूराङ्गिजयप्रकृतिसुन्दरि ॥ १७ ॥ जयामोघमहामायजयामोघमनोरथ ॥ जयामोघमहालीलजयामोघमहाबल ॥
॥ १८ ॥ जयविश्वजगन्मातर्जयविश्वजगन्मयि ॥ जयविश्वजगद्धात्रिजयविश्वजगत्सखि ॥ १९ ॥ जयशाश्वतिकैश्वर्य्यजयशाश्वतिका
लय ॥ जयशाश्वतिकाकारजयशाश्वतिकानुग ॥ २० ॥ जयात्मत्रयनिर्म्मात्रिजयात्मत्रयपालनि ॥ जयात्मत्रयसंहर्त्रिजयात्मत्रयनायिके ॥ २१ ॥

जयावलोकनायत्तजगत्कारणबृंहण ॥ जयोपेक्षाकटाक्षोत्थहुतभुग्भुक्तमौक्तिक ॥ २२ ॥ जयदेवाद्यविज्ञेयस्वात्मसूक्ष्मदृशोज्ज्वले ॥ जय
स्थूलात्मशक्त्येशव्याप्तविश्वचराचरे ॥ २३ ॥ जयनानैकविन्यस्तविश्वतत्त्वसमुच्चय ॥ जयासुरशिरोनिष्ठश्रेष्ठानुगकदम्बक ॥ २४ ॥ जयोपा
श्रितसंरक्षासंविधानपटीयसि ॥ जयोन्मूलितसंसारविषवृक्षांकुरोद्गमे ॥ २५ ॥ जयप्रादेशिकैश्वर्य्यवीर्य्यशौर्य्यविजृम्भण ॥ जयविश्वबहिर्भूतनिरस्त
परवैभव ॥ २६ ॥ जयप्रणीतपञ्चार्थप्रयागपरमामृत ॥ जयपञ्चार्थविज्ञानसुधास्रोतःस्वरूपिणि ॥ २७ ॥ जयातिघोरसंसारमहारोगभिषग्वर ॥ जया
नादिमलाऽज्ञानतमःपटलचन्द्रिके ॥ २८ ॥ जयत्रिपुरकालाग्नेजयत्रिपुरभैरवि ॥ जयत्रिगुणनिर्म्मुक्तजयत्रिगुणमर्द्दिनि ॥ २९ ॥ जयप्रमथसर्व्वज्ञजय
सर्व्वप्रबाधिके ॥ जयप्रचुरदिव्याङ्गजयप्रार्थितदायिनि ॥ ३० ॥ क्वदेवतेपरंधामक्ववयंक्वचनोवचः ॥ तथापिभगवन्भक्त्याप्रलपन्तंक्षमस्वमाम् ॥ ३१॥
विज्ञाप्यैवंविधैःसूक्तैर्विश्वकर्म्माचतुर्म्मुखः ॥ नमश्चकाररुद्रायरुद्राण्यैचमुहुर्मुहुः ॥ ३२ ॥ इदंस्तोत्रवरंपुण्यंब्रह्मणासमुदीरितम् ॥
अर्द्धनारीश्वरंनामशिवयोर्हर्षवर्द्धनम् ॥ ३३ ॥ यइदंकीर्त्तयेद्भक्त्यायस्यकस्यापिलिप्सया ॥ सतत्फलमवाप्नोतिशिवयोःप्रीतिकारणात् ॥ ३४ ॥
सकलभूवनभूतभावनाभ्यांजननविनाशविहीनविग्रहाभ्याम् ॥ नरवरयुवतिवपुर्धराभ्यांसततमहंप्रणतोऽस्मिशंकराभ्याम् ॥ ३५ ॥ इतिश्रीशैवेमहापु
राणेवायवीयसंहितायांपूर्व्वभागेरुद्रब्रह्मसंवादेत्रयोदशोऽध्यायः ॥ १३ ॥ वायुरुवाच ॥ अथदेवोमहादेवोमहाजलदनादया ॥ वाचामधुरगम्भीराविश
दश्लक्ष्णवर्णया ॥१॥ अर्थसम्पन्नपदयाराजलक्षणयुक्तया ॥ अशेषविषयारम्भरक्षाविलयदक्षया ॥ २ ॥ मनोहरतरोदारमधुरस्मितपूर्व्वया ॥ सम्बभा
षेसुसम्प्रीतोविश्वकर्म्माणमीश्वरः ॥ ३ ॥ ईश्वरउवाच ॥ वत्सवत्समहाभागममपुत्रपितामह ॥ ज्ञातमेवमयासर्व्वंतववाक्यस्यगौरवम् ॥ ४ ॥
प्रजानामेववृद्ध्यर्थंतपस्तप्तंत्वयाधुना ॥ तपसानेनतुष्टोऽस्मिददामिचतवेप्सितम् ॥ ५ ॥ इत्युक्त्वापरमोदारःस्वभावमधुरंवचः ॥
ससर्ज्जवपुषोभागाद्देवींदेववरोहरः ॥ ६ ॥ यामाहब्रह्मविद्वांसोदेवींदिव्यगुणान्विताम् ॥ परस्यपरमांशक्तिंभवस्यपरमात्मनः ॥ ७ ॥ यस्यानखलुविद्य
न्तेजन्ममृत्युजरादयः ॥ याभवानी भवस्याङ्गात्समाविरभवत्किल ॥ ८ ॥ यस्यावाचोनिवर्त्तन्तेमनसाचेन्द्रियैःसह ॥ साभर्त्तुर्वपुषोभागाज्जातेवसम
दृश्यतं ॥ ९ ॥ यासाजगदिदंकृत्स्नंमहिम्नाव्याप्यतिष्ठति ॥ शरीरिणीवसादेवीविचित्रासमलक्ष्यत ॥ १० ॥ सर्व्वंजगदिदंयैषासंमोहयतिमायया ॥
ईश्वरात्सैवजाताभूदजातापरमार्थतः ॥ ११ ॥ नयस्याःपरमोभावःसुराणामपिगोचरः ॥ विश्वामरेश्वराचैवविभक्ताभर्त्तुरङ्गतः ॥ १२ ॥
तांदृष्ट्वापरमेशानींसर्व्वलोकमहेश्वरीम् ॥ सर्व्वज्ञांसर्व्वगांसूक्ष्मांसदसद्व्यक्तिवर्ज्जिताम् ॥ १३ ॥ परयानिखिलंभासाभासयन्तीमिदंजगत् ॥ प्रणिपत्यम

हादेवींप्रार्थयामासवैविराट् ॥ १४ ॥ ब्रह्मोवाच ॥ देविदेवेनसृष्टोहमादौसर्व्वजगन्मयि ॥ प्रजासर्गेनियुक्तश्चसृजामिसकलंजगत् ॥ १५ ॥ मनसानिर्मि
ताःसर्व्वेदेविदेवादयोमया ॥ नवृद्धिमुपगच्छन्तिसृज्यमानाःपुनःपुनः ॥ १६ ॥ मिथुनप्रभवामेवकृत्वासृष्टिमतःपरम् ॥ संवर्द्धयितुमिच्छामिसर्व्वाएव
ममप्रजाः ॥ १७ ॥ ननिर्गतंपुरात्वत्तोनारीणांकुलमव्ययम् ॥ तेननारीकुलंस्रष्टुंशक्तिर्ममनविद्यते ॥ १८ ॥ सर्व्वासामेवशक्तीनांत्वत्तःखलुसमुद्भवः ॥
तस्मात्सर्व्वत्रसर्व्वेषांसर्व्वशक्तिप्रदायिनि ॥ १९ ॥ त्वामेववरदामद्यप्रार्थयामिसुरेश्वरीम् ॥ चराचरविवृद्ध्यर्थमंशेनैकेनसर्व्वगे ॥ २० ॥ दक्षस्यमम
पुत्रस्यपुत्रीभवभवार्द्दिनि ॥ एवंसायाचितादेवीब्रह्मणाब्रह्मयोनिना ॥ २१ ॥ शक्तिमेकांभ्रुवोर्मध्यात्ससर्ज्जात्मसमप्रभाम् ॥ तामाहप्रहसन्प्रेक्ष्यदेवदेव
वरोहरः ॥ २२ ॥ ब्रह्माणंतपसाराध्यकुरुतस्ययथेप्सितम् ॥ तामाज्ञांपरमेशस्यशिरसाप्रतिगृह्यसा ॥ २३ ॥ ब्रह्मणोवचनाद्देवीदक्षस्यदुहिताभवत् ॥
दत्त्वैवमतुलांशक्तिंब्रह्मणेब्रह्मरूपिणी ॥ २४ ॥ विवेशदेहंदेवस्यदेहश्चान्तरधीयत ॥ तदाप्रभृतिलोकेस्मिन्स्त्रियाभोगःप्रतिष्ठितः ॥ २५ ॥ प्रजासृष्टि
श्चविप्रेन्द्रामैथुनेनप्रवर्त्तते ॥ एतद्वःसर्व्वमाख्यातंदेव्याःशक्तिसमुद्भवम् ॥२६॥ पुण्यमृद्धिकरंश्राव्यंभूतसर्गानुषङ्गतः ॥ यइदंकीर्त्तयेन्नित्यंदेव्याःशक्ति
समुद्भवम्॥पुण्यंसर्व्वमवाप्नोतिपुत्रांश्चलभतेशुभान् ॥२७॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेसृष्टिनिरूपणंनामचतुर्द्दशोऽध्यायः ॥१४॥
॥ वायुरुवाच ॥ एवंलब्ध्वापरांशक्तिमीश्वरादवशाश्वतीम् ॥ मैथुनप्रभवांसृष्टिंकर्त्तुकामःप्रजापतिः ॥ १ ॥ स्वयमप्यर्द्धतोनारीचार्द्धेनपुरुषोऽभवत् ॥
याऽर्द्धेननारीसातस्माच्छतरूपाव्यजायत ॥ २ ॥ विराजमसृजद्ब्रह्मासोऽर्द्धेनपुरुषोविराट् ॥ सवैस्वायम्भुवःपूर्व्वंपुरुषोमनुरुच्यते ॥३ ॥ सादेवीशतरू
पातुतपःकृत्वासुदुश्चरम् ॥ भर्त्तारंदीप्तयशसंमनुमेवाभ्यपद्यत ॥४॥ तस्मात्तुशतरूपासापुत्रद्वयमसूयत ॥ प्रियव्रतोत्तानपादौपुत्रौपुत्रवतांवरौ ॥५॥
कन्येद्वेचमहाभागेयाभ्यांजातास्त्विमाःप्रजाः ॥ आकूतिरेकाविज्ञेयाप्रसूतिरपरास्मृता॥६॥स्वायंभुवःप्रसूतिन्तुददौदक्षायतांप्रभुः ॥ रुचेःप्रजापतेश्चैव
आकूतिंप्रत्यपादयत् ॥ ७ ॥ आकूत्यांमिथुनंजज्ञेमानसस्यरुचेःशुभम् ॥ यज्ञश्चदक्षिणाचैवयाभ्यांसंवर्द्धितंजगत् ॥ ८ ॥ स्वायम्भुवसुतायान्तुप्रसूत्यां
लोकमातरः ॥ चतस्रोविंशतिंकन्यादक्षस्त्वजनयत्प्रभुः ॥ ९ ॥ श्रद्धालक्ष्मीर्धृतिःपुष्टिस्तुष्टिर्मेधाक्रियातथा ॥ बुद्धिर्लज्जावपुःशान्तिःसिद्धिःकीर्त्तिस्त्रयो
दशी॥ १०॥पत्न्यर्थंप्रतिजग्राहधर्म्मोदाक्षायणीःप्रभुः॥ताभ्यःशिष्टायवीयस्यएकादशसुलोचनाः॥ ११॥ख्यातिःसत्यथसम्भूतिःस्मृतिःप्रीतिःक्षमातथा ॥
सन्नतिश्चानसूयाचऊर्ज्जास्वाहास्वधातथा॥ १२॥भृगुःशर्व्वोमरीचिश्चअङ्गिराःपुलहःक्रतुः ॥ पुलस्त्योऽत्रिर्वसिष्ठश्चपावकःपितरस्तथा ॥१३॥ ख्यात्या
द्याजगृहुःकन्यामुनयोमुनिसत्तमाः ॥कामाद्यास्तुयशोऽन्तायेतेत्रयोदशसूनवः॥ १४॥धर्म्मस्यजज्ञिरेतासुश्रद्धाद्यासुसुखोत्तराः ॥ दुःखोत्तराश्चहिंसाया

मधर्म्मस्यचसन्ततौ॥१५॥निकृत्यादयउत्पन्नाःपुत्राश्चाधर्म्मलक्षणाः॥नैषांभार्य्याश्चपुत्रावासर्व्वेह्यनियमाःस्मृताः॥१६॥सएषतामसःसर्गोजज्ञेऽधर्म्मनि
यामकः॥यासादक्षस्यदुहितारुद्रस्यदयितासती॥१७॥भर्तृनिन्दाप्रसङ्गेनत्यक्त्वादाक्षायणींतनुम् ॥ दक्षञ्चदक्षभार्य्याञ्चविनिन्द्यसहबन्धुभिः॥१८॥सामे
नायामाविरभूत्पुत्रीहिमवतोगिरेः ॥ रुद्रस्तुतांसतींदृष्ट्वारुद्रांस्त्वात्मसमप्रभान्॥१९॥यथासृजदसंख्यातांस्तथाकथितमेवच ॥ भृगोःख्यात्यांसमुत्पन्ना
लक्ष्मीर्नारायणप्रिया ॥ २० ॥ देवौधातृविधातारौमन्वन्तरविचारिणौ ॥ तयोर्वैपुत्रपौत्राद्याःशतशोऽथसहस्रशः ॥ २१ ॥ स्वायम्भुवेऽन्तरेऽतीताःस
र्व्वेतेभार्गवामताः ॥ मरीचेरपिसम्भूतिःपौर्णमासमसूयत ॥२२॥ कन्याचतुष्टयञ्चैवमहीयांसस्तदन्वयाः ॥ येषांवंशेसमुत्पन्नोबहुपुत्रःसकाश्यपः॥२३॥
स्मृतिश्चाङ्गिरसःपत्नीजनयामासवैसुतौ ॥ आग्नीध्रंशरभञ्चैवतथाकन्याचतुष्टयम् ॥ २४ ॥ तदीयाःपुत्रपौत्राश्चयेऽतीतास्तेसहस्रशः ॥ प्रीत्यांपुलस्त्य
भार्य्यायांदन्तोऽग्निरभवत्सुतः ॥ २५ ॥ पूर्व्वजन्मनियोऽगस्त्यःस्मृतःस्वायम्भुवेऽन्तरे ॥ तत्सन्ततीयाबहवःपौलस्त्याइतिविश्रुताः ॥ २६ ॥ क्षमातु
सुषुवेपुत्रान्पुलहस्यप्रजापतेः ॥ कर्द्दमश्चासुरीयश्चसहिष्णुश्चेतितेत्रयः ॥२७॥ त्रेताग्निवर्च्चसःसर्व्वेएषांवंशःप्रतिष्ठितः ॥ क्रतोःक्रतुसमान्पुत्रान्सन्नतिः
सुषुवेसुतान् ॥ २८ ॥ नैषांभार्य्याश्चपुत्राश्चसर्व्वेतेह्यूर्द्ध्वरेतसः ॥ षष्टिस्तानिसहस्राणिवालखिल्याइतिस्मृताः ॥ २९ ॥ अनूरुणाग्रतोयान्तिपरिवार्य्य
दिवाकरम् ॥ अत्रेर्भार्य्यानसूयाचपञ्चात्रेयानसूयत ॥ ३० ॥ कन्यकाञ्चश्रुतिर्नाममाताशङ्खपदस्यया ॥ सत्यनेत्रश्चहव्यश्चआपोमूर्त्तिःशनैश्चरः॥३१॥
सोमश्चपञ्चमस्त्वेतेपञ्चात्रेयाःप्रकीर्त्तिताः ॥ तेषांपुत्राश्चपौत्राश्चआत्रेयाणांमहात्मनाम् ॥ ३२ ॥ स्वायम्भुवेऽन्तरेऽतीताःशतशोऽथसहस्रशः ॥ ऊर्ज्जाया
न्तुवसिष्ठस्यपुत्रावैसप्तजज्ञिरे ॥ ३३ ॥ ज्यायसीचस्वसातेषांपुण्डरीकासुमध्यमा ॥ रजोगात्रोर्द्ध्वबाहूचसवनश्चानयश्चयः ॥ ३४ ॥ सुतपाःशुक्रइत्येतेस
प्तसप्तर्षयःस्मृताः ॥ गोत्राणिनामभिस्तेषांवासिष्ठानांमहात्मनाम् ॥३५॥ स्वायम्भुवेऽन्तरेऽतीतेन्यर्ब्बुदानिशतानिच ॥ इत्येषऋषिसर्गस्तुसानुबन्धःप्र
कीर्त्तितः ॥ ३६ ॥ समासाद्विस्तराद्वक्तुमशक्योऽयमितिद्विजाः ॥ योऽसौरुद्रात्मकोवह्निर्ब्रह्मणोमानसःसुतः ॥ ३७ ॥ स्वाहातस्यप्रियालेभेपुत्रांस्त्रीन
मितौजसः ॥ पावकःपवमानश्चशुचिरित्येवतेत्रयः ॥३८॥ निर्म्मन्थ्यःपवमानःस्याद्वैद्युतःपावकःस्मृतः॥सूर्य्येतपतियश्चासौशुचिःसौरउदाहृतः ॥३९॥
हव्यवाहःकव्यवाहःसहरक्षाइतित्रयः ॥ त्रयाणांक्रमशःपुत्रादेवपित्र्यासुराश्चते ॥ ४० ॥ एतेषांपुत्रपौत्राश्चचत्वारिंशन्नवैवते ॥ काम्यनैमित्तिकाजस्रक
र्म्मसुत्रिषुसंस्थिताः ॥ ४१ ॥ सर्व्वेतपस्विनोज्ञेयाःसर्व्वेव्रतभृतस्तथा ॥ सर्व्वेरुद्रात्मकाश्चैवसर्व्वेरुद्रपरायणाः ॥ ४२ ॥ तस्मादग्निमुखेयत्तद्दत्तंस्या
द्येनकेनचित् ॥ तत्सर्व्वंरुद्रमुद्दिश्यदत्तंस्यान्नात्रसंशयः ॥ ४३ ॥ इत्येवंनिश्चयोऽग्नीनामनुक्रान्तोयथातथम् ॥ नातिविस्तरतोविप्राःपितॄन्वक्ष्याम्य

तःपरम् ॥४४ ॥ ब्रह्मणःपितृवर्ष्मत्वात्सृजतोजज्ञिरेतदा ॥ मध्वादयःषडृतवःस्वान्पितॄन्परिचक्षते ॥४५॥ यस्मात्षडृतवस्तेषांस्थानंस्थानाभिमा
निनाम् ॥ ऋतवःपितरस्तस्मादित्येषावैदिकीश्रुतिः ॥४६॥ यस्माद्दतुषुसर्व्वेहिजायन्तेस्थाणुजङ्गमाः ॥तस्मादेतेऽपिपितर आर्त्तवाइतिचश्रुतम्॥४७॥
एवंपितॄणामेतेषामृतुकालाभिमानिनाम् ॥ ऋतुत्वमार्त्तवत्वञ्चपितृत्वञ्चप्रकीर्त्तितम् ॥४८॥ मन्वन्तरेषुसर्व्वेषुपितरस्तेऽभिमानिनः ॥ आतैश्वर्य्यामहा
त्मानस्तिष्ठन्तीहाब्भ्रसङ्गमात् ॥ ४९ ॥ अग्निष्वात्ताबर्हिषदःपितरोद्विविधाःस्मृताः॥ अयज्वानश्चयज्वानःक्रमात्तेगृहमेधिनः॥५०॥स्वधासूतपितृभ्य
श्चद्वेकन्येलोकविश्रुते ॥ मेनाश्चधरणीश्चैवयाभ्यांविश्वमिदंधृतम् ॥५१॥अग्निष्वात्तसुतामेनाधरणीबर्हिषत्सुता ॥ मेनाहिमवतःपत्नीमैनाकंक्रौञ्चमेवच
॥५२ ॥गौरींगङ्गांचसुषुवेभवाङ्गाश्लेषपावनीम् ॥ मेरोस्तुधरणीपत्नीदिव्यौषधिसमन्वितम् ॥५३॥ मन्दरंसुषुवेपुत्रंचित्रसुन्दरकन्दरम् ॥ सएवमन्दरः
श्रीमान्मेरुपुत्रस्तपोबलात् ॥५४॥ साक्षाच्छ्रीकण्ठनाथस्याशिवस्यावासतांगतः॥सासूतधरणीभूयस्तिस्रःकन्याश्चविश्रुताः ॥५५॥वेलांचनियतिंचैवतृ
तीयामपिचायतिम् ॥ आयतिर्नियतिश्चैवपत्न्यौद्वेभृगुपुत्रयोः ॥ ५६ ॥ स्वायम्भुवेऽन्तरेपूर्व्वंकथितस्तुतदन्वयः ॥ सुषुवेसागराद्वेलाकन्यामेकामनि
न्दिताम्॥ ५७ ॥सवर्णानामसामुद्रींपत्नींप्राचीनबर्हिषः ॥ सामुद्रीसुषुवेपुत्रान्दशप्राचीनबर्हिषः ॥५८॥ सर्व्वेप्राचेतसानामधनुर्व्वेदस्यपारगाः ॥ एषां
स्वायम्भुवेदक्षःपुत्रत्वमगमत्पुरा॥५९॥ त्रियम्बकस्यशापेनचाक्षुषस्यान्तरेमनोः ॥ इत्येतेब्रह्मपुत्राणांधर्म्मादीनांमहात्मनाम् ॥६०॥ नातिसंक्षेपतोवि
प्रानातिविस्तरतःक्रमात् ॥वर्णितावैमयावंशादिव्यदेवगणान्विताः॥६१॥ क्रियावन्तःप्रजावन्तोमहर्द्धिभिरलङ्कृताः ॥ प्रजानांसन्निवेशोऽयंप्रजापतिसमु
द्भवः॥६२॥नाहिशक्यःप्रसंख्यातुंवर्षकोटिशतैरपि॥राज्ञामपिचयोवंशोद्विधासोऽपिप्रवर्त्तते॥६३॥सूर्य्यवंशःसोमवंशइतिपुण्यतमःक्षितौ ॥इक्ष्वाकुरम्ब
रीषश्चययातिर्नहुषादयः॥६४॥पुण्यश्लोकाःश्रुतायेऽत्रतेऽपितद्वंशसम्भवाः ॥ अन्येचराजऋषयोनानावीर्य्यपराक्रमाः॥६५॥ किंतैःफलमनुक्रान्तैरुक्तपू
र्व्वैःपुरातनैः ॥ किंचेश्वरकथावृत्तायत्रतत्रान्यकीर्त्तनम् ॥ ६६ ॥ नसद्भिःसम्मतंमत्वानोत्सहेबहुभाषितुम् ॥ प्रसङ्गादीश्वरस्यैवप्रभावद्योतनादपि ॥
सर्गादयोऽपिकथ्यन्तइत्यलंतत्प्रविस्तरैः ॥ ६७ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेस्वायम्भुववंशवर्णनंनामपंचदशोऽध्यायः ॥१५॥
ऋषयऊचुः ॥ देवीदक्षस्यतनयात्यक्त्वादाक्षायणींतनुम् ॥ कथंहिमवतःपुत्रीमेनायामभवत्पुरा ॥१॥कथंचनिन्दितोरुद्रोदक्षेणचमहात्मना ॥ निमित्त
मपिकिंतत्रयेनस्यान्निन्दितोभवः ॥ २ ॥ उत्पन्नश्चकथंदक्षोअपिशापाद्भवस्यतु ॥ चाक्षुषस्यान्तरेपूर्व्वंमनोः प्रब्रूहिमारुत ॥ ३ ॥ वायुरुवाच ॥
शृण्वन्तुकथयिष्यामिदक्षस्यलघुचेतसः ॥ वृत्तंपापात्प्रमादाच्चविश्वामरविदूषणम् ॥४॥ पुरासुरासुराःसर्व्वेसिद्धाश्चपरमर्षयः ॥ कदाचिद्द्रष्टुमीशानं

हिमवच्छिखरंययुः ॥ ५ ॥ तदादेवश्चदेवीचदिव्यासनगतावुभौ ॥ दर्शनंददतुस्तेषांदेवादीनांद्विजोत्तमाः ॥ ६ ॥ तदानीमेवदक्षोऽपिगतस्तत्रसहामरैः ॥
जामातरंहरंद्रष्टुंद्रष्टुश्चात्मसुतांसतीम् ॥ ७ ॥ तदात्मगौरवादेवदेव्यादक्षेसमागते ॥ देवादिभ्योविशेषेणनकाचिदभवत्स्मृतिः ॥ ८ ॥ तस्यतस्याः
परंभावमज्ञातुश्चापिकेवलम् ॥ पुत्रीत्येवंविमूढस्यतस्यांवैरमजायत ॥ ९ ॥ ततस्तेनैववैरेणविधिनाचप्रचोदितः ॥ नाजुहावभवंदक्षोदीक्षितस्तामपि
द्विषन् ॥ १० ॥ अन्याञ्जामातरःसर्व्वानाहूयसयथाक्रमम् ॥ शतशःपुष्कलामर्च्चांचकारचपृथक्पृथक् ॥ ११ ॥ तथातान्सङ्गताञ्छ्रुत्वानारदस्यमुखा
त्तदा ॥ ययौरुद्रायरुद्राणीविज्ञाप्यभवनंपितुः ॥ १२ ॥ अथसन्निहितंदिव्यंविमानंविश्वतोमुखम् ॥ लक्षणाढ्यंसुखारोहमतिमात्रमनोहरम् ॥
॥ १३ ॥ तप्तजाम्बूनदप्रख्यंचित्ररत्नपरिष्कृतम् ॥ मुक्तामयवितानाग्र्यस्रग्दामसमलङ्कृतम् ॥ १४ ॥ तप्तकाञ्चननिर्व्यूहंरत्नस्तम्भशतावृतम् ॥
वज्रकलिपतसोपानंविद्रुमस्तम्भतोरणम् ॥ १५ ॥ पुष्पपट्टपरिस्तीर्णचित्ररत्नमहासनम् ॥ वज्रजालकिरच्छिद्रमच्छिद्रमणिकुट्टिमम् ॥ १६ ॥
मणिदण्डमनोज्ञेनमहावृषभलक्ष्मणा ॥ अलंकृतपुरोभागमभ्रशुभ्रेणकेतुना ॥ १७ ॥ रत्नकंचुकगुप्ताङ्गैश्चित्रवेत्रैकपाणिभिः ॥ अधिष्ठितमहा
द्वारमप्रधृष्यैर्गणेश्वरैः ॥१८॥मृदङ्गतालगीतादिवेणुवीणाविशारदैः॥विदग्धवेशभाषैश्चबहुभिःस्त्रीजनैर्वृतम्॥१९॥ आरुरोहमहादेवीसहप्रियसखीजनैः ॥
चामरव्यजनेतस्यावज्रदण्डेमनोहरे ॥ २० ॥ गृहीत्वारुद्रकन्येद्वेविवीजतुरुभेशुभे ॥ तदाचामरयोर्मध्येदेव्यावदनमाबभौ ॥ २१ ॥ अन्योन्यंयुध्यतो
र्मध्येहंसयोरिवपङ्कजम् ॥ छत्रंशशिनिभंतस्याश्चूडोपरिसुमालिनी ॥ २२ ॥ धृतमुक्तापरिक्षिप्तंबभारप्रेमनिर्भरा ॥ तच्छत्रमुज्ज्वलंदेव्यारुरुचेवदनो
परि ॥२३॥ उपर्य्यमृतभाण्डस्यमण्डलंशशिनोयथा ॥ अथचाग्रेसमासीनासुस्मितास्याशुभावती ॥ २४ ॥ अक्षद्यूतविनोदेनरमयामासपार्व्वतीम् ॥
सुयशाःपादुकेदेव्याःशुभेरत्नपरिष्कृते ॥ २५ ॥ स्तनयोरन्तरेकृत्वातदादेवीमसेवत ॥ अन्याकाञ्चनचार्व्वङ्गीदीप्तंजग्राहदर्पणम् ॥ २६ ॥ अपरातालं
वृन्तञ्चपरताम्बूलपेटिकाम् ॥ काचित्क्रीडाशुकंचारुकरेचकारभामिनी ॥ २७ ॥ काचित्तुसुमनोज्ञानिपुष्पाणिसुरभीणिच ॥ काचिदाभरणाधारं
बभारकमलेक्षणा ॥ २८ ॥ काचिच्चपुनरालेपंसप्रसूनंसभाजनम् ॥ अन्याश्चसुदृशस्तास्तायथास्वमुचितक्रियाः ॥ २९ ॥ आवृत्त्यान्तरंमहादेवीमसे
वन्तसमन्ततः ॥ अतीवशुशुभेतासामन्तरेपरमेश्वरी ॥ ३० ॥ तारापरिषदोमध्येचन्द्रलेखेवशारदी ॥ ततःशङ्खसमुत्थस्यनादस्यसमनन्तरम्॥ ३१ ॥
प्रास्थानिकोमहानादःपटहःसमताड्यत ॥ ततोमधुरवाद्यानिसहतालोद्यतैःस्वनैः ॥ ३२ ॥ अनाहतानिसन्नेदुःकाहलानांशतानिच ॥ सायुधानांगणेशा
नांमहेशसमतेजसाम् ॥ ३३ ॥ सहस्राणिशतान्यष्टौतदानींपुरतोययुः ॥ तेषांमध्येवृषारूढोगजारूढोयथागुहः ॥ ३४ ॥ जगामगणपःश्रीमान्सोमनंदी

सुरार्च्चितः ॥ देवदुन्दुभयोनेदुर्दिविदिव्यसुखस्वनाः ॥ ३५ ॥ ननृतुर्मुनयःसर्व्वे मुमुदुःसिद्धयोगिनः ॥ समृजुःपुष्पवृष्टिञ्चविमानोपरिवारिदाः ॥ ३६ ॥
तदादेवगणैश्चान्यैःपथिसर्व्वत्रसङ्गता ॥ क्षणादिवपितुर्गेहंप्रविवेशमहेश्वरी ॥ ३७ ॥ तांदृष्ट्वाकुपितोदक्षश्चात्मनःक्षयकारणात् ॥ तस्यायवीयसीभ्यो
ऽपिचक्रेपूजामसत्कृताम् ॥ ३८ ॥ तदाशशिमुखीदेवीपितरंसदसिस्थितम् ॥ अम्बिकायुक्तमव्यग्रमुवाचकृपणंवचः ॥ ३९ ॥ देव्युवाच ॥ ब्रह्मादयः
पिशाचान्तायस्याज्ञावशवर्तिनः ॥ सदेवःसांप्रतंतातविधिनानार्च्चितःकिल ॥ ४० ॥ तदास्तांममज्यायस्याःपुत्र्याःपूजांकिमीदृशीम् ॥ असत्कृताम
वज्ञायकृतवानासिगर्हिताम् ॥ ४१ ॥ एवमुक्तोऽब्रवीदेनांदक्षःक्रोधादमार्षितः ॥ त्वत्तःश्रेष्ठावरिष्ठाश्चपूज्याबालाःसुताम ॥ ४२ ॥ तासान्तुयेचभर्तार
स्तेमेबहुमतामुदा ॥ गुणैश्चाप्यधिकाःसर्व्वैभर्त्तुस्तेत्र्यम्बकादपि ॥ ४३ ॥ स्तब्धात्मातामसःसर्व्वस्त्वमिमंसमुपाश्रिता ॥ तेनत्वामवमन्येऽहंप्रतिकू
लोहिमेभवः ॥ ४४ ॥ तथोक्तापितरंदक्षंक्रुद्धादेवीदमब्रवीत् ॥ शृण्वतामेवसर्वेषांयेयज्ञसदसिस्थिताः ॥ ४५ ॥ अकस्मान्ममभर्तारमजाताशेषदूष
णम् ॥ वाचादूषयसेदक्षसाक्षाल्लोकमहेश्वरम् ॥ ४६ ॥ विद्याचौरोगुरुद्रोहीदेवेश्वरविदूषकः ॥ तएतेबहुपाप्मानःसद्योदण्ड्याइतिश्रुतिः ॥ ४७ ॥
तस्मादत्युत्कटस्यास्यपापस्यसदृशोभृशम् ॥ सहसादारुणोदण्डस्तवदेवाद्भविष्यति ॥४८॥ त्वयानपूजितोयस्माद्देवदेवस्त्रियम्बकः ॥ तस्मात्तवकुलं
दुष्टंनष्टमित्यवधारय ॥४९॥ इत्युक्त्वापितरंरुष्टासतीसन्त्यज्यसाव्यथा ॥ तदीयाञ्चतनुंत्यक्त्वाहिमवन्तंययौगिरिम् ॥५०॥सपर्व्वतवरःश्रीमाँल्लब्धपुण्य
फलोदयः ॥ तदर्थमेवकृतवान्सुचिरंदुश्चरंतपः ॥ ५१॥ तस्मात्तमनुगृह्णातिभूधरेश्वरमीश्वरी ॥ स्वेच्छयापितरंचक्रेस्वात्मनोयोगमायया ॥ ५२ ॥
यदागतासतीदक्षंविनिंद्यभयविह्वला ॥ तदातिरोहितामन्त्राविहतश्चततोऽध्वरः ॥ ५३ ॥ तदुपश्रुत्यगमनंदेव्यास्त्रिपुरमर्द्दनः ॥ दक्षायचऋषिभ्यश्चचु
कोपचशशापतान् ॥ ५४ ॥ यस्मादवमतादक्षमत्कृतेऽनागसासती ॥ पूजिताश्चेतराःसर्व्वाःस्वसुताभर्त्तृभिःसह ॥ ५५ ॥ वैवस्वतेऽन्तरेयस्मात्तवजा
मातरस्त्वमी ॥ उत्पतस्यन्तेसमंसर्व्वैब्राह्मयज्ञेष्वयोनिजाः ॥ ५६ ॥ भवितामानुषोराजाचाक्षुषस्यत्वमन्वये ॥ प्राचीनबर्हिषःपौत्रःपुत्रश्चापिप्रचे
तसः ॥५७॥अहंतत्रापितेविघ्नमाचरिष्यामिदुर्मते ॥ धर्म्मार्थकामयुक्तेषुकर्मस्वपिपुनःपुनः ॥ ५८ ॥ तेनैवंव्याहृतोदक्षोरुद्रेणामिततेजसा ॥ स्वा
यम्भुवींतनुंत्यक्त्वापपातभुविदुःखितः ॥ ५९ ॥ ततःप्राचेतसोदक्षोजज्ञेवैचाक्षुषेऽन्तरे ॥ प्राचीनबर्हिषःपौत्रःपुत्रश्चैवप्रचेतसः ॥ ६० ॥ भृग्वादयोऽपिते
जातावैमनोर्वैवस्वतस्यतु ॥ अन्तरेब्रह्मणोयज्ञेवारुणींबिभ्रतस्तनुम् ॥६१॥ तदादक्षस्यधर्म्मार्थंप्रवृत्तस्यदुरात्मनः ॥ महेशः कृतवान्विघ्नंमनौवैवस्वते
साति ॥ ६२ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायां पूर्व्वभागेषोडशोऽध्यायः॥१६॥ऋषयऊचुः ॥ कथंदक्षस्यधर्म्मार्थंप्रवृत्तस्यदुरात्मनः ॥ महेशः

कृतवान्विघ्नमेतदिच्छामहेवयम् ॥१॥ वायुरुवाच ॥ विश्वस्यजगतोमातुरपिदेव्यास्तपोबलात् ॥ पितृभावमुपागम्यमुदितेहिमवद्गुरौ ॥२ ॥ देवेऽपि चकृतोद्वाहेहिमवच्छिखरालये ॥क्रीडमानेतयासार्द्धंकालेबहुतरेगते॥३॥वैवस्वतेऽन्तरेप्राप्तेदक्षःप्राचेतसःस्वयम्॥ अश्वमेधेनयज्ञेनयक्ष्यमाणोऽन्वपद्यत ॥४॥ततोहिमवतःपृष्ठेदक्षोवैयज्ञमाहरत् ॥ गङ्गाद्वारेशुभेदेशेऋषिसिद्धनिषेविते ॥५॥ तस्यतस्मिन्मखेदेवाःसर्व्वेशक्रपुरोगमाः ॥ गमनायसमागम्यबुद्धिमापेदिरेतदा ॥ ६ ॥ आदित्यावसवोरुद्राःसाध्याःसहमरुद्गणैः ॥ सोमपाश्चैवपितरआज्यपाधूमपास्तथा ॥ ७ ॥ अश्विनौपितरश्चैवतथाचान्येमहर्षयः ॥ विष्णुनासहिताःसर्व्वेह्यागतायज्ञभागिनः ॥ ८ ॥ दृष्ट्वादेवकुलंसर्व्वमीश्वरेणविनागतम् ॥ दधीचिर्मन्युनाविष्टोदक्षमेवमभाषत ॥ ९ ॥ दधीचिरुवाच ॥ अपूज्यपूजनेचैवपूज्यानांचाप्यपूजने ॥ नरःपापमवाप्नोतिमहद्वैनात्रसंशयः ॥ १० ॥ असतांसम्मतिर्यत्रसतामवमतिस्तथा ॥ दण्डोदैवकृतस्तत्रसद्यःपततिदारुणः ॥ ११ ॥ एवमुक्त्वातुविप्रर्षिःपुनर्दक्षमभाषत ॥ पूज्यन्तुपशुभर्त्तारंकस्मान्नार्च्चयसेप्रभुम् ॥ १२ ॥ दक्षउवाच ॥ सन्तिमे बहवोरुद्राःशूलहस्ताःकपर्द्दिनः ॥ एकादशावस्थितायेनान्यंवेद्मिमहेश्वरम् ॥ १३ ॥ दधीचिरुवाच ॥ किमेभिरमरैरन्यैःपूजितैरध्वरेफलम् ॥ राजाचेदध्वरस्यास्यनरुद्रःपूज्यतेत्वया ॥ १४ ॥ ब्रह्मविष्णुमहेशानांस्रष्टायःप्रभुरव्ययः ॥ ब्रह्मादयःपिशाचान्तायस्यकैङ्कर्य्यवादिनः ॥ १५ ॥ प्रकृतीनांपरश्चैवपुरुषस्यचयःपरः ॥ चिन्त्यतेयोगविद्भिर्ऋषिभिस्तत्त्वदर्शिभिः ॥ १६ ॥ अक्षरंपरमंब्रह्मअसच्चसदसच्चयत् ॥ अनादिमध्यनिधनमप्रतर्क्यंसनातनम् ॥ १७ ॥ यःस्रष्टाचैवसंहर्ताभर्ताचैवमहेश्वरः ॥ तस्मादन्यंनपश्यामिशङ्करात्मानमध्वरे ॥ १८ ॥ दक्षउवाच ॥ एतन्मखेशस्यसुवर्णपात्रेहविःसमस्तंविधिमन्त्रपूतम् ॥ विष्णोर्नयाम्यप्रतिमस्यभागंप्रभोर्विभज्याहवनीयमद्य ॥ १९ ॥ दधीचिरुवाच ॥ यस्मान्नाराधितोरुद्रःसर्व्वदेवेश्वरेश्वरः ॥ तस्माद्दक्षतवाशेषोयज्ञोऽयंनभविष्यति ॥ २० ॥ इत्युक्त्वावचनंक्रुद्धोदधीचोमुनिसत्तमः ॥ निर्गम्यचततोदेशाज्जगामस्वकमाश्रमम् ॥२१॥ निर्गतेऽपिमुनौतस्मिन्देवादक्षंनतत्यजुः ॥ अवश्यमनुभाव्यत्वादनर्थस्यतुभाविनः ॥ २२ ॥ एतस्मिन्नेवकालेतुज्ञात्वैतत्सर्व्वमीश्वरात् ॥ दग्धुंदक्षाध्वरंविप्रादेवीदेवमचोदयत् ॥ २३ ॥ देव्यासंचोदितोदेवोदक्षाध्वरजिघांसया ॥ ससर्ज्जसहरोवीरंवीरभद्रंगणेश्वरम् ॥ २४ ॥ सहस्रवदनंदेवंसहस्रकमलेक्षणम् ॥ सहस्रमुद्गरधरंसहस्रशरपाणिकम् ॥ २५ ॥ शूलटङ्कगदाहस्तंदीप्तकार्म्मुकधारिणम् ॥ चक्रवज्रधरंघोरंचन्द्रार्द्धकृतशेखरम् ॥ २६ ॥ कुलिशोद्द्योतितकरंतडिज्ज्वलितमूर्द्धजम् ॥ दंष्ट्राकरालंबिभ्राणंमहावक्त्रंमहोदरम् ॥२७॥ विद्युज्जिह्वंप्रलम्बोष्ठंमेघसागरनिस्वनम् ॥ वसानंचर्म्मवैयाघ्रंमहद्रुधिरनिस्रवम् ॥ २८ ॥ गण्डद्वितयसंसृष्टमण्डलीकृतकुण्डलम् ॥ वरामरशिरोमालावलीकलितशेखरम् ॥ २९ ॥ रणन्नूपुरकेयूरमहाकनकभूषितम्॥

रत्नसंचयसन्दीप्तंतारहारावृतोरसम् ॥ ३० ॥ महाशरभशार्दूलसिंहैःसदृशविक्रमम् ॥ प्रशस्तमत्तमातङ्गसमानगमनालसम् ॥ ३१ ॥ शङ्खचामर
कुन्देन्दुमृणालसदृशप्रभम् ॥ सतुषारमिवाद्रीन्द्रंसाक्षाज्जङ्गमतांगतम् ॥ ३२ ॥ ज्वालामालापरिक्षिप्तंदीप्तमौक्तिकभूषणम् ॥ तेजसाचैवदीप्यन्तं
युगान्तइवपावकम् ॥ ३३ ॥ सजानुभ्यांमहींगत्वाप्रणतःप्रांजलिस्ततः ॥ पार्श्वतोदेवदेवस्यपर्य्यतिष्ठद्गणेश्वरः ॥ ३४ ॥ मन्युनाचासृजद्भद्रांभद्रका
लींमहेश्वरीम् ॥ आत्मनःकर्म्मसाक्षित्वेतेनगन्तुंसहैवतु ॥ ३५ ॥ तंदृष्ट्वावस्थितंवीरभद्रंकालाग्निसन्निभम् ॥ भद्रयासहितंप्राहभद्रमस्त्वितिशङ्करः
॥ ३६ ॥ सचविज्ञापयामाससहदेव्यामहेश्वरम् ॥ आज्ञापयमहादेवकिंकार्य्यंकरवाण्यहम् ॥ ३७ ॥ ततस्त्रिपुरहाप्राहहैमवत्याप्रियेशया ॥ वीरभद्रं
महाबाहुंवाचाविपुलनादया ॥ ३८॥ देवदेवउवाच ॥ प्राचेतसस्यदक्षस्ययज्ञंसद्योविनाशय ॥ भद्रकाल्यासहासित्वमेतत्कृत्यंगणेश्वर ॥ ३९ ॥ अहम
प्यनयासार्द्धंरम्याश्रमसमीपतः ॥ स्थित्वावीक्षेगणेशानविक्रमंतवदुःसहम् ॥ ४० ॥ वृक्षाःकनखलेयेतुगङ्गाद्वारसमीपगाः ॥ सुवर्णशृङ्गस्यगिरेर्मेरुम
न्दरसन्निभाः ॥ ४१ ॥ तस्मिन्प्रदेशेदक्षस्ययज्ञःसम्प्रतिवर्त्तते ॥ सहसातस्ययज्ञस्यविघातंकुरुमाचिरम् ॥ ४२ ॥ इत्युक्तेसतिदेवेनदेवीहिमगिरीन्द्र
जा ॥ भद्रंभद्रांचसम्प्रेक्ष्यवत्संधेनुरिवौरसम् ॥ ४३ ॥ आलिंग्यचसमाघ्रायमूर्ध्निषड्वदनंयथा ॥ सस्मितावचनंप्राहमधुरंमधुरस्वनम् ॥ ४४ ॥ देव्यु
वाच ॥ वत्सभद्रमहाभागमहाबलपराक्रम ॥ मत्प्रियार्थंत्वमुत्पन्नोममममन्युंप्रमार्जय ॥ ४५ ॥ यज्ञेश्वरमनाहूययज्ञकर्म्मरतोऽभवत् ॥ दक्षोवैरेणतंत
स्माद्भिन्धियज्ञंगणेश्वरैः ॥ ४६ ॥ यज्ञलक्ष्मीन्त्वलक्ष्मींत्वंभद्रकृत्वाममाज्ञया ॥ यजमानंचतंहत्वावत्सहिंसयभद्रया ॥ ४७ ॥ अशेषामिवतामाज्ञां
शिवयोश्चित्रकृत्ययोः ॥ मूर्ध्निकृत्वानमस्कृत्यभद्रोगन्तुंप्रचक्रमे ॥ ४८ ॥ अथैषभगवान्क्रुद्धःप्रेतावासकृतालयः ॥ वीरभद्रोमहादेवोदेव्यामन्युप्रमा
र्ज्जकः ॥ ४९ ॥ ससर्ज्जरोमकूपेभ्योरोमजाख्यान्गणेश्वरान् ॥ दक्षिणाद्भुजदेशात्तुशतकोटिगणेश्वरान् ॥ ५० ॥ सदारान्सर्व्वतोभद्रान्साक्षाद्वामाच्चवै
भुजात् ॥ रुद्रानुभावान्रौद्रांश्चरुद्रवीर्य्यपराक्रमान् ॥ ५१ ॥ पादात्तथोरुदेशाच्चपृष्ठात्पार्श्वान्मुखाद्गलात् ॥ गुह्याद्गुल्फाच्छिरोमध्यात्कण्ठादास्या
त्तथोदरात् ॥ ५२ ॥ तथागणेश्वरैर्भद्रैर्भद्रतुल्यपराक्रमैः ॥ सम्छादितमभूत्सर्व्वंसाकाशविवरंजगत् ॥ ५३ ॥ सर्व्वेसहस्रहस्तास्तेसहस्रायुधपाणयः॥
रुद्रस्यानुचराःसर्व्वेसर्व्वेरुद्रसमप्रभाः ॥ ५४ ॥ शूलशक्तिगदाहस्ताष्टङ्कोपलशिलाधराः ॥ कालाग्निरुद्रसदृशास्त्रिनेत्राश्चजटाधराः ॥ ५५ ॥ निपेतु
र्भृशमाकाशेशतशःसिंहवाहनाः ॥ विनेदुश्चमहानादंजलदाइवभद्रजाः ॥ ५६॥ तैर्भद्रोभगवान्भद्रस्तथापरिवृतोबभौ ॥ कालानलशतैर्युक्तोयथान्तेका
लभैरवः ॥ ५७ ॥ तेषांमध्येसमारुह्यवृषेन्द्रंवृषभध्वजः ॥ जगामभगवान्भद्रःशुभ्रमभ्रंयथाभवः ॥ ५८ ॥ तमेवंवृषमारूढेभद्रेतुभसितप्रभः ॥ बभार

मौक्तिकच्छत्रंगृहीतसितचामरः ॥ ५९ ॥ सतदाशुशुभेपार्श्वेभद्रस्यभसितप्रभः ॥ भगवानिवशैलेन्द्रःपार्श्वेविश्वजगद्गुरोः ॥ ६० ॥ सोऽपितेनवभौ
भद्रःश्वेतचामरपाणिना ॥ सोमवर्णेनसौम्येनयथाशूलवरायुधः ॥६१॥ दध्मौशङ्खंसितंभद्रंभद्रस्यपुरतःशुभम् ॥ भानुकम्पोमहातेजाहैमरत्नैरलङ्कृतम्
॥ ६२ ॥ देवदुन्दुभयोनेदुर्दिविसङ्कुलनिस्वनाः ॥ ववृषुःशतशोमूर्ध्निपुष्पवर्षंबलाहकाः ॥ ६३ ॥ फुल्लानांमधुगर्भाणांपुष्पाणांगन्धवन्धवः ॥ मार्गानु
कूलसंवाहाववुश्चपथिमारुताः ॥ ६४ ॥ ततोगणेश्वराःसर्व्वेमत्तायुद्धबलोद्धताः ॥ ननृतुर्मुमुदुर्नेदुर्जहसुर्जगदुर्जगुः ॥ ६५ ॥ तदाभद्रगणान्तः
स्थोबभौभद्रःसभद्रया ॥ यथारुद्रगणान्तःस्थस्त्र्यम्बकोऽम्बिकयासह ॥ ६६ ॥ तत्क्षणादेवदक्षस्ययज्ञवाटंहिरण्मयम् ॥ प्रविवेशमहाबाहुर्वीरभद्रोऽ
द्रिजानुगः ॥ ६७ ॥ ततस्तुदक्षप्रतिपादितस्यक्रतुप्रधानस्यगणप्रधानः ॥ प्रयोगभूमिंप्रविवेशभद्रोरुद्रोयथान्तेभुवनंदिधक्षुः ॥ ६८ ॥
इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेदक्षयज्ञमथनंनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ वायुरुवाच ॥ ॥ ततोविष्णुप्रधानानां
सुराणाममितौजसाम् ॥ ददर्शचमहत्सत्रंचित्रध्वजपरिच्छदम् ॥ १ ॥ सुदर्भऋजुसंस्तीर्णसुसमिद्धहुताशनम् ॥ कांचनैर्यज्ञभाण्डै
श्चभ्राजिष्णुभिरलंकृतम् ॥ २ ॥ ऋषिभिर्यज्ञपटुभिर्यथावत्कर्म्मकर्त्तृभिः ॥ विधिनावेददृष्टेनस्वनुष्ठितबहुक्रमम् ॥ ३ ॥ देवाङ्गनासहस्राढ्यमप्सरोगण
सेवितम् ॥ वेणुवीणारवैर्जुष्टंवेदघोषैश्चबृंहितम् ॥ ४ ॥ दृष्ट्वादक्षाध्वरंवीरोवीरभद्रःप्रतापवान् ॥ सिंहनादंतदाचक्रेगम्भीरोनिनदोयथा ॥ ५ ॥
ततःकिलकिलाशब्दआकाशम्पूरयन्निव ॥ गणेश्वरैःकृतोयज्ञेमहान्यक्कृतसागरः ॥ ६ ॥ तेनशब्देनमहतात्रस्ताःसर्व्वेदिवौकसः ॥ दुद्रुवुःपरितोभीताः
स्रस्तवस्त्रविभूषणाः ॥ ७ ॥ किंस्विद्भिन्नोमहामेरुःकिंस्वित्सन्दीर्य्यतेमही ॥ किमिदंकिमिदंचेतिजजल्पुस्त्रिदशाभृशम् ॥ ८ ॥ मृगेन्द्राणांयथानादंग
जेन्द्रागहनेवने ॥ श्रुत्वातथाविधंकेचित्तत्यजुर्जीवितंभयात् ॥ ९ ॥ पर्व्वताश्चव्यशीर्य्यंतचकम्पेचवसुन्धरा ॥ मरुतश्चव्यघूर्णन्तचुक्षुभेमकरालयः ॥
॥ १० ॥ अग्नयोनैवदीप्यन्तेनचदीप्यतिभास्करः ॥ ग्रहाश्चनप्रकाशन्तेनक्षत्राणिचतारकाः ॥ ११ ॥ एतस्मिन्नेवकालेतुयज्ञवाटंतदुज्ज्वलम् ॥
सम्प्रापभगवान्भद्रोभद्रैश्चसहभद्रया ॥ १२ ॥ तंदृष्ट्वाभीतभीतोऽपिदक्षोदृढइवस्थितः ॥ क्रुद्धवद्वचनंप्राहकोभवान्किमिहेक्षसे ॥ १३ ॥
तस्यतद्वचनंश्रुत्वादक्षस्यचदुरात्मनः ॥ वीरभद्रोमहातेजामेघगम्भीरनिस्वनः ॥१४॥ स्मयन्निवतमालोक्यदक्षंदेवांश्चऋत्विजः ॥ अर्थगर्भमसम्भ्रान्त
मवोचदुचितंवचः ॥ १५ ॥ वीरभद्रउवाच ॥ वयंह्यनुचराःसर्व्वेशर्व्वस्यामिततेजसः ॥ भागाभिलिप्सयाप्राप्ताभागोनःसम्प्रदीयताम् ॥ १६ ॥
अथचेदध्वरेऽस्माकंनभागःपरिकल्पितः ॥ कथ्यतांकारणंतत्रयुद्ध्यतांवामयामरैः ॥ १७ ॥ इत्युक्तास्तेगणेन्द्रेणदेवादक्षपुरोगमाः ॥ ऊचुर्मन्त्राः

प्रमाणंनोनवयंप्रभवस्त्विति ॥ १८ ॥ मन्त्राऊचुःसुरायूयंतमोऽपहतचेतसः ॥ येनप्रथमभागार्हंनयजध्वंमहेश्वरम् ॥ १९ ॥ तथोक्ताअपितैर्मन्त्रैर्देवाः
संमूढचेतसः ॥ भद्रायनददुर्भागंतत्प्रहारमभीप्सवः ॥ २० ॥ यदातथ्यञ्चपथ्यञ्चस्ववाक्यंतद्वृथाभवत् ॥ तदाततोययुर्मन्त्राब्रह्मलोकंसनातनम् ॥ २१ ॥
अथोवाचगणाध्यक्षोदेवान्विष्णुपुरोगमान् ॥ मन्त्राःप्रमाणंनकृतायुष्माभिर्बलगर्व्वितैः ॥ २२ ॥ यस्मादस्मिन्मखेदेवैरित्थंवयमसत्कृताः ॥ तस्माद्वो
जीवितैःसार्द्धमपनेष्यामिगर्व्वितम् ॥ २३ ॥ इत्युक्त्वाभगवान्क्रुद्धोव्यदहन्नेत्रवह्निना ॥ यज्ञवाटंमहाकूटंयथातिस्रःपुरोहरः ॥२४॥ ततोगणेश्वराःसर्व्वे
पर्व्वतोदग्रविग्रहाः॥यूपानुत्पाट्यहोतॄणांकण्ठेष्वाबध्यरज्जुभिः ॥२५॥यज्ञपात्राणिचित्राणिभित्त्वासञ्चूर्ण्यवारिणि ॥ गृहीत्वाचैवयज्ञाङ्गंगङ्गास्रोतसिचि
क्षिपुः ॥२६॥ तत्रदिव्यान्नपानानांराशयःपर्व्वतोपमाः ॥ क्षीरनद्योऽमृतस्रावाःसुस्निग्धदधिकर्द्दमाः ॥२७॥ उच्चावचानिमांसानिभक्ष्याणिसुरभीणिच ॥
रसवन्तिचपानानिलेह्यचोष्याणितानिवै ॥२८॥ वीरास्तद्भुञ्जतेवक्त्रैर्विलुम्पन्तिक्षिपन्तिच ॥ वज्रैश्चक्रैर्महाशूलैःशक्तिभिःप्रासपट्टिशैः ॥२९॥ मुसलैरसि
भिष्टंकैर्भिन्दिपालैःपरश्वधैः ॥ उद्धतांस्त्रिदशान्सर्व्वाँल्लोकपालपुरःसरान्॥३०॥बिभिदुर्बलिनोवीरावीरभद्राङ्गसम्भवाः ॥ छिन्दिभिन्धिक्षिपक्षिप्रंमार्य्य
तांदार्य्यतामिति ॥ ३१ ॥ हरस्वप्रहरस्वेतिपाटयोत्पाटयेतिच ॥ सरंभप्रभवाःक्रूराःशब्दाःश्रवणशङ्कवः ॥ ३२ ॥ तत्रतत्रगणेशानांजज्ञिरेसमरोचि
ताः ॥ विवृत्तनयनाःकेचिद्दष्टदंष्ट्रोष्ठतालवः ॥ ३३ ॥ आश्रमस्थान्समाकृष्यमारयन्तितपोधनान् ॥ स्रुवानपहरन्तश्चक्षिपन्तोऽग्निंजलेषुच ॥ ३४ ॥
कलशानपिभिन्दन्तश्छिन्दन्तोमणिवेदिकाः ॥ गायन्तश्चनदन्तश्चहसन्तश्चमुहुर्मुहुः ॥ ३५ ॥ रक्तासवंपिबन्तश्चननृतुर्गणपुङ्गवाः ॥ निर्म्मथ्यसेन्द्रान
मरान्गणेन्द्रावृषेन्द्रनागेन्द्रमृगेन्द्रसाराः ॥ ३६ ॥ चक्रुर्बहून्यप्रतिमप्रभावाःसहर्षरोमाणिविचेष्टितानि ॥ नन्दन्तिकेचित्प्रहरन्तिकेचिद्धावंतिकेचि
त्प्रलपंतिकेचित् ॥ ३७ ॥ नृत्यन्तिकेचिद्विहसन्तिकेचिद्वल्गन्तिकेचित्प्रमथामदेन ॥ केचिज्जिघृक्षन्तिघनान्सतोयान्केचिद्ग्रहीतुंरविमुत्पतन्ति ॥
॥ ३८ ॥ केचित्प्रसर्तुंपवनेनसार्द्धमिच्छन्तिभीमाःप्रमथावियत्स्थाः ॥ आक्षिप्यकेचिच्चवरायुधानिमहाभुजङ्गानिववैनतेयाः ॥ ३९ ॥ भ्रमन्तिदेवान
पिविद्रवन्तःखमण्डलेपर्व्वतकूटकल्पाः ॥ उपाट्यचोत्पाट्यगृहाणिकेचित्सजालवातायनवेदिकानि ॥ ४० ॥ प्रक्षिप्यविक्षिप्यजलस्यमध्येकालाम्बु
दाभाःप्रमथानिनेदुः॥उद्वर्त्तितद्वारकपाटकुड्यंविध्वस्तशालावलभीगवाक्षम्॥४१॥अहोबताभज्यतयज्ञवाटमनाप्तवद्वाक्यमिवायथार्थम् ॥ हानाथताते
तिपितःसुतेतिभ्रातर्ममाम्बेतिचमातुलेति॥४२॥उत्पाट्यमानेषुगृहेषुनार्य्योह्यनाथशब्दान्बहुशःप्रचक्रुः॥४३॥इतिश्रीशैवेमहापुराणेवायवीयसंहितायां
पूर्व्वभागेदक्षयज्ञमथनंनामाष्टादशोऽध्यायः १८वायुरुवाच॥ततस्त्रिदशमुख्यास्तेविष्णुशक्रपुरोगमाः॥सर्व्वेभयपरित्रस्तादुद्रुवुर्भयविह्वलाः॥१॥निर्जैरदू

षितैररङ्गैर्दृष्ट्वादेवानुपद्रुतान्॥दण्डयानदण्डितान्मत्वाचुकोपगणपुङ्गवः॥२॥ ततस्त्रिशूलमादायसर्व्वशक्तिनिवर्हणम् ॥ ऊर्द्ध्वदृष्टिर्महाबाहुर्मुखाज्ज्वालां
समुत्सृजन् ॥३॥अमरानभिदुद्रावद्विरदानिवकेसरी ॥ तानभिद्रवतस्तस्यगमनंसुमनोहरम् ॥४॥वारणस्येवमत्तस्यजगामप्रेक्षणीयताम् ॥ ततस्तत्क्षो
भयामासमहत्सुरबलंबली॥५॥महासरोवरंयद्वन्मत्तोवारणयूथपः॥विकुर्व्वन्बहुधावर्णान्नीलपाण्डुरलोहितान्॥६॥बिभ्रद्व्याघ्राजिनंवासोहेमप्रवरतारकम्
छिन्दन्भिन्दन्रुजन्क्रन्दन्दारयन्प्रमथन्नपि॥७॥ व्यचरद्देवसङ्घेषुभद्रोऽग्निरिवकक्षगः ॥ तत्रतत्रमहावेगाच्चरन्तंशूलधारिणम् ॥८॥ तमेकंत्रिदशाःसर्व्वेसह
स्रमिवमेनिरे ॥ भद्रकालीचसंक्रुद्धायुद्धवृद्धिमदोद्धता ॥ ९ ॥ मुक्तज्वालेनशूलेननिर्ब्बिभेदरणेसुरान् ॥ सतयारुरुचेभद्रोरुद्रकोपसमुद्भवः ॥ १० ॥
प्रभयेवयुगान्ताग्निश्चलयाधूमधूम्रया ॥ भद्रकालीतदायुद्धेविद्रुतत्रिदशाबभौ ॥ ११ ॥ कल्पशेषानलज्वालादग्धविश्वजगद्यथा ॥ तदासवाजिनं
सूर्य्यंरुद्रान्रुद्रगणाग्रणीः ॥ १२ ॥ भद्रोमूर्ध्निजघानाशुवामपादेनलीलया ॥ असिभिःपावकंभद्रःपट्टिशैस्तुयमंयमी ॥ १३ ॥ रुद्रान्दृढेनशूलेनमुद्गरैर्व
रुणंदृढैः ॥ परिघैर्निर्ऋतिंवायुंटङ्कैष्टङ्कधरःस्वयम् ॥ १४ ॥ निर्ब्बिभेदरणेवीरोलीलयैवगणेश्वरः ॥ ततोदेवःसरस्वत्यानासिकाग्रंसुशोभनम् ॥
॥ १५ ॥ चिच्छेदकरजाग्रेणदेवमातुस्तथैवच ॥ चिच्छेदचकुठारेणबाहुदण्डंविभावसोः ॥१६॥ अग्रतोद्व्यङ्गुलांजिह्वामात्तहव्यांलुलावच ॥
स्वाहादेव्यास्तथादेवोदक्षिणंनासिकापुटम् ॥ १७ ॥ चकर्त्तकरजाग्रेणवामंचस्तनचूचुकम् ॥ भगस्यविपुलेनेत्रेशतपत्रसमप्रभे ॥ १८ ॥ प्रसह्योत्पा
टयामासभद्रःपरमवेगवान् ॥ पूष्णोदशनरेखांचदीप्तांमुक्तावलीमिव ॥१९॥ जघानधनुषःकोट्यासतेनास्पष्टवागभूत् ॥ततश्चन्द्रमसंदेवःपादाङ्गुष्ठेनली
लया ॥ २० ॥ क्षणात्कृमिवदाक्रम्यघर्षयामासभूतले ॥शिरश्चिच्छेददक्षस्यभद्रःपरमशोभनम् ॥ २१ ॥ क्रोशंत्यामेववैरिण्यांभद्रकाल्यैददौचतत् ॥
तत्प्रहृष्टासमादायशिरस्तालफलोपमम् ॥ २२ ॥ सादेवीकन्दुकक्रीडांचकारसमराङ्गणे ॥ ततोदक्षस्ययापत्नीकुशीलाभर्तृभिर्यथा ॥ २३ ॥
पादाभ्यांचैवहस्ताभ्यांहन्यतेस्मगणेश्वरैः ॥ अरिष्टनेमिनंसोमंधर्म्मंचैवप्रजापतिम् ॥ २४ ॥ बहुपुत्रंचाङ्गिरसंभृशाश्वंकाश्यपंतथा ॥ गलेप्रगृह्यबलि
नोगणपाःसिंहविक्रमाः ॥ २५ ॥ भर्त्सयन्तोभृशंवाग्भिःसंजघ्नुर्मूर्ध्निमुष्टिभिः ॥ धर्षिताभूतवेतालैर्दाराःसुतपरिग्रहाः ॥ २६ ॥ यथाकलियुगेजारैर्बलेन
कुलयोषितः ॥ तच्चविध्वस्तकलशंभग्नयूपंगतोत्सवम्॥२७॥ प्रदीपितमहाशालंप्रभिन्नद्वारतोरणम् ॥ उत्पाटितसुरानीकंहन्यमानतपोधनम् ॥२८॥
प्रशान्तब्रह्मनिर्घोषंप्रक्षीणजनसंचयम् ॥ क्रन्दमानातुरस्त्रीकंहताशेषपरिच्छदम् ॥ २९ ॥ शून्यारण्यनिभंजज्ञेयज्ञवाटंतदार्द्दितम् ॥ शूलवेगप्ररुग्णाश्च
भिन्नबाहूरुवक्षसः ॥ ३० ॥ विनिकृत्तोत्तमाङ्गाश्चपेतुरुर्व्यांसुरोत्तमाः ॥ हतेषुतेषुदेवेषुपातितेषुसहस्रशः ॥ ३१ ॥ प्रविवेशगणेशानःक्षणादाहवनीयक

म्॥प्रविष्टमथतंदृष्ट्वाभद्रंकालाग्निसन्निभम्॥३२॥दुद्रावमरणाद्भीतोयज्ञोमृगवपुर्द्धरः॥सविस्फार्यमहच्चापंदृढज्याघोषभीषणम् ॥३३॥भद्रस्तमभिदुद्राव
विक्षिपन्नेवसायकान् ॥आकर्णपूर्णमाकृष्टंधनुरम्बुदसन्निभम्॥३४॥नादयामासतज्ज्यांचखंचभूमिंचसर्व्वशः॥ तमुपश्रुत्यसंनादंहतोऽस्मीत्येवविह्वलम्॥
॥ ३५ ॥ शरेणार्द्धेन्दुवक्रेणसवीरोऽध्वरपूरुषम्॥मृगरूपेणधावन्तंविशिरस्कंतदाकरोत्॥३६॥तदीदृशमवज्ञातंदृष्ट्वातंसूर्य्यसम्भवम्॥विष्णुःपरमसंक्रुद्धो
युद्धायाभवदुद्यतः ॥ ३७ ॥ तमुवाहमहावेगःस्कन्धेननतसान्धिना ॥ सर्व्वेषांवयसांराजागरुडःपन्नगाशनः ॥३८॥ देवाश्चहतशिष्टायेदेवराजपुरोगमाः॥
प्रचक्रुस्तस्यसाहाय्यंप्राणांस्त्यक्तुमिवोद्यताः ॥ ३९ ॥ विष्णुनासहितान्देवान्वृकेणक्रोष्टुकानिव ॥ दृष्ट्वाजहासभूतेन्द्रोमृगेन्द्रइवविव्यथः ॥ ४० ॥
तस्मिन्नवसरेव्योम्निसमाविरभवद्रथः ॥ सहस्रसूर्य्यसङ्काशश्चारुवीरवृषध्वजः ॥ ४१ ॥ अश्वरत्नद्वयोदारःखरचक्रचतुष्टयः ॥ सञ्चितानेकदिव्यास्त्रशरर
त्नपरिष्कृतः ॥ ४२ ॥ तस्यापिरथवर्य्यस्यस्यात्सएवहिसारथिः ॥ यएवत्रैपुरेयुद्धेपूर्व्वंशार्व्वरथेस्थितः ॥ ४३ ॥ सतंरथवरंब्रह्माशासनादेवशूलिनः ॥
हरेःसमीपमानीयकृताञ्जलिरभाषत ॥ ४४ ॥ भगवन्भद्रभद्राङ्गभगवानिन्दुभूषणः ॥ आज्ञापयतिधीरंत्वांरथमारोढुमव्ययः ॥ ४५ ॥ रम्याश्रमसमी
पस्थरुयम्बकोऽम्बिकयासह ॥ पश्यत्येवमहाबाहोदुःसहंतेपराक्रमम् ॥ ४६ ॥ तस्यतद्वचनंश्रुत्वासवीरोरणकुञ्जरः ॥ आरुरोहरथंदिव्यमनुगृह्यपिता
महम् ॥ ४७ ॥ तदारथवरेतस्मिन्स्थितेब्रह्मणिसारथौ ॥ भद्रस्यववृधेलक्ष्मीरुद्रस्येवपुरद्विषः ॥ ४८ ॥ ततःशङ्खवरंदीप्तंचन्द्रकुन्दसमप्रभम् ॥
प्रदध्मौवदनेकृत्वाभानुकम्पोमहाबलः ॥ ४९ ॥ तस्यशङ्खस्यसन्नादंभिन्नसागरसन्निभम् ॥ श्रुत्वाभयेनदेवानांजज्वालजठरानलः ॥ ५० ॥ यक्षविद्या
धराहीन्द्रैःसिद्धैर्युद्धदिदृक्षुभिः ॥ क्षणेननिबिडीभूताःसाकाशविवरादिशः ॥ ५१ ॥ ततःशार्ङ्गनचापाङ्कःसनारायणनीरदः ॥ महताबाणवर्षेणतुतोद
गणगोवृषम् ॥ ५२ ॥ तंदृष्ट्वाविष्णुमायान्तंशतधाबाणवर्षिणम् ॥ सचाददेधनुर्जैत्रंभद्रोबाणसहस्रमुक् ॥ ५३॥ समादायचतद्दिव्यंधनुःसमरभैरवम् ॥
शनैर्विस्फारयामासमेरुंधनुरिवेश्वरः ॥५४॥ तस्यविस्फार्य्यमाणस्यधनुषोऽभून्महास्वनः ॥ तेनस्वनेनमहतापृथिवीसमकम्पत ॥ ५५ ॥ ततःशरवरं
घोरंदीप्तमाशीविषोपमम् ॥ जग्राहगणपःश्रीमान्स्वयमुग्रपराक्रमः ॥ ५६ ॥ बाणोद्धारेभुजोयस्यतूणीवदनसङ्गतः ॥ प्रत्यदृश्यतवल्मीकंविविक्षुरिव
पन्नगः ॥ ५७ ॥ समुद्धृतःकरेतस्यतत्क्षणंरुरुचेशरः ॥ महाभुजङ्गसन्दष्टोयथाबालभुजङ्गमः ॥ ५८ ॥ शरेणघनतीव्रेणभद्रोरुद्रपराक्रमः ॥ विव्याध
कुपितोबाढंललाटेविष्णुमप्यथ ॥५९॥ ललाटेऽभिहतोविष्णुःपूर्व्वमेवावमानितः ॥ चुकोपगणेपेन्द्रायमृगेन्द्रायेवगोवृषः ॥ ६० ॥ ततस्त्वशनिकल्पे
नक्रूरास्येनमहेषुणा ॥ विव्याधगणराजस्यभुजेभुजगसन्निभे॥६१॥ सोऽपितस्यभुजेभूयःसूर्य्यायुतसमप्रभम्॥विससर्ज्जशरंवेगाद्वीरभद्रोमहाबलः॥६२॥

सचविष्णुःपुनर्भद्रंभद्रोविष्णुंतथापुनः ॥ सचतंसचतंविप्राःशरैस्तावनुजघ्नतुः ॥ ६३ ॥ तथापरस्परंवेगाच्छरानाशुविमुंचतोः ॥ तयोःसम
भवद्युद्धंतुमुलंरोमहर्षणम् ॥ ६४ ॥ तद्दृष्ट्वातुमुलंयुद्धंतयोर्वैविजिगीषतोः ॥ हाहाकारोमहानासीदाकाशेखेचरेरितः ॥ ६५ ॥ ततस्त्वनलकुण्डेनशरेतु
णादित्यवर्चसा ॥ विव्याधसुदृढंभद्रोविष्णोर्महतिवक्षसि ॥ ६६ ॥ सतुतीव्रप्रपातेनशरेणदृढजीवितः ॥ महतींरुजमासाद्यनिपपातविमोहितः ॥ ६७ ॥
पुनःक्षणादिवोत्थायलब्धसंज्ञस्तदाहरिः ॥ सर्व्वाण्यपिचदिव्यास्त्राण्यथैनंप्रत्यवासृजत् ॥ ६८ ॥ सचविष्णुधनुर्मुक्तान्सर्व्वाञ्छर्व्वचमूपतिः ॥ सहसावा
रयामासघोरैःप्रतिशरैःशरान् ॥ ६९ ॥ ततोविष्णुःस्वनामाङ्कंबाणमत्याद्भुतंक्वचित् ॥ ससर्ज्जक्रोधरक्ताक्षस्तमुद्दिश्यगणेश्वरम् ॥ ७० ॥ तंबाणंबाणवर्य्येणभद्रो
भद्राह्वयेणतु ॥ अप्राप्तमेवभगवांश्चिच्छेदशतधापाथि ॥ ७१ ॥ अथैकेनेषुणाशार्ङ्गंद्वाभ्यांपक्षौगरुत्मतः ॥ निमेषादिवाचिच्छेदतदद्भुतमिवाभवत् ॥ ७२ ॥ ततोयो
गबलाद्विष्णुर्देहादेवान्सुदारुणान् ॥ शङ्खचक्रगदाहस्तान्विससर्ज्जसहस्रशः ॥ ७३ ॥ सर्व्वांस्तान्क्षणमात्रेणत्रैपुरानिवशङ्करः ॥ निर्ददाहमहाबाहुर्नेत्रसृष्टे
नवह्निना ॥ ७४ ॥ ततःक्रुद्धतरोविष्णुश्चक्रमुद्यम्यसत्वरः ॥ तास्मिन्वीरेसमुत्स्रष्टुंतदानीमुद्यतोऽभवत् ॥ ७५ ॥ तंदृष्ट्वाचक्रमुद्यम्यपुरतःसमुपस्थितम् ॥
स्मयन्निवगणेशानोव्यष्टम्भयदयत्नतः ॥ ७६ ॥ स्तम्भिताङ्गस्तुतच्चक्रंघोरमप्रतिमंक्वचित् ॥ इच्छन्नपिसमुत्स्रष्टुंनविष्णुरभवत्क्षमः ॥ ७७ ॥ क्रोश
न्निवैकमुद्धृत्यबाहुंचक्रसमन्वितम् ॥ अतिष्ठदलसोविष्णुःपाषाणइवनिश्चलः ॥ ७८ ॥ विशरीरोयथाजीवोविश्रृङ्गोवायथावृषः ॥ विदंष्ट्रश्चयथासिंहस्त
थाविष्णुरवस्थितः ॥ ७९ ॥ तंदृष्ट्वादुर्द्दशापन्नंविष्णुमिन्द्रादयः सुराः ॥ सुसन्नद्धागणेन्द्रेणमृगेन्द्रेणेवगोवृषाः ॥ ८० ॥ प्रगृहीतायुधायोद्धुंक्रुद्धाःसमुपत
स्थिरे ॥ तान्दृष्ट्वासमरेभद्रःक्षुद्रानिवहरिर्मृगान् ॥ ८१ ॥ अट्टहासेनघोरेणव्यष्टम्भयदनिन्दितः ॥ तथाशतमखस्यापिसवज्रोदक्षिणःकरः ॥ ८२ ॥ सि
सृक्षुरेवतद्वज्रंचित्रीकृतइवाभवत् ॥ अन्येषामपिसर्व्वेषामुद्युक्ताअपिबाहवः ॥ ८३ ॥ अलसानामिवारम्भास्तांदशांनातियान्त्युत ॥ एवंभगवतातेन
व्याहताशेषवैभवाः ॥ ८४ ॥ अमराःसमरेतस्यपुरतःस्थातुमक्षमाः ॥ स्तब्धैरवयवैरेवदुद्रुवुर्भयविह्वलाः ॥ ८५ ॥ विद्रुतांस्त्रिदशान्वीरान्वीरभद्रोमहाभु
जः ॥ विव्याधनिशितैर्बाणैर्मेघोवर्षैरिवाचलान् ॥ ८६ ॥ बहवस्तस्यवीरस्यबाहवःपरिघोपमाः ॥ शस्त्रैश्चकाशिरेदीप्तैःसाग्निज्वालाइवोरगाः ॥ ८७ ॥
अस्त्रशस्त्राण्यनेकानिसवीरोविसृजन्बभौ ॥ विसृजन्सर्व्वभूतानियथादौविश्वसम्भवः ॥ ८८ ॥ यथारश्मिभिरादित्यःप्रच्छादयतिमेदिनीम् ॥
तथावीरःक्षणादेवशरैःप्राच्छादयद्दिशः ॥ ८९ ॥ खमण्डलेमणेन्द्रस्यशराःकनकभूषिताः ॥ उत्पतन्तस्तडिद्रूपैरुपमानपदंययुः ॥ ९० ॥ महान्तस्तेसु
रांस्तांश्चमण्डुकानिवडुण्डुभाः ॥ प्राणैर्वियोजयामासुःपपुश्चरुधिरासवम् ॥ ९१ ॥ निकृत्तबाहवःकेचित्केचिल्लूनवराननाः ॥ पार्श्वेविदारिताःकेचिन्नि

पेतुरमराभुवि ॥ ९२ ॥ विशिखोन्मथितैर्गात्रैर्बहुभिश्छिन्नसन्धिभिः ॥ विवृत्तनयनाःकेचिन्निपेतुर्भूतलेमृताः ॥ ९३ ॥ गांप्रवेष्टुमिवेच्छन्तःखंगन्तुमिव
लिप्सवः ॥ अलब्धात्मतिरोधानाव्यलीयन्तपरस्परम् ॥ ९४ ॥ भूमौकेचित्प्रविविशुःपर्व्वतानांगुहाःपरे ॥ अपरेजग्मुराकाशंपरेचविविशुर्जलम् ॥
॥ ९५ ॥ तथासञ्छिन्नसर्व्वाङ्गैःसवीरस्त्रिदशैर्बभौ ॥ परिग्रस्तप्रजावर्गोभगवानिवभैरवः ॥ ९६ ॥ एवंदेवबलंसर्व्वंदीनंबीभत्सदर्शनम् ॥ गणेश्वरसमु
त्पन्नंकृपणंवपुराददे ॥ ९७ ॥ तदात्रिदशवीराणामसृक्सलिलवाहिनी ॥ प्रावर्त्ततनदीघोराप्राणिनांभयशंसिनी ॥ ९८ ॥ रुधिरेणपरिक्लिन्नायज्ञभूमि
स्तदाबभौ ॥ रक्तार्द्रवसनाश्यामाहतशुम्भेवकौशिकी ॥ ९९ ॥ तस्मिन्महतिनिर्वृत्तेसमरेभृशदारुणे ॥ भयेनैवपरित्रस्ताप्रचचालवसुन्धरा ॥१००॥
महोर्म्मिकलिलावर्त्तश्चुक्षुभेचमहोदधिः ॥ पेतुश्चोल्काःसहोत्पातैःशाखाश्चमुमुचुर्द्रुमाः ॥ १०१ ॥ अप्रसन्नादिशःसर्व्वाःपवनश्चाशिवोववौ ॥
अहोविधिविपर्य्यासस्त्वश्वमेधोऽयमध्वरः ॥ १०२ ॥ यजमानःस्वयंदक्षोब्रह्मपुत्रःप्रजापतिः ॥ धर्म्मादयःसदस्याश्चरक्षितागरुडध्वजः ॥ १०३ ॥
भागांश्चप्रतिगृह्णन्तिसाक्षादिन्द्रादयःसुराः ॥ तथापियजमानस्ययज्ञस्यचसहर्त्विजः ॥ १०४ ॥ सद्यएवशिरश्छेदःसाधुसम्पद्यतेफलम् ॥ तस्मान्ना
वेदनिर्दिष्टंनचेश्वरबहिष्कृतम् ॥ १०५ ॥ नासत्परिगृहीतंचकर्म्मकुर्य्यात्कदाचन ॥ कृत्वापिसुमहत्पुण्यमिष्ट्वायज्ञशतैरपि ॥ १०६ ॥ नतत्फलमवा
प्नोतिभक्तिहीनोमहेश्वरे ॥ कृत्वापिसुमहत्पापंभक्त्यायजतियःशिवम् ॥ १०७ ॥ मुच्यतेपातकैःसर्व्वैर्नात्रकार्य्याविचारणा ॥ बहुनात्रकिमुक्तेनवृथादा
नंवृथातपः ॥ वृथायज्ञोवृथाहोमःशिवनिन्दारतस्यतु ॥ १०८ ॥ ततःसनारायणकाःसरुद्राः सलोकपालाःसमरेसुरौघाः ॥ गणेन्द्रचापच्युतबाणविद्धाः
प्रदुद्रुवुर्गाढरुजाभिभूताः ॥ १०९ ॥ चेलुःक्वचित्केचनशीर्णकेशाःसेदुःक्वचित्केचनदीर्घगात्राः ॥ पेतुःक्वचित्केचनभिन्नवक्त्रानेशुःक्वचित्केचनदेववी
राः ॥११०॥ केचिच्चतत्रत्रिदशाविपन्नाविस्रस्तवस्त्राभरणास्त्रशस्त्राः ॥ निपेतुरुद्द्रावितदीनमुद्रामदञ्चदर्पञ्चबलञ्चहित्वा ॥ १११ ॥ तमुत्पथप्रस्थित
मप्रधृष्योविक्षिप्यदक्षाध्वरमक्षतास्त्रः ॥ बभौगणेशःसगणेश्वराणांमध्येस्थितःसिंहइवर्षभाणाम् ॥११२॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्व
भागेदक्षशिवगणयुद्धवर्णनंनामैकोनविंशोऽध्यायः॥१९॥वायुरुवाच॥इतिसञ्छिन्नभिन्नाङ्गादेवाविष्णुपुरोगमाः॥क्षणात्कष्टांदशामेत्यत्रेसुःस्तोकावशेषि
ताः ॥ १ ॥ त्रस्तांस्तान्समरेवीरावीरभद्रप्रचोदिताः ॥ प्रगृह्यचयथादोषंनिगडैरायसैर्दृढैः ॥ २ ॥ बबन्धुःपाणिपादेषुकन्धरेषूदरेषुच ॥ तस्मिन्नवसरे
ब्रह्माभद्रमद्रीन्द्रजानुगम् ॥ ३ ॥ सारथ्याल्लब्धवात्सल्यःप्रार्थयन्प्रणतोऽब्रवीत् ॥ अलंक्रोधेनभगवन्नष्टाश्चतेदिवौकसः ॥ ४ ॥ प्रसीदक्षम्यतांसर्व्वैरोम
जैःसहसुव्रत ॥ एवंविज्ञापितस्तेनब्रह्मणापरमेष्ठिना ॥ ५ ॥ शमंजगामसम्प्रीतोगणपस्तस्यगौरवात् ॥ देवाश्चलब्धावसरादेवदेवस्यमन्त्रिणः ॥ ६ ॥

धारयन्तोऽञ्जलिंमूर्ध्नितुष्टुवुर्विविधैःस्तवैः ॥ देवाऊचुः ॥ नमःशिवायशान्ताययज्ञहन्त्रेत्रिशूलिने ॥ ७ ॥ रुद्रभद्रायरुद्राणांपतयेरुद्रमूर्त्तये ॥ कालाग्नि
रुद्ररूपायकालकामाङ्गहारिणे ॥ ८ ॥ देवतानांशिरोहन्त्रेदक्षस्यचदुरात्मनः ॥ संसर्गादस्यपापस्यदक्षस्याक्लिष्टकर्म्मगः ॥ ९ ॥ शासिताःसमरेवीर
त्वयावयमनिन्दिताः ॥ दग्धाश्चामीवयंसर्व्वेत्वत्तोभीताश्चभोप्रभो ॥ १० ॥ त्वमेवगतिरस्माकंत्राहिनःशरणागतान् ॥ तुष्टस्त्वेवंस्तुतोदेवान्विसृज्य
निगडात्प्रभुः ॥ ११ ॥ आनयद्देवदेवस्यसमीपममरानिह ॥ देवोऽपितत्रभगवानन्तरिक्षेस्थितःप्रभुः ॥ १२ ॥ सगणःसर्व्वगःसर्व्वःसर्व्वलोकमहेश्वरः॥
तंदृष्ट्वापरमेशानंदेवाविष्णुपुरोगमाः ॥ १३ ॥ प्रीताअपिचभीताश्चनमश्चक्रुर्महेश्वरम् ॥ दृष्ट्वातानमरान्भीतान्प्रणतान्प्रणतार्त्तिहा ॥ १४ ॥ इदमाहम
हादेवःप्रहसन्प्रेक्ष्यपार्व्वतीम् ॥ माभैष्टत्रिदशायूयंक्षान्तोऽस्माभिर्व्यतिक्रमः ॥ १५ ॥ क्रुद्धेष्वस्मासुयुष्माकंनास्थितिर्नचजीवितम् ॥ इत्युक्ता
स्त्रिदशाःसर्व्वेशर्व्वेणामिततेजसा ॥ १६ ॥ सद्योविगतसन्त्रासाननृतुर्विवशामुदा ॥ अथास्मिन्नन्तरेब्रह्माप्रणिपत्यकृतांजलिः ॥ १७ ॥ एवं
ह्यवसरंप्राप्यव्यज्ञापयतशूलिने ॥ ॥ ब्रह्मोवाच ॥ ॥ जयदेवमहादेवप्रणतार्त्तिप्रभंजन ॥ १८ ॥ ईदृशेष्वपराधेषुकोऽन्यस्त्वत्तःप्रसीदति ॥
लब्धात्मानोभविष्यन्तियेसुरानिहतामृधे ॥ १९ ॥ प्रत्यापत्तिर्नकस्यस्यात्प्रसन्नेपरमेश्वरे ॥ यदिदंदेवदेवानांकृतमङ्गेषुदूषणम् ॥ २० ॥
तदिदंभूषणंमन्येतवाङ्गीकारगौरवात् ॥ इतिविज्ञाप्यमानस्तुब्रह्मणापरमेष्ठिना ॥ २१ ॥ विलोक्यवदनंदेव्यादेवदेवःस्मयन्निव ॥ पुत्रभूत
स्यवात्सल्याद्ब्रह्मणःपद्मजन्मनः ॥ २२ ॥ प्रनष्टानांपुनस्तेषांप्रददौपूर्व्ववत्तनुम् ॥ ततःक्षणेनतेदेवाःशतक्रतुपुरोगमाः ॥ २३ ॥ प्रत्यापन्न
शरीराङ्गाःप्रणेमुःपरमेश्वरम् ॥ वागीशाद्याश्चयादेव्योदण्डितादेवमातरः ॥ २४ ॥ तासामपियथापूर्व्वंतान्यङ्गानिददौभवः ॥ दक्षस्यभगवानेवस्व
यंब्रह्मापितामहः ॥ २५ ॥ तत्पापानुगुणंचक्रेजरच्छागमुखंमुखम् ॥ सोपिसंज्ञांततोलब्ध्वासमुत्थायकृताञ्जलिः ॥ २६ ॥ प्रलपन्बहुधाभीतस्तु
ष्टावपरमेश्वरम् ॥ तंतथाव्याकुलंभीतंप्रलपन्तंकृतागसम् ॥ २७ ॥ स्मयन्निवावदत्प्रेक्ष्यमाभैरितिघृणानिधिः ॥ तथोक्त्वाब्रह्मणस्तस्यपितुःप्रिय
चिकीर्षया ॥ २८ ॥ गाणपत्यंददौतस्मैदक्षायाक्षयमीश्वरः ॥ ततोब्रह्मामहादेवमभिवन्द्यकृताञ्जलिः ॥ २९ ॥ तुष्टावशुभयावाचादेवीञ्चगिरिजा
मुमाम् ॥ ततोविष्णुस्ततोदेवास्ततःसर्व्वेमहर्षयः ॥ ३० ॥ तुष्टुवुर्देवदेवेशंदेवीञ्चापिपृथक्पृथक् ॥ तदापार्श्वेस्थितंप्रेक्ष्यभद्रमद्रीन्द्रजास्वयम् ॥ ३१॥
कृतात्मप्रेषणंपुत्रंगृहीत्वातंकृताञ्जलिम् ॥ आकृष्यभद्रयासार्द्धमङ्कसमुपवेश्यच ॥ ३२ ॥ सस्वजेगुहवद्गाढंसमाजिघ्रच्चमूर्द्धनि ॥ ततःप्रीततरादेवी
वीरभद्रायशूलिने ॥ प्रददौविविधानिष्टान्वरांश्चैवसहस्रधा ॥ ३३ ॥ अथतदाहरिशुक्रपितामहप्रभृतयःसुरलोकमहेश्वराः ॥ ३४ ॥ सकललोक

महेश्वरमीश्वरंशरणमेत्यकृताञ्जलयोऽस्तुवन् ॥ सचपुनस्त्रिदशाञ्छरणागतान्परमकारुणिकःपरमेश्वरः ॥ ३५ ॥ अनुगतस्मितलक्षणयागिरा
शमितसर्व्वभयःसमभाषत ॥ यदिदमागइहाचरितंसुरैर्विधिनियोगवशादिवयन्त्रितैः॥ ३६ ॥शरणमेत्यनतानवलोक्यवस्तदखिलंकिलविस्मृतमेवनः ॥
तदिहयूयमपिप्रकृतंमनस्यविगणय्यविमर्द्दमपत्रपाः ॥३७॥ हरिविरिञ्चिसुरेन्द्रमुखाःसुखंव्रजतदेवपुरंप्रतिसम्प्रतिइति॥सुरानभिधायसुरेश्वरोनिकृतदक्ष
कृतक्रतुरक्रतुः॥३८॥सगिरिजानुचरःसपरिच्छदःस्थितइवाम्बरतोऽन्तरधीयत॥अथसुराअपितेविगतव्यथाःकथितभद्रसुभद्रपराक्रमाः॥सपदिखेनसुखे
नयथासुखंययुरनेकमुखंमघवन्मुखाः ॥३९॥इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेविंशोऽध्यायः ॥ २० ॥ ऋषयऊचुः ॥ अन्तर्द्धानंगतो
देव्यासहसानुचरोहरः॥क्वयातःकुत्रवावासःकिंकृत्वाचरराम च ॥१॥ वायुरुवाच॥महीधरवरःश्रीमान्मन्दरश्चित्रकन्दरः॥दयितोदेवदेवस्यनिवासस्तपसो
ऽभवत् ॥ २ ॥ तपोमहत्कृतंतेनवोढुंस्वशिरसाशिवौ ॥ चिरेणलब्धंतत्पादपङ्कजंस्पर्शजंसुखम् ॥ ३ ॥ तस्यशैलस्यसौन्दर्य्यंसहस्रवदनैरपि ॥ नशक्यं
विस्तराद्वक्तुंवर्षकोटिशतैरपि ॥ ४ ॥ शक्यमप्यस्यसौन्दर्य्यंनवर्णयितुमुत्सहे ॥ पर्व्वतान्तरसौन्दर्य्यसाधारण्यावधारणात् ॥ ५ ॥ इदन्तुशक्यतेवक्तु
मेषपर्व्वतसुन्दरः ॥ ऋद्ध्याकयापसौन्दर्य्यमीश्वरावासयोग्यताम् ॥६॥ अतएवहिदेवेनदेव्याःप्रियचिकीर्षया ॥ अतीवरमणीयोऽयंगिरिरन्तःपुरीकृतः
॥ ७ ॥ मेखलाभूमयस्तस्यविपुलोपलपादपाः ॥ शिवयोर्नित्यसान्निध्यान्न्यक्कुर्व्वन्त्यखिलंजगत् ॥ ८ ॥ पितृभ्यांजगतोनित्यंस्थानपानोपयोगतः ॥
अवाप्तपुण्यसंस्कारःप्रसरद्भिरितस्ततः ॥ ९ ॥ लघुशीतलसंस्पर्शैरच्छाच्छैर्निर्झराम्बुभिः ॥ आधिराज्यइवाद्रीणामद्रिरेषोऽभिषिच्यते ॥१०॥ निशा
सुशिखरप्रान्तवर्त्तिनासशिलोच्चयः ॥ चन्द्रेणाचलसाम्राज्यच्छत्रेणेवविराजते ॥ ११ ॥ सशैलश्चञ्चलीभूतैर्वालैश्चमरयोषिताम् ॥ सर्व्वपर्व्वतसाम्राज्य
चामरैरिववीज्यते ॥ १२ ॥ प्रातरभ्युदितेभानौभूधरोरत्नभूषितः ॥ दर्पणेदेहसौभाग्यंद्रष्टुकामइवस्थितः ॥ १३ ॥ कूजद्भिहङ्गवाचालैर्वातोद्धूतलताभु
जैः ॥ विमुक्तपुष्पैःसततंव्यालम्बिमृदुपल्लवैः ॥ १४ ॥ लताप्रतानजटिलैस्तरुभिस्तापसैरिव ॥ जयाशिषासहाभ्यर्च्यनिषेव्यतइवाद्रिराट् ॥ १५ ॥
अधोमुखैरूर्द्ध्वमुखैःशृङ्गैस्तिर्य्यङ्मुखैरपि ॥ प्रपतन्निवपातालेभूपृष्ठादुत्पतन्निव ॥ १६ ॥ परीत्यसर्व्वतोदिक्षुभ्रमन्निवविहायसि ॥ पश्यन्निवजगत्सर्व्वंनृ
त्यन्निवनिरन्तरम् ॥ १७ ॥ गुहामुखैःप्रतिदिनंव्यात्तास्यैर्विपुलोदरैः ॥ अजीर्णलावण्यतयाजृम्भामिवसदाचरन् ॥ १८ ॥ ग्रसन्निवजगत्सर्व्वंपिबन्निव
पयोनिधिम् ॥ वमन्निवतमोऽन्तःस्थमदन्निवखमम्बुदैः॥१९॥निवासभूमयस्तास्तादर्पणप्रतिमोदराः॥तिरस्कृतातपस्निग्धाश्रमच्छायामहीरुहाः॥२०॥
सरित्सरस्तटाकादिसम्पर्कशिशिरानिलाः ॥ तत्रतत्रनिषण्णाभ्यांशिवाभ्यांसफलीकृताः ॥२१॥ तमिमंपर्व्वतश्रेष्ठंस्मृत्वासाम्बस्त्रियम्बकः ॥ रैभ्याश्र

मसमीपस्थश्चान्तर्द्धानंगतोययौ ॥ २२ ॥ तत्रोद्यानमनुप्राप्यदेव्यासहमहेश्वरः ॥ ररामरमणीयासुदिव्यान्तःपुरभूमिषु ॥ २३ ॥ तथागतेषुकालेषुविवृ
द्धासुप्रजासुच ॥ दैत्यौशुंभनिशुंभाख्यौभ्रातरौसम्बभूवतुः ॥ २४ ॥ ताभ्यांतपोबलाद्दत्तंब्रह्मणापरमेष्ठिना ॥ अवध्यत्वंजगत्यस्मिन्पु
रुषैरखिलैरपि ॥ २५ ॥ अयोनिजातुयाकन्याअम्बिकांशसमुद्भवा ॥ अजातपुंस्पर्शरतिरविलङ्घ्यपराक्रमा ॥ २६ ॥ तयास्तुनौ
वधःसंख्येतस्यांकामाभिभूतयोः ॥ इतिचाभ्यर्थितोब्रह्माताभ्यांप्राहतथास्त्विति ॥ २७ ॥ ततःप्रभृतिशक्रादीन्विजित्यसमरेसुरान् ॥ निःस्वा
ध्यायवषट्कारंजगच्चक्रतुरक्रमात् ॥ २८ ॥ तयोर्वधायदेवेशंब्रह्माभ्यर्थितवान्पुनः ॥ विनिन्द्यापिरहस्यम्बांक्रोधयित्वायथातथा ॥ २९ ॥ त्वद्वर्णकोश
जांशक्तिमकामांकन्यकात्मिकाम् ॥ निशुम्भशुम्भयोर्हन्त्रींसुरेभ्योदातुमर्हसि ॥ ३० ॥ एवमभ्यर्थितोधात्राभगवान्नीललोहितः ॥ कालीत्याहरहस्य
म्बांनिन्दयन्निवसस्मितः ॥ ३१ ॥ ततःक्रुद्धतरादेवीसुवर्णावर्णकारणात् ॥ स्मयन्तीचाहभर्त्तारमसमाधेययागिरा ॥३२॥ देव्युवाच ॥ ईदृशेममवर्णे
ऽस्मिन्नरतिर्भवतोऽस्तिचेत् ॥ एतावन्तंचिरंकालंकथमेषानियम्यते ॥३३ ॥ अरुच्यावर्तमानोऽपिकथञ्चरमसेमया ॥ नह्यशक्यंजगत्यस्मिन्नीश्वरस्य
तवप्रभो ॥३४॥ स्वात्मारामस्यभवतोरतिर्नसुखसाधनम् ॥ इतिहेतोःस्मरोयस्मात्प्रसभंभस्मसात्कृतः ॥ ३५ ॥ याचनाभिरताभर्त्तुरपिसर्वाङ्गसुन्द
री ॥ सावृथैवहिजायेतसर्वैरपिगुणान्तरैः ॥३६॥ भर्तुर्भोगैकशेषोहिसर्गएवैषयोषिताम् ॥ तथासत्यन्यथाभूतानारीकुत्रोपयुज्यते ॥ ३७ ॥ तस्माद्वर्ण
मिमंत्यक्त्वात्वयारहसिनिन्दितम् ॥ वर्णान्तरंभजिष्येवानभविष्यामिवास्वयम् ॥ ३८ ॥ इत्युक्त्वोत्थायशयनाद्देवीरोषात्सगद्गदम् ॥ ययाचेऽनुमतिंभ
र्तुस्तपसेकृतनिश्चया ॥ ३९ ॥ तथाप्रणयभङ्गेनभीतोभूतपतिःस्वयम् ॥ पादयोःप्रणमन्नेवभवानींप्रत्यभाषत ॥ ४ ॥ ईश्वरउवाच ॥ अजानतीवक्री
डोक्तिंप्रियेकिंकुपितासिमे ॥ रतिःकुतोवाजायेतत्वत्तश्चेदरतिर्मम ॥ ४१ ॥ मातात्वमस्यजगतःपिताहमधिपस्तथा ॥ कथंतदुपपद्येतत्वत्तोनाभि
रतिर्मम ॥ ४२ ॥ आवयोरतिकामोऽपिकिमसौकामकारितः ॥ यतःकामसमुत्पत्तेःप्रागेवजगदुद्भवः ॥ ४३ ॥ पृथग्जनानांरतयेकामात्माकल्पितोमया ॥
ततःकथमुपालब्धःकामदाहादहंत्वया ॥ ४४ ॥ ममत्रिदशसामान्यंमन्यमानोमनोभवः ॥ मनाक्परिभवंकुर्वन्मयावैभस्मसात्कृतः ॥ ४५ ॥ विहारो
ऽप्यावयोरस्यजगतस्त्राणकारणात् ॥ ततस्तदर्थंत्वय्यद्यक्रीडोक्तिंकृतवानहम् ॥ ४६ ॥ सचायमचिरादर्थस्तवैवाविष्करिष्यते ॥ क्रोधेनालंमुधाने
नत्वन्निष्ठंकिंनवेत्सिमाम् ॥ ४७ ॥ इत्येवमनुनीतापिभर्त्रागिरिवरात्मजा ॥ कालीतिविप्रियंवाक्यंहृदिकृत्वेदमब्रवीत् ॥ ४८ ॥ देव्युवाच ॥ श्रुतपू
र्वाहिभगवंस्तवचाटूक्तयोमया ॥ याभिरेवमधीराहमितःप्रागपिवंचिता ॥ ४९ ॥ प्राणानप्यप्रियाभर्त्तुर्नारीयानपरित्यजेत् ॥ कुलांगनासुसासद्भिःकु

त्सितैत्रहिगण्यते ॥ ५० ॥ भूयसीचतवाप्रीतिरगौरमितिमेवपुः ॥ क्रीडोक्तिरपिकालीतिघटतेकथमन्यथा ॥ ५१ ॥ सद्भिर्विगर्हितंतस्मात्स्त्रीषुकाष्ण्यं
मसत्कृतम् ॥ अनुत्सृज्यतपोयोगात्स्थातुमेवेहनोत्सहे ॥ ५२ ॥ देवउवाच ॥ यद्येवंव्यवसायस्तेतपसाकिंप्रयोजनम् ॥ ममेच्छयास्वेच्छयावावर्णा
न्तरवतीभव ॥ ५३ ॥ देव्युवाच ॥ नेच्छामिभवतोवर्णस्वयंवाकर्त्तुमन्यथा ॥ ब्रह्माणंतपसाराध्यततोगौरीभवाम्यहम् ॥ ५४ ॥ ईश्वरउवाच ॥ मत्प्र
सादात्पुराब्रह्माब्रह्मत्वम्प्राप्तवान्परम् ॥ तमाहूयमहादेवितपसाकिंकरिष्यसि ॥५५॥ देव्युवाच ॥ त्वत्तोलब्धपदाएवसर्व्वेब्रह्मादयःसुराः ॥ तथाप्यारा
ध्यतपसाब्रह्माणंत्वन्नियोगतः॥५६॥पुराकिलसतीनाम्नादक्षस्यदुहिताऽभवम्॥जगतांपतिमेवत्वांपतिंप्राप्तवतीतथा ॥५७॥ एवमद्यापितपसातोषयित्वा
पितामहम्॥गौरीभवितुमिच्छामिकोदोषःकथ्यतामिह ॥ ५८ ॥ एवमुक्तोमहादेव्यामहादेवःस्मयन्निव॥नतांनिर्ब्बंधयामासदेवकार्य्यंचिकीर्षया ॥५९॥
ततःप्रदक्षिणीकृत्यपतिमम्बापतिव्रता ॥ नियम्यचवियोगार्त्तिंजगामहिमवद्गिरिम् ॥ ६० ॥ तपःकृतवतीपूर्व्वंदेशेयस्मिन्सखीजनैः ॥ तमेवदेशंवृणुया
त्तपसेप्रणयात्पुनः ॥ ६१ ॥ ततःस्वपितरंदृष्ट्वामातरञ्चतयोर्गृहे ॥ प्रणम्यवृत्तंविज्ञाप्यताभ्याञ्चानुमतासती ॥ ६२ ॥ पुनस्तपोवनंगत्वाभूषणानि
विसृज्यच ॥ स्नात्वातपस्विनीवेषंकृत्वापरमपावनम् ॥ ६३ ॥ सङ्कल्प्यचमहत्तीव्रंतपःपरमदुश्चरम् ॥ सदामनसिसन्धायभर्त्तुश्चरणपङ्कजम् ॥ ६४ ॥
तमेवक्षणिकेलिङ्गेध्यात्वाबाह्यविधानतः ॥ त्रिसन्ध्यमभ्यर्च्चयन्तीवन्यैःपुष्पैःफलादिभिः ॥ ६५ ॥ सएवब्रह्मणोमूर्त्तिमास्थायतपसःफलम् ॥ प्रदास्य
तिममेत्येवंनित्यंमत्वाकरोत्तपः ॥ ६६ ॥ तथातपश्चरन्तींतांकालेबहुतिथेगते ॥ दृष्ट्वाकश्चिन्महाव्याघ्रोदुष्टभावादुपागमत् ॥ ६७ ॥ तथैवोपगत
स्यापितस्यातीवदुरात्मनः ॥ गात्रंचित्रार्पितमिवस्तब्धंतस्याःसकाशतः ॥ ६८ ॥ तंदृष्ट्वापितथाव्याघ्रंदुष्टभावादुपागतम् ॥ नपृथग्जनवद्देवी
स्वप्रभावेणविव्यथे ॥ ६९ ॥ सतुविष्टब्धसर्व्वाङ्गोबुभुक्षापरिपीडितः ॥ ममामिषमितोनान्यदितिमत्वानिरन्तरम् ॥ ७० ॥ निरीक्ष्यमाणःसततंदेवी
मेवतदानिशम् ॥ अतिष्ठदग्रतस्तस्याउपासनमिवाचरन् ॥ ७१ ॥ देव्याश्चहृदयेनित्यंममैवायमुपासकः ॥ त्राताचदुष्टसत्त्वेभ्यइतिप्रववृतेकृपा॥७२॥
ततएवकृपायोगात्सद्योनष्टमलत्रयः ॥ बभूवसमहाव्याघ्रोदेवींश्चबुबुधेतदा ॥ ७३ ॥ न्यवर्त्ततबुभुक्षाचतस्याङ्गस्तम्भनंतथा ॥ दौरात्म्यंजन्मसिद्ध
ञ्चतृप्तिश्चसमजायत ॥ ७४ ॥ तदापरमभावेनज्ञात्वाकार्त्तार्थ्यमात्मनः ॥ सत्योपासकएवैषासिषेवेपरमेश्वरीम् ॥ ७५ ॥ दुष्टानामपिसत्वानांतथा
न्येषांदुरात्मनाम् ॥ सएवद्रावकोभूत्वाविचचारतपोवने॥७६॥तपश्चववृधेदेव्यास्तीव्रंतीव्रतरात्मकम् ॥ देवाश्चदैत्यनिर्ब्बन्धाद्ब्रह्माणंशरणंययुः॥७७॥
सोऽपिदैत्यवधासक्तःकृत्वाहेत्वाश्रयांकथाम् ॥ सामरस्त्वरितोब्रह्माययौदेव्यास्तपोवनम् ॥ ७८ ॥ ददर्शचसुरश्रेष्ठःश्रेष्ठेतपसिनिष्ठिताम् ॥ प्रतिष्ठामि

ववििश्वस्यभवानींपरमेश्वरीम् ॥ ७९ ॥ ननामचास्यजगतोमातरंस्वस्यचात्मनः ॥ रुद्रस्यचपितुर्भार्य्यामार्य्यामद्रीश्वरात्मजाम् ॥ ८० ॥ ब्रह्माणमा
गतंदृष्ट्वादेवीदेवगणैःसह ॥ अर्घ्यंतदर्हंदत्त्वास्मैस्वागताद्यैरुपाचरत् ॥ ८१ ॥ तांश्चप्रत्युपचारोक्तिपुरस्कृत्याभिनन्द्यच ॥ पप्रच्छतपसोहेतुमजानन्निव
पद्मजः ॥ ८२ ॥ ब्रह्मोवाच ॥ तीव्रेणसपसानेनदेव्याकिमिहसाध्यते ॥ तपःफलानांसर्व्वेषांत्वदधीनाहिसिद्धयः ॥ ८३ ॥ यश्चैवजगतांभर्त्तातमेवपरमे
श्वरम्॥भर्त्तारमात्मनाप्राप्यप्राप्तश्चतपसःफलम् ॥ ८४ ॥ अथवासर्व्वमेवैतत्क्रीडाविलसितंतव ॥ इदन्तुचित्रंदेवस्यविरहंसहसेकथम् ॥८५॥ देव्युवा
च ॥ सर्गादौभवतोदेवादुत्पत्तिःश्रूयतेयदा ॥ तदाप्रजानांप्रथमस्त्वंमेप्रथमजःसुतः ॥ ८६ ॥ यदापुनःप्रजावृद्धौललाटाद्भवतोभवः ॥ उत्पन्नोऽभूत्तदा
त्वंमेगुरुःश्वशुरभावतः ॥ ८७ ॥ यदाचायंगिरीन्द्रस्तेपुत्रोममपितास्वयम् ॥ तदापितामहस्त्वंमेजातोलोकपितामह ॥ ८८ ॥ तदीदृशस्यभवतोलोक
यात्राविधायिनः ॥ वृत्तमन्तःपुरेभर्त्राकथयिष्येकथंपुनः ॥ ८९ ॥ किमत्रबहुनादेहेयश्चायंममकालिमा ॥ त्यक्त्वेमंत्वद्विधानेनगौरीभवितुमुत्सहे ॥९०॥
ब्रह्मोवाच ॥ एतावताकिमर्थंनतीव्रंदेवितपःकृतम् ॥ स्वेच्छैवकिमपर्य्याप्ताक्रीडेयंहितवेदृशी ॥ ९१ ॥ क्रीडापिचजगन्मातस्तवलोकहितायवै ॥ अतो
ममेष्टमनयाफलंकिमपिसाध्यताम् ॥ ९२ ॥ निशुम्भशुम्भनामानौदैत्यौदत्तवरौमया ॥ दृप्तौदेवान्प्रबाधेतेत्वत्तोलब्धस्तयोर्वधः ॥ ९३ ॥ अलंविलम्ब
नेनात्रत्वच्छलेनस्थितातव ॥ शक्तिर्विसृज्यमानाद्यतयोर्मृत्युर्भविष्यति ॥ ९४ ॥ ब्रह्मणाभ्यर्थिताचैवंदेवीगिरिवरात्मजा ॥ त्वक्कोशंसहसोत्सृज्यगौरी
सासमजायत ॥ ९५ ॥ सात्वक्कोशात्मनोत्सृष्टाकौशिकीनामनामतः ॥ कालीकालाम्बुदप्रख्याकन्यकासमपद्यत ॥ ९६ ॥ सातुमायात्मिकाशक्तियो
गनिद्राचवैष्णवी ॥ शङ्खचक्रत्रिशूलादिसायुधाष्टमहाभुजा ॥ ९७ ॥ सौम्याघोराचमिश्राचत्रिनेत्राचन्द्रशेखरा ॥ अजातपुंस्पर्शरतिरधृष्याचातिसुन्द
री ॥ ९८ ॥ दत्ताचब्रह्मणेदेव्याशक्तिरेषासनातनी ॥ शुम्भस्यचनिशुम्भस्यनिहन्त्रीदैत्यसिंहयोः ॥ ९९ ॥ ब्रह्मणापिप्रहृष्टेनतस्यैपरमशक्तये ॥
प्रबलःकेसरीदत्तोवाहनत्वेसमागतः ॥ १००॥ विन्ध्येचवसतिंतस्याःपूजांचासवपूर्व्वकैः ॥ मांसैर्मत्स्यैरपूपैश्चनिर्व्वर्त्त्यासौसमादिशत् ॥ १०१ ॥ साचै
वंसम्मताशक्तिर्ब्रह्मणाविश्वकर्म्मणा ॥ प्रणम्यमातरंगौरींब्रह्माणंचानुपूर्व्वशः ॥ १०२ ॥ शक्तिभिःस्वात्मतुल्याभिःस्वात्मजाभिरनेकशः ॥ परीताप्रय
यौविन्ध्यंदैत्येन्द्रौहन्तुमुद्यता ॥ १०३ ॥ निहतौचतथातत्रसमरेदैत्यपुङ्गवौ ॥ तद्बाणैःकामबाणैश्चच्छिन्नभिन्नाङ्गमानसौ ॥ १०४ ॥ इतिश्रीशैवेमहा
पुराणेवायवीयसंहितायांपूर्व्वभागेएकविंशोऽध्यायः ॥ २१ ॥ वायुरुवाच ॥ उत्पाद्यकौशिकींगौरीब्रह्मणेप्रतिपाद्यच ॥ तस्यप्रत्युपकारायपितामहम
थाब्रवीत् ॥ १ ॥ देव्युवाच ॥ दृष्टःकिमेषभवताशार्दूलोमदुपाश्रयः ॥ अनेनदुष्टसत्त्वेभ्योरक्षितंमेतपोवनम् ॥ २ ॥ मय्यर्पितमनाएषभज

तेमांमनन्यधीः ॥ अस्यसंरक्षणादन्यत्प्रियंममनविद्यते ॥ ३ ॥ भवितव्यमनेनातोममान्तःपुरचारिणा ॥ गणेश्वरपदंचास्मैप्रीतोदास्यतिशङ्करः॥ ४ ॥
एनमग्रेसरंकृत्वासखीभिर्गन्तुमुत्सहे ॥ प्रदीयतामनुज्ञामेप्रजानांपतिनात्वया ॥ ५ ॥ इत्युक्तःप्रहसन्ब्रह्मादेवींमुग्धामिवस्मयन् ॥ तस्यतीव्रैःपुरावृत्तै
दौरात्म्यंसमवर्णयत् ॥६॥ ब्रह्मोवाच ॥ क्वासौदेविमृगःक्रूरःक्वचतेऽनुग्रहःशुभः ॥ आशीविषमुखेसाक्षादमृतंकिंनिषिच्यते ॥ ७ ॥ व्याघ्रमात्रेनखल्वेष
दुष्टःकोऽपिनिशाचरः ॥ अनेनभक्षितागावोब्राह्मणाश्चतपोधनाः ॥ ८ ॥ अपर्य्यन्तायथाकामंकामरूपीचरत्यसौ ॥ अवश्यंखलुभोक्तव्यंफलंपापस्यक
र्म्मणः ॥ ९ ॥ अतःकिंकृपयाकृत्यमीदृशेषुदुरात्मसु ॥ अनेनदेव्याःकिंकृत्यंप्रकृत्याकलुषात्मना ॥ १० ॥ देव्युवाच ॥ यदुक्तंभवतासर्वंतथ्यम
स्त्वयमीदृशः ॥ तथापिमांप्रपन्नोऽभून्नत्यक्तोमामुपाश्रितः ॥ ११ ॥ ब्रह्मोवाच ॥ यस्यभक्तिमविज्ञायप्राग्वृत्तंतेनिवेदितम् ॥ भक्तिश्चेदस्यकिं
पापैर्नतेभक्तःप्रणश्यति ॥ १२ ॥ पुण्यकर्म्मापिकिंकुर्य्यात्त्वदीयाज्ञानपेक्षया ॥ आज्ञाप्रज्ञापुराणीचत्वमेवपरमेश्वरी ॥ १३ ॥ त्वदधीनाहिसर्व्वेषां
बन्धमोक्षव्यवस्थितिः ॥ त्वामृतेपरमांशक्तिंसंसिद्धिःकस्यकर्म्मणः ॥ १४ ॥ त्वमेवविविधाशक्तिर्भावानामभवास्वयम् ॥ अशक्तःकर्म्मकरणंकर्त्ता
वाकिंकरिष्यति ॥ १५ ॥ विष्णोश्चममचान्येषांदेवदानवरक्षसाम् ॥ तत्तदैश्वर्य्यसम्प्राप्तौतवैवाज्ञाहिकारणम् ॥ १६ ॥ अतीताःखल्वसंख्याताब्रह्मा
णोहरयोभवाः ॥ अनागतास्त्वसंख्यातास्त्वदाज्ञानुविधायिनः ॥ १७ ॥ त्वामनाराध्यदेवेशिपुरुषार्थचतुष्टयम् ॥ लब्धुंनशक्यमस्माभिरपिसर्व्वैःसुरो
त्तमैः ॥ १८ ॥ व्यत्यासोऽपिभवेत्सद्योब्रह्मत्वस्थावरत्वयोः ॥ सुकृतेदुष्कृतेचापित्वद्व्यवस्थापनंयतः ॥ १९ ॥ त्वंहिसर्व्वजगद्भर्त्तुःशिवस्यपरमात्म
नः ॥ अनादिमध्यनिधनाशक्तिराद्यासनातनी ॥ २० ॥ समस्तलोकयात्रार्थंमूर्त्तिमाविश्यकामपि ॥ क्रीडसेविविधैर्भावैःकस्त्वांजानातितत्त्वतः॥२१॥
अतोदुष्कृतकर्म्मापिव्याघ्रोऽयंत्वदनुग्रहात् ॥ प्राप्नोतुपरमांसिद्धिमत्रकःप्रतिबन्धकः ॥ २२ ॥ इत्यात्मनःपरंभावंस्मारयित्वानुरूपतः ॥ ब्रह्मणाभ्य
र्थितागौरीतपसोऽपिन्यवर्त्तत ॥ २३ ॥ ततोदेवीमनुज्ञाप्यब्रह्मण्यन्तर्हितेसति ॥ देवीचमातरंदृष्ट्वामेनांहिमवतासह ॥ २४ ॥ प्रणम्याश्वास्यबहुधापित
रौविरहासहौ ॥ ततःप्रणयिनोदेवीतपोवनमहीरुहान् ॥ २५ ॥ विप्रयोगशुचेवाग्रेपुष्पबाष्पंविमुञ्चतः ॥ तत्तच्छाखासमारूढविहगोदीरितैरुतैः
॥ २६ ॥ व्याकुलंबहुधादीनंविलापमिवकुर्व्वतः ॥ सखीभ्यःकथयन्त्येवसत्वराभर्त्तृदर्शने ॥ २७ ॥ पुरस्कृत्यचतंव्याघ्रंस्नेहात्पुत्रमिवौरसम् ॥ देह
स्यप्रभयाचैवदीपयन्तीदिशोदश ॥ प्रययौमन्दरंगौरीयत्रभर्त्तामहेश्वरः ॥ २८ ॥ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेदेवीब्रह्मसंवा
देद्वाविंशोऽध्यायः ॥ २२ ॥ ऋषयऊचुः ॥ कृत्वागौरंवपुर्दिव्यंदेवीगिरिवरात्मजा ॥ कथंददर्शभर्त्तारंप्रविष्टामन्दरंसती ॥ १ ॥ प्रवेशसमयेतस्याभवन

द्वारगोचरैः ॥ गणेशैः किंकृतंदेवस्तांदृष्ट्वाकिंतदाकरोत् ॥ २ ॥ वायुरुवाच ॥ प्रवक्तुमंजसाऽशक्यस्तादृशःपरमोरसः ॥ येनप्रणयगर्भेणभावोभाववतां
हृतः ॥३॥ द्वाःस्थैःससम्भ्रमैरेवदेवोदेव्यागमोत्सुकः ॥ शङ्कमानःप्रविष्टांतांतंचसासमपश्यत॥४॥तैस्तैःप्रणयभावैश्चभवनान्तरवर्त्तिभिः ॥गणेन्द्रैर्वन्दि
तावाचाप्रणनामत्रियम्बकम्॥५॥प्रणम्यनोत्थितायावत्तावत्तांपरमेश्वरः ॥ प्रगृह्यदोर्भ्यामाश्लिष्यपरितःपरयामुदा॥६॥स्वांकेधर्त्तुंप्रवृत्तोऽपिसापर्य्यंके
न्यषीदत॥पर्य्यंकतोबलाद्देवींस्वांकमारोप्यसुस्मिताम्॥७॥सस्मितोविवृतैर्नेत्रैस्तद्वक्त्रंप्रपिबन्निव ॥ तयासम्भाषणायेशःपूर्व्वंभाषितमब्रवीत् ॥८॥ देव
उवाच ॥ सादशाचव्यतीताकिंतवसर्वाङ्गसुन्दरि ॥ यस्यामनुनयोपायःकोऽपिकोपान्नलभ्यते ॥ ९ ॥ स्वेच्छयापिचकालीतिनान्यवर्णवतीतिच ॥
त्वत्स्वभावाद्धृतंचित्तंसुभ्रुचिन्तावहंमम ॥ १० ॥ विस्मृतःपरमोभावःकथंस्वेच्छांगयोगतः ॥ नसम्भवन्तियेतत्रचित्तकालुष्यहेतवः ॥ ११ ॥
पृथग्जनवदन्योऽन्यंविप्रियस्यापिकारणम् ॥ आवयोरपियद्यस्तिनास्त्येवैतच्चराचरम् ॥ १२ ॥ अहमग्निशिरोनिष्ठस्त्वंसोमशिरसिस्थिता ॥ अग्नी
षोमात्मकंविश्वमावाभ्यांसमधिष्ठितम् ॥ १३ ॥ जगद्धितायचरतोःस्वेच्छाधृतशरीरयोः ॥ आवयोर्विप्रयोगेहिस्यान्निरालम्बनंजगत् ॥ १४ ॥
अस्तिहेत्वपरंचात्रशास्त्रयुक्तिविनिश्चितम् ॥ वागर्थमयमेवैतज्जगत्स्थावरजंगमम् ॥ १५ ॥ त्वंहिवागमृतंसाक्षादहमर्थामृतंपरम् ॥ द्वयमप्यमृतंकस्मा
द्वियुक्तमुपपद्यते ॥ १६ ॥ विद्याप्रत्यायिकात्वंमेवेद्योऽहंप्रत्ययात्तव ॥ विद्यावेद्यात्मनोरेवविश्लेषःकथमावयोः ॥ १७ ॥ नकर्म्मणासृजामीदंजगत्प्रति
सृजामिच ॥ सर्व्वस्याज्ञैकलभ्यत्वादाज्ञात्वंहिगरीयसी ॥ १८ ॥ आज्ञैकसारमैश्वर्य्यंयस्मात्स्वातन्त्र्यलक्षणम् ॥ आज्ञयाविप्रयुक्तस्यऐश्वर्य्यंममकीदृ
शम् ॥ १९ ॥ नकदाचिदवस्थानमावयोर्विप्रयुक्तयोः ॥ तथापिविरहोवृत्तइत्यतोऽन्यत्किमद्भुतम् ॥ २० ॥ नपरानुग्रहादन्यत्प्रयोजनमिहात्मनः ॥
प्रवृत्तिलक्षणंतस्माल्लीलापिनवृथावयोः ॥ २१ ॥ देवानांकार्य्यमुद्दिश्यलीलोक्तिःकृतवानहम् ॥ त्वयाप्यविदितंनास्तिकथंकुपितवत्यसि ॥ २२ ॥
ततस्त्रिलोकरक्षार्थंकोपोमय्यर्पितेकृतः ॥ यदनर्थायभूतानांनतदस्तिखलुत्वयि ॥२३ ॥ इतिप्रियंवदेसाक्षादीश्वरेपरमेश्वरी ॥ शृङ्गारभावसाराणांजन्म
भूमिरकृत्रिमा ॥ २४ ॥ स्वभर्त्रांललितंतथ्यमुक्तंमत्वास्मितोत्तरम् ॥ लज्जयानकिमप्यूचेकौशिकीवर्णनात्परम् ॥ २५ ॥ देव्युवाच ॥ किंदेवेननसा
दृष्टायासृष्टाकौशिकीमया ॥ तादृशीकन्यकालोकेनभूतानभाविष्याति ॥ २६ ॥ तस्यावीर्य्यंबलंविन्ध्येनिलयंविजयंतथा ॥ शुम्भस्यचनिशुम्भस्यमा
रणंचरणेतयोः ॥ २७ ॥ प्रत्यक्षफलदानंचलोकायभजतेसदा ॥ देवानांरक्षणेशश्वद्ब्रह्माविज्ञापयिष्यति ॥ २८ ॥ इतिसम्भाषमाणायादेव्याएवाज्ञया
तदा ॥ व्याघ्रःसख्यासमानीयपुरोऽवस्थापितस्तथा ॥ २९ ॥ तंप्रेक्ष्याहपुनर्देवीदेवानीतमुपायनम् ॥ व्याघ्रंपश्यनचानेनसदृशोमदुपासकः ॥ ३० ॥

अनेनदुष्टसत्त्वेभ्योरक्षितंमत्तपोवनम् ॥ अतीवममभक्तश्चविश्रब्धश्चस्वरक्षणात् ॥३१॥ स्वदेशंचपरित्यज्यप्रसादार्थंसमागतः ॥ यदिप्रीतिरभून्मेत्तायं
दिप्रीतिंकरोषिमे ॥ ३२ ॥ नित्यमन्तःपुरद्वारिनियोगान्नन्दिनःस्वयम् ॥ रक्षिभिःसहतच्चिह्नैर्वर्त्ततामयमीश्वर ॥३३॥ मधुरंप्रणयोदर्कंश्रुत्वादेव्याःशुभं
वचः ॥ प्रीतोऽस्मीत्याहतंदेवःसचादृश्यतततक्षणात् ॥ ३४ ॥ बिभ्रद्वेत्रलतांहैमींरत्नचित्रंचकंचुकम् ॥ छुरिकामुरगप्रख्यांगणेशोरक्षवेषधृक् ॥ ३५ ॥
यस्मात्सोमोमहादेवोनन्दीचानेननन्दितः ॥ सोमनन्दीतिविख्यातस्तस्मादेषसमाख्यया ॥ ३६ ॥ इत्थंदेव्याःप्रियंकृत्वादेवश्चार्द्धेन्दुभूषणः ॥ भूषया
मासतांदिव्यैर्भूषणैरत्नभूषितैः ॥ ३७ ॥ ततःसगौरीगिरिशोगिरीन्द्रजांसगौरवंसर्व्वमनोहरांहरः ॥ स्वमङ्कमारोप्यवरांगभूषणैर्विभूषयामासशशांकभूष
णः॥३८॥इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेत्रयोविंशोऽध्यायः ॥ २३ ॥ ऋषयऊचुः ॥ देवींसमादधानेनदेवेनेदंकिमीरितम् ॥
अग्नीषोमात्मकंविश्वंवागर्थात्मकमित्यपि ॥ १ ॥ आज्ञैकसारमैश्वर्य्यमाज्ञात्वमितिचोदितम् ॥ तदिदंश्रोतुमिच्छामोयथावदनुपूर्व्वशः ॥ २ ॥
वायुरुवाच ॥ अग्निरित्युच्यतेरौद्रीघोरायातैजसीतनुः ॥ सोमःशाक्तोऽमृतमयःशक्तेःशान्तिकरीतनुः ॥ ३ ॥ अमृतंयत्प्रतिष्ठासातेजोविद्याकलास्व
यम् ॥ भूतसूक्ष्मेषुसर्व्वेषुतेएवरसतेजसी ॥ ४ ॥ विविधातेजसोवृत्तिःसूर्य्यात्माचानलात्मिका ॥ तथैवरसवृत्तिश्चसोमात्माचजलात्मिका ॥ ५ ॥ वैद्यु
तादिमयंतेजोमधुरादिमयोरसः ॥ तेजोरसविभेदैस्तुधृतमेतच्चराचरम् ॥६ ॥ अग्नेरमृतनिष्पत्तिरमृतैरग्निरेधते ॥ अतएवहविःक्लृप्तमग्नीषोमंजगद्धितम्
॥ ७ ॥ हविशेषस्यसम्पत्तिर्वृष्टिःशस्याभिवृद्धये ॥ वृष्टयेचहविस्तस्मादग्नीषोमधृतंजगत् ॥ ८ ॥ अग्निरूर्द्धंज्वलत्येषयावत्सौम्यंपरामृतम् ॥ याव
दग्न्यास्पदंसौम्यममृतंचस्रवत्यधः ॥ ९ ॥ अतएवहिकालाग्निरधस्ताच्छक्तिरूर्द्धतः ॥ तावतादहनंचोर्द्धमधश्चाप्लावनंभवेत् ॥ १० ॥ आधारशक्त्यैव
धृतःकालाग्निरयमूर्द्धगः ॥ तथैवनिम्नगःसोमःशिवशक्तिपदास्पदः ॥ ११ ॥ शिवश्चोर्द्धमधःशक्तिरूर्द्धंशक्तिरधःशिवः॥ तदित्थंशिवशक्तिभ्यांनाव्याप्त
मिहकिंचन ॥ १२ ॥ असकृच्चाग्निनादग्धंजगद्यद्भस्मसात्कृतम् ॥ अग्नेर्वीर्य्यमिदंप्राहुस्तद्वीर्य्यंभस्मयत्ततः ॥ १३ ॥ यश्चेत्थंभस्मसद्भावंज्ञात्वा
स्नातिचभस्मना ॥ अग्निरित्यादिभिर्मन्त्रैर्बद्धःपाशाद्विमुच्यते ॥ १४ ॥ अग्नेर्वीर्य्यन्तुतद्भस्मसोमेनाप्लावितंपुनः ॥ अयोगयुक्त्याप्रकृतेरधिकाराय
कल्पते ॥ १५ ॥ योगयुक्त्यातुतद्भस्मप्लाव्यमानंसमन्ततः ॥ शाक्तेनामृतवर्षेणचाधिकारान्निवर्त्तयेत् ॥ १६ ॥ अतोमृत्युजयायेदममृतप्लावनंसताम्॥
शिवशक्त्यमृतस्पर्शेलब्धएवकुतोमृतिः ॥ १७ ॥ योवेददहनंगुह्यंप्लावनंचयथोदितम् ॥ अग्नीषोमपुटंहित्वानसभूयोऽभिजायते ॥ १८ ॥ शिवाग्निना
तनुंदग्ध्वाशक्तिसौम्यामृतेनयः ॥ प्लावयेद्योगमार्गेणसोऽमृतत्वायकल्पते ॥ १९ ॥ इममर्थंहृदिकृत्यदेवेनसमुदाहृतम् ॥ अग्नीषोमात्मकंविश्वंजगदि

त्यनुरूपतः ॥ २० ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेचतुर्विंशोऽध्यायः ॥ २४ ॥ वायुरुवाच ॥ अथवक्ष्यामिजगतोवागर्थात्मकता
यथा ॥ षडध्ववेदनंसम्यक्समासान्नतुविस्तरात् ॥१॥ नास्तिकश्चिदशब्दोऽर्थोनापिशब्दोनिरर्थकः ॥ ज्ञातोहिसमयेशब्दःसर्व्वःसर्व्वार्थबोधकः ॥२॥
प्रकृतेःपरिणामोऽयंद्विधाशब्दार्थभावितः ॥ तामाहुःप्रकृतिंभूतिंशिवयोःपरमात्मनोः ॥ ३ ॥ शब्दात्मिकाविभूतिर्यासात्रिधाकथ्यतेबुधैः ॥ स्थूला
सूक्ष्मापराचेतिस्थूलायाश्रुतिगोचरा॥४॥ सूक्ष्माचिन्तामयीप्रोक्ताचिन्तयारहितापरा ॥ यापरासाक्रियाशक्तिःशिवतत्त्वसमाश्रया॥५॥ ज्ञानशक्तिसमा
योगादिच्छोपोद्बलितातथा ॥ सर्व्वशक्तिसमष्ट्यात्माशक्तितत्त्वसमाख्यया ॥ ६ ॥ समस्तकार्य्यजातस्यमूलप्रकृतितांगता ॥ सैवकुण्डलिनीमाया
शुद्धाध्वपरमासती ॥ ७ ॥ साविभागस्वरूपैवषडध्वात्माविजृम्भते ॥ तत्रशब्दास्त्रयोऽध्वानस्त्रयश्चार्थाःसमीरिताः ॥ ८ ॥ सर्व्वेषामपितेपुंसांनैजशु
द्ध्यनुरूपतः ॥ लयभोगाधिकारायपर्य्याप्ताइतिनिश्चयः ॥ ९ ॥ मन्त्राध्वाचपदाध्वाचवर्णाध्वाचेतिशब्दतः ॥ भुवनाध्वाचतत्त्वाध्वाकालाध्वाचार्थतः
क्रमात् ॥ १० ॥ तत्रान्योऽन्यंचसर्व्वेषांव्याप्यव्यापकतोच्यते ॥ मन्त्राःसर्व्वेपदैर्व्याप्तावाक्यभावात्पदानि च ॥ ११ ॥ वर्णैर्वर्णसमूहंहिपदमाहुर्विप
श्चितः॥ वर्णास्तुभुवनैर्व्याप्तास्तेषांतेषूपलम्भनात् ॥ १२ ॥ भुवनान्यपितत्त्वौघैरण्डस्यान्तर्बहिःक्रमात् ॥ व्याप्तानिकारणैस्तत्त्वैरारब्धत्वादनेक
शः ॥ १३ ॥ अन्तरण्डस्थितानीहभुवनानितुकानिचित् ॥ पौराणिकानिचान्यानिविज्ञेयानिशिवागमे ॥ १४ ॥ सांख्ययोगप्रसिद्धानितत्त्वान्यपिच
कानिचित् ॥ शिवशास्त्रप्रसिद्धानिततोऽन्यान्यपिकृत्स्नशः ॥ १५ ॥ कलाभिस्तानितत्त्वानिव्याप्तान्येवयथातथम् ॥ परस्याःप्रकृतेरादौपंचधापरिणा
मतः ॥ १६ ॥ कलाश्चतानिवृत्त्याद्याव्याप्ताःपंचयथोत्तरम् ॥ व्यापिकातःपराशक्तिरविभक्ताषडध्वनाम् ॥ १७ ॥ परप्रकृतिभावस्यतत्सत्त्वाच्छिव
तत्त्वतः ॥ शक्त्यादिचपृथिव्यन्तंशिवतत्त्वसमुद्भवम् ॥१८॥ व्याप्तमेकेनतेनैवमृदाकुम्भादिकंयथा ॥ शैवंतत्परमंधामयत्प्राप्यंषड्भिरध्वभिः ॥१९॥
प्रापिकाव्यापिकाशक्तिःपंचतत्त्वविशोधनात् ॥ निवृत्त्यारुद्रपर्य्यन्तास्थितिरण्डस्यशोध्यते ॥ २० ॥ प्रतिष्ठयातदूर्द्ध्वन्तुयावदव्यक्तगोचरम् ॥ तदू
र्द्ध्वंविद्ययामध्येयावद्विद्येश्वरावधि ॥ २१ ॥ शान्त्यातदूर्द्ध्वमध्वान्तेविशुद्धिःशान्त्यतीतया ॥ यामाहुःपरमंव्योमपरप्रकृतियोगतः ॥ २२ ॥ एतानि
पंचतत्त्वानियैर्व्याप्तमखिलंजगत् ॥ तत्रैवसर्व्वमेवेदंद्रष्टव्यंखलुसाधकैः ॥ २३ ॥ अध्वव्याप्तिमविज्ञायशुद्धिंयःकर्त्तुमिच्छति ॥ सविप्रलम्भकःशुद्धेर्ना
लंप्रापयितुंफलम् ॥ २४ ॥ वृथापरिश्रमस्तस्यनिरयायैवकेवलम् ॥ शक्तिपातसमायोगादृतेतत्त्वानितत्त्वतः ॥ २५ ॥ तद्व्याप्तिस्तद्विशुद्धिश्चज्ञातुमे
वनशक्यते ॥ शक्तिराज्ञापराशैवीचिद्रूपापरमेश्वरी ॥ २६ ॥ शिवोऽधितिष्ठत्यखिलंययाकरणभूतया ॥ नात्मनोनैवमायैषानाविकारोविचारतः ॥२७॥

नबन्धोनापिमुक्तिश्चबन्धमुक्तिविधायिनी ॥ सर्व्वैश्वर्य्यपराकाष्ठाशिवस्याव्यभिचारिणी ॥२८॥ समानधर्म्मिणीतस्यतैस्तैर्भावैर्विशेषतः ॥ सतयैवगृही सापितेनैवगृहिणीसदा ॥ २९ ॥ तयोरपत्यंयत्कार्य्यंपरप्रकृतिजंजगत् ॥ सकर्त्ताकरणंसेतितयोर्भेदोव्यवस्थितः ॥ ३० ॥ एकएवशिवःसाक्षाद्द्विधासौ समवस्थितः ॥ स्त्रीपुंसभावेनतयोर्भेदइत्यपिकेचन ॥ ३१ ॥ अपरेतुपराशक्तिःशिवस्यसमवायिनी ॥ प्रभेवभानोश्चिद्रूपाभिन्नैवेतिव्यवस्थितिः ॥ ३२ ॥ तस्माच्छिवःपरोहेतुस्तस्याज्ञापरमेश्वरी ॥ तयैवप्रेरिताशैवीमूलप्रकृतिरव्यया ॥ ३३ ॥ महामायाचमायाचप्रकृतिस्त्रिगुणेतिच ॥ त्रिविधाकार्य्यभेदेनसाप्रसूतेषडध्वनः ॥ ३४ ॥ सवागर्थमयश्चाध्वाषड्विधोनिखिलंजगत् ॥ अस्यैवविस्तरंप्राहशास्त्रजातमशेषतः ॥ ३५ ॥ इतिश्रीशैवे महापुराणेवायवीयसंहितायांपूर्व्वभागेषडध्वकथनंनामपंचविंशोऽध्यायः ॥ २५ ॥ ऋषयऊचुः ॥ चरित्राणिविचित्राणिगुह्यानिगहनानिच ॥ दुर्विज्ञेयानि देवस्यमोहयन्तिमनांसिनः ॥ १ ॥ शिवयोस्तत्त्वसम्बोधेनदोषउपलभ्यते ॥ चरितैःप्राकृतोभावस्तयोरपिविभाव्यते ॥ २ ॥ ब्रह्मादयोऽपिलोकानांसृष्टिस्थित्यन्तहेतवः ॥ निग्रहानुग्रहौप्राप्यशिवस्यवशवर्त्तिनः ॥ ३ ॥ शिवःपुनर्नकस्यापिनिग्रहानुग्रहास्पदम् ॥ अतोऽनतिशयैश्वर्य्यंतस्यैवेतिविनिश्चितम् ॥ ४ ॥ यच्चेदमीदृगैश्वर्य्यंतत्तुस्वातन्त्र्यलक्षणम् ॥ स्वभावसिद्धंचैतस्यमूर्त्तिमत्तास्पदंभवेत् ॥ ५ ॥ नमूर्त्तिश्चस्वतन्त्रस्यघटतेमूलहेतुना ॥ मूर्त्तेरपिचकार्य्यत्वात्तत्सिद्धिःस्यादहैतुकी ॥ ६ ॥ सर्व्वत्रपरमोभावोभावोनान्यश्चकथ्यते ॥ परमापरमौभावौकथमेकत्रसङ्गतौ ॥ ७ ॥ निष्कलोहिस्वभावोऽस्यपरमःपरमात्मनः ॥ सएवसकलःकस्मात्स्वभावोह्यविपर्य्ययः ॥ ८ ॥ स्वभावोऽपिविपर्य्यस्येत्स्वतन्त्रस्येच्छयायदि ॥ नकरोतिकिमीशानोनित्यानित्यविपर्य्ययम् ॥ ९ ॥ मूर्त्त्यात्मासकलःकश्चित्सचान्योनिष्कलाच्छिवात् ॥ शिवेनाधिष्ठितश्चेतिसर्व्वत्रखलुकथ्यते ॥ १० ॥ मूर्त्त्यात्मैवतदामूर्त्तिःशिवस्यास्यभवेदिति ॥ तस्यांमूर्त्तौमूर्त्तिमतःपारतन्त्र्यंहिनिश्चितम् ॥ ११ ॥ अन्यथानिरपेक्षेणमूर्त्तिःस्वीक्रियतेकथम् ॥ मूर्त्तिस्वीकरणंतस्मान्मूर्त्तिसाध्यफलेप्सया ॥ १२ ॥ नहिस्वेच्छाशरीरत्वंस्वातन्त्र्यायोपपद्यते ॥ स्वेच्छैवतादृशीपुंसांयस्मात्कर्म्मानुसारिणी ॥ ॥ १३ ॥ स्वीकर्त्तुंस्वेच्छयादेहंहातुंचप्रभवन्त्युत ॥ ब्रह्मादयःपिशाचान्ताःकिंतेकर्म्मातिवर्त्तिनः ॥ १४ ॥ इच्छयादेहनिर्म्माणमिन्द्रजालोपमंविदुः ॥ अणिमादिगुणैश्वर्य्यवशीकारानतिक्रमात् ॥ १५ ॥ विश्वरूपंदधद्विष्णुर्दधीचेनमहर्षिणा ॥ युध्यतासमुपालब्धस्तद्रूपंदधतास्वयम् ॥ १६ ॥ सर्व्वस्मादधिकस्यापिशिवस्यपरमात्मनः ॥ शरीरवत्तयान्यात्मसाधर्म्यंप्रतिभातिनः ॥ १७ ॥ सर्व्वानुग्राहकंप्राहुःशिवंपरमकारणम् ॥ सनिगृह्णातिदेवादीन्सर्व्वानुग्राहकःकथम् ॥ १८ ॥ बिभेदबहुशोदेवोब्रह्मणःपञ्चमंशिरः ॥ विष्णोरपिनृसिंहस्यशरभसाशरभाकृतिः ॥ १९ ॥ बिभेदपद्भ्यामाक्रम्यहृदयंनखरैःखरैः ॥

देवस्त्रीषुचदेवेषुदक्षस्याध्वरकारणात् ॥२०॥ वीरभद्रेणवीरेणनहिकश्चिददण्डितः॥ पुरत्रयंचसस्त्रीकंसदैत्यंसहबालकैः ॥ २१ ॥ क्षणेनैकेनदेवेननेत्राग्ने
रिन्धनीकृतम् ॥ प्रजानांरतिहेतुश्चकामोरतिपतिःस्वयम्॥२२॥क्रोशतामेवदेवानांहुतोनेत्रहुताशने ॥ गावश्चकाश्चिद्दुग्धौघंस्रवन्त्योमूर्ध्निखेचराः॥२३॥
सरुषाप्रेक्ष्यदेवेनतत्क्षणाद्भस्मसात्कृताः ॥ जलन्धरासुरोदीर्णश्चक्रीकृत्यजलंपदा ॥२४॥ बद्धानंतेनयोविष्णुंचिक्षेपशतयोजनम् ॥ तमेवजलसंधायशू
लेनैवजघानसः ॥२५॥ तच्चक्रंतपसालब्ध्वालब्धवीर्य्योहरिःसदा ॥ जिघांसतेसुरारीणांकुलंनिर्घृणचेतसाम् ॥ २६ ॥त्रिशूलेनांधकस्योरःशिखिनेवोपता
पितम् ॥ कण्ठात्कालांगनांसृष्ट्वादारुकोऽपिनिपातितः ॥२७॥ कौशिकींजनयित्वातुगौर्य्यास्त्वक्कोशगोचराम् ॥ शुम्भःसहनिशुम्भेनप्रापितोमरणंरणे
॥२८॥ श्रुतंचमहदाख्यानंस्कान्देस्कन्दसमाश्रयम् ॥ वधार्थंतारकाख्यस्यदैत्येन्द्रस्येन्द्रविद्विषः ॥२९॥ ब्रह्मणाभ्यर्थितोदेवोमन्दरान्तःपुरंगतः॥विहृ
त्यसुचिरंदेव्याविहारातिप्रसंगतः ॥ ३० ॥ रसांरसातलंनीतामिवकृत्वाभिघाततः ॥ देवींचवंचयंस्तस्यांस्ववीर्य्यमतिदुर्व्वहम् ॥ ३१ ॥ अविमृज्य
विमृज्याग्नौहविःपूतमिवामृतम् ॥ गंगादिष्वपिनिक्षिप्यवह्निद्वारातदंशतः ॥ ३२ ॥ ततसमाहृत्यशनकैःस्तोकंस्तोकमितस्ततः ॥ स्वाहयाकृत्तिकारू
पात्स्वभर्त्रारमरमाणया ॥ ३३ ॥ सुवर्णीभूतयान्यस्तंमेरौशरवणेक्वचित् ॥ सन्दीपयित्वाकालेनतस्यभासादिशोदश ॥ ३४ ॥ रंजयित्वागिरीन्सर्व्वा
न्कांचनीकृत्यमेरुणा ॥ ततश्चिरेणकालेनसंजातेतत्रतेजसि ॥ ३५ ॥ कुमारेसुकुमारांगेकुमाराणांनिदर्शने ॥ तच्छैशवंस्वरूपंचतस्यदृष्ट्वामनोहरम्
॥ ३६ ॥ सहदेवासुरैर्लोकैर्विस्मितेचविमोहिते ॥ देवोऽपिस्वयमायातःपुत्रदर्शनलालसः ॥ ३७ ॥ सहदेव्यांकमारोप्यतत्तस्यस्मेरमाननम् ॥
पीत्वामृतमिवस्नेहविवशेनान्तरात्मना ॥ ३८ ॥ देवेष्वपिचपश्यत्सुवीतरागैस्तपस्विभिः॥ स्वस्यवक्षःस्थलेरङ्गेनर्त्तयित्वाकुमारकम् ॥३९॥ अनुभूय
चतत्क्रीडांसम्भाष्यचपरस्परम् ॥ स्तन्यमाज्ञापयद्देव्याःपाययित्वामृतोपमम् ॥४०॥ तवावतारोजगतांहितायेत्यनुशास्यच ॥ स्वयंदेवश्चदेवीचनतृ
प्तिमुपजग्मतुः ॥ ४१ ॥ ततःशक्रेणसन्धायबिभ्यतातारकासुरात् ॥ कारयित्वाभिषेकंचसैनापत्येदिवौकसाम् ॥ ४२ ॥ पुत्रमन्तरतःकृत्वादेवेनत्रिपु
रद्विषा ॥ स्वयमन्तर्हितेनैवस्कन्दमिन्द्राभिरक्षितम् ॥ ४३ ॥ तच्छक्त्याक्रौंचभेदिन्यायुधिकालाग्निकल्पया ॥ छेदितंतारकस्यापिशिरःशक्रभियास
हं ॥ ४४ ॥ तथारक्षोऽधिपःसाक्षाद्रावणोबलगर्व्वितः ॥ उद्धरन्स्वभुजैर्दीर्घैःकैलासंगिरिमात्मनः ॥ ४५ ॥ तदागोऽसहमानस्यदेवदेवस्यशूलिनः ॥
पादाङ्गुष्ठपरिस्पन्दान्ममज्जमृदितोभुवि ॥ ४६ ॥ बटोःकस्यचिदर्थेनस्वाश्रितस्यगतायुषः॥ त्वरयागत्यदेवेनपादान्तंगमितोऽन्तकः ॥ ४७ ॥ स्ववाह
नमविज्ञायवृषेन्द्रंवडवानलः ॥ सगलग्रहमानीतस्ततस्त्वेकोदकंजगत् ॥ ४८ ॥ अलोकविदितैस्तैस्तैर्नृत्यैरानन्दसुन्दरैः ॥ अङ्गहारवशेनेदमसकृ

च्चलितंजगत् ॥ ४९ ॥ शान्तएवसदासर्व्वमनुगृह्णातिचेच्छिवः ॥ सर्व्वान्युगपदेवैषकथंशक्तोनमोचयेत् ॥ ५० ॥ अनादिकर्म्मवैचित्र्यमपिनात्रानियाम
कम् ॥ कारणंखलुकर्म्मापिभवेदीश्वरकारितम् ॥ ५१ ॥ किमत्रबहुनोक्तेननास्तिक्यंहेतुकारितम् ॥ यथास्मासुनिवर्त्तेततथाकथयमारुत ॥ ५२ ॥
इति श्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेषड्विंशोऽध्यायः ॥२६॥ वायुरुवाच ॥ स्थानेसंशयितंविप्राभवद्भिर्हेतुचोदितैः ॥ जिज्ञासाहिनना
स्तिक्यंसाधयेत्साधुबुद्धिषु ॥ १ ॥ प्रमाणमत्रवक्ष्यामिसतांमोहनिवर्त्तकम् ॥ असतान्त्वन्यथाभावःप्रसादेनविनाप्रभोः ॥ २ ॥ शिवस्यपरिपूर्णस्यप
रानुग्रहमन्तरा ॥ नकिंचिदपिकर्त्तव्यमितिसाधुविनिश्चितम् ॥ ३ ॥ स्वभावएवपर्य्याप्तःपरानुग्रहकर्म्मणि ॥ अन्यथानिःस्वभावेननकिमप्यनुगृह्यते
॥ ४ ॥ परंसर्व्वमनुग्राह्यंपशुपाशात्मकंजगत् ॥ परस्यानुग्रहार्थस्तुपत्युराज्ञासमन्वयः ॥ ५ ॥ पतिराज्ञापकःसर्व्वमनुगृह्णातिसर्व्वदा ॥ तदर्थमर्थस्वी
कारेपरतन्त्रःकथंशिवः ॥ ६ ॥ अनुग्राह्यानपेक्षोऽस्तिनहिकश्चिदनुग्रहः ॥ अतःस्वातन्त्र्यशब्दार्थोनानपेक्षत्वलक्षणः ॥७॥ यत्तत्पुनरनुग्राह्यंपरतन्त्रंत
दिष्यते ॥ अनुग्रहाहृतेतस्यभुक्तिमुक्त्त्योरनन्वयात् ॥ ८ ॥ मूर्त्त्यात्मानोऽप्यनुग्राह्याःशिवाज्ञाननिवर्त्तनात् ॥ अज्ञानाधिष्ठितंशम्भोर्नकिञ्चिदिहविद्य
ते ॥९॥ येनोपलभ्यतेऽस्माभिःसकलेनातिनिष्कलः ॥ समूर्त्त्यात्माशिवस्यैवमूर्तिरित्युपचर्य्यते ॥१०॥ नह्यसौनिष्कलःसाक्षाच्छिवःपरमकारणम् ॥
स्वाकारेणानुभाव्येनकेनाप्यनुपलक्षितः ॥ ११ ॥ प्रामाणगम्यतामात्रंतत्स्वभावोपपादकम् ॥ नतावतात्रापेक्षाधीरुपलक्षणमन्तरा ॥ १२ ॥
आत्मोपलक्षणंसाक्षान्मूर्तिरेवहिकाचन ॥ शिवस्यमूर्तिमूर्त्त्यात्मायतस्तस्योपलक्षणम् ॥ १३ ॥ यथाकाष्ठाद्यनारूढोनवह्निरुपलभ्यते ॥ एवंशिवोऽ
पिमूर्त्त्यात्मन्यनारूढइतिस्थितिः॥१४॥यथाग्निमानयेत्युक्तेज्वलत्काष्ठाहृतेस्वयम्॥नाग्निरानीयतेतद्वत्पूज्योमूर्त्त्यात्मनाशिवः॥१५॥ अतएवाहिपूजादौ
मूर्त्यात्मपरिकल्पनम्॥मूर्त्त्यात्मनिकृतंसाक्षाच्छिवएवकृतंयतः॥१६॥ लिङ्गादावपितत्कृत्यमर्च्चायांचविशेषतः ॥ तत्तन्मूर्त्त्यात्मभावेनशिवोऽस्माभि
रुपास्यते॥१७॥ यथानुगृह्यतेसोऽपिमूर्त्त्यात्मापरमेष्ठिना ॥ तथामूर्त्त्यात्मनिष्ठेनशिवेनपशवोवयम्॥१८॥लोकानुग्रहणायैवशिवेनपरमेष्ठिना॥सदाशि
वादयःसर्व्वेमूर्त्त्यात्मानोऽप्यधिष्ठिताः ॥ १९ ॥ तेहिमूर्त्त्यात्मभावेनलब्ध्वास्वयमनुग्रहम् ॥ अन्यात्मनोऽनुगृह्णन्तिशिवेनसमधिष्ठिताः ॥ २० ॥ आ
त्मनामेवभोगायमोक्षायचविशेषतः ॥ तत्त्वातत्त्वस्वरूपेषुमूर्त्त्यात्मसुशिवान्वयः ॥ २१ ॥ भोगःकर्म्मविपाकात्मासुखदुःखात्मकोयतः ॥ नचकर्म्म
शिवेऽस्तीतितस्यभोगःकिमात्मकः ॥ २२ ॥ सर्व्वंशिवोऽनुगृह्णातिनानिगृह्णातिकिंचन ॥ निगृह्णतान्तुयेदोषाःशिवेतेषामसम्भवात् ॥२३ ॥ येपुनर्नि
ग्रहाःकेचिद्ब्रह्मादिषुनिदर्शिताः ॥ तेऽपिलोकहितायैवकृताःश्रीकण्ठमूर्तिना ॥ २४ ॥ अण्डस्याप्याधिपत्यंहिश्रीकण्ठस्यनसंशयः ॥ श्रीकण्ठाख्यां

शिवोमूर्तिंक्रीडन्तीमधितिष्ठति ॥ २५ ॥ सदोषाएवदेवाद्यानिगृहीतायथोचितम् ॥ ततस्तेऽपिविपाप्मानःप्रजाश्चविगतज्वराः ॥ २६ ॥ निग्रहोऽ
पिस्वरूपेणविदुषांनजुगुप्सितः ॥ अतएवहिदण्डचेषुदण्डोराज्ञांप्रशस्यते ॥२७॥ यत्सिद्धिरीश्वरत्वेनकार्य्यवर्गस्यकृत्स्नशः ॥ नसचेदीशतांकुर्य्याज्ज
गतःकथमीश्वरः ॥ २८ ॥ ईशताचविधातृत्वंविधिराज्ञापनंपरम् ॥ आज्ञाचेत्थमिदंकुर्य्यान्नकुर्य्यादितिशासनम् ॥ २९ ॥ तच्छासनानुवर्त्तित्वंसाधु
भावस्यलक्षणम् ॥ विपरीतमसाधुस्यान्नसर्व्वंतत्तुदृश्यते ॥ ३० ॥ साधुसंरक्षणीयंचेद्विनिवर्त्त्यमसाधुयत् ॥ विनिवर्त्तनेचसामादेरन्तेदण्डोहिसाधन
म् ॥ ३१ ॥ हितार्थलक्षणंचेदंदण्डान्तमनुशासनम् ॥ अतोऽन्यद्विपरीतंतदहितंसम्प्रचक्षते ॥ ३२ ॥ हितेसदानिषण्णानामीश्वरःस्यान्निदर्शनम् ॥
सकथंदूष्यतेसद्भिरसतामेवनिग्रहात् ॥ ३३ ॥ अयुक्तकारिणोलोकेगर्हणीयाविवेकिना ॥ यदुद्वेजयतेलोकंतदयुक्तंप्रचक्षते ॥ ३४ ॥ सर्व्वोऽपिनिग्रहो
लोकेनचविद्वेषपूर्व्वकः ॥ नहिद्वेष्टिपितापुत्रंयोनिगृह्यापिशिक्षयेत ॥ ३५ ॥ माध्यस्थेनापिनिग्राह्यान्योनिगृह्णातिमार्गतः ॥ तस्याप्यवश्यंयत्किञ्चिन्नै
र्घृण्यमनुवर्त्तते ॥ ३६ ॥ अन्यथानहिनस्त्येवसदोषानप्यसौपरान् ॥ हिनस्तिचायमप्यज्ञान्परंमाध्यस्थमाचरन् ॥ ३७ ॥ तस्माद्दुःखात्मिकांहिंसां
कुर्व्वाणोयःसनिर्घृणः ॥ इतिनिर्व्वन्धयन्त्येकेनियमोनेतिचापरे ॥ ३८ ॥ निदानज्ञस्यभिषजोरुग्णेहिंसांप्रयुंजतः ॥ नकिंचिदपिनैर्घृण्यंघृणैवात्रप्रयो
जिका ॥ ३९ ॥ घृणापिनगुणायैवहिंस्रेषुप्रतियोगिषु ॥ तादृशेषुघृणीभ्रान्त्याघृणान्तरितनिर्घृणः ॥ ४० ॥ उपेक्षापिहिदोषायरक्ष्येषुप्रतियो
गिषु ॥ शक्त्यांसत्यामुपेक्षातोरक्ष्यःसद्योविपद्यते ॥ ४१ ॥ सर्पस्यास्यगतंपश्यन्यस्तुरक्ष्यमुपेक्षते ॥ दोषाभासात्समुत्प्रेक्ष्यःफलतःसोपि
निर्घृणः॥४२॥ तस्माद्घृणागुणायैवसर्व्वथेतिनसम्मतम्॥सम्मतंप्राप्तकारित्वंसर्व्वन्त्वन्यदसम्मतम्॥४३॥मूर्त्त्यात्मस्वपिरागाद्यादोषाःसन्त्येववस्तुतः॥
तथापितेषामेवैतेनाशिवस्यतुसर्व्वथा ॥ ४४ ॥ अग्नावपिसमाविष्टंताम्रंखलुसकालिकम् ॥ इतिनाग्निरसौदुष्येत्ताम्रसंसर्गकारणात् ॥ ४५ ॥ नाग्नेरशु
चिसंसर्गादशुचित्वमुपेयते॥अशुचेस्त्वग्निसंयोगाच्छुचित्वमपिजायते ॥ ४६ ॥ एवंशोध्यात्मसंसर्गान्नह्यशुद्धःशिवोभवेत् ॥ शिवसंसर्गतस्त्वेषशोध्या
त्मैवाहिशुध्यति ॥ ४७ ॥ अयस्यग्नौसमाविष्टेदाहोऽग्नेरेवनायसः ॥ मूर्त्त्यात्मन्येवमैश्वर्य्यमीश्वरस्यैवनात्मनाम् ॥ ४८ ॥ नहिकाष्ठंज्वलत्यूर्ध्वमग्निरेव
ज्वलत्यसौ ॥ काष्ठस्याङ्गारतानाग्नेरेवमत्रापियोज्यताम् ॥ ४९ ॥ अतएवजगत्यस्मिन्काष्ठपाषाणमृत्स्वपि ॥ शिवावेशवशादेवशिवत्वमुपचर्य्यते
॥५०॥मैत्र्यादयोगुणागौणायस्मात्तेचित्तवृत्तयः॥तैर्गुणैरुपरक्तानांदोषायचगुणायच ॥ ५१ ॥ यत्तुगौणमगौणञ्चतत्सर्व्वमनुगृह्णतः ॥ नगुणायनदोषाय
शिवस्यगुणवृत्तयः ॥ ५२ ॥ नचानुग्रहशब्दार्थंगौणमाहुर्विपश्चितः ॥ संसारमोचनंकिन्तुशैवमाज्ञामयंहितम् ॥ ५३ ॥ हितंतदाज्ञाकरणंयद्धितंतद

नुग्रहः ॥ सर्व्वंहितेनियुंजानःसर्व्वानुग्राहकःशिवः ॥ ५४ ॥ यस्तूपकारशब्दार्थस्तमप्याहुरनुग्रहम् ॥ तस्यापिहितरूपत्वाच्छिवःसर्व्वोपकारकः॥
॥ ५५ ॥ हितेसदानियुक्तन्तुसर्व्वंचिदचिदात्मकम् ॥ स्वभावप्रतिबन्धंतत्समंनलभतेहितम् ॥ ५६ ॥ यथाविकासंयान्त्येवरवेःपद्मानिभानुभिः ॥
समंनविकसन्त्येवस्वस्वभावानुरोधतः ॥ ५७ ॥ स्वभावोऽपिहिभावानांभाविनोऽर्थस्यकारणम् ॥ नाहिस्वभावतोऽसन्तमर्थंकर्त्तैंषुसाधयेत् ॥ ५८ ॥
सुवर्णमेवनांगारंद्रावयत्यग्निसङ्गमः ॥ एवंपक्वमलानेवमोचयेन्नाशिवःपरान् ॥ ५९ ॥ यद्यथाभवितुंयोग्यंतत्तथानभवेत्स्वयम् ॥ विनाभावनयाकर्त्तास्व
तन्त्रःसन्ततोभवेत् ॥ ६० ॥ स्वभावविमलोयद्वत्सर्व्वानुग्रहकारकः॥स्वभावमलिनास्तद्वदात्मानोजीवसंज्ञिताः ॥ ६१ ॥ अन्यथासंसरन्त्येतेनियमान्न
शिवःकथम् ॥ कर्म्ममायानुबन्धोऽस्यसंसारःकथ्यतेबुधैः ॥ ६२ ॥ अनुबन्धोयमस्यैवनाशिवस्येतिहेतुमान् ॥ सहेतुरात्मनामेवनिजोनागन्तुकोमलः
॥ ६३ ॥ आगन्तुकत्वेतस्यापिभाव्यंकेनापिहेतुना ॥ योऽयंहेतुरसावेकःकलपतेऽनेकशक्तिकः ॥ ६४ ॥ कार्य्यभेदोऽपितच्छक्तिभेदोनात्रोपपद्यते ॥
कर्म्ममायानुबन्धोयःसविचित्रःस्वभावतः ॥ ६५ ॥ आत्मतायाःसमत्वेऽपिबद्धामुक्ताःपरेयतः ॥ बद्धेष्वेवपुनःकेचिह्वयभोगाधिकारतः ॥ ६६ ॥ ज्ञानै
श्वर्य्यादिवैषम्यंभजन्तेसोत्तराधराः॥केचिन्मूर्त्यात्मतांयांतिकेचिदासन्नगोचराः॥६७॥मूर्त्यात्मसुशिवाःकेचिदध्वनांमूर्द्धसुस्थिताः॥ मध्येमहेश्वरारुद्रा
स्त्वर्व्वाचीनपदेस्थिताः ॥ ६८ ॥ आसन्नेऽपिसमावेशेपरस्तात्कारणत्रयम् ॥ तत्राप्यात्मास्थितोऽधस्तादन्तरात्मातुमध्यतः ॥ ६९ ॥ परस्तात्पर
मात्मेतिब्रह्मविष्णुमहेश्वराः ॥ वर्त्तंतेपशवःकेचित्परमात्मपदाश्रयाः ॥ ७० ॥ अन्तरात्मपदेकेचित्केचिदात्मपदेतथा ॥ शांत्यतीतपदेशैवाःशांतौमाहे
श्वरामताः ॥ ७१ ॥ विद्यायांतुतथारौद्राःप्रतिष्ठायांतुवैष्णवाः ॥ निवृत्तौचतथात्मानोब्रह्माब्रह्मांगयोनयः ॥ ७२ ॥ देवयोन्यष्टकंमुख्यंमानुष्यमथमध्य
मम् ॥ पश्वादयोऽधमाःपंचयोनयस्ताश्चतुर्द्दश ॥ ७३ ॥ उत्तराधरभावोऽपिनैजःसंसारिणोमलः ॥ यथामभावोमुक्तस्यपूर्व्वंपश्चात्तुपक्वता ॥ ७४ ॥
मलोऽप्यामश्वपक्वश्चभवेत्संसारकारणम् ॥ आमेत्वधरतापुंसांपक्वेतूत्तरताक्रमात् ॥७५ ॥ पश्वात्मानस्त्रिधाभिन्नाएकाद्वित्रिमलाःक्रमात् ॥ तत्रोत्तराह्ये
कमलाद्विमलामध्यमामताः ॥ ७६ ॥ त्रिमलास्त्वधमाज्ञेयायथोत्तरमधिष्ठिताः ॥ त्रिमलानधितिष्ठन्तिद्विमलैकमलाःक्रमात् ॥ ७७ ॥ एकद्वित्रिमला
न्सर्व्वाञ्छिवएकोऽधितिष्ठति ॥ अशिवात्मकमप्येतच्छिवेनाधिष्ठितंतथा ॥ ७८ ॥ अरुद्रात्मकमप्येवंरुद्रैर्जगदधिष्ठितम् ॥ अण्डान्ताहिमहाभूमिःश
तरुद्राद्यधिष्ठिता ॥ ७९ ॥ मायान्तमन्तरिक्षन्तुअमरेशादिभिःक्रमात् ॥ अंगुष्ठमात्रपर्य्यन्तैःसमन्तात्सन्ततंततम् ॥ ८० ॥ महामायावसानाद्यौर्वा
माद्यैर्भुवनाधिपैः ॥ अनाश्रितातैरध्वान्तर्व्वर्त्तिभिःसमधिष्ठिता ॥ ८१ ॥ तेहिसाक्षाद्दिविषदस्त्वन्तरिक्षसदस्तथा ॥ पृथिवीषदइत्येवंदेवादेवव्रतैःस्तु

ताः ॥ ८२ ॥ एवंत्रिभिर्म्मलैरामैःपक्वैरेवपृथक्पृथक् ॥ निदानभूतैःसंसाररोगःपुंसांप्रवर्त्तते ॥ ८३ ॥ अस्यरोगस्यभैषज्यंज्ञानमाज्ञौषधोद्भवम् ॥
भिषगाज्ञापकःशम्भुःशिवःपरमकारणम् ॥ ८४ ॥ अदुःखेनापिशक्तश्चेत्पशून्मोचयितुंशिवः ॥ कथंदुःखंकरोतीतिनात्रकार्य्योविचारणा ॥ ८५ ॥
दुःखमेवहिसर्व्वोऽपिसंसारइतिनिश्चितम् ॥ कथंदुःखमदुःखंस्यात्स्वभावोह्यविपर्य्ययः ॥ ८६ ॥ नहिरोगोह्यरोगःस्याद्भिषग्भैषज्यकारणात् ॥ रोगार्त्त
तुभिषग्रोगाद्भैषज्यैःसुखमुद्धरेत् ॥ ८७ ॥ एवंस्वभावमलिनान्स्वभावाद्दुःखिनःपशून् ॥ स्वाज्ञौषधविधानेनदुःखान्मोचयतेशिवः ॥ ८८ ॥ नभिष
क्कारणंरोगेशिवःसंसारकारणम् ॥ इत्येतदपिवैषम्यंनदोषायास्यकल्पते ॥ ८९ ॥ दुःखस्वभावसंसिद्धेःकथंतत्कारणंशिवः ॥ स्वाभाविकोमलःपुंसांस
हिसंसारयत्यमून् ॥ ९० ॥ संसारकारणंयत्तुमलंमायाद्यचेतनम् ॥ तत्स्वयंसम्प्रवर्त्तेतशिवसान्निध्यमन्तरा ॥ ९१ ॥ यथामणिरयस्कान्तःसान्निध्या
दुपकारकः ॥ अयसश्चलतस्तद्वच्छिवोऽप्यस्येतिसूरयः ॥९२॥ ननिवर्त्तयितुंशक्यंसान्निध्यंसहकारणम् ॥ अधिष्ठातातत्तोनित्यमज्ञातोजगतःशिवः॥
॥ ९३ ॥ नशिवेनविनाकिंचित्प्रवृत्तमिहविद्यते ॥ तत्प्रेरितमिदंसर्व्वंतथापिसनदुष्यति॥९४॥ शक्तिराज्ञात्मिकातस्यनियन्त्रीविश्वतोमुखी ॥ तयात
तमिदंशश्वत्तथापिसनदुष्यति ॥ ९५ ॥ अनिदंप्रथमंसर्व्वमीशितव्यंसईश्वरः ॥ ईशनाच्चतदीयाज्ञातथापिसनदुष्यति ॥ ९६ ॥ योऽन्यथामन्यतेमो
हात्सविनश्यतिदुर्म्मतिः ॥ तच्छक्तिवैभवादेवतथापिनसदुष्यति ॥ ९७ ॥ एतस्मिन्नन्तरेव्योम्निश्रौतीवागशरीरिणी ॥ सत्यमोममृतंसत्यमित्याविरभ
वत्स्फुटम् ॥ ९८ ॥ ततोहृष्टतराःसर्व्वेविनष्टाशेषसंशयाः ॥ मुनयोविस्मयाविष्टाःप्रणेमुःपवनंप्रभुम् ॥ ९९ ॥ तथाविगतसन्देहान्कृत्वापिपवनोमुनी
न् ॥ नैतेप्रतिष्ठितज्ञानाइतिमत्वैवमब्रवीत् ॥ १०० ॥ वायुरुवाच ॥ परोक्षमपरोक्षञ्चद्विविधंज्ञानमिष्यते ॥ परोक्षमस्थिरंप्राहुरपरोक्षन्तुसुस्थिरम् ॥
॥ १०१ ॥ हेतूपदेशगम्यंयत्तत्परोक्षंप्रचक्षते ॥ अपरोक्षंपुनःश्रेष्ठादनुष्ठानाद्भविष्यति ॥ १०२ ॥ नापरोक्षादृतेमोक्षइतिकृत्वाविनिश्चयम् ॥ श्रेष्ठानु
ष्ठानसिद्ध्यर्थंप्रयतध्वमतन्द्रिताः ॥ १०३ ॥ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेशिवतत्त्वकथनंनामसप्तविंशोऽध्यायः ॥ २७ ॥
॥ ऋषयऊचुः ॥ किंतच्छ्रेष्ठमनुष्ठानंमोक्षोयेनापरोक्षितः ॥ तत्तस्यसाधनञ्चाद्यवक्तुमर्हसिमारुत ॥ १ ॥ वायुरुवाच ॥ शैवोहिपरमोधर्म्मःश्रेष्ठानुष्ठान
शब्दितः ॥ यत्रापरोक्षंलक्ष्येतसाक्षान्मोक्षप्रदःशिवः॥२॥सतुपंचविधोज्ञेयःपञ्चभिःपर्वभिःक्रमात् ॥ क्रियातपोजपध्यानज्ञानात्मभिरनुत्तरैः ॥३॥ तैरेव
सोत्तरैःसिद्धोधर्म्मस्त्वपरमोमतः ॥ परोक्षमपरोक्षंचज्ञानंयत्रचमोक्षदम् ॥ ४ ॥ परमोऽपरमश्चोभौधर्म्मौहिश्रुतिचोदितौ ॥ धर्म्मशब्दाभिधेयेऽर्थेप्रमाणं
श्रुतिरेवनः ॥ ५ ॥ परमोयोगपर्य्यंतोधर्म्मःश्रुतिशिरोगतः ॥ धर्म्मस्त्वपरमस्तद्वदधःश्रुतिमुखेस्थितः ॥ ६ ॥ अपश्वात्माधिकारःस्याद्योधर्म्मः

परमोमतः ॥ साधारणस्ततोऽन्यस्तुसर्व्वेषामधिकारतः ॥७॥ सचायमपरोधर्म्मःपरधर्म्मस्यसाधनम्॥धर्म्मशास्त्रादिभिःसम्यक्साङ्गएवोपबृंहितः ॥८॥
तत्राद्योयःपरोधर्म्मःश्रेष्ठानुष्ठानशब्दितः ॥ इतिहासपुराणाभ्यांकथञ्चिदुपबृंहितः ॥ ९ ॥ शैवागमैस्तुसपुनःसहाङ्गोपाङ्गविस्तरः ॥ ससंस्काराधिकार
श्चसम्यगेवोपबृंहितः ॥ १० ॥ शैवागमोऽपिद्विविधःश्रौतोऽश्रौतश्चसस्मृतः ॥ श्रुतिसारमयःश्रौतःस्वतन्त्रइतरोमतः ॥ ११ ॥ स्वतन्त्रोदशधापूर्व्वंतथा
ष्टादशधापुनः ॥ कामिकादिसमाख्याभिःसिद्धःसिद्धान्तसंज्ञितः ॥ १२ ॥ श्रुतिसारमयोयस्तुशतकोटिप्रविस्तरः ॥ परंपाशुपतंयत्रव्रतंज्ञानञ्चकथ्यते
॥ १३ ॥ युगावर्त्तेषुशिष्येषुयोगाचार्यस्वरूपिणा ॥ तत्रतत्रावतीर्णेनशिवेनैवप्रवर्त्तते ॥ १४ ॥ संक्षिप्यास्यप्रवक्तारश्चत्वारःपरमर्षयः ॥ रुरुर्दधीचोऽ
गस्त्यश्चउपमन्युर्महायशाः ॥ १५ ॥ तेचपाशुपताज्ञेयाःसंहितानांप्रवर्त्तकाः ॥ तत्सन्ततीयागुरवःशतशोऽथसहस्रशः ॥ १६ ॥ तत्रोक्तःपरमोधर्म्मश्च
र्य्याद्यात्माचतुर्व्विधः ॥ तेषुपाशुपतोयोगःशिवंप्रत्यक्षयेद्दृढम् ॥१७॥ तस्माच्छ्रेष्ठमनुष्ठानंयोगःपाशुपतोमतः॥तत्राप्युपायःकोऽप्युक्तोब्रह्मणासतुकथ्य
ते ॥ १८ ॥ नामाष्टकमयोयोगःशिवेनपरिकल्पितः ॥ तेनयोगेनसहसाशैवीप्रज्ञाप्रजायते ॥ १९ ॥ प्रज्ञयापरमंज्ञानमचिराल्लभतेस्थिरम् ॥ प्रसीदति
शिवस्तस्ययस्यज्ञानंप्रतिष्ठितम् ॥२०॥ प्रसादात्परमोयोगोयःशिवञ्चापरोक्षयेत् ॥ शिवापरोक्षात्संसारकारणेनवियुज्यते॥२१॥ततःस्यान्मुक्तसंसारो
मुक्तःशिवसमोभवेत् ॥ शिवोमहेश्वरश्चैवरुद्रोविष्णुःपितामहः ॥ २२ ॥ संसारवैद्यःसर्व्वज्ञःपरमात्मेतिमुख्यतः ॥ नामाष्टकमिदंनित्यंशिवस्यप्रतिपाद
कम्॥ २३॥आद्यन्तुपञ्चकंतत्रशान्त्यतीताद्यनुक्रमात्॥संज्ञासदाशिवादीनांपञ्चोपाधिपरिग्रहात्॥ २४॥उपाधिविनिवृत्तौतुयथास्वंविनिवर्त्तते ॥पदमेव
हितन्नित्यमनित्याःपदिनःस्मृताः ॥२५॥ पदानांपरिवृत्तौतुमुच्यन्तेपदिनोयतः॥परिवृत्त्यन्तरेभूयःपदप्राप्तिरुपाधिना॥२६॥आत्मान्तराभिधानंस्याद्य
दाद्यंनामपञ्चकम्॥अन्यत्तुत्रितयंनाम्नामुपादानादियोगतः ॥२७॥ त्रिविधोपाधिवचनाच्छिवएवानुवर्त्तते॥अनादिमलसंश्लेषप्रागभावात्स्वभावतः॥२८॥
अत्यन्तपरिशुद्धात्मेत्यतोऽयंशिवउच्यते॥अथवाशेषकल्याणगुणैकघनईश्वरः ॥२९॥ शिवइत्युच्यतेसद्भिःशिवतत्त्वार्थवेदिभिः॥त्रयोविंशतितत्त्वेभ्यः
पराप्रकृतिरुच्यते॥३०॥प्रकृतेस्तुपरंप्राहुःपुरुषंपंचविंशकम्॥यंवेदादौस्वरंप्राहुर्वाच्यवाचकभावतः ॥३१॥ वेदैकवेद्ययाथात्म्याद्वेदान्तेचप्रतिष्ठितः ॥
सएवप्रकृतौलीनोभोक्तायःप्रकृतेर्मतः॥३२॥तस्यप्रकृतिलीनस्ययःपरःसमहेश्वरः॥तदधीनप्रवृत्तित्वात्प्रकृतेःपुरुषस्यच॥३३ ॥अथवात्रिगुणंतत्त्वंमाये
यमिदमव्ययम् ॥ मायान्तुप्रकृतिंविद्यान्मायिनन्तुमहेश्वरम् ॥ ३४ ॥ मायाविक्षोभकोऽनन्तोमहेश्वरसमन्वयात् ॥ रुद्दुःखंदुःखहेतुर्वातद्द्रावयतियःप्रभुः
॥ ३५ ॥ रुद्रइत्युच्यतेसद्भिःशिवःपरमकारणम् ॥ शिवतत्त्वादिभूम्यन्तंशरीरादिघटादिच ॥ ३६ ॥ व्याप्याधितिष्ठतिशिवस्ततोरुद्राइतस्ततः ॥

जगतःपितृभूतानांशिवोमूर्त्त्यात्मनामपि ॥ ३७ ॥ पितृभावेणसर्व्वेषांपितामहउदीरितः ॥ निदानज्ञोयथावैद्योरोगस्यविनिवर्तकः ॥ ३८ ॥ उपायैर्भे
षजैस्तद्वल्लयभोगाधिकारतः ॥ संसारस्येश्वरोनित्यंसमूलस्यनिवर्त्तकः ॥ ३९ ॥ संसारवैद्यइत्युक्तःसर्व्वतत्त्वार्थवेदिभिः ॥ दशार्थज्ञानसिद्ध्यर्थमिन्द्रि
येष्वेषुसत्स्वपि ॥ ४० ॥ त्रिकालभाविनोभावान्स्थूलान्सूक्ष्मानशेषतः ॥ अणवोनैवजानन्तिमायाणवमलावृताः ॥ ४१ ॥ असत्स्वपिचसर्व्वेषुसर्व्वा
र्थज्ञानहेतुषु ॥ यद्यथावस्थितंवस्तुतत्तथैवसदाशिवः ॥ ४२ ॥ अयत्नेनैवजानातितस्मात्सर्व्वज्ञउच्यते ॥ सर्व्वात्मापरमैरेभिर्गुणैर्नित्यसमन्वयात् ॥
॥ ४३ ॥ स्वस्मात्परात्मविरहात्परमात्माशिवःस्वयम् ॥ नामाष्टकमिदंचैवलब्ध्वाचार्य्यप्रसादतः ॥ ४४ ॥ निवृत्त्यादिकलाग्रन्थीञ्छिवाद्यैःपंचनाम
भिः ॥ यथास्वंक्रमशःस्मृत्वाशोधयित्वायथागुणम् ॥ ४५ ॥ गुणितैरेवसोद्घातैर्निरुद्घातैरथापिवा ॥ हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रसमन्वितान्॥४६॥
भित्त्वापुर्य्यष्टकाकारंस्वात्मानंचसुषुम्णया ॥ द्वादशान्तःस्थितस्येन्दोर्नीत्वोपरिशिवौजसि ॥ ४७ ॥ संहृत्यवानवापश्चाद्यथास्वंकारणेलयात् ॥
शाक्तेनामृतवर्षेणसंसिक्तायांतनौपुनः ॥ ४८ ॥ अवतार्य्यस्वमात्मानममृतात्माकृतिंहृदि ॥ द्वादशान्तःस्थितस्येन्दोःपरस्ताच्छ्वेतपङ्कजे ॥ ४९ ॥
अर्द्धनारीश्वरंदेवंनिर्म्मलंमधुराकृतिम् ॥ शुद्धस्फटिकसङ्काशंप्रसन्नंशीतलद्युतिम् ॥ ५० ॥ ध्यात्वानामाष्टकेनैवभावपुष्पैःसमर्च्चयेत् ॥ अभ्यर्च्चनान्तेतु
पुनःप्राणानायम्यमानवः ॥ ५१ ॥ सम्यक्चित्तंसमाधायसार्थंनामाष्टकंजपेत् ॥ नाभौचाष्टाहुतीर्हुत्वापूर्णांहुत्वानमस्ततः ॥ ५२ ॥ अष्टपुष्पप्रदानेन
कृत्वाभ्यर्च्चनमन्तिमम् ॥ निवेदयेत्स्वमात्मानंचुलुकोदकवर्त्मना ॥५३॥ एवंकृत्वाचिरादेवज्ञानंपाशुपतंशुभम् ॥ लभेततत्प्रतिष्ठांचव्रतंचानुत्तमंतथा
॥५४॥योगंचपरमंलब्ध्वामुच्यतेनात्रसंशयः॥५५॥ इति श्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेऽष्टाविंशोऽध्यायः ॥२८॥ऋषयऊचुः॥भगवञ्छ्रो
तुमिच्छामव्रतंपाशुपतंपरम् ॥ ब्रह्मादयोऽपियत्कृत्वासर्व्वेपाशुपताःस्मृताः॥१॥वायुरुवाच॥रहस्यंवःप्रवक्ष्यामिसर्व्वपाशनिकृन्तनम्॥व्रतंपाशुपतंश्रौ
तमथर्व्वशिरसिश्रुतम्॥२॥कालश्चैत्रापौर्णमासीदेशःशिवपरिग्रहः॥क्षेत्रारामादिरन्योवाप्रशस्तःशुभलक्षणः ॥३॥ तत्रपूर्व्वंत्रयोदश्यांसुस्नातःसुकृताह्नि
कः॥अनुज्ञाप्यस्वमाचार्य्यंसम्पूज्यप्रणिपत्यच॥४॥पूजांवैशेषिकींकृत्वाशुक्लाम्बरधरःस्वयम् ॥शुक्लयज्ञोपवीतीचशुक्लमाल्यानुलेपनः॥५॥दर्भासनेसमा
सीनोदर्भमुष्टिंप्रगृह्यच॥प्राणायामत्रयंकृत्वाप्राङ्मुखोवाप्युदङ्मुखः॥६॥ध्यात्वादेवञ्चदेवीञ्चतद्विज्ञापनवर्त्मना ॥ व्रतमेतत्करोमीतिभवेत्सङ्कल्प्यदीक्षि
तः॥७॥यावच्छरीरपातंवाद्वादशाब्दमथापिवा॥तदर्द्धंवातदर्द्धंवामासद्वादशकन्तुवा॥८॥तदर्द्धंवातदर्द्धंवामासमेकमथापिवा॥दिनद्वादशकंवाथदिनषट्
कमथापिवा ॥ ९ ॥ तदर्द्धंदिनमेकंवाव्रतसङ्कल्पनावधि ॥ अग्निमाधायविधिवद्विरजाहोमकारणात्॥१०॥ हुत्वाज्येनसमिद्भिश्चचरुणाचयथाक्रमम्॥

पूर्णाद्याःपुरतोभूयस्तत्त्वानांशुद्धिमुदिशन् ॥११॥जुहुयान्मूलमन्त्रेणतैरेवसमिदादिभिः ॥ तत्त्वान्येतानिमद्देहेशुद्ध्यन्तामित्यनुस्मरन् ॥१२॥ पञ्चभू
तानितन्मात्राःपञ्चकर्म्मेन्द्रियाणिच ॥ ज्ञानकर्म्मविभेदेनपञ्चपञ्चविभागशः ॥ १३ ॥ त्वगादिधातवःसप्तपञ्चप्राणादिवायवः ॥ मनोबुद्धिरहंख्याति
र्गुणाःप्रकृतिपूरुषौ ॥१४॥ रागोविद्याकलाचैवनियतिःकालएवच ॥ मायाचशुद्धविद्याचमहेश्वरसदाशिवौ ॥१५॥ शक्तिश्चशिवतत्वंचतत्त्वानिक्रमशो
विदुः ॥ मन्त्रैस्तुविरजैर्हुत्वाहोतासौविरजोभवेत् ॥ १६ ॥ अथगोमयमादायपिण्डीकृत्याभिमन्त्र्यच ॥ न्यस्याग्नौतच्चसंरक्ष्यदिनेतास्मिन्हविष्यभु
क् ॥ १७ ॥ प्रभातेतुचतुर्दश्यांकृत्वासर्व्वंपुरोदितम् ॥ दिनेतस्मिन्निराहारःकालशेषंसमापयेत् ॥ १८ ॥ प्रातःपर्व्वणिचाप्येवंकृत्वाहोमावसानतः ॥
उपसंहृत्यरुद्राग्निंगृह्णीयाद्भस्मयत्नतः ॥ १९ ॥ ततस्तुजटिलोमुण्डःशिखैकजटएववा ॥ भूत्वास्नात्वापुनर्वीतलज्जश्चेत्स्याद्दिगम्बरः ॥ २० ॥ अन्यः
काषायवसनश्चर्म्मचीराम्बरोऽथवा ॥ एकाम्बरोवल्कलीवाभवेद्दण्डीचमेखली ॥ २१ ॥ प्रक्षाल्यचरणौपश्चाद्द्विराचम्यात्मनस्तनुम् ॥ सङ्कुलीकृत्यत
द्भस्मविरजानलसम्भवम् ॥ २२ ॥ अग्निरित्यादिभिर्मन्त्रैःषड्भिराथर्व्वणैःक्रमात् ॥ विमृज्याङ्गानिमूर्द्धादिचरणान्तञ्चसंस्पृशेत् ॥ २३ ॥ ततस्तेन
क्रमेणैवसमुद्धृत्यचभस्मना ॥ सर्व्वाङ्गोद्धूलनंकुर्य्यात्प्रणवेनाशिवेनवा ॥ २४ ॥ ततस्त्रिपुण्ड्रंरचयेत्त्रियायुषसमाह्वयम् ॥ शिवभावंसमागम्यशिवयो
गंसमाचरेत् ॥ २५ ॥ कुर्य्यात्त्रिसन्ध्यमप्येवमेतत्पाशुपतंव्रतम् ॥ पूजनीयोमहादेवोलिङ्गमूर्त्तिःसनातनः ॥ २६ ॥ पद्ममष्टदलंहैमंनवरत्नैरलङ्कृत
म् ॥ कर्णिकाकेशरोपेतमासनंपरिकल्पयेत् ॥ २७ ॥ विभवेतदभावेतुरक्तंसितमथापिवा ॥ पद्मंतस्याप्यभावेतुकेवलंभावनामयम् ॥ २८ ॥ तत्पद्म
कर्णिकामध्येकृत्वालिङ्गंकनीयसम् ॥ स्फाटिकंपीठिकोपेतंपूजयेद्विततःक्रमात् ॥ २९ ॥ प्रतिष्ठाप्यविधानेनतल्लिङ्गंकृतशोधनम् ॥ परिकल्प्यासनं
मूर्त्तिपंचवक्त्रप्रकारतः ॥ ३० ॥ पंचगव्यादिभिःपुण्यैर्यथाविभवविस्तरैः ॥ स्नापयेत्कलशैःपूर्णैःसहस्रादिषुसम्भवैः ॥ ३१ ॥ गन्धद्रव्यैःसकर्पूरैश्चन्द
नाद्यैःसकुंकुमैः ॥ सवेदिकंसमालिप्यलिङ्गंभूषणभूषितम् ॥ ३२ ॥ बिल्वपत्रैश्चपद्मैश्चरक्तश्वेतैस्तथोत्पलैः ॥ नीलोत्पलैस्तथान्यैश्चपुष्पैस्तैस्तैःसुग
न्धिभिः ॥ ३३ ॥ पुण्यैश्चशतपत्रैश्चचित्रैर्दूर्वाक्षतादिभिः ॥ समभ्यर्च्ययथालाभंमहापूजाविधानतः ॥३४॥ धूपंदीपंतथाचार्घ्यंनैवेद्यंचसमादिशेत् ॥
॥ निवेदयित्वाविभवेकल्याणंचसमाचरेत् ॥ ३५ ॥ इष्टानिचविशिष्टानिन्यायेनोपार्जितानिच ॥ सर्व्वद्रव्याणिदेयानिव्रतेतस्मिन्विशेषतः ॥ ३६ ॥
श्रीपत्रोत्पलपद्मानांसंख्यासाहस्रिकीमता ॥ प्रत्येकमपरासंख्याशतमष्टोत्तरंद्विजाः ॥ ३७ ॥ तत्रापिचविशेषेणनत्यजेद्बिल्वपत्रकम् ॥ हैममेकंपरं
प्राहुःपद्मंपद्मसहस्रकात् ॥ ३८ ॥ नीलोत्पलादिष्वप्येतत्समानंबिल्वपत्रकैः ॥ पुष्पान्तराण्यनियमाद्यथालाभंनिवेदयेत् ॥ ३९ ॥

अष्टाङ्गमर्घ्यमुत्कृष्टंधूपालेपौविशेषतः ॥ कृष्णागुरुमघोराख्येवक्त्रेसद्येमनःशिलाम् ॥ ४० ॥ चन्दनंवामदेवाख्येहरितालश्चपौरुषे ॥ ईशानेभसितं
केचिदालेपनमितीदृशम् ॥ ४१ ॥ नधूपइतिमन्यन्तेधूपान्तराविधानतः ॥ सितागुरुमघोराख्येमुखेकृष्णागुरुंपुनः ॥ ४२ ॥ पौरुषेगुग्गुलुंसद्येसौम्ये
सौगंधिकंमुखे ॥ ईशानेऽपिउशीरादिदद्याद्धूपंविशेषतः ॥ ४३ ॥ शर्करामधुकर्पूरकपिलाघृतसंयुतम् ॥ चन्दनागुरुकाष्ठाद्यंसामान्यंसम्प्रचक्षते ॥४४॥
कर्पूरवर्त्तिराज्याढ्यादेयादीपावलीततः ॥ अर्घ्यमाचमनंदेयंप्रतिवक्त्रमतःपरम्॥४५॥ प्रथमावरणेपूज्यौक्रमाद्धेरम्बषण्मुखौ ॥ ब्रह्माङ्गानिततश्चैवंप्रथमा
वरणेऽर्चिते ॥ ४६ ॥ द्वितयिावरणेपूज्याविघ्नेशाश्चक्रवर्त्तिनः ॥ तृतीयावरणेपूज्याभवाद्याश्चाष्टमूर्त्तयः ॥ ४७ ॥ महादेवादयस्तत्रतथैकादशमूर्त्तयः ॥
चतुर्थावरणेपूज्याःसर्व्वएवगणेश्वराः ॥ ४८ ॥ बहिरेवतुपञ्चस्यपञ्चमावरणेक्रमात् ॥ दशदिक्पतयःपूज्याःसास्त्राःसानुचरास्तथा ॥ ४९ ॥ ब्रह्मणोमा
नसाःपुत्राःसर्व्वेऽपिज्योतिषांगणाः ॥ सर्व्वेदेवाश्चदेव्यश्चसर्व्वाःसर्व्वेऽपिखेचराः ॥ ५० ॥ पातालवासिनश्चान्येसर्व्वेमुनिगणाअपि ॥ योगिनोमुख्यतः
सर्व्वेपञ्चमेमातरस्तथा ॥ ५१ ॥ क्षेत्रपालश्चसगणःसर्व्वञ्चैतच्चराचरम् ॥ अथावरणपूजान्तेसम्पूज्यपरमेश्वरम् ॥ साज्यंसव्यञ्जनंहृद्यंहविर्भक्त्यानिवेद
येत् ॥ ५२ ॥ मुखवासादिकंदत्त्वाताम्बूलंसोपदंशकम् ॥ ५३ ॥ अलङ्कृत्यचभूयोऽपिनानापुष्पविभूषणैः ॥ नीराजनान्तेविस्तीर्णपूजाशेषंसमापयेत्
॥ ५४ ॥ चन्द्रसङ्काशहारञ्चशयनीयेसमर्पयेत् ॥ आढ्यंनृपोचितंहृद्यंतत्सर्व्वमनुरूपतः ॥ ५५ ॥ कृत्वाचकारयित्वाचहुत्वाचप्रतिपूजनम् ॥
स्तोत्रंव्यपोहनंजप्त्वाविद्यांपञ्चाक्षरींजपेत् ॥ ५६ ॥ प्रदक्षिणंप्रणामञ्चकृत्वात्मानंसमर्च्चयेत् ॥ ततःपुरस्ताद्देवस्यगुरुविद्येचपूजयेत् ॥ ५७ ॥
दत्त्वार्घ्यमष्टौपुष्पाणिदेवमुद्वास्यलिङ्गतः ॥ अग्नेश्चाग्निंसुसंरक्ष्यउद्वास्यचतमप्युत ॥ ५८ ॥ प्रत्यहंजनइत्येवंकुर्य्यात्सर्व्वंपुरोदितम् ॥ ततस्तत्सांबु
जंलिङ्गंसर्व्वोपकरणान्वितम् ॥ ५९ ॥ समर्पयेत्स्वगुरवेस्थापयेद्वाशिवालये ॥ सम्पूज्यचगुरूनन्यान्व्रातिनश्चविशेषतः ॥ ६० ॥ भक्तान्द्विजांश्चशक्त
श्चेद्दीनानाथांश्चतोषयेत् ॥ स्वयञ्चानशनप्रायःफलमूलाशनोऽथवा ॥ ६१ ॥ पयोव्रतोवाभिक्षाशीभवेदेकाशनस्तथा ॥ नक्तंयुक्ताशनोनित्यंभूशय्या
निरतःशुचिः ॥ ६२ ॥ भस्मशायीतृणेशायीचीराजिनशयोऽथवा॥ ब्रह्मचर्य्यरतोनित्यंव्रतमेतत्समाचरेत् ॥ ६३ ॥ अर्कवारेतथार्द्रायांपञ्चदश्याञ्च
पक्षयोः ॥ अष्टम्यांचचतुर्दश्यांशक्तस्तूपवसेदपि ॥ ६४ ॥ पाषण्डपतितोदक्यासूतिकान्त्यजपूर्व्वकान् ॥ वर्ज्जयेत्सर्वयत्नेनमनसाकर्म्मणागिरा॥६५॥
क्षमादानदयासत्याहिंसाशीलःसदाभवेत् ॥ सन्तुष्टश्चप्रशान्तश्चतपोध्यानरतःसदा ॥ ६६ ॥ कुर्य्यात्त्रिषवणस्नानंभस्मस्नानमथापिवा ॥ पूजांवैशे
षिकीञ्चैवमनसाकर्म्मणागिरा ॥ ६७ ॥ बहुनात्रकिमुक्तेननाचरेदशिवंव्रती ॥ प्रमादात्तुतथाचारेनिरूप्यगुरुलाघवम् ॥ ६८ ॥ उचितांनिष्कृतिंकुर्य्या

तपूजाहोमजपादिभिः ॥ आसमाप्तेर्व्रतस्यैवमाचरेन्नप्रमादतः॥ ६९ ॥ गोदानञ्चवृषोत्सर्गंकुर्य्यात्पूजांजपंसदा ॥ सामान्यमेतत्कथितंव्रतस्यास्यसमा
सतः ॥ ७० ॥ प्रतिमासंविशेषञ्चप्रवक्ष्यामियथाक्रमम् ॥ वैशाखेवज्रलिङ्गन्तुज्येष्ठेमारकतंशुभम् ॥ ७१ ॥ आषाढेमौक्तिकंविद्याच्छ्रावणेनीलनिर्म्मि
तम् ॥ मासेभाद्रपदेचैवपद्मरागमयंपरम् ॥ ७२ ॥ आश्वयुज्याञ्चविधिवद्गोमेदकमयंशुभम् ॥ कार्त्तिक्यांवैद्रुमंलिङ्गंवैदूर्य्यंमार्गशीर्षके ॥ ७३ ॥
पुष्परागमयंपौषेमाघेद्युमणिजंतथा ॥ फाल्गुन्यांचन्द्रकान्तोत्थंचैत्रेतद्व्यत्ययोऽथवा ॥ ७४ ॥ सर्व्वमासेषुरत्नानामलाभेहैममेववा ॥ हैमाभावेराजतं
वाताम्रंशैलजमेववा ॥ ७५ ॥मृन्मयंवायथालाभंक्षणिकंचान्यदेववा ॥ सर्व्वगन्धमयंवाथलिङ्गंकुर्य्याद्यथारुचि ॥ ७६ ॥ व्रतावसानसमयेसमाच
रितनैत्यकः ॥ कृत्वावैशेषिकींपूजांहुत्वाचैवयथापुरा ॥७७॥ सम्पूज्यचसदाचार्य्यंव्रतिनश्चविशेषतः ॥ देशिकेनाभ्यनुज्ञातःप्राङ्मुखोवाप्युदङ्मुखः
॥७८॥ दर्भासनोदर्भपाणिःप्राणापानौनियम्यच ॥ जपित्वाशक्तितोमूलंध्यात्वासाम्बंत्रियम्बकम् ॥ ७९ ॥ अनुज्ञाप्ययथापूर्व्वंनमस्कृत्यकृतांजलिः॥
समुत्सृजामिभगवन्व्रतमेतत्त्वदाज्ञया॥८०॥इत्युक्तालिङ्गमूलन्तुदर्भानुत्तरतस्त्यजेत् ॥ ततोदण्डजटाचीरमेखलाद्यपिचोत्सृजेत् ॥८१॥ पुनराचम्य
विधिवत्पंचाक्षरमुदीरयेत् ॥ यःकृत्वात्यन्तिकींदीक्षामादेहान्तमनाकुलः॥८२॥व्रतमेतत्प्रकुर्व्वीतसतुवैनैष्ठिकःस्मृतः ॥ सोऽत्याश्रमीचविज्ञेयोमहापा
शुपतस्तथा॥८३॥सएवतपतांश्रेष्ठःसएवचमहाव्रती ॥ नतेनसदृशःकश्चित्कृतकृत्योमुमुक्षुषु॥८४॥यतिर्योनैष्ठिकोजातस्तमाहुर्नैष्ठिकोत्तमम् ॥ योऽन
श्वन्द्वादशाहंवाव्रतमेतत्समाचरेत् ॥ ८५ ॥ सोऽपिनैष्ठिकतुल्यःस्यात्तीव्रव्रतसमन्वयात् ॥ घृताक्तोयश्चरेदेतद्व्रतंव्रतपरायणः ॥ ८६ ॥ द्वित्रैकदिवसं
वापिसचकश्चननैष्ठिकः ॥ कृत्यमित्येवनिष्कामोयश्चरेद्व्रतमुत्तमम् ॥ ८७ ॥ शिवार्पितात्मासततंनतेनसदृशःक्वचित् ॥ भस्मच्छन्नोद्विजोविद्वान्महा
पातकसम्भवैः ॥८८॥ पापैर्विमुच्यतेसद्योमुच्यतेनात्रसंशयः ॥ रुद्राग्नेर्यत्परंवीर्य्यंतद्भस्मपरिकीर्तितम्॥८९॥तस्मात्सर्व्वेषुकालेषुवीर्य्यवान्भस्मसंयु
तः ॥ भस्मनिष्ठस्यदह्यन्तेदोषाभस्माग्निसङ्गमात् ॥ ९० ॥ भस्मस्नानविशुद्धात्माभस्मनिष्ठइतिस्मृतः ॥ भस्मनादग्धसर्व्वाङ्गोभस्मदीप्तत्रिपुण्ड्रकः
॥९१॥ भस्मशायीचपुरुषोभस्मकल्मषभक्षणात्॥भूतिर्भूतिकरीपुंसांरक्षारक्षाकरीपरम्॥९२॥किमन्यदिहवक्तव्यंभस्ममाहात्म्यकारणम् ॥ व्रतीचभ
स्मनास्नातःस्वयंदेवोमहेश्वरः॥९३॥ परमास्त्रञ्चशैवानांभस्मैतत्पारमेश्वरम्॥धौम्याग्रजस्यतपसिद्यापदोयन्निवारिताः॥९४॥तस्मात्सर्व्वप्रयत्नेनकृत्वा
पाशुपतंव्रतम्॥ धनवद्भस्मसंगृह्यभस्मस्नानरतोभवेत् ॥ ९५ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागेपूजाविधिनिरूपणंनामैकोनत्रिंशोऽ
ध्यायः॥२९॥ऋषयऊचुः ॥ धौम्याग्रजेनशिशुनाक्षीरार्थंहितपःकृतम् ॥ यस्मात्क्षीरार्णवोदत्तस्तस्मैदेवेनशूलिना ॥ १ ॥ सकथंशिशुकोलेभेशिवशा

स्त्रप्रवक्तृताम्॥कथंवाशिवसद्भावंज्ञात्वातपसिनिष्ठितः॥२॥ कथञ्चलब्धंविज्ञानंतपश्चरणपर्व्वणि॥ रुद्राग्नेर्यत्परंवीर्य्यंलेभेभस्मस्वरक्षकम् ॥ ३ ॥ वायुरुवाच ॥नह्येषशिशुकःकश्चित्प्राकृतःकृतवांस्तपः ॥ मुनिवर्य्यस्यतनयोव्याघ्रपादस्यधीमतः ॥४॥ जन्मान्तरेणसंसिद्धःकेनापिखलुहेतुना॥ स्वपदप्रच्युतोदिष्ट्याप्राप्तोमुनिकुमारताम् ॥ ५ ॥ महादेवप्रसादस्यभाग्यायत्तस्यभाविनः ॥ दुग्धाभिलाषप्रभवंद्वारतामगमत्तपः ॥ ६ ॥ अतएवगणेशत्वंकुमारत्वञ्चशाश्वतम् ॥ सहदुग्धाब्धिनातस्मैप्रददौशङ्करःस्वयम् ॥ ७ ॥ तस्माज्ज्ञानागमोऽप्यस्यप्रसादादेवशाङ्करात् ॥ कौमारंहिपरंसाक्षाज्ज्ञानंशक्तिमयंविदुः ॥ ८ ॥ शिवशास्त्रप्रवक्तृत्वमपितस्यहितत्कृतम् ॥ कुमारमुखतोलब्धज्ञानाब्धेरिवनन्दिनः ॥ ९ ॥ दृष्टन्तुकारणन्त्वस्यशिवज्ञानसमन्वये ॥ स्वमातृवचनंसाक्षाच्छोकजंक्षीरकारणात् ॥ १० ॥ सावदत्किलशोचन्तीसहसादुःसहंवचः ॥ मातोवाच ॥ क्वदुग्धंसाधुनोवत्सक्ववयंवनवासिनः ॥ ११ ॥ कृष्यभावेणदारिद्र्यान्मयातेभाग्यहीनया ॥ मिथ्यादुग्धमिदंदत्तंपिष्टमालोड्यवारिणा ॥ १२ ॥ त्वंमातुलगृहेस्वल्पंपीत्वादुग्धंपयःशृतम् ॥ ज्ञातास्वादस्त्वपर्य्याप्तस्तज्जातीयमनुस्मरन् ॥ १३ ॥ दत्तंनपयइत्युक्त्वारुदन्दुःखाकरोषिमाम् ॥ प्रसादेनविनाशम्भोःपयस्तवनविद्यते ॥ ॥ १४ ॥ पादपङ्कजयोस्तस्यसाम्बस्यसगणस्यच ॥ भक्त्यासमर्पितंयत्तत्कारणंसर्वसम्पदाम् ॥ १५ ॥ धनाद्युद्दिश्यनास्माभिरितःप्रागर्च्चितःशिवः ॥ अतोदरिद्राःसञ्जातावयंतस्मान्नतत्पयः ॥ १६ ॥ वायुरुवाच ॥ इतिमातृवचःश्रुत्वातथ्यंशोकादिसूचकम् ॥ बालोऽप्यनुतपन्नन्तःप्रगल्भमिदमब्रवीत् ॥ १७ ॥ उपमन्युरुवाच ॥ शोकेनालमितोमातःसाम्बोयद्यस्तिशंकरः ॥ तत्प्रसादेनदुग्धाब्धिंसाधयिष्यामिशाश्वतम् ॥ १८ ॥ मातोवाच ॥ यद्यस्तीतिनवक्तव्यंपुत्रसन्दिग्धकंवचः ॥ सर्व्वस्मादधिकोऽस्त्येवशिवःपरमकारणम् ॥ १९ ॥ तत्कृतंहिजगत्सर्व्वंब्रह्माद्यास्तस्यकिंकराः ॥ तत्प्रसादकृतैश्वर्य्यादासास्तस्यवयंप्रभोः ॥ २० ॥ अन्यान्देवान्परित्यज्यकामयेमनसागिरा ॥ तमेवसाम्बंसगणंभजेभावपुरःसरम् ॥ २१ ॥ तस्यदेवाधिदेवस्यशिवस्यशिवदायिनः ॥ साक्षान्नमःशिवायेतिमन्त्रोऽयंवाचकःस्मृतः ॥ २२ ॥ सप्तकोटिमहामन्त्राःसर्व्वेसप्रणवाःपरे ॥ तस्मिन्नेवविलीयन्तेपुनस्तस्माद्विनिर्गताः ॥ २३ ॥ सुप्रसादाश्चतेमन्त्राःस्वाधिकारव्यपेक्षया ॥ सर्व्वाधिकारस्त्वेकोऽयंमन्त्रएवेश्वराज्ञया ॥ २४ ॥ यथानिकृष्टानुत्कृष्टान्सर्व्वानप्यात्मनःशिवः ॥ क्षमतेरक्षितुंतद्वन्मन्त्रोऽयमपिसर्व्वदा ॥ २५ ॥ प्रबलश्चतथाचायंमन्त्रोमन्त्रान्तरादपि ॥ सर्व्वरक्षाक्षमोह्येषनापरःकश्चिदिष्यते ॥ २६ ॥ तस्मान्मन्त्रान्तरंत्यक्त्वापञ्चाक्षरपरोभव ॥ तस्मिञ्जिह्वान्तरगतेनकिञ्चिद्दुर्लभंमतम् ॥ २७ ॥ अघोरास्त्रञ्चशैवानांरक्षाहेतुरनुत्तमम् ॥ तच्चतत्प्रभवंमत्वातत्परोभवनान्यथा ॥ २८ ॥ भस्मेदन्तुमयालब्धंपितुरेवतवोत्तमम् ॥ विरजानलसंसिद्धंमहाव्यापन्निवारणम् ॥ २९ ॥ मन्त्रञ्चते

मयादत्तंगृहाणमदनुज्ञया ॥ अनेनैवाशुजप्तेनरक्षातवभविष्यति ॥ ३० ॥ वायुरुवाच ॥ एवंमात्रासमादिश्यशिवंतेऽस्त्वित्युदीर्य्यच ॥ विसृष्टस्तद्व
चोमूर्ध्निकुर्व्वन्नेवसदामुनिः ॥ ३१ ॥ तांप्रणम्यैवमुक्त्वाचतपःकर्त्तुंप्रचक्रमे ॥ तमाहचतदामाताशुभंकुर्व्वन्तुतेसुराः ॥ ३२ ॥ अनुज्ञातस्ततत्रतयातप
स्तेपेसुदुश्चरम् ॥ हिमवत्पर्व्वतंप्राप्यवायुभक्षःसमाहितः ॥ ३३ ॥ अष्टेष्टकाभिःप्रासादंकृत्वालिङ्गञ्चमृन्मयम् ॥ तत्रावाह्यमहादेवंसाम्बंसगणमव्य
यम् ॥ ३४ ॥ भक्त्यापंचाक्षरेणैवपत्रैःपुष्पैर्वनोद्भवैः ॥ समभ्यर्च्चयपरंकालंचचारपरमंतपः ॥ ३५ ॥ तथातपश्चरन्तंतंबालमेकाकिनंकृशम् ॥ पुरा
मरीचिनाशप्ताःकेचिन्मुनिपिशाचकाः ॥ ३६ ॥ सम्पीड्यराक्षसैर्भावैस्तपसोविघ्नमाचरन् ॥ सचतैःपीड्यमानोऽपितपःकुर्व्वन्कथञ्चन ॥ ३७ ॥ सदा
नमःशिवायेतिक्रोशतिस्मार्त्तनादवत् ॥ तन्नादश्रवणादेवतपसोविघ्नकारिणः ॥ ३८ ॥ तत्तद्भावंसमुत्सृज्यमुनयस्तमुपाचरन् ॥ तपसातस्यविप्रस्य
प्रदीपितमभूज्जगत् ॥ ३९ ॥ प्रणम्याहुश्चतत्सर्व्वंहरयेदेवसत्तमाः ॥ श्रुत्वातेषांतदावाक्यंभगवान्पुरुषोत्तमः ॥ ४० ॥ किमिदन्त्विवतिसञ्चिन्त्यज्ञात्वा
तत्कारणञ्चसः ॥ जगाममन्दरंतूर्णंमहेश्वरदिदृक्षया ॥ ४१ ॥ दृष्ट्वादेवंप्रणम्यैवंप्रोवाचचकृताञ्जलिः ॥ हरिरुवाच ॥ भगवन्ब्राह्मणःकश्चिदुपमन्युरिति
श्रुतः॥४२॥क्षीरार्थमदहत्सर्व्वंतपसातंनिवारय॥४३॥वायुरुवाच॥एतस्मिन्नन्तरेदेवःपिनाकीपरमेश्वरः॥शक्रस्यरूपमास्थायगन्तुंचक्रेमतिंतदा ॥४४॥
अथजगाममुनेस्तुतपोवनंगजवरेणसितेनतदा शिवः ॥ सहसुरासुरसिद्धमहोरगैरमरराजतनुंस्वयमास्थितः॥ ४५ ॥ सहैवचारुप्रभचामरेणविवीज्यवा
लव्यजनेनदिव्यम्॥दधारशच्यासहितंसुरेंद्रंकरेणवामेनसितातपत्रम्॥४६॥रराजभगवान्सोमःशक्ररूपीतदाशिवः॥तेनातपत्रेणयथाचन्द्रबिम्बेनमन्दरः
॥४७॥आस्थायैवंहिशक्रस्यस्वरूपंपरमेश्वरः ॥ जगामानुग्रहंकर्त्तुमुपमन्योस्तमाश्रमम्॥४८॥तंदृष्ट्वापरमेशानंशक्ररूपधरंशिवम्॥ प्रणम्यशिरसाप्राह
मुनिर्मुनिवरःस्वयम् ॥ ४९ ॥ उपमन्युरुवाच ॥ पावितश्चाश्रमःसोऽयंममदेवेश्वरस्वयम् ॥ प्राप्तःशक्रोजगन्नाथोभगवान्भानुसप्रभः ॥ ५० ॥ वायु
रुवाच ॥ एवमुक्त्वास्थितंप्रेक्ष्यकृतांजलिपुटंद्विजम् ॥ प्राहगम्भीरयावाचाशक्ररूपधरोहरः ॥५१॥ शक्रउवाच ॥ तुष्टोऽस्मितेवरंब्रूहितपसानेनसुव्रत ॥
ददामिचेप्सितान्सर्व्वान्धौम्याग्रजमहामुने ॥ ५२ ॥ वायुरुवाच ॥ एवमुक्तस्तदातेनशक्रेणमुनिसत्तमः ॥ वरयामिशिवेभक्तिमित्युक्त्वातपतेपुनः ॥
॥ ५३ ॥ तस्यतीव्रंतपोज्ञात्वाशक्ररूपधरोहरः ॥ आगत्यस्वगुणाभासैःस्वमात्मानमनिन्दत ॥ ५४ ॥ मुनिस्तुतमविज्ञायशक्ररूपधरंहरम् ॥ शिव
निन्दाश्रुतेत्येवमर्त्तुंव्यवसितःस्वयम् ॥ ५५ ॥ क्षीरेवाञ्छामपित्यक्त्वानिहन्तुंशक्रमुद्यतः ॥ भस्मादायतदाघोरमघोरास्त्राभिमान्त्रितम् ॥ ५६ ॥ विसृ
ज्यशक्रमुद्दिश्यस्वदेहंदग्धुमुद्यतः ॥ आग्नेयींधारणांबिभ्रदुपमन्युरवस्थितः ॥ ५७ ॥ तांतस्यधारणांदेवोनिरीक्ष्यावारयत्स्वयम् ॥ तद्विसृष्टमघोरास्त्रं

नन्दीश्वरनियोगतः ॥ ५८ ॥ जगृहेमध्यतःक्षिप्रंनन्दीशङ्करवल्लभः ॥ ददृशेऽथमहादेवोदेव्यासार्द्धंवृषोपरि ॥ ५९ ॥ गणेश्वरैस्त्रिशूलाद्यैर्दिव्यास्त्रैरपिसं वृतः ॥ देवदुन्दुभयोनेदुःपुष्पवृष्टिःपपातच ॥ ६० ॥ ब्रह्मेन्द्रविष्णुप्रमुखैर्देवैश्छन्नादिशोदश ॥ अथोपमन्युरानन्दसमुद्रोर्म्मिभिराहतः ॥ ६१ ॥ पपातदण्डवद्भूमौभक्तिनिघ्नेनचेतसा ॥ एह्येहीतितमाहूयशिवःशीतांशुभूषणः ॥ ६२ ॥ मूर्ध्न्याघ्रायसुतस्तेऽयमितिदेव्यैन्यवेदयत् ॥ देवीचगुहवत्प्री त्यामूर्ध्नितस्यकराम्बुजम् ॥ ६३ ॥ विन्यस्यप्रददौतस्मैकुमारपदमव्ययम् ॥ क्षीराब्धिरथसाकारःक्षीरंस्वादुकरेदधत् ॥ ६४ ॥ उपस्थायददौतस्मै पिण्डीभूतमनश्वरम् ॥ समृद्धिंधनदस्तद्वद्ददावाप्रलयस्थिताम् ॥ ६५ ॥ ततःसमृद्धमभवद्धनैर्धान्यैस्तपोवनम् ॥ व्रतंपाशुपतंज्ञानंव्रतयोगंचतत्त्वतः ॥ ६६ ॥ दत्त्वातस्मैप्रवक्तृत्वंपादुकेचचिरंपरम् ॥ सर्व्वज्ञत्वपदंदत्त्वादेवश्चान्तरधीयत ॥ ६७ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायांपूर्व्वभागे त्रिंशोऽध्यायः ॥ ३० ॥

॥ समाप्तोऽयंपूर्व्वभागः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

अयं शिवपुराणस्थ वायवीयसंहिता पूर्वभागः खेमराज श्रीकृष्णदास इत्यनेन मुम्बय्यां स्वकीये "श्रीवेंकटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशितः।

संवत् १९५२, शके १८१७, सन् १८९६.

श्रीगणेशाय नमः ॥ ओंनमोभगवतेवासुदेवाय ॥ नमःशिवायसोमायसगणायससूनवे ॥ प्रधानपुरुषेशायसर्गस्थित्यन्तहेतवे ॥ १ ॥ शक्तिरप्रतिघा
यस्यऐश्वर्य्यंचापिसर्व्वगम् ॥ स्वामित्वंचविभुत्वंचस्वभावंसम्प्रचक्षते ॥ २ ॥ तमजंविश्वकर्म्माणंशाश्वतंशिवमद्वयम् ॥ महादेवंमहात्मानंव्रजामिशर
णंशिवम् ॥ ३ ॥ धर्म्मक्षेत्रेमहातीर्थेगङ्गाकालिन्दिसंगमे ॥ प्रयागेनैमिषारण्येब्रह्मलोकस्यवर्त्मनि ॥ ४ ॥ मुनयःशंसितात्मानःसत्यव्रतपरायणाः ॥
महौजसोमहाभागामहासत्रंवितेनिरे ॥ ५ ॥ तत्रसत्रंसमाकर्ण्यतेषामक्लिष्टकर्म्मणाम् ॥ साक्षात्सत्यवतीसूनोर्वेदव्यासस्यधीमतः ॥ ६ ॥ शिष्योमहा
त्मामेधावीत्रिषुलोकेषुविश्रुतः ॥ पञ्चावयवयुक्तस्यवाक्यस्यगुणदोषवित् ॥ ७ ॥ उत्तरोत्तरवक्ताचब्रुवतोऽपिबृहस्पतेः ॥ मधुरश्रवणानांचमनोज्ञपदप
र्वणाम् ॥ ८ ॥ कथानांनिपुणोवक्ताकालविन्नयवित्कविः ॥ आजगामसतंदेशंसूतःपौराणिकोत्तमः ॥ ९ ॥ तंदृष्ट्वासूतमायातंमुनयोहृष्टमानसाः ॥
तस्मैसामचपूजांचयथावत्प्रत्यपादयन् ॥ १० ॥ प्रतिगृह्यसतांपूजांमुनिभिःप्रतिपादिताम् ॥ उद्दिष्टमासनंभेजेनियुक्तोयुक्तमात्मनः ॥ ११ ॥ ततस्त
त्संगमादेवमुनीनांभावितात्मनाम् ॥ सोत्कण्ठमभवच्चित्तंश्रोतुंपौराणिकीःकथाः ॥ १२ ॥ तदातमनुकूलाभिर्वाग्भिःपूज्यमहर्षयः ॥ अतीवाभिमुखं
कृत्वावचनञ्चेदमब्रुवन् ॥ १३ ॥ ऋषयऊचुः ॥ रोमहर्षणसर्व्वज्ञभवान्वैभाग्यगौरवात् ॥ पुराणविद्यामखिलांव्यासात्प्रत्यक्षमीयिवान् ॥ १४ ॥
तस्मादाश्चर्य्यभूतानांकथानांत्वंहिभाजनम् ॥ रत्नानामुरुसाराणांरत्नाकरइवार्णवः ॥ १५ ॥ यच्चभूतंचभव्यंचयच्चान्यद्वस्तुवर्त्तते ॥ नतवाविदितंकिञ्चि
त्त्रिषुलोकेषुविद्यते ॥ १६ ॥ त्वमदृष्टवशादस्मद्दर्शनार्थमिहागतः ॥ अकुर्व्वन्किमपिश्रेयोनवृथागन्तुमर्हसि ॥ १७ ॥ तस्माच्छ्राव्यतमंपुण्यंसत्कथा
ज्ञानसंहितम् ॥ अपवर्गफलैकान्तमनाचारबहिष्कृतम् ॥ १८ ॥ जगतःसृष्टिसंहारस्थितिहेतुप्रदर्शकम् ॥ वेदान्तसारसर्व्वस्वंपुराणंश्रावयाशुनः॥१९॥
एवमभ्यर्थितःसूतोमुनिभिर्वेदवादिभिः ॥ श्लक्ष्णांचन्यायसंयुक्तांप्रत्युवाचशुभांगिरम् ॥ २०॥ सूतउवाच ॥ पूजितोऽनुगृहीतश्चभवद्भिरितिचोदितः ॥
कस्मात्सम्यङ्नविब्रूयांपुराणमृषिपूजितम् ॥ २१ ॥ अभिवन्द्यमहादेवंदेवींस्कन्दंविनायकम् ॥ नन्दिनंचतथासाक्षाद्व्यासंसत्यवतीसुत
म् ॥ २२ ॥ वक्ष्यामिपरमंपुण्यंपुराणंब्रह्मसम्मितम् ॥ शिवज्ञानार्णवंसाक्षाद्भुक्तिमुक्तिफलप्रदम् ॥ २३ ॥ शब्दार्थन्यायसंयुक्तैरागमार्थैर्विभू
षितम् ॥ श्वेतकल्पेप्रसंगेनवायुनाकथितंपुरा ॥ २४ ॥ विद्यास्थानानिसर्व्वाणिपुराणानुक्रमंतथा ॥ पुराणस्यास्यचोत्पत्तिंब्रुवतोमेनिबो
धत ॥ २५ ॥ अङ्गानिवेदाश्चत्वारोमीमांसान्यायविस्तरः ॥ एतद्वःकथितंसर्व्वंकृष्णस्याक्लिष्टकर्म्मणः ॥ २६ ॥ महर्षेर्ज्ञानलाभश्चपुत्रलाभ
श्चशङ्करात् ॥ यइदंकीर्त्तयेन्नित्यंशृणुयाच्छ्रावयेत्तथा ॥ २७ ॥ सविष्णोर्ज्ञानमासाद्यतेनैवसहमुच्यते ॥ २८ ॥ इतिश्रीशैवेमहापुराणे
वायवीयसंहितायामुत्तरभागेसूतर्षिसंवादोनामप्रथमोध्यायः ॥ १ ॥ ऋषयऊचुः ॥ किंतत्पाशुपतंज्ञानंकथंपशुपतिःशिवः ॥ कथंधौम्या

ग्रजःपृष्टःकृष्णेनाद्भुतकर्म्मणा ॥ १ ॥ वायुरुवाच ॥ पुरासाक्षान्महेशेनश्रीकण्ठाख्येनमन्दरे ॥ देव्यैदेवेनकथितंज्ञानंपाशुपतंपरम् ॥ २ ॥ तदेव
पृष्टंकृष्णेनविष्णुनाविश्वयोनिना ॥ पशुत्वञ्चसुरादीनांपतित्वञ्चशिवस्यच ॥ ३ ॥ यथोपदिष्टंकृष्णायमुनिनाप्युपमन्युना ॥ तथासमासतोवक्ष्ये
तच्छृणुध्वमतन्द्रिताः ॥ ४ ॥ पुरोपमन्युमासीनंविष्णुःकृष्णवपुर्द्धरः ॥ प्रणिपत्ययथान्यायमिदंवचनमब्रवीत् ॥ ५ ॥ श्रीकृष्णउवाच ॥ भगव
ञ्छ्रोतुमिच्छामिदेव्यैदेवेनभाषितम् ॥ दिव्यंपाशुपतंज्ञानंविभूतिश्चास्यकृत्स्नशः ॥ ६ ॥ कथंपशुपतिर्देवःपशवःकेप्रकीर्तिताः ॥ कैःपाशैस्तेनिबध्यन्ते
विमुच्यन्तेचतेकथम् ॥ ७ ॥ इतिसञ्चोदितःश्रीमानुपमन्युर्महामनाः ॥ प्रणम्यदेवंदेवीञ्चप्राहपृष्टोयथातथा ॥ ८ ॥ उपमन्युरुवाच ॥ ब्रह्माद्याःस्था
वरान्ताश्चदेवदेवस्यशूलिनः ॥ पशवःपरिकीर्त्यन्तेसंसारवशवर्त्तिनः ॥ ९ ॥ तेषांपतित्वाद्देवेशःशिवःपशुपतिःस्मृतः ॥ मलमायादिभिःपाशैःसबध्ना
तिपशून्पतिः ॥ १० ॥ सएवमोचकस्तेषांभक्तानांसमुपासितः ॥ चतुर्व्विंशतितत्त्वानिमायाकर्म्मगुणाअमी ॥ ११ ॥ विषयाइतिकथ्यन्तेपाशाजी
वनिबन्धनाः ॥ ब्रह्मादिस्तम्बपर्य्यन्तान्पशून्बद्धामहेश्वरः ॥ १२ ॥ पाशैरेतैःपतिर्देवःकार्य्यंकारयतिस्वकम् ॥ तस्याज्ञयामहेशस्यप्रकृतिःपुरुषो
चिताम् ॥ १३ ॥ बुद्धिंप्रसूतेसाबुद्धिरहंकारमहंकृतिः ॥ इन्द्रियाणिदशैकञ्चतन्मात्रापञ्चकंतथा ॥ १४ ॥ शासनाद्देवदेवस्यशिवस्यशिवदायिनः ॥
तन्मात्राण्यपितस्यैवशासनेनमहीयसा ॥ १५ ॥ महाभूतान्यशेषाणिभावयन्त्यनुपूर्व्वशः ॥ ब्रह्मादीनांतृणान्तानांदेहिनांदेहसङ्गतिम् ॥ १६ ॥
महाभूतान्यशेषाणिजनयन्तिशिवाज्ञया ॥ अध्यवस्यतिवैबुद्धिरहंकारोऽभिमन्यते ॥१७॥ चित्तंचेतयतेचापिमनःसंकल्पयत्यपि ॥ श्रोत्रादीनिचगृह्ण
न्तिशब्दादीन्विषयान्पृथक् ॥ १८ ॥ स्वानेवनान्यान्देवस्यदिव्येनाज्ञाबलेनवै ॥ वागादीन्यपियान्यासंस्तानिकर्म्मेन्द्रियाणिच ॥ १९ ॥ यथास्वं
कर्म्मकुर्व्वन्तिनान्यत्किञ्चिच्छिवाज्ञया ॥ शब्दादयोऽपिगृह्यन्तेक्रियन्तेवचनादयः ॥ २० ॥ अविलङ्घ्याहिसर्व्वेषामाज्ञाशम्भोर्गरीयसी ॥ अवकाश
मशेषाणांभूतानांसम्प्रयच्छति ॥ २१ ॥ आकाशःपरमेशस्यशासनादेवसर्व्वगः ॥ प्राणाद्यैश्चतथानामभेदैरन्तर्बहिर्जगत् ॥ २२ ॥ बिभर्त्तिसर्व्वंश
र्व्वस्यशासनेचप्रभञ्जनः ॥ हव्यंवहतिदेवानांकव्यंकव्याशिनामपि ॥ २३ ॥ पाकाद्यञ्चकरोत्यग्निःपरमेश्वरशासनात् ॥ सञ्जीवनाद्यंसर्व्वस्यकुर्व्वं
न्त्यापस्तदाज्ञया ॥ २४ ॥ विश्वम्भराजगन्नित्यंधत्तेविश्वेश्वराज्ञया ॥ देवान्पात्यसुरान्हन्तित्रिलोकमभिरक्षति ॥ २५ ॥ आज्ञयातस्यदेवेंद्रःसर्व्वै
र्देवैरलंघ्यया॥जीवानांव्याधिभिःपीडांमृतानाञ्चैवयातनाम्॥२६॥अधार्म्मिकाणांधर्म्मेशःकरोतिशिवशासनात् ॥ निर्ऋतिर्विधिहीनानांफलंहरतिकर्म्म

णाम् ॥२७॥ निशाचराधिपत्यञ्चकुरुतेशंकराज्ञया ॥ आधिपत्यमपांनित्यंकुरुतेवरुणोमुने ॥२८॥ पाशैर्बध्नातिवध्यांश्चपरमेश्वरशासनात् ॥ ददातिनित्यंय
क्षेन्द्रोद्रविणंद्रविणेश्वरः ॥२९॥ पुण्यानुरूपंभूतेभ्यःपुरुषस्यानुशासनात् ॥ करोतिसम्पदःशश्वज्ज्ञानञ्चैवसुमेधसाम् ॥३०॥ निग्रहञ्चाप्यसाधूनामीशानः
शिवशासनात् ॥ धत्तेतुधरणींमूर्ध्नाशेषःशिवनियोगतः ॥३१॥ यामाहुस्तामसींरौद्रींमूर्त्तिमन्तकरींहरेः ॥ सृजत्यशेषमीशस्यशासनाच्चतुराननः ॥ ३२ ॥
तिसृभिर्मूर्त्तिभिःस्वाभिःपातिचान्तेनिहन्तिच ॥ विष्णुःपालयतेविश्वंविश्वेश्वरनियोगतः ॥३३॥ सृजतेग्रसतेचापिस्वकाभिस्तनुभिस्तथा ॥ हरत्यन्ते
जगत्सर्व्वंहरस्तस्यैवशासनात् ॥३४॥ सृजत्यपिचविश्वात्मात्रिधाभिन्नस्तुरक्षति ॥ कालःकरोतिसकलंकालःसंहरतिप्रजाः ॥३५॥ कालःपालयतेविश्वंका
लकालस्यशासनात् ॥ त्रिभिरंशैर्जगद्बिभ्रत्तेजोभिर्वृष्टिमादिशन् ॥ ३६ ॥ दिविवर्षत्यसौभानुर्देवदेवस्यशासनात् ॥ पुष्णात्योषधिजातानिभूतानिह्ला
दयत्यपि ॥ ३७ ॥ देवैश्चपीयतेचन्द्रश्चन्द्रभूषणशासनात् ॥ आदित्यावसवोरुद्राअश्विनौमरुतस्तथा ॥ ३८ ॥ खेचराऋषयःसिद्धाभोगिनोमनुजा
मृगाः ॥ पशवःपक्षिणश्चैवकीटाद्याःस्थावराणिच ॥ ३९ ॥ नद्यःसमुद्रागिरयःकाननानिसरांसिच ॥ वेदाःसांगाश्चशास्त्राणिमन्त्राःस्तोममखादयः
॥ ४० ॥ कालाग्न्यादिशिवान्तानिभुवनानिसहाधिपैः ॥ ब्रह्माण्डान्यप्यसंख्यानितेषामावरणानिच ॥ ४१ ॥ वर्त्तमानान्यतीतानिभविष्यन्त्यपिकृ
त्स्नशः ॥ दिशश्चविदिशश्चैवकालभेदाःकलादयः ॥ ४२ ॥ यच्चकिंचिज्जगत्यस्मिन्दृश्यतेश्रूयतेऽपिवा ॥ तत्सर्व्वंशंकरस्याज्ञाबलेनसमधिष्ठितम् ॥
॥ ४३ ॥ आज्ञाबलात्तस्यधरास्थितेहधराधरावारिधराःसमुद्राः ॥ ज्योतिर्गणाःशक्रमुखाश्चदेवाःस्थिरंचरंवाचिदचिद्यदस्ति ॥ ४४ ॥ इति श्री
शैवेमहापुराणेवायवीयसंहितायामुत्तरभागेपाशुपतज्ञाननिरूपणंनामद्वितीयोऽध्यायः ॥ २ ॥ उपमन्युरुवाच ॥ अत्याश्चर्य्यमिदंकृष्णशम्भोरमितक
र्म्मणः ॥ आज्ञाकृतंशृणुष्वैतच्छ्रुतंश्रुतिमुखेमया ॥ १ ॥ पुराकिलसुराःसेन्द्राविवदन्तःपरस्परम् ॥ असुरान्समरेजित्वाजेताहमहमित्युत ॥ २ ॥
तदामहेश्वरस्तेषांमध्यतोऽवरवेषधृक् ॥ स्वलक्षणैर्विहीनाङ्गःस्वयंयक्षइवाभवत् ॥ ३ ॥ सतानाहसुरानेकंतृणमादायभूतले ॥ यएतद्विकृतंकर्त्तुंक्षमेतस
तुदैत्यजित् ॥ ४ ॥ यक्षस्यवचनंश्रुत्वावज्रपाणिःशचीपतिः ॥ किञ्चित्क्रुद्धोविहस्यैनंतृणमादातुमुद्यतः ॥ ५ ॥ नतत्तृणमुपादातुंमनसापिचशक्यते ॥
यथातथापितच्छेत्तुंवज्रंवज्रधरोऽसृजत् ॥ ६ ॥ तद्वज्रंनिजवज्रेणसंसृष्टमिवसर्व्वतः ॥ तृणेनाभिहतंतेनतिर्य्यग्गग्रंपपातह ॥७॥ ततस्तथान्येसुसंरब्धालोक
पालामहाबलाः ॥ ससृजुस्तृणमुद्दिश्यस्वायुधानिसहस्रशः ॥ ८ ॥ प्रजज्वालमहावह्निःप्रचण्डःपवनोववौ ॥ प्रबुद्धोऽपांपतिर्यद्वत्प्रलयेसमुपस्थिते ॥९॥
एवंदेवैःसमारब्धंतृणमुद्दिश्ययत्नतः ॥ व्यर्थमासीदहोकृष्णयक्षस्याज्ञाबलेनवै ॥ १० ॥ तदाहयक्षंदेवेन्द्रःकोभवानित्यमर्षितः ॥ ततःसपश्य

तामेवतेषामन्तरधीयत ॥ ११ ॥ तदन्तरेहैमवतीदेवीदिव्यविभूषणा ॥ आविरासीन्नभोरङ्गेशोभमानाशुचिस्मिता ॥ १२ ॥ तांदृष्ट्वाविस्मयावि
ष्टादेवाःशक्रपुरोगमाः ॥ प्रणम्ययक्षंपप्रच्छुःकोऽसौयक्षोविलक्षणः ॥ १३ ॥ साब्रवीत्सस्मितंदेवीसयुष्माकमगोचरः ॥ तेनेदंभ्राम्यतेचक्रंस
साराख्यंचराचरम् ॥ १४ ॥ तेनादौक्रियतेविश्वंतेनसंह्रियतेपुनः ॥ नतस्यनियमःकश्चित्तेनसर्व्वंनियम्यते ॥ १५ ॥ इत्युक्त्वासामहा
देवीतत्रैवान्तरधीयत ॥ देवाश्चविस्मिताःसर्व्वेतांप्रणम्यदिवंययुः ॥ १६ ॥ इतिश्रीशैवेमहापुराणेवायुसंहितायामुत्तरभागेतृतीयोऽध्यायः ॥ ३ ॥
उपमन्युरुवाच ॥ शृणुकृष्णमहेशस्यशिवस्यपरमात्मनः ॥ मूर्त्त्यात्मभिस्ततंकृत्स्नंजगदेतच्चराचरम् ॥ १ ॥ सशिवःसर्व्वमेवेदंस्वकीयाभिश्चमू
र्त्तिभिः ॥ अधितिष्ठत्यमेयात्मायत्तत्सर्व्वस्ततःस्मृतः ॥ २ ॥ ब्रह्माविष्णुस्तथारुद्रोमहेशानःसदाशिवः ॥ मूर्त्तयस्तस्यविज्ञेयायाभिर्विश्वमिदंततम्॥
॥ ३ ॥ अथान्याश्चापितनवःपञ्चब्रह्मसमाह्वयाः ॥ तनुभिस्ताभिरव्याप्तमिहाकिञ्चिन्नविद्यते ॥ ४ ॥ ईशानःपुरुषोघोरोवामःसद्यस्तथैवच ॥ ब्रह्माण्ये
तानिदेवस्यमूर्त्तयःपञ्चविश्रुताः ॥ ५ ॥ ईशानाख्यातुयातस्यमूर्त्तिराद्यागरीयसी ॥ भोक्तारंप्रकृतेःसाक्षात्क्षेत्रज्ञमधितिष्ठति ॥ ६ ॥ स्थाणोस्तत्पुरु
षाख्यायामूर्त्तिर्मूर्त्तिमतःप्रभोः ॥ गुणाश्रयात्मकंभोग्यमव्यक्तमधितिष्ठति ॥ ७ ॥ धर्म्माद्यष्टाङ्गसंयुक्तंबुद्धितत्त्वंपिनाकिनः ॥ अधितिष्ठतिघोराख्यामू
र्तिरत्यन्तपूजिता ॥ ८ ॥ वामदेवाह्वयामूर्तिर्महादेवस्यवेधसः ॥ अहंकृतेरधिष्ठात्रीमाहुरागमवेदिनः ॥ ९ ॥ सद्योजाताह्वयामूर्तिःशम्भोरमितवर्च्च
सः ॥ मनसःसमधिष्ठात्रींमतिमन्तःप्रचक्षते॥१०॥श्रोत्रस्यवाचःशब्दस्यविभोर्व्योम्नस्तथैवच॥ईश्वरीमीश्वरस्यैवतामीशाख्यांविदुर्बुधाः॥११॥त्वक्पाणि
स्पर्शवायूनामीश्वरींमूर्त्तिमैश्वरीम् ॥ पुरुषाख्यांविदुःसर्व्वेपुराणार्थविशारदाः॥१२॥चक्षुषश्चरणस्यापिरूपस्याग्नेस्तथैवच॥अघोराख्यामधिष्ठात्रींमूर्त्ति
माहुर्मनीषिणः॥१३॥रसनायाश्चपायोश्चरसस्यापांतथैवच॥ईश्वरींवामदेवाख्यांमूर्त्तितन्निरताविदुः ॥१४॥ घ्राणस्यचैवोपस्थस्यगन्धस्यचभुवस्तथा ॥
सद्योजाताह्वयांमूर्त्तिमीश्वरींसम्प्रचक्षते ॥ १५ ॥ मूर्त्तयःपञ्चदेवस्यवन्दनीयाःप्रयत्नतः ॥ श्रेयोऽर्थिभिर्नरैर्नित्यंश्रेयसामेवहेतवः ॥ १६ ॥
तस्यदेवाधिदेवस्यमूर्त्त्यष्टकमयंजगत् ॥ तस्मिन्व्याप्यस्थितंविश्वंसूत्रेमणिगणाइव ॥ १७ ॥ शर्व्वोभवस्तथारुद्रउग्रोभीमःपशोःपतिः ॥ ईशानश्च
महादेवोमूर्तयश्चाष्टविश्रुताः ॥ १८ ॥ भूम्यम्भोऽग्निमरुद्व्योमक्षेत्रज्ञार्कनिशाकराः ॥ अधिष्ठितामहेशस्यशर्व्वाद्यैरष्टमूर्त्तिभिः ॥ १९ ॥ चराचरात्म
कंविश्वंधत्तेविश्वम्भरात्मिका ॥ शार्व्वीशर्व्वाह्वयामूर्त्तिरितिशास्त्रस्यनिश्चयः ॥ २० ॥ सञ्जीवनंसमस्तस्यजगतःसलिलात्मकम् ॥ भवइत्युच्यतेमूर्त्ति
र्भवस्यपरमात्मनः ॥ २१ ॥ बहिरन्तर्जगद्विश्वंव्याप्यतेजोमयीशुभा ॥ रौद्रीरुद्राह्वयामूर्त्तिरास्थिताघोररूपिणी ॥ २२ ॥ स्पन्दयन्पवनोविश्वंबिभर्त्ति

स्पन्दतेस्वयम् ॥ उग्रइत्युच्यतेसद्भिर्मूर्त्तिरुग्रस्यवेधसः ॥ २३ ॥ सर्व्वावकाशदासर्व्वव्यापिकागगनात्मिका ॥ मूर्त्तिर्भीमस्यभीमाख्याभूतवृन्दस्यभे
दिका ॥ २४ ॥ सर्व्वात्मनामधिष्ठात्रीसर्व्वक्षेत्रनिवासिनाम् ॥ मूर्त्तिःपशुपतेर्ज्ञेयापशुपाशनिकृन्तनी ॥ २५ ॥ दीपयन्तीजगत्सर्व्वंदिवाकरसमाह्वया ॥
ईशानाख्यामहेशस्यमूर्त्तिर्दिविविसर्पति ॥ २६ ॥ आप्याययतियोविश्वममृतांशुर्निशाकरः ॥ महादेवस्यसामूर्त्तिर्महादेवसमाह्वया ॥ २७ ॥ आत्मन
श्चाष्टमीमूर्त्तिःशिवस्यपरमात्मनः ॥ व्यापिकेतरमूर्त्तीनांविश्वंतस्माच्छिवात्मकम् ॥ २८ ॥ वृक्षमूलस्यसेकेनशाखाःपुष्यन्तिवैयथा ॥ शिवस्यपूजया
तद्वत्पुष्यत्यस्यवपुर्जगत् ॥ २९ ॥ सर्व्वाभयप्रदानञ्चसर्व्वानुग्रहणंतथा ॥ सर्व्वोपकारकरणंशिवस्याराधनंविदुः ॥ ३० ॥ यथेहपुत्रपौत्रादेःप्रीत्याप्रीतो
भवेत्पिता ॥ तथासर्व्वस्यसम्प्रीत्याप्रीतोभवतिशङ्करः ॥ ३१ ॥ देहिनोयस्यकस्यापिक्रियतेयदिनिग्रहः ॥ अनिष्टमष्टमूर्त्तेस्तत्कृतमेवनसंशयः ॥ ३२ ॥
अष्टमूर्त्त्यात्मनाविश्वमधिष्ठायास्थितंशिवम् ॥ भजस्वसर्व्वभावेनरुद्रंपरमकारणम् ॥ ३३ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेचतुर्थोऽ
ध्यायः ॥ ४ ॥ श्रीकृष्णउवाच ॥ भगवन्परमेशस्यसर्व्वस्यामिततेजसः ॥ मूर्त्तिभिर्विश्वमेवेदंयथाव्याप्तंतथाश्रुतम् ॥ १ ॥ अथैतज्ज्ञातुमिच्छामिया
थात्म्यंपरमेशयोः ॥ स्त्रीपुम्भावात्मकञ्चेदंताभ्यांकथमाधिष्ठितम् ॥ २ ॥ उपमन्युरुवाच ॥ श्रीमद्विभूतिंशिवयोर्याथात्म्यञ्चसमासतः ॥ वक्ष्येतद्विस्त
राद्वक्तुंभवेनापिनशक्यते ॥ ३ ॥ शक्तिःसाक्षान्महादेवीमहादेवःसशक्तिमान् ॥ तयोर्विभूतिलेशोवैसर्व्वमेतच्चराचरम् ॥ ४ ॥ वस्तुकिञ्चिदचिद्रूपंकिञ्चि
द्वस्तुचिदात्मकम् ॥ द्वयंशुद्धमशुद्धञ्चपरञ्चापरमेवच ॥ ५ ॥ यत्संसरतिचिच्चक्रमचिच्चक्रसमन्वितम् ॥ तदेवाशुद्धमपरमितरत्तुपरंशुभम् ॥ ६ ॥ अपर
ञ्चपरञ्चैवद्वयंचिदचिदात्मकम् ॥ शिवस्यचशिवायाश्चस्वात्म्यञ्चैतत्स्वभावतः ॥ ७ ॥ शिवयोर्वैवशंविश्वंनविश्वस्यवशेशिवौ ॥ ईशितव्यमिदंयस्मात्तस्माद्वि
श्वेश्वरौशिवौ ॥ ८ ॥ यथाशिवस्तथादेवीयथादेवीतथाशिवः ॥ नानयोरन्तरंविद्याच्चन्द्रचन्द्रिकयोरिव ॥ ९ ॥ चन्द्रोनखलुभात्येषयथाचन्द्रिकयावि
ना ॥ नभातिविद्यमानोऽपितथाशक्त्याविनाशिवः ॥ १० ॥ प्रभयाहिविनायद्वद्भानुरेषनविद्यते ॥ प्रभाचभानुनातेनसुतरांतदपाश्रया ॥ ११ ॥ एवं
परस्परापेक्षाशक्तिशक्तिमतोःस्थितिः ॥ नाशिवेनविनाशक्तिर्नशक्त्याचविनाशिवः ॥ १२ ॥ शक्तोययाशिवोनित्यंभुक्तौमुक्तौचदेहिनाम् ॥ आद्यासैकाप
राशक्तिश्चिन्मयीशिवसंश्रया ॥ १३ ॥ यामाहुरखिलेशस्यतैस्तैरनुगुणैर्गुणैः ॥ समानधर्म्मिणीमेवशिवस्यपरमात्मनः ॥ १४ ॥ सैकापराचचिद्रूपाशक्तिः
प्रसवधर्म्मिणी ॥ विभज्यबहुधाविश्वंविदधातिशिवेच्छया ॥ १५ ॥ सामूलप्रकृतिर्मायात्रिगुणात्रिविधास्मृता ॥ शिवयाचविपर्य्यस्तंययाततमिदंजगत्
॥ १६ ॥ एकधाचद्विधाचैवतथाशतसहस्रधा ॥ शक्तयःखलुभिद्यन्तेबहुधाव्यवहारतः ॥ १७ ॥ शिवेच्छयापराशक्तिःशिवतत्त्वैकतांगता ॥ ततःपरिस्फुर

त्यादौसर्गेतैलंतिलादिव ॥ १८ ॥ ततःक्रियाख्ययाशक्त्याशक्तौशक्तिमदुत्थया ॥ तस्यांविक्षोभ्यमाणायामादौनादःसमुद्बभौ ॥ १९ ॥ नादाद्विनिः
सृतोबिन्दुर्बिन्दोर्देवःसदाशिवः ॥ तस्मान्महेश्वरोजातःशुद्धाविद्यामहेश्वरात् ॥ २० ॥ सावाचामीश्वरीशक्तिर्वागीशाख्याहिशूलिनः ॥ यासावर्णस्वरू
पेणमातृकेतिविजृम्भते ॥ २१ ॥ अथानन्तसमावेशान्मायाकालमवासृजत् ॥ नियतिञ्चकलांविद्यांकलातोरागपूरुषौ॥२२॥ मायातःपुनरेवाभूदव्यक्तं
त्रिगुणात्मकम् ॥ त्रिगुणाच्चततोव्यक्ताद्विभक्ताःस्युस्त्रयोगुणाः ॥ २३ ॥ सत्त्वंरजस्तमश्चेतियैर्व्याप्तमखिलंजगत् ॥ गुणेभ्यःक्षोभ्यमाणेभ्योगुणेशाख्या
स्त्रिमूर्त्तयः ॥ २४ ॥ अभवन्महदादीनितत्त्वानिचयथाक्रमम् ॥ तेभ्यःस्युरण्डपिण्डानित्वसंख्यानिशिवाज्ञया ॥ २५ ॥ अधिष्ठितान्यनन्ताद्यैर्विद्येशै
श्चक्रवर्त्तिभिः ॥ शरीरान्तरभेदेनशक्तेर्भेदाःप्रकीर्त्तिताः ॥ २६ ॥ नानारूपास्तुविज्ञेयाःस्थूलसूक्ष्मविभेदतः ॥ रुद्रस्यरौद्रीसाशक्तिर्विष्णोर्वैवैष्णवी
मता ॥ २७ ॥ ब्रह्माणीब्रह्मणःप्रोक्ताइन्द्रस्यैन्द्रीतिकथ्यते ॥ किमत्रबहुनोक्तेनयद्विश्वमितिकीर्त्तितम् ॥ २८ ॥ शक्त्यात्मनैवतद्व्याप्तंयथा
देहोऽन्तरात्मना ॥ तस्माच्छक्तिमयंसर्वंजगत्स्थावरजङ्गमम् ॥ २९ ॥ कलयापरमाशक्तिःकथितापरमात्मनः ॥ एवमेषापराशक्तिरीश्वरे
च्छानुयायिनी ॥ ३० ॥ स्थिरंचरञ्चयद्विश्वंसृजतीतिविनिश्चयः ॥ ज्ञानक्रियाचिकीर्षाभिस्तिसृभिःस्वात्मशक्तिभिः ॥ ३१ ॥
शक्तिमानीश्वरःशश्वद्विश्वंव्याप्याधितिष्ठति ॥ इदमित्थमिदंनेत्थंभवेदित्येवमात्मिका ॥ ३२ ॥ इच्छाशक्तिर्महेशस्यनित्याकार्य्यनियामिका ॥
ज्ञानशक्तिस्तुतत्कार्य्यंकारणंकरणंतथा ॥ ३३ ॥ प्रयोजनञ्चतत्त्वेनबुद्धिरूपाध्यवस्यति ॥ यथेप्सितंक्रियाशक्तिर्यथाध्यवसितंजगत् ॥ ३४ ॥
कल्पयत्यखिलंकार्य्यंक्षणात्सङ्कल्परूपिणी ॥ यथाशक्तित्रयोत्थानंशक्तिःप्रसवधर्म्मिणी ॥ ३५ ॥ शक्त्यापरमयानुन्नाप्रसूतेसकलंजगत् ॥ एवंशक्ति
समायोगाच्छक्तिमानुच्यतेशिवः ॥ ३६ ॥ शक्तिशक्तिमदुत्थन्तुशाक्तंशैवमिदंजगत् ॥ यथानजायतेपुत्रःपितरंमातरंविना ॥ ३७ ॥ तथाभवंभवा
नींचविनानैतच्चराचरम् ॥ स्त्रीपुंसप्रभवंविश्वंस्त्रीपुंसात्मकमेवच ॥ ३८ ॥ स्त्रीपुंसयोर्विभूतिश्चस्त्रीपुंसाभ्यामधिष्ठिता ॥ परमात्माशिवःप्रोक्तःशिवासा
चप्रकीर्त्तिता ॥ ३९ ॥ शिवःसदाशिवःप्रोक्तःशिवासाचमनोन्मनी ॥ शिवोमहेश्वरोज्ञेयःशिवामायेतिकथ्यते ॥ ४० ॥ पुरुषःपरमेशानःप्रकृतिःप
रमेश्वरी ॥ रुद्रोमहेश्वरःसाक्षाद्रुद्राणीरुद्रवल्लभा ॥ ४१ ॥ विष्णुर्विश्वेश्वरोदेवोलक्ष्मीर्विश्वेश्वरप्रिया ॥ ब्रह्माब्रह्माशिरोहर्त्ताब्रह्माणीब्रह्मणःप्रिया ॥ ४२ ॥
भास्करोभगवाञ्छम्भुःप्रभाभगवतीशिवा ॥ महेन्द्रोमन्मथारातिःशचीशैलेन्द्रकन्यका ॥ ४३ ॥ जातवेदामहादेवःस्वाहाशर्व्वार्द्धदेहिनी ॥ यमस्त्रिय
म्बकोदेवस्तत्प्रियागिरिकन्यका ॥ ४४ ॥ निर्ऋतिर्भगवानीशोनिर्ऋतिर्नगनन्दिनी ॥ वरुणोभगवान्रुद्रोगौरीगिरिवरात्मजा ॥ ४५ ॥ बालेन्दुशेखरो

वायुःशिवाशिवमनोहरा ॥ यक्षोयज्ञशिरोहर्त्ताऋद्धिर्हिमगिरिप्रजा ॥ ४६ ॥ चन्द्रार्द्धशेखरश्चन्द्रोरोहिणीरुद्रवल्लभा ॥ ईशानःपरमेशानस्तदाय्र्यापर
मेश्वरी ॥ ४७ ॥ अनन्तवलयोऽनन्तोह्यनंतानन्तवल्लभा ॥ कालाग्निरुद्रःकालारिःकालीकालान्तकप्रिया ॥ ४८ ॥ पुरुषाख्योमनुःशम्भुःशतरूपा
शिवप्रिया ॥ दक्षःसाक्षान्महादेवःप्रसूतिःपरमेश्वरी ॥ ४९ ॥ रुचिर्भवोभवानीचबुधैराकूतिरुच्यते ॥ भृगुर्भगाक्षहादेवःख्यातिस्त्रिनयनप्रिया ॥ ५० ॥
मरीचिर्भगवान्रुद्रःसम्भूतिःशर्व्ववल्लभा ॥ गङ्गाधरोऽङ्गिराज्ञेयःस्मृतिःसाक्षादुमास्मृता ॥ ५१ ॥ पुलस्त्यःशशभृन्मौलिःप्रीतिःकान्तापिनाकिनः ॥
पुलहस्त्रिपुरध्वंसीतत्प्रियातुशिवप्रिया ॥ ५२ ॥ क्रतुध्वंसीक्रतुःप्रोक्तासन्नतिर्दयिताविभोः ॥ त्रिनेत्रोऽत्रिरुमासाक्षादनसूयास्मृताबुधैः ॥ ५३ ॥
कश्यपःकालहादेवीदेवमातामहेश्वरी ॥ वशिष्ठोमन्मथारातिर्देवीसाक्षादरुन्धती ॥ ५४ ॥ शङ्करःपुरुषाःसर्व्वेस्त्रियःसर्व्वामहेश्वरी ॥ सर्व्वेस्त्रीपुरुषास्त
स्मात्तयोरेवविभूतयः ॥ ५५ ॥ विषयीभगवानीशोविषयःपरमेश्वरी ॥ श्राव्यंसर्व्वमुमारूपंश्रोताशूलवरायुधः ॥ ५६ ॥ स्प्रष्टव्यंवस्तुजातन्तुधत्ते
शंकरवल्लभा ॥ स्प्रष्टास एवविश्वात्माबालचन्द्रावतंसकः ॥ ५७ ॥ द्रष्टव्यंवस्तुरूपन्तुबिभर्त्तिभववल्लभा ॥ द्रष्टाविश्वेश्वरोदेवःशशिखण्डशिखामणिः
॥ ५८ ॥ रसजातंमहादेवीदेवोरसयिताशिवः ॥ प्रियजातंचगिरिजाप्रीतश्चैवगराशनः ॥ ५९ ॥ मन्तव्यवस्तुतांधत्तेमहादेवीमहेश्वरी ॥ मन्तासएव
विश्वात्मामहादेवोमहेश्वरः ॥ ६० ॥ वोढव्यंवस्तुरूपन्तुबिभर्त्तिभववल्लभा ॥ देवःसएवभगवान्वोढामुग्धेन्दुशेखरः ॥ ६१ ॥ प्राणःपिनाकीसर्व्वेषां
प्राणिनांभगवान्प्रभुः ॥ प्राणस्थितिस्तुसर्व्वेषामम्बिकाचाम्बुरूपिणी ॥ ६२ ॥ बिभर्त्तिक्षेत्रतांदेवीत्रिपुरान्तकवल्लभा ॥ क्षेत्रज्ञत्वंतदाधत्तेभगवानन्त
कान्तकः ॥ ६३ ॥ अहःशूलायुधोदेवःशूलपाणिप्रियानिशा ॥ आकाशःशङ्करोदेवःपृथिवीशंकरप्रिया ॥ ६४ ॥ समुद्रोभगवानीशोवेलाशैलेन्द्रकन्य
का ॥ वृक्षोवृषध्वजोदेवोलताविश्वेश्वरप्रिया ॥ ६५ ॥ पुंलिङ्गमखिलंधत्तेभगवान्पुरशासनः ॥ स्त्रीलिङ्गंचाखिलंधत्तेदेवीदेवमनोरमा ॥ ६६ ॥ शब्द
जालमशेषन्तुधत्तेशर्व्वस्यवल्लभा ॥ अर्थस्यरूपमखिलंधत्तेमुग्धेन्दुशेखरः ॥६७॥ यस्ययस्यपदार्थस्ययायाशक्तिरुदाहृता ॥ सासाविश्वेश्वरीदेवीसस
शर्व्वोमहेश्वरः॥६८॥यत्परंयत्पवित्रञ्चयत्पुण्यंयच्चमङ्गलम् ॥ तत्तदाहुर्महाभागास्तयोस्तेजोविजृम्भितम्॥६९॥यथादीपस्यदीप्तस्यशिखादीपयतेगृह
म् ॥ तथातेजस्तयोरेतद्व्याप्यदीपयतेजगत् ॥७०॥ तृणादिशिवमूर्त्त्यन्तंविश्वस्यातिशयक्रमः ॥ सन्निकर्षक्रमवशात्तयोरितिपराश्रुतिः ॥७१॥ सर्व्वा
कारात्मकावेतौसर्व्वश्रेयोविधायिनौ ॥ पूजनीयौनमस्कार्य्यौचिन्तनीयौचसर्व्वदा ॥७२॥ यथाप्रज्ञमिदंकृष्णयाथात्म्यंपरमेशयोः ॥ कथितंहिमयाते
ऽद्यनतुतावदियत्तया ॥७३॥ तत्कथंशक्यतेवक्तुंयाथात्म्यंपरमेशयोः ॥ महतामपिसर्व्वेषांमनसोऽपिबहिर्गतम्॥७४॥ अन्तर्गतमनन्यानामीश्वरार्पितचे

तसाम् ॥ अन्येषांबुद्ध्यचनारूढमारूढंवातथैवतत् ॥७५॥ येयमुक्ताविभूतिर्वैप्राकृतीसापरामता ॥ अप्राकृतींपरामन्यांगुह्यांगुह्यविदोविदुः ॥७६॥ यतो
वाचोनिवर्त्तंतेमनसाचेन्द्रियैःसह ॥ अप्राकृतीपरासैषाविभूतिःपारमेश्वरी ॥७७॥ सैवेहपरमंधामसैवेहपरमागतिः ॥ सैवेहपरमाकाष्ठाविभूतिःपरमेष्ठिनः
॥७८॥ तांप्राप्तुंप्रयतन्तेऽत्रजितश्वासाजितेन्द्रियाः ॥ गर्भकारगृहद्वारंनिश्छिद्रंघटितंयथा ॥७९॥ संसाराशीविषालीढमृतसंजीवनौषधम् ॥ विभूर्तिशि
वयोर्विद्वान्नबिभेतिकुतश्चन ॥८०॥ यःपरामपराञ्चैवविभूर्तिवेत्तितत्त्वतः ॥ सोऽपरांभूतिमुल्लंघ्यपरांभूतिंसमश्नुते ॥ ८१ ॥ एतत्तेकथितंकृष्णयाथात्म्यं
परमात्मनोः ॥ रहस्यमपियोग्योऽसिभवभक्तोभवानिति ॥ ८२ ॥ नाशिष्येभ्यःशठेभ्योवानाभक्तेभ्यःकदाचन ॥ व्याहरेदीदृशानर्थानितिवेदानुशास
नम् ॥८३॥तस्मात्त्वमपिकल्याणपरेभ्यःकथयेर्यदि॥त्वादृशेभ्योऽनुरूपेभ्यःकथयैतन्नचान्यथा॥८४॥विभूतिमेतांशिवयोर्योग्येभ्योयःप्रदापयेत्॥संसार
सागरान्मुक्तःशिवसायुज्यमाप्नुयात्॥८५॥कीर्त्तनादस्यनश्यंतिमहांतःपातकोत्तमाः ॥त्रिश्चतुर्वासमभ्यस्तेविनश्यंतिततोऽधिकाः ॥८६ ॥ नश्यंत्यरिष्ट
रिपवोवर्द्धंतेसुहृदस्तथा॥विद्याचवर्द्धतेशैवीमतिःसत्येप्रवर्त्तते ॥८७ ॥भक्तिःपराशिवेसाम्बेसानुगेसपरिच्छदे ॥ यद्यदिष्टतमंचान्यत्तत्तदाप्नोत्यसंशयम्
॥८८॥अतःशुचिःशिवेभक्तोविश्रब्धःकीर्त्तयेद्यदि॥ प्रबलैःकर्म्मभिःपूर्वैःफलंचेत्प्रतिबध्यते ॥ पुनःपुनःसमभ्यस्येत्तस्यनास्तीहदुर्लभम्॥८९॥इतिश्रीशै
वेमहापुराणेवायवीयसंहितायामुत्तरभागे शिवतत्त्वकथनंनामपञ्चमोऽध्यायः ॥ ५ ॥ उपमन्युरुवाच ॥ विग्रहंदेवदेवस्यविश्वमेतच्चराचरम् ॥ तदेवन
विजानन्तिपशवःपाशगौरवात् ॥१॥ तमेकमेवबहुधावदन्तियदुनन्दन ॥ अजानन्तःपरंभावमविकल्पंमहर्षयः ॥२॥ अपरंब्रह्मरूपञ्चपरब्रह्मात्मकंतथा॥
केचिदाहुर्महादेवमनादिनिधनंपरम्॥३॥भूतेन्द्रियान्तःकरणप्रधानविषयात्मकम् ॥ अपरंब्रह्मनिर्दिष्टंपरंब्रह्मचिदात्मकम् ॥४॥ बृहत्त्वाद्बृंहणत्वाच्चपरमि
त्यभिधीयते ॥ उभेतेब्रह्मणोरूपेब्रह्मणोऽधिपतेःप्रभोः॥५॥विद्याविद्यास्वरूपीतिकैश्चिदीशोनिगद्यते ॥ विद्येतिचेतनांप्राहुस्तथाविद्यामचेतनाम्॥६॥वि
द्याविद्यात्मकञ्चैवविश्वंविश्वगुरोर्विभोः॥रूपमेवनसन्देहोविश्वंतस्यवशेयतः ॥७॥ भ्रान्तिर्विद्यापरञ्चेतिशार्व्वंरूपंपरेविदुः॥अयथाबुद्धिरर्थेषुबहुधाभ्रान्ति
रुच्यते ॥ ८ ॥ यथार्थाकारसंवित्तिर्विद्येतिपरिकीर्त्यंते ॥ विकल्परहितंतत्त्वंपरमित्यभिधीयते ॥ ९ ॥ तत्रयंशाङ्करंरूपंतदाज्ञाधिष्ठितंयतः ॥ सदसद्रू
पइत्याहुःसदसत्पतिरित्यपि ॥ १० ॥ सत्येसाधौचसच्छब्दःसद्भिरेवप्रयुज्यते ॥ विपरीतेत्वसच्छब्दःकथ्यतेवेदवादिभिः ॥ ११ ॥ सच्चासच्चजगद्विश्वं
शरीरंपरमेष्ठिनः ॥ यदिदंसदितिप्रोक्तंयच्चासदितिकथ्यते ॥ १२ ॥ तयोःपतित्वात्तुशिवःसदसत्पतिरुच्यते ॥ क्षराक्षरात्मकंप्राहुःक्षराक्षरपरंपरे॥१३॥
क्षरःसर्व्वाणिभूतानिकूटस्थोऽक्षरउच्यते ॥ उभेतेपरमेशस्यरूपेतस्यवशेयतः ॥ १४ ॥ तयोःपरःशिवःशान्तःक्षराक्षरपरःस्मृतः ॥ समष्टिव्यष्टिरूपञ्च

समष्टिव्यष्टिकारणम् ॥ १५ ॥ वदन्तिमुनयःकेचिच्छिवंपरमकारणम् ॥ समष्टिमाहुरव्यक्तंव्यष्टिंव्यक्तंतथैवच ॥ १६ ॥ तेरूपेपरमेशस्यतदिच्छाम
नुवर्त्तनात् ॥ तयोःकारणभावेनशिवंपरमकारणम्॥१७॥कारणार्थविदःप्राहुःसमष्टिव्यष्टिकारणम् ॥ जातिव्यक्तिस्वरूपीतिकथ्यतेकैश्चिदीश्वरः॥१८॥
यत्पिण्डेष्वनुवर्त्तेतसाजातिरितिकथ्यते ॥ व्यक्तिर्व्यावृत्तरूपंतत्पिण्डजातेसमाश्रितम् ॥ १९ ॥ जातयोव्यक्तयश्चैवतदाज्ञापरिपालिताः ॥ यतस्त
तोमहादेवोजातिव्यक्तिवपुःस्मृतः ॥ २० ॥ प्रधानपुरुषव्यक्तकालात्माकथ्यतेशिवः ॥ प्रधानंप्रकृतिंप्राहुःक्षेत्रज्ञंपुरुषंतथा ॥ २१ ॥ त्रयोविंशतित
त्त्वानिव्यक्तमाहुर्मनीषिणः ॥ कालःकार्य्यप्रपञ्चस्यपरिणामैककारणम् ॥ २२ ॥ एषामीशोऽधिपोधाताप्रवर्त्तकनिवर्त्तकः ॥ आविर्भावतिरोभावहेतु
रेकःस्वराडजः ॥ २३ ॥ तस्मात्प्रधानपुरुषव्यक्तकालस्वरूपवान् ॥ हेतुर्नेताधिपस्तेषांधाताचोक्तोमहेश्वरः ॥ २४ ॥ विराड्हिरण्यगर्भात्माकैश्चि
दीशोनिगद्यते ॥ हिरण्यगर्भोलोकानांहेतुर्विश्वात्मकोविराट् ॥ २५ ॥ अन्तर्यामीपरश्चेतिकथ्यतेकविभिःशिवः ॥ प्राज्ञतैजसविश्वात्मेत्यपरेसम्प्रच
क्षते ॥ २६ ॥ मातामानञ्चमेयञ्चमितिश्चाहुरथापरे ॥ कर्त्ताक्रियाचकार्य्यञ्चकरणंकारणंपरे ॥ २७ ॥ जाग्रत्स्वप्नसुषुप्त्यात्मेत्यपरेसम्प्रचक्षते ॥
तुरीयमपरेप्राहुस्तुर्य्यातीतामितीतरे ॥ २८ ॥ तमाहुर्निर्गुणंकेचिद्गुणवन्तंपरेविदुः ॥ केचित्संसारिणंप्राहुस्तमसंसारिणंपरे ॥ २९ ॥ स्वत
न्त्रमपरेप्राहुरस्वतन्त्रंपरेविदुः ॥ घोरमित्यपरेप्राहुःसौम्यमेवपरेविदुः ॥ ३० ॥ रागवन्तंपरेप्राहुर्वीतरागंतथापरे ॥ निष्क्रियन्त्वपरेप्राहुःस
क्रियञ्चेतरेजनाः ॥ ३१ ॥ निरिन्द्रियंपरेप्राहुःसेन्द्रियञ्चतथापरे ॥ ध्रुवमित्यपरेप्राहुस्तमध्रुवमितीतरे ॥ ३२ ॥ अरूपंकेचिदाहुर्वैरूपवन्तंपरे
विदुः ॥ अदृश्यमपरेप्राहुर्दृश्यमित्यपरेविदुः ॥ ३३ ॥ वाच्यमित्यपरेप्राहुरवाच्यमितिचापरे ॥ शब्दात्मकंपरेप्राहुःशब्दातीतमथापरे ॥ ३४ ॥ केचि
च्चिन्तामयंप्राहुश्चिन्तयारहितंपरे ॥ ज्ञानात्मकंपरेप्राहुर्विज्ञानमितिचापरे ॥ ३५ ॥ केचिज्ज्ञेयमितिप्राहु रज्ञेयमितिचापरे ॥ एकेतमेकमेवाहुरनेकञ्चत
थापरे ॥ ३६ ॥ एवंविकल्प्यमानंतद्याथात्म्यंपरमेष्ठिनः ॥ नाध्यवस्यन्तिमुनयोनानाप्रत्ययकारणात् ॥३७॥ येपुनःसर्व्वभावेनप्रपन्नाःपरमेश्वरम् ॥ ते
हिजानन्त्ययत्नेनशिवंपरमकारणम् ॥ ३८ ॥ यावत्पशुर्नैवपश्यत्यनीशंकविंपुराणंभुवनस्येशितारम् ॥ तावद्दुःखेवर्त्ततेबद्धपाशःसंसारेऽस्मिंश्चक्रनेमिभ्र
मेण ॥ ३९ ॥ यदापश्येत्पश्यन्तंरुक्मवर्णंकर्त्तारमीशंपुरुषंब्रह्मयोनिम् ॥ तदाविद्वान्पुण्यपापेविधूयानिरञ्जनःपरमसुपैतिसाम्यम् ॥४०॥ इतिश्रीशैवे
महापुराणेवायवीयसंहितायामुत्तरभागे षष्ठोऽध्यायः ॥ ६ ॥ उपमन्युरुवाच ॥ नाशिवस्याणवोबन्धःकार्म्मोमायेयएववा ॥ प्राकृतोवाथबौद्धोवाह्यहङ्का
रात्मकस्तथा ॥ १ ॥ नैवास्यमानसोबन्धोनचैत्तोनेन्द्रियात्मकः ॥ नचतन्मात्रबन्धोऽपिभूतबन्धोनकश्चन ॥ २ ॥ नचकालःकलाचैवनाविद्यानियति

स्तथा ॥ नरागोनचविद्वेषःशम्भोरमिततेजसः ॥ ३ ॥ नचाप्यभिनिवेशोऽस्यकुशलाकुशलान्यपि ॥ कर्म्माणितद्विपाकश्चसुखदुःखेचतत्फले ॥ ४ ॥ आशयैर्नास्यसम्बन्धःसंस्कारैःकर्म्मणामपि ॥ भोगैश्चभोगसंस्कारैःकालत्रितयगोचरैः ॥ ५ ॥ नतस्यकारणंकर्त्तानादिरन्तस्तथान्तरम् ॥ नकर्म्मकरणंवापिनाकार्य्यंकार्य्यमेवच ॥ ६ ॥ नास्यबन्धुर्नचारिर्वानियन्ताप्रेरकोऽपिवा ॥ नपतिर्नगुरुर्भ्रातानाधिकोनसमस्तथा ॥ ७ ॥ नजन्ममरणेतस्यनकांक्षितमकांक्षितम् ॥ नविधिर्ननिषेधश्चनमुक्तिर्नचबन्धनम् ॥ ८ ॥ नास्तियद्यदकल्याणंतत्तदस्यकदाचन ॥ कल्याणंसकलञ्चास्तिपरमात्माशिवोयतः ॥ ९ ॥ सशिवःसर्व्वमेवेदमधिष्ठायस्वशक्तिभिः ॥ अप्रच्युतस्वतोभावःस्थितःस्थाणुरतःस्मृतः ॥ १० ॥ शिवेनाधिष्ठितंयस्माज्जगत्स्थावरजङ्गमम् ॥ सर्व्वरूपःस्मृतःशर्व्वस्तथाज्ञात्वानमुह्यति ॥ ११ ॥ शर्व्वोरुद्रोनमस्तस्मैपुरुषःसन्परोमहान् ॥ हिरण्यबाहुर्भगवान्हिरण्यपतिरीश्वरः ॥१२॥ अम्बिकापतिरीशानःपिनाकीवृषवाहनः ॥ एकोरुद्रःपरंब्रह्मपुरुषःकृष्णपिङ्गलः ॥ १३ ॥ वालाग्रमात्रोहृन्मध्येविचिन्त्योदहरान्तरे ॥ हिरण्यकेशःपद्माक्षोह्यरुणस्ताम्रएवच ॥ १४ ॥ योऽवसर्पत्यसौदेवोनीलग्रीवोहिरण्मयः ॥ सौम्योघोरस्तथामिश्रश्चाक्षरश्चामृतोऽव्ययः ॥ १५ ॥ सपुंविशेषःपरमोभगवानन्तकान्तकः ॥ चेतनाचेतनोन्मुक्तःप्रपञ्चाच्चपरात्परः ॥ १६ ॥ लोकेसातिशयत्वेनज्ञानैश्वर्य्यंविलोकिते ॥ शिवेऽनातिशयत्वेनास्थितेप्राहुर्मनीषिणः॥१७॥ प्रतिसर्गंप्रसूतानांब्रह्मणांशास्त्रविस्तरम् ॥ उपदेष्टासएवादौकालावच्छेदवर्त्तिनाम् ॥१८॥ कालावच्छेदयुक्तानांगुरूणामप्यसौगुरुः ॥ सर्व्वेषामेवसर्व्वेशःकालावच्छेदवर्ज्जितः॥१९॥सिद्धिःस्वाभाविकीतस्यशक्तिःसर्व्वातिशायिनी ॥ ज्ञानमप्रतिमंनित्यंवपुरत्यन्तनिर्म्मलम्॥२०॥ऐश्वर्य्यमप्रतिद्वन्द्वंसुखमात्यन्तिकंबलम्॥तेजःप्रभावोवीर्य्यंचक्षमाकारुण्यमेवच॥२१॥परिपूर्णस्यसर्गाद्यैर्नात्मनोऽस्तिप्रयोजनम् ॥ परानुग्रहएवास्यफलंसर्व्वस्यकर्म्मणः॥२२॥प्रणवोवाचकस्तस्यशिवस्यपरमात्मनः॥शिवरुद्रादिशब्दानांप्रणवोहिपरःस्मृतः॥२३॥शम्भोःप्रणववाच्यस्यभावनात्तज्जपादपि॥यासिद्धिःसापराप्राप्यभवत्येवनसंशयः॥२४॥तस्मादेकाक्षरंदेवमाहुरागमपारगाः ॥ वाच्यवाचकयोरैक्यंमन्यमानामनस्विनः॥२५॥अस्यमात्राःसमाख्याताश्चतस्रोवेदमूर्द्धनि ॥ अकारश्चाप्युकारश्चमकारोनादइत्यपि ॥२६॥ अकारंबह्वृचंप्राहुरुकारोयजुरुच्यते ॥ मकारःसामनादोऽस्यश्रुतिराथर्व्वणीस्मृता ॥२७॥ अकारश्चमहाबीजंरजःस्रष्टाचतुर्म्मुखः ॥ उकारःप्रकृतिर्योनिःसत्त्वंपालयिताहरिः ॥२८॥ मकारःपुरुषोबीजंतमःसंहारकोहरः ॥ नादःपरःपुमानीशोनिर्गुणोनिष्क्रियःशिवः ॥ २९ ॥ एवंतिसृभिरेवेशमात्राभिर्निखिलंत्रिधा ॥ अभिधायशिवात्मानंबोधयत्यर्द्धमात्रया ॥ ३० ॥ यस्मात्परंनापरमस्तिकिञ्चिद्यस्मान्नाणीयोनचज्यायोऽस्तिकश्चित् ॥ वृक्षइवस्तब्धोदिवितिष्ठत्येकस्तेनेदंपूर्णंपुरुषेणसर्व्वम् ॥ ३१ ॥ इतिश्रीशैवेमहापुराणेवायवीयसं

हितायामुत्तरभागेसप्तमोऽध्यायः ॥ ७ ॥ उपमन्युरुवाच ॥ शक्तिःस्वाभाविकीतस्यविद्याविश्वविलक्षणा ॥ एकानेकस्वरूपेणभातिभानोरिवप्रभा
॥ १ ॥ अनन्ताःशक्तयस्तस्याइच्छाज्ञानक्रियादयः ॥ मायाद्याश्चाभवन्वह्नेर्विस्फुलिङ्गायथातथा ॥ २ ॥ सदाशिवेश्वराद्याश्चनानाविद्येश्वरादयः ॥
अभवन्पुरुषाश्चास्याःप्रकृतिश्चपरात्परा ॥ ३ ॥ महदादिविशेषान्ताअजाद्याश्चापिमूर्त्तयः ॥ यच्चान्यदपितत्सर्व्वंतस्याःकार्य्यंनसंशयः ॥ ४ ॥
साशक्तिःसर्व्वगासूक्ष्माप्रबोधानन्दरूपिणी ॥ शक्तिमानुच्यतेदेवःशिवःशीतांशुभूषणः ॥ ५ ॥ वेद्यःशिवःशिवाविद्याप्रज्ञाचैवश्रुतिःस्मृतिः ॥
धृतिरेषास्थितिर्निष्ठाज्ञानेच्छाकर्म्मशक्तयः ॥ ६ ॥ आज्ञाचैवपरंब्रह्मद्वेविद्येचपरापरे ॥ शुद्धविद्याशुद्धकलासर्व्वंशक्तिकृतंयतः ॥ ७ ॥ मायाच
प्रकृतिर्जीवोविकारोविकृतिस्तथा ॥ असच्चसच्चयत्किञ्चित्तयासर्व्वमिदंततम् ॥ ८ ॥ सादेवीमाययासर्व्वंब्रह्माण्डंसचराचरम् ॥ मोहयत्यप्रयत्नेन
मोचयत्यपिलीलया ॥ ९ ॥ अनयासहसर्व्वेशःसप्तविंशत्प्रकारया ॥ विश्वंव्याप्यस्थितस्तस्मान्मुक्तिरत्रप्रवर्त्तते ॥ १० ॥ मुमुक्षवःपुराकेचिन्मु
नयोब्रह्मवादिनः ॥ संशयाविष्टमनसोविमृशन्तियथातथम् ॥ ११ ॥ किंकारणंकुतोजाताजीवामःकेनवावयम् ॥ १२ ॥ केनवर्त्तामहेशश्व
त्सुखेष्वन्येषुचानिशम् ॥ अनिर्लङ्घ्याचविश्वस्यव्यवस्थाकेनवाकृता ॥ १३ ॥ कालःस्वभावोनियतिर्यदृच्छानात्रयुज्यते ॥ भूतानियोनिःपुरुषो
योगश्चैषांपरोऽथवा ॥ १४ ॥ अचेतनत्वात्कालादेश्चेतनत्वेऽपिचात्मनः ॥ सुखदुःखाभिभूतत्वादनीशत्वंविचार्य्यंच ॥ १५ ॥ तेध्यानयोगानुगताः
प्रापश्यञ्छक्तिमैश्वरीम् ॥ पाशविच्छेदिकांसाक्षान्निगूढांस्वगुणैर्भृशम् ॥ १६ ॥ तयाविच्छिन्नपाशास्तेसर्व्वकारणकारणम् ॥ शक्तिमन्तंमहादेवमप
श्यन्दिव्यचक्षुषा ॥ १७ ॥ यःकारणान्यशेषाणिकालात्मसहितानिच ॥ अप्रमेयोऽनयाशक्त्यासाकमेकोऽधितिष्ठति ॥ १८ ॥ ततःप्रसाद
योगेनयोगेनपरमेणच ॥ दृढेनभक्तियोगेनदिव्यांगतिमवाप्नुवन् ॥ १९ ॥ तस्मात्सहतयाशक्त्याहृदिपश्यन्तियेशिवम् ॥ तेषांशाश्वतिकीशा
न्तिर्नेतरेषामितिश्रुतिः ॥ २० ॥ नहिशक्तिमतःशक्त्याविप्रयोगोऽस्तिजातुचित् ॥ तस्माच्छक्तेःशक्तिमतःप्रसादान्निर्वृतिर्द्वयोः ॥ २१ ॥
क्रमोऽविवक्षितोनूनंविमुक्तोज्ञानकर्म्मणोः ॥ प्रसादेसतिसामुक्तिर्यस्मात्करतलेस्थिता ॥ २२ ॥ देवोवादानवोवापिपशुर्वाविहगोपिवा ॥ कीटोथवाकृ
मिर्वापिमुच्यतेतत्प्रसादतः ॥ २३ ॥ गर्भस्थोजायमानोवाबालोवातरुणोऽपिवा ॥ वृद्धोवाम्रियमाणोवास्वर्गस्थोवाथनारकी ॥ २४ ॥ पतितोवा
पिधर्म्मात्मापण्डितोमूढएववा ॥ प्रसादेतत्क्षणादेवमुच्यतेनात्रसंशयः ॥ २५ ॥ अयोग्यानाञ्चकारुण्याद्भक्तानांपरमेश्वरः ॥ प्रसीदतिनसन्देहो
निगृह्यविविधान्मलान् ॥ २६ ॥ प्रसादादेवसाभक्तिःप्रसादोभक्तिसम्भवः ॥ अवस्थाभेदमुत्प्रेक्ष्यविद्वांस्तत्रनमुह्यति ॥ २७ ॥ प्रसादपूर्व्विकायेयंभ

क्तिर्मुक्तिविधायिनी ॥ नैवसाशक्यतेप्राप्तुंनरैरेकेनजन्मना ॥ २८ ॥ अनेकजन्मसिद्धानांश्रौतस्मार्त्तानुवर्त्तिनाम् ॥ विरक्तानांप्रबुद्धानांप्रसीदतिमहेश्वरः ॥ २९ ॥ प्रसन्नेसतिदेवेशेपशोस्तस्मिन्प्रवर्त्तते ॥ अस्तिनाथोममेत्यल्पाभक्तिर्बुद्धिपुरःसरा ॥ ३० ॥ तपसाविवशःशैवैर्धर्म्मैःसंयुज्यतेनरः ॥ तत्प्रयोगेतदभ्यासस्ततोभक्तिःपराभवेत् ॥ ३१ ॥ परयाचतयाभक्त्याप्रसादोलभ्यतेपरः ॥ प्रसादात्सर्व्वपाशेभ्योमुक्तिर्भुक्तिसुनिर्वृतिः ॥ ३२ ॥ अल्पभावोऽपियोमर्त्त्यःसोऽपिजन्मत्रयात्परम् ॥ नयोनियन्त्रपीडांवैलभतेनात्रसंशयः ॥ ३३ ॥ साङ्गानङ्गाचयासेवासाभक्तिरितिकथ्यते ॥ सापुनर्भिद्यतेत्रेधामनोवाक्कायसाधनैः ॥ ३४ ॥ शिवरूपादिचिन्तायासासेवामानसीस्मृता ॥ जपादिर्वाचिकीसेवाकर्म्मपूजादिकायिकी ॥ ३५ ॥ सेयंत्रिसाधनासेवाशिवधर्म्मश्चकथ्यते ॥ सतुपञ्चविधःप्रोक्तःशिवेनपरमात्मना ॥ ३६ ॥ तपःकर्म्मजपोध्यानंज्ञानंचेतिसमासतः ॥ कर्म्मलिङ्गार्चनाद्यंचतपश्चान्द्रायणादिकम् ॥ ३७ ॥ जपस्त्रिधाशिवाभ्यासश्चिन्ताध्यानंशिवस्यतु ॥ शिवागमोक्तंयज्ज्ञानंतदत्रज्ञानमुच्यते ॥ ३८ ॥ श्रीकण्ठेनशिवेनोक्तःशिवायैचशिवागमः ॥ शिवाश्रितानांकारुण्याच्छ्रेयसामेकसाधनम् ॥ ३९ ॥ तस्माद्विवर्द्धयेद्भक्तिंशिवेपरमकारणे ॥ त्यजेच्चविषयासङ्गंश्रेयोऽर्थीमतिमान्नरः ॥४०॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेऽष्टमोऽध्यायः॥८॥श्रीकृष्णउवाच॥भगवञ्छ्रोतुमिच्छामिशिवेनपरिभाषितम् ॥ वेदसारंशिवज्ञानंस्वाश्रितानांविमुक्तये ॥ १ ॥ अभक्तानामबुद्धानामयुक्तानामगोचरम् ॥ अर्थैर्दशार्द्धैःसंयुक्तंगूढमप्राज्ञनिन्दितम् ॥ २ ॥ वर्णाश्रमकृतैर्धर्म्मैर्विपरीतंक्वचित्समम् ॥ वेदात्षडङ्गादुद्धृत्यसांख्ययोगाच्चकृत्स्नशः ॥ ३ ॥ शतकोटिप्रमाणेनविस्तीर्णग्रन्थसंख्यया ॥ कथितंपरमेशेनतत्रपूजाकथंप्रभो ॥४॥ कस्याधिकारःपूजादौज्ञानयोगादयःकथम्॥तत्सर्व्वंविस्तरादेववक्तुमर्हसिसुव्रत॥५॥उपमन्युरुवाच॥शैवंसङ्क्षिप्यवेदोक्तंशिवेनपरिभाषितम्॥स्तुतिनिन्दाविरहितंसद्यःप्रत्ययकारकम्॥६॥गुरुप्रसादजंदिव्यमनायासेनमुक्तिदम् ॥ कथयिष्येसमासेनतस्यशक्योनविस्तरः ॥ ७ ॥ सिसृक्षयापुराऽव्यक्ताच्छिवःस्थाणुर्महेश्वरः ॥ सत्कार्य्यकारणोपेतःस्वयमाविरभूत्प्रभुः ॥ ८ ॥ जनयामासचतदाऋषिर्विश्वाधिकःप्रभुः ॥ देवानांप्रथमंदेवंब्रह्माणंब्रह्मणःपतिः ॥ ९ ॥ ब्रह्मापिपितरंदेवंजायमानोऽन्ववैक्षत ॥ तंजायमानंजनकोदेवःप्रापश्यदाज्ञया ॥ १० ॥ दृष्टोरुद्रेणदेवोऽसावसृजद्विश्वमीश्वरः ॥ वर्णाश्रमव्यवस्थांचचकारसपृथक्पृथक् ॥ ११ ॥ सोमंससर्ज्जयज्ञार्थेसोमाद्द्यौःसमजायत ॥ धराचवह्निःसूर्य्यश्चयज्ञोविष्णुःशचीपतिः॥ ॥ १२ ॥ तेचान्येचसुरारुद्रंरुद्राध्यायेनतुष्टुवुः ॥ प्रसन्नवदनस्तस्थौदेवानामग्रतःप्रभुः ॥ १३ ॥ अपहृत्यस्वलीलार्थंतेषांज्ञानंमहेश्वरः ॥ तमपृच्छंस्ततोदेवाःकोभवानितिमोहिताः ॥ १४ ॥ सोऽब्रवीद्भगवान्रुद्रोह्यहमेकःपुरातनः ॥ आसंप्रथममेवाहंवर्त्तामिचसुरोत्तमाः ॥ १५ ॥ भविष्यामिचम

त्तोऽन्योव्यतिरिक्तोनकश्चन ॥ अहमेवजगत्सर्व्वंतर्प्पयामिस्वतेजसा ॥ १६ ॥ मत्तोऽधिकःसमोनास्तिमांयोवेदसमुच्यते ॥ इत्युक्त्वाभगवान्रु
द्रस्तत्रैवान्तरधीयत ॥ १७ ॥ नापश्यंश्चततोदेवंदेवाविष्णुपुरोगमाः ॥ अथर्व्वशिरसारुद्रमस्तुवंश्चोर्द्धबाहवः ॥ १८ ॥ त्वरिताख्येनरुद्रेणरुद्रेणब्रह्म
भिस्तथा ॥ स्तोत्रैश्चविविधैरन्यैःसूक्तैःशैवैश्चनामभिः ॥ १९ ॥ व्रतंपाशुपतंकृत्वाह्यथर्व्वशिरासिस्थितम् ॥ भस्मसञ्छन्नसर्व्वाङ्गाबभूवुरमरास्तदा ॥
॥ २० ॥ अथतेषांप्रसादार्थंपशूनांपतिरीश्वरः ॥ सगणश्चाम्बयासार्द्धंसान्निध्यमकरोत्प्रभुः ॥ २१ ॥ यंविनिद्राजितश्वासायोगिनोदग्धकिल्बिषाः ॥
हृदिपश्यन्तितंदेवंददृशुर्देवपुङ्गवाः ॥ २२ ॥ यामाहुःपरमांशक्तिमीश्वरेच्छानुवर्त्तिनीम् ॥ तामपश्यन्महेशस्यवामाङ्गेवामलोचनाम् ॥ २३ ॥
येविनिर्द्धूतसंसाराःप्राप्ताःशैवंपरंपदम् ॥ नित्यसिद्धाश्चयेचान्येतेचदृष्टागणेश्वराः ॥ २४ ॥ अथतंतुष्टुवुर्देवादिव्यासहमहेश्वरम् ॥ स्तोत्रैर्माहेश्वरैर्दिव्यैः
स्तोत्रैःपौराणिकैरपि ॥२५॥ देवोऽपिदेवानालोक्यकृपयावृषभध्वजः ॥ तुष्टोऽस्मीत्याहसम्प्रीतःस्वभावमधुरांगिरम् ॥२६॥ अथतंप्रीतमनसंप्रणिपत्य
वृषध्वजम् ॥ अर्थमर्थ्यंतमंदेवाःपप्रच्छुरिममादरात् ॥२७॥ देवाऊचुः ॥ भगवन्केनमार्गेणपूजनीयोऽसिभूतले ॥ कस्याधिकारःपूजायांवक्तुमर्हसितत्त्व
तः ॥२८॥ ततःसस्मितमालोक्यदेवींदेववरोहरः ॥ स्वरूपंदर्शयामासघोरंसूर्य्यात्मकंपरम् ॥२९॥सर्व्वैश्वर्य्यगुणोपेतंसर्व्वतेजोमयंपरम् ॥ शक्तिभिर्मू
र्त्तिभिःस्वाभिर्ग्रहैर्देवैश्चसंवृतम् ॥३०॥ अष्टबाहुंचतुर्व्वक्त्रमर्द्धनारीकमद्भुतम् ॥ दृष्ट्वैवमद्भुताकारंदेवाविष्णुपुरोगमाः ॥३१॥ बुद्ध्वादिवाकरंदेवंदेवींचैव
निशाकरम् ॥ पंचभूतान्यशेषाणितन्मयञ्चचराचरम्॥३२॥एवमुक्त्वानमश्चक्रुस्तस्मैचार्घ्यंप्रदायवै ॥३३॥ सिन्दूरवर्णायसुमण्डलायसुवर्णवज्राभरणा
यतुभ्यम् ॥ पद्माभनेत्रायसपङ्कजायब्रह्मेन्द्रनारायणकारणाय ॥ ३४ ॥ सुरत्नपूर्णंससुवर्णतोयंसुकुंकुमाढ्यंसकुशंसपुष्पम् ॥ प्रदत्तमादायसहेमपात्रप्रशं
स्तमर्घ्यंभगवन्प्रसीद ॥३५॥ नमःशिवायसाम्बायसगणायादिहेतवे ॥ रुद्रायविष्णवेतुभ्यंब्रह्मणेसूर्य्यमूर्त्तये ॥३६॥ यःशिवंमण्डलेसौरेसम्पूज्यैवंसमाहि
तः ॥ प्रातर्मध्याह्नसायाह्नेप्रदद्यादर्घ्यमुत्तमम् ॥ ३७ ॥ प्रणमेद्वापठेदेतत्स्तोत्रंस्तुतिशतोत्तमम् ॥ नतस्यदुर्लभंकिञ्चिद्भक्तश्चेन्मुच्यतेदृढम् ॥ ३८ ॥
तस्माद्भक्त्यार्चयेन्नित्यंशिवमादित्यरूपिणम् ॥ धर्म्मकामार्थमुक्त्यर्थंमनसाकर्म्मणागिरा ॥ ३९ ॥ अथदेवान्समालोक्यमण्डलस्थोमहेश्वरः ॥
सर्व्वागमोत्तरंदत्त्वाशास्त्रमन्तरधीयत ॥ ४० ॥ तत्रपूजाधिकाराद्यंब्रह्मक्षत्रविशामिति ॥ ज्ञात्वाप्रणम्यदेवेशंदेवाजग्मुर्यथागतम् ॥ ४१ ॥ अथकालेनम
हतातास्मिञ्शास्त्रेतिरोहिते ॥ भर्त्तारंपरिपप्रच्छतदङ्कस्थामहेश्वरी ॥ ४२ ॥ तयासंचोदितोदेवोदेव्याचन्द्रार्द्धभूषणः ॥ अवदत्सारमुद्धृत्यशास्त्रंसर्व्वाग
मोत्तरम् ॥ ४३ ॥ प्रवर्त्तितंचतल्लोकेनियोगात्परमेष्ठिनः ॥ मयागस्त्येनगुरुणादधीचेनमहर्षिणा ॥ ४४ ॥ स्वयमप्यवतीर्य्योर्व्यांयुगावर्त्तेषुशूलधृक् ॥

स्वाश्रितानांविमुक्त्यर्थंकुरुतेज्ञानसन्ततिम् ॥ ४५ ॥ ऋभुःसत्योभार्गवश्चअङ्गिराःसविताद्विजाः ॥ मृत्युःशतक्रतुर्धर्म्मोवसिष्ठोमुनिपुङ्गवः ॥ ४६ ॥ सारस्वतस्त्रिधामाचत्रिवृतोमुनिपुङ्गवः ॥ शततेजाःस्वयंधर्म्मोनारायणइतिश्रुतः ॥ ४७ ॥ स्वरक्षश्चारुणिर्धीमांस्तथाचैवकृतञ्जयः ॥ मामतेयोभरद्वाजोगौतमःकविसत्तमः ॥ ४८ ॥ वाचःश्रवामुनिःसाक्षात्तथासूक्ष्मायणिःशुचिः ॥ तृणबिन्दुमुनिःकृष्णशक्तिःशाक्तेयउत्तरः ॥ ॥ ४९ ॥ जातूकर्ण्योहरिःसाक्षात्कृष्णद्वैपायनोमुनिः ॥ व्यासास्तेतेचशृण्वन्तुकल्पयोगेश्वरान्क्रमात् ॥५०॥ लैङ्गेव्यासावताराणिद्वापरान्तेषुसुव्रत ॥ योगाचार्य्यावताराणितथातिष्येतुशूलिनः ॥ ५१ ॥ तत्रतत्रविभोशिष्याश्चत्वारःस्युर्महौजसः ॥ शिष्यास्तेषांप्रशिष्याश्चशतशोऽथसहस्रशः ॥५२॥ तेषांसम्भाषणाल्लोकेसेवाज्ञाकरणादिभिः ॥ भाग्यवन्तोविमुच्यन्तेभक्त्याचात्यन्तभाविताः ॥ ५३ ॥ इति श्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेनवमोऽध्यायः ॥ ९ ॥ श्रीकृष्णउवाच ॥ युगावर्त्तेषुसर्वेषुयोगाचार्य्यच्छलेनतु ॥ अवताराणिशर्वस्यशिष्यांश्चभगवन्वद ॥ १ ॥ उपमन्युरुवाच ॥ श्वेतःसुतारोमदनःसुहोत्रःकङ्कएवच ॥ लौगाक्षिश्चमहामायोजैगीषव्यस्तथैवच ॥ २॥ दधिवाहश्चऋषभोमुनिरुग्रोऽत्रिरेवच ॥ सुबालकोगौतमश्चतथावेदशिरामुनिः ॥ ३ ॥ गोकर्णश्चगुहावासीशिखंडीचापरःस्मृतः ॥ जटामालीचाट्टहासोदारुकोलाङ्गलीतथा ॥ ४ ॥ महाकालश्चशूलीचदण्डीमुण्डीसएवच ॥ सहिष्णुःसोमशर्म्माचनकुलीश्वरएवच ॥ ५ ॥ एतेवाराहकल्पेऽस्मिन्सप्तमस्यान्तरेमनोः ॥ अष्टाविंशतिसंख्यातायोगाचार्य्यायुगक्रमात् ॥ ६ ॥ शिष्याःप्रत्येकमेतेषांचत्वारःशान्तचेतसः ॥ श्वेतादयश्चरुष्यान्तास्तान्ब्रवीमियथाक्रमम् ॥ ७ ॥ श्वेतःश्वेतशिखश्चैवश्वेताश्वःश्वेतलोहितः ॥ दुन्दुभिःशतरूपश्चऋचीकःकेतुमांस्तथा ॥ ८ ॥ विकोशश्चविकेशश्चविपाशःपाशनाशनः ॥ सुमुखीदुर्म्मुखश्चैवदुर्दमीदुरतिक्रमः ॥ ९ ॥ सनत्कुमारःसनकःसनन्दश्चसनातनः ॥ सुधामाविरजश्चैवशङ्खपाद्वैरजस्तथा ॥ १० ॥ सारस्वतश्चमेघश्चमेघवाहःसुवाहकः ॥ कपिलश्चासुरिःपञ्चशिखोवाष्कलएवच ॥ ११ ॥ पराशरश्चगर्गश्च भार्गवश्चाङ्गिरास्तथा ॥ बलबन्धुर्निरामित्रःकेतुशृङ्गस्तपोधनः ॥ १२ ॥ लम्बोदरश्चलम्बश्चलम्बाक्षोलम्बकेशकः ॥ सर्व्वज्ञःसमबुद्धिश्चसाध्यबुद्धिस्तथैवच ॥१३॥ सुधामाकाश्यपश्चैववसिष्ठोविरजास्तथा ॥ अत्रिरुग्रोगुरुश्रेष्ठःश्रवणोऽथश्रविष्ठकः॥१४॥ कुणिश्चकुणिबाहुश्चकुशरीरःकुनेत्रकः ॥ कश्यपोह्युशनाश्चैवच्यवनश्चबृहस्पतिः ॥ १५ ॥ उतथ्योवामदेवश्चमहाकालोमहानिलः ॥ वाचश्रवाःसुवीरश्चश्यावाश्वश्चयतीश्वरः ॥ १६ ॥ हिरण्यनाभःकौशल्योलोकाक्षिःकुथुमिस्तथा ॥ सुमन्तुर्जैमिनिश्चैवकबन्धःकुशकन्धरः ॥ १७ ॥ प्लक्षोदार्भायणिश्चैवकेतुमान्गौतमस्तथा ॥ भल्लवीमधुपिङ्गश्चश्वेतकेतुस्तथैवच ॥ १८ ॥ उशिजोबृहदश्वश्चदेवलःकविरेवच ॥ शालिहोत्रःसुवेषश्चयुवनाश्वः

शरद्वसुः ॥ १९ ॥ छगलःकुण्डकर्णश्चकुम्भश्चैवप्रबाहुकः ॥ उलूकोविद्युतश्चैवशम्बुकश्चाश्वलायनः ॥ २० ॥ अक्षपादःकणादश्चउलूकोवत्सएवच
कुशिकश्चैवगर्गश्चमित्रकोरुष्यएवच ॥ २१ ॥ एतेशिष्यामहेशस्ययोगाचार्य्यस्वरूपिणः ॥ संख्याचशतमेतेषांसहद्वादशसंख्यया ॥ २२ ॥
सर्व्वेपाशुपताःसिद्धाभस्मोद्धूलितविग्रहाः ॥ सर्व्वेशास्त्रार्थतत्त्वज्ञावेदवेदाङ्गपारगाः ॥ २३ ॥ शिवाश्रमरताःसर्व्वेशिवज्ञानपरायणाः ॥ सर्व्वसङ्गवि
निर्म्मुक्ताःशिवैकासक्तचेतसः ॥ २४ ॥ सर्व्वद्वन्द्वसहाधीराःसर्व्वभूतहितेरताः ॥ ऋजवोमृदवःस्वस्थाजितक्रोधाजितेन्द्रियाः ॥ २५ ॥ रुद्राक्षमाला
भरणास्त्रिपुण्ड्राङ्कितमस्तकाः ॥ शिखाजटाःसर्व्वजटाअजटामुण्डशीर्षकाः ॥ २६ ॥ फलमूलाशनप्रायाःप्राणायामपरायणाः ॥ शिवाभिमानस
म्पन्नाःशिवध्यानैकतत्पराः ॥ २७ ॥ समुन्मथितसंसारविषवृक्षाङ्कुरोद्गमाः ॥ प्रयातुमेवसन्नद्धाःपरंशिवपुरंप्रति ॥ २८ ॥ स्वदेशिकानिमान्म
त्वानित्यंयःशिवमर्च्चयेत् ॥ सयातिशिवसायुज्यंनात्रकार्य्याविचारणा ॥ २९ ॥ इति श्रीशैवेवा०सं०उ०दशमोऽध्यायः ॥ १० ॥ श्रीकृष्णउवाच ॥
भगवन्सर्व्वयोगीन्द्रगणेश्वरमुनीश्वर ॥ षडाननसमप्रख्यसर्व्वज्ञानानिधेगुरो ॥ १ ॥ प्रायस्त्वमवतीर्य्योर्व्यांपाशविच्छित्तयेनृणाम् ॥ महर्षिवपुरा
स्थायस्थितोऽसिपरमेश्वरः ॥ २ ॥ अन्यथाहिजगत्यस्मिन्देवोवादानवोऽपिवा ॥ त्वत्तोऽन्यःपरमंभावंकोजानीयाच्छिवात्मकम् ॥ ३ ॥ तस्मात्तवमु
खोद्गीर्णंसाक्षादिवपिनाकिनः ॥ शिवज्ञानामृतंपीत्वानमेतृप्तमभून्मनः ॥ ४ ॥ साक्षात्सर्व्वजगत्कर्त्तुर्भर्त्तुरंकंसमाश्रिता ॥ भगवन्किंनुपप्रच्छभर्त्तारं
परमेश्वरी ॥ ५ ॥ उपमन्युरुवाच ॥ स्थानेपृष्टंत्वयाकृष्णतद्वक्ष्यामियथातथम् ॥ भवभक्तस्ययुक्तस्यतवकल्याणचेतसः ॥ ६ ॥ महीधरवरेदिव्येम
न्दरेचारुकन्दरे ॥ देव्यासहमहादेवोदिव्योद्यानगतोऽभवत् ॥ ७ ॥ तदादेव्याःप्रियसखीसुस्मितास्याशुभावती ॥ फुल्लान्यतिमनोज्ञानिपुष्पाणिसमु
पाहरत् ॥८॥ ततःस्वमंकमारोप्यदेवींदेववरोहरः ॥ अलङ्कृत्यचतैःपुष्पैरास्तेहृष्टतरःस्वयम् ॥ ९ ॥ अथान्तःपुरचारिण्योदेव्योदिव्यविभूषणाः ॥
अन्तरङ्गगणेन्द्राश्चदेवंदेवींसिषेविरे ॥ १० ॥ ततःप्रियाःकथावृत्ताविनोदायमहेशयोः ॥ त्राणायचनृणांलोकेयेशिवंशरणंगताः ॥ ११ ॥
तदावसरमालोक्यसर्व्वलोकमहेश्वरी ॥ भर्त्तारंपरिपप्रच्छसर्व्वलोकमहेश्वरम् ॥ १२ ॥ देव्युवाच ॥ केनवश्योमहादेवोमर्त्यानांमन्दचेतसाम् ॥
अल्पसत्त्वाल्पशक्तीनामल्पानामकृतात्मनाम् ॥ १३ ॥ ईश्वरउवाच ॥ नकर्मणानतपसानजपैर्नसमाधिभिः ॥ नज्ञानेननचान्येनवश्योऽहं
श्रद्धयाविना ॥ १४ ॥ श्रद्धामय्यस्तिचेत्पुंसांयेनकेनापिहेतुना ॥ वश्यःस्पृश्यश्चदृश्यश्चपूज्यःसम्भाष्यएवच ॥ १५ ॥ साध्यातस्मान्मयिश्रद्धामां
वशीकर्त्तुमिच्छता ॥ श्रद्धाहेतुःस्वधर्म्मस्यरक्षणंवर्णिनामिह ॥ १६ ॥ स्ववर्णाश्रमधर्म्माभ्यांवर्त्ततेयस्तुमानवः ॥ तस्यैवभवतिश्रद्धामयि

नान्यस्यकस्यचित् ॥ १७ ॥ आम्नायसिद्धमखिलंधर्म्ममाश्रमिणामिह ॥ ब्रह्मणाकल्पितंपूर्व्वममैवाज्ञापुरःसरम् ॥ १८ ॥ सतुपैतामहोधर्म्मोबहु
वित्तक्रियान्वितः ॥ नात्यन्तफलभूयिष्ठःक्लेशायाससमन्वितः ॥ १९ ॥ तेनधर्म्मेणमहताश्रद्धांप्राप्यसुदुर्लभाम् ॥ वर्णिनोयेप्रपद्यन्तेमाम
नन्यसमाश्रयाः ॥ २० ॥ तेषांसुखेनमार्गेणधर्म्मकामार्थमुक्तये ॥ वर्णाश्रमसमाचारोमयाभूयःप्रकल्पितः ॥ २१ ॥ तस्मिन्भक्तिमतामेवमदीयानान्तु
वर्णिनाम् ॥ अधिकारोनचान्येषामित्याज्ञानैष्ठिकीमम ॥ २२ ॥ मदाज्ञतेनमार्गेणवर्णिनोमदुपाश्रयाः ॥ मलमायादिपाशेभ्योविमुक्तामत्प्रसादतः ॥
॥ २३ ॥ पुरंमदीयमासाद्यपुनरावृत्तिदुर्लभम् ॥ परमंममसाधर्म्यंप्राप्यनिर्वृतिमाप्नुयुः ॥ २४ ॥ तस्माल्लब्ध्वाप्यलब्ध्वावावर्णधर्म्ममयेरितम् ॥
आश्रित्यममभक्तश्चेत्स्वात्मनात्मानमुद्धरेत् ॥ २५ ॥ अलब्धालब्धएवैषकोटिकोटिगुणाधिकः ॥ तस्मान्मन्मुखतोलब्ध्वावर्णधर्म्मंसमाचरेत् ॥२६॥
ममावताराणिशुभेयोगाचार्य्यच्छलेनतु ॥ सर्व्वान्तरेषुसन्त्यार्य्येसन्ततिश्चसहस्रशः ॥ २७ ॥ अयुक्तानामबुद्धानामभक्तानांसुरेश्वरि ॥ दुर्लभंस
न्ततिज्ञानंततोयत्नात्समाश्रयेत् ॥ २८ ॥ साहानिस्तन्महच्छिद्रंसमोहःसान्धमूकता ॥ यदन्यत्रश्रमंकुर्य्यान्मोक्षमार्गबहिष्कृतः ॥ २९ ॥ ज्ञानं
क्रियाचचर्य्याचयोगश्चेतिसुरेश्वरि ॥ चतुष्पादःसमाख्यातोममधर्म्मःसनातनः ॥ ३० ॥ पशुपाशपतिज्ञानंज्ञानमित्यभिधीयते ॥ षडध्वशुद्धिर्विधि
नागुर्व्वधीनाक्रियोच्यते ॥ ३१ ॥ वर्णाश्रमप्रयुक्तस्यमयैवविहितस्यच ॥ ममार्च्चनादिधर्म्मस्यचर्य्याचर्य्येतिकथ्यते ॥ ३२ ॥ मदुक्तेनैवमार्गेणम
य्यवस्थितचेतसः ॥ वृत्त्यन्तरनिरोधोयोयोगइत्यभिधीयते ॥ ३३ ॥ अश्वमेधशताच्छ्रेष्ठंदेविचित्तप्रसाधनम् ॥ मुक्तिदञ्चतथाप्येतदसाध्यंविषयैषि
णाम् ॥ ३४ ॥ विजितेन्द्रियवर्गस्ययमेननियमेनच ॥ सर्व्वपापहरोयोगोविरक्तस्यैवकथ्यते ॥ ३५ ॥ वैराग्याज्जायतेज्ञानंज्ञानाद्योगःप्रवर्तते ॥
योगज्ञःपतितोवापिमुच्यतेनात्रसंशयः ॥ ३६ ॥ दयाकार्य्याथसततमहिंसाज्ञानसंग्रहम् ॥ सत्यमस्तेयमास्तिक्यंश्रद्धाचेन्द्रियनिग्रहः ॥ ३७ ॥
अध्यापनञ्चाध्ययनंयजनंयाजनंतथा ॥ ध्यानमीश्वरभावश्चसततंज्ञानशीलता ॥ ३८ ॥ यएवंवर्त्ततेविप्रोज्ञानयोगस्यसिद्धये ॥ अचिरादेवविज्ञानंल
ब्ध्वायोगञ्चविन्दति ॥ ३९ ॥ दग्ध्वादेहमिमंज्ञानीक्षणाज्ज्ञानाग्निनाप्रिये ॥ प्रसादान्ममयोगज्ञःकर्म्मबन्धंप्रहास्यति ॥ ४० ॥ पुण्यापुण्यात्मकंक
र्म्ममुक्तेस्तत्प्रतिबन्धकम् ॥ तस्मान्नियोगतोयोगीपुण्यापुण्यंविवर्ज्जयेत् ॥ ४१ ॥ फलकामनयाकर्म्मकरणात्प्रतिबध्यते ॥ नकर्म्ममात्रकरणा
त्तस्मात्कर्म्मफलंत्यजेत् ॥ ४२ ॥ प्रथमंकर्म्मयज्ञेनबहिःसम्पूज्यमांप्रिये ॥ ज्ञानयज्ञरतोभूत्वापश्चाद्योगंसमभ्यसेत् ॥ ४३ ॥ विदितेममयाथा
त्म्येकर्म्मयज्ञेनदेहिनः ॥ नयजन्तिहिमांयुक्ताःसमलोष्टाश्मकाञ्चनाः ॥ ४४ ॥ नित्ययुक्तोमुनिश्रेष्ठोमद्भक्तश्चसमाहितः ॥ ज्ञानयोगरतोयोगीम

मसायुज्यमाप्नुयात् ॥ ४५ ॥ अथाविरक्तचित्तायेवर्णिनोमदुपाश्रयाः ॥ ज्ञानचर्य्याक्रियास्वेवतेऽधिकुर्य्युस्तदर्हकाः ॥ ४६ ॥ बाह्यमाभ्यन्तरञ्चै
वबाह्याभ्यन्तरमेवच ॥ वाङ्मनःकायभेदाच्चत्रिधामद्भजनंविदुः ॥ ४७ ॥ जपःकर्म्मतपोध्यानंज्ञानञ्चेत्यनुपूर्व्वशः ॥ पञ्चधाकथ्यतेसद्भिस्तदेवभजनंपु
नः ॥ ४८ ॥ अन्यात्मविदितंबाह्यमस्मदभ्यर्च्चनादिकम् ॥ तदेवतुस्वसंवेद्यमाभ्यन्तरमुदाहृतम् ॥ ४९ ॥ मनोमत्प्रवणंचित्तंनमनोमात्रमुच्य
ते ॥ मन्नामनिरतावाणीवाङ्मतामम नेतरा ॥ ५० ॥ लिङ्गैर्मच्छासनादिष्टैस्त्रिपुण्ड्रादिभिरङ्कितः ॥ ममोपचारनिरतःकायःकायोनचेतरः ॥ ५१ ॥
मदर्च्चाकर्म्मविज्ञेयंबाह्यंयागादिनोच्यते ॥ मदर्थेदेहसंशोषस्तपःकृच्छ्रादिनोमतम् ॥ ५२ ॥ जपःपञ्चाक्षराभ्यासःप्रणवाभ्यासएवच ॥ रुद्राध्याया
दिकाभ्यासोनवेदाध्ययनादिकम् ॥ ५३ ॥ ध्यानंमद्रूपचिन्ताद्यंनात्माद्यर्थसमाधयः ॥ ममागमार्थविज्ञानंज्ञानंनान्यार्थवेदनम् ॥ ५४ ॥ बाह्येवाभ्य
न्तरेवाथयत्रस्यान्मनसोरतिः ॥ प्राग्वासनावशाद्देवितत्रनिष्ठांसमाचरेत् ॥ ५५ ॥ बाह्यादाभ्यन्तरंश्रेष्ठंभवेच्छतगुणाधिकम् ॥ असङ्कटत्वाद्दोषा
णांदृष्टानामप्यसम्भवात् ॥ ५६ ॥ शौचमाभ्यन्तरंविद्यान्नबाह्यंशौचमुच्यते ॥ अन्तःशौचवियुक्तात्माशुचिरप्यशुचिर्यतः ॥ ५७ ॥ बाह्यमाभ्य
न्तरञ्चैवभजनंभावपूर्व्वकम् ॥ नभावरहितंदेविविप्रलम्भैककारणम् ॥ ५८॥ कृतकृत्यस्यतृप्तस्यममकिंक्रियतेनरैः ॥ बहिर्वाभ्यन्तरेवाथमयाभावोहि
गृह्यते॥५९॥भावैकात्माक्रियादेविममधर्म्मःसनातनः ॥ मनसाकर्म्मणावाचाप्यनपेक्ष्यफलंक्वचित्॥६०॥फलोद्देशेनदेवेशिलघुर्मसमाश्रयः॥ फलार्थी
तदभावेमांपरित्यक्तंक्षमीयतः ॥६१॥ फलार्थिनोऽपियस्यैवमयिचित्तंप्रतिष्ठितम् ॥ भावानुरूपफलदस्तस्याप्यहमनिन्दिते ॥६२॥ फलानपेक्षयायेषां
मनोमत्प्रवणंभवेत् ॥ प्रार्थयेयुःफलंपश्चाद्भक्तास्तेऽपिममप्रियाः ॥६३॥ प्राक्संस्कारवशादेवयेऽविचिन्त्यफलाफले ॥ विवशामांप्रपद्यन्तेममप्रियतमाम
ताः॥६४॥मल्लाभान्नपरोलाभस्तेषामस्तियथातथम् ॥ ममापिलाभस्तल्लाभान्नपरःपरमेश्वरि॥६५॥ मदनुग्रहतस्तेषांभावोमयिसमर्पितः ॥ फलंपरमनि
र्व्वाणंप्रयच्छतिबलादिव ॥६६॥ महात्मनामनन्यानांमयिविन्यस्तचेतसाम् ॥ अष्टधालक्षणंप्राहुर्ममधर्म्माधिकारिणाम् ॥६७॥ मद्भक्तजनवात्सल्यंपूजा
याश्चानुमोदनम्॥स्वयमप्यर्च्चनंचैवमदर्थेचाङ्गचेष्टितम् ॥६८॥ मत्कथाश्रवणेभक्तिःस्वरनेत्राङ्गविक्रियाः ॥ममानुस्मरणंनित्यंयश्चमामुपजीवति॥६९॥
एवमष्टविधंचिह्नंयस्मिन्म्लेच्छेऽपिवर्त्तते ॥ सविप्रेन्द्रोमुनिःश्रीमान्सयतिःसचपण्डितः ॥ ७० ॥ नमेप्रियश्चतुर्वेदीमद्भक्तःश्वपचोऽपियः ॥ तस्मैदे
यंततोग्राह्यंसचपूज्योयथाह्यहम् ॥ ७१ ॥ पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति ॥ तस्याहंनप्रणश्यामिसचमेनप्रणश्यति ॥ ७२ ॥ अथवक्ष्यामिदेवे
शिभक्तानामधिकारिणाम् ॥ विदुषांद्विजमुख्यानांवर्णधर्म्मसमासतः ॥ ७३ ॥ त्रिःस्नानंचाग्निकार्य्यञ्चलिङ्गार्च्चनमनुत्तमम् ॥ दानमीश्वरभावश्चदयास

र्व्वत्रसर्व्वदा ॥ ७४ ॥ सत्यंसन्तोषआस्तिक्यमहिंसासर्व्वजन्तुषु ॥ ह्रीःश्रद्धाध्यापनंयोगःसदाध्ययनमेवच ॥ ७५ ॥ व्याख्यानंब्रह्मचर्य्यञ्चश्रवणञ्च
तपःक्षमा ॥ शौचंशिखोपवीतञ्चउष्णीषञ्चोत्तरीयकम्॥७६॥निषिद्धासेवनञ्चैवभस्मरुद्राक्षधारणम् ॥ पर्व्वण्यभ्यर्च्चनंदेविचतुर्द्दश्यांविशेषतः ॥ ७७ ॥
पानञ्चब्रह्मकूर्च्चस्यमासिमासियथाविधि ॥ अभ्यर्च्चनंविशेषेणतेनैवस्नाप्यमांप्रिये ॥ ७८ ॥ सर्व्वक्रियान्नसन्त्यागःश्रद्धान्नस्यचवर्ज्जनम् ॥ तथापर्य्युषिता
न्नस्ययावकस्यविशेषतः ॥ ७९ ॥ मद्यस्यमद्यगन्धस्यनैवेद्यस्यचवर्ज्जनम् ॥ सामान्यंसर्व्ववर्णानांब्राह्मणानांविशेषतः ॥ ८० ॥ क्षमाशान्तिश्चसन्तो
षःसत्यमस्तेयमेवच ॥ ब्रह्मचर्य्यममज्ञानंवैराग्यंभस्मसेवनम् ॥ ८१ ॥ सर्व्वसङ्गनिवृत्तिश्चदशैतानिविशेषतः ॥ लिङ्गानियोगिनांभूयोदिवाभिक्षाशनं
तथा ॥ ८२ ॥ वानप्रस्थाश्रमस्थानांसमानमिदमिष्यते ॥ रात्रौनभोजनंकार्य्यंसर्व्वेषांब्रह्मचारिणाम् ॥ ८३ ॥ अध्यापनंयाजनञ्चक्षत्रियस्यप्रतिग्रहः ॥
वैश्यस्यचविशेषेणमयानात्रविधीयते ॥ ८४ ॥ रक्षणंसर्व्ववर्णानांयुद्धेशत्रुवधस्तथा ॥ दुष्टपक्षिमृगाणाञ्चदुष्टानांशातनंनृणाम् ॥ ८५ ॥ अविश्वासश्च
सर्व्वत्रविश्वासोममयोगिषु ॥ स्त्रीसंसर्गश्चकालेषुचमूरक्षणमेवच ॥ ८६ ॥ सदासञ्चारितैश्चारैर्लोकवृत्तान्तवेदनम् ॥ सदास्त्रधारणञ्चैवभस्मकंचुकधार
णम् ॥ ८७ ॥ राज्ञांममाश्रमस्थानामेषधर्म्मस्यसंग्रहः ॥ गोरक्षणंचवाणिज्यंकृषिर्वैश्यस्यकथ्यते ॥ ८८ ॥ शुश्रूषेतरवर्णानांधर्म्मःशूद्रस्यकथ्यते ॥
उद्यानकरणञ्चैवममक्षेत्रसमाश्रयः ॥८९॥ धर्म्मपत्न्यास्तुगमनंगृहस्थस्यविधीयते ॥ ब्रह्मचर्य्यंवनस्थानांयतीनांब्रह्मचारिणाम् ॥ ९० ॥ स्त्रीणान्तुभर्त्तृ
शुश्रूषाधर्म्मोनान्यःसनातनः ॥ ममार्च्चनंचकल्याणिनियोगोभर्त्तुरस्तिचेत् ॥ ९१ ॥ यानारीभर्त्तृशुश्रूषांविहायव्रततत्परा ॥ सानारीनरकंयातिनात्र
कार्य्याविचारणा ॥ ९२ ॥ अथभर्त्तृविहीनायावक्ष्येधर्म्मंसनातनम् ॥ व्रतंदानंतपःशौचंभूशय्यानक्तभोजनम् ॥ ९३ ॥ ब्रह्मचर्य्यंसदास्नानंभस्मनास
लिलेनवा ॥ शान्तिर्मौनंक्षमानित्यंसंविभागोयथाविधि ॥ ९४ ॥ अष्टम्यांचचतुर्द्दश्यांपौर्णमास्यांविशेषतः ॥ एकादश्यांचविधिवदुपवासोममार्च्चनम्
॥ ९५ ॥ इतिसंक्षेपतःप्रोक्तंमयाश्रमनिषेवणम् ॥ ब्रह्मक्षत्रविशांदेवियतीनांब्रह्मचारिणाम् ॥ ९६ ॥ तथैववानप्रस्थानांगृहस्थानांचसुन्दरि ॥ शूद्राणा
मथनारीणांधर्म्मएषसनातनः ॥ ९७ ॥ ध्येयस्तयाहंदेवेशिसदाजाप्यःषडक्षरः ॥ वेदोक्तमखिलंधर्म्ममितिधर्म्मार्थसंग्रहः ॥ ९८ ॥ अथयेमानवालो
केस्वेच्छयाधृतविग्रहाः ॥ भावातिशयसम्पन्नाःपूर्व्वसंस्कारसंयुताः ॥ ९९ ॥ विरक्ताश्चानुरक्तावास्त्रियादिविषयेष्वपि ॥ पापैर्नतेविलिप्यन्तेपद्मपत्र
मिवाम्भसा ॥ १०० ॥ तेषांममात्मविज्ञानंविशुद्धानांविवेकिनाम् ॥ मत्प्रसादाद्विशुद्धानांदुःखमाश्रमरक्षणम् ॥ १०१ ॥ नास्तिकृत्यमकृत्यञ्चसमा
धिर्वापरायणम् ॥ नविधिर्ननिषेधश्चतेषांममयथातथा ॥ १०२ ॥ यथेहपरिपूर्णस्यसाध्यंममनविद्यते ॥ तथैवकृतकृत्यानांतेषामपिनसंशयः॥ १०३ ॥

मद्भक्तानांहितार्थायमानुषंभावमाश्रिताः ॥ रुद्रलोकात्परिभ्रष्टास्तेरुद्रानात्रसंशयः ॥ १०४ ॥ ममानुशासनंयद्वद्ब्रह्मादीनांप्रवर्त्तकम् ॥ तथा नराणामन्येषांतन्नियोगःप्रवर्त्तकः ॥ १०५ ॥ ममाज्ञाधारभावेनमद्भावातिशयेनच ॥ तदालोकनमात्रेणसर्व्वपापक्षयोभवेत् ॥ १०६ ॥ प्रत्ययाश्च प्रवर्त्तन्तेप्रशस्तफलसूचकाः ॥ मयिभाववतांपुंसांप्रागदृष्टार्थगोचराः ॥ १०७ ॥ कम्पःस्वेदोऽश्रुपातश्चकण्ठेचस्वरविक्रिया ॥ आनन्दाद्युपलब्धिश्च भवेदाकस्मिकीमुहुः ॥ १०८ ॥ एतैर्व्यस्तैःसमस्तैर्वालिङ्गैरव्यभिचारिभिः ॥ मन्दमध्योत्तमैर्भावैर्विज्ञेयास्तेनरोत्तमाः ॥ १०९ ॥ यथायोऽग्निसमावे शान्नायोभवतिकेवलम् ॥ तथैवममसान्निध्यान्नतेकेवलमानुषाः ॥ ११० ॥ हस्तपादादिसाधर्म्याद्रुद्रान्मर्त्त्यवपुर्द्धरान् ॥ प्राकृतानिवमन्वानोनावजा नीतपण्डितः ॥ १११ ॥ अवज्ञानंकृतंतेषुनरैर्व्यामूढचेतनैः ॥ आयुःश्रियंकुलंशीलंहत्वानिरयमावहेत् ॥ ११२ ॥ ब्रह्मविष्णुसुरेशानामपितूलायते पदम् ॥ मत्तोऽन्यदनपेक्षाणामुद्धतानांमहात्मनाम् ॥ ११३ ॥ अशुद्धंबौद्धमैश्वर्य्यंप्राकृतंपौरुषंतथा ॥ गुणेशानामतस्त्याज्यंगुणातीतपदैषिणाम् ॥ ॥ ११४ ॥ अर्थकिंबहुनोक्तेनश्रेयःप्राप्त्येकसाधनम् ॥ मयिचित्तसमासङ्गोयेनकेनापिहेतुना ॥ ११५ ॥ उपमन्युरुवाच ॥ इत्थंश्रीकण्ठनाथेनशिवेन परमात्मना ॥ हितायजगतामुक्तोज्ञानसारार्थसंग्रहः ॥ ११६ ॥ विज्ञानसंग्रहश्चायंवेदशास्त्राणिकृत्स्नशः ॥ सेतिहासपुराणानिविद्याव्याख्यानविस्तरः ॥ ११७ ॥ ज्ञानंज्ञेयमनुष्ठेयमधिकारोऽथसाधनम् ॥ साध्यंचेतिषडर्थानांसंग्रहस्त्वेषसंग्रहः ॥ ११८ ॥ गुरोरधिगतंज्ञानंज्ञेयःपाशःपशुःपतिः ॥ लि ङ्गार्चनाद्यनुष्ठेयंभक्तस्त्वधिकृतोद्विजः ॥ ११९ ॥ साधनंशिवमन्त्राद्यंसाध्यंशिवसमानता ॥ षडर्थसंग्रहस्यास्यज्ञानात्सर्व्वज्ञतोच्यते ॥ १२० ॥ प्रथ मंकर्म्मयज्ञाद्यैर्भक्त्याविंत्तानुसारतः ॥ बाह्येऽभ्यर्च्यशिवंपश्चादन्तर्यागरतोभवेत् ॥ १२१ ॥ रतिरभ्यन्तरेयस्यनबाह्येपुण्यगौरवात् ॥ नकर्म्मकर णीयंहिबहिस्तस्यमहात्मनः ॥ १२२ ॥ ज्ञानामृतेनतृप्तस्यभक्त्याचैवशिवात्मनः ॥ नान्तर्नचबहिःकृष्णकृत्यमस्तिकदाचन ॥ १२३ ॥ तस्मात्क्रमे णसन्त्यज्यबाह्यमाभ्यन्तरंतथा ॥ ज्ञानेनज्ञेयमालोक्यज्ञानंचापिपरित्यजेत् ॥ १२४ ॥ नैकाग्रंचेच्छिवेचित्तंकिंकृतेनापिकर्म्मणा ॥ एकाग्रमेवचे च्चित्तमकृतेनापिकर्म्मणा ॥ १२५ ॥ तस्मात्कर्म्माण्यकृत्वावाकृत्वावान्तर्बहिःक्रमात् ॥ येनकेनाप्युपायेनशिवेचित्तंनिवेशयेत् ॥ १२६ ॥ शिवेनि विष्टचित्तानांप्रतिष्ठितधियांसताम् ॥ परत्रेहचसर्व्वत्रनिर्वृतिःपरमाभवेत् ॥ १२७ ॥ इहोंनमःशिवायेतिमन्त्रेणानेनसिद्धयः ॥ सतस्मादधिगन्तव्यः परावरविभूतये ॥ १२८ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेशैवधर्म्मकथनंनामएकादशोऽध्यायः ॥ ११ ॥ श्रीकृष्णउवाच ॥ महर्षि वरसर्व्वज्ञसर्व्वज्ञानमहोदधे ॥ पंचाक्षरस्यमाहात्म्यंश्रोतुमिच्छामितत्त्वतः ॥ १ ॥ उपमन्युरुवाच ॥ पंचाक्षरस्यमाहात्म्यंवर्षकोटिशतैरपि ॥ अशक्यं

विस्तराद्वक्तुंतस्मात्संक्षेपतःशृणु ॥ २ ॥ वेदेशिवागमेचायमुभयत्रषडक्षरः ॥ मन्त्रःस्थितःसदामुख्योलोकेपंचाक्षरःस्मृतः ॥ ३ ॥ सर्व्वमन्त्राधिकश्चायमोंकाराद्यःषडक्षरः ॥ सर्व्वेषांशिवभक्तानामशेषार्थप्रसाधकः ॥ ४ ॥ तदल्पाक्षरमर्थाढ्यंवेदसारंविमुक्तिदम् ॥ आज्ञासिद्धमसन्दिग्धंवाक्यमेतच्छिवात्मकम् ॥ ५ ॥ नानासिद्धियुतंदिव्यंलोकचित्तानुरंजकम् ॥ सुनिश्चितार्थगम्भीरंवाक्यंतत्पारमेश्वरम् ॥ ६ ॥ मन्त्रंसुखमुखोच्चार्य्यमशेषार्थप्रसिद्धये ॥ प्राहोंनमःशिवायेतिसर्व्वज्ञःसर्व्वदेहिनाम् ॥७॥ तद्बीजंसर्व्वविद्यानांमन्त्रमाद्यंषडक्षरम् ॥अतिसूक्ष्मंमहार्थंचज्ञेयंतद्वटबीजवत् ॥८॥ देवोगुणत्रयातीतःसर्व्वज्ञःसर्व्वकृत्प्रभुः ॥ ओमित्येकाक्षरेमन्त्रेस्थितःसर्व्वगतःशिवः ॥ ९ ॥ ईशानाद्यानिसूक्ष्माणिब्रह्माण्येकाक्षराणितु ॥ मन्त्रेनमःशिवायेतिसंस्थितानियथाक्रमम् ॥१०॥ मन्त्रेषडक्षरेसूक्ष्मेपंचब्रह्मतनुःशिवः ॥ वाच्यवाचकभावेनस्थितःसाक्षात्स्वभावतः ॥ ११ ॥ वाच्यःशिवःप्रमेयत्वान्मन्त्रस्तद्वाचकःस्मृतः ॥ वाच्यवाचकभावोऽयमनादिःसंस्थितस्तयोः ॥ १२ ॥ यथानादिःप्रवृत्तोऽयंघोरसंसारसागरः ॥ शिवोऽपिहितथानादिःसंसारान्मोचकःस्थितः ॥ १३ ॥ व्याधीनांभेषजंयद्वत्प्रतिपक्षःस्वभावतः ॥ तद्वत्संसारदोषाणांप्रतिपक्षःशिवःस्मृतः ॥ १४ ॥ असत्यस्मिञ्जगन्नाथेतमोभूतमिदंभवेत् ॥ आदित्येनयथाहीनंनिरालोकमिदंजगत् ॥ १५ ॥ अभावादीश्वरस्येयंजगत्सृष्टिःकथंभवेत् ॥ अचेतनत्वात्प्रकृतेरज्ञत्वात्पुरुषस्यच ॥ १६ ॥ प्रधानपरमाण्वादियावर्त्तिकिंचिदचेतनम् ॥ नतत्कर्त्तृस्वयंदृष्टंबुद्धिमत्कारणंविना ॥ १७ ॥ धर्म्माधर्म्मोपदेशश्चबन्धमोक्षविचारणा ॥ नसर्व्वज्ञंविनापुंसामादिसर्गेप्रसिध्यति ॥१८॥ वैद्यंविनानिरानन्दाःक्लिश्यन्तेरोगिणोयथा ॥ शिवंविनानिरानन्दंक्लिश्यतेहिजगत्तथा ॥ १९ ॥ तस्मादनादिःसर्व्वज्ञःपरिपूर्णःसदाशिवः ॥ अस्तिनाथःपरित्रातापुंसांसंसारसागरात् ॥ २० ॥ आदिमध्यान्तनिर्म्मुक्तःस्वभावविमलःप्रभुः ॥ सर्व्वज्ञःपरिपूर्णश्चशिवोज्ञेयःशिवागमे ॥ २१ ॥ तस्याभिधानंमन्त्रोऽयमभिधेयश्चसस्मृतः ॥ अभिधानाभिधेयत्वान्मन्त्रःसिद्धःपरःशिवः ॥ २२ ॥ एतावत्तुशिवज्ञानमेतावत्परमंपदम् ॥ यदोंनमःशिवायेतिशिववाक्यंषडक्षरम् ॥ २३ ॥ विधिवाक्यमिदंशैवंनार्थवादंशिवात्मकम् ॥ यःसर्व्वज्ञःससम्पूर्णस्वभावविमलःशिवः ॥ २४ ॥ लोकानुग्रहकर्त्ताचसमृषार्थंकथंवदेत् ॥ यद्यथावस्थितंवस्तुगुणदोषैःस्वभावतः ॥ २५ ॥ यावत्फलञ्चयत्पुण्यंसर्व्वज्ञस्तुतथावदेत् ॥ रागाज्ञानादिभिर्दोषैर्ग्रस्तत्वादनृतंवदेत् ॥ २६ ॥ तेचेश्वरेनविद्यन्तेब्रूयात्सकथमन्यथा ॥ अजातादोषदोषेणसर्व्वज्ञेनशिवेनयत् ॥ २७ ॥ प्रणीतममलंवाक्यंतत्प्रमाणंनसंशयः ॥ तस्मादीश्वरवाक्यानिश्रद्धेयानिविपश्चिता ॥ २८ ॥ यथार्थंपुण्यपापेषुतदश्रद्धोव्रजत्यधः ॥ स्वर्गापवर्गसिद्ध्यर्थंभाषितंयत्सुशोभनम् ॥ २९॥ वाक्यंमुनिवरैःशान्तैस्तद्विज्ञेयंसुभाषितम् ॥ रागद्वेषानृतक्रोधका

मतृष्णानुसारियत् ॥ ३० ॥ वाक्यंनिरयहेतुत्वात्तद्दुर्भाषितमुच्यते ॥ सत्कृतेनापिकिंतेनमृदुनाललितेनवा ॥ ३१ ॥ अविद्यारागवाक्येनसंसारक्ले
शहेतुना ॥ यच्छ्रुत्वाजायतेश्रेयोरागादीनाञ्चसंक्षयः॥३२॥विरूपमपितद्वाक्यंविज्ञेयमतिशोभनम्॥बहुत्वेऽपिहिमन्त्राणांसर्व्वज्ञेनशिवेनयत् ॥ ३३ ॥
प्रणीतममलंमन्त्रंनतेनसदृशंक्वचित्॥साङ्गानिवेदशास्त्राणिसंस्थितानिषड़क्षरे ॥३४॥ नतेनसदृशस्तस्मान्मन्त्रोऽन्योऽस्तिपरःक्वचित् ॥ सप्तकोटिमहा
मन्त्रैरुपमन्त्रैरनेकधा ॥ ३५ ॥ मन्त्रःषडक्षरोभिन्नःसूत्रंवृत्त्यात्मनायथा ॥ शिवज्ञानानियावन्तिविद्यास्थानानियानिच ॥ ३६ ॥ षडक्षरस्यसूत्रस्यता
निभाष्यंसमासतः ॥ किंतस्यबहुभिर्मन्त्रैःशास्त्रैर्वाबहुविस्तरैः ॥३७॥यस्योंनमःशिवायेतिमन्त्रोऽयंहृदिसंस्थितः ॥ तेनाधीतंश्रुतंतेनकृतंसर्व्वमनुष्ठित
म् ॥ ३८ ॥ येनोंनमःशिवायेतिमन्त्राभ्यासःस्थिरीकृतः ॥ नमस्कारादिसंयुक्तंशिवायेत्यक्षरत्रयम् ॥३९॥ जिह्वाग्रेवर्त्ततेयस्यसफलंतस्यजीवितम् ॥
अन्त्यजोवाधमोवापिमूर्खोवापण्डितोऽपिवा ॥ ४० ॥ पञ्चाक्षरजपेनिष्ठोमुच्यतेपापपञ्जरात् ॥ इत्युक्तंपरमेशेनदेव्यापृष्टेनशूलिना ॥ ४१ ॥ हिता
यसर्व्वमर्त्यानांतिष्यजानांविशेषतः ॥ देव्युवाच ॥ कलौकलुषितेकालेदुर्ज्जयेदुरतिक्रमे ॥ ४२ ॥ अपुण्यतमसाच्छन्नेलोकेधर्म्मपराङ्मुखे ॥ क्षीणेवर्ण
समाचारेसङ्करेसमुपस्थिते ॥ ४३ ॥ सर्व्वाधिकारेसन्दिग्धेनिश्चितेवाविपर्य्यये ॥ तदोपदेशेविहतेगुरुशिष्यक्रमेगते ॥ ४४ ॥ केनोपायेनमुच्यन्तेभ
क्तास्तवमहेश्वर ॥ महेश्वरउवाच ॥ आश्रित्यपरमांविद्यांहृद्यांपञ्चाक्षरींमम ॥ ४५ ॥ भक्त्याचभावितात्मानोमुच्यन्तेकलिजानराः ॥ मनोवाक्काय
जैर्दोषैर्वक्तुंस्मर्त्तुमगोचरैः ॥ ४६ ॥ दूषितानांकृतघ्नानांनिर्दयानांखलात्मनाम् ॥ लुब्धानांवक्रमनसामपिमत्प्रवणात्मनाम् ॥ ४७ ॥ ममपञ्चाक्षरीवि
द्यासंसारभयतारिणी ॥ मयैवमसकृद्देविप्रतिज्ञातंधरातले ॥४८॥ पतितोऽपिविमुच्येतमद्भक्तोविद्ययानया ॥ देव्युवाच ॥ कर्म्मायोग्योभवेन्मर्त्त्यःपति
तोयदिसर्व्वथा ॥ ४९ ॥ कर्म्मायोग्येनयत्कर्म्मकृतञ्चनरकायहि॥ततःकथंविमुच्येतपतितोविद्ययाऽनया॥५०॥ईश्वरउवाच॥तथ्यमेतत्त्वयाप्रोक्तंतथा
हिशृणुसुन्दरि॥रहस्यमितिमत्वैतद्गोपितंयन्मयापुरा ॥ ५१ ॥ समन्त्रकंमांपतितःपूजयेद्यदिमोहितः ॥ नारकीस्यान्नसन्देहोममपंचाक्षरंविना ॥ ५२ ॥
अब्भक्षावायुभक्षाश्चयेचान्येव्रतकर्षिताः ॥ तेषामेतैर्व्रतैर्नास्तिममलोकसमागमः ॥ ५३ ॥ भक्त्यापंचाक्षरेणैवयोहिमांसकृदर्च्चयेत् ॥ सोऽपिगच्छेन्मम
स्थानंमन्त्रस्यास्यैवगौरवात् ॥ ५४ ॥ तस्मात्तपांसियज्ञाश्चव्रतानिनियमास्तथा ॥ पंचाक्षरार्च्चनस्यैतेकोट्यंशेनापिनोसमाः ॥ ५५ ॥ बद्धोवाप्यथ
वामुक्तःपाशात्पंचाक्षरेणयः ॥ पूजयेन्मांसमुच्येतनात्रकार्य्याविचारणा ॥ ५६ ॥ अरुद्रोवासरुद्रोवासकृत्पंचाक्षरेणयः ॥ पूजयेत्पतितोवापि
मूढोवामुच्यतेनरः ॥ ५७ ॥ षडक्षरेणवादेवितथापंचाक्षरेणवा ॥ सब्रह्माङ्गेनमांभक्त्यापूजयेद्यदिमुच्यते ॥ ५८ ॥ पतितोऽपतितोवा

पिमन्त्रेणानेनपूजयेत् ॥ ममभक्तोजितक्रोधोह्यलब्धोलब्धएववा ॥ ५९ ॥ अलब्धालब्धएवेहकोटिकोटिगुणाधिकः ॥ तस्माल्ल
ब्ध्वैवमांदेविमन्त्रेणानेनपूजयेत् ॥ ६० ॥ लब्ध्वासम्पूजयेद्यस्तुमैत्र्यादिगुणसंयुतः ॥ ब्रह्मचर्य्यरतोभक्त्यामत्साहश्यमवाप्नुयात् ॥ ६१ ॥
किमत्रबहुनोक्तेनभक्ताःसर्व्वेऽधिकारिणः ॥ ममपंचाक्षरेमंत्रेतस्माच्छ्रेष्ठतरोहिसः ॥ ६२ ॥ पञ्चाक्षरप्रभावेणलोकावेदामहर्षयः ॥ तिष्ठन्तिशाश्वताध
र्म्मादेवाःसर्व्वमिदंजगत् ॥ ६३ ॥ प्रलयेसमनुप्राप्तेनष्टेस्थावरजङ्गमे ॥ सर्व्वप्रकृतिमापन्नंतत्रसंलयमेष्यति ॥ ६४ ॥ एकोऽहंसंस्थितोदेविनाद्वितीयोऽ
स्तिकुत्रचित् ॥ तदावेदाश्वशास्त्राणिसर्व्वेपंचाक्षरेस्थिताः ॥ ६५ ॥ तेनाशंनैवसम्प्राप्तामच्छक्त्याह्यनुपालिताः ॥ गुणमूर्त्यात्मनाश्चैवततोऽवान्तरसं
हृतिः ॥ ६६ ॥ ततःसृष्टिरभून्मत्तःप्रकृत्यात्मप्रभेदतः ॥ तदानारायणःशेतेदेवोमायामयींतनुम् ॥ ६७ ॥ आस्थायभोगिपर्य्यङ्कशयनेतोयमध्यगः ॥
तन्नाभिपङ्कजाज्जातः पञ्चवक्त्रःपितामहः ॥ ६८ ॥ सिसृक्षमाणोलोकांस्त्रीनशक्तोह्यसहायवान् ॥ मुनीन्दशससर्ज्जादौमानसानामितौजसः ॥ ६९ ॥
तेषांसिद्धिविवृद्ध्यर्थमांप्रोवाचपितामहः ॥ मत्पुत्राणांमहादेवशक्तिंदेहिमहेश्वर ॥ ७० ॥ इत्येवंप्रार्थितस्तेनपंचवक्त्रधरोह्यहम् ॥ पंचाक्षराणिक्रमशः
प्रोक्तवान्पद्मयोनये ॥ ७१ ॥ सपंचवदनैस्तानिगृह्णँल्लोकपितामहः ॥ वाच्यवाचकभावेनज्ञातवान्मांमहेश्वरम् ॥ ७२ ॥ ज्ञात्वाप्रयोगंविधिवत्सिद्धम
न्त्रःप्रजापतिः ॥ पुत्रेभ्यःप्रददौमन्त्रंमन्त्रार्थंचयथातथम् ॥ ७३ ॥ तेचलब्ध्वामन्त्ररत्नंसाक्षाल्लोकपितामहात् ॥ तदाज्ञतेनमार्गेणमदाराधनकांक्षि
णः ॥ ७४ ॥ मेरोस्तुशिखरेरम्येमुंजवान्नामपर्व्वतः ॥ मत्प्रियःसततंश्रीमान्मद्भूतैरपिरक्षितः ॥ ७५ ॥ तस्याभ्याशेतपस्तीव्रंलोकसृष्टिसमु
त्सुकाः ॥ दिव्यंवर्षसहस्रन्तुवायुभक्षाःसमाचरन् ॥ ७६ ॥ तेषांभक्तिमहंदृष्ट्वासद्यःप्रत्यक्षतामियाम् ॥ ऋषिंछन्दश्वकीलंचबीजंशक्तिंचदैव
तम् ॥ ७७ ॥ न्यासंषडङ्गंदिग्बन्धंविनियोगमशेषतः ॥ प्रोक्तवानहमार्य्याणांजगत्सृष्टिविवृद्धये ॥ ७८ ॥ ततस्तेमन्त्रमाहात्म्याहृषयस्तपसैधिताः ॥
सृष्टिंवितन्वतेसम्यक्सदेवासुरमानुषाम् ॥ ७९ ॥ अस्याःपरमविद्यायाःस्वरूपमधुनोच्यते ॥ आदौनमःप्रयोक्तव्यंशिवायेतिततःपरम् ॥ ८० ॥ सैषा
पंचाक्षरीविद्यासर्व्वश्रुतिशिरोगता ॥ शब्दजातस्यसर्व्वस्यबीजभूतासमासतः ॥ ८१ ॥ प्रथमंमन्मुखोद्गीर्णासाममैवास्तिवाचिका ॥ तप्तचामीकरप्र
ख्यापीनोन्नतपयोधरा ॥ ८२ ॥ चतुर्भुजात्रिनयनाबालेन्दुकृतशेखरा ॥ पद्मोत्पलकरासौम्यावरदाभयपाणिका ॥ ८३ ॥ सर्व्वलक्षणसम्पन्नासर्व्वाभ
रणभूषिता ॥ सितपद्मासनासीनानीलकुंचितमूर्द्धजा ॥ ८४ ॥ अस्याःपंचविधावर्णाःप्रस्फुरद्रश्मिमण्डलाः ॥ पीतःकृष्णस्तथाधूम्रःस्वर्णाभोरक्तएवच
॥ ८५ ॥ पृथक्प्रयोज्यायद्येतेबिन्दुनादविभूषिताः ॥ अर्द्धचन्द्राकृतिर्बिन्दुर्नादोदीपशिखाकृतिः ॥ ८६ ॥ बीजंद्वितीयंबीजेषुमन्त्रस्यास्यवरानने ॥

दीर्घपूर्व्वंतु रीयस्यपंचमंशक्तिमादिशेत् ॥ ८७ ॥ वामदेवोनामऋषिःपङ्क्तिच्छन्दउदाहृतम् ॥ देवताशिवएवाहंमन्त्रस्यास्यवरानने ॥ ८८ ॥ गौतमो ऽत्रिर्वरारोहेविश्वामित्रस्तथाङ्गिराः ॥ भरद्वाजश्चवर्णानांक्रमशोऋषयःस्मृताः ॥ ८९ ॥ गायत्र्यनुष्टुप्त्रिष्टुप्चच्छन्दांसिबृहतीविराट् ॥ इन्द्रोरुद्रोहरि ब्रह्मास्कन्दस्तेषांचदेवताः ॥ ९० ॥ ममपंचमुखान्याहुःस्थानंतेषांवरानने ॥ पूर्व्वादिपूर्द्ध्व पर्य्यंतंनकारादियथाक्रमम् ॥९१॥ उदात्तःप्रथमोवर्णश्चतुर्थ श्चद्वितीयकः ॥ पञ्चमःस्वरितश्चैवतृतीयोनिहतःस्मृतः ॥९२॥ मूलविद्याशिवंचैवंसूत्रंपंचाक्षरस्तथा॥नामान्यस्यविजानीयाच्छैवंमेहृदयंमहत् ॥९३॥ नकारःशिरउच्यतेमकारस्तुशिखोच्यते ॥ शिकारःकवचंतद्वद्वाकारोनेत्रमुच्यते॥९४॥यकारोऽस्त्रंनमःस्वाहावषट्हुंवौषडित्यपि ॥ फडित्यपिचवर्णा नामन्तेऽङ्गत्वंयदातदा ॥ ९५ ॥ तवापिमूलमन्त्रोऽयंकिञ्चिद्भेदसमन्वयात् ॥ तत्रापिपंचमोवर्णोद्वादशस्वरभूषितः ॥ ९६ ॥ तस्मादनेनमन्त्रेणमनो वाक्कायभेदतः ॥ आवयोरर्च्चनंकुर्य्याज्जपहोमादिकंतथा ॥९७॥ यथाप्रज्ञंयथाश्रद्धंयथाकालंयथामति ॥ यथाशक्तियथासम्पद्यथायोगंयथारति ॥९८॥ यदाकदापिवाभक्त्यायत्रकुत्रापिवाकृता ॥ येनकेनापिवादेविपूजामुक्तिंनयिष्यति ॥ ९९ ॥ मय्यासक्तेनमनसाचेत्कृतंममसुन्दरि ॥ मत्प्रियंचशिवंचै वक्रमेणाप्यक्रमेणवा ॥ १०० ॥ तथापिममभक्तायेनात्यन्तविवशाःपुनः ॥ तेषामर्थंतुशास्त्रेषुमयैषनियमःकृतः ॥ १०१॥ तत्रादौसम्प्रवक्ष्यामिमन्त्र संग्रहणंशुभम् ॥ यद्विनानिष्फलंजाप्यंयेनवासफलंभवेत् ॥ १०२ ॥ आज्ञाहीनंक्रियाहीनंश्रद्धाहीनंवरानने ॥ आज्ञार्थंदक्षिणाहीनंसदाजप्तंचानिष्फल म् ॥ १०३ ॥ आज्ञासिद्धंक्रियासिद्धंश्रद्धासिद्धंमदात्मकम् ॥ एवंचेद्दक्षिणायुक्तंमन्त्रसिद्धंमहत्फलम् ॥१०४॥ उपगम्यगुरुंविप्रमाचार्य्यंतत्ववेदिनम्॥ जापिनंसद्गुणोपेतंध्यानयोगपरायणम् ॥ १०५ ॥ तोषयेत्तंप्रयत्नेनभावशुद्धिसमन्वितः ॥ वाचाचमनसाचैवकायेनद्रविणेनच ॥ १०६ ॥ आचार्य्यं पूजयेच्छिष्यःसर्व्वदाहिप्रयत्नतः ॥ हस्त्यश्वरथरत्नानिक्षेत्राणिचगृहाणिच ॥ १०७ ॥ भूषणानिचवासांसिधान्यानिचधनानिच ॥ एतानिगुरवेदद्याद्भ त्त्याचविभवेसति ॥ १०८ ॥ वित्तशाठ्यंनकुर्व्वीतयदीच्छेत्सिद्धिमात्मनः ॥ पश्चान्निवेदयेद्देविस्वात्मानंसपरिच्छदम् ॥ १०९ ॥ एवंसम्पूज्यविधि वद्यथाशक्तित्ववञ्चयन् ॥ आददीतगुरोर्मन्त्रंज्ञानश्चैवक्रमेणतु ॥ ११० ॥ एवंतुष्टोगुरुःशिष्यंपूजकंवत्सरोषितम् ॥ शुश्रूषुमनहङ्कारंस्नातंशुचिमुपो षितम्॥१११ ॥स्नापयित्वाविशुद्ध्यर्थंपूर्णकुम्भघृतेनवै॥ जलेनमन्त्रशुद्धेनपुण्यद्रव्ययुतेनच॥११२॥अलंकृत्यसुवेषंचगन्धस्रग्वस्त्रभूषणैः॥ पुण्याहंवाच यित्वाचब्राह्मणानभिपूज्यच ॥११३॥समुद्रतीरेनद्यांचगोष्ठेदेवालयेऽपिवा॥शुचौदेशेगृहेवापिकालेसिद्धिकरेतिथौ॥११४॥नक्षत्रेशुभयोगेचसर्व्वदोषविव र्जिते॥अनुगृह्यततोदद्याज्ज्ञानंममयथाविधि ॥११५॥ स्वरेणोच्चारयेत्सम्यगेकान्तेऽतिप्रसन्नधीः ॥ उच्चार्य्योच्चारयित्वातमावयोर्मन्त्रमुत्तमम् ॥११६॥

शिवश्चास्तुशुभंचास्तुशोभनोऽस्तुप्रियोऽस्त्विति ॥ एवंदद्याद्गुरुर्मन्त्रमाज्ञाश्चैवततःपरम् ॥ ११७ ॥ एवंलब्ध्वागुरोर्मन्त्रमाज्ञाञ्चैवसमाहितः ॥ संकल्प्य
चजपेन्नित्यंपुरश्चरणपूर्व्वकम् ॥११८॥ यावज्जीवंजपेन्नित्यमष्टोत्तरसहस्रकम् ॥ अनन्यस्तत्परोभूत्वासयातिपरमांगतिम्॥११९॥ जपेदक्षरलक्षंवैचतुर्गु
णितमादरात् ॥ नक्ताशीसंयमीयःसपौरश्चरणिकःस्मृतः ॥१२०॥ यःपुरश्चरणंकृत्वानित्यजापीभवेत्पुनः॥ तस्यनास्तिसमोलोकेससिद्धःसिद्धिदोभवे
त् ॥ १२१ ॥ स्नानंकृत्वाशुचौदेशेबद्ध्वारुचिरमासनम् ॥ त्वयामांहृदिसंचिन्त्यसंचित्यस्वगुरुंततः ॥ १२२ ॥ उदङ्मुखःप्राङ्मुखोवामौनीचैकाग्र
मानसः ॥ विशोध्यपंचतत्त्वानिदहनप्लावनादिभिः ॥ १२३ ॥ मन्त्रन्यासादिकंकृत्वाशकलीकृतविग्रहः ॥ आवयोर्विग्रहंध्यायन्प्राणापानौनियम्यच ॥
॥ १२४ ॥ विद्यास्थानंस्वकंरूपमृषिंछन्दोऽधिदैवतम् ॥ बीजंशक्तिंतथावाक्यंस्मृत्वापंचाक्षरींजपेत् ॥१२५॥ उत्तमंमानसंजाप्यमुपांशुमध्यमंविदुः॥
अधमंवाचिकंप्राहुरागमार्थविशारदाः॥१२६॥ उत्तमंरुद्रदैवत्यंमध्यमंविष्णुदैवतम् ॥ अधमंब्रह्मदैवत्यमित्याहुरनुपूर्व्वशः ॥१२७॥ यदुच्चनीचस्वरितैः
शब्दैःस्पष्टपदाक्षरैः ॥ मन्त्रमुच्चारयेद्वाचावाचिकोऽयंजपःस्मृतः ॥ १२८ ॥ जिह्वामात्रपरिस्पन्दादीषदुच्चारितोऽपिवा ॥ अपरैरश्रुतःकिंचिच्छ्तोवोपां
शुरुच्यते ॥ १२९ ॥ धियायदक्षरश्रेण्यावर्णाद्वर्णंपदात्पदम् ॥ शब्दार्थचिंतनंभूयःकथ्यतेमानसोजपः ॥ १३० ॥ वाचिकस्त्वेकएवस्यादुपांशुःशतमु
च्यते ॥ साहस्रोमानसःप्रोक्तःसगर्भस्तुशताधिकः॥१३१॥प्राणायामसमायुक्तःसगर्भोजपउच्यते ॥ आद्यान्तयोरगर्भोऽपिप्राणायामःप्रशस्यते ॥१३२॥
चत्वारिंशत्समावृत्तिप्राणानायम्यसंस्मरेत् ॥ मन्त्रमन्त्रार्थविद्धीमानशक्तःशक्तितोजपेत् ॥ १३३ ॥ पंचकंत्रिकमेकंवाप्राणायामंसमाचरेत् ॥ अगर्भं
वासगर्भंवासगर्भस्तत्रशस्यते ॥ १३४ ॥ सगर्भादपिसाहस्रःसध्यानोजपउच्यते ॥ एषुपंचविधेष्वेकःकर्त्तव्यःशक्तितोजपः ॥ १३५ ॥ अङ्गुल्या
जपसंख्यानमेकमेकमुदाहृतम् ॥ रेखयाष्टगुणंविद्यात्पुत्रजीवैर्दशाधिकम् ॥ १३६ ॥ शतंस्याच्छङ्खमणिभिःप्रवालैस्तुसहस्रकम् ॥ स्फाटिकैर्दशसा
हस्रंमौक्तिकैर्लक्षमुच्यते ॥ १३७ ॥ पद्माक्षैर्दशलक्षन्तुसौवर्णैःकोटिरुच्यते ॥ कुशग्रंथ्याचरुद्राक्षैरनन्तगुणितंभवेत् ॥ १३८ ॥ त्रिंशदक्षैःकृतामाला
धनदाजपकर्म्मणि ॥ सप्तविंशतिसंख्यातैरक्षैःपुष्टिप्रदाभवेत् ॥१३९॥ पंचविंशतिसंख्यातैःकृतामुक्तिंप्रयच्छति ॥ अक्षैस्तुपंचदशभिरभिचारफलप्रदा
॥ १४० ॥ अंगुष्ठंमोक्षदंविद्यात्तर्जनीशत्रुनाशिनी ॥ मध्यमाधनदाशान्तिकरोत्येषाअनामिका ॥ १४१ ॥ कनिष्ठाक्षरणीप्रोक्ताजपकर्म्मणिशोभना ॥
अंगुष्ठेनजपेज्जाप्यमन्यैरंगुलिभिःसह॥१४२॥अंगुष्ठेनविनाजाप्यंकृतंतदफलंयतः॥गृहेजपंसमंविद्याद्गोष्ठेशतगुणंविदुः॥१४३॥ पुण्यारण्येतथारामेसहस्र
गुणमुच्यते॥अयुतंपर्व्वतेपुण्येनद्यांलक्षमुदाहृतम्॥१४४॥कोटिंदेवालयेप्राहुरनन्तंममसन्निधौ॥सूर्य्यस्याग्नेर्गुरोरिन्दोर्दीपस्यचजलस्यच ॥१४५॥विप्रा

णांचगवांचैवसन्निधौशस्यतेतपः ॥ तत्पूर्व्वाभिमुखंवश्यंदक्षिणंचाभिचारिकम् ॥ १४६ ॥ पश्चिमंधनदंविद्यादौत्तरंशांतिदंभवेत् ॥ सूर्य्याग्निविप्रदेवानां
गुरूणामपिसन्निधौ ॥ १४७ ॥ अन्येषांचप्रशस्तानांमन्त्रंनविमुखोजपेत्॥ उष्णीषीकंचुकीनग्नोमुक्तकेशोमलावृतः ॥ १४८ ॥ अपवित्रकरोऽशुद्धोविल
पन्नजपेत्क्वचित्॥क्रोधंमदंक्षुतंत्रीणिनिष्ठीवनविजृम्भणे॥१४९॥ दर्शनंचश्वनीचानांवर्ज्जयेज्जपकर्म्मणि॥आचामेत्सम्भवेतेषांस्मरेद्वामांत्वयासह ॥ १५०॥
ज्योतींषिचप्रपश्येद्वाकुर्य्याद्वाप्राणसंयमम्॥अनासनःशयानोवागच्छन्नुत्थितएववा॥१५१॥रथ्यायामशिवेस्थानेनजपेत्तिमिरान्तरे॥प्रसार्य्यनजपेत्पादौ
कुक्कुटासनएववा॥१५२॥यानशय्याधिरूढोवाचिन्ताव्याकुलितोऽथवा॥शक्तश्चेत्सर्व्वमेवैतदशक्तःशक्तितोजपेत् ॥१५३॥किमत्रबहुनोक्तेनसमासेनवचः
शृणु॥सदाचारोजपञ्छुद्धंध्यायन्भद्रंसमश्नुते॥१५४॥आचारःपरमोधर्म्मआचारःपरमंधनम्॥आचारःपरमाविद्याआचारःपरमागतिः॥१५५॥ आचारही
नःपुरुषोलोकेभवतिनिन्दितः ॥ परत्रचसुखीनस्यात्तस्मादाचारवान्भवेत् ॥१५६॥ यस्ययद्विहितंकर्म्मवेदेशास्त्रेचवैदिकैः॥तस्यतेनसमाचारःसदाचा
रोनचेतरः॥१५७॥सद्भिराचरितत्वाच्चसदाचारःसउच्यते ॥ सदाचारस्यतस्याहुरास्तिक्यंमूलकारणम् ॥१५८॥ आस्तिकश्चेत्प्रमादाद्यैःसदाचारादपि
च्युतः ॥ नदुष्यतिनरोनित्यंतस्मादास्तिकतांव्रजेत् ॥ १५९ ॥ यथेहास्तिसुखंदुःखंसुकृतैर्दुष्कृतैरपि ॥ तथापरत्रचास्तीतिमतिरास्तिक्यमुच्यते
॥१६०॥ रहस्यमन्यद्वक्ष्याभिगोपनीयमिदंप्रिये ॥ नवाच्यंयस्यकस्यापिनास्तिकस्याथवापशोः ॥१६१॥सदाचारविहीनस्यपतितस्यान्त्यजस्यच ॥
पंचाक्षरात्परंनास्तिपरित्राणंकलौयुगे ॥ १६२ ॥ गच्छतस्तिष्ठतोवापिस्वेच्छयाकर्म्मकुर्व्वतः ॥ अशुचेर्वाशुचेर्वापिमन्त्रोऽयंनचनिष्फलः ॥ १६३ ॥
अनाचारवतांपुंसामविशुद्धषडध्वनाम् ॥ अनादिष्टोऽपिगुरुणामन्त्रोऽयंनचनिष्फलः ॥ १६४ ॥ अन्त्यजस्यापिमूर्खस्यमूढस्यपतितस्यच ॥ निर्म्म
र्य्यादस्यनीचस्यमन्त्रोऽयंनचनिष्फलः॥१६५॥सर्व्वावस्थांगतस्यापिमयिभक्तिमतःपरम्॥सिध्यत्येवनसन्देहोनापरस्यतुकस्यचित् ॥१६६॥नलग्नति
थिनक्षत्रवारयोगादयःप्रिये॥अस्यात्यन्तमवेक्ष्याःस्युर्नैषसुप्तःसदोदितः॥१६७॥नकदाचिन्नकस्यापिरिपुरेषमहामनुः ॥ सुसिद्धोवापिसिद्धोवासाध्योवा
पिभविष्यति ॥१६८॥ सिद्धेनगुरुणादिष्टःसुसिद्धइतिकथ्यते ॥ असिद्धेनापिवादत्तःसिद्धःसाध्यस्तुकेवलः ॥१६९॥असाधितःसाधितोवासिध्यत्येवनसं
शयः ॥ श्रद्धातिशययुक्तस्यमयिमत्रेतथागुरौ ॥ १७० ॥ तस्मान्मन्त्रांतरांस्त्यक्त्वासापायानधिकारतः ॥ आश्रयेत्परमांविद्यांहृद्यांपंचाक्षरींबुधः
॥ १७१ ॥ मन्त्रान्तरेषुसिद्धेषुमन्त्रएषनासिध्यति ॥ सिद्धेत्वस्मिन्महामन्त्रेतेचसिद्धाभवन्त्युत ॥१७२॥ यथादेवेष्वलब्धोऽस्मिलब्धेष्वपिमहेश्वरि॥
मयिलब्धेतुतेलब्धामन्त्रेष्वेषसमोविधिः॥१७३॥येदोषाःसर्व्वमन्त्राणांनतेऽस्मिन्सम्भवन्त्यपि ॥ अस्यमन्त्रस्यजात्यादीननपेक्ष्यप्रवर्त्तनात् ॥ १७४ ॥

तथापिनैवक्षुद्रेषुफलेषुप्रतियोगिषु ॥ सहसापिनियुञ्जीतयस्मादेषमहाफलः ॥ १७५ ॥ उपमन्युरुवाच ॥ एवंसाक्षान्महादेव्यैमहादेवेनशू
लिना ॥ हितायजगतामुक्तःपंचाक्षरविधिर्यथा ॥ १७६ ॥ यइदंकीर्तयेद्भक्त्याशृणुयाद्वासमाहितः॥सर्व्वपापविनिर्म्मुक्तःप्रयातिपरमांगतिम् ॥ १७७ ॥
इति श्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेपंचाक्षरमन्त्रतत्त्वनिरूपणंनामद्वादशोऽध्यायः ॥ १२ ॥ श्रीकृष्णउवाच ॥ भगवन्मन्त्रमाहात्म्यंभ
वताकथितंप्रभो ॥ तत्प्रयोगविधानञ्चसाक्षाच्छ्रुतिसमंयथा ॥ १ ॥ इदानींश्रोतुमिच्छामिशिवसंस्कारमुत्तमम् ॥ मन्त्रसंग्रहणेकिञ्चित्सूचितंनतुवि
स्तृतम् ॥ २ ॥ उपमन्युरुवाच ॥ हन्ततेकथयिष्यामिसर्व्वपापविशोधनम् ॥ संस्कारंपरमंपुण्यंशिवेनपरिभाषितम् ॥ ३ ॥ सम्यक्कृताधिकारःस्यात्पू
जादिषुनरोयतः ॥ संस्कारःकथ्यतेतेनषडध्वपरिशोधनम्॥४॥दीयतेयेनविज्ञानंक्षीयतेपाशबन्धनम्॥तस्मात्संस्कारएवायंदीक्षत्यपिचकथ्यते ॥ ५ ॥
शम्भवीचैवशाक्तीचमान्त्रीचैवाशिवागमे॥ दीक्षोपदिश्यतेत्रेधाशिवेनपरमात्मना॥६॥गुरोरालोकमात्रेणस्पर्शात्संभाषणादपि ॥ सद्यःसंज्ञाभवेज्जन्तोःपा
शोपक्षयकारिणी॥७॥ सादीक्षाशाम्भवीप्रोक्तासापुनर्भिद्यतेद्विधा ॥ तीव्रातीव्रतराचेतिपाशोपक्षयभेदतः ॥८॥ यद्यस्यनिर्वृतिःसद्यःसैवतीव्रतरामता॥
तीव्रातुजीवतोऽत्यन्तंपुंसःपापविशोधिका ॥ ९ ॥ शाक्तीज्ञानवतीदीक्षाशिष्यदेहंप्रविश्यतु ॥ गुरुणायोगमार्गेणक्रियतेज्ञानचक्षुषा ॥ १० ॥ मा
न्त्रीक्रियावतीदीक्षाकुण्डमण्डलपूर्व्विका ॥ मन्दमन्दतरोद्देशात्कर्त्तव्यागुरुणाबहिः ॥ ११ ॥ शक्तिपातानुसारेणशिष्योऽनुग्रहमर्हति ॥ शैवधर्म्मानु
सारस्यतन्मूलत्वात्समासतः ॥ १२ ॥ यत्रशक्तिर्नपतितातत्रशुद्धिर्नजायते ॥ नविद्यानशिवाचारोनमुक्तिर्नचसिद्धयः ॥ १३ ॥ तस्माल्लिंगानिसंवी
क्ष्यशक्तिपातस्यभूयसः ॥ ज्ञानेनक्रिययावाथगुरुःशिष्यंविशोधयेत् ॥ १४ ॥ योऽन्यथाकुरुतेमोहात्सविनश्यतिदुर्म्मतिः ॥ तस्मात्सर्व्वप्रकारेणगु
रुःशिष्यंपरीक्षयेत् ॥ १५ ॥ लक्षणंशक्तिपातस्यप्रबोधानन्दसंभवः ॥ सायस्मात्परमाशक्तिःप्रबाधानन्दरूपिणी ॥ १६ ॥ आनन्दबोधयोर्लिंगमन्तः
स्फुरणविक्रिया ॥ ययास्यात्कम्परोमांचःस्वरनेत्रादिविक्रियाः ॥ १७ ॥ शिष्योऽपिलक्षणैरेभिःकुर्य्याद्गुरुपरीक्षणम् ॥ तत्सम्पर्केशिवार्च्चादौस्वग
तैर्वाथतद्गतैः ॥ १८ ॥ शिष्यस्यशिक्षणीयत्वाद्गुरोर्गौरवकारणात् ॥ तस्मात्सर्व्वप्रयत्नेनगुरोर्गौरवमाचरेत् ॥ १९ ॥ योगुरुःसशिवःप्रोक्तोयःशिवःसगु
रुःस्मृतः ॥ गुरुर्वाशिवएवाथविद्याकारेणसंस्थितः ॥ २०॥ यथाशिवस्तथाविद्यायथाविद्यातथागुरुः ॥ शिवविद्यागुरूणांचपूजयासदृशंफलम् ॥ २१ ॥
सर्व्वदेवात्मकश्चासौसर्व्वमन्त्रमयोगुरुः ॥ तस्मात्सर्व्वप्रयत्नेनतस्याज्ञांशिरसावहेत् ॥२२॥ श्रेयोऽर्थीयदिगुर्व्वाज्ञांमनसापिनलङ्घयेत् ॥ गुर्व्वाज्ञापालको
यस्माज्ज्ञानसम्पत्तिमश्नुते ॥ २३ ॥ गच्छंस्तिष्ठन्स्वपन्भुञ्जन्नन्यत्कर्मसमाचरन् ॥ समक्षंयदिकुर्व्वीतसर्व्वंचानुज्ञयागुरोः ॥ २४ ॥ गुरोर्गेहेसमक्षंवानय

थेष्टासनोभवेत् ॥ गुरुर्देवोयतःसाक्षात्तद्गृहंदेवमंदिरम् ॥ २५ ॥ पापिनांचयथासङ्गात्तत्पापात्पतितोभवेत् ॥ तद्वदाचार्य्यसङ्गेनतद्धर्म्मफलभाग्भवेत्
॥ २६ ॥ यथेहवह्निसम्पर्कान्मलंत्यजतिकांचनम् ॥ तथैवगुरुसम्पर्कात्पापंत्यजतिमानवः ॥ २७ ॥ यथावह्निसमीपस्थोघृतकुम्भोविलीयते ॥ तथा
पापंविलीयेतआचार्य्यस्यसमीपतः॥२८॥ यथाप्रज्वलितोवह्निःशुष्ककाष्ठंचनिर्दहेत् ॥ तथायमपिसन्तुष्टोगुरुःपापंक्षणाद्दहेत् ॥२९॥ मनसाकर्म्मणावा
चागुरोःक्रोधंनकारयेत् ॥ तस्यक्रोधेनदह्यन्तेह्यायुःश्रीज्ञानसत्क्रियाः ॥ ३० ॥ तत्क्रोधकारिणोयेस्युस्तेषांयज्ञाश्चनिष्फलाः ॥ यमाश्चनियमाश्चैवनात्र
कार्य्याविचारणा ॥ ३१ ॥ गुरोर्विरुद्धंयद्वाक्यंनवदेज्जातुचिन्नरः ॥ वदेद्यदिमहामोहाद्रौरवंनरकंव्रजेत् ॥३२॥ मनसाकर्म्मणावाचागुरुमुद्दिश्ययत्नतः ॥
श्रेयोऽर्थीचेन्नरोधीमान्नमिथ्याचारमाचरेत्॥३३॥नैर्गुण्येख्यापितेतस्यनैर्गुण्यशतवान्भवेत् ॥ गुणेऽपिख्यापितेतस्यसर्व्वपुण्यफलंलभेत्॥३४॥गुरोर्हितं
प्रियंकुर्य्यादादिष्टोवानवासदा ॥ असमक्षंसमक्षंवातस्यकार्य्यंसमाचरेत्॥३५॥इत्थमाचारवान्भक्तोनित्यमुद्युक्तमानसः ॥ गुरुप्रियकरःशिष्यःशैवधर्म्मा
स्ततोऽर्हति ॥३६॥ गुरुश्चेद्गुणवान्प्राज्ञःपरमानन्दभासकः ॥ तत्त्वविच्छिवसंसक्तोमुक्तिदोनतुचापरः ॥ ३७॥ संवित्तिजननंतत्त्वंपरमानन्दसम्भवम् ॥
तत्तत्त्वंविदितंयेनसएवानन्ददर्शकः॥३८॥ अन्योन्यंतारयेतांतौकिंशिलातारयेच्छिलाम् ॥ नपुनर्नाममात्रेणसंवित्तिरहितस्तुयः ॥३९॥तेषांतन्नाममात्रे
णमुक्तिर्वैनाममात्रिका॥ यैःपुनर्विदितंतत्त्वंतेमुक्तामोचयन्त्यपि॥४०॥ तत्त्वहीनेकुतोबोधःकुतोह्यात्मपरिग्रहः॥ परिग्रहाद्विनिर्मुक्तःपशुरित्यभिधीयते
॥४१॥ पशुभिःप्रेरितश्चापिपशुत्वंनातिवर्त्तते ॥ तस्मात्तत्त्वविदेवेहमुक्तोमोचकइष्यते ॥४२॥ सर्व्वलक्षणसंयुक्तःसर्व्वशास्त्रविदप्ययम् ॥ सर्व्वोपायवि
धिज्ञोऽपितत्त्वहीनस्तुनिष्फलः ॥ ४३ ॥ यस्यानुभवपर्य्यन्ताबुद्धिस्तत्रप्रवर्त्तते ॥ तस्यावलोकनाद्येश्चपरानन्दोऽभिजायते ॥ ४४ ॥ तस्माद्यस्यैव
सम्पर्कात्प्रबोधानन्दसम्भवः ॥ गुरुंतमेववृणुयान्नापरंमतिमान्नरः ॥ ४५ ॥ सच्छिष्यैर्विनयाचारचतुरैरुचितोगुरुः ॥ यावद्विज्ञायतेतावत्सेवनीयो
मुमुक्षुभिः ॥ ४६ ॥ ज्ञातेतस्मिन्स्थिराभक्तिर्यदिस्यात्तंसमाश्रयेत् ॥ नतुतंसन्त्यजेज्जातुनोपेक्षेतकथञ्चन ॥ ४७ ॥ यत्रानन्दःप्रबोधोवानाल्पम
प्युपलभ्यते ॥ वत्सरादपिशिष्येणसोऽन्यंगुरुमुपाश्रयेत् ॥ ४८ ॥ गुरुमन्यंप्रपन्नोऽपिनावमन्येतपौर्व्विकम् ॥ गुरोर्भ्रातॄंस्तथापुत्रान्बोधकान्प्रेर
कानपि ॥ ४९ ॥ तत्रादावुपसङ्गम्यब्राह्मणंवेदपारगम् ॥ गुरुमाराधयेत्प्राज्ञंसुभगंप्रियदर्शनम् ॥ ५० ॥ सर्व्वाभयप्रदातारंकरुणाक्रान्तमानसम् ॥
तोषयेत्तंप्रयत्नेनमनसाकर्म्मणागिरा ॥ ५१ ॥ तावदाराधयेच्छिष्यःप्रसन्नोऽसौभवेद्यथा ॥ तस्मिन्प्रसन्नेशिष्यस्यसद्यःपापक्षयोभवेत् ॥ ५२ ॥ तस्मा
द्धनानिरत्नानिक्षेत्राणिचगृहाणिच॥ भूषणानिचवासांसिपानशय्यासनानिच ॥५३॥एतानिगुरवेदद्याद्भक्त्यावित्तानुसारतः॥वित्तशाठ्यंनकुर्व्वीतयदीच्छे

त्परमांगतिम्॥५४॥सएवजनकोमाताभ्राताबन्धुर्धनंसुखम्॥सखामित्रंचयद्यस्मात्सर्व्वंतस्मैनिवेदयेत् ॥५५॥ निवेद्यपश्चात्स्वात्मानंसान्वयंसपरिच्छद
म्॥समर्प्यसोदकंतस्मैनित्यंतद्वशगोभवेत्॥५६॥यदाशिवायस्वात्मानंदत्तवान्देशिकात्मने॥तदाशैवोभवेद्देहीनततोऽस्तिपुनर्भवः ॥ ५७ ॥ देशिकाकृ
तिमास्थायपशोःपाशानशेषतः ॥ छित्त्वापरंपदंदेवोनयत्येवमितिश्रुतिः ॥५८॥ गुरुस्तुस्वाश्रितंशिष्यंवर्षमेकंपरीक्षयेत् ॥ ब्राह्मणंक्षत्रियंवैश्यंद्विवर्षंच
त्रिवर्षकम्॥५९॥प्राणद्रव्यप्रदानाद्यैरादेशैश्चसमासमैः ॥ उत्तमांश्चाधमेकृत्वानीचानुत्तमकर्म्मणि ॥६०॥ आकृष्टास्ताडितावापियेविषादंनयान्त्यपि ॥
तेयोग्याःसंयताःशुद्धाःशिवसंस्कारकर्म्मणि ॥ ६१ ॥ अहिंसकादयावन्तोनित्यमुद्युक्तचेतसः ॥ अमानिनोबुद्धिमन्तस्त्यक्तस्पर्द्धाःप्रियंवदाः ॥ ६२ ॥
ऋजवोमृदवःस्वस्थाविनीताःस्थिरचेतसः॥ शौचाचारसमायुक्ताःशिवभक्ताद्विजातयः॥६३॥एवंवृत्तसमोपेतावाङ्मनःकायकर्म्मभिः ॥ शोध्याबोध्या
यथान्यायमितिशास्त्रेषुनिश्चयः ॥ ६४ ॥ नाधिकारःस्वतोनार्य्याःशिवसंस्कारकर्म्मणि ॥ नियोगाद्भर्त्तुरस्त्येवभक्तियुक्तायदीश्वरे ॥ ६५ ॥ तथैवभर्तृ
हीनायाःपुत्रादेरभ्यनुज्ञया ॥ अधिकारोभवत्येवकन्यायाःपितुराज्ञया ॥ ६६ ॥ शूद्राणामन्त्यजातीनांपतितानांविशेषतः ॥ तथासंकरजातीनांनाध्व
शुद्धिर्विधीयते ॥ ६७ ॥ तेऽप्यकृत्रिमभावाश्चेच्छिवेपरमकारणे ॥ पादोदकप्रदानाद्यैःकुर्य्युःपाशविशोधनम् ॥ ६८ ॥ अत्रानुलोमजातायेयुक्ताएवद्वि
जातिषु ॥ तेषामध्वविशुद्ध्यादिकुर्य्यान्मातृकुलोचितम् ॥ ६९ ॥ यातुकन्यास्वपित्राद्यैःशिवधर्म्मेनियोजिता ॥ साभक्तायप्रदातव्यानापरायविरोधि
ने ॥७०॥ दत्ताचेत्प्रतिकूलायप्रमादाद्बोधयेत्पतिम् ॥ अशक्तौतंपतिंत्यज्यमनसाधर्म्ममाचरेत् ॥ ७१ ॥ यथामुनिवरंत्यत्वापतिमत्रिंपतिव्रता ॥ कृतकृ
त्याभवत्पूर्व्वंतपसाराध्यशङ्करम् ॥ ७२ ॥ यथानारायणंदेवंतपसाराध्यपाण्डवान् ॥ पतीँल्लँब्धवतीधर्म्मेगुरुभिर्विनियोजिता ॥ ७३ ॥ अस्वातन्त्र्यकृ
तोदोषोनेहास्तिपरमार्थतः ॥ शिवधर्म्मेनियुक्तायाःशिवशासनगौरवात् ॥ ७४ ॥ बहुनात्रकिमुक्तेनयोऽपिकोऽपिशिवाश्रयः ॥ संस्कारोगुर्व्वधीनश्चेत्सं
स्क्रियातुप्रभिद्यते ॥ ७५ ॥ गुरोरालोकनादेवस्पर्शात्सम्भाषणादपि ॥ यस्यसञ्जायतेह्याज्ञातस्यनास्तिपराक्रिया ॥ ७६ ॥ मनसायस्तुसंस्कारःक्रि
यतेयोगवर्त्मना ॥ सनेहकथ्यतेगुह्योगुरुवक्त्रैकगोचरः ॥७७॥ क्रियावान्यस्यतुसंस्कारःकुण्डमण्डपपूर्व्वकः ॥ सवक्ष्यतेसमासेनतस्यशक्योनविस्तरः
॥ ७८ ॥ इति श्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेशैवमन्त्रदीक्षाविधिर्नामत्रयोदशोऽध्यायः ॥ १३ ॥ उपमन्युरुवाच ॥ पुण्येऽहनिशुचौ
देशेबहुदोषविवर्ज्जिते ॥ देशिकःप्रथमंकुर्य्यात्संस्कारंसमयाह्वयम् ॥ १ ॥ परीक्ष्यभूमिंविधिवद्गन्धवर्णरसादिभिः ॥ शिल्पशास्त्रोक्तमार्गेणमण्डपंतत्रक
ल्पयेत् ॥ २ ॥ कृत्वावेदिञ्चतन्मध्येकुण्डानिपरिकल्पयेत् ॥ अष्टदिक्ष्वथवादिक्षुतत्रैशान्यांपुनःक्रमः ॥ ३ ॥ प्रधानकुण्डंकुर्वीतयद्वापश्चिमभागतः ॥

प्रधानमेकमेवाथकृत्वाशोभांप्रकल्पयेत् ॥ ४ ॥ वितानध्वजमालाभिर्विविधाभिरनेकशः ॥ वेदिमध्येततःकुर्य्यान्मण्डलंशुभलक्षणम् ॥ ५ ॥ रत्नहेमा
दिभिश्चूर्णैरीश्वरावाहनोचितम्॥सिन्दूरशालिनीवारचूर्णैरेवाथनिर्द्धनः॥६॥एकहस्तंद्विहस्तंवासितंवारक्तमेववा॥ एकहस्तस्यपद्मस्यकर्णिकाष्टाङ्गुलाम
ता ॥ ७ ॥ केशराणितदर्द्धानिशेषंचाष्टदलात्मकम् ॥ द्विहस्तस्यतुपद्मस्यद्विगुणंकर्णिकादिकम् ॥ ८ ॥ कृत्वाशोभोपशोभाढ्यमैशान्यांतस्यकल्पये
त् ॥ एकहस्तंतदर्धंवापुनर्वेद्यान्तुमण्डलम् ॥ ९ ॥ व्रीहितण्डुलसिद्धार्थतिलपुष्पकुशास्तृते ॥ तत्रलक्षणसंयुक्तंशिवकुम्भंप्रसाधयेत् ॥ १० ॥ सौव
र्णंराजतंवापिताम्रजंमृन्मयन्तुवा ॥ गन्धपुष्पाक्षताकीर्णंकुशदूर्वाकुराचितम् ॥ ११ ॥ सितसूत्रावृतंकण्ठेनववस्त्रयुगावृतम् ॥ शुद्धाम्बुपूर्णमुत्कूर्च्चं
सद्रव्यंसपिधानकम् ॥ १२ ॥ भृङ्गारंवर्द्धनीञ्चापिशङ्खंचक्रकमेववा ॥ विनासूत्रादिकंसर्व्वंपद्मपत्रमथापिवा ॥ १३ ॥ तस्यासनारविन्दस्यकल्पयेदुत्त
रेदले ॥ अग्रतश्चन्दनाम्भोभिरस्त्रराजस्यवर्द्धनीम् ॥ १४ ॥ मण्डलस्यततःप्राच्यांमन्त्रकुम्भंचपूर्व्ववत् ॥ कृत्वाविधिवदीशस्यमहापूजामथाचरेत् ॥
॥ १५ ॥ अथार्णवस्यतीरेवानद्यांगोष्ठेऽपिवागिरौ ॥ देवागारे गृहेवापिदेशेऽन्यस्मिन्मनोहरे ॥ १६ ॥ कृत्वापूर्व्वोदितंसर्व्वंविनावामण्डपादिकम् ॥
मण्डलंपूर्व्ववत्कृत्वास्थण्डिलंचाविभावसोः ॥ १७ ॥ प्रविश्यपूजाभवनंप्रहृष्टवदनोगुरुः ॥ सर्व्वमङ्गलसंयुक्तःसमाचरितनैत्यकः ॥ १८ ॥ महापूजां
महेशस्यकृत्वामण्डलमध्यतः ॥ शिवकुम्भेतथाभूयःशिवमावाह्यपूजयेत् ॥ १९ ॥ पश्चिमाभिमुखंध्यात्वायज्ञरक्षकमीश्वरम् ॥ अर्चयेदस्त्रवर्द्धन्यामस्त्र
मीशस्यदक्षिणे ॥ २० ॥ मन्त्रकुम्भेचविन्यस्यमन्त्रंमंत्रविशारदः ॥ कृत्वामुद्रादिकंसर्व्वंमन्त्रयागंसमाचरेत् ॥ २१ ॥ ततःशिवानलेहोमंकुर्य्याद्देशि
कसत्तमः ॥ प्रधानकुण्डेपरितोजुहुयुश्चापरेद्विजाः ॥ २२ ॥ आचार्य्यात्पादमर्द्धंवाहोमस्तेषांविधीयते ॥ प्रधानकुण्डएवाथजुहुयाद्देशिकोत्तमः ॥ २३॥
स्वाध्यायमपरेकुर्य्युःस्तोत्रमङ्गलवाचनम् ॥ जपंचविधिवच्चान्येशिवभक्तिपरायणाः ॥ २४ ॥ नृत्यंगीतंचवाद्यंचमङ्गलान्यपराणिच ॥ पूजनंचसद
स्यानांकृत्वासम्यग्विधानतः ॥ २५ ॥ पुण्याहंकारयित्वाथपुनःसम्पूज्यशङ्करम् ॥ प्रार्थयेद्देशिकोदेवंशिष्यानुग्रहकाम्यया ॥ २६ ॥ प्रसीददेवदेवेशदे
हमाविश्यमामकम् ॥ विमोचयैनंविश्वेशघृणयाचघृणानिधे ॥ २७ ॥ अथचैवंकरोमीतिलब्धानुज्ञस्तुदेशिकः ॥ आनीयोपोषितंशिष्यंहविष्याशिनमे
वच ॥ २८ ॥ एकाशनंवाविरतंस्नातंप्रातःकृतक्रियम् ॥ जपन्तंप्रणवंदेवंध्यायन्तंकृतमङ्गलम् ॥ २९ ॥ द्वारस्यपश्चिमस्याग्रेमण्डलेदक्षिणस्यवा ॥
दर्भासनेसमासीनंविधायोदङ्मुखंशिशुम् ॥ ३० ॥ स्वयंप्राग्वदनस्तिष्ठन्नूर्द्ध्वकायंकृताञ्जलिम् ॥ सम्प्रोक्ष्यप्रोक्षणीतोयैर्मूर्द्धन्यस्त्रेणमुद्रया ॥ ३१॥ पुष्प
क्षेपेणसन्ताड्यवध्नीयाल्लोचनंगुरुः ॥ दुकूलार्द्धेनवस्त्रेणमन्त्रितेननवेनच ॥ ३२ ॥ ततः प्रवेशयेच्छिष्यंगुरुर्द्वारेणमण्डलम् ॥ सोऽपितेनेरितःशम्भोरा

चरेत्रिःप्रदक्षिणम् ॥३३॥ ततःसुवर्णसंमिश्रंदत्वापुष्पांजलिंप्रभोः ॥ प्राङ्मुखोदङ्मुखोवापिप्रणमेद्दण्डवत्क्षितौ ॥३४॥ ततःसम्प्रोक्ष्यमूलेनशिरःशस्त्रेण
पूर्व्ववत् ॥ सन्ताड्यदेशिकस्तस्यमोचयेन्नेत्रबन्धनम् ॥ ३५ ॥ सदृष्ट्वामण्डलंभूयःप्रणमेद्दण्डवच्छिवम् ॥ अथासीनंशिवाचार्य्योमण्डलस्यतुदक्षिणे ॥
॥ ३६ ॥ उपवेश्यात्मनःसव्येशिष्यंदर्भासनेगुरुः ॥ आराध्यचमहादेवंशिवहस्तंप्रविन्यसेत् ॥ ३७ ॥ शिवतेजोमयंपाणिंशिवमन्त्रमुदीरयन् ॥ शि
वाभिमानसम्पन्नोन्यसेच्छिष्यस्यमस्तके ॥ ३८ ॥ सर्व्वाङ्गालम्बनंचैवकुर्य्यात्तेनैवदेशिकः ॥ शिष्योऽपिप्रणमेद्भूमौदेशिकाकृतिमीश्वरम् ॥ ३९ ॥
ततःशिवानलेदेवंसमभ्यर्च्चयथाविधि॥ हुत्वाहुतित्रयंशिष्यमुपवेश्ययथापुरा॥४०॥दर्भाग्रैःसंस्पृशन्तंतंविधायात्मानमात्मवित् ॥ नमस्कृत्यमहादेवं
नाडीसन्धानमाचरेत् ॥४१ ॥ शिवशास्त्रोक्तमार्गेणकृत्वाप्राणस्यनिर्गमम् ॥ शिष्यदेहप्रवेशंचस्मृत्वामन्त्रांस्तुतर्पयेत् ॥ ४२ ॥ सन्तर्पणायमूलस्यतेनै
वाहुतयोदश ॥ देयास्तिस्रस्तथाङ्गानामङ्गैरेवयथाक्रमम् ॥ ४३ ॥ ततःपूर्णाहुतिंदत्त्वाप्रायश्चित्तंचदेशिकः ॥ पुनर्दशाहुतिंकुर्य्यान्मूलमन्त्रेण
मन्त्रवित् ॥ ४४ ॥ पुनःसम्पूज्यदेवेशंप्रणम्याचम्यदेशिकः ॥ दत्त्वाचैवयथान्यायंस्वजात्यावैश्यमुद्धरेत् ॥ ४५ ॥ तस्यैवंजनयेत्क्षात्रमुद्धारंचत
तःपुनः ॥ कृत्वातथैवविप्रत्वंजनयेदस्यदेशिकः ॥ ४६ ॥ राजन्यंचैवमुद्धृत्यकृत्वाविप्रंपुनस्तयोः ॥ रुद्रत्वंजनयेद्विप्रेरुद्रनामैवसाधयेत्
॥ ४७ ॥ प्रोक्षणंताडनंकृत्वाशिशोःस्वात्मानमात्मनि ॥ शिवात्मकमनुस्मृत्यस्फुरन्तंविस्फुलिङ्गवत् ॥ ४८ ॥ नाड्यायथोक्तयावायुं
रेचयन्मन्त्रतोगुरुः ॥ निर्गम्यप्रविशेन्नाड्याशिष्यस्यहृदयंतथा ॥ ४९ ॥ प्रविश्यतस्यचैतन्यंनीलबिंदुनिभंस्मरन् ॥ स्वतेजसापा
स्तमलंज्वलन्तमनुचिन्तयेत् ॥५० ॥ तमादायतयानाड्यामन्त्रीसंहारमुद्रया ॥ पूरकेणनिवेश्यैनमेकीभावार्थमात्मनि ॥ ५१ ॥ कुम्भकेनतया
नाड्यारेचकेनयथापुरा ॥ तस्मादादायशिष्यस्यहृदयेतंनिवेशयेत् ॥ ५२ ॥ तमालभ्यशिवाल्लब्धंतस्मैदत्त्वोपवीतकम् ॥ हुत्वाहुतित्रयंपश्चा
द्द्यात्पूर्णाहुतिंततः ॥ ५३ ॥ देवस्यदक्षिणेशिष्यमुपवेश्यवरासने ॥ कुशपुष्पपरिस्तीर्णेबद्धाञ्जलिमुदङ्मुखम् ॥५४॥ स्वस्तिकासनमारूढंविधायप्रा
ङ्मुखःस्वयम् ॥ वरासनस्थितोमन्त्रैर्महामङ्गलनिस्वनैः ॥ ५५ ॥ समादायघटंपूर्णंपूर्व्वमेवप्रसाधितम् ॥ ध्यायमानःशिवंशिष्यमभिषिञ्चेतदेशिकः ॥
॥ ५६ ॥ अथापनुद्यस्नानाम्बुपरिधायसिताम्बरम् ॥ आचान्तोऽलङ्कृतःशिष्यःप्राञ्जलिर्मण्डपंव्रजेत् ॥ ५७ ॥ उपवेश्ययथापूर्व्वंतंगुरुर्दर्भविष्टरे ॥
सम्पूज्यमण्डलेदेवंकरन्यासंसमाचरेत् ॥ ५८ ॥ ततस्तुभस्मनादेवंध्यायमानःस्वदेशिकः ॥ समालभेतपाणिभ्यांशिशुंशिवमुदीरयेत् ॥ ५९ ॥ अथ
तस्यशिवाचार्य्योदहनप्लावनादिकम् ॥ सकलीकरणंकृत्वामातृकान्यासवर्त्मना ॥ ६० ॥ ततःशिवासनंध्यात्वाशिष्यमूर्धनिदेशिकः ॥ तत्रावाह्ययथा

न्यायमर्चयेन्मनसाशिवम् ॥ ६१ ॥ प्रार्थयेत्प्राञ्जलिर्देवंनित्यमत्रस्थितोभव ॥ इतिविज्ञाप्यतंशम्भोस्तेजसाभासुरंस्मरेत् ॥ ६२ ॥ सम्पूज्याथशिवंशै
वीमाज्ञांप्राप्यशिवात्मिकाम् ॥ कर्णेशिष्यस्यशनकैःशिवमन्त्रमुदीरयेत् ॥६३॥ सतुबद्धाञ्जलिःश्रुत्वामन्त्रंतद्गतमानसः ॥ शनैस्तंव्याहरेच्छिष्यःशिवा
चार्य्यस्यशासनात् ॥६४॥ ततःशाक्तञ्चसन्दिश्यमन्त्रंमन्त्रविचक्षणः ॥ उच्चारयित्वाचसुखंतस्मैमंगलमादिशेत्॥६५॥ततःसमासान्मन्त्रार्थंवाच्यवाचक
योगतः॥समादिश्यैश्वरंरूपंयोगमासनमादिशेत्॥६६॥अथगुर्व्वाज्ञयाशिष्यःशिवाग्निगुरुसन्निधौ॥भक्त्यैवमभिसन्धायदीक्षावाक्यमुदीरयेत्॥६७॥वरंप्रा
णपरित्यागश्छेदनंशिरसोऽपिवा॥नत्वनभ्यर्च्यभुञ्जीयांभगवन्तंत्रिलोचनम्॥६८॥सएवमुक्त्वानियतोयावन्मोहविपर्य्ययः ॥ तावदाराधयेद्देवंतन्निष्ठस्त
त्परायणः ॥६९॥ ततःससमयोनामभविष्यतिशिवाश्रमे॥लब्धाधिकारोगुर्व्वाज्ञापालकस्तद्वशोभवेत्॥७०॥अतःपरंन्यस्तकरोभस्मादायस्वहस्ततः॥
दद्याच्छिष्यायमूलेनरुद्राक्षंचाभिमन्त्रितम् ॥७१॥ प्रतिमांवापिदेवस्यगूढदेहमथापिवा ॥ पूजाहोमजपध्यानसाधनानिचसम्भवे ॥७२॥ सोऽपिशिष्यः
शिवाचार्य्याल्लब्धानिबहुमानतः ॥ आददीताज्ञयातस्यदेशिकस्यनचान्यथा ॥७३॥ आचार्य्यादात्तमखिलंशिरस्याधायभक्तितः ॥ रक्षयेत्पूजयेच्छम्भुं
मठेवागृहएववा ॥ ७४ ॥ अतःपरंशिवाचारमादिशेदस्यदेशिकः ॥ भक्तिश्रद्धानुसारेणप्रज्ञायाश्चानुसारतः ॥ ७५ ॥ यदुक्तंयत्समाज्ञातंयच्चवान्यत्प्रकी
र्त्तितम् ॥ शिवाचार्य्येणसमयेतत्सर्व्वंशिरसावहेत् ॥७६॥ शिवागमस्यग्रहणंवाचनंश्रवणंतथा ॥ देशिकादेशतःकुर्य्यान्नस्वेच्छातोनचान्यतः ॥ ७७ ॥
इतिसंक्षेपतःप्रोक्तःसंस्कारःसमयाह्वयः ॥ पक्षाच्छिवपुरप्राप्तौनृणांपरमसाधनम् ॥ ७८ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेदीक्षावि
धानंनामचतुर्द्दशोऽध्यायः ॥ १४ ॥ उपमन्युरुवाच ॥ अतःपरंसमालक्ष्यगुरुःशिष्यस्ययोग्यताम् ॥ षडध्वशुद्धिंकुर्व्वीतसर्व्वबन्धविमुक्तये ॥ १ ॥
कलातत्त्वंचभुवनंवर्णपदमतःपरम् ॥ मन्त्रश्चेतिसमासेनषडध्वापरिपठ्यते ॥ २ ॥ निवृत्त्याद्याःकलाःपंचकलाध्वाकथ्यतेबुधैः ॥ व्याप्ताःकलाभिरितरे
त्वध्वानःपंचपंचभिः ॥ ३ ॥ शिवतत्त्वादिभूम्यन्तंतत्त्वाध्वासमुदाहृतः ॥ षड्विंशसंख्ययोपेतःशुद्धाशुद्धोभयात्मकः ॥ ४ ॥ आधाराद्युन्मनान्तश्चभु
वनाध्वाप्रकीर्त्तितः ॥ विनाभेदोपभेदाभ्यांषष्टिसंख्यासमन्वितः ॥ ५॥ पंचाशद्रुद्ररूपास्तुवर्णावर्णाध्वसंज्ञिताः ॥ अनेकभेदसम्पन्नःपदाध्वासमुदाहृतः
॥ ६ ॥ महामन्त्रोपमन्त्राणांवर्त्ततेऽवयवात्मना ॥ प्रधानावयवत्वेतुसोऽध्वापंचपदात्मकः ॥ ७ ॥ सप्तकोटिमहामन्त्रामन्त्राध्वासमुदाहृतः ॥ सर्व्वो
ऽपिमन्त्रैर्मन्त्राध्वाव्याप्तःपरमविद्यया ॥ ८ ॥ यथाशिवोनतत्त्वेषुगण्यतेतत्त्वनायकः ॥ मन्त्राध्वनिनगण्येततथासौमन्त्रनायकः ॥ ९ ॥ कलाध्वनोव्या
पकत्वंव्याप्यत्वंचेतराध्वनाम् ॥ नवेत्तितत्त्वतोयःसनैवार्हत्यध्वशोधनम् ॥ १० ॥ षड्विधस्याध्वनोरूपंनयेनविदितंभवेत् ॥ व्याप्यव्यापकतातेन

ज्ञातुमेवनशक्यते ॥ ११ ॥ तस्मादध्वस्वरूपञ्चव्याप्यव्यापकतांतथा ॥ यथावदवगम्यैवकुर्य्यादध्वविशोधनम् ॥ १२ ॥ कुण्डमण्डलपर्य्यन्तंतंतत्रकृ
त्वायथापुरा ॥ द्विहस्तमानंकुर्व्वीतप्राच्यांकलशमण्डलम् ॥ १३ ॥ ततःस्नातःशिवाचार्य्यःसशिष्यःकृतनैत्यकः ॥ प्रविश्यमण्डलंशम्भोःपूजांपूर्व्वव
दाचरेत् ॥ १४ ॥ तत्राढकावरैःसिद्धंतण्डुलैःपायसंप्रभोः ॥ अर्द्धनिवेद्यहोमार्थंशेषंसमुपकल्पयेत् ॥ १५ ॥ पुरतःकल्पितेवाथमण्डलेवर्णमण्डिते ॥
स्थापयेत्पंचकलशान्दिक्षुमध्येचदेशिकः ॥ १६ ॥ तेषुब्रह्माणिमूलार्णैर्बिन्दुनादसमन्वितैः ॥ नमाद्यैश्चयकारान्तैःकल्पयेत्कल्पवित्तमः ॥ १७ ॥
ईशानंमध्यमेकुम्भेपुरुषंपुरतःस्थिते ॥ अघोरंदक्षिणेवामेवामंसद्यंचपश्चिमे ॥ १८ ॥ रक्षांविधायमुद्रांचबद्ध्वाकुम्भाभिमन्त्रणम् ॥ कृत्वाशिवानलेहोमं
प्रारभेतयथापुरा ॥ १९ ॥ यदर्द्धंपायसंपूर्व्वंहोमार्थमुपकल्पितम् ॥ हुत्वाशिष्यस्यतच्छेषंभोक्तुंसमुपकल्पयेत ॥ २० ॥ तर्पणान्तश्चमन्त्राणांकृत्वा
कर्म्मयथापुरा॥हुत्वापूर्णाहुतिंतेषांततःकुर्य्यात्प्रदीपनम्॥२१॥ ओङ्कारादनुहुङ्कारंततोमूलंफडन्तकम्॥स्वाहान्तंदीपनेप्राहुरङ्गानिचयथाक्रमम्॥२२॥
तेषामाहुतयस्तिस्रोदेयादीपनकर्म्मणि ॥ मन्त्रैरेकैकशस्तैस्तुविचिन्त्यादीप्तमूर्त्तयः ॥ २३ ॥ त्रिगुणंत्रिगुणीकृत्यद्विजकन्याकृतंसितम् ॥ सूत्रंसूत्रेण
संमन्त्र्यशिखाग्रेबन्धयेच्छिशोः ॥ २४ ॥ चरणाङ्गुष्ठपर्य्यन्तमूर्द्धकायस्यातिष्ठतः ॥ लम्बयित्वातुतत्सूत्रंसुषुम्णांतत्रयोजयेत् ॥ २५ ॥ शान्तयामुद्रया
दायमूलमन्त्रेणमन्त्रवित् ॥ हुत्वाहुतित्रयंतस्याःसान्निध्यमुपकल्पयेत् ॥ २६ ॥ हृदिसन्ताड्यशिष्यस्यपुष्पक्षेपेणपूर्व्ववत् ॥ चैतन्यंसमुपादायद्वाद
शान्तेनिवेश्यच ॥ २७ ॥ सूत्रंसूत्रेणसंयोज्यसंरक्ष्यास्त्रेणवर्म्मणा ॥ अवगुण्ठ्याथतत्सूत्रंशिष्यदेहंविचिंतयेत् ॥ २८ ॥ मलत्रयमलंभोगभोग्यभोक्तृत्वल
क्षणम् ॥ विषयेन्द्रियदेहादिजनकंतस्यभावयेत् ॥ २९ ॥ व्योमादिभूतरूपिण्यःशान्त्यतीतादयःकलाः ॥ सूत्रेस्वनामभिर्योज्याःपूज्याश्चैवनमोयुतैः ॥
॥ ३० ॥ अथवाभूतबीजैस्तत्कृत्वापूर्व्वोदितंक्रमात् ॥ ततोमलादेस्तत्त्वादौव्याप्तिंसमवलोकयेत् ॥३१॥ कलाव्याप्तिंमलादौचहुत्वासन्दीपयेत्कलाः ॥
शिष्यंशिरसिसन्ताड्यतत्रदेहेयथाक्रमम् ॥ ३२ ॥ शान्त्यतीतपदेसूत्रंलाञ्छयेन्मन्त्रमुच्चरन् ॥ एवंकृत्वानिवृत्त्यन्तंशान्त्यतीताद्यनुक्रमात् ॥ ३३ ॥
हुत्वाहुतित्रयंपश्चान्मण्डलेचशिवंयजेत् ॥ देवस्यदक्षिणेशिष्यमुपवेश्योत्तरामुखम् ॥३४॥ सदर्भेमण्डलेदद्याद्धोमशिष्टंचरुंगुरुः ॥ शिष्यस्तद्गुरुणादत्तं
सत्कृत्यशिवपूर्व्वकम् ॥ ३५ ॥ भुक्त्वापश्चाद्विराचम्यशिवमन्त्रमुदीरयेत् ॥ अपरेमण्डलेदद्यात्पञ्चगव्यंतथागुरुः ॥ ३६ ॥ सोऽपितच्छक्तितःपीत्वा
द्विराचम्यशिवंस्मरेत् ॥ तृतीयेमण्डलेशिष्यमुपवेश्ययथापुरा ॥ ३७ ॥ प्रदद्याद्दन्तपवनंयथाशास्त्रोक्तलक्षणम् ॥ अग्रेणतस्यमृदुनाप्राङ्मुखोवाप्युद
ङ्मुखः ॥३८॥ वाचंनियम्यचासीनःशिष्योदन्तान्विशोधयेत् ॥ प्रक्षाल्यदन्तपवनंत्यक्त्वाचम्यशिवंस्मरेत् ॥३९॥ प्रविशेद्देशिकादिष्टःप्राञ्जलिःशिव

मण्डलम् ॥ त्यक्तंतद्दन्तपवनंदृश्यतेगुरुणायदि ॥ ४० ॥ प्रागुदक्पश्चिमेचाग्रंशिवमन्यच्छिवेतरत् ॥ अशस्ताशामुखेतस्मिन्गुरुस्तद्दोषशान्तये
॥ ४१ ॥ शतमर्द्धंतदर्द्धंवाजुहुयान्मूलमन्त्रतः ॥ ततःशिष्यंसमालभ्यजपित्वाकर्णयोःशिवम् ॥ ४२ ॥ देवस्यदक्षिणेभागेतंशिष्यमधिवासयेत् ॥
अहतास्तरणास्तीर्णेसदर्भेशयनेशुचिः ॥ ४३ ॥ मन्त्रितेऽन्तःशिवंध्यायन्प्राक्छिरस्कोनिशिस्वपेत् ॥ शिखायांबद्धसूत्रस्यशिखयातच्छिखांगुरुः
॥ ४४ ॥ आवेष्टयाहतवस्त्रेणतमाच्छाद्यचवर्म्मणा ॥ रेखात्रयंचपरितोभस्मनातिलसर्षपैः ॥ ४५ ॥ कृत्वास्त्रजप्तैस्तद्बाह्येदिग्गीशानांबलिंहरेत् ॥
शिष्योऽपिपरतोऽनश्नन्कृत्वैवमधिवासनम् ॥ ४६ ॥ प्रबुध्योत्थायगुरवेस्वप्नंदृष्टंनिवेदयेत् ॥ ततःस्नानादिकंसर्व्वंसमाप्याचार्य्यचोदितः ॥ ४७ ॥ ग
च्छेद्बद्धांजलिर्ध्यायञ्छिवमण्डलपार्श्वतः ॥ अथपूजांविनासर्व्वंकृत्वापूर्व्वदिनेयथा ॥ ४८ ॥ नेत्रबन्धनपर्य्यन्तंदर्शयेन्मण्डलंगुरुः ॥ बद्धनेत्रेणशिष्ये
णपुष्पावकिरणेकृते ॥ ४९ ॥ यत्रापतन्तिपुष्पाणितस्यनामास्यसन्दिशेत् ॥ ततोऽपनीयनिर्म्माल्यंमण्डलेऽस्मिन्यथापुरा ॥ ५० ॥ पूजयेद्देवमीशानं
जुहुयाच्चशिवानले ॥ शिष्येणयदिदुःस्वप्नोदृष्टस्तद्दोषशान्तये ॥ ५१ ॥ शतमर्द्धंतदर्द्धंवाजुहुयान्मूलविद्यया ॥ ततःसूत्रंशिखाबद्धंलम्बयित्वायथापुरा
॥ ५२ ॥ आधारपूजाप्रभृतियन्निवृत्तिकलाशयम् ॥ वागीश्वरीपूजनान्तंकुर्य्याद्धोमपुरःसरम् ॥ ५३ ॥ अथप्रणम्यवागीशांनिवृत्तेर्व्यापिकांसतीम् ॥
मण्डलेदेवमभ्यर्च्चर्यहुत्वाचैवाहुतित्रयम्॥५४॥प्रार्थयेच्चशिशोःप्राप्तिंयुगपत्सर्व्वयोनिषु॥सूत्रदेहेऽथशिष्यस्यताडनप्रोक्षणादिकम्॥५५॥ कृत्वात्मानंस्व
मादायद्वादशान्तेनिवेद्यच॥ततोऽप्यादायमूलेनमुद्रयाशास्त्रदृष्टया॥५६॥योजयेन्मनसाचार्य्योयुगपत्सर्व्वयोनिषु ॥ देवानांजातयश्चाष्टौतिरश्चांपंचजात
यः ॥ ५७ ॥ जात्यैकयामानुषयायोनयश्चचतुर्दश ॥ तासुसर्व्वासुयुगपत्प्रवेशायशिशोर्धिया ॥५८॥ वागीशान्यांयथान्यायंशिष्यात्मानंनिवेशयेत् ॥
गर्भनिष्पत्तयेदेवंसम्पूज्यप्रणिपत्यच ॥ ५९ ॥ हुत्वाचैवयथान्यायंनिष्पन्नंतदनुस्मरेत् ॥ निष्पन्नस्यैवमुत्पत्तिमनुवृत्तिञ्चकर्म्मणः ॥६०॥ आर्ज्जवंभोग
निष्पत्तिंकुर्य्यात्प्रीतिंपरांतथा ॥निष्कृत्यर्थञ्चजात्यायुर्भोगसंस्कारासिद्धये ॥ ६१ ॥ हुत्वाहुतित्रयंदेवंप्रार्थयेद्देशिकोत्तमः ॥ भोक्तृत्वविषयासङ्गमलं
तत्कार्य्यशोधनम् ॥ ६२ ॥ कृत्वैवमेवशिष्यस्यच्छिन्द्यात्पाशत्रयंततः ॥ निवृत्त्यापरिबद्धस्यपाशस्यात्यन्तभेदनम् ॥ ६३ ॥ कृत्वाशिष्यस्यचैतन्यं
स्वच्छंमन्येतकेवलम् ॥ हुत्वापूर्णाहुतिंवह्नौब्रह्माणंपूजयेत्ततः ॥ ६४ ॥ हुत्वाहुतित्रयंतस्मैशिवाज्ञामनुसन्दिशेत् ॥ पितामहत्वयानास्ययातुःशैवं
परंपदम् ॥६५॥प्रतिबंधोविधातव्यःशैवाज्ञैषागरीयसी ॥ इत्यादिश्यतमभ्यर्च्यविसृज्यचविधानतः॥ ६६ ॥ समभ्यर्च्यमहादेवंजुहुयादाहुतित्रयम्॥ नि
वृत्त्याशुद्धमृद्धत्याशिष्यात्मानंयथापुरा॥६७॥ निवेश्यात्मनिसूत्रेचवागीशांपूजयेत्ततः ॥ हुत्वाहुतित्रयंतस्मैप्रणम्यचविसृज्यताम्॥६८॥कुर्य्यान्निवृत्तेः

सन्धानंप्रतिष्ठाकलयासह ॥ सन्धानेयुगपत्पूजांकृत्वाहुत्वाहुतित्रयम् ॥ ६९ ॥ शिष्यात्मनःप्रतिष्ठायांप्रवेशन्त्वथंभावयेत् ॥ ततःप्रतिष्ठामावाह्यकृत्वाशेषंपुरोदितम् ॥ ७० ॥ तद्व्याप्तिंव्यापिकांतस्यवागीशानीञ्चभावयेत् ॥ पूर्णेन्दुमण्डलप्रख्यांकृत्वाशेषञ्चपूर्व्ववत् ॥ ७१ ॥ विष्णवेसन्दिशेदाज्ञांशिवस्यपरमात्मनः ॥ विष्णोर्व्विसर्ज्जनाद्यञ्चकृत्वाशेषंचविद्यया ॥ ७२ ॥ प्रतिष्ठामनुसन्धायतस्यांचापियथापुरा ॥ कृत्वानुचिन्त्यतद्व्याप्तिंवागीशाञ्चयथाक्रमम् ॥ ७३ ॥ दीप्ताग्नौपूर्णहोमान्तंकृत्वाशेषञ्चपूर्व्ववत् ॥ नीलरुद्रमुपस्थायतस्मैपूजादिकंतथा ॥ ७४ ॥ कृत्वाकर्म्मशिवाज्ञाञ्चदद्यात्पूर्वोक्तवर्त्मना ॥ ततस्तमपिचोद्वास्यकृत्वातस्याथशान्तये ॥ ७५ ॥ विद्याकलांसमाधायतद्व्याप्तिञ्चावलोकयेत् ॥ स्वात्मनोव्यापिकांतद्वद्वामीशींचयथापुरा ॥ ७६ ॥ बालार्कसदृशाकारांभासयन्तींदिशोदश ॥ ततःशेषंयथापूर्व्वंकृत्वादेवंमहेश्वरम् ॥ ७७ ॥ आवाह्याराध्यहुत्वास्मैशिवाज्ञांमनसादिशेत् ॥ महेश्वरंततोत्सृज्यकृत्वापञ्चकलामिमाम् ॥ ७८ ॥ शान्त्यतीतांकलांनीत्वातद्व्याप्तिमवलोकयेत् ॥ स्वात्मनोव्यापिकांतद्वद्वागीशाञ्चविचिंतयेत् ॥ ७९ ॥ नभोमण्डलसङ्काशांपूर्णान्तञ्चापिपूर्व्ववत् ॥ कृत्वाशेषविधानेनसमभ्यर्च्यसदाशिवम् ॥ ८० ॥ तस्मैसमादिशेदाज्ञांशम्भोरमितकर्म्मणः ॥ तत्रापिचयथापूर्व्वंशिवंशिरसिपूर्व्ववत् ॥ ८१ ॥ समभ्यर्च्च्यचवागीशांप्रणम्यचविसर्ज्जयेत् ॥ ततःशिवेनसम्प्रोक्ष्यशिष्यंशिरसिपूर्व्ववत् ॥ ८२ ॥ विलयंशान्त्यतीतायाःशक्तितत्त्वेऽथचिन्तयेत् ॥ षडध्वनःपरेपारेसर्व्वाध्वव्यापिनींपराम् ॥ ८३ ॥ कोटिसूर्य्यप्रतीकाशांशैवींशक्तिञ्चचिंतयेत् ॥ तदग्रेशिष्यमानीयशुद्धस्फटिकनिर्म्मलम् ॥ ८४ ॥ प्रक्षाल्यकर्त्तरींपश्चाच्छिवशास्त्रोक्तमार्गतः ॥ कुर्य्यात्तस्यशिखाच्छेदंसहसूत्रेणदेशिकः ॥ ८५ ॥ ततस्तांगोमयेन्यस्यशिवाग्नौजुहुयाच्छिखाम् ॥ वौषडन्तेनमूलेनपुनःप्रक्षाल्यकर्त्तरीम् ॥ ८६ ॥ हस्तौचशिष्यचैतन्यंतद्देहेविनिवेशयेत् ॥ ततःस्नातंसमाचान्तंकृतस्वस्त्ययनंशिशुम् ॥ ८७ ॥ प्रवेश्यमण्डलाभ्याशंप्रणिपत्यचदण्डवत् ॥ पूजांकृत्वायथान्यायंक्रियावैकल्यशुद्धये ॥ ८८ ॥ उपांशूच्चारयोगेनजुहुयादाहुतित्रयम् ॥ पुनःसम्पूज्यदेवेशंमन्त्रवैकल्यशुद्धये ॥ ८९ ॥ मानसोच्चारयोगेनजुहुयादाहुतित्रयम् ॥ ततःशिवंसमाराध्यमण्डलस्थंसहाम्बया ॥ ९० ॥ हुत्वाहुतित्रयंपश्चात्प्रार्थयेत्प्राञ्जलिर्गुरुः ॥ भगवंस्त्वत्प्रसादेनशुद्धिरस्यषडध्वनः ॥ ९१ ॥ कृतातस्मात्परंधामगमयैनंतवाव्ययम् ॥ इतिविज्ञाप्यदेवायनाडीसन्धानपूर्व्वकम् ॥९२॥ पूर्णान्तंपूर्व्ववत्कृत्वाततोभूतानिशोधयेत् ॥ स्थिरास्थिरेततःशुद्धचैशीतोष्णेचततःपरम्॥९३॥ध्यायेद्व्याप्त्यैकताकारेभूतशोधनकर्म्मणि॥भूतानांग्रंथिविच्छेदंकृत्वात्यक्तासहाधिपैः॥९४॥ भूतानिस्थितियोगेनयोजयेत्परमेशिवे॥विशोध्यास्यतनुंदग्ध्वाप्लावयित्वासुधाकणैः ॥ ९५ ॥ स्नाप्यात्मानंततःकुर्य्याद्विशुद्धाध्वमयंवपुः ॥ तत्रादौशान्त्यतीतान्तुव्यापिकांस्वाध्वनःकलाम्॥९६॥

शुद्धामेवशिशोर्मूर्ध्नि न्यसेच्छान्तिमुखेतथा ॥ विद्यांगलादिनाभ्यन्तंप्रतिष्ठांतदधःक्रमात् ॥ ९७ ॥ जान्वन्तंतदधोन्यस्येन्निवृत्तिश्चानुचिन्त
येत् ॥ स्वबीजैःसूत्रमन्त्रंचन्यस्याङ्गैस्तंशिवात्मकम् ॥ ९८ ॥ बुद्धातंहृदयाम्भोजेदेवमावाह्यपूजयेत् ॥ आशास्यनित्यसान्निध्यंशिवस्वात्म्यंशिशौ
गुरुः ॥ ९९ ॥ शिवतेजोमयस्यास्यशिशोरापादयेद्गुणान् ॥ अणिमादीन्प्रसीदेतिप्रदद्यादाहुतित्रयम् ॥ १०० ॥ तथैवतुगुणानेवपुनरस्योपपादयेत्॥
सर्व्वज्ञतांतथातृप्तिंबोधंचाद्यन्तवर्ज्जितम् ॥ १०१ ॥ अलुप्तशक्तिस्वातन्त्र्यमनन्तांशक्तिमेवच ॥ ततोदेवमनुज्ञाप्यसद्यादिकलशैस्तुतम् ॥१०२॥ अ
भिषिञ्चेतदेवेशंध्यायमानोयथाक्रमम् ॥ अथोपवेश्यतंशिष्यंशिवमभ्यर्च्यपूर्व्ववत् ॥ १०३ ॥ लब्धानुज्ञःशिवाच्छैवींविद्यामस्मैसमादिशेत् ॥
ओङ्कारपूर्व्विकांतेनसम्पुटान्तुनमोऽन्तगाम् ॥१०४॥ शिवशक्तियुताञ्चैवशक्तिविद्यांचतादृशीम् ॥ ऋषिंछन्दश्चदैवंचशिवतांशिवयोस्तथा ॥ १०५ ॥
पूजांसावरणांशम्भोरासनानिचसन्दिशेत् ॥ पुनःसम्पूज्यदेवेशंयन्मयासमनुष्ठितम् ॥ १०६ ॥ सुकृतंकुरुतत्सर्व्वमितिविज्ञापयेच्छिवम् ॥ सहशि
ष्योगुरुर्देवंदण्डवत्क्षितिमण्डले ॥ १०७ ॥ प्रणम्योद्वासयेत्तस्मान्मंडलात्पावकादपि ॥ ततःसदसिकाःसर्व्वेपूज्याःपूजार्हकाःक्रमात् ॥ १०८ ॥ से
व्यावित्तानुसारेणसदस्याश्चसहर्त्विजः ॥ वित्तशाठ्यंनकुर्व्वीतयदीच्छेच्छिवमात्मनः ॥ १०९ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागे
षडध्वशुद्ध्यादिकथनंनामपंचदशोऽध्यायः ॥ १५ ॥ उपमन्युरुवाच ॥ अतःपरंप्रवक्ष्यामिसाधकंनामनामतः ॥ संस्कारंमन्त्रमाहात्म्यकथनेसूचितं
मया ॥ १ ॥ सम्पूज्यमंडलेदेवंस्थाप्यकुम्भंचपूर्व्ववत् ॥ हुत्वाशिष्यमनुष्णीषंप्रापयेद्भूमिमंडलम् ॥ २ ॥ पूर्णान्तंपूर्व्ववत्कृत्वाहुत्वाहुतिशतंतथा ॥
सन्तर्प्यमूलमङ्गानिदशांशैर्देशिकोत्तमः ॥ ३ ॥ सन्दीप्यचयथापूर्व्वंकृत्वापूर्व्वोदितंक्रमात् ॥ अभिषिच्ययथापूर्व्वंप्रदद्यान्मंत्रमुत्तमम् ॥ ४ ॥ तत्रवि
द्योपदेशान्तंकृत्वाविस्तरशःक्रमात् ॥ पुष्पाम्बुनाशिशोःपाणौविद्यांशैवींसमर्पयेत् ॥ ५ ॥ तवैहिकामुष्मिकयोःसर्व्वसिद्धिफलप्रदः ॥ भवत्वेषमहा
मंत्रःप्रसादात्परमेष्ठिनः ॥ ६ ॥ इत्युक्त्वादेवमभ्यर्च्यलब्धानुज्ञःशिवाद्गुरुः ॥ साधनंविनियोगंचसाधकायसमादिशेत् ॥ ७ ॥ तच्छ्रुत्वागुरुसंदेशंक्र
मशोमंत्रसाधकः ॥ पुरतोविनियोगस्यमंत्रसाधनमाचरेत् ॥ ८ ॥ साधनंमूलमंत्रस्यपुरश्चरणमुच्यते ॥ पुरतश्चरणीयत्वाद्विनियोगाख्यकर्म्मणः ॥ ९ ॥
नात्यन्तकरणीयन्तुमुमुक्षोर्मन्त्रसाधनम् ॥ कृतन्तुतदिहान्यत्रतस्यापिशुभदंभवेत् ॥ १० ॥ शुभेऽहनिशुभेदेशेकालेवादोषवर्ज्जिते ॥ शुक्लदन्तनखः
स्नातःकृतपूर्व्वाह्णिकक्रियः ॥ ११ ॥ अलङ्कृत्ययथालब्धैर्गन्धमाल्यविभूषणैः ॥ सोष्णीषःसोत्तरासङ्गःसर्व्वशुक्लःसमाहितः ॥ १२ ॥ देवालयेगृहेऽन्य
स्मिन्देशेवासुमनोहरे ॥ सुखेनाभ्यस्तपूर्व्वेणत्वासनेनकृतासनः ॥ १३ ॥ तनुंकृत्वात्मनःशैवींशिवशास्त्रोक्तवर्त्मना ॥ सम्पूज्यदेवदेवेशंनकुली

श्वरमीश्वरम् ॥ १४ ॥ निवेद्यपायसंतस्मैसमाप्याराधनक्रमम् ॥ प्रणिपत्यचतंदेवंप्राप्तानुज्ञश्चतन्मुखात् ॥ १५ ॥ कोटिवारंतद
र्द्धवातदर्द्धंवाजपेच्छिवम् ॥ लक्षविंशतिकंवापिदशलक्षमथापिवा ॥ १६ ॥ अहिंसकःक्षमीशान्तोदान्तश्चैवसदाभवेत् ॥ ततश्चपायसाक्षारा
लवणैकमिताशनः ॥ १७ ॥ अलाभेपायसस्याश्नन्फलमूलादिकानिवा ॥ विहितानिशिवेनैवविशिष्टान्युत्तरोत्तरम् ॥ १८ ॥ चरुं
भक्ष्यमथोसक्तुकणान्यावकमेवच ॥ शाकंपयोदधिघृतंमूलंफलमथोदकम् ॥ १९ ॥ अभिमन्त्र्यचमन्त्रेणभक्ष्यभोज्यादिकानिच ॥ साधनेऽस्मि
न्विशेषेणनित्यंभुंजीतवाग्यतः ॥ २० ॥ मन्त्राष्टशतपूतेनजलेनशुचिनाव्रती ॥ स्नायान्नदीनदोत्थेनप्रोक्षयेद्वाथशक्तितः ॥ २१ ॥ तर्पयेच्चतथानित्यं
जुहुयाच्चशिवानले ॥ सप्तभिःपञ्चभिर्द्रव्यैस्त्रिभिर्वाथघृतेनवा ॥ २२ ॥ इत्थंभक्त्याशिवंशैवोयःसाधयतिसाधकः ॥ तस्येहामुत्रदुष्प्रापंनकिञ्चि
दिहविद्यते ॥२३॥ अथवाहरहर्मन्त्रंजपेदेकाग्रमानसः ॥ अनश्नन्नेवसाहस्रंविनामन्त्रस्यसाधनम् ॥२४॥ नतस्यदुर्लभंकिञ्चिन्नतस्यास्त्यशुभंक्वचित् ॥
इहविद्यांश्रियंसौख्यंलब्ध्वामुक्तिञ्चविन्दति ॥ २५ ॥ साधनेविनियोगेचनित्येनैमित्तिकेतथा ॥ जपेज्जलैर्भस्मनाचस्नात्वामन्त्रेणचक्रमात् ॥ २६ ॥
शुचिर्बद्धशिखःसूत्रीसपवित्रकरस्तथा ॥ धृतत्रिपुण्ड्ररुद्राक्षोविद्यांपञ्चाक्षरींजपेत् ॥ २७ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेमन्त्रसा
धनप्रकारोनामषोडशोऽध्यायः ॥ १६ ॥ उपमन्युरुवाच ॥ अथैवंसंस्कृतंशिष्यंकृतपाशुपतव्रतम् ॥ आचार्यत्वेऽभिषिञ्चेततद्योग्यत्वेनचान्यथा
॥ १ ॥ मण्डलंपूर्ववत्कृत्वासम्पूज्यपरमेश्वरम् ॥ स्थापयेत्पञ्चकलशान्दिक्षुमध्येचपूर्ववत् ॥ २ ॥ निवृत्तिंपुरतोन्यस्यप्रतिष्ठांपश्चिमेघटे ॥ विद्यांद
क्षिणतःशान्तिमुत्तरेमध्यतःपराम् ॥ ३ ॥ कृत्वादीक्षादिकंतत्रबद्ध्वामुद्राश्चधैनवीम् ॥ अभिमन्त्र्यघटान्हुत्वापूर्णांतञ्चयथापुरा ॥ ४ ॥ प्रवेश्यमण्डलं
शिष्यमनुष्णीषञ्चदेशिकः ॥ तर्पणाद्यन्तुमन्त्राणांकुर्य्यात्पूर्णावसानकम् ॥ ५ ॥ ततःसम्पूज्यदेवेशमनुज्ञाप्यचपूर्ववत् ॥ अभिषेकायतंशिष्यमास
नन्त्वधिरोहयेत् ॥ ६ ॥ सकलीकृत्यतंपश्चात्कलापञ्चकरूपिणम् ॥ न्यस्तमन्त्रतनुंबुद्ध्वाशिवंशिष्यंसमर्पयेत् ॥ ७ ॥ ततोनिवृत्तिकुम्भादिसमुद्धृत्य
घटान्क्रमात् ॥ मध्यमान्तंशिवेनैवशिष्यंतमभिषेचयेत् ॥ ८ ॥ शिवहस्तंसमर्प्याथशिशोःशिरसिदेशिकः ॥ शिवभावंसमापन्नःशिवाचार्य्यंतमादिशेत्
॥ ९ ॥ अथालङ्कृत्यतंदेवमाराध्यशिवमण्डले ॥ शतमष्टोत्तरंहुत्वादद्यात्पूर्णाहुतिंततः ॥ १० ॥ पुनःसम्पूज्यदेवेशंप्रणम्यभुविदण्डवत् ॥ शिरस्यञ्ज
लिमाधायशिवंविज्ञापयेद्गुरुः ॥ ११ ॥ भगवंस्त्वत्प्रसादेनदेशिकोऽयंमयाकृतः ॥ अनुगृह्यत्वयादेवदिव्याज्ञास्मैप्रदीयताम् ॥ १२ ॥ एवंविज्ञाप्यशि
ष्येणसहभूयःप्रणम्यच ॥ शिवंशिवागमंदिव्यंपूजयेच्छिववद्गुरुः ॥१३॥ पुनःशिवमनुज्ञाप्यशिवज्ञानस्यपुस्तकम् ॥ उभाभ्यामथपाणिभ्यांदद्याच्छिष्याय

देशिकः ॥ १४ ॥ सतांमूर्ध्निसमाधायविद्यांविद्यासनोपरि ॥ अधिरोप्ययथान्यायमभिवन्द्यसमर्चयेत् ॥ १५ ॥ अथतस्मैगुरुर्दद्याद्राजोपकरणान्य
पि ॥ आचार्य्यपदवींप्राप्तोराज्यश्चापियतोऽर्हति ॥ १६ ॥ अथानुशासनंकुर्य्यात्पूर्वैराचरितंयथा ॥ यथाचशिवशास्त्रोक्तंयथालोकेषुपूज्यते ॥ १७ ॥
शिष्यान्परीक्ष्ययत्नेनशिवशास्त्रोक्तलक्षणैः ॥ संस्कृत्यचशिवज्ञानंदातुमर्हसिनान्यथा ॥ १८ ॥ प्रतिष्ठांचापिदेवस्यविधिवत्कर्त्तुमर्हसि ॥ परार्थमपिदेव
स्यपूजाहोमादिकंकुरु ॥ १९ ॥ अकार्पण्यमनायासंशौचंक्षान्तिदयांतथा ॥ अस्पृहामप्यसूयाञ्चयत्नेनचविभावयेत् ॥२०॥ इत्थमादिश्यतंशिष्यंशिव
मुद्रास्यमण्डलात्॥शिवकुम्भानलादींश्चसदस्यानपिपूजयेत्॥२१॥युगपद्वाथसंस्कारान्कुर्वीतगुणिनोगुरुः॥तत्रत्रयंद्वयंवापिप्रयोगस्योपदिश्यते॥२२॥
तदादावेवकलशान्कल्पयेदध्वशुद्धिवत् ॥ कृत्वासमयसंस्कारमभिषेकंविनाखिलम् ॥ २३ ॥ समभ्यर्च्यशिवंभूयःकृत्वाचाध्वविशोधनम् ॥
तस्मिन्परिसमाप्तेतुपुनर्देवंप्रपूजयेत् ॥ २४ ॥ हुत्वामन्त्रन्तुसन्तर्प्यसन्दीप्याशास्यचेश्वरम् ॥ समर्प्यमंत्रंशिष्यस्यपाणौशेषंसमापयेत् ॥ २५ ॥
अथवामन्त्रसंस्कारमनुचिंत्याखिलंक्रमात् ॥ अध्वशुद्धिंगुरुःकुर्य्यादभिषेकावसानिकाम् ॥ २६ ॥ तत्रयःशांत्यतीतादिकलासुविहितोविधिः ॥
ससर्व्वोऽपिविधातव्यस्तत्त्वत्रयविशोधने ॥ २७॥ शिवविद्यात्मतत्त्वाख्यंतत्त्वत्रयमुदाहृतम् ॥ शक्तौशिवस्ततोविद्यात्तस्यास्त्वात्मासमुद्भवो ॥२८॥
शिवेनशान्त्यतीताध्वाव्याप्तस्तदपरःपरः ॥ विद्ययापरिशिष्टोऽध्वाह्यात्मनानिखिलःक्रमात् ॥ २९ ॥ दुर्लभंशाम्भवंमत्वामन्त्रमूलंमनीषिणः ॥ शाक्तं
शंसन्तिसंस्कारंशिवशास्त्रार्थपारगाः ॥ ३० ॥ इतितेसर्व्वमाख्यातंसंस्काराख्यस्यकर्म्मणः ॥ चातुर्व्विध्यमिदंकृष्णकिंभूयःश्रोतुमिच्छसि ॥ ३१ ॥
॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेऽभिषेकादिसंस्कृतिर्नामसप्तदशोऽध्यायः ॥ १७ ॥ श्रीकृष्णउवाच ॥ भगवञ्छ्रोतुमिच्छामिशि
वाश्रमनिषेवणम् ॥ शिवशास्त्रोदितंकर्म्मनित्यंनैमित्तिकंतथा॥१॥उपमन्युरुवाच ॥ प्रातरुत्थायशयनाद्ध्यात्वादेवंसहाम्बया॥ विचार्य्यकार्य्यंनिर्गच्छे
द्गृहादभ्युदितेऽरुणे ॥ २ ॥ अबाधेविजनेदेशेकुर्य्याद्दावश्यकंततः ॥ कृत्वाशौचंविधानेनदन्तधावनमाचरेत् ॥ ३ ॥ अलाभेदन्तकाष्ठानामष्टम्यादिदि
नेषुच ॥ अपांद्वादशगण्डूषैःकुर्यादास्यविशोधनम् ॥ ४ ॥ आचम्यविधिवत्पश्चाद्वारुणंस्नानमाचरेत् ॥ नद्यांवादेवखातेवाह्रदेवाथगृहेऽपिवा ॥ ५ ॥
स्नानद्रव्याणितत्तीरेस्थापयित्वाबहिर्मलम् ॥ व्यपोह्यमृदमालिप्यस्नात्वागोमयमालिपेत् ॥६॥ स्नात्वापुनःपुनर्वस्त्रंत्यक्त्वावाथविशोध्यवा ॥ सुस्नातोनृ
पवद्भूयःशुद्धंवासोवसेत्ततः ॥ ७ ॥ मलस्नानंसुगन्धाद्यैःस्नानंदन्तविशोधनम् ॥ नकुर्य्याद्ब्रह्मचारीचतपस्वीविधवातथा ॥ ८ ॥ सोपवीतःशिखांबद्ध्वाप्र
विश्यचजलान्तरम् ॥ अवगाह्यसमाचान्तोजलेन्यस्येत्त्रिमण्डलम् ॥ ९ ॥ सौम्येमग्नःपुनर्मंत्रंजपेच्छक्त्याशिवंस्मरन् ॥ उत्थायाचम्यतेनैवस्वात्मानम

भिषेचयेत् ॥ १० ॥ गोशृङ्गेणसदर्भेणपालाशेनदलेनवा ॥ पाञ्जेनवाथपाणिभ्यांपञ्चकृत्वस्त्रिरेववा ॥ ११ ॥ उद्यानादौगृहेचैववर्द्धन्याकलशेनवा ॥
अवगाहनकालेऽद्भिर्मन्त्रितैरभिषेचयेत्॥१२॥ अथचेद्वारुणंकर्त्तुमशक्तःशुद्धवाससा ॥ आर्द्रेणशोधयेद्देहमापादतलमस्तकम्॥१३॥ आग्नेयंवाथवामान्त्रं
कुर्य्यात्स्नानंशिवेनवै ॥ शिवचिन्तापरंस्नानंयुक्तस्यात्मीयमुच्यते ॥१४॥ स्वसूत्रोक्तविधानेनमन्त्राचमनपूर्व्वकम् ॥ आचरेद्ब्रह्मयज्ञान्तंकृत्वादेवादितर्प
णम्॥१५॥ मण्डलस्थंमहादेवंध्यात्वाभ्यर्च्चयेद्यथाविधि ॥ दद्यादर्घ्यंततस्तस्मैशिवायादित्यरूपिणे॥१६॥अथवैतत्स्वसूत्रोक्तंकृत्वाहस्तौविशोधयेत्॥
करन्यासंततःकुर्य्यात्सकलीकृतविग्रहः ॥ १७ ॥ वामहस्तगताम्भोभिर्गंधसिद्धार्थकान्वितैः ॥ कुशपुंजेनवाभ्युक्ष्यमूलमन्त्रसमन्वितैः ॥ १८ ॥
आपोहिष्ठादिभिर्मन्त्रैःशेषमाघ्रायवैजलम् ॥ वामनासापुटेनैवदेहंसम्भावयेत्सितम् ॥ १९ ॥ अथमादायदेहस्थंसव्यनासापुटेनच ॥ कृष्णवर्णेनबाह्य
स्थंभावयेच्चशिलागतम् ॥२०॥ तर्पयेदथदेवेभ्यऋषिभ्यश्चविशेषतः ॥ भूतेभ्यश्चपितृभ्यश्चदद्यादर्घ्यंयथाविधि ॥ २१ ॥ रक्तचन्दनतोयेनहस्तमात्रेण
मण्डलम् ॥ सुवृत्तंकल्पयेद्भूमौरत्नचूर्णाद्यलङ्कृतम् ॥ २२ ॥ तत्रसम्पूजयेद्भानुंस्वकीयावरणैःसह ॥ खखोल्कायेतिमन्त्रेणसाङ्गतःसुखसिद्धये ॥ २३ ॥
पुनश्चमण्डलंकृत्वातदङ्गैःपरिपूज्यच ॥ तत्रस्थंहेमपात्राद्यंमागधप्रस्थसम्मितम् ॥ २४ ॥ पूरयेद्गन्धतोयेनरक्तचन्दनयोगिना ॥ रक्तपुष्पैस्तिलैश्चैव
कुशाक्षतसमन्वितैः ॥ २५ ॥ दूर्व्वापामार्गगव्यैश्चकेवलेनजलेनवा ॥ जानुभ्यांधरणींगत्वानत्वादेवञ्चमण्डले ॥ २६ ॥ कृत्वाशिरसितत्पात्रंदद्यादर्घ्यं
शिवायतत् ॥ अथवांजलिनातोयंसदर्भंमूलविद्यया ॥ २७ ॥ उत्क्षिपेदम्बरस्थायशिवायादित्यमूर्त्तये ॥ कृत्वापुनःकरन्यासंकरशोधनपूर्व्वकम्
॥ २८ ॥ बुद्ध्वेशानादिसद्यान्तंपंचब्रह्ममयंशिवम् ॥ गृहीत्वाभसितंमन्त्रैर्विमृज्याङ्गानिसंस्पृशेत् ॥ २९ ॥ यादिनान्तैःशिरोवक्त्रहृद्गुह्यचरणक्रमात् ॥
ततोमूलेनसर्व्वाङ्गमालभ्यवसनान्तरम् ॥ ३० ॥ परिधायद्विराचम्यप्रोक्ष्यैकादशमन्त्रितैः ॥ जलैराच्छाद्यवासोऽन्यद्द्विराचम्यशिवंस्मरेत् ॥ ३१ ॥
पुनर्न्यस्तकरोमन्त्रीत्रिपुण्ड्रंभस्मनालिखेत् ॥ अवक्रमायतंव्यक्तललाटेगन्धवारिणा ॥ ३२ ॥ वृत्तंवाचतुरस्रंवाबिन्दुमर्द्धेन्दुमेववा ॥ ललाटेयादृशंपु
ण्ड्रंलिखितंभस्मनापुनः ॥ ३३ ॥ तादृशंभुजयोर्मूर्ध्निस्तनयोरन्तरेलिखेत् ॥ सर्व्वाङ्गोद्धूलनञ्चैवनसमानंत्रिपुण्ड्रकैः ॥ ३४ ॥ तस्मात्त्रिपुंड्रमेवेकंलिखे
दुद्धूलनंविना ॥ रुद्राक्षान्धारयेन्मूर्ध्निकंठेश्रोत्रेकरेतथा ॥ ३५ ॥ सुवर्णवर्णमच्छिन्नंशुभंनान्यधृतंशुभम् ॥ विप्रादीनांक्रमाच्छ्वेतंपीतंरक्तमथासितम्
॥ ३६ ॥ तदलाभेयथालाभंधारणीयमदूषितम् ॥ तत्रापिनोत्तरंनीचैर्धार्य्यंनीचमथोत्तरैः ॥ ३७ ॥ नाशुचिर्धारयेदक्षंसदाकालेषुधारयेत् ॥ इत्थंत्रि
सन्ध्यमथवाद्विसन्ध्यंसकृदेववा ॥३८॥ कृत्वास्नानादिकंशक्त्यापूजयेत्परमेश्वरम् ॥ पूजास्थानंसमासाद्यबद्ध्वारुचिरमासनम् ॥ ३९ ॥ ध्यायेद्देवंच

देवींचप्राङ्मुखोवाप्युदङ्मुखः॥श्वेतादीन्नकुलीशान्तान्सशिष्यान्प्रणमेद्गुरून्॥४०॥ स्वगुरुञ्चपुनर्देवंततोनामाष्टकंजपेत्॥ शिवोमहेश्वरश्चैवरुद्रोविष्णुः
पितामहः ॥ ४१ ॥ संसारवैद्यःसर्व्वज्ञःपरमात्मोतिचाष्टकम् ॥ अथवाशिवमेवैकंजपित्वैकादशाधिकम् ॥ ४२ ॥ जिह्वाग्रेतेजसोराशिंध्यात्वाव्याध्या
दिशान्तये ॥ प्रक्षाल्यचकरौपश्चात्कृत्वाचन्दनचर्चितौ ॥ ४३ ॥ प्रकुर्व्वीतकरन्यासंकरशोधनपूर्व्वकम् ॥ न्यासस्तुत्रिविधःप्रोक्तःस्थित्युत्पत्तिलयक्र
मात् ॥ ४४ ॥ स्थितिन्यासोगृहस्थानामुत्पत्तिर्ब्रह्मचारिणाम् ॥ यतीनांसंहृतिन्यासोवनस्थानांतथैवच ॥ ४५ ॥ सएवभर्त्तृहीनायाःकुटुम्बिन्याःस्थि
तिर्भवेत् ॥ कन्यायाःपुनरुत्पत्तिर्वक्ष्येन्यासस्यलक्षणम् ॥ ४६ ॥ अंगुष्ठादिकनिष्ठान्तंस्थितिन्यासउदाहृतः ॥ दक्षिणांगुष्ठमारभ्यवामांगुष्ठान्तमेवच
॥ ४७ ॥ उत्पत्तिन्यासआख्यातोविपरीतस्तुसंहृतिः ॥ सबिन्दुकान्नकारादीन्वर्णान्न्यस्येदनुक्रमात् ॥ ४८ ॥ अंगुलीषुशिवंन्यस्यतलयोरप्यनाम
योः ॥ अस्त्रन्यासंततःकृत्वादशदिक्ष्वस्त्रमन्त्रतः ॥ ४९ ॥ निवृत्त्यादिकलाःपंचपंचभूतस्वरूपिणीः ॥ पंचभूताधिपैःसार्द्धंतत्तच्चिह्नसमन्विताः ॥५०॥
हृत्कंठतालुभ्रूमध्यब्रह्मरन्ध्रसमाश्रयाः ॥ तत्तद्बीजेनसंग्रन्थीस्तत्तद्बीजेषुभावयेत् ॥ ५१ ॥ तासांविशोधनार्थायविद्यांपंचाक्षरींजपेत् ॥ निरुद्धवाक्प्रा
णवायुर्गुणसंख्यानुसारतः ॥ ५२ ॥ भूतग्रन्थिंततश्छिन्द्यादस्त्रेणैवास्त्रमुद्रया ॥ नाड्यासुषुम्नयात्मानंप्रेरितंप्राणवायुना ॥ ५३ ॥ निर्गतंब्रह्मरन्ध्रेणयो
जयेच्छिवतेजसा ॥ विशोष्यवायुनापश्चाद्देहंकालाग्निनादहेत् ॥ ५४ ॥ ततश्चोपरिभावेनकलाःसंहृत्यवानवा ॥ देहंसंहृत्यवैदग्धंकलाःस्पृष्ट्वासहाधि
पम् ॥ ५५ ॥ प्लावयित्वामृतैर्देहंयथास्थानंनिवेशयेत् ॥ ५६ ॥ अथासंहृत्यवैदग्धःकलासर्गविनैवतु ॥ अमृतप्लावनंकुर्य्याद्भस्मीभूतस्यतस्यवै
॥ ५७ ॥ ततोविद्यामयेतस्मिन्देहेदीपशिखाकृतिम् ॥ शिवान्निर्गतमात्मानंब्रह्मरन्ध्रेणयोजयेत् ॥ ५८ ॥ देहस्यान्तःप्रविष्टंतंध्यात्वाहृदयपंकजे ॥
पुनश्चामृतवर्षेणसिंचेद्विद्यामयंवपुः ॥ ५९ ॥ पुनःकुर्य्यात्करन्यासंकरशोधनपूर्व्वकम् ॥ देहन्यासंततःपश्चान्महत्यामुद्रयाचरेत् ॥ ६० ॥ अङ्गन्यासं
ततःकृत्वाशिवोक्तेनतुवर्त्मना ॥ वर्णन्यासंततःकुर्य्याद्धस्तपादादिसन्धिषु ॥ ६१ ॥ षडङ्गानिततोन्यस्यजातिषट्कयुतानिच ॥ दिग्बन्ध
माचरेत्पश्चादाग्नेयादियथाक्रमम् ॥ ६२ ॥ यद्वामूर्द्धादिपंचाङ्गंन्यासमेवसमाचरेत् ॥ तथाषडङ्गन्यासंवाभूतशुद्ध्यादिकंविना ॥ ६३ ॥
एवंसमासरूपेणकृत्वादेहात्मशोधनम् ॥ शिवभावमुपागम्यपूजयेत्परमेश्वरम् ॥ ६४ ॥ अथयस्यास्त्यवसरोनास्तिवामातिविभ्रमः ॥ सविस्त्री
र्णेनकल्पेनन्यासकर्म्मसमाचरेत् ॥ ६५ ॥ तत्राद्योमातृकान्यासोब्रह्मन्यासस्ततःपरः ॥ तृतीयःप्रणवन्यासोहंसन्यासस्तदुत्तरः ॥ ६६ ॥ पंचमः
कथ्यतेसद्भिर्न्यासःपंचाक्षरात्मकः ॥ एतेष्वेकमनेकंवाकुर्य्यात्पूजादिकर्म्मसु ॥ ६७ ॥ अकारोमूर्ध्निविन्यस्यह्याकारोऽथललाटके ॥ इईचनेत्रयो

स्तद्वदुऊश्रवणयोस्तथा ॥ ६८ ॥ ऋॠकपोलयोश्चैवलॢॡनासापुटद्वये ॥ एऐओष्ठद्वयेओऔदन्तपङ्क्तिद्वयेक्रमात् ॥ ६९ ॥ अंजिह्वायाम
थोतालुन्यःप्रयोज्योयथाक्रमम् ॥ कवर्गंदक्षिणेहस्तेन्यसेत्पंचसुसन्धिषु ॥ ७० ॥ चवर्गंचतथावामहस्तसन्धिषुविन्यसेत् ॥ टवर्गंश्चतवर्गंचपादयोरुभ
योरपि ॥ ७१ ॥ पफौतुपार्श्वयोःपृष्ठेनाभौचापिबभौततः ॥ न्यसेन्मकारंहृदयेत्वगादिषुयथाक्रमम् ॥ ७२ ॥ यकारादिसकारान्तान्सप्तसप्तसुधातुषु ॥
हकारंहृदयस्यान्तःक्षकारंभ्रुयुगान्तरे ॥ ७३ ॥ एवंवर्णान्प्रविन्यस्यपञ्चाशद्रुद्रवर्त्मना ॥ अङ्गवक्त्रकलाभेदात्पञ्चब्रह्माणिविन्यसेत् ॥ ७४ ॥ करन्या
साद्यमपितैःकृत्वावाथनवाक्रमात् ॥ शिशोर्वदनहृद्गुह्यपादेष्वेतानिकल्पयेत् ॥७५॥ ततश्चोर्द्ध्वादिवक्त्राणिपश्चिमान्तानिकल्पयेत्॥ईशानस्यकलाःपं
चपंचस्वेतेषुचक्रमात्॥७६॥ततश्चतुर्षुवक्त्रेषुपुरुषस्यकलाअपि॥चतस्रःप्रणिधातव्याःपूर्व्वादिक्रमयोगतः॥७७॥हृत्कंठांसेषुनाभौचकुक्षौपृष्ठेचवक्षसि ॥
अघोरस्यकलाश्चाष्टौयोजनीयायथाक्रमम् ॥ ७८ ॥ पश्चात्त्रयोदशकलाःपायुमेढ्रोरुजानुषु ॥ जङ्घास्फिक्कटिपार्श्वेषुवामदेवस्यभावयेत् ॥ ७९ ॥
सद्यस्यापिकलाश्चाष्टौपादयोरपिहस्तयोः ॥ घ्राणेशिरसिबाह्वोश्चकल्पयेत्कल्पवित्तमः ॥ ८० ॥ अष्टत्रिंशत्कलान्यासमेवंकृत्वानुपूर्व्वशः ॥ पश्चात्प्रण
वविद्धीमान्प्रणवन्यासमाचरेत् ॥ ८१ ॥ बाहुद्वयेकूर्परयोस्तथाचमणिबन्धयोः ॥ पार्श्वोदरोरुजङ्घेषुपादयोःपृष्ठतस्तस्था ॥८२॥ इत्थंप्रणवविन्यासं
कृत्वान्यासविचक्षणः ॥ हंसन्यासंप्रकुर्व्वीतशिवशास्त्रेयथोदितम् ॥ ८३ ॥ बीजंविभज्यहंसस्यनेत्रयोर्घ्राणयोरपि ॥ विभज्यबाहुनेत्रास्यललाटेघ्राणयो
रपि ॥ ८४ ॥ कक्षयोःस्कन्धयोश्चैवपार्श्वयोःस्तनयोस्तथा ॥ कट्योःपाण्योर्गुल्फयोश्चयद्वापञ्चाङ्गवर्त्मना ॥ ८५ ॥ हंसन्यासमिमंकृत्वान्यसेत्पञ्चाक्ष
रींततः ॥ यथापूर्व्वोक्तमार्गेणशिवत्वंयेनजायते ॥ ८६ ॥ नाशिवःशिवमभ्यस्येन्नाशिवःशिवमर्च्चयेत् ॥ नाशिवस्तुशिवंध्यायेन्नाशिवःशिवमाप्नुयात् ॥
॥ ८७ ॥ तस्माच्छैवींतनुंकृत्वात्यक्त्वाचपशुभावनाम् ॥ शिवोऽहमितिसञ्चिन्त्यशैवंकर्म्मसमाचरेत् ॥ ८८ ॥ कर्म्मयज्ञस्तपोयज्ञोजपयज्ञस्तदुत्तरः ॥
ध्यानयज्ञोज्ञानयज्ञःपञ्चयज्ञाःप्रकीर्त्तिताः ॥८९॥ कर्म्मयज्ञरताःकेचित्तपोयज्ञरताःपरे ॥ जपयज्ञरताश्चान्येध्यानयज्ञरतास्तथा ॥ ९० ॥ ज्ञानयज्ञरता
श्चान्येविशिष्टाश्चोत्तरोत्तरम् ॥ कर्म्मयज्ञोद्विधाप्रोक्तःकामाकामविभेदतः ॥ ९१ ॥ कामान्कामीततोभुक्त्वाकामसक्तःपुनर्भवेत् ॥ अकामोरुद्रभवनेभो
गान्भुक्त्वाततश्च्युतः ॥ ९२ ॥ तपोयज्ञरतोभूत्वाजायतेनात्रसंशयः ॥ तपस्वीचपुनस्तस्मिन्भोगान्भुक्त्वाततश्च्युतः ॥ ९३ ॥ जपध्यानरतोभूत्वाजायते
भुविमानवः ॥ जपध्यानरतोमर्त्त्यस्तद्वैशिष्ट्यवशादिह ॥ ९४ ॥ ज्ञानंलब्ध्वाचिरादेवशिवसायुज्यमाप्नुयात् ॥ तस्मान्मुक्तौशिवाज्ञप्तःकर्म्मयज्ञोऽपि
देहिनाम् ॥ ९५ ॥ अकामःकामसंयुक्तोबन्धायैवभविष्यति ॥ तस्मात्पञ्चसुयज्ञेषुध्यानज्ञानपरोभवेत् ॥ ९६ ॥ ध्यानंज्ञानञ्चयस्यास्तितीर्णस्तेनभवा

र्णवः ॥ हिंसादिदोषनिर्म्मुक्तोविशुद्धश्चित्तसाधनः ॥ ९७ ॥ ध्यानयज्ञःपरस्तस्मादपवर्गफलप्रदः ॥ बहिःकर्म्मकरायद्वन्नातीवफलभागिनः ॥९८ ॥
दृष्टानरेन्द्रभवनेतद्वदत्रापिकर्म्मिणः ॥ ध्यानिनांहिवपुःसूक्ष्मंभवेत्प्रत्यक्षमैश्वरम् ॥ ९९ ॥ तथेहकर्म्मिणांस्थूलंमृत्काष्ठाद्यैःप्रकल्पितम् ॥ ध्यानयज्ञ
रतास्तस्माद्देवान्पाषाणमृन्मयान् ॥ १०० ॥ नात्यन्तंप्रतिपद्यन्तेशिवयाथात्म्यवेदनात् ॥ आत्मस्थंयःशिवंत्यक्त्वाबहिरभ्यर्च्चयेन्नरः ॥१०१॥ हस्त
स्थंफलमुत्सृज्यलिहेत्कूर्परमात्मनः ॥ ज्ञानाद्ध्यानंभवेद्ध्यानाज्ज्ञानंभूयःप्रवर्त्तते ॥ १०२ ॥ तदुभाभ्यांभवेन्मुक्तिस्तस्माद्ध्यानरतोभवेत् ॥ द्वादशा
न्तेतथामूर्ध्निललाटेभ्रूयुगान्तरे ॥ १०३ ॥ नासाग्रेवातथास्येवाकन्धरेहृदयेतथा ॥ नाभौवाशाश्वतस्थानेश्रद्धाविद्धेनचेतसा ॥ १०४ ॥ बहिर्यागो
पचारेणदेवंदेवींश्चपूजयेत् ॥ अथवापूजयेन्नित्यंलिङ्गेवाकृतकेऽपिवा ॥ १०५ ॥ वह्नौवास्थण्डिलेवाथभक्त्यावित्तानुसारतः ॥ अथवान्तर्बहिश्चैवपूज
येत्परमेश्वरम् ॥ अन्तर्यागरतःपूजांबहिःकुर्व्वीतवानवा ॥ १०६ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेदीक्षाविधानादिकथनंनामाष्टादं
शोऽध्यायः ॥ १८ ॥ उपमन्युरुवाच ॥ व्याख्यांपूजाविधानस्यप्रवदामिसमासतः ॥ शिवशास्त्रेशिवेनैवशिवायैकथितस्यतु ॥ १ ॥ अङ्गमभ्यन्तरंयाग
मग्निकार्य्यावसानकम् ॥ विधायवानवापश्चाद्बहिर्यागंसमाचरेत् ॥ २ ॥ तत्रद्रव्याणिमनसाकल्पयित्वाविशोध्यच ॥ ध्यात्वाविनायकंदेवंपूजयित्वा
विधानतः ॥ ३ ॥ दक्षिणेचोत्तरेचैवनन्दीशंसुयशंतथा ॥ आराध्यमनसासम्यगासनंकल्पयेद्बुधः ॥ ४ ॥ आराधनादिकैर्युक्तःसिंहयोगासनादिकम् ॥
पद्मासनंवाविमलतत्त्वत्रयसमन्वितम् ॥ ५ ॥ तस्योपरिशिवंध्यायेत्साम्बंसर्व्वमनोहरम् ॥ सर्व्वलक्षणसम्पन्नंसर्व्वावयवशोभनम् ॥६॥ सर्व्वातिशय
संयुक्तंसर्व्वाभरणभूषितम् ॥ रक्तास्यपाणिचरणंकुन्दमन्दस्मिताननम् ॥ ७ ॥ शुद्धस्फटिकसङ्काशंफुल्लपद्मविलोचनम् ॥ चतुर्भुजमुदाराङ्गंचारुच
न्द्रकलाधरम् ॥ ८ ॥ वरदाभयहस्तञ्चमृगटङ्कधरंहरम् ॥ भुजङ्गहारवलयंचारुनीलगलान्तरम् ॥ सर्व्वोपमानरहितंसानुगंसपरिच्छदम् ॥ ९ ॥
ततःसञ्चिन्तयेत्तस्यवामभागेमहेश्वरीम् ॥ प्रफुल्लोत्पलपत्राभांविस्तीर्णायतलोचनाम् ॥ १० ॥ पूर्णचन्द्राभवदनांनीलकुञ्चितमूर्द्धजाम् ॥ नीलोत्पल
दलप्रख्यांचन्द्रार्द्धकृतशेखराम् ॥ ११ ॥ अतिवृत्तघनोत्तुङ्गस्निग्धपीनपयोधराम् ॥ तनुमध्यांपृथुश्रोणींपीतसूक्ष्मवराम्बराम् ॥ १२ ॥ सर्व्वाभरणसम्प
न्नांललाटतिलकोज्ज्वलाम् ॥ विचित्रपुष्पसंकीर्णकेशपाशोपशोभिताम् ॥ १३ ॥ सर्व्वतोऽनुगुणाकारांकिञ्चिल्लज्जायिताननाम् ॥ हेमारविन्दंविकस
द्दधानांदक्षिणेकरे ॥ १४ ॥ दण्डवच्चापरंहस्तंन्यस्यासीनांमहासने ॥ पाशविच्छेदिकांसाक्षात्सच्चिदानन्दरूपिणीम् ॥ १५ ॥ एवंदेवञ्चदेवीञ्चध्यात्वा
सनवरेशुभे ॥ सर्व्वोपचारवद्भक्त्याभावपुष्पैःसमर्च्चयेत् ॥ १६ ॥ अथवापरिकल्प्यैवंमूर्त्तिमन्यतमांविभोः ॥ शैवींसदाशिवाख्यांवातथामाहेश्वरीं

पराम् ॥ १७ ॥ षड्विंशकाभिधानांवाश्रीकण्ठाख्यामथापिवा॥ मन्त्रन्यासादिकञ्चापिकृत्वास्वस्यांतनौयथा ॥ १८ ॥ अस्यांमूर्त्तौमूर्त्तिमन्तंशिवं सदसतःपरम् ॥ ध्यात्वाबाह्यक्रमेणैवपूजांनिर्वर्तयेद्धिया ॥ १९ ॥ समिदाज्यादिभिःपश्चान्नाभौहोमञ्चभावयेत् ॥ भ्रूमध्येचशिवंध्यायेच्छुद्धदीपशिखाकृतिम् ॥ २० ॥ इत्थमङ्गेस्वतन्त्रेवायोगेध्यानमयेशुभे ॥ अग्निकार्य्यावसानञ्चसर्व्वंश्चैषसमोविधिः ॥ २१ ॥ अथचिंतामयंसर्व्वंसमाप्याराधनक्रमम् ॥ लिङ्गेचपूजयेद्देवंस्थण्डिलेवानलेऽपिवा ॥ २२ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेएकोनविंशोऽध्यायः॥१९॥ उपमन्युरुवाच ॥ प्रोक्षयेन्मूलमन्त्रेणपूजास्थानंविशुद्धये ॥ गन्धचन्दनतोयेनपुष्पंतत्रविनिक्षिपेत् ॥१॥ अस्त्रेणोत्सार्य्यवैविघ्नानवगुण्ठ्यचवर्म्मणा ॥ अस्त्रंदिक्षुप्रविन्यस्य कल्पयेदर्च्चनाभुवम् ॥२॥ तत्रदर्भान्परिस्तीर्य्यक्षालयेत्प्रोक्षणादिभिः ॥ संशोध्यसर्व्वपात्राणिद्रव्यशुद्धिंसमाचरेत् ॥ ३ ॥ प्रोक्षणीमर्घ्यपात्रञ्चपाद्यपात्रमतःपरम् ॥ तथैवाचमनीयस्यपात्रञ्चेतिचतुष्टयम् ॥ ४ ॥ प्रक्षाल्यप्रोक्ष्यवीक्ष्याथक्षिपेत्तेषुजलंशिवम् ॥ पुण्यद्रव्याणिसर्व्वाणियथालाभंविनिक्षिपेत् ॥ ५ ॥ रत्नानिरजतंहेमगन्धपुष्पाक्षतादयः ॥ फलपल्लवदर्भाश्चपुण्यद्रव्याण्यनेकधा ॥ ६ ॥ स्नानोदकेसुगन्धादिपानीयेचविशेषतः ॥ शीतलानिमनोज्ञानिकुसुमादीनिनिक्षिपेत् ॥ ७ ॥ उशीरंचन्दनञ्चैवपाद्येतुपरिकल्पयेत् ॥ जातिकंकोलकर्पूरबहुमूलतमालकान् ॥ ८ ॥ क्षिपेदाचमनीयेचचूर्णयित्वाविशेषतः ॥ एलांसर्व्वेषुपात्रेषुकर्पूरंचन्दनंतथा ॥९॥ कुशाग्राण्यक्षतांश्चैवयववीहितिलानपि ॥ आज्यसिद्धार्थपुष्पाणिभसितञ्चार्घ्यपात्रके ॥१०॥ कुशपुष्पयवव्रीहिबहुमूलतमालकान् ॥ प्रक्षिपेत्प्रोक्षणीपात्रेभसितञ्चयथाक्रमम् ॥ ११ ॥ सर्व्वत्रमन्त्रंविन्यस्यवर्म्मणावेष्टचबाह्यतः ॥ पश्चादस्त्रेणसंरक्ष्यधेनुमुद्रांप्रदर्शयेत् ॥ १२ ॥ ॥ पूजाद्रव्याणिसर्व्वाणिप्रोक्षणीपात्रवारिणा ॥ सम्प्रोक्ष्यमूलमन्त्रेणशोधयेद्विधिवत्ततः ॥ १३ ॥ पात्राणांप्रोक्षणीमेकामलाभेसर्व्वकर्म्मसु ॥ साधयेदर्घ्यमाद्भिस्तत्सामान्यंसाधकोत्तमः ॥ १४ ॥ ततोविनायकंदेवंभक्ष्यभोज्यादिभिःक्रमात् ॥ पूजयित्वाविधानेन द्वारपार्श्वेऽथदक्षिणे ॥ १५ ॥ अन्तःपुराधिपंसाक्षान्नन्दिनंसम्यगर्चयेत् ॥ चामीकराचलप्रख्यंसर्व्वाभरणभूषितम् ॥ १६ ॥ बालेन्दुमुकुटंसौम्यंत्रिनेत्रंचचतुर्भुजम् ॥ दीप्तशूलमृगीटंकतिग्मवेत्रधरंप्रभुम् ॥ १७ ॥ चन्द्रबिम्बाभवदनंहरिवक्रमथापिवा ॥ उत्तरेद्वारपार्श्वस्यभार्य्यांचमरुतांसुताम् ॥ १८ ॥ सुयशांसुव्रतामम्बापादमण्डनतत्पराम् ॥ पूजयित्वाप्रविश्यान्तर्भवनंपरमेष्ठिनः ॥ १९ ॥ सम्पूज्यलिङ्गंतैर्द्रव्यैर्निर्माल्यमपनोदयेत् ॥ प्रक्षाल्यपुष्पंशिरसिन्यसेत्तस्यविशुद्धये ॥ २० ॥ पुष्पहस्तोजपेच्छक्त्यामन्त्रंमन्त्रविशुद्धये ॥ ऐशान्यांचण्डमाराध्यनिर्म्माल्यंतस्यदापयेत् ॥ २१ ॥ कल्पयेदासनंपश्चादाधारादियथाक्रमम् ॥ आधारशक्तिकल्याणींश्यामांध्यायेदथोभुवि ॥ २२ ॥ तस्याःपुरस्तादुत्कण्ठमनन्तंकुण्डलाकृतिम् ॥ धवलंपञ्चफणिनं

लेलिहानमिवाम्बरम् ॥ २३ ॥ तस्योपर्य्यासनंभद्रंकण्ठीरवचतुष्पदम् ॥ धर्म्मोज्ञानंचवैराग्यमैश्वर्य्यंचपदानिवै ॥ २४ ॥ आग्नेयादिश्वेतरक्तपीतश्या
मानिवर्णतः ॥ अधर्म्मादीनिपूर्व्वादीन्युत्तरान्तान्यनुक्रमात् ॥ २५ ॥ राजावर्तमणिप्रख्यान्यस्यगात्राणिभावयेत् ॥ अस्योर्द्ध्वच्छादनंपद्ममासनंविम
लंसितम् ॥ २६ ॥ अष्टपत्राणितस्याहुरणिमादिगुणाष्टकम् ॥ केशराणिचवामाद्यारुद्रावामादिशक्तिभिः ॥ २७ ॥ बीजान्यपिचताएवशक्तयोऽन्तर्मनो
न्मनी ॥ कर्णिकापरवैराग्यंनालंज्ञानंशिवात्मकम् ॥ २८ ॥ कन्दश्चशिवधर्मात्माकर्णिकान्तेत्रिमण्डले ॥ त्रिमण्डलोपर्य्यात्मादितत्त्वत्रितयमासनम्
॥ २९ ॥ सर्व्वासनोपरिसुखंविचित्रास्तरणास्तृतम् ॥ आसनंकल्पयेद्दिव्यंशुद्धविद्यासमुज्ज्वलम् ॥ ३० ॥ आवाहनंस्थापनंचसन्निरोधंनिरीक्षणम् ॥
नमस्कारंचकुर्व्वीतबद्ध्वामुद्रांपृथक्पृथक् ॥ ३१ ॥ पाद्यमाचमनञ्चार्घ्यंगन्धंपुष्पंततःपरम् ॥ धूपंदीपंचताम्बूलंदत्त्वाथस्नापयेच्छिवौ ॥ ३२ ॥
अथवापरिकल्प्यैवमासनंमूर्तिमेवच ॥ सकलीकृत्यमूलेनब्रह्मभिश्चापरैस्तथा ॥ ३३ ॥ आवाहयेत्ततोदेव्याशिवंपरमकारणम् ॥ शुद्धस्फटिकसङ्काशं
देवंनिश्चलमक्षरम् ॥ ३४ ॥ कारणंसर्व्वलोकानांसर्व्वलोकमयंपरम् ॥ अन्तर्बहिःस्थितंव्याप्यअणोरणुमहत्तरम् ॥ ३५ ॥ भक्तानामप्रयत्नेनदृश्यमी
श्वरमव्ययम् ॥ ब्रह्मेन्द्रविष्णुरुद्राद्यैरपिदेवैरगोचरम् ॥ ३६ ॥ वेदसारञ्चविद्वद्भिरगोचरमितिश्रुतम् ॥ आदिमध्यान्तरहितंभेषजंभवरोगिणाम् ॥३७॥
शिवतत्त्वमितिख्यातंशिवार्थंजगतिस्थितम् ॥ पञ्चोपचारवद्भक्त्यापूजयेल्लिङ्गमूर्द्धनि ॥ ३८ ॥ लिङ्गमूर्त्तिर्महेशस्याशिवस्यपरमात्मनः ॥ स्नानकाले
प्रकुर्व्वीतजयशब्दादिमङ्गलम् ॥ ३९ ॥ पञ्चगव्यघृतक्षीरदधिमध्वादिपूर्व्वकैः ॥ फलैःफलानांसारैश्चतिलसर्षपसक्तुभिः ॥ ४० ॥ बीजैर्यवादिभिःशस्तै
श्चूर्णैर्माषादिसंभवैः ॥ संस्नाप्यालिप्यपिष्टाद्यैःस्नापयेदुष्णवारिभिः ॥ ४१ ॥ घर्षयेद्बिल्वपत्राद्यैर्लेपगन्धापनुत्तये ॥ पुनःसंस्नाप्यसलिलैश्चक्रवर्त्युपचा
रतः ॥ ४२ ॥ सुगन्ध्यामलकंदद्याद्धरिद्राञ्चयथाक्रमम् ॥ ततःसंशोध्यसलिलैर्लिङ्गंबेरमथापिवा ॥ ४३ ॥ स्नापयेद्गन्धतोयेनकुशपुष्पोदकेनच ॥ हिर
ण्यरत्नतोयैश्चमन्त्रसिद्धैर्यथाक्रमम् ॥ ४४ ॥ असम्भवेतुद्रव्याणांयथासम्भवसम्भृतैः ॥ केवलैर्मन्त्रतोयैर्वास्नापयेच्छ्रद्धयाशिवम् ॥ ४५ ॥ कलशेनाथश
ङ्खेनवर्द्धन्यापाणिनातथा ॥ सकुशेनसपुष्पेणस्नापयेन्मन्त्रपूर्व्वकम् ॥ ४६ ॥ पवमानेनरुद्रेणनीलेनत्वरितेनच ॥ लिङ्गसूक्तादिसूक्तैश्चशिरसाथर्व्वणेन
च ॥ ४७ ॥ ऋग्भिश्चसामभिःशैवैर्ब्रह्मभिश्चापिपञ्चभिः ॥ स्नापयेद्देवदेवेशंशिवेनप्रणवेनच ॥ ४८ ॥ यथादेवस्यदेव्याश्चकुर्य्यात्स्नानादिकंतथा ॥
नतुकश्चिद्विशेषोऽस्तितत्रतौसदृशौयतः ॥ ४९ ॥ प्रथमंदेवमुद्दिश्यकृत्वास्नानादिकाःक्रियाः ॥ देव्यैपश्चात्प्रकुर्व्वीतदेवदेवस्यशासनात् ॥ ५० ॥
अर्द्धनारीश्वरेपूज्येपौर्व्वापर्य्यंनविद्यते ॥ तत्रतत्रोपचाराणांलिङ्गेवान्यत्रवाक्वचित् ॥ ५१ ॥ कृताभिषेकंलिङ्गाद्यंशुचिनाचसुगन्धिना ॥ संमृज्य

वाससादद्यादम्बरञ्चोपवीतकम् ॥ ५२ ॥ पाद्यमाचमनञ्चार्घ्यंगन्धपुष्पञ्चभूषणम् ॥ धूपंदीपञ्चनैवेद्यंपानीयंमुखशोधनम् ॥ ५३ ॥ पुनश्चाचम
नीयञ्चमुखवासंततःपरम् ॥ मुकुटञ्चशुभंभद्रंसर्व्वरत्नैरलंकृतम् ॥ ५४॥ भूषणानिविचित्राणिमाल्यानिविविधानिच ॥ अञ्जनंचामरंछत्रंतालवृन्तञ्च
दर्पणम् ॥ ५५ ॥ दत्त्वानीराजनंकुर्य्यात्सर्व्वमंगलनिस्वनैः ॥ गीतनृत्यादिभिश्चैवजयशब्दसमन्वितैः ॥ ५६ ॥ हैमेचराजतेताम्रेपात्रेवामृन्मयेशुभे ॥
पद्मकैःशोभितैःपुष्पैर्बीजैर्दध्यक्षतादिभिः ॥ ५७ ॥ त्रिशूलशङ्खयुग्माब्जनन्द्यावर्त्तैःकरीषजैः ॥ श्रीवत्सस्वस्तिकादर्शवज्रैर्वह्न्यादिचिह्नितैः ॥ ५८ ॥
अष्टौप्रदीपान्परितोविधायैकन्तुमध्यतः ॥ तेषुवामादिकाश्चिन्त्याःपूज्याश्चनवशक्तयः ॥ ५९ ॥ कवचेनसमाच्छाद्यसंरक्ष्यास्त्रेणसर्व्वतः ॥ धेनुमुद्रांचस
न्दर्श्यपाणिभ्यांपात्रमुद्धरेत् ॥ ६० ॥ अथवारोपयेत्पात्रेपंचदीपान्यथाक्रमम् ॥ विदिक्ष्वपिचमध्येचदीपमेकमथापिवा ॥ ६१ ॥ ततस्तत्पात्रमुद्धृत्य
लिङ्गादेरुपरिक्रमात् ॥ त्रिःप्रदक्षिणयोगेनभ्रामयेन्मूलविद्यया ॥ ६२ ॥ दद्यादर्घ्यंततोमूर्ध्निभसितंचसुगन्धितम् ॥ कृत्वापुष्पांजलिंपश्चादुपहारान्निवे
दयेत् ॥ ६३ ॥ पानीयंचततोदद्याद्दत्वाचाचमनंपुनः ॥ पंचसौगन्धिकोपेतंताम्बूलंचनिवेदयेत् ॥६४ ॥ प्रोक्षयेत्प्रोक्षणीयानिगाननाट्यादिकारयेत् ॥
लिङ्गादौशिवयोश्चिन्तांकृत्वाशक्त्याजपेच्छिवम् ॥ ६५ ॥ प्रदक्षिणंप्रणामंचस्तवंचात्मसमर्पणम् ॥ विज्ञापनंचकार्य्याणांकुर्य्याद्विनयपूर्व्वकम्
॥ ६६ ॥ अर्घ्यंपुष्पांजलिंदत्त्वाबद्ध्वामुद्रांयथाविधि ॥ पश्चात्क्षमापयेद्देवमुद्वास्यात्मनिचिन्तयेत् ॥ ६७॥ पाद्यादिमुखवासान्तमर्घ्याद्यंचातिसङ्कटे ॥
पुष्पनिक्षेपमात्रंवाकुर्य्याद्भावपुरःसरम् ॥ ६८ ॥ तावतैवपरोधर्म्मोभावेनसुकृतोभवेत् ॥ असम्पूज्यनभुञ्जीतशिवमाप्राणसंचरात् ॥ ६९ ॥ यदिपाप
स्तुभुञ्जीतस्वैरंतस्यननिष्कृतिः ॥ प्रमादेनतुभुक्तंचेत्तदुद्गीर्य्यप्रयत्नतः ॥ ७० ॥ स्नात्वाद्विगुणमभ्यर्च्यदेवंदेवीमुपोष्यच ॥ शिवस्यायुतमभ्यस्ये
द्ब्रह्मचर्य्यपुरःसरम् ॥ ७१ ॥ परेद्युःशक्तितोदत्त्वासुवर्णाद्यंशिवायच ॥ शिवभक्तायवाकृत्वामहापूजांशुचिर्भवेत् ॥ ७२ ॥ अनुक्तंचात्रपूजायाःक्रमलो
पभयादिना ॥ यत्तदन्यत्प्रवक्ष्यामिसमासान्नतुविस्तरात् ॥ ७३ ॥ हविर्निवेदनात्पूर्व्वंदीपदानादनन्तरम् ॥ कुर्य्यादावरणाभ्यर्च्चांप्राप्तेनीराजनेऽथवा
॥ ७४ ॥ तत्रेशानादिसद्यान्तंहृदाद्यस्त्रान्तमेवच ॥ शिवस्यचाशिवायाश्चप्रथमावरणेयजेत् ॥७५ ॥ ईशान्यांपूर्व्वभागेचदक्षिणेचोत्तरेतथा ॥ पश्चिमेच
तथाग्नेय्यामैशान्यांनिर्ऋतौततः ॥ ७६ ॥ वायव्यांपुनरीशान्यांचतुर्दिक्षुततःपरम् ॥ गर्भावरणमाख्यातंमन्त्रसंघातमेववा ॥ ७७ ॥ हृदयाद्यस्त्रपर्य्य
न्तमथवापिसमर्च्चयेत् ॥ तद्बहिःपूर्व्वतःशक्रंयमंदक्षिणतोयजेत् ॥ ७८ ॥ वरुणंवारुणेभागेधनदंचोत्तरेबुधः ॥ ईशमैशेऽनलंस्वीयेनैर्ऋतेनिर्ऋतिंयजेत्
॥ ७९ ॥ मारुतेमारुतंविष्णुंनैर्ऋतेविधिमैश्वरे ॥ बहिःपद्मस्यवज्रादीन्यब्जान्तान्यायुधान्यपि ॥ ८० ॥ प्रसिद्धरूपाण्याशासुलोकेशानांक्रमाद्यजेत् ॥

देवंदेवींश्चसम्प्रेक्ष्यसर्व्वावरणदेवताः ॥८१॥ बद्धांजलिपुटाध्येयाःसमासीनायथासुखम् ॥ सर्व्वावरणदेवानांस्वाभिधानैर्नमोयुतैः ॥८२॥ पुष्पैःसम्पूजनंकु
र्य्यान्नत्वास्मृत्त्वायथाक्रमम् ॥ गर्भावरणमेवापियजेत्स्वावरणेनवा ॥८३॥ योगेध्यानेजपेहोमेबाह्येवाभ्यन्तरेऽपिवा ॥ बहिश्चषड्विधंदेयंशुद्धंमुद्गान्नमेवच
॥८४॥ पायसंदधिसंमिश्रंगौडंचमधुनाप्लुतम् ॥ एतेष्वेकमनेकंवानानाव्यंजनसंयुतम् ॥८५॥ गुडखण्डान्वितंदद्यान्मथितंदधिचोत्तमम् ॥ भक्षाण्यपूपमु
ख्यानिस्वादुमन्तिफलानिच॥८६॥एलाचन्दनपुष्पाढ्यंपानीयंचातिशीतलम्॥ मृदुतैलरसाक्तंचखंडंपूगफलस्यच॥८७॥दलानिनागवल्ल्याश्चगौराणिच
शिवानिच ॥ शैलमेवसितंचूर्णनातिरूक्षंनदूषितम् ॥८८॥ कर्पूरंचाथकङ्कोलंजात्यादिचनवंशुभम् ॥ आलेपनंचन्दनंस्यान्मूलकाष्ठरजोमयम् ॥ ८९ ॥
कस्तूरिकाकुंकुमंचरसोमृगमदात्मकः ॥ पुष्पाणिसुरभीण्येवपवित्राणिशुभानिच ॥९०॥ निर्गन्धान्युग्रगन्धानिदूषितान्युषितानिच ॥ स्वयमेवविशीर्णा
निनादेयानिशिवार्च्चने ॥ ९१ ॥ वासांसिचमृदून्येवनवानिचशुभानिच ॥ दुकूलपट्टदेवाङ्गमयानिचासितानिच ॥ ९२ ॥ नवरत्नचितान्येवतपनीयमया
निच ॥ विद्युद्वलयकल्पानिभूषणानिविशेषतः ॥ ९३ ॥ सर्व्वाण्येतानिकर्पूरनिर्यासागुरुचन्दनैः ॥ प्रधूपितानिपुष्पौघैर्वासितानिसमन्ततः ॥ ९४ ॥
चन्दनागुरुकर्पूरकुष्ठगुग्गुलुचूर्णकैः ॥ घृतेनमधुनाचैवसिद्धोधूपःप्रशस्यते ॥९५॥ कपिलासम्भवेनैवघृतेनापिसुगन्धिना ॥ नित्यंप्रदीपितादीपाःशस्ताः
कर्पूरसंयुताः ॥९६॥ पंचगव्यंचमधुरंपयोदधिघृतंतथा ॥ कपिलासम्भवंशम्भोरिष्टंस्नानेचपानके ॥९७॥ आसनानिचभद्राणिगजदन्तमयानिच ॥ सुव
र्णरत्नचित्राणिचित्राण्यास्तरणानिच ॥९८॥ मृदूपधानयुक्तानिसूक्ष्मतूलमयानिच ॥ उच्चावचानिरम्याणिशयनानिसुखानिच ॥९९॥ नद्याःसमुद्रगामि
न्यानदाद्वाम्भःसमाहृतम् ॥ वस्त्रपूतंचशीतंचविशिष्टंस्नानपानयोः॥१००॥छत्रंशशिनिभंचारुमुक्तादामविराजितम् ॥ नवरत्नचितंदिव्यंहेमदंडमनोहर
म्॥१०१॥चामरेचासितेसूक्ष्मेचामीकरपरिष्कृते॥राजहंसद्वयाकारेरत्नदंडोपशोभिते ॥१०२॥ दर्पणंचापिसुस्निग्धंदिव्यगन्धानुलेपनम्॥समन्ताद्रत्नसंछ
न्नंस्रग्वरैश्चापिभूषितम्॥१०३॥गम्भीरनिनदःशङ्खोहंसकुन्देन्दुसन्निभः॥आस्यपृष्ठादिदेशेषुरत्नचामीकरांचितः॥१०४॥ काहलानिचरम्याणिनानानाद
कराणिच ॥ सुवर्णनिर्म्मितान्येवमौक्तिकालङ्कृतानिच ॥१०५॥ भेरीमृदङ्गमुरजातिमिच्छापटहादयः॥समुद्रकल्पसन्नादाःकल्पनीयाःप्रयत्नतः ॥१०६॥
भाण्डान्यपिचरम्याणिपात्राण्यपिचकृत्स्नशः ॥ तदाधाराणिसर्व्वाणिसौवर्णान्येवधारयेत् ॥ १०७ ॥ आलयञ्चमहेशस्यशिवस्यपरमात्मनः ॥ राजाव
सथवत्कल्प्यंशिल्पशास्त्रोक्तलक्षणम् ॥ १०८ ॥ उच्चप्राकारसम्भिन्नंभूधराकारगोपुरम् ॥ अनेकरत्नसञ्छन्नंहेमद्वारकपाटकम् ॥ १०९ ॥ तप्तजाम्बू
नदमयंरत्नस्तम्भशतावृतम् ॥ मुक्तादामवितानाढ्यंविद्रुमद्वारतोरणम् ॥ ११० ॥ चामीकरमयैर्दिव्यैर्मुकुटैःकुम्भलक्षणैः ॥ अलंकृताशिरोभागमत्वरा

जेनाचिह्नितैः ॥ १११ ॥ राजन्यार्हनिवासैश्वराजवीथ्यादिशोभितैः ॥ प्रक्षिप्तप्रांशुशिखरैःप्रासादैश्वसमन्ततः ॥ ११२ ॥ आस्थानस्थानवर्य्यैश्वस्थितै
र्दिक्षुविदिक्षुच ॥ अत्यन्तालंकृतप्रान्तमन्तरावरणैरिव ॥ ११३ ॥ उत्तमस्त्रीसहस्रैश्वनृत्यगेयविशारदैः ॥ वेणुवीणाविदग्धैश्वपुरुषैर्बहुभिर्युतम्
॥ ११४ ॥ रक्षितंरक्षिभिर्वीरैर्गजवाजिरथान्वितैः ॥ अनेकपुष्पवाटीभिरनेकैश्वसरोवरैः ॥ ११५ ॥ दीर्घिकाभिरनेकाभिर्दिग्विदिक्षुविराजितम् ॥
वेदवेदाङ्गतत्त्वज्ञैःशिवशास्त्रपरायणैः ॥ ११६ ॥ शिवाश्रमरतैर्भक्तैःशिवशास्त्रोक्तलक्षणैः ॥ शान्तैःस्मितमुखैःस्फीतैःसदाचारपरायणैः ॥ ११७ ॥
शैवैर्माहेश्वरैश्चैवश्रीमद्भिःसेवितंद्विजैः ॥ एवमन्तर्बहिर्वाथयथाशक्तिविनिर्म्मिते ॥ ११८ ॥ स्थानेशिलामयेदान्तेदारवेचेष्टकामये ॥ केवलंमृन्मयेवा
पिपुण्यारण्येऽपिवागिरौ ॥ ११९ ॥ नद्यांदेवालयेऽन्यत्रदेशेवाथगृहेशुभे ॥ आढ्योवाथदरिद्रोवास्वकांशक्तिमवंचयन् ॥ १२० ॥ द्रव्यैर्न्यायार्ज्जितै
रेवभक्त्यादेवंसमर्च्चयेत् ॥ अथान्यायार्ज्जितैश्चापिभक्त्याचेच्छिवमर्च्चयेत् ॥ १२१ ॥ नतस्यप्रत्यवायोऽस्तिभाववश्योयतःप्रभुः ॥ न्यायार्ज्जितैरपि
द्रव्यैरभक्त्यापूजयेद्यदि ॥ १२२ ॥ नतत्फलमवाप्नोतिभक्तिरेवात्रकारणम् ॥ भक्त्यावित्तानुसारेणशिवमुद्दिश्ययत्कृतम् ॥ १२३ ॥ अल्पेमहतिवा
तुल्यंफलमाढ्यदरिद्रयोः ॥ भक्त्याप्रचोदितःकुर्य्यादल्पवित्तोऽपिमानवः ॥ १२४ ॥ महाविभवसारोऽपिनकुर्य्याद्भक्तिवर्ज्जितः ॥ सर्व्वस्वमपियोदद्या
च्छिवेभक्तिविवर्ज्जितः ॥ १२५ ॥ नतेनफलभाक्सस्याद्भक्तिरेवात्रकारणम् ॥ नतत्तपोभिरत्युग्रैर्नचसर्व्वैर्महामखैः ॥ १२६ ॥ गच्छेच्छिवपुरंदिव्यं
मुक्त्वाभक्तिंशिवात्मिकाम् ॥ गुह्याद्गुह्यतरंकृष्णसर्व्वत्रपरमेश्वरे ॥ १२७ ॥ शिवेभक्तिर्नसन्देहस्तयायुक्तोविमुच्यते ॥ शिवमन्त्रजपोध्यानंहोमोयज्ञ
स्तपःश्रुतम् ॥ १२८ ॥ दानमध्ययनंसर्व्वंभावार्थंनात्रसंशयः ॥ भावहीनोनरःसर्व्वंकृत्वापिनविमुच्यते ॥ १२९ ॥ भावयुक्तःपुनःसर्व्वमकृत्वापि
विमुच्यते ॥ चान्द्रायणसहस्रैश्वप्राजापत्यशतैस्तथा ॥ १३० ॥ मासोपवासैश्चान्यैश्चशिवभक्तस्यकिंफलम् ॥ अभक्तामानवाश्चास्मिँल्लोकेगिरिगुहा
सुच ॥ १३१ ॥ तपन्तिचाल्पभोगार्थंभक्तोभावेनमुच्यते ॥ सात्विकंमुक्तिदंकर्म्मसत्त्वेवैयोगिनःस्थिताः ॥ १३२ ॥ राजसंसिद्धिदंकुर्य्युःकर्म्मि
णोरजसावृताः ॥ असुराराक्षसाश्चैवतमोगुणसमन्विताः ॥ १३३ ॥ ऐहिकार्थंयजन्तीशंनराश्चान्येऽपितादृशाः ॥ तामसंराजसंवापिसात्त्विकं
भावमेववा ॥ १३४ ॥ आश्रित्यभक्त्यापूजाद्यंकुर्व्वन्भद्रंसमश्नुते ॥ यतःपापार्णवात्रातुंभक्तिर्नौरिवनिर्म्मिता ॥ १३५ ॥ तस्माद्भक्त्युपपन्नस्य
रजसातमसाचकिम् ॥ अन्त्यजोवाधमोवापिमूर्खोवापतितोऽपिवा ॥ १३६ ॥ शिवंप्रपन्नश्चेत्कृष्णपूज्यःसर्व्वसुरासुरैः ॥ तस्मात्सर्व्वप्रयत्नेन
भक्त्यैवशिवमर्च्चयेत्॥१३७॥अभक्तानांक्वचिदपिफलंनास्तियतस्ततः ॥ वक्ष्याम्यतिरहस्यंतेशृणुकृष्णवचोमम ॥१३८॥ वेदैःशास्त्रैर्वेदविद्भिर्विचार्य्य

सुविनिश्चितम्॥ब्रह्मघ्नोवासुरापोवास्तेयीवागुरुतल्पगः॥१३९॥मातृहापितृहावापिवीरहाभ्रूणहापिवा॥सम्पूज्यामन्त्रकंभक्त्याशिवंपरमकारणम्।१४०॥
तैस्तैःपापैर्विमुच्येतवर्षैर्द्वादशभिःक्रमात् ॥ तस्मात्सर्व्वप्रयत्नेनपतितोऽपियजेच्छिवम् ॥ १४१ ॥ भक्तश्चेन्नापरःकश्चिद्भिक्षाहारोजितेन्द्रियः ॥ कृत्वा
पिसुमहत्पापंभक्त्यापंचाक्षरेणतु ॥ १४२ ॥ पूजयेद्यदिदेवेशंतस्मात्पापात्प्रमुच्यते ॥ अब्भक्षावायुभक्षाश्चयेचान्येव्रतकर्शिताः ॥ १४३ ॥ तेषामे
तैर्व्रतैर्नास्तिशिवलोकसमागमः ॥ भक्त्यापंचाक्षरेणैवयःशिवंसकृदर्च्चयेत् ॥ १४४ ॥ सोऽपिगच्छेच्छिवस्थानंशिवमन्त्रस्यगौरवात् ॥ तस्मात्तपांसि
यज्ञाश्चसर्व्वेसर्व्वस्वदक्षिणाः ॥ १४५ ॥ शिवमूर्त्त्यर्चनस्यैतेकोट्यंशेनापिनोसमाः ॥ बद्धोवाप्यथमुक्तोवापाशात्पंचाक्षरेणचेत् ॥ १४६ ॥ पूजये
न्मुच्यतेभक्तोनात्रकार्य्याविचारणा ॥ अरुद्रोवासरुद्रोवासूक्तेनशिवमर्च्चयेत् ॥ १४७ ॥ यःसकृत्पतितोवापिमूढोवामुच्यतेनरः ॥ षडक्षरेणवानित्यं
तथापंचाक्षरेणवा ॥ १४८ ॥ सब्रह्माङ्गेनवातेनसहंसेनविमुच्यते ॥ तस्मान्नित्यंशिवंभक्त्यासुक्तमन्त्रेणपूजयेत् ॥ १४९ ॥ शिवभक्तोजितक्रोधोह्यल
ब्धोलब्धएवच ॥ अलब्धाल्लब्धएवात्रविशिष्टोनात्रसंशयः ॥१५०॥ तस्माल्लब्ध्वैवदेवेशंसूक्तमन्त्रेणपूजयेत् ॥ एककालंद्विकालंवात्रिकालंनित्यमेववा
॥१५१ ॥ येऽर्च्चयन्तिमहादेवंविज्ञेयास्तेगणेश्वराः ॥ ज्ञानेनात्मसहायेननार्च्चितोभगवाञ्छिवः ॥ १५२ ॥ सचिरंसंसरत्यस्मिन्संसारेदुःखसागरे ॥
दुर्लभंप्राप्यमानुष्यंमूढोनार्च्चयतेशिवम् ॥ १५३ ॥ निष्फलंतस्यतज्जन्ममोक्षायनभवेद्यतः ॥ दुर्लभंप्राप्यमानुष्यंयेऽर्च्चयन्तिपिनाकिनम् ॥ १५४ ॥
तेषांहिसफलंजन्मकृतार्थास्तेनरोत्तमाः ॥ भवभक्तिपरायेचभवप्रणतचेतसः ॥ १५५ ॥ भवसंस्मरणोद्युक्तानतेदुःखस्यभागिनः ॥ भव
नानिमनोज्ञानिविभ्रमाभरणाःस्त्रियः ॥ १५६ ॥ धनञ्चातृप्तिपर्य्यन्तंशिवपूजाविधेःफलम् ॥ येवाञ्छन्तिमहाभोगान्राज्यंचत्रिदशालये
॥ १५७ ॥ तेवाञ्छन्तिसदाकालंहरस्यचरणाम्बुजम् ॥ सौभाग्यंकान्तिमद्रूपंसत्त्वंत्यागार्द्रभावता ॥ १५८ ॥ शौर्य्यञ्चजगतिख्यातिःशिवमर्च्च
यतोभवेत् ॥ तस्मात्सर्व्वंपरित्यज्यशिवैकाहितमानसः ॥ १५९ ॥ शिवपूजाविधिंकुर्य्याद्यदीच्छेच्छिवमात्मनः ॥ त्वरितंजीवितंयातित्व
रितंयातियौवनम् ॥ १६० ॥ त्वरितंव्याधिरप्येतितस्मात्पूज्यःपिनाकधृक् ॥ यावन्नायातिमरणंयावन्नाक्रमतेजरा ॥ १६१ ॥ यावन्नेन्द्रियवै
कल्यंतावत्पूजयशङ्करम् ॥ नशिवार्च्चनतुल्योऽस्तिधर्म्मोऽन्योभुवनत्रये ॥ १६२ ॥ इतिविज्ञाययत्नेनपूजनीयःसदाशिवः ॥ द्वारयागञ्चवनिकां
परिवारबलिक्रियाम् ॥ १६३ ॥ नित्योत्सवञ्चकुर्व्वीतप्रासादेयादिपूजयेत् ॥ हविर्निवेदनादूर्द्ध्वंस्वयञ्चानुचरोऽपिवा ॥ १६४ ॥ प्रासादपरिवारेभ्यो
बलिंदद्याद्यथाक्रमम् ॥ निर्गम्यसहवादित्रैस्तदाशाभिमुखःस्थितः ॥१६५॥ पुष्पंधूपंचदीपंचदद्यादन्नंजलैःसह ॥ ततोदद्यान्महापीठेतिष्ठन्बलिमुदङ्मु

स्वः ॥ १६६ ॥ ततोनिवेदितंदेवेयत्तदन्नादिकंपुरा ॥ तत्सर्व्वंसावशेषंवाचण्डायविनिवेदयेत् ॥ १६७ ॥ हुत्वाचविधिवत्पश्चात्पूजाशेषंसमापयेत् ॥ कृत्वाप्रयोगंविधिवद्यावन्मन्त्रंजपंततः ॥ १६८ ॥ नित्योत्सवंप्रकुर्व्वीतयथोक्तंशिवशासने ॥ विपुलेतैजसेपात्रेरत्नपद्मोपशोभिते ॥ १६९ ॥ अस्त्रंपाशुपतंदिव्यंतत्रावाह्यसमर्चयेत् ॥ शिरस्यारोप्यतत्पात्रंद्विजस्यालंकृतस्यच ॥ १७० ॥ न्यस्तास्त्रवपुषातेनदीप्तयष्टिधरस्यच ॥ प्रासादपरिवारेभ्योबहिर्मङ्गलनिस्वनैः ॥ १७१ ॥ नृत्यगेयादिभिश्चैवसहदीपध्वजादिभिः ॥ प्रदक्षिणत्रयंकृत्वानद्रुतंनविलम्बितम् ॥ १७१ ॥ महापीठंसमावृत्यात्रिःप्रदक्षिणयोगतः ॥ पुनःप्रविष्टोद्वारस्थोयजमानःकृतांजलिः ॥ १७३ ॥ आदायाभ्यन्तरंनीत्वाह्यस्त्रमुद्वासयेत्ततः ॥ प्रदक्षिणादिकंकृत्वायथापूर्व्वोदितंक्रमात् ॥ प्रदायचाष्टपुष्पाणिपूजामथसमापयेत् ॥१७४॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेशिवपूजाविधिर्नामविंशोऽध्यायः ॥ २० ॥

॥ उपमन्युरुवाच ॥ अथाग्निकार्य्यंवक्ष्यामिकुण्डेवास्थण्डिलेऽपिवा ॥ वेद्यांवाह्यायसेपात्रेमृन्मयेवानवेशुभे ॥ १ ॥ आधायाग्निंविधानेनसंस्कृत्यचततः परम् ॥ तत्राराध्यमहादेवंहोमकर्म्मसमाचरेत् ॥ २ ॥ कुण्डंद्विहस्तमानंवाहस्तमात्रमथापिवा ॥ वृत्तंवाचतुरस्रंवाकुर्याद्वेदीश्चमण्डलम् ॥ ३ ॥ कुण्डंविस्तारवन्निम्नंतन्मध्येऽष्टदलाम्बुजम् ॥ चतुरङ्गुलमुत्सेधंतस्यद्व्यङ्गुलमेववा ॥४॥ वितस्तिद्विगुणोन्नत्यानाभिमन्तःप्रचक्षते ॥ मध्यंवमध्यमांगुल्या मध्यमोत्तमपर्व्वणोः ॥ ५ ॥ अंगुलिःकथ्यतेसद्भिस्तच्चतुर्विंशतिःकरः ॥ मेखलानांत्रयंवापिद्वयमेकमथापिवा ॥६ ॥ यथाशोभंप्रकुर्व्वीतश्लक्ष्णमिष्टंमृदास्थिरम् ॥ अश्वत्थपत्रवद्योनिंगजाधरवदेववा ॥ ७॥ मेखलामध्यतःकुर्य्यात्पश्चिमेदक्षिणेऽपिवा ॥ शोभनामग्रतःकिंचिन्निम्नामुन्मीलिकांशनैः॥८॥ अग्रेणकुण्डाभिमुखींकिञ्चिदुत्सृज्यमेखलाम् ॥ नोत्सेधनियमोवेद्याःसामार्द्वीवाथसैकती ॥ ९ ॥ मण्डलंगोशकृत्तोयैर्मानंपात्रस्यनोदितम् ॥ कुण्डंचमृन्मयींवेदीमालिपेद्गोमयाम्बुना ॥ १० ॥ प्रक्षाल्यतापयेत्पात्रंप्रोक्षयेदन्यदम्भसा ॥ स्वसूत्रोक्तप्रकारेणकुण्डादौविलिखेत्ततः ॥ ११ ॥ सम्प्रोक्ष्यकल्पयेद्दर्भैःपुष्पैर्वावह्निविष्टरम् ॥ अर्च्चनार्थंचहोमार्थंसर्व्वद्रव्याणिसाधयेत् ॥ १२ ॥ प्रक्षाल्यक्षालनीयानिप्रोक्षण्याप्रोक्ष्यशोधयेत् ॥ मणिजंकाष्ठजंवाथश्रोत्रियागारसम्भवम् ॥ १३ ॥ अन्यंवागर्हितंवह्निंततःसाधारमानयेत् ॥ त्रिःप्रदक्षिणमावृत्यकुण्डादेरुपरिक्रमात् ॥ १४ ॥ वह्निबीजंसमुच्चार्य्यत्वादधीताग्निमासने ॥ योनिमार्गेणवातद्वदात्मनःसंमुखेनवा ॥ १५ ॥ योनिप्रदेशगःसर्व्वंकुण्डेकुर्य्याद्विचक्षणः ॥ स्वनाभ्यन्तःस्थितंवह्निंतद्रंध्राद्विस्फुलिङ्गवत् ॥ १६ ॥ निर्गम्यपावकेबाह्येलीनंबिम्बाकृतिंस्मरेत् ॥ आज्यसंस्कारपर्य्यन्तमन्वाधानपुरःसरम् ॥ १७ ॥ स्वसूत्रोक्तक्रमात्कुर्य्यान्मूलमन्त्रेणमन्त्रवित् ॥ शिवमूर्त्तिसमभ्यर्च्यततोदक्षिणपार्श्वतः ॥ १८ ॥ न्यस्यमन्त्रंघृतेमुद्रांदर्शयेद्धेनुसंज्ञिताम् ॥ स्रुक्स्रुवौतैजसौग्राह्यौनकांस्यायससै

सका: ॥ १९ ॥ यज्ञदारुमयौवापिस्मात्तौवाशिल्पसम्मतौ ॥ पर्णेवाब्रह्मवृक्षादेरच्छिद्रेमध्यउत्थिते ॥ २०॥ संमृज्यदर्भैस्तौवह्नौसन्ताप्यप्रोक्षयेत्पुनः॥
परिषिच्यस्वसूत्रोक्तक्रमेणशिवपूर्व्वकैः ॥ २१ ॥ जुहुयादष्टभिर्बीजैरग्निसंस्कारसिद्धये ॥ भ्रुंस्तुंब्रुंश्रुंक्रमेणैवपुंड्रुंद्रुमित्यतःपरम् ॥ २२ ॥ बीजानि
सप्तसप्तानांजिह्वानामनुपूर्व्वशः ॥ त्रिशिखामध्यमाजिह्वाबहुरूपसमाह्वया ॥२३ ॥ तस्याःशिखैकादक्षिणतोज्वलन्तीवामतःपरा ॥ हिरण्याप्रागुदग्जि
ह्वाकनकापूर्व्वतःस्थिता ॥ २४ ॥ रक्ताग्नेयीनैर्ऋतीचकृष्णान्यासुप्रभामता ॥ अतिरक्तामरुज्जिह्वास्वनामानुगुणप्रभा ॥ २५ ॥ स्वबीजानन्तरंवा
च्याःस्वाहान्ताश्चयथाक्रमम् ॥ जिह्वामन्त्रैस्तुतैर्हुत्वाजिह्वास्वेकैकशःक्रमात् ॥ २६ ॥ रुंवह्नयेचस्वाहेतिमध्येहुत्वाहुतित्रयम्॥ सर्पिषावासमिद्भिर्वापि
रिषेचनमाचरेत् ॥ २७ ॥ एवंकृतेशिवाग्निःस्यात्स्मरेत्तत्रशिवासनम् ॥ तत्रावाह्ययजेद्देवमर्द्धनारीश्वरंशिवम् ॥ २८ ॥ दीपान्तंपरिषि
च्याथसमिद्धोमंसमाचरेत् ॥ ताःपालाशयपरावापियज्ञियाद्वादशाङ्गुलाः ॥ २९ ॥ अवक्रानस्वयंशुष्काःसत्वचोनिर्व्रणाःसमाः ॥ दशाङ्गुलावा
विहिताःकनिष्ठाङ्गुलिसम्मिताः ॥ ३० ॥ प्रादेशमात्रावालाभेहोतव्याःसकलाअपि ॥ दूर्व्वापत्रसमाकारांचतुरङ्गुलमायताम् ॥ ३१ ॥ दद्यादाज्याहु
तिंपश्चादन्नमक्षप्रमाणतः ॥ लाजांस्तथासर्षपांश्चयवांश्चैवतिलांस्तथा ॥ ३२ ॥ सर्पिषाक्तानिभस्मानिलेह्यचोष्याणिसम्भवे ॥ दशैवाहुतयस्तत्रपञ्चवा
तिस्रएववा ॥३३॥होतव्याःशक्तितोदद्यादेकामेवाथवाहुतिम्॥स्रुवेणाज्यंसमित्पाण्यास्रुचाशेषान्करेणवा॥३४॥ तत्रादिव्येनहोतव्यंतीर्थेनार्षेणवापिच ॥
द्रव्येणैकेनवालाभेजुहुयाच्छ्रद्धयापुनः॥ ३५॥प्रायश्चित्तायजुहुयान्मन्त्रयित्वाहुतित्रयम्॥ततोहोमावशिष्टेनघृतेनापूर्य्यवैस्रुचम्॥३६॥निधायपुष्पंतस्या
ग्रेस्रुवेणाधोमुखेनताम् ॥ सदर्भेणसमाच्छाद्यमूलेनाञ्जलिनोत्थितः॥३७॥वौषडन्तेनजुहुयाद्धारान्तुयवसम्मिताम् ॥ इत्थंपूर्णाहुतिंकृत्वापरिषिञ्चेच्चपूर्व्व
वत्॥३८॥ततउद्वास्यदेवेशंगोपयेत्तुहुताशनम्॥ तमप्युद्वास्यवानाभौयजेत्सन्धायनित्यशः ॥३९॥अथवावाह्निमानीयशिवशास्त्रोक्तवर्त्मना ॥ वागीशो
गर्भसम्भूतंसंस्कृत्यविधिवद्यजेत् ॥४०॥ अन्वाधनंपुरःकृत्वापरिधीन्परिधायच ॥ पात्राणिद्वन्द्वरूपेणनिक्षिप्येष्ट्वाशिवंतथा ॥४१॥ संशोध्यप्रोक्षणीपात्रं
प्रोक्ष्यान्यानितदम्भसा ॥ प्रणीतापात्रमैशान्यांविन्यस्यापूरितंजलैः ॥ ४२ ॥ आज्यसंस्कारपर्य्यन्तंकृत्वासंशोध्यस्रुक्स्रुवौ॥ गर्भाधानंपुंसवनंसीमन्तो
न्नयनंततः ॥ ४३ ॥ कृत्वापृथक्पृथग्हुत्वाजातमग्निंविचिन्तयेत् ॥ त्रिपादंसप्तहस्तञ्चचतुःशृङ्गंद्विशीर्षकम् ॥ ४४ ॥ मधुपिङ्गत्रिनयनंसकपर्द्देन्दुशे
खरम् ॥ रक्तंरक्ताम्बरालेपमाल्यभूषणभूषितम् ॥ ४५ ॥ सर्व्वलक्षणसम्पन्नंसोपवीतंत्रिमेखलम् ॥ शक्तिमन्नंस्रक्स्रुवौचदधानंदक्षिणैःकरैः ॥ ४६ ॥
तोमरंतालवृन्तंचघृतपात्रंतथेतरैः ॥ जातंध्यात्वैवमाकारंजातकर्म्मसमाचरेत् ॥ ४७ ॥ नालापनयनंकृत्वाततःसंशोध्यसूतकम् ॥ शिवाग्नेरुचिनामा

स्यकृत्वाहुतिपुरःसरम् ॥ ४८ ॥ पित्रोर्विसर्ज्जनंकृत्वाचौलोपनयनादिकम् ॥ आतोर्यामावसानान्तंकृत्वासंस्कारमस्यतु ॥ ४९ ॥ इध्माघारादिहोमं
चकृत्वास्विष्टकृतंततः॥रुमित्यनेनबीजेनपरिषिञ्चेत्ततःपरम् ॥५०॥ब्रह्मविष्णुशिवेशानांलोकेशानांतथैवच ॥ तदस्त्राणांचपरितःकृत्वापूजांयथाक्रमम्
॥५१॥धूपदीपादिसिद्ध्यर्थंवन्हिमुद्धृत्यकृत्यवित्॥साधयित्वाज्यपूर्व्वाणिद्रव्याणिपुनरेवच॥५२॥ कल्पयित्वासनंवन्हौतत्रावाह्ययथापुरा॥सम्पूज्यदेवं
देवींचततःपूर्णान्तमाचरेत् ॥५३॥ अथवास्वाश्रमोक्तन्तुवह्निकर्म्मशिवार्पणम् ॥ बुद्ध्याशिवाश्रमीकुर्य्यान्नचतत्रापरोविधिः ॥५४॥ शिवाग्नेर्भस्मसंग्राह्य
मग्निहोत्रोद्भवन्तुवा ॥ वैवाहाग्निभवञ्चापिपक्कंशुचिसुगन्धिच ॥ ५५ ॥ कपिलायाःशकृच्छस्तंगृहीतंगगनेऽपतत् ॥ नक्लिन्नंनातिकठिनंनदुर्गन्धंनशो
षितम् ॥ ५६ ॥ उपर्य्यधःपरित्यज्यगृह्णीयात्पतितंयदि ॥ पिण्डीकृत्यशिवाग्न्यादौतत्क्षिपेन्मूलमन्त्रतः ॥ ५७ ॥ अपक्कमतिपक्कञ्चसन्त्यज्यभसितं
सितम् ॥ आदायवासमालोड्यभस्माधारेविनिक्षिपेत् ॥ ५८ ॥ सुकृतेसुदृढेशुद्धेक्षालितेप्रोक्षितेशुभे ॥ विन्यस्तमन्त्रेमन्त्रेणपात्रेभस्मविनिक्षिपेत्
॥ ५९ ॥ तैजसंदारवंवापिमृन्मयंशैलमेवच ॥ अन्यद्वाशोभनंशुद्धंभस्माधारंप्रकल्पयेत् ॥ ६० ॥ समेदेशेशुभेशुद्धेधनवद्भस्मनिक्षिपेत् ॥ प्रस्थितो
भस्मगृह्णीयात्स्वयञ्चानुचरोऽपिवा ॥ ६१ ॥ नचायुक्तकरेदद्यान्नैवाशुचितलेक्षिपेत् ॥ नसंस्पृशेच्चनीचाङ्गैर्नोपेक्षेतनलंघयेत् ॥ ६२ ॥ तस्माद्भसित
मादायविनियुञ्जीतमन्त्रतः ॥ कालेषूक्तेषुनान्यत्रनायोग्येभ्यःप्रदापयेत् ॥ ६३ ॥ भस्मसंग्रहणंकुर्य्याद्देवेऽनुद्वासितेसति ॥ उद्वासनेकृतेयस्माच्चण्डभ
स्मप्रजायते ॥ ६४ ॥ अग्निकार्य्येकृतेपश्चाच्छिवशास्त्रोक्तमार्गतः ॥ स्वसूत्रोक्तप्रकाराद्वाबलिकर्म्मसमाचरेत् ॥ ६५ ॥ अथविद्यासनंन्यस्यसुप्रलिप्ते
तुमण्डले ॥ विद्याकोशंप्रतिष्ठाप्ययजेत्पुष्पादिभिःक्रमात्॥६६॥विद्यायाःपुरतःकृत्वागुरोरपिचमण्डलम्॥तत्रासनवरंकृत्वापुष्पाद्यैर्गुरुमर्च्चयेत्॥६७॥
ततोऽनुपूजयेत्पूज्यान्भोजयेच्चबुभुक्षितान्॥ततःस्वयञ्चभुञ्जीतशुद्धमन्नंयथासुखम् ॥६८॥ निवेदितञ्चवादेवेतच्छेषञ्चात्मशुद्धये ॥ श्रद्धधानोनलोभेनन
चण्डायसमर्पितम् ॥६९॥ गन्धमाल्यादियच्चान्यत्तत्राप्येषसमोविधिः॥तत्रतत्राशिवोऽस्मीतिबुद्धिंकुर्य्याद्विचक्षणः॥७०॥भुक्त्वाचम्यशिवंध्यात्वाहृदये
मूलमुच्चरेत्॥कालशेषंनयेद्योग्यैःशिवशास्त्रकथादिभिः॥७१॥रात्रौव्यतीतेपूर्व्वांशेकृत्वापूजांमनोहराम् ॥ शिवयोःशयनन्त्वेकंकल्पयेदतिशोभनम् ॥
॥७२॥ भक्ष्यभोज्याम्बरालेपपुष्पमालादिकंतथा॥मनसाकर्म्मणावापिकृत्वासर्व्वंमनोहरम्॥७३॥ ततोदेवस्यदेव्याश्चपादमूलेशुचिःस्वपेत् ॥ गृहस्थो
भार्य्ययासार्द्धंतदन्योऽपितुकेवलः ॥ ७४ ॥ प्रत्यूषसमयेबुद्ध्वामन्त्रमाद्यमुदीरयेत् ॥ प्रणम्यमनसादेवंसाम्बंसगणमव्ययम् ॥ ७५ ॥ देशकालोचितं
कृत्वाशौचाद्यमपिशक्तितः ॥ शङ्खादिनिनदैर्दिव्यैर्देवंदेवींचबोधयेत् ॥ ७६ ॥ ततस्तत्समयोन्निद्रैःपुष्पैरतिसुगन्धिभिः ॥ निर्व्वर्त्त्यशिवयोःपूजांप्रार

भेतपुरोदितम् ॥ ७७ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेहोमादिविधिकथनंनामएकविंशोऽध्यायः ॥ २१ ॥ उपमन्युरुवाच ॥अतः परंप्रवक्ष्यामिशिवाश्रमनिषेविणाम् ॥ शिवशास्त्रोक्तमार्गेणनैमित्तिकविधिक्रमम् ॥ १ ॥ सर्व्वेष्वपिचमासेषुपक्षयोरुभयोरपि ॥ अष्टम्यांचचतुर्दश्यांतथापर्व्वणिचक्रमात् ॥ २ ॥ अयनेविषुवेचैवग्रहणेषुविशेषतः ॥ कर्त्तव्यामहतीपूजाह्यधिकावापिशक्तितः ॥ ३ ॥ मासिमासियथान्यायंब्रह्मकूर्चंप्रसाध्यतु ॥ स्नापयित्वाशिवंतेनपिबेच्छेषमुपोषितः ॥ ४ ॥ ब्रह्महत्यादिदोषाणामतिवमहतामपि ॥ निष्कृतिर्ब्रह्मकूर्चस्यपानान्नान्याविशिष्यते ॥ ५ ॥ पौषेतुपुष्यनक्षत्रेकुर्य्यान्नीराजनंविभोः ॥ माघेमघाख्येनक्षत्रेप्रदद्याद्घृतकम्बलम् ॥ ६ ॥ फाल्गुनेचोत्तरान्तेवैप्रारभेतमहोत्सवम् ॥ चैत्रेचित्रापौर्णमास्यांदोलांकुर्य्याद्यथाविधि ॥ ७ ॥ वैशाखेऽपिचवैशाख्यांकुर्य्यात्पुष्पमहालयम् ॥ ज्येष्ठेमूलाख्यनक्षत्रेशीतकुम्भंप्रदापयेत् ॥ ८ ॥ आषाढेचोत्तराषाढपवित्रारोपणंतथा ॥ श्रावणेप्राकृतान्यानिमण्डलानिप्रकल्पयेत् ॥ ९ ॥ श्रविष्ठाख्येतुनक्षत्रेप्रौष्ठपद्यांततःपरम् ॥ प्रोक्षयेच्चजलक्रीडांपूर्व्वाषाढाश्रयेदिने ॥ १० ॥ आश्वयुज्यांततोदद्यात्पायसंचनवौदनम् ॥ अग्निकार्य्यंचतेनैवकुर्य्याच्छतभिषग्दिने ॥ ११ ॥ कार्त्तिक्यांकृत्तिकायोगेदद्याद्दीपसहस्रकम् ॥ मार्गशीर्षेतथार्द्रायांघृतेनस्नापयेच्छिवम् ॥ १२ ॥ अशक्तस्तेषुकालेषुकुर्य्यादुत्सवमेववा ॥ आस्थानंवामहापूजामाधेकंवासमर्च्चनम् ॥ १३ ॥ प्रवृत्तेऽपिचकल्याणेप्रशस्तेष्वपिकर्म्मसु ॥ दौर्म्मनस्येदुराचारेदुःस्वप्नेदुष्टदर्शने ॥ १४ ॥ उत्पातेवाशुभेऽन्यस्मिन्रोगेवाप्रबलेऽथवा ॥ स्नानपूजाजपध्यानहोमदानादिकाःक्रियाः ॥ १५ ॥ निमित्तानुगुणाःकार्य्याःपुरश्चरणपूर्व्विकाः ॥ शिवानलेचविहतेपुनःसन्धानमाचरेत् ॥ १६ ॥ यएवंशिवधर्म्मिष्ठोवर्त्ततेनित्यमुद्यतः ॥ तस्यैकजन्मनामुक्तिंप्रयच्छतिमहेश्वरः ॥ १७ ॥ एतद्यथोत्तरंकुर्य्यान्नित्यनैमित्तिकेषुयः ॥ दिव्यंश्रीकण्ठनाथस्यस्थानमाद्यंसगच्छति ॥ १८ ॥ तत्रभुक्त्वामहाभोगान्कल्पकोटिशतंनरः ॥ कालान्तरेच्युतस्तस्मादौमंकौमारमेवच ॥१९॥ सम्प्राप्यवैष्णवंब्राह्मंरुद्रलोकंविशेषतः ॥ तत्रोषित्वाचिरंकालंभुक्त्वाभोगान्यथेप्सितान् ॥२०॥ पुनश्चोर्ध्वंगतस्तस्मादतीत्यस्थानपंचकम् ॥ श्रीकण्ठाज्ज्ञानमासाद्यपरंशिवपुरंव्रजेत्॥२१॥ अर्द्धंचर्य्यारतश्चापिद्विरावृत्त्यैवमेवतु॥पश्चाज्ज्ञानंसमासाद्याशिवसायुज्यमाप्नुयात्॥२२॥अर्द्धार्द्धंचरितोयस्तुदेहीदेहक्षयात्परम् ॥ अण्डान्तंवौद्धमव्यक्तमतीत्यभुवनद्वयम् ॥२३॥सम्प्राप्यपौरुषंरौद्रंस्थानमद्रीन्द्रजापतेः॥अनेकयुगसाहस्रंभुक्त्वाभोगाननेकधा॥२४॥पुण्यक्षयेक्षितिंप्राप्यकुलेमहतिजायते॥तत्रापिपूर्व्वसंस्कारवशेनसमहाद्युतिः॥२५॥पशुधर्म्मान्परित्यज्यशिवधर्म्मरतोभवेत्॥तद्धर्मगौरवादेवध्यात्वाशिवपुरंव्रजेत्॥२६॥ भोगांश्चविविधान्भुक्त्वाविद्येश्वरपदंव्रजेत् ॥ तत्रविद्येश्वरैःसार्द्धंभुक्त्वाभोगान्बहून्क्रमात् ॥ २७ ॥ अण्डस्यान्तर्बहिर्वाथसकृदावर्त्ततेपुनः ॥ ततो

लब्ध्वाशिवज्ञानंपरांभक्तिमवाप्यच ॥ २८ ॥ शिवसाधर्म्यमासाद्यनभूयोविनिवर्त्तते ॥ यश्चातीवशिवासक्तोविषयासक्तचित्तवत् ॥ २९ ॥ शिवधर्म्मा
नसौकुर्व्वन्नकुर्वन्वापिमुच्यते ॥ एकावृत्तोद्विरावृत्तस्त्रिरावृत्तोनिवर्त्तकः ॥ ३० ॥ नपुनश्चक्रवृत्तःस्याच्छिवधर्म्माधिकारवान् ॥ तस्माच्छिवाश्रितोभू
त्वायेनकेनापिहेतुना ॥ ३१ ॥ शिवधर्म्मेमतिंकुर्य्याच्छ्रेयसेचेत्कृतोद्यमः ॥ नात्रनिर्ब्बन्धयिष्यामोवयंकञ्चनकेनचित् ॥ ३२ ॥ निर्ब्बन्धोऽप्यत्रपापे
भ्यःप्रकृत्यैवनरोचते ॥ रोचतेवापरेभ्यस्तुपुण्यसंस्कारगौरवात् ॥ ३३ ॥ संसारकारणंह्येषांनप्ररोढुमलंभवेत् ॥ प्रकृत्यनुगुणंतस्माद्विमृश्यैतदशे
षतः ॥३४॥ शिवधर्म्मेऽधिकुर्व्वीतयदीच्छेच्छिवमात्मनः ॥३५॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेद्वाविंशोऽध्यायः ॥२२॥ श्रीकृष्ण
उवाच ॥ भगवंस्त्वन्मुखादेवश्रुतंश्रुतिसमंमया ॥ स्वाश्रितानांशिवप्रोक्तंनित्यंनैमित्तिकंतथा ॥ १ ॥ इदानींश्रोतुमिच्छामिशिवधर्म्माधिकारिणाम् ॥
काम्यमप्यस्तिचेत्कर्म्मवक्तुमर्हसिसाम्प्रतम्॥२॥उपमन्युरुवाच॥अस्त्यैहिकफलंकिञ्चिदामुष्मिकफलंतथा ॥ऐहिकामुष्मिकञ्चापितच्चपञ्चविधंपुनः॥३॥
किञ्चित्क्रियामयंकर्म्मकिंचित्कर्म्मतपोमयम्॥जपध्यानमयंकिञ्चित्किञ्चित्सर्व्वमयंतथा ॥४॥ क्रियामयंतथाभिन्नंहोमदानार्चनक्रमात्॥सर्व्वंशक्तिमता
मेवनान्येषांसफलंभवेत्॥५॥शक्तिश्चाज्ञामहेशस्यशिवस्यपरमात्मनः ॥तस्मात्काम्यानिकर्म्माणिकुर्य्यादाज्ञाधरोद्विजः ॥६॥ अथवक्ष्यामिकाम्यानामि
हामुत्रफलप्रदम्॥शैवैर्माहेश्वरैश्चैवकार्य्यमन्तर्बहिःक्रमात्॥७॥शिवोमहेश्वरश्चेतिनात्यन्तामिहभिद्यते॥यथातथानभिद्यन्तेशैवामाहेश्वराअपि ॥८॥ शिवा
श्रितेषुतेशैवाज्ञानयज्ञरतानराः॥माहेश्वराःसमाख्याताःकर्म्मयज्ञरताभुवि॥९॥तस्मादभ्यन्तरेकुर्य्युःशैवामाहेश्वराबहिः ॥ नातिप्रयोगेभिद्येतवक्ष्यमाण
स्यकर्म्मणः ॥ १० ॥ परीक्ष्यभूमिंविधिवद्गन्धवर्णरसादिभिः ॥ मनोऽभिलषितेतत्रवितानविततांम्बरे ॥ ११ ॥ सुप्रलिप्तेमहीपृष्ठेदर्पणोदरसन्निभे ॥
प्राचीमुत्पादयेत्पूर्व्वंशास्त्रदृष्टेनवर्त्मना ॥ १२ ॥ एकहस्तंद्विहस्तंवामण्डलंपरिकल्पयेत् ॥ आलिखेद्विमलंपद्ममष्टपत्रंसकर्णिकम् ॥ १३ ॥ रत्नहेमा
दिभिश्चूर्णैर्यथासम्भवसम्भृतैः ॥ पञ्चावरणसंयुक्तंबहुशोभासमन्वितम् ॥ १४ ॥ दलेषुसिद्धयःकल्प्याःकेशरेषुसशक्तिकाः ॥ रुद्रावामादयस्त्वष्टौपूर्व्वा
दिदलतःक्रमात् ॥ १५ ॥ कर्णिकायाञ्चवैराग्यंबीजेषुनवशक्तयः ॥ कन्देशिवात्मकोधर्म्मोनालेज्ञानंशिवात्मकम् ॥ १६ ॥ कर्णिकोपरिवाह्नेयंम
ण्डलंसौरमैन्दवम् ॥ शिवविद्यात्मतत्त्वाख्यंतत्त्वत्रयमतःपरम् ॥ १७ ॥ सर्व्वासनोपरिसुखंविचित्रकुसुमान्वितम्॥पञ्चावरणसंयुक्तंपूजयेदम्बयासह ॥
॥ १८ ॥ शुद्धस्फटिकसङ्काशंजटामुकुटभूषितम् ॥ शार्दूलचर्म्मवसनंकिञ्चित्स्मितमुखाम्बुजम् ॥ १९ ॥ रक्तपद्मदलप्रख्यपादपाणितलाधरम् ॥
सर्व्वलक्षणसंपन्नंसर्व्वाभरणभूषितम् ॥ २० ॥ दिव्यायुधवरैर्युक्तंदिव्यगन्धानुलेपनम् ॥ पञ्चवक्त्रंदशभुजंचन्द्रखण्डशिखामणिम् ॥ २१ ॥ अस्यपूर्व्व

मुखंसौम्यंबालार्कसदृशप्रभम् ॥ त्रिलोचनारविन्दाढ्यंकृतबालेन्दुशेखरम्॥२२॥दक्षिणंनीलजीमूतसमानरुचिरप्रभम् ॥ भृकुटीकुटिलंघोरंरक्तवृत्तेक्षण
त्रयम् ॥ २३ ॥ दंष्ट्राकरालंदुर्द्धर्षंस्फुरिताधरपल्लवम् ॥ उत्तरंविद्रुमप्रख्यंनीलालकविभूषितम् ॥ २४ ॥ सविलासंत्रिनयनंचन्द्राभरणशेखरम् ॥
पश्चिमंपूर्णचन्द्राभंलोचनत्रितयोज्ज्वलम् ॥ २५ ॥ चन्द्ररेखाधरंसौम्यंमन्दस्मितमनोहरम् ॥ पञ्चमंस्फटिकप्रख्यमिन्दुरेखासमुज्ज्वलम् ॥ २६ ॥
अतीवसौम्यमुत्फुल्ललोचनत्रितयोज्ज्वलम् ॥ दक्षिणेशूलपरशुवज्रखड्गानलोज्ज्वलम् ॥ २७ ॥ सव्येचनागनाराचघण्टापाशांकुशोज्ज्वलम् ॥ निवृ
त्त्याजानुसम्बद्धमानाभेश्चप्रतिष्ठया ॥ २८ ॥ आकण्ठंविद्ययातद्वदाललाटन्तुशान्तया ॥ तदूर्द्ध्वंशान्त्यतीताख्यकलयापरयातथा ॥ २९ ॥ पञ्चाध्व
व्यापिनंतस्मात्कलापञ्चकविग्रहम् ॥ ईशानमुकुटंदेवंपुरुषास्यंपुरातनम् ॥ ३० ॥ अघोरहृदयंतद्वद्वामगुह्यंमहेश्वरम् ॥ सद्यपादश्चतन्मूर्त्तिमष्टत्रिंश
त्कलामयम् ॥ ३१ ॥ मातृकामयमीशानंपञ्चब्रह्ममयंतथा ॥ ओंकाराख्यमयञ्चैवहंसशक्त्यासमन्वितम् ॥ ३२ ॥ पञ्चाक्षरमयंदेवंषडक्षरमयन्तुवा ॥
अङ्गषट्कमयञ्चैवजातिषट्कसमन्वितम् ॥ ३३ ॥ तथेच्छात्मिकयाशक्त्यासमारूढांकमण्डलम् ॥ ज्ञानाख्ययादक्षिणतोवामतश्चक्रियाख्यया ॥३४॥
तत्त्वत्रयमयंसाक्षाद्विद्यामूर्त्तिंसदाशिवम् ॥ मूर्त्तिमूलेनसंकल्प्यसकलीकृत्यचक्रमात् ॥ ३५ ॥ सम्पूज्यचयथान्यायमर्घ्यान्तंमूलविद्यया ॥ मूर्त्तिमन्तं
शिवंसाक्षाच्छक्त्यापरमयासह ॥ ३६ ॥ तत्रावाह्यमहादेवंसदसद्व्यक्तिवर्ज्जितम् ॥ पञ्चोपकरणंकृत्वापूजयेत्परमेश्वरम् ॥ ३७ ॥ ब्रह्मभिश्चषडङ्गैश्चत
तोमातृकयासह ॥ प्रणवेनाशिवेनैवशक्तियुक्तेनचक्रमात् ॥ ३८ ॥ शान्तेनचतथान्यैश्चवेदमन्त्रैश्चकृत्स्नशः ॥ पूजयेत्परमंदेवंकेवलेनशिवेनवा ॥३९॥
पाद्यादिमुखवासान्तंकृत्वाथस्नपनंविना ॥ पंचावरणपूजान्तुआरभेतयथाक्रमम् ॥ ४० ॥ तत्रादौशिवयोःपार्श्वेदक्षिणेवामतःक्रमात् ॥ गंधाद्यैरर्च्च
येत्पूर्व्वंदेवौहेरम्बषण्मुखौ ॥ ४१ ॥ ततोब्रह्माणिपरितईशानादियथाक्रमम् ॥ सशक्तिकानिसद्यान्तंप्रथमावरणंयजेत् ॥ ४२ ॥ षडङ्गान्यपितत्रैवहृद
यादीन्यनुक्रमात् ॥ शिवस्य चशिवायाश्चवाह्नियादिसमर्च्चयेत् ॥ ४३ ॥ तत्रवामादिकान्रुद्रानष्टौवामादिशक्तिभिः ॥ अर्च्चयेद्धानवापश्चात्पूर्व्वादिपरितः
क्रमात् ॥ ४४ ॥ प्रथमावरणंप्रोक्तंद्वितीयावरणंशृणु ॥ अनन्तंपूर्व्वदिक्पत्रेतच्छक्तिंतस्यवामतः ॥ ४५ ॥ सूक्ष्मंदक्षिणदिक्पत्रेशक्त्यासहसमर्च्चयेत्
ततःपश्चिमदिक्पत्रेसहशक्त्याशिवोत्तमम् ॥ ४६ ॥ तथैवोत्तरदिक्पत्रेएकनेत्रंसमर्च्चयेत् ॥ एकरुद्रंचतच्छक्तिंपश्चादीशानदिग्दले ॥ ४७ ॥ त्रिमू
र्त्तितस्यशक्तिंचपूजयेदग्निदिग्दले ॥ श्रीकण्ठंनैर्ऋतेपत्रेतच्छक्तिंतस्यवामतः ॥ ४८ ॥ तथैवमारुतेपत्रेशिखण्डीशंसमर्च्चयेत् ॥ द्वितीयावरणेचेज्याः
सर्व्वतश्चक्रवर्त्तिनः ॥ ४९ ॥ तृतीयावरणेपूज्याःशक्तिभिश्चाष्टमूर्त्तयः ॥ अष्टासुक्रमशोदिक्षुपूर्व्वादिपरितःक्रमात् ॥ ५० ॥ भवःशर्व्वस्तथेशानो

रुद्रःपशुपतिस्ततः ॥ उग्रोभीमोमहादेवइत्यष्टौमूर्त्तयःक्रमात् ॥ ५१ ॥ अनन्तरंततश्चैषांमहादेवादयःक्रमात् ॥ शक्तिभिःसहसम्पूज्यास्तत्रैकादश मूर्त्तयः ॥ ५२ ॥ महादेवःशिवोरुद्रःशङ्करोनीललोहितः ॥ ईशानोविजयोभीमोदेवदेवोभवोद्भवः ॥ ५३ ॥ कपालीशश्चकथ्यन्ततेथैकादश शक्तयः ॥ तत्राष्टौप्रथमंपूज्यावाग्नेयादियथाक्रमम् ॥ ५४ ॥ देवदेवःपूर्वपत्रईशान्यामग्निगोचरे ॥ भवोद्भवस्तयोर्मध्येकपालीशस्ततःपरः ॥ ५५ ॥ तस्मिन्नावरणेभूयोवृषेन्द्रंपुरतोयजेत् ॥ नन्दिनंदक्षिणेतस्यमहाकालंतथोत्तरे ॥ ५६ ॥ शास्तारंवह्निदिक्पत्रेमातृर्दक्षिणदिग्दले ॥ गजास्यंनैर्ऋतेपत्रे षण्मुखंवारुणेपुनः ॥ ५७ ॥ ज्येष्ठांवायुदलेगौरीमुत्तरेचण्डमैश्वरे ॥ शास्त्रनन्दीशयोर्मध्येमुनीन्द्रंवृषभंयजेत् ॥ ५८ ॥ महाकालस्योत्तरतःपिङ्गल न्तुसमर्च्चयेत् ॥ शास्तृमातृसमूहस्यमध्येभृङ्गीश्वरंततः ॥ ५९ ॥ मातृविघ्नेशमध्येतुवीरभद्रंसमर्च्चयेत्॥स्कन्दविघ्नेशयोर्मध्येयजेद्देवींसरस्वतीम्॥६०॥ ज्येष्ठाकुमारयोर्मध्येश्रियंशिवपदार्च्चिकाम् ॥ ज्येष्ठागणाम्बयोर्मध्येमहामोटींसमर्च्चयेत् ॥ ६१ ॥ गणाम्बाचंडयोर्मध्येदेवींदुर्गांप्रपूजयेत् ॥ अत्रैवावरणे भूयःशिवानुचरसंहतिम् ॥ ६२ ॥ रुद्रप्रमथभूताख्यांविविधांचसशक्तिकाम् ॥ शिवायाश्चसखीवर्गंयजेद्ध्यात्वासमाहितः ॥ ६३ ॥ एवंतृतीयावरणे वितितेपूजितेसति ॥ चतुर्थावरणंध्यात्वाबहिस्तस्यसमर्च्चयेत् ॥ ६४ ॥ भानुःपूर्वदलेपूज्योदक्षिणेचतुराननः ॥ रुद्रोवरुणदिक्पत्रेविष्णुरुत्तरदिग्द ले ॥ ६५ ॥ चतुर्णामपिदेवानांपृथगावरणान्यथ ॥ तस्याङ्गानिषडेवादौदीप्ताद्याभिश्चशक्तिभिः ॥६६ ॥ दीप्तासूक्ष्माजयाभद्राविभूतिर्विमलाक्रमात्॥ अमोघाविद्युताचैवपूर्वादिपरितःस्थिताः ॥ ६७ ॥ द्वितीयावरणेपूज्याश्चतस्रोमूर्त्तयःक्रमात् ॥ पूर्वाद्युत्तरपर्य्यन्ताःशक्तयश्चततःपरम् ॥ ६८ ॥ आदित्योभास्करोभानूरविश्चेत्यनुपूर्वशः ॥ अर्कोब्रह्मातथारुद्रोविष्णुश्चेतिविवस्वतः ॥ ६९ ॥ विस्तारापूर्वदिग्भागेसुतरादक्षिणेस्थिता ॥ बोध नीपश्चिमेभागेआप्यायिन्युत्तरेपुनः ॥ ७० ॥ उषांप्रभांतथाप्रज्ञांसन्ध्यामपिततःपरम् ॥ ऐशानादिषुकोणेषुद्वितीयावरणेयजेत् ॥ ७१ ॥ सोमम ङ्गारकश्चैवबुधंबुद्धिमतांवरम् ॥ बृहस्पतिंबृहद्बुद्धिंभार्गवंतेजसांनिधिम् ॥ ७२ ॥ शनैश्चरंतथाराहुंकेतुंधूम्रंभयङ्करम् ॥ समन्ततोयजेदेतांस्तृतीया वरणेक्रमात् ॥ ७३ ॥ अथवाद्वादशादित्यान्द्वितीयावरणेयजेत् ॥ तृतीयावरणेचैवराशीन्द्वादशपूजयेत् ॥७४॥ सप्तसप्तगणांश्चैवबहिस्तस्यसमन्ततः ॥ ऋषीन्देवांश्चगन्धर्वान्पन्नगानप्सरोगणान् ॥७५॥ग्रामण्यश्चतथायक्षान्यातुधानांस्तथाहयान् ॥ सप्तच्छन्दोमयांश्चैववालखिल्यांश्चपूजयेत् ॥ ७६ ॥ एवंतृतीयावरणेसमभ्यर्च्चयेद्दिवाकरम् ॥ ब्रह्माणमर्च्चयेत्पश्चात्त्रिभिरावरणैःसह ॥ ७७ ॥ हिरण्यगर्भंपूर्वस्यांविराजंदक्षिणेततः॥कालंपश्चिमदिग्भागे पुरुषञ्चोत्तरेयजेत् ॥७८॥ हिरण्यगर्भःप्रथमोब्रह्माकमलसन्निभः॥ कालोजात्यञ्जनप्रख्यःपुरुषःस्फटिकोपमः॥७९॥ त्रिगुणोराजसश्चैवतामसःसात्त्विक

स्तथा ॥ चत्वारएतेक्रमशःप्रथमावरणेस्थिताः ॥८०॥ द्वितीयावरणेपूज्याःपूर्व्वादिपरितःक्रमात् ॥ सनत्कुमारःसनकःसनन्दश्चसनातनः॥८१॥तृती
यावरणेपश्चादर्च्चयेच्चप्रजापतीन् ॥ अष्टौपूर्व्वाँश्चपूर्व्वादौत्रीन्प्राक्पश्चादनुक्रमात्॥८२॥ दक्षोरुचिर्भृगुश्चैवमरीचिश्चतथाङ्गिराः ॥ पुलस्त्यःपुलहश्चैवक्रतुर
त्रिश्चकश्यपः ॥८३॥वसिष्ठश्चेतिविख्याताःप्रजानांपतयस्त्विमे॥तेषांभार्य्याश्चतैःसार्द्धंपूजनीयायथाक्रमम् ॥ ८४ ॥ प्रसूतिश्चतथाऽऽकूतिःख्यातिःसम्भू
तिरेवच ॥ स्मृतिःप्रीतिःक्षमाचैवसन्नतिश्चानुसूयका ॥८५॥देवमातारुन्धतीचसर्व्वाःखलुपतिव्रताः ॥ शिवार्च्चनरतानित्यंश्रीमत्यःप्रियदर्शनाः॥८६॥
प्रथमावरणेवेदांश्चतुरोवाप्रपूजयेत् ॥ इतिहासपुराणानिद्वितीयावरणेपुनः ॥ ८७ ॥ तृतीयावरणेपश्चाद्धर्म्मशास्त्रपुरःसराः ॥ वैदिक्योनिखिलाविद्याः
पूज्याएवसमन्ततः ॥ ८८ ॥ पूर्व्वादिपुरतोवेदास्तदन्येतुयथारुचि ॥ अष्टधावाचतुर्द्धावाकृत्वापूजांसमन्ततः ॥ ८९ ॥ एवंब्रह्माणमभ्यर्च्चत्र्यंत्रिभिरा
वरणैर्युतम् ॥ दक्षिणेपश्चिमेपश्चाद्रुद्रंसावरणंयजेत् ॥ ९० ॥ तस्यब्रह्मषडङ्गानिप्रथमावरणंस्मृतम् ॥ द्वितीयावरणञ्चैवविद्येश्वरमयंतथा ॥ ९१ ॥
तृतीयावरणेभेदोविद्यतेसतुकथ्यते ॥ चतस्रोमूर्त्तयस्तस्यपूज्याःपूर्व्वादितःक्रमात् ॥ ९२ ॥ त्रिगुणःसकलोदेवःपुरस्ताच्छिवसंज्ञकः ॥ राजसोदक्षि
णेब्रह्मासृष्टिकृत्पूज्यतेभवः ॥ ९३ ॥ तामसःपश्चिमेचाग्निःपूज्यःसंहारकोहरः ॥ सात्त्विकःसुखकृत्सौम्येविष्णुर्विश्वपतिर्मृडः ॥ ९४ ॥ एवंपश्चिमदिग्भा
गेशम्भोःषड्विंशकंशिवम् ॥ समभ्यर्च्योत्तरेपार्श्वेततोवैकुण्ठमर्च्चयेत् ॥ ९५ ॥ वासुदेवंपुरस्तस्यप्रथमावरणेयजेत् ॥ अनिरुद्धंदक्षिणतःप्रद्युम्नंपश्चि
मेततः ॥ ९६ ॥ सौम्येसङ्कर्षणंपश्चाद्व्यत्ययस्तौवायजेदिमौ ॥ प्रथमावरणंप्रोक्तंद्वितीयावरणंशृणु ॥ ९७ ॥ मत्स्यःकूर्म्मोवराहश्चनारसिंहोऽथवामनः ॥
रामश्चान्यतमःकृष्णोभवानश्वमुखोऽपिच ॥ ९८ ॥ तृतीयावरणेचक्रंपूर्व्वभागेसमर्च्चयेत् ॥ नारायणाख्यंयाम्येऽस्त्रंक्वचिदव्याहतंयजेत् ॥ ९९ ॥
पश्चिमेपाञ्चजन्यञ्चशार्ङ्गंधनुरथोत्तरे ॥ एवंत्र्यावरणंसाक्षाद्विष्णवाख्यंपरमंहरिम् ॥ १०० ॥ महाविष्णुंसदाविष्णुंमूर्त्तींकृत्यसमर्च्चयेत् ॥ इत्थंविष्णो
श्चतुर्व्यूहंक्रमान्मूर्तींचतुष्टयम् ॥ १०१ ॥ पूजयित्वाथतच्छक्तीश्चतस्रःपूजयेत्क्रमात् ॥ प्रभामाग्नेयदिग्भागेनैर्ऋतेतुसरस्वतीम् ॥ १०२ ॥ गणाम्बि
कांचवायव्येलक्ष्मींरौद्रेसमर्च्चयेत् ॥ एवंभान्वादिमूर्त्तीनांतच्छक्तीनामनन्तरम् ॥ १०३ ॥ पूजांविधायलोकेशांस्तंत्रैवावरणेयजेत् ॥ इन्द्रमग्निंयमञ्चैव
निर्ऋतिंवरुणंतथा ॥ १०४ ॥ वायुंसोमंकुबेरंचपश्चादीशानमर्च्चयेत् ॥ एवंचतुर्थावरणंपूजयित्वाविधानतः ॥ १०५ ॥ आयुधानिमहेशस्यपश्चाद्बाह्ये
समर्च्चयेत् ॥ श्रीमत्त्रिशूलमैशानेवज्रंमाहेन्द्रदिङ्मुखे ॥ १०६ ॥ परशुंवन्हिदिग्भागेयाम्येसायकमर्च्चयेत् ॥ नैर्ऋतेतुयजेत्खड्गंपाशंवारुणगोचरे॥१०७॥
अंकुशंमारुतेभागेपिनाकंचोत्तरेयजेत् ॥ पश्चिमाभिमुखंरौद्रंक्षेत्रपालंसमर्च्चयेत् ॥ १०८ ॥ पंचमावरणञ्चैवसम्पूज्यानन्तरंबहिः ॥ सर्व्वावरणदेवानां

बहिर्वापंचमेऽथवा ॥ १०९ ॥ पंचमेमातृभिःसार्द्धमहोक्षंपुरतोयजेत् ॥ ततःसमन्ततःपूज्याःसर्व्वादेवयोनयः ॥ ११० ॥ खेचराऋषयःसिद्धादैत्या यक्षाश्चराक्षसाः ॥ अनन्ताद्याश्चनागेन्द्रानागैस्तत्तत्कुलोद्भवैः ॥ १११ ॥ डाकिनीभूतवेतालप्रेतभैरवनायकाः ॥ पातालवासिनश्चान्येनानायोनिषुस म्भवाः ॥ ११२ ॥ नद्यःसमुद्रागिरयःकाननानिसरांसिच ॥ पशवःपक्षिणोवृक्षाःकीटाद्याःक्षुद्रयोनयः ॥ ११३ ॥ नराश्चविविधाकारामृगाश्चक्षुद्रयोन यः ॥ भुवनान्यन्तरण्डस्यततोब्रह्माण्डकोटयः ॥११४॥ बहिरण्डादसंख्यानिभुवनानिसहाधिपैः ॥ ब्रह्माण्डाधारकारुद्रादशदिक्षुव्यवस्थिताः॥११५॥ यद्गौणंयच्चमायेयंयद्वाशाक्तंततःपरम् ॥ यत्किञ्चिदस्तिशब्दस्यवाच्यंचिदचिदात्मकम् ॥ ११६ ॥ तत्सर्व्वंशिवयोःपार्श्वेबुद्ध्वासामान्यतोयजेत् ॥ कृताञ्जलिपुटाःसर्व्वेचिन्त्याःस्मितमुखास्तथा ॥ ११७ ॥ प्रीत्यासम्प्रेक्षमाणाश्चदेवंदेवींचसर्व्वदा ॥ इत्थमावरणाभ्यर्चांकृत्वाव्याक्षेपशान्तये ॥ ११८ ॥ पुनरभ्यर्च्यदेवेशंपंचाक्षरमुदीरयेत् ॥ निवेदयेत्ततःपश्चाच्छिवयोरमृतोपमम् ॥ ११९ ॥ सुव्यञ्जनसमायुक्तंशुद्धंचारुम हाचरुम् ॥ द्वात्रिंशदाढकैर्मुख्यमधमन्त्वाढकावरम् ॥ १२० ॥ साधयित्वायथासम्पच्छ्रद्धयाविनिवेदयेत् ॥ ततोनिवेद्यपानीयंताम्बूलंचो पदंशकैः ॥ १२१ ॥ नीराजनादिकंकृत्वापूजाशेषंसमाचरेत् ॥ यागोपयोगद्रव्याणिविशिष्टान्येवसाधयेत् ॥ १२२ ॥ वित्तशाठ्यंनकुर्वीत भक्तिमान्विभवेसति ॥ शठस्योपेक्षकस्यापिव्यङ्गश्चैवानुतिष्ठतः ॥ १२३ ॥ नफलन्त्येवकर्म्माणिकाम्यानीतिसतांकथा ॥ तस्माच्छाठ्यमुपेक्षांचत्य क्त्वासर्व्वांगयोगतः ॥ १२४ ॥ कुर्य्यात्काम्यानिकर्म्माणिफलसिद्धिंयदीच्छति ॥ इत्थंपूजांसमाप्याथदेवंदेवींप्रणम्यच ॥ १२५ ॥ भक्त्यामनःसमा धायपश्चात्स्तोत्रमुदीरयेत्॥ ततःस्तोत्रजपस्यान्तेत्वष्टोत्तरशतावराम्॥१२६॥जपेत्पंचाक्षरींविद्यांसहस्रोत्तरमुत्सुकः॥ विद्यापूजांगुरोःपूजांकृत्वापश्चा द्यथाक्रमम्॥१२७॥यथोदयंयथाश्रद्धंसदस्यानपिपूजयेत्॥ततउद्वास्यदेवेशंसर्व्वैरावरणैःसह॥१२८॥मण्डलंगुरवेदद्याद्यागोपकरणैःसह॥शिवाश्रितेभ्यो वादद्यात्सर्व्वमेवानुपूर्व्वशः॥१२९॥अथवातच्छिवायैवशिवक्षेत्रेसमर्पयेत्॥शिवाग्नौवायजेद्देवंहोमद्रव्यैश्चसक्तुभिः ॥ १३० ॥ समभ्यर्च्ययथान्यायंसर्व्वा वरणदेवताः॥एषयोगेश्वरोनामत्रिषुलोकेषुविश्रुतः॥१३१॥नतस्मादधिकःकश्चिद्योगोऽस्तिभुवनेक्वचित्॥नतदस्तिजगत्यस्मिन्नसाध्यंयदनेनतु॥१३२॥ ऐहिकंवाफलंकिञ्चिदामुष्मिकफलन्तुवा ॥ इदमस्यफलंनेदमितिनैवनियम्यते ॥ १३३ ॥ श्रेयोरूपस्यकृत्स्नस्यतदिदंश्रेष्ठसाधनम् ॥ इदन्तुशक्यतेव क्तुंपुरुषेणयदर्थ्यते ॥ १३४ ॥ चिन्तामणेरिवैतस्मात्तत्तेनप्राप्यतेफलम् ॥ तथापिक्षुद्रमुद्दिश्यफलंनैतत्प्रयोजयेत् ॥ १३५ ॥ लघ्वर्थीमहतोयस्मा त्स्वयंलघुतरोभवेत् ॥ महद्वाफलमल्पंवाकृतंचेत्कर्म्मसिध्यति ॥१३६॥ महादेवंसमुद्दिश्यकृतंकर्म्मप्रयुज्यताम् ॥ तस्मादनन्यलभ्येषुशत्रुमृत्युजया

दिषु ॥ १३७ ॥ फलेषुदृष्टादृष्टेषुकुर्य्यादेतद्विचक्षणः ॥ महत्स्वपिचपातेषुमहारोगभयादिषु ॥ १३८ ॥ दुर्भिक्षादिषुचात्यर्थंशान्तिकुर्य्यादनेनतु ॥
बहुनाकिंप्रलापेनमहाव्यापन्निवारकम् ॥ १३९ ॥ आत्मीयमस्त्रंशैवानामिदमाहमहेश्वरः ॥ तस्मादितःपरंनास्तिपरित्राणमिहात्मनः ॥ १४० ॥
इतिमत्वाप्रयुंजानःकर्म्मेदंशुभमश्नुते ॥ स्तोत्रमात्रंशुचिर्भूत्वायःपठेत्सुसमाहितः ॥ १४१ ॥ सोऽप्यभीष्टतमादर्थादष्टांशफलमाप्नुयात्॥अर्थंतस्यानुस
न्धायजपेद्यदिसमाहितः ॥ १४२ ॥ अर्द्धार्द्धंफलमाप्नोतिनात्रकार्य्याविचारणा ॥ अथार्थमनुसन्धायपर्व्वण्यनशनःपठेत् ॥ १४३ ॥ अष्टम्यांवाचतु
र्दश्यांफलमर्द्धंसमाप्नुयात् ॥ यस्त्वर्थमनुसन्धायपर्व्वादिषुतथाव्रती ॥ १४४ ॥ मासमेकंजपेत्स्तोत्रंसकृत्स्नंफलमाप्नुयात् ॥ १४५ ॥ इतिश्रीशैवेमहा
पुराणेवायवीयसंहितायामुत्तरभागेपूजाव्रतविधिकथनंनामत्रयोविंशोऽध्यायः ॥ २३ ॥ उपमन्युरुवाच ॥ स्तोत्रंवक्ष्यामितेकृष्णपंचावरणमार्गतः ॥
योगेश्वरमिदंपुण्यंकर्म्मयेनसमाप्यते ॥ १ ॥ जयजयजगदेकनाथशम्भोप्रकृतिमनोहरनित्यचित्स्वभाव ॥ अतिगतकलुषप्रपंचवाचामपिमनसांपदवी
मतीततत्त्व ॥ २ ॥ स्वभावनिर्म्मलाभोगजयसुन्दरचेष्टित ॥ स्वात्मतुल्यमहाशक्तेजयशुद्धगुणार्णव ॥ ३ ॥ अनन्तकान्तिसम्पन्नजयासदृशविग्रह ॥
अतर्क्यमहिमाधारजयानाकुलमङ्गल ॥ ४ ॥ निरंजननिराधारजयनिष्कारणोदय ॥ निरन्तरपरानन्दजयनिर्वृतिकारण ॥ ५ ॥ जयातिपरमैश्वर्य्यज
यातिकरुणास्पद ॥ जयस्वतन्त्रसर्व्वस्वजयासदृशवैभव ॥ ६ ॥ जयावृतमहाविश्वजयानावृतकेनचित् ॥ जयोत्तरसमस्तस्यजयात्यन्तनिरुत्तर ॥ ७॥
जयाद्भुतजयाक्षुद्रजयाक्षतजयाव्यय ॥ जयामेयजयामायजयाभयजयामल ॥ ८ ॥ महाभुजमहासारमहागुणमहाकथ ॥ महाबलमहामायमहारसमहा
रथ ॥ ९ ॥ नमःपरमदेवायनमःपरमहेतवे ॥ नमःशिवायशान्तायनमःशिवतरायते ॥ १० ॥ त्वदधीनमिदंकृत्स्नंजगद्धिससुरासुरम् ॥ अतस्त्वद्विहि
तामाज्ञांक्षमतेकोऽतिवर्त्तितुम्॥११॥अयंपुनर्जनोनित्यंभवदेकसमाश्रयः॥भवानतोऽनुगृह्यास्मैप्रार्थितंसम्प्रयच्छतु ॥१२॥जयाम्बिकेजगन्मातर्जयसर्व्व
जगन्मयि॥जयानवधिकैश्वर्य्येजयानुपमविग्रहे॥१३॥जयवाङ्मनसातीतेजयाचिद्ध्वान्तभंजिके॥जयजन्मजराहीनेजयकालोत्तरोत्तरे ॥१४॥ जयानेकवि
धानस्थेजयानेकसुखात्मिके ॥ जयानेकमहासत्त्वेजयानेकगुणोर्ज्जिते॥१५॥जयानेकगुणात्मस्थेजयलोकमहेश्वरि॥ जयविश्वाधिकात्मस्थेजयविश्वेश्वर
प्रिये॥१६॥जयविश्वसुराराध्येजयविश्वविजृम्भिणि॥जयमङ्गलदिव्यांगिजयमङ्गलदीपिके ॥ १७ ॥ जयमङ्गलचारित्रेजयमङ्गलदायिनि ॥ नमःपरम
कल्याणिगुणसंचयमूर्त्तये॥१८॥नमःशिवायैविश्वस्मात्परस्यैशिवशक्तये॥त्वत्तःखलुसमुत्पन्नंजगत्त्वय्येवलीयते ॥१९॥ त्वद्विनातःफलंदातुमीश्वरोऽपि
नशक्नुयात् ॥ जन्मप्रभृतिदेवेशिजनोऽयंत्वदुपाश्रितः ॥२०॥ अतोऽस्यतवभक्तस्यनिर्व्वर्त्तयमनोरथम्॥पंचवक्त्रोदशभुजःशुद्धस्फटिकसन्निभः ॥२१॥

वर्णब्रह्मकलादेहोदेवःसकलनिष्कलः ॥ शिवमूर्त्तिसमारूढःशान्त्यतीतःसदाशिवः ॥ २२ ॥ भक्त्यामयार्चितोमह्यंप्रार्थितंसम्प्रयच्छतु ॥ सदाशिवाङ्कमारूढाशक्तिरिच्छाशिवाह्वया ॥ २३ ॥ जननीसर्व्वलोकानांप्रयच्छतुमनोरथम् ॥ शिवयोर्दयितौपुत्रौदेवौहेरम्बषण्मुखौ ॥ २४ ॥ शिवानुभावौच शिवौशिवज्ञानामृताशिनौ ॥ तृप्तौपरस्परंस्निग्धौशिवाभ्यांनित्यसत्कृतौ ॥ २५ ॥ आराधितौसदादेवौब्रह्माद्यैस्त्रिदशैरपि ॥ सर्व्वलोकपरित्राणंकर्त्तुमभ्युदितौसदा ॥ २६ ॥ स्वेच्छावतारंकुर्व्वन्तौस्वांशभेदैरनेकशः ॥ ताविमौशिवयोःपार्श्वेनित्यमित्थंमयार्चितौ ॥ २७ ॥ तयोराज्ञांपुरस्कृत्यप्रार्थितंमेप्रयच्छताम् ॥ शुद्धस्फटिकसङ्काशमीशानाख्यंसदाशिवम् ॥ २८ ॥ मूर्द्धाभिमानिनीमूर्त्तिःशिवस्यपरमात्मनः ॥ शिवार्चनरतंशान्तंशान्त्यतीतंखमास्थितम् ॥ २९ ॥ पञ्चाक्षरान्तिमंबीजंकलाभिःपञ्चभिर्युतम् ॥ प्रथमावरणेपूर्व्वंशक्त्यासहसमर्च्चितम् ॥ ३० ॥ पवित्रंपरमंब्रह्मप्रार्थितंमेप्रयच्छतु ॥ बालसूर्य्यप्रतीकाशंपुरुषाख्यंपुरातनम् ॥ ३१ ॥ पूर्व्ववक्राभिमानंचशिवस्यपरमेष्ठिनः ॥ शान्त्यात्मकंमरुत्संस्थंशम्भोःपादार्च्चनेरतम् ॥ ३२ ॥ तुरीयंशिवबीजेषुकलासुचचतुष्कलम् ॥ पूर्व्वभागेमयाभक्त्याशक्त्यासहसमन्वितम् ॥ ३३ ॥ पवित्रंपरमंब्रह्मप्रार्थितंमेप्रयच्छतु ॥ अञ्जनाद्रिप्रतीकाशमघोरंघोरविग्रहम् ॥ ३४ ॥ देवस्यदक्षिणंवक्रंदेवदेवपदार्चकम् ॥ विद्यापदंसमारूढंवह्निमण्डलमध्यगम् ॥ ३५ ॥ तृतीयंशिवबीजेषुकलास्वष्टकलान्वितम् ॥ शम्भोर्दक्षिणदिग्भागेशक्त्यासहसमर्च्चितम् ॥ ३६ ॥ पवित्रंपरमंब्रह्मप्रार्थितंमेप्रयच्छतु ॥ कुंकुमक्षोदसङ्काशंवामाख्यंवरवेषधृक् ॥ ३७ ॥ वक्रमुत्तरमीशस्यप्रतिष्ठायांप्रतिष्ठितम् ॥ वारिमण्डलमध्यस्थंमहादेवार्च्चनेरतम् ॥ ३८ ॥ द्वितीयंशिवबीजेषुत्रयोदशकलान्वितम् ॥ देवेशोत्तरदिग्भागेशक्त्यासहसमर्च्चितम् ॥ ३९ ॥ पवित्रंपरमंब्रह्मप्रार्थितंमेप्रयच्छतु ॥ शङ्खकुन्देन्दुधवलंसद्याख्यंसौम्यलक्षणम् ॥ ४० ॥ शिवस्यपश्चिमंवक्रंशिवपादार्च्चनेरतम् ॥ निवृत्तिपदनिष्ठञ्चपृथिव्यांसमवस्थितम् ॥ ४१ ॥ प्रथमंशिवबीजेषुकलाभिश्चाष्टभिर्युतम् ॥ देवस्यपश्चिमेभागेशक्त्यासहसमर्च्चितम् ॥ ४२ ॥ पवित्रंपरमंब्रह्मप्रार्थितंमेप्रयच्छतु ॥ शिवस्यचशिवायाश्चहृन्मूर्त्तीशिवभाविते ॥ ४३ ॥ तयोराज्ञांपुरस्कृत्यतेमेकामंप्रयच्छताम् ॥ शिवस्यचशिवायाश्चशिरोमूर्त्तीशिवाश्रिते ॥ ४४ ॥ तयोराज्ञांपुरस्कृत्यतेमेकामंप्रयच्छताम् ॥ शिवस्यचशिवायाश्चशिखामूर्त्तीशिवाश्रिते ॥ ४५ ॥ सत्कृत्यशिवयोराज्ञांतेमेकामंप्रयच्छताम् ॥ शिवस्यचशिवायाश्चनेत्रमूर्त्तीशिवाश्रिते ॥ ४६ ॥ सत्कृत्यशिवयोराज्ञांतेमेकामंप्रयच्छताम् ॥ शिवस्यचशिवायाश्चवर्म्मणीशिवभाविते ॥ ४७ ॥ सत्कृत्यशिवयोराज्ञांतेमेकामंप्रयच्छताम् ॥ अस्त्रमूर्त्तीचशिवयोर्नित्यमर्च्चनतत्परे ॥ ४८ ॥ सत्कृत्यशिवयोराज्ञांतेमेकामंप्रयच्छताम् ॥ वामोज्येष्ठस्तथारुद्रःकालोविकरणस्तथा ॥ ४९ ॥ बलोविकरणश्चैवबलप्रमथनःपरः ॥ सर्व्वभूतस्यदमनस्तादृशश्चाष्टशक्त

यः ॥ ५० ॥ प्रार्थितंमेप्रयच्छन्तुपरमेशस्यशासनात् ॥ अथानन्तश्चसूक्ष्मश्चशिवश्चाप्येकनेत्रकः ॥ ५१ ॥ एकरुद्रस्त्रिमूर्त्तिश्चश्रीकण्ठश्चशिखण्डकः ॥
तथाष्टौशक्तयस्तेषांद्वितीयावरणेऽर्च्चिताः ॥ ५२ ॥ तेमेकामंप्रयच्छन्तुशिवयोरेवशासनात् ॥ भवाद्यामूर्त्तयश्चाष्टौतेषामपिचशक्तयः ॥ ५३ ॥ महादे
वादयश्चान्येतथैकादशमूर्त्तयः ॥ शक्तिभिःसहिताःसर्व्वेतृतीयावरणेस्थिताः ॥ ५४ ॥ सत्कृत्याशिवयोराज्ञांदिशन्तुफलमीप्सितम् ॥ वृषराजोमहा
तेजामहामेघसमस्वनः ॥ ५५ ॥ मेरुमन्दरकैलासहिमाद्रिशिखरोपमः ॥ सिताभ्रशिखराकारःककुदापरिशोभितः ॥ ५६ ॥ महाभोगीन्द्रकल्पेनवा
लेनचविराजितः ॥ रक्तास्यशृङ्गचरणोरक्तप्रायविलोचनः ॥ ५७ ॥ पीवरोन्नतसर्व्वांगःसुचारुगमनोज्ज्वलः ॥ प्रशस्तलक्षणःश्रीमान्प्रज्वलन्मणिभूष
णः ॥ ५८ ॥ शिवप्रियःशिवासक्तःशिवयोर्ध्वजवाहनः ॥ तथातच्चरणन्यासभावितापरविग्रहः ॥ ५९ ॥ गोराजपुरुषःश्रीमाञ्छ्रीमच्छूलवरायुधः ॥ तयो
राज्ञांपुरस्कृत्यसमेकामंप्रयच्छतु ॥ ६० ॥ नन्दीश्वरोमहातेजानगेन्द्रतनयात्मजः ॥ सनारायणकैर्देवैर्नित्यमभ्यर्च्चवन्दितः ॥ ६१ ॥ शर्व्वस्या
न्तःपुरद्वारिसार्द्धंपरिजनैःस्थितः ॥ सर्व्वैश्वरसमप्रख्यःसर्व्वासुरविमर्दनः ॥६२॥ सर्व्वेषांशिवधर्म्माणामध्यक्षत्वेऽभिषेचितः ॥ शिवप्रियःशिवासक्तःश्रीम
च्छूलवरायुधः ॥६३॥ शिवाश्रितेषुसंसक्तस्त्वनुरक्तश्चतैरपि ॥ सत्कृत्याशिवयोराज्ञांसमेकामंप्रयच्छतु ॥ ६४ ॥ महाकालोमहाबाहुर्महादेवइवापरः ॥
महादेवाश्रितानान्तुनित्यमेवाभिरक्षिता ॥६५ ॥ शिवप्रियःशिवासक्तःशिवयोरर्च्चकःसदा ॥ सत्कृत्याशिवयोराज्ञांसमेदिशतुकांक्षितम् ॥६६॥ सर्व्वशा
स्त्रार्थतत्त्वज्ञःशास्ताविष्णोःपरातनुः ॥ महामोहात्मतनयोमधुमांसासवप्रियः ॥६७॥ तयोराज्ञांपुरस्कृत्यसमेकामंप्रयच्छतु ॥ ब्रह्माणीचैवमाहेशीकौमा
रीवैष्णवीपरा ॥६८॥ वाराहीचैवमाहेन्द्रीचामुंडाचंडविक्रमा ॥ एतावैमातरःसप्तसर्व्वलोकस्यमातरः ॥६९॥ प्रार्थितंमेप्रयच्छन्तुपरमेश्वरशासनात् ॥ मत्तमात
ङ्गवदनोगङ्गोमाशङ्करात्मजः ॥७०॥ आकाशदेहोदिग्बाहुःसोमसूर्य्याग्निलोचनः ॥ ऐरावतादिभिर्दिव्यैर्दिग्गजैर्नित्यमर्च्चितः ॥७१॥ शिवज्ञानमदोद्भिन्नस्त्रिद
शानामविघ्नकृत् ॥ विघ्नकृच्चासुरादीनांविघ्नेशःशिवभावितः ॥७२॥ सत्कृत्याशिवयोराज्ञांसमेदिशतुकांक्षितम् ॥ षण्मुखःशिवसम्भूतःशक्तिवज्रधरःप्रभुः
॥७३॥ अग्नेश्चतनयोदेवोह्यपर्णातनयःप्रभुः ॥ गङ्गायाश्चगणाम्बायाःकृत्तिकायास्तथैवच ॥७४॥ विशाखेनचशाखेननैगमेयेनचावृतः ॥ इन्द्रजिच्चेन्द्रसेनानी
स्तारकासुरजित्तथा ॥ ७५ ॥ शैलानांमेरुमुख्यानांवेधकश्चस्वतेजसा ॥ तप्तचामीकरप्रख्यःशतपत्रदलेक्षणः ॥ ७६ ॥ कुमारःसुकुमाराणांरूपोदाहर
णंमहत् ॥ शिवप्रियःशिवासक्तःशिवपादार्च्चकःसदा ॥ ७७ ॥ सत्कृत्याशिवयोराज्ञांसमेदिशतुकाङ्क्षितम् ॥ ज्येष्ठावरिष्ठावरदाशिवयोःपूजनेरता
॥ ७८ ॥ तयोराज्ञांपुरस्कृत्यसामेदिशतुकांक्षितम् ॥ त्रैलोक्यवन्दितासाक्षादुल्काकारागणाम्बिका ॥७९॥ जगत्सृष्टिविवृद्ध्यर्थंब्रह्मणाभ्यर्थिताशिवात् ॥

शिवायाःप्रविभक्तायाभ्रुवोरन्तरनिःसृता ॥ ८० ॥ दाक्षायणीसतीमेनातथाहैमवतीह्युमा ॥ कौशिकायाश्चजननीभद्रकाल्यास्तथैवच ॥ ८१ ॥
अपर्णायाश्चजननीपाटलायास्तथैवच ॥ शिवार्चनरतानित्यंरुद्राणीरुद्रवल्लभा ॥ ८२ ॥ सत्कृत्यशिवयोराज्ञांसामेदिशतुकाङ्क्षितम् ॥ चण्डःसर्व्वगणे
शानःशम्भोर्वदनसम्भवः ॥ ८३ ॥ सत्कृत्यशिवयोराज्ञांसमेदिशतुकाङ्क्षितम् ॥ वृषभोनामगणपोवृषवाहपदार्च्चकः ॥ ८४ ॥ सत्कृत्यशिवयोराज्ञांसमे
दिशतुकाङ्क्षितम् ॥ पिङ्गलोगणपःश्रीमाञ्छिवासक्तःशिवप्रियः ॥ ८५ ॥ आज्ञयाशिवयोरेवसमेकामंप्रयच्छतु ॥ भृङ्गीशोनामगणपःशिवाराधनतत्परः
॥ ८६ ॥ प्रयच्छतुसमेकामंपत्युराज्ञापुरःसरम् ॥ वीरभद्रोमहातेजाहिमकुन्देन्दुसन्निभः ॥ ८७ ॥ भद्रकालीप्रियोनित्यंमातृणाञ्चाभिरक्षिता ॥ यज्ञ
स्यचशिरोहर्त्तादक्षस्यचदुरात्मनः ॥ ८८ ॥ उपेन्द्रेन्द्रयमादीनांदेवानामङ्गतक्षकः ॥ शिवस्यानुचरःश्रीमाञ्छिवशासनपालकः ॥ ८९ ॥ शिवयोःशा
सनादेवसमेदिशतुकाङ्क्षितम् ॥ सरस्वतीमहेशस्यवाक्सरोजसमुद्भवा ॥ ९० ॥ शिवयोःपूजनेनित्यंसामेदिशतुकाङ्क्षितम् ॥ विष्णोर्वक्षःस्थितालक्ष्मीः
शिवयोःपूजनेरता ॥ ९१ ॥ शिवयोःशासनादेवसामेदिशतुकाङ्क्षितम् ॥ महामोटीमहादेव्याःपादपूजापरायणा ॥ ९२ ॥ तस्यएवनियोगेनसामेदिशतु
कांक्षितम् ॥ कौशिकीसिंहमारूढापार्व्वत्याःपरमासुता ॥ ९३ ॥ विष्णोर्निद्रामहामायामहामहिषमर्दिनी ॥ निशुम्भशुम्भसंहर्त्रीमधुमांसासवप्रिया
॥ ९४ ॥ सत्कृत्यशासनंमातुःसामेकामंप्रयच्छतु ॥ रुद्रारुद्रसमप्रख्याःप्रमथाःप्रथितौजसः ॥ ९५ ॥ भूताख्याश्चमहावीर्य्यामहादेवसमप्रभाः ॥ नित्य
मुक्तानिरुपमानिर्द्वन्द्वानिरुपप्लवाः ॥ ९६ ॥ सशक्तयःसानुचराःसर्व्वलोकनमस्कृताः ॥ सर्व्वेषामेवलोकानांसृष्टिसंहरणक्षमाः ॥ ९७ ॥ परस्परानुरक्ता
श्चपरस्परमनुव्रताः ॥ परस्परमतिस्निग्धाःपरस्परनमस्कृताः ॥ ९८ ॥ शिवप्रियतमानित्यंशिवलक्षणलक्षिताः ॥ सौम्याघोरास्तथामिश्राश्चान्तराल
द्वयात्मकाः ॥ ९९ ॥ विरूपाश्चसुरूपाश्चनानारूपधरास्तथा ॥ सत्कृत्यशिवयोराज्ञांतेमेकामंदिशन्तुवै ॥ १०० ॥ देव्याःप्रियसखीवर्गोदेवीलक्षणल
क्षितः ॥ सहितोरुद्रकन्याभिःशक्तिभिश्चाप्यनेकशः ॥ १०१ ॥ तृतीयावरणेशम्भोर्भक्त्यानित्यंसमर्च्चितः ॥ सत्कृत्यशिवयोराज्ञांसमेदिशतुमङ्गलम्
॥ १०२ ॥ दिवाकरोमहेशस्यमूर्त्तिर्दीप्तसुमण्डलः ॥ निर्गुणोगुणसङ्कीर्णस्तथैवगुणकेवलः ॥ १०३ ॥ अविकारात्मकश्चाद्यस्ततःसामान्यविक्रियः ॥
असाधारणकर्म्माचसृष्टिस्थितिलयक्रमात् ॥ १०४ ॥ एवंत्रिधाचतुर्द्धाचविभक्तःपञ्चधापुनः ॥ चतुर्थावरणेशम्भोःपूजितश्चानुगैःसह ॥ १०५ ॥ शिव
प्रियःशिवासक्तःशिवपादार्चनेरतः ॥ सत्कृत्यशिवयोराज्ञांसमेदिशतुमङ्गलम् ॥ १०६ ॥ दिवाकरषडङ्गानिआदित्याद्याश्चमूर्त्तयः ॥ आदित्योभा
स्करोभानूरविश्चेत्यनुपूर्व्वशः ॥ १०७ ॥ अर्कोब्रह्मातथारुद्रोविष्णुश्चादित्यमूर्त्तयः ॥ विस्तारासुतराबोधिन्याप्यायिन्यपरापुनः ॥ १०८ ॥ ऊषाप्र

भातथाप्राज्ञासन्ध्याचेत्यपिशक्तयः ॥ सोमादिकेतुपर्य्यन्ताग्रहाश्चशिवभाविताः ॥ १०९ ॥ शिवयोराज्ञयानुन्नामंगलंप्रदिशन्तुमे ॥ अथवाद्वादशादि
त्यास्तथाद्वादशराशयः ॥११०॥ ऋषयोदेवगन्धर्व्वाःपन्नगाप्सरसांगणाः ॥ ग्रामण्यश्चतथायक्षाराक्षसाश्चासुरास्तथा ॥ १११ ॥ सप्तसप्तगणाश्चैतेसप्त
च्छन्दोमयाहयाः ॥ वालखिल्यगणाश्चैवसर्व्वेशिवपदार्च्चकाः ॥ ११२ ॥ सत्कृत्यशिवयोराज्ञांमङ्गलंप्रदिशन्तुमे ॥ ब्रह्माथदेवदेवस्यमूर्त्तिर्भूमण्डला
धिपः ॥ ११३ ॥ चतुःषष्टिगुणैश्वर्य्योबुद्धितत्त्वेप्रतिष्ठितः ॥ निर्गुणोगुणसंकीर्णस्तथैवंगुणकेवलः ॥ ११४ ॥ अविकारात्मकोदेवस्ततःसाधारणःपरः॥
असाधारणकर्म्माचसृष्टिस्थितिलयक्रमात् ॥ ११५ ॥ एवंत्रिधाचतुर्द्धाचविभक्तःपञ्चधापुनः ॥ चतुर्थावरणेशम्भोःपूजितश्चसहानुगैः ॥ ११६ ॥
शिवप्रियःशिवासक्तःशिवपादार्च्चनेरतः ॥ सत्कृत्यशिवयोराज्ञांसमेदिशतुमंगलम् ॥ ११७ ॥ हिरण्यगर्भोलोकेशोविराट्कालश्चपूरुषः ॥ सनत्कुमा
रःसनकःसनन्दश्चसनातनः ॥ ११८ ॥ प्रजानांपतयश्चैवदक्षाद्याब्रह्मसूनवः ॥ एकादशसपत्नीकाधर्म्मःसंकल्पएवच ॥ ११९ ॥ शिवार्च्चनरताश्चैते
शिवभक्तिपरायणाः ॥ शिवाज्ञावशगाःसर्व्वेदिशन्तुममंगलम् ॥ १२० ॥ चत्वारश्चतथावेदाःसेतिहासपुराणकाः ॥ धर्म्मशास्त्रादिविद्याभिर्वैदिकी
भिःसमन्विताः ॥ १२१ ॥ परस्परविरुद्धार्थाःशिवैकप्रतिपादकाः ॥ सत्कृत्यशिवयोराज्ञांमङ्गलंप्रदिशन्त्विमे ॥ १२२ ॥ अथरुद्रोमहादेवःशम्भो
र्मूर्त्तिर्गरीयसी ॥ वाह्नेयमण्डलाधीशःपौरुषैश्वर्य्यवान्प्रभुः ॥ १२३ ॥ शिवाभिमानसम्पन्नोनिर्गुणस्त्रिगुणात्मकः ॥ केवलंसात्विकश्चापिराजसश्चैवता
मसः ॥ १२४ ॥ अविकाररतःशर्व्वेततस्तुसमविक्रियः ॥ असाधारणकर्म्माचसृष्ट्यादिकरणात्पृथक् ॥ १२५ ॥ ब्रह्मणोऽपिशिरश्छेत्ताजनकस्तस्यत
त्सुतः ॥ जनकस्तनयश्चापिविष्णोरपिनियामकः ॥ १२६ ॥ बोधकश्चतयोर्नित्यमनुग्रहकरःप्रभुः ॥ अण्डस्यान्तर्व्वहिर्वर्त्तीरुद्रलोकद्वयाधिपः
॥ १२७ ॥ शिवप्रियःशिवासक्तःशिवपादार्च्चनेरतः ॥ शिवस्याज्ञांपुरस्कृत्यसमेदिशतुमङ्गलम् ॥ १२८ ॥ तस्यब्रह्मषडङ्गानिविद्येशानांतथाष्टकम् ॥
चत्वारोमूर्त्तिभेदाश्चशिवपूर्व्वाःशिवार्चकाः ॥ १२९ ॥ शिवोभवोहरश्चैवमृडश्चैवतथापरः ॥ शिवस्याज्ञांपुरस्कृत्यमङ्गलंप्रदिशन्तुमे ॥ १३० ॥
अथविष्णुर्महेशस्यशिवस्यैवपरातनुः ॥ वारितत्त्वाधिपःसाक्षादव्यक्तपदसंस्थितः ॥ १३१ ॥ निर्गुणःसत्त्वबहुलस्तथैवगुणकेवलः ॥ अविकाराभि
मानीचत्रिसाधारणविक्रयः ॥ १३२ ॥ असाधारणकर्म्माचसृष्ट्यादिकरणात्पृथक् ॥ दक्षिणाङ्गभवेनापिस्पर्द्धमानःस्वयम्भुवा ॥ १३३ ॥ आद्येनब्रह्म
णासाक्षात्सृष्टःस्रष्टाचतस्यतु ॥ अण्डस्यान्तर्बहिर्व्वर्त्तीविष्णुर्लोकद्वयाधिपः ॥ १३४ ॥ असुरान्तकरश्चक्रीशक्रस्यापितथानुजः ॥ प्रादुर्भूतश्चदश
धाभृगुशापच्छलादिह ॥ १३५ ॥ भूभारनिग्रहार्थायस्वेच्छयावातरत्क्षितौ ॥ अप्रमेयबलोमायीमाययामोहयञ्जगत् ॥ १३६ ॥ मूर्त्तीकृत्यमहावि

ष्णुंसदाविष्णुमथापिवा ॥ वैष्णवैःपूजितोनित्यंमूर्त्तित्रयमयासने ॥ १३७ ॥ शिवप्रियःशिवासक्तःशिवपादार्च्चनेरतः ॥ शिवस्याज्ञांपुरस्कृत्यसमेदिशतु
मङ्गलम्॥१३८॥वासुदेवोऽनिरुद्धश्चप्रद्युम्नश्चततःपरः॥सङ्कर्षणःसमाख्यातश्चतस्रोमूर्त्तयोहरेः॥१३९॥मत्स्यःकूर्म्मोवराहश्चनारसिंहश्चवामनः ॥ रामत्र
यंतथाकृष्णोविष्णुस्तुरगवक्त्रकः ॥१४०॥ चक्रंनारायणस्यास्त्रंपाञ्चजन्यश्चशार्ङ्गकम् ॥ सत्कृत्यशिवयोराज्ञांमङ्गलंप्रदिशन्तुमे॥१४१॥प्रभासरस्वती
गौरीलक्ष्मीश्चशिवभाविता॥शिवयोःशासनादेतामंगलंप्रदिशन्तुमे॥१४२॥इन्द्रोऽग्निश्चयमश्चैवनिर्ऋतिर्वरुणस्तथा ॥ वायुःसोमःकुबेरश्चतथेशानस्त्रिशू
लधृक्॥१४३॥सर्व्वेशिवार्च्चनरताःशिवसद्भावभाविताः ॥ सत्कृत्यशिवयोराज्ञांमंगलंप्रदिशन्तुमे ॥ १४४ ॥ त्रिशूलमथवज्रञ्चतथापरशुसायकौ ॥
खड्गपाशांकुशाश्चैवपिनाकश्चायुधोत्तमः ॥ १४५ ॥ दिव्यायुधानिदेवस्यदेव्याश्चैतानिनित्यशः ॥ सत्कृत्यशिवयोराज्ञांरक्षांकुर्व्वन्तुमेसदा ॥ १४६ ॥
वृषरूपधरोधर्म्मःसौरभेयोमहाबलः ॥ वाडवाख्यानलस्पर्द्धीपंचगोमातृभिर्वृतः ॥ १४७ ॥ वाहनत्वमनुप्राप्तस्तपसापरमेशयोः ॥ तयोराज्ञांपुरस्कृत्य
समेकामंप्रयच्छतु ॥ १४८ ॥ नन्दासुभद्रासुरभिःसुशीलासुमनास्तथा ॥ पञ्चगोमातरस्त्वेताःशिवलोकेव्यवस्थिताः ॥ १४९ ॥ शिवभक्तिपरानि
त्यंशिवार्च्चनपरायणाः ॥ शिवयोःशासनादेवादिशन्तुममवाञ्छितम् ॥ १५० ॥ क्षेत्रपालोमहातेजानीलजीमूतसन्निभः ॥ दंष्ट्राकरालवदनःस्फुरद्रक्ता
धरोज्ज्वलः ॥ १५१ ॥ रक्तोर्द्ध्वमूर्द्धजःश्रीमान्भ्रुकुटीकुटिलेक्षणः॥रक्तवृत्तत्रिनयनःशशिपन्नगभूषणः॥१५२॥नग्नस्त्रिशूलपाशासिकपालोद्यतपाणिकः॥
भैरवोभैरवैःसिद्धैर्योगिनीभिश्चसंवृतः ॥ १५३ ॥ क्षेत्रेक्षेत्रेसमासीनःस्थितोयोरक्षकःसताम् ॥ शिवप्रणामपरमःशिवसद्भावभावितः ॥ १५४ ॥ शिवा
श्रितान्विशेषेणरक्षन्पुत्रानिवौरसान् ॥ सत्कृत्यशिवयोराज्ञांसमेदिशतुमंगलम् ॥ १५५ ॥ तालजङ्घादयस्तस्यप्रथमावरणेऽर्च्चिताः ॥ सत्कृत्यशिवयो
राज्ञांचत्वारःसमवन्तुमाम् ॥ १५६ ॥ भैरवाद्याश्चयेचान्येसमन्तात्तस्यवेष्टिताः ॥ तेऽपिमामनुगृह्णन्तुशिवशासनगौरवात् ॥ १५७ ॥ नारदाद्याश्च
मुनयोदिव्यादेवैश्चपूजिताः ॥ साध्याश्चैवतुयेदेवाजनलोकनिवासिनः ॥ १५८ ॥ विनिवृत्ताधिकाराश्चमहर्लोकनिवासिनः ॥ महर्षयस्तथान्येचवैमानि
कगणैःसह ॥ १५९ ॥ सर्व्वेशिवार्च्चनरताःशिवाज्ञावशवर्त्तिनः ॥ शिवयोराज्ञयामह्यंदिशन्तुममकांक्षितम् ॥ १६० ॥ गन्धर्व्वाद्याःपिशाचान्ताश्चत
स्रोदेवयोनयः ॥ सिद्धाविद्याधराद्याश्चयेऽपिचान्येनभश्चराः ॥१६१॥ असुराराक्षसाश्चैवपातालतलवासिनः ॥ अनन्ताद्याश्चनागेन्द्रावैनतेयादयोद्विजाः॥
॥१६२॥कूष्माण्डाःप्रेतवेतालाग्रहाभूतगणाःपरे॥डाकिन्यश्चापियोगिन्यःशाकिन्यश्चापितादृशः॥१६३॥क्षेत्रारामगृहादीनितीर्थान्यायतनानिच॥द्वीपाः
समुद्रानद्यश्चनदाश्चान्येसरांसिच ॥ १६४ ॥ गिरयश्चसुमेर्व्वाद्याःकाननानिसमन्ततः ॥ पशवःपक्षिणोवृक्षाःकृमिकीटादयोमृगाः ॥१६५॥ भुवनान्यपि

सर्व्वाणिभुवनानामधीश्वराः॥ अण्डाद्यावरणैःसार्द्धमाशाश्चदशदिग्गजाः॥१६६॥वर्णाःपदानिमन्त्राश्चतत्त्वान्यपिसहाधिपैः॥ब्रह्माण्डधारकारुद्रारुद्राश्चां
न्येसशक्तिकाः ॥ १६७ ॥ यच्चकिञ्चिज्जगत्यस्मिन्दृष्टञ्चानुमितंश्रुतम् ॥ सर्व्वंकामंप्रयच्छन्तुशिवयोरेवशासनात् ॥ १६८ ॥ अथविद्यापराशैवीपशुपा
शविमोचनी ॥ पञ्चार्थसंज्ञितादिव्यापशुविद्याबहिष्कृता ॥ १६९ ॥ शास्त्रंचशिवधर्म्माख्यंधर्म्माख्यंचतदुत्तरम्॥ शैवाख्यंशिवधर्म्माख्यंपुराणंश्रुतिस
म्मितम् ॥ १७० ॥ शैवागमाश्चयेचान्येकामिकाद्याश्चतुर्व्विधाः ॥ शिवाभ्यामविशेषेणसत्कृत्येहसमर्च्चिताः ॥ १७१ ॥ ताभ्यामेवसमाज्ञाताममाभि
प्रेतसिद्धये ॥ कर्म्मेदमनुमन्यन्तांसफलंसाध्वनुष्ठितम् ॥ १७२ ॥ शैवामाहेश्वराश्चैवज्ञानकर्म्मपरायणाः ॥ कर्म्मेदमनुमन्यन्तांसफलंसाध्वनुष्ठितम्॥
॥ १७३ ॥ लौकिकाब्राह्मणाःसर्व्वेक्षत्रियाश्चविशःक्रमात् ॥ वेदवेदांगतत्त्वज्ञाःसर्व्वशास्त्रविशारदाः ॥ १७४ ॥ सांख्यावैशेषिकाश्चैवयौगानैयायिकान
राः ॥ सौराब्राह्मास्तथारौद्रावैष्णवाश्चापरेनराः ॥ १७५ ॥ शिष्टाःसर्व्वेविशिष्टाश्चशिवशासनयंत्रिताः ॥ कर्म्मेदमनुमन्यन्तांममाभिप्रेतसाधकम् ॥
॥ १७६ ॥ शैवाःसिद्धान्तमार्गस्थाःशैवाःपाशुपतास्तथा ॥ शैवामहाव्रतधराःशैवाःकापालिकाःपरे ॥ १७७ ॥ शिवाज्ञापालकाःपूज्याममापि
शिवशासनात् ॥ सर्व्वेमामनुगृह्णन्तुशंसन्तुसफलक्रियाम् ॥ १७८ ॥ दक्षिणज्ञाननिष्ठाश्चदक्षिणोत्तरमार्गगाः ॥ अविरोधेनवर्त्तन्तांमन्त्रश्रेयोऽर्थिनोम
म ॥ १७९ ॥ नास्तिकाश्चशठाश्चैवकृतघ्नाश्चैवतामसाः ॥ पाषण्डाश्चातिपापाश्चवर्त्तन्तांदूरतोमम ॥ १८० ॥ बहुभिःकिंस्तुतैरत्रयेऽपिकेऽपिचिदा
स्तिकाः ॥ सर्व्वेमामनुगृह्णन्तुसन्तःशंसन्तुमङ्गलम् ॥ १८१ ॥ नमःशिवायसाम्बायससुतायादिहेतवे ॥ पञ्चावरणरूपेणप्रपंचेनावृतायते ॥ १८२ ॥
इत्युक्त्वादण्डवद्भूमौप्रणिपत्यशिवंशिवाम् ॥ जपेत्पंचाक्षरींविद्यामष्टोत्तरशतावराम् ॥ १८३ ॥ तथैवशक्तिविद्यांचजपित्वातत्समर्पणम् ॥ कृत्वाक्ष
मापयित्वेशंपूजाशेषंसमापयेत् ॥ १८४ ॥ एतत्पुण्यतमंस्तोत्रंशिवयोर्हृदयंगमम् ॥ सर्व्वाभीष्टप्रदंसाक्षाद्भुक्तिमुक्त्येकसाधनम् ॥ १८५ ॥ यइदंकीर्त्त
येन्नित्यंशृणुयाद्वासमाहितः ॥ सविधूयाशुपापानिशिवसायुज्यमाप्नुयात् ॥ १८६ ॥ गोघ्नश्चैवकृतघ्नश्चवीरहाभ्रूणहापिवा ॥ शरणागतघातीचमित्र
विश्रम्भघातकः ॥ १८७ ॥ दुष्टःपापसमाचारोमातृहापितृहापिवा ॥ स्तवेनायुतजप्तेनतत्तत्पापात्प्रमुच्यते ॥ १८८ ॥ दुःस्वप्नादिमहानर्थसूचकेषु
भयेषुच ॥ यदिसङ्कीर्त्तयेदेतन्नततोऽनर्थभाग्भवेत् ॥ १८९ ॥ आयुरारोग्यमैश्वर्य्यंयच्चान्यदपिवाञ्छितम् ॥ स्तोत्रस्यास्यजपोनिष्ठांतत्सर्व्वंलभतेनरः
॥ १९० ॥ असम्पूज्यशिवंस्तोत्रजपात्फलमुदाहृतम् ॥ सम्पूज्यचजपेतस्यफलंवक्तुंनशक्यते ॥ १९१ ॥ आस्तामियंफलावाप्तिरेतस्मिन्कीर्त्तिते
सति ॥ सार्द्धमम्बिकयादेवःश्रुत्वेदंदिवितिष्ठति ॥ १९२ ॥ तस्मान्नभसिसम्पूज्यदेवदेवंसहोमया ॥ कृतांजलिपुटस्तिष्ठन्स्तोत्रमेतदुदीरये
त् ॥ १९३ ॥ ॥ इति श्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेचतुर्व्विंशोऽध्यायः ॥ २४ ॥ उपमन्युरुवाच ॥ एतत्तेकथितंकृष्ण

कर्म्मेहामुत्रसिद्धिदम् ॥ क्रियातपोजपध्यानसमुच्चयमयंपरम् ॥ १ ॥ अथवक्ष्यामिशैवानामिहैवफलदंनृणाम् ॥ पूजाहोमजपध्यानतपो
दानमयंमहत् ॥ २ ॥ तत्रसंसाधयेत्पूर्व्वंमन्त्रंमन्त्रार्थवित्तमः ॥ दृष्टसिद्धिकरंकर्म्मनान्यथाफलदंयतः ॥ ३ ॥ सिद्धमन्त्रोऽप्यदृष्टेनप्रबले
नतुकेनचित् ॥ प्रतिबद्धफलंकर्म्मनकुर्य्यात्सहसाबुधः ॥ ४ ॥ तस्यतुप्रतिबन्धस्यकर्त्तुंशक्येहनिष्कृतिः ॥ परीक्ष्यशकुनाद्यैस्तुतदानिष्कृ
तिमाचरेत् ॥ ५ ॥ योऽन्यथाकुरुतेमोहात्कर्म्मैहिकफलंनरः ॥ नतेनफलभाक्सस्यात्प्राप्नुयाच्चोपहास्यताम् ॥ ६ ॥ अविस्रब्धोनकुर्व्वीतकर्म्म
दृष्टफलंक्वचित् ॥ सखल्वश्रद्दधानःस्यान्नाश्रद्धःफलमृच्छति ॥ ७ ॥ नापराधोऽस्तिदेवस्यकर्म्मण्यपितुनिष्फले ॥ यथोक्तकारिणांपुंसामि
हवफलदर्शनात् ॥ ८ ॥ साधकःसिद्धमन्त्रश्चनिरस्तप्रतिबन्धकः ॥ विश्वस्तःश्रद्दधानश्चकुर्व्वन्नाप्नोतितत्फलम् ॥ ९ ॥ अथवातत्फलावाप्त्यैयब्रह्मच
र्य्यरतोभवेत् ॥ रात्रौहविष्यमश्नीयात्पायसंवाफलानिवा ॥ १० ॥ हिंसादियन्निषिद्धंस्यान्नकुर्य्यान्मनसापितत् ॥ सदाभस्मानुलिप्तांगसुवेषश्चशुचि
र्भवेत् ॥ ११ ॥ इत्थमाचारवान्भूत्वास्वानुकूलेशुभेऽहनि ॥ पूर्व्वोक्तलक्षणेदेशेपुष्पदामाद्यलंकृते ॥ १२ ॥ आलिप्यशक्तताभूमिंहस्तमानावरांतथा ॥
विलिखेत्कमलंभद्रंदीप्यमानंस्वतेजसा ॥ १३ ॥ तप्तजाम्बूनदमयमष्टपत्रंसकेशरम् ॥ मध्येकर्णिकयायुक्तंसर्व्वरत्नैरलंकृतम् ॥ १४ ॥ स्वाकारसदृशे
नैवनालेनचसमन्वितम् ॥ तादृशेस्वर्णनिर्म्माणेकन्देसम्यक्प्रतिष्ठितम् ॥ १५ ॥ तत्राणिमादिकंसर्व्वंसङ्कल्प्यमनसापुनः ॥ रत्नजंवाथसौवर्णंस्फाटि
कंवासलक्षणम् ॥ १६ ॥ लिङ्गंसवेदिकंतत्रस्थापयित्वाविधानतः ॥ तत्रावाह्ययजेद्देवंसाम्बंसगणमव्ययम् ॥ १७ ॥ तत्रमाहेश्वरीकल्प्यामूर्तिर्मूर्त्तिमतः
प्रभोः ॥ चतुर्भुजाचतुर्वक्त्रासर्व्वाभरणभूषिता ॥ १८ ॥ शार्दूलचर्म्मवसनाकिञ्चिद्विहसितानना ॥ वरदाभयहस्ताचमृगटङ्कधरातथा ॥ १९ ॥ अथवा
ष्टभुजाचिन्त्याचिन्तकस्ययथारुचि ॥ तदात्रिशूलपरशुखड्गवज्राणिदक्षिणे ॥ २० ॥ वामेपाशाङ्कुशेतद्वत्खेटंनागंचबिभ्रती ॥ बालार्कसदृशप्रख्याप्र
तिवक्त्रंत्रिलोचना ॥ २१ ॥तस्याःपूर्व्वमुखंसौम्यंस्वाकारसदृशप्रभम् ॥ दक्षिणंनीलजीमूतसदृशंघोरदर्शनम् ॥ २२ ॥ उत्तरंविद्रुमप्रख्यंनीलालकवि भू
षितम् ॥ पश्चिमंपूर्णचन्द्राभंसौम्यमिन्दुकलाधरम् ॥ २३ ॥ तस्याङ्कमण्डलारूढाशक्तिर्माहेश्वरीपरा ॥ महालक्ष्मीरितिख्याताश्यामासर्व्वमनोहरा ॥
॥ २४ ॥ मूर्त्तिंकृत्वैवमाकारांसकलीकृत्यचक्रमात् ॥ मूर्त्तिमन्तमथावाह्ययजेत्परमकारणम् ॥ २५ ॥ स्नानार्थंकल्पयेत्तत्रपञ्चगव्यन्तुकापिलम् ॥
पंचामृतंचपूर्णानिबीजानिचविशेषतः ॥ २६ ॥ पुरस्तान्मण्डलंकृत्वारत्नचूर्णाद्यलंकृतम् ॥ कर्णिकायांप्रविन्यस्यईशानकलशंपुनः ॥ २७ ॥ सद्यादि

कलशान्पश्चात्परितस्तस्यकल्पयेत् ॥ ततोविघ्नेशकलशानष्टौपूर्व्वादिदिक्क्रमात् ॥ २८ ॥ तीर्थाम्बुपूरितान्कृत्वासूत्रेणावेष्टयपूर्व्ववत् ॥ पुण्यद्रव्या
णिनिक्षिप्यसमन्त्रंसविधानकम् ॥ २९ ॥ दुकूलाद्येनवस्त्रेणसम्याच्छाद्यसमन्ततः ॥ सर्व्वत्रमन्त्रंविन्यस्यतत्तन्मन्त्रपुरःसरम् ॥ ३० ॥ स्नानकालेतुसम्प्राप्ते
सर्व्वमङ्गलनिस्वनैः ॥ पंचगव्यादिभिश्चैवस्नापयेत्परमेश्वरम् ॥ ३१ ॥ ततःकुशोदकाद्यानिस्वर्णरत्नोदकान्यपि ॥ गन्धपुष्पादिसिद्धानिमंत्रसिद्धानिचक्र
मात् ॥ ३२ ॥ उद्धृत्योद्धृत्यमन्त्रेणतैस्तैःस्नाप्यमहेश्वरम् ॥ गन्धपुष्पादिदीपांश्चपूजाकर्म्मसमाचरेत् ॥ ३३ ॥ पलावरःस्यादालेपएकादशपलोत्त
रः ॥ सुवर्णरत्नपुष्पाणिशुभ्राणिसुरभीणिच ॥ ३४ ॥ नीलोत्पलाद्युत्पलानिबिल्वपत्राण्यनेकशः ॥ कमलानिचरक्तानिश्वेतान्यपिचसम्भवे ॥ ३५ ॥
कृष्णागुरूद्भवोधूपःसकर्पूराज्यगुग्गुलः ॥ कपिलाघृतसंसिद्धादीपाःकर्पूरवर्त्तिजाः ॥ ३६ ॥ पञ्चब्रह्मषडङ्गानिपूज्यान्यावरणानिच ॥ निवेद्यःपयसा
सिद्धःसगुडाज्योमहाचरुः ॥ ३७ ॥ पाटलोत्पलपत्राद्यैःपानीयंचसुगन्धितम् ॥ पञ्चसौगंधिकोपेतंताम्बूलञ्चसुसंस्कृतम् ॥ ३८ ॥ सुवर्णरत्नसिद्धानिभू
षणानिविशेषतः ॥ वासांसिचविचित्राणिसूक्ष्माणिचनवानिच ॥ ३९ ॥ दर्शनीयानिदेयानिगानवाद्यादिभिःसह ॥ जपश्चमूलमन्त्रस्यलक्षःपरमसंख्य
या ॥ ४० ॥ एकावरात्युत्तराचपूजाफलवशादिह ॥ दशसंख्यावरोहोमःप्रतिद्रव्यंशतोत्तरः ॥ ४१ ॥ घोररूपःशिवश्चिन्त्योमारणोच्चाटनादिषु ॥
शिवलिंगेशिवाग्नौचशान्तःशान्तिकपौष्टिके ॥ ४२ ॥ आयसौस्रुक्स्रुवौकार्य्यौमारणादिषुकर्मसु ॥ तदन्यत्रतुसौवर्णौशान्तिकाद्येषुकृत्स्नशः ॥ ४३ ॥
दूर्व्वयाघृतगोक्षीरमिश्रयामधुनातथा ॥ चरुणासघृतेनैवकेवलंपयसापिवा ॥ ४४ ॥ जुहुयान्मृत्युविजयेतिलैरोगोपशान्तये ॥ घृतेनपयसाचैवकमलै
र्वाथकेवलैः ॥ ४५ ॥ समृद्धिकामोजुहुयान्महादारिद्र्यशान्तये ॥ जातिपुष्पेणवश्यार्थीजुहुयात्सघृतेनतु ॥ ४६ ॥ घृतेनकरवीरैश्चकुर्य्यादाकर्षणं
द्विजः ॥ तैलेनोच्चाटनंकुर्य्यात्स्तम्भनंमधुनापुनः ॥ ४७ ॥ स्तम्भनंसर्षपेणापिलशुनेनतुपातनम् ॥ ताडनंरुधिरेणस्यात्खरस्योष्ट्रस्यचोभयोः ॥ ४८ ॥
मारणोच्चाटनेकुर्य्याद्रोहिबीजैस्तिलान्वितैः ॥ विद्वेषणञ्चतैलेनकुर्य्याल्लांगलकस्यतु ॥ ४९ ॥ बन्धनंरोहिबीजेनसेनास्तम्भनमेवच ॥ रक्तसर्षपसंमिश्रै
र्होमंद्रव्यैरशेषतः ॥ ५० ॥ हस्तयन्त्रोद्भवैस्तैलैर्जुहुयादाभिचारिके ॥ कटुषतुषसंयुक्तैःकार्पासास्थिभिरेवच ॥ ५१ ॥ सर्षपैस्तैलसंमिश्रैर्जुहु
यादाभिचारिके ॥ ज्वरोपशान्तिदंक्षीरंसौभाग्यफलदंतथा ॥ ५२ ॥ सर्व्वसिद्धकरोहोमःक्षौद्राज्यदधिभिर्युतैः ॥ क्षीरेणतण्डुलैश्चैवचरुणाकेवलेनवा
॥ ५३ ॥ शान्तिकंपौष्टिकंवापिसप्तभिःसमिदादिभिः ॥ द्रव्यैर्विशेषतोहोमेवश्यमाकर्षणंतथा ॥ ५४ ॥ वश्यमाकर्षणंचैवश्रीपदंचविशेषतः ॥ बिल्वप
त्रैस्तुहवनंशत्रोर्विजयदंतथा ॥ ५५ ॥ समिधःशान्तिकार्य्येषुपालाशखादिरादिकाः ॥ करवीरार्कजाःक्रूराःकण्टकिन्यस्तुनिग्रहे ॥ ५६ ॥

प्रशान्तःशान्तिकंकुर्य्यात्पौष्टिकंचविशेषतः ॥ निर्घृणःक्रुद्धचित्तस्तुप्रकुर्य्यादाभिचारिकम् ॥ ५७ ॥ अतीवदुरवस्थायांप्रतीकारान्तरंनचेत् ॥ आततायिनमुद्दिश्यप्रकुर्य्यादाभिचारिकम् ॥ ५८ ॥ स्वराष्ट्रपतिमुद्दिश्यनकुर्य्यादाभिचारिकम् ॥ यद्यास्तिकःसुधर्म्मिष्ठोमान्योवायोऽपिकोऽपिवा॥५९॥ तमुद्दिश्यापिनोकुर्य्यादाततायिनमप्युत ॥ मनसाकर्म्मणावाचायोऽपिकोऽपिशिवाश्रितः ॥ ६० ॥ स्वराष्ट्रपतिमुद्दिश्याशिवाश्रितमथापिवा ॥ कृत्वाभिचारिकंकर्म्मसद्योविनिपतेन्नरः ॥ ६१ ॥ स्वराष्ट्रपालकंतस्माच्छिवभक्तञ्चकञ्चन ॥ नहिंस्यादभिचाराद्यैर्यदीच्छेत्सुखमात्मनः ॥ ६२ ॥ अन्यंकमपिचोद्दिश्यकृत्वावैमारणादिकम् ॥ पश्चात्तापेनसंयुक्तःप्रायश्चित्तंसमाचरेत् ॥ ६३ ॥ बाणलिंगेऽपिवाकुर्य्यान्निर्द्धनोधनवानपि ॥ स्वयम्भूतेऽथवालिंगेआर्षकेवैदिकेऽपिवा ॥ ६४ ॥ अभावेहेमरत्नानामशक्तौचतदर्ज्जने ॥ मनसैवाचरेदेतद्द्रव्यैर्वाप्रतिरूपकैः ॥६५॥ क्वचिदंशेतुयःशक्तस्त्वशक्तःक्वचिदंशके ॥ सोऽपिशक्त्यनुसारेणकुर्वंश्चेत्फलमृच्छति ॥ ६६ ॥ कर्म्मण्यनुष्ठितेऽप्यस्मिन्फलंयत्रनदृश्यते ॥ द्विस्त्रिर्वावर्त्तयेत्तत्रसर्वथादृश्यतेफलम् ॥ ६७ ॥ पूजोपयुक्तंयद्द्रव्यंहेमरत्नाद्यनुत्तमम् ॥ तत्सर्वंगुरवेदद्याद्दक्षिणांचततःपृथक् ॥ ६८ ॥ सचेन्नेच्छतितत्सर्वंशिवायविनिवेदयेत् ॥ अथवाशिवभक्तेभ्योनान्येभ्यस्तुप्रदीयते ॥ ६९ ॥ यःस्वयंसाधयेच्छक्त्यागुर्व्वादिनिरपेक्षया ॥ सोऽप्येवमाचरेदत्रनगृह्णीयात्स्वयंपुनः ॥ ७० ॥ स्वयंगृह्णातियोलोभात्पूजांगंद्रव्यमुत्तमम् ॥ कांक्षितंनलभेन्मूढोनात्रकार्य्याविचारणा ॥ ७१ ॥ अर्च्चितंयत्तुतल्लिङ्गंगृह्णीयाद्वानवास्वयम् ॥ गृह्णीयाद्यदितन्नित्यंस्वयंवान्योऽपिवार्च्चयेत् ॥ ७२ ॥ यथोक्तमेवकर्म्मैतदाचरेद्योऽनपायतः ॥ फलंव्यभिचरेन्नैवमित्यतःकिंप्ररोचकम् ॥ ७३ ॥ तथाप्युद्देशतोवक्ष्येकर्म्मणःसिद्धिमुत्तमाम् ॥ अपिशत्रुभिराक्रान्तोव्याधिभिर्वाप्यनेकशः ॥ ७४ ॥ मृत्योरास्यगतश्चापिमुच्यतेनिरपायतः ॥ राजायतेऽतिकृपणोरिक्तोवैश्रवणायते ॥ ७५ ॥ कामायतेविरूपोऽपिवृद्धोपितरुणायते ॥शत्रुर्मित्रायतेसद्योविरोधीकिंकरायते॥७६॥विषायतेयदमृतंविषमप्यमृतायते॥ स्थलायतेसमुद्रोऽपिस्थलमप्यर्णवायते ॥ ७७ ॥ महीधरायतेश्वभ्रंसचश्वभ्रायतेगिरिः ॥ पद्माकरायतेवह्निःसरोवैश्वानरायते ॥ ७८ ॥ वनायतेयदुद्यानंतदुद्यानायतेवनम् ॥ सिंहायतेमृगःक्षुद्रःसिंहःक्रीडामृगायते ॥ ७९ ॥ स्त्रियोऽभिसारिकायन्तेलक्ष्मीःसुचरितायते ॥स्वैरप्रेष्यायतेवाणीकीर्त्तिस्तुगणिकायते॥८०॥ स्वैराचारायतेमेधावज्रसूचीयतेमनः ॥ महावातायतेशक्तिर्बलंमत्तगजायते ॥ ८१ ॥ स्तम्भायतेमहोद्योगैःशत्रुपक्षेस्थिताक्रिया ॥ शत्रुपक्षायतेऽरीणांसर्व्वएवसुहृज्जनः ॥ ८२ ॥ शत्रवःकुणपायन्तेजीवन्तोऽपिसबान्धवाः ॥ आपन्नोऽपिगतारिष्टःस्वयंखलवमृतायते॥८३॥ रसायनायतेनित्यमपथ्यमपिसेवितम् ॥ अनिशंक्रियमाणापिरतिस्त्वभिनवायते ॥८४॥ अनागतादिकंसर्व्वंकरस्थामलकायते॥यादृच्छिकफलायन्तेसिद्धयोऽप्यणिमादयः॥८५॥

बहुनात्रकिमुक्तेनसर्व्वकामार्थसिद्धिषु ॥ अस्मिन्कर्म्मणिनिर्वृत्तेत्वनवाप्यंनविद्यते ॥ ८६ ॥ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहिता
यामुत्तरभागेकाम्यपूजादिकथनंनामपञ्चविंशोऽध्यायः ॥२५॥ उपमन्युरुवाच ॥ अतःपरंप्रवक्ष्यामिकेवलामुष्मिकंविधिम् ॥ नैतेनसदृशंकिंचित्कर्म्मा
स्तिभुवनत्रये ॥ १ ॥ पुण्यातिशयसंयुक्तःसर्व्वदेवैरनुष्ठितः ॥ ब्रह्मणाविष्णुनाचैवरुद्रेणचविशेषतः ॥ २ ॥ इन्द्रादिलोकपालैश्चसूर्याद्यैर्नवभिर्ग्रहैः ॥
विश्वामित्रवसिष्ठाद्यैर्ब्रह्मविद्भिर्महर्षिभिः ॥ ३ ॥ श्वेतागस्त्यदधीचाद्यैरस्माभिश्चशिवाश्रितैः ॥ नन्दीश्वरमहाकालचण्डीशाद्यैर्गणेश्वरैः ॥ ४ ॥ पाताल
वासिभिर्दैत्यैःशेषाद्यैश्चमहोरगैः ॥ सिद्धैर्यक्षैश्चगन्धर्वैरक्षोभूतपिशाचकैः ॥ ५ ॥ स्वंस्वंपदमनुप्राप्तुंसर्व्वैरयमनुष्ठितः ॥ अनेनविधिनासर्व्वेदेवादेवत्वं
मागताः ॥ ६ ॥ ब्रह्माब्रह्मत्वमापन्नोविष्णुर्विष्णुत्वमागतः ॥ रुद्रोरुद्रत्वमापन्नइन्द्रश्चेन्द्रत्वमागतः ॥ ७ ॥ गणेशश्चगणेशत्वमनेनविधिनागतः ॥ सित
चन्दनतोयेनलिंगंस्नाप्यशिवंशिवाम् ॥ ८ ॥ श्वेतैर्विकसितैःपद्मैःसम्पूज्यप्रणिपत्यच ॥ तत्रपद्मासनंरम्यंकृत्वालक्षणसंयुतम् ॥ ९ ॥ विभवेसतिहेमाद्यै
रत्नाद्यैर्वास्वशक्तितः ॥ मध्येकेशरजालस्यस्थाप्यलिंगंकनीयसम् ॥ १० ॥ अङ्गुष्ठप्रतिमंरम्यंसर्व्वगन्धमयंशुभम् ॥ दक्षिणेस्थापयित्वातुबिल्वपत्रैः
समर्चयेत् ॥ ११ ॥ अगुरुंदक्षिणेपार्श्वेपश्चिमेतुमनःशिलाम् ॥ उत्तरेचन्दनंदद्याद्धरितालन्तुपूर्व्वतः ॥ १२॥ सुगन्धैःकुसुमैरम्यैर्विचित्रैश्चापिपूजयेत् ॥
धूपंकृष्णागुरुंदद्यात्सघृतञ्चसगुग्गुलुम् ॥१३ ॥ वासांसियानिसूक्ष्माणिविकाशानिनिवेदयेत् ॥ पायसंघृतसंमिश्रंघृतदीपांश्चदापयेत् ॥ १४ ॥ सर्व्वंनि
वेद्यमन्त्रेणततोगच्छेत्प्रदक्षिणम् ॥ प्रणम्यभक्त्यादेवेशंस्तुत्वावान्तेक्षमापयेत् ॥१५॥ सर्व्वोपहारसंमिश्रंतल्लिङ्गञ्चनिवेदयेत् ॥ शिवायाशिवमन्त्रेणद
क्षिणांमूर्तिमाश्रितः॥१६॥एवंयोऽर्च्चयतेनित्यंपञ्चगन्धमयंशुभम्॥सर्व्वपापविनिर्म्मुक्तःशिवलोकेमहीमते॥१७॥एतद्व्रतोत्तमंगुह्यंशिवलिङ्गंमहाव्रतम् ॥
भक्तस्यतेसमाख्यातंनदेयंयस्यकस्यचित् ॥ देयञ्चशिवभक्तेभ्यःशिवेनकथितंपुरा ॥ १८ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेपूजा
दिकथनंनामषड्विंशोऽध्यायः ॥२६॥ उपमन्युरुवाच ॥ नित्यानैमित्तिकात्काम्याद्यासिद्धिरिहकीर्तिता॥सासर्व्वालभ्यतेसद्योलिङ्गबेरप्रतिष्ठया ॥१॥
सर्व्वोलिंगमयोलोकःसर्व्वंलिंगेप्रतिष्ठितम्॥तस्मात्प्रतिष्ठितेलिङ्गेभवेत्सर्व्वंप्रतिष्ठितम् ॥ २॥ ब्रह्मणाविष्णुनावापिरुद्रेणान्येनकेनवा ॥ लिङ्गप्रतिष्ठामु
त्सृज्यक्रियतेस्वपदस्थितिः॥३॥ किमन्यदिहवक्तव्यंप्रतिष्ठांप्रतिकारणम् ॥ प्रतिष्ठितंशिवेनापिलिङ्गंवैश्वेश्वरंयतः ॥४॥ तस्मात्सर्व्वप्रयत्नेनपरत्रेहच
शर्म्मणे ॥ स्थापयेत्परमेशस्यलिङ्गंबेरमथापिवा॥५॥श्रीकृष्णउवाच ॥किमिदंलिङ्गमाख्यातंकथंलिङ्गीमहेश्वरः ॥ कथञ्चलिङ्गंभावोऽस्यकस्मादस्मि
न्छिवोऽर्च्यते ॥६॥उपमन्युरुवाच॥अव्यक्तंलिंगमाख्यातंत्रिगुणप्रभवाप्ययम् ॥ अनाद्यन्तञ्चविश्वस्ययदुपादानकारणम्॥७॥तदेवमूलप्रकृतिर्मायाच

गगनात्मिका ॥ ततएवसमुत्पन्नंजगदेतच्चराचरम् ॥८॥ अशुद्धंचैवशुद्धंयच्छुद्धाशुद्धञ्चतत्त्रिधा ॥ ततःशिवोमहेशश्चरुद्रोविष्णुःपितामहः ॥ ९ ॥ भूता
निचेन्द्रियैर्जातालीयन्तेऽत्रशिवाज्ञया॥अतएवशिवोलिङ्गीलिङ्गमाज्ञापयेद्यतः ॥१०॥यतोनतदनाज्ञातंकार्य्यायप्रभवेत्स्वतः॥ततोजातस्यविश्वस्यतत्रै
वविलयोयतः ॥ ११ ॥ अनेनलिङ्गतातस्यभवेन्नान्येनकेनचित् ॥ लिंगञ्चशिवयोर्देहस्ताभ्यांयस्मादधिष्ठितम् ॥ १२ ॥ अतस्तत्रशिवःसाम्बो
नित्यमेवसमर्च्यते ॥ लिंगवेदीमहादेवीलिंगंसाक्षान्महेश्वरः ॥ १३ ॥ तयोःसम्पूजनादेवसचसाचसमर्च्चितौ ॥ नतयोर्लिंगदेहत्वंविद्यतेपरमार्थतः॥
॥१४ ॥ यतःस्वतोविशुद्धौतौदेहस्तदुपचारतः ॥ तदेवपरमाशक्तिःशिवस्यपरमात्मनः॥१५॥शक्तिराज्ञायदाज्ञातंप्रसूतेतच्चराचरम् ॥ नतस्यमहि
माशक्योवक्तुंवर्षशतैरपि ॥ १६ ॥ येनादौमोहितौस्यातांब्रह्मनारायणावपि॥ पुरात्रिभुवनस्यास्यप्रलयेसमुपस्थिते ॥१७॥ वारिशय्यागतोविष्णुःसु
ष्वापानाकुलःसुखम् ॥ यदृच्छयागतस्तत्रब्रह्मालोकपितामहः ॥ १८ ॥ ददर्शपुण्डरीकाक्षंस्वपन्तंतमनाकुलम् ॥ माययामोहितःशम्भोर्विष्णुमाहपि
तामहः ॥१९॥ कस्त्वंवदेत्यमर्षेणप्रहृत्योत्थाप्यमाधवम् ॥ सतुहस्तप्रहारेणत्रिकेणाभिहतःक्षणात् ॥२०॥ प्रबुध्योत्थायशयनाद्ददर्शपरमेष्ठिनम् ॥ त
माहचान्तःसंक्रुद्धःस्वयंनक्रुद्धवद्धरिः ॥ २१ ॥ कुतस्त्वमागतोवत्सकस्मात्त्वंव्याकुलोवद ॥ इतिविष्णुवचःश्रुत्वाप्रभुत्वगुणसूचकम् ॥ २२ ॥ रज
साबद्धवैरस्तंब्रह्मापुनरभाषत ॥ वत्सेतिमांकुतोब्रूषेगुरुःशिष्यमिवात्मनः ॥ २३ ॥ मांनजानासिकिंनाथंप्रपञ्चोयस्यमेकृतिः ॥ त्रिधात्मानंविभज्येदं
सृष्ट्वाथपरिपाल्यते ॥ २४ ॥ संहरामिनमेकश्चित्स्रष्टाजगतिविद्यते ॥ इत्युक्तेसतिसोऽप्याहब्रह्माणंविष्णुरव्ययः ॥ २५ ॥ अहमेवादिकर्तास्यहर्ताच
परिपालकः ॥ भवानपिममैवाङ्गादवतीर्णःपुराव्ययात् ॥ २५ ॥ मन्नियोगात्त्वमात्मानंत्रिधाकृत्वाजगत्त्रयम् ॥ सृजस्यवसिचान्तेतत्पुनःप्रतिसृजस्य
पि ॥ २७ ॥ विस्मृतोऽसिजगन्नाथंनारायणमनामयम् ॥ तवापिजनकंसाक्षान्मामेवमवमन्यसे॥२८॥तवापराधोनास्त्यत्रभ्रान्तोऽसिमममायया॥ मत्प्र
सादादियंभ्रान्तिरप्येष्यतितवाचिरात् ॥ २९ ॥ शृणुसत्वंचतुर्व्वक्त्रसर्व्वदेवेश्वरोह्यहम् ॥ कर्त्ताभर्त्ताचहर्ताचनमयास्तिसमोविभुः ॥३०॥ एवमेवविवा
दोऽभूद्ब्रह्मविष्ण्वोःपरस्परम् ॥ अभवच्चमहायुद्धंभैरवंरोमहर्षणम् ॥ ३१ ॥ मुष्टिभिर्निघ्नतोस्तीव्रंराजसाबद्धवैरयोः ॥ तयोर्दर्पापहारायप्रबोधायचदेव
योः ॥ ३२ ॥ मध्येसमाविरभवल्लिङ्गमैश्वरमद्भुतम् ॥ ज्वालामालासहस्राढ्यमप्रमेयमनौपमम् ॥ ३३ ॥ क्षयवृद्धिविनिर्म्मुक्तमादिमध्यान्तवर्ज्जितम् ॥
तस्यज्वालासहस्रेणब्रह्मविष्णूविमोहितौ ॥ ३४ ॥ विसृज्ययुद्धंकिन्त्वेतदित्यचिन्तयतांतदा ॥ नतयोस्तस्ययाथात्म्यंप्रबुद्धमभवद्यदा ॥३५॥ तदा
समुद्यतौस्यातांतस्याद्यन्तंपरीक्षितुम् ॥ तत्रहंसाकृतिर्ब्रह्माविश्वतःपक्षसंयुतः ॥३६॥ मनोऽनिलजवोभूत्वागतस्तूर्द्ध्वंप्रयत्नतः ॥ नारायणोऽपिविश्वात्मा

नीलाञ्जनचयोपमम् ॥ ३७ ॥वाराहममितंरूपमास्थायगतवानधः ॥ एवंवर्षसहस्रन्तुत्वरान्विंष्णुरधोगतः ॥ ३८ ॥ नापश्यदल्पमप्यस्यमूलंलिङ्गस्य शूकरः ॥ तावत्कालंततश्चोर्द्ध्वंतस्यान्तंज्ञातुमिच्छया ॥ ३९ ॥ श्रान्तोऽत्यन्तमदृष्ट्वान्तंपपाताधःपितामहः॥ तथैवभगवान्विष्णुःश्रान्तःसंविग्नलोचनः॥ ॥ ४० ॥ क्लेशेनमहतातूर्णमधस्तादुत्थितोऽभवत् ॥ समागतावथान्योऽन्यंविस्मयस्मेरवीक्षणौ ॥४१॥ माययामोहितौशम्भोःकृत्याकृत्यंनजग्मतुः॥ पृष्ठतःपार्श्वतस्तस्यचाग्रतश्चास्थितावुभौ ॥ ४२ ॥ प्रणिपत्यकिमात्मेदमित्यचिन्तयतांतदा ॥ अथाविरभवत्तत्रसनादंशब्दलक्षणम् ॥ ४३ ॥ ओ मित्येकाक्षरंब्रह्मब्रह्मणःप्रतिपादकम् ॥ तदप्यविदितंतावद्ब्रह्मणाविष्णुनातथा ॥ ४४ ॥ रजसातमसाचित्तंतयोर्यस्मात्तिरस्कृतम् ॥ तदाविभक्तमभ वच्चतुर्द्धैकंतदक्षरम् ॥ ४५ ॥ अउमेतित्रिमात्राभिःपरस्ताच्चार्द्धमात्रया ॥ तत्राकारःश्रितोभागेतदालिङ्गस्यदक्षिणे ॥ ४६ ॥ उकारश्चोत्तरेतद्वन्मकार स्तस्यमध्यतः॥ अर्द्धमात्रात्मकोनादःश्रूयतेलिङ्गमूर्द्धनि ॥४७॥विभक्तेऽपितथातस्मिन्प्रणवेपरमाक्षरे॥ विभागार्थंश्चतौदेवौनकिञ्चिदवजग्मतुः॥४८॥ वेदात्मनातदाव्यक्तः प्रणवोविकृतिंगतः ॥ तत्राकारोऋगभवदुकारोयजुरव्ययः ॥ ४९ ॥ मकारःसामसञ्जातोनादस्त्वाथर्व्वणीश्रुतिः ॥ ऋगुपस्थापया माससमासात्त्वर्थमात्मनः ॥५०॥ रजोगुणेषुब्रह्माणंमूर्तिंष्वाद्यांक्रियास्वपि ॥ सृष्टिंलोकेषुपृथिवींतत्त्वेष्वात्मानमव्ययम्॥५१॥कलाध्वनिनिवृत्तिञ्चसद्यं ब्रह्मसुपञ्चसु॥लिङ्गभागेष्वधोभागंबीजाख्यंकारणत्रये॥५२॥ चतुःषष्टिगुणैश्वर्य्यंबौद्धंयदणिमादिषु॥तादित्थमथैर्दशभिर्व्याप्तंविश्वमृचाजगत् ॥ ५३ ॥ अथोपस्थापयामासस्वार्थंदशविधंयजुः॥सत्वंगुणेषुविष्णुश्चमूर्त्तिष्वाद्यांक्रियास्वपि॥५४॥स्थितिंलोकेष्वन्तरिक्षंविद्यांतत्त्वेषुचात्रिषु ॥कलाध्वसुप्रतिष्ठां चवामंब्रह्मसुपञ्चसु ॥ ५५ ॥ मध्यन्तुलिंगभागेषुयोनिश्चत्रिषुहेतुषु ॥ प्राकृतश्चतथैश्वर्य्यंतस्माद्विश्वंयजुर्म्मयम् ॥ ५६ ॥ ततोपस्थापयामाससामार्थं दशधात्मनः ॥ तमोगुणेष्वथोरुद्रंमूर्त्तिमाद्यांक्रियासुच ॥ ५७ ॥ संहृतिंत्रिषुलोकेषुतत्त्वेषुशिवमुत्तमम् ॥ विद्याकलास्वघोरंचब्रह्मब्रह्मसुपञ्चसु॥५८॥ लिङ्गभागेषुपीठोर्द्ध्वंबीजिनंकारणत्रये ॥ पौरुषंचतथैश्वर्य्यमित्थंसाम्नाततंजगत् ॥ ५९॥ अथाथर्व्वाह्वनैर्गुण्यमर्थंप्रथममात्मनः ॥ ततोमहेश्वरंसाक्षान्मू र्त्तिष्वपिसदाशिवम् ॥ ६० ॥ क्रियासुनिष्क्रियस्यापिशिवस्यपरमात्मनः ॥ भूतानुग्रहणञ्चैवमुच्यन्तेयेनजन्तवः ॥ ६१ ॥ लोकेष्वपियतोवाचोनिवृ त्तामनसासह ॥ तदूर्द्ध्वमुन्मनालोकात्सोमलोकमलौकिकम् ॥ ६२ ॥ सोमःसहोमयायत्रनित्यंनिवसतीश्वरः ॥ तदूर्द्ध्वमुन्मनालोकाद्यंप्राप्तोननिवर्त्त ते ॥ ६३ ॥ शान्तिश्चशान्त्यतीतांचव्यापिकांवैकलास्वपि ॥ तत्पुरुषंतथेशानंब्रह्मब्रह्मसुपञ्चसु ॥ ६४॥ मूर्द्धानमपिलिङ्गस्यनादभागेष्वनुत्तमम् ॥ यत्रावाह्यसमाराध्यःकेवलोनिष्कलःशिवः ॥ ६५ ॥ तत्त्वेष्वपितदाबिन्दोर्नादाच्छक्तेस्ततःपरात् ॥ तत्त्वादपिपरंतत्त्वमतत्त्वंपरमार्थतः ॥ ६६ ॥ क

रणेषुत्रयातीतान्मायाविक्षोभकारणात् ॥ अनन्ताच्छुद्धविद्यायाःपरस्ताच्चमहेश्वरात् ॥ ६७॥ सर्व्वविद्येश्वराधीशान्नपराच्चसदाशिवात् ॥ सर्व्वमन्त्रतनो
र्देवाच्छक्तित्रयसमन्वितात् ॥६८॥ पञ्चवक्त्रादशभुजात्साक्षात्सकलनिष्कलात् ॥ तस्मादपिपराद्बिन्दोरर्द्धेन्दोश्चततःपरात् ॥ ६९॥ ततःपरान्निशाधी
शान्नादाख्याच्चततःपरात् ॥ ततःपरात्सुषुम्नेशाद्ब्रह्मरन्ध्रेश्वरादपि ॥७०॥ ततःपरस्याःशक्तेश्चपरस्ताच्छिवतत्त्वतः ॥ परमंकारणंसाक्षात्स्वयंनिष्कार
णंशिवम् ॥ ७१ ॥ कारणानाञ्चधातारंध्यातारंध्येयमव्ययम् ॥ परमाकाशमध्यस्थंपरमात्मोपरिस्थितम् ॥ ७२ ॥ सर्व्वैश्वर्य्येणसम्पन्नंसर्व्वेश्वरमनी
श्वरम् ॥ ऐश्वर्य्याच्चापिमायेयादशुद्धान्मानुषादिकात् ॥ ७३ ॥ अपराच्चपरात्त्याज्यादविशुद्धाध्वगोचरात् ॥ तत्पराच्छुद्धविद्याद्यादुन्मनान्तात्परा
त्परात् ॥ ७४ ॥ परमंपरमैश्वर्य्यमुन्मनाद्यमनादिच ॥ अपारमपराधीनंनिःसाम्यातिशयंस्थिरम् ॥ ७५ ॥ इत्थमर्थैर्दशविधैरियमाथर्वणीश्रुतिः॥
यस्माद्वरीयसीतस्माद्विश्वंव्याप्तमथर्व्वणा ॥७६॥ ऋग्वेदःपुनराहेदंजाग्रद्रूपंमयोच्यते ॥ येनाहमात्मतत्त्वस्यनित्यमस्म्यभिधायकः ॥ ७७ ॥ यजुर्व्वे
दोऽवदत्तद्वत्स्वप्नावस्थामयोच्यते॥भोग्यात्मनापरिणताविद्यावेद्यायतोमयि॥७८॥सामचाहसुषुप्त्याख्यमेवंसर्व्वंमयोच्यते ॥ ममार्थेनशिवेनेदंतामसेना
भिधीयते ॥ ७९ ॥ अथर्व्वाहतुरीयाख्यंतुरीयातीतमेवच ॥ मयाभिधीयतेतस्मादध्वातीतपदोऽस्म्यहम् ॥ ८० ॥ अध्वात्मकन्तुत्रिमलंशिवविद्या
त्मसंज्ञितम् ॥ तत्त्रैगुण्यंत्रयीसाध्यंसंशोध्यंचपदैषिणाम् ॥ ८१ ॥ अध्वातीतंतुरीयाख्यंनिर्व्वाणंपरमंपदम् ॥ तदतीतंचनैर्गुण्यादध्वनोऽस्यविशोध
कम् ॥ ८२ ॥ द्वयोःप्रमापकोनादोनादान्तश्चमदात्मकः ॥ तस्मान्ममार्थःस्वातन्त्र्यात्प्रधानःपरमेश्वरः ॥ ८३ ॥ यदस्तिवस्तुतत्सर्व्वंगुणप्राधान्ययो
गतः ॥ समस्तंव्यस्तमपिचप्रणवार्थंप्रचक्षते ॥ ८४ ॥ सर्व्वार्थवाचकंतस्मादेकंब्रह्मैतदक्षरम् ॥ तेनोमितिजगत्कृत्स्नंकुरुतेप्रथमंशिवः ॥ ८५ ॥ शिवो
वाप्रणवोह्येषप्रणवोवाशिवःस्मृतः ॥ वाच्यवाचकयोर्भेदोनात्यन्तेविद्यतेयतः ॥ ८६ ॥ चिन्तयारहितोरुद्रोवाचोयंमनसासह ॥ अप्राप्यचनिवर्त्तंतेवा
च्यस्त्वेकाक्षरेणसः ॥ ८७ ॥ एकाक्षरादकाराख्यादात्माब्रह्माभिधीयते ॥ एकाक्षरादुकाराख्याद्विद्याविष्णुरुदीर्य्यते ॥ ८८ ॥ एकाक्षरान्मकाराख्या
च्छिवोरुद्रउदाहृतः ॥ दक्षिणांगान्महेशस्यजातोब्रह्मात्मसंज्ञकः ॥८९॥ वामांगादभवद्विष्णुस्ततोविद्येतिसंज्ञितः ॥ हृदयान्नीलरुद्रोऽभूच्छिवस्यशिव
संज्ञितः ॥ ९० ॥ सृष्टेःप्रवर्त्तकोब्रह्मास्थितेर्विष्णुर्विमोहकः ॥ संहारस्यतथारुद्रस्तयोर्नित्यंनियामकः ॥ ९१ ॥ तस्मात्त्रयस्तेकथ्यन्तेजगतःकारण
त्रयम् ॥ कारणत्रयहेतुश्चशिवःपरमकारणम् ॥ ९२ ॥ अर्थमेतमविज्ञायरजसाबद्धवैरयोः ॥ युवयोःप्रतिबोधायमध्येलिंगमुपस्थितम् ॥ ९३ ॥ एवमो
मितिमांप्राहुर्यदिहोक्तमथर्व्वणा ॥ ऋचोयजूंषिसामानिशाखाश्चान्याःसहस्रशः ॥९४॥ वेदेष्वेवंस्वयंवक्त्रैर्व्यक्तमित्यवदत्स्वपि ॥ स्वप्नानुभूतमिवतत्ता

भ्यांनाध्यवसीयते ॥ ९५ ॥ तयोस्तत्रप्रबोधायतमोऽपनयनायच ॥ लिंगेऽपिमुद्रितंसर्व्वंयथावेदैरुदाहृतम् ॥ ९६ ॥ तद्दृष्ट्वामुद्रितंलिंगेप्रसादाल्लिंगिन
स्तदा ॥ प्रशान्ततमसौदेवौप्रबुद्धौसम्भूवतुः ॥ ९७ ॥ ततोलिङ्गस्यलिङ्गत्वंलिङ्गिनोऽपिचालिंगिताम् ॥ लिंगेविश्वस्यजगतोविशेषात्स्वात्मनोर
पि ॥ ९८ ॥ उत्पत्तिविलयञ्चैवयाथात्म्यञ्चषडध्वनाम् ॥ ततःपरतरंधामधामवन्तंचपूरुषम् ॥ ९९ ॥ निरुत्तरतरंब्रह्मनिष्कलंशिवमीश्वरम् ॥ पशु
पाशमयस्यास्यप्रपञ्चस्यसदापतिम् ॥ १०० ॥ अकुतोभयमत्यन्तमवृद्धिक्षयमव्ययम् ॥ बाह्यमाभ्यन्तरंव्याप्तंबाह्याभ्यन्तरवर्ज्जितम् ॥ १०१ ॥
निरस्तातिशयंशश्वद्विश्वलोकविलक्षणम् ॥ अलक्षणमनिर्देश्यमवाङ्मनसगोचरम् ॥ १०२ ॥ प्रकाशैकरसंशान्तंप्रसन्नंसततोदितम् ॥ सर्व्व
कल्याणनिलयंशक्त्याताद्दृशयान्वितम् ॥ १०३ ॥ ज्ञात्वादेवंविरूपाक्षंब्रह्मनारायणौतदा ॥ रचयित्वाञ्जलिंमूर्ध्निभीतौतौवाचमूचतुः ॥ १०४ ॥
॥ ब्रह्मोवाच ॥ ॥ अज्ञोवाहमभिज्ञोवात्वयादौदेवनिर्म्मितः ॥ ईदृशींभ्रान्तिमापन्नइतिकोऽत्रापराध्यति ॥ १०५ ॥ आस्तांममेदमज्ञानं
त्वयिसन्निहितेप्रभो ॥ निर्भयःकोऽभिभाषेतकृत्यंस्वस्यपरस्यवा ॥ १०६ ॥ आवयोर्देवदेवेशविवादोऽपिहिशोभनः ॥ पादप्रणाम
फलदोनाथस्यभवतोयतः ॥ १०७ ॥ विष्णुरुवाच ॥ स्तोतुंदेवनवागस्तिमहिम्नःसदृशीतव ॥ प्रभोरग्रेविधेयानांतूष्णीम्भावोव्यातिक्रमः ॥ १०८ ॥
किमत्रसंघटेत्कृत्यमित्येवावसरोचितम् ॥ अजानन्नपियत्किञ्चित्प्रलप्यत्वांनतोऽस्म्यहम् ॥१०९॥ कारणत्वंत्वयादत्तंविस्मृतंतवमायया ॥ मोहितोऽहङ्क
तश्चाहंपुनरेवास्मिशासितः ॥ ११० ॥ विज्ञापितैःकिंबहुभिर्भीतोऽस्मिभृशमीश्वर ॥ यतोऽहमपरिच्छेद्यंत्वांपरिच्छेतुमुद्यतः ॥१११ ॥ त्वामुशन्तिम
हादेवंभीतानामार्त्तिनाशनम् ॥ अतोव्यतिक्रमंमेऽद्यक्षन्तुमर्हसिशङ्कर ॥ ११२ ॥ इतिविज्ञापितस्ताभ्यामीश्वराभ्यांमहेश्वरः ॥ प्रीतोऽनुगृह्यतौदेवौ
स्मितपूर्वमभाषत ॥ ११३ ॥ ईश्वरउवाच ॥ वत्सवत्सविधेविष्णोमाययाममभोहितौ ॥ युवांप्रभुत्वेऽहंकृत्यबद्धवैरौपरस्परम् ॥ ११४ ॥ विवादंयुद्ध
पर्य्यन्तंकृत्वानोपरतौकिल ॥ तेनोच्छिन्नाप्रजासृष्टिर्जगत्कारणभूतयोः ॥ ११५ ॥ अज्ञानमानप्रभवाद्भ्रमत्याद्युवयोरपि ॥ तन्निवर्तयितुंयुष्मद्दर्पमो
हौमयैवतु ॥ ११६ ॥ एवंनिवारितावद्यलिंगाविर्भावलीलया ॥ तस्माद्व्यंविषादञ्चव्रीडांचोत्सृज्यकृत्स्नशः ॥ ११७ ॥ यथास्वंकर्म्मकुर्य्यातांभवन्तौ
वीतमत्सरौ ॥ पुरामभाज्ञयासार्द्धंसमस्ताज्ञानसंहिताः ॥ ११८ ॥ युवाभ्यांहिमयादत्ताःकारणत्वप्रसिद्धये ॥ मन्त्ररत्नञ्चसूत्राख्यंपंचाक्षरमयंपरम् ॥
॥११९॥ मयोपदिष्टंसर्व्वंतद्युवयोरद्यविस्मृतम् ॥ ददामिचपुनःसर्व्वंयथापूर्वममाज्ञया ॥ १२० ॥ यतोयुवांविनातेननक्षमौसृष्टिरक्षणे ॥ एवमुक्त्वामहादे
वोनारायणपितामहौ ॥ १२१ ॥ मन्त्रेणाज्ञांददौताभ्यांज्ञानसंहितयासह ॥ तौलब्ध्वामहतींदिव्यामाज्ञांमाहेश्वरींपराम् ॥१२२॥ महार्थंमन्त्ररत्नञ्चतथै

वसकलाःकलाः ॥दण्डवत्प्रणतिंकृत्वादेवदेवस्यपादयोः ॥१२३॥ अतिष्ठतांवीतभयावानन्दस्तिमितौतदा ॥ एतस्मिन्नन्तरेचेत्रमिन्द्रजालवदैश्वरम्
॥१२४॥लिंगंक्वापितिरोभूतंनताभ्यामुपलभ्यते॥ततोविलप्यहाहेतिसद्यःप्रणयभंगतः॥१२५॥किमिदंकिमिदंवृत्तमितिचोक्तापरस्परम् ॥ अचिन्त्यवैभ
वंशम्भोर्विचिन्त्यचगतव्यथौ ॥ १२६ ॥ अभ्युपैत्यपरांमैत्रीमालिंग्यचपरस्परम् ॥ जगद्व्यापारमुद्दिश्यजग्मतुर्देवपुंगवौ॥१२७॥ततःप्रभृतिशक्राद्याः
सर्व्वएवसुरासुराः ॥ ऋषयश्चनरानागानार्य्यश्चापिविधानतः ॥ लिंगप्रतिष्ठांकुर्व्वन्तिलिंगंतत्पूजयन्तिच ॥ १२८ ॥ इति श्रीशैवेमहापुराणेवायवीयसं
हितायामुत्तरभागेलिङ्गाविर्भावकथनंनामसप्तविंशोऽध्यायः ॥ २७ ॥ श्रीकृष्णउवाच ॥ भगवञ्छ्रोतुमिच्छामिप्रतिष्ठाविधिमुत्तमम् ॥ लिंगस्यापिचबे
रस्यशिवेनविहितंतथा ॥ १ ॥ उपमन्युरुवाच ॥ अनात्मप्रतिकूलेतुदिवसेशुक्लपक्षके ॥ शिवशास्त्रोक्तमार्गेणकुर्य्याल्लिंगंप्रमाणवत् ॥ २ ॥ स्वीकृत्या
थशुभंस्थानंभूपरीक्षांविधायच ॥ दशोपचारान्कुर्व्वीतलक्षणोद्धारपूर्व्वकान् ॥ ३ ॥ तेषांदशोपचाराणांपूर्व्वंपूज्यविनायकम् ॥ स्थानशुद्ध्यादिकंकृ
त्वालिंगंस्नानालयंनयेत् ॥ ४ ॥ शलाकयाकांचनयाकुंकुमादिरसाक्तया ॥ लाञ्छितंलक्षणंशिल्पशास्त्रेणविलिखेततः ॥ ५ ॥ अष्टमृत्सलिलैर्वाथपंचा
मृतजलैस्तथा ॥ लिङ्गंपिण्डिकयासार्द्धंपञ्चगव्यैश्चशोधयेत् ॥ ६ ॥ सवेदिकंसमभ्यर्च्यदिव्याद्यन्तुजलाशयम् ॥ नीत्वाधिवासयेत्तत्रलिङ्गं
पिण्डिकयासह ॥ ७ ॥ अधिवासालयेशुद्धेसर्व्वशोभासमन्विते ॥ सतोरणेसावरणेदर्भमालासमावृते ॥ ८ ॥ दिग्गजाष्टकसम्पन्नेदिक्पाला
ष्टघटान्विते ॥ अष्टमंगलकैर्युक्तेकृतदिक्पालकार्चिते ॥ ९ ॥ तैजसंदारवंवापिकृत्वापद्मासनाङ्कितम् ॥ विन्यसेन्मध्यतस्तत्रविपुलंपीठिकालयम्
॥ १० ॥ द्वारपालान्समभ्यर्च्यभद्रादींश्चतुरःक्रमात् ॥ सुभद्रश्चविभद्रश्चसुनन्दश्चविनन्दकः ॥ ११ ॥ स्नापयित्वासमभ्यर्च्यलिंगंवेदिकयास
ह ॥ सकूर्चाभ्यान्तुवस्त्राभ्यांसमाविष्टचसमन्ततः ॥ १२ ॥ प्रापय्यशनकैस्तोयंपीठिकोपरिशाययेत् ॥ प्राक्छिरस्कमधःसूत्रंपिण्डिकाञ्चास्यपश्चि
मे ॥ १३ ॥ सर्व्वमंगलसंयुक्तंलिंगंतत्राधिवासयेत् ॥ पञ्चरात्रंत्रिरात्रंवाप्येकरात्रमथापिवा ॥ १४ ॥ विसृज्यपूजितांस्तत्रलिंगञ्चोद्धृत्यपूर्व्ववत् ॥
सम्पूज्योत्सवमार्गेणशयनालयमानयेत्॥ १५ ॥तत्रापिशयनस्थानंकुर्य्यान्मण्डलमध्यतः ॥ शुद्धैर्जलैस्स्नापयित्वालिङ्गमभ्यर्च्चयेत्क्रमात् ॥ १६ ॥
ऐशान्यांपद्ममालिख्यशुद्धालिप्तेमहीतले ॥ शिवकुम्भंसाधयित्वातत्रावाह्यशिवंयजेत् ॥१७॥ वेदिमध्येसितंपद्मंपरिकल्प्यविधानतः ॥ तस्यपश्चिमत
श्चापिपिण्डिकापद्ममालिखेत् ॥ १८ ॥ क्षौमाद्यैर्वाहतैर्वस्त्रैःपुष्पैर्दर्भैरथापिवा ॥ प्रकल्प्यशयनंतस्मिन्हेमपुष्पंविनिक्षिपेत् ॥ १९ ॥ तत्रलिङ्गंसमा
नीयसर्व्वमंगलनिस्वनैः ॥ रक्तेनवस्त्रयुग्मेनसकूर्च्चेनसमन्ततः ॥ २० ॥ सहपिण्डिकयावेष्टयशाययेच्चयथापुरा ॥ पुरस्तात्पद्ममालिख्यतद्दलेषुयथा

क्रमम् ॥ २१ ॥ विद्येशकलशान्यस्येन्मध्येशैवीञ्चवर्द्धनीम् ॥ परीत्यपञ्चत्रितयंजुहुयुर्द्विजसत्तमाः ॥ २२ ॥ तेचाष्टमूर्त्तयःकल्प्याःपूर्व्वादिपरितः
स्थिताः ॥ चत्त्वारश्चाथवादिक्षुस्वध्येतारःसजापकाः ॥ २३ ॥ जुहुयुस्तेविरंच्याद्याश्चतस्रोमूर्त्तयःस्मृताः ॥ देशिकःप्रथमंतेषामैशान्यांपश्चिमेऽथवा
॥ २४ ॥प्रधानहोमंकुर्व्वीतसप्तद्रव्यैर्यथाक्रमम् ॥ आचार्य्यात्पादमर्द्धंवाजुहुयुश्चापरेद्विजाः ॥ २५॥ प्रधानमेकमेवात्रजुहुयादथवागुरुः ॥ पूर्व्वंपूर्णाहुते
र्हुत्वाघृतेनाष्टोत्तरंशतम् ॥२६॥ मूर्ध्निमूलेनलिंगस्यशिवहस्तंप्रविन्यसेत् ॥ शतमर्द्धंतदर्द्धंवाक्रमाद्द्रव्यैश्चसप्तभिः ॥२७॥ हुत्वाहुत्वास्पृशेछिङ्गंवेदिकांच
पुनःपुनः ॥ पूर्णाहुतिंततोहुत्वाक्रमाद्द्याच्चदक्षिणाम् ॥ २८ ॥ आचार्य्यात्पादमर्द्धंवाहोतॄणांस्थपतेरपि ॥ तदर्द्धंदेयमन्येभ्यःसदस्येभ्यश्चशक्तितः ॥
॥ २९ ॥ ततःश्वभ्रेवृषंहैमंकूर्च्चंवापिनिवेश्यच ॥ मृदंभसापञ्चगव्यैःपुनःशुद्धजलेनच ॥ ३० ॥ शोधितांचन्दनालिप्तांश्वभ्रेब्रह्मशिलांक्षिपेत् ॥
करन्यासंततःकृत्वानवभिःशक्तिनामभिः ॥ ३१ ॥ हरितालादिधातूंश्चबीजगन्धौषधैरपि ॥ शिवशास्त्रोक्तविधिनाक्षिपेद्ब्रह्मशिलोपरि ॥ ३२ ॥
प्रतिलिङ्गन्तुसंस्थाप्यक्षीरवृक्षसमुद्भवम्॥ स्थितंबुद्धातमुत्सृज्यलिङ्गंब्रह्मशिलामपि॥३३॥प्रागुदक्प्रवणंकिञ्चित्स्थापयेन्मूलविद्यया ॥ पिण्डिकांचा
थसंयोज्यशाक्तंमूलमनुस्मरन् ॥ ३४ ॥ बन्धनंबन्धकद्रव्यैःकृत्वास्थानंविशोध्यच ॥ दत्त्वाचार्घ्यञ्चपुष्पाणिकुर्य्युर्यवनिकांपुनः ॥ ३५ ॥ यथायोग्यं
निषेकादिलिङ्गस्यपुरतस्तदा ॥ आनीयशयनस्थानात्कलशान्विन्यसेत्क्रमात्॥३६॥ महापूजामथारभ्यसम्पूज्यकलशान्दश ॥ शिवमन्त्रमनुस्मृत्य
शिवकुम्भजलान्तरे ॥३७॥अङ्गुष्ठानामिकायोगादादायतमुदीरयेत् ॥ न्यसेदीशानभागस्यमध्येलिङ्गस्यमन्त्रवित् ॥ ३८ ॥ शक्तिंन्यसेत्तथाविद्यांवि
द्येशांश्चयथाक्रमम्॥लिङ्गमूलेशिवजलैस्तथालिङ्गंनिषेचयेत्॥३९॥वर्द्धन्यापिण्डिकांलिङ्गंविद्येशकलशैःपुनः ॥ अभिषिच्यासनंपश्चादाधाराद्यंप्रकल्पं
येत्॥४०॥कृत्वापञ्चकलान्यासंदीप्तंलिंगमनुस्मरन्॥आवाहयेच्छिवौसाक्षात्प्रांजलिःप्रागुदङ्मुखः ॥४१॥ वृषाधिराजमारुह्यविमानंवानभःस्थलात् ॥
अलङ्कृतंसमायान्तंदेव्यादेवमनुस्मरन्॥४२॥सर्व्वाभरणशोभाढ्यंसर्वमंगलनिस्वनैः॥ब्रह्मविष्णुमहेशार्कशक्राद्यैर्देवदानवैः ॥४३॥ आनन्दक्लिन्नसर्व्वाङ्गै
र्विन्यस्ताञ्जलिमस्तकैः ॥ स्तुवद्भिरेवनृत्यद्भिर्नमद्भिरभितोवृतम् ॥ ४४ ॥ ततःपञ्चोपचाराणांकृत्वापूजांसमापयेत् ॥ नातःपरतरःकश्चिद्विधिःपञ्चो
पचारकात् ॥ ४५ ॥ प्रतिष्ठांलिङ्गवत्कुर्य्यात्प्रतिमास्वपिसर्व्वतः॥ लक्षणोद्धारसमयेकार्य्यंनयनमोचनम् ॥४६॥ जलाधिवासेशयनेशाययेत्तान्त्वधो
मुखीम् ॥ कुम्भोदरगतंमन्त्रंहृदितासांनियोजयेत्॥४७॥कृतालयांपरामाहुःप्रतिष्ठामकृतालयात् ॥ शक्तःकृतालयंपश्चात्प्रतिष्ठाविधिमाचरेत् ॥४८॥
अशक्तश्चेत्प्रतिष्ठाप्यलिङ्गंबेरमथापिवा ॥ शक्तेरनुगुणंपश्चात्प्रकुर्व्वीतशिवालयम् ॥४९॥ गृहार्च्चायांपुनर्वक्ष्येप्रतिष्ठाविधिमुत्तमम् ॥ कृत्वाकनीयसंबेरं

लिङ्गंवालक्षणान्वितम् ॥५०॥ अयनेचोत्तरेप्राप्तेशुक्लपक्षेशुभेदिने ॥ वेदिंकृत्वाशुभेदेशेतत्राब्जंपूर्व्ववल्लिखेत् ॥५१॥ विकीर्य्यपत्रपुष्पादिमध्येकुम्भंनिधाय
च॥ परितस्तस्यचतुरःकलशान्दिक्षुविन्यसेत् ॥ ५२ ॥ पञ्चब्रह्माणितद्बीजैस्तेषुपञ्चसुपञ्चभिः ॥ न्यस्यसम्पूज्यमुद्रादिदर्शयित्वाभिरक्ष्यच ॥ ५३ ॥
विशोध्यलिङ्गंबेरंवामृत्तोयाद्यैर्यथापुरा ॥ स्थापयेत्पुष्पसञ्छन्नमुत्तरस्थेवरासने ॥ ५४ ॥ निधायपुष्पंशिरसिप्रोक्षयेत्प्रोक्षणीजलैः ॥ समभ्यर्च्चयेत्पु
नःपुष्पैर्जयशब्दादिपूर्व्वकम् ॥ ५५ ॥ कुम्भैरीशानविद्यान्तैःस्नापयेन्मूलविद्यया ॥ ततःपञ्चकलान्यासंकृत्वापूजाञ्चपूर्व्ववत् ॥५६॥ नित्यमाराध
येत्तत्रदेव्यादेवंत्रिलोचनम् ॥ एकमेवाथवाकुम्भंमूर्तिमन्त्रसमन्वितम् ॥ ५७ ॥ न्यस्यपद्मान्तरेसर्व्वंशेषंपूर्व्ववदाचरेत् ॥ अत्यन्तोपहतंलिङ्गंविशो
ध्यस्थापयेत्पुनः ॥ ५८ ॥ सम्प्रोक्षयेदुपहतंमनागुपहतंयजेत् ॥ लिङ्गानिबाणसंज्ञानिस्थापनीयानिवानवा ॥ ५९ ॥ तानिपूर्व्वंशिवेनैवसंस्कृतानि
यतस्ततः ॥ लौहानिस्थापनियानियानिदृष्टानिबाणवत् ॥६०॥ स्वयमुद्भूतलिङ्गेचादिव्येचार्षेतथैवच ॥ अपीठेपीठमावेश्यकृत्वासम्प्रोक्षणेविधिम् ॥
॥ ६१ ॥ यजेत्तत्रशिवंतेषांप्रतिष्ठानविधीयते ॥ दग्धंश्लथंक्षताङ्गञ्चक्षिपेल्लिङ्गंजलाशये ॥ ६२ ॥ सन्धानयोग्यंसन्धायप्रतिष्ठाविधिमाचरेत् ॥ बेराद्वा
विकलाल्लिङ्गाद्देवपूजापुरःसरम् ॥ ६२ ॥ उद्वास्यहृदादिसन्धानंत्यागंवायुक्तमाचरेत् ॥ एकाहपूजाविहतौकुर्य्याद्द्विगुणमर्च्चनम् ॥ ६४ ॥ द्विरात्रेचमहापू
जांसम्प्रोक्षणमतःपरम् ॥ मासादूर्द्ध्वमनेकाहंपूजायदिविहन्यते ॥ ६५ ॥ प्रतिष्ठाचोच्यतेकैश्चित्कैश्चित्सम्प्रोक्षणक्रमः ॥ सम्प्रोक्षणेतुलिङ्गादेर्देवमुद्वा
स्यपूर्व्ववत् ॥ ६६ ॥ अष्टपंचक्रमेणैवस्नापयित्वामृदम्भसा ॥ गवांरसैश्चसंस्नाप्यदर्भतोयैर्विशोध्यच ॥ ६७ ॥ प्रोक्षयेत्प्रोक्षणीतोयैर्मूलेनाष्टोत्तरं
शतम् ॥ सपुष्पंसकुशंपाणिंन्यस्यलिङ्गस्यमस्तके ॥ ६८ ॥ पंचावरंजपेन्मूलमष्टोत्तरशत्तोत्तरम् ॥ ततोमूलेनमूर्द्धादिपीठान्तंसंस्पृशेदपि ॥ ६९ ॥
पूजाञ्चमहतींकुर्य्याद्देवमावाह्यपूर्व्ववत् ॥ अलब्धेस्थापितेलिङ्गेशिवस्थानेजलेऽथवा ॥ वह्नौरवौतथाव्योम्निभगवन्तंशिवंयजेत् ॥ ७० ॥
इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेलिङ्गबेरप्रतिष्ठासम्प्रोक्षणादिविधिकथनंनामाष्टाविंशोऽध्यायः ॥ २८ ॥ श्रीकृष्णउवाच ॥
ज्ञानेक्रियायांचर्यायांसारमुद्धृत्यसंग्रहात् ॥ उक्तंभगवतासर्व्वंश्रुतंश्रुतिसमंमया ॥ १ ॥ इदानींश्रोतुमिच्छामियोगंपरमदुर्लभम् ॥ साधिकारं
चसाङ्गञ्चसविधिंसप्रयोजनम् ॥ २ ॥ यद्यस्तिमरणंवैधंयोगाद्यनुपमर्द्दतः ॥ सद्यःसाधयितुशक्यंयेनस्यान्नात्महानरः ॥ ३ ॥ तच्चतत्कारणंचै
वतत्कालकरणानिच ॥ तद्भेदतारतम्यञ्चवक्तुमर्हसितत्त्वतः ॥ ४ ॥ उपमन्युरुवाच ॥ स्थानेपृष्टंत्वयाकृष्णसर्वप्रश्नार्थवेदिना ॥
ततःक्रमेणतत्सर्व्वंवक्ष्येशृणुसमाहितः ॥ ५ ॥ निरुद्धवृत्त्यन्तरस्यशिवेचित्तस्यनिश्चला ॥ यावृत्तिःसासमासेनयोगःसखलुपञ्चधा ॥ ६ ॥ मन्त्रयोगः

स्पर्शयोगोभावयोगस्तथापरः ॥ अभावयोगःसर्व्वेभ्योमहायोगःपरोमतः ॥ ७ ॥ मन्त्राभ्यासवशेनैवमन्त्रवाच्यार्थगोचरः ॥ अव्याक्षेपामनोवृत्तिर्म
न्त्रयोगउदाहृतः ॥ ८ ॥ प्राणायामसखासैवस्पर्शयोगोऽभिधीयते ॥ समन्त्रःस्पर्शनिर्म्मुक्तोभावयोगःप्रकीर्त्तितः ॥९॥ विलीनावयवंविश्वंरूपंसम्भा
व्यतेयतः ॥ अभावयोगःसम्प्रोक्तोऽनाभासाद्वस्तुनःसतः ॥ १० ॥ शिवस्वभावएवैकाश्चिन्त्यतेनिरुपाधिकः ॥ यथासैवमनोवृत्तिर्महायोगइहोच्यते ॥
॥ ११ ॥ दृष्टेतथानुश्रविकेविरक्तंविषयेमनः ॥ यस्यतस्याधिकारोऽस्तियोगेनान्यस्यकस्यचित् ॥ १२ ॥ विषयद्वयदोषाणांगुणानामीश्वरस्यच ॥
विमर्शादेवसततंविरक्तंजायतेमनः ॥ १३ ॥ अष्टाङ्गोवाषडङ्गोवासर्व्वयोगःसमासतः ॥ यमश्चनियमश्चैवस्वस्तिकाद्यंतथासनम् ॥ १४ ॥ प्राणायामः
प्रत्याहारोधारणाध्यानमेवच ॥ समाधिरितियोगाङ्गान्यष्टौचेतिप्रकीर्त्तिताः ॥ १५ ॥ आसनंप्राणसंरोधःप्रत्याहारोऽथधारणा ॥ ध्यानंसमाधिर्योगस्य
षडङ्गानिसमासतः ॥ १६ ॥ पृथग्लक्षणमेतेषांशिवशास्त्रेसमीरितम् ॥ शिवागमेषुचान्येषुविशेषात्कामिकादिषु ॥ १७ ॥ योगशास्त्रेष्वपितथापुरा
णेष्वपिकेषुचित् ॥ तस्मात्समासात्सामान्याद्वक्ष्येयोगाङ्गलक्षणम् ॥१८॥ अहिंसासत्यमस्तेयंब्रह्मचर्य्यपरिग्रहौ ॥ यमइत्युच्यतेसद्भिःपञ्चावयवयोग
तः ॥१६॥ शौचंतुष्टिस्तपश्चैवजपःप्रणिधिरेवच ॥ इतिपञ्चप्रभेदःस्यान्नियमःस्वांशभेदतः ॥ २० ॥ स्वस्तिकंपद्ममर्द्धेन्दुवीरंयोगंप्रसाधितम् ॥ पर्य्य
ङ्कञ्चयथेष्टञ्चप्रोक्तमासनमष्टधा ॥ २१ ॥ प्राणःस्वदेहजोवायुस्तस्यायामोनिरोधनम् ॥ तद्रेचकंपूरकञ्चकुम्भकञ्चत्रिधोच्यते ॥२२॥ नासिकापुटमङ्गु
ल्यापीड्यैकमपरेणतु ॥ औदरंरेचयेद्वायुंतथायंरेचकःस्मृतः ॥ २३ ॥ बाह्येनमरुतादेहंदृतिवत्परिपूरयेत् ॥ नासापुटेनापरेणपूरणात्पूरकंमतम् ॥
॥ २४ ॥ नमुञ्चतिनगृह्णातिवायुमन्तर्व्बहिःस्थितम् ॥ सम्पूर्णकुम्भवत्तिष्ठेदचलःसतुकुम्भकः ॥ २५ ॥ रेचकाद्यंत्रयमिदंनद्रुतंनाविलम्बितम् ॥ उद्य
तःक्रमयोगेनत्वभ्यस्येद्योगसाधकः ॥ २६ ॥ रेचकादित्रयाभ्यासोनाडीशोधनपूर्व्वकः ॥ स्वेच्छोत्क्रमणपर्य्यन्तःप्रोक्तोयोगानुशासने ॥ २७ ॥ कनी
यादिक्रमवशात्प्राणायामनिरोधनम् ॥ तच्चतुर्द्धोपदिष्टंस्यान्मात्रागुणविभागतः ॥ २८ ॥ कनीयःसकृदुद्धातःसचद्वादशमात्रकः ॥ मध्यमस्तुद्विरुद्धा
तश्चतुर्व्विंशतिमात्रकः ॥ २९ ॥ उत्तमस्तुत्रिरुद्धातःषट्त्रिंशन्मात्रकःपरः ॥ स्वेदकम्पादिजनकःप्राणायामस्तदुत्तरः ॥ ३० ॥ आनन्दोद्भवरोमाञ्चने
त्राश्रूणांविमोचनम् ॥ जल्पभ्रमणमूर्च्छाद्यंजायतेयोगिनःपरम् ॥ ३१ ॥ जानुंप्रदक्षिणीकृत्यनद्रुतंनविलम्बितम् ॥ अङ्गुलीस्फोटनंकुर्य्यात्सामात्रेतिप्र
कीर्तिता ॥ ३२ ॥ मात्राक्रमेणविज्ञेयाचोद्धातक्रमयोगतः ॥ नाडीविशुद्धिपूर्व्वन्तुप्राणायामंसमाचरेत् ॥ ३३ ॥ अगर्भश्चसगर्भश्चप्राणायामोद्विधास्मृ
तः ॥ जपध्यानंविनागर्भःसगर्भस्तत्समन्वयात् ॥३४॥अगर्भाद्गर्भसंयुक्तःप्राणायामःशताधिकः ॥ तस्मात्सगर्भंकुर्व्वन्तियोगिनःप्राणसंयमम् ॥ ३५ ॥

प्राणस्यविजयोदेवजीयन्तेदशवायवः ॥ प्राणोऽपानःसमानश्चउदानोव्यानएवच ॥ ३६ ॥ नागःकूर्म्मश्चकृकलोदेवदत्तोधनञ्जयः ॥ प्रयाणकुरुतेयस्मा
त्तस्मात्प्राणोऽभिधीयते ॥ ३७ ॥ अवाङ्नयत्यपानाख्योयदाहारादिभुज्यते ॥ व्यानोव्यानशयत्यङ्गान्यशेषाणिविवर्द्धयन् ॥ ३८ ॥
उद्वेजयतिमर्म्माणीत्युदानोवायुरीरितः ॥ समंनयतिसर्व्वाङ्गंसमानस्तेनगीयते ॥ ३९ ॥ उद्गारेनागआख्यातःकूर्म्मउन्मीलनेस्थितः ॥
कृकलःक्षवथौज्ञेयोदेवदत्तोविजृम्भणे ॥ ४० ॥ नजहातिमृतञ्चापिसर्व्वव्यापीधनञ्जयः ॥ क्रमेणाभ्यस्यमानोऽयंप्राणायामःप्रमाणवान् ॥ ४१ ॥
निर्द्दहत्यखिलंदोषंकर्त्तुर्देहञ्चरक्षति ॥ प्राणेतुविजितेसम्यक्तच्चिह्नान्युपलक्षयेत् ॥ ४२ ॥ विण्मूत्रश्लेष्मणांतावदल्पभावःप्रजायते ॥ बहुभो
जनसामर्थ्यंचिरादुच्छ्वसनंतथा ॥ ४३ ॥ लघुत्वंशीघ्रगामित्वमुत्साहःस्वरसौष्ठवम् ॥ सर्व्वरोगक्षयश्चैवबलंतेजःसुरूपता ॥ ४४ ॥ धृतिर्मे
धायुवत्वञ्चस्थिरताचप्रसन्नता ॥ तपांसिपापक्षयतायज्ञदानव्रतादयः ॥ ४५ ॥ प्राणायामस्यतस्यैतेकलांनार्हन्तिषोडशीम् ॥ इंद्रियाणिप्रसक्ता
नियथास्वंविषयेष्विह ॥ ४६ ॥ आहृत्ययन्निगृह्णातिसप्रत्याहारउच्यते ॥ मनःपूर्व्वाणीन्द्रियाणिस्वर्गंनरकमेवच ॥ ४७ ॥ निगृहीतविसृष्टा
निस्वर्गायनरकायच ॥ तस्मात्सुखार्थीमतिमाञ्ज्ञानवैराग्यमास्थितः ॥ ४८ ॥ इन्द्रियाश्वान्निगृह्याशुस्वात्मनात्मानमुद्धरेत् ॥ धारणानाम
चित्तस्यस्थानबन्धःसमासतः ॥ ४९ ॥ स्थानञ्चशिवएवैकोनान्यद्दोषाश्रयंयतः ॥ कालंकंचावधीकृत्यस्थानेऽवस्थापितंमनः ॥ ५० ॥ नतुप्रच्य
वतेलक्ष्याद्धारणास्यान्नचान्यथा ॥ मनसःप्रथमंस्थैर्य्यंधारणातःप्रजायते ॥५१॥तस्माद्धीरंमनःकुर्य्याद्धारणाभ्यासयोगतः ॥ ध्यैचिन्तायांस्मृतोधातुः
शिवचिन्तामुहुर्मुहुः ॥ ५२ ॥ अव्याक्षिप्तेनमनसाध्यानंनामतदुच्यते ॥ ध्येयावस्थितचित्तस्यसदृशप्रत्ययस्ययः ॥ ५३ ॥ प्रत्ययान्तरनिर्म्मुक्तप्रवा
होध्यानमुच्यते ॥ सर्व्वमन्यत्परित्यज्यशिवएवशिवङ्करः ॥ ५४ ॥ परोध्येयोऽथवेशेतिसमाप्ताथर्व्वणीश्रुतिः ॥ सर्व्वप्रभूशिवौतस्मात्सर्व्वगौसर्व्वदो
दितौ ॥ ५५ ॥ सर्व्वज्ञौसततंध्येयौनानारूपाविभेदतः ॥ विमुक्तिप्रत्ययःपूर्व्वःप्रत्ययश्चाणिमादिकम् ॥५६॥इत्येतद्द्विविधंज्ञेयंध्यानस्यास्यप्रयोजनम् ॥
ध्याताध्यानंतथाध्येयंयच्चध्यानप्रयोजनम् ॥ ५७ ॥ एतच्चतुष्टयंज्ञात्त्वायोगंयुञ्जीतयोगवित् ॥ ज्ञानवैराग्यसम्पन्नःश्रद्दधानःक्षमान्वितः॥ ५८ ॥ निर्म्मे
मश्चसदोत्साहीध्यातेत्थंपुरुषःस्मृतः ॥ जपाच्छ्रान्तःपुनर्ध्यायेद्ध्यानाच्छ्रान्तःपुनर्जपेत् ॥ ५९ ॥ जपध्यानाभियुक्तस्यक्षिप्रंयोगःप्रसिद्ध्यति॥धारणा
द्वादशायामाध्यानंद्वादशधारणम् ॥ ६० ॥ ध्यानद्वादशकंयावत्समाधिरभिधीयते ॥ समाधिर्नामयोगाङ्गमन्तिमंपरिकीर्त्तितम् ॥ ६१ ॥ समाधिनाच
सर्व्वत्रप्रज्ञालोकःप्रवर्त्तते ॥ यदर्थमात्रनिर्भासंस्तिमितोदधिवत्स्थितम् ॥ ६२ ॥ स्वरूपशून्यवद्ध्यानंसमाधिरभिधीयते ॥ ध्येयेमनःसमावेश्यतिष्ठेद

पिचसुस्थिरम् ॥ ६३ ॥ निर्व्वाणानलवद्योगीसमाधिस्थःप्रगीयते ॥ नशृणोतिनचाघ्रातिनरस्यातिनपश्यति ॥ ६४ ॥ नचस्पर्शंविजानातिनसंकल्पय
तेमनः ॥ नचाभिमन्यतेकिंचिन्नचबुध्यातिकाष्ठवत् ॥ ६५ ॥ एवंशिवेविलीनात्मासमाधिस्थइहोच्यते ॥ यथादीपोनिवातस्थःस्पन्दतेनकदाचन ॥
॥ ६६ ॥ तथासमाधिनिष्ठोऽपितस्मान्नविचलेत्सुधीः ॥ एवमभ्यस्यतश्चाब्दंयोगिनोयोगमुत्तमम् ॥ ६७ ॥ तदन्तरायानश्यन्तिविघ्नाःसर्व्वेशनैःशनैः॥
आलस्यंव्याधयस्तीव्राःप्रमादस्थानसंशयः ॥ ६८ ॥ अनवस्थितचित्तत्वमश्रद्धाभ्रान्तिदर्शनम् ॥ दुःखानिदौर्म्मनस्यञ्चविषयेषुचलोलता ॥ ६९ ॥
दशैतेयुंजतांपुंसामन्तरायाःप्रकीर्त्तिताः ॥ आलस्यमलसत्वन्तुयोगिनांदेहचेतसोः ॥ ७० ॥ धातुवैषम्यजादोषाव्याधयःकर्म्मदोषजाः ॥ प्रमादोना
मयोगस्यसाधनानामभावना ॥ ७१ ॥ इदंवेत्युभयालम्बिज्ञानंतत्स्थानसंशयः ॥ अप्रतिष्ठाहिमनसस्त्वनवस्थितिरुच्यते ॥ ७२ ॥ अश्रद्धाभावर
चितावृत्तिर्वैयोगवर्त्मनि ॥ विपर्य्यस्तामतिर्यासाभ्रान्तिरित्यभिधीयते ॥ ७३ ॥ दुःखमज्ञानजंपुंसांचेतस्याध्यात्मिकंविदुः ॥ आधिभौतिकमङ्गोत्थंय
च्चदुःखंपुराकृतैः ॥ ७४ ॥ आधिदैविकमाख्यातमशन्यस्त्रविषादिजम् ॥ इच्छाविघातजंक्षोभंदौर्म्मनस्यंप्रचक्षते ॥ ७५ ॥ विषयेषुविचित्रेषुविभ्रम
स्तत्रलोलता ॥ शान्तेष्वेतेषुविघ्नेषुयोगासक्तस्ययोगिनः॥७६॥उपसर्गाःप्रवर्त्तन्तेदिव्यास्तेसिद्धिसूचकाः॥प्रतिभाश्रवणंवार्त्तादर्शनास्वादवेदनाः॥७७॥
उपसर्गाःषडित्येतेव्ययेयोगस्यसिद्धयः ॥ सूक्ष्मेव्यवहितेऽतीतेविप्रकृष्टेत्वनागते ॥ ७८ ॥ प्रतिभाकथ्यतेयोऽर्थेप्रतिभासोयथातथम् ॥ श्रवणंसर्वश
ब्दानांश्रवणन्त्वप्रयत्नतः ॥ ७९ ॥ वार्त्तावार्त्तासुविज्ञानंसर्व्वेषामेवदेहिनाम् ॥ दर्शनंनामदिव्यानांदर्शनञ्चाप्रयत्नतः ॥ ८० ॥ तथास्वादश्चदिव्येषुर
सेष्वास्वादउच्यते ॥ स्पर्शनाधिगमस्तद्वद्वेदनानामविश्रुता ॥ ८१ ॥ गन्धादीनांचदिव्यानामाब्रह्मभुवनाधिपाः ॥ सन्तिष्ठन्तेचरत्नानिप्रयच्छन्तिबहू
निच ॥ ८२ ॥ स्वच्छन्दमधुरावाणीविविधास्यात्प्रवर्त्तते ॥ रसायनानिसर्व्वाणिदिव्याश्चौषधयस्तथा ॥ ८३ ॥ सिध्यन्तिप्रणिपत्यैनंदिशन्तिसुरयोषि
तः ॥ योगसिद्धचैकदेशेऽपिदृष्टेमोक्षेभवेन्मतिः ॥ ८४ ॥ दृष्टमेतन्मयायद्वत्तद्वन्मोक्षोभवेदिति ॥ कृशतास्थूलताबाल्यंवार्द्धक्यंचैवयौवनम् ॥ ८५ ॥
नानाजातिस्वरूपत्वंचतुर्णांदेहधारणम् ॥ पार्थिवांशंविनानित्यंसुरभिर्गन्धसंग्रहः ॥ ८६ ॥ एवमष्टगुणंप्राहुःपैशाचंपार्थिवंपदम् ॥ जलेनिवसनञ्चैवभू
म्यामेवविनिर्गमः ॥ ८७ ॥ इच्छेच्छक्तःस्वयंपातुंसमुद्रमपिचातुरः ॥ यत्रेच्छतिजगत्यस्मिंस्तत्रैवजलदर्शनम् ॥ ८८ ॥ विनाकुम्भादिकंपाणौजल
सञ्चयधारणम् ॥ यद्वस्तुविरसञ्चापिभोक्तुमिच्छातितत्क्षणात् ॥८९॥ रसादिकंभवेच्चान्यत्त्रयाणांदेहधारणम्॥ निर्व्रणत्वंशरीरस्यपार्थिवैश्चसमन्वितम्॥
॥९०॥ तदिदंषोडशगुणमाप्यमैश्वर्य्यमद्भुतम् ॥ शरीरादग्निनिर्म्माणंतत्तापभयवर्ज्जनम् ॥ ९१ ॥ शक्तिर्जगदिदंदग्धुंयदीच्छेदप्रयत्नतः ॥ स्थापनंवा

नलस्याप्सुपाणौपावकधारणम् ॥ ९२ ॥ दग्धेसर्गेयथापूर्व्वंमुखेचान्नादिपाचनम् ॥ द्वाभ्यांदेहविनिर्म्माणमाप्यैश्वर्य्यसमन्वितम् ॥ ९३ ॥ एतच्चतुर्विं
शतिधातैजसंपरिचक्षते ॥ मनोजवत्वंभूतानांक्षणादन्तःप्रवेशनम् ॥ ९४ ॥ पर्व्वतादिमहाभारधारणञ्चाप्रयत्नतः ॥ गुरुत्वञ्चलघुत्वञ्चपाणावनिलधार
णम् ॥९५॥ अंगुल्यग्रनिपाताद्यैर्भूमेरपिचकम्पनम् ॥ एकेनदेहनिष्पत्तिर्युक्तंभोगैश्चतैजसैः ॥९६॥ द्वात्रिंशद्गुणमैश्वर्य्यंमारुतंकवयोविदुः ॥ छायाहीन
विनिष्पत्तिरिन्द्रियाणामदर्शनम् ॥ ९७ ॥ खेचरत्वंयथाकाममिन्द्रियार्थैःसमन्वयः ॥ आकाशेलंघनंचैवस्वदेशेतन्निवेशनम् ॥ ९८ ॥ आकाशपि
ण्डीकरणमशरीरत्वमेवच ॥ अनिलैश्वर्य्यसंयुक्तंचत्वारिंशद्गुणंमहत् ॥ ९९ ॥ ऐन्द्रमैश्वर्य्यमाख्यातमाम्बरंतत्प्रचक्षते ॥ यथाकामोपलब्धिश्चयथा
कामविनिर्गमः ॥ १०० ॥ सर्व्वस्याभिभवश्चैवसर्व्वगुह्यार्थदर्शनम् ॥ कर्म्मानुरूपनिर्म्माणंवशित्वंप्रियदर्शनम् ॥ १०१ ॥ संसारदर्शनञ्चैवभोगैरैन्द्रैःस
मन्वितम् ॥ एतच्चान्द्रमसैश्वर्य्यमानसंगुणतोऽधिकम् ॥ १०२ ॥ छेदनंताडनंचैवबन्धनंमोचनंतथा ॥ ग्रहणंसर्व्वभूतानांसंसारवशवर्त्तिनाम् ॥१०३॥
प्रसादश्चापिसर्व्वेषांमृत्युकालजयस्तथा ॥ आभिमानिकमैश्वर्य्यंप्राजापत्यंप्रचक्षते॥१०४॥एतच्चान्द्रमसैर्भोगैःषट्पञ्चाशद्गुणंमहत् ॥ सर्गःसङ्कल्पमात्रे
णत्राणंसंहरणंतथा॥१०५॥ स्वाधिकारश्चसर्व्वेषांभूतचित्तप्रवर्त्तनम् ॥ असादृश्यञ्चसर्व्वस्यनिर्म्माणंजगतःपृथक्॥१०६॥शुभाशुभस्यकरणंप्राजापत्यै
श्चसंयुतम् ॥ चतुःषष्टिगुणंब्राह्ममैश्वर्य्यंतत्प्रचक्षते॥१०७॥बौद्धादस्मात्परंगौणमैश्वर्य्यंप्राकृतंविदुः॥वैष्णवंतत्समाख्यातंतस्यैवभुवनेस्थितम्॥१०८॥
ब्रह्मणैतद्गुणंसर्व्वंवेत्तुमन्यैर्नशक्यते ॥ तत्पौरुषञ्चगौणंचगाणेशंपदमैश्वरम् ॥ १०९ ॥ विष्णुनातत्पदंकिंजिज्ज्ञातुमन्यैर्नशक्यते ॥ विज्ञानसिद्धयश्चै
वसर्व्वाएवौपसर्गिकाः ॥११० ॥ निरोद्धव्याःप्रयत्नेनवैराग्येणपरेणतु ॥ प्रतिभादिष्वशुद्धेषुगुणेष्वासक्तचेतसः ॥ १११ ॥ नसिध्येत्परमैश्वर्य्यमव्ययंसा
र्व्वकामिकम् ॥ तस्माद्गुणांश्चभोगांश्चदेवासुरमहीभृताम्॥११२॥तृणवद्यस्त्यजेत्तस्ययोगसिद्धिःपराभवेत् ॥ अथवानुग्रहेच्छायांजगतोविचरेन्मुनिः॥
॥ ११३ ॥ यथाकामंगुणान्भोगान्भुक्त्वामुक्तिंप्रयास्यति ॥ अथप्रयोगंयोगस्यवक्ष्येशृणुसमाहितः ॥ ११४ ॥ शुभेकालेशुभेदेशेशिवक्षेत्रादिकेपुनः ॥
विजनेजन्तुरहितेनिःशब्देबाधवर्जिते ॥११५॥ सुप्रलिप्तेस्थलेसौम्येगन्धधूपादिवासिते ॥ मुक्तपुष्पसमाकीर्णेवितानादिविचित्रिते॥११६॥कुशपुष्पस
मित्तोयफलमूलसमन्विते ॥ नाग्न्यभ्याशेजलाभ्याशेशुष्कपर्णमयेऽपिवा ॥११७॥ नदंशमशकाकीर्णेसर्पश्वापदसङ्कुले ॥ नचदुष्टमृगाकीर्णेसभयेदुर्ज्ज
नावृते॥११८॥श्मशानेचैत्यवल्मीकेजीर्णागारेचतुष्पथे॥नदीनदसमुद्राणांतीरेरथ्यान्तरेऽपिवा ॥११९॥नजीर्णोद्यानगोष्ठादौनानिष्टेनचनिन्दिते॥नाजी
र्णाम्लरसोद्गारेनचविण्मूत्रदूषिते ॥ १२० ॥ नच्छर्द्यांनातिसारेचनातिभुक्तःश्रमान्वितः ॥ नचातिचिन्ताकुलितोनचातिक्षुत्पिपासितः॥१२१॥नापि

स्वगुरुकर्म्मदौप्रसक्तोयोगमाचरेत् ॥ युक्ताहारविहारश्चयुक्तचेष्टश्चकर्म्मसु ॥ १२२ ॥ युक्तनिद्रावबोधश्चसर्व्वायासविवर्ज्जितः ॥ आसनंमृदुलंरम्यं
विपुलंसुसमंशुचि ॥ १२३ ॥ मृदुचर्म्मपरीधानंमध्वाद्यक्तंशुभंसुखम् ॥ कल्पयित्वासमारुह्यसमंस्थिरसुखंयथा ॥ १२४ ॥ पद्मकस्व
स्तिकादीनामभ्यसेदासनेषुच ॥ अभिवन्द्यस्वगुर्व्वन्तानभिवाद्यानुक्रमात् ॥१२५॥ ऋजुग्रीवशिरोवक्षानातिश्लिष्टोष्ठलोचनः ॥ किञ्चिदुन्नामितशिरा
दन्तैर्दन्तान्नसंस्पृशेत् ॥ १२६ ॥ दन्ताग्रसंस्थितांजिह्वामचलांसन्निवेश्यच ॥ पार्ष्णिभ्यांवृषणौरक्षंस्तथाप्रजननंपुनः ॥ १२७ ॥ ऊर्व्वोरुपरिसंस्था
प्यबाहूतिर्य्यगयत्नतः ॥ दक्षिणंकरपृष्ठन्तुन्यस्यवामतलोपरि ॥ १२८ ॥ उन्नाम्यशनकैःपृष्ठमुरोऽवष्टभ्यचाग्रतः ॥ सम्प्रेक्ष्यनासिकाग्रंस्वंदिशश्चानव
लोकयन् ॥१२९॥ संभृतप्राणसञ्चारःपाषाणइवनिश्चलः ॥स्वदेहायतनस्यान्तर्विचिन्त्यशिवमम्बया ॥१३०॥हृत्पद्मपीठिकामध्येध्यानयज्ञेनपूजयेत् ॥
मूलेनासाग्रतोनाभौकण्ठेवातालुरन्ध्रयोः ॥ १३१ ॥ भ्रूमध्येद्वादशान्तेवाललाटेमूर्द्ध्निवास्मरेत् ॥ परिकल्प्ययथान्यायंशिवयोःपरमासनम् ॥ १३२ ॥
तत्रसावरणंवापिनिरावरणमेववा ॥ द्विदलेषोडशारेवाद्वादशारेयथाविधि ॥ १३३ ॥ दशारेवाषडस्रेवाचतुरस्रेशिवंस्मरेत् ॥ भ्रुवोरन्तरतःपद्मंद्विदलं
तडिदुज्ज्वलम् ॥ १३४ ॥ भ्रूमध्यस्थारविन्दस्यक्रमाद्वैदक्षिणोत्तरे ॥ विद्युत्समानवर्णेचपर्णेवर्णावसानके ॥ १३५ ॥ षोडशारस्यपत्राणिस्वराःषोड
शतानिवै ॥ पूर्व्वादीनिक्रमादेतत्पद्मकन्दस्यमूलतः ॥१३६॥ ककारादिठकारान्तावर्णाःपर्णान्यनुक्रमात् ॥ भानुवर्णस्यपद्मस्यध्येयंतद्धृदयान्तरे ॥
॥ १३७ ॥ वर्णाःपर्णानिपद्मस्यनाभेरुपरिपृष्ठतः ॥ गोक्षीरधवलस्योक्ताडादिफान्तायथाक्रमम् ॥ १३८ ॥ अधोदलस्याम्बुजस्यएतस्यचदलानिष
ट् ॥ विधूमाङ्गारवर्णस्यवर्णाबाद्याश्चलान्तिमाः ॥ १३९ ॥ मूलाधारारविन्दस्यहेमाभस्ययथाक्रमम् ॥ वकारादिसकारान्तावर्णाःपर्णमयाःस्थिताः
॥ १४० ॥ एतेष्वथारविन्देषुयत्रैवाभिरतंमनः ॥ तत्रैवदेवंदेवींचचिन्तयेद्धीरयाधिया ॥ १४१ ॥ अंगुष्ठमात्रममलंदीप्यमानंसमन्ततः ॥ शुद्धदीप
शिखाकारंस्वशक्त्यापूर्णमण्डितम् ॥ १४२ ॥ इन्दुरेखासमाकारंतारारूपमथापिवा ॥ नीवारशूकसदृशंबिससूत्राभमेववा ॥ १४३ ॥ कदम्ब
गोलकाकारंतुषारकणिकोपमम् ॥ क्षित्यादितत्त्वविजयंध्यातायद्यभिवाञ्छति ॥ १४४ ॥ तत्तत्तत्त्वाधिपामेवमूर्तिंस्थूलांविचिन्तयेत् ॥ सदा
शिवान्ताब्रह्माद्याभवाद्याश्चाष्टमूर्त्तयः ॥१४५॥ शिवस्यमूर्त्तयःस्थूलाःशिवशास्त्रेविनिश्चिताः ॥घोरामिश्राःप्रशान्ताश्चमूर्त्तयस्तामुनीश्वरैः ॥१४६॥ फ
लाभिलाषसहितैश्चिन्त्याश्चिन्ताविशारदैः ॥घोराश्चेच्चिन्तिताःकुर्य्युःपापरोगपरिक्षयम् ॥१४७॥सर्व्वसिद्धिप्रदामिश्राःप्रशान्ताःशान्तिदायकाः ॥ सिध्य
न्तिसिद्धयःशीघ्रंघोरेवपुषिचिन्तिते ॥१४८॥चिरेणमिश्रेसौम्येतुनसद्योनचिरादपि ॥ सौम्येमुक्तिर्विशेषेणशान्तिःप्रज्ञाप्रसिध्यति ॥१४९॥ सिध्यन्तिसिद्ध

यश्चा ऽस्मात्क्रमशोनात्रसंशयः॥श्रीकण्ठनाथंस्मरतांसद्यःसर्व्वार्थसिद्धयः॥१५०॥प्रसिध्यन्तीतिमत्वैकेतंवैध्यायन्तियोगिनः॥ स्थित्यर्थमनसःकेचित्स्थू
लध्यानंप्रकुर्व्वते॥१५१॥स्थूलेतुनिश्चलंचेतोभवेत्सूक्ष्मेतुसुस्थितम्॥शिवेतुचिन्तितेसाक्षात्सर्व्वाःसिध्यंतिसिद्धयः॥१५२॥मूर्त्त्यन्तरेषुध्यातेषुशैवीसि
द्धिर्नसिद्ध्यति ॥ मूर्त्त्यन्तरेषुध्यातेषुशिवरूपंविचिन्तयेत् ॥१५३॥ रुच्यभ्यासादिनायद्यच्छिवरूपंविचिन्तयेत् ॥ लक्षयेन्मनसःस्थैर्य्यंतत्तद्ध्याये
त्पुनःपुनः ॥ १५४ ॥ ध्यानमादौसविषयंततोनिर्व्विषयंजगुः ॥तत्रनिर्व्विषयंध्यानंनास्तीत्येवसतांमतम् ॥ १५५ ॥ बुद्धेर्हिसन्ततिःकाचिद्ध्यानमि
त्यभिधीयते ॥ तेननिर्व्विषयाबुद्धिःकेवलेहप्रवर्त्तते ॥ १५६ ॥ तस्मात्सविषयंध्यानंबालार्ककिरणाश्रयम् ॥ सूक्ष्माश्रयंनिर्व्विषयंनापरंपरमार्थतः॥
॥ १५७ ॥ यद्वासविषयंध्यानंतत्साकारसमाश्रयम् ॥ निराकारात्मसंवित्तिर्ध्यानंनिर्व्विषयंमतम् ॥ १५८ ॥ निर्बीजञ्चसबीजञ्चतदेवध्यानमुच्यते ॥
निराकाराश्रयत्वेनसाकाराश्रयतस्तथा ॥ १५९ ॥ तस्मात्सविषयंध्यानमादौकृत्वासबीजकम् ॥ अन्तेनिर्व्विषयंकुर्य्यान्निर्बीजंसर्व्वसिद्धये ॥ १६० ॥
प्राणायामेनसिध्यन्तिदिव्याःशान्त्यादयःक्रमात् ॥ शान्तिःप्रशान्तिर्दीप्तिश्चप्रसादश्चततःपरम् ॥ १६१ ॥ शमःसर्व्वापदाञ्चैवशान्तिरित्यभिधीयते॥
तमसोऽन्तर्बहिर्नाशःप्रशान्तिःपरिगीयते ॥ १६२ ॥ बहिरन्तःप्रकाशोयोदीप्तिरित्यभिधीयते ॥ स्वस्थतायातुसाबुद्धेःप्रसादःपरिकीर्त्तितः ॥ १६३ ॥
कारणानिचसर्व्वाणिसबाह्याभ्यन्तराणिच ॥ बुद्धेःप्रसादतःक्षिप्रंप्रसन्नानिभवन्त्युत ॥ १६४ ॥ ध्याताध्यानंतथाध्येयंयच्चध्यानप्रयोजनम् ॥ एतच्चतु
ष्टयंज्ञात्वाध्याताध्यानंसमाचरेत् ॥ १६५ ॥ ज्ञानवैराग्यसम्पन्नोनित्यमुद्युक्तमानसः॥ श्रद्दधानःप्रसन्नात्माध्यातासद्भिरुदाहृतः ॥ १६६ ॥ ध्यैचि
न्तायांस्मृतोधातुःशिवचिन्तामुहुर्मुहुः ॥ अव्याक्षिप्तेनमनसाध्यानमित्यभिधीयते ॥ १६७ ॥ बुद्धिप्रवाहरूपस्यध्यानस्यास्यावलम्बनम् ॥ ध्येयमि
त्युच्यतेसद्भिस्तच्चसाम्बःस्वयंशिवः ॥ १६८ ॥ विमुक्तिप्रत्ययःपूर्व्वमैश्वर्य्यञ्चाणिमादिकम् ॥ शिवध्यानस्यतस्यास्यसाक्षादुक्तंप्रयोजनम्॥१६९॥
यस्मात्सौख्यञ्चमोक्षञ्चध्यानादुभयमाप्नुयात् ॥ तस्मात्सर्व्वंपरित्यज्यध्यानयुक्तोभवेन्नरः ॥ १७० ॥ नास्तिध्यानंविनाज्ञानंनास्तिध्यानमयो
गिनः ॥ ध्यानंज्ञानञ्चयस्यास्तितीर्णस्तेनभवार्णवः ॥ १७१ ॥ ज्ञानंप्रसन्नमेकाग्रमशेषोपाधिवर्ज्जितम् ॥ योगाभ्यासेनयुक्तस्ययोगिनस्त्वे
वासिध्यति ॥ १७२ ॥ प्रक्षीणाशेषपापानांज्ञानेध्यानेभवेन्मतिः ॥ पापोपहतबुद्धीनांतद्वार्त्तापिसुदुर्लभा ॥ १७३ ॥ यथावह्निर्महादीप्तः
शुष्कमार्द्रञ्चनिर्दहेत् ॥ तथाशुभाशुभंकर्म्मज्ञानाग्निर्दहतेक्षणात्॥ १७४ ॥ अत्यल्पोऽपियथादीपःसुमहन्नाशयेत्तमः ॥ योगाभ्यासस्तथाल्पोऽपिमहा
पापंविनाशयेत् ॥ १७५ ॥ ध्यायतःक्षणमात्रंवाश्रद्धयापरमेश्वरम् ॥ यद्भवेत्सुमहच्छ्रेयस्तस्यान्तोनैवविद्यते ॥१७६॥ नास्तिध्यानसमंतीर्थंनास्तिध्या

नसमंतपः ॥ नास्तिध्यानसमो यज्ञस्तस्माद्ध्यानंसमाचरेत् ॥ १७७ ॥ तीर्थानितोयपूर्णानिदेवान्पाषाणमृन्मयान् ॥ योगिनोनप्रपद्यन्तेस्वात्मप्रत्यय
कारणात् ॥ १७८ ॥ योगिनाञ्चवपुःसूक्ष्मंभवेत्प्रत्यक्षमैश्वरम् ॥ यथास्थूलमयुक्तानांमृत्काष्ठाद्यैःप्रकल्पितम् ॥ १७९ ॥ यथेहान्तश्चराराज्ञःप्रिया
स्युर्नबहिश्चराः ॥ तथान्तर्ध्याननिरताःप्रियाःशम्भोर्नकर्म्मिणः ॥ १८० ॥ बहिष्करायथालोकेनातीवफलभागिनः ॥ दृष्टानरेंद्रभवनेतद्वदत्रापिक
र्म्मिणः ॥ १८१ ॥यद्यन्तराविपद्येतज्ञानयोगार्थमुद्यतः ॥योगस्योद्योगमात्रेणरुद्रलोकंगमिष्यति ॥ १८२ ॥अनुभूयसुखंतत्रसञ्जातोयोगिनांकुले ॥
ज्ञानयोगंपुनर्लब्ध्वासंसारमतिवर्त्तते ॥ १८३ ॥ जिज्ञासुरपियोगस्ययांगतिंलभतेनरः ॥ नतांगतिमवाप्नोतिसर्व्वैरपिमहामखैः ॥ १८४ ॥
द्विजानांवेदविदुषांकोटिंसम्पूज्ययत्फलम् ॥ भिक्षामात्रप्रदानेनतत्फलंशिवयोगिने ॥ १८५ ॥ यज्ञाग्निहोत्रदानेषुतीर्थहोमेषुयत्फलम् ॥ योगिनाम
न्नदानेनतत्समस्तंफलंलभेत् ॥ १८६ ॥ येचापवादंकुर्व्वन्तिविमूढाःशिवयोगिनाम् ॥ श्रोतृभिस्तेप्रपद्यन्तेनरकेष्वामहीक्षयात् ॥ १८७ ॥ सति
श्रोतरिवक्तास्यादपवादस्ययोगिनाम् ॥ तस्माच्छ्रोताचपापीयांस्तद्दण्डःसुमहानतः ॥ १८८ ॥ येपुनःसततंभक्त्याभजन्तिशिवयोगिनः ॥ विन्दन्ति
तेमहाभोगानन्तेयोगञ्चशाङ्करम् ॥ १८९ ॥ भोगयोगार्थिभिस्तस्मात्सम्पूज्याःशिवयोगिनः ॥ प्रतिश्रयान्नपानाद्यैःशय्याप्रावरणादिभिः ॥ १९० ॥
योगधर्म्मःससारत्वादभेद्यःपापमुद्गरैः ॥ वज्रंतण्डुलवज्ज्ञेयंतथापापेनयोगिनः ॥ १९१ ॥ नलिप्यन्तेचतापाद्यैःपद्मपत्रंयथाम्भसा ॥ यस्मिन्देशेवसे
न्नित्यंशिवयोगरतोमुनिः ॥१९२॥ सोऽपिदेशोभवेत्पूतःसपूतइतिकिंपुनः ॥ तस्मात्सर्व्वंपरित्यज्यकृत्यमन्यद्विचक्षणः ॥१९३॥ सर्व्वदुःखप्रहाणायशि
वयोगंसमभ्यसेत् ॥ सिद्धयोगफलोयोगीलोकानांहितकाम्यया ॥१९४॥ भोगान्भुक्त्वायथाकामंविहरेद्यात्रवर्त्तताम् ॥ अथवाक्षुद्रमित्येवमत्वावैषयिकंसु
खम् ॥ १९५ ॥ त्यक्त्वाविरागयोगेनस्वेच्छयाकर्म्मंमुच्यताम् ॥ १९६ ॥ यस्त्वासन्नांमृर्तिमत्त्यौहृष्ट्वारिष्टञ्चभूयशः ॥ सयोगारम्भनिरतःशिवक्षेत्रंसमा
श्रयेत् ॥१९७॥ सतत्रानिवसन्नेवयादिधीरमनातुरः ॥ प्राणान्विनापिरोगाद्यैःस्वयमेवपरित्यजेत् ॥ १९८ ॥ कृत्वाप्यनशनंवैधंहुत्वाचाङ्गंशिवानले ॥
क्षिप्त्वावाशिवतीर्थेषुस्वदेहमवगाहनात्॥१९९॥शिवशास्त्रोक्तविधिवत्प्राणान्यस्तुपरित्यजेत् ॥ सद्यएवविमुच्येतनचासावात्मघातकः ॥२००॥रोगाद्यै
र्वाथविवशःशिवक्षेत्रंसमाश्रितः ॥ म्रियतेयदिसोऽप्येवंमुच्यतेनात्रसंशयः ॥२०१॥ तथाविशिष्टंतत्रापिमरणन्तूत्तरोत्तरम् ॥ निवृत्त्यादिवशाद्देहोभूतेषुच
विलीयते ॥२०२॥ स्वेच्छयोत्क्रम्यमरणंशिवक्षेत्रेविशेषतः ॥ उत्तमंसर्व्वमरणादुन्मनापदयोगदम् ॥२०३॥ शिवनिन्दारतंहत्वापीडितःस्वयमेववा ॥
यस्त्यजेद्दुस्त्यजान्प्राणान्नसभूयःप्रजायते ॥ २०४ ॥ शिवनिन्दारतंहन्तुमशक्तोयःस्वयंमृतः ॥ सद्यएवविमुच्येतत्रिःसप्तकुलसंयुतः ॥ २०५ ॥

शिवार्थंयस्त्यजेत्प्राणाञ्छिवभक्तार्थमेववा॥शिवाचारार्थमथवाशिवविद्यार्थमेववा॥२०६॥नतेनसदृशःकश्चिन्मुक्तिमार्गेस्थितोनरः॥ तस्माच्छीघ्रतरामु
क्तिस्तस्यसंसारमण्डलात् ॥२०७॥ एतेष्वन्यतमोपायंकथमप्यवलम्ब्यवा ॥ षडध्वशुद्धिंविधिवत्प्राप्तोवाम्रियतेयादि ॥ २०८॥ पशूनामिवतस्येहनकु
र्य्यादौर्द्ध्वदेहिकम् ॥ नैवाशौचंप्रसज्येततत्पुत्रादेर्विशेषतः ॥२०९॥ खनेद्वाभुवितद्देहंदहेद्वाशुचिनाग्निना ॥ क्षिपेद्वाप्सुशिवास्वेवत्यजेद्वाकाष्ठलोष्टवत्
॥ २१० ॥ अथैनमपिचोद्दिश्यकर्म्मचेत्कर्तुमीप्सितम् ॥ कल्याणमेवकुर्व्वीताशिवभक्तांश्चतर्पयेत् ॥२११॥ धनंतस्यभजेच्छैवंशैवीचेदस्तिसन्ततिः ॥
नास्तिचेत्तच्छिवेदद्यान्नादद्यात्पशुसन्ततिः ॥ २१२ ॥ इतिश्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेसाङ्ग्योगनिरूपणंनामैकोनत्रिंशोऽध्यायः
॥ २९ ॥ सूतउवाच ॥ इतिसविजितमन्योर्यादवेनोपमन्योरधिगतमभिधायज्ञानयोगंमुनिभ्यः ॥ प्रणतिमुपगतेभ्यस्तेभ्यउद्भावितात्मासपदिविय
तिवायुःसायमन्तर्हितोऽभूत् ॥ १ ॥ ततःप्रभातसमयेनैमिषियास्तपोधनाः ॥ सत्रान्तेऽवभृथंकर्तुंसर्व्वएवसमुद्ययुः ॥ २ ॥ तदाब्रह्मसमादेशाद्देवीसा
क्षात्सरस्वती ॥ प्रसन्नास्वादुसलिलाप्रावर्त्ततनदीशुभा ॥ ३ ॥ सरस्वतींनदींदृष्ट्वामुनयोहृष्टमानसाः ॥ समाप्यसत्रंप्रारब्धंचक्रुस्तत्रावगाहनम् ॥ ४ ॥
अथसन्तर्प्यदेवादींस्तदीयैःसलिलैःशिवैः ॥ स्मरन्तःपूर्व्ववृत्तान्तंययुर्वाराणसींप्रति ॥ ५ ॥ तदातेहिमवत्पादात्पतन्तींदक्षिणामुखीम् ॥ दृष्ट्वाभागी
रथींतत्रस्नात्वातत्तीरतोययुः ॥ ६ ॥ ततोवाराणसींप्राप्यमुदिताःसर्व्वएवते ॥ तत्रोत्तरप्रवाहायांगङ्गायामवगाह्यच ॥ ७ ॥ अविमुक्तेश्वरंलिङ्गंदृष्ट्वाभ्य
र्च्चयविधानतः ॥ प्रयातुमुद्यतास्तत्रददृशुर्दिविभास्वरम् ॥ ८ ॥ सूर्य्यकोटिप्रतीकाशंतेजोदिव्यंमहाद्भुतम् ॥ आत्मप्रभावितानेनव्याप्तसर्व्वदिगन्त
रम् ॥ ९ ॥ अथपाशुपताःसिद्धाभस्मसञ्छन्नविग्रहाः ॥ मुनयोऽभ्येत्यशतशोलीनाःस्युस्तत्रतेजसि ॥ १० ॥ तथाविलीयमाने घुतपस्विषुमहात्मसु ॥
सद्यस्तिरोदधेतेजस्तदद्भुतमिवाभवत् ॥ ११ ॥ तद्दृष्ट्वामहदाश्चर्य्यंनैमिषीयामहर्षयः ॥ किमेतदित्यजानन्तोययुर्ब्रह्मवनंप्रति ॥ १२ ॥ प्रागेवैषान्तुग
मनात्पवनोलोकपावनः ॥ दर्शनंनैमिषीयाणांसंवादंतैःसहात्मनः ॥ १३ ॥ शुद्धांबुद्धिंततस्तेषांसाम्बेसानुचरेशिवे ॥ समाप्तिश्चापिसत्रस्यदीर्घपूर्व्वस्य
सत्रिणाम् ॥ १४ ॥ विज्ञाप्यजगतांधात्रेब्रह्मणेब्रह्मयोनये ॥ स्वकार्य्येतदनुज्ञातोजगामस्वपुरंप्रति ॥ १५ ॥ अथास्थानंगतोब्रह्मातुम्बुरोर्नारदस्यच ॥
परस्परंस्पर्द्धितयोर्गानेविवदमानयोः ॥ १६ ॥ तदुद्भावितगानोत्थरसेमाध्यस्थ्यमाचरन् ॥ गन्धर्व्वैरप्सरोभिश्चसुखमास्तेनिषेवितः ॥ १७ ॥ तदान
वसरादेवद्वाःस्थैर्द्वारिनिवारिताः ॥ मुनयोब्रह्मभवनाद्बहिःपार्श्वमुपाविशन् ॥ १८ ॥ अथतुम्बुरुणागानेसमतांप्राप्यनारदः ॥ साहचर्य्येष्वनुज्ञातोब्रह्म
णापरमेष्ठिना ॥ १९ ॥ त्यक्त्वापरस्परस्पर्द्धांमैत्रीञ्चपरमांगतः ॥ सहतेनाप्सरोभिश्चगन्धर्व्वैश्चसमावृतः ॥ २०॥ उपवीणयितुंदेवंनकुलीश्वरमीश्वरम्॥

भवनान्निर्ययौधातुर्जलदादंशुमानिव ॥२१॥ तंदृष्ट्वाषट्कुलीयास्तेनारदंमुनिगोवृषम् ॥ प्रणम्यावसरंशम्भोःपप्रच्छुःपरमादरात्॥२२॥सचावसरएवाय
मितोऽन्तर्गम्यतामिति ॥ वदन्ययावन्यपरस्त्वरयापरयायुतः ॥ २३ ॥ ततोद्वारिस्थितायैवैब्रह्मणेतान्न्यवेदयन् ॥ ततस्तेविविशुर्वेश्मपिण्डीभूयाण्डज
न्मनः ॥ २४ ॥ प्रविश्यदूरतोदेवंप्रणम्यभुविदण्डवत् ॥ समीपेतदनुज्ञाताःपरिवृत्योपतस्थिरे ॥ २५ ॥ तांस्तत्रोपस्थितान्पृष्ट्वाकुशलंकमलासनः ॥
वृत्तान्तंवोमयाज्ञातंवायुरेवाहपूर्व्वतः ॥ २६ ॥ भवद्भिःकिंकृतंपश्चान्मारुतेऽन्तर्हितेसति ॥ इत्युक्तवतिदेवेशेमुनयोऽवभृथात्परम् ॥ २७ ॥ गङ्गातीर्थ
स्यगमनंयात्रांवाराणसींप्रति ॥ दर्शनंतत्रलिङ्गानांस्थापितानांसुरेश्वरैः ॥ २८ ॥ अविमुक्तेश्वरस्यापिलिङ्गस्याभ्यर्चनंसकृत् ॥ आकाशेमहत
स्तस्यतेजोराशेश्चदर्शनम् ॥ २९ ॥ मुनीनांविलयंतत्रानिरोधंतेजसस्ततः ॥ याथात्म्यावेदनंतस्यचिन्तितस्यापिचात्मभिः ॥ ३० ॥ सर्व्वंसविस्तरं
तस्मैप्रणम्याहुर्मुहुर्म्मुहुः ॥ मुनिभिःकथितंश्रुत्वाविश्वकर्म्माचतुर्म्मुखः ॥ ३१ ॥ कम्पयित्वाशिरःकिञ्चित्प्राहगम्भीरयागिरा ॥ प्रत्यासीदतियुष्माकं
सिद्धिरामुष्मिकीपरा ॥ ३२ ॥ भवद्भिर्दीर्घसत्रेणचिरमाराधितःप्रभुः ॥ प्रसादाभिमुखोभूतइतिभूतार्थसूचितम् ॥ ३३ ॥ वाराणस्यान्तुयुष्माभिर्यद्दृष्टं
दिविदीप्तिमत् ॥ तल्लिङ्गसंज्ञितंसाक्षात्तेजोमाहेश्वरंपरम् ॥ ३४ ॥ तत्रलीनाश्चमुनयःश्रौतपाशुपतव्रताः ॥ मुक्ताबभूवुःस्वस्थाश्चनैष्ठिकादग्धकिल्बि
षाः ॥ ३५ ॥ प्राप्यानेनपथामुक्तिरचिराद्भवतामपि ॥ सचायमर्थःसूच्येतयुष्मद्दृष्टेनतेजसा ॥ ३६ ॥ तत्रवःकालएवैषदैवादुपनतःस्वयम् ॥
प्रयान्तुदक्षिणंमेरोःशिखरंदेवसेवितम् ॥ ३७ ॥ सनत्कुमारोयत्रास्तेममपुत्रःपरोमुनिः ॥ प्रतीक्ष्यागमनंसाक्षाद्भूतनाथस्यनन्दिनः ॥ ३८ ॥
पुरासनत्कुमारोऽपिदृष्ट्वापिपरमेश्वरम् ॥ अज्ञानात्सर्व्वयोगीन्द्रमानीविनयदूषितः ॥ ३९ ॥ अभ्युत्थानादिकंयुक्तमकुर्व्वन्नास्तनिर्भयः ॥
ततोऽपराधात्क्रुद्धेनमहोग्रोनन्दिनाकृतः ॥ ४० ॥ अथकालेनमहतातदर्थंशोचतामया ॥ उपास्यदेवंदेवींश्चनन्दिनश्चानुनीयवै ॥ ४१ ॥
कथञ्चिदुष्ट्रतातस्यप्रयत्नेननिवर्त्तिता ॥ प्रापिताचयथापूर्व्वंसनत्पूर्व्वाकुमारता ॥ ४२ ॥ तदाहचमहादेवःस्मयन्निवगणाधिपम् ॥ अवज्ञाय
हिमामेषतथाहङ्कृतवान्मुनिः ॥४३ ॥ अतस्त्वमेवयाथात्म्यंममास्मैकथयानघ ॥ ब्रह्मणःपूर्व्वजःपुत्रोमाभून्मूढइतिस्मरन् ॥४४ ॥ मयैषशिष्यस्तेदत्तो
ममज्ञानप्रवर्त्तकः ॥ धर्म्माध्यक्षाभिषेकश्चतवनिर्व्वर्त्तयिष्यति ॥ ४५ ॥ सएवंव्याहृतोनन्दीसर्व्वभूतगणाग्रणीः ॥ पत्युराज्ञापनंमूर्ध्नाप्रीतःप्रतिगृही
तवान् ॥ ४६ ॥ तथासनत्कुमारोऽपिमेरौमदनुशासनात् ॥ प्रसादार्थंगणेशस्यतपश्चरतिदुश्चरम् ॥ ४७ ॥ द्रष्टव्यश्चसयुष्माभिःप्राग्गणेशसमागमात् ॥
तत्प्रसादार्थमचिरान्नन्दीतत्रागमिष्यति ॥ ४८ ॥ इतिसत्वरमादिश्यप्रेषिताविश्वयोनिना ॥ कुमारंशिखरंमेरोर्दक्षिणंमुनयोययुः ॥ ४९ ॥

तत्रस्कन्दसरोनामसरःसागरसन्निभम् ॥ अमृतस्वादुशिशिरस्वच्छागाधलघूदकम् ॥ ५० ॥ समन्ततःसङ्घटितंस्फटिकोपलसञ्चयैः ॥ सर्व्व
र्तुकुसुमैःफुल्लैश्छादिताखिलदिङ्मुखम् ॥ ५१ ॥ सौवर्णैरुत्पलैःपद्मैःकुमुदैस्तारकोपमैः ॥ तरङ्गैरभ्रसङ्काशैराकाशमिवभूमिगम् ॥ ५२ ॥ सुखावत
रणारोहैःस्थूलनीलशिलामयैः ॥ सोपानमार्गैरुचिरैःशोभमानाष्टदिङ्मुखम् ॥ ५३ ॥ तत्रतत्रावतीर्णैश्चतत्रोत्तीर्णैश्चभूयशः ॥ स्नातैःसितोपवीतैश्च
शुक्लकौपीनवल्कलैः॥ ५४ ॥ जटाशिखायुतैर्मुण्डैस्त्रिपुण्ड्रकृतमण्डनैः॥ विरागविशदस्मेरमुखैर्मुनिकुमारकैः ॥ ५५ ॥ घटैःकमलिनीपत्रपुटैश्चकलशैः
शिवैः ॥कमण्डलुभिरन्यैश्चतादृशैःकरकादिभिः ॥ ५६ ॥ आत्मार्थैचपरार्थैचदेवतार्थेविशेषतः ॥ आनीयमानसलिलमात्तपुष्पञ्चानित्यशः ॥ ५७ ॥
अन्तर्ज्जलशिलारूढैर्नीचानांस्पर्शशंकया ॥ आचारवद्भिर्मुनिभिःकृतभस्माङ्गधूलनैः ॥ ५८ ॥ इतस्ततोऽप्सुमज्जद्भिरिष्टशिष्टैःशिलागतैः ॥ तिलैश्च
साक्षतैःपुष्पैस्त्यक्तदर्भपवित्रकैः ॥ ५९ ॥ देवाद्यमृषिमध्यञ्चनिर्व्वर्त्त्यपितृतर्पणम् ॥ निवेदयदभिज्ञेभ्योनित्यस्नानगतान्द्विजान् ॥ ६० ॥ स्थानेस्था
नेकृतानेकबलिपुष्पसमीरणैः ॥ सौरार्घ्यपूर्व्वकुर्व्वद्भिःस्थण्डिलेऽभ्यर्च्चनादिकम् ॥ ६१ ॥ क्वचिन्निमज्जदुन्मज्जत्प्रशस्तगजयूथपम् ॥ क्वचिच्चतृषयाया
तमृगीमृगतुरङ्गमम् ॥ ६२ ॥ क्वचित्पीतजलोत्तीर्णमयूरवरवारणम् ॥ क्वचित्कृततटाघातवृषप्रतिवृषोज्ज्वलम् ॥ ६३ ॥ क्वचित्कारण्डवरवैःक्वचि
त्सारसकूजितैः ॥ क्वचिच्चकोकनिनदैःक्वचिद्भ्रमरगीतिभिः ॥ ६४ ॥ स्नानपानादिकरणैःस्वसम्पदुपजीविभिः ॥ प्रणयात्प्राणिभिस्तैस्तैर्भाषमाणमिवा
सकृत् ॥ ६५ ॥ कूलशाखिशिखालीनकोकिलाकुलकूजितैः ॥ आतपोपहतान्सर्व्वानामन्त्रयदिवानिशम् ॥ ६६ ॥ उत्तरेतस्यसरसस्तीरेकल्पतरोर
धः ॥ वेद्यांवज्रशिलामय्यांमृदुलेमृगचर्म्मणि ॥ ६७ ॥ सनत्कुमारमासीनंशश्वद्बालवपुर्द्धरम् ॥ तत्कालमात्रोपरतंसमाधेरचलात्मनः ॥ ६८ ॥ उपा
स्यमानंमुनिभिर्योगीन्द्रैरपिपूजितम् ॥ ददृशुर्नैमिषीयास्तेप्रणताश्चोपतस्थिरे ॥ ६९ ॥ यावत्पृष्टवतेतस्मैप्रोचुःस्वागतकारणम्॥ तुमुलःशुश्रुवेतावद्दि
विदुन्दुभिनिःस्वनः ॥ ७० ॥ ददृशेतत्क्षणेतस्मिन्विमानंभानुसन्निभम् ॥ गणेश्वरैरसंख्येयैःसंवृतञ्चसमन्ततः ॥ ७१ ॥ अप्सरोगणसंकीर्णंरुद्रकन्या
भिरावृतम् ॥ मृदङ्गमुरजोद्घुष्टवेणुवीणारवान्वितम् ॥ ७२ ॥ चित्ररत्नवितानाढ्यंमुक्तादामविराजितम् ॥ मुनिभिःसिद्धगन्धर्व्वैर्यक्षचारणकिन्नरैः
॥ ७३ ॥ नृत्यद्भिश्चैवगायद्भिर्वादयद्भिश्चसंवृतम् ॥ वीरगोवृषचिह्नेनदिव्यविद्रुमयष्टिना ॥ ७४ ॥ कृतगोपुरसत्कारंकेतुनामान्यहेतुना ॥ तस्य
मध्येविमानस्यचामरद्वितयान्तरे ॥७५॥ छत्रस्यमणिदण्डस्यचन्द्रस्येवशुचेरधः ॥ दिव्यसिंहासनारूढंदेव्यासुयशसासह ॥७६॥ श्रियाचवपुषाचैव
त्रिभिश्चापिविलोचनैः ॥ प्रकारैरपिकृत्यानांप्रत्यभिज्ञापकंप्रभोः ॥ ७७ ॥ अविलङ्घ्येजगत्कर्तुराज्ञापनमिवागतम् ॥ सर्वानुग्रहणंशम्भोःसाक्षादिव

पुरःस्थितम् ॥ ७८ ॥ शिलादतनयंसाक्षाच्छ्रीमच्छूलवरायुधम् ॥ विश्वेश्वरंगणाध्यक्षंविश्वेश्वरमिवापरम् ॥ ७९ ॥ विश्वस्यापिविधातॄणांनिग्रहानुग्रहक्षमम् ॥ चतुर्बाहुमुदाराङ्गंचन्द्ररेखाविभूषितम् ॥ ८० ॥ कण्ठमध्येचकालेनकलङ्केनाप्यलङ्कृतम् ॥ सविग्रहमिवैश्वर्य्यंसामर्थ्यमिवसाक्रियम् ॥ ८१ ॥ समाप्तमिवनिर्व्वाणंसार्व्वज्ञमिवसङ्गतम् ॥ दृष्ट्वाप्रहृष्टवदनोब्रह्मपुत्रःसहर्षिभिः ॥ ८२ ॥ तस्थौप्राञ्जलिरुत्थायतस्यात्मानमिवार्पयन् ॥ अथासन्नतरेतस्मिन्विमानेचावनिंगते ॥ ८३ ॥ प्रणम्यदण्डवद्देवंस्तुत्वाव्यज्ञापयन्मुनीन् ॥ षट्कुलीयाइमेदीर्घनैमिषेसत्रमास्थिताः ॥ आगताब्रह्मणादिष्टादेवसेवाभिकाङ्क्षया ॥ ८४ ॥ श्रुत्वावाक्यंब्रह्मपुत्रस्यनन्दीच्छित्त्वापाशान्दृष्टिपातेनसद्यः ॥ शैवंधर्म्मंश्चैश्वरंज्ञानयोगंदत्त्वाभूयोदेवपार्श्वंजगाम ॥ ८५ ॥ सनत्कुमारेणचतत्समस्तंव्यासायसाक्षाद्गुरवेममोक्तम् ॥ व्यासेनचोक्तंमहितेनमह्यंमयाचतद्वःकथितंसमासात् ॥ ८६ ॥ नावेदविद्भ्यःकथनीयमेतत्पुराणरत्नंपुरशासनस्य ॥ नाभक्तशिष्यायननास्तिकेभ्योदत्तंहिमोहान्निरयंददाति ॥ ८७ ॥ मार्गेणवेदानुगतेनयैस्तद्दत्तंगृहीतंपठितंश्रुतंवा ॥ तेभ्योमुखेधर्म्ममुखंत्रिवर्गंनिर्व्वाणमन्तेनियतंददाति ॥ ८८ ॥ परस्परस्योपकृतंभवद्भिर्मयाचपौराणिकमार्गयोगात् ॥ अतोगमिष्येऽहमवाप्तकामःसमस्तमेवास्तुशिवंसदानः ॥ ८९ ॥ सूतेकृताशिषिगतेमुनयःसुवृत्तायागेचपर्य्यवसितेमहितेप्रयागे ॥ कालेकलौचविषयैःकलुषायमाणेवाराणसीपरिसरेवसतिंवितेनुः ॥ ९० ॥ अथचतेपशुपाशमुमुक्षयास्वकृतयाकृतपाशुपतव्रताः ॥ अधिगताखिलबोधसमाधयः परमनिर्वृतिमापुरनिन्दिताः ॥ ९१ ॥
इति श्रीशैवेमहापुराणेवायवीयसंहितायामुत्तरभागेश्रीकृष्णोपमन्युसंवादेत्रिंशोऽध्यायः ॥ ३० ॥ ॥ ७ ॥ समाप्तोयमुत्तरभागः ॥

---

**इयं शिवपुराणस्थवायवीयसंहिता खेमराज श्रीकृष्णदास इत्यनेन मुम्बय्यां**

**स्वकीये "श्रीवेंकटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशिता।**

**संवत् १९५३, शके १८१८, सन् १८९६.**

॥ इति श्रीशिवमहापुराणे संस्कृते वायवीयसंहितायामुत्तरार्द्धं समाप्तम् ॥

## ॥ अथ शिवमहापुराणे षष्ठी धर्मसंहिता प्रारभ्यते ॥


देव
ब्रम्हदेव·
·श्रीकृष्ण.
शिव
ग.
पा.

श्रीगणेशाय नमः ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ १ ॥जयतिपराशरसूनुःसत्यवतीहृदयनन्दनोव्यासः ॥
यस्यास्यकमलगलितंवाङ्मयममृतंजगत्पिबति ॥ १ ॥ योधत्तेभुवनानिसत्त्वगुणवान्स्रष्टारजःसंश्रयःसंहर्त्तातमसान्वितोगुणमयींमायामतीत्यस्थि
तः ॥ सत्यानन्तमनन्तबोधममलंब्रह्मादिसंज्ञास्पदंनित्यंतत्त्वसमन्वयादधिगतंपूर्णंशिवंधीमहि ॥ २ ॥ सूतउवाच ॥ एकदादेवकीपुत्रश्चिन्तय
न्रहसिस्थितः ॥ पूजयामासविधिवदुपमन्युंसमागतम् ॥ ३ ॥ पप्रच्छसुखमासीनंकंपूजयसिनित्यशः ॥ एवमुक्तोमुनिश्रेष्ठउवाचपरिहर्षितः ॥ ४ ॥
चिरकालंमयातप्तंपूर्व्वमेवमहत्तपः ॥ शंकरःकृपयाविष्टोदेवोदर्शनमागतः ॥ ५ ॥ त्रिभिरंशैःशोभमानमजस्रसुखमव्ययम् ॥ एकपादंमहादंष्ट्रंसज्वालकव
लैर्मुखैः ॥ ६ ॥ द्विसहस्रमयूखानांज्योतिषातिविराजितम् ॥ सर्व्वास्त्रप्रवरश्चाद्यमनेकाक्षंसहस्रपात् ॥ ७ ॥ यत्तत्कल्पान्तसमयेविश्वंसंहरतिध्रुवम् ॥
नावध्योयस्यचभवेद्दतेदेवाज्जनार्दनात् ॥ ८ ॥ महेश्वरभुजोत्सृष्टंत्रैलोक्यंसचराचरम् ॥ निर्दहेच्चजगत्कृत्स्नंनिमेषार्द्धान्नसंशयः ॥ ९ ॥ तपःस्थोरुद्रपा
र्श्वस्थंदृष्टवानहमव्ययम् ॥ गुह्यमस्त्रंपरंनान्यत्तत्तुल्यमधिकंहिवा ॥ १० ॥ यत्तच्छूलमितिख्यातंसर्व्वलोकेषुशूलिनः ॥ दारयेद्यन्महींकृत्स्नांशोष
येद्यन्महोदधिम् ॥ ११ ॥ यौवनाश्वोहतोयेनमान्धातासबलःपुरा ॥ चक्रवर्त्तीमहातेजास्त्रैलोक्यविजयीनृपः ॥ १२ ॥ दर्पाविष्टश्चगेहेयन्निक्षिप्यलव
णासुरः ॥ शत्रुघ्नंनृपतिंयुद्धेसमाहूयक्षयंगतः ॥ १३ ॥ तस्मिन्दैत्येविनष्टेतुरुद्रहस्तेगतन्तुयत् ॥ तच्छूलमतितीक्ष्णाग्रंसन्त्रासजननंमहत् ॥ १४ ॥
त्रिशिखांभ्रूकुटिंकृत्वातर्ज्जयन्तमिवस्थितम् ॥ विधूमानलसङ्काशंबालसूर्य्यमिवोदितम् ॥ १५ ॥ सर्पहस्तमनिर्देश्यंपाशहस्तमिवान्तकम् ॥ परशुं
तीक्ष्णधारञ्चसर्पाद्यैश्चविभूषितम् ॥ १६ ॥ कल्पान्तदहनाकारंतथापुरुषविग्रहम् ॥ यत्तद्भार्गवरामायक्षत्रियान्तकरंरणे ॥ १७ ॥ रामोयद्बलमाश्रि
त्यपूर्व्वंदत्तंकपर्दिना ॥ परशुंतंगृहीत्वासौशिवदत्तंमहामनाः ॥ १८ ॥ त्रिःसप्तकृत्वोयःक्षत्रंददाहरुषितोमुनिः ॥ सुदर्शनंतथाचक्रंसहस्रवदनंविभुम् ॥
॥ १९ ॥ द्विसहस्रभुजंदेवंददर्शपुरुषाकृतिम् ॥ द्विसहस्रेक्षणंदेवंसहस्रचरणाकुलम् ॥ २० ॥ वज्रंशक्तिञ्चतूणीरंखड्गंपाशंयमंकुशम् ॥ गदाञ्चलोकपा
लानामस्त्राण्येतानियानिच ॥ २१ ॥ ददर्शतानिसर्व्वाणिभगवद्रुद्रपार्श्वतः ॥ सव्यदेशेतुदेवस्यब्रह्मालोकपितामहः ॥ २२ ॥ विमानंदिव्यमास्था
यहंसयुक्तंमनोमयम् ॥ वामपार्श्वेस्थितश्चैवशङ्खचक्रगदाधरः ॥ २३ ॥ वैनतेयंसमास्थायतथानारायणःस्थितः ॥ स्कन्दःशक्तिंसमादायमयूरस्थःसघ
ण्टकः ॥ देव्याःसमीपेसन्तस्थौद्वितीयइवपावकः ॥ २४ ॥ नन्दीशूलंसमादायभवाग्रेसमवस्थितः ॥ सर्व्वभूतगणाश्चैवमातरोविविधाःस्थिताः ॥ २५ ॥
तेचसर्व्वेमहात्मानंपरिवार्य्यसमन्ततः ॥ अस्तुवन्विविधैःस्तोत्रैर्महादेवंसदासुराः ॥ २६ ॥ यत्किञ्चिच्चजगत्यस्मिन्दृश्यतेश्रूयतेऽथवा ॥ तत्सर्व्वंभग

त्पार्श्वेनिरीक्ष्याहंसुविस्मितः ॥ २७ ॥ सुमहद्धैर्य्यमालम्ब्यप्राञ्जलिर्विविधैःस्तवैः ॥ सचतंशङ्करंदृष्ट्वाबाष्पगद्गदयागिरा ॥ २८ ॥ पूजयामासविधिव
दहंश्रद्धासमन्वितः ॥ भगवानथसुप्रीतोमामाहप्रहसन्निव ॥ २९ ॥ नविचालयितुंशक्योमयाविप्रपुनःपुनः ॥ परीक्षितोऽसिभद्रंतेभवान्भक्त्यामदी
यया ॥ ३० ॥ तस्माद्वरयभद्रंतेवरंदेवेषुदुर्लभम् ॥ सचतंप्रांजलिर्भूत्वाप्राहभक्त्यानुकम्पितम् ॥ ३१ ॥ भगवन्यदितुष्टोऽसियदिभक्तिः
स्थिरामयि ॥ तेनसत्येनमेज्ञानंत्रिकालविषयंविभो ॥ ३२ ॥ प्रयच्छभक्तिंविपुलांत्वयिचाव्यभिचारिणीम् ॥ सान्वयस्यापिनित्यञ्चभूरिक्षीरौदनं
विभो ॥ ३३ ॥ममास्तुतवसान्निध्यंनित्यञ्चैवाश्रमेविभो ॥ एवमुक्तःसतंप्राहवर्ज्जितस्त्वंभविष्यसि ॥ ३४ ॥ जरामरणजैर्दोषैःसर्व्वकामप्रदोहरः ॥
मुनीनांपूजनीयश्चयशोधनसमन्वितः ॥ ३५ ॥ शीलरूपगुणैश्वर्य्यमत्प्रसादात्पदेपदे ॥ क्षीरोदसागरस्यैवसान्निध्यंपयसान्निधेः ॥ ३६ ॥
तत्रतेभवितानित्यंयत्रयत्रेच्छसेमुने ॥ अमृतात्मतुतत्क्षीरंयावत्संयाम्यतेततः ॥ ३७ ॥ इमंवैवस्वतंकल्पंपश्यसेबन्धुभिःसह ॥ त्वद्गो
त्रश्चाक्षयन्त्वस्तुप्रदास्यामिसदैवाहि ॥ ३८ ॥ सान्निध्यमाश्रमेतुभ्यंमयिभक्तिश्चसुस्थिरा ॥ दास्यामिदर्शनंवत्सस्मृतश्चभवतासुखम् ॥ ३९ ॥
तिष्ठवत्सयथाकामंनोत्कण्ठांकर्त्तुमर्हति ॥ एवमुक्त्वासभगवांस्तत्रैवान्तरधीयत ॥ ४० ॥ ममेशानोवरान्दत्त्वासूर्य्यकोटिसमप्रभः ॥ एवंदृष्टो
मयाकृष्णयदुक्तंतेनधीमता ॥ ४१ ॥ तदवाप्तञ्चमेसर्व्वंदेवदेवसमाधिना ॥ प्रत्यक्षञ्चैवतेयातागन्धर्व्वाप्सरसस्तथा ॥ ४२ ॥ ऋषीन्विद्याधरांश्चैवप
श्यसिद्धान्व्यवस्थितान् ॥ पश्यवृक्षान्मनोरम्यान्स्निग्धपत्रान्सुगन्धिनः ॥ ४३ ॥ सर्व्वर्तुकुसुमैर्युक्तान्सदापुष्पफलान्वितान् ॥ सर्व्वमेतन्महाबाहोई
श्वरस्यमहात्मनः ॥ ४४ ॥ प्रसादादेवदेवस्यविश्वभावसमन्वितम् ॥ ४५ ॥ इतिश्रीशैवेमहापुराणेधर्म्मसंहितायांशिवमाहात्म्यनिरूपणंनामप्रथमो
ऽध्यायः ॥ १ ॥ उपमन्युरुवाच ॥ ममास्तित्वखिलंज्ञानंप्रसादाच्छूलपाणिनः ॥ भूतंभव्यंभविष्यञ्चसर्व्वंजानामितत्वतः ॥ १ ॥ तमहंदृष्टवान्देवम
पिदेवासुरेश्वरम् ॥ येनपश्यन्त्यनाराध्यंकोऽन्योधन्यतरोमया ॥ २ ॥ षड्विंशकमितिख्यातंपरंतत्त्वंसनातनम् ॥ एतद्ध्यायन्तिविद्वांसोयत्तत्परमम
क्षरम् ॥ ३ ॥ सर्व्वतत्त्वविधानज्ञःसर्व्वतत्त्वार्थदर्शनः ॥ सएवभगवान्देवःप्रधानपुरुषेश्वरः ॥ ४ ॥ योऽसृजद्दक्षिणात्पार्श्वाद्ब्रह्माणंलोककारणम् ॥
वामपार्श्वात्सृजद्विष्णुंलोकरक्षार्थमीश्वरम् ॥ ५ ॥ कल्पान्तेचैवसम्प्राप्तेरुद्रमङ्गात्सृजत्प्रभुः ॥ सतेनसंहरेत्कृत्स्नंजगत्स्थावरजङ्गमम् ॥ ६ ॥ युगान्तेस
र्व्वभूतानिसंवर्त्तकइवानलः ॥ कालोभूत्वामहादेवोग्रसमानःसतिष्ठति ॥ ७ ॥ सर्व्वगःसर्व्वभूतात्मासर्व्वभूतोद्भवोद्भवः ॥ आस्तेसर्व्वगतोदेवोअदृश्यः
सर्व्वदैवतैः ॥८॥ अतस्त्वंपुत्रलाभायसमाराधयशङ्करम् ॥ यैर्भवाराधनात्प्राप्तंहृत्कामंतच्छृणुष्वह ॥ ९ ॥ शर्व्वात्सर्व्वामरैश्वर्य्यंहिरण्यकशिपुःपुरा ॥

वर्षाणांदशलक्षाणिसोऽलभच्चन्द्रशेखरात् ॥ १० ॥ तस्याथपुत्रप्रवरोवर्षायुतमयोधयत् ॥ सचशर्व्ववरादिन्द्रंनन्दनोनामविश्रुतः ॥ ११ ॥ विष्णोश्च
क्रश्चतद्दोरंवज्रमाखण्डलस्यच ॥ शीर्णंपुराभवत्कृत्स्नंग्रहस्याङ्गेषुमाधव ॥१२॥ नशस्त्राणिविहन्त्यङ्गेवरतस्तस्यधीमतः॥ग्रहस्यातिबलस्याजौचक्रंवज्र
मुखान्यपि ॥ १३ ॥ अर्द्द्यमानाश्चविबुधाग्रहेणसुबलीयसा ॥ देवदत्तवराजघ्नुरसुरेन्द्राःसुरान्भृशम् ॥ १४ ॥ तुष्टोविद्युत्प्रभस्यापित्रैलोक्येश्वरता
मदात् ॥ शतवर्षसहस्राणिसर्व्वलोकेश्वरोऽभवत् ॥ १५ ॥ तथापुत्रसहस्राणामयुतश्चददौशिवः ॥ ममचानुचरोनित्यंभवितासीतिचाब्रवीत् ॥ १६ ॥
कुशद्वीपेशुभंराज्यमददाद्भगवानजः ॥ धात्रासृष्टःशतमखोदैत्योवर्षशतंपुरा ॥ १७ ॥ तपःकृत्वासहस्रन्तुपुराणमलभद्भवात् ॥ याज्ञवल्क्यइतिख्या
तोगीतोवेदेपुराकिल ॥ १८ ॥ आराध्यसमहादेवंप्राप्तवाञ्ज्ञानमुत्तमम् ॥ वेदव्यासस्तुयोनाम्नाप्राप्तवानतुलंयशः ॥ १९ ॥ सोऽपिशङ्करमाराध्यात्रि
कालज्ञानमाप्तवान् ॥ इन्द्रेणवालखिल्यास्तुपरीभूतास्तुशङ्करात् ॥ २० ॥ लेभिरेसोमहर्त्तारंगरुडंसर्व्वदुर्ज्जयम् ॥ आपःप्रनष्टाःसर्वाश्चपूर्व्वरोषात्क
पर्द्दिनः ॥ २१ ॥ शर्व्वसप्तकपालेनदेवैरिष्टाप्रवर्त्तिताः ॥ अत्रेर्भार्याचानुसूयात्रीणिवर्षशतानिच ॥ २२ ॥ मुसलेषुनिराहारासुप्ताशर्व्वात्ततःसुरान् ॥
दत्तात्रेयंमुनिंलेभेचन्द्रंदुर्व्वाससंतथा ॥ २३ ॥ विकर्णश्चमहादेवंतथाभक्तसुखावहम् ॥ प्रसाद्यभगवान्सिद्धिंप्राप्तवान्मधुसूदन ॥ २४ ॥ शाकल्यःसं
शितात्मासौनववर्षशतान्यपि ॥ भवमाराधयामासमनोयज्ञेनमाधव ॥२५॥ तुतोषभगवानाहग्रन्थकर्त्ताभविष्यसि ॥ वत्साक्षयाचतेकीर्त्तिस्त्रैलोक्येप्रभ
विष्यति ॥ २६ ॥ अक्षय्यञ्चकुलंतेऽस्तुमहर्षिभिरलंकृतम् ॥ भविष्यसिऋषिश्रेष्ठसूत्रकर्त्ताततस्ततः ॥ २७ ॥ सावर्णिरितिविख्यातऋषिरासीत्कृतेयु
गे ॥ इहतेनतपस्तप्तंषष्टिवर्षशतान्यथ ॥ २८ ॥ तमाहभगवान्रुद्रःसाक्षात्तुष्टोऽस्मितेऽनघ ॥ ग्रन्थकृल्लोकविख्यातोभवितास्यजरामरः ॥ २९ ॥
॥ उपमन्युरुवाच ॥ एवंविधोमहादेवःपुण्यःपूर्व्वतरैःस्तुतः ॥ समर्च्चितःशुभान्कामान्प्रददातियथेप्सितान् ॥ ३० ॥ एकेनैवमुखेनाहंवक्तुंभगवतोगु
णाः ॥ येसन्तितान्नशक्तोमिह्यपिवर्षशतैरपि ॥३१॥ सनत्कुमारउवाच ॥ एतच्छ्रुत्वावचस्तस्यसोऽब्रवीत्तंमहामुनिम्॥विस्मयंपरमंगत्वाऋषिंप्रयतमान
सम् ॥ ३२ ॥ वासुदेवउवाच ॥ धन्यस्त्वमसिविप्रेन्द्रकस्त्वत्तोऽस्तीहपुण्यकृत् ॥ तस्यदेवातिदेवस्तेसान्निध्यंकुरुतेश्रमे ॥ ३३ ॥ दर्शनंमुनिशार्दूल
दद्यात्सभगवाञ्छिवः ॥ अपितावन्ममाप्येवंप्रसादंवाकरोत्वसौ ॥ ३४ ॥ उपमन्युरुवाच ॥ अचिरेणैवकालेनमहादेवंनसंशयः ॥ तस्यैवकृपयात्वंवैद्र
क्ष्यसेपुरुषोत्तमम् ॥ ३५ ॥ षोडशाष्टौवरांश्चैवप्राप्स्यसित्वंमहेश्वरात् ॥ सपत्नीकात्कथंनादात्त्वंहिदेवोजनार्द्दनः ॥ ३६ ॥ पूज्योऽसिदैवतैःसर्व्वैःश्लाघ
नीयःसदागुणैः ॥ जप्यञ्चतेप्रदास्यामिश्रद्दधानायचाच्युत ॥ ३७ ॥ ब्रह्मण्यःश्रद्दधानश्चसत्यंद्रक्ष्यसिशंकरम् ॥ आत्मतुल्यबलंपुत्रंलभिष्यसिमहेश्व

रात् ॥ ३८ ॥ देवज्ञातोऽसिदृष्टोऽसिपुत्रकामोभवान्मम ॥ व्यासउवाच ॥ एवंकथयतस्तस्यमहादेवाश्रिताःकथाः ॥ ३९ ॥ दिनान्यष्टौप्रयातानिमुहूर्त्त
मिवतापसाः ॥ नवमेतुदिनेप्राप्तेमुनिनासचदीक्षितः॥४०॥ मन्त्रमध्यापितःशार्व्वमथर्व्वशिरसंमहत् ॥ जटीमुण्डीचशम्बीचबभूवनियमान्वितः ॥४१॥
मुनिनादीक्षितःकृष्णोयोगकक्षीचमेखली ॥ मासमेकंनिराहारोद्वितीयंजलमात्रभुक् ॥४२॥ मासत्रयंवायुभक्षोबभूवसुसमाहितः ॥ पदांगुष्ठाधृततनुःषष्ठे
चोर्द्ध्वभुजस्तथा ॥ ४३ ॥ सम्प्राप्तेषोडशेमासिसन्तुष्टोदर्शनंददौ ॥ हरौमहेन्द्रचापाढ्येसर्व्वलोकेपयोधरे ॥ ४४ ॥ पार्व्वत्यासहितंदेवंसहितंचन्द्रशेख
रम् ॥ ब्रह्माद्यैःस्तूयमानन्तुपूजितंसिद्धकोटिभिः ॥ ४५ ॥ दिव्यमाल्याम्बरधरंभक्तिनम्रैःसुरासुरैः ॥तंदृष्ट्वाप्रांजलिःकृष्णोदेवंतमजमव्ययम्॥४६॥
सर्व्वाश्चर्य्यमयंदेवंविस्मयोत्फुल्ललोचनः ॥ नानाविधैःस्तुतिपदैर्वाङ्मयेनार्च्चयत्तदा ॥४७॥ सहस्रनाम्नादेवेशःस्तुतःकृष्णेनधीमता ॥ ततोदेवाःसगन्ध
र्व्वाविद्याधरमहोरगाः॥४८॥मुमुचुःपुष्पवृष्टिन्तुसाधुरावान्मनोगतान् ॥ निक्षिप्तापुष्पवृष्टिस्तुवासुदेवस्यमूर्द्धनि ॥४९॥ सिद्धैःसमुनिभिश्चैवअप्सरोभिः
समंततः ॥ पार्व्वत्याश्चमुखंप्रेक्ष्यभगवान्भक्तवत्सलः॥५०॥उवाचकेशवंतुष्टोरुद्रश्चाथविडौजसः ॥ कृष्णजानामिभक्तंत्वांमयिनित्यंदृढव्रतः॥५१॥वृणी
ष्वाष्टौवरान्मत्तःपुण्यांस्त्रैलोक्यदुर्लभान् ॥ तस्यतद्वचनंश्रुत्वाकृष्णःप्रांजलिमान्वरम् ॥ ५२ ॥ प्राहधर्म्मेमतिर्नित्यंयशश्चाग्र्यंबलंमहत् ॥ त्वत्सामीप्यं
स्थिराभक्तिस्त्वयिनित्यंममास्त्विति ॥५३॥ पुत्राणिचदशाद्यानांपुत्राणांममसन्तुवै ॥ वध्याश्चरिपवःसर्व्वेसंग्रामेबलदर्पिताः॥५४॥योगिनामपिसर्व्वेषां
भवेयमतिवल्लभः ॥ तस्यतद्वचनंश्रुत्वातमाहभगवान्भवः ॥ ५५ ॥ सर्व्वंभविष्यतीत्येवंपुनःसप्राहशूलधृक् ॥ साम्बोनाममहावीर्य्यःपुत्रस्तेभविताबली
॥ ५६ ॥ घोरसंवर्त्तकादित्यःशप्तोमुनिभिरेवच ॥ मानुषोभवितासीतिसतेपुत्रोभविष्यति ॥ ५७ ॥ यदन्यत्प्रार्थितंकिञ्चित्तत्तत्सर्व्वंलभस्वच ॥ सतुल
ब्धवरःसर्व्वान्स्तुतिभिःसमतोषयत्॥५८॥नानाविधाभिर्बह्वीभिस्तांप्रणम्याथपार्व्वतीम् ॥ तमाहपार्व्वतीतुष्टामनोज्ञान्भुविदुर्लभान् ॥५९॥ गृहाणमत्त
श्चवरान्कृष्णतुष्टास्मितेऽनघ ॥ देवित्वंयदितुष्टासिवासुदेवःकृताञ्जलिः ॥६०॥ तद्वदेवाथतांप्राहचेद्ददासिजगन्मये ॥ तपसातेनसत्येनब्राह्मणान्प्रतिमा
स्मभूत ॥६१॥ द्वेषःकदाचिद्भद्रन्तुपूजयेयंद्विजान्सदा ॥ तुष्टौचमातापितरौनित्यंममबभूवतुः ॥६२॥ सर्व्वभूतेष्वानुकूल्यंभजेयंयत्रतत्रगः ॥ कुलप्रसू
तिरुचितामममास्तुतवदर्शनात् ॥६३ ॥तर्पयेयंसुरेन्द्रादीन्देवान्यज्ञशतेनतु ॥ यतीनामतिथीनाञ्चसहस्राण्यथसप्तच॥६४॥भोजयेयंसदागेहेश्रद्धापूतन्तु
भोजनम् ॥ बान्धवैःसहप्रीतिस्तुनित्यमस्तुसुनिर्वृतिः ॥६५॥ देविभार्य्यासहस्राणांभवेयंप्राणवल्लभः ॥ अक्षीणरेताःकाम्यश्चतास्तथापाश्रयंवपुः॥६६॥
अन्नात्प्रियतरोलोकेभवेयंसत्यवादिनि ॥ तस्यतद्वचनंश्रुत्वादेवीतंप्राहविस्मिता ॥ ६७ ॥ एवमस्त्वितिभद्रंतेशाश्वतीसर्व्वकामदा ॥ तस्मिं

स्तांश्ववरान्दत्वापार्व्वतीपरमेश्वरौ ॥ ६८ ॥ तत्रैवान्तर्द्दधतुस्तौकृष्णोवैस्वाश्रमंययौ ॥ प्रणम्यशिरसातत्रतंमुनिंकौशिहाततः ॥ ६९ ॥ तथावृत्तश्चत
स्मैतत्समाचष्टोपमन्यवे ॥ सतुतंप्राहकोऽन्यःस्याच्छर्व्वाद्देवाज्जनार्द्दन ॥ ७० ॥ महादानपतिर्लोकेक्रोधेनापिसुदुःसहः ॥ ज्ञानेतपसिशौर्य्येवास्थैर्येवा
पद्यएवच॥७१॥शृणुशम्भोस्तुगोविन्ददेवाश्वर्य्यमहद्यशः॥तच्छ्रुत्वाश्रद्धयायुक्तोऽभवच्छम्भोस्तुभक्तिमान्॥७२॥ भगवाञ्छङ्करःपूर्व्वंब्रह्मलोकेमहात्म
ना॥स्तुतोनामसहस्रेणतण्डिनाब्रह्मयोगिना॥७३॥सांख्याःपठन्तितत्स्तोत्रंविस्तीर्णश्चनिघण्टुमत्॥ दुर्ज्ञानंमानुषाणान्तुस्तोत्रंकेचित्क्वाचिद्भुवि ॥ ७४ ॥
स्तोत्रेणाराधितःशम्भुःप्रादात्तस्मैत्रिलोचनः ॥ वरान्यथेप्सितान्पूर्व्वंनामभिरमृतोपमैः ॥ ७५ ॥ लभिष्यस्युत्तमान्कामान्गच्छकृष्णगृहंसुखी ॥ इत्यु
क्तस्तंनमस्कृत्यकेशवोद्वारकांययौ ॥ ७६ ॥ अन्येषामपियद्वृत्तंपार्व्वत्याश्चयथेप्सितम् ॥ शर्वाद्योलब्धवान्कृष्णमुनीनांतच्छृणुष्वमे ॥ ७७ ॥ अत्रि
र्गोकर्णमासाद्यतपस्तप्त्वाशतंसमाः ॥ लेभेपुत्रशतंशर्व्वात्कीर्त्तिश्चैवतुशाश्वतीम्॥७८॥जरामृत्युविहीनानांधर्म्मज्ञानांसुवर्चसाम्॥अयोनिजानांपुत्राणां
शतंवर्षसहस्रिणाम्॥७९॥ सीम्निहेतोर्व्विवादेनगृहीतोब्रह्महत्यया ॥ ब्रह्महात्वमितिप्रोक्तोमुनिभिःपरिवर्ज्जितः ॥८०॥ मोक्षितःशङ्करेणैवतेजस्वीजगतःकृ
तः ॥ वेदेचपव्यतेनित्यमध्यात्मनिरतःशुचिः ॥ ८१ ॥ तथाचभार्गवोरामोह्याराध्यतपसाविभुम् ॥ निरीक्ष्यदुःखितःशर्व्वंपितरंक्षत्रियैर्हतम् ॥ ८२ ॥
तीक्ष्णंसपरशुंलेभेनिर्द्ददाहचतेनसः ॥ त्रिःसप्तकृत्वःक्षत्रञ्चप्रसन्नात्समहेश्वरात् ॥ ८३ ॥ महेन्द्रपर्व्वतेरामोघोरंकृत्वोपपातकम् ॥ अजेयश्चामरश्चैवसो
ऽद्यापितपसांनिधिः ॥८४॥ लिङ्गार्च्चनरतोनित्यंदृश्यतेसिद्धचारणैः ॥ कल्पान्तेपुनरेवासावृषिःस्थानमवाप्स्यति ॥८५॥ असितस्यानुजःपूर्व्वंपीडया
कृतवांस्तपः ॥ मूढग्राहेणविश्वस्यदेवलोनामतापसः ॥ ८६ ॥ पुरन्दरेणशप्तस्तुयशश्चायुश्चसुस्थिरम् ॥ अधर्म्यंधर्म्ममलभाल्लिङ्गमाराध्यकामदम्
॥ ८७ ॥ चाक्षुषश्चमनोःपुत्रःसामगानाश्चसंसदि ॥ क्रोधात्कृत्समदंनामवशिष्ठःशप्तवान्मुनिम् ॥ ८८ ॥ अयज्ञयजनंसामगृणासिगतचेतनः ॥ तस्मात्ति
ष्ठमहाशापंकिंगायसिरथन्तरम् ॥ ८९ ॥ एकादशसहस्राणिदशाथाष्टौचसंख्यया ॥ वर्षाणांदण्डकारण्येमृगश्चैकोवसिष्यसि ॥ ९० ॥ नष्टपानीययवसे
संवसत्वंवनेचर ॥ प्रज्ञयारहितोदुःखीरुरुमङ्कनिवासिते ॥ ९१ ॥ सचशापाभिभूतश्चदारुणेचमरुस्थले ॥ अयज्ञियद्रुमेदेशेतत्क्षणादभवन्मृगः ॥ ९२ ॥
नमस्काराच्चसंयुक्तंमृगोगृत्समदोगतः ॥ हृदयेसंस्मरन्भक्त्याप्रणवेनयुतंशिवम् ॥ ९३ ॥ तस्मान्मृगमुखाकारोगणोमृगमुखःकृतः ॥ अजरामरतांनीत
स्तीर्त्त्वाशापंपुनश्वसः॥९४॥ शङ्करेणमहाभागोनित्यंलम्बोदरानुगः ॥ लिङ्गार्च्चनरतोनित्यंजैगीषव्योमहातपाः॥९५॥वाराणस्यांमुनिःपूर्व्वंस्थितोभोग
पराङ्मुखः॥विहायचफलंसर्व्वंशुभाशुभस्यकर्म्मणः॥९६॥दत्त्वाष्टगुणमैश्वर्य्यंशङ्करेणविसर्ज्जितः॥ गार्ग्यायप्रददौशर्व्वोमोक्षदान्भुविदुर्लभान् ॥ ९७॥

कामान्चारीमहाक्षेत्रंकालज्ञानंमहर्द्धिमत् ॥ चतुष्पादंसरस्वत्याःपारगत्वंचशाश्वतम् ॥ ९८ ॥ तत्तुल्यन्तुसहस्रन्तुपुत्राणांप्रददौशिवः ॥
वेदव्यासन्तुयोगीन्द्रंपुत्रंतुष्टःपिनाकधृक् ॥ ९९ ॥ पराशरायचददौजरामृत्युविवर्जितम् ॥ माण्डव्यःशंकरेणैवजीविंदत्त्वाविसर्जितः ॥ १०० ॥ वर्षा
णांदशलक्षाणिशूलाग्रादवरोपितः ॥ आधिभिर्व्याधिभिःशूलैर्वर्जितश्चतथाकृतः ॥ १०१ ॥ ध्यायन्नमःशिवायेतिशिवेनपरमात्मना ॥
दरिद्रोब्राह्मणःकश्चिन्निक्षिप्यगुरुवेश्मनि ॥ १०२ ॥ पुत्रन्तुगालवंबाल्येपूर्व्वमासीद्गृहाश्रमे ॥ गुप्तायामग्निशालायांभिक्षुरायातितद्गृहम् ॥ १०३ ॥
भार्य्यामुवाचयःकश्चिदवश्यंनिर्द्धनोयतः ॥ सतुवाच्योभवत्याचनदृश्यतइतिप्रियः ॥ १०४ ॥ अतिथेरागतस्यापिकिंदास्यामिगृहेवसन् ॥ कदाचि
दतिथिःकश्चित्क्षुत्तृषाक्षामकर्शितः ॥ १०५ ॥ तामुवाचसभर्त्तातेक्कगतश्चेतितच्छ्वसा ॥ प्राहभर्त्तामदीयस्तुसाम्प्रतंनचदृश्यते ॥ १०६ ॥ सऋषिस्तामु
वाचेदंज्ञात्वादिव्येनचक्षुषा ॥ गृहस्थश्चाथसंच्छन्नस्तत्रैवसमृतोद्विजः ॥ १०७ ॥ विश्वामित्राभ्यनुज्ञातस्तत्पुत्रोगालवस्तथा ॥ गृहमागम्यमातुःस
श्रुत्वाशापंसुदारुणम् ॥ १०८ ॥ आराध्यशंकरंदेवमिष्टिंकृत्वातुशाम्भवीम् ॥ गृहादसौविनिष्क्रान्तःपितातंप्राहसाञ्जलिम् ॥ १०९ ॥ महादेवप्रसा
दाच्चकृतकृत्योऽस्मितेकृतः ॥ धनवान्पुत्रवांश्चैवमृतोहंजीवितःपुनः ॥ ११० ॥ इतिवःकथितमशेषान्नाहंशक्तःसमासतोवापि ॥ वक्तुंशम्भोश्चगुणा
ञ्छेषस्येवेहमेमुखानिस्युः ॥ १११ ॥ इतिश्रीशैवेमहापुराणेधर्म्मसंहितायांशंकरमाहात्म्यंनामद्वितीयोऽध्यायः ॥ २ ॥ मुनयऊचुः ॥ सूतत्वंब्रूहिनो
भूयोयदुक्तमृषिसंसदि ॥ व्यासेनत्रिपुरघ्नस्तुब्रुवतातत्रवैगुणान् ॥ १ ॥ श्रुत्वाहितान्प्रियान्ब्रूहियत्फलंप्राप्यतेशिवे ॥ समर्च्चितेसमासेनश्रोतुमिच्छाम
हेवयम् ॥ २ ॥ सूतपुत्रासुरास्तेहिकस्यान्वयसमुद्भवाः ॥ कथंददाहभगवान्नगराणिसुरद्विषाम् ॥ ३ ॥ त्रीण्येकेनचबाणेनयुगपत्तेनवीर्य्यवान् ॥ तेषां
तद्वचनंश्रुत्वासूतःप्रोवाचतत्त्ववित् ॥ ४ ॥ व्यासेनकथितंयद्वत्तद्वद्वक्ष्यामितत्त्वतः ॥ सूतउवाच ॥ तारकाक्षस्तुतज्ज्येष्ठोविद्युन्मालीचमध्यमः ॥ ५ ॥
कमलाक्षःकनीयांश्चसर्व्वेतुल्यबलाःसदा ॥ जितेन्द्रियाःसुसन्नद्धाःसंयताःसत्यवादिनः ॥ ६ ॥ तेतुमेरुगुहांगत्वातपश्चक्रुर्महाद्भुतम् ॥ त्रयःपुष्पाणिभो
गांश्चविहायसुमनोहरान् ॥ ७ ॥ वसन्तेसर्व्वकामांश्चगीतवादित्रनिःस्वनम् ॥ ग्रीष्मेसूर्य्यप्रभांजित्वादिक्षुप्रज्वाल्यपावकम् ॥ ८ ॥ तन्मध्यसंस्थाःसि
द्ध्यर्थंजुहुवुर्हव्यमादरात् ॥ महाप्रतापपतिताःसर्व्वेऽप्यासन्समुत्थिताः ॥ ९ ॥ वर्षासुगतसन्त्रासानदींमूर्धन्यधारयन् ॥ शरत्कालेप्रभूतन्तुभोजनन्तुबुभु
क्षिताः ॥ १० ॥ रम्यंस्निग्धंस्थिरंहृद्यंफलमूलमनुत्तमम् ॥ संयमात्क्षुत्तृषौजित्वापानान्युच्चावचान्यपि ॥ ११ ॥ बुभुक्षितेभ्योदत्त्वातुबभूवुरुपलाइव ॥ संस्थिता
स्तेमहात्मानोनिराधाराश्चतुर्दिशम् ॥ १२ ॥ हेमन्तेगिरिमाश्रित्यधैर्य्येणपरमेणच ॥ तुषारदेहसञ्छन्नाजलक्लिन्नेनवाससा ॥ १३ ॥ आच्छाद्यदेहंक्षौमेणशि

शिरेतोयमध्यगाः॥ अनिर्व्विण्णास्ततःसर्व्वेक्रमशोवर्द्धयंस्तपः॥१४॥एवंतेसंस्थितादैत्यादिवारात्रमतन्द्रिताः॥मुहूर्त्तेनसमस्तत्रदशवर्षसहस्रकम्॥१५॥
एवंतेषांगतःकालोधर्म्मेणेतिमतिर्मम ॥ प्रादुरासीत्ततोब्रह्मासुरासुरगुरुर्महान्॥१६॥ तुष्टःसन्दर्शनेतेषांवरंदातुंमहायशाः ॥ मुनिदेवासुरैःसार्द्धंसान्त्व
पूर्व्वमिदंवचः ॥ १७॥ ततस्तानब्रवीत्सर्वान्त्सर्व्वभूतापितामहः ॥ किमर्थंबतदैत्येन्द्राःसर्व्वकर्तास्मिसर्व्वदा॥१८॥ सर्व्वदास्यामियुष्मभ्यंकथयध्वंयदी
प्सितम्॥ तस्यतद्वचनंश्रुत्वाशनैर्यद्यन्मनोगतम्॥१९॥ऊचुःप्राञ्जलयःसर्व्वेप्रणिपत्यापितामहम् ॥ भगवन्नास्तिनोवेश्मपराक्रमवतामपि ॥ २० ॥ अधृ
ष्याःशात्रवाणान्तुयत्रवत्स्यामहेसुखम् ॥ तारकाक्षस्ततःप्राहअभेद्यंयत्सुरैरपि ॥ २१ ॥ करोतुविश्वकर्म्मायन्ममहेममयंपुरम् ॥ ययाचेकमलाक्षस्तु
राजतंसुमहत्पुरम् ॥ २२ ॥ विद्युन्मालीचसंहृष्टोवज्रायसमयंमहत् ॥ एतदुक्ताततोदैत्याजजल्पुरमितौजसः ॥ २३ ॥ हेदेवादिविनान्यत्रवेश्मान्यच्च
वृणीमहे ॥ यथाभिमतमेतेषांविश्वकर्म्माणमुक्तवान् ॥ २४ ॥ सतथेत्येवतंतेषांपुरंकुरुपृथक्पृथक् ॥ पुराणित्रीणिरम्याणिविश्वकर्म्माचकारह ॥२५॥
एवंकुरुष्वेत्युक्तोऽसौकामचारीणितत्क्षणात् ॥ विमुक्तोनापिबहुनाफलमूलयुतानिच ॥ २६ ॥ उद्यानवनवृक्षान्नस्वर्गाच्छतगुणानिच ॥ नदीनदसरित्स्रो
तःपुष्करैःशोभितान्यपि ॥२७॥ सर्व्वकामफलावृक्षाःसन्तितत्रह्यनेकशः ॥ कृतैःपुरैःप्राहतुष्टस्तदादैत्यान्पितामहः ॥ २८ ॥ त्रिपुरेषुचदैत्येन्द्राःप्र
विशध्वंयथाक्रमम् ॥ सर्व्वकामसमृद्धीनिदृष्ट्वातानिपुराण्यपि ॥ २९ ॥ परितुष्टन्तुकंमत्वाजीवितंवीक्ष्यवास्थिरम् ॥ तेतमूचुस्त्रिधामानंजीवितंवी
क्ष्यचञ्चलम् ॥ ३०॥भगवन्किंपुरैरेभिर्बाष्पगद्गदयागिरा॥स्थिरीकुरुजगन्नाथपान्तुनःपरिपंथिनः॥३१॥ जरारोगादयःसर्व्वेमास्मान्मृत्युरगात्क्वचित् ॥
अजराश्चामराःसर्वेभवामइतिनोमतम् ॥ ३२ ॥ समृत्यवःकरिष्यामःकिंकार्य्यंहिपुरोत्तमैः ॥ लक्ष्म्याकिंवाविपुलयास्थानैश्वर्येणवापुनः ॥ ३३ ॥ यत्रै
वमृत्युनाग्रस्तोनियतंपंचभिर्दिनैः ॥ तच्छ्रुत्वावचनंप्राहनसजातोजनिष्यते ॥ ३४ ॥ अजरश्चामरोलोकेभविष्यतिमहीतले ॥ ऋतेतुखण्डपरशोर्देवा
न्नारायणात्क्वचित् ॥ ३५ ॥ तौधर्माधर्मपरमावव्यक्तौव्यक्तरूपिणौ ॥ संपीडनायजगतोयदिसंक्रियतेतपः ॥ ३६ ॥ सफलंतद्व्रतंविद्यात्तस्मात्सुविहितं
नयम् ॥ तद्विचार्यस्वयंबुद्ध्यानशक्यंयत्सुरासुरैः ॥ ३७॥ दुर्लभंवासुदुःसाध्यंमृत्युंवंचयतानघाः ॥ तत्किंचिन्मरणेहेतुंवृणीध्वंसत्वमाश्रिताः॥
॥ ३८ ॥ येनमृत्युर्नभवतांरक्षंतस्तत्पृथक्पृथक् ॥ एतच्छ्रुत्वातुवचनंमुहूर्तंध्यानमास्थिताः ॥ ३९ ॥ प्रोचुःसंचिंतयित्वाथसर्वलोकपितामहम् ॥ पुरे
षुत्रिषुचैतेषुएकस्थानस्थितेषुच ॥ ४० ॥ मध्याह्नाभिजितेकालेशीतांशौपुष्यसंस्थिते ॥ वर्षत्सुकालमेघेषुपुष्करावर्तनामसु ॥ ४१ ॥ सर्वदेवमयोदे
वःसर्वेषामेकहेलया ॥ असंभाव्यैरथेतिष्ठन्सर्वोपस्करणान्विते ॥ ४२ ॥ असंभाव्यैकक्कांडेनभिनत्तुनगराणिनः ॥ निर्वैरःकृत्तिवासास्तुयोस्माकमिति

नित्यशः ॥ ४३ ॥ वंद्यःपूज्योभिवाद्यश्चसोस्माकंनिर्दहेत्कथम् ॥ इतिचेतसिसंधायताद्दशोभुविदुर्लभः ॥४४॥ ब्रह्मणाचवरोदत्तोयाचितस्तैर्महावरः ॥
ततोलब्धवरास्तेतुनिवसंतिस्मतत्रह ॥ ४५॥ सर्वंत्रैलोक्यमुत्साद्यप्रविश्यनगराणिते ॥ ततोमहान्गतःकालोवसतांपुण्यकर्मणाम् ॥ ४६ ॥ यथासुखंय
थाजोषंतेषांसंख्याविवर्जितः ॥ ततःकदाचित्त्रैलोक्येदेवाःशरणमभ्ययुः ॥ ४७ ॥ परित्राणायसाधूनांविध्वस्तेदैत्यदानवैः ॥ महादेवंविरूपाक्षंपूजायि
त्वावृषध्वजम् ॥ ४८ ॥ स्तोत्रैर्नानाविधैर्देवंशूलिनंकृत्तिवाससम् ॥ ऊचुरप्रतिमप्रज्ञाभ्रातृभ्यांसहितेनतु ॥ ४९ ॥ भगवंस्तारकाक्षेणसर्वेदेवाःसवास
वाः ॥ त्रैलोक्यंस्ववशेनीतंतथाचमुनिसत्तमाः ॥ ५० ॥ विध्वस्ताःसर्वशःसिद्धाःसर्वमुत्सादितंजगत् ॥ यज्ञकर्मसमग्रंतुस्वयंबुद्धाचदारुणः ॥ ५१ ॥
प्रवर्तितोह्यधर्मस्तैर्ऋषीणांचनिवर्तितम्॥अवध्येसर्वभूतानांनीयतांवासुरासुराः॥५२॥यावन्नवशगादैत्यैर्घोरैस्त्रिपुरवासिभिः ॥ तावद्विधीयतांनीतिर्ययासं
रक्ष्यतेजगत् ॥५३॥ तेषांसंभाषमाणानांप्रतिवाक्यमुवाचसः ॥ जानामिदैत्यान्विबुधाअशक्यास्तुसुरासुरैः॥५४॥दुःसाध्यस्तुवधस्तेषांसर्वेषांपुरवासि
नाम् ॥ मित्रद्रोहंकथंजानन्करोमिरणकर्कशः ॥ ५५ ॥ सुहृद्द्रोहेमहत्पापंपूर्वमुक्तंस्वयंभुवा ॥ ब्रह्मघ्नेचसुरापेचस्तेयेभग्नव्रतेतथा ॥ ५६ ॥ निष्कृति
र्विहितासद्भिःकृतघ्नेनास्तिनिष्कृतिः ॥ शंभोस्तुवचनंश्रुत्वाब्रह्मावचनमब्रवीत् ॥ ५७ ॥ नकिंचिद्विद्यतेपापंयस्मात्त्वंयोगवित्तमः ॥ साधूनांरक्षणार्था
यहंतव्याम्लेच्छजातयः ॥ ५८ ॥ राज्ञस्तस्यनतत्पापंविद्यतेधर्मएवच ॥ तस्माद्रक्षेद्द्विजान्साधून्कंटकान्वैविशोधयेत् ॥ ५९ ॥ एवमिच्छेदिहामुत्ररा
जाचेद्राज्यमात्मनः ॥ प्रभुस्त्वंसर्वलोकानांतस्माद्रक्षस्वमाचिरम् ॥ ६० ॥ मुनींद्रेशांस्तथायज्ञान्वेदान्नाम्नासिशंकरः ॥ एतच्छ्रुत्वाहतंनास्तिरथःसार
थिनासह ॥ ६१ ॥ यमास्थायधनुर्बाणान्निहनिष्याम्यहंवरान् ॥ ब्रह्माचैतद्वचःश्रुत्वानीप्सोर्हंतुमुवाचह ॥ ६२ ॥ संग्रामंगच्छतस्तुभ्यंसारथ्यंकरवा
ण्यहम् ॥ ततस्तंपृथिवींप्राहरथंमांकुरुमानद ॥ सपर्वतद्वीपवतींचतुर्जलधिमेखलाम् ॥ ६३ ॥ चन्द्रार्कावूचतुर्मांतौरथचक्रेतुनौकुरु ॥ भगवन्यो
द्धुमागच्छेस्तेषांत्रिपुरवासिनाम् ॥ ६४ ॥ आभाषेतांमहादेवंशम्भुंकुलगिरीवचः ॥ गन्धमादनविंध्यौचवंशावावांकुरुप्रभो ॥ ६५ ॥
अस्मिन्दिव्येरथेशंभोशंकरंप्राहबुद्धिमान् ॥ ततस्त्वनंतोनागेंद्रोमामक्षंकुरुसांप्रतम् ॥ ६६ ॥ एलापत्रोभुजंगस्तुपुष्पदंतश्चतावुभौ ॥ अग्रेद्वौ
ध्रुवकावावांभवावस्तवगौरवात् ॥ ६७ ॥ पूर्वंमांकुरुदुर्भेद्यमुवाचमलयोगिरिः ॥ देवदेवजगन्नाथभगवंश्चंद्रशेखर ॥ ६८ ॥ ततःसंध्याभ्रवर्णस्तंतक्ष
कःकर्बुरोब्रवीत् ॥ अविनाहंमहादेवकुरुमांसुदृढंरथे ॥ ६९ ॥ वेदव्रतानिचत्वारिपुण्यान्यूचुर्वृषध्वजम् ॥ योक्त्राणिकुरुनस्तत्रवेदांगसहितान्यपि ॥
॥ ७० ॥ वेदाःप्राहुर्महादेवंतुरगान्नःकुरुप्रभो ॥ स्वायंभुवान्महावेगान्दुर्भेद्यांश्चकुतार्किकैः । ७१ ॥ उपवेदास्ततोदेवंजजल्पुरपराजिताः ॥ अस्मा

न्खलीनान्बंधेषुतत्रसंयमनेकुरु ॥ ७२ ॥सावित्रीसहिताप्राहगायत्रीकृत्तिवाससम् ॥ प्रग्रहंत्वनयासार्धंदुराधर्षंकुरुष्वमाम् ॥ ७३ ॥ प्रणवस्त्वब्रवी
च्छर्वप्रतोदंकुरुशाश्वतम् ॥ यत्नेनक्रियतांमांचशर्वःसर्वमयोयतः ॥ ७४ ॥ त्र्यंबकंप्रहसन्प्राहधनुर्मांकुरुशंकर ॥ उद्धर्तुंयदिशक्तोषिकरस्थंमंदराचलम्॥
॥ ७५ ॥ वासुकिःप्रणतःप्राहदुर्भेद्यंदेवदानवैः ॥ गुणंमांकुरुदेवेशतत्कंठस्थोपिनागरात् ॥ ७६ ॥ ततोनारायणोदेवोभूतभव्यभवात्मकः ॥ भूतादिर्भू
तनिधनःपरमात्माजनार्दनः ॥ ७७ ॥ देवानांकार्यसिद्ध्यर्थंप्रहसन्नाहशंकरम् ॥ अस्मिन्युद्धेमहादैत्यैःशरंमांकुरुदारुणम् ॥ ७८ ॥ क्रुद्धःकामरिपुंप्रा
हचंडदोर्दंडमंडितम् ॥ वैश्वानरोपिकालाग्निःशल्यंमांनकरोषिकिम्॥७९॥ कालेवैश्वानरोरुद्रोलेलिहानोभयानकः ॥ एवमुक्त्वामहाघोरंमहाहासंचकार
सः ॥ ८० ॥ हसतस्तस्यघोरस्यघोरानिश्चेरुरर्चिषः ॥ विद्युत्कुटिललोलास्तुमुखद्वारेषुसप्तसु ॥ ८१ ॥ सितासिताःकृष्णनीलायाभिःसदसदात्मकम् ॥
संहरंतीदमेवासौजगत्पूर्वंचराचरम् ॥ ८२ ॥ ततोभूतपिशाचाश्चरुवंतिस्ममहारवम् ॥ व्याधयश्चयमंजित्वापुरानीताह्यनेकशः ॥ ८३ ॥ राक्षसावि
विधाकाराःकर्मजाश्चाभियोनिजाः ॥ रतिग्रहाश्चविविधास्तथाकुहकवृत्तयः ॥ ८४ ॥ दैत्यानांवरलब्धानांतेषांयेबाह्यसंयुताः ॥ सर्वेनिमे
षतोदग्धास्तदात्रिपुरवासिनाम् ॥ ८५ ॥ दह्यमानस्यतस्याथविष्णुस्तंपुनरब्रवीत् ॥ अलंयदस्तितेकिंचित्कारणंतत्त्वयाकृतम् ॥ ८६ ॥
निर्दहिष्यसितत्सैन्यंभवकांडाग्रतःस्थितः ॥ तच्छ्रुत्वावचनंविष्णोस्तूष्णीमासीत्सपावकः ॥ ८७ ॥ ततोवायुर्महादेवमुवाचचतथाशशी ॥
पक्षयोर्मांतथापुंखेनियोजयशरेविभो ॥ ८८ ॥ व्योमालिकज्जलःश्यामःकुरुष्वयंदिमन्यसे ॥ नियोजयाग्रधारायांयमःप्राहमहेश्वरम् ॥ ८९ ॥
उवाचभीमंसंहस्यप्रधानातुशतह्रदा ॥ अथविद्युत्सहस्राणांकुरुशल्यविशोधनीम् ॥ ९० ॥ ततःसंवर्तकामेघाःप्रोचुःशम्भोकुरुष्वनः ॥ ध्वजेमेरौ
शुभेस्तंभेदेवानामालयेविभो ॥ ९१ ॥ एतच्छ्रुत्वातुसर्वेषांततःसर्वंचकारसः ॥ संमंत्र्यदैवतैःसार्धंशरण्योभक्तवत्सलः ॥ ९२ ॥ रथं
कृत्वाततस्त्वष्टासंपादयतब्रह्मणे ॥ शम्भवेसौनिवेद्याथरोपयामासशूलिनम् ॥ ९३ ॥ ततस्तस्मिन्रथेदिव्येदिव्यगन्धर्वपन्नगैः ॥ स्तूयमानोमु
निगणैःसमारूढस्त्रिशूलधृक् ॥ ९४ ॥ शार्वस्थानकमास्थायसंधायचशरोत्तमम् ॥ सज्जंतत्कार्मुकंकृत्वाप्रत्यालीढंमहाद्भुतम् ॥ ९५ ॥ निवेश्यदृष्टिं
मुष्टौचमुष्टिंदृष्टौनिवेश्यच ॥ अतिष्ठन्निश्चलस्तत्रशतंवर्षसहस्रकम् ॥ ९६ ॥ ततोंगुष्ठेगणाध्यक्षःसतुदन्ननिशंस्थितः ॥ नलक्ष्यंविविशुस्तानिपुराण्य
स्यचपूजितः ॥ ९७ ॥ ततोंतरिक्षादशृणोद्धनुर्बाणधरोहरः ॥ मुंजकेशोविरूपाक्षोवाचंपरमशोभनाम् ॥ ९८ ॥ भोभोनयावद्भगवानर्चितोसौद्वि
विग्रहः ॥ पुराणजगदीशेशसांप्रतंनदहिष्यसि ॥ ९९ ॥ एतच्छ्रुत्वातुवचनंगजवक्त्रमपूजयत् ॥ भद्रकालींसमाहूयततोंधकनिषूदनः ॥ १०० ॥ तस्मि

न्संपूजितेहृष्टेपरितुष्टपुरःसरे ॥ विनायकेततोव्योम्निददर्शभगवान्हरः ॥ १०१ ॥ पुराणित्रीणिदैत्यानांयुक्तानिचयथातथम् ॥ अभीलाख्येमुहूर्तेतुधनु
र्निष्कृष्यसोद्भुतम् ॥ २ ॥ कृत्वाज्यातलनिर्घोषंनादमत्यंतदुस्तरम् ॥ आत्मनोनामविश्राव्यसमाभाष्यसमासुरान् ॥ ३ ॥ मार्तंडकोटिवपुषंकांडमुग्रो
मुमोचह ॥ ददाहत्रिपुरस्थांस्तांस्त्रीन्दैत्यान्विमलापहा ॥ ४ ॥ ततःपुराणिभग्नानिचतुर्जलधिमेखलाम् ॥ गतानियुगपद्भूमिंत्रीणिदग्धानिभस्मशः॥
॥ ५ ॥ दैत्याश्चशतशोदग्धास्तस्यबाणाग्रवह्निना ॥ तारकाक्षस्त्वनिर्दग्धोभ्रातृभ्यांसहितोभवत् ॥ ६ ॥ महादेवंसमुद्दिश्यतमूचुर्मनसाशनैः ॥
भक्त्यापरमयायुक्तःप्रलपन्विविधांगिरम् ॥ ७ ॥ भवज्ञातोसितुष्टोसियदस्माकंमनोगतम् ॥ करणीयंकृतंतत्वयद्दृष्टस्तवपराक्रमः ॥ ८ ॥ भगवन्यदितु
ष्टोसियज्वास्मान्सहबंधुभिः ॥ तेनसत्येनभूयोपिकदात्वंप्रदहिष्यसि ॥ ९ ॥ दुर्लभंलभ्यमस्माभिर्यदप्राप्यंसुरासुरैः ॥ त्वद्भावभाविताबुद्धिर्जाताजातं
भवात्विति ॥ १० ॥ इत्येवंविब्रुवंतस्तेदानवास्तेनवह्निना ॥ अन्येपिबालवृद्धाश्चनिर्दग्धाभस्मसात्कृताः ॥ ११ ॥ स्त्रियोवापुरुषावापिवाहनानिचत
त्रये ॥ सर्वैतेनाग्निनादग्धाःकल्पांतेतुजगद्यथा ॥ १२ ॥ भर्तृकंठगतांकृत्वाकाश्चिद्दग्धवरस्त्रियः ॥ काश्चित्पुत्रानवच्छाद्यबाहुभ्यांपरिगृह्यच ॥ १३ ॥
दग्धाःपलायमानाश्चनिर्दग्धाःशतशोपराः॥ काश्चित्सुताःप्रमत्ताश्चरतिश्रांताश्चयोषितः ॥ १४ ॥ अर्धदग्धाविबुद्धाश्चभ्रमुर्मोहमूर्च्छिताः ॥ तेननासी
त्सुसूक्ष्मोपिवीरस्त्रिपुरवह्निना ॥१५॥ अविदग्धोविनिर्मुक्तःस्थावरोजंगमोपिवा ॥ वर्जयित्वाभयंदैत्यंविश्वकर्माणमव्ययम् ॥ १६ ॥ अविरुद्धंतुदेवानां
रक्षितंविष्णुतेजसा ॥ संनिपातोहियेषांनोविद्यतेनाशकारकः ॥ १७ ॥ दैवात्तद्वत्पदार्थानांभावाभावेकृताकृते ॥ तस्माद्यत्नामसंभाव्यंसद्भिःकर्तव्यमे
वतत् ॥ १८ ॥ गर्हणालक्ष्यतेलोकेनतत्कर्मसमाचरेत् ॥ नसंयोगःकदायेषांभूयात्रिपुरवासिनाम् ॥ १९ ॥ मतमेतद्धिसर्वेषांदैवाद्यर्हियतोभवेत्॥
ततःसभगवान्रुद्रोदग्ध्वात्रिपुरवासिनः ॥ २० ॥ कृतकृत्योमहायोगिब्रह्माद्यैरभिपूजितः ॥ सधनुःसशरःसाश्वस्तत्रैवांतरधीयत ॥ २१ ॥ तस्मिंश्चांत
र्हितेदेवेमुनिगंधर्वकिंनराः ॥ नागाःसर्पाश्चाप्सरसःसंहृष्टाश्चाथमानुषाः ॥ २२ ॥ स्वंस्वंस्थानमनुप्राप्यनिर्वृतिंपरमांययुः ॥ एतद्वःकथितंसर्वंधन्यं
शत्रुक्षयंकरम् ॥ २३ ॥ स्वर्गप्रदंमोक्षदंचकिंभूयःश्रोतुमिच्छथ॥२४॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांत्रिपुरदाहवर्णनंनामतृतीयोऽध्यायः ॥ ३ ॥
माहात्म्यमेतद्वृषभध्वजस्यश्रुत्वामुनेर्गंधवतीसुतस्य ॥ वचोमहार्थंमुनयश्चसर्वेपप्रच्छुरुग्रंप्रणिपत्यसूतम् ॥ १ ॥ मुनयऊचुः ॥ किमंधकारिर्भ
गवान्पिनाकीकस्यान्वयेवीर्यवतःपृथिव्याम् ॥ जातोमहात्माबलवान्प्रधानेकश्चांधकःकस्यसुतःकथंवा ॥ २ ॥ एतत्समग्रंसरहस्यमद्यब्रवीहिसू
तभगवत्प्रसादात् ॥ व्यासात्त्वयावैविदितंहिसम्यग्युद्धंयथाभूदनयोर्हतःसः ॥ ३ ॥ तेषांतदासौवचनंनिशम्यप्रोवाचसूतस्तुमुनींस्तदानीम् ॥ पूर्वं

द्विजामंदरशैलसंस्थाःकपर्दिनश्चंडपराक्रमस्य ॥ ४ ॥ चक्रेततोनेत्रनिमीलनंतुसापार्वतीनर्मयुतंसलीलम् ॥ प्रवालहेमाब्जधृतप्रभाभ्यांकरांबुजा
भ्यांनिमिमीलनेत्रे ॥ ५ ॥ हरस्यनेत्रेषुनिमीलितेषुक्षणेनजातःसुमहांधकारः ॥ तत्स्पर्शयोगाच्चमहेश्वरस्यकराच्चतस्यास्खलितंमदांभः ॥ ६ ॥
शंभोर्ललाटेशणवह्नितप्तोविनिर्गतोभूरिजलस्यबिंदुः ॥ गर्भोबभूवाथकराननस्यभयंकरःक्रोधपरःकृतघ्नः ॥ ७ ॥ अन्योविरूपीजटिलःश्मश्रुलश्चकृ
ष्णोनरोवैविकृतःसुरोमा ॥ गायन्हसन्प्ररुदन्नृत्यमानोविलेलिहानोघनघोरघोषः ॥ ८ ॥ जातेनतेनाद्भुतदर्शनेनगौरींभवोसौस्मितपूर्वमाह ॥ निमील्य
नेत्राणिकृतश्चनर्मबिभेषसेमांदयितेकथंत्वम् ॥ ९ ॥ गौरीहरात्तद्वचनंनिशम्यविहस्यमानाप्रमुमोचनेत्रे ॥ जातेप्रकाशेसतिघोररूपोजातोंधकारादपिने
त्रहीनः ॥ १० ॥ पप्रच्छकोयंभगवन्विरूपस्तादृग्विधंतच्चनिरीक्ष्यभूतम् ॥ वदस्वसत्यंममकिंनिमित्तंसृष्टोथवाकेनचकस्यपुत्रः ॥ ११ ॥ श्रुत्वाहरस्त
द्वचनंप्रियायाउत्पन्नएषोऽद्भुतचण्डवीर्यः ॥ निमीलितेचक्षुषीमेभवत्यासस्वेदजश्चांधकनामधेयः ॥ १२ ॥ ततोऽस्यकर्तास्मियथानुरूपंत्वयासख्या
सदयंगणेभ्यः ॥ संरक्षितव्यस्त्वयनंहिचैकंविचार्यबुद्ध्याकरणीयमार्ये ॥१३॥ गौरीततोभर्तृवचोनिशम्यकारुण्यभावात्सहितासखीभिः ॥ नानाप्रका
रैर्बहुभिर्ह्युपायैश्चकाररक्षांस्वसुतस्ययद्वत् ॥ १४ ॥ कालेऽथयस्मिन्भुविचांधकस्तुहिरण्यनेत्रस्त्वथपुत्रकामः ॥ अरण्यमाश्रित्यतपश्चकारजातस्त
दाकश्यपजःसुतार्थम्॥१५॥काष्ठोपमोसौजितरोषदोषःसंदर्शनार्थंतुमहेश्वरस्य॥तुष्टःपिनाकीतपसाऽस्यसम्यग्वरप्रदानाययौद्विजेंद्राः ॥१६॥ तुष्टस्त
माहाकुलितेंद्रियंतंकिमर्थमेतद्व्रतमाश्रितंते ॥ प्रब्रूहिकामंवरदोभवोहंयदिच्छसित्वंसकलंददामि ॥१७॥ पुत्रस्तुमेचंद्रललाटनास्तिसुवीर्यवान्दैत्यकुला
नुरूपी ॥ तदर्थमेतद्व्रतमास्थितोऽहंतंदेहिदेवेशसुवीर्यवंतम् ॥ १८ ॥ यस्माच्चमद्भ्रातुरनंतवीर्याःप्रह्लादपूर्वाअपिपञ्चपुत्राः ॥ ममेहनास्तीतिनिरन्वयो
ऽहंयोमामकंराज्यमिदंबुभूषेत् ॥ १९ ॥ राष्ट्रंपरस्यस्वबलेनहत्वाभुंक्तेऽथवास्वंपितुरेवदिष्टम् ॥ सप्रोच्यतेपुत्रइहाप्यमुत्रपुत्रीसतेनापिभवेत्पितासौ ॥
॥ २० ॥ ऊर्द्ध्वंगतिःपुत्रवतांनिरुक्तामनीषिभिर्धर्मवतांवरिष्ठैः ॥ सर्वाणिभूतानितदर्थमेवमृतौप्रवर्ततिहठात्स्वभावतः ॥ २१ ॥ निरन्वय
स्यापिनसंतिलोकास्तदर्थमिच्छंतिसुतान्स्वभूम्ने ॥ क्रीतादयःसंतिसुतास्तथाष्टौइच्छामितस्मात्सुतमेकमेव ॥ २२ ॥ एतद्भवस्तद्वचनंनि
शम्यकृपाकरोदैत्यनृपस्यतुष्टः ॥ तमाहदैत्याधिपनास्तिपुत्रस्त्वद्वीर्यजःकिंतुददामिपुत्रम् ॥ २३ ॥ ममात्मजंत्वंधकनामधेयंत्वत्तुल्यवीर्यं
ह्यपराजितंच ॥ वृणीष्वपुत्रंसकलंविहायदुःखंप्रतीच्छस्वसुखंहिचेमम् ॥ २४ ॥ इत्येवमुक्त्वाप्रददौसतस्मैहिरण्यनेत्रायसुतंप्रसन्नः ॥ हरस्तुगौ
र्यासहितोमहात्माभूताधिनाथस्त्रिपुरारिरुग्रः ॥ २५ ॥ ततोहरात्प्राप्यसुतंसदैत्यःप्रदक्षिणीकृत्ययथाक्रमेण ॥ स्तोत्रैरनेकैरभिपूज्यरुद्रंहृष्टःस्वराज्यं

गतवान्महात्मा ॥ २६ ॥ ततस्तुपुत्रंगिरिशादवाप्यरसातलंचंडपराक्रमस्तु ॥ इमांधरित्रीमनयत्स्वदेशंदैत्योविजित्यत्रिदशानशेषान् ॥ २७ ॥ तत
स्तुदेवैर्मुनिभिश्चसर्वैःसर्वात्मकंयज्ञमयंकरालम् ॥ वाराहमाश्रित्यवपुःप्रधानमाराधितोविष्णुरनंतवीर्यः ॥२८॥ घोणाप्रहारैर्विविधैर्धरित्रींविदार्यपाताल
तलंप्रविश्य ॥ तुंडेनदैत्याञ्शतशोविचूर्ण्यदंष्ट्राभिरग्र्याभिरखंडिताभिः ॥ २९ ॥ पादप्रहारैरशनिप्रकाशैरुन्मथ्यसैन्यानिनिशाचराणाम् ॥ मार्तंड
कोटिप्रतिमेनपश्चात्सुदर्शनेनाऽद्भुतचंडतेजाः ॥ ३० ॥ हिरण्यनेत्रस्यशिरोज्वलंतंचिच्छेददैत्यांश्चददाहदुष्टान् ॥ ततःप्रहृष्टोदितिजेंद्रराज्येतमंधकंतत्र
सचाऽभ्यर्षिंचत् ॥ ३१ ॥ स्वस्थानमासाद्यततोधरित्रींदंष्ट्रांकुरेणादधरत्प्रहृष्टः॥भूमिंचपातालतलान्महात्मापुपोषभागंत्वथपूर्वकंतु ॥ ३२ ॥ प्रताप्य
लोकानखिलांस्ततोऽसौसमागतःपद्मयोनिंददर्श ॥ वरंप्रदातुंप्रवदंतमेववरंवृणीष्वेतिसमूढबुद्धिः ॥ ३३ ॥ मृत्योर्भयंमेभगवन्सदैवपितामहाऽभून्नकदा
चिदेवम् ॥ शस्त्रास्त्रपाशाशनि शुष्कवृक्षगिरींद्रतोयाग्निरिपुप्रहारैः ॥३४॥ स्वर्गेधरण्यांदिवसेनिशायांदैवाहतःप्राहनसोपिसंधौ ॥ तस्यैतदीदृग्वचनंनि
शम्यदैत्येंद्रतुष्टोऽस्मिलभस्वसर्वम् ॥३५॥ प्रणम्यविष्णुंमनसातमाहभयान्वितोसावपिपद्मयोनिः ॥ ततःसदैत्यःपरिपूर्णकामस्त्वमष्टकोव्यस्त्वथषण्ण
वत्यः ॥३६॥उत्तिष्ठराज्यंकुरुदानवानांश्रुत्वागिरंतांससुखीबभूव ॥ राज्येभिषिक्तःप्रपितामहेनत्रैलोक्यनाशायमतिंचकार॥३७॥उत्साद्यधर्मान्सकलान्प्र
मत्तोजित्वाहवेसोऽपिसुरान्समस्तान् ॥ततोभयार्दिद्रमुखाश्चदेवःक्षीरोदधौयत्रहरिस्तुशेते ॥३८॥ आराधयामासुरतीवगत्वाततस्तुहृष्टःप्रददौवरांस्तु ॥
उत्थायतस्माच्छयनादुपेंद्रोयथानुरूपैर्विविधैर्वचोभिः॥३९॥आश्वास्यदेवानखिलान्मुनींद्रारवींदुवैश्वानरतुल्यतेजाः॥ आश्रित्यरूपंजटिलंकरालंदंष्ट्रायु
धंतीक्ष्णनखंसुनासम्॥४०॥मृगेंद्रतुल्यंचविदारितास्यंमार्त्तंडकोटिप्रतिमंसुघोरम्॥युगांतकालाग्निसमप्रभावंजगन्मयंकिंबहुभिर्वचोभिः॥४१॥अस्तंरवौ
सोपिहिगच्छमानेगतोसुराणांनगरींमहात्मा॥कृत्वाचयुद्धंप्रबलैःसहायैर्हत्वाथतान्दैत्यगणान्ग्रहीतुम् ॥४२॥बभ्रामतत्राद्भुतविक्रमश्चभंजन्वनंतानसुरांश्च
सिंहः॥दृष्टःसदैत्यैरतुलप्रभावस्तंमेनिरेतेहितथैवसर्वे॥४३॥ सिंहंचतंसर्वमयंनिरीक्ष्यप्रह्लादनामादितिजेंद्रपुत्रः॥उवाचराजानमयंमृगेंद्रोजगन्मयःकिंचिद
लंरणेन॥ ४४॥ प्रपिष्टएषोभगवाननंतोनृसिंहमात्रोनगरंत्विदंते ॥ निवर्त्ययुद्धाच्छरणंप्रयाहिपश्यामिसिंहस्यकरालमूर्तिम् ॥४५॥ यस्मान्नयोद्धाभुवन
त्रयेऽपिकुरुष्वराज्यंत्वनमन्मृगेंद्रम् ॥ श्रुत्वासपुत्रस्यवचोदुरात्मासंगृह्यतांसिंहमिमंभवद्भिः ॥४६॥ तमाहभीतोऽसिकिमत्रचक्रेवीरैर्विरूपंभृकुटीमुखंतु॥
तस्याज्ञयादैत्यवरास्ततस्तेग्रहीतुकामाविविशुर्मृगेंद्रम्॥४७॥क्षणेनदग्धाःशलभाइवाग्निरूपाभिलाषात्प्रविविक्षवोवै ॥ दैत्येषुदग्धेष्वपिदैत्यराजश्चकार
युद्धंसमृगाधिपेन ॥ ४८ ॥ शस्त्रैःसमग्रैरखिलैस्तथास्त्रैःशक्त्यृष्टिपाशांकुशपावकाद्यैः ॥ संयुध्यतोरेवतयोर्जगामब्राह्मंदिनंशस्त्रनखास्त्रपाण्योः ॥ ४९॥

ततःसदैत्यःसहसाबहूंश्चकृत्वाभुजाञ्शस्त्रयुतान्निरीक्ष्य ॥ नृसिंहरूपंप्रययौमृगेंद्रंसंयुध्यमानंत्वहरत्समंतात् ॥ ५० ॥ ततःसयुद्धंत्वतिदुःसहंतुशस्त्रैःस
मस्तैश्चतथामहास्त्रैः ॥ क्षयंगतैःशूलधरोप्युपायात्ततोगृहीतःसमृगाधिपेन ॥ ५१ ॥ भुजैरनेकैर्गिरिसारवद्भिर्निधायकण्ठंसभुजांतरेषु ॥ नखांकुरैर्दार
णमर्मविद्भिर्नखास्त्रहृत्पद्ममसृग्विमिश्रम् ॥ ५२ ॥ उत्पाट्यजीवाद्विगतःक्षणेनत्यक्तस्तदानींसतुकाष्ठभूतः ॥ पादप्रहारैरतिताडितोऽसौपुनःपुनश्चूर्णित
सर्वगात्रः ॥ ५३ ॥ तस्मिन्हतेदेवरिपौप्रसन्नःप्रह्लादमामंत्र्यकृतप्रणामम् ॥ राज्येभिषिच्याऽद्भुतवीर्यविष्णुस्ततःप्रयातोगतिमप्रतर्क्याम् ॥ ५४ ॥
ततोहिरण्याक्षसुतःकदाचित्संश्रावितोनर्मयुतंकदाचित् ॥ तैर्भ्रातृभिःसंप्रयुतोविहारेकिमंधराज्येनतवाऽद्यकार्यम् ॥ ५५ ॥ हिरण्यनेत्रस्तुबभूवमूढः
कलिप्रियंनेत्रविहीनमेव ॥ योलब्धवांस्त्वांविकृतंविरूपांघोरैस्तपोभिर्गिरिशंप्रसाद्य ॥ ५६ ॥ सत्वंनभागीदितिराजराज्ञःकिमन्यजातोपिलभेतराज्यम् ॥
तेषांतुवाक्यानिनिशम्यतानिनिवार्यबुद्ध्यास्वयमेवदीनः ॥ ५७ ॥ तांशांतयित्वाविविधैर्वचोभिर्गतस्त्वरण्यंनिशिनिर्जनंतु ॥ वर्षायुतंतत्रतपश्चकार
जजापजप्यंविधृतैकपादः ॥ ५८ ॥ आहारहीनोनियतोर्ध्वबाहुःकर्तुंनशक्यंहिसुरासुरैर्यत् ॥ प्रज्वाल्यवह्निंप्रजुहोतिमात्रंसमांसरक्तस्यचवर्षमात्रम् ॥
॥ ५९ ॥ तीक्ष्णेनशस्त्रेणनिकृत्तदेहात्समंत्रकंप्रत्यहमेवहुत्वा॥स्नाय्वस्थिशेषंकुणपंतदासौक्षयंगतंशोणितमेवसर्वम् ॥ ६० ॥ यदास्यमांसानिनसंतिदेहे
प्रक्षेप्तुकामस्तुहुताशनाय ॥ ततःसदृष्टस्त्रिदशालयैर्जनैर्निवारितोवाक्यशतैर्नयोक्तैः ॥ ६१ ॥ निवारयित्वाप्रपितामहस्तंप्रोवाचहृद्यंप्रवरंवृणीष्व ॥
यच्छामिकामांस्तवसर्वलोकेसुदुर्लभान्दानवतान्गृहाण ॥ ६२ ॥ सपद्मयोनेस्तुवचोनिशम्यप्रोवाचदीनःप्रणतस्तुदैत्यः ॥ यैर्निष्ठुरैर्मेपहृतंतुराज्यंप्र
ह्लादमुख्याममसंतुभृत्याः ॥ ६३ ॥ अंधस्यदिव्यंहितथास्तुचक्षुरिंद्रादयस्तेकरदाभवंतु ॥ मृत्युस्तुमाभून्ममदेवदैत्यगंधर्वयक्षोरगमानुषेभ्यः ॥ ६४ ॥
नारायणाद्वादितिजेंद्रशत्रोःसर्वात्मकात्सर्वमयाच्चसर्वः ॥ श्रुत्वावचस्तस्यसुदारुणंतत्सुशंकितःपद्मभवस्तमाह ॥ ६५ ॥ दैत्येंद्रसर्वंभवितातदेतद्विनाश
हेतुंचगृहाणकिंचित् ॥ यस्मान्नजातोनजनिष्यतेवायोनप्रविष्टोमुखमंतकस्य ॥ ६६ ॥ अत्यंतदीर्घंखलुजीवितंतुभवादृशाःसत्पुरुषास्त्यजंति ॥ एतद्वचःसा
नुनयंनिशम्यपितामहात्प्राहपुनःसदैत्यः ॥ ६७ ॥ कालत्रयेयाश्चभवंतिनार्यःश्रेष्ठाश्चमध्याश्चतथाकनीयाः ॥ तासांमध्येरत्नभूतातुयास्यान्ममापिनित्यंजननी
वकाचित् ॥ ६८ ॥ कायेनवाचामनसाप्यगम्यानारीनृलोकस्यचदुर्लभाच ॥ तांकामयानस्यममास्तुनाशोदैत्येंद्रभावाद्भगवन्त्स्वयंभूः ॥ ६९ ॥ वाक्यंतदाक
र्ण्यसपद्मयोनिःसुविस्मितःप्राहततोंधकस्य ॥ यत्कांक्षसेदैत्यवरास्तुतेवैसर्वंभवत्येषवचःसकामः ॥ ७० ॥ उत्तिष्ठदैत्येंद्रलभस्वकामंसदैववरिस्तुकुरुष्वयु
द्धम् ॥ श्रुत्वातदेहृग्वचनंसदैत्यःस्नाय्वस्थिशेषस्तुतमाहदेवम् ॥ ७१ ॥ कथंविभोवैरिबलंप्रविश्यह्यनेनदेहेनकरोमियुद्धम् ॥ स्नाय्वस्थिशेषंगुणमांसपुष्टंकरे

णपुण्येनभवेद्यथामे॥७२॥श्रुत्वावचस्तस्यचपंङ्कयोनिःकरेणसंस्पृश्यचतच्छरीरम्॥गतःसुरेंद्रैःसहितःस्वधामसंपूज्यमानोमुनिसिद्धसंघैः ॥ ७३ ॥ संस्पृष्टमात्रःसचदैत्यराजःसंपूर्णदेहोबलवान्बभूव ॥ संजातनेत्रःसुभगोबभूवहृष्टःस्वमेवंनगरंविवेश॥७४॥उत्सृज्यराज्यंसकलंचतस्मैप्रह्लादमुख्यास्त्वथदानवेंद्राः ॥ तमागतंलब्धवरंचगत्वाभृत्याबभूवुर्वशगाश्चतस्य ॥ ७५ ॥ ततोंधकःस्वर्गमगाद्विजेतुंसमाधियुक्तःसहभृत्यवर्गैः ॥ यत्राखिलेतत्रसुरान्समस्तान्करप्रदंवज्रधरंचकार ॥ ७६ ॥ नागान्सुपर्णान्वरराक्षसांश्चगंधर्वयक्षानपिमानुषांस्तु ॥ गिरींद्रवृक्षांस्तृणजातिसर्वांश्चतुष्पदान्सिंहमुखान्विजित्य ॥ ७७ ॥ त्रैलोक्यमेतद्विचराचरंवैवश्यंचकारात्मनिसंनियोज्य ॥ ततोऽनुकूलानिसुदर्शनानिनारीसहस्राणिबहूनिहृत्वा ॥ ७८ ॥ रसातलाद्धृत्यतथाधरायास्त्रिविष्टपाद्याःसुवशाःसुरूपाः ॥ ताभिर्युतोग्रेषुसपर्वतेषुरराामरम्येषुनदीतटेषु ॥ ७९ ॥ क्रीडायमानःसतुमध्यवर्तीतासांप्रहर्षादथदानवेन्द्रः ॥ तत्पीतशिष्टानिपिबन्प्रमत्तोदिव्यानिपेयानिसुमानुषाणि ॥ ८० ॥ अन्यानिदिव्यानितुषड्रसानिफलानिमूलानिसुगंधवंति ॥ संप्राप्ययानानिसुवाहनानिमयेनसृष्टानिगृहोत्तमानि ॥ ८१ ॥ पुष्पार्घधूपान्नविलेपनैश्चसुशोभितान्यद्भुतदर्शनैश्च ॥ संक्रीडमानस्यगतानितस्यवर्षायुतानीहतथांऽधकस्य ॥ ८२ ॥ जानातिकिंचिन्नशुभंपरत्रयदात्मनःसौख्यकरंभवेद्धि ॥ ततःप्रमत्तस्तुसुतान्प्रधानान्कुतर्कवादैरभिभूयसर्वान् ॥ ८३ ॥ चचारदैत्यःसहितोमहात्माविनाशयन्वैदिकसर्वधर्मान् ॥ वेदद्विजान्वित्तमदाभिभूतोनमन्यतेसोऽप्यमरान्गुरूंश्च ॥ ८४ ॥ नमन्यतेदैवहतोगतायुःस्वल्पैरहोभिर्गमयन्वयश्च ॥ ततःकदाचिद्गतवान्ससैन्योबहुप्रयातापृथिवीतलेऽस्मिन् ॥ ८५ ॥ अनेकसंख्याअपिवर्षकोटचःप्रहर्षितोमंदरपर्वतंतु ॥ स्वर्गोपमांतत्रनिरीक्ष्यशोभांबभ्रामसैन्यैःसहपानमत्तः ॥ ८६ ॥ क्रीडार्थमासाद्यचतंगिरींद्रंमतिंसवासायचकारमोहात् ॥ शुभंदृढंतत्रपुरंसकृत्वातत्रास्थितोदैत्यपतिःकदाचित् ॥ ८७ ॥ निवेशयामासपुनःक्रमेणअत्यद्भुतेमंदरशैलसानौ ॥ दुर्योधनौवैघसहस्तिसंज्ञौतन्मंत्रिणौदानवसत्तमस्य ॥ ८८ ॥ नारींसुरूपांददृशुस्त्रयोपितेशीघ्रगादैत्यवरंसमेत्य ॥ ऊचुर्यथादृष्टमतीवसर्वंगुहांतरेध्याननिमीलिताक्षः ॥ ८९ ॥ दैत्येंद्रकश्चिन्मुनिरत्रदृष्टोरूपान्वितश्चन्द्रकलार्धजूटः ॥ कटिस्थलव्याघ्रकृत्तिर्युवाऽसौनागेंद्रभोगावृतसर्वगात्रः ॥ ९० ॥ कपालमालाभरणोजटालःसशूलहस्तःशरतूणधारी ॥ महाधनुष्मान्विवृताक्षसूत्रःखड्गीत्रिशूलीलकुटीकपर्दी ॥ ९१ ॥ तस्यापिदूरेपुरुषश्चदृष्टःसवानरोघोरमुखःकरालः ॥ सर्वायुधःसूक्ष्मकरश्चरक्षन्स्थितोजरद्गोवृषभस्तुशुक्लः ॥ ९२ ॥ तस्योपविष्टस्यतपस्विनोपिसुचारुरूपातरुणीमनोज्ञा ॥ नारीशुभापार्श्वगताहितस्यदृष्टाचकाचिद्भुविरत्नभूता ॥ ९३ ॥ प्रवालमुक्तामणिहेमरत्नवस्त्रावृतामाल्यशुभोपगूढा ॥ सायेनदृष्टासचदृष्टिमान्स्याद्दृष्टेनचाऽन्येनकिमत्रकार्यम् ॥ ९४ ॥ मन्यामहेतस्यचादिव्यनारीभार्यामुनेःपुण्यमतःप्रियाच ॥

एतानिश्रुत्वातुवचांसितेषांकामत्वरावर्णितसर्वगात्रः ॥ ९५ ॥ विसर्जयामासमुनेःसकाशंदुर्योधनादीन्सहसाजजल्पुः ॥ आसाद्यतेतंमुनिमप्रमेयंयद्वैवृतं
तस्यचदैत्यराजः ॥ ९६ ॥ हिरण्यनेत्रस्यसुतोमहात्मातमाहकस्यासिइहोपविष्टः ॥ कस्येयमीदृक्तरुणीसुरूपानारीशुभादैत्यपतिंमुनीन्द्र ॥ ९७ ॥
क्वेदंशरीरंतवभस्मदिग्धंकपालमालाभरणंविरूपम् ॥ तूणीरसत्कार्मुकबाणखड्गभृशुंडिशूलाशनितोमराणि ॥ ९८ ॥ क्वजान्हवीपुण्यतमाजटाग्रेक्काऽयं
शशीवाकुणपास्थिखण्डम् ॥ विषानलोदीर्णमुखःक्वसर्पःक्वसंगमःपीनपयोधरायाः ॥ ९९ ॥ जरद्गवारोहणमप्रशस्तंक्षणेक्षणेतस्यनदर्शनञ्च ॥
संध्याप्रणामःक्वचिदेषधर्मःक्वभोजनंलोकविरुद्धमेतत् ॥ १०० ॥ प्रयच्छनारींममसांत्वपूर्वंसर्वंविरुद्धंकुरुषेविमूढ ॥ अयुक्तमेतत्त्वयिनानुरूपंयस्माद
हंरत्नपतिस्त्रिलोके ॥१०१॥ विमुंचशस्त्राणिमयाऽद्यचोक्तःकुरुष्वपश्चात्तपएवशुद्धम् ॥ उल्लंघ्यमच्छासनमप्रधृष्यंविमोक्ष्यसेसर्वमिदंशरीरम् ॥१०२ ॥
गत्वांऽधकंब्रूध्वमितिप्रधानःप्रोवाचदैत्यंस्मितपूर्वमेव ॥ आकर्ण्यसर्वंत्वथदूतवाक्यंयद्यास्तिरुद्रस्त्वथकिंमयास्यात् ॥ १०३ ॥ नाहंक्वचित्स्वंपितरंस्म
रामिगुहांतरेघोरमनन्यचीर्णम् ॥ एतद्व्रतंपाशुपतञ्चरामिनमातरंत्वज्ञतमोविरूपः ॥ १०४ ॥ अमूलमेतन्मयिसुप्रसिद्धंसुदुस्त्यजंसर्वमिदंममास्ति ॥
भार्याममेयंतरुणीसुरूपासर्वंसहासर्वगतस्यसिद्धिः ॥ १०५ ॥ एवंहियद्यदुचितंतवास्तिगृहाणतद्वैखलुराक्षसत्वम् ॥ गंभीरमेतद्वचनंनिशम्यतेदानवा
स्तंप्रणिपत्यमूर्ध्ना ॥ १०६ ॥ जग्मुस्ततोदैत्यवरस्यसूनुंत्रैलोक्यनाशायकृतप्रतिज्ञम् ॥ बभाषिरेदैत्यपतिंप्रमत्तंप्रणम्यराजानमदीनसत्वाः ॥ १०७॥
तेतत्रसर्वंजयशब्दपूर्वंरुद्रेणयत्तत्स्मितपूर्वमुक्तम् ॥ निशाचरश्चंचलशौर्यधैर्यःक्वदानवःकृपणःसत्वहीनः ॥ १०८ ॥ राजंस्त्वमुक्तोमुनिनाविहस्यक्रूरः
कृतघ्नश्चसदैवपापी ॥ क्वदानवःसूर्यसुताद्बिभेतिक्वमेभुजाःपर्वतराजसाराः ॥ १०९ ॥ क्वाऽहंचशस्त्राणिचदारुणानिमृत्योश्चसंत्रासकरंक्वयुद्धम् ॥ क्वची
रकोवानरवक्त्रतुल्योनिशाचरोजरसाजर्जरांगः ॥ ११० ॥ क्वेयंसुरूपाक्वचमंदभाग्योबलंत्वदीयंक्वचवीवधोवा ॥ शक्तोषिचेत्त्वंप्रयतस्वयुद्धंकर्तुंतदा
ह्येहिकुरुष्वकिञ्चित् ॥ १११ ॥ वज्राशनेस्तुल्यमिहास्तिशस्त्रंक्वतेशरीरंमृदुपद्मतुल्यम् ॥ इत्येवमादीनिवचांसिभद्रतपस्विनादानवसंयतेन॥ ११२ ॥
युक्तंनतेतेनसहाऽत्रयुद्धंत्वामाहराजन्स्मयमानएव ॥ किंवस्तुशून्यैर्बहुभिःप्रलापैरस्माभिरुक्तैर्यदिबुद्ध्यसेत्वम् ॥ ११३ ॥ तपोभियुक्तेनतपस्विनावै
स्मर्ताऽसिपश्चान्मुनिवाक्यमेतत् ॥ ततःसतेषांवचनंनिशम्यजज्वालरोषेणसमंदबुद्धिः ॥ ११४ ॥ आज्यावसिक्तइवकृष्णवर्त्मासत्यंहितेतत्कुटिलंसुती
क्ष्णम् ॥ गृहीतखड्गोवरदानमत्तःप्रचंडवातानुकृतीश्चकुर्वन् ॥ ११५ ॥ गतस्ततोमत्तगजेन्द्रगामीपीत्वासुरांघूर्णितलोचनश्च ॥ गुहामुखंप्राप्यददर्शदै
त्योगौरींत्रिलोकस्यचसारभूताम्॥११६॥शस्त्राणिहर्तुंवृषभध्वजस्यतौदंपतीगोवृषवीरकञ्च॥तांहर्तुकामःप्रविविक्षुरग्रेततोंऽधकःक्रोधसरागनेत्रः॥११७॥

निरीक्ष्यगौरींस्मरबाणविद्धोगुहांततोवीरकरुद्धमार्गाम् ॥ स्निग्धांयथादीपशिखांनिरीक्ष्यपतंगसंज्ञःक्रूमिरभ्युपेत्य ॥ ११८ ॥ तथादधावाशुपुनःपुनश्च संपीड्यमानोपिसवीरकेण ॥ पाषाणवृक्षाशनितोयवन्हिभुजंगशस्त्रास्त्रविभीषिकाभिः ॥ ११९ ॥ संपीडितोऽसौतुपुनःप्रपीड्यपृष्टश्चकस्त्वंकिमिहागतोसि ॥ निशम्यतद्वांस्वमतंसतस्मैचकारयुद्धंसहवीरकेण ॥ १२० ॥ मुहूर्तमाश्चर्यवदप्रमेयंसंख्येजितोवीरतरेणदैत्यः ॥ तस्मिंस्तुसंग्रामशिरोविहायक्षुत्क्षामकंठस्तृषितोगतोऽभूत् ॥ १२१ ॥ चूर्णीकृतेखड्गवरेचखिन्नेपलायमानेविघसादयस्ते ॥ चक्रुःसुयुद्धंसहवीरकेणप्राऱ्हादमुख्यादितिजप्रधानाः ॥ ॥ १२२ ॥ लब्धांकुशाकृष्टधियोबभूवुःसुदारुणंशस्त्रशतैरनेकैः ॥ विरोचनस्तत्रचकारयुद्धंबलिश्चबाणश्चसहस्रबाहुः ॥ १२३ ॥ भंजःसुभंजस्त्वथशंबरश्चवृत्रादयश्चाप्यथवीर्यवंतः ॥ तेयुद्ध्यमानाविजिताःसमंतात्क्षिप्रंहतावैगणवीरकेण ॥ १२४ ॥ संख्येहतानांबहुदानवानामुक्तंजयेत्येवहिसिद्धसंघैः ॥ भेरुण्डनृत्ताभिनयप्रवृत्तेमेदोवसामांससुपूतिमध्ये ॥ १२५ ॥ क्रव्यादसंघातसमाकुलेतुभयंकरेशोणितकर्दमेतु ॥ भग्नैस्तुदैत्यैर्भगवान्पिनाकीव्रतंमहापाशुपतंसुघोरम् ॥ १२६ ॥ प्रियेमयायत्कृतपूर्वमासीद्दाक्षायणींप्राहसुसांत्वयित्वा ॥ तस्मात्फलंयन्ममतत्प्रनष्टंमत्यैरमत्यस्ययतःप्रघातः ॥ ॥ १२७ ॥ पुण्यक्षयाद्विग्रहएवजातोदिवानिशंदेवितवप्रसंगात् ॥ उत्पाद्यदिव्यंपरमाद्भुतंतुपुनर्वनंघोरतरंचगत्वा ॥ १२८ ॥ तस्माद्व्रतंघोरतरंचरामिमहाव्रतंनामसुदारुणंयत् ॥ संरक्षितात्वंसुतवीरकेणगुहांतरेतिष्ठसुसंयताऽथ ॥ १२९ ॥ यावत्त्विहायामिव्रतंसुचीर्त्वासुनिर्भयासुंदरिवैविशोका ॥ एतावदुक्त्वावचनंमहात्माउत्पाद्यघोषंशनकैश्चचार ॥ १३० ॥ सतत्रगत्वाव्रतमुग्रदीप्तिर्गतोवनंपुण्यतमंसुघोरम् ॥ चर्तुह्यशक्यंतुसुरासुरैर्यत्तत्तादृशंवर्षसहस्रमात्रम् ॥ १३१ ॥ सापार्वतीमन्दरपर्वतस्थाप्रतीक्षमाणागमनंभवस्य ॥ पतिव्रताशीलगुणोपपन्नाएकाकिनीनित्यमथापिभीता ॥ ॥ १३२ ॥ गुहांतरेदुःखपराबभूवसंरक्षितासासुतवीरकेण ॥ ततःसदैत्योवरदानमत्तस्तैर्योधमुख्यैःसहितोगुहांतम् ॥ १३३ ॥ निर्भिन्नधैर्यःपुनराजगामशिलीमुखैर्भारसमुद्भवैश्च ॥ अत्यद्भुतंतत्रचकारयुद्धंतेषामृतेभोजनपानवेलाम् ॥ १३४ ॥ रात्रिंदिनंवर्षशतानिपंचक्रुद्धःससैन्यःसहवीरकेण ॥ खड्गैःसकुंतैःसहभिंदिपालैर्गदाभुशुंडीभिरथेषुकांडैः ॥ १३५ ॥ शिलीमुखैरर्द्धशशीभिरुग्रैर्वितस्तिभिःकूर्ममुखैर्ज्वलद्भिः ॥ नाराचमुख्यैर्निशितैश्चशूलैःपरश्वधैस्तोमरमुद्गरैश्च ॥ १३६ ॥ खुरैर्गुडैःपर्वतपादपैश्चदिव्यैरथास्त्रैरपिदैत्यसंघैः ॥ नन्दीविनिर्भिन्नतनुःपपातद्वारंगुहायाःपिहितंसमग्रम् ॥ १३७ ॥ तैरायुधैर्दैत्यभुजप्रयुक्तैर्गुहामुखेमूर्छितएवपश्चात् ॥ आच्छादितंवीरकशस्त्रजालैर्दैत्येषुसर्वेषुमुहूर्तमात्रम् ॥१३८॥ अपावृतंकर्त्तुमशक्यमासीन्निरीक्ष्यदेवीदितिजान्सुघोरान् ॥ भयेनसस्माराराफितामहंतुदेवीसखीभिःसहिताचविष्णुम्॥१३९॥सैन्यञ्चतद्वीरवरस्यसर्वंसंस्मारयामासगुहांतरस्था ॥ ब्रह्मातथासंस्मृत

मात्रएवस्त्रीरूपधारीभगवांश्चविष्णुः॥१४०॥इन्द्रश्चसर्वैःसहसैनिकैश्चस्त्रीरूपमास्थायसमागतास्ते ॥ भूत्वास्त्रियस्तेविविशुस्तदानींमुनीन्द्रसंघाश्चमहानु
भावाः॥१४१॥सिद्धाश्चनागास्त्वथगुह्यकाश्चगुहांतरंपर्वतराजपुत्र्याः॥यस्मात्सुराज्ञामनवस्थितानामंतःपुरेसंगमनंविरुद्धम् ॥१४२॥ ततःसहस्राणिनि
तंबिनीनामनंतसंख्यान्यपिदर्शयेयुः ॥ रूपाणिदिव्यानिमहाद्भुतानिगौर्यैगुहायांतुसवीरकायै ॥१४३॥ स्त्रियोऽथदृष्टागिरिराजकन्यागुहांतरंपूरितपूर्वमा
सीत्॥स्त्रीभिःशतैर्नादशतैरनेकैर्ननादकल्पांतसमेघघोषा॥१४४॥भेर्यश्चसंग्रामजयप्रदासुध्मातासुशंखासुनितंबिनीभिः॥मूर्छांविहायाद्भुतचंडवीर्यःसवीर
कोवैपुनरुत्थितस्तु ॥ १४५ ॥ प्रगृह्यशस्त्राणिमहारथानांतैरेवशस्त्रैर्दितिजाञ्जघान ॥ ब्राह्मीततोदंडहस्ताविरुद्धागुहांतरात्क्रोधपरीतचेताः ॥१४६॥
नारायणीशंखगदाब्जचक्रधनुर्धरापूरितबाहुदंडा ॥ विनिर्ययौलांगलखड्गहस्ताव्योमालिकाकांचनतुल्यवर्णा ॥१४७॥ धारासहस्राकुलमुग्रवेगंबैडौज
सीगृह्यकरेणवज्रम् ॥ सहस्रनेत्रायुधिसुस्थिराचसुदुर्जयादैत्यशतैरधृष्या ॥ १४८ ॥ वैश्वानरीशक्तिकरासुवक्त्रायाम्याचदंडोद्धृतपाणिरुग्रा ॥ सुतीक्ष्ण
खड्गोद्यतपाणिरध्यानैशाचरीनैर्ऋतचापघोरा ॥ १४९ ॥ तोयालिकावारुणचापहस्ताविनिर्गतायुद्धमभीप्समाना ॥ प्रचंडवातप्रभवाचदेवीक्षुब्धातत
स्त्वंकुशपाणिरेव ॥ १५० ॥ कल्पांतवह्निप्रतिमांगदांचपाणौगृहीत्वाधनदोद्भवाच ॥ याक्षेश्वरीतीक्ष्णमुखाविरूपानखायुधानागभयंकरीच ॥१५१ ॥
एतास्तथान्याःशतशोहिदेव्यःसुनिर्गताःसंकुलयुद्धभूमिम् ॥ दृष्ट्वाचतत्सैन्यमनंतपारंविवर्णवर्णाश्चसुविस्मिताश्च ॥ १५२ ॥ समाकुलाःसंचकिताभया
द्वैसेनापतिंवीरकंघोरवीर्यम् ॥ चक्रुर्महायुद्धमभूतपूर्वंनिधायबुद्धौदितिजाःप्रधानाः ॥ १५३ ॥ निवर्तनंमृत्युमथात्मनश्चनारीभिरंतर्वैरदीनसत्वाः ॥
अत्यद्भुतंतत्रचकारयुद्धंगौरीतदानींसहितासखीभिः ॥ १५४ ॥ कृत्वारणेचाऽद्भुतबुद्धिशौंडसेनापतिंवीरकंघोरवीर्यम् ॥ हिरण्यनेत्रात्मजएवभूयश्चक्रे
महाव्यूहमुदारकर्मा ॥१५५॥ संभावयिष्णुंचनिरीक्ष्ययाम्यांसुदारुणंतद्विलनामधेयम् ॥ मुखंकरालंविघसेवयस्यतस्मिन्कृतेभगवानाजगाम ॥१५६॥
कल्पांतघोरार्कसहस्रकांतिश्चीर्णव्रतेकुपितःकृत्तिवासाः ॥ गतेततोवर्षसहस्रमात्रेतमागतंप्रेक्ष्यमहेश्वरंच ॥ १५७ ॥ चक्रुर्महायुद्धमतिवमात्रंनार्यःप्रहृ
ष्टाःसहवीरकेण ॥ प्रणम्यगौरींगिरिशंचमूर्ध्नासंदर्शयन्भर्तुरतिवशौर्यम् ॥ १५८ ॥ गौरीचयुद्धंचचकारदृष्टाहरस्ततःपर्वतराजपुत्रीम् ॥ कंठेगृहीत्वातु
गुहांप्रविष्टौरामासहस्राणिविसर्जितानि ॥ १५९ ॥ गौरींचसंमानशतैःप्रपूज्यगुहामुखेवीरकएवतस्थौ ॥ ततःप्रहारैरपिजर्जरांगस्तस्मिन्रणेदैत्यवरेणदू
तः ॥ १६० ॥ जगादवाक्यंतुसगर्भमुग्रंप्रविश्यशंभुंप्रणिपत्यमूर्ध्ना ॥ संप्रेषितस्तांविघसोगुहांतुएषोंऽधकस्त्वामपिचाद्यवाक्यम् ॥ १६१ ॥ नार्याच
कार्यंतवकिंचिदस्तिविमुंचनारींतरुणींसुरूपाम् ॥ प्रयोक्तवांस्तापसतज्जुषस्वक्रांतंमयायत्कमनीयमात्रम् ॥ १६२ ॥ मुनिर्विरोद्धव्यइतिप्रचिंत्यन

त्वंमुनिस्तापसकिंतुशत्रुः ॥ अतीवदैत्येषुमहाविरोधीयुध्यस्ववध्योऽसिमयाप्रमथ्य ॥१६३॥ नेयामयातेललनानुरूपाएतद्वचोद्भूतमुखान्निशम्य ॥ कपा
लमालीतमुवाचकोपाज्ज्वलन्विषादेनमहांस्त्रिनेत्रः ॥१६४॥ व्यक्तंवचस्तद्भवतासमग्रंप्रोक्तंहितत्त्वेत्वरितःप्रयाहि ॥ यःस्यादशक्तोभुवितस्यकोऽर्थोदारै
र्धनैर्वासुमनोहरैश्च ॥ १६५ ॥आयांतुदैत्याश्चबलेनमत्ताविचार्यमेवंतुकृतंमयैतत् ॥ शरीरयात्रापिकुतस्त्वशक्तेःकुर्वंतुयद्यद्धिहितंतुतेषाम् ॥ १६६ ॥
ममापियद्यत्करणीयमस्तितत्तत्करिष्यामिनसंशयोऽत्र ॥ एतद्वचस्तद्दिवसोपियस्माच्छ्रुत्वाहरान्निर्गतएवहृष्टः ॥१६७॥ आगान्नदन्नार्जितहुंकृतानिकुर्व
न्गतोदैत्यपतेःसकाशम् ॥ तस्यैंगितज्ञश्चसदैत्यराजोगदांगृहीत्वात्वरितःससैन्यः ॥१६८॥कृत्वार्धसैंहंगिलनामधेयंसुदारुणंदेववरैरभेद्यम् ॥गुहामुखंप्राप्य
महेश्वरस्याबिभेदशस्त्रैरशनिप्रकाशैः ॥१६९॥अन्येततोवीरकमेवशस्त्रैरवाकिरन्नद्रिसुतामथाऽन्ये ॥ द्वारंहिकेचिद्रुचिरंबभंजुःपुष्पाणिसर्वाणिचनाशयेयुः
॥१७०॥ फलानिमूलानिजलंचहृद्यमुद्यानमार्गानपिखंडयेयुः ॥विलोडयेयुर्मुदिताश्चकेचिच्छृंगाणिशैलस्यचभानुमंति ॥१७१॥ततोहरःसंस्मृतवान्स्वसै
न्यंसमाह्वयत्कुपितःशूलपाणिः ॥ भूतानिचान्यानिसुदारुणानिदेवान्ससैन्यान्सहविष्णुमुख्यान् ॥१७२॥ आहूतमात्रास्तुगणाःससैन्यारथैर्ध्वजैर्वाजिवृ
षैश्चगोभिः ॥ उष्ट्रैःखरैःपक्षिवरैश्चसिंहैःसर्वेचदेवाःसहभूतसंघैः ॥ १७३ ॥ व्याघ्रैर्मृगैःशूकरशारभैश्चसमीनमत्स्यैःशिशुमारमुख्यैः ॥ अन्यैश्चनानाविध
जीवसंघैर्ग्रहैर्विशीर्णस्फुटितैःश्मशानैः ॥ १७४ ॥ भुजंगमैःप्रेतशतैःपिशाचैर्दिव्यैर्विमानैःकमलाकरैश्च ॥ नदीनदैःपर्वतवाहनैश्चसमागताःप्रांजलयः
प्रणम्य ॥ १७५ ॥ कपर्दिनंतस्थुरदीनसत्वाःसेनापतिंवीरकमेवकृत्वा ॥ विसर्जयामासरणायदेवान्विश्रांतवाहानथतत्पिनाकी ॥ १७६ ॥ युद्धंस्थिरं
लब्धजयंप्रधानंसंप्रेषितास्तेतुमहेश्वरेण ॥ चक्रुर्युगांतप्रतिमंचयुद्धंमर्यादहीनंत्वरितंगिलेन ॥ १७७ ॥ दैत्येंद्रसैन्येनसहैवघोरंक्रोधान्निगीर्णास्त्रिदशास्त्व
संख्याः ॥ तस्मिन्क्षणेयुध्यमानाश्चसर्वेब्रह्मेंद्रविष्णवर्कशशांकमुख्याः ॥ १७८ ॥ तथैवभूतानिगणैश्चसार्धंक्षुधान्वितेनाद्भुतविक्रमेण ॥दैत्येंद्रवाक्याद्दिवसे
नतेनसैन्येनिगीर्णेसतिवीरकस्तु ॥ १७९ ॥ विहायसंग्रामशिरोगुहांतांप्रविश्यसर्वंप्रणिपत्यमूर्ध्ना ॥ प्रोवाचदुःखाभिहतःस्मरारिंसवीरभद्रोविहितांजलिः
सन् ॥ १८० ॥ निगीर्णमेसैन्यंविघसादितिजेनाद्यभगवन्निगीर्णोऽसौविष्णुस्त्रिभुवनगुरुर्दैत्यदलनः ॥ निगीर्णौचंद्रार्कौकमलजमघोनौचवरदौनिगीर्णा
स्तेसर्वेयमवरुणवाताश्चघनदः ॥ १८१ ॥ स्थितोऽस्म्येकःप्रह्वःकिमिहकरणीयंभवतिमेअजेयोदैत्येंद्रःप्रमुदितमनादैत्यसहितः ॥ अजेयंत्वामायात्प्र
तिजवमनोमारुतगतिःस्वयंबुद्ध्याद्दृष्ट्वायदिहकरणीयंकुरुविभो ॥ १८२ ॥ नसामान्योदैत्योविघसदितिजस्त्वप्ययमसौस्वयंविष्णुर्देवःकनककशिपुं
कश्यपसुतम् ॥ नखैस्तीक्ष्णैर्भंक्तातदपिभगवान्रोषवशगःप्रवृत्तोवैविश्वंविघसितुमलंव्यात्तवदनः ॥ १८३ ॥ वसिष्ठाद्यैःशप्तोभुवनपतिभिःसप्तमुनिभि

स्तथाभूतोभूयस्त्वमितिसुचिरंदैत्यसहितः ॥ ततस्तेनोक्तास्तेप्रणयवचनैरात्मनिहितैःकदाशापात्तस्माद्भवतिममभोक्षोमुनिवराः ॥ १८४ ॥ यतः
क्रोधैरुक्तोविघसहरणाद्युद्धसमयेततोघोरैर्बाणैर्विदलितमुखोमुष्टिभिरलम् ॥ बदर्याख्यारण्येनरहरिमहापुण्यवसतौनिरस्ताभ्यांताभ्यांविगतकलुषोयास्य
सिपरम् ॥ १८५ ॥ ततस्तेषांवाक्यात्प्रतिदिनमसौदैत्यगिलनःक्षुधार्तःसंग्रामेभ्रमतिपुनरामोदमुदितः ॥ तमश्वेदंघोरंजगतिहितयोःसूर्यशनिनोस्तथा
शुक्रस्तुभ्यंपरमरिपुरत्यंतविधुरः ॥ १८६ ॥ हतान्देवैर्दैत्यान्पुनरमरविद्यास्तुतिपदैःसवीर्यान्संहृष्टान्व्रणशतवियुक्तान्प्रकुरुते ॥ वरंप्राणास्त्याज्या
स्तवतमनुसंग्रामसमयेभवान्यांनीतायांक्षणमपिवृतःकार्यकरणः ॥ १८७ ॥ इदानींसत्पुत्रात्प्रमथपतिराकर्ण्यकुपिताश्चिरंध्यात्वाचक्रेत्रिभुवनामिति
प्रागनुपमम् ॥ अगायत्सोमाख्यंदिनकरकराकारवपुषंप्रहासात्तन्नाम्नातदनुनिहतंतेनचतमः॥ १८८ ॥ प्रकाशेस्मिँल्लोकेपुनरपिमहायुद्धमकरोद्रणेदैत्यैः
सार्द्धंविकृतवदनैर्वीरकमुनिः ॥ शिलाचूर्णभुक्काप्रवरमुनिनायस्तुजनितस्तपःकृत्वातोयेयममपिपुरायश्चजितवान् ॥ १८९ ॥ ततोरुद्रःसद्यःसखलु
दितिजेनातिबलिनानिगर्णोसौनंदीनिशितशरशूलासिसहितः ॥ प्रधानोयोधानांमुनिवरशतानामपिमहान्निवासोविद्यानांशमदममहाधैर्यसहितः ॥
॥ १९० ॥ निरीक्ष्यैवंपश्चाज्जरद्वृषभमारुह्यभगवान्कपर्दीयुद्धार्थीविघसदितिजंसंमुखमुखः ॥ जपन्दिव्यंमन्त्रंनिगिलनविधातोद्गिलनकंस्थितःसज्जंकृ
त्वाधनुरशनिकल्पानपिशरान् ॥१९१॥ ततोनिष्क्रांतोऽसौविघसवदनावीरकमुनिर्गृहीत्वातत्सर्वंस्वबलमतुलंविष्णुसहिताः॥ तमुद्गीर्णाःसर्वेकमलजम
घोनेंदुदिनपाःप्रहृष्टंतत्सैन्यंपुनरपिमहायुद्धमकरोत् ॥ १९२ ॥ जितेतस्मिन्शुक्रस्तदनुदितिजान्युद्धनिहतान्यदाविद्याशौर्यात्पुनरपिसजीवान्प्रकुरु
ते ॥ तदाबध्वादत्तःपशुमिवगणैर्भूतपतयेनिगीर्णस्तेनासौत्रिपुररिपुणादानवगुरुः ॥ १९३ ॥ विनष्टेशुक्राख्येसुररिपुबलंदत्तदखिलंजितंध्वस्तंभग्नं
मृतमपिसुरैश्चापिदलितम् ॥ प्रभूतैर्भूतौघैर्दितिजकुणपग्रासरसिकैःसरुंडैर्नृत्यद्भिर्निशितशरशक्त्युद्धतकरैः ॥ १९४ ॥ प्रमत्तैर्वेतालैःसुदृढकरतुंडैरपि
खगैर्वृकैर्नानाभेदैःशवकुणपपूर्णस्यकवलैः ॥ विकीर्णेसंग्रामेकनककशिपोर्वंशजनकाश्चिरंयुद्धंकृत्वाहरिहरमघोनैश्चविजितः ॥ १९५ ॥ प्रविष्टःपाताले
गिरिजलधिरंध्राण्यपिभयात्ततःसैन्येक्षीणेदितिजवृषभस्त्वंधकवरः॥प्रकोपेदेवानांकदनमकरोद्वीरकबलेगदाघातैर्घोरैर्विदलिततनुश्चापिहरिणा ॥१९६॥
नधैर्यात्संग्रामंत्यजतिवरलब्धःकिलयतस्तदाकाण्डैर्घोरैस्त्रिदशपतिनापीडिततनुः ॥ ततःशस्त्रास्त्रौघैस्तरुगिरिजलैस्तांश्चविबुधाञ्जिगायोच्चैर्गर्जन्प्रमथ
पतिमाहूयशनकैः ॥ १९७ ॥ स्थितोयुद्धंकुर्वन्रणपतितशस्त्रैर्बहुविधैःपरिक्षीणैःसर्वैस्तदनुगिरिजांरुद्रमहनत् ॥ तथावृक्षैःसर्पैरशनिनिवहैरग्निजलदै
र्विरूपैर्मायाभिःकपटरचनाशंबरशतैः ॥ १९८ ॥ विजित्वाशैलेंद्रंकुहकमपरंतत्रकृतवान्महासत्त्वोवीरस्त्रिपुररिपुतुल्यश्चमतिमान् ॥ अवध्योदेवानांवर

शतमहोन्मादविवशःप्रभूतैःशस्त्रास्त्रैःसपदिदितिजोजर्जरतनुः ॥ १९९ ॥ स्वदेहाद्विष्पन्दैःक्षितितलगतैरंधकगणैरसंख्यातंघोरंविकृतवदनंस्वात्मसदृश
म् ॥ स्फुरत्कल्पांताग्निप्रतिमवपुषाभूतपतिनांत्रिशूलेनोद्भिन्नास्त्रिपुररिपुणादारुणतरम् ॥ २०० ॥ यदासैन्यात्सैन्यंपशुपतिहतादन्यदभवद्रणोत्थैरत्यु
ष्णैःपिशितनिसृतैर्विंदुभिरलम् ॥ तदाविष्णुर्योगात्प्रमथपतिमाहूयमतिमांश्चकारोग्रंरूपंविकृतवदनंस्त्रैणमाजितम् ॥ २०१ ॥ करालंसंशुष्कंबहुभुजल
ताक्रांतककुभंद्विनेत्रंत्वाकीर्णंभुजगवदनैर्लोमनिवहैः ॥ सताभ्यांसर्पाभ्यांविषदहनपुंजौघमसृजच्छरव्योमाकारंतदनुकुपितोदक्षिणभवात् ॥ २०२ ॥
विनिष्क्रांताकर्णाद्रणशिरसिशंभोर्भगवतःसंग्रामस्थादेवीचरणयुगलालंकृतमही ॥ स्तुतादेवैःसर्वैस्तदनुभगवत्प्रेरितमतिःक्षुधार्तातत्सैन्यंदितिजानिसृतं
तच्चरुधिरम् ॥ २०३ ॥ जघासानुन्नंतद्रणाशेरसिसत्कर्दममलंततस्त्वेकोदैत्यस्तदपियुयुधेशुष्करुधिरः ॥ तलाघातैर्घोरैरशनिसदृशैर्जानुचरणैर्नखैर्व
ज्राकारैर्मुखभुजशिरोभिश्चगिरिशम् ॥ २०४ ॥ स्मरन्क्षात्रंधर्मंस्वकुलविहितंशाश्वतमजंरणेशांतःपश्चात्प्रमथपतिनाभिन्नहृदयः ॥ त्रिशूलेसंप्रोतोनभ
सिविधृतश्छत्रसदृशोअधःकायःशुष्कस्तपनकिरणैर्जीर्णतनुमान् ॥ २०५ ॥ जलासारैर्मेघैःपवनसहितैःक्लेदितवपुर्विशीर्णस्तिग्मांशुस्तुहिनसकलाका
रशकलः ॥ तथाभूतःप्राणांस्तदपिनजहौदैत्यवृषभस्तयोर्युद्धस्यांतेभुवनपतयोजग्मुरमराः ॥ २०६ ॥ स्तवैर्नानाभेदैःप्रमथपतिमभ्यर्च्यविधिवद्गताः
स्वंस्वंधामत्रिदशपतयःप्रीतमनसः ॥ हरःस्वीयैःसार्द्धंगिरिवरगुहायांप्रमुदितोविसृज्यैकोवंशान्विविधबलिभिःपूज्यसुभगः ॥२०७॥ चकाराम्यांक्रीडांगि
रिवरसुतांप्राप्यमुदितांतथापुत्रंघोराद्विघसवदनान्मुक्तमनघम् ॥ २०८ ॥ इति श्रीशैवेमहापुराणेधर्मसंहितायामंधकवधोनामचतुर्थोऽध्यायः ॥ ४ ॥
सूतउवाच ॥ इतिहासमितिश्रुत्वापुनस्तेपरमर्षयः ॥ व्यासंपरमसंहृष्टाःपप्रच्छुर्मुनिसत्तमम् ॥ १ ॥ मुनयऊचुः ॥ तस्मिन्महतिसंग्रामेदारुणेलोमहर्ष
णे ॥ शुक्रोदैत्यपतिर्विद्वान्भक्षितस्त्रिपुरारिणा ॥ २ ॥ कल्पांतदहनःकालेजठरस्थःपिनाकिनः ॥ किंचकारमहायोगीरुद्रस्यजठरानलः ॥ ३ ॥ तप
स्यंतंतुतंभूयोभार्गवंदीप्ततेजसम् ॥ नददाहकथंशुक्रंशंभोर्जठरपंजरात् ॥ ४ ॥ विनिष्क्रांतःपुनर्धीमान्भगवंतमुमापतिम् ॥ कथमाराधयामासकिय
त्कालंसभार्गवः ॥ ५ ॥ लेभेंऽधकोगाणपत्यंकथंशूलाद्विनिर्गतः ॥ एतत्सर्वमशेषेणशृण्वतांकथयस्वनः ॥ ६ ॥ भगवान्कालिकापुत्रोयाथातथ्यमुवाच
सः ॥ तेषामेतद्वचःश्रुत्वासत्रेपारीक्षितस्यतु ॥ ७ ॥ व्यासउवाच ॥ तस्मिन्महतिसंग्रामेतुषारशशिशीतलाम् ॥ भार्गवोवारुणींविभ्रद्भक्षितस्त्रिपुरारि
णा ॥ ८ ॥ महामृत्युप्रशमनींसर्वसिद्धिप्रदांशिवाम् ॥ शृणुमृत्युंजयांविद्यांपारंपर्यक्रमागताम् ॥ ९ ॥ ओंनमस्तेदेवेशायसुरासुरनमस्कृतायभूतभव्य
महादेवाय हरिपिंगललोचनायबलायबुद्धिरूपिणेवैयाघ्रवसनच्छदायारणेयायत्रैलोक्यप्रभवईश्वराय ॥ १० ॥हरायहरितनेत्राययुगांतकरणायानलायग

णेशायलोकशंभवेलोकपालायमहाभुजायमहाहस्तायशूलिनेमहादंष्ट्रिणे २० महेश्वरायकालायकालरूपिणेनीलग्रीवायमहोदरायगणाध्यक्षायसर्वात्म
नेसर्वभावनायसर्वगाय ३० मृत्यवेमृत्युदूतायपारियात्रसुव्रतायब्रह्मचारिणेवेदांतगायपशुपतयेऽव्ययायशूलपाणिनेवृषकेतवेहरयेजटिने ४० मुंडिने
शिखंडिनेलकुटिनेमहायशसेभूतेश्वरायगुहावासिनेवीणापणवतूणवतेऽमरायदर्शनीयायबालसूर्यनिभाय ५० श्मशानचारिणेभगवतेउमापतयेअरिंदमा
यभगस्याक्षिपातिनेपूष्णोदशननाशनायक्रूरकर्त्रेपाशहस्तायप्रलयकालायोल्कामुखाया ६० ऽग्निकेतवेमुनयेदीप्तायविशांपतयेउन्मदायवेपनकायच
तुर्थकायलोकसत्तमायवामनायवामदेवाय ७० वाग्दाक्षिण्यायवामतोभिक्षवेभिक्षुरूपिणेजटिनेस्वयंजटिलायशक्रहस्तप्रतिष्टंभकायवसूनांस्तंभका
यक्रतवेक्रतुकारायकालायमेधाविने ८० मधुकरायाचलायवानस्पत्यायवाजसनेनित्यमाश्रमपूजितायजगद्धात्रेजगत्कर्त्रेपुरुषायशाश्वतायध्रुवाय ९०
धर्माध्यक्षायत्रिवर्त्मनेभूतभावनायत्रिनेत्रायबहुरूपायसूर्यायुतसमप्रभायदेवायदेवातिदेवायचंद्रांकितजटायनर्तकाय १०० लाजकायपूर्णेंदुसदृशान
नायब्रह्मण्यायशरण्यायसर्वदेवमयायसर्वतूर्यनिनादिनेसर्वबंधमोचनायबंधनायसर्पधारिणेधर्मोत्तमाय ११० पुष्पदंतायाऽविभागायमुख्यायसर्वहराय
हिरण्यश्रवसेद्वारिणेभीमायभीमपराक्रमाय ११८ ओंनमोनमः ॥ १० ॥ व्यासउवाच ॥ इमंमंत्रवरंजप्त्वाशुक्रोजठरपंजरात् ॥ निष्क्रांतोलिंग
मार्गेणशंभोःशुक्रमिवोत्कटम् ॥ ११ ॥ गौर्यागृहीतःपुत्रार्थंततोविघ्नेश्वरःकृतः ॥ अक्षरश्चाऽमरःश्रीमान्द्वितीयइवशंकरः ॥ १२ ॥ त्रिभिर्वर्षसहस्रैस्तुस
मर्तोतैर्महीतले ॥ महेश्वरात्पुनर्जातःशुक्रोवेदनिधिर्मुनिः ॥ १३ ॥ व्यासउवाच ॥ ददर्शशूलेसंशुष्कंध्यायंतंपरमेश्वरम् ॥ अंधकंधैर्यसंपन्नंदानवंतं
तपस्विनम् ॥ १४ ॥ महादेवंविरूपाक्षंचंद्रार्धकृतशेखरम् ॥ अमृतंशाश्वतंस्थाणुंनीलकंठंपिनाकिनम् ॥ १५ ॥ वृषभाक्षंमहाज्ञेयं १० पुरुषंसर्वकामद
म् ॥ कामारिंकामदहनंकामरूपंकपर्दिनम् ॥ १६ ॥ विरूपंगिरिशंभीमंस्रग्विणं २० रक्तवाससम् ॥ योगिनंकालदहनंत्रिपुरघ्नंकपालिनम् ॥ १७ ॥ गूढव्रतं
गुप्तमंत्रंगंभीरंभावगोचरम् ॥ अणिमादिगुणाधारं ३० त्रिलोकैश्वर्यदायकम् ॥ १८ ॥ वीरंवीरहणंघोरंविरूपंमांसलंपटुम् ॥ महामांसंवसोन्मत्तंभैरवं ४०
परमेश्वरम् ॥ १९ ॥ त्रैलोक्यडामरं लुब्धंलुब्धकंयज्ञसूदनम् ॥ कृत्तिकानांसुतेरक्तमुन्मत्तंकृत्तिवाससम् ॥ २० ॥ गजकृत्तिपरीधानंक्षुब्धं ५० भुजगभूष
णम् ॥ दत्तालंबंचवेतालंघोरशाकिनिपूजितम् ॥ २१ ॥ अघोरंघोरदैत्यघ्नंघोरघोषंवनस्पतिम् ॥ भस्मांगंजटिलं ६० शुद्धंभेरुंडशतसेवितम् ॥ २२ ॥
भूतेश्वरंभूतनाथंपंचभूताश्रितंखगम् ॥ क्रोधिनंनिष्ठुरंचंडंचंडीशं ७० चंडिकाप्रियम् ॥ २३ ॥ चंडतुंडंगरुत्मंतंनिस्त्रिंशंशवभोजनम् ॥ लेलिहानंमहारौ
द्रंमृत्युंमृत्योरगोचरम् ॥ २४ ॥ मृत्योर्मृत्युं ८० महासेनंश्मशानारण्यवासिनम् ॥ रागंविरागंरागांधंवीतरागंशतार्चिषम् ॥ २५ ॥ सत्वंरजस्तमो ९०

धर्ममधर्मंवासवानुजम् ॥ सत्यंत्वसत्यंसद्रूपमसद्रूपमहेतुकम् ॥२६॥ अर्धनारीश्वरंभानुं१००भानुकोटिशतप्रभम् ॥ यज्ञंयज्ञपतिंरुद्रमीशानंवरदंशिवम्
१०८ ॥ २७ ॥ अष्टोत्तरशतंत्वेतन्मूर्तीनांपरमात्मनः ॥ शिवस्यदानवोध्यायन्मुक्तस्तस्मान्महाभयात् ॥ २८ ॥ दिव्येनाऽमृतवर्षेणसिंचितश्चकपर्दि
ना ॥ तुष्टेनमोक्षितस्तस्माच्छूलाग्रादवरोपितः ॥ २९॥ उक्तश्चसांत्वपूर्वंयत्कृतंसर्वंमहात्मना ॥ ईश्वरउवाच ॥ भोभोस्तुष्टोऽस्मिदैत्येंद्रदमेनानियमेनच
॥ ३० ॥ शौर्येणतवधैर्येणवरंवरयसुव्रत ॥ आराधितस्त्वयानित्यंसर्वनिर्धूतकिल्बिषः ॥ ३१ ॥ वरदोऽहंवरार्हस्त्वंमहादैत्येंद्रसत्तम ॥ प्राणसंधारणाद
स्तियच्चपुण्यफलंतव॥३२॥ त्रिभिर्वर्षसहस्रैस्तुतेनास्तुतवनिर्वृतिः ॥ एतच्छ्रुत्वांऽधकःप्राहवेपमानःकृतांजलिः॥३३॥भूमौजानुद्वयंकृत्वाभगवंतमुमाप
तिम् ॥ भगवन्यद्यदुक्तोऽसिदीनोदीनपदाक्षरः ॥ ३४ ॥ हर्षगद्गदयावाचामयापूर्वंरणाजिरे ॥ यद्यत्कृतंविमूढत्वात्कर्मलोकेषुगर्हितम् ॥ ३५ ॥ अजा
नतात्वांतत्सर्वंकामदोषात्कृतंमया ॥ पार्वतींप्रतिदुष्टंयत्तत्तन्मनासिमाकृथाः ॥ ३६ ॥ दुःखितस्यदयाकार्याकृपणस्यविशेषतः ॥ दीनस्यभक्तियुक्त
स्यभवितानित्यमेवहि ॥ ३७ ॥ क्षम्यतांमेमहादेवकृपणोदुःखितोभृशम् ॥ सोऽहंदीनोभक्तियुक्तोरचितोयंमयांजलिः ॥ ३८ ॥ इयंदेवीजगन्मातापरि
तुष्टाममोपरि ॥ क्रोधंविहायसकलंप्रसन्नामांनिरीक्षतु ॥ ३९ ॥ क्वाऽस्याःक्रोधःक्वकृपणोदैत्योऽहंचंद्रशेखरः ॥ क्वभवान्परमोदारःकामेनविवशीकृतः ॥
॥ ४० ॥ कामक्रोधादिभिर्दोषैर्जरसामृत्युनातथा ॥ अयंतेवीरकःपुत्रोयुद्धशौंडोमहाबलः ॥४१॥ कृपणंमांसमालक्ष्यमामन्युवशमन्वगाः ॥ भवेयंमापु
नर्देविनिर्लज्जोधर्मवर्जितः ॥४२ ॥ स्यामहंवीरकेणापितुल्यस्तेवल्लभःसुतः॥ तुषारहारशीतांशुशंखकुंदेंदुवर्णभाक् ॥ ४३ ॥ पश्येयंपार्वतींनित्यंमातरं
गुरुगौरवात् ॥ नित्यंभवद्व्यांभक्तस्तुनिर्वैरोदैवतैःसह ॥ ४४ ॥ निवसेयंगणैःसार्धंशांतात्मायोगचिंतकः ॥ मास्मरेयंपुनर्जातिंविरुद्धांदानवोद्भवाम् ॥
॥ ४५ ॥ एतावदुक्त्वावचनंदैत्येंद्रोमौनमास्थितः ॥ ध्यायंस्त्रिलोचनंदेवंपार्वतींप्रेक्ष्यमातरम् ॥ ४६ ॥ ततोदृष्टस्तुरुद्रेणप्रसन्नेनैवचक्षुषा ॥ स्मृतवान्पू
र्ववृत्तांतमात्मनोजन्मचाऽद्भुतम् ॥ ४७ ॥ तस्मिन्स्मृतेचवृत्तांतेततःपूर्णमनोरथः ॥ प्रणम्यमातापितरौकृतकृत्योऽभवत्ततः ॥ ४८ ॥ पार्वत्यामूर्ध्नु
पाघ्रातःशंकरेणचधीमता ॥ यथाभिलषितंलेभेतुष्टाद्बालेंदुशेखरात् ॥४९॥ एतद्वःसर्वमाख्यातमंधकस्यपुरातनम् ॥ मृत्युंजयंचकथितंमंत्रंमृत्युविना
शनम् ॥ पठितव्यंप्रयत्नेनसर्वकामफलप्रदम् ॥ ५० ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायामंधकवधोनामपंचमोऽध्यायः॥ ५ ॥ मुनयऊचुः ॥ पति
व्रतानित्यमशेषधात्रीसत्यव्रतासापितपोन्विताच ॥ किमात्मनोरक्षयितुंह्यशक्तागौरींपरंपालयतिस्वयंभूः ॥ १ ॥ आचक्ष्वसर्वंस्वमनोमतंतत्काली
सतीगौरवतांप्रपन्ना ॥ प्रभावमस्याःश्रुतएवयत्नाल्लिंगंयथापूज्यतमंहिशंभोः ॥ २ ॥ सूतउवाच ॥ यस्माच्चयेनचयदाचयथाचयच्चयावच्चयत्रचशुभा

शुभमात्मकर्म ॥ तस्माच्चतेनचतदाचतथाचतच्चतावच्चतत्रचकृतांतवशादुपैति ॥ ३ ॥ सुचारुरूपांस्तनभारनम्रांसुरूपिणींमत्तगजेंद्रयानाम् ॥ दाक्षा
यणींचंद्रमुखींनिरीक्ष्यरुरुःकदाचिन्मलयेकृतघ्नः ॥ ४ ॥ दैत्यस्ततोमारशिलीमुखैस्तुप्रतप्तगात्रोऽभिहतांतरात्मा ॥ वर्षायुतंसूर्यमरीचिकोटिनिर्भिन्न
मर्मातपएवचक्रे॥५॥पाषाणभूतश्चमुनिश्चयेनआहारहीनोममताविहीनः ॥ ततःकदाचित्तमुवाचदेवःपद्मोद्भवःपद्मपलाशकांतिः॥६॥किमर्थमेतत्तपआ
श्रितंतेदैत्येंद्रघोरंकथयस्वसर्वम् ॥निशम्यतत्तद्वचनंहितस्यदैत्योऽब्रवीद्ध्याननिमीलिताक्षः॥७॥दाक्षायणीमेभवतुप्रहृष्टाभार्याभवोवैहिममास्तुवश्यः॥
मामेस्तुमृत्यूरुषितात्तुदेवात्स्त्रीणांसकाशाद्विभियांनजातु॥८॥मुग्धाःस्त्रियस्त्वबलाःस्थैर्यधैर्याःपराक्रमेशौर्यसुवीर्यहीनाः ॥ एवंरुरोर्वाचमिमांनिशम्यस
जातहासोभगवानुवाच॥९॥नैतत्स्त्वयंत्रिषुलोकेषुदैत्यसुदुर्लभाशंकरेणापिनित्यम्॥जगन्मातापार्वतीलोकपूज्याकालत्रयेकुत्राचिदप्यनार्या॥१०॥ सुसंप्रा
प्याचेत्साभविष्यत्सुशंभोर्नशंकरोऽन्यांललनांगमिष्यन् ॥नजाह्नवींशिरसाधारयिष्यन्नचेंदुलेखामथवापिसंध्याम् ॥ ११॥नानाश्रितश्चाटुशतैरनेकैर्नाराध
यिष्यन्विविधैरुपायैः ॥ तस्मादलंगच्छवराप्सरोभिःक्रीडांचचेज्जीवितुंतेमनोज्ञम्॥१२॥गच्छाऽथवापार्वतींपश्यदेवींतांप्रार्थयानस्तुयथेहकश्चित् ॥ तत्रै
ववास्थीयतांकालरात्रिंकपर्दिनंवात्रिपुरारिमुग्रम् ॥१३॥एतावदुक्त्वावचनंमहात्माप्रजापतिर्व्योमचरोबभूव॥सदानवेंद्रोऽपिगतोऽथशंभौचक्रेरुरुस्तत्रतपः
सुरौद्रम् ॥ १४ ॥ तपोग्निनातन्मलयंददाहदंदह्यमानोभगवान्पिनाकी ॥ गतोऽन्यदेशंतरसासदारोभयात्तपोग्नेःपरतःपरंतु ॥ १५ ॥ गौरीपतिंप्राहप
लायसेकिंनिवार्यतांवह्निरयंप्रभुत्वात् ॥ अगादगंयासिभयात्किमर्थंप्रब्रूहिसत्यंवचनंतथोक्तः ॥१६ ॥ निशम्यगामीदृशमिंदुमौलिस्तस्याःसतामाहशृणु
प्रियेवै ॥ त्वांप्रार्थयानोरुरुरेषदैत्यस्तपश्चचारोग्रमतिस्तुतेन ॥ १७ ॥ त्रैलोक्यमेतत्सचराचरंवैनिर्दग्धुमीष्टेतपसापरेण ॥ नाहंसमर्थस्त्वयितत्कुरु
ष्वयच्छक्यसेयत्नमतोद्यकिंचित् ॥ १८ ॥ एषोंऽजलिःशीलधनेमयातेत्रैलोक्यमेतत्सचराचरंच ॥ रक्षस्वमात्मानमिहोपयस्यक्षमस्वमन्युंमयिमाकृ
थास्त्वम् ॥१९ ॥ तंतापसंगच्छरुरुंवनस्थंविमोहयंतीतमपीहशक्त्या ॥ तत्तादृशंसावचनंनिशम्यशंभोस्तुगौरीचकितातदाभूत् ॥ २० ॥ क्रुद्धाततः
सापिवनंजगामविंध्याचलेनागमहेंद्रकल्पम् ॥ संयुध्यमानंगुरुमुष्टिघातैस्तच्चर्मणावेष्टितगात्रयष्टिः ॥ २१ ॥ गजेंद्ररक्तेनतुलिप्तगात्रंददर्शसिंहंसुविदा
रितास्यम् ॥ सालीलयातंनिजघानघोरंतच्चर्मणाछिन्नकटिस्थलाच ॥ २२ ॥ रक्तेनसिंहस्यचसिक्तकेशीलंबोदरीवैकृतिकाबभूव ॥ प्रचंडहुंकारशता
न्निकृत्वाप्राप्तागुहांदानवसत्तमस्य ॥ २३ ॥ पादप्रहारैरथमुष्टिघातैर्हत्वाकपाटार्गलमेवतस्य ॥ कृत्वाट्टहासंप्रलयाभ्रघोषाउवाचतंमीलितलोच
नंतु ॥ २४ ॥ प्राप्ताऽस्मियद्यत्करणीयमस्तिएषास्मिगौरीतवकिंकरोमि ॥ अलंमहादैत्यतवश्रमेणआचक्ष्वसर्वमनसेप्सितंते ॥ २५ ॥ दैत्येंद्रकिं

त्वंतपसाकृतेनतत्तत्कुरुष्वाद्यमनोरथंतु ॥ दंष्ट्राकरालामथतांसदृष्ट्वासंहृष्टरोमापतितोधरण्याम् ॥ २६ ॥ धैर्यंगृहीत्वाप्यथतामुवाचगौरीचतत्त्वंव्रज कालरात्रि ॥ गौरीसुगात्राशशिपूर्णवक्त्रासुचारुरूपास्तनभारनम्रा ॥ २७ ॥ तपोग्निनाहंतपरंपरेणत्रैलोक्यमेतत्प्रदहामिगच्छ ॥ नगच्छसेवानिहताम यात्वंगमिष्यसेप्रेतपतेःसकाशम् ॥ २८ ॥ एतावदुक्त्वागदयाजघानतांयोगसिद्धांगिरिराजपुत्रीम् ॥ तयाचमुष्ट्यानिहतःसदैत्यःशस्त्रास्त्रसंघैरपिसाचतेन ॥ २९ ॥ पाषाणवर्षैश्चतयासदैत्योवृक्षैरनेकैर्गिरिभिस्तथैव ॥ जलाग्निवर्षैर्विविधैरनेकैःसर्पैर्महाघोरविषैर्वमद्भिः ॥ ३० ॥ दंतैर्नखैर्भक्षितक्रूरकर्मामायां चकाराथसुदुर्निवार्याम् ॥ सुशोणितस्रावसमुद्भवांश्चश्रीवीर्यतुल्यांस्तुरुरून्ससर्ज ॥३१॥ अनंतरूपान्मलिनोविरूपान्करालदंष्ट्रानतुलप्रभावान् ॥ ततो महासैन्यमनंतसंख्यंदृष्ट्वाप्युमास्वतनुतश्चकार ॥ ३२ ॥ स्त्रीसैन्यमुग्रंविकृतंहियोगात्संभक्षणार्थंहिरिपोर्बलस्य ॥ दैत्येंद्रसैन्यंत्वथचंडिकाभिःसंभक्षि तंतत्क्षणचंडिकायाः ॥ ३३ ॥ संभक्षितंसकलंशोणितंचसर्वंनिपीतंक्षतजंरुरूणाम् ॥ पीत्वाप्रमत्तादितिजस्यमायांगौरीचतेषांरुधिरंचभूरि ॥ ३४ ॥ एकाकिनीघोररूपाकरालापुनःसमग्रंहृदयेनिधाय ॥ विनाशयित्वाप्रविभूतिमायाप्रचंडदोर्दंडशतैरनेकैः॥३५॥युद्धंचकाराद्भुतदर्शनेनएकेनमायाशतगू हितेन ॥ ततःसमायीकुपितश्चकुर्वन्प्रचंडवातानुकृतिंसदैत्यः॥३६॥ततश्चाराशुगतिस्त्रिलोकीमाब्रह्मलोकादिसमस्तमेतत् ॥ पुनर्नभःस्वर्गमगात्क्षणे नततःसपातालतलंसमग्रम् ॥३७॥ कालानलांतंजगदप्रमेयोबभ्रामतस्यास्त्वथवंचनार्थम्॥दैत्यस्तुखिन्नागिरिराजकन्याचक्रेततःस्थूलमतीवरूपम् ॥ ॥ ३८ ॥ कालानलार्कद्युतिमप्रमाणंरूपस्ययस्याद्भुतविक्रमस्य॥ प्रमाणमुक्तंत्वपिचंडिकायाःकिंत्वस्यरंध्रस्यपितामहेन ॥३९॥ चक्रेनजातोवजानिष्य तेवासमग्ररूपस्यप्रमाणवक्ता ॥ ब्रह्मांडमेतद्धदरांडकल्पंयत्रांतरस्थंकणवद्विभाति ॥ ४०॥अनंतरुद्रादिशिवादिसंख्येजगत्रयेवदनांतर्निलीने ॥ स्थित्वा गतिर्दैत्यवरस्यतस्यपदात्पदंगंतुमशक्तआसीत् ॥ ४१ ॥ गौर्याततोदैत्यवरोविमूढोभुजैर्गृहीत्वाशिरउच्चकर्त ॥ नखांकुरैर्वज्रमयैर्ज्वलद्भिःस्वदेहमत्यद्भु तचंडवीर्यः ॥ ४२ ॥ आच्छादयामासरिपोश्चकृत्यावर्मास्यकृत्स्नंचनिकृत्यदेवी ॥ दैत्येनरक्तेनसबुद्बुदेनवांतंशिराजालशतैस्तुयत्तत् ॥ ४३ ॥ सबुद्बु दंसोष्णमतीवहृद्यंसंभक्ष्यमांसानिचतानिगौरी ॥ गताप्रहृष्टातुकपालहस्तादृष्ट्वाचतांतादृशरूपधारी ॥ ४४ ॥ गणैरसंख्यैरधिगम्यमानोयत्रस्थितोऽसौ भगवान्पिनाकी ॥ कपालमालीभगवान्प्रहृष्टउत्थायचालिंगनमेवचक्रे ॥ ४५ ॥ अंकेचकृत्वाशनकैरनंतंपपौमहारक्तमपिप्रकामम् ॥ निवेदितंयद्गिरिरा जपुत्र्यातांपाययामासचपानमत्तः ॥ ४६ ॥ तत्पीतशिष्टंसुतरांपपौचगात्राणिगात्रेषुनिधायतस्याः ॥ गजेंद्रसिंहोद्धतदैत्यरक्तेतद्गात्ररक्तैरनुलिप्तगात्रः ॥ ४७ ॥ रुरोश्चतत्रापिचकृत्तिवासाहिमाचलः किंशुकपुष्पकुंजः ॥ ततोददौपर्वतराजपुत्रींसिंहस्यचर्माद्भुतखेलनाय ॥ ४८ ॥ मातंगकृत्तिंचमहावि

शालांविशाललोलायतचारुनेत्रा ॥ मृगेंद्रचर्माप्यथतद्गृहीत्वाचकारकट्यांभगवान्पिनाकी ॥ ४९ ॥ मातंगकृत्तिंचकरैर्गृहीत्वाजुगोपगात्राणिततः
स्मरारिः ॥ देवीरुरोश्चर्मविगूहितांगीप्रमोदमानासहितासखीभिः ॥ ५० ॥ तत्रस्तुतावैऋषिभिःससिद्धैःसुरासुरैर्मानुषकिंनरैश्च ॥ संप्रार्थितापू
जिताब्रह्मणाचत्रैलोक्यरक्षार्थमतीवघोरम् ॥ ५१ ॥ रूपंतुतच्चांडिकंगोपयित्वापुनःशरच्चांद्रमसंसुरूपम् ॥ कृत्वाररामाथहरेणदेवीहरो
पितद्रत्प्रमुमोदरामया ॥ ५२ ॥ इति श्रीशिवमहापुराणेधर्मसंहितायांरुरुवर्णनंनामषष्ठोऽध्यायः ॥ ६ ॥ मुनयऊचुः ॥ शिवशक्त्यात्मकेलो
केमूलसर्गादितोमुने ॥ कोनयोर्ह्यधिकःसूतमाययासाध्वसेनतु ॥ १ ॥ गुणेनाऽभ्यधिकःकश्चिद्दोषेणसूतनंदन ॥ एतन्मेसंशयंहृत्स्थं
प्रब्रूहिवदतांवर ॥ २ ॥ सूतउवाच ॥ प्रत्यक्षंदृश्यतेलोकेस्त्रीणामत्यधिकाःसदा ॥ गुणदोषौतथामायायद्रहस्यंशृणुष्वतत् ॥ ३ ॥ द्वासप्ततिसहस्रा
णिस्त्रीणांपुंसामथापिवा ॥ सर्वेषामेवभूतानांनाडीनामितिसंख्यया ॥ ४ ॥ तासांजघन्यानाडीस्याद्वर्धतेगर्भसंस्थिता ॥ तदंतरेनरोयस्यां
विख्यातागर्भधारिणी ॥ ५ ॥ कथंतस्यागुणैर्दोषैर्माययावापुमान्नरः ॥ स्त्रीभावेनचपुंभावःस्त्रीपुंसोःसंगमेतथा ॥ ६ ॥ नित्यमाच्छाद्यतेलोकेतस्माद
भ्यधिकाःस्त्रियः ॥ इतिहासमिमंपुण्यंस्त्रीणांमायाविजृंभितम् ॥ ७ ॥ अत्रानुरूपंशृणुमेपुण्यंश्रोत्रसुखावहम् ॥ बाणासुरपुरेपूर्वंचक्रेदेवासुरैःसह ॥ ८ ॥
नदीतीरेहरःक्रीडांरम्येशोणसमाह्वये ॥ ननृतुर्जहसुश्चापिगंधर्वाप्सरसस्तथा ॥ ९ ॥ जेपुःप्रणेमुरानर्चुस्तुष्टुवुर्मुनयश्चतम् ॥ ववल्गुःप्रमथाःसर्वेंऋषयोजु
हुवुस्तथा ॥ १० ॥ आययुःसिद्धसंघाश्चददृशुःशांकरींरतिम् ॥ कुतार्किकाविनेशुश्चमम्लुश्चपरिपंथिनः ॥ ११ ॥ मातरोभिमुखास्तस्थुर्विनेशुश्च
विभीषकाः ॥ रुद्रसद्भावभक्तानांभवदोषाश्चपुप्लुवुः ॥ १२ ॥ तस्मिन्दृष्टेप्रजाःसर्वापरमांनिर्वृतिंययुः ॥ चस्खलुर्मुनयःसिद्धाःस्त्रीणांदृष्ट्वाविचेष्टितम् ॥
॥ १३ ॥ पुपुषुश्चापिऋतवःस्वंस्वंभावंतुतत्रच ॥ ववुर्वाताश्चमृदवःपुष्पकेशरधूसराः ॥ १४ ॥ चुकूजुर्भृंगसंघाश्चशाखिनांमृदुलंपयः ॥ पुष्पभाराव
नद्धानांरारटीषुश्चकोकिलाः ॥ १५ ॥ मधुरंकामजननंवनेषूपवनेषुच ॥ ततःक्रीडाविहारेतुमत्तोबालेंदुशेखरः ॥ १६ ॥ अनिर्जितेनकामेनहृष्टःप्रोवा
चनंदिनम् ॥ शीघ्रंमद्वचनाद्गत्वाकृतस्नानामिहानय ॥ १७ ॥ वानराननगौरींमेकैलासात्कृतमंडनाम् ॥ सतथेतिप्रतिज्ञायगत्वातत्राहपार्वतीम् ॥ १८ ॥
द्रष्टुमिच्छतिदेवित्वांदेवोरूपकृतांशुभाम् ॥ ततस्तद्वचनाद्गौरीमंडनंकर्तुमारभत् ॥ १९ ॥ आजगामततोनंदीरुद्रांतिकंमनोगतिः ॥ पुनराहततोरुद्रः
क्षिप्रमानयपार्वतीम् ॥ २० ॥ बाढमुक्त्वैवतांगत्वागौरीमाहसुलोचनाम् ॥ द्रष्टुमिच्छतितेभर्ताकृतवेषांमनोरमाम् ॥ २१ ॥ तद्वाचस्तमथाप्यन्यद्गतंयोषाग्र्यपं
चकम् ॥ एवंपतौसुकामार्तेगम्यमानेऽथनंदिनि ॥ २२ ॥ अप्सरोभिःसमग्राभिरन्योऽन्यमभिमंत्रितम् ॥ लब्धभावोयथासद्यःपार्वत्यादर्शनोत्सुकः ॥ २३ ॥

अयंपिनाकीकामारिःक्रियतेसानितंबिनी ॥ सर्वासांदिव्यनारीणांराज्ञीभवतिचोत्तमा ॥ २४ ॥ मातॄणांगौरीरूपेणक्रीडयामान्मथैर्गुणैः ॥
कामोऽयंहंतिकामारिमूचुरन्योन्यमादृताः ॥ २५ ॥ स्प्रष्टुंशक्नोतियाकाचिद्दतेदाक्षायणींस्त्रियम् ॥ कुभांडदुहितातत्रशंकरंस्प्रष्टुमुत्सहे ॥ २६ ॥ अहं
गौरीस्वरूपेणचित्रलेखावचोऽब्रवीत् ॥ चित्रलेखोवाच ॥ यदिनांदीश्वरंरूपंकाचित्कर्तुंक्षमाभवेत् ॥ देव्याःसखीनांरूपंतुसुखसाध्यंकरिष्यथ ॥ २७ ॥
ततोनांदीश्वरंरूपंकेशवोरुसमुत्थया ॥ कृतंतद्वैष्णवंयोगमाश्रित्यपरमार्थतः ॥ २८ ॥ उर्वश्याश्वततोदृष्ट्वारूपस्यपरिवर्तनम् ॥ कालीरूपंघृताचीतु
विश्वाचीचांडिकंवपुः ॥ २९ ॥ सावित्रीरूपंप्रम्लोचागायत्रंमेनकातथा ॥ सहजन्याजयारूपंवैजयंपुंजिकस्थली ॥ ३० ॥ वैनायकंमहारूपंचक्रेसातुक
तुस्थली ॥ मातॄणामप्यनुक्तानामनुक्ताश्चाऽप्सरोपिच ॥ ३१ ॥ ततस्तासांतुरूपाणिदृष्ट्वाकुंभांडनंदिनी ॥ वैष्णवादात्मयोगाच्चविज्ञानाच्चविडंबनात् ॥
॥ ३२ ॥ चकाररूपंपार्वत्यादिव्यमत्यद्भुतंशुभम् ॥ महारक्ताब्जसंकाशंचरणंललिताकृति ॥३३॥ मृदुसुस्निग्धसंपूर्णदिव्यपादोपशोभितम् ॥ क्रमोपचि
तसौभाग्यगुल्फांगुलिविराजितम् ॥ ३४ ॥ नखेंदुकिरणजातविडंबितशशिप्रभम् ॥ दिव्यनूपुररणत्कारपूरिताशेषदिङ्मुखम् ॥ ३५ ॥ ह्रस्ववर्तुल
संश्लक्ष्णदिव्यजंघोपशोभितम् ॥ जातरूपसुवर्णाभंसंहतांगुलिभूषितम् ॥ ३६ ॥ वर्तुलोन्नतसंपूर्णदिव्यस्फिग्उपशोभितम् ॥ कनकाद्रिप्रतीकाशकटि
मंडनमंडितम् ॥ ३७ ॥ किंचित्कुंचितसुस्निग्धसूक्ष्मरोमावलीयुतम् ॥ गंभीरसागराकारवराहशुभलक्षणम् ॥ ३८ ॥ मत्तभ्रमरनिर्णादमेखलादामभू
षितम् ॥ नानावर्णमहावस्त्ररम्यचंद्रांबिकांकितम् ॥ ३९ ॥ ईषल्लज्जासुशोभाढ्यंशनकैर्दर्शितांतरम् ॥ वज्रकलिपतवेद्यास्तुमध्यस्थंसुंदरप्रभम् ॥ ४० ॥
कनकद्रोणिसंकाशदिव्यनाभिविराजितम् ॥ हेमाब्जदामतुल्याभपूर्णात्रिवलिशोभितम् ॥ ४१ ॥ शुद्धजांबूनदप्रख्यंकुक्षोदरसुपीवरम् ॥ जातरूपनि
भाकारवक्षस्थलमहर्द्धिमत् ॥ ४२ ॥ अतिलावण्यशोभाढ्यंपूर्णस्कंधोपशोभितम् ॥ शशिकोटिनिभाकारंमुक्तादामविराजितम् ॥ ४३ ॥ संपूर्णमृदुसु
श्लक्ष्णदिव्यदोर्दंडमंडितम् ॥ दिव्यकेयूरकटकैर्भूषितंचांऽगुलीयकैः ॥ ४४ ॥ स्रग्दामदर्पणोपेतसुशोभितकरांबुजम् ॥ प्रवालहेमरक्ताब्जतुल्यपाणितलं
शुभम् ॥ ४५ ॥ दिव्यलावण्यशोभाढ्यंरेखात्रितयशोभितम् ॥ क्रमोपचितसुश्लक्ष्णदीर्घांगुलिमनोहरम् ॥ ४६ ॥ पुष्पोपचितभद्राभसुरम्यनखचांद्रि
कम् ॥ प्रशस्तदक्षिणावर्तकंबुग्रीवोपशोभितम् ॥ ४७ ॥ नानाविधमहारत्नग्रैवेयकशतावृतम् ॥ संपूर्णवर्तुलाकारदिव्योष्ठपुटसूचितम् ॥४८॥ विद्रुमां
कुरसंकाशमृदुश्लक्ष्णवरोद्धतम् ॥ सत्पद्मरागरक्ताभकोमलौष्ठविभासितम् ॥ ४९ ॥ बालेंदुलेखासंघाततुल्यदंतावलीयुतम् ॥ रक्ताब्जकर्णिकाकारह्र
स्वजिह्वोपशोभितम् ॥ ५० ॥ अत्यंतहेमशुद्धाभसुस्पष्टघ्राणमंडितम् ॥ विकाररहितस्निग्धनासापुटविलोमवत् ॥ ५१ ॥ चंद्रमंडलसंकाशस्फुरत्पां

डुकपोलकम् ॥ पूर्णाविकारहेमाभरमणीयमहाहनु ॥ ५२ ॥ निम्नस्निग्धोन्नताभोगविकारोज्झितकर्णवत् ॥ हेममुक्तामहारत्नदिव्यसंयुक्तकुंडलम् ॥५३॥
सितासितमनाग्रक्तलोललोचनमंडितम् ॥ सद्राजावर्तलेखाभभ्रूलतालंकृताननम् ॥५४॥ गौरीशलिंगसंकाशललाटतटमंडितम् ॥ विकाररहितांस्निग्धंरा
गसंरक्तलोचनम् ॥ ५५ ॥ ललाटनयनाभोगसविलासविलोकितम् ॥ चलत्कुंचितसुस्निग्धसूक्ष्मकृष्णालकावृतम् ॥ ५६ ॥ कुंकुमादिमहामाल्याति
लकादिविभूषितम् ॥ अलकप्रांतसंलग्नसुवर्णमणिविद्रुमम् ॥ ५७ ॥ नानारत्नसुवर्णाढ्यकिरीटोद्द्योतिताननम् ॥ कोकिलांजनपुंजाभदीर्घवेणीसुशोभि
तम् ॥ ५८ ॥ पंचवर्णमहापुष्पस्रग्दामच्छन्नवेणिमत् ॥ दिव्यमाल्यांबरधरंदिव्यस्रग्दामशोभितम् ॥ ५९ ॥ विश्वकर्मकृतैर्दिव्यैरतिप्रायैरलंकृतम् ॥
एवंकृतेतदानंदीपुनस्तुसगणोगतः ॥ ६० ॥ गौरीमानयितुंहृष्टःकैलासात्तुपुनःशनैः ॥ ततःसावसरंप्राप्यहरेरूरुसमुद्भवा ॥ ६१ ॥ दृष्ट्वादेवमुवाचाथ
देवशैलादिहागताः ॥ अहंगौरीचसंप्राप्तामातरःसगणास्तव ॥ ६२ ॥ एवमुक्तस्तयारुद्रस्त्यक्त्वाशय्यांतुहृष्टवत् ॥ पुरस्तान्निर्ययौगौर्याःशनैःसप्तपदा
नितु॥६३॥ देवाब्रह्मादयश्चापिदैत्यदानवराक्षसाः ॥ ऋषयोमुनयःसिद्धाःपार्वत्याअग्रतोययुः॥६४॥नानाविधमहास्तोत्रैःस्तुवंतोमुदितास्तथा ॥ ततः
पाणौगृहीत्वातांरुद्रःशय्यामथाऽऽरुहत् ॥ ६५ ॥ चक्रेनानाविधांक्रीडांतयासार्धंपिनाकधृक् ॥ रुद्रंगायंतिनृत्यंतिसर्वाःकपटमातरः ॥ ६६ ॥ काश्चि
द्गायंतिनृत्यंतिरमयन्तिहसंतिच॥सुखनादसहस्राणिकुर्वंत्यन्याःसहस्रशः॥६७॥शिवाचरुद्रसहितारावांश्चक्रेमहाद्भुतान्॥अथकिंबहुनोक्तेनछिद्रंतासांनवि
द्यते ॥ ६८ ॥ येनविज्ञायतेकिंचित्स्त्रीणांव्याजविजृंभितम् ॥ केचिद्गायंतिनृत्यंतिहसंतिचरुदंतिच ॥ ६९ ॥ शंकराराधनेसक्तागणानंदीश्वरादयः ॥
कैलासान्मातृभिःसार्धंगणैःपरिवृतासनैः ॥ ७० ॥ एतस्मिन्नंतरेगौरीआजगाममहाद्भुता ॥ भृंगिनंदिमहाकालदंडिलंबोदरादिभिः ॥ ७१ ॥ स्तूयमा
नातुगगनात्संप्राप्ताभर्तुरंतिकम् ॥ किमियंपार्वतीदेवीकिमियमित्यचिंतयन् ॥ ७२ ॥ तांदृष्ट्वाचाकिताःसर्वेकिमियंवासुशोभना ॥ नैतयोर्दृश्यतेभेदोना
नयोर्नंदिनोरपि ॥ ७३ ॥ नमातॄणांगणानांतुकोप्यथंस्याद्व्यतिक्रमः ॥ ततोहरस्यपार्श्वस्थागौरीज्ञात्वाव्यतिक्रमम् ॥ ७४ ॥ क्रीडितंदिव्यनारीणांप्र
हासंमुमुचेतदा ॥ ताश्चैवाप्सरसःसर्वाश्चक्रुःकिलिकिलारवान् ॥ ७५ ॥ भूतप्रेतपिशाचाश्चयक्षरक्षांसिचाऽसकृत् ॥ तच्छ्रुत्वातच्चसंवीक्ष्यततोबालेंदुशे
खरः ॥ ७६ ॥ प्रहर्षमतुलंलेभेस्त्रीणांकर्मानुभूयच ॥ उर्वश्याद्याह्यप्सरसश्चित्रलेखाचकारह ॥ ७७ ॥ ततोरतांतेस्वंरूपंचक्रुःस्वंस्वंविचेष्टितम् ॥ एवं
स्त्रीभिर्महादेवःपूर्वंव्याजेनतोषितः ॥७८॥ ततःसद्भावागौरीतुपतिनासहसंगता ॥ अत्यद्भुतांमहाक्रीडांचक्रेदेवीनदीतटे ॥ ७९ ॥ तत्रोषाबाणदुहिताक्री
डमानांतुपार्वतीम् ॥ दृष्ट्वामनसिसंदध्यौभर्तृसंगमकांक्षिणी ॥८०॥ अनेनभर्त्रासहितायथेयमपिपार्वती ॥ क्रीडंतेयाःस्त्रियोधन्यारमंत्येवसमागताः॥८१॥

एवंसंचिंत्यमनसासोषासुनियमेस्थिता ॥ उमामाराधयामाससोपवासाजितेंद्रिया ॥ ८२ ॥ विज्ञायतमभिप्रायंतस्याबाणसुतांप्रति ॥ उवाचपर
मप्रीतानगराजस्यनंदिनी ॥८३॥यथाऽनेननदीतीरेरमाम्यहमनिंदिते ॥ त्वमपिभर्तृसहितारमिष्यस्यचिरादिह ॥ ८४ ॥ साकन्यावचनंश्रुत्वाऽश्रद्दध
त्यात्मनोहृदि ॥ चकारमंदपुण्याहंभर्त्रारंस्येकदात्विति ॥ ८५ ॥ तथापितस्याःसंकल्पंविज्ञायगिरिजाततः ॥उवाचसप्तमेमासिसंप्राप्तेसतिमानिनि ॥
॥८६॥अस्मिंस्तुकार्तिकेमासिअतोर्ध्वंमासिमाधवे ॥ द्वादश्यांशुक्लपक्षेतुयस्तुघोरेनिशागमे ॥ ८७ ॥ कृतोपवासांत्वांभोक्तासुप्तामंतःपुरेनरः ॥ सते
भर्त्ताकृतोदेवैस्तेनसार्धंगमिष्यसि ॥ ८८ ॥ आबाल्याद्विष्णुभक्तासियतोनित्यमतंद्रिता ॥ एवमस्त्वितिसाप्राहमनसालज्जितानना ॥ ८९ ॥ ततोर
तांतेभगवान्रुद्रश्चादर्शनंययौ ॥ सदारःसगणश्चापिसहितोदेवमानवैः ॥ ९० ॥ मोदमानाःस्त्रियश्चाथक्रीडांतामनुभूयच ॥ जग्मुःस्वंस्वंगृहंहृष्टास्तुरगै
र्वारणैरथैः ॥९१॥अन्याश्चसिद्धयोगिन्योजग्मुराकाशमेवहि ॥ कस्यचित्त्वथकालस्यबाणोरुद्रांतिकंययौ ॥ ९२ ॥ भगवंतमुमाकांतंपूजयित्वाकृतांज
लिः॥उवाचदुःखसंतप्तोदैवदोषाच्चगर्वितः॥९३॥हेदेवकिमनेनापिसहस्रेणकरोम्यहम् ॥ बाहूनांगिरितुल्यानांविनायुद्धंवृषध्वज ॥९४॥ मयायमःकृतोयो
द्धावह्निश्चकृतकोमहान् ॥ वरुणश्चापिगोपालोगवांपालयितातथा ॥ ९५ ॥ गजाध्यक्षःकुबेरस्तुसैरंध्रीचापिनिर्ऋतिः ॥ जितश्चाऽऽखंडलोयुद्धेकरदायी
सदाकृतः ॥ ९६ ॥ युद्धस्यागमनंब्रूहियत्रमेबाहवोमम ॥ शत्रुहस्तप्रमुक्तैश्चशस्त्रास्त्रैर्जर्जरीकृताः ॥ ९७ ॥ पतंतिशक्रहस्ताद्वापातयंतिसहस्रधा ॥
तच्छ्रुत्वाकुपितोरुद्रस्त्वट्टहासंमहाद्भुतम् ॥ ९८ ॥ कृत्वाऽब्रवीन्महामन्युर्धिग्धिग्दैत्याधमास्तुते ॥ दर्पस्याऽस्यमहायुद्धंलभिष्यसिसुदारुणम्॥९९॥
तत्रतेगिरिवर्ष्माणोबाहवोनलकाष्ठवत् ॥ छिन्नाभूमौपतिष्यंतिशस्त्रास्त्रैःकदलीकृताः ॥ १०० ॥ यदेतन्मानुषशिरोमयूरसहितंध्वजे ॥ विद्यतेतवदुष्टा
त्मंस्तस्यस्यात्पतनंयदा ॥ १०१ ॥ स्थापितस्यायुधागारेविनावातकृतंभयम् ॥ तदायुद्धंमहाघोरंसंप्राप्तमितिचेतसि ॥ १०२ ॥ निधायघोरंसंग्रामं
गच्छेथाःसर्वसैन्यवान् ॥ सांप्रतंगच्छतद्वेश्मयत्रताद्विद्यतेशिरः॥ १०३ ॥ तथाऽन्यांस्तुमहोत्पातांस्तत्रद्रष्टासिदुर्मते ॥ तच्छ्रुत्वारुद्रमभ्यर्च्यदिव्यैरंज
लिकुड्मलैः ॥ १०४ ॥ प्रणम्यचमहादेवंततःशस्त्रगृहंगतः ॥ कुंडलाययथावृत्तंपृष्टःप्रोवाचहर्षतः ॥ १०४॥ स्वयंभग्नध्वजंदृष्ट्वातत्रयुद्धायनिर्ययौ ॥
सैन्यंसमग्रमाहूयसंयुक्तास्त्वष्टभिर्गुणैः ॥ १०६ ॥ इष्टिसांग्रामिकींकृत्वादृष्ट्वासांग्रामिकंमधु ॥ ककुभांमंडलंसर्वंसंप्रेक्ष्यसंस्थितोऽभवत् ॥ १०७ ॥इति
हृत्कमलेकृत्वाकःकस्मादागमिष्यति॥ योद्धारणप्रियोयस्तुनानाशस्त्रास्त्रपारगः ॥ १०८ ॥ यस्तुबाहुसहस्रंमेछिनत्तिनलकाष्ठवत् ॥ तथाशस्त्रैर्महाती
क्ष्णैश्छिनत्तितच्छिरस्त्विह ॥ १०९ ॥ एतस्मिन्नंतरेकालःसंप्राप्तःसंक्रमेणहि ॥ यत्रसाबाणदुहितासुस्नाताकृतमंगला ॥ ११० ॥ माधवंमाधवेमासिपू

जयित्वामहानिशि ॥ सुप्ताचांतःपुरेगुप्तेस्त्रीभावमुपलंभिता ॥ १११ ॥ गौर्यासंप्रेक्षितेनापिव्याकृष्टादिव्यमायया ॥ कृष्णात्मजात्मजेनाथरोदमानाम
नाथवत् ॥ ११२॥सचापितांबलाद्भुक्त्वापार्वत्याःसखिभिःपुनः ॥ नीतस्तुदिव्ययोगेनद्वारकांनिमिषांतरात् ॥ ११३॥ मृदितासाततोत्थायरुदतीवि
विधागिरः ॥ सखीभ्यःकथयित्वातुदेहत्यागेकृतक्षणा ॥११४ ॥ दौःशील्यादोषशोभाचसख्यासंस्मारितापुनः ॥ सर्वंतत्पूर्ववृत्तांतंततोदृष्टाचसाभवत्
॥११५॥ अब्रवीच्चित्रलेखांचततोमधुरयागिरा ॥ सखियद्येषमेभर्तापार्वत्याविहितःपुरा ॥ १६ ॥ केनोपायेनतेगुप्तःप्राप्यतेविधिवन्मया ॥ कस्मिन्कुले
वाजातोसौसमयेनहृतंमनः ॥१७॥ तयाचोक्तात्वयास्वप्नेयोदृष्टोदेवितंकथम् ॥ अहंसमानयिष्यामिनविज्ञातस्तुयोमम ॥ १८ ॥ दैत्यकन्यातदुक्तेतुरा
गांधामरणोत्सुका॥रक्षिताचतयासख्यासप्तमेदिवसेततः॥१९॥राज्ञोवस्त्रपटेकृत्वादेवान्दैत्यांश्चराक्षसान्॥क्षत्रियांश्चतथाप्यस्यसानिरुद्धंददर्शह॥१२०॥
दृष्टाप्रोवाचचौरोसौमयाप्राप्तस्तुयेनमे॥चेतोरत्नंहृतंसद्यःसंस्पर्शादेवभामिनि॥१२१॥कस्यायमन्वयेजातोनामकिंचास्यविद्यते ॥ प्रोक्तंतस्यास्तयासर्वं
सान्वयंतस्यधीमतः॥१२२॥सर्वमाकर्ण्यसाभूयोबभाषेमत्तकाशिनी ॥ उपायंतस्यमेपश्ययेनोपायेनतत्क्षणात्॥१२३॥लभामियंविनानाऽहंक्षणंजीवितु
मुत्सहे॥ततःसखींसमाभाष्यचित्रलेखामनोजवा॥१२४॥ज्येष्ठकृष्णचतुर्दश्यांतृतीयेनगतेसति॥आप्रभातान्मुहूर्तेतुसंप्राप्ताद्वारकांपुरीम् ॥ १२५॥ एके
नक्षणमात्रेणनभसादिव्ययोगिनी॥ततश्चांतःपुरोद्यानेप्राद्युम्निंददृशेस्थितम् ॥१२६॥ क्रीडंतंस्त्रीजनैःसार्धंपिबंतंमधुमाधवीम्॥ ततःखट्वासमारूढमंधका
रपटेनसा॥१२७॥आच्छादयित्वायोगेनतामसेनचमाधवम्॥आनयन्मूर्ध्नितांखट्वांगृहीत्वानिमिषांतरात्॥१२८॥संप्राप्ताशोणितपुरंयत्रसाबाणनंदिनी ॥
कामार्ताविविधान्भावांश्चकारोन्मत्तवत्क्षणात्॥१२९॥ आनीतमथतंदृष्ट्वातदाभीताचसाऽभवत्॥अंतःपुरेसुगुप्तेचनवेतस्मिन्समागमे ॥१३०॥यावत्क्री
डितुमारब्धंतावज्ज्ञातंचतत्क्षणात् ॥ अंतःपुरद्वारगतैर्वेत्रजर्जरपाणिभिः ॥ ३१ ॥ इंगितैरनुमानैश्चकन्यादौःशील्यमेवतत् ॥ सचापिदृष्टस्तैस्तत्रनरो
दिव्यवपुर्धरः ॥३२॥ तरुणोदर्शनीयस्तुसाहसीसमरप्रियः ॥ तंदृष्ट्वासर्वमाचख्युर्बाणायबलिसूनवे ॥३३॥ देवकश्चिन्नरस्तुभ्यंगुप्तमंतःपुरेबलात् ॥ शक्त
स्यतवकन्यांतुस्वयंग्राहादधर्षयत् ॥ ३४ ॥ दानवेंद्रमहाबाहोपश्यपश्यैनमत्रच ॥ तेषांतद्वचनंश्रुत्वादानवेंद्रोददर्शतम् ॥ ३५ ॥ दिव्यनीलाब्जवपु
षंप्रथमेवयसिस्थितम् ॥ तंदृष्ट्वाविस्मितोवाक्यंकिंकरानप्यथाऽब्रवीत् ॥ ३६ ॥ बाणःक्रोधपरीतात्मायुद्धशौंडोहसन्निव ॥ अहोमनुष्योरूपाढ्यःसाह
सीधैर्यवानिति ॥ ३७ ॥ येनमेकुलचारित्रंदूषितंदुहिताहृता ॥ तंमारयध्वंकुपिताःशीघ्रंशस्त्रैःसुदारुणैः ॥ ३८ ॥ दुराचारंचतंबद्ध्वाघोरेकारागृहेततः॥
रक्षध्वंकालसमयंकंचिद्घोरपराक्रमाः ॥ ३९ ॥ ततोदैत्येनसैन्यंतुदशसाहस्रकंशनैः ॥ वधार्थंतस्यवीरस्यव्यादिष्टंपापबुद्धिना ॥ १४० ॥ शत्रुसैन्यंततो

दृष्ट्वागर्जमानंसयादवः ॥ अंतःपुरद्वारगतंपरिघंगृह्यचातुलम् ॥ १४१ ॥ निष्क्रांतोभवनात्तस्माद्वज्रहस्तइवांतकः ॥ तेनतान्किंकरान्हत्वापुनश्चांतःपुरं
ययौ ॥ ४२ ॥ एवंदशसहस्राणिसैन्यानिमुनिसत्तमाः ॥ जघानरोषरक्ताक्षोदिव्यरक्ताब्जलोचनः ॥ ४३ ॥ लक्षेहतेथयोधानांततोबाणासुरोरुषा ॥ कुंभां
डसंगृहीताश्वोयुद्धशौंडःसमाह्वयत् ॥४४॥ अनिरुद्धंमहाबाहुंद्वंद्वयुद्धमहाहवे ॥ ततोदशसहस्राणितुरंगांश्वरथोत्तमान् ॥ ४५ ॥ युद्धप्राप्तेनखड्गेनदैत्येंद्र
स्यजघानसः ॥ तद्वधायततःशक्तिःकालवैश्वानरोपमा ॥१४६॥क्षिप्त्वाबाणेनसंभूयःशत्रुसंप्रेरितांरुषा॥अनिरुद्धोगृहीत्वातांतयातंनिजघानसः ॥ १४७॥
रथोपस्थेततोबाणस्तेनशक्त्याहतोदृढम् ॥ पतितोमंत्रिणातत्रहेतुभिःप्रतिबोधितः ॥ ४८ ॥ समाश्वस्तःक्षणेतस्मिंस्तत्रैवांतरधीयत ॥ तस्मिंस्त्वदर्श
नंप्राप्तेप्राद्युम्निरपराजितः ॥ १४९ ॥ आलोक्यककुभःसर्वास्तस्थौगिरिरिवाचलः ॥ अदृश्यमानस्तुतदाकूटयोधीसदानवः ॥ १५० ॥ नानाशस्त्रसहस्रै
श्चताडयित्वापुनःपुनः ॥ छद्मनानागपाशैस्तंबबंधसुमहाबलः ॥ १५१ ॥ तंबद्ध्वापंजरांतस्थंकृत्वायुद्धादुपारमत् ॥ सूतपुत्रशिरश्छिंधियेनमेदूषितंकु
लम् ॥ १५२ ॥ छित्त्वातुसर्वगात्राणिराक्षसेभ्यःप्रयच्छभोः ॥ अथवानास्यमांसानिक्रव्यादाअपिभुंजते ॥ १५३ ॥ अगाधेतृणसंकीर्णकूपेपातकिनंज
हि ॥ तस्यतद्वचनंश्रुत्वाधर्मबुद्धिर्निशाचरः ॥ १५४ ॥ कुंभांडस्त्वब्रवीद्वाक्यंदेवनैतत्क्षमोभवेत् ॥ अस्मिन्हतेहतोह्यात्माभवेदितिमतिर्मम ॥ १५५ ॥
अयंतुदृश्यतेदेवतुल्योविष्णोःपराक्रमैः ॥ अथचंद्रललाटस्यसाहसेनसमस्त्वयम् ॥ १५६ ॥ इमामवस्थांप्राप्तोऽपिपौरुषेस्वेव्यवस्थितः ॥ अस्मांस्तृ
णोपमान्वेत्तिदष्टोऽपिभुजगैर्बलात् ॥ १५७॥ एतद्वाक्यंतुबाणस्यकथयित्वासदानवः ॥ अनिरुद्धमुवाचेदंकोऽसिकस्याऽसिभोरिति ॥ १५८ ॥ केनवा
त्वमिहानीतोदुराचारनराधम॥दैत्येंद्रंस्तुहिवीरत्वंनमस्कुरुकृतांजलिः॥१५९॥ जितोऽस्मीतिवचोदीनंकथयित्वापुनःपुनः॥एवंकृतेतुमोक्षःस्याद्बंधनात्त
वनाऽन्यथा॥१६०॥तच्छ्रुत्वावचनंतस्यप्रतिवाक्यमुवाचसः॥रेरेदैत्याधमसखेपरपिंडोपजीवक ॥ १६१ ॥ निशाचरदुराचारक्षत्रधर्मंनवेत्सिभोः॥ दैन्यंप
लायनंवाऽथशूरस्यमरणादपि॥१६२॥विरुद्धंचाऽयशस्यंचभवेदितिमतिर्मम ॥ क्षत्रियस्यरणेश्रेयोमरणंसंमुखस्यच॥१६३॥नतुप्राप्यतुभूमिंतुदीनस्यैव
कृतांजलिः ॥ कृतेऽपिदैन्येमरणंनाविचालयितुंक्षमः ॥ १६४ ॥ शत्रुर्भवसिमंदात्मञ्जोषमास्वाथमूकवत् ॥ दानवानांसहस्राणित्रैलोक्यंसचराचरम्
॥ १६५ ॥ नित्यंकृतांजलिर्यस्यसोऽन्यस्यांजलिमान्कथम् ॥ स्वयंतुवेत्स्यसेयोऽहंछिन्नेबाहुवनेवने ॥ १६६ ॥ एतद्वाक्यंतुतस्योक्त्वायादवोमौन
माश्रितः ॥ बाणःकुंभांडवचनादनिरुद्धंनजघ्निवान् ॥ १६७ ॥ किंतुस्वांतःपुरंगत्वापपौपानमनुत्तमम् ॥ ततोऽनिरुद्धोबद्धस्तुनागभोगैर्विषोल्बणैः ॥
॥ १६८ ॥ प्रिययाहृतचेतास्तुदुर्गांसस्मारतत्क्षणात् ॥ उवाचदेविबद्धोऽस्मिदह्यमानस्तुपन्नगैः ॥ १६९ ॥ आगच्छमेकुरुत्राणंयशोदेचंडरोषिणि ॥

तेनसातोषितातत्रकालीभिन्नांजनप्रभा ॥ १७० ॥ ज्येष्ठकृष्णचतुर्दश्यांसंप्राप्तासुमहानिशि ॥ गुरुभिर्मुष्टिभिर्घातैर्दारयामासपंजरम् ॥ १७१ ॥
शरांस्तान्भस्मसात्कृत्वासर्परूपान्भयानकान् ॥ मोचयित्वानिरुद्धंतुततश्चांतःपुरंततः ॥ १७२ ॥ प्रवेशयित्वादुर्गातुतत्रैवाऽदर्शनंगता ॥ सतुलब्ध
जयोभूत्वाप्रियांप्राप्यमुमोदच ॥ १७३ ॥ ततोगतेऽनिरुद्धेतुतत्स्त्रीणांरोदनस्वनम् ॥ श्रुत्वाचत्वरितःकृष्णोयुद्धंश्रुत्वाचनारदात् ॥ १७४ ॥ जगा
मशोणितपुरंतार्क्ष्यमाहूयतत्क्षणात् ॥ भ्रात्रारामेणसहितःप्रद्युम्नेनचधीमता ॥ १७५ ॥ तत्राग्निनाऽभवद्युद्धंयमेनचहरेणच ॥ त्रिमुखेनत्रिपादेनज्वरेण
चगुहेनच ॥ १७६ ॥ प्रमथैर्विविधाकारैस्तेषामत्यंतदारुणम् ॥ विभीषिकाभिर्बह्वीभिःकोटवीभिःपदेपदे ॥ १७७ ॥ निर्लज्जाभिश्चनारीभिर्भग्नाभिर
पिसर्वशः ॥ वीर्यंसंस्तंभयंतीभिर्वरांगस्यचदर्शनात् ॥ १७८ ॥ तेषांचतुर्णांसंग्रामःपश्चाद्बाणेनचाऽभवत् ॥ माहेश्वराश्चयेकेचिद्बाणस्याऽऽसञ्ज्वराद
यः ॥ १७९ ॥ तांस्ताञ्जघानगोविंदोघोरैःस्वैःस्वैर्ज्वरादिभिः ॥ कृत्वासहस्रंकायानांपीत्वातोयंमहार्णवात् ॥ १८० ॥ गरुडोनाशयद्वह्निंवातैर्मेघार्ण
वांबुभिः ॥ कुमारस्यमयूरंतुतुंडघातैर्व्यपाटयत् ॥ १८१ ॥ विष्णुनानिर्जितेरुद्रेसपुत्रेसगणेसति ॥ बाणोविनिर्गतोयुद्धेद्वंद्वयुद्धेनविष्णुना ॥ १८२ ॥
कुंभांडसंगृहीताश्वोवृत्तेसैन्यक्षयेसति ॥ ततःसुदर्शनेनाऽथविष्णुर्बाणभुजान्बहून् ॥ १८३ ॥ छित्त्वाशिरश्चशत्रोस्तुयदाछेत्तुंसमुद्यतः ॥ स्तोत्रैस्तत
स्त्वनेकैश्चशंकरेणसतोषितः ॥ १८४ ॥ उक्तश्चोर्ध्वकरेणाथहरेणाऽमित्रघातिना ॥ भगवन्देवकीपुत्रकृतंयत्क्रियतेत्वया ॥ १८५ ॥ माबाणस्याशिर
श्छिधिसंहरस्वसुदर्शनम् ॥ दत्तंमयापुरातुभ्यमतिवीर्यंरणेतव ॥ १८६ ॥ चक्रंजयश्चगोविंदनिवर्तस्वरणादतः ॥ त्वंतुयोगीश्वरःसाक्षात्परमात्माज
नार्दनः ॥ १८७ ॥ भक्तानुकंपीभगवान्सर्वभूतहितेरतः ॥ वरमस्यमयादत्तंनमृत्युभयमस्तिते ॥ १८८ ॥ तन्मेसत्यंवचश्चाऽस्तुयादितुष्टोऽसिमेप्रभो ॥
शंकरस्यवचःश्रुत्वासंहृत्यचसुदर्शनम् ॥ १८९ ॥ अक्षतांगस्तुविजयीविष्णुरंतःपुरंययौ ॥ अनिरुद्धंसमाश्वास्यसहितंभार्ययापुनः ॥ १९० ॥ गृही
त्वारत्नसंघातंचित्रलेखांचतत्सखीम् ॥ पुनःस्वभवनंप्राप्तोजित्वाचवरुणंपथि ॥ १९१ ॥ विसर्जयित्वागरुडंसखिवच्चोपहस्यच ॥ द्वारकायांततोहृ
ष्टःकामचारीचचारह ॥ १९२ ॥ विष्णौगतेततोनंदीबाणंप्रोवाचदुःखितम् ॥ दैत्यंशोणितदिग्धांगंकुरुनृत्यमहोत्सवम् ॥ १९३ ॥ भक्तानुकंपिन
श्चाऽग्रेरुद्रस्येतिपुनःपुनः ॥ नंदिवाक्यात्ततोबाणोद्विपाच्छीर्षैकमात्रकः ॥ १९४ ॥ ननर्ततांडवंमुख्यंप्रत्यालीढादिशोभितम् ॥ स्था
नकैर्विविधाकारैरालीढप्रमुखैरपि ॥ १९५ ॥ मुखवाद्यसहस्राणिभ्रूक्षेपसहितान्यपि ॥ शिरःकंपसहस्राणिप्रत्यानीकान्सहस्रशः ॥ १९६ ॥
चारीश्चविविधाकारादर्शयित्वाशनैःशनैः ॥ तथाशोणितधाराभिःसिंचयित्वामहीतलम् ॥ १९७ ॥ रुद्रंप्रसादयामासशूलिनंचंद्रशेखरम् ॥

ततोनृत्यमहंद्दष्ट्वाभगवान्भक्तवत्सलः ॥ १९८ ॥ उवाचबाणंसंतुष्टोनृत्यगीतप्रियोहरः ॥ वरंगृहाणदैत्येंद्रयत्तेमनसिवर्तते ॥ ९९ ॥ बाणेनचवृही
तोऽभूद्वरस्तुव्रणरोपणे ॥ बाहुयुद्धस्यचोत्पत्तिर्गाणपत्यमथाऽक्षयम् ॥ २०० ॥ उषायाःपुत्रराज्यंतुतस्मिञ्छोणितकाह्वये ॥ निर्वैरताचविबुधै
र्विष्णोभक्तिरनुत्तमा ॥ २०१ ॥ वासुदेवात्तुमरणंकल्पांतेकुपिताद्धरः ॥ नपुनर्दैत्यतादुष्टातामसीरजसायुता ॥ २०२ ॥ हरेर्मैत्राभियोगस्तु
दिवारात्रंचमित्रता ॥ सर्वंलभिष्यसीत्युक्त्वातत्रैवांतरधीयत ॥ २०३ ॥ रुद्रस्यानुचरोबाणोमहाकालत्वमागतः ॥ ततःकदाचित्पुत्रस्तुतस्यां
जातोयदाऽभवत् ॥ २०४ ॥ तथाकुंभांडमुख्यैश्चविश्वजिद्राजसत्तमः ॥ दैत्यराज्येभिषिक्तस्तुमंत्रिभिःकेशवाज्ञया ॥ २०५ ॥ तस्यान्ववा
येयेकेचिदाकल्पांतास्तुभूभुजः ॥ जायमानाजनिष्यावातेऽनिरुद्धस्यसूनवः ॥ २०६ ॥ उषाचाचित्रलेखाचसचराजाचविश्वजित् ॥ तस्मिन्कल्पेपरिक्षी
णेगंतारःशांकरंपदम् ॥२०७॥ इतित्रिनयननाम्नःशंकरस्यापिवृत्तंसकलगुरुजनानांसद्गुरोःशूलपाणेः॥कथितमिहमयातेश्रोत्ररम्यैर्वचोभिर्मदनशरवनाग्ने
र्मन्मथक्षोभितस्य॥२०८॥इतिश्रीशिवमहापुराणेधर्मसंहितायांसप्तमोऽध्यायः॥७॥मुनयऊचुः ॥ कोयंकामोहियेनेशोवाप्तपूर्वमतिर्भवः ॥ नभोवाय्वग्निरा
पोवैपूर्वंबुद्धिर्मनोऽप्यहम् ॥ १ ॥ प्रकृतिःपुरुषोह्यत्स्थःपुरुषोंऽगुष्ठमात्रकः ॥ एवंनःसंशयंकृत्स्नंछेत्तुमर्हस्यशेषतः॥२॥सूतउवाच ॥ प्रवक्ष्यामिमतंकृत्स्नं
व्यासस्यामिततेजसः॥कामस्यैषातुयामूर्तिर्ब्रह्मविष्ण्वीश्वरात्मिका ॥३॥ सर्वभूतात्मभूताख्यात्रिलिंगाविश्वरूपिणी॥ क्वचित्कामःक्वचित्कामःक्वचित्तुका
मएवहि॥४॥स्नानंध्यानंचयोगश्चयमश्चनियमोजपः॥ नोशंभुर्नैववाविष्णुर्नोब्रह्मानेंदुभास्करौ॥५॥कर्तुमिच्छंतियंमुक्त्वाकामःसंकल्पएवहि॥यज्ञश्चशिक्षा
स्वाध्यायोज्ञानदानेश्रुतिःस्मृतिः ॥६॥ अशुद्धिःपरपीडाचस्वर्गमोक्षपरिग्रहः ॥ स्नेहवैराणियेनेहभवंतिसमनोभवः ॥७॥ देवानांयोनयश्चाऽष्टौमानुषी
नवमीचया ॥ तिरश्चांयोनयःपंचभवंत्येवंचतुर्दश ॥ ८ ॥ भूतावावर्तमानावाजनिष्यापिचसर्वशः ॥ कामात्सर्वेप्रवर्ततेलीयतेवृद्धिमागताः ॥९॥ सर्वा
सामथयोनीनांमिथुनानांक्रमेणतु ॥ अन्योन्यासक्तबुद्धीनांकामोनेनविभागशः ॥ १० ॥ स्थितोजितजगज्जन्मधाम्निसंसारवर्त्मनि ॥ शब्दाद्यैर्विषयैर
न्यौर्निःसारैःकुसुमोपमैः ॥ ११ ॥ ब्रह्मेंद्रोपेंद्ररुद्राणांदेवदानवभोगिनाम् ॥ गंधर्वाणामनुक्तानांमनुष्याणांचसर्वशः ॥ १२ ॥ बंधुर्मित्रमथाचार्योरक्षाने
ताऽर्थदोगुरुः ॥ कल्पद्रुमोऽथवाभ्रातापितामातायमस्तथा ॥१३॥ वैतरिण्यांजलंमिष्टंनरकोनंदनंवनम् ॥ कामःसर्वमयंपुंसांस्वयंकल्पसमुद्भवः॥१४॥
वक्तुंनशक्यतेयच्चपरंचानुपरंचयत् ॥ केवलंबुद्धिगम्यंचसंस्पर्शप्रांतसंस्थितम् ॥ १५ ॥ आनंदममृतंदिव्यंपरंब्रह्मतदुच्यते ॥ अर्केंदुवह्निप्रभवंयेने
हच्छिद्यतेतमः ॥ १६ ॥ यस्माद्विकाराःसूर्येंदुवह्न्यनिलधरास्त्वमी ॥ ब्रह्मेंद्रोपेंद्रमनुजाःकृमयःपशवोमृगाः ॥१७॥ उत्पद्यंतेतथाब्रह्मदिव्यमानंदमव्य

यम् ॥ परमात्मेतिचाप्युक्तंविकाराःकामसंज्ञिताः ॥ १८ ॥ सुप्तानांजाग्रतांवाथसर्वेषांयोहृदिस्थितः ॥ नानाविधानिकर्माणिकुरुतेब्रह्मतन्महत् ॥१९॥
कामसंज्ञाभवेत्तेषांतत्कृतानांतुकर्मणाम् ॥ एवंसंसारचक्रंतुशक्तिशक्तिमतोरिदम् ॥ २० ॥ शब्दौप्रियाप्रियौयस्तुतथास्पर्शौप्रियाप्रियौ ॥ प्रियाप्रिया
णिरूपाणिरसान्गंधान्प्रियाप्रियान् ॥२१॥ जानातिसतुविज्ञेयःपरमात्मासनातनः॥विरूपःसतुविज्ञेयःकर्ताकर्मचयोगिभिः ॥ २२ ॥ तयोर्विनश्वरंकर्म
कर्तातुनविनश्यति ॥ यथाचित्रसहस्राणिकुरुतेचित्रकर्मकृत् ॥ २३ ॥ तथाकर्मसहस्राणिकुरुतेपरमेश्वरः ॥ एकैवपरमात्मातुद्विधाभिन्नस्तुदृश्यते ॥
॥ २४ ॥ भोक्ताभोज्यंचलोकेऽस्मिन्नविनाज्ञानचक्षुषा ॥ भोक्तैवसंस्थितोदेवःस्वेच्छयापरमोविभुः॥२५॥येयेविकारादृश्यंतेव्यवहाराश्चभूतले॥ नतेषां
संशयःकार्यःसर्वत्रपरमेश्वरः ॥ २६ ॥ निराकारंमहाघोरंस्वसंवेद्यंपरंध्रुवम् ॥ त्रिवृद्ब्रह्मततोविश्वंकामश्चेच्छात्रयंकृतम् ॥ २७ ॥ स्थूलश्चाऽऽकारवा
न्कामोविद्यतेब्रह्मसंभवः ॥ शुक्लश्चतुर्भुजोह्यद्यःशंखचक्रगदाब्जधृक् ॥ २८ ॥ चतुर्वक्त्रोमहारत्नसुवर्णकुसुमावृतः ॥ युक्तोलक्ष्म्यासरस्वत्यारत्याप्रीत्या
चसर्वशः ॥ २९ ॥ कीर्त्याशांत्यातथापुष्ट्यातुष्ट्यापक्षीश्वरेणतु ॥ आसीद्देवयुगेदेवःप्रद्युम्नोभगवान्हरिः ॥ ३० ॥ कामःकृतयुगेचाथबभूवजगतां
प्रियः ॥ पूर्णेंदुवदनःश्यामोदिव्यलावण्यलोचनः ॥ ३१ ॥ कुंचितासितकेशश्चमणिहेमविभूषितः ॥ पाशांकुशधनुर्बाणोरक्ताक्षःक्षीरसागरे ॥ ३२ ॥
स्थितोलक्ष्म्यासुभद्राद्यारुक्मिण्याभद्रयातथा ॥ रक्तोरत्यासहायस्तुकदाचिन्मन्मथोगतः ॥ ३३ ॥ संप्रेषितस्तुविबुधैःपुरींचंद्रप्रभांकिल ॥ तपश्चंद्र
ललाटस्यप्रधर्षयितुमेवहि ॥ ३४ ॥ दिव्यैःशब्दादिभिर्घोरैर्बाणैःपुष्पमयैःशुभैः ॥ उन्मील्यनेत्रेदृष्टश्चकैलासनिलयेनतु ॥ ३५ ॥ पृष्टश्चकोऽसिकेनापि
सचोक्तोवेत्स्यसेतुमाम् ॥ कामोसीतिहरेणोक्तोब्रह्मणोक्तःपुनश्चसः ॥ ३६ ॥ रुद्रमांवेत्स्यसेदिष्ट्यातेनपृष्टःपुनश्चसः ॥ किमागमनकृत्यंतेतेनोक्तस्त्वां
विमोहितुम् ॥ ३७ ॥ कथमित्येवतेनोक्तस्तेनोक्तोसौबलार्दितः ॥ किंतेबलंचतेनोक्तःपश्यमेकुसुमानियत् ॥ ३८ ॥ इत्युक्त्वापुष्पबाणैस्तुहृदयंभेत्तुमुद्य
तः॥कामश्चंद्रललाटस्यततःक्रुद्धःसदारुणः॥३९॥ललाटनयनादग्निर्निष्क्रांतोयेनमन्मथः॥महारक्तारुणोदग्धःसर्वभूतमनोहरः॥४०॥तस्मिन्दग्धेमहादेवं
स्तुत्वाकामांतकंरतिः ॥ प्रजापतिसुतालेभेवरंबालेंदुशेखरात्॥४१॥मयस्यचगृहेजन्मवंचनंशंबरस्यच॥ भर्त्रासमागमोभूयोद्वापरस्यविपर्यये ॥ ४२ ॥
रुद्रेणयापरादग्धाललाटनयनाग्निना ॥ कामस्यमूर्तिराद्यासापुनर्जाताहरेर्गृहे ॥ ४३ ॥ त्रैलोक्यजयिनोविष्णोःप्राद्युम्नीतैजसीशुभा ॥ हरितश्यामवर्णा
चसर्वभूतमनोहरा ॥ ४४ ॥ रुक्मिण्यांजातमात्रस्तुशंबरेणहृतःपुरा ॥ तामसंज्ञानमाश्रित्यमायावत्यैसमर्पितः ॥ ४५ ॥ तयासंवर्धितोभूयःपूर्वरत्या
पतिश्चसः ॥ योधितस्तुततस्तेनशंबरोनिहतोयुधि ॥४६॥ साचकामस्यभार्यास्याद्रतिर्लब्ध्वावरंहरात् ॥ शंबरंवंचयित्वातुभूयोलेभेपतिंचतम् ॥४७॥

सचापिकामस्तांभार्यांलब्ध्वाभूयोऽभवत्सुधीः ॥ शंबरस्यधनंदारान्गृहीत्वाद्वारकांगतः ॥ ४८ ॥ भूयोनारायणगृहंप्राप्यसंहृष्टमानसः ॥ राज्यं
तुशंबरपुरेऽकरोद्विष्णुबलाश्रयात् ॥ ४९ ॥ क्रीडंतंद्वारकोद्यानेकदाचिच्छुंभदानवः ॥ नीत्वाभ्रात्रेददौप्रीत्याभक्षयेमंपंशुत्विति ॥५०॥ तस्मात्संगृह्य
तंदूरंनभोनीत्वाजहौततः ॥ निशुंभोविबुधस्थानाद्दशमाद्वातवर्त्मनः ॥ ५१ ॥ ततःसंविध्यशैलाग्रेशुंभस्यनगरेशनैः ॥ पतितोलब्धसंज्ञस्तुप्र
द्युम्नोधन्विनांवरः ॥ ५२ ॥ उद्यानेदैत्यकन्यांचलब्ध्वालक्ष्मींजहारच ॥ क्षीरोदकन्यांसन्नाम्नींक्षत्रधर्मेणधर्मवित् ॥ ५३ ॥ नागपाशैस्ततोबद्धासभा
र्योविंध्यपर्वतात् ॥ विनिर्जित्यमहाबुद्धिर्नीत्वासंस्थापितोगिरौ ॥ ५४ ॥ हिमाचलस्यशृंगेतुवितस्तातीरजेततः ॥ वज्रपंजरमध्यस्थोरक्षमाणस्तु
दानवैः ॥ ५५ ॥ विषमैर्नागभोगैस्तुदह्यमानोविषोल्बणैः ॥ दुर्गांसंस्मृतवान्भक्त्याविष्णुशक्तिंमहाबलाम् ॥ ५६ ॥ स्मृतमात्रापिसाऽपश्यद्रक्ष्यमा
णंचतंतदा ॥ नानाविधैरुपायैस्तत्पंजरंनशशाकसा ॥ ५७ ॥ यदाप्रवेष्टुंशस्त्रास्त्रैःसन्नद्धंचतदातुसा ॥ सारिकारूपमकरोद्धृद्यंचमधुरस्वरम् ॥ ५८ ॥
सारिकांवाशतींदृष्ट्वालक्ष्मीःशुंभासुरात्मजा ॥ क्वचिदंतःपुरपर्तिबभाषेमत्तकामिनी ॥ ५९ ॥ भर्तुर्विनोदनार्थंतुममापिचमहामते ॥ दीयतांसा
रिकांबद्धायदिजानासिसौहृदम् ॥६०॥ तस्यास्तद्वचनंश्रुत्वागृहीत्वासारिकांचताम् ॥ क्रीडार्थंतुददौतस्यैनिःशंकोदानवश्वसः ॥६१॥ गवाक्षकोटरेणै
वकेनापिविवरेणतु ॥ वज्रपंजरमध्यंतुप्राप्यसासारिकापुनः ॥६२॥ घोरंतद्रूपमाश्रित्यविददाराथपंजरम् ॥ तस्मिन्संचूर्णितेघोरेदुर्भेद्येदेवदानवैः ॥६३॥
द्वेव्यानीलाजवपुषामहालावण्ययुक्तया ॥ श्रीमत्प्रत्यग्रतारुण्ययुक्तयागोपकन्यया ॥ ६४ ॥ ततःशुंभगदांप्राप्यपंजरद्वारसंस्थिताम् ॥ प्रद्युम्नोदै
त्यसंघातंनिर्जघानमहाबलः ॥ ६५ ॥ ततःशुंभनिशुंभौतुदृष्ट्वासैन्यक्षयंमहत् ॥ प्रद्युम्नंपाशनिर्मुक्तंचूर्णितंपंजरंमहत् ॥ ६६ ॥ वासुदेवस्यभगिनीं
दृष्ट्वाकामवशंगतौ ॥ परस्परमथाब्रूतांभ्रातरौयुद्धलालसौ ॥ ६७ ॥ ममेयंतवनेयंस्यादहमेनांहरामिभोः ॥ शत्रोरियंत्राणभूताममयेनहृतासुता॥६८॥
एवंतुवक्ष्यमाणौतुप्रोक्तौगोपेंद्रकन्यया ॥ अनेनक्षत्रधर्मेणहृतेयंदुहितातव ॥ ६९ ॥ लभ्याह्यहमनेनैवविधिनादानवर्षभौ ॥ पराक्रमंभवद्भ्यांतुपश्ये
यमितिमेमनः ॥ ७० ॥ तस्यास्तद्वचनंश्रुत्वाततोयुद्धंप्रचक्रतुः ॥ पश्यतामथसर्वेषांप्रद्युम्ननिकटेमहत् ॥ ७१ ॥ ततोमहागदाघातैरन्योन्येननिं
पातितैः ॥ तेनोपायेनतौहत्वामोचयित्वातुयादवम् ॥ ७२ ॥ सभार्योद्वारकांनीत्वादेवीचांऽतर्दधेपुनः ॥ तस्यांपुत्रस्तयोर्जातःसशुंभनगरेऽभवत्
॥ ७३ ॥ राजापरमधर्मात्माविष्वक्सेनइतिश्रुतः ॥ मायावत्यास्तुयःपुत्रोमयोनाम्नानृकेसरी ॥ ७४ ॥ सशंबरपुरेराजाबभूवरिपुमर्दनः ॥ ७५ ॥
इतितवकुसुमेषोर्दिव्यमाहात्म्ययुक्तंललितपदवचोभिःश्रोत्रपेयैर्मनोज्ञैः ॥ तदनुशृणुरहस्यंमन्मथस्यप्रभावंसकलजनमनांसिक्षोभितुंयस्तुजातः॥७६॥

इतिश्रीशिवपुराणेधर्मसंहितायामष्टमोऽध्यायः ॥ ८॥ ॥ सूतउवाच ॥ मत्स्यःकूर्मोवराहश्चनारसिंहश्चवामनः ॥ रामोरामश्चकृष्णश्च
बुद्धःकल्कीहरिर्दश ॥ १ ॥ योगेंद्राणांप्रधानश्चसंसारभयनाशनः ॥ दुष्टनिर्हरणःश्रीमान्क्षीरोदार्णवसंभवाम् ॥ २ ॥ लक्ष्मीमुरसिसं
धत्तेमन्मथेनवशीकृतः ॥ पुरादेवासुराःसर्वेजरामृत्युभयार्दिताः ॥ ३ ॥ ममंथुरमृतंदिव्यंक्षीरोदेसागरोत्तमे ॥ अमृतेमथ्यमानेतुश्रीश्चलोकमहेश्वरी
॥ ४ ॥ धन्वंतरिश्शशांकौचपारिजातोमहाद्रुमः ॥ उच्चैःश्रवाश्चतुरगोगावःपीयूषमेवच ॥ ५ ॥ पुनश्चमथ्यमानेचकालकूटंमहाविषम् ॥ युगांतान
लसंकाशंसुरासुरभयावहम् ॥ ६ ॥ पीयूषजन्मकालेतुबिंदवोयेबहिर्गताः ॥ तेभ्यःकन्याःसमुद्भूताअनेकाद्भुतदर्शनाः ॥ ७ ॥ शरत्पूर्णेंदुवदनास्तडि
त्सूर्यानलप्रभाः ॥ काश्चिदुत्पलसंकाशाःकाश्चित्पुलकसन्निभाः ॥ ८ ॥ काश्चित्कनकसंकाशाःकाश्चिद्विद्रुमसन्निभाः ॥ मसारसदृशाःकाश्चित्का
श्चिद्रजतसंनिभाः ॥ ९ ॥ सुप्रभाःपद्मगर्भाभाःफुल्लनीलाब्जलोचनाः ॥ लावण्यामृततोयेनसिंचयंत्योदिशोदश ॥ १० ॥ दुःखशोकजरामृत्युरोगा
णाममृतप्रभाः ॥ हारकेयूरकटकैर्दिव्यरत्नैरलंकृताः ॥ ११ ॥भिंदंतिहृदयानीवरसाद्यामधुरस्वनैः ॥ जगदुन्मादयंत्येवभ्रूभंगापांगवीक्षणैः ॥ १२ ॥
कोटिशस्ताःसमुत्पन्नास्त्वमृताःकाममिश्रिताः ॥ ततोऽमृतंसमुत्पन्नंजरामृत्युनिवारणम् ॥ १३ ॥ कालकूटंशशांकंचशरीरेधृतवान्हरः ॥ जग्राहार्क
स्तुरंगंतुपारिजातंशचीपतिः ॥ १४ ॥ कौस्तुभंचाश्रयद्विष्णुःसर्वेधन्वंतरिंजनाः ॥ अमृतार्थंकृतंयुद्धंदेवदैत्यैःपरस्परम् ॥ १५ ॥ युगांतमिवसंक्षु
ब्धैरनलार्कसमप्रभैः ॥ हृतंसोमंचदैतेयैर्बलाद्विष्णुश्चमायया ॥ १६ ॥ स्त्रियाविलासरूपिण्यापुनर्वैविष्णुनाहृतम् ॥ दृष्ट्वाऽनंदोभवत्स्वर्गेपानस्त्रीभोज
नादिषु ॥ १७ ॥ प्रत्यक्षमिहसर्वेषुदृश्यतेलोकसाक्षिकम् ॥ इत्युक्त्वाप्रददुस्तस्मैविष्णवेछद्मरूपिणे ॥ १८ ॥ एतस्मिन्नंतरेदृष्ट्वास्त्रियोदानवपुंगवाः ॥
अनयन्नमृतोद्भूतायथास्थानंयथासुखम् ॥ १९ ॥ तासांपुराणिदिव्यानिस्वर्गाच्छतगुणान्यपि ॥ घोरैर्यंत्रैःसुगुप्तानिमयमायाकृतानिच ॥ २० ॥
सुरक्षितानिसर्वाणिकृत्वायुद्धायनिर्ययुः ॥ अदृष्ट्वैवस्त्रियोदैत्याःकृत्वासमयमेवहि ॥ २१ ॥ एताःस्त्रियोनस्प्रष्टव्यामायादिदेवैर्विनिर्जिताः ॥ सिंहनादांस्त
दाचक्रुःशंखान्दध्मुःपृथक्पृथक् ॥ २२ ॥ पूरयंतइवाकाशंतर्जयंतोबलाहकान् ॥ ततःसमागतादेवायुद्धायकृतनिश्चयाः ॥ २३ ॥ आयुधैर्विविधैरस्त्रैर्जिघां
संतःपरस्परम् ॥ ततोदैत्याहतादेवैर्विष्णुनाचमहात्मना ॥ २४ ॥ हतावशिष्टाःपातालंविविशुर्विवराणिच ॥ अनुवव्राजतान्विष्णुश्चक्रपा
णिर्महाबलः ॥ २५ ॥ पातालंपरमंगत्वासंस्थिताभीतभीतवत् ॥ एतस्मिन्नंतरेविष्णुर्ददृशेमृतसंभवाः ॥ २६ ॥ कांतपूर्वेंदुवदनादिव्यला
वण्यगर्विताः ॥ समोहितःकामबाणैर्लेभेतत्रैवनिर्वृतिम् ॥ २७ ॥ ताभिश्चवरनारीभिःक्रीडमानोबभूवह ॥ ताभ्यःपुत्रानजनयन्महाबलपरा

क्रमान् ॥ २८ ॥ कंपयंतोमहींसर्वांनानायुद्धविशारदान् ॥ एतस्मिन्नंतरेब्रह्मादेवदेवंव्यसर्जयत् ॥ २९ ॥ स्वर्गस्यरक्षणार्थायविष्णोरानयना
यच ॥ ततोवृषभरूपेणगर्जमानःपिनाकधृक् ॥ ३० ॥ प्रविष्टोविवरंतत्रविनदन्भैरवान्रवान् ॥ निष्पेतुस्तस्यनिनदैःपुराण्यंतःपुराणिच ॥ ३१॥ ततः
क्रुद्धाहरेःपुत्राःसंग्रामायव्यनोदयन् ॥ तान्रुद्रोदंतरूपेणखुरैःशृंगैर्व्यदारयत् ॥ ३२ ॥ हतेषुतेषुनिष्क्रम्यययौविष्णुर्हरांतिकम् ॥ शरैःसंताडयामासादि
व्यैरस्त्रैश्चकेशवः ॥ ३३ ॥ अस्त्राणितानिविष्णोश्चजग्रासगिरिगोचरः ॥ हरिर्विज्ञायगौरीशमागतंतंजगत्पतिम् ॥ ३४ ॥ प्राहगंभीरयावाचाभगवन्क्ष
म्यतामिति ॥ तस्यतद्वचनंश्रुत्वाभगवानाहशंकरः ॥ ३५ ॥ आत्मानंकिंनजानीषेत्वंहिविश्वस्यकारणम् ॥ त्वयानाऽत्ररतिःकार्यानिवर्तस्वममाज्ञया
॥ ३६॥ तच्छ्रुत्वाव्रीडमानस्तुविष्णुःप्राहमहेश्वरम् ॥ ममात्रविद्यतेचक्रंतद्गृहीष्यामिसत्वरः ॥ ३७ ॥ तमुवाचमहादेवश्चक्रमत्रैवतिष्ठताम् ॥ दुष्टानांदै
त्यसंघानांछिनत्तुवदनान्यपि ॥ ३८ ॥ अहंघोरतमंतस्माच्चक्रमन्यद्ददामिते ॥ एतदुक्त्वाहरोलिख्यदिव्यंकालानलप्रभम् ॥ ३९ ॥ विष्णवेप्रददौ
चक्रंघोरार्कायुतसुप्रभम् ॥ लब्ध्वासुदर्शनंचाऽन्यत्केशिहाविबुधांस्ततः ॥ ४० ॥ उवाचनार्यःपातालेविद्यंतेयौवनंगताः ॥ ताभिःसार्द्धंमहाक्रीडांयःक
रोतिकरोतुसः ॥ ४१ ॥ तच्छ्रुत्वाकेशवाद्वाक्यंसर्वास्त्रिदशयोनयः ॥ प्रवेष्टुकामाःपातालंविष्णुनासहितास्ततः ॥ ४२ ॥ एतस्मिन्नंतरेकालेविज्ञायभ
गवान्हरः ॥ क्रोधाच्छापंददौघोरंदेवयोन्यष्टकस्यच ॥४३॥ वर्जयित्वामुनिंशांतंदानवंवामदंशजम् ॥ इदंयःप्रविशेत्स्थानंसयातुनिधनंक्षणात् ॥४४॥
श्रुत्वावाक्यमिदंघोरंमनुष्यहितवर्द्धनम् ॥ प्रत्याख्यातास्तुरुद्रेणदेवाःस्वगृहमभ्ययुः ॥ ४५ ॥ कस्यचित्त्वथकालस्यचिंताविष्टंमहेश्वरम् ॥ उवाचपार्व
तीदेवीकिंचिंतयसिशंकर ॥ ४६ ॥ स्रष्टासिसर्वभूतानांजगतःकारणंपरम् ॥ एवंसंचोदितोदेव्याप्राहवाक्यंत्रिलोचनः ॥ ४७ ॥ वैवराणांचस्त्रीणांचरूपं
संचिंतयाम्यहम् ॥ त्रैलोक्येतादृशीनारीयतोऽव्यापिनविद्यते ॥ ४८ ॥ एतच्छ्रुत्वातुवचनंपुनःप्राहपतिंचसा ॥ अहोबतमहद्दुःखंयत्रत्वमसिविस्मितः
॥ ४९ ॥ गंतुमिच्छाम्यहंद्रष्टुंयद्यनुज्ञाभवेन्मम ॥ एवंकुरुष्वेत्युक्त्वातुशिवेनपरमात्मना ॥५०॥ प्रविवेशबिलंतूर्णंवक्रच्छायेवदर्पणम् ॥ तामभ्येत्यां
गनाःसर्वाःसूर्यमित्येवचिंतयन्॥५१॥भास्करोऽयंसमुदितःकिंस्वित्पातालगह्वरे॥ इतिसंचिंतयंत्यश्चकन्यारूपमदालसाः ॥५२॥ पार्वतीतुततोदृष्ट्वाना
र्चयंतीर्विमोहिताः॥तासांरूपंसमालोक्यसंहृष्टाप्राहपार्वती॥५३॥यूयंविषलताकारावृथारूपाणिबिभ्रथ॥श्वभ्रेपुष्पफलानिवदुर्बोधकमलानिच ॥ ५४ ॥
युष्मदीयंतथारूपमभोग्यंसर्वदेहिनाम् ॥ स्त्रियःपुंसोपभोगार्थंप्रजापतिरथाऽसृजत् ॥ ५५ ॥ कन्यास्तद्वचनंश्रुत्वाकेयंस्यादित्यचिंतयन् ॥ ज्ञात्वातु
पार्वतींतांतुततोभूमौनिपत्यच ॥५६॥ स्तोत्रैर्नानाविधाकारैरंबिकांसमतोषयन् ॥ ततस्तुष्टाचसाताभ्योवरंदत्तवतीपुनः ॥ ५७ ॥ युष्माकंपतयःश

म्राःप्रविशंतश्चशंभुना ॥ इदानींममपुत्राश्चमनुष्याःशांकरागणाः ॥ ५८॥ ज्ञानविज्ञानपूताश्चमंत्रपूताश्चतापसाः ॥ युष्माकंपतयःसंतुरूपयौवनगर्वि
ताः ॥ ५९ ॥ रमध्वंतैर्नरैःसार्धमित्युक्त्वांतरधीयत ॥ एवंस्त्रीलंपटोविष्णुःपूर्वमासीत्प्रजापतिः॥६०॥भ्रातॄणांदैत्यमुख्यानांहतानांदारुणेयुधि॥स्त्रियो
हृत्वातुपातालेचिक्रीडचमुमोदच ॥ ६१ ॥ त्रेतायुगेरामरूपीविष्णुःसंप्राप्यजानकीम्॥ नोतृप्तःस्त्रीविलासानांवित्तस्यचसुतस्यच॥ ६२ ॥ रेतःसंप्रेषण
श्चापिप्रोषितस्यस्त्रियामपि ॥ तस्मात्कलियुगेभूयोगृहीत्वाजन्मकेशवः ॥ ६३ ॥ वसुदेवस्यदेवक्यांमथुरायांमहाबलः ॥ बालस्तुगोपकन्याभिर्वनेक्री
डांचकारसः ॥ ६४ ॥दशलक्षाणिपुत्राणांगोपालानांससर्जह ॥ ततस्तुयौवनाक्रांतोरुक्मिणींप्रददर्शह ॥ ६५ ॥ विवाहयित्वापुत्रांश्चप्रद्युम्नाद्यांश्चनिर्ममे
॥ तथापिनरकंदैत्यंप्राग्ज्योतिषपतिंबलात् ॥ ६६ ॥ हत्वास्त्रीणांसहस्राणिषोडशैवजहारसः ॥ तासांरतिफलंभुक्त्वापुत्राणांनवार्तितथा ॥ ६७ ॥
सहस्राणिससर्जांशुमत्स्येचांऽडंमहाद्भुतम् ॥ स्त्रीणांतथापिनोतृप्तोदिव्यानांतुरतेर्यदा ॥ ६८ ॥ तदाराधास्त्रियंकांचिन्निशिधैर्यादधर्षयत् ॥ तथापि
परनारीणांलंपटोनित्यमेवहि ॥६९॥ सकामाचाऽनुरक्ताचयतोनारीसुदुर्लभा ॥ विचित्रंहिसुखंमुक्तावित्याहुर्येमतंनतत् ॥ ७० ॥ भातिमेइमवदीशो
वाततःप्रकृतिमास्थितः॥यदान्योन्यहृतंचेतोयूनोःसमुपजायते॥७१॥नतदाहृश्यतेधर्मोहृश्यतेनचवाकुलम् ॥ ब्रह्मापद्मोद्भवःशांतोयोगध्यानपरायणः
॥ ७२ ॥ चतुर्वक्त्रश्चरक्तांगोगुरूणांसद्गुरुर्महान् ॥ दीर्घायुर्जनकःप्राज्ञोवेदवेदांगपारगः ॥ ७३ ॥ गौर्याविवाहेतत्पादौदृष्ट्वाप्रस्खलितोऽभवत् ॥ यत्रते
वालखिल्यास्तुजाताःसद्ब्रह्मचारिणः ॥७४॥ इतिकथितमशेषंदिव्यनीलाब्जकांतेर्मधुरिपुरितिनाम्नाशुद्धनीलाब्जवर्णम् ॥ चरितमतिरहस्यंदिव्यला
वण्ययुक्तंमदनविजितबुद्धेःपद्मयोनेश्चविप्राः॥७५॥इतिश्रीशिवमहापुराणेचतुर्विंशतिसाहस्र्यांधर्मसंहितायांनवमोऽध्यायः॥९॥सूतउवाच ॥श्वेतोरक्तोम
हानीलोभिन्नांजनचयोपमः॥सर्वरूपधरोरुद्रोदंष्ट्रालोदारिताननः ॥ १॥ शांतोदांतोजितक्रोधःसंयमीविगतस्पृहः ॥ नारायणस्ततोजातःसृष्ट्यर्थंतेनयो
जितः॥२॥आपोनाराइतिप्रोक्ताआपोवैनरसूनवः॥अयनंतस्यताःप्रोक्तास्तेननारायणःस्मृतः॥३॥तपसोऽतेकरिष्यामिस्रष्टिमित्येवाचिंत्यसः ॥ तपसासु
परिश्रांतःक दाचित्क्षीरसागरे॥४॥सुष्वापसुचिरंकालंदुर्लक्ष्यस्तुहरोयदा॥तदापिरजसाविष्णुःसत्वेनचचतुर्मुखः ॥५॥प्रसादजःपुनःसृष्टोनियुक्तोविधिव
त्कृतः॥प्रथमंतामसंसर्गंपंचभेदमथाऽसृजत्॥६॥ततस्तुमानुषंसर्गमसृजद्राजसंज्ञनैः॥दैवमष्टप्रकारंतुसात्विकंचाऽसृजत्क्रमात् ॥ ७ ॥ ततःस्थानानिध
र्माश्चजीवितंपरिपालनम्॥आहारमपिसर्वेषांतथाचान्योन्यभक्षणात् ॥८ ॥ कृत्वासर्वगतोदेवस्तत्रैवांतरधीयत ॥ एवंकृतेततोरुद्रस्त्यक्त्वानिद्रांसमुत्थि
तः॥९॥संसरन्सृष्टिकामश्चददृशेपूरितंजगत् ॥ भूतैर्नानाप्रकारैस्तुजगदेतच्चराचरम्॥१०॥ऊर्ध्वंमध्येऽथपातालेताहृक्स्थानंनविद्यते ॥ यन्नभूतगणैर्व्या

तंमिथुनैर्युग्मचारिभिः ॥ ११ ॥ मोदमानंजगद्दृष्ट्वासृष्टिहेतुर्महाद्भुतम् ॥ चिच्छेदकुपितोलिंगांकिमनेनेतिचिंत्यसः ॥ १२ ॥ महाज्वालामयंघोरंस्तं
भभूतंजगत्त्रये ॥ यस्यनांतंनमध्यंचनोमूलमिहदृश्यते ॥ १३ ॥ नोपमानंप्रमाणंवातेजसोवास्थवीयसः ॥ प्रशांतरोषस्तत्कृत्वारुद्रश्चांऽतर्दधेपुनः
॥ १४ ॥ ततोबहुतिथेकालेगतेदर्पसमन्वितौ ॥ ब्रह्मविष्णूप्रकुपितौलिंगंपरमपश्यताम् ॥ १५ ॥ ज्वालालिंगंसमुद्रांतेज्वलंतंस्वेनतेजसा ॥ कस्येद
मितिसंचिंत्यसर्वाकारंसुलक्षणम् ॥ १६ ॥ तद्दृष्ट्वादर्पनशनंतयोरन्योन्यदर्शनात् ॥ शांतदर्पौततस्तौतुपितापुत्रौचसौहृदात् ॥ १७ ॥ परस्परंसमा
लिंग्यकार्यमेतत्प्रचक्रतुः ॥ इदंज्वालामयंलिंगंकस्यस्यादितिचिंत्यतौ ॥१८॥ यस्माल्लिंगसहस्राणिनिर्गच्छंतिविशंतिच॥अन्वेष्यावोऽस्ययन्मूलंयदूर्ध्वं
चेहदृश्यते ॥ १९ ॥ विष्णुनाचततोमूलमन्वेष्टुंब्रह्मणातथा ॥ सम्यगूर्ध्वंचयुगपद्यावदंतोनविद्यते ॥ २० ॥ ततस्तेनैवमार्गेणनिष्क्रम्यजलधेस्तटे ॥
परस्परंसमालिंग्यश्रांतौविविशतुश्चतौ ॥ २१ ॥ अश्रौषतांततोवाचंनभसःकस्यचित्तुह ॥ इदंचंद्रललाटस्यलिंगंज्वालामयंसुरौ ॥ २२ ॥ कुपितेन
तुयच्छित्त्वाभूमौत्यक्तंकपर्दिना ॥ एतत्संपूज्यसिद्धिर्वांभविष्यत्यद्भुतोपमा ॥ २३ ॥ एताद्दिशांकरंलिंगंपूजयिष्यंतियेभुवि ॥ बलिपुष्पोपहारैश्चतेषां
प्रीतःपिनाकधृक् ॥ २४ ॥ प्रदास्यत्युत्तमान्कामान्सदेवोभक्तवत्सलः ॥ तच्छ्रुत्वाचक्रतुःस्तोत्रंतस्मैदेवायरंहसा ॥ २५ ॥ तौपूजयित्वाविधिवत्सं
प्राप्तौसिद्धिमुत्तमाम् ॥ ततोऽन्यस्मिन्महाकल्पेदेवैर्दृष्टस्तुशंकरः ॥ २६ ॥ अर्धनारीशरीरस्तुकामशत्रुःपिनाकधृक् ॥ अन्यस्मिन्कल्पसमयेगृहस्था
श्रमवानपि ॥ २७ ॥ हिमवंतगुहायांतुभूतसंघैःसमावृतः ॥ कदाचित्पार्वतीतत्रकालीगौरत्वलब्धये ॥२८ ॥ ब्रह्माणमर्चयित्वातुतपस्तप्तुंगतावनम् ॥
दिव्यंसतीसरश्चापिजयंतींतुमहागुहाम् ॥ २९ ॥ राजवासगुहांचापितत्रदृष्ट्वापितामहाम् ॥ हरिगात्रैःसमग्रैश्चसंस्पृश्यचमहामतिः ॥ ३० ॥ शुद्धजांबू
नदप्रख्याप्रसादाद्ब्रह्मणोऽभवत् ॥ तपोवनंतुगच्छंत्याउद्दामकुसुमासखी ॥ ३१ ॥भर्तुःस्त्रीलंपटस्यापिरक्षार्थंविनिवेशिता ॥ एकस्मिन्द्वारदेशेतुद्वि
तीयोवीरकःसुतः॥३२॥ईर्ष्यादोषेणतावुक्तौभवद्भ्यांनित्यमेवहि॥रक्षितव्योलंपटोयंयथाऽन्यांमद्गृहेस्त्रियम्॥३३॥प्रवेश्यनोपभोक्तास्यात्पतिर्मेजाह्नवी
प्रियः ॥ संध्यारागीकामशत्रुःसंध्यारागसमप्रभः ॥ ३४ ॥ बाढंबाढमितीत्युक्तातावितानींप्रणम्यताम् ॥ गौरीद्वारगतौनित्यंदिवारात्रंतुत
स्थतुः ॥ ३५ ॥ आडीनामततोदैत्यस्तस्मिन्कालेपितामहम् ॥ आराध्यतपसादेवममरत्वमयाचत ॥ ३६ ॥ ततःसतेनदुर्मेधानकिंचिदमरस्त्व
ति ॥ अमरत्वेमहादैत्यहेतुमात्रंगृहाणभोः ॥ ३७ ॥ तस्यतद्वचनंश्रुत्वादैत्योहेतुंतमुक्तवान् ॥ देवरौद्रेमुहूर्तेतुऋक्षेचांद्रेतिसंज्ञिते
॥ ३८ ॥ यदारूपत्रयंदेवकुर्मिमार्मितदात्वहम् ॥ आखंडलोमहावृष्टिपुष्करावर्तकैर्घनैः ॥ ३९ ॥ कल्पापायेनिरुक्चंद्रःसरीसर्त्यनिलोमहान् ॥

शिखंडीचनरीनर्तिंदृष्ट्वापूर्णपयोधरम् ॥ ४० ॥ यदातदामेभगवन्प्रदानादस्तुमेमृतिः ॥ एवमस्त्वितितेनोक्तःसदैत्योमुदितोऽभवत् ॥ ४१ ॥
मत्तःकादंबरींपीत्वातुषारशिखरंययौ ॥ यत्रसाशंकरगुहादाक्षायण्यागृहंमहत् ॥ ४२ ॥ उद्दामकुसुमांतत्रवीरकंचददर्शसः ॥ पप्रच्छतौसताभ्यांचय
थावृत्तमथाऽशृणोत् ॥ ४३ ॥ दैत्यस्त्रीलंपटंरुद्रंसंविज्ञायतयोर्मुखात् ॥ प्रवेष्टुकामस्तुगुहांपौरुषंरूपमत्यजत् ॥ ४४ ॥ आश्रित्यसर्परूपंतुप्रविश्यच
गुहांतरम् ॥ तेनोपायेनतौमूढौमोहयित्वाचमूढधीः ॥४५ ॥ गौरीरूपंक्षणात्कृत्वातृतीयमपिचाऽद्भुतम्॥महेश्वरमुवाचेदंविरहोत्कंठमानसम् ॥ ४६ ॥
भोभोश्चंद्रललाटाऽहंपार्वतीगिरिगोचरा ॥ संप्राप्तोत्कंठितातुभ्यंब्रह्मदत्तवरासती ॥ ४७ ॥ पश्यजांबूनदप्रख्यांमांक्रीडस्वचमेप्रिय ॥ तद्वाक्यो
न्मीलिताक्षस्तुविरूपाक्षःस्फुटाक्षरम् ॥ ४८ ॥ प्रियामिवभुजाभ्यांतुपर्यष्वजतहृष्टवत् ॥ कृत्रिमांतुरतिंकृत्वाततोबाह्यरतिंपुनः ॥ ४९ ॥ अंतरेच
गतोलिंगंसददर्शमहाद्भुतम् ॥ विश्वकर्मकृतंतस्यांकनकाभंमहर्द्धिमत् ॥ ५० ॥ पश्चात्रिशूलमध्येतुयथासद्भावजांरतिम् ॥ स्नेहसद्भावलिंगंतत्तच्चगात्रं
महामृदु ॥ ५१ ॥ तथापिशंकितःकिंचिज्जातःकामातुरश्वसः ॥ चकारसुरतक्रीडांतावद्व्रमयोभगः ॥ ५२ ॥ उत्पाद्यदंडमुशलेतस्यालिंगविकर्तनम्॥
कर्तुंसमुद्यतोघोरोदानवःस्त्रीवपुर्धरः ॥ ५३ ॥ हरोपितांमहामायांविज्ञायत्वन्यथाऽसृजत् ॥ शूलपाशुपतादीनिलिंगाग्रान्निःसृतान्यपि ॥ ५४ ॥ ततो
रतांतेरुद्रस्यदैत्योरूपंजहौस्त्रियाः ॥ परिच्छिन्नसुहृद्बंधुविषयाणींद्रियाणिच ॥ ५५ ॥ हत्वादैत्यंमहादेवोवीरकायाप्यदर्शयत् ॥ ततःसशंकितःस्त्री
णांविश्वासंनाऽकरोत्कचित् ॥ ५६ ॥ तत्रदैत्येनपततापृष्टेनोक्तोमहेश्वरः ॥ हेभद्रदानववरत्वयायुद्धेपराजितः ॥५७॥ अहंमृतोममभ्रातावियतेसुमहा
बलः ॥ त्वांहंतुंसइहागंतापुनर्गौरीवपुर्धरः ॥ ५८ ॥ त्वांमारयिष्यत्यथवाममममार्गगमिष्यति ॥ शत्रोरुक्त्वावचस्त्वेतत्पपातचममारच ॥ ५९ ॥ इति
हृत्कमलेकृत्वायदीयंनतुपार्वती ॥ स्वयमेवप्रियाभार्यामहासाध्वीमनागसा ॥ ६० ॥ प्रविष्टास्त्रीतिसंचिंत्यरुद्रःक्रोधवशानगः ॥ तस्मिन्कालेमहादै
त्यंदृष्ट्वानारीवपुर्धरम् ॥ ६१ ॥ उद्दामकुसुमागत्वागौर्यैसर्वंन्यवेदयत् ॥ देविनाऽहंसमर्थोऽस्मिपतिंसंरक्षितुंतव ॥ ६२ ॥ वीरकेणमहाधन्याकाचिन्नारी
प्रवेशिता ॥ तयासहमहाक्रीडांचक्रेबालेंदुशेखरः ॥ ६३ ॥ अहंतुव्रीडिताचाऽऽसंदृष्ट्वातत्क्रीडितंवपुः ॥ तच्छ्रुत्वाकुपितापुत्रमशपद्वीरकंचसा ॥६४॥
गौरीलब्धवराभूत्वास्वगृहंगंतुमुद्यता ॥ प्राङ्मुखीचाब्रवीद्वाक्यंतोयेनाऽऽचम्यसत्वरा ॥ ६५ ॥ मनुष्योभविताविप्रोजन्ममृत्युजराश्रयी ॥ वीरकोयेन
मेनारीगृहेकाचित्प्रवेशिता ॥ ६६ ॥ प्रमादिनावीरकेणस्त्रियोरुद्रोनरक्षितः ॥ इत्युक्त्वाकुपिताहृष्टासोत्कंठाजातविस्मया ॥ ६७ ॥ सकामाशंकिता
दीनारौद्रवीरभयानकान् ॥ करुणांवाथबीभत्सांकेलिंकिंचित्तुकारिणी ॥ ६८ ॥ ददर्शस्वगृहेपुत्रंपतिंचाऽनागसंतथा ॥ एवंभूतांसुतोदृष्ट्वापादयोःप

तितोऽब्रवीत् ॥ ६९ ॥ देविधन्यासिभद्रंतेदिष्ट्याजवितितेपतिः ॥ आडिनादानवेंद्रेणनहतोदैत्यमायया ॥ ७० ॥ तच्छ्रुत्वादुःखितागौरीशप्त्वातंवीर
कंरुषा ॥ उवाचपुत्रशतोऽसि महामोहनमानवः ॥ ७१ ॥ भविष्यसिशिलादस्यपुत्रपुत्रोमहीतले ॥ तत्रद्वादशभिर्वर्षैःशापांतोभवितातव ॥ ७२ ॥
पुनस्तेनैवदेहेनममपुत्रोभविष्यसि ॥ तद्वाक्याद्वीरकोनंदीशैलादिरभवत्पुनः ॥ ७३ ॥ तत्रकालंतुतपसाजित्वाभूयोऽनुगोऽभवत् ॥ गौर्याःसकाशंम
तिमान्भगवान्वानराननः ॥ ७४ ॥ अथरुद्रोमहागौरींदृष्ट्वातुशंकितस्तदा ॥ जिघांसुर्दैत्यवाक्येनभैरवंकृतवान्वपुः ॥ ७५ ॥ तस्यरूपसहस्राणिजग्रास
गिरिगोचरा ॥ ग्रस्तेसहस्रेरूपाणांताराद्रूपेप्रदर्शिते ॥७६ ॥ पार्वत्याचाऽथनिःशंकःकपर्दीचाऽभवत्ततः ॥ दृष्ट्वाजगन्मयींतां तुररामसुरतप्रियः ॥७७॥
विरहोत्कंठितांभार्यांप्राप्यभूयांहिमाचले ॥ सतींगौरींराजकन्यांप्राप्यबालेंदुशेखरः ॥ ७८ ॥ यदानसुरतेतृप्तोदेवदारुवनंतदा ॥ विवेशोन्मत्तवेषश्च
स्तब्धलिंगोदिगंबरः ॥ ७९॥ मुनिदाररतिप्रेप्सुर्मन्मथाविष्टचेतनः ॥ तुषारहारशीतांशुशंखतुल्येनभस्मना ॥ ८० ॥ कृतस्नानश्चशुशुभेकर्पूरेणैवधूस
रः ॥ मयूरचंद्रिकापुंजपिच्छिकांधारयन्करे ॥ ८१ ॥ दंडोपरिदृढैःपाशैर्बद्धाखट्वांगकादिकम् ॥ पूर्णेंदुशकलाकारंकपालम् पिधारयन् ॥ ८२ ॥
श्रीमत्प्रत्यग्रतारुण्यगर्वेणोन्मादयन्स्त्रियः ॥ लावण्यस्मितसौभाग्यविलासानपिदर्शयन् ॥ ८३ ॥ व्योमालिकज्जलाकारैःस्निग्धैर्दृढैःसुकुंचितैः ॥
शिरोरुहैस्तथाभातिसूक्ष्मैरष्टांगुलैःशुभैः ॥ ८४ ॥ ललाटस्थैश्चलद्भिस्तुश्वेताब्जमिवषट्पदैः ॥ सुस्निग्धसूक्ष्मकृष्णेनभ्रूयुगेनचशंकरः ॥ ८५ ॥ लो
लाभ्यांकृष्णताराभ्यांविशालाभ्यांचदैत्यहा ॥ कपर्दीभातिनेत्राभ्यांसरागैःप्रेक्षणैश्चलैः ॥ ८६ ॥ बहूनांमुनिदाराणांदर्शनीयोभवत्तदा ॥ संसक्तदृष्टि
रभवन्नवेतस्मिन्समागमे ॥ ८७ ॥ दिव्यांगुलिपरिमाणदिव्यांसश्मश्रुशोभितः ॥ पीनांगोदर्शनीयांगोद्विभुजश्चारुकुंडलः ॥ ८८ ॥ दक्षिणावर्तिभिः
कृष्णैर्लोमाभिर्भूषितोहरः ॥ प्रशस्तमत्तमातंगगतिर्मोक्षगतिप्रदः ॥ ८९ ॥ अतिदिव्यमहारक्तपाणिपादोष्ठभूषितः ॥ सिद्धप्रयुक्तैःस्रग्दामैःसुसुगंधैरकंट
कैः ॥ ९० ॥ आच्छन्नांगस्त्वनंगारिराभातिऋतुसंभवैः ॥ ययौवनंपरिवृतोगणैर्भस्मांगरूषिभिः ॥ ९१ ॥ गायन्बाणैश्चसंयुक्तोदशभिर्मधुरा
दिभिः ॥ दोषैर्विरहितैर्दुष्टैश्चतुर्दशभिरेवच ॥ ९२ ॥ यतिभिस्तिसृभिर्युक्तंलयकृच्छ्रयसंयुतम् ॥ अष्टांगमेकविंशत्यामूर्च्छनाभिश्चमूर्च्छितम् ॥९३॥
पंचाशताचैकहीनैस्तानैरपिचसंयुतम् ॥ कंठतानैरनेकैश्चनानाभेदैरलंकृतम् ॥ ९४ ॥ सप्तस्वरांकितंरम्यंतथाग्रामत्रयान्वितम् ॥ द्वा
त्रिंशतामहारागैर्दिव्यैर्जातिसमुद्भवैः ॥ ९५ ॥ छायाभिर्मिश्रिताभिश्चदेशजातिविभूषितम् ॥ संकीर्णरत्नजालैश्चभाषाभिरथभाषितम् ॥
॥ ९६ ॥ चतुःषष्टिप्रधानाभिरनंताभिरनंतकम् ॥ तथाचांतरभाषाभिर्द्विरब्दाभिश्चसंयुतम् ॥ ९७ ॥ चतुर्विधेनवाद्येनतद्गुणेनगुणी

कृतम् ॥ कचिन्नृत्यन्कचिद्गायन्कचिद्वल्गन्कचिद्धसन् ॥ ९८ ॥ वन्यानिफलमूलानिक्वचित्खादन्गणैःसह ॥ नदीतीरेषुरम्येषुनेपथ्याद्युपशोभितः
॥ ९९ ॥ दर्शयंस्तांडवंलास्यंस्थानकानिसहस्रशः ॥ षड्विंशद्भेदभिन्नांस्तुदृष्टिमेकांचशंकरः ॥ १०० ॥ द्वौकरौलाघवाच्चापिषट्त्रिंशच्छतसंख्यया ॥
शृंगारवीरबीभत्सरौद्रहास्यभयानकान् ॥ १०१ ॥ करुणाद्भुतशांतांश्चनवनाट्येरसास्तुये ॥ हरयेदर्शयच्छांतरसंतानस्यकस्यचित् ॥ १०२ ॥
यतोनस्यात्सुशांतस्यरसस्यभुवनत्रये ॥ बाढंप्रयोक्ताद्रष्टावाकृतेनारायणादपि ॥ १०३ ॥ साचपूर्णेंदुवदनापार्वतीशांकरंवपुः ॥ आस्थायतरुणीह्द्य
द्यापीनश्रोणिपयोधरा ॥ १०४ ॥ कृष्णैस्तुसूक्ष्मैर्मृदुभिर्वस्त्रैःसंछन्नविग्रहा ॥ रक्तवस्त्रकृतोष्णीषापुष्पस्रग्दाममंडिता ॥ १०५ ॥ अशोकपुष्पसंपूर्णां
मालांबिभ्रत्करांबुजैः ॥ भर्त्तारमनुगच्छंतीशुशुभेचारुसंगतिः ॥ १०६ ॥ विद्युन्नीलाभ्रनक्षत्रैर्नभसीवनिशाकरः ॥ गोपीरूपाणिबिभ्राद्भिर्मातृभिःपरि
शोभिता ॥ १:७ ॥ कौतूहलाद्ययौगौरीदेवदारुवनंशनैः ॥ भर्तुःस्त्रीलंपटस्याथपरदारसमागमम् ॥ १०८ ॥ द्रष्टुंस्त्रीणांचदौःशील्यंसाध्वीनांचतथाधृतिम् ॥
रक्तान्विरक्तांश्चमुनीन्नयस्यभर्तुरनुज्ञया ॥ १०९ ॥ पतिनासहसंमंत्र्यशर्वंद्रष्टुंसमुद्यता ॥ ततस्त्वपश्यत्ताःसर्वास्तपस्विन्योथनिर्जने ॥ ११० ॥ अदृष्टपूर्वंपु
रुषंमन्मथोपमदर्शनम् ॥ निर्लज्जंभिक्षमाणंतुमुनीनामाश्रमेष्वपि ॥ १११ ॥ ल्हादिभिर्मधुरैःस्पष्टैर्मन्मथोद्दीपनैःसमैः ॥ भिक्षांचैवतुयाचंतंदेहीतिचपुनःपुनः ॥
॥ ११२ ॥ शबरीसहितंरम्यंततःकामवशंययुः ॥ बभ्रमुर्जहसुःपेतुर्जजृंभुर्विविशुर्भयात् ॥ ११३ ॥ शेपुर्नेदुश्चरुरुदुर्जजल्पुर्मधुरंवचः ॥ निःश्वसुश्चुकुशुश्चैवाविका
राञ्जुगुपुःस्वकान् ॥ ११४ ॥ ईषत्संदर्शयेयुश्चगोप्यान्यंगानितस्यताः ॥ नकिंचिज्जल्पितुंशेकुर्दहेयुर्मदनाग्निना ॥ ११५ ॥ अरुंधतीमृतेसाध्वींवसिष्ठ
महिर्षिंशुभाम् ॥ बालास्तरुण्योवृद्धाश्चसर्वाःस्युर्मदनातुराः ॥ ११६ ॥ निमंत्रयेयुराकारैरिंगितैर्गतिभिश्चतम् ॥ अनंगशराभिन्नास्तुततोवासांसित
त्यजुः ॥ ११७ ॥ आभाष्यतापसंतंतुव्याहरेयुःक्वचिच्छनैः ॥ किमयंतापसंधत्तेकिमेतद्व्रतमेववा ॥ ११८ ॥ किमनेनाऽथघोरेणकृतेनकृतिनांवरः ॥
तपोहिभोगसिद्ध्यर्थंजनाःकुर्वंतिभूतले ॥ ११९ ॥ अत्रयद्विहितंकिंचित्तत्स्वबुद्ध्याविचार्यताम् ॥ यूनांतुपरदाराणामभिप्रेतःसमागमः ॥ १२० ॥ सका
मानामकामानांकिमुप्राप्तमुपेक्षसे ॥ नपुण्यहीनंपुरुषंप्रार्थयंतिपरास्त्रियः ॥ १२१ ॥ भोगार्थंवापियत्कर्मतत्तत्कर्ममहीतले ॥ नराःकुर्वंतिसततंनैष्कर्म्या
दिदमुत्तमम् ॥ १२२ ॥ पुण्यैरुपाकृतंमौढ्यात्कथंत्याज्यंलभस्वतत् ॥ त्वांदृष्ट्वासुकुमारांगमस्माकंजायतेकृपा ॥ १२३ ॥ यद्ययंमाधवेमासिकथंगंतुं
वनंक्षमः ॥ इयंनिर्लज्जताकेनकेमानारीःसुशोभनाः ॥ १२४ ॥ कामयानावरंकाम्याःपीनश्रोणिपयोधराः ॥ सात्विकैःकामजैर्भावैराभिभूतारहोगताः ॥ १२५ ॥
नत्वस्माकंत्वयाकार्यंतपस्विन्योवयंमुने ॥ यथोपजोषचीरिण्योनग्नावस्त्रावृताथवा ॥ १२६ ॥ निमील्यनेत्रेभिक्षांमागृहाणचपलेंद्रियः ॥ अस्माकंपश्य

लावण्यंशरीरेषुस्तनेषुच ॥ १२७ ॥ वयंवैपरदारास्तुजराग्रस्तेषुसाधुषु ॥ स्नाय्वस्थिशेषभूतेषुब्राह्मणेषुपरिग्रहः ॥ १२८ ॥ येनदंडयितुंशक्ताःकथंता
डयितुंवचः ॥ अराजकेवनेचाऽस्मिन्किंप्रविष्टोऽसिबालिश ॥१२९॥ यस्यदंडभयाल्लोकःसन्मार्गस्थोभवेदिह ॥ पश्येदंवृक्षगहनंवनंनिर्झरसानुमत् ॥
॥ १३० ॥ पश्येमांस्तापसान्दूरेनित्यमध्ययनेरतान् ॥ दारकान्पाठयंतिरमक्षुत्पिपासासमन्विताः ॥ १३१ ॥ अहोबतमहायज्ञःसामवेदेनतेश्रुतः ॥
गौतमस्यप्रसन्नेनगुरुणाकथितस्तुयः ॥ १३२ ॥ अग्निर्योषासमित्तत्रस्यादुपस्थंचनित्यशः ॥ उपमंत्रयतेयत्सासधूमोयोषिदर्चिषः ॥ १३३ ॥ यदंतः
कुरुतेसातुतेऽप्यंगाराःप्रकीर्त्तिताः ॥ अभिनंदास्तुयेतत्रविस्फुलिंगास्तएवहि ॥ १३४ ॥ तस्मिन्वैश्वानरेरेतोजुह्वतेविबुधाःसदा ॥ तस्मात्कुरुक्रुपांचै
वतत्रवेद्मयतुलंफलम् ॥ १३५ ॥ एतत्स्थानमशुद्धंचेत्तत्रापिश्रृणुमेवचः ॥ साम्नांवाक्यंद्वितीयंतुमुखमेतत्प्रजापतेः ॥ १३६ ॥ ऋषिभिर्बहुधागीतंगर्भा
धानादिकर्मसु ॥ एवंविधाभिर्बह्वीभिःस्त्रीभिर्वाग्भिःप्रणोदितः ॥ १३७ ॥ स्त्रीणांनित्यप्रसन्नश्चतपस्वीवाक्यमुक्तवान् ॥ यदेतद्दक्षिणंनेत्रंविष्णोराभाति
दीप्तिमत् ॥ १३८ ॥ एषैवगुरुरस्माकंगुरुराहरतेःस्त्रियः ॥ चतुर्दशविधस्याथभूतसर्गस्यदैशिकः ॥ १३९ ॥ दिवाचराणांभूतानामयंपालयितादिवा ॥
निशाचराणांभूतानामयमेवनिशागमे ॥ १४० ॥ पितापालयितानित्यंप्रविश्यशशिमंडलम् ॥ जलमात्रंस्वाकिरणैःपातालतलमाश्रितः ॥ १४१ ॥
अनेनमेव्रतंदत्तमिदंत्रिदशपूजितम् ॥ आवयोर्नैवभेदोऽस्तियोऽयंसोऽहमितिश्रुतिः ॥ १४२ ॥ यावदेषस्थितोव्योम्नितावन्मेभोजनक्रिया ॥ विहिता
प्राङ्मुखस्यापिमांसक्षारमधूज्झिता ॥ १४३ ॥ अभक्ष्यापेयपानैश्चसर्वदोषैश्चवर्ज्जिता ॥ उषितस्यचमेनित्यंग्रासोवैदीयतांपृथक् ॥ १४४ ॥ आचां
तस्यजलेनाथद्वितीयोदेयइत्यपि ॥ घृतक्षीरान्नशाकैश्चफलमूलैश्चनिःसृतम् ॥ १४५ ॥ एकाददातिकवलंकेशकीटविवर्जितम् ॥ द्वितीयावस्त्रच्छदनंपानीय
मुपसेचनम् ॥ १४६ ॥ अनेनविधिनातृप्तिंकरोमिसततंस्त्रियः ॥ अयंमेदक्षिणःपाणिर्भोजनेपात्रमेवहि ॥ १४७ ॥ संभाषणंमेभगवन्नमोऽस्त्वतिकृतांजलिः ॥
भूमौजानुद्वयंकृत्वाकरोतिममवंदनम् ॥ १४८ ॥ अनादरैरसन्मानैस्तुष्टिर्मेजायतेसदा ॥ शयनंजांगलेदेशेवृक्षकोटरवेश्मसु ॥ १४९ ॥ इयंतपास्विनी
मह्यंसुसमिद्धोहुताशनः ॥ अस्मिन्विभावसौवीर्यंजुहोमिसृष्टिसिद्धये ॥ १५० ॥ मयातुसर्वभूतेभ्योदानंदेयंप्रकल्पितम् ॥ एतस्माद्यस्ययस्यस्यादभि
प्रीतिर्यथात्मनः ॥ १५१ ॥ तंवैनयतुसक्षिप्रंयेनस्यात्पूर्णमानसः ॥ निवृत्तःपरितुष्टश्चसुखीपूर्णमनोरथः ॥ १५२ ॥ तच्छ्रुत्वापरितुष्टास्ताःसावहासाः
स्त्रियस्तुवै ॥ तमवष्टभ्याचिक्रीडुर्जजल्पुरितितापसम् ॥ १५३ ॥ उन्मत्तकवृथाशास्त्रंस्त्रीणामग्रेब्रवीषिकिम् ॥ स्त्रियःकामुकमिच्छंतिकामितंस्त्रीजनैःपरैः
॥ १५४ ॥ यदिनत्वंवृथाशास्त्रःकथंतेशबरीस्थिता ॥ छायाफलेवसततंस्त्रीरत्नंभुविदुर्लभम् ॥ १५५ ॥ एकोमहेश्वरोधन्योयस्यतुष्टाचपार्वती ॥ नलो

कस्यवृथावादस्त्वंधन्यःसत्यमेवाहि॥१५६॥ यस्येयंशबरीबालाभार्यात्रैलोक्यसुंदरी॥ संस्पर्शस्यतवार्थैन्योवयंतुवदतांवर॥१५७॥एवंवक्रोक्तिभिःस्त्री
भिप्रार्थ्यमानःसतापसः॥मोदमानोययौहृष्टःकामचारीगृहंगृहम् ॥१५८॥ त्यक्त्वागृहाणिनार्योपितितस्तुमदनातुराः॥गच्छंतमनुगच्छंत्योलपंत्योविवि
धागिरः॥ १५९॥ ततःकोलाहलंश्रुत्वातापसास्तंसमभ्ययुः ॥नग्नंतपस्विनंद्रष्टुंनिर्लज्जंकामचारिणम्॥१६०॥स्वदाराञ्जगृहुर्यत्नात्कामक्रोधविवर्जिताः॥
प्रयत्नाद्रक्ष्यमाणास्तैर्नार्योभर्तॄंश्चतत्यजुः ॥ १६१ ॥ततोऽमर्षवशंप्राप्तानाजानीयुर्महेश्वरम् ॥ तापसास्तापसंजघ्नुर्गर्हयंतश्चमोहिताः ॥ १६२ ॥ दंडैर्दु
मैश्चपाषाणैःकमंडलुभिरेवच ॥ तलेनवाह्निनासर्पैःकंटकैरायुधैस्तथा ॥ १६३ ॥ क्षुत्क्षामकंठाःपेतुश्चनशेकुश्चविचेष्टितुम् ॥ चर्मवल्कलवासोभिरव
ष्टभ्यवरास्त्रियः ॥ १६४ ॥ श्रांतानिपेतुर्धरणींततस्तेषुयतत्स्वपि ॥ चर्मवल्कलवासांसिलाघवादवमुच्यताः ॥ १६५ ॥ नग्नाःप्रवव्रजुर्नार्योवरनारीश्वरं
प्रति ॥ ततोवासिष्ठस्यमुनेर्गृहद्वारगतोमुनिः ॥ १६६ ॥ जगादशनकैर्वाक्यंरुधिरौघपरिप्लुतः॥हेहेभवतिभिक्षांमेदेहिदेहीतिशंकरः ॥ १६७ ॥ अतिथि
स्तववामोरुसंप्राप्तोहंतुशोभने ॥ अनर्गलंवनेचैवताडितोमुनिपुंगवैः ॥ १६८ ॥ पश्यगात्राणिमेदेविमृदूनिललितंमम॥ रूपंपश्यवरारोहेमुनिभिर्जर्जरी
कृतम् ॥ १६९ ॥ इतिवक्रोक्तिभिर्दंडीदक्षकन्यामरुंधतीम् ॥ लोभयन्दर्शयामासगात्राणिचशनैःशनैः ॥१७० ॥ साचरुद्रस्यगात्राणिशक्तेरिवसुतस्य
तु ॥ प्रक्षाल्यशीतलैस्तोयैःकामधेनूद्भवैर्घृतैः ॥ १७१ ॥ समालभ्यपुनस्तोयैःप्रक्षाल्याविविधैरथ ॥ दिव्यांगरागैरालिप्यपुष्पैर्गंधैर्विभूष्यच ॥१७२ ॥
आसनेनमहार्हेणधूपेनचसुगंधिना ॥ पाद्येनमंत्रपूतेनचामरव्यजनैःशुभैः॥१७३॥हेमपात्रैरनेकैश्चभोजनैश्चाचिकित्सकैः ॥पायसस्यसुखोष्णस्यराशिभिः
पर्वतोपमैः ॥ १७४ ॥ भक्ष्यैर्नानाप्रकारैश्चहृद्यैःपुण्यैश्चपानकैः ॥ घृतेनदधिनाचैवक्षीरेणचतथाफलैः ॥ १७५ ॥ मूलैर्नानाविधैःपुण्यैर्मांसैरुच्चावचैर
पि ॥ सस्नौतोयेनसहितःपरिचारेणशंकरः ॥ १७६ ॥ तर्पितश्चतयादेव्यापार्वतीसहितोहरः ॥ ततस्तोयेनपुण्येनआचांतोभगवांस्तदा ॥ १७७ ॥
तयाप्रोक्तस्तपस्विन्यानमोऽस्तुभगवन्निति ॥ देशेचतत्रतेपुत्रगम्यतांयत्ररोचते ॥ १७८ ॥ बाढमित्येवसुप्रीतस्त्वतिथिस्तामुवाचह ॥ देविधर्मस्त्व
याप्रोक्तोवयमर्हाश्चतापसाः॥१७९ ॥नग्नक्षपणकास्तुष्टास्त्वंचसौभाग्यमाप्नुहि॥अयंवृद्धश्चतेभर्त्ताक्षमावांस्तरुणःपुनः ॥१८०॥ अजरश्चामरैस्तुल्योदि
व्यदेहोभवत्विति॥एतावद्वचनंतस्यामुक्त्वागेहाद्विनिर्गतः॥१८१॥संपूजितोवासिष्ठेनचचारवनमंजसा॥भ्रमरैरिवनारीभिरुन्मत्ताभिर्निषेवितः ॥१८२ ॥
ईर्ष्याभिभूतैश्चपुनःसमंतादपिताडितः ॥ नविव्यथेसभूतात्माप्रहारैर्जर्जरीकृतः ॥ १८३ ॥ हसन्क्रीडन्ययौहृष्टस्तापसीभिरहर्निशम् ॥ यदायदास्मि
तंचक्रेप्रसन्नवदनस्तुसः ॥ १८४ ॥ तदातदामहाक्रोधंचक्रुःक्रोधवशंगताः ॥ ततोद्वादशभिर्वर्षैर्गतैर्देवोमहेश्वरः ॥ १८५ ॥ नकंचित्परुषंब्रूतेकस्याचि

द्वाप्रतिक्रियाम् ॥ करोतिताड्यमानस्तुतदासर्वायुधक्षये ॥ १८६ ॥ जातेसातितदाशप्तोभृगुमुख्यैस्तपस्विभिः ॥ मिथ्यातापसलिंगंतेपततामत्रभूतले
॥१८७॥ अस्मिंश्चैवतुनोराजानास्तिकश्चिन्महावने ॥ यस्तेछिनत्तिलिंगंवैपरदाररतस्यतु ॥ १८८ ॥ परदाररतस्यापिनिर्लज्जस्यदुरात्मनः ॥ शिश्न
स्योत्कर्तनंकार्यंनाऽन्योदंडःकदाचन ॥ १८९ ॥ छित्त्वासवृषणंलिंगंगुरुदाररतःस्वयम् ॥ गृहीत्वांऽजलिनामर्तुंसगच्छेन्नैर्ऋतींदिशम् ॥१९०॥ अयंपु
नर्निर्विवेकोदुराचारोथदुर्मतिः ॥ स्वयंदंड्यस्ततोऽस्माभिःक्षेत्रदारहरोयतः ॥ १९१ ॥ आततायीभवेद्वध्योद्विजोवाप्यथवामुनिः ॥ निघ्नंतुशस्त्रबाणै
स्तुनास्तितत्रविचारणा ॥ १९२ ॥ मुनीनांतत्रशापेनपपातगहनेवने ॥ बहुयोजनविस्तीर्णंलिंगंपरमशोभनम् ॥ १९३ ॥ तत्राटव्यांसतींदेहेविजयं
नामनामतः ॥ तस्मिन्निमग्नेभूम्यांतुदिव्यतेजसिभास्वरे ॥ १९४ ॥ तमोभूतंजगच्चासीन्मुनीनांहृदयानिच ॥ ततस्त्वरुंधतीतत्रवसिष्ठमिदमब्रवीत् ॥
॥ १९५ ॥ स्वामिन्शंकेमहादेवोनग्नक्षपणकस्तुसः ॥ यःप्रहारशतैस्तैस्तैस्ताडितोपिनाव्यथे ॥ १९६ ॥ नचक्रोधंतुकृतवान्प्रतिघातंचवाक्कचित् ॥
अयंमहेश्वरोदेवोनिश्चयंचंद्रशेखरः ॥ १९७ ॥ इमांमेभगिनींमन्येशबरीरूपधारिणीम् ॥ इमास्तामातरःसत्यमेतेप्रमथपुंगवाः ॥ १९८ ॥ गृहस्थाश्रम
माश्रित्ययदावाभ्यांसमर्जितम् ॥ पुण्यंतेनास्तुभगवानक्षतांगस्तुतादृशः ॥ १९९ ॥ अंधकारमिदंसर्वंत्वत्प्रभाभिर्विनश्यतु ॥ तच्छ्रुत्वाध्यानयोगेन
वसिष्ठोपिप्रजापतिः ॥ २०० ॥ दृष्ट्वामहेश्वरंप्राहसुभगेशंकरंप्रति ॥ यद्यदिच्छसिधर्मज्ञेतत्तदस्तुवचस्तव ॥ २०१ ॥ ततोवाक्यान्मुनींद्रस्यदेवोबा
लेंदुशेखरः ॥ तादृशस्तच्चलिंगंतुकाननेविचचारह ॥ २०२ ॥ प्रणष्टंतत्तमोघोरंदेवदारुवनादपि ॥ शांतिक्रोधेमुनींद्रैस्तुविज्ञातेवृषभध्वजे ॥ २०३ ॥
संस्तुतोविविधैःस्तोत्रैर्वाग्गुवाचाऽशरीरिणी ॥ भोभोमुनींद्रारुद्रस्ययुष्माभिःपातितंचयत् ॥२०४॥ लिंगंतदर्च्यतामस्यसर्वसिद्धिप्रदंप्रभोः॥मंत्रैर्वेदादि
भिःपुण्यैर्मनोवाक्कायसंयुतम् ॥ २०५ ॥ शंकरप्रतिमायास्तुलिंगपूजागरीयसी ॥ तस्यास्तद्वचनंश्रुत्वामुनयोमानवर्जिताः ॥ २०६ ॥ चक्रुरष्टादशां
गांतुपूजांलिंगायशंभवे ॥ एवंलिंगंनिपात्यास्यऋषयःपूजयंतिच ॥ २०७ ॥ नजानंतियतोब्रह्मचिन्मात्रंस्वेहृदिस्थितम् ॥ अंगलिंगंचलिंगांकंपरमा
त्मानमव्ययम् ॥ २०८ ॥ लिंगाच्छतगुणंपुण्यंहृदयस्थसमर्चनात् ॥ अग्निस्थंतुद्विजातीनांहृदयस्थंतुयोगिनाम् ॥ २०९ ॥ पाषाणेनतुमूर्खाणांज्ञा
निनांसर्वगःशिवः ॥ पाषाणेचाऽर्चनात्स्वर्गंप्राप्नोतिराज्यमेवहि ॥ २१० ॥ स्वदेहस्थात्सदाराज्यंस्वर्गंमोक्षंक्रमेणतु ॥ सर्वत्रदर्शनान्मोक्षंशिव
सायुज्यमाप्नुयात् ॥ २११ ॥ हृदयेध्यायमानश्चेदेकाहाद्वैविपद्यते ॥ भुक्त्वाऽसौदुर्लभाँल्लोकान्मर्त्योमोक्षंव्रजेत्तुसः ॥ २१२ ॥ ततःक्रीडां
महादेवःकृत्वाद्वादशवार्षिकीम् ॥ सकामानांमुनीनांतुचापल्यंस्त्रीजनस्यच ॥ २१३ ॥ पतिव्रतानांधैर्यंतुगृहस्थाश्रमिणांचसः ॥ हास्यं

नक्तव्रतानांतुदर्शयित्वामहीतले ॥ २१४ ॥ सदारःसगणःपश्चात्तत्रैवांतर्दधेहरः ॥ सकामतायांकोदोषोयतःकाममयंजगत् ॥ २१५ ॥
चापल्यस्यतुतोषोऽस्तिनतत्स्यात्परमात्मनः ॥ तत्स्थाःशब्दादयोभोगास्तन्मयास्तल्लयाअपि ॥ २१६ ॥ पतिव्रतासुकिंचित्रंतृप्तिमात्रप्रियोजनः ॥
पुरुषेणभवेत्स्त्रीणांयस्मादल्पाशिनामपि ॥ २१७ ॥ बह्वाशिनःपर्यटंतेभोजनप्राप्तयेसदा ॥ गृहस्थस्तुकथंभुंक्तेभिक्षूणांसन्निधावपि ॥ २१८ ॥ अद
त्वासंविभागंतुभयमर्थंवतांयतः ॥ अज्ञानांस्तब्धलिंगानांनिर्लज्जानांविचेतसाम् ॥ २१९ ॥ कुत्सितंतनयंपूर्णैर्दुष्टैर्द्वादशभिर्मलैः ॥ रोगैर्नानाविधैरन्यै
र्व्याधिंदर्शयतामपि ॥ २२० ॥ कामक्रोधादिभिर्दोषैस्तथासीतातपैःसदा ॥ पतितानामथाज्ञानांशोच्यानामुपहन्यते ॥ २२१ ॥ नतुशंकरवीर्यस्य
व्रताचाररतस्यच ॥ ऋतेवसिष्ठात्कोभिक्षांदातुंशक्नोतिशूलिने ॥२२२ ॥ मज्जाशनायचंडायपरिवारयुतायच ॥ अब्दानांद्वादशानांतुश्रद्धाभक्तिसम
न्वितः ॥ २२३ ॥ अरुंधतींवर्जयित्वामहासाध्वींपतिव्रताम् ॥ कारुद्रमदनस्पर्शैकामेननखलीकृता ॥ २२४ ॥ यस्याविवाहेगुरवोनामगृह्णंतिसंसादि
॥ कुमारिपश्यपश्येमांवसिष्ठमहिषीमपि ॥ २२५ ॥ पतिव्रतामाहात्म्यात्त्वंकुरुमातर्यदिच्छसि ॥ यदिपश्यसिसाध्वीस्यादसाध्यदर्शनाद्भवेत्
॥ २२६ ॥ नक्षत्राणिनदृश्यंतेदिवासूर्योदयेसति ॥ मुग्धत्वान्नैवजानातिनिशिकन्यांपतिव्रताम् ॥ २२७ ॥ यदातदातुसंख्यातुंनोदितावक्तिसंयुता ॥
भगवान्बालभावेतुगतेज्ञात्वापतिव्रताम् ॥२२८॥ पश्याम्यरुंधतींदेवींमानंतस्याःकरोमिवा ॥ यदिमेसंयतोभर्ताभवेत्पोषयिताभृशम्॥२२९॥विद्वां
संतर्पयेत्पत्नीतृप्तासातत्किलप्रिय॥रेतोदधातिनियतातस्मात्संजायतेप्रजा ॥ २३० ॥ सांप्रतंतुनमस्तस्यैभगवत्यैकरोम्यहम्॥अथकिंबहुनोक्तेनसंक्षि
प्तमिदमुच्यते ॥ २३१ ॥ ऋतेमहेश्वराद्देवात्कृष्णाद्वादेवकीसुतात् ॥ एकोबहूनांनारीणांकोभवेद्वल्लभःपुमान् ॥ २३२ ॥ इतिकथितमशेषंदेवदेवस्यशं
भोर्मदनविजितबुद्धेःपार्वतीवल्लभस्य ॥ सकलसुरमुनीनांसद्गुरोर्यच्चवृत्तंपुनरपिकथयिष्येतच्छृणुध्वंद्विजेंद्राः ॥ २३३ ॥ इतिश्रीशिवमहापुराणेधर्मसं
हितायांदशमोऽध्यायः ॥ १० ॥ सूतउवाच ॥ इंद्रस्त्रैलोक्यराज्यंतुभोक्तुकामःसुखान्यपि ॥ यक्षरक्षांसिजित्वातुलब्ध्वादेवासुरोरगान् ॥ १ ॥ पौलो
म्याद्याह्यप्सरसःप्राप्यकामेनमोहितः ॥ रूपंचकारलोभेनगौतमस्यमुनेस्तदा ॥ २ ॥ स्नाय्वस्थिशेषवृद्धस्यमुनिदारांस्तुवज्रभृत् ॥ अहल्यांपर्णशा
लायांभुक्त्वाचैकाकिनींस्थिताम् ॥ ३ ॥ तांतुत्यक्तुंनशक्नोतिशक्रोमूलफलान्यपि ॥ संगृहीत्वामुनिर्वेश्मसमायातोऽथगौतमः ॥ ४ ॥ क्रीडमान
स्तयासार्द्धमघवातत्रसंस्थितः ॥ द्वितीयमथचात्मानंसाऽत्रदद्दशेपातिम् ॥५॥ किमेतदितिसंचिंत्यशंकितागतचेतना॥ अहल्याविस्मिताभीताशिला
खंडवनिश्चला ॥ ६ ॥ विस्मितःशंकितःक्रुद्धोमुनिश्रेष्ठोबभूवसः ॥ इंद्रस्तुलज्जितोभीतोगच्छत्संस्पर्शलोभितः ॥ ७ ॥ मुनेर्दृष्ट्वाऽशिवंरूपंकालस्येव

युगक्षये ॥ चक्रेसंकुचितांतस्यशापाद्भीतःस्वकांतनुम् ॥ ८ ॥परिज्ञातस्तुमुनिनाकोपाच्छप्तःशचीपतिः॥यस्माच्छलेनमेपत्नींभुक्तवानसियद्रहः ॥ ९॥
पततांवृषणौतस्मात्काममोहितचेतसः ॥ ब्रह्मदंडप्रहारेणघूर्णितांगस्ततोऽभवत् ॥ १० ॥ ततोवृषणनाशेननिर्वीर्यस्तुपुरंदरः ॥ सुवीर्यस्तुकृतोदेवैः
कृत्वामेषस्यपीवरौ ॥ ११॥ वृषणौयोजितौतस्यतन्मेषवृषणोऽभवत्॥ सारमेयोपमशिराःकृशोवृद्धश्रवास्ततः ॥ १२ ॥ परदारोपभोगीतुसहस्रभगवा
नभूत् ॥ लंकायांराक्षसैर्बद्धोवर्षाणांकोटयस्त्रयः ॥ १३ ॥ ऐंद्रंस्थानंतथैंद्राश्वततःप्रभृतिचास्थिताः ॥ साचरूपवतीदग्धाभर्त्राक्रुद्धेनतत्क्षणात् ॥१४॥
तत्रैवसंस्थितादेवीशिलारूपाविचेतना ॥ स्पृष्टानारायणेनापिभूयोलेभेस्वकंवपुः ॥ १५ ॥ कदाचिद्रामरूपेणपौलस्त्यकुलवह्निना ॥ इंद्रोविष्णोःप्रसा
देनसुंदरांगोऽभवत्ततः ॥ १६ ॥ नेत्रैरिवमहादेवस्त्रिभिःसर्वजगत्त्रये ॥ तथापिकालेकस्मिंस्तुराज्ञःपारिक्षितस्यतु ॥ १७ ॥ भार्यांवपुष्टमांदृष्ट्वारूपयौव
नशालिनीम् ॥ तत्स्पर्शलोभान्मानुष्यंसचकारवपुःक्षणात् ॥ १८ ॥ यदानलब्धवान्स्प्रष्टुंतदातुरगमाविशत् ॥ अश्वमेधेमहाराज्ञस्तदामृतकलेवर
म् ॥ १९ ॥ ततोवृषस्यमहिषींयथाकामंसमार्चयत् ॥ आर्जुनेयस्तुषांमोहान्नाशयन्यज्ञमुत्तमम् ॥ २० ॥ संसारान्मोक्षकामस्तुकामारिरपिसंयुतः ॥
हावभावकटाक्षैश्चविलासरतिविभ्रमैः ॥ २१ ॥ स्त्रीभिःक्षोभितुमारब्धस्तैस्तैस्त्रासैस्तुदैवतैः ॥ रत्नैर्माल्यैर्विभूत्याचनिधिभिःपर्वतोपमैः ॥ २२ ॥ नैवे
द्यैःसर्वतोभोज्यैस्तथापिचनशक्यते ॥ सनाथैर्निर्विकल्पात्तुचालितंपर्वतोपमः ॥ २३ ॥ ततोलेभेमहापानंसद्वज्रंभूमिमव्ययाम् ॥ तस्मिञ्जितवरेप्रोक्ते
समाधौमन्मथःपुरा ॥ २४ ॥ आसीदेकमहोरात्रंतत्प्रभावादिदंजगत् ॥ आत्मसात्सकलंकृत्वाजयत्येकोजगत्त्रये ॥ २५ ॥ भावयेत्सर्वधर्मांश्चचिन्मा
त्रान्गगनोपमान् ॥ यत्रविश्वमिदंसर्वमसद्रूपमहेतुकम् ॥ २६ ॥ इतिकथितमशेषंलज्जनीयंनृलोकेवरशिखरिशतानांपक्षविच्छेदकर्तुः ॥ सकलविजित
शत्रोर्वज्रपाणेस्तुवृत्तंसकलविविधभर्तुःशूलपाणेस्तथैव ॥ २७॥ अग्नेश्चैवतथावृत्तंसप्तर्षीणांगृहेष्वपि ॥ शिवाद्यास्तुस्त्रियोदृष्ट्वाधैर्यंनाशाद्वनंगतः ॥२८॥
स्त्रीभिस्तुरक्षितःशापात्ततस्तुगहनेवने ॥ तासांरूपाणिकृत्वातुकामितश्चशनैःशनैः ॥ २९ ॥ तद्रेतःकांचनेकुंभेक्षिप्त्वागरुडरूपया ॥ श्वेताचलस्य
शिखरेततश्चोत्पादितःसुतः ॥ ३० ॥ षण्मुखःकार्तिकेयस्तुयोऽसौषट्कृत्तिकासुतः ॥ तथारूपमरुंधत्यानकृतंचसमर्थया ॥ ३१ ॥ यतोवसिष्ठमहि
षीतपोनिष्ठापतिव्रता॥सेनापतिस्तुदेवानांक्रौंचतारकदर्पहा ॥ ३२ ॥ कुमारोबहुलापुत्रःपार्वत्याःपुत्रतांगतः ॥ स्वाहांभुक्त्वातुनोप्रीतस्तथाकपटकृत्ति
काः ॥ ३३ ॥ ततोऽग्निर्ब्राह्मणोभूत्वापुरींमाहिष्मतींगतः ॥ दाक्षिणात्याःस्त्रियोभोक्तुंरम्याःकर्णाटकांगनाः ॥ ३४ ॥ज्ञात्वानालेनबद्धोऽभूद्राज्ञातुभृत
कःकृतः ॥ प्राकाराच्च्यावितःसोपिनगर्यांप्रज्वलन्निव ॥ ३५ ॥ अयंचभगवान्वायुर्जगदायुर्महाबलः ॥ पंचधासंस्थितोदेहेस्थावरेषुचरेषुच ॥ ३६ ॥

धत्तेजगत्समग्रंतुदिव्यैर्भावैस्तुसप्तभिः ॥ रूपाण्येकोनपंचाशत्कृत्वादितिसुतोनिलः ॥ ३७ ॥ राज्यंत्वमरनाथस्यचक्रेनिष्कंटकंचसः ॥
नित्यंचयोगिभिर्ध्येयःपरमात्मासनातनः ॥ ३८ ॥ जगच्छ्रेष्ठोपिभूत्वादौततःकामेननिर्जितः ॥ शतंदृष्ट्वातुकन्यानांकुशनाभमहीपतेः ॥ ३९ ॥
रूपयौवनलावण्यकुलसौभाग्यसंयुतम् ॥ संस्पर्शार्थीततस्तासामंगानांसंगमेनवै ॥ ४० ॥ मुग्धानांतुसलज्जानांसभयानांरहोगतः ॥ नानाविधानुपा
यांश्वस्वयंभूःकृतवांस्ततः ॥ ४१ ॥ तैस्तैरुपायैस्तुयदावायुर्नोलब्धवान्ग्रहः ॥ तदासप्रणयंवाक्यमुक्तवान्स्त्रीशतंशनैः ॥ ४२ ॥ हेस्त्रीशतंवायु
रहंदेवस्त्रैलोक्यपूजितः ॥ परमात्माजगज्ज्येष्ठोजरामृत्युविवर्जितः ॥ ४३ ॥ भोक्तासकलवस्तूनांस्रष्टासर्वेषुजंतुषु ॥ सर्वेषांप्राणिनांजीवश्चामृतस्य
चसंभवः ॥ ४४ ॥ याचेत्वांप्रार्थयेत्वांचस्वशरीरंप्रयच्छभोः ॥ सकामायप्रपन्नायदेव्योमेर्पयताचिरात् ॥ ४५ ॥ नारीशतंतुतच्छ्रुत्वातमुवाचश
नैर्हसत् ॥ यादृशस्तादृशोवापिसोऽसियोसिवयंचताः ॥ ४६ ॥ येनतेनविसृष्टोऽसियस्मैतस्मैयतस्ततः ॥ यस्यतस्यनिमित्तंतुयस्मिंस्तस्मिंश्चकर्मणि ॥ ४७ ॥
अलंसर्वत्रतेवृद्धयस्माद्वश्यावयंपितुः ॥ स्वयमात्मप्रदानंतुकन्यानांनेहविद्यते ॥ ४८ ॥ पद्मयोनेःसुतोयस्मात्कुशोममपितामहः ॥ कुशनाभस्तु
तत्पुत्रःक्षत्रियोजानितापुनः ॥ ४९ ॥ तच्छ्रुत्वास्त्रीशतंवायुःकुब्जंचक्रेविरूपिणम् ॥ नानारोगशतोपेतंदेवोमात्सर्यसंयुतः ॥ ५० ॥ दत्तंतुब्रह्मपुत्राय
कदाचित्स्त्रीशतंतुतत् ॥ कुशेनमुनिनास्पृष्टंपुनःस्वास्थ्यंचलब्धवान् ॥ ५१ ॥ कुशनाभकृतातत्रपूर्वदेशेमहापुरी ॥ तेनैवनाम्नादिव्यातुकन्याकुब्जे
तिविश्रुता ॥ ५२ ॥ चंडरश्मिस्तुमार्तंडःकल्पांताग्निशिखोपमैः ॥ रोमभिर्भूषितोभीमैर्वह्निकुंडाकृतीक्षणः ॥ ५३ ॥ विद्युत्कुटिलसंश्मश्रुर्नित्यं
व्योमचरोरविः ॥ योगिनांध्यानगम्यश्चब्रह्माद्यैःपूजितःसदा ॥ ५४ ॥ त्वष्टुर्दुहितरंसंज्ञांप्राप्यभार्यांसुरूपिणीम् ॥ संस्पर्शार्थीप्रार्थयानोनानाचाटुश
तैश्चताम् ॥ ५५ ॥ सातंदृष्ट्वातथारूपंसंस्प्रष्टुंनशशाकच ॥ ततःसूर्योऽब्रवीदेनांयद्ब्रवीषिकरोमितत् ॥ ५६ ॥ तयाहसंत्याप्रोक्तोऽसौघोरंतेजोविशा
तय ॥ आरोहस्वभ्रमितीक्ष्णंमत्पित्रातक्षितस्ततः ॥ ५७ ॥ शोधितोलघुतांप्राप्तःप्रियोममभविष्यसि ॥ तथेतिचप्रतिज्ञायसूर्योभ्रमिमथारुहत् ॥ ५८ ॥
ततस्तुशोधितस्तेनत्वष्ट्रादेवासुरैःसह ॥ ततःशतगुणीभूतस्तेजसादारुणोरविः ॥ ५९ ॥ मार्तंडचूर्णमादायसहस्रारंसुदर्शनम् ॥ निर्मितंविबुधैःस
र्वैर्विष्णोरायुधमुत्तमम् ॥ ६० ॥ हरस्यविबुधानांचशस्त्राणिचतथाऽभवन् ॥ भूयोघोरतरंदृष्ट्वावडवारूपधारिणी ॥ ६१ ॥ संज्ञापलायनपरापति
त्यक्त्वासुदारुणम् ॥ सोप्यश्वरूपमाश्रित्यबलात्तांस्प्रष्टुमुद्यतः ॥ ६२ ॥ गोप्यसातुप्रजाद्वारंकामार्तासंमुखीभवत् ॥ भर्तुःस्कन्नंप्रकृष्टंचरेतस्त
स्यामुखेपतत् ॥ ६३ ॥ नासापुटाभ्यांतत्सर्वंगृहीतंचतयातदा ॥ रेवंतश्चततस्तस्याःपुत्रोजातोभिषग्वरः ॥ ६४ ॥ पुनर्निमंत्रिताभर्त्रासंज्ञासंसर्ग

कर्मणि ॥ ततः कपटतश्छायांसंज्ञाकृत्वातुयोगिनी ॥ ६५ ॥ सूर्यंविमोहयित्वातुसाऽभवत्कामचारिणी ॥ संज्ञामेवचतांप्राप्यररामभगवान्रविः ॥
॥६६॥तस्यांरतिफलंलेभेपुत्रंभिन्नांजनप्रभम्॥यमंनीलाब्जपूर्णांचयमुनांपुण्यवाहिनीम्॥६७॥ तथैवकन्ययाहूतःकुंत्यातांचाप्यधर्षयत् ॥ सकुंडलं
सकवचंपुत्रंतस्यैददौतदा॥६८॥अमृतेमथ्यमानेपिक्षीरोदादुत्थितस्तुयः ॥ शशीपुनःसमुद्भूतस्त्वनसूयात्मजोपिवा ॥६९॥ अत्रेःपुत्रोमहासौम्योजग
दाप्यायनक्षमः॥नराणामोषधीनांचनारीणांब्राह्मणेषुच॥७०॥राज्यंप्राप्यमहासत्वोराजसूयंचकारसः॥सप्तविंशतिऋक्षाणिदारान्प्राप्यमुमोदच ॥ ७१ ॥
ततःकामवशोभूत्वारोहिण्यासक्तमानसः ॥ दक्षशापेनदुर्बुद्धिःसंप्राप्तोराजयक्ष्मणा ॥ ७२ ॥ कृष्णपक्षेक्षयीनित्यंतथापिसुरतप्रियः ॥ तारांबृहस्पते
र्भार्यांहृत्वालोभान्नचातृपत् ॥ ७३ ॥ कृत्वायुद्धंतदर्थंतुपश्चात्तांत्यक्तवाञ्शशी ॥ स्ववीर्यसंभवंपुत्रंबुधंचकुपितःपुनः ॥ ७४ ॥ पूर्वंतुमित्रावरुणौघोरे
तपसिसंस्थितौ ॥ नारायणोरुसंभूतामिंद्रयज्ञानुवर्तिनीम् ॥ ७५ ॥ उर्वशींतरुणींदृष्ट्वाप्रस्कन्नौतौबभूवतुः॥मित्रःकुंभेजहौरेतोवरुणोपितथाजले॥७६॥
ततःकुंभात्समुत्पन्नोवसिष्ठोमित्रनंदनः ॥ अगस्त्योवरुणाज्जातोवडवाग्निसमद्युतिः ॥ ७७ ॥ येनतत्सागरंतोयंसर्वंपीतंतुलीलया ॥ ७८ ॥इतिविपुलम
तीनांतेजसावामवृत्तिर्मदनशरहतानामुक्तमेतन्मयात्र ॥ दहनपवनसूर्यानंततारधिपानांवरुणपरमामित्राचार्ययोश्चापिसम्यक् ॥ ७९॥ इति श्रीशिवम
हापुराणेधर्मसंहितायामगस्त्याद्युत्पत्तिकथनंनामएकादशोऽध्यायः ॥ ११ ॥ सूतउवाच ॥ दक्षोदाक्षिण्यशौर्याभ्यांयुक्तःस्मृत्याचानित्यशः ॥ तुष्ट्या
विरक्त्याप्रीत्याचशांत्याधृत्यात्रिविद्यया ॥ १ ॥ स्वाध्यायस्नानदानैश्चब्रह्मचर्यार्जवैःपुनः ॥ विद्युत्पर्णांस्त्रियंदृष्ट्वाब्रह्मलोकेचनारदः ॥ २ ॥ मोहितःप
ञ्चयोनिस्तामनासक्तामानिच्छतीम् ॥ कपिलायाःस्वरूपंगोःकृत्वाचसतयातदा ॥ ३ ॥ वंचितःसोपितच्छापाज्जरद्गवइववशानुगः ॥ तथापिस्वांदुहितरं
समाश्रित्यासृजत्प्रजाः ॥ ४ ॥ कचित्तुमानसीसृष्टिर्वाचिकीचशरीरजा ॥ गात्रैकमात्रसंस्पर्शसंभवाचक्वचिद्भवेत् ॥ ५ ॥ मारीचःकश्यपश्चापिकामस्य
वशमागतः ॥ लोकस्यपूरणार्थायदक्षात्प्राप्यत्रयोदश ॥ ६ ॥ मोदमानस्ततःपुत्रान्देवाद्यानसृजत्प्रभुः ॥ यैरिदंपूरितंसर्वंजगत्सदसदात्मकम् ॥ ७॥
अगस्त्योपिमहायोगीकल्पांतदहनोपमः ॥ पीत्वासमुद्रंविंध्यंचदर्पणोदरसान्निभम् ॥ ८ ॥ कृत्वादैत्यंभक्षयित्वावातापिंघोररूपिणम् ॥ लोपामुद्राप्रि
यासोपिततोभृतकवत्कृतः ॥ ९ ॥ शमीकोब्रह्मचारीचतपस्वीनभसस्तलात् ॥शुश्रावमधुरांवाणींमानसोन्मादिनींस्फुटाम् ॥ १० ॥ प्रियोसिमेप्रिया
न्प्राणान्देहिगृह्णीष्वमामिति ॥ नारीयमितिमन्वानोरेतःकक्षेजहौततः ॥ ११ ॥ तस्यांवृषभवक्रस्तुशृंगीपरमरोषणः ॥ जातःकुरुपतिर्येनपरीक्षिद्भ
स्मसात्कृतः ॥ १२ ॥ तथाभृगुकुलेव्योम्निपूर्णेंदुस्तापसाग्रणीः ॥ रुरुःप्रमद्वरांकन्यांप्राप्यसर्पविषाहताम् ॥ १३ ॥ रतिभंगेसमुत्पन्ने

गत्वाघोरेवनेतनुम् ॥ त्यक्तुकामःकामदोषात्ततोदेवैश्वरक्षितः ॥ १४ ॥ तैरेवोक्तश्चायुषोऽर्धंददास्यस्यैयदिप्रभो ॥ तेनजीवतिबालेयंमृतानान्ये
नहेतुना ॥ १५ ॥ तच्छ्रुत्वाचाब्रवीद्धृष्टोदत्तमर्धंमयेतिच ॥ ततःसमुत्थितांतांचप्राप्यविप्रोमुमोदसः ॥ १६ ॥ नासाप्रांताग्रदृष्टिस्तुच्यवनो
ध्यानयोगवान् ॥ प्रावृड्जलौघनिर्भिन्नमृत्तिकाच्छन्नविग्रहः ॥ १७ ॥ सुकन्ययाकुमार्याचमुग्धयोत्पादितेक्षणः ॥ शर्यातिपुत्र्याक्रीडंत्यावै
डूर्यमणिलुब्धया ॥ १८ ॥ हृष्टोवल्मीकमध्यात्तुनिष्क्रम्याग्रेस्थितस्तुताम् ॥ राज्ञःप्राप्तस्ततोऽश्विभ्यांप्रसादाज्जातलोचनः ॥ १९ ॥
तारुण्यंप्राप्यदुष्प्रापंतयासार्धंमुमोदच ॥ कूर्मग्रीवोवैनतेयोयोगीपक्षीश्वरोमुनिः ॥ २० ॥ ज्ञानतृप्तःप्रशांतस्तुस्नाय्वस्थिशकलाकृतिः ॥ क्षीरोदार्णव
मध्यस्थःक्षपितःक्षीरजैर्जलैः ॥ २१ ॥ पक्षीनाडीव्रणारूढमूलशैवालविद्रुतः ॥ सकदाचित्समुद्रांतेदृष्ट्वायादोगणान्बहून् ॥ २२ ॥ मत्स्यादीन्सहमत्सी
भिःस्वाभिःस्त्रीभिर्विमोदतः ॥ प्रत्यग्रनारीसंस्पर्शमिच्छंस्तोयात्समुत्थितः ॥ २३ ॥ प्रजापतिंसुधन्वानमगच्छद्याचितुंस्त्रियः ॥ सचापितमृषिंदृष्ट्वा
पूजयित्वाचशास्त्रतः ॥ २४ ॥ ततःसुखोपविष्टंतमपृच्छद्विनयान्वितः॥ भगवञ्छ्रोतुमिच्छामितवागमनकारणम् ॥ २५ ॥ प्रतिवाक्यंमुनिःप्राहसुधन्वा
नंप्रहृष्टवत् ॥ काश्यपोवैनतेयोऽहंकन्याभिक्षार्थमागतः ॥ २६ ॥ यदितेविद्यतेकाचित्सुतातांतुप्रयच्छमे ॥ तद्वाक्यस्यावसानेतुपक्षिणोंऽगंविलोक्य
सः ॥ २७ ॥ ततश्शापभयाद्भीतोमुनिंप्रोवाचबुद्धिमान् ॥ संतिकन्याममविभोपंचाशदमरप्रभाः ॥ २८ ॥ तासांचेतांसिनोमह्यंस्वाधीनानितपोधन ॥
ताभिर्यस्तुवृतोभर्तातस्मैदेयामयाचताः ॥ २९ ॥ इतिमत्वामहाबुद्धेममक्षंतुमतोऽर्हसि ॥ ममकन्यापुरंविप्रमन्नियोगात्प्रविश्यताम् ॥ ३० ॥ तत्रया
काचिदेवत्वांवरयिष्यतिमामकी ॥ कन्यातांतेप्रदास्यामिसत्यमेतद्ब्रवीमिते ॥ ३१ ॥ ततोविसर्जितस्तेनमुनिःकन्यापुरंययौ ॥ आत्मयोगान्महा
योगीरूपंकृत्वामनोहरम् ॥ ३२ ॥ रूपयौवनलावण्यसौभाग्यानामिवास्पदम् ॥ ततोमुनिवरंदृष्ट्वाकुमार्यस्ताःसुविस्मिताः ॥ ३३ ॥ आत्मानंप्रददु
स्तस्मैमन्मथोपमतेजसे ॥ ततःसुधन्वनातस्मैदत्ताःसर्वास्तुकन्यकाः ॥ ३४ ॥ तस्मिन्दिव्येविवाहेतुशुक्राद्याःसुमहाग्रहाः ॥ स्वक्षेत्रोच्चत्रिकोणस्थाः
केंद्रोपचयसत्तमाः ॥ ३५ ॥ वैनतेयभयात्सर्वेशुभसौभाग्यपुत्रदाः ॥ आसन्त्सचाऽपिताःसर्वाःकुमारीःप्राप्यदुर्लभाः ॥ ३६ ॥ प्राप्यतांराज्यलक्ष्मीं
तुचिक्रीडचमुमोदच ॥ तासांरतिफलंलब्ध्वापुत्रान्प्राप्यचतत्समान् ॥ ३७ ॥ कृतकृत्यस्ततःस्वर्गंजगामविबुधैःसह ॥ शांडिलींतरुणींकन्यामपश्य
द्गरुडोवने ॥ ३८ ॥ हिमाचलगुहासंस्थांसुरूपांचारुहासिनीम् ॥ वैश्वानरसुतांभक्त्यानेतुकामस्त्रिविष्टपे ॥ ३९ ॥ विज्ञातस्तुतयासद्योदग्धपक्षोब
भूवह ॥ अथध्यातस्तयाभूयःकृपयादययातथा ॥ ४० ॥ अनुरोधात्तथाविष्टोहेमपक्षःक्षणात्कृतः ॥ दीर्घश्मश्रुर्जटालश्चक्षुत्क्षामांगोविभांडकः ॥ ४१ ॥

मुनिस्तीक्ष्णनखोनद्यांकदाचित्स्नातुमुद्यतः ॥ दूरादभिनवांनारींदृष्ट्वाप्रस्खलितोऽभवत् ॥ ४२ ॥ तद्रेतोजलसंपृक्तंमृग्यापीतंविधेर्वशात् ॥ ततस्त
स्यांतुपुत्रोऽपिएकशृंगोमृगोऽभवत् ॥ ४३ ॥ विभांडकेनमुनिनारक्षितोवार्धितस्तथा ॥ मुनिवत्संस्कृतःपश्चाद्वेदमध्यापितस्ततः ॥ ४४ ॥ ऋष्यशृंग
स्ततोबालःशांतोदांतोजितेंद्रियः ॥ शुद्धःसब्रह्मचारीचनित्यमेवनसंशयः ॥ ४५ ॥ शाकपिण्याकभोजीचपितुर्भीतस्तुसंयतः ॥ स्वाध्यायीनित्यजा
पीचस्त्रीविलासेष्वकोविदः ॥ ४६ ॥ अथांगराजसिंहेनलोमपादेनमायया ॥ शमनार्थमनावृष्टेर्नीतःस्वविषयंप्रति ॥ ४७ ॥ नानाविधैर्व्याजशतैःपुंश्च
लीभिःप्रलोभितः ॥ विध्वस्तपुण्योनिःशंकःसंमुखोभावसंयुतः ॥ ४८ ॥ मुनीनामिववेश्यानांपूजकोविधिवत्किल ॥ अधीतवान्भरद्वाजःसपुत्रःसुस्व
रंहठात् ॥ ४९ ॥ ततःपरावसोर्भार्यांतरुणींगहनेवने ॥ यवक्रीतेनरुदतींस्त्रीभावमुपलंभिताम् ॥ ५० ॥ ज्ञात्वारैभ्यःखलोमानीछित्वाक्रोधवशंगतः ॥
हुत्वावह्नेस्ततःकृत्यामकरोद्राक्षसान्विताम् ॥ ५१ ॥ यवक्रीतंग्रसस्वेतिप्रेषयामासतांतदा ॥ ततःसाऋषिपत्न्याश्चरूपंकृत्वामनोहरम् ॥ ५२ ॥
यवक्रीतमुवाचेदमेहिक्रीडस्वमेपुनः ॥ संस्थितंचाग्निशालायामुपायैश्चविकृष्यतम् ॥ ५३ ॥ वनेजघानकुपितःशूलहस्तश्चराक्षसः ॥ ततोवृद्धःपि
तातस्यसंप्राप्तस्तमपश्यत ॥ ५४ ॥ मृतंपुत्रंततःक्रोधादृर्शयन्मित्रमेवाहि ॥ रैभ्यंतुमित्रपुत्रघ्नंस्वपुत्रोमारयिष्यति ॥ ५५ ॥ एतावदुक्त्वासमुनि
र्वह्निंप्रज्वाल्यकानने ॥ ददाहदेहंपुत्रस्यस्वशरीरंचदुःखितः ॥ ५६ ॥ ततस्तुनृपतिंयज्ञेयाजयित्वापरावसुः ॥ कृताहारोययौरुष्टःस्वगृहंतुनिशा
मुखे ॥ ५७ ॥ एतस्मिन्नंतरेरैभ्यःसंध्यांमत्वासमागतः ॥ वृक्षगुल्मलतामध्याद्घोररूपाद्गिरेस्तटात् ॥ ५८ ॥ ततोंऽधकारेरैभ्यंतुकृष्णसारस्यचर्म
णा ॥ गृहीतांगंततोदृष्ट्वाकांडैर्विव्याधदारुणैः ॥ ५९ ॥ मृगभ्रांत्याचतंहत्वारात्र्यांदग्ध्वापरावसुः ॥ प्रभातेयज्ञभूमिंतुगत्वाभ्रात्रेन्यवेदयत् ॥ ६० ॥
भोभ्रातस्तातोनिहतोमयाभ्रांतेनकानने ॥ प्रायश्चित्तंकरिष्यामियदिमांप्रेषयिष्यसि ॥ ६१ ॥ निशम्यपरावसुनाभ्रात्राचोक्तंतुतत्रच ॥ अहंवनंगमि
ष्यामित्वदर्थंत्वमितोयज ॥ ६२ ॥ एतावदुक्त्वावचनंगत्वातत्वामहत्तपः ॥ ब्रह्महत्याकृतंपापंनाशयित्वाततःपुनः ॥ ६३ ॥ कदाचिदागतो
दृष्टोभ्रात्रातेनमहायशाः ॥ संप्राप्तेदक्षिणाकालेदृष्टमात्रस्तुधिक्कृतः ॥ ६४ ॥ रेरेदुर्जनतातघ्नकिंप्रविष्टोऽसिगच्छभोः ॥ भ्रातुस्तद्वचनंश्रुत्वासतुमोहवशंग
तः ॥ ६५ ॥ श्रांतोराजजनैर्घोरैर्गृहीतोजनसंसदि ॥ हन्यमानस्तुशुद्धात्मानचक्रोधमुपेयिवान् ॥ ६६ ॥ बद्धांजलिमुवाचेदमग्निमिंद्रंयमंतथा ॥
हतोयदिमयाताताभवंतस्तद्ध्यनागसः ॥ ६७ ॥ मांदहध्वमधर्मज्ञंकृतघ्नंपापपूरुषम् ॥ नोचेत्पीयूषधाराभिःप्लावयध्वंचतत्क्षणात् ॥ ६८ ॥ यदि
दत्तंयदिहुतंगुरवस्तोषितायदि ॥ तेनसत्येनतेसर्वेपुनर्जीवंतुमामकाः ॥ ६९ ॥ ततोदेवैःप्रसन्नैश्चपुण्यैरमृतर्मिदुभिः ॥ भरद्वाजोयवक्रीतोरैभ्यश्चो

त्थापिताःपुनः ॥ ७० ॥ ततस्तेतापसाःसर्वेशंकिताश्चाऽभवंस्तदा ॥ गौतमोब्रह्मचारीचयोगध्यानपरायणः ॥ ७१ ॥ क्षीणसंसारदोषश्चवनवासी
सुसंयतः॥ततःकदाचिदिंद्रस्तुभयाच्छारद्वतीसुतम् ॥ ७२॥ प्रेषयामासाप्सरसंततश्चालयितुंतपः ॥ दृष्ट्वातांतुमुनेश्चेतःप्रविष्टंकामजव्यथाम् ॥ ७३ ॥
वायुर्वस्त्राणिचोद्धूयमुनेरग्रेववौमृदु ॥ वसंतःपुष्पसंछन्नान्द्रुमांश्चक्रेतदाश्रमे ॥ ७४ ॥ नारीवस्त्राणिचाहर्तुंमुनेरभिमुखंययौ ॥ नग्नामप्सरसंप्रेक्ष्यतांचदृ
ष्ट्वासतापसः ॥ ७५ ॥ ररामक्षुभितोरेतःस्कंन्नंद्रोण्यांदधारच ॥ तस्माच्चकलशाज्जातोद्रोणःशस्त्रभृतांवरः ॥ ७६ ॥ कदाचिद्ब्रह्मणोवाक्यान्मार्तंडोभग
वान्पुनः ॥ जज्ञेदेवश्वरोराजापृथिव्यांखेचरोवसुः ॥ ७७ ॥ चतुराश्रमरक्षार्थंचचारपृथिवीतले ॥ मृगयाधर्मशीलश्चसिंहव्याघ्रांश्चतस्करान्
॥ ७८ ॥ मारयंश्चापिदुष्टांश्चराज्यस्यपरिपंथिनः ॥ श्येनहस्तःशरीधन्वीरथेव्योमचरेस्थितः ॥ ७९ ॥ वसंतेकामसंतप्तोदारेभ्योदूरगोगृहात्
॥ पालाशपुटगर्भेतुरेतःस्कन्नमधारयत् ॥ ८० ॥ पुटिकांप्रददौचाथश्येनायप्रतिकामिने ॥ दारेभ्योनेतुमाघ्रातुमयोध्यांपुत्रकामुकः ॥ ८१ ॥
राजाज्ञयाततःश्येनोजगामनृपतेर्गृहम् ॥ तांचंचुपुटगर्भस्थांपुटिकांधारयन्खगः ॥ ८२ ॥ अन्येनपक्षिणादृष्टस्ततश्चामिषगृद्धिना ॥ समाहू
तस्ततोयुद्धेपुटिकायामुनेजले ॥ ८३ ॥ पतितंतच्चतद्रेतःपीतंगिरिकयातदा ॥ दिव्यनार्यामहामत्स्याब्रह्मशापाभिभूतया ॥ ८४ ॥
पश्यतस्तस्यसामत्सीतदागर्भभरालसा ॥ गृहीताजलबंधेनदाशराज्ञासुपीवरा ॥ ८५ ॥ विदारितापतद्गर्भाल्लिभेनृमिथुनंनृपः ॥ ततःकरार्थंवसवेम
त्स्योदरविनिर्गतम् ॥ ८६ ॥ कुमारंप्रददौदाशोमहारत्नंमहर्द्धिमत् ॥ ततःस्ववीर्यसंभूतंराजोपरिचरोवसुः ॥ ८७ ॥ दाशात्प्राप्यचसंस्कृत्यस्वीयरा
ज्येऽभ्यषेचयत्॥दाशराज्ञाततःकन्यादुहितावर्धितागृहे॥८८॥पितृकन्यातुमार्तंडीयमुनायोगिनीनदी॥ कलिंदगिरिजादेवीदिव्यनीलाब्जसंनिभा॥८९॥
बिभ्रतीमानुषंरूपंशाक्तेयस्यमुनेःकृते ॥ कृतनामातुदाशेनसत्यासत्यवतीतिच ॥ ९० ॥ पराशरस्तुशाक्तेयस्तांदृष्ट्वाथपुनःक्षमी ॥ नीलोत्पलनिभां
दृष्ट्वायमुनांपुण्यवाहिनीम् ॥ ९१ ॥ चक्रेमनसिभावंतुतरुणीस्याद्यदीदृशी ॥ कामयानासमांक्रीडांकरोमिसकृदेवाहि ॥ ९२ ॥ इंद्रस्तन्मतमाज्ञायका
लिंदीमब्रवीद्वचः ॥ मुनेस्तुयदभिप्रेतंतत्कुरुष्वमहानादि ॥ ९३ ॥ तथेतिसाप्रतिज्ञायप्रविष्टायोगमायया ॥ मत्सीगर्भस्तुतोजातोभ्रात्रामत्स्येनसंयु
ता ॥ ९४ ॥ मत्स्यदेशेऽभवन्मत्स्योराजाराज्ञोवसोःकुले ॥ यमुनादाशकन्यातुपितुर्वचनकारिणी ॥ ९५ ॥ तस्मिंस्तुयामुनेतोयेनावंवाहयतेसदा ॥
ततःकदाचिन्मुनिनासादृष्ट्वाप्रार्थितासती ॥ ९६ ॥ दत्त्वावराणांतुशतंदुर्लभंयत्सुरैरपि ॥ शरीरेदिव्यसौरभ्यंकन्यात्वंपुनरेवहि ॥ ९७ ॥ यथेच्छया
तथाभुक्तासृष्ट्वानीहारमंदिरम् ॥ व्यासश्चोत्पादितःपुत्रोयोगीतेनमहात्मना॥९८॥ तथाचभगवान्व्यासोदेवानांचहितायच ॥ क्षत्रियस्यमृतस्यापिभ्रातृ
दारेषुसंगतः ॥ ९९ ॥ त्रीन्पुत्राञ्जनयामासधृतराष्ट्रमुखांस्ततः ॥ शुकंपुत्रमरण्यांचनिर्मथ्यचाग्निनासह ॥ १०० ॥ उत्पादयामासमुनिर्योगिनांप्रभु

रव्ययः ॥ शुकस्तुचतुरःपुत्राञ्जनयामासयोगिनः ॥ १०१ ॥ गौरवंकपिलंकृष्णंतथानीलंचतापसम् ॥ योगाचार्यामहात्मानस्त्वेकाकन्याचभामिनी ॥ १०२ ॥ कपालमालानद्धांगःपूर्ववामशिरामुनिः ॥ नागलोकंजगामाशुखड्गंहर्तुंकृतोद्यमः ॥१०३ ॥ सर्वविद्याधराणांतुयेनस्याद्राजसत्तमः ॥ नागस्यभवनंशोष्यहोमजाप्यसमाधिभिः ॥ १०४ ॥ खादिरैःशंकुभिःसूत्रैःपंचरंगैःसरैस्तथा ॥ तन्मंत्रशक्त्यापातालेदह्यमानेतुपन्नगैः ॥ १०५ ॥ दीयमानेभयात्खड्गेवेश्ययावंचितोऽपिसः ॥ अपराजितमंत्रंतुदर्शयित्वामनोहरम् ॥ १०६ ॥ नग्नांतांतरुणींदृष्ट्वापीनश्रोणिपयोधराम् ॥ किंखड्गेनेतिसंचिंत्यवृतपूर्णांस्रुचंजहौ ॥ १०७ ॥ पूर्णाहुतिमदत्वातुव्युत्थितःक्षुभितेंद्रियः ॥ नागदासींततःप्राप्यचिक्रीडचजहासच ॥ १०८ ॥ ततोरतांतेनिर्दग्धःशत्रुभिःपन्नगैःक्षणात् ॥ तुष्टैर्विगतसंत्रासैर्नार्यासंरक्षितैरपि ॥ १०९ ॥ इतिपरममृषीणांमन्मथक्षोभितानांचरितमिदमशेषंवर्णितंवोमयाद्य ॥ प्रथमकथितकीर्तिर्यत्रदग्धोमहात्मातदनुकथितशिष्टोवर्णितोवामदेवः ॥ ११० ॥ इतिश्रीशैवेमहापुराणेधर्मसंहितायांद्वादशोऽध्यायः ॥ १२ ॥ सूतउवाच ॥ क्षत्रियोगाधिपुत्रस्तुविश्वामित्रोमहामनाः ॥वसिष्ठस्यमुनेर्लक्ष्मींदृष्ट्वासंतप्तमानसः ॥ १ ॥ दीक्षितोब्राह्मणत्वायत्रैलोक्यक्षोभणायच ॥ संशुष्कांगस्तपस्वीचदृष्ट्वादेवैश्चवंचितः॥२॥विजनेमेनकांनारींतयासकिलमोहितः॥जडोन्मत्तस्वरूपोऽभूत्कामरागवशीकृतः॥३॥तथाशुंभनिशुंभौचदुर्जयौदेवदानवैः ॥ अन्योऽन्येनहतौमोहाद्दृष्ट्वागांपेंद्रकन्यकाम्॥४॥ तत्पुत्रावसुरौघोरौतथासुंदोपसुंदकौ ॥ अवध्यौसर्वभूतानांदृष्ट्वानारींतिलोत्तमाम् ॥५॥ ममेयंनतवैवैषाइत्युक्त्वायुद्धलालसौ ॥ अन्योऽन्येनहतौमोहात्कामरागवशानुगौ ॥६॥ इंद्रलोकोपमंराज्यमैक्ष्वाकःप्राप्यदंडके ॥ सूर्यप्रभांचशुक्रस्यवशयित्वासुतांप्रियाम् ॥ ७ ॥ सराष्ट्रःसपुरोदग्धोदंड्यःशुक्रेणदुर्जयः ॥ घोरेणपांसुवर्षेणदिनैःसप्तभिरेवच ॥ ८ ॥ अद्यापिदंडकारण्यंनिर्वृक्षतृणसानुमत् ॥ ९ ॥ इतिकठिनमतीनांधार्मिकाणामृषीणांचरितमिहपुराणेवर्जितंतंमयाद्य॥सकलनृपतिमुख्योयत्रगाधिःसपुत्रस्तदनुदितिजपुत्रौकीर्तितौकीर्त्तिमंतौ ॥१०॥ रावणश्चांजनश्यामोदशवक्त्रोभयानकः ॥ विंशत्याचभुजैर्युक्तश्चतुष्पाच्चजगज्जयी ॥ ११ ॥ पुष्पोत्कटायाःपुत्रस्तुमुनेर्विश्रवसःसुतः ॥ इंद्रंजित्वाचबद्ध्वाचक्षिप्तवान्दुर्गपंजरे ॥ १२ ॥ मेघनादस्यशक्त्यातुश्येनंशाकुनिकोयथा ॥ लब्ध्वात्रैलोक्यराज्यंतुदिव्याश्चविबुधास्त्रियः ॥ १३ ॥ तारुण्यगर्वसौभाग्यलावण्यैश्चसमन्विताः ॥ मयस्यतनयांप्राप्यभार्यांमंदोदरीमपि ॥ १४ ॥ तथाचपरनारीणांलंपटःकाममोहितः ॥ मन्मथेतुगतेनाशंप्रजापतिसुतारतिः ॥ १५ ॥ भूयोमयस्यगेहेतुजाताजगतिसुंदरी ॥ हृतासाशंबरेणाथतयासकिलवंचितः ॥ १६ ॥ नारींदारुमयींकृत्वादिव्यालंकारभूषिताम् ॥ आत्मनःसदृशींयोगान्निर्जीवांजीवयन्निव ॥ १७ ॥ तयासाब्रह्मवादिन्यारत्यासंप्रेषितासती ॥ पांचालिकाततोदैत्यंशंबरंकाममोहितम् ॥ १८ ॥ प्रक्री

डयामासशनैर्निशासुदिवसेषुच ॥ मायावतींतादृशींचततोहर्तुंदशाननः ॥ १९ ॥ जगामविवरंभूमेर्विचार्यसुमहाबलः ॥ शंबरस्यगृहंयत्रानिर्मितंविश्व
कर्मणा ॥ २० ॥ पातालेदिव्यरत्नाढ्यंस्वर्गादष्टगुणंमहत् ॥ प्रविष्टमात्रस्तत्रासौमयमायासमुद्भवैः ॥ २१ ॥ बद्धस्तुविविधैःपाशैस्तत्रमेषैश्चपीडितः ॥
वज्रलेपप्रलिप्तेतुमार्गेमग्नस्तुदारुणे ॥ २२ ॥ चूर्णीकृतेमहामंत्रैर्वरैर्लब्धैर्मयेनवै ॥ सर्वेतत्रप्रहस्ताद्यानिमग्नावज्रकर्दमे ॥ २३ ॥ नानाशस्त्रैर्विभिन्नोऽसौदि
व्यैर्लौहमयैर्नरैः ॥ दंडिभिर्द्वारपालैश्चतथागिरिमयैर्हतः ॥ २४ ॥ तच्छ्रुत्वादुःखशोकार्तांततोमंदोदरीभयात् ॥ पितरंश्रावयामासभर्तुर्दौःशील्यचाप
लम् ॥ २५ ॥ ततोमयेनतुष्टेनमायाकाचिद्विनिर्मिता ॥ तयालेपैर्विनिर्मुक्तःससैन्योरावणस्तदा ॥ २६ ॥ समाश्वस्तोऽथसव्रीडस्तृषितस्तुबुभुक्षितः
॥ उक्तस्तयासाऽवहासंसमाभाष्याथमंदधीः ॥ २७ ॥रावणेंद्रमुखंकिंतेदशपन्नगसंनिभम् ॥ चत्वारश्चरणास्तेवैपशुकल्पपशोरिव ॥ २८ ॥ किमिदंरू
पसौंदर्यंतवकृत्स्नंपिशाचवत् ॥ कथंदेवैरलभ्यांमामपहर्तुंत्वमागतः ॥ २९ ॥ यस्यास्तिनारीस्वगृहेसाकिमर्थंनिशाचर ॥ लुब्धःस्यात्परनारीषुपापबु
द्धिरचेतनः ॥ ३० ॥ क्वापिवापरनारीषुकोविशेषस्तुविद्यते ॥ परनारीष्वनायुष्यंगमनेपापचेतसाम् ॥ ३१ ॥ शरीरावयवानांतुयेषांसंजायतेस्पृहा ॥
छिन्नास्तएवसंत्रासंकुर्वंतिरुधिरोक्षिताः ॥ ३२ ॥ येनेहचायुषःशेषोजीवितस्यचनान्यथा ॥ रजसाचाभिभूतानांस्त्रीणांतुमनसःप्रियम् ॥ ३३ ॥ यच्छ
रीरंतुनारीणांतरुणीनांमनोरमम् ॥ तदेवदृष्ट्वाकुणपंत्रासात्संजायतेमृतिः ॥३४॥दर्दुरस्यभवेव्याप्तेविनिष्क्रांतस्यकुत्सितम् ॥ उत्तानोच्छूनदेहस्यतादृ
शस्यकृ तेहिकिम् ॥३५॥नराःकुर्वंतिपापंतुदोषांश्चैवतथात्मनः॥ अणुमात्रंसुखंपुंसांपरदारसमागमे॥३६॥तदेवपरिणामेनदुःखंपर्वतसंनिभम् ॥ अहोब
तनजानंतिनरानार्यश्चदारुणम्॥३७॥परिणामेमहद्दुःखंतदात्वेचसुखंलघु ॥ तत्कर्तव्यंप्रयत्नेननरैर्दुःखंमहात्मभिः॥३८॥ पश्चात्तापोनयेनस्यान्म्रियमाण
स्यदेहिनः॥गच्छमासाहसंकार्षीःशंकितव्याःस्त्रियःसदा॥३९॥मेघांतकाग्निपातालविषसर्पासिसन्निभाः॥स्त्रियोमायासहस्राणिजानंतिजडचेतनाः॥४०॥
गुरवःकितवानार्योनराश्चपिशितप्रियाः ॥ मायोपजीवनानित्यंएताःकोवंचितुंक्षमः ॥ ४१ ॥ तस्यास्तद्वचनंश्रुत्वाविवरान्निर्ययौततः ॥ रावणोमंदबु
द्धिस्तुविचरन्पृथिवीतले ॥ ४२ ॥ कन्यामांगिरसस्याथपुनर्वेदवतींततः ॥ चर्मचीरधरांदृष्ट्वाकेशवार्पितमानसाम् ॥ ४३ ॥ हृद्यांरूपवतींरम्यांनि
यतांब्रह्मचारिणीम् ॥ अनिच्छमानांरुदतींस्वयंग्राहादधर्षयत् ॥ ४४ ॥ तेनविध्वंसितासातुददाहस्वकलेवरम् ॥ रावणस्यवधार्थायसाऽभूद्भार्यासुशो
भना ॥ ४५ ॥ भूमौसमुत्थितायज्ञेमिथिलाधिपतेरपि ॥ रावणस्यवधार्थायरामपत्नीतथाऽभवत् ॥ ४६ ॥ एकाएवसपत्नीभिर्वर्जितानित्यलालिता ॥
द्विपुत्रिणीततश्चांतेप्राविशन्मेदिनीतलम् ॥ ४७ ॥ पुनःक्षीरोदशयनेभर्त्रासहसमागमम् ॥लभेयमितिसंचिंत्यप्रविष्टामेदिनीतलम् ॥ ४८ ॥ विष्णु

स्तस्यावियोगाच्चकामासक्तमनाभृशम् ॥ मृत्युलोकंनसायातितस्माद्वहुपतिस्त्वभूत् ॥ ४९ ॥ ततःकदाचित्कैलासेरावणस्तुनिशामुखे ॥सुरापानेन संमूढोददर्शजलजेक्षणाम् ॥ ५० ॥ हृद्यांरूपवतींरंभांमत्तद्विरदगामिनीम् ॥ बलादनिच्छमानांतांस्नुषांमोहात्परामृशत् ॥ ५१ ॥ तन्निमित्तंतुशप्तोऽ सौधनाध्यक्षसुतेनच ॥ नजातुरावणोगच्छेदन्यासक्तांतुकामिनीम् ॥ ५२ ॥ गतःप्रमादात्तत्कालेभस्मीभूतोभविष्यति ॥ ततःकदाचित्पातालंगतोजे तुंदशाननः ॥ ५३ ॥ कस्मिंश्चित्तत्रभुवनेददर्शाद्भुतदर्शनम् ॥ व्योमालिकज्जलश्यामंपुरुषंरक्तलोचनम् ॥ ५४ ॥ कल्पांतदहनज्वालातुल्यरोमालि मंडितम् ॥ महाविद्युल्लताकारजटाकारविभूषितम् ॥ ५५ ॥ दिवाकरसहस्राभंकेशश्मश्रुविभूषणम् ॥ नागेंद्रमुखसंभूतविषानलपटावृतम् ॥ ५६ ॥ तस्याभ्याशगतांलक्ष्मींदृष्ट्वाक्षीरोदकन्यकाम् ॥ काममोहितचैतन्यस्तांचहर्तुंसमुद्यतः ॥ ५७ ॥ घोणाश्वासैस्तथावीरैर्योजनानांशतंततः ॥ आसीन श्चतथानीतस्तेनकालात्मनातदा ॥ ५८ ॥ क्ष णान्निश्चेष्टतांनीतोवरंयाचितवांस्ततः ॥ त्वद्धस्ताद्भगवन्मृत्युर्ममास्त्वितिपुनःपुनः ॥ ५९ ॥ अवश्यमि तितेनोक्तोबलिंमोचयितुंगतः ॥ तत्रकालंवर्षधरंद्विभुजंमुशलायुधम् ॥ ६० ॥ तद्रूपंदारुणंदृष्ट्वाशंखचक्रगदाधरम् ॥ विषण्णःशंकितोदीनःपाताला न्निर्ययौक्षणात्॥६१॥ पश्चान्मानुषमात्रस्यक्षत्रियस्यनितंबिनीम्॥ अथरामस्यभार्यांतुचीरवल्कलधारिणीम्॥६२॥पिण्याकशाकपानीयमांसमूलफला शिनीम् ॥ वल्मीकधूलिसिकताकंटकैःकृतविक्षताम् ॥ ६३ ॥ भ्रष्टराज्यस्यदीनस्यत्यक्तस्यपितृमातृभिः ॥ अत्यंतभक्तांरक्तांचदृष्ट्वाकामवशंययौ ॥ ६४ ॥ सौवर्णंहरिणंकृत्वामारीचंराक्षसाधमम् ॥ विद्रुमांकुरशृंगंतुवैडूर्यमणिलोचनम् ॥६५॥ श्रीमन्मरकतव्रातसंछन्नपृष्ठमंडलम्॥ पूर्णेंदुसदृशाकारं मुक्तामालाविभूषितम् ॥ ६६ ॥ सुशुद्धपद्मरागैश्चचतुश्चरणशोभितम् ॥ विसर्जयित्वारामस्यपर्णशालांशनैःशनैः ॥ ६७ ॥ स्वयंचयतिरूपंवैकृतवा न्कृतिनांवरः ॥ मृगंसामानुषीदृष्ट्वापतिंलोभाद्व्यसर्जयत् ॥ ६८ ॥ तस्मिन्गतेमृगंहंतुंवनेरामशरैर्मृगः ॥ विद्धोदशाननंप्राहभोभ्रातर्निहतो ऽस्म्यहम् ॥ ६९ ॥ तच्छ्रुत्वाभ्रातरित्येवंवाक्यंसीताव्यसर्जयत् ॥ भर्तुरन्वेषणार्थायदेवरंविजनेस्थिता ॥ ७० ॥ रावणेनहृतासीतामोहंनीताक्षणादि व ॥ तांप्रार्थ्यमानोरामेणनिहतोराक्षसैःसह ॥ ७१ ॥ दक्षिणंजलधिंतीर्त्वाकांडैर्घोराग्निसंनिभैः ॥ ततोलब्धजयस्तांतुलब्ध्वास्वविषयंययौ ॥ ७२ ॥ सूर्यवंशसमुद्भूतोरामोदाशरथिर्हरिः ॥ नानामांसानिमद्यंचपीत्वाभुक्त्वाचराक्षसः ॥ ७३ ॥ मत्तःसुप्तोदारितास्यःकुंभकर्णोभयानकः ॥ कल्पांतदहन ज्वालालोलज्जिह्वःपुरागृहे ॥ ७४ ॥ ततःसंग्रामसमयेरावणाद्यैःप्रबोधितः ॥ ततोरथैर्महानादैरश्वैःकाष्ठासिमुद्गरैः ॥ ७५ ॥ जलाग्निगिरिवृक्षैश्चताड्य मानोऽपिराक्षसैः ॥ नबुबोधयतस्तत्रतदास्त्रीभिःप्रबोधितः ॥ ७६ ॥ रम्यैःपयोधरोत्तानैरुरोभिःपीडितःसच ॥ ७७ ॥ इतिदशमुखनाम्नोरावणस्यापिवृ

त्तंवरगिरिगुरुधाम्नोद्धृतसत्त्वस्यपूर्वम् ॥ विकृतभुजगदंष्ट्रातुलयखड्गोग्रधारावरमुखवरपद्मोत्कृत्तनाशंगतस्य ॥ ७८ ॥ मदनविषमबाणासारनिर्भिन्नबुद्धे
र्मनुजनृपतिदारस्पर्शसंलोभितस्य ॥ वरनरशतमांसैः शोणितैश्चापिसम्यक्क्षुभितजठरवह्नेः कुंभकर्णस्यचापि ॥ ७९ ॥ इतिश्रीशिवमहापुराणेधर्मसंहि
तायांत्रयोदशोऽध्यायः ॥ १३॥ सूतउवाच ॥ सूर्यवंशेसमुत्पन्नोराजादशरथोऽपिच ॥ मानुषेणशरीरेणस्वर्गादायातियातिच॥ १॥अवतार्यतिलान्स्वर्गा
त्पितॄणांतृप्तयेतदा ॥ दशवर्षसहस्राणिकृत्वाराज्यमकंटकम् ॥ २ ॥ कैकेय्यास्तुसदोषेणराज्यंप्राणान्सुताञ्जहौ ॥ रामोदाशरथिर्वीरोयुद्धशौंडोमहा
मुनिः ॥ ३ ॥ राजाराजान्वयेजातोधर्मनित्योमहामतिः ॥ मानीरामाभिरामस्तुसर्वभूतसुहृत्प्रियः ॥ ४ ॥ त्रैलोक्यविजयीभूत्वाततःकामे
नमोहितः ॥ अन्येनयुद्धयमानंतुभूमिदारहरेणतु ॥ ५ ॥ सुग्रीवेणविरुद्धेनभ्रात्रापरमशत्रुणा ॥ वृद्धंस्नाय्वस्थिशेषंचवालिनंनिजघानच ॥ ६ ॥
कल्पांतदहनप्रख्यैःशरैःसंनतपर्वभिः ॥ ७ ॥ रघुपतिकुलचंद्रवृत्तमेतद्विरुद्धंदशरथइतिनाम्निस्त्रीविलासाभिलाषात् ॥ सकलविबुधमुख्यानंतकीर्ते
श्चविष्णोस्त्रिभुवनभयभेत्तुस्तत्सुतस्यापिवृत्तम् ॥ ८ ॥ वसतिहृदयदेशेहृच्छयःकामदेवःस कलसुरगणानामादिदेवःस्वयंभूः ॥ अजितइतिविदित्वा
लिंगसंस्थःस्मरारिःस्वमभिमतमशेषंदर्शयँल्लोकहेतोः ॥ ९ ॥ मुनिसुरवरदैत्याःपूजयध्वंसुभक्त्यावदतिनभसिवाणीदेवदेवैर्विमुक्ता ॥ कमलजहरिमु
ख्यानित्यमेवंहिलिंगंसकलहृदयकामप्राप्तयेतद्यजंते ॥ १० ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांचतुर्दशोऽध्यायः ॥१४॥ ऋषयऊचुः ॥सूतपुत्रपु
रास्माभिःसर्वधर्माश्चशाश्वताः ॥श्रुताबहुषुशास्त्रेषुयथोद्दिष्टामनीषिभिः ॥१॥नश्रुताश्चेश्वराधर्माइहामुत्रफलप्रदाः ॥ त्वयेदानींयतःशंभोःकांतंतगुंण
कीर्तनम्॥२॥तस्मात्त्वंनःसमाख्याहियत्पुण्यंह्यर्चनाद्भवेत्॥लिंगस्येहपरत्रैवसमासात्सूतनंदन॥३॥ धर्माबहुविधाःप्रोक्तायेदेवनश्रुतास्त्वया ॥ तान्वयं
श्रोतुमिच्छामोलोकानांहितकाम्यया॥४॥ अतःसदाकथ्यमिहैवधर्मंब्रूयादमुंयोमनसाचलेन ॥ तल्लिंगहेतोरिहकीर्तिरेवसयज्ञदानस्यफलंलभेत ॥५ ॥
लोकेवदंतीहहिताहितंचमनीषयायेवसुमाददंते ॥ फलंचतुर्णांहिसुधाप्रदिष्टंकेतुर्यथातत्सकलंप्रचक्रुः ॥ ६ ॥ किंप्रधानाश्चतेधर्माहरवाक्यंतुकीदृशम्॥
लिंगेऽर्चितःशिवःकेनविधिनासंप्रसीदति॥७॥शिवदानंकथंज्ञेयंशिवयज्ञःकथंभवेत् ॥ तच्चश्रुतौद्विजेंद्राणांनान्येषांसमुदाहृतम्॥८॥तत्पुण्यंसर्वपुण्यानां
जायतेकेनकर्मणा॥कानिकर्माणिकृत्वेहगृहस्थःस्वर्गभाग्भवेत्॥९॥कथंमर्त्योत्रसंभूतोयोगंविंदतिशांकरम् ॥ कर्मयज्ञस्तपोयज्ञःस्वाध्यायोध्यानमाश्रि
तः ॥ १० ॥ ज्ञानयज्ञश्चपंचैतेमहायज्ञाःप्रकीर्तिताः ॥एतेषांपंचयज्ञानामुत्तमःकःप्रकीर्तितः ॥ ११ ॥ पतयःकतिधातेषांपरतःकीदृशंफलम् ॥ धर्मा
धर्मप्रभेदाश्चकियंतश्चप्रकीर्तिताः ॥ १२ ॥ कानिचिह्नानिजायंतेभुक्तशेषेणकर्मणा ॥ संसारसागराद्घोराद्धर्माधर्मैश्चसंकुलात् ॥ १३ ॥ कर्मादिदुःख

फेनाद्व्यान्मुच्यंतेहिजनाःकथम् ॥ सूतउवाच ॥ इतिपृष्टःपुराव्यासोमुनिभिस्तत्त्वदर्शिभिः ॥ १४ ॥ यथाहंकिलयुष्माभिःसतान्पुनरथाऽब्रवीत् ॥ व्यासउवाच ॥ एवमुक्तोमयासर्वकुमारोमेसनत्प्रभुः ॥ १५ ॥ प्रत्युवाचसमांभूयोनमस्कृत्वामहेश्वरम् ॥ स्वर्गापवर्गफलदंनरकार्णवतारकम् ॥१६॥ शिवधर्मप्रवक्ष्यामियथाचेश्वरभाषितम् ॥ सनत्कुमारउवाच ॥ श्रद्धापूर्वाइमेधर्माःश्रद्धामध्यांतसंस्थिताः ॥ १७ ॥ श्रद्धानिष्ठाप्रतिष्ठाश्चश्रद्धाधर्माः प्रकीर्तिताः ॥ श्रुतिमात्ररसाःसूक्ष्माःप्रधानपुरुषेश्वराः ॥ १८ ॥ श्रद्धामात्रेणगृह्यंतेनकरेणनचक्षुषा ॥ कायक्लेशैर्वहुविधैर्नचैवार्थस्यराशिभिः ॥१९॥ धर्मःसंप्राप्यतेसूक्ष्मःश्रद्धाहीनैःसुरैरपि ॥ श्रद्धाधर्मःपरःसूक्ष्मःश्रद्धादानंपरंतपः ॥ २० ॥ श्रद्धास्वर्गश्चमोक्षश्चश्रद्धासर्वमिदंजगत् ॥ सर्वस्वंजीवितंवापिदद्यादश्रद्धयायदि ॥ २१ ॥ प्राप्नुयान्नफलंकिंचिच्छ्रद्धातस्मात्परंपदम् ॥ एवंश्रद्धामयाःसर्वेशिवधर्माःप्रकीर्तिताः ॥ २२ ॥ शिवश्चश्रद्धयागम्यःपूज्योध्येयश्चसर्वदा ॥ अथाहंतेप्रवक्ष्यामिमहासारंविमुक्तिदम् ॥ २३ ॥ आज्ञासिद्धमिदंदिग्धवाक्यमेतच्छिवात्मकम् ॥ नानासिद्धिकरंदिव्यंलोकचित्तानुरंजकम् ॥ २४ ॥ मंत्रंसुखमुखोच्चार्यमशेषार्थप्रदायकम् ॥ शृण्वोंनमःशिवायेतिमूलमंत्रंहिशैवकम् ॥ २५ ॥ यद्बीजंसर्वविद्यानांमंत्रमाद्यंषडक्षरम् ॥ अतिसूक्ष्मंमहार्थंचविज्ञेयंवटबीजवत् ॥ २६ ॥ देवोगुणत्रयातीतःसर्वज्ञःसर्वकृत्प्रभुः ॥ ओमित्येकाक्षरेमंत्रेस्थितःसर्वगतःशिवः ॥ २७ ॥ यानिमंत्राणिसूक्ष्माणिमालामंत्राण्यशेषतः ॥ ओंनमःशिवायेतिसंस्थितानियथाक्रमम् ॥ २८ ॥ मंत्रेषडक्षरेसूक्ष्मेपंचब्रह्मतनुःशिवः ॥ वाच्यवाचकभावेनस्थितःसाक्षात्स्वभावतः ॥ २९ ॥ वाच्यःशिवःप्रमेयत्वान्मंत्रस्तद्वाचकःस्मृतः ॥ वाच्यवाचकभावोऽयमनादिःसंस्थितस्तयोः ॥ ३० ॥ यथानादिप्रवृत्तोऽयंघोरःसंसारसागरः ॥ शिवोऽपिहितथानादिःसंसारान्मोचकःस्थितः ॥ ३१ ॥ व्याधीनांभेषजंयद्वत्प्रतिपक्षंस्वभावतः ॥ तद्वत्संसारदोषाणांप्रतिपक्षःशिवःस्थितः ॥ ३२ ॥ असत्यस्मिन्जगन्नाथेतमोभूतमिदंभवेत् ॥ आदित्येनविहीनंहिनिरालोकंजगद्यथा ॥ ३३ ॥ तस्मादादिश्चसर्वज्ञःपरिपूर्णःस्वभावतः ॥ मुक्तिदेवःशिवःसिद्धःसर्वज्ञोज्ञानभासकः ॥ ३४ ॥ अस्याभिधानंमंत्रोयमभिधेयश्चसःस्मृतः ॥ अभिधानाभिधेयत्वान्मंत्रसिद्धःपरःशिवः ॥ ३५ ॥ वेदेशिवागमेवायमुभयत्रषडक्षरः ॥ मंत्रःस्थितःसदामुक्त्यैमंत्रःषडक्षरःस्मृतः ॥ ३६ ॥ यस्योंनमःशिवायेतिमंत्रोयंहृदिसंस्थितः ॥ किंतस्यबहुभिर्मंत्रैःशास्त्रैर्वाबहुविस्तरैः ॥ ३७ ॥ तेनाधीतंश्रुतंतेनतेनसर्वमनुष्ठितम् ॥ येनोंनमःशिवायेतिमंत्राभ्यासःस्थिरःकृतः ॥ ३८ ॥ शिवज्ञानानियावंतिविद्यास्थानानियानिच ॥ षडक्षरस्यमंत्रस्यकलांनार्हंतिषोडशीम् ॥ ३९ ॥ एतावत्तच्छिवज्ञानमेतावत्तत्परंपदम् ॥ यदोंनमःशिवायेतिशिववाक्यंषडक्षरम् ॥ ४० ॥ विधिवाक्यमिदंचैवनार्थवादंशिवात्मकम् ॥ लोकानुग्रहकर्तायःसमृषार्थंकथंवदेत् ॥ ४१ ॥ सर्वज्ञःपरिपूर्णत्वात्सर्वदोषविवर्जितः ॥ ब्रूयाद्वाक्यंशिवःस्वांतस्त्वन्यथा

केनहेतुना ॥ ४२ ॥ यद्यथावस्थितंवस्तुसर्वज्ञश्चतथावदेत् ॥ यावत्फलंचयत्पुण्यंगुणदोषैःस्वभावतः ॥ ४३ ॥ रागद्वेषादि
भिर्दोषैर्ब्रूयात्सकथमन्यथा ॥ तेचेश्वरेनविद्यंतेग्रस्तोयैरनृतंवदेत् ॥ ४४ ॥ प्रणीतममलंज्ञानंसर्वतेनशिवेनयत् ॥ अतीताशेषदोषेणतत्प्रमा
णंनसंशयः ॥ ४५ ॥ यथार्थंपुण्यपापेषुश्रद्धेयानिविपश्चिता ॥ तस्मादीश्वरवाक्यानितदश्रद्धोव्रजत्यधः ॥ ४६ ॥ धर्मज्ञानप्रवक्तारंशिववत्पूजयेत्स
दा ॥ तस्माद्धर्मंचज्ञानंचमोक्षंचप्राप्यतेयतः ॥ ४७ ॥ जगद्धितायनृपतिरात्मनश्चविभूतये ॥ नरंपरोपकारायशुभधर्मेनियोजयेत् ॥ ४८ ॥ यंयंधर्मं
नरश्रेष्ठःप्रब्रूयाद्धर्मतत्परः ॥ तन्नियोगादयंलोकःसमाचरतिभक्तितः ॥ ४९ ॥ धर्मनिष्ठःकृतोराजातत्प्रामाण्याद्भयेनवा ॥ तत्तत्समाचरेल्लोकस्तस्मा
द्धर्मेनियोजयेत् ॥ ५० ॥ धर्मतःसततंराजाप्रजाधर्मेणपलायेत् ॥ न्यायेनपाल्यमानास्तुराज्ञोध्यायंतिवैशुभम् ॥ ५१॥ धर्ममर्थंचकामंचयत्प्रजानाम
भप्सिति ॥ तत्तदाप्नोत्यसंदेहःप्रजाधर्मेणपलायन् ॥ ५२ ॥ प्रजासुधर्मयुक्तासुतथाधर्मयुतासुच ॥ षष्ठमंशंलभेद्राजाउभयोःपुण्यपापयोः ॥ ५३ ॥
कृतेयुगेभवेद्राजात्रेतायांद्वापरेकलौ ॥ चतुर्युगेसविज्ञेयोधर्मपादानुभासकः ॥ ५४ ॥ तस्मादधर्मेमज्जंतमुभयार्थेचपंडितः ॥ धर्मेनियोजयेन्नित्यं
यदीच्छेद्धर्ममात्मनः ॥ ५५ ॥ प्रजापीडनसंतापात्समुद्भूतोहुताशनः ॥ राज्यंश्रियंकुलंप्राणानदग्ध्वाननिवर्तते ॥ ५६ ॥ नृपतिंबोधयेत्तस्मा
त्प्रजाःस्युर्धर्मतत्पराः ॥ धर्मशीलेनृपेयस्मात्सर्वलोकानुकंपया ॥ ५७ ॥ मंत्रौषधिनिधिक्षेत्रबीजमूलरसैर्द्धनम् ॥ धर्ममार्गावतारायवेदोऽष्टांगःप्रकीर्ति
तः ॥ ५८ ॥ प्रकृत्याशास्त्रवादेनकामार्थाभिरतान्नृपान् ॥ शनैर्धर्मेनियुंजीतज्ञात्वायोगंपुनःक्रमात् ॥ ५९ ॥ जगद्गुरुःसविज्ञेयोराजानंयोनिबोधयेत् ॥
तस्मात्सर्वप्रयत्नेनसर्वलोकानुकंपया ॥ ६० ॥ शिवंज्ञात्वात्मतत्वेनयःसमुद्धरतेजनम् ॥ संसारपंकनिर्मग्नंकस्तेनसदृशःपिता ॥ ६१ ॥ ज्ञानामृतेननृ
पतिंनिर्वापयतियःशनैः ॥ अज्ञानवह्निसंततंकस्तंनप्रतिपूजयेत् ॥ ६२ ॥ प्राप्यतेनश्रमैर्यज्ञैस्तथैवार्थस्यराशिभिः ॥ नैवराज्येनमहतापरलोकसुभा
षितम् ॥६३॥ वाक्यंमुनिवरैःशांतैर्भाषितंयत्सुशोभनम् ॥ स्वर्गापवर्गसंसिद्ध्यर्थंतद्विज्ञेयंसुभाषितम्॥६४॥वाक्यंनिरयहेतुर्वैकामकृष्णानुसारियत् ॥
रागद्वेषानृतक्रोधैर्नतद्भाषितमुच्यते ॥ ६५ ॥ अविद्यारागवक्येनमृदुनाललितेनच ॥ संस्कृतेनापिकिंतेनसंसारगतिहेतुना ॥ ६६ ॥ यच्छ्रुत्वाजायते
पुण्यंरागादीनांचसंक्षयः॥शिवेचजायतेभक्तिर्ज्ञानंयत्तदहैतुकम् ॥६७॥ विरुद्धमपितद्वाक्यंविज्ञेयमपिशोभनम्॥पुराणंभारतंवेदाःशास्त्राणिविविधानिच
॥ ६८ ॥ मुनिभिःसुप्रणीतानिश्रूयंतेधर्महेतुना ॥ पुत्रदारादिसंसारःपुंसामुक्तस्तुबंधनम् ॥ ६९ ॥ ऋषिभिःशास्त्रसंभारःसद्योगाभ्यासकारणम् ॥
इदंज्ञेयमिदंज्ञेयंयःसर्वंज्ञातुमिच्छति ॥ ७० ॥ अपिवर्षसहस्रायुःशास्त्रांतंनाधिगच्छति ॥ विहायशास्त्रजालानिज्ञात्वास्वंजीवितंलघु ॥ ७१ ॥ विज्ञा

याक्षरतन्मात्रंपारलौकिकमाचरेत् ॥ पण्डितेनापिकिंतेनसुसमर्थेनदेहिना ॥ ७२ ॥ यःपुण्यभारमुद्वोढुमशक्तःपारलौकिकम् ॥ पंडितोऽपिसमूर्खःस्या
च्छक्तियुक्तोऽप्यशक्तिकः ॥ ७३ ॥ संसारस्थंस्वमात्मानमुत्तारयितुमक्षमः ॥ सपंडितःसशक्तःस्यात्सतपस्वीजितेन्द्रियः ॥ ७४ ॥ यःशिवज्ञानस
द्भावमालोचयितुमुद्यतः ॥ यःप्रदद्यान्महींकृत्स्नांमहामेरुंचकांचनम् ॥ ७५ ॥ सचेदन्यायतःपृच्छेन्नतस्योपादिशेद्गुरुः ॥ यःशृणोतिशिवज्ञानंन्यायत
स्तद्ब्रवीतिच ॥ ७६ ॥ तौगच्छतःशिवस्थानंनिरयंतद्विपर्यये ॥ नित्यंनैमित्तिकंकाम्यंत्रिविधंलिङ्गपूजनम् ॥ ७७ ॥ तद्वोहंसंप्रवक्ष्यामिशिवतुष्टिक
रंपरम् ॥ अथगोदेहसंभूतैःषडङ्गविधिनाशिवः ॥ ७८ ॥ नित्यंसंपूजितःशीघ्रंनराणांसंप्रसीदति ॥ सुरासुरैर्मथ्यमानेक्षीरोदात्सागरोत्तमात् ॥ ७९ ॥
पञ्चगावःसमुत्पन्नाःसर्वलोकस्यमातरः ॥ नंदाभद्रासुशीलाचसुरभिःसुमनास्तथा ॥ ८० ॥ पंचगावोमुनिश्रेष्ठाःसुरभिर्भूमिमागता ॥ सर्वलोकोपका
रायदेवानांतर्पणायच ॥ ८१ ॥ सुरभिःसंस्थिताभूमौस्नानार्थंशंकरस्यच ॥ गोमयंरोचनामूत्रंक्षीरंदधिघृतंगवाम् ॥ ८२ ॥ षडङ्गानिपवित्राणिसर्व
सिद्धिकराणिच ॥ गोमयादुत्थितःश्रीमान्बिल्ववृक्षःशिवप्रियः ॥ ८३ ॥ तत्रास्तेपद्महस्ताश्रीःश्रीवृक्षस्तेनसस्मृतः ॥ बीजान्युत्पलपद्मानांपुनर्जा
तानिगोमयात् ॥ ८४ ॥ पीतागोरोचनाजातापवित्रासर्वमङ्गला ॥ गोमूत्रात्गुग्गुलुर्जातोदेवतानांसुतृप्तये ॥ ८५ ॥ क्षीराद्वीर्यंतुसर्वेषांजातंदधिसुमङ्ग
लम् ॥ घृतामृतंतुसंभूतममराणांसुतृप्तये ॥ ८६ ॥ तस्माद्घृतेनपयसादध्नाचस्नापयेच्छिवम् ॥ सुगंधिनोष्णतोयेनसुगंधैश्चविशोधयेत् ॥ ८७ ॥ स्ना
प्यशीतांबुनापश्चाच्चन्दनेनविलेपयेत् ॥ अर्चयेद्बिल्वपत्रैश्चपद्मनीलोत्पलैस्तथा ॥ ८८ ॥ एवंपूज्यददेत्पश्चाद्घृतयुक्तंसुगुग्गुलुम् ॥ पायसंसुजलाढ्यं
तुदधियुक्तंघृतप्लुतम् ॥ ८९ ॥ निवेदयेच्छिवायैवसुभक्ष्यंघृतपाचितम् ॥ कृत्वाप्रदक्षिणांपश्चात्प्रणिपत्यक्षमापयेत् ॥ ९० ॥ अनेनविधिनादेवः
षडङ्गेनप्रसीदति ॥ इहलोकेपरेचैवसर्वान्कामान्प्रयच्छति ॥ ९१ ॥ भावान्नित्यमभावाच्चचतुर्दश्यष्टमीषुच ॥ अनेनविधिनालिंगंयःकश्चित्पूजयेत्स
दा ॥ ९२ ॥ शिवभक्तःसमुत्तार्यकुलानामेकविंशतिम् ॥ लीलयादिविसंस्थाप्यसगच्छंतिपरंपदम् ॥ ९३ ॥ देवकार्यनियुक्तायेक्रयक्रीताश्चवृत्तितः॥
भक्तितःपूजयंतीहतेपियांतिशिवालयम् ॥ ९४ ॥ मालाकारःशिवस्यैवंमहद्भक्त्यासुपूजनात् ॥ पृथिव्यामेकराड्भूत्वासगच्छेच्छिवमंदिरम् ॥ ९५ ॥
तस्मात्संपूजयेद्भक्त्याविधिनायेनकेनचित् ॥ षडक्षरेणमंत्रेणशिवमेकाग्रमानसः ॥ ९६ ॥ शिवभक्तःसमुत्तार्यकुलानामेकविंशतिम् ॥
निरयाद्दिविसंस्थाप्यसगच्छेदैश्वरंपदम् ॥ ९७ ॥ भक्त्यायेपिप्रपश्यंतिदेवकार्यनियोजिताः ॥ प्रयांतिस्वामिनासार्धंश्रीमच्छिवपुरंमहत् ॥
॥ ९८ ॥ कालात्पुनरिहायातोभृत्यवर्गसमन्वितः ॥ भुक्त्वाभोगान्सुविपुलान्पृथिव्यामेकराड्भवेत् ॥ ९९ ॥ येषांपत्राणिपुष्पा

णिलिंगस्यैवार्चनेसदा ॥ शिवगायाश्चगच्छंतिरुद्रलोकंनसंशयः ॥ १०० ॥ पूज्यमानंचविधिनायःपश्येच्छ्रद्धयाशिवम् ॥ सोपियागफलंकृत्स्नं
प्राप्तवान्नात्रसंशयः ॥ १०१ ॥ श्रुत्वानुमोदयेत्पुण्यमीश्वरंयःसमाधिना ॥ तत्समंफलमाप्नोतिशिवस्यवचनंयथा ॥ १०२ ॥ भक्त्यानुमोदयेदीशंस्ना
नार्चनकृतेतुयत् ॥ यतोशेषंशिवेभक्तस्तत्समंप्राप्नुतेफलम् ॥ १०३ ॥ मनसाचार्चयेन्नित्यंभक्तियुक्तोपिमानवः ॥ सोपितत्फलमाप्नोतिशिवस्यास्यप्र
भावतः ॥ १०४ ॥ सकृदुच्चारितंयेनशिवइत्यक्षरद्वयम् ॥ रुद्रंवापिहरंवापिसगच्छेद्रुद्रलोकताम् ॥ १०५ ॥ शिवपुण्यामशेषाढ्यामशेषजनसेविताम् ॥
शिवधर्माःशिवेनोक्ताःसुसूक्ष्माःसुमहाफलाः ॥१०६ कीर्तितास्तेसमासेननित्यपूजासमाश्रिताः ॥ १०७ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांनि
त्यनैमित्तिकपूजाविधिर्नामपंचदशोऽध्यायः ॥ १५ ॥ मुनयऊचुः ॥ शंकरस्यक्रियायोगंश्रोतुमिच्छामहेवयम् ॥ प्रोक्तंसनत्कुमारेणव्यासस्येहतद्वद
॥ १ ॥ सूतउवाच ॥ प्रोक्तंसनत्कुमारेणव्यासायकपर्दिनः ॥ क्रियायोगंसमासेनतच्छृणुध्वंजितक्लमाः ॥ २ ॥ व्यासउवाच ॥ क्रियायोगस्त्वयापूर्वम
मोक्तोयोमहामुने ॥ तमहंश्रोतुमिच्छामिफलंचास्ययथातथम् ॥ ३ ॥ लिंगार्चादेवतान्यासंतन्मयत्वंचपूजनम् ॥ यथावच्चेतसोवृत्तिंकुरुतेनियतात्म
ना ॥४॥ मनसाब्रह्मचर्येणपुण्यैर्वाक्कायसंभवैः ॥ क्रियायोगोहिविद्वाद्भिर्योगिनांसमुदाहृतः॥५॥तत्राहंश्रोतुमिच्छामिक्रियायोगस्थितोनरः ॥ यत्फलंस
मवाप्नोतिस्थाणोःस्थानंहिकारयेत् ॥६॥ हरार्चांलिंगमेवंवाकारयित्वायदश्नुते ॥ संपूजयित्वाविधिवदनुलिप्यचयत्फलम् ॥७॥ कानिमाल्यानिचोक्ता
निकानिनार्हंतिशंकरे ॥ केधूपावल्लभाःकेचकेचवर्ज्याःसदैवाहि ॥ ८ ॥ उपहारफलंकिंस्यात्किंफलंगीतवादने ॥ घृतक्षीरादिनायच्चस्नापितेशंकरेफलम्
॥ ९ ॥ यच्चोपलेपनादौतुफलमभ्युक्षितेचयत् ॥ शंकरस्यहितंचापितदशेषंवदस्वमे ॥ १० ॥ सनत्कुमारउवाच ॥ कालिकेययदेतत्त्वंशंकरस्यचपृ
च्छासि ॥ शुश्रूषुर्विधिवत्पुण्यंतादिहैकमनाःशृणु ॥ ११ ॥ ज्ञानयोगस्तुसंयोगश्चित्तस्यैवात्मनस्तुयः ॥ यस्तुबाह्यार्थसंयोगःक्रियायोगःसउच्यते॥१२॥
प्रधानंकारणंयोगोविमुक्तेर्मुनिसत्तम ॥ क्रियायोगस्तुयोगस्यपरमंध्येयसाधनम् ॥१३॥ यदेतद्भवतापृष्टंफलमन्विच्छतांफलम् ॥ देवालयादिकरणेतदि
हैकमनाःशृणु ॥ १४ ॥ यस्तुदेवालयंशंभोःशैलंदार्वमथापिवा ॥ कारयेन्मृन्मयंवापिशृणुतस्यमुनेफलम् ॥ १५ ॥ अहन्यहनियोगेनयजतोयन्महाफ
लम् ॥ प्राप्नोतितत्फलंशंभोर्यःकारयतिमंदिरम् ॥ १६ ॥ कुलानांशतमागामिअतीतंचतथाशतम् ॥ कारयञ्छूलिनोधामनयत्यक्षयलोकताम् ॥१७॥
सप्तजन्मकृतंपापंस्वल्पंवायादिवाबहु ॥ शंभोरालयविन्यासप्रारंभादेवनश्यति ॥ १८ ॥ सर्वदेवमुखोरुद्रोयस्तस्यकुरुतेगृहम् ॥ प्रतिष्ठांसमवाप्नोतिस
नरःसार्वलौकिकीम् ॥ १९ ॥ प्रशस्तदेशभूभागेशिवस्यायतनंतुयः ॥ कारयेदखिलाँल्लोकान्त्सनरःप्रतिपद्यते ॥ २० ॥ इष्टकानांतुविन्यासोयावद्व

५०

षाँणितिष्ठति ॥ तावद्वर्षसहस्राणिशिवलोकेमहीयते ॥ २१ ॥ प्रतिमाःकारयेच्छंभोर्लिंगंवालक्षणान्वितम् ॥ शंकरस्यपरंलोकमक्षयंप्रतिपद्यते ॥२२॥
षष्टिवर्षसहस्राणांसहस्राणियथाक्रमम् ॥ प्रत्येकशःसमस्तानांदेवानांप्रतिपद्यते ॥ २३ ॥ शंभोर्लिंगंप्रतिष्ठाप्यसुप्रशस्तेनिवेशने ॥ पुरुषःकृतकृत्यः
स्यान्नैतत्स्वंमरणंनयेत् ॥ २४ ॥ येभविष्यंतियेऽतीताआकल्पात्पुरुषाःकुले ॥ तांस्तांस्तारयतेस्थाप्यलिंगंसर्वगुणान्वितम् ॥ २५ ॥ मनसायेचि
कीर्षंतिलिंगस्थापनमुत्तमम् ॥ तेपियांतिशिवंशांतंसमुद्धृत्यकुलाष्टकम् ॥ २६ ॥ क्रियमाणंतुयःप्रेक्ष्यचेतसायोऽनुचिंतयेत् ॥ कारयिष्याम्यहंकिंतु
संपदामेभविष्यति ॥ २७ ॥ एवंतस्यकुलंसद्योयातिस्वर्गंनसंशयः ॥ प्रजापतिर्यमंस्थाप्यतमाहतवकिंकराः ॥ २८ ॥ पाशदंडधरानित्यंविचरिष्यंति
भूतले ॥ धर्माधर्मानुशास्तारोममवाक्यंनिशम्यताम् ॥ २९ ॥ केवलंयेजगन्नाथंशंकरंसमुपाश्रिताः ॥ त्वयातेपरिहर्तव्यास्तेषांनास्त्यत्रसंस्थितिः ॥
॥ ३० ॥ येचमाहेश्वरालोकेतच्चित्तास्तत्परायणाः ॥ तेतुरुद्रगणाज्ञेयाःसदात्याज्याःसुदूरतः ॥ ३१ ॥ येतिष्ठंतःस्वपंतश्चगच्छंतोवैदिवानिशम् ॥ कीर्त
यंतिशिवंशांतंतेपित्याज्याः सुदूरतः ॥ ३२ ॥ नित्यनैमित्तिकेदेवंयेयजंतिमहेश्वरम् ॥ नावलोक्याभवद्भिस्तेनतेचारिर्हंतिवोगतिम् ॥ ३३ ॥ ये
पुष्पधूपवासोभिर्भूषणैश्चात्मवल्लभैः ॥ अर्चयंतिनतेग्राह्यानराहरसमाश्रयाः ॥ ३४ ॥ उपलेपनकर्तारःसंमार्जनपराश्चये ॥ हरालयेपरित्याज्यास्तेषां
त्रिपुरुषंकुलम् ॥ ३५ ॥ येनवायतनंशंभोःकारितंतत्कुलोद्भवम् ॥ पुंसांशतंनावलोक्यंभवद्भिर्दुष्टचेतसा ॥ ३६ ॥ येनलिंगंभगवतोमहेश्वरस्यकारि
तम् ॥ नरायुतंतत्कुलजंभवतांशासनातिगम् ॥ ३७ ॥ पुनर्वैवस्वतोगाथाएतावैपरमेष्ठिना ॥ हितायज्ञापयामासदूतान्प्रतियथातथम् ॥ ३८ ॥ स्थापयित्वा
शुभंलिंगंसम्यक्संपूज्यमानवः ॥ यंयंप्रार्थयतेकामंतंतंप्राप्नोत्यसंशयम् ॥ ३९ ॥ यःस्नापयतिभीमस्यलिंगंत्रिदशपूजितम् ॥ घृतेनमधुयुक्तेनतस्यपुण्यफलं
शृणु ॥ ४० ॥ गवांसहस्रदत्तस्ययत्फलंलभतेनरः ॥ विप्रेभ्योवेदपूर्णेभ्योघृतप्रस्थेनतत्फलम् ॥ ४१ ॥ पृथुनाचसुसंप्राप्तासप्तद्वीपावसुंधरा ॥ घृताढकेनसंस्नाप्य
लिंगंत्रिभुवनेश्वरम् ॥ ४२ ॥ लिंगंकृष्णचतुर्दश्यांघृतेनजगतःपतेः ॥ स्नापयित्वासमभ्यर्च्यपापानांविप्रमुच्यते ॥ ४३ ॥ पंचदश्याममावास्यांलिंगंसंस्नाप्ययत्न
तः ॥ कृत्वैकभक्तमाज्येनसर्वपापैःप्रमुच्यते ॥ ४४ ॥ ज्ञानतोऽज्ञानतोवापियत्पापंकुरुतेनरः ॥ तत्क्षालयतिसंध्यायांघृतेनस्नानकृन्नरः ॥ ४५ ॥ देवानां
परमोरुद्रोहव्यानांपरमंघृतम् ॥ तयोरशेषपापानांक्षालकःसङ्गमोमुने ॥ ४६ ॥ येषुक्षीरवहानद्योह्रदाःपायसकर्दमाः ॥ भूलोकात्तांस्ततोयांतिक्षीर
स्नापनकानराः ॥ ४७ ॥ आह्लादंनिर्वृतिंस्वास्थ्यमारोग्यंचारुरूपताम् ॥ सप्तजन्मान्यवाप्नोतिक्षीरस्नानकरोविभो ॥ ४८ ॥ दध्यादीनांविकाराणांक्षीर
तःसंभवोयथा ॥ तथैवाशेषकामानांक्षीरस्नपनमुत्तमम् ॥ ४९ ॥ यथाचविमलंक्षीरंयथापुष्टिकरंसदा ॥ तथास्यनिर्मलंज्ञानंभवेत्स्नानकृतःशिवे ॥ ५० ॥

ग्रहानुकूलतांपुष्टिंप्रियत्वंचाखिलेजने ॥ करोतिशङ्करोनित्यंक्षीरस्नपनतोषितः ॥ ५१ ॥ घृतक्षीरेणदेवेशोदृष्टमात्रःप्रसीदति ॥ सर्वस्यस्निग्धतामेतिस्ना
पितेशंकरेसदा॥५२॥अत्राप्युदाहरंतीममितिहासंपुरातनम्॥दृष्ट्वापूष्णःशुभांभार्यांसुमतिंपतिनासह॥५३॥क्रीडंतींगौतमीस्वर्गेतामाहविस्मयान्विता ॥
॥ गौतम्युवाच॥सुमत्यनेकशःसंतिस्वर्गेदेवाःसवासवाः॥५४॥नचैषामीदृशीशोभाविद्यतेतेयथाशुभे॥नचैषामीदृशोगंधोनकांतिर्नसुरूपता ॥ ५५ ॥
नवासस्सांचशोभेयंयथातेपतिनासह ॥ शक्राद्यानामपीशानांयुवयोरतिरिच्यते ॥५६॥ स्वस्थताचेतसश्चेयंसुमतेपतिनासह ॥ तपःप्रभावोदानंवाकिंक
र्महोमसंज्ञितम् ॥ ५७ ॥ युवयोस्तन्ममाचक्ष्वत्वंसर्ववरवर्णिनि ॥ सुमतिरुवाच ॥ भर्तुर्मेकुलपूर्वेणसमाराध्यमहेश्वरम् ॥ ५८ ॥ यज्ञैर्देवंसुताराज्यमेत
दाप्तंततोवृतः ॥ रुद्रोयज्ञेषुयज्ञेशःशंकरस्तोषितोमया ॥ ५९ ॥ स्वर्गप्राप्तिरियंतस्मान्ममेदंकर्मणःफलम् ॥ तीर्थोदकैस्तथाह्यर्थैःस्नानैःसंतोषितःशिवः
॥ ६० ॥ तेनकांतिरियंजातादेवेभ्यस्त्वधिकामम ॥ मनःप्रसादःसौम्यत्वंशरीरस्यचनिर्वृतिः ॥६१॥ यत्प्रियत्वंचसर्वस्यतद्घृतस्नानजंफलम् ॥ यान्य
भीष्टानिवासांसियच्चाभीष्टंविभूषणम् ॥ ६२ ॥ रत्नानियान्यभीष्टानियत्प्रियंचानुलेपनम् ॥ यान्यभीष्टानिमाल्यानिस्वर्गेसंतिममानिशम् ॥ ६३ ॥
भर्तुर्ममोपतिष्ठंतिशोभायुक्तानिगौतमि ॥ तानिमेशिवदत्तानितस्माद्भूषात्मकोगुणः ॥ ६४ ॥ आहारादयितायेचलिंगस्याग्रेनिवेदिताः ॥ तस्मान्मे
सर्वदातृप्तिरासीदत्रैवगौतामि ॥ ६५ ॥ स्वर्गकामेनभर्त्रामेमयाचशुभदर्शने ॥भक्त्यासमर्चितोनित्यंतस्माद्द्युपुष्टिर्ममोत्तमा ॥ ६६ ॥ यंयंकाममभिध्या
यमनोवाक्कायकर्मभिः ॥ लिंगंसंपूजयेन्नित्यंतंतंप्राप्नोतिमानवः ॥ ६७ ॥ सनत्कुमारउवाच ॥ एवमभ्यर्च्यदेवेशंसर्वभूतेश्वरेश्वरम् ॥ प्राप्नोत्यभिमता
न्कामान्देवानामपिदुर्लभान् ॥ ६८ ॥ चंदनागुरुकर्पूरैःकुंकुमोशीरपद्मकैः ॥ अनुलिप्तःशिवःसद्योवरान्भोगान्प्रयच्छति ॥ ६९ ॥ प्रदत्तंशंभवेधूपंका
लेयंरक्तचंदनम् ॥ नृणांभवतिरोगायनदद्यात्तत्कपर्दिने ॥७०॥ धूपंप्राण्यंगनिर्मुक्तंसुगंधंप्रियमुत्तमम् ॥ दद्यात्तुष्टिकरंसद्योगुग्गुलंघृतसंयुतम् ॥ ७१ ॥
नसल्लक्याकृतंधूपंदद्यादासवसंयुतम् ॥ यान्यात्मनस्त्वनिष्टानितानिपुष्पाणिवर्जयेत् ॥ ७२॥ मानवःसर्वदेष्टानिदद्यादात्महितेच्छया ॥ पद्मानिमृदुगं
धीनिसर्वाणीष्टानिशूलिनः ॥ ७३ ॥ संशुष्काण्यपिपत्राणिश्रीवृक्षस्यसदैवहि ॥ सर्वाण्यंबुसमुत्थानिरक्तनीलेतथोत्पले ॥ ७४ ॥ मालतीमल्लिकाचैव
यूथिकावातिमुक्तकः ॥ पाटलाकरवीरंचकर्णिकारंचबर्बरी ॥ ७५ ॥ चंपकोथकिरातिक्तःकुब्जकःशतपत्रिका ॥ तुलस्यगस्त्यपुष्पाणिगुरुकुंदंसकुंद
कम् ॥ ७६ ॥ अशोकःकिंशुकश्चैवशस्ताःशंकरपूजने ॥ तथैवशुभगंधीनिसर्वाणीष्टानिशंकरे ॥ ७७ ॥ देहेसतीहगृह्णातितस्मात्तैरर्चयेच्छिवम् ॥
रक्तानिनीलकृष्णानिभूषार्थंतानियोजयेत् ॥ ७८ ॥ एवमभ्यर्चयेदीशमेभिरुक्तैस्तुसर्वदा ॥ योनरःसतुस्वर्गीस्यात्सर्वसौभाग्यसंयुतः ॥ ७९ ॥ सिद्ध

विद्याधराणांचगंधर्वाप्सरसांगणैः ॥ यावत्कल्पस्यपर्यायःपूज्यमानःसतिष्ठति ॥ ८० ॥ कंटकैरुग्रगंधैश्चसविषैश्चविषादिनम् ॥ योर्चयेत्सभवेन्मर्त्यःसर्व
भूतगणप्रियः ॥ ८१ ॥ पुष्पाभावाच्छिवःपूज्योभृंगैर्दूर्वांकुरैःशुभैः ॥ शमीतमालपत्रैश्चसददात्यैश्वरान्गुणान् ॥ ८२ ॥ एवंयःपूजयेन्नित्यंशिवंपरमका
रणम् ॥ सप्रयात्यक्षयाँल्लोकान्पूज्यमानोऽप्सरोगणैः ॥८३॥ यदाकालादिहायातिराजाराज्येश्वरोमहान् ॥ पृथिव्यामेकराड्भूत्वाक्रमान्मोक्षमवाप्नुयात्
॥ ८४ ॥ केतकीचसदात्याज्याजपापुष्पाणिचैवहि ॥ गृंजनैःश्रीपदैरिङ्गानरोम्लेच्छाधिपोभवेत् ॥ ८५ ॥ सुगंधैश्चसुरामांसीकर्पूरागुरुचंदनैः ॥ मुस्ता
दियुक्ततोयेनस्नापयेदीश्वरंसदा ॥ ८६ ॥ दुकूलपट्टकौशेयसूक्ष्मैःकार्पासिकैःसदा ॥ वासोभिःपूजयेदीशमन्यैश्चैवात्मनःप्रियैः ॥ ८७ ॥ शुभानि
यानिभक्ष्याणिभोज्यान्यभिमतानिच ॥ फलंचवल्लभंसर्वंतत्तद्देयंकपर्दिने ॥ ८८ ॥ सुवर्णमणिमुक्तादियच्चान्यदपिवल्लभम् ॥ तत्तद्देवाधिदेवायशंक
रायनिवेदयेत् ॥ ८९ ॥ योगिनंशंकरंमत्वाशुभाचारंद्विजोत्तमम् ॥ शर्वायाव्यक्तरूपायनाम्नातस्मैनिवेदयेत् ॥ ९० ॥ संक्रांतिर्विषुवद्योगोव्यतीपातोऽ
यनद्वयम् ॥ ग्रहणंपर्वर्णद्वितुचतुर्दश्यष्टमीतथा ॥ ९१ ॥ तथान्येतुशुभाःकालाःप्रोक्तानैमित्तिकाःसदा ॥ सहस्रगुणितंनित्यात्फलंविद्याच्छिवार्चने ॥
॥ ९२ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांनित्यनैमित्तिकविधिकथनंनामषोडशोऽध्यायः ॥ १६ ॥ ॥ व्यासउवाच ॥ ॥ शंकरस्यतुये
भक्ताःशुभाचाराहियोगिनः ॥ पूजनेयत्फलंतेषांसमासात्कथयस्वनः ॥ १ ॥ ॥ सनत्कुमारउवाच ॥ ॥ शृणुयेसततंभक्त्याभजंतिशिवयो
गिनः ॥ प्राप्नुवंतिमहाभोगानंतेयोगंचशांकरम् ॥ २ ॥ भोग्यभोगार्थिभिस्तस्मात्संपूज्याःशिवयोगिनः ॥ प्रतिश्रयान्नपानेनशय्यावस्त्रादि
भिःसदा ॥ ३ ॥ यःकरोतिहिशुश्रूषांविधिवच्छिवयोगिनः ॥ ईश्वरोवादरिद्रोवाभक्त्यातस्यफलंशृणु ॥ ४ ॥ सूर्यदीप्तिप्रतीकाशैर्विमा
नैःसार्वकामिकैः ॥ मृतःशिवपुरंगच्छेत्ससप्तकुलसंयुतः ॥ ५ ॥ तत्रदिव्यैर्महाभोगैःस्त्रीसहस्रैर्मनोहरैः ॥ कल्पकोटिशतंदिव्यंसेव्यमानःसतिष्ठति
॥ ६ ॥ तदंतेविष्णुभवनेतावत्कालंवसेत्पुनः ॥ वैष्णवैर्विविधैर्भोगैःस्त्रीसहस्रैस्तुसेवितः ॥ ७ ॥ विष्णुलोकाद्ब्रह्मलोकंसंप्राप्यमोदतेपुनः ॥ भोगैःसुवि
पुलैस्तत्रतावत्कालंमनोहरैः ॥ ८ ॥ प्रजापतीन्द्रगंधर्वयक्षलोकमनुक्रमात् ॥ भोगान्नानाविधान्भुक्त्वापृथिव्यांजायतेपुनः ॥ ९ ॥ कुलेमहतिविप्रा
णांप्रज्ञाशीलगुणान्वितः ॥ ततःसपूर्वभावेनयोगींद्रंसमुपासते ॥ १० ॥ तत्संपर्काच्छिवज्ञानंप्राप्ययोगंतुसेवते ॥ योगाद्विरक्तःसंसारात्प्राप्नोतिपरमंप
दम् ॥ ११ ॥ अर्चपूजाग्निकार्याद्यैर्भेदैर्बहुविधैःस्थितः ॥ कर्मयज्ञःसमाख्यातस्ततश्चांद्रायणादिकः ॥ १२ ॥ स्वाध्यायश्चजपःप्रोक्तःशिवमंत्रस्यस
त्रिधा ॥ ध्यानयज्ञःसमाख्यातःशिवचिन्तामुहुर्मुहुः ॥ १३ ॥ अध्यापनमध्ययनंव्याख्याश्रवणचिन्तने ॥ इतिपंचप्रकारोयंज्ञानयज्ञःप्रकीर्तितः ॥१४॥

उत्तरोत्तरवैशिष्ट्यंसर्वेषांपरिकीर्तितम् ॥ पञ्चानामपियज्ज्ञानांज्ञानंध्यानंविमुक्तिदम् ॥ १५ ॥ नास्तिज्ञानंविनाध्यानंनास्तिज्ञानमयोगिनः ॥ ज्ञानं
ध्यानञ्चयस्यास्तितीर्णस्तेनभवार्णवः ॥ १६ ॥ ज्ञानंप्रसन्नमेकाग्रमशेषापायवर्जितम् ॥ योगाभ्यासेनसततंविरक्तस्योपजायते ॥ १७ ॥ श्रुतिचिन्ता
भयंज्ञानंविकल्पबहुलंयतः ॥ तस्मात्तदप्रसन्नत्वाच्चंचलंनविमुक्तिदम् ॥ १८ ॥ श्रुत्वाविवर्धयेज्ज्ञानंप्राज्ञस्तच्चिंतयेत्सदा ॥ विमलंतत्प्रसन्नञ्चचिन्त्य
मानंभवेच्छनैः ॥ १९ ॥ आरंभकालेश्रवणेक्रियाकालेचचिंतनम् ॥ निश्चयाद्भावनंतस्यनिष्ठाकालेप्रसन्नता ॥ २० ॥ ज्ञानंविकल्पबहुलंरागाद्यैःकलु
षीकृतम् ॥ तच्चज्ञानंविशुद्ध्यर्थंकलुषोदकवद्भवेत् ॥ २१ ॥ निःसारमतिकष्टंचभवंभावयतःशनैः ॥ नभसीवरजःकालेतत्प्रसन्नंक्रमाद्भवेत् ॥ २२ ॥
यदाप्रसन्नमेकाग्रंस्तिमितोदधिसंस्थितम् ॥ तत्तज्ज्ञानमितिप्रोक्तमज्ञानमितरत्पुनः ॥ २३ ॥ इतिप्रसन्नंयज्ज्ञानंभावनामयमुत्तमम् ॥ रागाद्यैरपरामृष्टं
तद्विज्ञेयंविमुक्तिदम् ॥ २४ ॥ अज्ञानपाशबद्धत्वादमुक्तःपुरुषःस्मृतः ॥ तस्माज्ज्ञानेनमुक्तःस्यादज्ञानस्यपरिक्षयात् ॥ २५ ॥ संसारबीजमज्ञानंसंसा
येज्ञःपुमान्यतः ॥ ज्ञानात्तस्यनिवृत्तिःस्यात्प्रकाशात्तमसोयथा ॥ २६ ॥ अज्ञानेसतिरागाद्याधर्माधर्मौचतद्वशौ ॥ धर्माधर्मवशात्पुंसांशरीरमुपजायते॥
॥ २७ ॥ शरीरेसतिसंक्लेशैःसर्वैःसंयुज्यतेयतः ॥ ततःक्लेशव्यपोहार्थंपुनर्देहंनकामयेत् ॥ २८ ॥ जगतस्तत्वसंबोधादज्ञानंविनिवर्तयेत् ॥ अज्ञानविनि
वृत्तौचरागादीनामसंभवः ॥ २९ ॥ रागाद्युपशमात्पुंसांपुण्यपापपरिक्षयः ॥ तत्क्षयाच्चशरीरेणपुनःसंयुज्यतेनहि ॥ ३० ॥ अशरीरश्चसंक्लेशैःसर्वदैव
नबाध्यते ॥ क्लेशमुक्तःप्रसन्नात्मामुक्तइत्यभिधीयते ॥ ३१ ॥ तस्मादज्ञानमूलानिसर्वदुःखानिदेहिनाम् ॥ ज्ञानेनचतदज्ञानंनिवर्तेतनकर्मभिः ॥ ३२ ॥
नास्तिज्ञानादृतेपुंसांपुण्यपापपरिक्षयः ॥ मोक्षार्थीपुरुषस्तस्माज्ज्ञानमेवसदाभ्यसेत् ॥ ३३ ॥ मृज्यमानंसदायद्वद्दर्पणंनिर्मलंभवेत् ॥ ज्ञानाभ्यासात्त
थापुंसांबुद्धिर्भवतिनिर्मला ॥ ३४ ॥ ज्ञानामृतरसोयेनसकृदास्वादितोभवेत् ॥ ससर्वकार्याण्युत्सृज्यतत्रैवपरिधावति ॥ ३५ ॥ ज्ञानामृतरसःप्रायोये
ननास्वादितोभवेत् ॥ सचान्यत्रैवरमतेतद्विहायैवदुर्मतिः ॥ ३६ ॥ ज्ञानामृतेनतृप्तस्यकृतकृत्यस्ययोगिनः ॥ नैवास्तिकिंचित्कर्तव्यमस्तिचेन्नसत
त्ववित् ॥ ३७ ॥ लोकद्वयेपिकर्तव्यंकिञ्चिदस्यनविद्यते ॥ इहैवसविमुक्तःस्यात्संपूर्णःप्रियदर्शनः ॥३८॥ नास्तिज्ञानात्परंकिंचित्पवित्रंपापनाशनम् ॥
तत्सदाभ्यासयोगेनशनैरात्मनिविंदति ॥ ३९ ॥ व्रतानिदानानितपांसियज्ञाःसंन्यासतीर्थाश्रमकर्मयोगाः ॥ स्वर्गार्थमेतत्पुनरेतिमर्त्योज्ञानंध्रुवं
शांतिकरंमहार्थम् ॥ ४० ॥ नित्यंपठेद्योनियतोमहात्मातथैकचित्तःसततंशृणोति ॥ पौराणधर्मंमुनिभिःप्रणीतंपापक्षयात्तस्यभवेद्विमुक्तिः ॥ ४१ ॥
यज्ञैर्देवत्वमाप्नोतितपोभिर्ब्रह्मणःपदम् ॥ दानेनविविधान्भोगाञ्ज्ञानान्मोक्षमवाप्नुयात् ॥ ४२ ॥ धर्मरज्ज्वाव्रजेदूर्ध्वं पापरज्ज्वाव्रजत्यधः ॥ द्वयंज्ञानासि

नाच्छित्त्वाविदेहःशिवमृच्छति ॥४३॥ ज्ञानिनांयद्यधर्मेणभवेद्बंधःशुभेनवा ॥ ध्रुवंमुक्तिःकथंतेषांनिबद्धानां शुभाशुभैः ॥ ४४ ॥ नहिदेहभृताशक्यंक
र्मत्यक्तुंशुभाशुभम् ॥ गच्छतस्तिष्ठतोवापितदवश्यंभवेद्यतः ॥ ४५ ॥ अधर्मविनिवृत्त्यैवभवेत्पुण्यमकुर्वतः ॥ धर्मत्यागादधर्मश्चसतिष्ठेन्निश्चलःक
थम् ॥ ४६ ॥ तस्माज्ज्ञानासिनाछित्त्वाअशेषंकर्मबन्धनम् ॥ कामाकामकृतंछित्त्वाशुद्धस्त्वात्मनितिष्ठति ॥ ४७ ॥ यथावह्निर्महादीप्तःशुष्कमार्द्रंच
निर्दहेत् ॥ यथाशुभाशुभंकर्मज्ञानाग्निर्दहतेक्षणात् ॥ ४८ ॥ यद्वन्मंत्रबलोपेतःक्रीडन्सर्पैर्नदश्यते ॥ क्रीडन्नलिप्यतेज्ञानीतद्वदिंद्रियपन्नगैः ॥ ४९ ॥
मंत्रौषधिबलैर्यद्वज्जीर्यतेभक्षितंविषम् ॥ तद्वत्सर्वाणिपापानिजीर्यंतेज्ञानिनांक्षणात् ॥ ५० ॥ यथाज्ञानंतथाध्यानंज्ञानंध्यानंसमंस्मृतम् ॥ ज्ञान
ध्यानरतःसौख्यंमुनिर्मोक्षञ्चविंदति ॥ ५१ ॥ ध्यानादैश्वर्यमतुलमैश्वर्यात्सौख्यमुत्तमम् ॥ ज्ञानेनतत्परित्यज्यवितनुर्मुक्तिमाप्नुयात् ॥ ५२ ॥ सर्वेषामे
वयज्ञानांध्यानयज्ञःपरःस्मृतः ॥ नित्यःशुद्धःप्रसन्नश्चसर्वदोषविवर्जितः ॥ ५३ ॥ शुक्लःकृष्णःपरःसूक्ष्मःशुचिःशुद्धःसमाधिजः ॥ ध्यानयज्ञःपरोयज्ञः
स्थूलःशुद्धश्चकर्मणाम् ॥ ५४ ॥ अंतर्यागोपचारेणयःपूजयतिशंकरम् ॥ ध्यानयज्ञेनसततंसयातिपरमांगतिम् ॥ ५५ ॥ यमादिनियमैःपुष्पैरात्मैकाद
शभिःपरैः ॥ दशदिक्षुतथामध्येयजेतपरमेश्वरम् ॥ ५६ ॥ कर्मयज्ञात्तपोयज्ञोविशिष्टोदशभिर्गुणैः ॥ जपयज्ञस्तपोयज्ञाज्ज्ञेयःशतगुणोत्तरम् ॥ ५७ ॥
ज्ञानध्यानात्मकःसूक्ष्मःशिवयोगीमहामखः ॥ पूजयाविपुलंराज्यमग्निकार्येणसंपदः ॥ ५८ ॥ जपेनपापसंशुद्धिर्ज्ञानध्यानेनमुच्यते ॥ प्रक्षीणाशेषपाप
स्यज्ञानध्यानेभवेन्मतिः ॥ ५९ ॥ धनुषांकोटिभियोगस्तदर्धेनहुताशनः ॥ गंगाचषष्टिभिश्चापैर्धर्मक्षेत्रंतदर्धतः ॥ ६० ॥ अग्नौक्रियावतोदेवोहृदिदेवो
मनीषिणाम् ॥ प्रतिमास्वल्पबुद्धीनांज्ञानिनांसर्वतःशिवः ॥ ६१ ॥ शिवमात्मनिपश्यंतिप्रतिमासुनयोगिनः ॥ तद्रूपभावनायैवप्रतिमापरिकल्पिता ॥
॥ ६२ ॥ यःस्मरेत्सर्वगंशांतंतस्यात्मस्थःशिवःसदा ॥ आत्मस्थंयेनपश्यंतितीर्थैर्मार्गंतितेशिवम् ॥ ६३ ॥ दिवसंदिवसार्धंवायत्रतिष्ठंतियोगिनः ॥
तन्मांगल्यंपवित्रंचतत्तीर्थंतत्तपोवनम् ॥ ६४ ॥ जिज्ञासुरपियोगस्ययांगतिंलभतेमुनिः ॥ नतांगतिमवाप्नोतिसर्वैरपिमहामखैः ॥ ६५ ॥ यदिक्लेशेनमह
ताभवेत्पुण्यंमहाफलम् ॥ महापाषाणवाहिभ्योनतत्स्याद्रत्नवाहिनाम् ॥ ६६ ॥ श्रमश्चैतिविनाशोवानित्यंपाषाणवाहिनाम् ॥ सुखश्चात्यर्थसंप्राप्तिर्भवेद्वै
रत्नवाहिनाम् ॥ ६७ ॥ कष्टैःसुयज्ञैश्चतपोभिरुग्रैर्यत्प्राप्यतेधर्ममनंतसंख्यम् ॥ तच्छुद्धभावेनशिवंक्षणार्धंध्यात्वापरंमुक्तिकरंविशुद्धम् ॥ ६८ ॥ यथेहां
तश्चराराज्ञःप्रियाःस्युर्नबहिश्चराः ॥ तथांतर्ध्याननिरताःप्रियाःशंभोर्नकर्मिणः ॥ ६९ ॥ यथांतर्दंतिनोदंताःसुखिनोनबहिःस्थिताः ॥ तथांतर्ध्यान
निरताःसत्फलानबहिश्चराः ॥ ७० ॥ सदांतर्ध्यानयोगेनशिवमभ्यर्चयेत्ततः ॥ येनसंप्राप्यतेज्ञानंमहार्थंगूढगोचरम् ॥ ७१ ॥ कर्मयोगोभवेन्नोचे

च्छिवोविज्ञायतेकुतः ॥ वैर्यांताचसहायत्वात्सुहृदैश्वयथागजः ॥ ७२ ॥ नैकेनहिमरुद्वर्त्मगच्छतीहयथांडजः ॥ कर्मज्ञानमथोद्वाभ्यामा
प्यतेपरमंपदम् ॥७३॥ समभ्यर्च्यमुहूर्तार्धंध्यायेतपरमेश्वरम् ॥ यद्भवेत्सुमहत्पुण्यंनचांतस्तस्यविद्यते ॥ ७४ ॥ यद्यंतराविपद्येतज्ञानयोगार्थमुद्यतः ॥
श्रद्धयागुरुभक्त्याचरौद्रंलोकंसगच्छाति ॥ ७५ ॥ अनुभूयसुखंतत्रकुलेजायेतयोगिनाम् ॥ ज्ञानयोगंततःप्राप्यसंसारमातिवर्तते ॥ ७६ ॥ मृदुमध्योत्त
माचैवश्रद्धापुंसांत्रिधामता ॥ जन्मत्रयाज्ज्ञानयोगमश्रद्धोपीहविंदति ॥ ७७ ॥ व्रतैश्चसुतपोभिश्चयद्यत्कामंसमीहते ॥ भक्त्याशिवात्तमाप्नोतितज्ज्ञाना
त्परमंपदम् ॥ ७८ ॥ इत्येवंज्ञानयोगस्यमाहात्म्यंसमुदाहृतम् ॥ तदभ्यासरतानांचमुनीनांशांतचेतसाम् ॥ ७९ ॥ दशजान्मनिकंदानंकर्मयोगरतात्म
नाम् ॥ शतजन्मभवंदानंतपोनिष्ठायदीयते ॥ ८० ॥ तपोयज्ञाभियुक्तेभ्यःसहस्रगुणितंस्मृतम् ॥ तथालक्षगुणंदानंप्रधानंशिवयोगिनाम् ॥ ८१ ॥ अ
त्यल्पमपियद्दानंशिवज्ञानार्थवादिनाम् ॥ तन्महाप्रलयंयावद्दातुर्भोगायकल्पते ॥ ८२ ॥ नदानमल्पंबहुवाकिंचिदस्तिविजानतः ॥ देशकालविधिश्र
द्धापात्रदत्तंतदक्षयम् ॥ ८३ ॥ पात्रेदेशेचकालेचविधिनाश्रद्धयाचयत् ॥ दत्तंकृतंहुतंश्रेष्ठंतदनंतफलंभवेत् ॥ ८४ ॥ तिलार्धमात्रकेणापिपरिमाणेनदी
यते ॥ सत्पात्रेश्रद्धयाकिंचित्तद्भवेत्सार्वकामिकम् ॥ ८५ ॥ यद्धौतंज्ञानसलिलैःशीलभस्मप्रजार्जितम् ॥ तत्पात्रंसर्वपात्राणामुत्तमंसार्वकामिकम् ॥
॥ ८६ ॥ ज्ञानोडुपेनयःपुंसांत्रातासंसारसागरात् ॥ अज्ञानफेनिलंत्रातातत्पात्रंपरमंस्मृतम् ॥ ८७ ॥ ज्ञानप्लवबलोपेतोयातिपापमहार्णवात् ॥ ना
ज्ञानीतारयेदज्ञंकिंशिलातारयेच्छिलाम् ॥ ८८ ॥ शिवयोगीगृहेयस्यभिक्षांगृह्णातिसत्कृताम् ॥ कुलमुत्तारयेत्तस्यनरकार्णवसंस्थितम् ॥ ८९ ॥ यज्ञा
ग्निहोत्रतीर्थेषुयत्फलंपरिकल्पितम् ॥ योगिनामन्नदानेनतत्समग्रंफलंलभेत् ॥ ९० ॥ ज्ञानिनेशांतचित्तायशिवध्यानरतायच ॥ श्रद्धयान्नंसकृद्दत्वासर्व
पापैःप्रमुच्यते ॥ ९१ ॥ एकंमुनिवरंशांतमीशानार्पितमानसम् ॥ भोजयित्वासकृद्भक्त्यासर्वान्कामानवाप्नुयात् ॥ ९२ ॥ पितॄनुद्दिश्ययःश्राद्धेभोजये
च्छिवयोगिनः ॥ सगच्छेदैश्वरंस्थानमेकविंशतितुलान्वितः ॥ ९३ ॥ ध्यायमानःशिवंयोगीभुंक्तेन्नंसततंयतः ॥ ततःसाक्षाच्छिवेनैतत्सुभुक्तमशनंभवे
त् ॥ ९४ ॥ शिवायसर्वपाकान्नंनिवेद्याग्नौचहोमयेत् ॥ कल्पयेच्चगुरोर्भागमित्ययंसततंविधिः ॥९५॥ शिवाग्निगुरुविप्रेभ्यःसर्वपाकाग्रमन्वहम् ॥ योनि
वेद्यात्मनाभुंक्तेसरुद्रोनात्रसंशयः ॥ ९६ ॥ अनिवेद्यचयोभुंक्तेसभुंक्तेकिल्बिषंनरः ॥ कृषिवृद्ध्यादिवाणिज्यक्रोधसंमार्जनादिभिः ॥ ९७ ॥ पुंसःपापानि
वर्धंतेसूनादोषैस्तुपंचभिः ॥ संमार्जनांजनंतोयमग्निकुंडनिपेषणम् ॥९८॥ सूनाःपंचगृहस्थानांनित्यंपापाभिवृद्धये ॥ शिवाग्निगुरुपूजाभिःपापैरेतैर्नलि
प्यते ॥ ९९ ॥ अन्यैश्चपातकैर्घोरैस्तस्मात्संपूजयेत्त्रयम् ॥ शिवाग्निगुरुनैवेद्यैर्यावत्सिक्थास्तुसंख्यया ॥१००॥ तावद्वर्षसहस्राणिदाताशिवपुरेवसेत् ॥

घृतापूपान्नसिक्थैश्चपुण्यंदशगुणोत्तरम् ॥ १ ॥ षाष्टिकोदननैवेद्येसहस्रगुणितंफलम् ॥ सुगंधिशालिनैवेद्येविज्ञेयंतद्दशाधिकम् ॥ २ ॥ रक्तशालिसुनै
वेद्येफलंदशगुणंहितत् ॥ कलमाशालिनैवेद्येतस्यलक्षाधिकंफलम् ॥ ३ ॥ एवंशालिविशेषेणफलंस्यादुत्तरोत्तरम् ॥ सद्व्यंजनघृतैर्भूयस्ततपुण्यमतिव
र्द्धते ॥ ४ ॥ क्षीरभक्तेननैवेद्येतस्यपुण्यंदशाधिकम् ॥ दधिशर्करयायुक्तेतत्पुण्यंस्याद्दशाधिकम् ॥ ५ ॥ रसान्नंसुरसंशीतंकर्पूरसुरभीकृतम्॥निवेद्यपु
ण्यमाप्नोतिदशकोटिगुणाधिकम् ॥ ६ ॥ गुडखंडकृतैर्भक्ष्यैर्घृतेनपरिपाचितैः ॥ कोट्युत्तरंतुनैवेद्यैःशिवाग्निगुरुबंधुषु ॥ ७ ॥ यथायथाचस्वादूनिस्नि
ग्धानिसुरभीणिच ॥ भक्त्यानिवेद्यभुंजानःफलमक्षय्यमाप्नुयात ॥ ८ ॥ एवंयःकुरुतेश्राद्धंभक्तितःशिवयोगिनाम् ॥ सपितॄन्त्सर्वपापेभ्यःसमुद्धृत्यदि
वंनयेत् ॥ ९ ॥ वस्त्रान्नपानैर्भक्त्याचपूजयेच्छिवयोगिनः ॥ युगपत्पूजितास्तेनब्रह्मविष्णुमहेश्वराः ॥११०॥ यःसंपूज्यशिवंश्राद्धेपूजयेच्छिवयोगिनः ॥
नृत्यंतिपितरस्तृप्तागायंतिचपितामहाः ॥ ११ ॥ शिवध्यानिनमायांतंभस्मांगंगृहसंस्थितम् ॥ क्रीडंत्योषधयःसर्वायास्यंत्यःस्वर्गमुत्तमम् ॥ १२ ॥ त
स्मादतिथिवेलायामधिगच्छेत्कृतांजलिः ॥ शक्त्यासंपूजयेद्भक्त्यास्वयंपानान्नभोजनैः ॥ १३ ॥ रूपान्वितंविरूपंचमलिनंमलिनांबरम् ॥ योगींद्रशंक
यानित्यमतिथिंनविचारयेत् ॥ १४ ॥ येद्विषंतिशिवंदेवान्वेदान्यज्ञानथागमान् ॥ अधोमुखोर्ध्वपादास्तेपच्यंतेनरकादिषु ॥ १५ ॥ कृमिभिर्भिन्नवद
नास्तप्यमानाश्चवह्निना ॥ तेपीडच्यंतेमहाघोरैर्यावदाभूतसंप्लवम् ॥ १६ ॥ येऽपवादंहिशृण्वंतिसाधूनांयोगिनामपि ॥ तेविशेषेणपच्यंतेनरकेष्वामही
क्षयात् ॥ ११७ ॥ श्रोतरिसतिवक्तारोभवंतिश्रूयतेनतु ॥ तस्माच्छ्रोतातुपापीयाञ्छ्रोतुस्तद्द्विगुणंभवेत् ॥ १८ ॥ वक्ताश्रोतानुमंताचप्रयोक्तादूषण
स्यच ॥ एतैस्तुयःसुसंपर्कीपंचैतेनारकाःस्मृताः॥१९॥ अज्ञानपंकनिर्मग्नमात्मत्राणविवर्जितम्॥ अपुण्यागिरिणाक्रांतमपात्रंगुणवर्जितम्॥१२०॥आम
पात्रेरसोयद्वन्नश्यतेद्राक्सभाजनः ॥ दानमज्ञेतथान्यस्तंसहपात्रेणनश्यति ॥ २१ ॥ यद्बीजमूषरेन्यस्तंसर्वंनिष्फलतांव्रजेत् ॥ दानंतद्वदपात्रेतुविन्य
स्तंनिष्फलंभवेत् ॥ २२ ॥ भस्मनीवहुतंद्रव्यंयथाहोतुश्चनिष्फलम् ॥ ज्ञानाग्निरहितेविप्रेतथादानंनिरर्थकम् ॥ २३ ॥ यथाषंढेवरस्त्रीषुयथागौर्गविनि
ष्फला ॥ ब्राह्मणस्यतथाजन्मज्ञानहीनस्यनिष्फलम् ॥ २४ ॥ लोहोडुपेनप्रतरन्निमज्जत्युदकेयथा ॥ तथादाताग्रहीताचपतत्यंधेतमस्यतः ॥२५॥ का
रुण्यात्सर्वभूतेभ्यःश्रद्धयायत्प्रदीयते ॥ दानंतदपिविज्ञेयंसार्वकामिकमुत्तमम् ॥ २६ ॥ दीनांधकृपणानाथबालवृद्धकृशातुरान् ॥ एतान्संपूजयेन्नि
त्यमर्थीगृह्णातिनित्यशः ॥ २७ ॥ अर्हत्त्वाज्ज्ञानिनःपात्रंसस्पृहत्वान्नतेर्थिनः ॥ अलिपकापिहिततपूजापर्याप्तंजन्मनःफलम् ॥ २८ ॥ नहिस्वार्थंसमु
द्दिश्यप्रतिगृह्णंतिसाधवः ॥ दातुरेवोपकारायगृह्णंतिमुनयोमनाक् ॥ २९ ॥ दरिद्रःसाधुभिर्यत्नात्प्रार्थनीयोऽनुकंपया ॥ अदानात्तस्यदारिद्र्यंदानादै

श्वर्यमाप्नुयात् ॥ १३० ॥ दातुरेवोपकारायवदत्यर्थीददस्वमे ॥ तस्माद्दाताव्रजेदूर्ध्वमधस्तिष्ठेत्प्रतिग्रही ॥ १३१ ॥ देहीत्येवंवदत्यर्थीजनंबोधयतीव
सः ॥ यदिदंकष्टमर्थित्वंप्रागदानफलंहितत् ॥ ३२ ॥ बोधयंतिनयाचंतेदेहीतिकृपणंजनाः ॥ अवस्थेयमदानस्यमाभूदेवंभवानिति ॥ ३३ ॥ इतिक
ल्याणमायांतमर्थिनंकोनपूजयेत् ॥ दानात्स्वर्गमवाप्नोतिकोनुबंधुरिहार्थिनः ॥ ३४ ॥ इहामुत्रफलेनापिदातारमनुयोजयेत् ॥ आयात्यर्थीगृहंदातुःक
स्तंनप्रतिपूजयेत् ॥ ३५ ॥ नार्थिनःस्युःकथंपूज्यायाचमानादिनेदिने ॥ येबलादप्यनिच्छंतोयोजयंतिश्रियासह ॥ ३६ ॥ अहन्यहनिमार्गतंकोनावि
द्याद्गुरुंयथा ॥ मार्जनंदर्पणस्येवयःकरोतिदिनेदिने ॥ ३७ ॥ करमुत्तानकंकृत्वादानंगृह्णातियोद्विजः ॥ दानादूर्ध्वंगतिस्तेनदातुर्दर्शयतीवसः ॥ ३८ ॥
एकेनतिष्ठताधस्तादन्येनोपरितिष्ठता ॥ दातृयाचकयोर्भेदःकराभ्यामेवसूचितः ॥ ३९ ॥ यःप्राप्तेऽर्थिनिदीनेतुत्यक्त्वापात्रंप्रतीक्षते ॥ सवणिग्धर्मयुक्त
त्वान्नदातापरमार्थतः ॥ १४० ॥ यद्यर्थिनोनरानस्युर्दातुर्धर्मःकथंभवेत् ॥ सत्स्वर्थिषुभवेद्दानंसतिदानेचतत्फलम् ॥ ४१ ॥ यदिलुब्धाःसदादीनानस्यु
रप्रियवादिनः ॥ कुत्रदानंदयाक्षांतिर्भाव्यंतेसाधुभिस्तथा ॥ ४२ ॥ यदिनामनदेयंस्यात्स्वंसंप्राप्तार्थिनेगृहे ॥ किंवाक्यान्यपिनष्टानिप्रियाण्यनुगता
निच ॥ ४३ ॥ अभ्युत्थानाभिगमनंस्वागतंस्वासनंप्रियम् ॥ पादोदकमनुव्रज्यास्वर्गसोपानसप्तकम् ॥ ४४ ॥ चित्तंवित्तानुसारेणकदाकस्यभविष्य
ति ॥ यदिदास्यतिभूतंहिसोर्थिनेगृहमागते ॥ ४५ ॥ नमैत्रीधर्मराजेनसार्धंतुकेनचित्कचित् ॥ मर्त्यैस्त्वदत्तदानंयन्ननयिष्यातिसांप्रतम् ॥ ४६ ॥ स्व
भावाद्दानकामोयःसस्वर्गीनात्रसंशयः ॥ दानंप्रियविनिर्मुक्तंनष्टमाहुर्मनीषिणः ॥ १४७ ॥ सकृदपीहदातव्यंप्रियेणाक्षयमिच्छता ॥ प्रत्याख्यानमपिश्रे
यःप्रियानुनयपेशलम् ॥ ४८ ॥ नतुदानमसत्कारपारुष्यमलिनीकृतम् ॥ वरंनदत्तमर्थिभ्यःसंक्रुद्धेनांतरात्मना ॥ ४९ ॥ दानंव्रतानिनियमायज्ञाध्यां
नंहुतंतपः ॥ यत्नेनापिकृतंसर्वंक्रोधेनैववृथाभवेत् ॥ १५० ॥ यःश्रद्धयार्थिनेदद्यात्प्रतिगृण्हंतिचार्थिनः ॥ तावुभौगच्छतःस्वर्गंनरकंतुविपर्यये ॥ ५१ ॥
औदार्यसंगतंमैत्रीमनुकंपाममत्सरम् ॥ गुणानेवहितान्पश्चदातुर्दानंमहाफलम् ॥५२॥वाराणसीकुरुक्षेत्रंप्रयागंपुष्कराणिच ॥ गंगासमुद्रतीरंचनैमिषामर
कंटकम्॥५३॥श्रीपर्वतोमहापुण्योगोकर्णोज्ञानपर्वतः ॥ इत्यादिकीर्तितादेशाःसुरसिद्धनिषेविताः॥५४॥सर्वेशिवाश्रमंपुण्यंसर्वानद्यःसपर्वताः ॥ गोसिद्ध
मुनिवासश्चपुण्यदेशाःप्रकीर्तिताः ॥ ५५ ॥ शिवायतनसंस्थानेयदल्पमपिदीयते ॥ तदनंतफलंज्ञेयंशिवक्षेत्रानुभावतः ॥ ५६ ॥ ग्रहणंचन्द्रसूर्या
भ्यामुत्तरायणदक्षिणम् ॥ विषुवत्सव्यतिपातंषडशीतिमुखंतथा ॥ ५७ ॥ दिनच्छिद्राणिसंक्रांतिर्युगांताश्चयुगादयः ॥ एतेकालाःसमाख्याताःपुं
सांपुण्यविवर्धनाः ॥ ५८ ॥ भक्तिभावयुतंकालेदानंदत्तंसदाऽक्षयम् ॥ श्रद्धामातेवजननीज्ञानस्यसुकृतस्यच ॥ ५९ ॥ तस्माच्छ्रद्धांसमुत्पाद्य

देयमक्षयमिच्छता ॥ यद्दानंश्रद्धयापात्रेविधिवत्प्रतिपादितम् ॥ १६० ॥ तदनंतफलंतेषामपिग्रासार्द्धमात्रकम् ॥ ६१ ॥ आर्तेषुदीनेषुगुणा
न्वितेषुयद्वाबहुस्वल्पमपिप्रदत्तम् ॥ तत्सर्वकामान्समुपैतिलोकेश्रद्धैवलोकेप्रवदंतितज्ज्ञाः ॥ १६२ ॥ इतिश्रीशिवमहापुराणेधर्मसंहि
तायांसप्तदशोऽध्यायः ॥ १७ ॥ सूतउवाच ॥ तत्रयेपापनिलयाःस्थूलानरकहेतवः ॥ तेसमासेनकथ्यंतेवाङ्मनःकायसंस्थिताः ॥ १ ॥
परस्त्रीद्रव्यसंकल्पंचेतसानिष्टचिंतनम् ॥ अकार्याभिनिवेशश्चचतुर्धाकर्ममानसम् ॥ २ ॥ अनिबद्धप्रलापित्वमसत्यंचाप्रियंचयत् ॥ परोक्षतश्चपैशुन्यं
चतुर्धाकर्मवाचिकम् ॥ ३ ॥ अभक्ष्यभक्षणंहिंसामिथ्याकार्यनिवेशनम् ॥ परस्वानामुपादानंचतुर्धाकर्मकायिकम् ॥ ४ ॥ इत्येतद्द्वादशविधंकर्मप्रोक्तंनृ
साधनम् ॥ अस्यभेदान्पुनर्वक्ष्येयेषांफलमनंतकम् ॥ ५ ॥ येद्विषंतिमहादेवंसंसारार्णवतारकम् ॥ सुमहत्पातकोपेतास्तेयांतिनिरयंनराः ॥ ६ ॥ दूषयं
तिशिवंशास्त्रंज्ञानंसर्वार्थसाधकम् ॥ सुमहत्पातकंतेषांनिरयार्णवगामिनाम् ॥ ७ ॥ येशिवज्ञानवक्तारंनिंदंतिचतपस्विनम् ॥ गुरून्पितॄनघोपेतास्तेयां
तिनिरयार्णवम् ॥ ८ ॥ शिवनिंदागुरोर्निंदाशिवज्ञानस्यदूषणम् ॥ देवद्रव्यापहरणंद्विजद्रव्यविनाशनम् ॥९॥ हरंतियेचसंमूढाःशिवज्ञानस्यपुस्तकम्॥
महांतिपातकान्याहुरनंतफलदानिषट् ॥ १० ॥ नाभिनंदंतियेदृष्ट्वाशिवपूजांप्रकल्पिताम् ॥ ननमंत्यर्चितंदृष्ट्वापूजितंनस्तुवंतिच ॥ ११ ॥ यथेष्टचेष्टा
निःशंकाःसंतिष्ठंतेरमंतिच ॥ उपचारविनिर्मुक्ताःशिवाग्निगुरुसन्निधौ ॥ १२ ॥ स्थानसंस्कारपूजांचयेनकुर्वंतिपर्वसु ॥ विधिवद्वागुरूणांचकर्मयोगव्य
वस्थिताः ॥ १३ ॥ येत्यजंतिशिवाचारंशिवभक्तान्द्विषंतिच ॥ असंपूज्यशिवज्ञानंयेधीयतेलिखंतिच ॥ १४ ॥ अन्यायतःप्रयच्छंतिशृण्वंत्युच्चारयंति
च ॥ विक्रीणंतिचलोभेनकुज्ञानानियमेनवा ॥ १५ ॥ असंस्कृतप्रदेशेषुयथेष्टंस्थापयंतिच ॥ शिवज्ञानकथाक्षेपंयःकृत्वान्यत्प्रभाषते ॥१६॥ नब्रवीतिच
यःसत्यंनप्रदानंकरोतिच ॥ अशुचिर्वाशुचिस्थानेयःप्रवक्तिशृणोतिच॥१७॥गुरुपूजादिकृत्वैवयःशास्त्रंश्रोतुमिच्छति ॥ नकरोतिचशुश्रूषामाज्ञांभक्तिंच
भावतः ॥ १८ ॥ नाभिनंदतितद्वाक्यमुत्तरंचप्रयच्छति ॥ गुरुकर्मणिशाठ्यंचतदुपेक्षांकरोतिच ॥ १९ ॥ गुरुमार्तमशक्तंवाविदेशप्रस्थितंतथा ॥ वैरि
भिःपरिभूतंवायःसंत्यजतिपापकृत् ॥ २० ॥ तद्भार्यापुत्रमित्रेषुयश्चावज्ञांकरोतिच ॥ एवंसुवाचकस्यापिगुरोर्धर्मानुदर्शिनः ॥ २१ ॥ सुमहत्पातका
न्याहुःशिवनिंदासमानिच॥ब्रह्मघ्नश्चसुरापश्चस्तेयीचगुरुतल्पगः॥२२॥महापातकिनस्त्वेतेतत्संयोगीचपंचमः॥क्रोधाल्लोभाद्भयाद्द्वेषाद्ब्राह्मणस्यवधेतुयः
॥२३॥मर्मांतकंमहादोषमुक्तासब्रह्महाभवेत्॥ब्राह्मणंयःसमाहूयउक्त्वापश्चाद्ददातिन॥२४॥निर्दोषंदूषयेद्यस्तुसनरोब्रह्महाभवेत् ॥ यश्चविद्याभिमानेनानि
स्तेजयतिसुद्विजम्॥२५॥उदासीनंसभामध्येब्रह्महासप्रकीर्तितः॥मिथ्यागुणैर्यआत्मानंनयत्युत्कर्षतांबलात् ॥२६॥गुणानपिनिरुंध्याद्यःसचवैब्रह्महाभवे

त्॥क्षुत्तृषातप्तदेहानांगृहत्यागीसतांतुयः॥२७॥उद्वेगजननःक्रूरःसचवैब्रह्महाभवेत्॥परदोषान्परिज्ञायनृपकर्णेजपेत्तुयः॥२८॥पापीयान्पिशुनःक्षुद्रःसचवै
ब्रह्महाभवेत्॥गवांतृषाभिभूतानांद्विजानांगुरुपूर्वकम्॥२९॥यःसमाचरतेविघ्नंतमाहुर्ब्रह्मघातकम्॥देवद्विजगवांभूमिंप्रदत्तांहरतेतुयः॥३०॥ प्रणष्टामपिका
लेनतमाहुर्ब्रह्मघातकम्॥देवद्विजस्वहरणंन्यायेनैवोपपादितम्॥३१॥ब्रह्महत्यासमंज्ञेयंपातकंनात्रसंशयः॥अधीत्ययोद्विजोवेदंव्रतज्ञानंशिवात्मकम्॥३२॥
परित्यजतियोमूढःसुरापानस्यतत्समम् ॥ यत्किंचिद्विव्रतंगृह्यनियमंयजनंतथा ॥ ३३ ॥ संन्यासीपंचयज्ञानांसुरापानेनतत्समम् ॥ पितृमातृपरित्या
गीकूटसाक्षीद्विजेऽनृते ॥ ३४ ॥ अप्रियंशिवभक्तानामभक्ष्यस्यचभक्षणम् ॥ वनेनिरपराधानांप्राणिनांचोपघातनम् ॥ ३५ ॥ द्विजार्थंप्रतियत्साधून्ध
र्मार्थंतुनियोजयेत् ॥ गवांमार्गेवनेग्रामेयच्चैवाग्निःप्रदीयते ॥ ३६॥ इतिपापानिघोराणिब्रह्महत्यासमानितु ॥ दीनेसर्वस्वहरणंनरस्त्रीगजवाजिनाम्॥३७॥
गोभूरजतवस्त्राणामोषधीनांरसस्यच ॥ चंदनागुरुकर्पूरकस्तूरीपटवाससाम् ॥ ३८ ॥ हस्तन्यासापहरणंरुक्मस्तेयसमंस्मृतम् ॥ कन्यानांवरयोग्याना
मदानात्सदृशेवरे ॥ ३९ ॥ पुत्रमित्रकलत्रेषुगमनंभगिनीषुच ॥ कुमारीसाहसंघोरमंत्यजस्त्रीनिषेवणम् ॥ ४० ॥ सवर्णायाश्चगमनंगुरुभार्यासमंस्मृतम्
॥ महापातकतुल्यानिशृणुध्वमुपपातकम् ॥४१॥ द्विजायार्थंप्रतिज्ञायद्विजेभ्योनददातिचेत् ॥ नचस्मारयतेयस्तुतयोःस्यादुपपातकम् ॥४२ ॥ द्विज
द्रव्यापहरणंमर्यादायाव्यतिक्रमः ॥ अतिमानोतिकोपश्चदांभिकत्वंकृतघ्नता ॥ ४३ ॥ अत्यंतविषयासक्तिःकार्पण्यंशाठ्यमत्सरम् ॥ परदाराभिगमनं
साधुकन्यासुदूषणम् ॥ ४४ ॥ परिवित्तिःपरिवेत्तायययाचपरिविंदति ॥ तयोर्दानंचकन्यायास्तयोरेवचवंचनम् ॥ ४५ ॥ पुत्रमित्रकलत्राणामभावेस्वा
मिनस्तथा ॥ कार्याणांचपरित्यागःसाधुबंधुतपस्विनाम् ॥ ४६ ॥ गवांक्षत्रियवैश्यानांस्त्रीशूद्राणांतथावधः ॥ शिवाश्रमतरूणांचपुष्पारामविनाशनम्
॥ ४७ ॥ यःपीडामाश्रमस्थानामाचरेदल्पिकामपि ॥ सभृत्यपरिवारस्यपशुधान्यधनस्यवा ॥ ४८ ॥ कुप्यधान्यपशुस्तेयमपाव्यानांचपाठनम् ॥
यज्ञारामतडागानांदारापत्यस्यविक्रयः ॥ ४९ ॥ तीर्थयात्रोपवासानांव्रतायतनकार्मिणाम् ॥ स्त्रीधनान्युपजीवंतिस्त्रीभिरत्यंतनिर्जिताः ॥ ५० ॥ अर
क्षणंचनारीणांमद्यपस्त्रीनिषेवणम् ॥ कालागताप्रदानंचधान्यवृद्ध्युपसेवनम् ॥५१॥ निंदितस्यधनादानंपण्यानांकूटविक्रयः॥ विषमारण्ययंत्राणांसततं
वृषवाहनम् ॥ ५२ ॥ उच्चाटनाभिचारौचवृत्त्यादानभिषक्क्रियाः ॥ जिह्वाकामोपभोगार्थंयस्यारंभःसुकर्मसु ॥ ५३ ॥ मूल्येनाध्यापकोनित्यंवेदज्ञा
नादिकंचयत् ॥ व्रात्यत्वंव्रतसंत्यागअन्याचारनिषेवणम् ॥ ५४ ॥ असच्छास्त्राधिगमनंशुष्कतर्कावलंबनम् ॥ देवाग्निगुरुसाधूनांनिंदागोब्राह्मणस्यच
॥ ५५ ॥ प्रत्यक्षंवापरोक्षंवाराज्ञांमंडलिनामपि ॥ उत्सन्नपितृदेवेज्याःस्वकर्मत्यागिनश्चये ॥ ५६ ॥ दुःशीलानास्तिकाःपापाःसदाचासत्यवादिनः ॥

पर्वकालेदिवाचाप्सुवियोनौपशुयोनिषु ॥ ५७ ॥ रजस्वलायायोनौचमैथुनंयःसमाचरेत् ॥ स्त्रीपुत्रमित्रसंप्राप्तौआशाच्छेदकराश्चये ॥ ५८ ॥ जनस्या
प्रियवक्तारःक्रूराःसमयभेदिनः॥भेत्तातडागकूपानांसंक्रमाणांरसस्यच ॥ ५९ ॥ एकपंक्तिस्थितानांचपाकभेदंकरोतियः ॥ इत्येतैःस्त्रीनराःपापैरुपपात
किनःस्मृताः ॥ ६० ॥ युक्ताएभिस्तथान्यानिशृणुतानिब्रवीमिते ॥ येगोब्राह्मणकन्यानांस्वामिमित्रतपस्विनाम् ॥ ६१ ॥ विनाशयंतिकार्याणितेनरा
नारकामताः ॥ परश्रियाभितप्यंतेयेपरद्रव्यसूचकाः ॥ ६२ ॥ परद्रव्यहरानित्यंतौल्यमिथ्यानुकारकाः ॥ द्विजदुःखकरायेतुप्रहारंचोद्धरंतिये ॥ ६३॥
यःसेवतेद्विजःशूद्रंसुरांचाघ्रातिकामतः ॥ येपापाभिरताःक्रूरायेपिहिंसाप्रियानराः ॥ ६४॥ पंक्त्यर्थंयेपिकुर्वंतिदानयज्ञादिकांक्रियाम् ॥ गोष्ठाग्निजलर
थ्यासुतरुच्छायानगेषुच ॥ ६५ ॥ त्यजंतियेपुरीषाद्यमारामायतनेषुच ॥ जलाश्रमप्रसादेषुमद्यपानरतानराः ॥ ६६ ॥ कृतकेलिभुजंगाश्चरंध्रान्वेषण
तत्पराः ॥ वंशेष्टकाशिलाकाष्ठैःशृंगैःशंकुभिरेवच ॥ ६७ ॥ येमार्गमनुरुंधंतिपरसीमांहरंतिये ॥ कूटशासनकर्तारःकूटकर्माक्रियारताः ॥ ६८ ॥ कूटयु
द्धान्नवस्त्राणिकूटसंव्यवहारिणः ॥ धनुषांशस्त्रशल्यानांकर्तायःक्रयविक्रयी ॥ ६९ ॥ निर्दयोतीवभृत्येषुपशूनांदमनश्चयः ॥ मिथ्याप्रवदतोवाचआकर्ण
यंतियःशनैः ॥ ७० ॥ स्वामिमित्रगुरुद्रोहीमायावीचपलःशठः ॥ भार्यापुत्रात्तमित्राणिबालवृद्धकृशातुरान् ॥ ७१ ॥ भृत्यानातिथिबन्धूंश्चत्यक्त्वाश्ना
तिबुभुक्षितान् ॥ यःस्वयंमिष्टमश्नातिविप्रेभ्योनप्रयच्छति ॥ ७२ ॥ वृथापाकीसविज्ञेयोब्रह्मवादिषुगर्हितः ॥ नियमान्त्स्वयमादाययेत्यजंत्यजिते
न्द्रियाः ॥ ७३ ॥ प्रव्रज्यावासितायेचरहस्यस्यप्रभेदकाः ॥ येताडयंतिगाःक्रूराःशपंतेचमुहुर्मुहुः ॥ ७४ ॥ दुर्बलान्येनपुष्णंतिसततंयेत्यजंतिच ॥
पीडयंतिचभारेणसततंवाहयंतिच ॥ ७५ ॥ योर्धयामात्प्रहराद्वासंयतान्नविमुंचति ॥ योभाराक्रांतरोगातान्गोवृषांश्चक्षुधातुरान् ॥ ७६ ॥
नपालयंतियत्नेनगोघ्नास्तेनारकाःस्मृताः ॥ वृषाणांवृषणान्येचपापिष्ठागालयंतिच ॥ ७७ ॥ वाहयंतिचगांवंध्यांमहानारकिणोनराः ॥ आशयासमनु
प्राप्तान्क्षुत्तृड्भ्यांश्रमकर्शितान् ॥ ७८ ॥ अतिथींश्चतथाश्रेष्ठान्त्स्वशक्त्यागृहमागतान् ॥ अनाथान्विकलान्दीनान्बालवृद्धकृशातुरान् ॥ ७९ ॥ नानु
कंपंतियेमूढास्तेयांतिनरकार्णवम् ॥ गृहेष्वर्थानिवर्ततेश्मशानादपिबांधवाः ॥ ८०॥ सुकृतंदुष्कृतंचैवगच्छंतमनुगच्छति ॥ आजाविकोमाहिषिकः
सामुद्रोवृषलीपतिः ॥ ८१ ॥ शूद्रवत्क्षत्रवृत्तिश्चनारकाःस्युर्द्विजाधमाः ॥ शिलिपनःकारवोवैद्याहेमकारनृपध्वजाः॥८२॥ भृतकाःकूटसंयुक्ताःसर्वैतेना
रकाःस्मृताः ॥ यश्चोचितमतिक्रम्यस्वेच्छयैवहरेत्करम् ॥ ८३ ॥ नरकेपच्यतेसोपियोपिदण्डरुचिर्नरः ॥ उत्कोचकैरुचिक्रीतैस्तस्करैश्चप्रपीड्यते ॥
॥ ८४ ॥ यस्यराज्ञःप्रजाराष्ट्रेपच्यतेनरकेषुच ॥ येद्विजाःप्रतिगृण्हंतिनृपस्यान्यायवर्तिनः ॥ ८५ ॥ प्रयांतितेतुघोरेषुनरकेषुनसंशयः ॥ अन्यायात्स

मुपादायद्विजेभ्योयःप्रयच्छति ॥ ८६ ॥ प्रजाभ्यःपच्यतेसोऽपिनरकेषुनृगोयथा ॥ पारदारिकचोराणांचंडानांविद्यतेत्वघम् ॥ ८७ ॥ यत्तदरक्ष
कस्यापिराज्ञोभवतिनित्यशः ॥ अचोरंचोरवत्पश्येच्चोरंवाचोररूपिणम् ॥ ८८ ॥ अविचार्यनृपस्तंवैघातयेन्नरकंव्रजेत् ॥ घृततैलान्नपानादिमधुमां
ससुरासवम् ॥ ८९ ॥ गुडेक्षुशर्करान्नानिदधिमूलफलानिच ॥ तृणंकाष्ठंपत्रपुष्पमौषधंवासभाजनम् ॥ ९० ॥ उपानच्छत्रशकटमासनंचकमंड
लुम् ॥ त्रपुताम्रारसीसानिशंखाद्यश्चजलोद्भवम् ॥ ९१ ॥ वाद्यंचवैणवंचान्यद्गृहोपकरणानिच ॥ ऊर्णाकार्पासकौशेयपट्टसूत्रोद्भवानिच ॥ ९२ ॥
स्थूलसूक्ष्माणिवस्त्राणियेलोभाद्विहरंतिच ॥ एवमाद्यानिचान्यानिद्रव्याणिविविधानिच ॥ ९३ ॥ नरकेषुध्रुवंगच्छेदपहृत्यालकान्यपि ॥
यद्वातद्वापरद्रव्यमपिसर्षपमात्रकम् ॥ ९४ ॥ अपहृत्यनरोयातिनरकंनात्रसंशयः ॥ एवमाद्यैर्नरःपापैरुत्क्रांतेःसमनंतरम् ॥ ९५ ॥ शरीरयातनार्था
यपूर्वाकारमवाप्नुयात् ॥ यमलोकंव्रजंत्येतेशरीरेणयमाज्ञया ॥ ९६ ॥ यमदूतैर्महाघोरैर्नीयमानाःसुदुःखिताः ॥ देवतिर्यङ्मनुष्याणामधर्म
निरतात्मनाम् ॥ ९७ ॥ धर्मराजःस्मृतःशास्तासुघोरैर्विविधैर्वधैः ॥ नियमाचारयुक्तानांप्रमादात्स्खलितात्मनाम् ॥ ९८ ॥ प्रायश्चित्तैर्गुरुः
शास्तानबुद्धैरिष्यतेयमः ॥ पारदारिकचौराणामन्यायव्यवहारिणाम् ॥ ९९ ॥ नृपतिःशासकःप्रोक्तःप्रच्छन्नानांचधर्मराट् ॥ तस्मात्कृतस्यपा
पस्यप्रायश्चित्तंसमाचरेत् ॥ १०० ॥ नाऽभुक्तस्यान्यथानाशःकल्पकोटिशतैरपि ॥ यःकरोतिस्वयंकर्मकारयेच्चानुमोदयेत् ॥१०१॥ कायेनमनसावा
चातस्यपापगतिःफलम् ॥ १०२ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांपापभेदादिकथनंनामाष्टादशोऽध्यायः ॥१८॥ ॥सनत्कुमारउवाच ॥ अथपापै
र्नरायांतियमलोकंचतुर्विधैः ॥ संत्रासजननंघोरंविवशाःसर्वदेहिनः ॥१ ॥ गर्भस्थैर्जायमानैश्चबालैस्तरुणमध्यमैः॥स्त्रीपुन्नपुंसकैर्जीवैर्जातव्यंसर्वजंतुषु ॥
॥ २ ॥ शुभाशुभफलंतत्रदेहिनांसंविचार्यते ॥ चित्रगुप्तादिभिःसर्वैर्वसिष्ठप्रमुखैस्तथा॥३॥नकेचित्प्राणिनःसंतियेनयांतियमक्षयम् ॥ अवश्यंहिकृतंकर्म
भोक्तव्यंतद्विचार्यते ॥ ४ ॥ तत्रयेशुभकर्माणःसौम्यचित्तादयान्विताः ॥ तेनरायांतिसौम्येनपूर्वयमनिकेतनम् ॥ ५ ॥ येपुनःपापकर्माणःपापदानविव
र्जीताः ॥ तेघोरेणपथायांतिदक्षिणेनयमालयम् ॥ ६ ॥ षडशीतिसहस्राणियोजनानामतीत्यसः ॥ वैवस्वतपुरंयातिनानारूपमवस्थितम् ॥ ७ ॥ समी
पस्थमिवाभातिनराणांशुभकर्मणाम् ॥ प्राणिनामपिदूरस्थंपथारौद्रेणगच्छताम् ॥ ८ ॥ तीक्ष्णकंटकयुक्तेनशर्करानिचितेनच ॥ क्षुरधारानिभैस्तीक्ष्णैः
पाषाणैर्निचितेनच ॥ ९ ॥ केचित्पंकेनमहतादुरुत्तारैश्चपातकैः ॥ लोहसूचिमुखैर्दंशैःसंछन्नेनपथाक्वचित् ॥ १० ॥ तटप्रपातविषमैःपर्वतैर्वृक्षसंकुलैः ॥
प्रतप्तांगारयुक्तेनयातिमार्गेणदुःखितः ॥ ११ ॥ क्वचिद्विषमगर्ताद्यैःक्वचलोष्ठैःसुपुष्कलैः ॥ संतप्तवालुकाभिश्चतथातीक्ष्णैश्चशंकुभिः ॥ १२ ॥ अने

कशाखावितते र्व्याप्तंवंशवनैःक्वचित् ॥ कष्टेनतमसामार्गेअनालंबेनकुत्रचित् ॥ १३ ॥ अयःशृंगाटकैस्तीक्ष्णैःक्वचिद्दावाग्निनावृतः ॥ क्वचित्तप्तशिला
भिश्चक्वचिच्चाप्तंहिमेनवा ॥ १४ ॥ क्वचिद्वालुकयाव्याप्तमाकंठांतंप्रवेशितः ॥ क्वचिद्दुष्टांबुनाव्याप्तंक्वचिच्चकरिषाग्निना ॥ १५॥ क्वचित्सिंहैर्वृकैर्व्याघ्रैर्मश
कैश्चसुदारुणैः ॥ क्वचिन्महाजलौकाभिःक्वचिदाजगरैस्तथा ॥ १६ ॥ मक्षिकाभिश्चरौद्राभिःक्वचित्सर्पैर्विषोल्बणैः ॥ मत्तमातंगयूथैश्चबलोन्मत्तैःप्रमा
थिभिः ॥ १७ ॥ पंथानमुल्लिखद्भिश्चशूकरैस्तीक्ष्णदंष्ट्रिभिः ॥ तीक्ष्णशृंगैश्चमहिषैरुष्ट्रैर्मत्तैश्चपादपैः ॥ १८॥ डाकिनीभिश्चरौद्राभिर्विकरालैश्चराक्षसैः ॥
व्याधिभिश्चमहाघोरैःपीड्यमानाव्रजंतिच ॥ १९ ॥ सदाधूलिविमिश्रेणमहाचंडेनवायुना ॥ महापाषाणवर्षेणहन्यमानानिराश्रयाः ॥ २० ॥ क्वचिद्विद्यु
त्प्रपातेनदार्यमाणाव्रजंतिवा ॥ महताबाणवर्षेणहन्यमानाश्चसर्वतः ॥ २१ ॥ पतद्भिर्वज्रपातैश्चउल्कापातैश्चदारुणैः ॥ प्रदीप्तांगारवर्षेणदह्यमानाः
श्वसंतिच ॥ २२ ॥ महतापांसुवर्षेणपूर्यमाणारुदंतिच ॥ महामेघरवैर्घोरैस्त्रस्यंतेचमुहुर्मुहुः ॥ २३ ॥ निशितायुधवर्षेणभिद्यमानाश्चसर्वतः ॥ महाक्षारां
बुधाराभिःसिंचमानाव्रजंतिते ॥ २४ ॥ महाशीतेनमरुतारूक्षेणपरुषेणवा ॥ समंताद्व्याप्यमानाश्चशुष्यंतेसंकुचंतिच ॥ २५ ॥ इत्थंमार्गेणरौद्रेणपाथेयर
हितेनच ॥ निरालंबेनदुर्गेणनिर्जलेनसमंततः ॥ २६ ॥ विषमेणैवमहतानिर्जनापाश्रयेणच ॥ तमोरूपेणकष्टेनसर्वदुःखाश्रयेणच ॥२७॥ नीयंतेदेहिनः
सर्वेयेमूढाःपापकर्मिणः ॥ यमदूतैर्महाघोरैस्तदाज्ञाकारिभिर्बलात् ॥ २८ ॥ एकाकिनंपराधीनंमित्रबंधुविवर्जितम् ॥ शोचंतःस्वानिकर्माणिरुदंतश्च
मुहुर्मुहुः ॥२९॥ प्रेतीभूताविवस्त्राश्चशुष्ककंठोष्ठतालुकाः ॥ कृशांगाभयभीताश्चदह्यमानाःक्षुधाग्निना ॥ ३० ॥ बद्धश्शृंखलयाकेचिदुत्तानपादयो
र्नराः ॥ कृष्यंतेकृष्यमाणाश्चयमदूतैर्बलोत्कटैः ॥ ३१ ॥ उरसाधोमुखाश्चान्येघृष्यमाणाःसुदुःखिताः ॥ केशपाशनिबंधेनसमाकृष्यंतिरज्जुभिः॥३२ ॥
ललाटेचांऽकुशेनान्येभिन्नाःकृष्यंतिदेहिनः ॥ उत्तानाःकंटकपथाक्वचिदंगारवर्त्मना ॥ ३३ ॥ पश्चाद्बाहुकबद्धाश्चजठरेचप्रपीडिताः ॥ पूरिताःशृंखला
भिश्चहस्तयोश्चसुकीलिताः ॥ ३४ ॥ ग्रीवापाशेनकृष्यंतिप्रयांत्यन्येसुदुःखिताः ॥ जिह्वांकुशप्रवेशेनसमाकृष्यंतिरज्जुना ॥ ३५ ॥ नासाभेदेनरज्वाच
समाकृष्यंतिचापरे ॥ भिन्नाःकपोलयोरज्ज्वाकृष्यंत्यन्येतथौष्ठयोः ॥ ३६ ॥ विभिन्नाश्चोदरेचान्येततःशृंखलयानराः ॥ घृष्यंतेकर्णयोश्चान्येभिन्नाश्च
चिबुकेपरे ॥ ३७ ॥ छिन्नाग्रपादहस्ताश्चछिन्नकर्णोष्ठनासिकाः ॥ संभिन्नशिश्नवृषणाश्छिन्नभिन्नांगसंधयः ॥ ३८ ॥ प्रभिद्यमानाःकुं
तैश्चाभिद्यमानाश्चसायकैः ॥ इतश्चेतश्चधावंतिक्रंदमानानिराश्रयाः ॥ ३९ ॥ मुद्गरैर्लोहदंडैश्चहन्यमानामुहुर्मुहुः ॥ कंटकैर्विविधैर्घोरैर्ज्वलनार्कसमप्रभैः
॥ ४० ॥ भिंडिपालैर्विभिद्यंतेस्रवंतःपूयशोणितं ॥ शर्कराकृमिदग्धाश्चनयिंतेविवशानराः ॥४१॥ याचमानाश्चसलिलमन्नंवापिबुभुक्षिताः ॥ छायांप्रार्थ

यमानाश्वशीतार्ताश्चानलंपुनः ॥ ४२ ॥ दानहीनाःप्रयांत्येवंप्रार्थयंतःसुखंनराः ॥ गृहीतदानपाथेयाःसुखंयांतियमालयम् ॥ ४३ ॥ एवंन्यायेनकष्टेन
प्राप्ताःप्रेतपुरंयदा ॥ प्रज्ञापितास्तदादूतैर्निवेश्यंतियमाग्रतः ॥ ४४ ॥ तत्रयेशुभकर्माणस्तांस्तुसन्मानयेद्यमः ॥ स्वागतासनदानेनपाद्यार्घ्येणप्रियेण
वा ॥ ४५ ॥ धन्यायूयंमहात्मानआत्मनोहितकारिणः ॥ येनदिव्यसुखार्थायभवद्भिःसुकृतंकृतम् ॥ ४६ ॥ इदंविमानमारुह्यदिव्यस्त्रीभोगभूषि
तम् ॥ स्वर्गंगच्छध्वममलंसर्वकामान्वितंसदा ॥४७॥ तत्रभुक्त्वामहाभोगानंतेपुण्यस्यसंक्षयात् ॥ यत्किंचिदल्पमशुभंपुनस्तदिहभोक्ष्यथ ॥ ४८ ॥
धर्मात्मानोनरायेचमित्रभूतामिवात्मनः ॥ सौम्यंसुखंप्रपश्यंतिधर्मराजानमेववा ॥ ४९ ॥ येपुनःक्रूरकर्माणस्तेपश्यंतिभयानकम् ॥ दंष्ट्राकरालवदनंभ्रू
कुटीकुटिलेक्षणम् ॥ ५० ॥ ऊर्ध्वकेशंमहाश्मश्रुमूर्ध्वविस्फुरिताधरम् ॥ अष्टादशभुजंक्रूरंनीलांजनचयोपमम् ॥ ५१ ॥ सर्वायुधोद्यतकरंसर्वदंडसम
न्वितम् ॥ महामहिषमारूढंदीप्ताग्निसमलोचनम् ॥ ५२ ॥ रक्तमाल्यांबरधरंमहामेरुमिवोच्छ्रितम् ॥ प्रलयांबुदनिर्घोषंपिबन्निवमहोदधिम् ॥ ५३ ॥
ग्रसंतमिवत्रैलोक्यमुद्गिरंतमिवानलम् ॥ मृत्युश्चैवसमीपस्थःकालानलसमप्रभः ॥ ५४ ॥ कालश्चांजनसंकाशःकृतांतश्चभयानकः ॥ मारीचोग्रमहामारी
कालरात्रीचदारुणा ॥ ५५ ॥ विविधाव्याधयःकष्टानानारूपभयावहाः ॥ शक्तिशूलांकुशधराःपाशचक्रासिपाणयः ॥ ५६ ॥ वज्रतुंडधरारौद्राःक्षुर
तूणधनुर्धराः॥असंख्यातामहावीराःक्रूरांजनमहाप्रभाः ॥ ५७॥सर्वायुधोद्यतकरायमदूताभयानकाः ॥ अनेनपरिवारेणवृत्तंसुघोरदर्शनम् ॥ ५८ ॥
यमंपश्यंतिपापिष्ठाश्चित्रगुप्तंचभीषणम् ॥ जीवादुष्कृतकर्माणःपरद्रव्यापहारकाः ॥ ५९ ॥ गर्वितारूपवीर्येणपरदारावमर्दकाः ॥ यत्स्वयंक्रियतेकर्मत
त्स्वयंभुज्यतेपुनः ॥ ६० ॥ तत्किमात्मोपघातार्थंभवद्भिर्दुष्कृतंकृतम् ॥ इदानींकिंप्रतप्यध्वंपीड्यमानाःस्वकर्मभिः ॥ ६१ ॥ भुज्यध्वंस्वानिकर्मा
णिनास्तिदोषोऽत्रकस्यचित् ॥ एवंतेपृथिवीपालाःसंप्राप्तास्तत्समीपतः ॥ ६२ ॥ स्वकीयैःकर्मभिर्घोरैर्दुष्कर्मबलदर्पिताः ॥ ६३ ॥ भोभोनृपादु
राचाराप्रजाविध्वंसकारिणः ॥ अल्पकालस्यराज्यस्यकिंत्वयादुष्कृतंकृतम् ॥ ६४ ॥ राज्यभोगेनमोहेनबलादन्यायतःप्रजाः ॥ यद्दंडिताःफलंतस्यभु
ज्यध्वमधुनानृपाः ॥ ६५ ॥ कतद्राज्यंकलत्रंचयदर्थमशुभंकृतम् ॥ तत्सर्वंसंपरित्यज्ययूयमेकाकिनःस्थिताः ॥ ६६ ॥ पश्यामितद्बलंनष्टंयेनाविध्वं
सिताःप्रजाः ॥ यमदूतैर्गृह्यमाणाअधुनाकीदृशंभवेत् ॥६७॥ एवंबहुविधैर्वाक्यैरुपलब्धायमेनते ॥ स्वानिकर्माणिशोचंतितूष्णींतिष्ठंतिपार्थिवाः॥६८॥
इतिधर्मंसमुद्दिश्यनृपाणांधर्मराड्यमः ॥ तत्पापपंकशुद्ध्यर्थमिदंवचनमब्रवीत् ॥ ६९ ॥ भोभोचण्डमहाचण्डगृहीत्वानृपतीन्बलात् ॥ नियमेनविशो
धध्वंक्रमेणनरकाग्निषु ॥ ७० ॥ ततःशीघ्रंसमादायनृपंसंगृह्यपादयोः ॥ भ्रामयित्वातुवेगेननिक्षिप्योर्ध्वंप्रगृह्यच ॥ ७१ ॥ सर्वप्राणेनमहताप्रतप्तेतुशि

लातले ॥ आस्फालयंतितरसावज्रेणेवमहाद्रुमाः ॥ ७२ ॥ ततःसरक्तंस्रोतोभिःस्रवतेजर्जरीकृतः ॥ निःसंज्ञःसतदादेहीनिश्चेष्टःसंप्रजायते ॥ ७३ ॥ ततःसवायुभिःस्पृष्टःसतैरुज्जीव्यतेपुनः ॥ ततःपापविशुद्ध्यर्थंक्षिपंतिनरकार्णवे ॥ ७४ ॥ अष्टाविंशतिरेवाधाःक्षित्यधस्तत्रकोटयः॥ सप्तमस्यतलस्यां तेघोरेतमसिसंस्थिताः ॥ ७५ ॥ घोराख्याप्रथमाकोटिःसुघोरातदधःस्थिता ॥ अतिघोरामहाघोराघोररूपाचपञ्चमी ॥७६॥ षष्ठीतलातलाख्याचसप्तमीचभयानका ॥ अष्टमीकालरात्रिश्चनवमीचभयोत्कटा ॥ ७७ ॥ दशमीतदधश्चंडामहाचंडाततोप्यधः ॥ चंडकोलाहलाचान्याप्रचंडतरनायका ॥ ७८ ॥ पद्मापद्मावतीभीष्टाभीमाभीमप्रणायका ॥ करालाविकरालाचवज्राविंशतिमास्मृता ॥ ७९ ॥ त्रिकोणापंचकोणाचसुदीर्घापरिवर्तुला ॥ सप्तभौमाष्टभौमाचदीप्तामायेतिचाष्टमी ॥ ८० ॥ इतितेनामतःप्रोक्ताघोरानरककोटयः ॥ अष्टाविंशतिरेवैताःपापानांयातनात्मिकाः ॥ ८१ ॥ तासां क्रमेणविज्ञेयाःपंचपंचैवनायकाः ॥ प्रत्येकंसर्वकोटीनांनामतस्तान्निबोधत ॥ ८२ ॥ रौरवःप्रथमस्तेषांरुदंतेसर्वदेहिनः ॥ महारौरवपीडाभिर्महांतोपि रुदंतिच ॥ ८३ ॥ तमःशीतंतथाचोष्णंपंचाद्यानायकाःस्मृताः ॥ सुघोरःसुमहातीक्ष्णःपद्मसंजीवनःशिवः ॥ ८४ ॥ महातमविलोमश्चसुलोमश्चापि कंटकः ॥ तीव्रवेगकरालश्चविकरालःप्रकंपनः ॥ ८५ ॥ महावक्रश्चवक्रश्चकालस्तत्रप्रगर्जनः ॥ सूचीमुखःसुनेमिश्चखादकःसुप्रपीडनः ॥ ८६ ॥ कुंभीपाकःसुपाकश्चक्रकचश्चापिदारुणः ॥ अंगारराशिभवनंमेदोसृक्प्रहितस्ततः ॥ ८७ ॥ तीक्ष्णतुंडश्चशकुनिर्महासंवर्तकःक्रतुः ॥ तप्तजंतुःपंकलेपः प्रतिमासस्त्रपूद्भवः ॥ ८८ ॥ उच्छ्वासोमुनिरुच्छ्वासःसुदीर्घःकूटशाल्मलिः ॥ प्रदीप्तःसुमहानादःप्रवाहःसुप्रवाहनः ॥ ८९ ॥ ततोमेघोवृषःशल्यः सिंहव्याघ्रगजाननाः ॥ श्वशूकराजमहिषाअविकारवृकाननाः ॥ ९० ॥ ग्राहाख्यमीनवक्राख्याःसर्पकूर्माख्यवायसाः ॥ गृध्रोलूकजलौकाख्याःशार्दूलकविकर्कटाः ॥ ९१ ॥ मंडूकःपूतिवक्रश्चरजतःपूतिमृत्तिकः ॥ कणधूमस्तथाग्निश्चकृमीणांनिचयस्तथा ॥ ९२ ॥ अग्निवासोप्रतिष्ठश्चरुधिरांभश्चभोजनः ॥ लालाभक्षात्मभक्षाश्चसर्वभक्षःसुदारुणः ॥ ९३ ॥ संकटःसुविशालश्चविकटःकटपूतनः ॥ अंबरीषःकटाहश्चकष्टावैतरणीनदी ॥ ९४ ॥ सुतप्तलोहशयनमेकपादःप्रपूरणः ॥ असितालवनंघोरमास्थिभंगंसुपूरणम् ॥ ९५ ॥ तिलातसीसुयंत्राणिकूटपाशःप्रमर्दनः ॥ महाचूर्णीसुचूर्णीचतप्तलोहमयस्तथा ॥ ९६ ॥ पर्वतैरंबुधाराचतथायमलपर्वतः ॥ मूत्रविष्ठाशुक्रपश्चतारकूपाश्चशीतलाः ॥९७॥ मुशलोलूखलंयंत्रंशिलाशकटलांगलम् ॥ तालपत्राणिगहनंमहाशकटमंडपम् ॥ ९८ ॥ संमोहोह्यस्थिभंगश्चतप्तश्चमलयोगुडः ॥ बहुदुःखंमहादुःखंकश्मलंशमलंमलम् ॥९९॥ हालाहलोविरूपश्चस्वरूपश्चयमानुगः ॥ एकपादस्त्रिपादश्चतीव्रश्चावींचिरंतिमः ॥ १०० ॥ अष्टाविंशतिरित्येतेक्रमशःपंचपंचकम् ॥ कोटीनामानुपूर्व्येणपंचपंचैवनायकाः ॥

॥ १०१ ॥ रौरवाद्यमवीच्यंतंनरकाणांशतंस्मृतम् ॥ चत्वारिंशच्छतंप्रोक्तंमहानरकमण्डलम् ॥ १०२ ॥ एषुपापाःप्रपच्यंतेशोष्यंतेनरकाग्निषु॥
यातनाभिर्विचित्राभिःस्वकर्मप्रक्षयाद्भृशम् ॥ १०३ ॥ स्वमलप्रक्षयाद्यद्वदग्नौधाम्यंतिधातवः ॥ तत्रपापक्षयात्पापानराःकर्मानुरूपतः ॥ १०४ ॥
सुगाढंहस्तयोर्बद्धास्तप्तशृंखलयानराः ॥ महावृक्षाग्रशाखासुलंब्यंतेयमकिंकरैः ॥ १०५ ॥ ततस्तेसर्वयत्नेनाक्षिप्तादोलंतिकिंकरैः ॥ दोलंतश्चापि
वेगेनविसंज्ञायांतियोजनम् ॥ १०६ ॥ अंतरिक्षस्थितानांचलोहभारशतंपुनः ॥ पादयोर्बध्यतेतेषांयमदूतैर्महाबलैः ॥ १०७ ॥ तेनभारेणमहतासुभृशं
ताडितानराः ॥ ध्यायंतिस्वानिकर्माणितूष्णींध्यायंतिनिश्चलाः ॥ १०८ ॥ ततोऽकुशैराग्निवर्णैर्लौहदंडैश्चकंटकैः ॥ हन्यंतेकिंकरैर्घोरैःसमंतात्पापक
र्मिणः ॥ १०९ ॥ ततःक्षारेणदीप्तेनवन्हेरपिविशेषतः ॥ समंततःप्रलिप्यंतितीव्रेणचपुनःपुनः ॥ ११० ॥ हुतेनात्यंतलिप्तेनकृत्तांगाजर्जरीकृताः ॥ पु
नर्विदार्यचांगानिशिरसःप्रभृतिक्रमात् ॥ १११ ॥ वृंताकवत्प्रपच्यंतेतप्तलोहकटाहकैः ॥ विष्ठाकूपेतथाकूपेकृमीणांनिचयेपुनः ॥ ११२ ॥ मेदोसृक्पू
यपूर्णायांवाप्यांक्षिप्यंतितेपुनः ॥ भक्ष्यंतेकृमिभिस्तीक्ष्णैर्लौहतुंडैश्चवायसैः ॥ ११३ ॥ श्वभिर्दंशैर्वृकैर्व्याघ्रैरौद्रैश्चविकृताननैः ॥ पच्यंतेमत्स्यवच्चापि
प्रदीप्तांगारराशिषु ॥ ११४ ॥ भित्वाशूलैःसुतीक्ष्णैश्चनराःपापेनकर्मणा ॥ तैलपिंडैरिवाक्रम्यघोरैःकर्मभिरात्मनः ॥ ११५ ॥ तिलवत्संप्रपीड्यंतेच
क्राख्येजनपीडकाः ॥ भुज्यंतेचातपेतप्तेलोहभांडेष्वनेकधा ॥ ११६ ॥ तैलपूर्णकटाहेषुसुतप्तेषुपुनःपुनः ॥ बहुधापाटयतेजिव्हायेऽसत्यप्रियवादिनः
॥ ११७ ॥ सुदंशेनसुतप्तेनप्रपीड्योरसिपादयोः ॥ मिथ्यागमप्रवृत्तस्तुद्विजिव्हस्येवनिर्गता ॥११८॥ जिव्हार्धकोशविस्तीर्णाहलैस्तीक्ष्णैःप्रपीड्यते ॥
निर्भर्त्सयंतियेक्रूरामातरंपितरंगुरुम् ॥ ११९ ॥ वज्रतुंडजलौकाभिर्मुखमापूर्यसिच्यते ॥ ततःक्षारेणदीप्तेनताम्रेणचपुनःपुनः ॥१२०॥ द्रुतेनात्यंततप्ते
नतप्ततैलेनतन्मुखम् ॥ इतस्ततःपुनर्वक्रंभृशमापूर्यहन्यते ॥ १२१ ॥ विष्ठाभिःकृमिभिश्चापिपूर्यमाणाःक्वचित्क्वचित् ॥ परिष्वजंतिचात्युग्रांप्रदीप्तां
लोहशाल्मलीम् ॥ १२२ ॥ हन्यंतेपृष्ठदेशेचपुनर्दीप्तैर्महाघनैः ॥ दंतुरेणातिकुंठेनक्रकचेनबलीयसा ॥ १२३ ॥ शिरःप्रभृतिपीड्यंतेघोरैःकर्मभिरात्म
जैः ॥ खाद्यंतेचस्वमांसानिपाय्यंतेशोणितंस्वकम् ॥ १२४ ॥ अन्नपानंनदत्तंयैःसर्वदास्वात्मपोषणैः ॥ इक्षुवत्संप्रपीड्यंतेजर्जरीकृत्यमुद्गरैः ॥ १२५ ॥
आसितालवनैर्घोरैश्छिद्यंतेखंडखंडशः ॥ सूचीनिर्भिन्नसर्वांगास्तप्तशूलप्ररोपिताः ॥ १२६ ॥ संचाल्यमानाबहुशःक्लिश्यंतेनाम्रियंतिच ॥
यथास्वप्नशरीराणिसुखदुःखसहानिच ॥ १२७ ॥ देहादुत्पाट्यमांसानिभिद्यंतेऽस्थीनिमुद्गरैः ॥ पुनराक्षिप्यतेतूर्णंयमदूतैर्बलोत्कटैः ॥ १२८ ॥
निरुच्छ्वासेनिरुच्छ्वासास्तिष्ठंतिनरकेचिरम् ॥ उच्छ्वास्यंतितथोच्छ्वास्यवालुकावदनेनराः ॥ १२९ ॥ रौरवेरोदमानाश्चपीड्यंतेविविधैर्वधैः ॥ महारौ

रवपीडाभिर्महांतोपिरुदंतिच ॥ १३० ॥ पद्म्यामास्येगुदेगंडेचाक्ष्णोश्चोरसिमस्तके ॥ निहन्यंतेघनैस्तीक्ष्णैःसुतप्तैर्लोहशंकुभिः ॥ १३१ ॥ सु
तप्तवालुकायांचप्रयोज्यंतेमुहुर्मुहुः ॥ जंतुपंकेभृशंतप्तेक्षिताःक्रंदंतिविस्वरम् ॥ १३२ ॥ तेनतेनैवरूपेणशास्यंतेपारदारिकाः ॥ गाढमालिंगतेनारीं
ज्वलंतींलोहनिर्मिताम् ॥ १३३ ॥ पूर्वाकाराश्चपुरुषाःप्रज्वलंतिसमंततः ॥ दुश्चारिणींस्त्रियंगाढमालिंगंतिहसंतिच ॥ १३४ ॥ किंप्रधावसिवेगेननतेमो
क्षोऽस्तिसांप्रतम् ॥ लंघितस्तेयथाभर्तापापंभुंक्ष्वतथाऽधुना ॥१३५॥ लोहकुंभेविनिक्षिप्तासापिधानेशनैःशनैः ॥ मृद्वाग्निनाप्रपच्यंतेस्वपापैरेवमान
वाः १३६ ॥ क्षिपंत्युलूखलेप्येनंप्रपीड्यंतेशिलासुच ॥ क्षिप्यंतेचांधकुपेषुदश्यंतेभ्रमरैर्भृशम् ॥ १३७ ॥ कृमिनिर्भिन्नसर्वांगाःशतशोजर्जरीकृताः ॥
सुतीक्ष्णक्षारकूपेषुक्षिप्यंतेतदनंतरम् ॥ १३८ ॥ महाज्वालेतुनरकेपापाःक्रंदंतिदुःखिताः ॥ इतश्चेतश्चधावंतिदह्यमानास्तदर्चिषा ॥ १३९ ॥ पृष्ठेचा
नीयजंघाभ्यांविन्यस्तास्कंधयोजिते ॥ तयोर्मध्येनवाकृष्यबाहुपृष्ठेनगाढतः ॥ १४० ॥ बध्वापरस्परंसर्वाःसुभृशंपापरज्जुभिः ॥ पीड्यबद्धाःसुद
श्यंतेभ्रमरैस्तीक्ष्णलोहजैः ॥ १४१ ॥ मानिनांक्रोधिनांचैवतस्कराणांचदारुणाः ॥ पिंडबद्धास्ततोयाम्यैर्महाज्वालेनयातनाः ॥१४२॥ रज्जुभिर्वेष्ट्य
मानाश्चप्रलिप्ताःकर्दमेनच ॥ करीषतुषवन्हौचपच्यंतेनम्रियंतिच ॥ १४३ ॥ सुतीक्ष्णक्षारतोयेनकर्कशासुशिलासुच ॥ आस्फाल्यप्रक्षयात्पापाघृष्यं
तेचंदनंयथा ॥ १४४ ॥ शरीराभ्यंतरगतैःप्रभूतैःकृमिभिर्नराः ॥ भक्ष्यंतेतीक्ष्णवदनैरादेहप्रक्षयाद्भृशम् ॥ १४५ ॥ कृमीणांनिचयेक्षिप्ताःपूयमांसस्यरा
शिषु ॥ तिष्ठंत्युद्विग्नहृदयाःपर्वताभ्यांनिपीडिताः ॥१४६॥ तप्तेनवज्रलेपेनशरीरमनुलिप्यते ॥ अधोमुखोर्ध्वपादाश्चधृतास्तप्यंतिवन्हिना ॥ १४७ ॥
वदनांतःप्रविन्यस्तंसुप्रतप्तमयोगुडम् ॥ तेखादंतिपराधीनास्ताड्यंतेतुसुमुद्गरैः ॥१४८ ॥ येशिवायतनारामवापीकूपतडागकम् ॥ विद्रवंतिद्विजस्थानं
नरास्तत्ररमंतिच ॥ १४९ ॥ कामायोद्वर्तनाभ्यंगस्नानपानांबुभोजनम् ॥ क्रीडनंमैथुनंद्युतमाचरंतिमदोद्धताः ॥ १५० ॥ तेचतेविविधैर्घोरैरिक्षुयंत्रादि
पीडनैः ॥ निरयाग्निषुपच्यंतेयावदाभूतसंप्लवम् ॥ १५१ ॥ येशृण्वंतिसतांनिंदांतेषांकर्णःप्रपूर्यते ॥ अग्निवर्णैरयःकीलैस्ततस्ताम्रादिभिःकृतैः॥१५२॥
त्रपुसीसारकूटाभिःक्षारेणचपुनःपुनः ॥ सुतप्ततीक्ष्णतैलेनवज्रलेपेनवापुनः ॥ १५३ ॥ क्रमादापूर्यतेकर्णैर्नरकेषुचयातनाः ॥ अनुक्रमेणसर्वेषुभवंत्येते
समंततः ॥ १५४ ॥ सर्वेंद्रियाणामप्येवंक्रमात्पापेनयातनाः ॥ भवंतिघोराःप्रत्येकंशरीरेतत्कृतेनच ॥ १५५ ॥ स्पर्शलोभेनयेमूढाःस्पृशंतिचपरस्त्रि
म् ॥ तेषांकरोग्निवर्णाभिःपांसुभिःपूर्यतेभृशम् ॥१५६॥ ततःक्षारादिभिःसर्वैःशरीरमनुलिप्यते ॥ यातनाश्चमहाकष्टाःसर्वेषुनरकेषुच ॥१५७॥ पित्रोः
कुर्वंतिभृकुटिंकरनेत्रांश्चयेनराः॥परदारांश्चपश्यंतिलुब्धास्तब्धेनचक्षुषा॥१५८॥सूचीभिरग्निवर्णाभिस्तेषांनेत्रंप्रपूर्यते॥क्षाराद्यैश्चक्रमात्सर्वदेहसर्वाश्चया

तनाः॥१५९॥देवाग्निगुरुविप्राणामनिवेद्यप्रभुंजते॥लोहकीलशतैस्तप्तैस्ताजिह्वास्यंप्रपूर्यते॥१६०॥येदेवारामपुष्पाणिलोभात्संगृह्यपाणिना ॥ जिघ्रंति
चनरामूढाःशिरसाधारयंतिचः ॥१६१॥ आपूर्यतेशिरस्तेषांसंतप्तैर्लोहशंकुभिः ॥नासिकाचापिबहुलैस्ततःक्षारादिभिर्भृशम्॥१६२॥येनिंदंतिमहात्मा
नंवाचकंधर्मदेशकम् ॥ देवाग्निगुरुभक्तांश्चधर्मशास्त्रंचशाश्वतम् ॥ १६३ ॥ तेषामुरसिकंठेचजिह्वायांदंतसंधिषु ॥ तालुन्योष्ठेचजिह्वायांमूर्ध्निसर्वांगसं
धिषु ॥ १६४ ॥ अग्निवर्णाःसुतप्ताश्चत्रिशिखालोहशंकवः ॥ आविध्यंतेचबहुशःस्थानेष्वेतेषुमुद्गरैः ॥ १६५ ॥ ततःक्षारेणदीप्तेनप्रपूर्यंतेसमंततः ॥
यातनाश्चमहाचित्राःशरीरस्यापिसर्वतः ॥ १६६ ॥ निःशेषंनरकेत्वेवंभ्रमंतिक्रमशःपुनः ॥ येगृह्णंतिपरद्रव्यंपद्भ्यांविप्रंस्पृशंतिच ॥ १६७ ॥ शिवो
पकरणांगंचज्ञानादिलिखितंचयत् ॥ हस्तपादाघनैस्तेषामापूर्यंतेसमंततः ॥ १६८ ॥ नरकेषुचसर्वेषुविचित्रादेहयातनाः ॥ भवंतिबहुशःकष्टाःपाणि
पादसमुद्भवाः ॥ १६९ ॥ शिवायतनपर्यंतेदेवारामेषुकुत्रचित् ॥ समुत्सृजंतियेपापाःपुरीषंमूत्रमेवच ॥१७० ॥ तेषांशिश्नंसवृषणंचूर्ण्यतेलोहमुद्गरैः ॥
सूचीभिरग्निवर्णाभिस्तथाचापूर्यतेपुनः ॥ १७१ ॥ ततःक्षारेणमहतातीव्रेणचपुनःपुनः ॥ तैलेनापूर्यतेगाढंगुदंशिश्नंचदेहिनः ॥ १७२ ॥ मनःसर्वेंद्रि
याणांचयस्माद्दुःखंचजायते ॥ धनेसत्यपियेदानंनप्रयच्छंतितृष्णया ॥ १७३ ॥ अतिथिंचावमन्यंतेकालेप्राप्तंगृहाश्रमे ॥ तस्यतेदुष्कृतंप्राप्यगच्छं
तिनिरयेऽशुचौ ॥ १७४ ॥ येनदत्वातुभुंजंतिग्रासंश्वभ्यश्चवायसैः ॥ तेषांचविवृतंवक्त्रंकीलकद्वयताडितम् ॥ १७५ ॥ कृमिभिःप्राणिभिश्चोग्रैर्लोहतुं
डैश्चवायसैः ॥ उपद्रवैर्बहुविधैर्मुखमंतःप्रपीड्यते ॥ १७६ ॥ श्यामश्चशबलश्चैवयममार्गानुरोधकौ ॥ यौस्तस्ताभ्यांप्रयच्छामितौगृह्णीतमिमंबलिम् ॥
॥ १७७ ॥ ऐंद्रवारुणवायव्यायाम्यानैर्ऋतवायसाः ॥ वायसाःपुण्यकर्माणस्तेमेगृण्हंत्विमंबलिम् ॥ १७८ ॥ शिवमभ्यर्च्ययत्नेनहुत्वासौविधिपूर्वकं ॥
शैवैर्मंत्रैर्बलिंपश्चाद्ददातियेनतेयमं ॥ १७९ ॥ पश्यंतित्रिदिवंयांतितस्माद्द्याद्दिनेदिने ॥ मंडलंचतुरस्रंचकृत्वागंधाधिवासितम् ॥ १८० ॥ धन्वंतरयई
शान्यांप्राच्यामिंद्रायनिःक्षिपेत् ॥ याम्यांयमायवारुण्यांसुदक्षोमायदक्षिणे ॥ १८१॥ पितृभ्यश्चविनिःक्षिप्यप्राच्यामर्यमणेततः ॥ धातुश्चैवविधातुश्चद्वा
रपेभ्यश्चनिःक्षिपेत् ॥ १८२ ॥ श्वभ्यश्चश्वपतिभ्यश्चवयोभ्योनिःक्षिपेद्भुवि ॥ देवपितृमनुष्यैश्चप्रेतैर्भूतैःसगुह्यकैः ॥ १८३ ॥ वयोभिःकृमिकीटैश्चगृह
स्थश्चोपजीव्यते ॥ स्वाहाकारःस्वधाकारोवषट्कारस्तृतीयकः ॥ १८४ ॥ हंतकारस्तथैवान्योधेन्वास्तनचतुष्टयम् ॥ स्वाहाकारंततोदेवाःस्वधांच
पितरस्तथा ॥ १८५ ॥ वषट्कारंतथैवान्येदेवाभूतेश्वरास्तथा ॥ हंतकारंमनुष्याश्चपिबंतिसततंस्तनं ॥ १८६ ॥ यस्त्वेतांमानवोधेनुंश्रद्धयामरपूर्वि
काम् ॥ करोतिसततंकालेसोऽग्नित्वायोपपद्यते ॥ १८७ ॥ यस्तांजहातिवासस्थस्तामिस्रेसनिमज्जति ॥ तस्माद्दत्वाबलिंतेभ्योद्वारस्थश्चितये

त्क्षणम् ॥ १८८ ॥ क्षुधार्तमतिथिंसम्यगेकग्रामानिवासिनं ॥ भोजयेत्तंशुभान्नेनयथाशक्त्यात्मभोजनात् ॥ १८९ ॥ अतिथिर्यस्यभग्नाशो
गृहात्प्रतिनिवर्तते ॥ सतस्यदुष्कृतंदत्वापुण्यमादायगच्छाति ॥ १९० ॥ ततोन्नंप्रियमेवाऽश्नन्नरःशृंखलयापुनः ॥ जिह्वावेगेनबद्धोत्रचिरं
कालंसतिष्ठति ॥ १९१ ॥ ततस्तन्मांससुत्कृत्यातिलमात्रप्रमाणतः ॥ खादितुंदीयतेतेषांभित्वाचैवतुशोणितम् ॥ १९२ ॥ निः
शेषयातनाभिस्तुपीड्यंतेक्रमशःपुनः ॥ अतिबुभुक्षयाकष्टंतथाचातिंपिपायसा ॥ १९३ ॥ एवमाद्यामहाघोरायातनाःपापकर्मिणाम् ॥ यःकरोति
महत्पापंधर्मंचरातिवैलघु ॥ १९४ ॥ धर्मंगुरुतरंवापितथावस्थांतयोःशृणु ॥ सुकृतस्यफलंभुंक्तेगुरुपापप्रभावतः ॥ १९५ ॥ नमिनोतिसुखंतत्रभो
गैर्बहुभिरन्वितः ॥ तथोद्विग्नोपिसंतृप्तोनभक्ष्यैर्मन्यतेसुखम् ॥ १९६ ॥ अभावादग्रतोऽन्नस्यप्रातिकूल्यंदिनेदिने ॥ पुमान्योगुरुधर्मापिसोपवासोयथा
गृही ॥१९७ ॥ वित्तवान्नविजानातिपीडांनियमसंस्थितः ॥ तानिपापानिघोराणिसंतीहयैस्ततोनरः ॥१९८ ॥ शतधाभेदमाप्नोतिगिरिर्वज्रहतोयथा ॥
॥ १९९ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांएकोनविंशोऽध्यायः ॥ १९ ॥ व्यासउवाच ॥ कृतपापानरायांतिदुःखेनमहतान्विताः ॥
यममार्गंसुखंयैस्तुतान्धर्मान्वदमेप्रभो ॥ १ ॥ सनत्कुमारउवाच ॥ अवश्यंहिकृतंकर्मभोक्तव्यमविचारतः ॥ शुभाशुभमथोवक्ष्येतान्धर्मान्सुखदाय
कान् ॥ २ ॥ अत्रयेशुभकर्माणःसौम्यचित्तादयान्विताः ॥ तेनरायांतिसौम्येनयममार्गंभयावहम् ॥ ३ ॥ यःप्रदद्याद्द्विजेंद्राणामुपानत्काष्ठपादुके ॥
सवराश्वेनमहतासुखंयातियमालयम् ॥ ४ ॥ छत्रदानेनगच्छंतियथाछत्रेणदेहिनः ॥ शिबिकायाःप्रदानेनतद्रथेनसुखंव्रजेत् ॥ ५ ॥ शय्यासनप्रदानेन
सुखंयांतिसुनिश्चयम् ॥ आरामच्छायाकर्तारोव्रजंतिवृक्षरोपकाः ॥ ६ ॥ यांतिपुष्पकयानेनपुष्पारामकरानराः ॥ देवायतनकर्तारोयतीनामाश्रमस्य
च ॥ ७ ॥ अनाथमंडपानांचक्रीडयंतिगृहोदरे ॥ देवाग्निगुरुविप्राणांमातापित्रोश्चपूजकाः ॥ ८ ॥ पूज्यमानानरायांतिकामुकेनयथासुखम् ॥
द्योतयंतोदिशःसर्वायांतिदीपप्रदायिनः ॥ ९ ॥ प्रतिश्रयप्रदानेनसुखंयांतिनिरामयाः ॥ विश्राम्यमाणागच्छंतिगुरुशुश्रूषकानराः ॥ १० ॥ आत्तौष
धप्रदातारःसुखंयांतिगृहेस्वके ॥ सर्वकामसमृद्धेनपथागच्छंतिगोप्रदाः ॥ ११ ॥ येनदत्तान्नपानानितृप्तायांतिहितत्पथम् ॥ पादशौचप्रदानेनशी
तलेनपथाव्रजेत् ॥ १२ ॥ पादाभ्यंगंचयःकुर्यादश्वपृष्ठेनसव्रजेत् ॥ पादशौचंतथाभ्यंगंदीपमन्नंप्रतिश्रयम् ॥ १३ ॥ येददंतिसदाव्यासनोपसर्पतितेय
मम् ॥ हेमरत्नप्रदानेनयांतिदुर्गाणिनिस्तरन् ॥ १४ ॥ रौप्यानड्वाहदानेननरोयानेनगच्छाति ॥ सर्वकामसमृद्धात्माभूमिदानेनगच्छति ॥ १५ ॥
इत्येवमादिभिर्दानैःसुखंयांतियमालयम् ॥ स्वर्गेतुविविधान्भोगान्प्राप्नुवंतिसदानराः ॥ १६ ॥ सर्वेषामेवदानानामन्नदानंपरंस्मृतम् ॥ सद्यःप्रीति

करंहृद्यंबलबुद्धिविवर्धनम् ॥ १७ ॥ नान्नपानसमंदानंविद्यतेमुनिसत्तम ॥ अन्नाद्भवंतिभूतानितदभावेम्रियंतिच ॥ १८ ॥ रक्तमांसवसाशुक्रंक्रमा
दन्नात्प्रवर्धते ॥ शुक्राद्भवंतिभूतानितस्मादन्नमयंजगत् ॥ १९ ॥ हेमरत्नाश्वनागेंद्रैर्नारीस्रक्चंदनादिभिः ॥ समस्तैरपिसंप्राप्तैर्नरमंतिबुभुक्षिताः ॥
॥ २० ॥ गर्भस्थाजायमानाश्चबालावृद्धाश्चमध्यमाः ॥ आहारमभिकांक्षंतिदेवदानवराक्षसाः ॥ २१ ॥ क्षुधाहिसर्वरोगाणांव्याधिःश्रेष्ठतमःस्मृतः ॥
सचान्नौषधलेपेननश्यतीहनसंशयः ॥ २२ ॥ नास्तिक्षुधासमंदुःखंनास्तिरोगःक्षुधासमः ॥ नास्त्यरोगसमंसौख्यंनास्तिक्रोधसमोरिपुः॥ २३ ॥
अतएवमहत्पुण्यमन्नदानप्रदानतः ॥ तथाक्षुधाग्निनातप्ताम्रियंतेसर्वदेहिनः ॥ २४ ॥ अन्नदःप्राणदःप्रोक्तःप्राणदश्चापिसर्वदः ॥ तस्मादन्नप्रदानेनसर्व
दानफलंलभेत् ॥ २५ ॥ यस्यान्नपानपुष्टांगःकुरुतेधर्मसञ्चयम् ॥ अन्नप्रदातुस्तस्यार्धंकर्तुश्चार्द्धंनसंशयः ॥ २६ ॥ त्रैलोक्येयानिरत्नानिभोगस्त्रीवा
हनानिच ॥ अन्नपानप्रदःसर्वमिहामुत्रचतल्लभेत् ॥ २७ ॥ धर्मार्थकाममोक्षाणांदेहःपरमसाधनम् ॥ अन्नंप्रजापतिःसाक्षादन्नंविष्णुःस्वयंशिवः॥ २८ ॥
तस्मादन्नसमंदानंनभूतंनभविष्यति ॥ त्रयाणामपिलोकानामुदकंजीवनंस्मृतम् ॥ २९ ॥ पवित्रममृतंदिव्यंशुद्धंसर्वरसायनम् ॥ कृत्वापिसुमह
त्पापंयःपश्चादन्नदोभवेत् ॥ ३० ॥ विमुक्तःसर्वपापेभ्यःस्वर्गलोकंचगच्छति ॥ अन्नपानाश्वगोवस्त्रशय्याछत्रासनानिच ॥ ३१ ॥ प्रेतलोकेप्रशस्तानि
दानान्यष्टौविशेषतः ॥ एवंदानविशेषेणधर्मराजपुरेनराः ॥ ३२ ॥ यस्माद्यांतिविमानेनतस्माद्धर्मंसमाचरेत् ॥ व्यासउवाच ॥ श्रुत्वामिचनिश
म्याद्यत्वत्तःप्रेतपुरंमहत् ॥ ३३ ॥ उपदेशमिहेच्छामिसुखंयेनेहजायते ॥ सनत्कुमारउवाच ॥ रहस्यमद्भुतंचैवशृणुवक्ष्यामियत्त्वयि ॥ ३४ ॥
यागतिःप्राप्यतेयेनप्रेत्यभावेमहामुने ॥ तपसाप्राप्यतेस्वर्गस्तपसाप्राप्यतेयशः ॥ ३५ ॥ आयुःप्रहर्षोभोगश्चलभ्यन्तेतपसामुने ॥ ज्ञानविज्ञान
मारोग्यंरूपवत्त्वंतथैवच ॥ ३६ ॥ सौभाग्यंचैवतपसाप्राप्यतेसर्वदासुखम् ॥ नाऽततततपसोयांतिशिवलोकंसनातनम् ॥ ३७ ॥ यच्चदूरंदुराराध्यंसुदूरं
दुरतिक्रमम् ॥ तत्सर्वंतपसासाध्यंतपोहिदुरतिक्रमम् ॥ ३८ ॥ धनंप्राप्नोतितपसामौनेनाज्ञांतथैवच ॥ उपभोगांस्तुदानेनब्रह्मचर्येणजीवितम् ॥३९ ॥
अहिंसयाबलंरूपंदीक्षयाजन्मसत्कुले ॥ फलमूलाशिनांराज्यंस्वर्गःपर्णाशिनांभवेत् ॥ ४० ॥ पयोभक्षोदिवंयातिस्थानंचद्रविणाधिकम् ॥ गुरुशुश्रूषया
विद्यांनित्यश्राद्धेनसंततिम् ॥ ४१ ॥ गवाढ्यःशाकदीक्षाभिःस्वर्गमाहुस्तृणाशिनाम् ॥ स्त्रियस्त्रिषवणंस्नात्वावायुंपीत्वाक्रतुंलभेत् ॥ ४२ ॥ नित्यस्नायी
भवेद्दक्षःसंध्येतुद्वेजपन्नरः ॥ मौनंसाधयतेराज्यंनाकपृष्ठमनाशके ॥ ४३ ॥ स्थंडिलेतुशयानानांगृहाणिशयनानिवा ॥ चीरवल्कलवासोभिर्वासांस्याभ
रणानिवा ॥ ४४ ॥ शय्यासनानियानानियोगात्मनितपोधने ॥ अग्निप्रवेशेनियतंब्रह्मलोकोभिधीयते ॥ ४५ ॥ रसानांप्रतिसंहारेसौभाग्यमिहविंदति

आमिषप्रातिसंहारेप्रजास्यायुष्मतीभवेत्॥४६॥उदयान्नस्वपेद्यस्तुसनराधिपतिर्भवेत् ॥ सत्यवादीमरश्रेष्ठोदैवतैःसहमोदते॥ ४७ ॥ कीर्तिर्भवतिदानेन
तथाऽऽरोग्यमहिंसया ॥द्विजशुश्रूषयाराज्यंद्विजत्वंचातिपुष्कलम्॥४८॥पानीयस्यप्रदानेनतृप्यंतेकामभोगतः॥ सांत्वदःसर्वभूतानांसर्वदुःखैर्विमुच्यते ॥
॥४९॥ देवशुश्रूषयाराज्यंदिव्यरूपंनियच्छति ॥ लोकेप्रदीपदानेनचक्षुष्मान्भवतिप्रभुः॥५०॥ प्रेक्षणीयप्रदानेनस्मृतिंमेधांचविंदति ॥ गंधमाल्यानिद
त्वाचकीर्तिर्भवतिपुष्कलाम् ॥५१॥ केशश्मश्रुंधारयतामग्र्याभवतिसंततिः ॥ उपवासंचदीक्षांवाप्यभिषेकंयथाक्रमम्॥ ५२ ॥ कृत्वाद्वादशवर्षाणिवी
रयानाद्विशिष्यते ॥ दासीदासमलंकारंक्षेत्राणिविविधानिच ॥५३॥ ब्रह्मदेयांसुतांदत्वाप्राप्नोतिस्वर्गमुत्तमम् ॥ ध्रुवंतीर्थोपवासैश्चत्रिदिवंयांतिमानवाः॥
॥५४॥ लभतेचचिरंस्थानंफलपुष्पप्रदोनरः॥५५॥ सुवर्णशृंगैःसुविराजितानांगवांसहस्रंचनरःप्रदाता ॥ प्राप्नोतिपुण्यंदिविदेवलोकमित्येवमाहुर्मुनिदे
वसंघाः॥५६॥प्रयच्छतेयःकपिलांसवत्सांकांस्यस्यदोहांद्रविणाग्र्यशृंगीम्॥तैस्तैर्गुणैःकामदुघास्यभूत्वानरंप्रदातारमुपैतिसागौः ॥ ५७ ॥ यावंतिरोमा
णिभवंतिधेन्वास्तावत्फलंलभतेगोप्रदाता ॥ पुत्रांश्चपौत्रांश्चकुलंचसर्वमासप्तमंतारयतेपरत्र ॥५८॥सदक्षिणांकांचनचारुशृंगींकांस्योपदोहांद्रविणोत्तरी
याम् ॥ धेनुंतिलानांददतोद्विजायलोकावसूनांसुलभाभवंति ॥ ५९ ॥ स्वकर्मभिर्मानवंसंनिबद्धंतीव्रांधकारेनरकेपतंतम् ॥ महार्णवान्नौरिववातयुक्ता
दानंगवांतारयतेपरत्र ॥ ६० ॥ योब्रह्मदेयांतुददातिकन्यांभूमिप्रदानंचकरोतिविप्रे ॥ ददातिवित्तंविविधंचयश्चसलोकमाप्नोतिपुरंदरस्य ॥ ६१ ॥
नैवेशिकंसर्वगुणोपपन्नंयोवैददातिपुरुषोद्विजाय ॥ स्वाध्यायचारित्रगुणान्वितायतस्यापिलोकान्प्रवदंतिनित्यान् ॥ ६२ ॥ धुर्यप्रदानेनतथागवाश्चै
र्लोकानवाप्नोतिनरोवसूनां ॥ स्वर्गायचाप्याहुर्हिरण्यदानंततोविशिष्टंकनकप्रदानम् ॥ ६३ ॥ छत्रप्रदानेनगृहंविशिष्टंयानंतथोपानहसंप्रदाने ॥ वस्त्र
प्रदानेनफलंसुरूपंगंधप्रदातासुरभिर्नरःस्यात् ॥ ६४ ॥ पुष्पोपगांश्चैवफलोपगांश्चयःपादपान्यच्छतिवैद्विजाय ॥ सुस्त्रीसमृद्धंबहुरत्नपूर्णंलभेत्प्रयत्नो
पचितंगृहंवै ॥ ६५ ॥ भक्ष्यान्नपानस्यरसस्यदानंसर्वानवाप्नोतिरसान्प्रकामम् ॥ प्रतिश्रयाच्छादनसंप्रदाताप्राप्नोतितानेवनसंशयोत्र ॥ ६६ ॥ स्रग्दाम
गंधान्यनुलेपनानिस्नानानिमाल्यानिचमानवोयः ॥ दद्याद्द्विजेन्द्रायभवेदरोगस्तथासुरूपश्चनरेंद्रकल्पः ॥ ६७ ॥ बीजैरशून्यंशरणैरुपेतंदद्याद्गृहंयः
पुरुषोद्विजाय ॥ पुण्याभिरामंबहुवस्त्रपूर्णंलभत्यधिष्ठानपरंमुनीश ॥ ६८ ॥ सुगंधचित्रास्तरणोपपन्नंदद्यान्नरोयःशयनंद्विजाय ॥ रूपान्वितांपुत्रवतीं
मनोज्ञांभार्यामयत्नोपगतांलभेत्सः ॥ ६९ ॥ व्यासउवाच ॥ यानियानितुदेयानिदानानिपरिचक्षते ॥ तेभ्योविशिष्टंकिंदानंकितारयतितद्वद ॥७० ॥
सनत्कुमार उवाच ॥ अभयंसर्वसत्वेभ्योव्यसनेचाप्यनुग्रहः ॥ यच्चाभिलषितंदद्यात्तृषितायोपयाचते ॥ ७१ ॥ दत्तमन्वेतियद्दत्वातद्दानंश्रेष्ठमुच्यते ॥

दत्तंदातारमन्वेतितच्छृणुष्वमहामते ॥ ७२ ॥ हिरण्यदानंगोदानंपृथिवीदानमेवच ॥ एतानिवैपवित्राणितारयंत्यतिदुष्कृतीन् ॥ ७३ ॥ दानान्येतानि
साधुभ्योदत्वामुच्यातिपातकात् ॥ यद्यदिष्टतमंलोकेयच्चास्तिदयितंगृहे ॥ ७४ ॥ तत्तद्गुणवतेदेयंतदेवाक्षयमिच्छता ॥ प्रियाणिलभतेलोकेप्रियदःप्रिय
कृत्तथा ॥ ७५ ॥ प्रियोभवतिभूतानामिहचैवपरत्रच ॥ याचमानमभीमानादनासक्तमकिंचनं ॥७६ ॥ योनार्चतियथाशक्त्यासनृशंसोनराधमः ॥ अमि
त्रमपिचेद्दीनंशरणैषिणमागतम् ॥७७॥ व्यसनेयोनुगृह्णातिसवैपुरुषउच्यते ॥ कृशायह्रीमतेदद्याद्वृत्तिग्लानाययाचते ॥ ७८ ॥ अपहत्यक्षुधंयस्तुनतेन
पुरुषःसमः ॥ ह्रियातुनियतान्साधून्पुत्रदारैश्चकर्शितान् ॥ ७९ ॥ अयाचमानान्कालेयःसर्वोपायैर्निमंत्रयेत् ॥ सन्नतिंयेनदेवेषुनमर्त्येषुचकुर्वते ॥
॥ ८० ॥ महांतोनित्यसत्वस्थान्यायलब्धोपजीविनः ॥ विद्यास्नाताव्रतस्नाताअध्यात्मगतिचिंतकाः ॥ ८१ ॥ गुढस्वाध्यायतपसोब्राह्मणाःशंसितव्र
ताः ॥ स्वदारनियतादांताःशक्त्यादानपरायणाः ॥ ८२ ॥ पुराणस्मृतिवेत्तारोयज्ञकर्मस्वनुष्ठिताः ॥ एतेपूज्यतमानित्यमाचार्यैःसपुरोहितः ॥ ८३ ॥
पुत्रवत्परिपाल्यास्तेयतोधर्मधराःसदा ॥ यच्छुभार्थंशुभन्याय्यंवित्तंयद्विद्यतेगृहे ॥ ८४ ॥ तेनैतेब्राह्मणाःपूज्याःस्वधर्ममनुवर्तता ॥ नमस्कुर्यात्स्वयं
विप्रान्वर्तमानान्यथातथम् ॥ ८५ ॥ यथासुखंयथोत्साहंनमस्यास्तेस्वमातृवत् ॥ यथापत्याश्रयोधर्मःस्त्रीणांलोकेसनातनः ॥ ८६ ॥ संतारय
ति भर्तारंयजमानंतथाद्विजः ॥ सदैवसागतिर्नान्याक्षत्रियाणांमनस्विनाम् ॥ ८७ ॥ ब्राह्मणेषुसदाभक्तिर्दानाच्छादनभोजनैः ॥ यदिमेब्राह्मणाव्यासस
त्यजेयुरपूजिताः ॥ ८८ ॥ निंदन्तिचक्रुधाविष्टास्तदभावायकल्पते ॥ अत्रतेकीर्तयिष्यामियथाधर्मःसनातनः ॥ ८९ ॥ राजन्योब्राह्मणंनित्यंपुरापरि
चचारह ॥ वैश्योराजन्यमित्येवशूद्रोवैश्यमितिश्रुतिः ॥ ९० ॥ मृदुभावान्सत्यशीलान्सत्यधर्मानुपालकान् ॥ आशीविषानिवक्रुद्धांस्तानुपाचरताद्वि
जान् ॥ ९१ ॥ अपरेषांपरेषाञ्चपरेभ्यश्चैवयेपरे ॥ तेसर्वेब्राह्मणेभ्योपिनिस्तरंतिभवार्णवम् ॥ ९२ ॥ व्यासउवाच ॥ विद्ययाजन्मनायौतुभवेतामधिक
स्तयोः ॥ एतंमे संशयंछिधिकोदानायभवेन्मुने ॥ ९३ ॥ सनत्कुमारउवाच ॥ विद्ययाजन्मनावापिनश्रेयान्ब्राह्मणोभवेत् ॥ आचारोब्राह्मणस्येहत
स्माच्छ्रेष्ठतरःसदा ॥ ९४ ॥ श्रेयोभियाचतोदत्तंदानमाहुरयाचते ॥ अर्हत्तमोयोधृतिमान्कृपणादकृतात्मनः ॥ ९५ ॥ क्षत्रियोप्यर्जनरतिर्ब्राह्मणोधृति
मान्शुचिः ॥ तस्माद्वैधृतिमान्विद्वान्देवान्प्रीणातितुष्टिमान् ॥ ९६ ॥ द्विजस्यप्रार्थ्यमानोपिव्यभिचारोहिदृश्यते ॥ उद्वेजयतियाचन्वैसदाभूतानिद
स्युवत् ॥ ९७ ॥ म्रियतेयाचमानोपितद्वन्म्रियतेददत् ॥ ददत्संजीवयत्येवमात्मानंचमहानृपे ॥ ९८ ॥ आनृशंस्यंपरोधर्मोयाचतेयत्प्रदीयते ॥ अ
याचतःसीदमानान्सर्वोपायैर्निमंत्रयेत् ॥ ९९ ॥ यस्यचैतादृशाराष्ट्रेवसेयुस्तेद्विजोत्तमाः ॥ भस्मच्छन्नानिवाग्नींस्तान्विद्धितेतारयंतिच ॥ १०० ॥

पूज्यास्तेज्ञानविज्ञानतपोवीर्यसमन्विताः ॥ तेभ्यःपूजांप्रयुंजीतब्राह्मणेभ्योदिनेदिने ॥ १०१ ॥ ददद्बहुविधान्देयानुपच्छन्नंतपस्यताम् ॥ यदग्निहोत्रे
सुहुतंसायंप्रातश्चतत्फलम् ॥१०२॥ विद्यावेदव्रतस्नातानव्ययापत्यजीविनः ॥ गूढस्वाध्यायतपसोब्राह्मणान्संशितव्रतान् ॥१०३॥ कृतैरावसथैर्हृद्यैःसं
प्रेष्यैःसपरिच्छदैः ॥ निमंत्रयित्वाकालेयंपूजार्हांस्तान्द्विजोत्तमान् ॥१०४॥ अपिचेत्प्रतिगृह्णीयुःश्रद्धापूतंस्वशक्तितः॥कार्यमित्येवमन्वानाधर्मज्ञास्त
त्वदर्शिनः ॥ १०५ ॥ यस्यदानंप्रतीक्षंतेपर्जन्यमिवकर्षकाः ॥ सद्भिर्गात्रिदशायातःस्वर्गीस्यान्नात्रसंशयः ॥ १०६ ॥ रौद्रंकर्मक्षत्रियस्यसततंवर्तते
मुने ॥ तस्यवैतानिकंकर्मदानंचैवेहपावनम् ॥ १०७ ॥ नतुपापकृतांराज्ञांप्रतिगृह्णंतिसाधवः ॥ अथतेप्रतिगृह्णीयुर्दद्यादहरहर्मुने ॥ १०८ ॥
श्रद्धामास्थायपरमांपावनंह्येतदुत्तमम् ॥ ब्राह्मणांस्तर्पयेद्द्रव्यैःसर्वज्ञानविशारदान् ॥ १०९ ॥ मैत्रान्साधून्वेदविद्याशीलवृत्ततपोन्वितान् ॥
समृद्धःसन्गृहेयावद्ब्राह्मणेभ्यःप्रदीयते ॥ ११० ॥ धेनूरनडुहोन्नानिछत्रवासांस्युपानहः ॥ अश्ववंतिचयानानिवेश्मानिशयनानिच ॥ १११ ॥
एतेमहाफलाव्युष्टीर्दग्धपापामहाफलाः ॥ अजुगुप्स्याथविज्ञायब्राह्मणान्वृत्तिकर्शितान् ॥ ११२ ॥ उपच्छन्नंप्रकाशंचवृत्त्यातान्प्रतिपादयेत् ॥
एवंपापैर्विनिर्मुक्तःस्वर्गंप्राप्नोतिमानवः ॥ ११३ ॥ पुत्रवच्चापिभृत्यांश्चप्रजाश्चपरिपालयेत् ॥ योगक्षेमोभवेत्तस्यब्राह्मणेभ्यस्तुनित्यशः ॥ ११४ ॥
योरक्षिभ्यःसमादायराजाराष्ट्रंप्रलुप्यति ॥ नरक्षेच्चततस्तस्मात्पापमाहुर्मनीषिणः ॥ ११५ ॥ यच्चादायनयात्सम्यग्यजेद्राजासमाहितः ॥ यत्किंचित्कुरु
तेकर्मतंप्रशंसंतिसाधवः ॥ ११६ ॥ अपीडिताःसुसंवृद्धायद्दद्यात्यनुकूलतः ॥ तादृशेनाभ्युपायेनयष्टव्यंनित्यमाहृतैः ॥ ११७ ॥ यथोपरिनिषिच्येत
निचितार्थैर्यथोदधिः ॥ तथाराजामहायज्ञैर्यजेतबहुदक्षिणैः ॥ ११८ ॥ बालवृद्धधनंरक्षेदंधस्यकृपणस्यच ॥ नखातपूर्वंकुर्वीतनचादत्तंधनंहरेत् ॥
॥ ११९ ॥ हृतंकृपणवित्तंहिराष्ट्रंहंतिनृपश्रियाः ॥ यथास्वादूनिभोज्यानिसमवेक्षंतिबालकाः ॥ १२० ॥ यदिचैतादृशोराष्ट्रेविद्वान्सीदेत्क्षुधान्वितः ॥
धिकृतस्यजीवितंराज्ञोराष्ट्रेयस्यावसीदति॥१२१॥अवृत्त्यातंमनुष्योऽसौशिबिराहवचोयथा॥यस्यस्मविषयेराज्ञःक्षुधासीदंतिवाडवाः॥१२२॥अवृत्तिमे
वतद्राष्ट्रंदहतेसहराजकम्॥क्रोशंत्योयस्यराष्ट्राद्धिह्रियंतेतरसास्त्रियः ॥ १२३ ॥ क्रोशतांपतिपुत्राणांमृतःसनतुजीवति॥अरक्षितारंभर्त्तारंविलोप्तारमदा
यकम् ॥१२४॥ तंराजानंबलाद्धन्युःप्रजाःसंभूयनिर्घृणम्॥अहंवोरक्षितेत्युक्त्वास्ववचोनाशकारकः ॥ १२५ ॥ ससंहत्यनिहंतव्योयोनरक्षतिभूमिपः ॥
पापंकुर्वंतियत्किंचित्प्रजाराज्ञाह्यरक्षिताः ॥१२६॥ चतुर्थंतस्यपापस्यराज्ञोभवतिनोमतम्॥अप्याहुःसर्वमप्येतद्भूयोर्धमितिनित्यशः ॥ १२७॥ शुभं
वायदिकुर्वंतिप्रजाराज्ञासुरक्षिताः ॥ चतुर्थंतस्यपुण्यस्यराजाप्राप्नोतिनित्यशः॥१२८॥ इतिश्रीशिवमाहापुराणेधर्मसंहितायांविंशोऽध्यायः ॥ २० ॥

व्यासउवाच ॥ गुणाधिकेभ्योविप्रेभ्योदातुकामोमहीपतिः ॥ कानिदानानिलोकेस्मिन्दद्याद्ब्रह्मसुतोत्तम ॥ १ ॥ सनत्कुमारउवाच ॥ लोकतंत्रंहिसं
ज्ञायदेवाःसर्षिपुरोगमाः ॥ अन्नमेवप्रशंसंतिसर्वमन्नेप्रतिष्ठितम् ॥२॥ तस्मादन्नंविशेषेणदातुमिच्छंतिसाधवः ॥ अन्नेनसदृशंदानंनभूतंनभविष्यति ॥३॥
अन्नेनधार्यतेसर्वंविश्वंजगदिदंमुने ॥ अन्नमूर्जस्करंलोकेप्राणाह्यन्नेप्रतिष्ठिताः ॥४॥ दातव्यंभिक्षवेचान्नंब्राह्मणायमहात्मने ॥ कुटुंबंपीडयित्वापिआत्मनो
भूतिमिच्छता॥५॥ निदधातिनिधिश्रेष्ठंयोदद्यादन्नमर्थिने ॥ ब्राह्मणायार्तरूपायपारलौकिकमात्मनः॥६॥अर्चयेद्भूतिमन्विच्छन्कालेद्विजमुपस्थितम् ॥
श्रांतमध्वनिवर्ततंगृहस्थंगृहमागतम् ॥ ७ ॥ अन्नदःप्राप्नुतेव्याससुशीलोवीतमत्सरः ॥ क्रोधमुत्पतितंहित्वादिवि चैवेहयत्सुखम् ॥ ८ ॥ नाभिनंदेद
भिगतंनप्रणुद्यात्कथंचन ॥ अपिश्वपाकेशुनिवानदानंविप्रणश्यति ॥९॥ श्रांतायादृष्टपूर्वायह्यन्नमध्वनिवर्तिने ॥ योदद्यादपरिक्लिष्टंससमृद्धिमवाप्नुयात्
॥१०॥पितॄन्देवांस्तथाविप्रानतिथींश्चमहामुने ॥ योनरःप्रीणयत्यन्नैस्तस्यपुण्यफलंमहत् ॥११॥कृत्वाऽपिसुमहत्पापंयोदद्यादन्नमर्थिने ॥ ब्राह्मणायवि
शेषेणसतुपापैःप्रमुच्यते ॥ १२ ॥ ब्राह्मणेष्वक्षयंदानमन्नंशूद्रेमहत्फलम् ॥ अन्नपानंचशूद्रेचब्राह्मणेचविशिष्यते ॥ १३ ॥ नपृच्छेद्गोत्रचरणंस्वाध्या
यंदेशमेवच ॥ भिक्षितेब्राह्मणेनेहदद्यादन्नंप्रयाचतः ॥ १४ ॥ अन्नदस्यशुभावृक्षाःसर्वकामफलान्विताः ॥ भवंतीहयथापुत्रहर्षयुक्तास्त्रिविष्टपे ॥ १५ ॥
अन्नदानेनयेलोकास्ताञ्छृणुष्वमहामुने ॥ भवनानिप्रकाशंतेदिवितेषांमहात्मनाम् ॥ १६ ॥ नानासंस्थानरूपाणिनानाकामान्वितानिच ॥ सर्वकाम
फलाश्चापिवृक्षाभवनसंस्थिताः ॥ १७ ॥ हेमवाप्यःशुभाःकूपादीर्घिकाश्चैवसर्वशः ॥ घोषयंतिचयानानिमुक्तान्यथसहस्रशः ॥१८॥ भक्ष्यभोज्यमयाः
शैलावासांस्याभरणानिच ॥ क्षीरंस्रवंत्यःसरितस्तथैवान्नस्यपर्वताः ॥ १९ ॥ प्रासादाःपांडुराभासाःशय्याश्चकनकोज्ज्वलाः ॥ दातारमनुगच्छंतित
स्मादन्नप्रदोभवेत् ॥ २० ॥ एतेलोकाःपुण्यकृतामन्नदानान्महाशुभाः ॥ तस्मादन्नंविशेषेणदातव्यंमानवैर्भुवि ॥ २१ ॥ एतद्यःश्रावयेच्छ्राद्धेब्रा
ह्मणान्भक्तितोमुने ॥ अक्षय्यमन्नदानंचपितॄणामुपतिष्ठति ॥ २२ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायामन्नदानविधिर्नामैकविंशोऽध्यायः ॥ २१ ॥
॥ सनत्कुमारउवाच ॥ पानीयदानंपरमंदानानामुत्तमंसदा ॥ तस्माद्वापीश्चकूपांश्चतडागानिचकारयेत् ॥ १ ॥ अर्धंपापस्यहरतिपुरुषस्याविकर्मिणः॥
कूपःप्रवृत्तपानीयःसुप्रवृत्तश्चानित्यशः ॥ २ ॥ सर्वंतारयतेवंशंयःखनेच्चजलाशयम् ॥ गावःपिबंतिविप्राश्चसाधवश्चनराःसदा ॥ ३ ॥ निदाघकालेपानी
यंयस्यातिष्ठत्यवारितम् ॥ सदुर्गंविषमंकृच्छ्रंनकदाचिदवाप्यते ॥ ४ ॥ तडागानांचवक्ष्यामिकृतानांयेगुणाःस्मृताः ॥ त्रिषुलोकेषुसर्वत्रपूजितोयस्त
डागवान् ॥ ५ ॥ अथवामित्रसदनंमैत्रंमित्राविवर्धनम् ॥ कीर्तिसंजननंश्रेष्ठंतडागानांनिवेशनम् ॥ ६ ॥ धर्मस्यार्थस्यकामस्यफलमाहुर्मनीषिणः ॥ त

डागंसुकृतंदेशेक्षेत्रमध्येमहाश्रयम् ॥ ७ ॥ चतुर्विधानांभूतानांतडागस्योपलक्षयेत् ॥ तडागानिचसर्वाणिदिशंतिश्रियमुत्तमाम् ॥ ८ ॥ देवामनुष्यागंधर्वाःपितरोरगराक्षसाः ॥ स्थावराणिचभूतानिसंश्रयंतिजलाशयम् ॥ ९ ॥ वर्षास्रुतौतडागेतुसलिलंयस्यतिष्ठति ॥ अग्निहोत्रफलंतस्यएवमाहुर्मनीषिणः ॥ १० ॥ शरत्कालेतुसलिलंतडागेयस्यतिष्ठति ॥ गोसहस्रफलंतस्यलभतेनात्रसंशयः ॥ ११ ॥ हेमंतेशिशिरेचैवसलिलंयस्यतिष्ठति ॥ सवैबहुसुवर्णस्ययज्ञस्यलभतेफलम् ॥ १२ ॥ वसंतेचतथाग्रीष्मेसलिलंतिष्ठतेयदि ॥ अतिरात्राश्वमेधानांफलमाहुर्मनीषिणः ॥ १३ ॥ नानाविधानांवृक्षाणांरोपणेचगुणान्शृणु ॥ अतीतानागतौचोभौपितृवंशौसमुद्धरेत् ॥१४॥ कांतारवृक्षरोपीचतस्माद्वृक्षांस्तुरोपयेत् ॥ तत्रपुत्राभवंत्येतेपादपानात्रसंशयः॥१५॥परलोकंगतेसोपिलोकानाप्नोतिचाक्षयान्॥पुष्पैःसुरगणान्सर्वान्फलैश्चापितथापितॄन्॥१६॥ छाययाचातिथीन्सर्वान्पूजयंतिमहीरुहाः ॥ पुष्पिताःफलवन्तश्चतर्पयंतीहमानवान्॥१७॥किंनरोरगरक्षांसिदेवगंधर्वमानवाः॥तथाऋषिगणाश्चैवसंश्रयंतिमहीरुहान्॥१८॥ इहलोकेपरेचैवपुत्रास्तेधर्मतस्मृताः ॥ तडागकृद्वृक्षरोपीइष्टयज्ञश्चयोद्विजः ॥ १९ ॥ एतेस्वर्गान्नहीयंतेयेचान्येसत्यवादिनः ॥ सत्यमेवपरंब्रह्मसत्यमेवपरंतपः ॥ २० ॥ सत्यमेवपरोयज्ञःसत्यमेवपरंश्रुतम् ॥ सत्यंवेदेषुजागर्तिसत्यंचपरमंपदम् ॥ २१ ॥ तपोयज्ञश्चपुण्यश्चदेवर्षिपितृपूजनम् ॥ आद्योविधिश्चविद्याचसर्वंसत्येप्रतिष्ठितम् ॥ २२ ॥ सत्यंयज्ञस्तथादानंमंत्रादेवीसरस्वती ॥ व्रतचर्यातथासत्यमोंकारःसत्यमेवच ॥ २३॥ सत्येनवायुरभ्येतिसत्येनतपतेरविः ॥ सत्येनाग्निर्निर्दहतिस्वर्गःसत्येनतिष्ठति ॥ २४ ॥ पालनंसर्ववेदानांसर्वतीर्थावगाहनम् ॥ सत्यंचवदतोलोकेसर्वमाप्नोत्यसंशयः ॥ २५ ॥ अश्वमेधसहस्रंचसत्यंचतुलयाधृतम् ॥ अश्वमेधसहस्राच्चसत्यमेवविशिष्यते ॥ २६ ॥ सत्येनदेवाःप्रीयंतेपितरोऋषयस्तथा ॥ सत्यमाहुःपरंधर्मंसत्यमाहुःपरंपदम् ॥२७॥ सत्यमाहुःपरंब्रह्मतस्मात्सत्यंसदावदेत् ॥ मुनयःसत्यनिरतास्तपस्तप्त्वासुदुष्करम् ॥ २८ ॥ सत्यधर्मेरताःसिद्धास्ततःस्वर्गमितोगताः ॥ अप्सरोगणसंघुष्टैर्विमानैःपरियातृभिः ॥ २९ ॥ वक्तव्यंचसदासत्यंनसत्याद्विद्यतेपरम् ॥ अगाधेविपुलेशुद्धेसत्यतीर्थेशुचिह्रदे ॥ ३० ॥ स्नातव्यंमनसायुक्तैःस्नानंतत्परमंस्मृतम् ॥ आत्मार्थेवापरार्थेवापुत्रार्थेवापिमानवाः ॥ ३१ ॥ अनृतंयेनभाषंतेतेनराःस्वर्गगामिनः ॥ वेदायज्ञास्तथामंत्राःसंतिविप्रेषुनित्यशः ॥ ३२ ॥ नोभांत्यमीह्यसत्येषुतस्मात्सत्यंसमाचरेत् ॥ व्यासउवाच ॥ तपसोमेफलंब्रूहिपुनरेवविशेषतः ॥ ३३ ॥ सर्वेषांचैववर्णानांब्राह्मणानांतपोधनम् ॥ सनत्कुमारउवाच ॥ प्रवक्ष्यामितपोध्यायंसर्वकामार्थसाधकम् ॥ ३४ ॥ सुदुश्चरंद्विजातीनांतन्मेनिगदतःशृणु ॥ तपोहिपरमंप्रोक्तंतपसाविंदतेफलम् ॥३५॥ तपोरताहियेनित्यंमोदंतेसहदैवतैः ॥ तपसाप्राप्यतेस्वर्गस्तपसाप्राप्यतेयशः ॥३६॥ तपसामोक्षमाप्नोतितपसाविंदतेमहत् ॥

ज्ञानविज्ञानसंपत्तिसौभाग्यंरूपमेवच॥३७॥तपसालभ्यतेसर्वंमनसायद्यदिच्छति॥नातप्ततपसोयांतिब्रह्मलोकंकदाचन ॥३८॥ यत्कार्यंकिंचिदास्थायपु
रुषस्तप्यतेतपः ॥ तत्सर्वंसमवाप्नोतिपरत्रेहचमानवः ॥३९॥ सुरापःपरदारीचब्रह्महागुरुतल्पगः ॥ तपसातरतेसर्वंसर्वतश्चविमुच्यते ॥ ४० ॥ अपिस
र्वेश्वरःस्थाणुर्विष्णुश्चैवसनातनः ॥ ब्रह्माहुताशनःशक्रोयेचान्येतपसान्विताः ॥ ४१ ॥ षडशीतिसहस्राणिमुनीनामूर्ध्वरेतसाम् ॥ तपसादिविमोदंते
समेतादैवतैःसह ॥४२ ॥ तपसाप्राप्यतेराज्यंसचशक्रःसुरेश्वरः ॥ तपसापालयन्सर्वमहन्यहनिवृत्रहा ॥४३ ॥ सूर्याचन्द्रमसौदेवौसर्वलोकहितेरतौ ॥ त
पसैवप्रकाशेतेनक्षत्राणिग्रहास्तथा॥४४॥नचास्तितत्सुखंलोकेयद्विनातपसाकिल॥तपसैवसुखंसर्वमितिवेदविदोविदुः॥४५॥सर्वंचतपसाभ्येतिसर्वंचसुख
मश्नुते॥तपस्तप्यतियोऽरण्येवन्यमूलफलाशनः॥४६॥योऽधीतेऋचमेकाहंशुचिःसन्तत्समंमुने॥शुचिरध्ययनात्पुण्यंयदाप्नोतिद्विजोत्तमः ॥ ४७ ॥
तदध्यायाज्जपस्यापिद्विगुणंफलमश्नुते ॥ जगद्यथानिरालोकंजायतेशशिभास्करौ ॥ ४८ ॥ विनातथापुराणंहिध्येयमस्मान्मुनेसदा ॥ तप्यमानःसदाज्ञा
नोनिरयाद्बोधशास्त्रतः ॥ ४९ ॥ संबोधयतिलोकंतंतस्मात्पूज्यतमोगुरुः ॥ सर्वेषांचैवपात्राणांश्रेष्ठःपुराणवित्तमः ॥ ५० ॥ पतनात्त्रायतेयस्मात्तस्मा
त्पात्रमुदाहृतम् ॥ धनंधान्यंहिरण्यंचवासांसिविविधानिच॥५१॥येददंतिसुपात्रायतेयांतिपरमांगतिम्॥ गांरथंमहिषींचैवगजानश्वांश्चशोभनान्॥५२॥
यःप्रयच्छतिमुख्यायतस्यपुण्यफलंशृणु ॥ अक्षयंसर्वकामीयंसोश्वमेधफलंलभेत् ॥ ५३ ॥ महींददातियस्तस्मैकृष्टांफलवतींशुभाम् ॥ सतारयति
वैवंशान्दशपूर्वान्दशापरान् ॥ ५४ ॥ विमानेनचदिव्येनाशिवलोकंसगच्छति ॥ नयज्ञैस्तुष्टिमायांतिदेवाःप्रेक्षणकैरपि ॥ ५५ ॥ बलिभिःपुष्पपूजाभिर्य
थापुस्तकवाचनैः ॥ विष्णोरायतनेयस्तुकारयेद्धर्मपुस्तकम् ॥ ५६ ॥ शंभोरर्कस्यकस्यापिशृणुतस्यापियत्फलम् ॥ राजसूयाश्वमेधाभ्यांफलं
प्राप्नोतिमानवः ॥ ५७ ॥ इतिहासपुराणानांपुण्यंपुस्तकवाचनम् ॥ सर्वान्कामानवाप्येहसूर्यलोकंभिनत्तिसः ॥ ५८ ॥ सूर्यलोकंचभित्वासब्रह्मलोकं
चगच्छति ॥ स्थित्वाकल्पशतान्यत्रराजाभवतिभूतले ॥ ५९ ॥ अश्वमेधसहस्रस्ययत्फलंसमुदाहृतम् ॥ तत्फलंसमवाप्नोतिदेवाग्रेयोजयंपठेत्
॥ ६० ॥ तस्मात्सर्वप्रयत्नेनकार्यंपुस्तकवाचनं ॥ इतिहासपुराणानांशंभोरायतनेशुभे ॥ ६१ ॥ नान्यत्प्रीतिकरंशंभोस्तथान्येषांदिवौकसाम् ॥६२॥
इतिश्रीशिवमहापुराणेधर्मसंहितायांपानीदानसत्यतपःपुराणमाहात्म्यकथनंनामद्वाविंशोऽध्यायः॥२२॥ ॥ सूतउवाच ॥ अत्राप्युदाहरंतीमामितिहा
संपुरातनम् ॥ पुराणंपरमंपुण्यंसर्वपापहरंशिवम् ॥१॥कुमारःसर्वलोकानांनमस्कृत्यपितामहं ॥ प्रोवाचेदंमहाख्यानंदेवर्षिर्ब्रह्मसूनुना ॥ २ ॥ गतोहंध
र्मराजानंद्रष्टुंसंपूजितोमया ॥ स्तुतिभिःपरयाभक्त्याबहुमानपुरःसरम् ॥ ३ ॥ तथामधुरयावाचातेनोक्तोऽस्मिसुखासने ॥ मयातत्रोपविष्टेनदृष्टंकिंचि

न्महाद्भुतम् ॥ ४ ॥ कांचनेनविमानेनवैडूर्यकृतवेदिना ॥ मणिमुक्ताविचित्रेणकिंकिणीजालशोभिना ॥ ५ ॥ आगतंपुरुषंतत्रआसनाद्देवसत्तमः ॥
ससंभ्रमंसमुत्थायदृष्ट्वाधर्मःस्वयंविभुः ॥ ६ ॥ गृहीत्वेदंतदावाक्यमुवाचहसुखान्वितम् ॥ सुखागतंधर्मदर्शिन्प्रीतोस्मिदर्शनात्तव ॥ ७ ॥
समीपेममतिष्ठस्वयावदाज्ञासतीहमे ॥ पुनर्यास्यसितत्स्थानंयत्रब्रह्मास्वयंस्थितः ॥ ८ ॥ इत्युक्तेतुततश्चान्योविमानवरमास्थितः ॥ आगतःपुरुषो
दिव्योयत्रतिष्ठतिधर्मराट् ॥ ९ ॥ सपूजितोविमानस्थःप्रश्रयावनतेनच ॥ सामपूर्वंतथोक्तःसयथापूर्वंनरस्यच ॥ १० ॥ स्वयंधर्मेणवैब्रह्मन्दृष्ट्वापूजांकृ
तांतयोः ॥ तत्रमेविस्मयोजातःपृष्टोधर्मोमयाततः ॥ ११ ॥ नरस्तवसकाशंहियोयंपूर्वमिहागतः ॥ किमनेनकृतंकर्मयस्यतुष्टोभवान्भृशम् ॥ १२ ॥
अत्रमेकौतुकंजातंकृताहिस्वयमेवतु ॥ यदस्यभवतापूजाविस्मयोमेऽभवन्महान् ॥ १३ ॥ तथैवास्यकृतापूजाद्वितीयस्यनरस्यतु ॥ मन्येहंशुभकर्मा
णौकाविमौनरसत्तमौ ॥ १४ ॥ यस्त्वमाभ्यांसमंपूजांकुरुषेधर्मकारणात् ॥ ब्रह्मविष्णुशिवाद्यैश्चपूज्यसेत्वंसदाभृशम् ॥ १५ ॥ यस्येदृक्पर
मंपुण्यंकिमेतौकर्मचक्रतुः ॥ कथ्यतांममसर्वंहिफलंदिव्यमवापतुः ॥ १६ ॥ ततस्त्वंसौतुमामाहहरिःकर्मयथातयोः ॥ कृतंशुभमिहायातौतच्छृ
णुष्वमहामते ॥ १७ ॥ धर्मउवाच ॥ वैदिशंनामनगरंपृथिव्यामस्तिविश्रुतम् ॥ तत्राऽभूत्पृथिवीपालोधरापालइतिश्रुतः ॥ १८ ॥ कस्मिन्
कालेपुरादेवीशशापस्वगणंक्रुधा ॥ मामृतेतुपरानारीभर्तुर्यन्मेनिवेशिता ॥ १९ ॥ तस्माद्द्वादशवर्षाणिजम्बुकस्त्वंभविष्यसि ॥ इत्युक्तःसतुबभ्रामज
म्बुकोमेदिनीतलम् ॥ २० ॥ वितस्तावेत्रवत्योस्तुसंगमेलोकविश्रुते ॥ शापांतोभवितातत्रपूर्वोक्तोगिरिकन्यया ॥ २१ ॥ तत्रासौनशनंकृत्वा
क्षेत्रेप्राणांस्ततोऽसृजत् ॥ दिव्यरूपवपुर्भूत्वाजगामशिवसन्निधौ ॥ २२ ॥ तत्राश्चर्यमहद्दृष्ट्वाधरापालोमहीपतिः ॥ शंभोरायतनंकृत्वास्थापयामासवै
शिवम् ॥ २३ ॥ तस्मिन्पुरेसुरान्सर्वानाचर्यत्सोस्यवीक्ष्यते ॥ शुभमायतनंशंभोस्तस्मिन्नग्रेसभाजनैः ॥ २४ ॥ पूर्णेतुब्राह्मणादीनांपूजयित्वाकदंब
कम् ॥ इतिहासपुराणज्ञंवाचकंचविशेषतः ॥ २५ ॥ पूजयित्वाद्विजश्रेष्ठंविद्याश्रेष्ठंमहामुनिम् ॥ पुस्तकंचापिसंपूज्यगंधपुष्पादिभिःक्रमात् ॥
॥ २६ ॥ ततस्तमाहराजासौवाचकंविनयान्वितः ॥ मयेहायतनंशंभोःकारितंतुशिवाग्रतः ॥ २७ ॥ चातुर्वर्ण्यमिदंचापिश्रोतुकामंकदंबकम् ॥ तिष्ठ
तीहद्विजश्रेष्ठकुरुपुस्तकवाचनम् ॥ २८ ॥ यावत्संवत्सरंविप्रगृह्यवृत्तिंत्वनुत्तमाम् ॥ स्वर्णनिष्कशतंचात्रततोदास्येतथापरम् ॥ २९ ॥ पूर्णेवर्षे
द्विजश्रेष्ठश्रेयोर्थमहमात्मनः ॥ एवंप्रवर्तितेतत्रपुण्येपुस्तकवाचने ॥ ३० ॥ षण्मासेगतमात्रेतुकालेमुनिवरोत्तम ॥ अथायुषःक्षयाच्चायंकालधर्ममुपेयि
वान् ॥ ३१ ॥ मयाचास्यविमानंहिशिवेनप्रेरितंदिवि ॥ इत्येषाकर्मणोव्युष्टिःपुण्याख्यानकसंज्ञिका ॥ ३२ ॥ गन्धपुष्पोपहारैस्तुनतुष्टिर्जायतेतथा॥

देवानामिहसर्वेषांपुराणश्रवणाद्यथा ॥ ३३ ॥ गोसुवर्णहिरण्यानांवस्त्राणांचापिकृत्स्नशः ॥ ग्रामाणांनगराणांचदानात्तुष्टिर्भवेन्नहि ॥ ३४ ॥ यथा
स्याद्धर्मश्रवणात्प्रीतिःसर्वदिवौकसाम् ॥ इतिहासपुराणानांश्रवणंमुनिसत्तम ॥ ३५ ॥ यथामेस्यान्महाप्रीतिर्नश्राद्धैःसर्वकामिकैः ॥ कन्याश्राद्धेमहाप्री
तिर्ममस्यान्मुनिसत्तम ॥ ३६ ॥ नतथारोचतेसातुयथापुस्तकवाचने ॥ अथकिंबहुनोक्तेननान्यत्प्रीतिकरंमम ॥ ३७ ॥ पुण्यव्याख्यानतोविप्रगुह्य
मेतत्प्रकीर्तितम् ॥ यश्चायमपरोविप्रइहायातोनरोत्तमः ॥ ३८ ॥ अयमासीन्नरश्रेष्ठअस्मिन्नेवपुरोत्तमे ॥ संगत्यातुगतश्चायंधर्मश्रवणमुत्तमम् ॥ ३९ ॥
श्रुत्वाभक्तिरभूदस्यततश्चश्रद्धयान्वितः ॥ कृत्वाप्रदक्षिणांतस्यवाचकस्यमाहात्मनः ॥ ४० ॥ एषविप्रोमुनिश्रेष्ठप्रददौस्वर्णमाषकम् ॥ नान्यदानंक
दाचकेलोभाविष्टेनचेतसा ॥ ४१ ॥ पात्रदानफलादेषप्राप्तवान्ब्रह्मणःपदम् ॥ एतत्कर्मफलंचास्यनचान्यत्कृतवानयम् ॥ ४२ ॥ यदनेनकृतापू
जावाचकस्यमहात्मनः ॥ फलंहिकर्मणस्तस्ययन्मयापूजितःस्वयम् ॥ ४३ ॥ वाचकंपूजयेद्यस्तुश्रद्धाभक्तिसमन्वितः ॥ तेनाहंपूजितःस्यांवैकविष्णू
शंकरस्तथा ॥ ४४ ॥ वाचकंपूजयेद्यस्तुभक्ष्यभोज्यैरनुत्तमैः ॥ श्राद्धेहंपूजितःस्यांवैदशवर्षाणिपंचच ॥ ४५ ॥ वाचकेसत्कृतेचेहभोजितेमुनिसत्तम ॥
तृप्तिर्भवतिमेविप्रसंवत्सरशतद्वयम् ॥ ४६ ॥ नकेवलंममप्रीतिर्वाचकेभोजितेभवेत् ॥ कृत्स्नशोदेवतानांचइंद्राद्रीनांतथाभवेत् ॥ ४७ ॥ ब्रह्मवि
ष्णुशिवादीनांसंदेष्टावाचकोमुने ॥ प्रीतेतस्मिन्देवताःस्युःसर्वाःप्रीतानसंशयः ॥ ४८ ॥ ब्रह्माविष्णुश्चरुद्रश्चचंद्रादित्यौग्रहादयः ॥ मत्साधनायपू
ज्यंतेततःसंपूज्यतांगताः ॥ ४९ ॥ स्नानंपूजाजपोहोमःश्रुतंशौचमहिंसता ॥ व्रतोपवासधैर्यंचमौनमिंद्रियानिग्रहम् ॥ ५० ॥ धीर्विद्यासत्यमक्रोधोदा
नंक्षांतिर्दयादमः ॥ वापीकूपतडागानांप्रासादानांचकल्पनम् ॥ ५१ ॥ कृच्छ्रचांद्रायणंयज्ञास्तीर्थानिस्वाश्रमाणिच ॥ मत्साधनानिसर्वाणिप्रोक्तानीहमनीषि
भिः ॥ ५२ ॥ धर्मादर्थश्चकामश्चमोक्षश्चमुनिसत्तम ॥ यत्सुखंविद्यतेकिंचिन्मत्तश्चेहपरत्रतत् ॥ ५३ ॥ दुःखंपापाद्विजानीहितस्माद्धर्ममयंसुखम् ॥ त्रिविधंतं
विजानीहिसत्वराजसतामसम् ॥ ५४ ॥ सदासत्वंतपोविद्यान्मुनिसिद्धेषुनित्यशः ॥ राजसंदिविदेवेषुदनुदैत्येषुतामसम् ॥ ५५ ॥ इत्येतत्कथितं
कर्मशुद्धमाभ्यांमहामुने ॥ नचान्यच्चक्रतुःकिंचित्सत्यंतेकथितंमया ॥ ५६ ॥ सनत्कुमारउवाच ॥ एतद्दृष्ट्वाचश्रुत्वाद्भुतवाभ्याश
मिहागतः ॥ किमत्रतथ्यंदेवेशकथ्यतांकौतुकंमम ॥ ५७ ॥ श्रुत्वाकुमारवचनमाहलोकपितामहः ॥ तावुभौसाधुपुण्योसिनास्तितुल्यस्तथाप
रः ॥ ५८ ॥ यौदृष्टौभवतातौतुपुराणौपुण्यकारिणौ ॥ यदुक्तंधर्मराजेनसर्वप्रत्यक्षदर्शिना ॥ ५९ ॥ सूर्येणापियदुक्तंहितथ्यंवैनान्यथाभवेत् ॥ यदा
सीन्मेसुखंपुत्रपंचमंलोकपूजितम् ॥ ६० ॥ तस्मादेतानिसर्वाणिनिःसृतानिसमंततः ॥ इतिहासपुराणानिलोकानांहितकाम्यया ॥ ६१ ॥ यथैतानिममेष्टा

निपुराणानिसदामुने॥नतथाचतुरोवेदानचांगानिमहामते॥६२॥ददातुवाचकेवृत्तिंनित्यंश्रद्धासमन्वितः॥ शृण्वंतितानियेभक्त्यातेयांतिपरमांगतिम्॥
इतिहासपुराणानिस्पष्टीकरणमुत्तमम् ॥ धर्मार्थकाममोक्षाणांमयासृष्टानिसुव्रत ॥ ६४ ॥ इतिहासपुराणाभ्यांवेदंसमुपबृंहयेत् ॥ बिभेत्यल्पश्रुताद्वे
दोमामयंप्रहरिष्यति ॥ ६५ ॥ यएतेचतुरोवेदागूढार्थाःसततंस्थिताः ॥ अतस्त्वेतानिसृष्टानिबोधायैषांमहामुने ॥ ६६ ॥ यस्तुकारयतेतत्रधर्मश्रवण
मुत्तमम् ॥ करोतियःसदाभक्त्यासयातिपरमंपदम् ॥ कृत्वातुदक्षिणांतत्रपरंब्रह्माधिगच्छति ॥ नाश्चर्यंपात्रदानाद्धिदानपात्रंहितत्परम् ॥ ६८ ॥
तीर्थानामिवकेदारंव्रतानांचमहाव्रतम् ॥ पर्वतानांयथामेरुःपक्षिणांगरुडोयथा ॥ ६९ ॥ गंगाचसर्वसरितांदेवश्रेष्ठोयथाशिवः ॥ पात्राणामपिसर्वेषां
वाचकोनात्रसंशयः ॥ ७० ॥ वाचकंपूजयेद्यस्तुनरोभक्तिपुरःसरः ॥ पूजितंसकलंतेनजगत्स्यान्नात्रसंशयः ॥ ७१ ॥ सनत्कुमारउवाच ॥ अहोतिध
न्यतातस्यधर्मश्रवणकारिणः ॥ दानंयद्ददतोत्यर्थंपुण्यतावाचकायवै ॥ ७२ ॥ ब्रह्मोवाच ॥ इत्थंदिनेदिनेयस्तुदेवदेवस्यमंदिरे ॥ कारयेद्धर्मश्रवणंसया
तिपरमंपदम् ॥ ७३ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांश्रवणमाहात्म्यकथनंनामत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ सनत्कुमारउवाच ॥ शास्तानि
घोरदानानिमहादानानिनित्यशः ॥ पात्रेभ्यस्तुप्रदेयानिआत्मानंतारयंतिते ॥ १ ॥ हिरण्यदानंगोदानंपृथिवीदानमेवच ॥ गृह्णंतौतौपवित्राणितारयं
तिस्वमेवतम् ॥ २ ॥ एतानिश्रेष्ठदानानिसर्वपापैःप्रमुच्यते ॥ तुल्यदानानिशस्तानिगावःप्रथ्वीसरस्वती ॥ ३ ॥ द्वेतुतुल्यबलेशस्तेह्यधिकाचस
रस्वती ॥ नित्यमनडुहोगावच्छत्रंवस्त्रमुपानहौ ॥ ४ ॥ देयानियाचमानेभ्यःपानमन्नंतथैवच ॥ संकल्पविहितोयोर्थोब्राह्मणेभ्यःप्रदीयते ॥ ५ ॥
अर्थिभ्यःपीडितेभ्योहिमनस्वीतेनजायते ॥ एषबुद्धिमतोयज्ञःश्रद्धापूतःसदक्षिणः ॥ ६ ॥ विशिष्टःसर्वयज्ञेभ्योददतोह्यनसूयया ॥ महाघोराणिवक्ष्या
मिब्राह्मण्यमुपहन्यते ॥ ७ ॥ पात्राणिशृणुकालेयत्त्याज्यान्यस्माद्विनापदम् ॥ मृतशय्याजिनंकृष्णंपापाद्धिक्रयमात्मनः ॥ ८ ॥ चांडालात्प
तितान्म्लेच्छात्तथाचोभयतोमुखी ॥ तुलायांरोहणंदानंकुरुक्षेत्रप्रतिग्रहः ॥ ९ ॥ तिलैरापूरणंकृष्णैर्दानान्येवपृथग्दश ॥ यस्त्वेकंप्रतिगृह्णातिब्राह्मणो
ज्ञानदुर्बलः ॥ १० ॥ सयातिनरकंघोरंपूर्वजन्मनितस्याहि ॥ दातापंकेयथाक्षिप्यपादमश्मनितत्तथा ॥ ११ ॥ सयातिपरमंलोकंयावदाभूतसंप्लवम् ॥
दातुःप्रतिगृहीतुश्चमयैतत्कथितंपुनः ॥ १२ ॥ प्रवक्ष्यामिगतिश्चैषांप्रलोभाहृतचेतसाम् ॥ संप्राप्यसुमहादानंयदीच्छेद्गतिमात्मनः ॥ १३ ॥ मनीषी
सकलंयच्चविप्रेभ्यःसंप्रच्छति ॥ कृत्वार्द्धेनतुकार्याणिवदान्यःकुरुतेसदा ॥ १४ ॥ एवंसन्विप्रमुख्योपिगतिंश्रेष्ठांप्रयातिहि ॥ कनकंचतिलानागाःक
न्यादासीगृहंरथः ॥ १५ ॥ मणयःकपिलाचैवमहादानानिवैदश ॥ गृहीत्वातानिसर्वाणिब्राह्मणोज्ञानवित्सदा ॥ १६ ॥ वदान्यंतारयेच्चैवआत्मानंचन

संशयः ॥ सुवर्णप्रथमंदानंसुवर्णंदक्षिणापरा ॥ १७ ॥ एतत्पवित्रंपरममेतत्स्वस्त्ययनंमहत् ॥ दशपूर्वान्दशपरानात्मानंचैकविंशकम् ॥ १८ ॥ अ
पिपापशतंकृत्वादत्वाविप्रेषुतारयेत् ॥ सुवर्णयेप्रयच्छंतिनराःशुद्धेनचेतसा ॥ १९ ॥ देवतास्तेप्रयच्छंतिसमंतादितिनःश्रुतम् ॥ तस्मात्सुवर्णंदत्वा
चदत्ताःस्युःसर्वदेवताः ॥ २० ॥ अग्निर्हिदेवताःसर्वाःसुवर्णंचहुताशनः ॥ वह्न्यभावेचकुर्वंतिवह्निस्थानंचकांचनम् ॥ २१ ॥ सर्ववेदप्रमाणज्ञावेदश्रु
तिनिदर्शनात् ॥ अपूतंयदवाच्यंचदुष्टंहिपूततांव्रजेत् ॥ २२ ॥ पितृदेवमनुष्याणामिष्टंतत्सर्वदामुने ॥ अद्भिःसंशुद्ध्यतेसर्वमापःशुद्धिंव्रजंतिहि ॥ २३ ॥
हेम्नातस्मात्सदाशुद्धंहाटकंवह्निसंभवम् ॥ यस्त्वेनंज्वालयित्वाग्निमादित्योदयनंप्रति ॥ २४ ॥ दद्याद्व्रतंसमुद्दिश्यसर्वान्कामानवाप्नुयात् ॥ स्वर्णदःसर्वदःप्रो
क्तःसर्वान्कामाँल्लभेद्दिवि ॥ २५ ॥ विमानेनार्कवर्णेनभास्वरेणविराजितः ॥ अप्सरोगणकीर्णेनगंधर्वगतिनादिना ॥ २६ ॥ हंसवाहनयुक्तेनकामगेनन
रोत्तमः ॥ दिव्यगंधवहःस्वर्गेपरियातियतस्ततः ॥ २७ ॥ तस्मात्स्वशक्त्यादातव्यंकांचनंमानवैर्भुवि ॥ नह्यतःपरमंलोकेसदापापविमोचनम् ॥
॥ २८ ॥ सुवर्णयेप्रयच्छंतिनराःशुद्धेनचेतसा ॥ बहून्यब्दसहस्राणिमोदंतेदिविदेववत् ॥ २९ ॥ व्यासउवाच ॥ बहुप्रकाराणिमयाश्रुतानिअहोत्वयो
क्तानितुयानितानि ॥ शुभानिसर्वाणिविशेषितानिप्रब्रूहिदानंत्वमतोधरायाः ॥ ३० ॥ यद्दीयतेदानमिहापिस्वल्पंस्वल्पेनदानेनधराधिपत्वम् ॥ ख्या
तंत्वयापूर्वतरैर्नराधिपैर्दानाधिपैःसर्वभुजोबभूवुः ॥ ३१ ॥ स्वल्पेनयेनापिमहीसमग्रासंप्राप्यतेब्रूहिसुखंपरेत्य ॥ तदेवदानंभगवंस्त्विदानींसंपत्करंसर्वम
थोनराणाम् ॥ ३२ ॥ सनत्कुमारउवाच ॥ सर्वाणिदानानिभवंतिदातुःसम्यक्प्रदत्तानिमुनेहिसम्यक् ॥ तत्तेप्रवक्ष्यामिकृतंहियेनदानोत्तमंतत्त्वधुना
शृणुष्व ॥ ३३ ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ राजाचित्ररथोनामपुरासीन्नृपसत्तमः ॥ ३४ ॥ बुभुजेसकलान्भोगान्सप्तद्वीपवतींमहीम् ॥
समारुह्यगतःसोपिसुरथस्त्रिदशालयम् ॥ ३५ ॥ तत्रजित्वासहस्राक्षंदेवैःसार्द्धंबलात्ततः ॥ शासनंकारयामासस्वकीयंतत्रतत्रह ॥ ३६ ॥ एवंपालयतः
सम्यक्त्रैलोक्यंसचराचरम् ॥ सुविस्मयमभूत्तत्रदृष्ट्वाराज्यंसुखंस्वकम् ॥ ३७ ॥ पुत्राणांषट्सहस्राणिकोशंचाक्षयमेवच ॥ जनानामनुरागंचप्रभूतवरवा
हनम् ॥ ३८ ॥ स्फीतिर्जनपदानांचनाकालमरणंतथा ॥ भार्यायाश्चैवसौभाग्यंरूपंचाप्रतिमंतथा ॥ ३९ ॥ एतत्संचिंतयित्वाथकथमप्यन्यजन्मनि ॥
पुनःस्यादिहसंप्राप्तिःपूर्वधर्मादहंमुनीन् ॥ ४० ॥ पृच्छामिसर्वधर्मज्ञान्करिष्येसकलंपुनः ॥ एवंसंचिंत्यराजासौवसिष्ठमिदमब्रवीत् ॥ ४१ ॥ त्वत्प्रसा
दान्मुनिश्रेष्ठराज्यमव्याहतंभुवि ॥ रूपंचाप्रतिमंलोकेभार्यामेस्तिसुशोभना ॥ ४२ ॥ शरीरारोग्यमैश्वर्यंदानशक्तिरनुत्तमा ॥ स्त्रियोन्नपानसामर्थ्यं
हानिःस्यान्नैवमेक्वचित् ॥ ४३ ॥ बलंनागसहस्रस्यधारयाम्यरिसूदनम् ॥ सुसंततिःसुभृत्याश्चसानुरागाश्चमेप्रजाः ॥ ४४ ॥ धर्महानिश्चमेनास्ति

शक्तिर्मेपालनेभुवः ॥ यद्यदिच्छाम्यहंकर्तुंतत्करोमिमहामुने॥४५॥सर्वंपूर्वंकृताद्धर्मादेवंप्राप्तंमयाखिलम्॥एतन्मेसर्वमाचक्ष्वपूर्वजन्मकृतंफलम् ॥४६॥
तच्छ्रुत्वावचनंतस्यवसिष्ठःप्राहतंनृपम् ॥ चिंतयित्वाचिरंकालंशृणुभूपान्यजन्मानि ॥४७॥ यत्कृतंतेप्रवक्ष्यामिकुयोनिमनुवर्तते ॥ अवंतीनगरीनामपृ
थिव्याजघनेस्थिता ॥ ४८ ॥ धर्मपालोनृपस्तत्रसर्वधर्मानुशासकः ॥ वर्णबाह्यस्त्वमप्यासीत्स्वधर्ममनुवर्तकः ॥ ४९ ॥ वसतस्तेत्वनावृष्टिरासीच्चबहु
वार्षिकी ॥ अन्नक्षयात्ततस्त्वंतुगत्वातुवनमाश्रयत् ॥ ५० ॥ तत्रतेवसतोलोकेबहवःसमुपाश्रयात् ॥ क्षुत्क्षामकर्षिताःसंतःफलमूलमहाशिनः ॥५१ ॥
निरन्नेचततोलोकेतस्मिन्फलविवर्जिते ॥ क्षुधार्तोभार्ययायुक्तःप्रागादंगारकारकः ॥ ५२ ॥ तस्मात्त्वंभार्ययायुक्तोदारुण्यादायसत्वरः ॥ प्राविशन्नग
रींसोपिविक्रेतुंतानिसर्वथा ॥ ५३ ॥ नजग्राहजनःकश्चिद्दंपत्योरटमानयोः ॥ ततःसायंक्षुधार्तौतौध्वनिंशुश्रुवतुस्तदा ॥ ५४ ॥ वणिङ्मुख्यस्यविप्राणां
जुह्वतांतद्गृहांगणे ॥ तौगत्वातत्रकाष्ठानिज्वालयामासतुस्तदा ॥५५॥ प्रतापार्थंतुमाघस्यपूर्णिमायांसमागमे ॥ राह्वब्जयोर्महाभागतत्रतावूषतुस्तदा
॥ ५६ ॥ पलानांशतमेकस्यसमुपोष्यजनार्दनम् ॥ अर्चयित्वाविधानेनवणिक्सोपिकृतादरः ॥ ५७ ॥ पृथिवींसमर्पयामासहैमींविप्रेभ्यएवहि ॥
साब्धिद्वीपवतींराजन्भक्त्यापरमयायुतः ॥ ५८ ॥ सादृष्टादीयमानावैयुवयोःक्लिश्यमानयोः ॥ तंदृष्ट्वादुःखसंततौनकृतंपुण्यमावयोः ॥ ५९ ॥ येनेदृ
शोभविष्यावोधरंतौमनसात्विति ॥ दंपत्योर्युवयोराजंस्तेनेयंवृद्धिरुत्तमा ॥ ६० ॥ प्राप्ताधर्मफलाद्राज्यंतस्मात्त्वंदेहिसांप्रतम् ॥ येनत्वमक्षयाँल्लोका
न्प्राप्नोषिदेवदुर्लभान् ॥ ६१ ॥ एतत्तेकथितंसम्यग्यथावृत्तमभूत्पुरा ॥ तस्मात्त्वंदेहिराजेंद्रपृथिवींसर्वकामदाम् ॥ ६२ ॥ येनाच्युतिंसमाप्नोतिस्वर्गा
न्नृपतिसत्तम ॥ दीयमानांप्रपश्यंतिपृथ्वींरुक्मस्यभाक्तितः ॥ ६३ ॥ सर्वपापविनिर्मुक्तास्तेयांतिपरमांगतिम् ॥ शृणुभूपालभद्रंतेमनसायेधराप्रदाः
॥ ६४ ॥ साब्धिद्वीपवतींदृष्ट्वातेषांवाक्यंतथातथा ॥ चक्रवर्तीमहावीर्यःपृथूराजाधिपोभवत् ॥६५॥ बुभुजेपार्थिवंक्षेत्रंसदेवासुररक्षसाम् ॥ गायंतिमुन
योयस्यकीर्तिंयस्यतुभूतले ॥ ६६ ॥ स्वर्गेचदेवगंधर्वाःपिशाचोरगराक्षसाः ॥ तद्दत्तंचोपजीवंतितथान्येभूभृतोपिच ॥ ६७ ॥ यावत्सूर्यउदेतिस्मयाव
च्चप्रातितिष्ठाति ॥ सर्वंचैवपृथोःक्षेत्रंत्रैलोक्यांतप्रवर्त्तकम् ॥६८॥ सर्वरत्नसमायुक्तंसप्तद्वीपवतींमहीम् ॥ शशासधर्मेणपुनर्नाधर्मोदृश्यतेकुतः ॥६९॥ ना
न्यायकृन्नवाशुद्धोनस्तेनोमूषकादयः ॥ धनुष्कोट्याकृतायेनानिराद्रिःपृथिवीपुरा ॥ ७० ॥ तस्यैतदभिमानंचवीर्यंचपृथिवीपतेः ॥ रूपंदृष्ट्वाशुभापत्नी
तस्याभूच्चातिविस्मया ॥ ७१ ॥ ततःसाचिंतयामाससमृद्धयाविस्मितासती ॥ कथंस्यात्संपदेषामेकिंपुनरन्यजन्मानि ॥ ७२ ॥
एवंसाबहुधाचिंत्यपृथुंचैवसमानुदत् ॥ अनिश्चयपरोराजावैन्यस्तुविस्मयान्वितः ॥ ७३ ॥ ततःपप्रच्छसर्वज्ञान्ब्राह्मणानादिभूमिपः ॥

प्रणिपत्यमहाराजोवचनंचेदमब्रवीत् ॥ ७४ ॥ यदिसानुग्रहाबुद्धिर्भवतांमुनिसत्तमाः ॥ तदहंप्रष्टुमिच्छामिकिंचित्तद्वक्तुमर्हथ ॥ ७५ ॥ यथावने
मयादृष्टाभवंतःसुप्रसादिताः ॥ वक्तुमर्हथसर्वज्ञाःसर्वेसर्वोपकारिणः ॥ ७६ ॥ मुनयऊचुः ॥ यस्तेमनसिसंदेहोयश्चसांशयिकोभुवि ॥ गदिष्यामो
यथान्यायंतंपृच्छाद्यमहीपते ॥ ७७ ॥ वयंहिनृपशार्दूलभवतापरितोषिताः ॥ सम्यक्प्रजाःपालयतासर्वद्वीपेषुपार्थिव ॥ ७८ ॥ संतुष्टोब्राह्मणो
श्रीयाच्छिंद्याद्वाधर्मसंशयम् ॥ हितंचोपदिशेद्धर्ममहिताद्वानिवर्तयेत् ॥ ७९ ॥ इत्युक्तेप्राहतान्विप्रानादिराजापृथुस्तदा ॥ कथयंतुयथावृत्तंकिंमया
सुकृतंकृतम् ॥ ८० ॥ कोहमासंपुराविप्राःकिंकर्मचमयाकृतम् ॥ किंचानयासुचार्वंग्याममपत्न्याकृतंपुनः ॥ ८१ ॥ येनावयोरियंस्फीतिःसुसं
भूतासुदुर्लभा ॥ चत्वारश्चाप्रतिहतागतयोममपृच्छतः ॥ ८२ ॥ अशेषाभूभृतोवश्याःकोशस्यांतोनविद्यते ॥ बलंचाप्रतिमंमेस्तिशरीरारो
ग्यमुत्तमम् ॥ ८३ ॥ सुरोपिवपुषातेजोनकश्चित्सहतेऽधुना ॥ सोहमिच्छामितंज्ञातुंयथाचेयमनिंदिता ॥ ८४ ॥ अतिभातिचमेकांत्याभार्येयम
तिशोभना ॥ पुरानौकिंकृतंकर्मयस्याशेषमिदंफलम् ॥ ८५ ॥ इतिपृष्टानरेंद्रेणसमस्तास्तेतपोधनाः ॥ मरीचिंप्रेरयामासुःकथ्यतामितिभूपतेः ॥
॥ ८६ ॥ इत्युक्तःसोपिधर्मज्ञःप्रजापतिसुतस्ततः ॥ योगमास्थायसुचिरंयथावद्दृषिसत्तमः ॥ ८७ ॥ ज्ञातवानादिराजस्यसर्वंपूर्वविचेष्टितम् ॥ सतमाह
ततोभूपंचिंतितार्थोयतव्रतः ॥ ८८ ॥ मरीचिरुवाच ॥ शृणुभूपालयस्येदंसकलंकर्मणःफलम् ॥ भार्ययासहितंप्राप्तमतएकमनाभव ॥ ८९ ॥ बभूवत्वं
पुराशूद्रःपरहिंसापरायणः ॥ पुरेयंभवतोभार्यापतिव्रतपरायणा ॥ ९० ॥ त्वच्चित्तानुगतानित्यंतवशुश्रूषणेरता ॥ निःस्वोभूत्वापरिक्षीणःपरेषांभृत्य
तांगतः ॥ ९१ ॥ त्यज्यमानापिसासाध्वीनोत्यजेत्त्वामनिंदिता ॥ अनयाचसमंसाध्व्याविष्णोरायतनेत्वया ॥ ९२ ॥ नीताहेममयीपृथ्वीधनिनोवृष
लस्यतु ॥ अयोध्यायांमहाराजकस्यभक्त्यानयासह ॥ ९३ ॥ परिचर्याकृतादातुर्मनसापुण्यकांक्षिणा ॥ संमार्जनादिकंसर्वंकृतंतेभक्तितोनृप ॥९४॥
निःशेषमुपशांतंतत्पापंशुश्रूषणादनु ॥ सर्वकामप्रदंकर्मरुक्मधेन्वाःकृतंत्वया ॥ ९५ ॥ तेनेदमखिलंराज्यमशेषाजगतीतव ॥ एवंनरेंद्रशूद्रत्वात्तस्य
कर्मपरायणः ॥९६॥ तन्मयत्वेनसंप्राप्तंमहीमानमनुत्तमम् ॥ किंपुनर्योनरोभक्त्यापृथ्वींहैमींप्रयच्छति ॥ ९७ ॥ शतंपूर्वापरंचापिकुलानांतारयेन्नृप ॥
यावच्चंद्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनी ॥९८॥नस्वर्गाच्च्यवतेतावद्विमुक्तःसर्वपातकैः ॥ धर्मार्थकाममोक्षंचयदिच्छेत्ततदाप्नुयात् ॥९९॥ इत्येतत्कथितं
राजन्सर्वभूमिप्रदोभव ॥ यदिच्छेन्मनसासर्वंतत्तदाप्नोत्यसंशयम्॥१००॥द्विजंहित्वापियोदद्यान्मुच्यतेसर्वपातकैः ॥ इत्येतत्कथितंराजन्पृथिवीदानमु
त्तमम्॥१०१॥मनसाचिंतयेद्यस्तुसस्वर्गमधिगच्छति॥इदंयःशृणुयान्नित्यंपठेच्चैवेहभक्तितः॥१०२॥ विमुक्तःसर्वपापेभ्यःस्वर्गलोकंचगच्छति ॥१०३॥
इतिश्रीशिवमहापुराणेधर्मसंहितायांचतुर्विंशोऽध्यायः ॥ २४ ॥ व्यासउवाच ॥ एवंश्रुत्वासराजातुपृथुर्वैन्यःप्रतापवान् ॥ यादृशींकारयामासयत्प्रमाणां

यदुद्भवाम् ॥१॥ यस्मिन्कालेददत्सोपितद्ब्रूहित्वमशेषतः ॥ सनत्कुमारउवाच ॥ कुर्यात्स्वशक्तितोव्यासउत्तमाधममध्यमाः॥२॥संतीहमानवालोकेश
त्त्यादातुर्लभंतिते ॥ लक्षेणतुसुवर्णेनसहस्रेणशतेनतु॥३॥पंचाशतावानिःस्वोपिसुवर्णेनतुकारयेत् ॥ एकहस्तांद्विहस्तांवात्रिहस्तांवापिकामतः ॥४॥
हेमाभावेसुताम्रस्यकृत्वाहैमंतुनिःक्षिपेत् ॥ एतन्मात्रेषुशैलेषुसर्वतःप्रकिरेद्वसु ॥५॥ रत्नाभावादणुष्वेवहैमंतेषुविनिक्षिपेत् ॥ तन्मध्येचोत्थितोमेरुर्मंदरं
तस्यपूर्वतः ॥६॥ गंधमादनसंज्ञंतुमेरोश्चैवतुदक्षिणे ॥ नीलंतुपश्चिमेभागेविपुलश्चोत्तरेततः॥७॥ मेरूर्ध्वेंबहुरत्नानिन्यस्तावैडूर्यमंदिरे॥ दक्षिणेविद्रुमंचैवम
हानीलंतुपश्चिमे ॥ ८ ॥ मूर्ध्निसंविन्यसेत्तत्रपद्मरागंतथोत्तरे ॥ तदभावाद्धिरण्यंतुमौक्तिकादिततःपरम् ॥९॥ कदंबजंबुकाश्वत्थश्रीपर्णीपल्लवंक्रमात् ॥
नागवल्ल्यास्तथाभावात्सम्यक्पत्राणिविन्यसेत् ॥ १० ॥ लवणस्यसमुद्रंतुतद्बाह्येपरिकल्पयेत् ॥ लवणेनपवित्रेणबाह्यंतत्परिपूरयेत् ॥ ११ ॥ तद्बा
ह्येप्लक्षद्वीपंतुअब्धिरिक्षुरसस्यवै ॥ तेनापूर्यततोद्वीपःशाल्मलिश्चापरोमुने ॥ १२ ॥ सर्पिषस्तुसमुद्रंवैपूरयेत्सर्पिषाचतम् ॥ कुशद्वीपात्परोदध्नस्तेनैवा
पूरयेत्ततः ॥ १३ ॥ क्रौंचात्परस्तुदुग्धेनशाकद्वीपमतःपरम् ॥ तस्मात्तंमधुनापूर्यतदंतेपुष्करंस्थितम् ॥ १४ ॥ तस्मात्तदंबुनापूर्यपुष्करैरुपशोभि
तम् ॥ एवंकृत्वाधरांसर्वांवेदिकायांनिधापयेत् ॥ १५ ॥ संक्षेपात्कथितंव्यासपृथिव्यादानमुत्तमम् ॥ नास्यावर्षायुतेनापिवक्तुंशक्योतिविस्तरः
॥ १६ ॥ हस्तमात्रंखनेत्कुंडंहोमंतत्रैवकारयेत् ॥ यवसिद्धार्थकैर्युक्तैस्तिलैर्व्याहृतिभिस्तथा ॥ १७ ॥ दिक्पालैस्तुग्रहैश्चैवस्वैःस्वैर्मंत्रैःसवैदिकैः ॥
विष्णोस्तुत्रितयंहुत्वाआपोदेवेत्यनुक्रमात् ॥ १८ ॥ वसोःपवित्रंत्रितयंहुत्वाग्नावाहुतीस्ततः ॥ पृथिवीतिपुनर्हुत्वापूजयेत्तत्रकेशवम् ॥ १९ ॥ मंत्रैरे
भिर्धरांतद्वन्मंत्रेणानेनवैमुने॥२०॥ धराधराधारधरावलाग्र्यसर्वाश्रयस्त्वंहिपुमानशेषः ॥ देवैःसुपूज्योसिसुपूजितोमेसंपूज्यमानोभिमतंददस्व ॥ २१ ॥
सृष्टात्वयेयंपृथिवीधृतापुनर्दातात्वमस्याःप्रतिसंग्रहीता ॥ तुभ्यंमयाहेममयीनिवेदितागृह्णीष्वकामाभिमतंददस्व ॥ २२ ॥ एवंपूज्यविधानेनवस्त्रै
राभरणैस्तथा ॥ ब्राह्मणान्वाचयित्वाग्रेप्रीयतांधरणीधरः ॥ २३ ॥ एवंदत्वाद्विजेभ्यस्तांशृणुकालेचयत्फलम् ॥ कुलानांशतमागामिसम
तीतंतथाशतम् ॥ २४ ॥ तारयित्वादिवंयातियावदिंद्राश्चतुर्दश ॥ ततोसावेकच्छत्रंतुराज्यंप्राप्नोतिभूतले ॥ २५ ॥ तत्रस्थस्यैवसाबु
द्धिर्वर्ततेधर्मएवहि ॥ क्रमान्मोक्षमवाप्नोतिदानादस्याःप्रभावतः ॥ २६ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांपंचविंशोऽध्यायः ॥ २५ ॥
व्यासउवाच ॥ ब्रह्महत्यागुरोरस्तिकिंनश्यतितपोविना ॥ संशयःसर्वतत्वज्ञोदानात्त्वंब्रूहिपृच्छतः ॥ १ ॥ यत्तदुक्तंपुरातेनतद्दानंब्रूह्यशेषतः ॥ येनदा

नेनसद्योनापापाद्भवत्याकिल्बिषी ॥ २ ॥ सनत्कुमारउवाच ॥ यत्साधयेन्निजंदेहंकृत्वापापान्यशेषतः ॥ मुच्यतेतद्धिकालेनएतत्तेकथितंस्फुटम् ॥ ३ ॥
जीवंहिदैहिकाःप्राणामध्येबाह्येसदावसु ॥ देहसंपीडयाताभ्यांनरःपापात्प्रमुच्यते ॥ ४ ॥ तस्मात्पृच्छऋषिश्रेष्ठसांप्रतंकथयामिते ॥ व्यासउवाच ॥ अ
स्मिन्कलियुगेमर्त्याःसदाचारविवर्जिताः ॥५॥ बहुपापरतामूढाभविष्यंतिमहामने ॥ रौरवादिषुघोराणांयातनाःक्लिश्युश्रम ॥६॥ कांतारंगहनंतत्रत
दर्थंब्रूहिमेद्विज ॥यथानपश्येत्कांतारंसुदुष्पारंसुदुर्गमम्॥७॥दानेनतपसावापिनरस्तन्मेवदप्रभो ॥ सनत्कुमारउवाच ॥ शृणुराजन्महागुह्यंमहापातकना
शनम् ॥ ८ ॥ कांतारंयेनपश्यंतितथावक्ष्यामिसुव्रत ॥ कार्तिकस्यासितेपक्षेचतुर्दश्यांसमाहितः ॥ ९ ॥ गंधपुष्पैःसुनैवेद्यैरर्चयेदच्युतंबुधः ॥ तिलप्र
स्थमयंकृत्वानागंसर्वगुणान्वितम् ॥ १० ॥ धेनुंवत्संसुवर्णंतुसुदीपैःसर्वताश्रितम् ॥ मुक्ताफलेक्षणंरौप्यदशनंविद्रुमच्छदम्॥११॥सुवर्णतिलकोपेतंकर्ण
चामरभूषितम् ॥ कांस्यघंटायुगयुतंक्षौमकक्षाविभूषितम् ॥ १२ ॥ मौक्तिकापूर्णकुंभंतुसिंदूरावृतमस्तकम् ॥ विचित्रवस्त्रसंवीतंमुक्तामालाविराजितम्
॥ १३ ॥ पादुकोपानहच्छत्रंभाजनासनदर्पणम् ॥ शक्त्याकुर्यात्सुवर्णेनवित्तशाठ्यविवर्जितः ॥ १४ ॥ तस्याग्रेष्टदलंपद्मंसंलिखेत्कुंकुमाकृतैः ॥ आ
पूर्याच्युतमीशानमर्चयेत्कार्णिकापदे ॥ १५ ॥ धातारंविश्वकर्तारंपूर्वपत्रेतुवासवम् ॥ नमोस्तुदेवपतयेपर्जन्यायमरुत्वते ॥ १६ ॥ नमोग्नयेहुताशाय
हव्यवाहायवह्नये ॥ नमःपितॄणांपतयेधर्मायानंददायिने ॥ १७॥ नमोनिर्ऋतिनाथायधर्मायनिरयात्मने ॥ नमोपांपतयेतुभ्यंभवभीतार्तिहारिणे॥१८॥
नमस्तेपृषदश्वायवायवेजगदायुषे ॥ नमोरिक्थाधिपतयेस्मेरस्मयमदायते ॥१९॥ नमस्तेपशुनाथायशिवायेशायतेनमः ॥ कांतारपतयेधात्रेब्रह्मरुद्रा
यविष्णवे ॥ २०॥ विश्वरूपायदेवायशर्मदायनमोनमः ॥ एवंकल्पविधानेनतत्रकांतारदेवताः ॥२१॥ देवदेवंततोभ्यर्च्यविष्णुंविश्वपतिंपुनः ॥ इममुच्चा
रयेन्मंत्रंकृतांजलिपुटःसुधीः ॥ २२ ॥ कांतारमध्वनोमार्गमिभेनानेनकेशवः ॥ सुखंव्रजामितंदुर्गंतथात्वंकुरुमेप्रभो ॥ २३ ॥ यथाभद्रघटोनित्यंकामधे
नुर्महाद्रुमः ॥ चिंतामणिस्तथादंतीसदाभवतुमेविभो ॥ २४ ॥ एवमुच्चार्यतंदद्याद्ब्राह्मणायस्वशक्तितः ॥ सरत्नंसहिरण्यंचसर्वाभरणभूषितम् ॥ २५ ॥
ततोनक्तंसमश्नीयाद्दीपंदद्यात्तथागजे ॥ पार्थिवेराजशार्दूलकार्तिक्यांवाप्रदापयेत् ॥२६॥ एवंयःकुरुतेसम्यग्विधानेनैवशक्तितः ॥ यममार्गभयंघोरंनरकं
चनपश्यति ॥२७॥हत्वापापान्यशेषाणिसबंधुःससुहृज्जनः ॥ दिविसंक्रीडतेव्यासयावदिंद्राश्चतुर्दश ॥ २८ ॥ कपिलानांशतेदत्तेयत्फलंज्येष्ठपुष्करे ॥
कांतारस्यप्रदानेनसमंस्यान्मुनिसत्तम ॥ २९ ॥ यच्चोभयमुखीनांचशतेनलभतेफलम् ॥ कांतारस्यप्रदानेनतत्फलंनात्रसंशयः॥३०॥ संनिहत्यांनरश्रे
ष्ठराहुग्रस्तेदिवाकरे॥धरादानान्नतत्पुण्यंकांतारेणयदश्नुते ॥३१॥ कृष्णाजिनेनयत्पुण्यंभूयःशतगुणेनच॥पुण्यंतत्सकलंलभ्यंमुनेकांतारहस्तिना॥३२॥

गजाश्वरथधेनूनांयत्फलंहिनिगद्यते ॥ तत्फलंसकलंविद्यात्कांतारेणमहामुने ॥ ३३ ॥ तिलाज्यजलधेनूनांयत्पूर्वोक्तंफलंलभेत् ॥ तन्मूर्तितन्मयींद
त्त्वापुण्यंशतगुणंलभेत् ॥ ३४ ॥ एवंज्ञात्वामुनिश्रेष्ठश्रेष्ठंकांतारकारणम् ॥ दद्यादनेनमंत्रेणसंपूज्यगजपुंगवम् ॥ ३५ ॥ नमःकांताररूपायपरमेशाय
शंभवे ॥ नमोष्टदिगिभेशायनमोरूपायविप्लवे ॥ ३६ ॥ अनेनतिलकांतारदंतिदानेनदैत्यहा ॥ प्रीयतांपुंडरीकाक्षःप्रभुःकांतारतारकः ॥ ३७ ॥ एव
मुच्चार्यतंदद्याद्ब्राह्मणायकुटुंबिने ॥ एतत्पापहरंपुण्यंसुखस्वर्गकरंपरम् ॥ ३८ ॥ पठतांशृण्वतांचापियस्तुभावयतेसदा ॥ करिष्यामीत्यहंभक्त्यास्वर्ग
लोकंसगच्छति ॥ ३९ ॥ इतिश्रीशिवपु०धर्मसंहितायांषड्विंशोऽध्यायः ॥ २६ ॥ ॥ छ ॥ ॥ व्यासउवाच ॥ पूर्वोक्तेतेदिनैकेनपूजितःसमहेश्वरः ॥
फलंददातिविपुलमेतत्सर्वंमहामुने ॥ १ ॥ गुरूणांनभवेत्कुत्रवचनंमुखनिःसृतम् ॥ विफलंवदतस्मात्त्वमीश्वराद्ददतांवर ॥ २ ॥ सनत्कुमारउवाच ॥
नासत्यमेतदुक्तंमेशृणुवाक्यंमहामुने ॥ नियमेनार्चितःशंभुर्दिनैकेनप्रसीदति ॥ ३ ॥ क्रीडादिनैर्चितस्तस्यसर्वान्कामान्प्रयच्छति ॥ वृथाश्रमोहिबहु
भिःक्लेशैर्नैवाश्नुतेफलम् ॥ ४ ॥ यथाचरत्नविक्रेतुःसुसूक्ष्मादश्नुतेमुने ॥ व्यासउवाच ॥ कथयस्वसमासेनतद्वृत्तंमेमहामुने ॥ ५ ॥ लोकानांहितकामेन
कृतंयेनेहतद्वद ॥ सनत्कुमारउवाच ॥ आसीत्पूर्वयुगेराजाजंबूद्वीपेसुधार्मिकः ॥ ६ ॥ शतमक्षौहिणीनांचआधिपत्यंचकारसः ॥ सराजास्त्रविदांश्रेष्ठोवे
दशास्त्रार्थपारगः ॥ ७ ॥ धर्मिष्ठःसत्यवाक्छूरोदाताभोक्तातिथिप्रियः ॥ नित्यदाताद्विजेभ्योसौहेमवस्त्रादिशोभनम् ॥ ८ ॥ यदिष्टमानोनित्यंतच्छ्रत्तच्छ्र
द्धासमन्वितम् ॥ ददात्यनुदिनंव्यासतेषामर्थंस्त्रियादिकम् ॥ ९ ॥ एवंराज्यंशुभंकृत्वादीर्घकालंमहीपतिः ॥ शतानीकस्ततोनाम्नासहस्रानीकमेवच ॥
॥ १० ॥ सुतंजज्ञेततःकालात्क्षितीशोसौमृतस्तुसः ॥ कुलक्रमागतंराज्यंचक्रेसौनृपसत्तमः ॥ ११ ॥ न्यायतोधर्मतश्चैवराज्येशास्तिवसुंधराम् ॥ कां
त्या चंद्रमसश्चैवप्रतापादित्यसंनिभः ॥ १२ ॥ शत्रुष्वेवंसदापातिपृथिवींन्यायतोपिसः ॥ ब्राह्मणेभ्योददातीशोयथातस्यपितानसः ॥ १३ ॥ अथदी
र्घेणकालेनब्राह्मणास्तेयतव्रताः ॥ प्रतिग्रहमलप्संतःसमाजग्मुस्तदंतिकम् ॥ १४ ॥ तानागतान्ससंप्रेक्ष्यपूजांचक्रेयथाविधि ॥ पूजितास्तेसुसंहृष्टाः
प्रोचुर्नृपतिसत्तमम् ॥ १५ ॥ द्विजाऊचुः ॥ शृणुराजन्प्रवक्ष्यामएकचित्तःसमाहितः ॥ पित्रातेपूजितानित्यंदानाच्छादनभोजनैः ॥ १६ ॥ येकेचिद्ब्राह्म
णाःसंतियथाकामंयथासुखम् ॥ संवर्धिताःस्वकेधाम्निसमबुद्धिरयंनृपः ॥ १७ ॥ सांप्रतंतवराज्येतुसंप्रेक्ष्यचगताद्विजाः ॥ वसामोत्रपरिखिन्नानृपतेसकुटुं
बिनः ॥ १८ ॥ इतःकिंकुर्मएवंहियास्यामःकुत्रपीडिताः ॥ दरिद्रेणैवनोबुद्धिर्यथाशृणुनृपोत्तम ॥ १९ ॥ एतच्छ्रुत्वासतान्विप्रान्प्रोवाचप्रहसन्निव ॥ राजोवाच ॥
सत्यमेतद्द्विजेभ्योपिदत्तंदानंमहाफलम् ॥ २० ॥ परत्रन्यायतोविप्राःकिंचिद्वक्ष्यामिकारणम् ॥ दानात्स्वर्गमवाप्नोतिइहायातःसुखीभवेत् ॥ २१ ॥ पिताम

माद्विजश्रेष्ठाःकथंस्वर्गेवसत्यसौ ॥ ज्ञात्वैवैतत्समासेनकथयस्वयथातथम् ॥ २२ ॥ एतच्छ्रुत्वाततोविप्रावज्रपातोपमंवचः ॥ समुत्तस्थुःसमाज्ञाप्यराजा
नंदीनमानसाः ॥ २३ ॥ समवायीकृतास्तेतुतथान्योन्यमभाषत ॥ राजापंचत्वमापन्नःक्वासौतिष्ठातिधार्मिकः ॥ २४ ॥ वयंकथंनजानीमःसंशयंपरमं
गताः ॥ एवंविब्रुवतांतेषांदिनानिसुबहूनिच ॥ २५ ॥ गतानिजुह्वतांव्यासरविर्व्याकुलतांगतः ॥ राज्ञांधर्मवतांचापिप्रजाःपालयतांसताम् ॥ २६ ॥
नवर्षंजायतेतस्मात्सुभिक्षंक्षेममेवहि ॥ अग्नौप्रास्ताहुतिःसम्यगादित्यायोपगच्छति ॥ २७ ॥ आदित्याज्जायतेवृष्टिर्वृष्टेरन्नसमुद्भवः ॥ अन्नात्संजायतेस
र्वंजगत्तृप्तिस्तुसर्वदा ॥ २८ ॥ एवंसंचिंत्यभगवानाजगामततोरविः ॥ हितायतेषांसंदेष्टुंद्विजोभूत्वातुतान्ब्रवीत् ॥ २९॥ किंविषण्णाद्विजायूयमिहेप्सं
तःस्वकर्मतत् ॥ नैत्यकंपंचयज्ञोत्थमनंतफलदायकम् ॥ ३० ॥ नैत्यकंकर्मकुर्वाणोयोन्यत्फलंसमीहते ॥ तत्तत्संप्रेत्यददतस्तत्त्यक्त्वान्यन्नतद्भवेत्
॥ ३१ ॥ बहूनिशुभतीर्थानिफलदानीहसर्वतः ॥ श्रूयंतेनफलंदातुंस्वकर्मफलघातिनः ॥३२॥ पंचयज्ञफलंनित्यंचतुराश्रमवासिनाम् ॥ भुक्तिमुक्तिकरं
विप्रास्तस्मात्तन्नपरित्यजेत् ॥ ३३ ॥ कुर्वन्नित्यंतुनैमित्तंकामिकंचसमाश्रयेत् ॥ नित्यकारीतुनैमित्ताल्लभेत्पुण्यंशतोत्तरम् ॥ ३४ ॥ सहस्रगुणितंका
म्यात्तथाप्नोतिपुमान्सदा ॥ प्रतिग्रहविहीनंतुसदाजप्यपरोद्विजः ॥३५॥ यस्तंमृतंसमाख्यास्येत्तत्पुरादागतोनृपम् ॥ एतच्छ्रुत्वाव्रतंतस्यप्रणिपत्यचतं
द्विजाः ॥३६॥ ततस्तेन्वेषयामासुर्हर्षाद्गत्वाचतुर्दिशम् ॥ तथाविधंनपश्यंतःपत्तनेषुपुरेषुच ॥३७॥ गत्वापश्यंस्तपस्यंतंभार्गवंद्विजसत्तमम् ॥ ऊर्ध्वं
बाहुंनिरालंबंपादेनैकेनसंस्थितम् ॥ ३८ ॥ तंदृष्ट्वाप्रणिपत्याशुपरिवार्यद्विजोत्तमम् ॥ प्रत्यग्विसंस्थितेसूर्येततोसौद्विजसत्तमः ॥ ३९ ॥ जप्यंत्यक्त्वासु
सन्तर्प्यदेवान्पितृगणांस्तथा ॥ नैत्यकंकर्मकृत्वापिसमुत्तस्थौसतान्द्विजान्॥४०॥उपविष्टान्समद्राक्षीत्कृतांजलिःसपूर्ववत्॥पूजयामासतान्सर्वान्पाद्या
द्यैर्विधिपूर्वकम् ॥४१॥ पर्यपृच्छद्यथान्यायंफलमूलैःसुतर्पितान्॥ततस्तेसर्वमाचख्यूराज्ञोदुर्वृत्तमात्मनः ॥४२॥ तथाद्दृष्टस्यविप्रस्ययद्वाक्यंतन्निशम्य
सः॥मनसाचिंतयासाकिंकृतंसुकृतंभवेत् ॥४३॥ त्यजेदहंतपःकिंवाप्यथवार्तिंविनाशयेत्॥तपसोऽधिकमेवासौधर्मोदुःखविनाशनः॥४४॥प्राणिनांभयभी
तानामभयंयत्प्रदीयते ॥ सर्वसत्वेषुयद्दानमेकभूतेतुयादया ॥४५॥ सर्वसत्वप्रदानाच्चदयैकात्राविशिष्यते॥एवंसंचिंत्यविप्रोसौद्विजैःसार्द्धंजगामह॥४६॥
तंदृष्ट्वासहसासूर्योदक्षिणांदिशमाव्रजत् ॥ सद्विजःपृष्ठलग्नोभूत्तस्यवैतपसोबलात् ॥ ४७ ॥ अष्टाशीतिसहस्राणियोजनानांप्रमाणतः ॥ यममार्गस्यचा
ध्वानमाचक्रामदिवाकरः ॥४८॥ नजलंनचतत्रान्नंवृक्षच्छायासुखंनहि ॥ शीतंवातांधकारंतुदुःसहंदेवदानवैः ॥ ४९ ॥ नरकाणितदग्रेतुदुःसहानिक्रमे
णतु ॥ अष्टाविंशतिकोटयस्तुमध्येतासांययौरविः॥ ५० ॥ पश्यन्त्सब्राह्मणस्तांतुयातनांपापकर्मिणाम् ॥ यथोदरेदह्यमानेलोभ्यमानेचशत्रुभिः॥५१॥

एकैकंनिरयंतद्वच्छ्रूयतेक्रंदतांरवः ॥ ततोसौप्रवरोविप्रोगच्छमानोमहापथम् ॥५२॥ विवृत्तोब्राह्मणैकेनतदालकुटपाणिना ॥ भोभोद्विजकयास्यग्याम
दत्वाममदक्षिणाम् ॥ ५३ ॥ यादत्तातेपुरामह्यंकस्मिन्कालेतुतांस्मर ॥ इत्युक्तःसतुतांस्मृत्वाप्रत्युवाचद्विजंप्रति ॥ ५४ ॥ उक्तंमयापुराणैकंतुभ्यंते
नास्मियाचितः ॥ गृहंगत्वाप्रदास्यामितिरोभवममाग्रतः ॥ ५५ ॥ तमाहासौद्विजोभूयोनेहायंतत्राविद्यते ॥ मर्त्यैतुव्यवहारोपिनतेयत्त्वंददामिते॥५६॥
तच्छुत्वातंद्विजंप्राहनास्तिकिंचिदिहैवमे ॥ तमाहासौद्विजस्तेऽस्तिसुकृतंयत्कृतंत्वया ॥ ५७ ॥ तत्तेबहुधनंत्वस्तितस्यार्द्धंसंप्रयच्छमे ॥ इत्युक्तोनददा
त्येनंधर्मार्द्धंतंदिवाकरः ॥ ५८ ॥ प्रोवाचसांत्वयित्वासौन्यायतःसंप्रदापयन् ॥ षडंगंचैवधर्मस्यततोविप्रोगतोययौ ॥ ५९ ॥ गच्छमानंतुतंभूयोगोपाल
स्तंतथाधरत् ॥ काकिण्यर्थेंतुगौस्तस्यरक्षितानतुयाचितः ॥६०॥ विप्रोसौलज्जयातस्माद्विस्मृतःकालपर्ययात् ॥ षड्भागंतेनधर्मस्यगृहीतंतस्यवैब
लात् ॥ ६१ ॥ तथैववसुधौतेनधर्मकारेणवापुनः ॥ वस्त्रकारपवित्रेणतस्यैववणिग्धर्मिणः ॥ ६२ ॥ गृहीतःसर्वधर्मोऽपिततोसौद्विजसत्तमः ॥ निस्तेजाश्चा
भवत्तस्माद्गंतुंचाग्रेनशक्तवान् ॥ ६३ ॥ ततोदिवाकरस्तंतुसंगृह्याशुकरेणवै ॥ प्रययौयत्रराजासौनिरयेसमवस्थितः ॥ ६४ ॥ तंदृष्ट्वापच्यमानंतुकुंभ
मध्यगतंनृपम्॥वह्निनासौद्विजश्रेष्ठोविस्मयंसमपद्यत ॥६५॥ किंचिन्मात्रंसमाश्वस्यशतानीकमुवाचह ॥भोभोराजन्प्रदत्तानिमहादानानिषोडश ॥६६॥
ब्राह्मणेभ्यस्त्वयापूर्वंरत्नंवस्त्राणिचैवाहि ॥ ग्रामांश्चविविधांश्चैवनगराणिपुराणिच॥६७॥ श्रूयंतेमुनिमुख्येभ्योवचांसितपसादिवम् ॥ प्राप्नुवंतिसुदानैस्तुन
राभक्त्योपपादितैः ॥ ६८ ॥ कस्येदंकर्मणःपापंयत्त्वंसंदह्यसेसदा ॥ सुगुप्तोयमदूतैस्तुयदिजानासितद्वचः ॥ ६९ ॥ तच्छुत्वाप्राहतंराजाशृणुविप्रयथा
तथम् ॥ राजोवाच ॥ मयादानानिदत्तानिब्राह्मणेभ्योयतस्ततः॥७०॥सुबहूनिप्रगृह्यापिपरेभ्योऽज्ञानचक्षुषा ॥ प्रजापीडनसंतापात्समुद्भूतोहुताशनः ॥
॥ ७१ ॥ तेनदह्याम्यहंविप्राःप्रेतसंस्थादिवानिशम् ॥ गत्वाशीघ्रमितोब्रह्मन्कथयस्वयथातथम् ॥७२॥ सुतस्यमेयदीहास्तिमुक्तिःपापात्सुदुःसहात् ॥
तत्कुरुष्वसुसंपर्कात्साधोर्नान्यागतिर्मम ॥ ७३ ॥ एतच्छुत्वावचोराज्ञःसविप्रश्चात्मकारणात् ॥ मानुषाणांहितार्थायपर्यपृच्छद्दिवाकरम् ॥ ७४ ॥
॥ विप्रउवाच ॥ साधूनांदर्शनंपुण्यंतीर्थभूताहिसाधवः ॥ कालेनफलतेतीर्थंसद्यःसाधुसमागमः ॥ ७५ ॥ नचैवाकृतपुण्यानांदेवेभक्तिःसुजायते ॥
विप्रेषुचविशेषेणतथासाधुतपस्विषु ॥ ७६ ॥ यदापापक्षयःपुंसांदानेध्यानेतदामतिः ॥ तस्माद्देवपरंदेवंमन्येहंत्वांनसंशयः ॥ ७७ ॥ यस्मात्तेनारकाः
सर्वेदर्शनात्सुखिनोभवन् ॥ ममतेसन्निधौविप्रनसुखंविद्यतेसतः ॥ ७८ ॥ किंचिद्धर्मविहीनस्यदेववत्संस्थितस्यवा ॥ तस्माद्ददस्वमेकिंचिद्धर्मंयद्य
स्तिभूतले ॥ ७९ ॥ येनपापंनिहत्याशुस्वर्गमाप्नोतिमानवः ॥ संसारेपतितोलोकःक्षेत्रदारगृहादिषु ॥८०॥ यथासंक्लिश्यतेतद्वद्यदिधर्मंनसेवते ॥ कि

नप्राप्नोतिसंमूढःस्वर्गमोक्षसुखानिच ॥ ८१ ॥ एतच्छ्रुत्वातुतस्यार्कोवचनंप्राहतंद्विजम् ॥ शृणुविप्रयथातथ्यंलोकानांहितकाम्यया ॥ ८२ ॥ पृष्टस्तेहं
कृतस्तेयोधर्मःसंवर्धयिष्यति ॥ धर्माख्यातुर्जनेभ्यस्तुयत्कर्तुःसफलंभवेत् ॥ ८३ ॥ ततःशुद्धासुजिह्वायास्तस्मादाप्नोत्यसंशयः ॥ तस्माद्धर्मप्रवक्त
व्यंलोकानांविहितंचयत् ॥ ८४ ॥ तत्तेवक्ष्यामिश्रुत्वेदंसर्वपापक्षयोभवेत् ॥ वत्सरस्यमुखंचैत्रंपवित्रंशंकरप्रियम् ॥ ८५ ॥ देवतानांप्रियंतत्रस्वर्गादा
यांतिसर्वदा ॥ क्रीडार्थंभुक्तिमादायसंविहृत्यपुनःपुनः ॥८६ ॥ सुसंतुष्टाःस्वकंधामवर्षेप्रतिव्रजंतिते ॥ गौर्यासहहरस्तस्मिन्वसतेक्रीडतेसदा ॥ ८७ ॥
बालरूपंसमास्थायसुकन्यारूपिभिर्गणैः ॥ चैत्रमासेतुयेमर्त्यादीपदानमहोत्सवम् ॥ ८८ ॥ कुर्वंतिसततंयद्वत्कार्तिकेवाहिधर्मिणः ॥ शिवायचान्यदेवे
भ्यःप्रेक्षणंचमहोत्सवम् ॥ ८९ ॥ तेषांधामतुयांत्येतेयेभवंत्यतिपापिनः ॥ तस्माच्चतुर्दशींकृष्णांशुक्लांवासमुपोष्यच ॥९०॥ दद्याद्धेनुंद्विजातिभ्यःशि
वायपरिकल्पिताम् ॥ एवंहत्वाचपापानियातिस्वर्गंनसंशयः ॥ ९१ ॥ एतच्छ्रुत्वाससूर्येणसहामात्यद्विजोत्तमान् ॥ समुत्थाप्ययथातथ्यंराज्ञेसर्वंन्यवेद
यत् ॥ ९२ ॥ ततःसराजातुसुसंप्रहृष्टःश्रुत्वावचस्तस्यद्विजोत्तमस्य ॥ निवेश्यतत्रैवतमेवपश्चाद्विहायसद्यःप्रययौविदेशम् ॥९३॥ सरःसहस्रैवनिखन्य
मानंदृष्ट्वातुमूल्येनचकारकर्म ॥ दिनेदिनेयावदभूत्सुवर्णंतथाचगोमूल्यमशेषदानम् ॥९४॥ ततःप्रहृष्टःप्रययौस्वदेशंसुरक्षितंमंत्रिवरैस्तथानृपैः ॥ द्विजो
पदिष्टंसचकारराजाव्रतंयथावच्चतदेवदानम् ॥९५॥ व्रतेकृतेतस्यपिताकुसंस्थोययौदिवंपूर्वपितामहेशैः ॥ आरुह्ययानंसुविमानमग्र्यंसंक्रीडमानःसहसा
प्सरोभिः ॥९६॥ इदंव्रतंयःकुरुतेसुसम्यगेकाह्निकंव्यासशिवप्रसादात् ॥ लभेद्दिवंपूर्वपितामहैःसहनिहत्यपापानिपुराकृतानि ॥ ९७ ॥ चतुर्दशींयः
समुपोष्ययत्नाद्धरंतुसंपूज्यतुपूर्णिमायाम् ॥ धेनुंप्रदद्याद्द्विजसत्तमायतस्याअभावात्सुघृतस्यपात्रम् ॥९८॥ सव्यंजनंवस्त्रयुतंसहान्नंदत्वाफलंयल्लभतेसुधे
नुम् ॥ निहत्यपापानिपुराकृतानिदिवंप्रयातीहनसंशयोत्र ॥ ९९ ॥ चिरंह्युषित्वासतुरुद्रलोकेराजाभवेदत्रसुधर्मशीलः ॥ एकांप्रकुर्यात्सुशुभां
वसंतेचतुर्दशींसत्ययुतःसमंहि ॥ १०० ॥ दत्वाभवेन्मंत्रविधानपूर्वंतुष्टिर्यथास्यादिहशंकरस्य ॥ मंत्राधिकोयोद्विजएवशुद्धःसक्षत्रियोवैश्यवरोपिशुद्धः
॥ १०१ ॥ पुष्टंसुसर्पंतुसुवर्णबाह्योदधातिमंत्रेणबलात्कृशोपि ॥ मंत्रात्मकाःसर्वइमेहिदेवाःसुयक्षरक्षःपितरोमनुष्याः ॥ १०२ ॥ तृप्तिंनरे
भ्यस्तुसदाप्नुवंतिदत्तंनगृह्णंतिहिमंत्रहीनाः ॥ तस्मात्त्वमेवंवदमंत्रपूर्वंपूजादिकंसर्वमुमापतेस्तु ॥ १०३ ॥ यथाप्रमुच्येत्सहिपातकेभ्यःस्वर्गंप्रयातः
समनुष्यधर्मा ॥ सनत्कुमारउवाच ॥ मंत्राणिचोक्तानिपुराव्रतेस्मिंस्तैरर्चनीयोभगवान्पिनाकी ॥४॥ कुर्वन्तुकृच्छ्रंहिचतुर्दिनानिचतुर्दशीव्यासउपोष
णीया ॥ ५ ॥ एकादश्यामेकभक्तंसकृत्पानीयमेवच ॥ अयाचितंतुद्वादश्यांसनक्ताचत्रयोदशी ॥१०६॥ चतुर्दशीनिराहाराकर्तव्याचमहाव्रते ॥ पौर्णि

मायांतुगोदानंफलंकृत्वातदश्नुते ॥१०७॥ यदित्वमात्मनःकिंचिद्वावोदद्या द्विजातये ॥ शिवःसंप्रीयतामेवमित्युक्काफलमश्नुते ॥८॥ व्रतस्यास्यसमग्रस्य
द्रव्याभावाच्छृणुष्वतत् ॥ पलैर्द्वादशभिःपात्रंशुल्वस्यतुतदर्धकम् ॥ ९ ॥ पलत्रयस्यवाकुर्यात्पलस्यैकमकिंचनः ॥ घृतेनपूरयित्वातुसहिरण्यंतुकार
येत् ॥११०॥ वस्त्रेणवेष्टयित्वातुतदभावात्ससूत्रकम् ॥ दद्यात्तद्द्विजमुख्यायशिवःसंप्रीयतामिति ॥ ११ ॥ स्थाणुमीशंजगन्नाथंशूलपाणिंमहेश्वरम् ॥
प्रणतोस्मिभूतनाथंसमेपापंव्यपोहतु ॥ १२ ॥ कपालमालिनंदेवंवरखट्वांगधारिणम् ॥ प्रणतोस्मिजगन्नाथंसमेपापंव्यपोहतु ॥ १३ ॥ चंद्रार्धधारिणंदेवं
सर्वाभरणभूषितम् ॥ प्रणतोस्मिजगन्नाथंसमेपापंव्यपोहतु ॥१४॥ त्रिशूलपाणिनंत्र्यक्षंत्रिपथांकसुधारिणम् ॥ प्रणतोस्मिउमानाथंसमेपापंव्यपोहतु ॥
॥ १५ ॥ रुद्राश्चित्तगतोयन्मेरुद्रोबुद्धिगतश्चयः ॥ यश्चाहंकारकोरुद्रःसमेपापंव्यपोहतु ॥ १६ ॥ एवंपूज्यशिवंमंत्रैस्ततोदानंप्रकल्पयेत् ॥ व्रतंकृत्वातु
यैर्दत्तमस्मिन्मह्यंमहाफलम्॥१७॥ सुरूपाःसुभगास्तेतुजायंतेभोक्तृणोधनम् ॥ एवंयःकुरुतेसम्यक्चतुर्मास्याश्चतुर्दशीम् ॥१८॥ द्वयंयथाशतानीको
यात्यसौशांकरंपदम् ॥ कुलानांशतमुद्धृत्यनिष्पापीसुरपूजितः ॥१९॥ यन्निशायांतथाप्रातर्यन्मध्याह्नापराह्णयोः ॥ संध्यायांचकृतंपापंकर्मणामनसा
गिरा ॥ १२० ॥ तत्सर्वंनाशमायातितोयस्थंलवणंयथा ॥ एवंवाकुरुतेयस्तुचातुर्मासीविधानतः ॥ १२१ ॥ यथावैकुमुदोराजास्वर्गंयातिकलौयुगे ॥
एकभक्तेननक्तेनतथैवायाचितेनयः॥ १२२ ॥ व्रतंप्रकुरुतेभक्त्यातस्यपुण्यमसंख्यकम् ॥ एवंयःपूजयेद्भक्त्याचतुर्दश्यांतुशंकरम्॥१२३॥ सहस्रंकीर्त
येन्नाम्नांशृणुयाद्वापिभक्तितः ॥ नियमस्थःशुचिर्भूत्वाएकाचित्तःसमाहितः ॥१२४ ॥ विमुक्तःपातकैःसर्वैःशिवलोकंसगच्छति ॥ १२५ ॥ इतिश्रीशिव
महापुराणेधर्मसंहितायांसप्तविंशोऽध्यायः ॥ २७ ॥ व्यासउवाच ॥ कथयस्वसमासेनलोकानांहितकाम्यया ॥ शिवनाम्नांसहस्रंतुइहामुत्रफलप्रदम्॥१॥
सनत्कुमारउवाच ॥ मुनेशृणुप्रवक्ष्यामिसर्वाघौघविनाशनम् ॥ यच्छ्रुत्वानियमस्थोपिसर्वपापैःप्रमुच्यते ॥२॥ प्रख्यातुंनापिशक्तोहंप्रसादाच्चैवतस्यहि॥
प्राप्यानुज्ञांततःस्तोत्रंध्यानमागात्तदेश्वरम् ॥३॥ यदातेनाभ्यनुज्ञातःस्तुवन्नेवतदाभवम्॥ अनादिनिधनस्याहंसर्वयोनेर्महात्मनः ॥४॥ नाम्नांकिंचित्स
मुद्देशंवक्ष्येचाव्यक्तयोनिजः ॥ वरदस्यवरेण्यस्यविश्वरूपस्यधीमतः ॥ ५ ॥ शृणुनामसहस्रंतुयदुक्तंपद्मयोनिना ॥ दशनामसहस्राणांसहस्रंतुपितामहः
॥ ६ ॥ तानिनिर्मथ्यमनसादध्नोघृतमिवोद्धृतम् ॥ गिरेःसारंयथाहेमतथैतत्सारमुद्धृतम् ॥ ७ ॥ सर्वपापापहमिदंचतुर्वेदसमन्वितम् ॥ प्रयत्नेनाधिगंत
व्यंध्येयंचप्रयतात्मना ॥८॥ शांतिकंपौष्टिकंचैवरक्षोघ्नंपावनंमहत् ॥ इदंभक्तायदातव्यंश्रद्दधानास्तिकायच ॥ ९ ॥ नाश्रद्दधानरूपायना
स्तिकायाजितात्मने ॥ यश्चाभ्यसूयतेदेवंभूतात्मानंपिनाकिनम् ॥ १० ॥ सकृष्णनरकंयातिसहपूर्वैःपितामहैः ॥ इदंध्यानमिदंयोगमिदंध्येयमनु

त्तमम् ॥ ११ ॥ इदंज्ञात्वांतकालेपिसगच्छेत्परमांगतिम् ॥ पवित्रंमंगलंपुण्यंकल्याणमिदमुत्तमम् ॥ १२ ॥ निगदिष्येह्यहंव्यासस्तवानामुत्त
मंस्तवम् ॥ इदंब्रह्मापुराकृत्वासर्वलोकपितामहः ॥१३॥ सर्वस्तवानांदिव्यानांराजत्वेसमकल्पयत् ॥ तदाप्रभृतिचैवायमीश्वरस्यमहात्मनः ॥ १४ ॥
स्तवराजोतिविख्यातोजगत्यमरपूजितः ॥ ब्रह्मलोकादयंचैवस्तवराजोवतारितः ॥१५॥ तदाप्रभृतिचैवायंपराणामपियःपरः ॥ तेजसामपियस्तेजस्त
पसामपियत्तपः॥१६॥ शांतानामपियाशांतिर्द्युतीनामपियाद्युतिः॥योगिनामपियोयोगीकारणानांचकारणम् ॥१७॥ यतोलोकाःसंभवंतिनभवन्तियतः
पुनः ॥ सर्वभूतात्मभूतस्यहरस्यामिततेजसः ॥ १८ ॥ अष्टोत्तरसहस्रंतुनाम्नामीशस्यमेशृणु ॥ तच्छ्रुत्वात्वंमुनिश्रेष्ठसर्वान्कामानवाप्स्यसि ॥ १९ ॥
ॐस्थिरःस्थाणुःप्रभुर्भानुःप्रवरोवरदोवरः ॥ सर्वात्मासर्वविख्यातःसर्वःसर्वकरोद्भवः ॥ २० ॥ जटीचर्मीशिखीखड्गीसर्वांगःसर्वभावनः ॥ हरश्चहरिणा
क्षश्चासर्वभूतहरःप्रभुः ॥ २१ ॥ प्रवृत्तिश्चनिवृत्तिश्चनियतःशाश्वतोध्रुवः ॥ श्मशानचारीभगवान्खेचरोखचरोद्भवः ॥ २२ ॥ अभिवंद्योमहाकर्मातप
स्वीभूतभावनः ॥ उन्मत्तवेषःप्रच्छन्नःसर्वलोकप्रजापतिः ॥ २३ ॥ महारूपोमहाकायःसर्वरूपोमहाशनः ॥ विश्वरूपोविरूपश्चविश्वभुग्वामनोमनुः
॥२४॥ लोकपालांतर्हितात्माप्रसादोहयगर्दभी ॥ पवित्रश्चमहांश्चैवनियमोनियमाश्रयः ॥२५॥ सर्वकर्मास्वयंभूश्चअनादिरादिरव्ययः ॥ सौम्यरूपोविरू
पाक्षःसोमोनक्षत्रसाधकः ॥ २६ ॥ चंद्रःसूर्यःशनिःकेतुर्ग्रहोग्रहपतिर्वरः ॥अद्रिरद्र्यालयःकर्तामृगबाणार्पणोनघः ॥ २७ ॥ महातपादीर्घतपाअदीनो
दीनसाधकः ॥ संवत्सरकरोमंत्रःप्रमाणंपरमंतपः ॥ २८ ॥ योगीयाज्योमहाबीजोमहामात्रोमहातपः ॥ सुवर्णरेताःसर्वज्ञःसुबीजोवृषवाहनः ॥ २९ ॥
दशबाहुस्त्वनिमिषोनीलकंठउमापतिः ॥ विश्वरूपःस्वयंश्रेष्ठोबलिर्वैरोचनोरिहा ॥ ३०॥ गणकर्तागणपतिर्दिग्वासाःकाम्यएवच ॥ पवित्रंपरमंमंत्रःसर्व
भावहरोहरः॥३१॥कमंडलुधरोधन्वीबाणहस्तःप्रतापवान्॥अशनिःशतघ्नीखड्गीपट्टिशीचायुधीमहान्॥३२॥स्रुवहस्तःसुरूपश्चतेजस्तेजस्करोमहान् ॥
उष्णीषीचसुवक्त्रश्चअत्युग्रोविनतस्तथा ॥३३॥ दीर्घश्चहरिनेत्रश्चसतीर्थःकृष्णएवच॥शृगालरूपःसर्वार्थोमुंडःकुंडीकमंडलुः ॥३४॥अजश्चमृगरूपश्चगं
धमालीकपर्द्यपि॥ऊर्ध्वरेताऊर्ध्वलिङ्गऊर्ध्वशायीनभस्तलः ॥३५॥त्रिजटीचीरवासाश्चरुद्रःसेनापतिर्विभुः॥अहश्चरोथनक्तंचतिग्ममन्युःसुवर्चसः ॥३६॥
गजहादैत्यहालोकोलोकधाताग्गुणाकरः ॥ सिंहशार्दूलरूपश्चआर्द्रश्चर्माधराधरः ॥३७॥ कालयोगीमहानादःसर्वावासश्चतुष्पथः ॥ निशाचरःप्रेतचारी
भूतचारीमहेश्वरः ॥३८॥बाहुभूतोबहुधनःसर्वाधारोमितोगतिः॥नृत्याप्रियोनृत्यतृप्तोनर्तकःसविलासकः॥३९॥पोषोमहातपाःप्रांशुर्नित्योगिरिचरोनभः॥
सहस्रहस्तोविजयोव्यवसायोप्यनिश्चितः ॥ ४० ॥ अमर्षणोमर्षणात्मायज्ञहाकामनाशकः ॥ दक्षयज्ञापहारीचसुपथोमध्यमस्तथा ॥ ४१ ॥ तपोप

हारिबलवान्मुदितोथोर्जितोवरः ॥ गंभीरघोषोगंभीरोगंभीरबलवाहनः ॥ ४२ ॥ न्यग्रोधरूपोन्यग्रोधोवृक्षकर्णस्त्वभीर्विभुः ॥ सुतीक्ष्णदशनश्चैवमहा
कायोमहाननः ॥ ४३ ॥ विष्वक्सेनोहरिर्यज्ञःसंयुगापीडवाहनः ॥ तीक्ष्णबाहुश्चहर्यक्षोमहायःकर्मकालवित् ॥ ४४ ॥ विष्णुप्रसादितोयज्ञःसमुद्रोवड
वामुखः ॥ लंबनोलंबितोष्ठश्चबहुमायापयोनिधिः ॥ ४५ ॥ महांगश्चमहादंष्ट्रोमहाजिह्वोमहामखः ॥ महानखोमहारोमामहाकेशोमहाजटः ॥ ४६ ॥
असपत्नःप्रसादश्चप्रत्ययोगिरिसाधकः ॥ स्नेहनोस्नेहनश्चैवअजितोथमहामुनिः ॥ ४७ ॥ वृक्षकारोवृक्षकेतुस्तरलोवायुवाहनः ॥ मंडलीवायुधामाचदेव
दानवदर्पहा॥४८॥अथर्वशीर्षःसामास्योरिपुहस्तोमितेक्षणः ॥ यजुःपादभुजोगुह्यःप्रकाशोजंगमस्तथा॥४९॥अमोघार्थप्रसादश्चअभिगम्यःसुदर्शनः ॥
उपहारःप्रियःसर्वःकनकःकांचनस्थिरः ॥ ५० ॥ नंदीनंदीकरोभव्यःपुष्करस्थपतिःस्थिरः ॥ तपनस्तापनश्चाद्योघृणीयज्ञःसमाहितः ॥ ५१ ॥ नक्तः
कलिश्चकालश्चमकरःकालपूजितः ॥ सुगणोगणकारश्चभूतभावनसारथिः ॥ ५२ ॥ भस्मशायीभस्मरूक्षोभस्मरूपस्तरंगणः ॥ अगणश्चैवलोपश्चमहा
त्मासर्वपूजितः ॥ ५३ ॥ शंकुस्त्रिशंकुसंपन्नःशुचिर्भूतनिषेवितः ॥ आश्रमस्थःकपोतस्थोविश्वकर्मपतिर्वरः ॥ ५४॥ शाखोविशाखःकुंभांडश्चार्थजालः
सुनिश्चयः ॥ कपिलोकपिलःशूरआयुश्चैवापरोरगः ॥ ५५ ॥ गंधर्वोह्यदितिस्ताक्ष्योअविज्ञेयःसुसारथिः ॥ परश्वधायुधोदेवोअर्थकारःसुधीर्वरः ॥५६॥
तुंबवीणोमहाकोपऊर्ध्वरेताजलेशयः ॥ उग्रवंशकरोवंशवंशधारोह्यनिंदितः॥५७॥ सर्वांगरूपोमायावीसुहृदोह्यनिलोनलः ॥ बांधवोबंधुकर्ताचसुबंधूर
विलोचनः ॥ ५८ ॥ सुयज्ञारिःसुकामारिर्महादंष्ट्रोसमोयुधि ॥ बाहुस्त्वनिंदितःसर्वःशंकरोधनदोधनः ॥५९ ॥ अमरेशोमहादेवोविश्वदेवःसुरारिहा ॥
दीधितिश्चाहिर्बुध्न्यश्चचेकितानोहरिस्तथा ॥६०॥ अजैकपादःकापालीत्रिशंकुराजितःशिवः ॥ धन्वंतरिर्धूमकेतुःस्कंदोवैश्रवणस्तथा॥६१॥ धाताशक्रश्च
विष्णुश्चमित्रस्त्वष्टाध्रुवोधनः ॥ प्रभावःसर्वगोवायुरर्यमासवितारविः ॥ ६२ ॥ उदग्रश्चविधाताचमांधाताभूतभावनः ॥ हुततीर्थश्चवाग्मीचसर्वकाल
गुणावहः ॥ ६३ ॥ पद्मवक्रोमहावक्रश्चंद्रवक्रोमनोजवः ॥ बलवांश्चोपशांतश्चपुराणःपुण्यचंचुरी ॥ ६४ ॥ कुरुःकर्ताकालरूपीकुरुभूतोमहे
श्वरः ॥ सर्वाशनोदर्शशायीसर्वेषांप्राणिनांपतिः ॥ ६५ ॥ देवदेवःसुखासक्तःसदसत्सर्वरत्नवित् ॥ कैलासशिखरेवासीहिमवद्गिरिसंश्रयः ॥ ६६ ॥ कूल
हारीकूलकर्ताबहुबीजोबहुप्रदः ॥ वणिजोवर्धनोवृक्षोनकुलश्चंदनच्छदः ॥६७॥ सारपीठोमहाजंतुरलोकश्चमहौषधम् ॥ सिद्धार्थकारीसिद्धार्थश्छंदोव्या
करणांतरः ॥ ६८ ॥ सिंहनादःसिंहदंष्ट्रःसिंहगःसिंहवाहनः ॥ प्रभावात्माजगत्कालस्ततोलोकहितस्ततः ॥ ६९ ॥ ज्ञानसारोनवक्रांगःकेतुमालीसु
भावनः ॥ भूताशयोभूतपतिरहोरात्रैस्त्वनंदितः॥७०॥वामनःसर्वभूतात्मानिलयश्चविभुर्भवः ॥ अमोघःसंजयःपार्श्वोजीवनःप्राणधारणः॥७१॥धृतिमा

नात्मवान्दक्ष:सकृतश्चयुगाधिप: ॥ गोपालोगोयुधिर्ग्राहोगोचर्मवसनोहर: ॥ ७२ ॥ हिरण्यबाहुश्चतथागुहापाल:प्रवेशिता ॥ प्रतिष्ठायीमहाहर्षोजितका
मोजितेंद्रिय: ॥ ७३ ॥ गांधारश्चसुरालश्चतनुरात्मागातिर्वर: ॥ महागीतोमहानृत्तोअप्सरोगणसेवित: ॥ ७४ ॥ महाकेतुर्धनुर्धातुर्विकर्तातुचरेश्वर: ॥
आवेदनीयआवास:सर्वगंधसुखावह: ॥ ७५ ॥ तोरणस्तारणोवायु:पर्जन्योवातिचैकत: ॥ हुताशनसहायस्तुप्रशांतात्माहुताशन: ॥ ७६ ॥ उग्रतेजा
महातेजाजयोविजयकालवित् ॥ ज्योतिषामयनंसिद्धि:संधिविग्रहएवच ॥७७॥ शिखीदंडीजटीज्वालीमूर्तिजोदुर्धरोवाणिक् ॥ वैणवीपणवीतालीकाल:
कालकटंकर: ॥ ७८ ॥ नक्षत्रोविग्रहोवृद्धिर्गुणवृद्धिरयोगम: ॥ प्रजापातिर्दिशाबाहुर्विभाग:सर्वतोमुख: ॥ ७९ ॥ विमोचन:सुरगणोहिरण्यकवचोद्भव:॥
मेढ्रजोबलचारीचमहाचारीसुतस्तथा ॥ ८० ॥ सर्वतूर्यनिनादीचसर्ववाद्यपरिग्रह: ॥ बालरूपोबिलावासोहेममालीतरंगवित् ॥ ८१ ॥
त्रिदशस्त्रिवृतइछंद:सर्वबंधविमोचन: ॥ बंधनस्तुसुरेंद्राणांयुधिशत्रुविनाशन: ॥ ८२ ॥ सांख्यप्रसादोदुर्वासा:सर्वसाधुनिषेवित: ॥ प्रस्कंदनोविभागश्च
अतुलोयज्ञसामावित् ॥ ८३ ॥ सर्वावास:सर्वचारीदुर्वासावासवोमर: ॥ हेमोहेमकरोयज्ञ:सर्वधारीधरोत्तम: ॥ ८४ ॥ लोहिताक्षोमहाक्षश्चविरूपाक्षो
विशारद: ॥ संग्रहोविग्रह:काम:सर्पचीरनिवासन: ॥ ८५ ॥ मुख्योवियुक्तदेहश्चदेहारि:सर्वकामद: ॥ सर्वकालप्रसादश्चसुबलोबलरूपधृक् ॥ ८६ ॥
सदाकाशोनिरूपश्चनिपानीउरण:खग: ॥ रौद्ररूपांशुरादित्योवसुराग्नि:सुवर्चसी ॥ ८७ ॥ वसुवेगोमहावेगोमनोवेगोनिशाकर: ॥ सर्वावास:प्रियावासी
अपदेशकरोहर: ॥ ८८ ॥ मुनिरात्माकरोलोक:संभोज्यश्चसहस्रभुक् ॥ पक्षीचपक्षिरूपीचाविश्वदीपोविशांपति: ॥ ८९ ॥ उन्मादोमदनाकारोअर्थोअ
र्थकरोधस: ॥ वामदेवश्चवामश्चप्राग्देवश्चाथवामन: ॥९०॥ सिद्धयोगापचारीचसिद्ध:सिद्धार्थसाधक: ॥ भिक्षुश्चभिक्षुरूपीचाविषाणीमृदुरव्यय: ॥९१॥
महासेनोविशाखश्चषष्टिनागोविशांपाति: ॥ वज्रहस्तप्रतिष्टंभीवज्रस्तंभनएवच ॥ ९२ ॥ क्षमाव्रतकर:कालोमनुर्मधुकरश्चल: ॥ वानस्पत्योवाजिमे
धोनित्यमाश्रमपूजित: ॥९३॥ ब्रह्मचारीलोकचारीसर्वचारीसुचारवित् ॥ ईशानईश्वर:कालोनिशाचारीअनेकदृक् ॥९४॥ निमित्तस्थोनिमित्तश्चनंदीनं
दिकरोहर: ॥ नंदीश्वरश्चनंदीचनंदीवान्नंदिवर्धन: ॥ ९५ ॥ भगस्याक्षिनिहंताचकालोब्रह्मविदांवर: ॥ चतुर्मुखोमहालिंगश्चतुर्लिंगस्तथैवच ॥ ९६ ॥
लिंगाध्यक्षोमहान्यक्षोलोकाध्यक्षोयुगावह: ॥ बीजाध्यक्षोबीजकर्ताअध्यात्मानुगतोबल: ॥ ९७ ॥ इतिहासकर्ताकल्पश्चसोत्तमोथजलेश्वर: ॥ दंभोदंभ
करोरंहावश्योवश्यकर:कलि:॥९८॥लोककर्तापशुपतिर्महाकर्तामहौषधम् ॥ अक्षरंपरमंप्राहुर्बलवाञ्छुक्रएवच ॥९९॥ नीतिरनीति:शुद्धात्माशुद्धमानो
गतिप्रद: ॥ बहुप्रसाद:सुस्वप्नोदक्षिणौघस्त्वमित्रजित् ॥ १०० ॥ वेदकार:सूत्रकारोविद्वांस:परमंतप: ॥ महामेघनिनादीचमहाघोरवशीकर: ॥१०१॥

अग्निज्वालीमहाज्वालीअतिधूमोहुतोहविः ॥ वृषणःसंकरोनित्योवर्चस्वीधूमकेतनः॥१०२॥ नीलस्तथांगलुब्धश्चशोभनोनिरवग्रहः ॥ स्वस्तिदःस्व
स्तिभागश्चभागीभागकरोलघुः ॥ १०३ ॥ उत्संगश्चमहांगश्चमहागर्भपुरोयुवा ॥ कृष्णवर्णःसुवर्णश्चइंद्रियंसर्वप्राणिनाम् ॥ १०४ ॥ महापादोमहाह
स्तोमहाकायोमहायशाः ॥ महामूर्द्धामहानेत्रोमहामात्रोविशालयः ॥ १०५॥ महादंतोमहाकर्णोमहेषुश्चमहानुगः ॥ महानादोमहाकंबुर्महाग्रीवःसुशां
तधृक् ॥ १०६ ॥ महाचक्षुर्महावक्रोअंतरात्मामृगालयः॥महाकटिर्महाग्रीवोमहाबाहुःप्रतापवान् ॥ १०७॥ संयोगोवर्धनोवृद्धोनित्यवृद्धोगुणाधिकः॥
नित्योधर्मसहायश्चदेवासुरपतिःपतिः ॥ १०८ ॥ अयुक्तोयुक्तबाहुश्चद्विविधश्चसुपर्वणः ॥ आषाढश्चसुषाढश्चध्रुवोहरिहरोहरः ॥ १०९ ॥ वसुरावृ
त्तिमान्नित्योवसुश्रेष्ठोमहारथः ॥ शिरोहारीविसर्पीचसर्वलक्षणभूषितः ॥ ११० ॥ अक्षरश्चाक्षरोयोगीसर्वयोगीमहाबलः ॥ समाम्नायोसमाम्नायस्तीर्थ
सेवीमहारथः॥१११॥निर्जीवोजीवनोवासीनीरसोबहुकर्कशः ॥ रत्नप्रभूतोरत्नांगोमहाह्रदनिनादकृत् ॥११२ ॥ मूलोविशाखोनिर्वृत्तोव्यक्तोव्यक्तस्तथा
निधिः ॥ आरोहणोनिरूहश्चशैलहारीमहातपाः ॥ ११३ ॥ सेनाकल्पोमहाकल्पोयोगोयोगकरोहरः ॥ युगरूपोमहारूपोअयनोगहनोनरः ॥ ११४॥
नाट्यनिर्वापणःपादःपंडितोविश्वलोचनः ॥ बहुमालोमहामालःसुमालोबहुलोचनः ॥११५॥विस्तारोभवनःक्रूरःकुसुमःसुफलोदयः ॥ वृषभोवृषभांगां
गोमल्लिबिल्वोजटाधरः॥ ११६ ॥ इंदुर्विसर्गःसुमुखःसुरःसर्वायुधाधरः ॥ निवेदनःसुधन्वाचसंगाधारोमहाहनुः ॥ ११७ ॥ गंधमालीचभगवानुत्थानः
सर्वकर्मणः ॥ मंथानोबहुलोबाहुःसकलःसर्वलोचनः ॥ ११८ ॥ उरस्तालीकरस्तालीऊर्ध्वसंहननोबटुः ॥ छत्रपत्रसुविख्यातःसर्वलोकाश्रयोमहान् ॥
॥ ११९ ॥ मुंडोविरूपोविकृतोदंडीमुंडोविकर्षणः ॥ हर्यक्षःकोकसश्चक्रीदीप्तजिह्वःसहस्रपात् ॥ १२० ॥ सहस्रमूर्द्धादेवेंद्रःसर्वभूतमयोगुरुः ॥
सहस्रबाहुःसर्वांगःशरण्यःसर्वलोकधृक् ॥ १२१ ॥ पवित्रस्त्रिमधुर्मंत्रःकनिष्ठःकृष्णपिंगलः ॥ ब्रह्मदंडविनिर्माताशतघ्नीशतपाशधृक् ॥ १२२ ॥
पद्मगर्भोब्रह्मगर्भोजलगर्भोजलोद्भवः ॥ गर्भस्थोब्रह्मविद्ब्रह्मब्रह्मज्ञोब्राह्मणोगतिः ॥ १२३ ॥ अनंतरूपोनैकात्मातिग्मतेजास्तमोनुदः ॥ ऊर्ध्वगात्मापः
शुपतिर्वातरंहामनोजवः ॥१२४॥ चंदनीपद्मनालाग्रःसुरभ्युत्तरणोनरः ॥ कर्णिकारोमहासर्गोनीलमालपिनाकधृक् ॥ १२५ ॥ उमापतिरुमाकांतोजा
ह्नवीहृदयंगमः ॥ वरोवराहोवरदोवरेशःसुमहास्वनः ॥ १२६ ॥ महाप्रसादस्त्वनघःशक्रहाश्वेतपिंगलः ॥ प्रीतात्माप्रयतात्माचसंयतात्माप्रधानवित्
॥ १२७ ॥ सर्वपार्श्वसुतस्तार्क्ष्योधर्मसाधारणोधरः ॥ चराचरात्मासूक्ष्मात्मासुवृषांकोवृषेश्वरः ॥१२८॥ साध्यर्षिर्वसुरादित्योविवस्वान्सवितार्चितः ॥
व्यासःसर्वार्थसंक्षेपोविस्तारःपर्ययोभयः ॥१२९॥ ऋतुःसंवत्सरोमासःपक्षःसंध्यासमापकः ॥ कलाःकाष्ठालवामात्रामुहूर्ताहःक्षपाक्षणः ॥१३०॥ विश्व

क्षेत्रंबीजर्लिंगंबीजमाद्यस्त्वनिंदितः॥सर्वादिःसदसद्व्यक्तंपितामातापितामहः॥१३१॥ स्वर्गद्वारंप्रजाद्वारंमोक्षद्वारंत्रिविष्टपम्॥निर्वाणंह्लादनंचैवब्रह्मलोकप
रागतिः ॥ ३२ ॥ देवासुरविनिर्मातादेवासुरपरायणः ॥ सुरासुरगतिर्देवोदेवासुरनमस्कृतः ॥ ३३ ॥ देवासुरमहामात्रोदेवासुरमहाश्रयः ॥ देवासुर
गणाध्यक्षोदेवासुरगणाग्रणीः ॥ १३४ ॥ देवासुरगुरुर्देवोदेवासुरपरिष्टुतः ॥ देवासुरमहामंत्रोदेवासुरमहेश्वरः ॥ ३५ ॥ सर्वदेवमयोचिंत्योचिंत्योदेवा
त्मसंभवः ॥ उद्भिज्जःशुक्रमावेद्योविरजोविरजांबरः ॥ ३६ ॥ ईज्योहस्तीसुरव्याघ्रोदेवसिंहोनरर्षभः ॥ निरायुधोवरश्रेष्ठःसर्वदेवोत्तमोत्तमः ॥ ३७ ॥
गुरुःकांतोनिजःस्सर्वःपवित्रंसर्ववाहनः ॥ प्रयुक्तःशोभनोवज्रईशानः प्रभुरव्ययः ॥ ३८ ॥ शृंगीशृंगप्रियोराजाराजराजोनिरामयः ॥ अभिरामःसुरगणो
विरामःस्वर्गसाधनः ॥ ३९ ॥ ललाटाक्षोविश्वदेहोहरिणोब्रह्मवर्चसी ॥ स्थावराणांपतिश्चैवनवमेंद्रियवर्द्धनः ॥ ४० ॥ सिद्धार्थःसर्वभूतार्थोनित्यःसत्य
व्रतःशुचिः ॥ व्रतादिःपरमंब्रह्मभक्तानांपरमागतिः ॥ ४१ ॥ विमुक्तोदीप्ततेजाश्चश्रीमाञ्छ्रीवर्द्धनोगजः ॥ यथाप्रसादोभगवानितिभक्तास्तुतोमया
॥ ४२ ॥ यंनब्रह्मादयोदेवाविदुर्यंनमहर्षयः ॥ तंस्तव्यमर्च्यमर्घ्यंचवंद्यंस्तोष्येजगत्पतिम् ॥ ४३ ॥ भक्तिमेवपुरस्कृत्यमयायज्ञपतिःस्तुतः ॥ तस्मा
दनुज्ञांप्राप्यैवस्तुतोगतिमतांगतिः ॥ ४४॥ शिवमेवंस्तुवन्देवंनामभिःपुष्टिवर्द्धनैः ॥ नित्ययुक्तःशुचिर्भूत्वाप्राप्नोत्यात्मानमात्मनः ॥ ४५ ॥ एतद्धिपर
मंब्रह्मस्वयंगीतंस्वयंभुवा ॥ ऋषयश्चैवदेवाश्चस्तुवंत्येतेनतंविभुम् ॥ ४६ ॥ स्तूयमानोमहादेवःस्तूयतेचात्मनोगतिः ॥ भक्तानुकंपीभगवानात्मसंस्था
न्करोतितान् ॥ ४७ ॥ तथैवचमनुष्येषुयेमनुष्याःप्रधानतः ॥ आस्तिकाःश्रद्दधानाश्चबहुभिर्जन्मभिःस्तवैः ॥ १४८ ॥ जाग्रतोथस्वपंतश्चयजंतःपथिसं
स्थिताः ॥ स्तुवंतिस्तूयमानैश्चतुष्यंतिचरमंतिच ॥ ४९ ॥ जन्मकोटिसहस्रेषुनानासंसारयोनिषु ॥ जंतोर्विशुद्धपापस्यभवेभक्तिःप्र
जायते ॥ १५० ॥ उत्पन्नाचभवेभक्तिरनन्यासर्वभावतः ॥ कारणंभावितत्तस्यसर्वमुक्तस्यसर्वतः ॥५१॥ एतद्देवेषुदुष्प्रापंमनुष्येषूपलभ्यते ॥ निर्वि
ण्णानिश्चलाभद्रेभक्तिरव्यभिचारिणी ॥ ५२ ॥ तस्यैवहिप्रसादेनभक्तिरुत्पद्यतेनृणाम् ॥ यथायांतिपरांसिद्धिंतद्भावगतचेतसः ॥ ५३ ॥ येसर्वभावो
पगताःपरंभावंभवस्यच ॥ प्रसन्नवत्सलोदेवःसंसारात्तंसमुद्धरेत्॥५४॥ एवमन्येपिकुर्वंतिदेवाःसंसारगोचरम् ॥ मनुष्याणांमहादेवादन्यत्रापितृवत्सलात्
॥ ५५ ॥ इतितेनेंद्रकल्पेनभगवान्संस्तुतःपतिः ॥ कृत्तिवासाःस्तुतोव्यासदंडिनाशुद्धबुद्धिना ॥ ५६ ॥ स्तवमेनंभगवतोब्रह्मास्वयमधार्यत ॥ ब्रह्मा
प्रोवाचशक्रायशक्रःप्रोवाचमृत्यवे ॥ ५७ ॥ मृत्युःप्रोवाचरुद्राणांरुद्रेभ्यस्तंडिमागमत् ॥ महतातपसाप्राप्तस्तंडिनाब्रह्मसंसदि ॥ ५८ ॥ तंडिःप्रोवाच
शुक्रायगौतमायसभार्गवः ॥ वैवस्वतायमनवेगौतमःप्राहधीमते ॥ ५९ ॥ नारायणायसाध्यायमनुरिष्टायधीमते ॥ यमायप्राहभगवान्साध्योनाराय

णोच्युतः॥ १६० ॥ मार्कंडेयायमार्कंडोनाचिकेतायधीमते ॥ नाचिकेतस्तुसंप्राप्यददौतत्रोपमन्यवे ॥ ६१ ॥ उपमन्युस्तुकृष्णायददौतस्यार्थसि
द्धये ॥ एवंप्रवर्तितंस्तोत्रंशंभोरिहमहीतले ॥ ६२ ॥ कामदंभोगदंचैवसर्वसिद्धिप्रदायकम् ॥ स्वर्ग्यमारोग्यमायुष्यंधनंधान्यंतथैवच ॥६३ ॥ नास्यवि
घ्नंप्रकुर्वंतिदानवायक्षराक्षसाः॥ पिशाचायातुधानाश्चगुह्यकाभुजगास्तथा ॥ ६४ ॥ यःपठेत्सुशुचिर्भूत्वाब्रह्मचारीजितेंद्रियः ॥ अभग्नयोगोवर्षंतुसाक्षा
त्पश्यतिशंकरम् ॥ ६६ ॥ यःपुनर्नित्यमेवंहिपठेदीश्वरसन्निधो ॥ सोश्वमेधफलंलेभेविमुक्तःसर्वपातकैः ॥१६६॥ इतिश्रीशिवमहापुराणेचतुर्विंशतिसाह
स्र्यांसंहितायांधर्मसंहितायांसहस्रनामकथनंनामाष्टाविंशोऽध्यायः ॥२८॥ ॥ व्यासउवाच॥धर्मादर्थश्चलाभश्चमोक्षश्चत्रितयंलभेत् ॥ तस्माद्धर्मंसमीहेत
विद्वान्सबहुधास्मृतः ॥१॥ तपसाचैवदानेनव्रतेननियमेनच ॥ तपसाप्राप्यतेस्वर्गःसात्विकेनमहामुने ॥ २ ॥ इहायातोलभेद्राज्यंलोभक्रोधविवर्जितः ॥
जन्मांतरेणमुक्तिःस्यात्पदंविंदतिशांकरम् ॥३॥ तपसाराजसेनेहराजस्वीतेनजायते ॥ तामसेनतुभावेनक्रूरकर्मेहनिष्ठुरः॥४॥स्कंधाद्भावक्षसोवाक्षंपुनः ॥
किंतमसावृतम् ॥ ५ ॥ सुसात्विकंचैवतदुच्यतेतपोरजस्तमोभ्यांनयुतंप्रशस्यते ॥ पर्णाशिनांवायुभुजांमुनीनांतपस्विनांवैविपिनेसमासताम् ॥ ६ ॥
वनेपिदोषाःप्रभवंतिरागिणांगृहेपिपंचेंद्रियनिग्रहस्तपः ॥ अकुत्सितेकर्मणियःप्रवर्ततेनिवृत्तरागस्यगृहेतपोवनम् ॥ ७ ॥ तुर्याश्रमोयंगदितःसुधर्मः
सुदुश्चरंसम्यगजितेंद्रियाणाम् ॥ संहन्यतेश्रेष्ठतमःशुभाश्रमोगृहस्थधर्मःप्रवरोमनीषिणाम् ॥८॥ तत्वातपःसंविपिनेक्षुधार्तोगृहंसमादायसदान्नदातुः ॥
भक्त्यायतोन्नंप्रददातितस्यतपोविभागंभजतेहिसम्यक् ॥ ९ ॥ गृहाश्रमःश्रेष्ठतमाश्रमाणांसम्यक्सदापालयतेमनुष्यः ॥ इहैवभुंजन्समनुष्यभो
गान्स्वर्गंप्रयातीतिनसंशयोत्र ॥ १० ॥ सदागृहंपालयतांनराणांपापंसमायातिकथंमुनींद्र ॥ तद्ब्रूहिशुद्धिंहिहितायतेषांदानेनकृत्वादिवमात्रजांति
॥ ११ ॥ सनत्कुमारउवाच ॥ शृणुवक्ष्यामिकालेयमहापापविशोधनम् ॥ सर्वसंपत्करंदानमिहामुत्रफलप्रदम् ॥ १२ ॥ शुभकालेसमायातेसमभ्यर्च्यें
ष्टदैवतम् ॥ नित्यंनैमित्तिकंकृत्वादद्याद्दानंस्वशक्तितः ॥ १३ ॥ गृहीत्वापरद्रव्यंतुद्विजदेवेभ्यएवहि ॥ दद्यात्सनिरयंदृष्ट्वापश्चाद्याति परांगतिम्
॥ १४ ॥ शतानीकोयथादानात्सपुत्रैर्वावतारितः ॥ तथान्येभ्यस्त्वदातृभ्यःसंगृह्यधर्मतोददत् ॥ १५ ॥ धर्मस्थानेषुयद्दत्तंतेषामर्द्धंमुदाहृतम् ॥
शृणुव्यासप्रवक्ष्यामिबहुवित्तंसमासतः ॥ १६ ॥ देहशुद्धिकरंदानंस्वर्गलोकप्रसादकृत् ॥ दानंपापापहंयेनपुमान्यातित्रिविष्टपम् ॥ १७ ॥ पुरात्रि
नयनप्रोक्तंभार्गवायमहात्मने ॥ पापयुक्तायरामायतुलापुरुषमेवच ॥१७॥ पापकर्मरतश्चैववधबंधक्रियोनृपः॥ योनिरंतःसुकीर्णासुकुपानानिरतस्तुयः
॥ १९ ॥ अभक्ष्यभक्षणरतोभ्रूणहागुरुतल्पगः ॥ स्वतोप्यनृतवादीस्यात्प्रसूतान्सुवियोनिषु ॥ २० ॥ अयाज्ययाजनंकृत्वाकृत्वाचोपवसोदिनम् ॥

ततस्तुकारयेदिष्टियापुरोक्तामयातव ॥ २१ ॥ ऐंद्रवारुणवायव्यायाम्यनैर्ऋतशांभवाः ॥ सौम्याग्नेयास्तुनिर्दिष्टावह्नेस्तुहवनेसदा ॥ २२ ॥ गृहक्षेत्र
पतेश्चैवहुत्वाव्याहृतिभिःपुरा ॥ यद्देवादेवहेडनंयदिदिवान्यनुक्रमात् ॥ २३ ॥ यज्जाग्रतइतश्चैवपुनंतुमेतिसप्तकम् ॥ हुत्वागव्यघृतेनैवशाकल्यंहोममा
चरेत् ॥ २४ ॥ ततोहुत्वाहुती दत्वासर्वेभ्योपियथाक्रमम् ॥ ततःस्तंभौदृढौचक्रेयज्ञियौचमहाबलौ ॥ २५ ॥ विघ्नेशविद्यौखलुकार्तिकेयौसूपूजितौगंधव
रैःसुवस्त्रैः ॥ ततःप्रसन्नौददतुर्यथेष्टंसंपूज्यसोमंद्विजशूलपाणी ॥ २६ ॥ पिनाकिनंतत्रशुभोपहारैरौद्रेणसूक्तेनतुविष्टरेण ॥ अर्घेणपाद्येनतथासनेनत्व
मेहियज्ञेममशूलपाणे ॥ २७ ॥ नागोत्तरीयोसिउमासमेतोगृह्णीष्वपूजांचमयाप्रदत्ताम् ॥ २८ ॥ पूजाब्रह्मपवित्रेणसूर्यस्यैवतुरश्मिभिः ॥ रुद्रोयंसपत्नी
कःप्रतिगृह्णातुस्वाहा ॥ २९ ॥ सर्वाणीमानिपुष्पाणिपूतानिरविरश्मिभिः ॥ रुद्रःसपत्नीकःप्रतिगृह्णातुस्वाहा ॥३०॥ वनस्पतिरसोदिव्यःसर्वगंधेषुचो
त्तमः ॥ आग्नेयःसर्वदेवानांप्रतिगृह्णातुमेसदास्वाहा ॥ ३१ ॥ अग्निःशक्रश्चज्योतिश्चसर्वतेजोमयःशिवः ॥ प्रभाकरोमहातेजादीपोयंप्रतिगृह्यतां
स्वाहा ॥ ३२ ॥ आहाराज्यंजुहुयात् ॥ अग्नयेपृथिव्याधिपतयेस्वाहा ॥ इंद्रायसुराधिपतयेस्वाहा ॥ सूर्यायदिवोधिपतयेस्वाहा ॥ सोमायनक्षत्राधि
पतयेस्वाहा ॥ वरुणायअपांपतयेस्वाहा ॥ तुलायैतुलापुरुषायस्वाहा ॥ शेषंव्याहृतिभिर्जुहुयात् ॥ ३३ ॥ ततोद्रव्यंसमारोप्यतुलायांस्वयमारुहेत्
धरिणीयदितेमाताब्रह्माचजनितास्वयम् ॥३४॥ भूत्वात्वंसत्यधर्मश्चआरूढंमांविधारय ॥ सत्येनयासिदेवानांमुनीनांभावितात्मनाम् ॥३५॥ प्रतिगृह्णीष्वया
तेनसत्यंतेनरसत्तम ॥ यदातु गुरुमात्मानंसकृत्तुतुलयाधृतम् ॥ ३६ ॥ द्रव्यंचलघुमन्येतततःकर्मसमारभेत् ॥ सकृत्कृत्वेहदानंहिसर्वपापैःप्रमुच्यते
॥ ३७ ॥ द्विश्चीर्त्वातुगाणपत्यंलभतेनात्रसंशयः ॥ त्रिश्चीर्त्वातुहरस्यापिकायतुल्योभवेन्नरः ॥३८॥ पौर्णमास्यांचतुर्थ्यंतेदद्याद्दानंयुगादिषु ॥ ग्रहणे
वापितीर्थेषुकृतकृत्योभवेन्नरः ॥ ३९ ॥ शृणोतिसततंयोपिदानेवाकुरुतेमनः ॥ विमुक्तःसर्वपापेभ्यःस्वर्गलोकंचगच्छति ॥ ४० ॥ इतिश्रीशिवमहा
पुराणेधर्मसंहितायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥ व्यासउवाच ॥ किमर्थंमुनिनातेनरामेणाक्लिष्टकर्मणा ॥ मनसापिविशुद्धेनकृतंदानंमहात्मना ॥१॥
एतदिच्छाम्यहंश्रोतुंदेवदेवेनशूलिना ॥ तुलापुरुषदानंतुतस्योद्दिष्टंमहात्मना ॥ २ ॥ सनत्कुमारउवाच ॥ शृणुवक्ष्यामिकालेययथातस्यद्विजन्मनः ॥
उपदिष्टंतुरामस्याशिवभक्तस्यशूलिनः ॥३॥ रामस्याहंप्रवक्ष्यामियथाजन्मसयादृशः ॥ यथाभूद्वीर्यसंपन्नोयस्मादानंकृतंत्विदम् ॥४॥ कुशिकोनामधर्म
ज्ञःसचापुत्रोमहीपतिः ॥ उग्रंतपःसमास्थायआत्मानंसमपीडयत् ॥ ५ ॥ पुत्रंलभेयमजितंबलिनंबलशालिनम् ॥ तमुग्रतपसंमत्वासहस्राक्ष
स्तमभ्ययात् ॥ ६ ॥ पुत्रत्वमनयद्वचासतस्यलोकेश्वरेश्वरः ॥ गाधिनामाभवत्पुत्रःकौशिकःपाकशासनः ॥ ७ ॥ तस्यकन्याभवद्राज्ञोनाम्नासत्यवती

मुने ॥ तांगाधिर्ऋषिपुत्रायऋचीकायददौमुदा ॥ ८ ॥ ततःप्रीतस्तुकालेयचरुंगाधेर्महाक्रतौ ॥ अह्वायतस्यभार्यार्थंमृचीकऋषिसत्तमः ॥ ९ ॥
उपयोज्यश्चरुरयंत्वयामात्राद्विधाकृतम् ॥ मातुस्तेभवितापुत्रोदीप्तिमान्क्षत्रियर्षभः ॥ १० ॥ अजय्यःक्षत्रियोलोकेक्षत्रियर्षभसूनुना ॥ तवापिपुत्रं
कल्याणिवृत्तिमंतंतपोन्वितम् ॥ ११ ॥ समात्मकंद्विजश्रेष्ठमयंचरुर्विधास्यति ॥ इत्येवमुक्त्वातांभार्यांजगामारण्यमेवहि ॥ १२ ॥ तपस्तस्तुंततो
राजातीर्थयात्रापरोमुने ॥ गाधिःसदारःसंप्राप्तऋचीकस्याश्रमंप्रति ॥ १३ ॥ चरुद्वयंगृहीत्वातुहृष्टासत्यवतीतदा ॥ भर्तुर्वाक्यादथव्यग्रामात्रेहृष्टा
न्यवेदयत् ॥ १४ ॥ मातातुस्वंसमादायदुहित्रेसंन्यवेदयत् ॥ तस्याश्चरुमथोज्ञात्वाआत्मसंस्थंचकारह ॥ १५ ॥ अथसत्यवतीगर्भंक्षत्रियांतकरं
तदा ॥ धारयामासदीप्तेनवपुषाघोरदर्शनम् ॥ १६ ॥ तामृचीकस्तदादृष्ट्वाध्यानयोगेनचैवहि ॥ अब्रवीद्भृगुशार्दूलःस्वभार्यांवरवर्णिनीम् ॥ १७ ॥
मात्राविध्वंसिताभद्रेचरुव्यत्ययहेतुना ॥ भविष्यतिचतेभ्राताब्रह्मभूतस्तपोधनः ॥ १८ ॥ विश्वंहिब्रह्मतपसामयातत्रसमर्पितम् ॥ सैवमुक्तामहा
भागाभार्यासत्यवतीतदा ॥ १९ ॥ तस्मैजगामशिरसावचनंत्विदमब्रवीत् ॥ ब्राह्मणापसदंपुत्रंवक्तुमेवंविधंवचः ॥ २० ॥ नमामर्हसिधर्म
ज्ञप्राप्स्यसीतिमहामुने ॥ तामाहत्वयिमेकामोमयाभद्रेप्रकल्पितः ॥ २१ ॥ क्रूरकर्माभवेत्पुत्रस्तवमाताचकारणम् ॥ सातंप्राहसृजेथास्त्वंलो
कानन्यान्पुनर्मम ॥ २२ ॥ दातुंपुत्रंसमर्थोसिलभेयंजयतांवर ॥ पुनराहसतांपूर्वंस्वैरेष्वप्यनृतंवचः ॥ २३ ॥ नोक्तमग्निंसमाधायमंत्रंतंचरु
साधने ॥ सातमाहेप्सितंपुत्रंलभेयंजपतांवरम् ॥ २४ ॥ काममीदृग्भवत्पौत्रोममैवतवचैवह ॥ तामुवाचसमेनास्तिविशेषोवरवर्णिनि ॥ २५ ॥
पुत्रेवाप्यथवापौत्रेसमेसम्यग्भविष्यति ॥ ततःसत्यवतीपुत्रंजामदग्न्यंस्वमात्मजम् ॥ २६ ॥ तपस्यभिरतंदांतंजनयामासभार्गवम् ॥ गाधिस्तुब्र
ह्मसहितंविश्वामित्रमजीजनत् ॥ २७ ॥ तपसाचापरिश्रांतंप्रदीप्तमिवपावकम् ॥ समःक्षत्रियहस्तेचधनुर्वेदेचपारगः ॥ २८ ॥ विधिज्ञःसर्वविद्यानांप्रदी
प्तइवपावकः ॥ एतस्मिन्नेवकालेतुक्षत्रियोहैहयान्वयः ॥ २९ ॥ अर्जुनोनामतेजस्वीकृतवीर्यात्मजोबली ॥ सहस्रबाहुर्विक्रांतःसदृशश्चित्रभानुना ॥ ३० ॥
तुषितेनाहकालेयप्रादात्तस्मात्तुयद्वरम् ॥ जज्वालतस्यबाणस्थोग्रामाणिनगराणिच ॥ ३१ ॥ पत्तनानिचघोषाश्चचित्रभानुर्वरप्रदः ॥ कदाचि
दाश्रमारण्यंददाहचित्रभानुना ॥ ३२ ॥ वरुणस्यापिशरणंशरेणतुसहैहयः ॥ आपस्तंबस्ततोरोषाद्दग्धंदृष्ट्वास्वकंवनम् ॥ ३३ ॥ शशापतेशिरः
कायाद्रामोवैपातयिष्यति ॥ ततोरामःसुशिक्षायैजगामहरमंतिके ॥ ३४ ॥ ज्ञात्वासर्वाणिशस्त्राणितस्मादस्त्रविदांवरः ॥ एतस्मिन्नंतरेराजाहैहयो
श्रममभ्ययात् ॥ ३५ ॥ जमदग्नेःसतस्यापिपूजांचक्रेयथाविधि ॥ सोर्जुनःकामधेनुंतांदृष्ट्वातस्यवरप्रदाम् ॥ ३६ ॥ ययाचेबहुभिर्गोभिर्ऋषि

स्तस्यनदत्तवान् ॥ बलात्तांनीयमानांवैदृष्ट्वारामोभ्ययाद्रुनात् ॥ ३७ ॥ युद्धंकृत्वावनंछित्त्वाबाहूनांतस्यभार्गवः ॥ जगामतपसेधीमान्म
हेंद्राद्रौसवीर्यवान् ॥ ३८ ॥ जगामाथश्रमंकर्तुंसरामोहरसन्निधौ ॥ अर्जुनस्यसुतास्तेतुसंभूयायोधयंस्ततः ॥ ३९ ॥ गत्वाश्रमं
तुबहवोजमदग्निंनिजघ्निरे ॥ ततःसनृपशार्दूलंकार्तवीर्यंचवीर्यवान् ॥ ४० ॥ विक्रम्यनिजघानाशुपुत्रान्पौत्रांस्तुसवंशः ॥ शस्त्रव्रणा
नियावंतिपितुर्दृष्ट्वासभार्गवः ॥ ४१ ॥ चकाराजौप्रतिज्ञांतुकरिष्येऽक्षत्रियांधराम् ॥ तथासतुमहातेजाःकृत्वाचाक्षत्रियांधराम् ॥ ४२ ॥
ततःक्षत्रियवीराणांयोषितोवनमाश्रयन् ॥ आश्रमाणिमहर्षीणांतेभ्यःपुत्रांस्तुलेभिरे ॥ ४३ ॥ ततस्तदुत्थितंदृष्ट्वापुनःक्षत्रंसभार्गवः ॥ समुपेत्यवनाद्रि
प्रोजघानामर्षनोदितः ॥ ४४ ॥ पुनःशतसहस्राणिहत्वाराज्ञांमहायशाः ॥ चकारभार्गवःसर्वांमहींशोणितकर्दमाम् ॥ ४५ ॥ ततोदत्वाद्विजेभ्यस्तां
महींसर्वांसभार्गवः ॥ वनंययौतपस्तप्तुंभार्गवोमुनिसत्तमः ॥ ४६ ॥ पुनस्तेक्षत्रियाव्यासब्राह्मणेभ्यःप्रजाज्ञिरे ॥ तेचवृद्धामहावीर्याःपृथिवीपतयोभवन्
॥ ४७ ॥ ब्राह्मणेभ्यःसमादायबलिनःपृथिवींततः ॥ जातंजातंसगर्भंतुपुनरेवजघानह ॥ ४८ ॥ अरक्षंश्चसुतान्काश्चित्तानक्षत्रिययोषितः ॥ त्रिःसप्तकृ
त्वःपृथिवींदक्षिणामददात्प्रभुः ॥ ४९ ॥ कश्यपायाश्रमेधेनुंक्रूरपापापनुत्तये ॥ नजहातियदापापंतपसानियमेनच ॥ ५० ॥ यज्ञेनसोश्वमेधेनतदाभव
मपृच्छत ॥ सपृष्टस्तस्यचाचख्यौतुलापुरुषमुत्तमम् ॥ ५१ ॥ सुदानंसर्वदानानामुत्तमंपापनाशनम् ॥ सकृत्वादानमेतत्तुतुलापुरुषमुत्तमम् ॥ ५२ ॥
जगामतपसेधीमान्भूत्वानिष्कल्मषोद्विजः ॥ एतदर्थंमुनिश्रेष्ठभार्गवेनमहात्मना ॥ ५३ ॥ ब्रह्महत्यापहंव्यासदत्तंदानमनुत्तमम् ॥ निर्हेमःकलधौतस्य
दद्यादेवंप्रयततः ॥ ५४ ॥ मध्वाज्यगुडवस्त्रैस्तुसुवर्णेनतुसंयुतम् ॥ तुलासंरोहणंकार्यंयदीच्छेच्छ्रेयआत्मनः ॥ ५५ ॥ वचसामनसावापि
कर्मणापीहयत्समम् ॥ वित्तेनमुच्यतेपापैर्वधबंधकृतोद्भवैः ॥ ५६ ॥ कृत्वापापान्यशेषाणितुलादानंकरोतियः ॥ चित्तस्यपातकैर्मुक्तस्तै
र्दिवंयात्यसंशयः ॥ ५७ ॥ पापंकृतंयद्दिवसेनिशायांद्विःसंध्ययोर्मध्यदिनेनिशांतयोः ॥ कालत्रयेकर्ममनोवचोभिस्तुलापुमान्यातिहतत्कृतेन
॥ ५८ ॥ बालेनवृद्धेनमयाहियूनाविजानताज्ञानपरेणपापम् ॥ तत्सर्वमेवाशुकृतंनिहंतुतुलापुमान्मेहरतुस्मरारिः ॥ ५९ ॥ यत्राधितिष्ठंहिमयाकृतंत
त्प्रणामवित्तंनिहितंतुलायाम् ॥ तैनैवसार्धंसुकृतंप्रयातुकृतंकृतंयत्सुकृतंसमेतु ॥ ६० ॥ सनत्कुमारउवाच ॥ एवमुच्चार्यतद्द्याद्द्विजेभ्यःसर्वदाहितु ॥
नैकस्यापिप्रदातव्यंनानिस्तार्यंततोभवेत् ॥ ६१ ॥ ददात्येवंतुयोव्यासतुलापुरुषमुत्तमम् ॥ हत्वापापंदिवंतिष्ठेद्यावदिंद्राश्चतुर्दश ॥ ६२ ॥
इतिश्रीशिवमहापुराणेधर्मसंहितायांतुलापुरुषवर्णनंनामत्रिंशोऽध्यायः ॥ ३० ॥ व्यासउवाच ॥ येनैकेनहिदत्तेनसर्वेषामाप्यतेफलम् ॥ दानानांतन्ममा

ख्याहिमानुषाणांहितार्थतः ॥ १ ॥ सनत्कुमारउवाच ॥ शृणुकालेययद्दानात्फलंविंदतिमानवः ॥ एकस्मादपिसर्वेषांदानानांतच्छृणुष्वमे ॥ २ ॥
दानानामुत्तमंदानंब्रह्मांडंखलुमानवैः ॥ दातव्यंमुक्तिकामैस्तुसंसारोत्तारणायवै ॥ ३ ॥ ब्रह्मांडेसकलेदत्तेयत्फलंलभतेनरः ॥ तदेकभावादाप्नोतिसप्त
लोकाधिपोभवेत् ॥ ४ ॥ यावच्चंद्रदिवाकरौनभासिवैयावत्स्थिरामेदिनीतावत्सोपिनरःस्वबांधवयुतःस्वर्गौकसामोकसि ॥ सर्वेष्वेवमनोनुगैःसबहुभि
र्ब्रह्मांडदःक्रीडतेपश्चाद्यातिपरंसुदुर्लभपदंदेवैर्मुनेमाधवः॥५॥ व्यासउवाच॥ भगवन्ब्रूहिब्रह्मांडंयत्प्रमाणंयदात्मकम्॥यदाधारंयथाजातंयेनमेप्रत्ययोभवे
त् ॥ ६ ॥ सनत्कुमारउवाच ॥ मुनेशृणुप्रवक्ष्यामियदुत्सेधंतुविस्तरम् ॥ ब्रह्मांडंतुसुसंक्षेपाच्छृणुपापात्प्रमुच्यते ॥७॥ यत्तत्कारणमव्यक्तंशिवंपदम
नामयम् ॥ यस्मादुत्पद्यतेसर्वंलीयतेचपुनःपुनः ॥ ८ ॥ तस्मात्संजायतेव्योमपुष्कराद्वायुसंभवः ॥ वायोरग्निरतस्त्वापोद्भ्योवैसंजायतेधरा ॥ ९ ॥
धरादिभूतमुन्मथ्यतदंडमुपजायते ॥ तस्मात्संजायतेब्रह्माद्विधाभूताद्विकालतः ॥ १० ॥ पातालानितुसप्तैवभुवनानितथोर्ध्वतः ॥ उच्छ्रायंद्विगुणं
तस्यजलमध्यस्थितस्यच ॥ ११ ॥ तस्याधारःसितोनागःसचविष्णुःप्रकीर्तितः ॥ ब्रह्मणोवचसोहेतोर्बिभर्तिसकलंत्विदम् ॥ १२ ॥ शेषाख्यायगुणा
न्वक्तुंनशक्तादेवदानवाः ॥ योनंतःपठ्यतेसिद्धैर्देवर्षिगणपूजितः ॥ १३ ॥ सहस्रशिरसोव्यक्तःसर्वाविद्योतयन्दिशः ॥ फणामणिसहस्रेणस्वस्तिका
मलभूषणः ॥ १४ ॥ मदाघूर्णितनेत्रोसौसाग्निःश्वेतइवाचलः ॥ किरीटीस्रग्विणोभातियःसदैवैककुंडलः ॥ १५ ॥ सायंगंगाप्रवाहेणश्वेतहारोपशो
भितः ॥ नीलवासामदोद्रिक्तःकैलासाद्रिरिवोन्नतः ॥ १६ ॥ लांगलासक्तहस्ताग्रोबिभ्रन्मुसलमुत्तमम् ॥ उपास्यतेस्वयंकन्यायावारुण्येनमूर्तया॥१७॥
संकर्षणात्मकोरुद्रोविषानलशिखोज्ज्वलः ॥ कल्पांतेयस्यवक्त्रेभ्योनिष्क्रम्यात्तिजगत्रयम्॥१८॥आस्तेपातालमूलस्थःसशेषःक्षितिमंडलम् ॥ बिभ्रत्स
र्षपवद्भूतंशेषोशेषसुरार्चितः ॥ १९ ॥ तस्यवीर्यंप्रभावश्चशक्यंवात्रिदशैरपि ॥ नहिवर्णयितुंज्ञातुंस्वरूपंरूपमेवच ॥ २० ॥ आस्तेकुसुममालेवफ
णामणिशिलारुणा ॥ यस्यैषासकलापृथ्वीकस्तद्वीर्यंवदिष्यति ॥ २१ ॥ यदाविजृंभतेनंतोमदाघूर्णितलोचनः ॥ तदाचलतिभूरेषासाद्रितोयाब्धि
कानना ॥२२॥ नांतंगुणानांगच्छंतिसिद्धामुनिसुकिन्नराः ॥ गंधर्वोरगदेवाश्चतेनानंतोयमव्ययः ॥ २३ ॥ मुहुःश्वासानिलापास्तंलोहितंहरिचंदनम् ॥
यस्यनागवधूहस्तैर्दिशांयातिसुवासताम् ॥ २४ ॥ ज्ञातवान्सकलंचैवगर्गोज्योतींषितत्त्वतः ॥ यमाराध्यपुराणर्षिर्निमित्तपठितंफलम् ॥ २५ ॥ बिभ
र्तिमालांलोकानांशिरसाविधृतामही ॥ तेनेयंनागवीर्येणसदेवासुरमानुषान् ॥ २६ ॥ दशसहस्रमेकैकंपातालंमुनिसत्तम ॥ सुतलंवितलंचैववितलं
चगभस्तिमत् ॥ २७ ॥ महच्चसुतलंचाग्र्यंसप्तमंचरसातलम् ॥ उच्छ्रायंद्विगुणंचैषांसर्वेषांरत्नभूमयः ॥ २८ ॥ रत्नवंतोथप्रासादाभूमयोहेमसंभवाः ॥

तेषुदानवदैतेयानागानांजातयस्तथा ॥ २९॥ निवसंतिमहाभागाराक्षसादैत्यसंभवाः ॥ प्राहस्वर्गसदांमध्येपातालानीतिनारदः ॥ ३० ॥ स्वर्लोकाद
पिरम्याणितेभ्योसावागतोदिवि ॥ नानाभरणभूषासुमणयोयत्रसुप्रभाः ॥ ३१ ॥ आह्लादकारिणःशुभ्राःपा तालंकेनतत्समम् ॥ पातालेकस्यनप्रीतिरि
तश्चेतश्चशोभते ॥ ३२ ॥ देवदानवकन्याभिर्विमुक्तस्यापिजायते ॥ दिवार्करश्मयोयत्रनभवंतिविधोर्निशि ॥ ३३ ॥ नशीतमातपोयत्रमणितेजोत्रके
वलम् ॥ भक्ष्यभोज्यान्नपानानिभुज्यंतेमुदितैर्भृशम् ॥ ३४ ॥ यत्रनज्ञायतेकालोगतोपिमुनिसत्तम ॥ पुंस्कोकिलरुतंतत्रवन्यानिकमलाकराः ॥ ३५ ॥
नद्यःसरांसिरम्याणिमनोज्ञान्यंबराणिच ॥ भूषणान्यतिशुभ्राणिगंधाढ्यंचानुलेपनम्॥३६॥ वीणावेणुमृदंगानांस्वनागेयानिचद्विज ॥ दैत्योरगैश्चभुज्यंते
पातालेवैसुखानिच ॥ ३७ ॥ तपसासमवाप्तानिदानवैःसिद्धमानवैः॥३८॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांब्रह्मांडकथनंनामैकत्रिंशोऽध्यायः॥३१॥
सनत्कुमारउवाच ॥ तेषामूर्ध्वोपरिष्टाद्वैनरकास्ताञ्छृणुष्वमे ॥ वदतोमेमुनिश्रेष्ठपच्यंतेयत्रपापिनः ॥ १ ॥ रौरवःशूकरोरोधस्तालोविवसनस्तथा ॥
महाज्वालस्तप्तकुंभोलवणोपिविलोहितः ॥ २ ॥ वैतरणीपूयवहाकृमिलःकृमिभोजनः ॥ असिपत्रवनंघोरंलालाभक्षश्चदारुणः ॥ ३ ॥ तथापूयव
हापायोवह्निज्वालोह्यधःशिराः ॥ संदंशःकालसूत्रश्चतमश्चावीचिरोधनः ॥ ४ ॥ श्वभोजनोप्यदृष्टश्चमहारौरवशाल्मली ॥ पच्यंतेतेषुपुरुषाःपापकर्म
रतास्तुये ॥ ५ ॥ कूटसाक्ष्यंतुयोवक्तिविनाविप्रंसुरासवम् ॥ सदानृतंवदेद्यस्तुसनरोयातिरौरवम् ॥ ६ ॥ भ्रूणहापरस्वहर्तागोरोधोविश्वघातकः ॥
सुरापोब्रह्महाहर्तासुवर्णस्यतुशूकरे ॥ ७ ॥ तैःसंसर्गीसवैयातिराज्ञोवैश्यगुरोर्वधात् ॥ तप्तकुंभेस्वसुर्मातुर्गामीचदुहितुस्तुयः ॥ ८ ॥ साध्वीविक्रय
कृद्बालवधकीकेशविक्रयी ॥ तप्तलोहेषुपच्यंतेयश्चभक्तंपरित्यजेत् ॥ ९ ॥ अवमंतागुरूणांयःपश्चाद्भोक्तानराधमः ॥ देवदूषयितावैववेदविक्रयकृ
च्चयः ॥ १० ॥ अगम्यगामीयश्चापियातितप्तखलंद्विज ॥ अवीचिरोधेपततिमर्यादादूषकस्तथा ॥ ११ ॥ देवद्विजपितृद्वेष्टारत्नदूषयिताचयः ॥ सया
तिकृमिभक्षेचकृमिलेचदुरिष्टकृत् ॥ १२ ॥ पितृदेवसुरान्यस्तुपर्यश्नातिनराधमः ॥ लालाभक्षेसयात्यज्ञोयःशस्त्रकूटकृन्नरः ॥ १३ ॥ विशसनेसया
त्युग्रेअसद्ग्राहीतुयोद्विजः ॥ अयाज्ययाजकश्चैवतथैवाभक्ष्यभक्षकः ॥ १४ ॥ रुधिरांधेपतंत्येतेसोमविक्रयिणश्चये ॥ मित्रहामधुहायातिक्रूरांवैतरणीं
नदीम् ॥ १५ ॥ नवयौवनमत्ताश्चमर्यादाभेदिनश्चये ॥ तेकृष्णेयांत्यशौचाश्चकुहकाजीविनश्चये ॥ १६ ॥ असिपत्रवनेयातिवृक्षच्छेदीवृथैवयः ॥
औरभ्रकोमृगव्याधोवह्निज्वालेपतंतिते ॥ १७ ॥ पात्यंतेद्विजतत्रैवयश्चापापेषुवह्निदः ॥ व्रतस्यलोपकोयश्चस्वाश्रमाद्विच्युताश्चये ॥ १८ ॥ संदंशे
यातनामध्येपतंतिभृशदारुणे ॥ दिवास्वप्नेषुस्कंदंतियेनराब्रह्मचारिणः ॥ १९ ॥ पुत्रैरध्यापितायेचतेपतंतिश्वभोजने ॥ एतेचान्येचनरकाःशतशो

थसहस्रशः ॥ २० ॥ येषुदुष्कृतकर्माणःपच्यंतेयातनांगताः ॥ तथैवपापान्येतानितथान्यानिसहस्रशः ॥ २१ ॥ भुज्यंतेयानिपुरुषैर्नरकांतरगोचरैः ॥
वर्णाश्रमविरुद्धंचकर्मकुर्वंतियेनराः ॥ २२॥ कर्मणामनसावाचानिरयेतुपतंतिते ॥ अधःशिरोभिर्दृश्यंतेनारकादिविदैवतैः ॥ २३ ॥ देवानधोमुखान्त्स
र्वान्नचपश्यंतिनारकाः ॥ स्थावराःकृमयोब्जाश्चपक्षिणःपशवोमृगाः ॥ २४ ॥ धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्चयथाक्रमम् ॥ यावंतोजंतवःस्वर्गेतावं
तोनरकौकसः ॥ २५ ॥ पापकृद्यातिनरकंप्रायश्चित्तपराङ्मुखः ॥ पापानामनुरूपाणिप्रायश्चित्तानियद्यथा ॥ २६ ॥ तथातथैवसंस्मृत्यप्रोक्तानिपरम
र्षिभिः ॥ गुरूणिगुरुभिश्चैवलघुभिश्चलघूनिच ॥ २७ ॥ प्रायश्चित्तानिकालेयमनुःस्वायंभुवोब्रवीत् ॥ यानितेषामशेषाणांतानिकर्माण्यघानिवै॥२८॥
प्रायश्चित्तमशेषाणांहरानुस्मरणंपरम् ॥ प्रायश्चित्तंतुतस्यैकंयस्यपुंसःप्रजायते ॥२९॥ कृतेपापेनुतापोवैशिवसंस्मरणंपरम् ॥ महेश्वरमवाप्नोतिमध्या
ह्नादिषुसंस्मरन् ॥ ३० ॥ प्रातर्निशिचसंध्यायांसद्यःपापक्षयंनरः ॥ मुक्तिंप्रयातिस्वर्गाप्तिः समस्तक्लेशसंक्षयः ॥ ३१ ॥ शिवस्यस्मरणादेवतस्यभं
गोनुमीयते॥ तस्यांतरायोविप्रेंद्रजपहोमार्चनादिषु ॥ ३२ ॥ महेश्वरेतुभक्तस्यदेवेंद्रत्वादिकंफलम् ॥ पुमान्ननरकंयातिसंस्मरन्भक्तितोमुने ॥ ३३ ॥
शिवमहर्निशंतस्मात्संक्षीणाशेषपातके ॥ नरकःस्वर्गसंज्ञोवैपापपुण्यैर्द्विजोत्तम ॥ ३४ ॥ यस्त्वेकमेवदुःखायसुखायेर्ष्योद्भवायच ॥ तदेवप्रीतयेभू
त्वापुनर्दुःखायजायते ॥ ३५ ॥ तस्माद्दुःखात्मकंनास्तिनैवकिंचित्सुखात्मकम् ॥ मनसःपरिणामोयंसुखदुःखोपलक्षणम् ॥ ३६ ॥ ज्ञानमेवपरंब्रह्मज्ञा
नंतत्त्वायकल्पते ॥ ज्ञानात्मकमिदंविश्वंज्ञानान्नविद्यतेपरम्॥३७॥एवमेतन्मयाख्यातंसर्वंनरकमंडलम् ॥ अतोर्ध्वंतेप्रवक्ष्यामिसमस्तंमंडलंभुवः॥३८॥
इतिश्रीशिवमहापुराणेधर्मसंहितायांद्वात्रिंशोऽध्यायः ॥ ३२ ॥ सनत्कुमारउवाच ॥ पाराशर्यसुसंक्षेपाच्छृणुत्वंवदतोमम ॥ जंबूप्लक्षःशाल्मलिश्चकुशः
क्रौंचश्चपुष्करः ॥ १ ॥ शाकस्तुसप्तमःसर्वेसमुद्रैःसप्तभिर्वृताः ॥ लवणेक्षुरसैःसर्पिर्दधिदुग्धजलैःसमम् ॥ २ ॥ जंबूद्वीपःसमस्तानामेतेषांमध्यमः
स्थितः ॥ तस्यापिमेरुःकालेयमध्येकनकपर्वतः ॥ ३ ॥ प्रविष्टःषोडशाधस्ताद्योजनैस्तस्यचोच्छ्रयः ॥ चतुरशीतिसाहस्रैर्द्वात्रिंशन्मूर्ध्निविस्तृतः ॥ ४॥
भूपद्मस्यास्यशैलोसौविस्तारस्तस्यसर्वतः ॥ मूलेषोडशसाहस्रःकर्णिकाकारसंस्थितः ॥ ५ ॥ हिमवान्हेमकूटश्चनिषधश्चास्यदक्षिणे ॥ नीलःश्वेतश्च
शृंगीचउत्तरेवर्षपर्वताः ॥ ६ ॥ दशसाहस्रिकाह्येतेरत्नवंतोरुणप्रभाः ॥ सहस्रद्वितयोत्सेधास्तावद्विस्तारिणश्चते ॥ ७ ॥ भारतंप्रथमंवर्षंततःकिंपुरुषं
स्मृतम् ॥ हरिवर्षंततोन्यद्वैमेरोर्दक्षिणतोमुने ॥ ८ ॥ रम्यकंचोत्तरेपार्श्वेतस्यसानुहिरण्मयम् ॥ उत्तरेकुरवश्चैवयथावैभारतंतथा ॥ ९ ॥ नवसाहस्रमे
कैकमेतेषांमुनिसत्तम ॥ इलावृतंतुतन्मध्येतन्मध्येमेरुरुच्छ्रितः॥१०॥मेरोश्चतुर्दिशंतत्रनवसाहस्रमुच्छ्रितम्॥इलावृतमृषिश्रेष्ठचत्वारश्चात्रपर्वताः॥११॥

विष्कंभारचितामेरोर्योजनायुतमुच्छ्रिताः ॥ पूर्वेणमंदरोनामदक्षिणेगंधमादनः ॥ १२ ॥ विपुलःपश्चिमेभागेसुपार्श्वश्चोत्तरेस्थितः ॥ कदं
बोजंबूवृक्षश्चपिप्पलोवटएवच ॥ १३ ॥ एकादशशतायामाःपादपागिरिकेतवः ॥ जंबूद्वीपस्ययोजंबूर्नामहेतुर्महामुने ॥ १४ ॥ महागजप्रमाणानिजं
बोस्तस्यफलानिच ॥ पतंतिभूभृतःपृष्ठेशीर्यमाणानिसर्वतः ॥१५॥ रसेनतेषांविख्यातातत्रजंबूनदीतिवै ॥ परितोवर्ततेसाचपीयतेतन्निवासिभिः॥१६॥
नस्वेदोनचदौर्गंध्यंनजराचेंद्रियक्षयः ॥ तत्पानस्वस्थमनसांजनानांतत्रजायते ॥ १७ ॥ तीरेमृत्तत्रसंप्राप्यसुखवायुविशोषिता ॥ जांबूनदाख्यंभव
तिसुवर्णंसिद्धभूषणम् ॥ १८ ॥ भद्राश्वःपूर्वतोमेरोःकेतुमालंचपश्चिमे ॥ वर्षेद्वेतुमुनिश्रेष्ठतयोर्मध्येइलावृतम् ॥ १९ ॥ वनंचैत्ररथंपूर्वेदक्षिणेगंधमाद
नम् ॥ विभ्राजंपश्चिमेतद्वदुत्तरेनंदनंस्मृतम् ॥ २० ॥ अरुणोदंमहाभद्रंशीतोदंमानसंस्मृतम् ॥ सरांस्येतानिचत्वारिदेवभोग्यानिसर्वशः ॥ २१ ॥
सीतांजनःकुमुदश्चकुररोमाल्यवांस्तथा ॥ वैकंकप्रमुखामेरोःपूर्वतःकेसराचलाः॥२२॥त्रिकूटःशिशिरश्चैवपतगोरजतस्तथा॥निषधादयोदक्षिणतस्तस्य
केसरपर्वताः ॥ २३ ॥ शिखिवासःसवैदूर्यःकपिलोगंधमादनः ॥ जारुधिप्रमुखास्तद्वत्पश्चिमेकेसराचलाः ॥ २४ ॥ शंखचूडोथऋषभोहंसोनाममही
धरः ॥ कालंजराद्याश्चतथाउत्तरेकेसराचलाः ॥२५॥मेरोरुपरिकालेययोजनानांतथापुरम् ॥ चतुर्दशसहस्राणिब्रह्मणःप्रथितंदिवि ॥ २६ ॥ इंद्रादिलो
कपालानांदिशासुविदिशासुच ॥ तस्यसमंततश्चाष्टौख्याताःपुर्यःसमंततः ॥ २७ ॥ समंताद्ब्रह्मणःपुर्याःप्लावयित्वेंदुमंडलम् ॥ विष्णुपादविनिष्क्रांता
गंगापततिवैदिवः ॥ २८ ॥ सीताचालकनंदाचचतुर्धाप्रतिपद्यते ॥ सातत्रपतितादिक्षुचक्षुर्भद्राचवैक्रमात् ॥ २९ ॥ सीतापूर्वेणशैलात्तुनंदाचैवतुद
क्षिणे ॥ सुचक्षुःपश्चिमेचैवभद्राचोत्तरतोव्रजेत् ॥ ३० ॥ गिरीनतीत्यसकलांश्चतुर्दिक्षुमहांबुधिम् ॥ साययौप्रयताभूत्वागंगात्रिपथगामिनी ॥ ३१ ॥
सुनीलनिषधायातौमाल्यवद्गंधमादनौ ॥ तेषांमध्यगतोमेरुःकर्णिकाकारसंस्थितः ॥ ३२ ॥ भरताःकेतुमालाश्चभद्राश्वाःकुरवस्तथा ॥ पत्राणिलो
कपद्मस्यमर्यादालोकबाह्यतः ॥ ३३ ॥ जठरेदेवकूटश्चआयामेदक्षिणोत्तरे ॥ गंधमादनकैलासौपूर्वपश्चिमतोगतौ ॥ ३४ ॥ पूर्वपश्चिमतोमेरोर्निषधो
नीलपर्वतः॥दक्षिणोत्तरमायातौकर्णिकांतर्व्यवस्थितौ॥३५॥जठराद्याःस्थितामेरोर्येषांद्वौद्वौव्यवस्थितौ॥केसराःपर्वताएतेशीताद्याःसुमनोरमाः॥३६॥
शैलानामंतरेद्रोण्यःसिद्धचारणसेविताः॥सुरम्याणितथातेषुकाननानिपुराणिच॥३७॥सर्वेषांचैवदेवानांयक्षगंधर्वरक्षसाम् ॥ क्रीडंतिदेवदैतेयाःशैलद्रोणी
ष्वहर्निशम् ॥३८॥ धर्मिणामालयाह्येतेभौमाःस्वर्गाःप्रकीर्तिताः ॥ नैतेषुपापकर्तारोयांतिपश्यंतिकुत्रचित् ॥ ३९ ॥ यानिकिंपुरुषाद्यानिवर्षाण्यष्टौ
महामुने ॥ नतेषुशोकोनायासोनोद्वेगःक्षुद्भयादिकम्॥४०॥स्वस्थाःप्रजानिरातंकाःसर्वदुःखविवर्जिताः॥दशद्वादशवर्षाणांसहस्राणिस्थिरायुषः ॥४१ ॥

कृतत्रेतादिकाश्चैवभौमान्यंभांसिसर्वतः॥नतेषुवर्षेतेदेवस्तेषुस्थानेषुकल्पना॥४२॥सप्तस्वेतेषुनद्यश्चसुपयाःस्वर्णवालुकाः॥शतशःसंतिक्षुद्राश्च तासुक्री
डासुभाजनाः ॥ ४३ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांब्रह्मांडकथनंनामत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ सनत्कुमारउवाच॥ वक्ष्येहंभारतंवर्षंहिमाद्रे
श्चैवदक्षिणम् ॥ उत्तरंतुसमुद्रस्यभारतीयत्रसंसृतिः ॥ १ ॥ नवयोजनसाहस्रोविस्तारोस्यमहामुने ॥ कर्मभूमिरियंस्वर्गापवर्गपुण्यपापिभिः ॥ २ ॥
अतःसंप्राप्यतेस्वर्गोमोक्षोनरकएवच ॥ भारतस्यास्यवर्षस्यनवभेदान्ब्रवीमिते ॥ ३ ॥ इंद्रद्युम्नःकसेरुश्चताम्रपर्णोगभस्तिमान् ॥ नागद्वीपस्तथासौ
म्योगांधर्वस्त्वथवारुणः ॥ ४ ॥ अयंतुनवमस्तेषांद्वीपःसागरसंवृतः ॥ योजनानांसहस्रंतुद्वीपोयंदक्षिणोत्तरः ॥ ५ ॥ पूर्वेकिरातायस्यस्युःपश्चिमेय
वनाःस्थिताः ॥ आंध्रादक्षिणतोव्यासतुरुष्कास्त्वपिचोत्तरे ॥ ६ ॥ ब्राह्मणाःक्षत्रियावैश्यामध्येशूद्राश्चभागशः ॥ इज्यायुधवणिज्याद्यैर्वर्तयंतोव्यव
स्थिताः ॥ ७ ॥ महेंद्रोमलयःसह्यःशुक्तिमानृक्षपर्वतः ॥ विंध्यश्चपारियात्रश्चसप्तात्रकुलपर्वताः ॥ ८ ॥ वेदस्मृतिमुखानद्यःपारियात्रोद्भवामुने ॥
नर्मदासुरसाद्याश्चसंत्यन्याश्चसहस्रशः ॥ ९ ॥ विंध्योद्भवामहानद्यःसर्वपापहराःशुभाः ॥ गोदावरीभीमरथीतापीप्रमुखतोयगाः ॥ १० ॥ विंध्याद्रि
निर्गताःपुण्याःस्नानात्पापभयापहाः ॥ सह्यपादोद्भवानद्यःकृष्णवेण्यादिकास्तथा ॥ ११ ॥ कृतमालाताम्रपर्णीप्रमुखामलयोद्भवाः ॥ त्रियामाऋषि
कुल्याद्यामहेंद्रप्रभवाःस्मृताः ॥ १२ ॥ ऋषिकुल्याःकुमार्याद्याःशुक्तिमत्पादसंभवाः ॥ नानाजनपदास्तेषुवसंतोमंडलेषुवै॥१३॥ आसांपिबंतिपानीयं
सरःसुविविधेषुच ॥ चत्वारिभारतेवर्षेयुगान्यासन्महामुने॥१४॥कृतादीनिनचान्येषुद्वीपेषुप्रभवंतिहि ॥ दानानिचात्रदीयंतेजुह्वतेचात्रयज्वनः ॥१५॥
तपस्तप्यंतियतयःपरलोकार्थमादरात् ॥ यतोहिकर्मभूरेषाजंबूद्वीपेमहामुने ॥ १६ ॥ तत्रापिभारतंश्रेष्ठमतोन्याभोगभूमयः ॥ कदाचिल्लभ्यतेमर्त्यैःसह
स्रैर्मुनिसत्तम॥१७॥अत्रजन्मसहस्राणांमानुष्यंपुण्यसंचयम्॥१८॥स्वर्गापवर्गास्पदमार्गभूतेधन्यास्तुतेभारतभूमिभागे ॥गायंतिदेवाःकिलगीतकानिभवं
तिभूयःपुरुषाःसुरत्वात् ॥ १९॥ अवाप्यमानुष्यमयंकदाचिद्विहत्यशंभौपरमात्मभूते ॥ फलानिसर्वाणितुकर्मजानियास्यामहेतत्तनुताहितस्य॥२०॥
प्राप्स्यंतिधन्याःखलुतेमनुष्यावयंकृताःकर्मणिसंनिविष्टाः ॥ जानीमतैस्तद्विशिवंसुखायतेभारतेचेंद्रियविप्रधन्याः ॥ २१ ॥ लक्षयोजनविस्तारंसम
स्तपरिमंडलम् ॥ जंबूद्वीपंमयाख्यातंक्षारोदधिसुसंवृतम् ॥२२॥ संवेष्टचक्षारसमुदंधिंशतसाहस्रसंमितम् ॥ सएवद्विगुणोब्रह्मन्प्लक्षद्वीपःप्रकीर्तितः॥२३॥
गोमेदश्चैवचंद्रश्चनारदोदुंदुभिस्तथा ॥ सोमकःसुमनाःशैलोवैभ्राजश्चैवसप्तमः ॥२४॥ वर्षाचलेषुरम्येषुमुदितास्ससततंप्रजाः ॥ वसंतिदेवगंधर्वावर्षेष्वेतेषु
नित्यशः ॥ २५ ॥ नाधयोव्याधयोवापिजनानांतत्रकुत्रचित् ॥ दशवर्षसहस्राणितत्रजीवंतिमानवाः ॥ २६ ॥ अनुतप्ताशिखाचैवपापघ्नीत्रिदिवाकृपा॥

अमृतासुकृताचैवसत्तैवान्यत्रनिम्नगाः ॥ २७ ॥ क्षुद्रनद्यस्तथाशैलास्तथासंतिसहस्रशः॥ताःपिबंतिसुसंहृष्टानदीर्जनपदास्तुते॥ २८ ॥ नतत्रास्तियुगा
वस्थाययथास्थानेषुसप्तसु ॥ त्रेतायुगसमःकालःसर्वदैवमहामुने ॥ २९ ॥ विप्रक्षत्रियवैश्यास्तेशूद्राश्चमुनिसत्तम ॥ प्लक्षवृक्षप्रमाणस्तुतन्मध्येसुमहातरुः
॥ ३० ॥ प्लक्षस्तन्नामसंज्ञोवैप्लक्षोद्वीपोद्विजोत्तम ॥ इज्यतेतत्रभगवाञ्छंकरोलोकशंकरः ॥३१॥ हरिश्चभगवान्ब्रह्मायज्ञैर्मंत्रैश्चवैदिकैः ॥ संक्षेपेणतथाभू
यःशाल्मलित्वंनिशामय ॥ ३२ ॥ सप्तवर्षाणितत्रैवतेषांनामानिमेशृणु ॥ श्वेतोथहरितश्चैवजीमूतोरोहितस्तथा ॥ ३३ ॥ वैद्युतोमानवश्चैवसुप्रभःसप्त
मोमुने ॥ शाल्मलेनतुवृक्षेणतेनशाल्मलिसंज्ञितः ॥ ३४ ॥ द्विगुणेनसमुद्रेणसततंसंवृतःस्थितः ॥ वर्षाभिव्यंजिकानद्यस्तासांनामानिमेशृणु ॥ ३५ ॥
शुक्लारक्ताहिरण्याचचंद्राशुक्राविमोचना॥ निवृत्तिःसप्तमीतासांपुण्यतोयाःसुशांतिदाः ॥ ३६ ॥ सप्तैतानितुवर्षाणिचतुर्वर्णयुतानितु ॥ भगवंतंसदावि
ष्णुमिज्यतेविविधैर्मखैः ॥ ३७ ॥ देवानांतत्रसान्निध्यमतीवसुमनोरमे ॥ एषद्वीपःसमुद्रेणसुरोदेनसमावृतः ॥ ३८ ॥ द्विगुणेनकुशद्वीपःसमंताद्वाह्यतः
स्थितः ॥ वसंतितत्रदैतेयामनुजैःसहदानवाः ॥ ३९ ॥ तथैवदेवगंधर्वायक्षाःकिंपुरुषादयः ॥ वर्णास्तत्रैवचत्वारोनिजानुष्ठानतत्पराः ॥ ४० ॥ तत्रैव
चकुशद्वीपेब्रह्मभूतंजनार्दनम् ॥ यजंतिचतथेशानंसर्वकामफलप्रदम् ॥ ४१ ॥ कुशेशयोहरिश्चैवद्युतिमान्पुष्पवांस्तथा ॥ मणिद्रुमोमहाशैलःसप्तमो
मंदराचलः ॥ ४२ ॥ नद्यश्चसप्ततासांतुनामानिशृणुतत्त्वतः ॥ धूतपापाशिवाचैवपवित्रासंमितिस्तथा ॥ ४३ ॥ विद्यादंभामहीचान्यासर्वपापहरास्त्वि
माः ॥ अन्याःसहस्रशःसंतिशुभापोहेमवालुकाः ॥ ४४ ॥ कुशद्वीपेकुशस्तंबोघृतोदेनसमावृतः ॥ क्रौंचद्वीपोमहाभागश्रूयतांचापरोमहान् ॥ ४५ ॥
द्विगुणेनसमुद्रेणदधिमंडोदकावृतः॥वर्षाचलामहाबुद्धेतेषांनामानिमेशृणु॥४६॥ क्रौंचश्चवामनश्चैवतृतीयश्चांधकारकः ॥ दिवावृत्त्यमनाश्चैवपुण्डरीकश्च
दुंदुभिः ॥ ४७ ॥ निवसंतिनिरातंकावर्षशैलेषुतेषुवै ॥ सर्वसौवर्णरम्येषुसहदेवगणैःप्रजाः ॥ ४८ ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चानुक्रमोदिताः ॥
संतितत्रमहानद्यःसप्तान्यास्तुसहस्रशः ॥ ४९ ॥ गौरीकुमुद्वतीचैवसंध्यारात्रिर्मनोजवा ॥ ख्यातिश्चपुंडरीकाचयाःपिबंतिपयःशुभम् ॥ ५० ॥ भगवा
न्पूज्यतेतत्रयोगैरुद्रस्वरूपवान् ॥ दधिमंडोदकश्चापिशाकद्वीपेनसंवृतः ॥ ५१ ॥ द्विगुणेनाद्रयःसप्ततेषांनामानिमेशृणु ॥ पूर्वेतत्रोदयगिरिर्जलधारो
परेयतः ॥ ५२ ॥ श्यामोह्यस्तंगिरिश्चैवअंबिकेयश्चकेसरी ॥ शाकस्तत्रमहावृक्षःसिद्धगंधर्वसेवितः ॥ ५३ ॥ तत्रपुण्याजनपदाश्चातुर्वर्ण्यसमान्विताः॥
नद्यश्चात्रमहापुण्याःसर्वपापभयापहाः ॥ ५४ ॥ सुकुमारीकुमारीचनलिनीवेणुकादया ॥ इक्षुश्चरेणुकाचैवगभस्तिःसप्तमीतथा ॥ ५५ ॥ अन्याः
सहस्रशस्तत्रक्षुद्रनद्योमहामुने ॥ महीधरास्तथासंतिशतशोथसहस्रशः ॥ ५६ ॥ धर्महानिर्नतेष्वस्तिस्वर्गादागत्यमानवाः ॥ वर्षेषुतेषुपृथिवींनसं

घर्षःपरस्परम् ॥ ५७ ॥ शाकद्वीपेतुवैसूर्यःपूज्यतेजनपदैःसदा ॥ यथोक्तैरिज्यतेसम्यक्कर्मभिर्नियतात्मभिः ॥ ५८ ॥ क्षीरोदेनावृतःसोपिद्विगुणेनस
मंततः॥क्षीराब्धिःसर्वतोव्याप्तःपुष्कराख्येनसंवृतः ॥ ५९ ॥ द्विगुणेनमहावर्षस्तत्रख्यातोथमानसः ॥ योजनानांसहस्राणिपंचऊर्ध्वसमुच्छ्रितः ॥ ६० ॥
तावतैवतुलक्षाणिसर्वतोवलयाकृतिः ॥ पुष्करद्वीपवलयोमध्यमेनबिभर्तिच ॥ ६१ ॥ तेनैववलयाकारद्वयवर्षसमाकृतिः ॥ दशवर्षसहस्राणितत्रजीवं
तिमानवाः ॥ ६२ ॥ निरामयावीतशोकारागद्वेषविवर्जिताः ॥ अधमोत्तमतस्तेषांनव्यवस्थामहामुने ॥ ६३ ॥ सत्यानृतेनतस्यास्तांसदैववसतिः
सदा ॥ तुल्यवेषास्तुमनुजाहेमवर्णैकरूपिणः ॥ ६४ ॥ वर्षद्वयंतुकालेयभौमःस्वर्गोयमुत्तमः ॥ सर्वस्यसुखदःकालोजरारोगविवर्जितः ॥ ६५ ॥
पुष्करेधातकीखंडेमहावीतेमहामुने ॥ न्यग्रोधःपुष्करद्वीपेब्रह्मणःस्थानमुत्तमम् ॥ ६६ ॥ तस्मिन्निवसतेब्रह्मापूज्यमानःसुरासुरैः ॥ स्वादूदकेनांबु
धिनापुष्करंपरिवेष्टितम् ॥ ६७ ॥ एवंद्वीपाःसमुद्रैस्तुसप्तसप्तभिरावृताः ॥ द्वीपश्चैवसमुद्रश्चसमानोद्विगुणैःपरैः ॥ ६८ ॥ न्यूनातिरिक्ततातेषांसमुद्रे
पुसमानिवै ॥ पयांसिसर्वदासर्वकदाचिन्नैवजायते ॥ ६९ ॥ स्थालीस्थमग्निसंयोगादंभोधौमुनिसत्तम ॥ यथेंदुवृद्धौसलिलंवर्धतेक्षीयतेतथा॥ ७० ॥
उदयास्तमनेंत्विदोर्वर्धत्यापोह्रसंतिच ॥ अतोनानातिरेकांश्चपक्षयोःशुक्लकृष्णयोः ॥ ७१ ॥ अपांवृद्धिःक्षयोदृष्टःशतशस्तदशोत्तरम् ॥ समुद्राणां
मुनिश्रेष्ठसर्वेषांकथितंतव ॥ ७२ ॥ भोजनंपुष्करद्वीपेप्रजाःसर्वाःसदैवहि ॥ षड्रसंभुंजतेविप्रतत्रस्वयमुपास्थितम् ॥ ७३ ॥ स्वादूदकस्यपरतोनान्य
लोकस्यसंस्थितिः ॥ द्विगुणाहिरण्मयीभूमिःसर्वजंतुविवर्जिता ॥ ७४ ॥ लोकालोकस्ततःशैलःसहस्राण्यचलोहिसः ॥ उच्छ्रायेणचतावद्वियोजना
युतविस्तृतः ॥ ७५ ॥ तमश्चांडकटाहेनसेयमुर्वीमहामुने ॥ पंचाशत्कोटिविस्तारासप्तद्वीपामहीधरा ॥ ७६ ॥ आधारभूतासर्वेषांसर्वभूतगुणाधि
का ॥ सेयंधात्रीचकालेयसर्वेषांजगतामिला ॥ ७७ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांभुवनकोशवर्णनंनामचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ सनत्कु
मारउवाच ॥ रविचंद्रमसोर्यावन्मयूखाभासयंतिहि ॥ तावत्प्रमाणापृथिवीभूर्लोकःसतुगीयते ॥ १ ॥ भूमेर्योजनलक्षेतुसंस्थितंरविमंडलम् ॥ योज
नानांसहस्राणिदशैवपरिसंख्यया ॥ २ ॥ शशिनस्तुप्रहाणोयोजगतःपरिचक्षते ॥ रवेरूर्ध्वंशशीतस्थौलक्षयोजनसंख्यया ॥ ३ ॥ ग्रहाणांमंडलंकृत्स्नं
शशिनोपरिसंस्थितम् ॥ सनक्षत्रंसहस्राणिदशैवपरितोपरि ॥ ४ ॥ बुधस्तस्मादथोकाव्यस्तस्मादुपरिमंगलः ॥ बृहस्पतिस्तदूर्ध्वंतुतस्योपरिशनै
श्चरः ॥ ५ ॥ सप्तर्षिमंडलंतस्माल्लक्षमेकंतुसंस्थितम् ॥ ऋषिभ्यस्तुसहस्राणांशतादूर्ध्वंव्यवस्थितः ॥ ६ ॥ मेढीभूतःसमस्तस्यज्योतिश्चक्रस्यवैध्रुवः॥
भूर्भुवःस्वरितिज्ञेयंभुवोर्ध्वंतुध्रुवादवाक् ॥ ७ ॥ एकयोजनकोटीतुयत्रतेकल्पवासिनः ॥ ध्रुवादूर्ध्वंमहर्लोकःसप्तैतेब्रह्मणःस्मृताः ॥ ८ ॥ सनकश्चस

नंदश्वतृतीयश्वसनातनः ॥ कपिलश्चासुरिश्चैववोढुःपंचशिखस्तथा ॥ ९ ॥ चतुर्गुणोत्तरेचोर्ध्वंजनलोकात्तपःस्मृतः ॥ वैराजायत्रवैदेवाःस्थिता
दाहविवर्जिताः ॥ १० ॥ षड्गुणेनतपोलोकात्सत्यलोकोव्यवस्थितः ॥ ब्रह्मलोकःसविज्ञेयोवसंत्यमलचेतसः ॥ ११ ॥ सत्यधर्मरताश्चैवज्ञा
निनोब्रह्मचारिणः ॥ यद्गामिनोथभूर्लोकेनिवसंतिहिमानवाः ॥ १२ ॥ भुवर्लोकेतुसंसिद्धामुनयोदेवरूपिणः ॥ स्वर्लोकेतुसुरादित्यामरुतो
वसवोश्विनौ ॥ १३ ॥ विश्वेदेवास्तथारुद्राःसाध्यानागाःसुरादयः ॥ नवग्रहगणास्तत्रऋषयोवीतकल्मषाः ॥ १४ ॥ एतेसप्तमहालोकाःकालेयक
थितास्तव ॥ पातालानिचसप्तैवब्रह्मांडस्यचविस्तरः ॥१५॥ दधिवृक्षफलंयद्वत्तस्यचोर्ध्वमधस्तथा ॥ एतदंडकटाहंचसर्वतोवैसमावृतम्॥१६ ॥ पय
सादशगुणेनसर्वतस्तत्समावृतम्॥ वह्निनावायुनाचैवनभसातमसातथा ॥ १७॥ भूतादिनापिमहतादशोत्तरेणवेष्टितम्॥ महांतंचसमागत्यप्रधानपुरुषः
स्थितः ॥ १८ ॥ अनंतस्यनतस्यास्तिसंख्यापिपरमात्मनः ॥ तेनानंतइतिख्यातःप्रमाणंनापिवैयतः ॥ १९ ॥ हेतुभूतःसमस्तस्यप्रकृतिःसापरामुने ॥
अंडानांतुसहस्राणांसहस्राण्ययुतानिच ॥ २० ॥ ईदृशानिप्रभूतानितस्मादव्यक्तजन्मनः ॥ दारुण्यग्निर्यथातैलंतिलेषुपयसिघृतम् ॥ २१ ॥ तथासौपर
मात्मावैसर्वव्याप्यात्मवेदनः ॥ आदिबीजात्प्रभवंतिततस्तेभ्योपरेद्रुमाः ॥ २२ ॥ तेभ्यःपुत्रस्तथान्येषांबीजान्यन्यानिवैयतः ॥ महदादयोविशेषां
तास्तद्भवंतिसुरादयः ॥ २३ ॥ बीजाद्वृक्षप्ररोहेणयथानापचयस्तरोः ॥ सूर्यकांतमणेःसूर्याद्यद्वद्वह्निःप्रजायते ॥ २४ ॥ तद्वत्संजायतेसृष्टिःशिवस्तत्र
नकामयेत् ॥ शिवशक्तिसमायोगेदेवाद्याःप्रभवंतिहि ॥ २५ ॥ तथाकर्मस्वनेकेषुप्ररोहमुपयांतिवै ॥ ब्रह्माविष्णुश्वरुद्रश्वसशिवःपरिगीयते ॥ २६ ॥
यस्मादुत्पद्यतेसर्वंयस्मिंश्चलयमेष्यति ॥ कर्ताक्रियाणांसर्वासांसशिवः परिगीयते ॥२७॥ मुनयऊचुः॥षडक्षरंत्वयाप्रोक्तंपुरासर्वार्थसाधकम्॥ शिवस्य
परमंमंत्रंभुक्तिमुक्तिकरंशिवम्॥ २८ ॥ वयंतुश्रोतुमिच्छामोमंत्रान्परमसाधनान् ॥ यैःपुरामुनयःसिद्धाःशिवादमरतांगताः ॥ २९ ॥ सूतमांडव्यादयः
सर्वेतान्सर्वांस्त्वंवदस्वनः ॥ सूतउवाच ॥ प्रवक्ष्यामिमतंशंभोर्यदुक्तंहिपुराकिल ॥३०॥ शंकरेणविशाखस्यतच्छृणुध्वमतंद्रिताः ॥ प्रणवंप्रथमंगृह्यप
श्चादेवंसमुद्धरेत् ॥ ३१ ॥ त्रिवर्गस्यतृतीयंतुपंचमस्वरसंयुतम् ॥ मस्तकेबिंदुसंयुक्तंपंचमंपरिगृह्यच ॥ ३२ ॥ अष्टमस्यतृतीयंतुसविसर्गंसमुद्धरेत् ॥
शिवस्यपरमोह्येषमंत्रःसर्वार्थसाधकः ॥ ३३ ॥ परोमोक्षःपरःशुद्धःपरोधर्मःपरोविभुः ॥ ब्रह्महत्यादिपापानिअगम्यागमनानिच ॥ ३४ ॥ सुरापःस्वर्ण
हारीचभ्रूणहागुरुतल्पगः ॥ विश्वस्तमित्रहाचैवगुरुघ्नःपितृघातकः ॥३५॥ मातृहास्त्रीगुरुघ्नश्चअन्यान्युग्राणिसंघशः ॥ स्मरणान्मंत्रराजस्यभस्मसाद्यां
तिनित्यशः ॥ ३६ ॥ अत्यद्भुतानिपापानिशतशोथसहस्रशः ॥ शतजाप्यस्यमंत्रस्यपुष्पंन्यस्यशिवस्यके ॥३७॥ कोटिमंत्रार्जितंपुण्यंलभतेसाधको

त्तमः ॥ त्रिसंध्यंयोजपेन्मंत्रंशतमेकंप्रयत्नतः ॥ ३८ ॥ संपुटेनावरोहेणननमृत्योर्वशगोभवेत् ॥ ललाटेवक्त्रहृदयेनाभौगुह्येतथैवच॥३९॥ बाह्वोस्तुहस्त
योःपार्श्वेपृष्ठेजान्वोस्तुजंघयोः ॥ गुल्फयोःपादयोश्चैवसृष्टिन्यासक्रमेणतु ॥४० ॥ एवंविन्यस्यदेहेतुइमंमंत्रमनुस्मरेत् ॥ मुच्यतेसर्वपापेभ्यःकोटिज
न्मशतैरपि ॥४१॥ वज्रोपलमहावर्षचौरव्याघ्रभयादिभिः ॥ आधिभिःसाध्वसैरन्यैर्ज्वरकुष्ठभयादिभिः॥४२॥ रोगैर्विमुच्यतेसर्वैर्येभ्योदुःखमिहागतम्॥
संग्रामेजयमाप्नोतिसौभाग्यमतुलंभवेत् ॥ ४३ ॥ जपंचमानसंकुर्याद्दिवारात्रंचसाधकः ॥ सर्वावस्थागतोनित्यंजपन्सिद्धिमवाप्नुयात् ॥४४ ॥ त्रिकालं
भार्यंयायुक्तोयंत्रारूढस्तुसाधकः ॥ नोपवासंनमौनंचब्रह्मचर्यंनचास्तिकम् ॥ ४५ ॥ सर्वकर्मप्रवृत्तस्तुसिद्ध्यत्येवनसंशयः ॥ पुनरन्यत्प्रवक्ष्यामिध्या
नंसर्वार्थसाधनम् ॥ ४६ ॥ कुंभमुद्रांपरांबध्वासुखासनस्थितःपुमान् ॥ आत्मदेहेसदाध्यायेन्मंत्रंमृत्युंजयंपरम् ॥४७॥ वर्षमाणंसुधाराभिःसहस्रदलसंयु
तम्॥श्वेतपद्मंसुचंद्रंवैपयस्तालुनिसंस्थितम् ॥ ४८ ॥ एवंहिध्यायतस्तस्यदिव्यंरूपंप्रजायते ॥अणिमादिगुणावाप्तिर्मानसीगतिरूपवान् ॥ ४९ ॥ सर्व
ज्ञःसर्वगोदृष्टोहरदर्शीपराश्रुतिः ॥ वत्सरात्सर्वमाप्नोतिएकचित्तःसमाहितः ॥५०॥ तत्रास्याभ्यासयुक्तश्चखेचरत्वंप्रजायते ॥ ५१ ॥ सूतउवाच ॥ समा
साद्वःसमाख्यातंयदुक्तंशंभुनापुरा ॥ देव्याश्चकार्तिकेयेननंदिनोक्तमृषेस्तुयत् ॥५२ ॥ अगस्त्यप्रमुखाविप्रामुनयोवीतकल्मषाः॥बभूवुर्मंत्रराजेनजरा
मरणवर्जिताः ॥ ५३ ॥ एतदुक्तंकुमारेणव्यासस्यामिततेजसः ॥ मयातुभ्यंसमाख्यातंमंत्रंमृत्युविनाशनम् ॥ ५४ ॥ इतिश्रीशिवमहापुराणेधर्म
संहितायांमृत्युंजयोद्धरणंनामपंचत्रिंशोऽध्यायः ॥ ३५ ॥ सूतउवाच ॥ एतद्वोमेसमाख्यातंपुनर्वक्ष्याम्यतःपरम् ॥ हृदयंमंत्रराजस्यध्यानंजप्यंसदार्च
नम् ॥ १ ॥ सद्यादिपंचवक्त्राणिनित्यंसंनिहितानिमे ॥ यस्यैवमस्तिविज्ञानंसोहंनास्त्यत्रसंशयः ॥ २ ॥ नास्यसृष्ट्याविसृष्ट्यावापंचवक्त्राणिमे
शुभे ॥ मंत्रराजंजपेद्यस्तुमुच्यतेसर्वकिल्बिषैः ॥ ३ ॥ सिध्यंतिसर्वकर्माणिअणिमादिगुणाअपि ॥ देव्युवाच ॥ श्रुतंध्यानंमयादेवमंत्रंचामृत्यु
कारकम् ॥ ४ ॥ संयतैर्योगिभिःप्राप्यंनकदाचिद्दुरात्मभिः ॥ कामक्रोधादिभिर्दोषैरजसाव्याकुलंजगत् ॥ ५ ॥ द्वंद्वदुःखशताविष्टमिंद्रियार्थैःसुसं
युतम् ॥ जगतीदृग्विधेदेवसंसारेदुःखसंज्ञिते ॥ ६ ॥ हितार्थंसर्वमर्त्यानांमोक्षोपायंवदस्वमे ॥ इत्युक्तस्तामुवाचेदंशृणुष्वार्येयथातथम् ॥ ७ ॥ देहे
स्मिन्नहमित्येकःपृथक्किंचित्यःसदाबुधैः ॥ एवंज्ञात्वाचरँल्लोकेमुच्यतेभवबंधनात् ॥ ८ ॥ ममेतिपरमंदुःखंनममेतिपरंसुखम् ॥ द्वाविमौबंधमोक्षाणांन
ममेतिममेतिच ॥ ९ ॥ यस्यनास्त्यात्मनोदेहस्तस्यदारादिकंकथम् ॥ गृहक्षेत्रादिकंतद्वद्देहबद्धोनमुच्यते ॥ १० ॥ एषपाशुपतोयोगःसमासात्कथितो
मया ॥ देव्युवाच ॥ यत्त्वयोक्तंनतत्प्राप्यंमानवैरजितेंद्रियैः ॥ ११ ॥ ममाहमितिचाथातिवचनंहिमनोजवः ॥ महादेवउवाच ॥ जेतुंरागादयः

शक्यानतुजन्मांतरैरपि ॥ १२ ॥ कृतेयुगेपिदेवेशिअल्पायुर्मनुजोयतः ॥ त्रेतायांद्वापरेचैवकिमुप्राप्तेकलौयुगे ॥ १३ ॥ व्यासउवाच ॥ भगवंस्तमु
पायंमेवक्तुमर्हस्यशेषतः ॥ अनायासेनयेनेमंनिस्तरंतिभवार्णवम् ॥ १४ ॥ मानुषाःकलुषोपेताःश्रोतुमिच्छामितत्वतः ॥ सनत्कुमारउवाच ॥ तस्या
स्तद्वचनंश्रुत्वाकृपायुक्तोमहेश्वरः ॥ १५ ॥ मर्त्यानांहितकामायप्राहेदंपार्वतींततः ॥ शंकरउवाच ॥ यद्येवंमुक्तिकामासिमानवानांहितायवै ॥ १६ ॥
तच्छृणुष्वक्रियायोगंक्लेशानांहानिकारकम् ॥ सयोगःप्राप्यतेसद्भिश्चित्तस्यैवात्मनातुयः ॥ १७ ॥ यस्तुबाह्यार्थसंयोगःक्रियायोगःसउच्यते ॥ एवं
ज्ञात्वातुप्रथमंक्रियायोगंसुसंमतम् ॥ १८ ॥ क्रियायोगंविनागंतुंशक्तोनैवकथंचन ॥ ततोद्विजैश्चराजन्यैर्वैश्यैःशूद्रैस्तथाप्रिये ॥ १९ ॥ शूद्रैश्चकर्म
निरतैःक्रियायोगाश्रितंमनः॥कार्यंलिंगार्चनेनित्यंमदनुष्ठानतत्परैः ॥ २० ॥ मल्लिंगार्चनशक्तानांनकिंचिद्भुविदुर्लभम् ॥ तन्निष्ठास्तद्गतधियस्तत्क
र्माणस्तदाश्रिताः ॥ २१ ॥ जपपूजापराश्चैवतस्यैवयजनेरताः ॥ व्रतोपवासनिरताहिंसादिपरिवर्जिताः ॥ २२ ॥ रुद्रतुल्याभविष्यंतिममलोकेनरो
त्तमाः ॥ योमांपश्यतिसर्वत्रसमवस्थितमीश्वरम् ॥ २३ ॥ सत्तावान्सर्वभूतेषुसरुद्रोनात्रसंशयः ॥ जंगमाजंगमेयोमांवेत्त्यात्मनिपरेतथा ॥ २४ ॥
समतासर्वभूतेषुसरुद्रोनात्रसंशयः ॥ संप्रोक्तलक्षणंलिंगंकारयित्वातुस्थापयेत् ॥ २५ ॥ सुवर्णरजताद्यैस्तुसत्कृतंवासुधातुभिः ॥ सुपाषाणैःसुरत्नैश्च
मृन्मयंवापिशक्तितः ॥ २६ ॥ विविधैःपूजोपहारैश्चभक्त्यातन्नित्यमर्चयेत् ॥ सएवंपूजितोनित्यंध्यातश्चैवमहेश्वरि ॥ २७ ॥ भुंजन्गच्छंस्तथा
तिष्ठन्पार्श्वेपृष्ठेतथाग्रतः ॥ उपर्यधस्तथाध्यातःसतुमुक्तिकरोभवेत् ॥ २८ ॥ जलैःशुभैर्घृताद्यैस्तुस्नानैर्गंधानुलेपनैः ॥ चंदनागरुकर्पू
रैर्गीतवाद्यैर्मनोरमैः ॥ २९ ॥ वासोभिर्भूषणैश्चैवभक्त्याचप्रणतःसदा ॥ प्रीणयन्सततंलिंगमर्चयेन्मत्परायणः ॥ ३० ॥ मत्कथायां
सदाचित्तंसंध्यायेत्परमेश्वरम् ॥ श्रोतव्याभैरवाद्यास्तुकथाःपौराणसंभवाः ॥ ३१ ॥ एवंसमर्पितमनाःपुरुषोमत्परायणः ॥ चित्तस्थानखिला
न्भोगान्प्राप्नोत्यखिलनायकः ॥ ३२ ॥ कामानुसक्तपुरुषोमत्क्रियापरमःपरम् ॥ पदमाप्नोतिज्ञात्वैवमत्क्रियापरमाभव ॥ ३३ ॥ शिवंचित्तगतंयस्यशिवं
बुद्धिगतंचयत् ॥ तथाहंकारगोरुद्रोयोरुद्रोदेहसंस्थितः ॥ ३४ ॥ करोतिकर्तृभूतोसौरस्यस्थावरस्यच ॥ एवंज्ञात्वानरोदेविमुच्य
तेभवबंधनात् ॥ ३५ ॥ मय्येवसंन्यसेत्सर्वमात्मनःकर्मकेवलम् ॥ तदनंतफलंज्ञेयंसचात्मानंसमुद्धरेत् ॥ ३६ ॥ एतेनैवोपदेशेनतवाख्यातंमयाधुना ॥
मानुषाणांहितार्थायसंसारभयभीरुणा ॥ ३७ ॥ ज्ञानयोगस्तुसंयोगश्चित्तस्यैवात्मनातुयः ॥ क्रियायोगस्तुबाह्यार्थोद्वयोर्मुक्तिरुदाहृता ॥ ३८ ॥
क्रियायोगंविनायोगंदुःसाध्यममरैरपि ॥ क्रियायोगाद्धिदेवत्वंततोमुक्तिमवाप्नुयात् ॥ ३९ ॥ यथाग्निस्तृणजातानिदहत्यनिलसंगतः ॥ तथालिंगार्चने

भावोदहेत्पापान्यशेषतः ॥ ४० ॥ मुधैवोक्तंभवेत्पापंमुधैवोक्तंभवेत्क्षयम् ॥ मुधैवनष्टंतज्जन्मयत्रनाराधितोहरः ॥ ४१ ॥ नवस्त्रभूषणैरत्नैर्नसुवर्णस्यरा
शिभिः ॥ तुष्टिंयातिमहेशानोविनाभक्तिंमहेश्वरि ॥ ४२ ॥ कर्मभूमौहिमानुष्यमाप्यतेबहुभिर्युगैः ॥तत्प्राप्यनार्चयेल्लिंगंतस्यजन्मानिरर्थकम् ॥४३॥
सनत्कुमारउवाचं ॥ इत्येतत्कथितंदेव्याःशंकरेणपुरामया ॥ तवसंक्षेपतोह्युक्तंकिंभूयःश्रोतुमिच्छसि ॥ ४४ ॥ व्यासउवाच ॥ ब्राह्मणाःक्षत्रियावै
श्याःशूद्रावाचरितव्रताः ॥ यैर्मंत्रैरर्चयंतिस्मक्रमान्मेब्रूहितान्मुने ॥ ४५ ॥ सनत्कुमारउवाच ॥ अम्नायैर्विहितैर्मंत्रैस्तैर्यजंतिद्विजोत्तमाः ॥ तद्दतेतुपुरा
णोक्तैरर्चयेत्समुपादितैः ॥ ४६ ॥ तान्प्रवक्ष्यामियत्नेनशृणुष्वगदतोमम ॥ तद्दीक्षयाभियुक्तस्त्वंभूत्पूर्वोमहामुने ॥ ४७ ॥ शिवमूर्तिभिस्तत्सर्वंज
गदेतच्चराचरम् ॥ व्याप्तंहिवर्ततेचेदंतच्छृणुष्वयथातथम् ॥ ४८ ॥ पृथिव्यापस्तथातेजोवायुराकाशएवच ॥ सर्वगःशशिसूर्यौचशिवप्रकृतयःपराः ॥
॥ ४९ ॥ सर्वेमंत्रात्मकादेवामंत्राबिंदुसमाश्रिताः ॥ बिंदुर्नादस्थितोनित्यंनादश्चपरमात्मनि ॥ ५० ॥ मंत्रैस्तैःपूज्यतेदेवःशिवःसर्वमयोमहान् ॥ यका
रस्याष्टमंबीजंमात्राद्वादशभेदितम् ॥ ५१ ॥ अक्षरंनिरतंकृत्वाषडंगंशिवमुच्यते ॥ दीर्घाद्यंगाःसमाख्याताह्रस्थावक्राणिशूलिनः ॥ ५२ ॥ शिवस्य
परमाह्येषापूजाप्रोक्तामनीषिभिः ॥ एवंसंपूजितंलिंगंसर्वकामफलप्रदम् ॥ ५३ ॥ इहलोकेपरेचैवमुनेसत्यमुमापतेः ॥ मंत्रोयंसर्वगोनित्यंसर्वव्याप्यव्य
वस्थितः॥५४॥ज्ञातव्यःसुप्रयत्नेनध्येयःपूज्यश्चसर्वदा ॥ प्रसादोमेकृतोदेविमंत्राख्यानान्महेश्वरि ॥ ५५ ॥ प्रासादंयेनविख्यातंयास्यतीहमहीतले ॥
योनवैवेत्तिसंयुक्तंपंचमंत्रंमहातनुम्॥५६॥सुकलाभिःसमायुक्तंनसमाहेश्वरोभवेत् ॥पंचवक्त्राणिदेवस्यानित्यंसंनिहितानिच॥५७॥ तानिवक्ष्यामियैर्मंत्रैर
र्च्यंतेचेहशूलिनः॥५७॥सद्योजातंप्रपद्यामिसद्योजातायवैनमः॥५८॥द्विपादौतुसमाख्यातौतृतीयंशृणुतानघाः॥भवेभवेनातिभवेभवस्वमांभवोद्भवः ५९
प्रणवादिसमायुक्तंनमस्कारेणसंयुतम् ॥ वामोज्येष्ठश्चरुद्रश्चकालरुद्रस्तृतीयकः ॥ ६० ॥ कालःकलविकर्णश्चबलप्रमथनस्तथा॥सर्वभूतदमोवापिमनो
न्मनस्तथैवच ॥६१॥ नमस्कारेणसंयुक्तंद्वितीयंपरिकीर्तितम् ॥ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यश्चसर्वतः ॥६२॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेस्तुरुद्र
रूपेभ्यः॥चतुष्पादंसमाख्यातंनमस्कारेणसंयुतम् ॥६३॥ सर्वेषांचैवमंत्राणांमंत्रराजंप्रकीर्तितम् ॥ अस्यैवाभ्यासयोगेननास्तितद्यन्नसाधयेत्॥६४॥ देव
त्वंमानुषत्वंचगांधर्वत्वंचराक्षसम् ॥ असाध्यंसाधयेन्मंत्रीमंत्रराजप्रभावतः॥६५॥त्रैलोक्येयाःस्त्रियःकाश्चिदाकृष्टाःशतशोपराः ॥ अणिमादीन्प्रयच्छंति
नात्रकार्याविचारणा॥६६॥देवान्दैत्यांस्तथासिद्धान्सयक्षोरगराक्षसान् ॥ भूतवैतालपैशाचान्सर्वांश्चवशमानयेत्॥६७॥मृत्युबंधार्तिभयदंदुःखंग्रहसमुद्भ
वम्॥स्मरणान्मंत्रराजस्यभस्मसाद्यातिनित्यशः॥६८॥ऐकाहिकंद्व्याहिकंचतथात्रिदिवसंज्वरम्॥चातुर्थिकंतथाघोरंनाशयत्याशुदर्शनात्॥६९॥ स्थाव

रंजंगमंचैवकृत्रिमंचापियद्विषम् ॥ दंतोद्भवंनखोद्भूतंहंतिमंत्रप्रभावतः॥७०॥सुमंत्रीशतजप्येनशतजन्मसमुद्भवम्॥पापंहंतिनसंदेहः स्वर्गमोक्षंचविंदति॥
॥ ७१ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांमंत्रराजप्रभावोनामषट्त्रिंशोऽध्यायः ॥ ३६ ॥ मुनयऊचुः ॥ एवंप्रभावस्यहिमंत्रराज्ञोविधानमुक्तंमुनिना
पुराते ॥ तद्ब्रूहिनःसर्वमशेषतोन्यद्धितायकालेयततोनराणाम्॥१॥ व्यासउवाच॥शृणुध्वमेतन्मुनयःसमेताःसनत्कुमारेणविधानमुक्तम् ॥समासतोदेव
मतोविधानंसुमंत्रराजस्यहिसाधनाय॥२॥देशेसुगुप्तेसुमनोरमेतुस्नात्वाशुचिश्चैकमनापिभूत्वा ॥ संस्मृत्यमंत्रंमनसातदंगैन्यासंकराभ्यांकरयोश्चकुर्यात्॥
॥ ३ ॥ हकारयुक्तेनतुवह्निनाथपश्चात्षडंगंगुरुणास्वरेण ॥ ४ ॥ चतुर्भिर्हृदयंप्रोक्तंचतुर्भिस्तुशिरोभवेत् ॥ अष्टभिस्तुशिखाज्ञेयाअष्टभिःकवचंन्य
सेत् ॥ ५ ॥ अष्टभिर्नेत्रमुद्दिष्टंफड्वस्तेंसंनियोजयेत् ॥ एवंविन्यस्यदेहेतुमंत्ररूपमनुस्मरेत् ॥ ६ ॥ माहेश्वरंवपुःकृत्वाजटामुकुटभूषणम् ॥ वामदेवाय
ज्येष्ठायनमोरुद्रायचनमः ॥ ७ ॥ कलविकरणायनमोबलप्रमथनायनमः ॥ सर्वभूतदमनायनमोमनोन्मनायनमः ॥ ८ ॥ सर्वाभरणपूर्णांगंचंद्रा
र्द्धकृतशेखरम् ॥ स्वशरीरंततःपूज्यपुष्पधूपविलेपनैः ॥ ९ ॥ स्थंडिलेवापिलिंगेवापश्चाद्यजनमारभेत् ॥ ॐह्रांहृदयायनमःहृदयमाग्नेय्यांन्यसेत्
॥ १० ॥ ॐह्रींअघोरेभ्यःशिरसेस्वाहाशिरईशान्यांन्यसेत् ॥ ॐह्रूंघोरघोरतरेभ्यःशिखायैवषट्शिखांनैर्ऋत्येविन्यसेत् ॥११॥ ॐह्रैंसर्वतःसर्वेभ्यःकव
चायनमःकवचंवायव्येविन्यसेत् ॥ ॐह्रौंनमस्तेरुद्ररूपेभ्योनेत्राभ्यांवषट्नेत्रमुपरिविन्यसेत्॥१२॥ॐह्रःअस्त्रायफट्अस्त्रंचतुर्दिक्षुविन्यसेत्॥एवंन्यस्यवि
धानेनहकारंवह्निसंयुतम् ॥ १३ ॥ नादबिंदुकलाक्रांतमघोरंहृदयेयजेत् ॥ मध्येघोरेश्वरींदेवींतस्योत्संगेतुपूजयेत् ॥१४॥ दंडंशशिकरंचैवअंकुशंकर्त
रीध्वजौ ॥ सविसर्गापरादेवीअघोरापरिकीर्तिता ॥१५॥ आदिबीजंसमुद्दिश्यद्वितीयस्यचतुर्थकम् ॥ त्रयोदशेनचाक्रांतंवह्निमेकादशान्वितम् ॥१६॥
अष्टमस्यदिमंरूपंसमस्तस्यचतुर्थकम् ॥ हकारंत्रिस्वराक्रांतंहुंफट्कारेणसंयुतम् ॥ १७ ॥ एषाविद्यामहाविद्यानाम्नाघोरेश्वरीतिच ॥ सकारेपूजिता
देवीसद्यःप्रत्ययकारिका॥१८॥एवंसंपूजयेद्देवमघोरंघोरनाशनम् ॥ मनसापूजयेद्यस्तुएकचित्तःसमाहितः ॥१९॥ सर्वान्कामानवाप्नोतिइहलोकेपरत्रच
॥२०॥कपालमालाभरणंचतुर्भुजंवक्रेक्षणंशूलधराभयप्रदम्॥त्रिलोचनंखंडशशांकधारिणंध्यायेद्धरंयःसलभेतईप्सितम् ॥२१॥ सर्वावस्थागतोनित्यंयः
पूजयतिशंकरम्॥अपवित्रः पवित्रोवास्वच्छंदस्तेनकीर्तितः ॥२२॥ बिल्वपुष्पैस्तुयोलक्षंजप्त्वाहोमंतुकारयेत्॥एकलिंगेशुचौदेशेतस्यप्रत्यक्षतामियात्
॥ २३ ॥ ददात्यभिमतांसिद्धिमणिमादिगुणात्मिकाम् ॥ कमलैर्योयजेल्लक्षंपश्चाद्धोमंसमारभेत् ॥२४॥ ततः प्रसन्नतांगत्वादेहेनान्येनशंकरः॥नयत्यभी
प्सितांल्लोकाञ्जरामृत्युविवर्जितान् ॥ २५ ॥ श्रीपत्रगुग्गुलस्यापिगुटिकाभिः समाचरेत् ॥ जपंहोमंविधानेनपातालेसिद्धिमाप्नुयात् ॥ २६ ॥

सततंयोजपेन्मंत्रमघोरंक्लेशनाशनम् ॥ तस्यसर्वाःप्रसिद्ध्यंतिसिद्धयोमनसेप्सिताः ॥ २७ ॥ तिलहोमेननश्यंतिग्रहपीडाद्युपद्रवाः ॥ सघृतशर्करया
चआयुर्वृद्धिर्भवेदिह ॥ २८ ॥ क्षीरवृक्षसमिद्भिस्तुसमृद्धिरुपगच्छति ॥ सदाघोरेश्वरींदेवींयोजपेदर्चयेन्नरः ॥ २९ ॥ अघोरंहियथादेवंद्विगुणंतस्य
तत्फलम् ॥ यंयंकाममभिध्यायंस्त्रिषुलोकेषुदुर्लभम् ॥ ३० ॥ तंतंप्राप्नोत्यसंदिग्धंदेव्याश्चैवप्रभावतः ॥ जप्यहोमार्चनेनैवदेव्याःकर्मणिसाधने ॥३१॥
बद्ध्वाघोरेश्वरींमुद्रांदर्शयेद्देवतुष्टये ॥ तांप्रवक्ष्यामिवःसम्यक्सर्वसिद्धिकरांशुभाम् ॥ ३२ ॥ संमुखौतुकरौकृत्वास्वान्योन्यंग्रंथयेंगुलीः ॥ उभयोस्त
र्जनीभ्यांतुसंगृह्णीयादनामिके ॥ ३३ ॥ संमृश्यमध्यमेचोर्ध्वमंगुष्ठौश्लेषयेत्तयोः ॥ कृत्वाह्यधोमुखांमुद्रांललाटेसंनिवेशयेत् ॥ ३४ ॥ बंधौकृत्वात
तोनेत्रेजिह्वांचैवहिचालयेत् ॥ संस्मरेत्परमंमंत्रंसर्वसिद्धिप्रवर्तकम् ॥ ३५ ॥ ततःसिद्ध्यंतिभूतानिसदेवासुरमानुषाः ॥ ग्रहवेतालडाकिन्योदुष्टाश्चान्ये
सहस्रशः ॥ ३६ ॥ प्रलयंयांतितेसर्वेमैत्रीमायांतिमानवाः॥स्वच्छंदस्यमयाख्यातंपूजनंदिशिसंस्थितम् ॥ ३७ ॥ लिंगेवास्थंडिलेवापिसर्वकामफल
प्रदम् ॥ इहलोकेपरेस्वर्गेराज्यंचैवलभेन्नरः ॥ ३८ ॥ यथैवपूज्यतेशंभुर्मंत्रैःपंचभिरेवच ॥ मुनयस्तत्प्रवक्ष्यामिस्वर्गमोक्षकरंपरम् ॥ ३९ ॥ तत्पुरु
षायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ ४० ॥ चतुर्थस्तुमहावक्त्रंगायत्र्यैतन्निगद्यते ॥ पंचमंतुतथावक्त्रंशृणुध्वमेकचिंतया ॥ ४१ ॥
ईशानःसर्वविद्यानामीश्वरः सर्वभूतानाम् ॥ प्रजापतिर्ब्रह्मास्वयंभुवेब्रह्मणेनमः ॥ ४२ ॥ सद्यादिभिर्यजंतीहयेशिवंसर्वकारणम् ॥ तेमोक्षमाप्नुवंतीहमुन
योमोक्षकांक्षिणः ॥ ४३ ॥ ईशानादिक्रमेणैवईशानमर्चयंतिये ॥ तेस्वर्गस्यहिभोक्तारोमर्त्यलोकसुखस्यच ॥ ४४ ॥ पूर्ववक्त्रंमयाख्यातमूर्ध्ववक्त्रं
हितापसाः ॥ तस्मात्संपूजयेन्नित्यमेकेनैवयतात्मवान् ॥ ४५ ॥ लिंगेवास्थंडिलेशंभुंसर्वकामफलाप्तये ॥ ४६ ॥ इतिश्रीशिवमहापुराणेधर्मसंहिता
यांपंचब्रह्माख्यानंनामसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥छ॥ व्यासउवाच ॥ भुक्तिमुक्तिकरोदेवःशंकरःपरिकीर्तितः ॥ विनामंत्रार्चितःशंभुःकिंपुनर्मंत्रसं
युतः ॥ १ ॥ ज्ञातंमयामुनिश्रेष्ठकिमेतत्सकलंजगत् ॥ ज्ञानवान्मोहितोदैवान्मोहोमांसमुपाश्रितः ॥ २ ॥ जानंतोपिनजानंतिविष्णुमायाविमोहिताः॥
लोकःसुप्तोविबुद्धस्तुकथंनिद्रामुपेयिवान् ॥ ३ ॥ आद्येनस्वस्यजानातिमृत्युसेनापतिष्यति ॥ कस्मान्नयततेधर्मेमोक्षंप्रतिमहामुने ॥ ४ ॥ एतत्सर्वं
समाख्याहिमानुषाणांहितार्थतः ॥ ५ ॥ सनत्कुमारउवाच ॥ पंचभूतात्मकंसर्वंजगत्स्थावरजंगमम् ॥ स्वकर्मवशगाःसर्वेप्राणिनःसंभवंत्यतः ॥ ६ ॥
आहारनिद्राभयमैथुनंचसामान्यमेतत्स्वपदाचराणाम् ॥ ज्ञानेनहीनाःपशुभिश्चतुल्याःस्वकर्मबद्धाःप्रभवंतिनित्यम् ॥ ७ ॥ नयत्कृतेनापियथात
थापिभावस्तदाज्ञानवतांनराणाम् ॥ प्रयांतिसम्यग्विधिनास्वकर्मचतुर्विधाभूतगणानृलोके ॥८॥ भवंतियांतीवपुनर्विनाशंप्रबुद्ध्यमानानहिचोद्विजंते॥

सुसंच रंतोवहुदुःखखिन्नाःकृत्देहपापंनिरयेप्रयांति ॥ ९ ॥ तेस्थावरत्वंनिरयावतीर्णास्तिर्यक्त्वमिच्छंतिपुनःसमस्तम् ॥ पश्चात्तथामानुषतांकुयो
निस्तवंनकुर्वंतियदास्व धर्मैः ॥ १० ॥ शिवेगुरौवापिहिमुक्तिहेतोःस्वकर्मबद्धास्तुभवेनिमग्नाः ॥ यथाजलेबुद्बुदवत्क्षणाद्धि ॥ ११ ॥ देव्युवाच ॥ पंच
ब्रह्मविधानंतुमानुषाणांहि तार्थतः ॥ पुनःपृच्छामिदेवेशकथयस्वप्रसादतः ॥ १२ ॥ ईश्वरउवाच ॥ कथयामिशृणुष्वेदंसर्वसिद्धिप्रदायकम् ॥ ईशा
नस्यसुभक्तान ।।महामुत्रफलप्रदम् ॥ १३ ॥ कपिलापंचगव्येनस्नात्वाजप्त्वाष्टकंनरः ॥ जुहुयादष्टसाहस्रंतिलैर्मुच्येतपातकैः ॥ १४ ॥ तथोदकेन
संपूर्यकुंभंजप्त्वाशतंशतम् ॥ दिनेदिनेतुसंस्नायात्सलक्ष्म्यापुत्रवान्भवेत् ॥ १५ ॥ देवस्यदक्षिणामूर्तेर्जपेदास्तमनाद्रवेः ॥ अष्टावेवसहस्रंतुहुत्वासर्वोप
पातकैः ॥ १६ ॥ गुग्गुलस्यगुटीःकृत्वापंचामृतेनमिश्रिताः ॥ हुत्वाग्नौवश्यतांयांतियक्षराक्षसमानुषाः ॥ १७ ॥ संग्रामेजयमाप्नोतिनक्षैशैर
भिभूयते ॥ उपसर्गेत्रिरात्रंतुदेवस्यदक्षिणेस्थितः ॥ १८ ॥ जप्त्वाचाष्टसहस्रंतुजुहुयात्सामिधस्ततः ॥ दधिमधुघृताक्तास्तुहुत्वाशांतिर्भवेदिह ॥ १९ ॥
कपिलायाःसवत्सायादध्याज्यमधुसंयुतम् ॥ सहस्रमोदनंहुत्वासुपुत्रानीप्सितांल्लभेत् ॥ २० ॥ गुग्गुलंघृतसंमिश्रंहुत्वाचाष्टसहस्रकम् ॥ सर्ववश्याभ
वंतीहहुत्वाशतसहस्रकम् ॥ २१ ॥ पद्मादीनिनिधानानिप्राप्नोतिमुच्यतेतथा ॥ हत्ययाब्राह्मणस्येहशिवसायुज्यतामियात् ॥ २२ ॥ भिक्षाहारोभिमंत्र्या
पोयःशिवायप्रदापयेत् ॥ बिल्वंवाबिल्वपत्रंवासोश्वमेधफलंलभेत् ॥ २३ ॥ पंचगव्याग्निष्टोमस्यतीर्थाद्भिःसर्वजातिकम् ॥ सकुशैःसर्वगन्धैश्चसर्वाभय
फलंलभेत् ॥ २४ ॥ सुधनीशतहोमेनसतिलेनघृतेनहि ॥ व्रीहिभिस्तुकुलेतस्यनदरिद्रोभिजायते ॥ २५ ॥ जप्त्वाचाष्टशतंविद्वान्व्रजेत्क्षेमीसदापथि ॥
दुर्गेभयाकुलेनद्यांनभयंविद्यतेक्कचित् ॥ २६ ॥ आदित्याभिमुखोभूत्वाऊर्ध्वबाहुःशिवार्चकः ॥ ब्रह्महत्यादिपापानिनश्यंत्येवनसंशयः ॥ २७ ॥ स
लिलस्थःसप्तादिनान्यब्भक्षणात्सविशुद्धचाति ॥ सुरापानाच्छकृन्मूत्रात्स्तेयात्स्वगुरुदारगात् ॥ २८ ॥ मुच्यतेपातकात्सद्योनिराहारोजितेंद्रियः ॥
राज्ञांप्रतिगृहीत्वातुशूद्रान्नंबहुधाप्यदन् ॥ २९ ॥ त्रिसंध्यंचजपेन्नित्यंमासेनैकेनशुद्धचाति ॥ गजसिंहवराहेषुशत्रुराजकुलेषुवा ॥ ३० ॥ नभयंविद्यतेत
स्यमनसायोजपेदथ ॥ मनसायोजपेन्मंत्रमीशानंध्यानमास्थितः ॥ ३१ ॥ देहेनानेनसंसिद्धःप्रयातिपरमंपदम् ॥ कृत्वासुदुष्कृतंदेविमंत्रेणानेनमांस्म
रेत् ॥ ३२ ॥ विमुक्तःपातकैःसर्वैर्ममलोकेमहीयते ॥ ३३ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायामष्टात्रिंशोऽध्यायः ॥ ३८ ॥ शंकरउवाच ॥ त
त्पुरुषस्यवक्ष्यामिफलंतच्छृणुसुव्रते ॥ बिल्वोदुंबरयोर्हुत्वासमिच्छतसहस्रकम् ॥ १ ॥ ब्रह्महत्याविनिर्मुक्तोमन्त्रेणानेनसुव्रते ॥ गृहीत्वादक्षिणेकर्णेअ
जांरात्रौसुनिर्भयः ॥ २ ॥ लिंगस्यदक्षिणामूर्त्तेर्मासमेकंतुयक्षिणी ॥ समागत्यसुरूपाढ्यासर्वान्कामान्प्रयच्छति ॥ ३ ॥ करवीरस्यपुष्पाणिघृतयुक्तानिजु

ह्वतः ॥ नाम्नास्त्रीवशमायातिसप्तरात्रात्तदग्रतः ॥४॥ कर्णिकारस्यपुष्पाणांदेवगंधर्वयोषितः ॥ समागम्यददंतीष्टंमनसोवत्सरार्धतः ॥५॥ प्रतिदिनंजपे
द्यस्तुलिङ्गमाश्रित्ययत्नतः॥देहेनानेनमेधावीदेविमांप्रतिपद्यते॥६॥आदित्याभिमुखोभूत्वाजपन्पापैःप्रमुच्यते ॥ सलवणांस्तिलान्हुत्वावशमानयतेरिपू
न् ॥७॥ सघृतेनयशःकामीसदूर्वयायुरेवच॥मार्जनेनामयान्हन्तिसर्षपैरक्षणंसदा ॥८॥ चन्द्रसूर्योपरागेतुजपेदष्टसहस्रकम्॥लिंगस्यदक्षिणामूर्तेःसकामा
नीप्सितांल्लभेत् ॥ ९ ॥ सततंजपतेयोवैवर्षंवर्षार्धमेवच ॥ क्षिप्रासिद्धिंददात्याशुस्वयमागत्यकन्यका ॥ १० ॥ देवस्यदक्षिणामूर्तेर्जपेद्वासततंसुधीः ॥
वत्सरादहमेवासौसिद्धिंयच्छामिवर्णिनि ॥ ११ ॥ पञ्चगव्यकृताहारोजपन्स्वमनुगच्छति ॥ मिताशीयोजपेन्नित्यंमोक्षंयातिनसंशयः ॥ १२ ॥ पर्व
ण्येवजपेद्यस्तुसर्वक्रतुफलंलभेत् ॥ सर्वेसत्वावशमीयुःश्मशानेजपतःशुभे ॥ १३ ॥ शांतिकामोलभेद्धुत्वाशांतिंतुसितसर्षपान् ॥ रक्तपुष्पैर्वशेकार्ये
कृष्णपुष्पैस्तुमारणे ॥ १४ ॥ विद्वेषेपीतपुष्पाणिधूम्राण्युच्चाटनेतथा ॥ एतदेवजपेत्सर्वमंत्रंसर्वार्थसाधकम् ॥ १५ ॥ सर्वपापविनिर्मुक्तःशिवंयातिन
संशयः ॥ १६ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायामेकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ शंकरउवाच ॥ नतिथिर्नचनक्षत्रंनोपवासोविधीयते ॥ अघो
रस्मरणाद्देविसर्वपापक्षयोभवेत् ॥ १ ॥ स्नात्वादौपंचगव्येनशिवमभ्यर्च्यमन्त्रतः ॥ जपेदयुतमेकन्तुसहस्रंजुहुयाद्घृतम् ॥ २ ॥ पुरश्चरणमेतत्तुत्रैलो
क्यंवशमानयेत् ॥ मण्डूकस्यवसांगृह्यचतुर्दश्यामथाष्टमीम् ॥ ३ ॥ देवस्यदक्षिणेस्थित्वाजप्त्वाचाष्टसहस्रकम् ॥ वर्तिकांपद्मसूत्रस्यकपालकृतकज्ज
लम् ॥ ४ ॥ तेनैवांजितनेत्रस्तुअदृश्योजायतेनरः ॥ कुसुंभतैलमथवापूर्वेणविधिनाकृतम् ॥ ५ ॥ वर्तिंकृत्वार्कसूत्रस्यकज्जलंगृह्ययत्नतः ॥ तेनैवां
जितनेत्रस्तुअदृश्योभवतिक्षणात् ॥ ६ ॥ ब्रह्मेन्द्रविष्णुलोकांस्तुदेहेनानेनगच्छति ॥ सर्वज्ञःसर्वदर्शीचादिव्यरूपस्तुजायते ॥ ७ ॥ स्रोतोंजनंसमा
दायप्लक्षपत्रेसुसप्तभिः ॥ पिधायहवनंकुर्यात्कृष्णयावासितैस्तिलैः ॥ ८ ॥ अयुतंजितनेत्रस्तुसोदृश्यःप्रचरेन्महीम् ॥ तथागोरोचनांगृह्यसहस्रेणाभि
मंत्रितम् ॥९॥ शिवस्यैवाहिनिर्माल्यंसहस्रेणाभिमंत्रितम् ॥ धूपनंतेनरक्षांसिभूतवेतालसुग्रहाः ॥ १० ॥ विनायकास्तुडाकिन्योज्वरापस्मारसम्भवाः ॥
नश्यंतिसकलारोगाः सत्यंसत्यंवदाम्यहम् ॥ ११ ॥ श्मशानमध्यमास्थायशवंगृह्यरुजाक्षतम् ॥ सुसंस्नाप्यगंधतोयैःस्थापयेन्मण्डलेबुधः ॥ १२ ॥
गंधपुष्पैरलंकृत्यछादयेच्छुक्लवाससा ॥ शवेहस्तंसमाधायकृष्णांचतुर्दशीमनु ॥ १३ ॥ कपिलानवनीतेनम्रक्षेदष्टशतंसुधीः ॥ एवंतज्जपतोवेगात्स
मुत्तिष्ठतिनिर्भयः ॥ १४ ॥ ब्रवीतिकिन्ददामीतिसिद्धोस्मीत्यहमेवते ॥ इत्युक्तश्चेप्सितान्कामान्ब्रवीतितत्रसाधकः ॥ १५ ॥ सदत्वापतते
भूमौनिश्चेष्टोजायतेक्षणात् ॥ तालकंकरवीरस्यरसेनपारिम्रक्षयेत् ॥ १६ ॥ कुर्यात्कृष्णचतुर्दश्यांजपन्नष्टसहस्रकम् ॥ लिंगस्यदक्षिणेस्थित्वा

तेनैवांगंसमालभेत् ॥ १७ ॥ अदृश्योजायतेसद्योयथेष्टंगच्छतीतिह ॥ देवस्यदक्षिणामूर्त्तौस्थित्वालक्षंजपेद्यदि ॥ १८ ॥ दशांशे
नतथाहोमंबिल्वैःप्रकुरुतेतुयः ॥ त्रिविधाजायतेसिद्धिर्विषदृष्ट्याभवंतीतिहि ॥ १९ ॥ ज्वरादीनामयान्सर्वानपिकीटपतंगकान् ॥ सततं
हिजपेद्यस्तुतन्नास्तियन्नसाधयेत् ॥ २० ॥ पातालस्वर्गपुटकान्देहेनानेनगच्छति ॥ ब्रह्मचर्येणवैमासंपंचगव्यकृताशनः ॥ २१ ॥
जप्त्वातुसर्वपापैस्तुमुच्यतेब्रह्महत्यया ॥ एकलिंगंसमाश्रित्यजपेन्मूलफलाशनः ॥२२॥भिक्षाहारोपिषण्मासात्प्रत्यक्षंमांसपश्यति ॥ यानिकानिचपापा
निघोराणिविविधानिच ॥ २३ ॥ शतजाप्येनदेवेशिभस्मसाद्यांतिनित्यशः ॥ इत्यघोरकल्पः ॥ शृणुत्वंवामदेवस्यकथयिष्यामिसुव्रते ॥२४॥ लिंग
स्यदक्षिणामूर्तेर्जपेदष्टसहस्रकम् ॥ पंचगव्येनचस्नात्वाजुहुयादयुतंपुनः ॥ २५ ॥ श्वेतपुष्पैःसुरक्तैर्वापीतैश्चैवहिशोभनैः ॥ पुरश्चरणकंकृत्वाततःसि
द्ध्यतिनान्यथा ॥ २६ ॥ त्रिरात्रंसमुपोष्याथभासस्यास्थिसुमंत्रयेत् ॥ बाहौबद्ध्वात्वदृश्यत्वंकुरुतेभूतराक्षसान् ॥ २७ ॥ मानुषादीन्सुक्रव्यादान्व
शित्वंनात्रसंशयः ॥ कपिलागोमयेनैवकृत्वापुत्तलिकांध्रुवम् ॥ २८ ॥ मंत्रेणानेनसंस्थाप्यघृतस्यैवाहुतीर्हुनेत् ॥ नाम्नामष्टौसहस्राणियक्षिणीराक्षसी
तथा ॥ २९ ॥ श्रियंवाप्यानयत्याशुनात्रकार्याविचारणा ॥ सुरभिपुष्पाणिसुगंधितान्यष्टौसहस्राणिदेवस्योपरिनिधापयेत् ॥ सर्वान्कामानवाप्नो
ति ॥ ३० ॥ यवव्रीहिहोमेनधनपतिर्भवति ॥ शतसहस्रंजप्त्वार्थलिंगमूर्धनिनिःक्षिपेत् ॥ ३१ ॥ ततःश्रीःस्वयमागत्यसर्वान्कामान्ददातिच ॥ नाग
पुष्पपुन्नागाशोकपाटलाकर्णिकारादीनिकाथितानि ॥ ३२ ॥ अथसर्गस्यघृतमधुमिश्राहुतिसहस्रंजुहुयात् ॥ अर्थलाभोभवति ॥ ३३ ॥ सूत्रेणरक्षांकरो
तिसर्षपैःसर्वग्रहेभ्योमुंचापयति ॥ ३४ ॥ लघुभिर्दिशांबंधनंकरोति ॥ उदकेनवशमानयाति ॥ ३५ ॥ सर्वपुष्पाभिषेकंकृत्वात्मानमभिषिंचेदलक्ष्मीं
नाशयति ॥ ३६ ॥ तगरमल्लिकाकुंदाशोकसौगंधिकाभिषेकेनश्रीर्भवति ॥ गतंराज्यंसमानयति ॥ ३७ ॥ प्रतिपदारभ्यसर्वशुक्लपुष्पाणांप्रतिदिन
मष्टसहस्रंजुहुयात् ॥ पौर्णमासींयावत्ततोभवानीश्वरः ॥ ३८ ॥ सर्वकामावाप्तिंददातिवामदेवोभगवानायुष्प्रदःकामप्रदश्चेति ॥ ३९ ॥ संग्रामेशस्त्र
संनद्धपुरुषमभिमंत्रयेत् ॥ सर्वत्रापराजितोभवति ॥ ४० ॥ सुगंधगंधैर्भगवंतंविलिप्यसुगंधपुष्पैरभ्यर्च्याष्टशतंजुहुयात् ॥ सकर्मंकुर्वाणोलक्ष्मीवा
न्भवति ॥ ४१ ॥ तपतेवर्षतेचैवएषदेवोमहेश्वरः ॥ सृजतेसर्वभूतानिसर्वसिद्धिप्रदोहरः ॥ ४२ ॥ इतिवामदेवकल्पः ॥ ईश्वरउवाच ॥ अथसद्योजाते
नमंत्रेणकृष्णयोरेकतरेणमंत्रेणत्रिरात्रोपोषितोभूत्वाऽष्टसहस्रंजपेत् ॥ ४३ ॥ आत्मार्थंजुहुयाद्यदिच्छातितल्लभेत् ॥ पुष्पाष्टसहस्रंजुहुयान्मधुघृताक्तं
यक्षराक्षसाप्सरसःस्त्रियआगच्छंति ॥ ४४ ॥ रसरसायनसिद्धीःप्रयच्छंति ॥ शिवस्यमहतींपूजांकृत्वाव्यपगतकामक्रोधलोभमोहोभिक्षाभुजोवामौ

नीशुक्लवासाजितेंद्रियः ॥ ४५ ॥ गुग्गुलगुटिकाभिरष्टसहस्रंजुहुयादष्टगुणमैश्वर्यंभवति ॥४६॥ अथदेवस्यदक्षिणामूर्तौशत्रुनाम्नाजपेत् ॥ शत्रुर्नभवति
॥४७॥ अथमधुपयसाष्टसहस्रंजुहुयाद्राज्यच्युतोराज्यंलभेत ॥४८॥ अथबिल्वार्कौदुंबराश्वत्थानांसमिदष्टसहस्रंजुहुयात् ॥ पृथ्वीराज्यंप्राप्नोति॥४९॥
अथसहस्रमभिमंत्र्यात्मनोऽविकलोभवति ॥५०॥ अथवस्त्रमाल्याभरणादीनभिमंत्र्यसौभाग्यंभवति ॥ ५१ ॥ अथवटाधःस्थित्वाशतसहस्रंजपेत्यक्षि
णीसिद्ध्यति ॥ अंतर्जलेपंचसहस्रंजपेद्ब्रह्महत्यादिपापैर्विमुक्तोभवति ॥ ५२ ॥ महापापानिपापानितथोपपातकानितु॥लक्षार्द्धार्द्धेतदर्द्धेननश्यंतिशत
शस्तथा ॥ ५३ ॥ एकलिंगेजपेल्लक्षंदेवःप्रत्यक्षतामियात् ॥ निष्कामोपिजपेदेवंज्ञानीसर्वज्ञतांव्रजेत् ॥५४॥ इतिसद्योजातकल्पः ॥ स्वयंभूबाणलिंगे
वाज्योतिर्लिंगेपिसुव्रते ॥ पूर्वसेवांप्रकुर्वीतभक्त्यातद्गतमानसः॥५५॥शुद्धंप्रमितभुंजानःसर्वभूतहितेरतः॥ब्रह्मचर्यरतोमौनीभूमिशायीजितेंद्रियः ॥५६॥
साधकोदेशिकोवापिपूर्वसेवांसमारभेत् ॥ योगाभ्यासेनवायोगीजपध्यानपरायणः ॥ ५७ ॥ प्रदक्षिणानमस्कारैःक्रियायोगेनशंकरः ॥ भक्तिस्तु
कारणंतत्रभक्तिग्राह्योमहेश्वरः ॥ ५८ ॥ सर्वाश्रमाणांवर्णानांबालवृद्धस्त्रियामपि ॥ आस्तिकःश्रद्दधानश्चअहन्यहनिभावतः ॥ ५९ ॥ सिद्ध्यतेहि
किमाश्चर्यंप्रसादाच्छंकरस्यवै ॥ ध्यात्वात्मानंप्रतिशिवंसर्वभूतेषुसंस्थितः ॥ ६० ॥ जपेन्मंत्रंतुयोमंत्रीसर्वंसिद्ध्यतिनान्यथा ॥ शिवोहंसर्वभूतोहंजग
त्स्थावरजंगमम् ॥ ६१ ॥ एवंसंभावयन्योगीसिद्ध्यतेवत्सराद्ध्र्वतः ॥ ६२ ॥ शिवैकनिष्ठस्त्वनुयोगदक्षःसर्वेषुभूतेषुसदास्थितोस्मि ॥ ध्यायञ्जपन्वामन
सायतात्मासोऽनेनदेहेनभवेच्छिवोहि ॥ ६३ ॥ मंत्रजांसिद्धिंवक्ष्येहंतच्छृणुष्ववरानने ॥ नदीनदसमुद्रेवापर्वतेषुगृहेषुच ॥ ६४ ॥ पश्चिमाभिमुखंय
त्रलिंगंतिष्ठतिभामिनि ॥ कपिलागोमयेनैवउपलिप्यप्रयत्नतः ॥ ६५ ॥ पुनस्तत्पंचगव्येनस्नात्वासद्येनमंत्रयेत् ॥ स्थापयेद्वामदेवेनदिशासुविदिशासुच
॥ ६६ ॥ पंचामृतादिभिस्तोयैःस्नात्वातत्पुरुषेणवै ॥ गंधपुष्पादिकंसर्वंवस्त्रालंकारभूषणम् ॥ ६७ ॥ अघोरेणसमंकृत्वाईशानंमूर्ध्निविन्यसेत् ॥
ईशानेनार्चयेन्नित्यंसिद्धिकामोह्यतंद्रितः ॥ ६८ ॥ स्वयंभूबाणलिंगंवादेवासुरप्रतिष्ठितम् ॥ सर्वलक्षणहीनंचस्फुटितंशीर्णमेवच ॥ ६९ ॥ सिद्धिदंत
द्विजानीयाज्जीर्णोद्धारंनकारयेत् ॥ ईशानंयोजपेन्नित्यंलिंगमाश्रित्ययत्नतः ॥ ७० ॥ तस्यासिद्धिर्नसंदेहःषण्मासैर्वत्सरेणवा ॥ नाभिमात्रेजलेविश्यज
पेन्मंत्रंसमाहितः ॥ ७१ ॥ समाभिजायतेहृष्टिरीशानेननसंशयः ॥ अभिमंत्र्याष्टसाहस्रैःक्षिपेद्बीजान्यशेषतः ॥ ७२ ॥ क्षेत्रेस्यात्सस्यनिष्पत्तिर्नोप
द्रवभयंभवेत् ॥ क्षीरवृक्षसमिद्भिस्तुहुत्वाशांतिर्भवेदिह ॥ ७३ ॥ औपसर्गिकदोषाणांनभयंविद्यतेक्वचित् ॥ पर्वताग्रेसमारुह्यजपेन्मंत्रमतंद्रितः ॥७४॥
देहेनानेनदेवेशंवरदंपश्यतेवरम् ॥ सर्वपापैर्विमुक्तःस्याद्योजपेल्लक्षमादृतः ॥ ७५ ॥ अन्नंभुंजञ्जपेद्यस्तुतेजस्वीजायतेसदा ॥ प्रत्यहंशतमेकंतुजपेत्स

द्धिमवाप्नुयात् ॥ ७६ ॥ कुभुक्तस्यकुपानस्यदिवास्वप्नस्यमेहतः ॥ अस्थानेसंमुखस्यापिद्विजगोदेवयोषिताम् ॥ ७७ ॥ कुवातात्कुपथादेवईशानंस
ततंस्मरेत् ॥ एवंयोवर्ततेनित्यंशिवपूजार्चनेरतः ॥ ७८ ॥ विमुक्तःसर्वपापेभ्यःशिवलोकेमहीयते ॥ ईश्वरउवाच ॥ पंचब्रह्मविधानंतुयथावत्कथितं
मया ॥ ७९ ॥ सांप्रतंहिसुभक्तानांतथाशुद्धतपस्विनाम् ॥ येपुनःशुद्धकर्माणःसुशुद्धतपसान्विताः ॥ ८० ॥ समर्चयंतिमांनित्यंवेद्यास्तेपियथाह्य
हम् ॥ नातप्ततपसोयांतिशिवलोकमनामयम् ॥ ८१ ॥ तपसादिविमोदंतेप्रत्यक्षंदेवतागणाः ॥ ऋषयोमुनयश्चैवसत्यंजानीहिसुंदरि ॥ ८२ ॥ सुदुर्ध
रंदुराराध्यंसुदूरंदुरतिक्रमम् ॥ तत्सर्वंतपसासाध्यंतपोहिदुरतिक्रमम् ॥ ८३ ॥ तापस्येसंस्थितोब्रह्मानित्यंविष्णुरहंतथा ॥ त्वंतथादेवियेनाहंप्राप्तो
भर्तासुदुर्लभः ॥ ८४ ॥ येनयेनहिभावेनस्थित्वायत्क्रियतेतपः ॥ तत्तत्संप्राप्यतेदेविइहलोकेनसंशयः ॥ ८५ ॥ सात्विकंराजसंचैवतामसंत्रिविधंहि
तत् ॥ सात्विकंदेवतानांहियतीनामूर्ध्वरेतसाम् ॥ ८६ ॥ तामसंदानवानांहिरक्षसांक्रूरकर्मणाम् ॥ निजंदेहंसुसंपीड्यहिमातपसुदुःसहैः ॥ ८७ ॥
तत्तपस्तामसंप्रोक्तमनोभिप्रेतसाधनम् ॥ जपंध्यानंतुदेवानामर्चनंभक्तितःशुभे ॥ ८८ ॥ सात्विकंतद्धिनिर्दिष्टमशेषफलसाधनम् ॥ इहलोकेपरेचैवक्र
मान्मोक्षंव्रजेदतः ॥ ८९ ॥ उत्तमंसात्विकंविद्याद्धर्मेबुद्धिःसुनिश्चला ॥ स्नानंपूजाजपोहोमःशुद्धशौचमहिंसता ॥ ९० ॥ व्रतोपवासचर्याचमौनमिंद्रि
यनिग्रहः ॥ धीर्विद्यासत्यमक्रोधोदानंक्षांतिर्दमोदया ॥९१॥ वापीकूपतडागानिप्रासादानांचकल्पना॥कृच्छ्रचांद्रायणंयज्ञःसुतीर्थान्याश्रमाणिच॥९२॥
धर्मस्थानानिचैतानिसुखदानिमनीषिणाम् ॥ संक्रांतिविषुवद्योगोनादमुत्क्रांतियुंजताम् ॥ ९३ ॥ ध्यानंबिंदुलवंज्योतिरुन्मनीभावधारणा ॥ रेचकः
पूरकःकुंभःप्राणायामास्त्रिकःस्मृतः ॥ ९४ ॥ नाडीसंचरविज्ञानंप्रत्याहारनिरोधनम् ॥ तुरीयंतद्धघोबुद्धिरणिमाद्यष्टसंयुतम् ॥ ९५ ॥ काष्ठावस्थामृता
वस्थाहरिताचेतिकीर्तिता ॥ ज्ञानोपलब्धयोह्येताःसर्वपापप्रणाशनाः ॥ ९६ ॥ नारीशय्यासनंयानंवस्त्रंधूपविलेपनम् ॥ तांबूलभक्षणंपंचराज्यैश्वर्य
विभूतयः ॥ ९७ ॥ हेमभारंतथाताम्रग्रहाश्वरत्नधेनवः ॥ पांडित्यंवेदशास्त्राणिगीतनृत्यविभूषणम् ॥ ९८ ॥ शंखवीणामृदंगाश्वगजेंद्रच्छत्रचामरम् ॥
भोगरूपाणिचैतानिएभीरक्तोनुयुज्यते ॥ ९९ ॥ आदर्शवन्मुनिस्नेहस्तिलवत्तत्रपीड्यते ॥ अरंगमेतिचाप्येनंकुरुवेज्ञानमोहितः ॥ १०० ॥ जान
न्नपीहसंसारेभ्रमतेघटियंत्रवत् ॥ सर्वयोनिषुदुःखार्तःस्थावरेषुचरेषुच ॥ १०१ ॥ एवंयोनिषुसर्वासुप्रतिक्रम्यक्रमेणतु ॥ कालांतरवशाद्यातिमानुष्यम
तिदुर्लभम् ॥ १०२ ॥ व्युत्क्रमेणापिमानुष्यंप्राप्यतेपुण्यगौरवात् ॥ विचित्रागतयःप्रोक्ताःकर्मणांगुरुलाघवात् ॥ १०३ ॥ मानुष्यंयःसमासाद्यस्वर्ग
मोक्षप्रसाधकम् ॥ नाचरत्यात्मनःश्रेयःसमृतःशोचतेचिरम् ॥ १०४ ॥ देवासुराणांसर्वेषांमानुष्यमतिदुर्लभम् ॥ तत्संप्राप्यतथाकुर्यान्नगच्छेन्नरकंय

था ॥ १०५ ॥ स्वर्गापवर्गलाभाययदिनास्तिसमुद्यमः ॥ सर्वस्यमूलंमानुष्यंतद्यत्नादनुपालयेत् ॥ १०६ ॥ धर्ममूलंहिमानुष्यंलब्ध्वासर्वार्थसाधकम्
॥ यदिलाभेनयत्नःस्यान्मूलंरक्षेत्स्वयंततः ॥ १०७ ॥ मानुष्यत्वेपिविप्रत्वंयःप्राप्यचसुदुर्लभम् ॥ नकरोत्यात्मनःश्रेयःकोन्यस्तस्मादचेतनः॥१०८॥
द्वीपानामेवसर्वेषांभुज्यतेस्मिन्नुपार्जितम् ॥ इतःस्वर्गश्चमोक्षश्चप्राप्यतेसमुपार्जितः ॥ १०९ ॥ देशेस्मिन्भारतेवर्षेप्राप्यमानुष्यमध्रुवम् ॥ नकुर्या
दात्मनःश्रेयस्तेनात्माखलुवंचितः ॥ ११० ॥ कर्मभूमिरियंविप्रफलभूमिरसौस्मृता ॥ इहयत्क्रियतेकर्मस्वर्गेतदनुभुज्यते ॥ १११ ॥ यावत्स्वस्थश
रीरत्वंतावद्धर्मंसमाचरेत् ॥ अस्वस्थश्चोदितोप्यन्यैर्नकिंचित्कर्तुमुत्सहेत् ॥ ११२ ॥ अध्रुवेणशरीरेणध्रुवंयोनप्रसाधयेत् ॥ ध्रुवंतस्यपरिभ्रष्टमध्रुवंनष्ट
मेवच ॥ ११३ ॥ आयुषःखंडखंडानिनिपतंतितदग्रतः ॥ अहोरात्रापदेशेनकिमर्थंनावबुध्यसे ॥ ११४ ॥ यदानज्ञायतेमृत्युःकदाकस्यभविष्यति ॥
आकस्मिकेहिमरणेधृतिंविंदतिकस्तदा ॥ ११५ ॥ परित्यज्ययदासर्वमेकाकीयास्यसिध्रुवम् ॥ नददासिकदाकस्मैपाथेयार्थमिदंधनम् ॥ ११६ ॥
गृहीतदानपाथेयाःसुखंयांतियमालयम् ॥ अन्यथाक्लिश्यतेजंतुःपाथेयरहितेपथि ॥ ११७ ॥ येषांकालेयदावाहिपूर्णभांडःपुरोव्रजेत् ॥ गच्छतांस्वर्गदे
शस्यतेषांलाभःपदेपदे ॥ ११८ ॥ इतिज्ञात्वानरःपुण्यंकुर्यात्पापंविवर्जयेत् ॥ पुण्येनयातिदेवत्वमपुण्यान्नरकंव्रजेत् ॥ ११९ ॥ येमनागपिदेवेशंप्रप
न्नाःशरणंशिवम् ॥ तेपिघोरंनपश्यंतिनयमंनरकंतथा ॥ १२० ॥ किन्तुपापैर्महाघोरैःकिंचित्कालंशिवाज्ञया ॥ वसंतितत्रमानुष्यास्ततोयांतिशिवंपु
रम् ॥ १२१॥ येपुनःसर्वभावेनप्रतिपन्नामहेश्वरम् ॥ नतेलिप्यंतिपापेनपद्मपत्रमिवांभसा॥१२२॥उक्तंशिवेतियैर्नामतथाहरहरेतिच॥नतेषांनरकाद्भीति
र्यमाद्विमुनिसत्तम ॥ १२३ ॥ तस्माद्विवर्द्धयेद्भक्तिमीश्वरेसततंबुधः ॥ १२४ ॥ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांचत्वारिंशोऽध्यायः ॥ ४० ॥
व्यासउवाच ॥ ब्राह्मणत्वंहिदुष्प्रापंनिसर्गाद्ब्राह्मणोभवेत् ॥ क्षत्रियोवापिवैश्योवानिसर्गादेवजायते ॥ १ ॥ ब्राह्मणश्चमुखोत्पन्नोब्रह्मणःक्षत्रियाविशः ॥
बाहुभ्यामूरुतोत्पन्नाःपद्भ्यांशूद्रइतिश्रुतिः ॥ २ ॥ किमुत्सृतिमधःस्थानादाप्नुवंतिह्यतोवद ॥ सनत्कुमारउवाच ॥ दुष्कृतेनतुकालेयस्थानाद्भ्रश्यं
तिमानवाः ॥ ३ ॥ श्रेष्ठंस्थानंसमासाद्यतस्माद्रक्षेतपंडितः ॥ यस्तुविप्रत्वमुत्सृज्यक्षत्रयोन्यांप्रसूयते ॥ ४ ॥ ब्राह्मण्यात्सपरिभ्रष्टःक्षत्रियत्वंनिषेवते ॥
अधर्मसेवनान्मूढस्तथैवपरिवर्तते ॥ ५ ॥ जात्यंतरसहस्रेणतमसाविशतेयतः ॥ तस्मात्प्राप्यपरंस्थानंप्रमाद्यन्नतुनाशयेत् ॥ ६ ॥ शूद्रान्नेनोदरस्थेन
योम्रियेतद्विजोत्तमः ॥ आहिताग्निस्तथाविद्वान्सशूद्रगतिमाप्नुयात् ॥ ७ ॥ ब्राह्मणत्वंशुभंप्राप्यब्राह्मण्यंयोवमन्यते ॥ भोज्याभोज्यंनजानातिसभवे
त्क्षत्रियोद्विजः ॥ ८ ॥ कर्मणायेनमेधावीशूद्रोवैश्योभिजायते ॥ तत्तेवक्ष्यामिनिखिलंयेनवर्णोत्तमोभवेत् ॥ ९ ॥ शूद्रकर्मयथादिष्टंशूद्रोभूत्वासमा

चरेत् ॥ यथावत्परिचर्यांतुत्रिषुवर्णेषुनित्यदा ॥ १० ॥ कुरुतेकामयानस्तुसशूद्रोवैश्यतांव्रजेत् ॥ योज्ञःपापजनद्वेष्टाजुह्वानश्चयथाविधि ॥ ११ ॥
अग्निहोत्रमुपादायशेषान्नकृतभोजनः ॥ सवैश्यःक्षत्रियकुलेजायतेनात्रसंशयः ॥ १२ ॥ क्षत्रियोयजतेयज्ञैः संस्कृतैराप्तदक्षिणैः ॥ अधीतेस्वर्गमन्वि
च्छंस्त्रेताग्निशरणंसदा ॥ १३ ॥ आर्द्रहस्तप्रदोनित्यंक्षितिंधर्मेणपालयेत् ॥ ऋतुकालाभिगामीचस्वांभार्यांधर्मतत्परः ॥ १४ ॥ सर्वातिथ्यंत्रिवर्गस्य
भूतेभ्योदीयतामिति ॥ गोब्राह्मणात्मनोर्थेचसंग्रामाभिहतोहवे ॥ १५ ॥ तेनाग्निमंत्रपूतात्माक्षत्रियोब्राह्मणोभवेत् ॥ विधिज्ञोब्राह्मणोभूत्वायाजकस्त
त्रजायते ॥ १६ ॥ प्राप्यतेविपुलः स्वर्गोदेवानामपिवल्लभः ॥ ब्राह्मणत्वंसुदुष्प्रापंकृच्छ्रेणासाद्यतेनरैः ॥ १७ ॥ तस्मात्सर्वप्रयत्नेनरक्षेद्ब्राह्मण्यमुत्तमम् ॥
व्यासउवाच ॥ संग्रामस्येहमाहात्म्यंत्वयोक्तंमुनिसत्तम ॥ १८ ॥ एतदिच्छाम्यहंश्रोतुंब्रूहिमेवदतांवर ॥ सनत्कुमारउवाच ॥ अग्निष्टोमादिभिर्यज्ञै
रिष्ट्वाविपुलदक्षिणैः ॥ १९ ॥ नतत्फलमवाप्नोतिसंग्रामेयदवाप्नुयात् ॥ इतियज्ञविदःप्राहुर्यज्ञकर्मविदःसदा ॥ २० ॥ तस्मात्तत्तेप्रवक्ष्यामियत्फलं
शस्त्रजीविनाम् ॥ धर्मलाभोर्थलाभश्चयशोलाभस्तथैवच ॥ २१ ॥ यःशूरोवध्यतेयुद्धेविमर्दन्परवाहिनीम् ॥ तस्यधर्मार्थकामस्ययज्ञश्चैवाप्तदक्षिणः ॥ २२ ॥
परंह्यभिमुखंहत्वातद्यानंयोधिरोहति ॥ विष्णुलोकेसजायेतयश्चयुद्धेपराजितः ॥ २३ ॥ अश्वमेधानवाप्नोतिचतुरोनमृतःसचेत् ॥ यस्तुशस्त्रमनु
प्राप्यवीर्यवान्वाहिनीमुखे ॥ २४ ॥ संमुखोवर्ततेशूरःसस्वर्गान्ननिवर्तते ॥ राजावाराजपुत्रोवासेनापतिरथापिवा ॥ २५ ॥ हतःक्षात्रेणयःशूरस्तस्यलोको
क्षयोध्रुवम् ॥ यावंतितस्यरोमाणिभिनत्तिशस्त्रमाहवे ॥ २६ ॥ तावतोलभतेलोकान्सर्वकामदुघोक्षयान् ॥ वीरासनंवीरशय्यावीरस्थानस्थितिःस्थिरा ॥ २७ ॥
गवार्थेब्राह्मणार्थेचस्थानंस्वाम्यर्थमेवच ॥ येमृतास्तेसुखंयांतियथासुकृतिनस्तथा ॥ २८ ॥ यःकश्चिद्ब्राह्मणंहत्वापश्चात्प्राणान्परित्यजेत् ॥ गोविप्रविमु
कामायसद्यःपापात्प्रमुच्यते ॥ २९ ॥ अभग्नोयःपरैःसैन्यंभग्नंयःपरिरक्षति ॥ तत्फलंसमवाप्नोतिनोचेत्प्राणान्प्ररित्यजेत् ॥ ३० ॥ तत्रासौस्वपतेयु
द्धेसस्वर्गान्ननिवर्तते ॥ क्रव्यादैर्दंतिभिश्चैवहतस्यगतिरुत्तमा ॥ ३१ ॥ द्विजगोस्वामिनामर्थेभवेद्विप्रसदाक्षया ॥ शक्यंत्विहसमर्थैश्चयष्टुंक्रतुशतैरपि
॥ ३२ ॥ आत्मदेहपरित्यागःकर्तुंयुधिसुदुष्करः ॥ युद्धेपुण्यतमःस्वर्ग्यःसुयज्ञःसर्वतोमुखः ॥ ३३ ॥ सर्वेषामेववर्णानांक्षत्रियस्यविशेषतः ॥ भूयश्चै
वतुवक्ष्यामियुद्धधर्मंसनातनम् ॥ ३४ ॥ यादृशायप्रहर्तव्यंयादृशंपरिवर्जयेत् ॥ आततायिनमायांतमपिवेदांतगंद्विजम् ॥ ३५ ॥ जिघांसंतंजिघांसी
यान्नतेनब्रह्महाभवेत् ॥ हंताप्यसौनहंतव्यःपानीयंयश्चयाचते ॥ ३६ ॥ रणेहत्वातुरान्व्याससनरोब्रह्महाभवेत् ॥ व्याधितंदुर्बलंबालंस्त्रीनाथंकृपणंध्रु
वम् ॥ ३७ ॥ धनुर्भग्नंछिन्नगुणंतंहत्वाब्रह्महाभवेत् ॥ विमुक्तकेशोवैमोहाज्जडोन्मत्ताकृतिर्भवेत् ॥ ३८ ॥ पर्णशाखातृणग्राहीतान्हत्वाब्रह्महाभवेत् ॥

नयुद्धेहंतवास्मीतिवृद्धोज्ञोथनपुंसकः ॥ ३९ ॥ एतान्हत्वातुसंमोहात्समुनेब्रह्महाभवेत् ॥ ४० ॥ यान्यज्ञसंघैस्तपसाचविप्राःस्वर्गैषिणोयत्रचयैःप्र
यांति ॥ क्षणेनतामेवगतिंप्रयांतिमहाहवेसंहननंत्यजंतः ॥ ४१ ॥ सर्वाश्चवेदान्समहद्भिरंगैर्योगांश्चसांख्यंचवनेनिवासम् ॥ एतान्गुणानेकपदेनिषेवते
संग्रामधर्मात्मतनुंत्यजेद्यः ॥ ४२ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायामेकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ व्यासउवाच ॥ श्रुतामेयातनाश्चित्राः
पापिनांनिरयेतुयाः ॥ सरतामिहसंसारेतास्त्वंब्रूहिममाखिलाः ॥ १ ॥ सनत्कुमारउवाच ॥ अथनारकिणांपुंसांधर्मीश्चैवतुकेवलान् ॥ क्षणमात्रेणभूते
भ्यःशरीरमुपपद्यते ॥२॥ तद्वद्धर्मेणचैकेनदेवानांचोपपादकम् ॥ सद्यःप्रजायतेदिव्यंशरीरंभूतसारतः ॥३॥ कर्मणावापिमिश्रेणयच्छरीरमिहात्मने ॥
तद्भूतपरिणामोत्थंविज्ञेयंहिचतुर्विधम् ॥ ४ ॥ उद्भिजःस्थावराज्ञेयास्तृणगुल्मादिरूपिणः ॥ कृमिकीटपतंगाद्याःस्वेदजानामदेहिनः ॥ ५ ॥ अं
डजाःपक्षिणोनक्राश्चक्रामत्स्याश्चकच्छपाः ॥ जरायुजाश्वविज्ञेयामानुषाश्चचतुष्पदाः ॥ ६ ॥ तत्रसिक्ताजलैर्भूमिस्तेजसाचप्रतापिता ॥ वायुनायो
ज्यमानात्खाद्बीजत्वमुपपद्यते ॥ ७ ॥ यथर्तुतानिबीजानिसंसिक्तान्यंभसापुनः ॥ उच्छूनतांमृदुत्वंचमूलभावंव्रजंतिच ॥ ८ ॥ तन्मूलादंकुरो
त्पत्तिरंकुरात्पर्णसंभवः ॥ पर्णान्नालंततःकांडंकांडाच्चप्रसवःपुनः ॥ ९ ॥ प्रसवाच्चतुषंक्षीरंक्षीरात्तंडुलसंभवः ॥ तंडुलंचयदापक्वंम्रियंत्योषध
यस्तदा ॥ १० ॥ यवाद्यास्तृणपर्यंताःश्रेष्ठाःसप्तदशस्मृताः ॥ ओषध्यःफलपाकांताःशेषाःक्षुद्राःप्रकीर्तिताः ॥ ११ ॥ एतालूनामर्दिताश्चशनैरु
त्प्रियसंस्कृताः ॥ शूर्पोलूखलयंत्राद्यैःपक्वाश्चोदकवह्निभिः ॥१२॥ षड्विधाहारभेदेनपरिणामंव्रजंत्युत ॥ अन्योन्यवसुसंयोगादनेकस्वादुतांगताः ॥१३॥
भक्ष्यंभोज्यंचपेयंचलेह्यंचोष्यंचपिच्छिलम् ॥ इतिभेदाःषडन्नस्यमधुराद्याश्चषड्रसाः ॥ १४ ॥ तदन्नंपिंडकवलैर्ग्रासंभुक्तंचदेहिभिः ॥ अन्नंस्थलाशये
पूर्वंप्राणंस्थापयतेक्रमात् ॥ १५ ॥ पीतभक्षितमाहारंसवायुःकुरुतेद्विधा ॥ संप्रविश्यान्नमध्येतुपृथगन्नंपृथग्जलम् ॥ १६ ॥ अग्नेरूर्ध्वंजलंस्थाप्यत
दन्नंचजलोपरि ॥ जलस्याधःसचापानःस्थितोग्निंधमतेशनैः ॥ १७ ॥ वायुनाधम्यमानोग्निरत्युष्णंकुरुतेजलम् ॥ तदन्नमुष्णतोयेनसमंतात्पच्य
तेपुनः ॥ १८ ॥ द्विधाभवतितत्पक्वंपृथक्किट्टंपृथग्रसम् ॥ मलैर्द्वादशभिःकिट्टंभिन्नंदेहाद्बहिर्व्रजेत् ॥ १९ ॥ कर्णाक्षिनासिकाजिह्वादंताःशिश्नगुदं
नखाः ॥ मलाश्रयाःकफःस्वेदोविण्मूत्रंद्वादशस्मृताः ॥ २० ॥ हृत्पद्मेप्रतिबद्धाश्चसर्वनाड्यःसमंततः ॥ तासांमुखेषुतत्सूक्ष्मंप्राणःस्थापयतेरसम् ॥२१॥
रसेनतेननाड्यस्ताःप्राणःपूरयतेपुनः ॥ पुनःप्रयांतिसंपूर्णास्ताश्चदेहंसमंततः ॥२२॥ ततःसनाडीमध्यस्थःशारीरेणोष्मणारसः ॥ पच्यतेपच्यमानाच्चभवे
त्पाकद्वयंपुनः ॥ २३ ॥ त्वक्तयावेष्टितंपूर्वंरुधिरंचप्रजायते ॥ रक्ताल्लोमानिमांसंचकेशाःस्नायुश्चमांसतः ॥ २४ ॥ स्नायोःशिरास्तथास्थीनिनखर्मे

ज्जास्थिसंभवः ॥ मज्जाकारणवैकल्यंशुक्रंचप्रसवात्मकम् ॥ २५ ॥ इतिद्वादशधान्नस्यपरिणामःप्रकीर्तितः ॥ शुक्लान्नस्यततःशुक्रादिव्यदेहस्यसं
भवः ॥ २६ ॥ ऋतुकालेयदाशुक्रंनिर्दोषंयोनिसंस्थितम् ॥ तदातद्वायुनास्पृष्टंस्त्रीरक्तेनैकतांव्रजेत् ॥ २७ ॥ विसर्गकालेशुक्रस्यजीवःकरणसंयुतः ॥
संवृतःप्रविशेद्योनिंकर्मभिःस्वैर्नियोजितः ॥ २८ ॥ तच्छुक्ररक्तमेकस्थमेकाहात्कलिलंभवेत् ॥ पंच रात्रेणकलिलंबुद्बुदाकारतांव्रजेत् ॥ २९ ॥ बुद्बुदा
त्सप्तरात्रेणमांसपेशीभवेत्पुनः ॥ द्विसप्ताहाद्भवेत्पेशीरक्तंमांसंत्वचाद्दढा ॥ ३० ॥ बीजस्येवांकुरोत्पत्तिःपंचविंशतिरात्रतः ॥ भवंतिमासमात्रेणपंचधा
जायतेपुनः ॥ ३१ ॥ ग्रीवाशिरश्चस्कंधश्चपृष्ठवंशस्तथोदरम् ॥ पाणिपादंतथापार्श्वौकटिर्गात्रंतथैवच ॥ ३२ ॥ द्विमासाभ्यंतरेणैवक्रमशःसंभवंतिहि॥
त्रिभिर्मासैःप्रजायंतेसर्वांगांकुरसंधयः ॥ ३३ ॥ मासैश्चतुर्भिरंगुल्यःप्रजायंतेयथाक्रमम् ॥ मुखंनासाचकर्णौचमासैर्भवंतिपंचभिः ॥ ३४ ॥ दंतपंक्ति
स्तथागुह्यंजायंतेचनखाःपुनः ॥ कर्णयोस्तुभवेच्छिद्रंषण्मासाभ्यंतरेणतु ॥ ३५ ॥ पायुमेढ्रमुपस्थंचनाभिश्चाप्युपजायते ॥ संधयोयेचगात्रेषुमासैर्जा
यंतिसप्तभिः ॥ ३६ ॥ अंगप्रत्यंगसंपूर्णःशिरः केशसमन्वितः ॥ विभक्तावयवःस्पृष्टःपुनर्मासाष्टकेनतु ॥ ३७ ॥ पंचात्मकसमायुक्तःपरिपक्वःसतिष्ठति ॥
मातुराहारवीर्येणषड्विधेनरसेनतु ॥ ३८ ॥ नाभिनालाभिवद्धेनवर्द्धतेसदिनेदिने ॥ ततःस्मृतिंलभेज्जीवःसंपूर्णोस्मिञ्छरीरके ॥ ३९ ॥ सुखंदुःखंवि
जानातिनिद्रास्वप्नंपुराकृतम् ॥ मृतश्चाहंपुनर्जातोजातश्चाहंपुनर्मृतः ॥४०॥ नानायोनिसहस्राणिमयादृष्टानिजायता ॥ अधुनाजातमात्रोहंप्राप्तसंस्कार
एवच ॥ ४१ ॥ ततःश्रेयःकरिष्यामियेनगर्भेनसंभवः ॥ गर्भस्थश्चिंतयत्येवमहंगर्भाद्विनिःसृतः ॥ ४२ ॥ अन्वेष्यामिशिवज्ञानंसंसारविनिवर्तकम् ॥
एवंसगर्भदुःखेनमहतापरिपीडितः ॥ ४३ ॥ जीवःकर्मवशादास्तेमोक्षोपायंविचिंतयन् ॥ यथागिरिवराक्रांतःकश्चिद्दुःखेनतिष्ठति ॥ ४४ ॥
तथाजरायुणादेहीदुःखंतिष्ठतिवेष्टितः ॥ पतितःसागरेयद्वद्दुःखमास्तेसमाकुलः ॥ ४५ ॥ गर्भोदकेनसिक्तांगःसर्वतोकुलितंतदा ॥ लोहकुंभे
यथान्यस्तःपच्यतेकश्चिदग्निना ॥ ४६ ॥ गर्भकुंभेतथाक्षिप्तःपच्यतेजाठराग्निना ॥ सूचीभिरग्निवर्णाभिर्निर्भिन्नस्यनिरंतरम् ॥ ४७ ॥
यद्दुःखंजायतेतस्यतत्रसंस्थस्यजायते ॥ गर्भवासात्परंदुःखंकष्टंनैवास्तिकुत्रचित् ॥ ४८ ॥ देहिनांदुःखबहुलंसुघोरमतिसंकटम् ॥ इत्ये
तत्सुमहद्दुःखंपापिनांपरिकीर्तितम् ॥ ४९ ॥ केवलंधर्मबुद्धीनांसप्तमासोद्भवात्सदा ॥ गर्भात्सुदुर्लभंदुःखंयोनियंत्रनिपीडनात् ॥ ५० ॥
इक्षुवत्पीड्यमानस्ययंत्रेणैवसमंततः ॥ शिरसाताड्यमानस्यपापमुद्गरकेणच ॥ ५१ ॥ यंत्रेणपीडितायद्वन्निःसाराःस्युस्तिलाःक्षणात् ॥ तथाशरीरंनिः
सारंयोनियंत्रनिपीडनात् ॥ ५२ ॥ अस्थिपट्टतुलास्तंभस्नायुबंधेनयंत्रितम् ॥ रक्तमांसमृदालिप्तंविण्मूत्रद्रव्यभाजनम् ॥ ५३ ॥ केशरोमतृणच्छन्नंरो

गायतनमातुरम् ॥ वदनैकमहाद्वारंगवाक्षाष्टकभूषितम् ॥ ५४ ॥ ओष्ठद्वयकपाटंचदंतजिह्वार्गलान्वितम् ॥ भोगतृष्णातुरंमूढंरागद्वेषवशानुगम्॥५५॥
संवर्तितांगप्रत्यंगंजरायुपरिवेष्टितम् ॥ संकटेनाविविक्तेनयोनिमार्गेण्णनिर्गतम् ॥ ५६ ॥ विण्मूत्ररक्तसिक्तांगंयत्कौशिकसमुद्भवम् ॥ अस्थिपंजरसंघा
तमस्मिन्ज्ञेयंकलेवरम् ॥ ५७ ॥ शतत्रयंषष्ट्यधिकंपंचपेशीशतानिच ॥ सार्धाभिस्तिसृभिश्छन्नंसमंताद्रोमकोटिभिः ॥ ५८ ॥ शरीरंस्थूलसूक्ष्मा
भिर्दृश्यादृश्याहिताःस्मृताः ॥ एतावतीभिर्नाडीभिःकोटिभिस्ततसमंततः ॥ ५९ ॥ अस्वेदमधुभिर्याभिरंतःस्थंस्रवतेबहिः ॥ द्वात्रिंशद्दशनाःप्रोक्ता
विंशतिश्चनखाःस्मृताः ॥ ६० ॥ पित्तस्यकुडवंज्ञेयंकफस्याप्याढकंस्मृतम् ॥ वसायाश्चपलंविंशत्तदर्द्धंकपिलस्यच ॥ ६१ ॥ पंचार्द्धंतुपलाज्ञेयाः
पलानिदशमेदसः ॥ पलत्रयंमहारक्तंमज्जास्याच्चचतुर्गणा ॥ ६२ ॥ शुक्रार्द्धंकुडवंज्ञेयंतद्बीजंदेहिनांबलम् ॥ मांसस्यचैकपिंडेनपलसाहस्रमुच्यते
॥ ६३ ॥ रक्तंपलशतंज्ञेयंविण्मूत्रंचाप्रमाणतः ॥ इतिदेहगृहंह्येतन्नित्यस्यानित्यमात्मनः ॥ ६४ ॥ अविशुद्धंविशुद्धस्यकर्मबंधाद्विनिर्मितम् ॥ शुक्र
शोणितसंयोगाद्देहःसंजायतेयतः ॥ ६५ ॥ नित्यंविण्मूत्रसंपूर्णस्तेनायमशुचिःस्मृतः ॥ यथांतर्विष्ठयापूर्णःशुचिःस्यान्नबहिर्घटः ॥ ६६ ॥ शोध्यमा
नोहिदेहोयंतेनायमशुचिस्ततः ॥ यंप्राप्यातिपवित्राणिपंचगव्यहवींषिच ॥ ६७ ॥ अशुचित्वंक्षणाद्यांतिकिमन्यदशुचिस्ततः ॥ हृद्यान्यप्यन्नपाना
नियंप्राप्यसुरभीणिच ॥ ६८ ॥ अशुचित्वंप्रयांत्याशुकिमन्यदशुचिस्ततः ॥ हेजनाःकिंनपश्यंतियन्निर्यातिदिनेदिने ॥ ६९ ॥ स्वदेहात्कश्मलंपूति
तदाधारःकथंशुचिः ॥ देहःसंशोध्यमानोपिपंचगव्यकुशांबुभिः ॥ ७० ॥ घृष्यमाणइवांगारोनिर्मलत्वंनगच्छति ॥ स्रोतांसियस्यसततंप्रभवंतिगिरे
रिव ॥ ७१ ॥ कफमूत्रपुरीषाद्यैःसदेहःशुद्ध्यतेकथम् ॥ सर्वाशुचिनिधानस्यशरीरस्यनविद्यते ॥ ७२ ॥ शुचिरेकःप्रदेशोपिविण्मूत्रस्यदृतेरिव ॥
स्पृष्ट्वात्मदेहस्रोतांसिमृत्तोयैःशोध्यतेकरः ॥ ७३ ॥ तथाप्यशुचिभांडस्यनविरज्यंतिकिंकराः ॥ कायःसुगंधपुष्पाद्यैर्यत्नेनापिसुसंस्कृतः ॥ ७४ ॥
नजहातिस्वभावंचश्वपुच्छइवनामितः ॥ यथाजात्यैवकृष्णोर्थःशुक्लःस्यात्तदुपायतः ॥ ७५ ॥ संशोध्यमानापितथाभवेन्मूर्तिर्ननिर्मला ॥ जिघ्रन्नपिस्व
दुर्गंधंपश्यन्नपिस्वकंमलम् ॥ ७६ ॥ नविरज्येतलोकोयंपीडयन्नपिनासिकाम् ॥ अहोमोहस्यमाहात्म्यंयेनेदंव्यापितंजगत् ॥ ७७ ॥ शीघ्रंपश्यन्स्व
कंदोषंकायस्यनविरज्यते ॥ स्वदेहेचाविगंधेनविरज्येतनयोनरः ॥ ७८ ॥ विरागकारणंतस्यकिमेतदुपदिश्यते ॥ सर्वमेवजगन्मेध्यंदेहएवाशुचिर्भ
वेत् ॥ ७९ ॥ तन्मलावयवस्पर्शाच्छुचिरप्यशुचिर्भवेत् ॥ गंधलेपापनोदार्थंशौचंदेहस्यकीर्तितम् ॥ ८० ॥ द्वयस्यापगमाच्छुद्धिःशुद्धस्पर्शाद्वि
शुद्ध्यति ॥ गंगातोयेनसर्वेणमृद्भारैःपर्वतोपमैः॥८१॥ आमृत्योराचरेच्छौचंभावदुष्टोनशुद्ध्यति ॥ तीर्थस्नानैस्तपोभिर्वादुष्टात्मानैवशुद्ध्यति ॥८२॥

श्वद्दतिःक्षालितातीर्थैकिंशुद्धिमधिगच्छति ॥ अंतर्भावप्रदुष्टस्यविशतोपिहुताशनम् ॥ ८३ ॥ नस्वर्गोनापवर्गश्चदेहनिर्दहनंपरम् ॥ ८४ ॥
सर्वेणगांगेनजलेनसम्यङ्मृत्पर्वतेनाप्यथभावदुष्टः ॥ आजन्मनःस्नानपरोमनुष्योनशुद्ध्यतीत्येववयंवदामः ॥ ८५ ॥ प्रज्वाल्यवह्निंघृततै
लसिक्तंप्रदक्षिणावर्तशिखंमहांतम् ॥ प्रविश्यदग्धोप्यपिभावदुष्टोनधर्ममाप्नोतिफलंनचान्यत् ॥ ८६ ॥ गंगादितीर्थेषुवसंतिमत्स्यादेवालये
पक्षिगणाश्चनित्यम् ॥ भावोज्झितास्तेनफलंलभंतेतीर्थावगाहाच्चतथैवदानात् ॥ ८७ ॥ भावशुद्धंपरंशौचंप्रमाणंसर्वकर्मसु ॥ अन्यथालिंग्य
तेकांताभावेनदुहितान्यथा ॥ ८८ ॥ मनसोभिद्यतेवृत्तिराभिन्नेष्वपिवस्तुषु ॥ अन्यथैवसुतंनारीचिंतयत्यन्यथापतिम् ॥ ८९ ॥ पश्यध्व
मस्यभावस्यमहाभाग्यमशेषतः ॥ परिष्वक्तोपियन्नार्याभावहीनांनकामयेत् ॥ ९० ॥ नाद्यादिविविधमन्नाद्यंभक्ष्याणिसुरभीणिच ॥ यदिचित्तं
समाधत्तेचित्तंकामादिषुत्रिषु ॥ ९१ ॥ गृह्यतेतैस्तुभावेननरोभावाद्विमुच्यते ॥ भावतःशुचिशुद्धात्मास्वर्गंमोक्षंचविंदति ॥ ९२ ॥ भावेनै
कांतशुद्धात्माददञ्जुह्वन्त्सचेन्मृतः ॥ ज्ञानावाप्तेरवापाशुलोकान्त्सुबहुयाजिनाम् ॥ ९३ ॥ ज्ञानामलांभसांपुसांसद्वैराग्यमृदापुनः॥ अविद्यारागविण्मू
त्रलेपगंधविशोधनम् ॥ ९४ ॥ एवमेतच्छरीरंहिनिसर्गादशुचिस्मृतम् ॥ त्वङ्मात्रसारानिःसारकदलीसारसन्निभम् ॥ ९५ ॥ ज्ञात्वैवंदोषदेहंयःप्राज्ञःस
शिथिलोभवेत् ॥ सोतिक्रामतिसंसारंदृढग्राहीचातिष्ठति ॥ ९६ ॥ एवमेतन्महाकष्टंजन्मदुःखंप्रकीर्तितम् ॥ पुंसामज्ञानदोषेणनानाकर्मवशेनच ॥९७॥
श्लोकार्द्धेनतुवक्ष्यामियदुक्तंग्रंथकोटिभिः ॥ ममेतिपरमंदुःखंनिर्ममेतिपरंसुखम् ॥ ९८ ॥ बहवोपिहिराजानःपरंमोक्षमितोगताः ॥ निर्ममेतिममेत्येवंब
द्धाःशतसहस्रशः ॥९९॥ गर्भस्थस्यस्मृतिर्यासीत्साचतस्यप्रणश्यति ॥ संमूर्च्छितस्यदुःखेनयोनियंत्रनिपीडनात्॥१००॥बाह्येनवायुनाचास्यमोहसंज्ञे
नदेहिनः ॥ स्पृष्टमात्रस्यघोरेणज्वरःसमुपजायते ॥१॥ तेनज्वरेणमहतासंमोहश्चप्रजायते ॥ संमूढस्यस्मृतिभ्रंशःशीघ्रंसंजायतेपुनः ॥ १०२ ॥ स्मृतिभ्रं
शात्ततस्तस्यपूर्वकर्मवशेनच ॥ रतिःसंजायतेतूर्णंजंतोस्तत्रैवजन्मनि ॥ ३ ॥ रक्तोमूढश्चलोकोयंनकार्येसंप्रवर्तते ॥ नचात्मानंविजानातिनपरंनच
दैवतम् ॥ ४ ॥ नशृणोतिपरंश्रेयःसतिचक्षुषिनेक्षते ॥ समेपथिशनैर्गच्छन्स्खलतीवपदेपदे ॥ ५ ॥ सत्यांबुद्धौनजानातिबोध्यमानोबुधैरपि ॥ संसारे
क्लिश्यतेतेनगर्वलोभवशानुगः ॥ ६ ॥ गर्भस्मृतेनभावेनशास्त्रमुक्तंशिवेनतु ॥ तद्दुःखकथनार्थायस्वर्गमोक्षप्रसाधनम् ॥ ७ ॥ येसत्यस्मिंच्छिवेज्ञाने
सर्वकामार्थसाधने ॥ नकुर्वंत्यात्मनःश्रेयस्तदत्रमहदद्भुतम् ॥ ८ ॥ अव्यक्तेंद्रियवृत्तित्वाद्बाल्येदुःखंमहत्पुनः ॥ इच्छन्नपिनशक्नोतिवक्तुंकर्तुंचस
क्रियाम् ॥ ९ ॥ दंतोत्थानेमहद्दुःखमल्पेनव्याधिनातथा ॥ बालरोगैश्चविविधैःपीडाबालग्रहैरपि ॥ १० ॥ क्वचक्षुत्तृट्परीतांगःक्वचित्तिष्ठतिरारटन् ॥

विण्मूत्रभक्षणाद्यंचमोहाद्बालःसमाचरेत् ॥ ११ ॥ कौमारेकर्णपीडायांमातापित्रोश्वसाधने ॥ नकुर्वेत्यात्मनःश्रेयस्तदत्रमहदद्भुतम् ॥ १२ ॥ अक्ष
राध्ययनाद्यैश्वदुःखंस्याद्गुरुताडने ॥ प्रवृत्तेंद्रियवृत्तित्वात्कामरागप्रपीडनात् ॥ १३ ॥ तदप्राप्तेस्तुसततंकुतःसौख्यंहियौवने ॥ ईर्ष्ययाचमहद्दुःखं
मोहयुक्तस्यतस्यच ॥ १४ ॥ नेत्रस्यकुपितस्यैवरागोदुःखायकेवलम् ॥ नरात्रौविंदतेनिद्रांकामाग्निपरिवेदितः ॥ १५ ॥ दिवाचापिकुतःसौख्यमर्थो
पार्जनचिंतया ॥ स्त्रीष्वायामितचित्तस्ययेपुंसःशुक्रबिंदवः ॥ १६ ॥ तेसुखायनमन्यंतेस्वेदजाइवाबिंदवः ॥ कृमिभिस्तुद्यमानस्यकुष्ठिनःपामनस्य
च ॥ १७ ॥ कंडूयनाग्नितापेनयद्भवेत्स्त्रीषुतद्विदः ॥ यादृशंमन्यतेसौख्यंगंडेपूयविनिर्गमात् ॥ १८ ॥ तादृशंस्त्रीषुमंतव्यंनाधिकंतासुविद्यते ॥
विण्मूत्रस्यसमुत्सर्गात्सुखंभवतियादृशम् ॥ १९ ॥ तादृशंस्त्रीषुविज्ञेयंमूढैःकल्पितमन्यथा ॥ नारीष्ववस्थाभूतासुसर्वदोषाश्रयासुच ॥ २० ॥ नाणु
मात्रंसुखंतासुकथितंपंचचूडया ॥ तन्मानमवमानेनवियोगेनचसंगमः ॥ २१ ॥ यौवनंजरयाग्रस्तंक्वसौख्यमनुपद्रवम् ॥ वलीपलितखालित्यैःशिथिली
कृतविग्रहम् ॥ २२ ॥ सर्वक्रियास्वशक्तिंचजरयाजर्जरीकृतम् ॥ स्त्रीपुंसयौवनंद्वंद्वमन्योन्यस्यप्रियंपुरा ॥ २३ ॥ तदेवजरयाग्रस्तमनयोरपिनाप्रियम् ॥
अपूर्ववत्स्वमात्मानंजरयापरिवर्तितम् ॥ २४ ॥ यःपश्यन्नविरज्येतकोन्यस्तस्मादचेतनः ॥ जराभिभूतःपुरुषःपत्नीपुत्रादिबांधवैः ॥ २५ ॥ अशक्त
त्वाद्दुराचारैर्भृत्यैश्वपरिभूयते ॥ धर्ममर्थंचकामंचमोक्षंचातिजरन्यतः ॥ २६ ॥ अशक्तःसाधितुंतस्माद्युवाधर्मंसमाचरेत् ॥ २७ ॥ इतिश्रीशिव
महापुराणेधर्मसंहितायांसंसारचिकित्सावर्णनंनामद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ छ ॥ व्यासउवाच ॥ कुत्सितंयोषिदर्थेयत्स्त्रियोक्तंपंचचूडया ॥
तन्मेब्रूहिसमासेनयदितुष्टोसिमेमुने ॥ १ ॥ सनत्कुमारउवाच स्त्रीणांस्वभावंवक्ष्यामिशृणुविप्रयथातथम् ॥ स्त्रियोमूलंहिदोषाणांलघुचित्ताःसदामु
ने ॥ २ ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ नारदस्यचसंवादंपुंश्चल्यापंचचूडया ॥ ३ ॥ लोकान्परिचरन्धीमान्देवर्षिर्नारदःपुरा ॥ ददर्शा
प्सरसंब्राह्मींपंचचूडामनुत्तमाम् ॥ ४ ॥ पप्रच्छाप्सरसंसुभ्रुनारदोमुनिसत्तमः ॥ संशयोहृदिमेकश्चित्तन्मेब्रूहिसुमध्यमे ॥ ५ ॥ एवमुक्तातुसाविप्रंप्र
त्युवाचवराप्सराः ॥ विषयेसतिवक्ष्यामिसमर्थांमन्यसेथमाम् ॥ ६ ॥ श्रीनारदउवाच ॥ नत्वामविषयेभद्रेनियोक्ष्यामिकथंचन ॥ स्त्रीणांस्वभावमिच्छा
मित्वत्तःश्रोतुंसुमध्यमे ॥ ७ ॥ एतच्छ्रुत्वावचस्तस्यदेवर्षेरप्सरोत्तमा ॥ प्रत्युवाचनशक्यास्त्रीसतीवैनिंदितुंस्त्रिया ॥ ८ ॥ विदितास्तेस्त्रियोयाश्चयादृश्यश्च
स्वभावतः ॥ नमामर्हसिदेवर्षेनियोक्तुंप्रश्नमीदृशम् ॥ ९ ॥ तामुवाचाथदेवर्षिःसत्यंवदसुमध्यमे ॥ मृषावादेभवेद्दोषःसत्येदोषोनविद्यते ॥ १० ॥
इत्युक्तासाकृतमतिरभसाचारुहासिनी ॥ स्त्रीदोषांच्छाश्वतान्सत्यान्भाषितुंसंप्रचक्रमे ॥ ११ ॥ पंचचूडोवाच ॥ कुलीनानाथवत्यश्चरूपवत्यश्चयो

षितः ॥ मर्यादासुनतिष्ठंतिसदोषःस्त्रीषुनारद ॥ २२ ॥ नस्त्रीभ्यःकिंचिदन्यद्वैपापीयस्तरमस्तिवै ॥ स्त्रियोमूलंहिपापानांतथात्वमपिवेत्थह ॥ १३ ॥
समाज्ञातानर्थवतःप्रतिरूपान्वशेस्थितान् ॥ पतीनंतरमसाद्यनालंभार्याःप्रतीक्षितुम् ॥१४॥ असद्धर्मस्त्वयंस्त्रीणामस्माकंभवतिप्रभो॥पापीयसोनरान्य
द्वैलज्जांत्यक्त्वाभजामहे ॥ १५ ॥ स्त्रियंचयःप्रार्थयतेसन्निकर्षंचगच्छति ॥ ईषच्चकुरुतेसेवांतमेवेच्छंतियोषितः ॥ १६ ॥ अनर्थित्वान्मनुष्याणांभया
त्परिजनस्यच ॥ मर्यादायाममर्यादाःस्त्रियस्तिष्ठंतिभर्तृषु ॥ १७ ॥ नासांकश्चिदमान्योस्तिनासांवयसिनिश्चयः ॥ सुरूपोवाकुरूपोवापुमानेवोपभु
ज्यते ॥ १८ नभयान्नाप्यनुक्रोशान्नार्थहेतोःकथंचन ॥ नज्ञातिकुलसंबंधात्स्त्रियस्तिष्ठंतिभर्तृषु ॥ १९ ॥ यौवनेवर्तमानानांमृष्टाभरणवाससाम् ॥ ना
रीणांस्वैरवृत्तीनांस्पृहयंतिकुलस्त्रियः ॥ २० ॥ याहिशश्वद्बहुमतारक्ष्यंतेदयिताःस्त्रियः ॥ अपिताःसंप्रसज्जंतेकुब्जांधजडवामने ॥ २१ ॥ पंगुष्वपिच
देवर्षेयेचान्येकुत्सितानराः ॥ स्त्रीणामगम्योलोकेषुनास्तिकश्चिन्महामुने ॥ २२ ॥ यदिपुंसांगतिर्ब्रह्मन्कथंचिन्नोपपद्यते ॥ अप्यन्योन्यंप्रवर्तंतेनचाति
ष्ठंतिभर्तृषु ॥ २३ ॥ अलाभात्पुरुषाणांचभयात्परिजनस्यच ॥ वधबंधभयाच्चैवतेनग्रस्ताहियोषितः ॥ २४ ॥ चलस्वभावादुःसेव्यादुर्ग्राह्याभावत
स्तथा ॥ प्राज्ञस्यपुरुषस्येहयथावासस्तथास्त्रियः ॥ २५ ॥ नाग्निस्तृप्यतिकाष्ठानांनापगानांमहोदधिः ॥ नांतकःसर्वभूतानांनपुंसांवामलोचनाः॥२६॥
इदमन्यच्चदेवर्षेरहस्यंसर्वयोषिताम्॥दृष्ट्वैवपुरुषंहृद्यंयोनिःप्रक्लिद्यतेस्त्रियः॥२७॥ सुस्नातंपुरुषंदृष्ट्वासुगंधंमलवर्जितम् ॥ योनिःप्रक्लिद्यतेस्त्रीणांदृतेःपादा
दिवोदकम् ॥ २८ ॥ कामानामपिदातारंकामानांमानसांत्वयोः ॥ रक्षितारंनमृष्यंतिभर्तारंपरमंस्त्रियः ॥ २९ ॥ नकामभोगात्परमान्नालंकारार्थसं
चयात् ॥ तथाहिबहुमन्यंतेयथारतिपरिग्रहात् ॥ ३० ॥ अंतकःशमनोमृत्युःपातालंवडवामुखम् ॥ क्षुरधाराविषंसर्पोवह्निरित्येकतःस्त्रियः ॥ ३१ ॥
यतश्चभूतानिमहांतिपंचयतश्चलोकोविहितोविधात्रा ॥ यतःपुमांसःप्रमदाश्चनिर्मितास्सदैवदोषःप्रमदासुनारद ॥ ३२ ॥ व्यासउवाच ॥ इमेवैमानवालो
केस्त्रीषुसज्जंत्यभीक्ष्णशः ॥ मोहेनपरमाविष्टादैवादिष्टेनबालिशाः ॥ ३३ ॥ कथमासांनराःसंगंकुर्वंतिसततंमुने ॥ दुर्जयंदर्पकंमन्येपुंभिःस्त्रीभि
श्चकाकथा ॥ ३४ ॥ कामेनानिर्जितःकश्चित्तिष्ठतीहमहीतले ॥ एतद्ब्रूहिमुनेसम्यक्नारीणांचेष्टितंपुनः ॥ ३५ ॥ यदिदंसहधर्मेतिपूर्वमुक्तंमह
र्षिभिः ॥ संदेहःसुमहानेषविरुद्धइतिमेमतिः ॥ ३६ ॥ यदानृताःस्त्रियःसर्वावेदेष्वपिहिपठ्यते ॥ धर्मोयंपौर्विकीसंज्ञाउपचारःक्रियाविधिः ॥ ३७ ॥
गह्वरंप्रतिभात्येतन्ममचिंतयोनिशम् ॥ निखिलेनमहाबुद्धेयथाचैतत्प्रवर्तितम् ॥ ३८ ॥ यथादृष्टंश्रुतंचैवभगवान्प्रब्रवीतुमे ॥ ३९ ॥ सनत्कुमारउ
वाच ॥ अष्टावक्रस्यसंवादंदिशयासहयत्पुरा ॥ आसीत्तच्छृणुकालेयप्रवक्ष्यामियथातथम् ॥४०॥अष्टावक्रोद्विजोनामकन्यांवव्रेगुणान्विताम् ॥ वदा

न्यस्यप्रभांनामसाध्वींचारित्रभूषणाम् ॥ ४१ ॥ ऋषिराहसुतांदद्मिदिशंसंद्रक्ष्यसेयदि ॥ त्वमुत्तरामहंसाधोसतमाहपुनर्मुनिम् ॥ ४२ ॥ तथेदानीं
महाकार्यंवक्तुमर्हतिमेभवान्॥किंद्रष्टव्यंमयातत्रयथावक्ष्यतिमांभवान् ॥४३॥ वदान्यउवाच ॥ धनदंसमतिक्रम्यहिमवंतंतथैवच ॥ रुद्रस्यायतनंदृष्ट्वा
सिद्धचारणसेवितम् ॥ ४४ ॥ ततोनीलंवनोद्देशंद्रक्ष्यसेमेघसंनिभम् ॥ रमणीयंमनोग्राहितत्रद्रक्ष्यसिवैस्त्रियम् ॥ ४५ ॥ तपस्विनींमहाभागांवृद्धांदी
क्षामनुष्ठिताम् ॥ द्रष्टव्यासात्वयातत्रसंपूज्याचैवयत्नतः ॥ ४६ ॥ तांदृष्ट्वाविनिवृत्तस्त्वंप्राणिग्राहंग्रहीष्यसि ॥ यद्येषसमयःसत्यःसाध्यतांगम्यतामिति
॥ ४७ ॥ अष्टावक्रउवाच ॥ यत्रत्वंवक्ष्यसेसाधोतत्रयास्याम्यसंशयम् ॥ तथातुसाधयिष्यामिभवान्भवतुसत्यवाक् ॥ ४८ ॥ ततोगच्छत्सभगवानुत्तरां
दिशमुत्तमाम् ॥ हिमवंतंगिरिश्रेष्ठंसिद्धचारणसेवितम् ॥ ४९ ॥ गत्वाप्रापनदींपुण्यांबाहुदांपुण्यवाहिनीम् ॥ तत्रासौविधिनास्नात्वाशयने
सउवासह ॥ ५० ॥ स्नात्वाप्रातरथोत्थायरुद्राणीकूपमाव्रजत् ॥ तत्रस्नात्वासमुत्थायकैलासमभितोययौ ॥ ५१ ॥ मंदाकिनींधनेशस्यरक्षितां
गुह्यकैःसदा ॥ स्नात्वातत्रोपविष्टोसौततोयक्षास्तमब्रुवन् ॥ ५२ ॥ वैश्रवणोयमायातित्वांद्रष्टुमृषिसत्तम ॥ ततोवैश्रवणोभ्येत्यपूजयित्वातमब्र
वीत् ॥ ५३ ॥ भुवनंप्रविशत्वंमेयथाकामंसुसत्कृतः ॥ ततस्तंसपुरस्कृत्यप्राविशद्भुवनंस्वकम् ॥ ५४ ॥ पाद्यार्घेणासनेनैवपूजाभिस्तमपूज
यत् ॥ निषेदुर्देवगंधर्वाधनदोवाक्यमब्रवीत् ॥ ५५ ॥ तवाज्ञयामुनेसर्वानृत्येरन्पुंश्चलीरिह ॥ आतिथ्यंपरमंकार्यंभवतोबाढमित्यसौ ॥ ५६ ॥
ततोवराघृताचीचमिश्रकेशीतथोर्वशी ॥ रंभात्वलंबुसाचित्राविश्वाचीचमनोहरा ॥ ५७ ॥ सुकेशीसुमुखीचैवहासिनीचरातिप्रिया ॥ एताश्चान्याश्च
नृत्येयुर्वाद्यानिविविधानिच ॥ ५८ ॥ अवादयंश्चगंधर्वाऋषेस्तुपुरतोनिशम् ॥ दिव्येसंवत्सरेतत्रगतेसाग्रेऋषेर्भयात् ॥ ५९ ॥ धनीप्राहततोनृत्यं
मुनेतेहप्रपश्यतः ॥ साग्रःसंवत्सरोजातःसांप्रतंकरवाणिकिम् ॥ ६० ॥ सर्वमाज्ञप्यतामाशुपरवंतोवयंत्विति ॥ अथतुष्टस्तुतंप्राहपूजितोस्मिधनेश्वर
॥ ६१ ॥ त्वयाकार्यस्यसिद्धयर्थंयास्यामिवृद्धिमान्भव ॥ अथनिष्क्रम्यत्वरितःप्रययावुत्तरामुखः ॥ ६२ ॥ कैलासंमंदरंहैममतीत्यहरपर्वतम् ॥ शिर
सातंनमस्कृत्यउत्ततारोत्तरामुखः ॥ ६३ ॥ समेनभूमिभागेनयावोढव्यान्यशेषतः ॥ ततोवरंवनोद्देशंनंदनोपममुत्तमम् ॥६४॥ तत्राश्रमपदंरम्यमष्टाव
क्रोददर्शसः ॥ शैलांश्चविविधांस्तत्रहेमरत्नमयांच्छुभान् ॥ ६५ ॥ मणिरत्नमयींभूमिंपुष्करिण्यःशुभोज्ज्वलाः ॥ अन्यान्यपिसुरम्याणिमहर्षेर्भावितात्मनः ॥ ६६ ॥ भृशंतस्यमनोरेमेददर्शसुबहून्यपि ॥ सतत्रकांचनंदिव्यंधनदस्यगृहाद्वरम् ॥ ६७ ॥ ददर्शाद्भुतसंकाशंसर्वरत्नमयंगृहम् ॥ महांतस्तत्र
विविधाःकांचनाःपर्वतोत्तमाः ॥ ६८ ॥ तन्मूर्ध्निचविमानानिरम्याण्यप्सरसांगणैः ॥ मंदारपुष्पसंकीर्णातत्रमंदाकिनीनदी ॥ ६९ ॥ स्वयंप्रभावामणयो

वज्रैर्भूमिः सुभूषिता ॥ नानाविधैश्चभवनैर्मणिरत्नविभूषितैः ॥७०॥ मुक्ताजालपरिक्षिप्तैर्विचित्रमणितोरणैः॥ऋषिःसमंततोपश्यत्संवृतंपर्वतंशुभम् ॥७१॥
शुभंमनोदृष्टिहरैर्हर्म्यैस्तत्रमनोरमम् ॥ अथद्वारमभिगतःक्षमेवासोभवेदिति ॥ ७२ ॥ ततोभवत्तस्यचिंतागत्वास्थित्वाततोब्रवीत् ॥ अतिथिंमामनुप्रा
प्तमनुजानंतुयेत्रवै ॥ ७३ ॥ नानारूपाःसप्तमुनेगृहात्तस्माद्विनिर्ययुः ॥ शुभाःकन्याःप्रहृष्टाश्चऋषेःसर्वामनोरमाः ॥ ७४ ॥ नशक्नुमोवर्णयितुंसासा
तत्रमनोहरा ॥ यांयांप्रपश्येत्कन्यांससर्वाभरणभूषिताम् ॥७५॥ अथतंप्रमदाःप्रोचुर्भगवान्प्रविशत्विति ॥ सचतासांसुरूपाणांप्रविवेशगृहंद्विजः ॥७६॥
कौतूहलसमाविष्टस्तस्यैवभवनस्यच ॥ तत्रापश्यच्छुभांकन्यांसर्वाभरणभूषिताम्॥७७॥रत्नपर्यंकमासीनांविरजोंबरधारिणीम् ॥ प्रत्युत्थायचतंविप्रंसा
ध्वीत्वभ्यवदत्तदा ॥ ७८ ॥ स्वस्त्यस्त्विवतिचतेनोक्ताआस्यतामित्युवाचसा ॥ अष्टावक्रउवाच ॥ कामभावाःसताहृष्टाताःप्राहविस्मयान्वितः ॥ ७९॥
याप्रसन्नाशुभाचाराएकामामनुतिष्ठतु ॥ शेषाःस्वानालयान्यांतुविश्रमेहंसुखंचयत् ॥ ८० ॥ अथतास्तमृषिंनत्वाययुःसर्वाःस्वमालयम् ॥ एकातत्रै
वसातिष्ठत्पर्यंकेतेनसंयुता ॥ ८१ ॥ वृद्धाभूत्वापर्यचरद्ब्राह्मणंशंसितव्रतम् ॥ अथतांसंविशन्प्राहरजनीह्यतिवर्तते ॥ ८२ ॥ त्वयापिसुप्यतेभद्रेशयनेभा
स्वरेतदा ॥ द्वितीयेशयनेदिव्येतथाविप्रेणभाषिता ॥ ८३ ॥ संलापात्तेनविप्रेणसंविवेशमहाप्रभो ॥ अथसावेपमानांगीशयनंत्वधिरोहताम् ॥ ८४ ॥
व्यपदिश्यमहर्षेर्वैनिमित्तंशीतजंतदा ॥ स्वागतंस्वागतंचास्तुतमृषिंमुनिसत्तमम् ॥८५॥ सोपगूह्यभुजाभ्यांतंभगवंतमभाषत ॥ निर्विकारमृषिंदृष्ट्वाका
ष्ठलोष्टोपमंतदा ॥ ८६ ॥ दुःखिताप्रेक्ष्यसंजल्पमकार्षीद्दाषिणासह ॥ कामेनमोहिताचाहंस्त्रीणांपुरुषतोधृतिः ॥ ८७ ॥ ब्रह्मन्नकामकारोस्तितांभजंतींभ
जस्वमाम् ॥ उपगूहचमांविप्रसमागच्छमयासह ॥ ८८ ॥ प्रहृष्टोभवविप्रर्षेकामार्ताहंभृशंत्वयि ॥ एतद्धितवधर्मात्मंस्तपसःपूज्यतेफलम् ॥ ८९ ॥
प्रार्थितोदर्शनादेवभजमानांभजस्वमाम् ॥ प्रभुत्वंतवसर्वत्रयच्चान्यदपिपश्यसि ॥ ९० ॥ सद्मचेदंवनंयच्चममचैवनसंशयः ॥ सर्वान्कामान्विधा
स्यामिसर्वकामफलप्रदा ॥ ९१ ॥ रमणीयेवनोद्देशेरमत्वंसहितोमया ॥ त्वद्वशाहंभविष्यामिरंस्यसेचमयासह ॥ ९२ ॥ सर्वान्कामानुपाश्नानोये
दिव्यायेचमानुषाः ॥ नातःपरंहिनारीणांकार्यंकिंचनविद्यते ॥ ९३ ॥ यथापुरुषसंसर्गःपरमेतद्धिनःफलम् ॥ आत्मच्छंदेनवर्ततेनार्योमन्मथनोदिताः ॥
॥ ९४ ॥ नचदह्यंतिगच्छंत्यःसुतप्तैरपिपांशुभिः ॥ अष्टावक्रउवाच ॥ परदारानहंभद्रेनगच्छेयंकथंचन ॥ ९५ ॥ दूषितंधर्मशास्त्रेषुपरदाराभिम
र्शनम् ॥ भद्रेनिर्वेष्टुकामंमांविद्धिसत्येनतेशपे ॥ ९६ ॥ विषयेष्वनभिज्ञोहंपुत्रार्थंकिलसंततिः ॥ एवंलोकान्गमिष्यामिपुत्रैरितिनसंशयः ॥ ९७ ॥
भद्रेधर्मंविजानीष्वज्ञात्वाचोपरमस्वह ॥ स्त्र्युवाच ॥ नानिलोग्निर्नवरुणोनचापित्रिदशाद्विज ॥ ९८ ॥ प्रियःस्त्रीणांयथाकामोरतिशीलाहियोषितः ॥

सहस्रायैकतांनारींप्राप्नोतीहकदाचन ॥ ९९ ॥ तथाशतसहस्रेषुयदिकाचित्पतिव्रता ॥ नैताजानंतिपितरंनकुलंनचमातरम् ॥ १०० ॥ नभ्रातॄन्नचभ
र्तारंनपुत्रान्नचदेवरम् ॥ लोटयंतिकुलंनार्यःकूलानीवसरिद्वराः ॥ १०१ ॥ दोषानमंदंमंदासुप्रजापतिरभाषत ॥ सनत्कुमारउवाच ॥ ततःसमुनिरेका
ग्रस्तांस्त्रियंप्रत्युवाचह ॥१०२॥ आस्यतांरुचिरंछंदात्किंवाकार्यंवदस्वमे ॥ सास्त्रीप्रोवाचभगवन्द्रक्ष्यसेदेशकालतः ॥१०३॥ वसतावन्महाप्राज्ञकृतकृ
त्योगमिष्यसि ॥ ब्रह्मर्षिस्तामथोवाचसतथेतिमहामुने॥१०४॥वसेयंयावदुत्साहोभवत्यानात्रसंशयः॥अथस्त्रर्षिरभिप्रेक्ष्यस्त्रियंतांजरयान्विताम्॥१०५॥
चिंतांपरमिकांलेभेसंतप्तइवचाभवत् ॥ यद्यदंगंहिसोपश्यत्तस्याविप्रर्षभस्तदा ॥ १०६ ॥ नारमत्तत्रतत्रास्यदृष्टीरूपपराजिता ॥ देवतेयंगृहस्या
स्यशापान्नूनंविरूपिता ॥ ७ ॥ शापस्यकारणंवक्तुंनयुक्तंसहसामया ॥ अथचिंतयतस्तस्यतमर्थंज्ञातुमिच्छतः ॥ १०८ ॥ अगमत्तदहःशेषंमनसाव्या
कुलेनतु ॥ अथसास्त्रीतदोवाचभगवन्पश्यवैरवेः ॥ १०९ ॥ रूपंसंध्याभ्रसंयुक्तंकिमुपस्थाप्यतांतव ॥ सउवाचतदातांस्त्रींस्नानोदकमिहानय ॥
॥ ११० ॥ उपासिष्येततःसंध्यावाग्यतोनियतेंद्रियः ॥ अथसास्त्रीतमुक्त्वावैविप्रमेवंभवत्विति ॥ १११ ॥ दिव्यतैलमुपादायस्नानशाटीमुपानयत् ॥
अनुज्ञाताचमुनिनासास्त्रीतेनमहात्मना ॥ ११२ ॥ अथास्यतैलेनांगानिसर्वाण्येवास्यश्लक्ष्णयत् ॥ शनैश्चोन्मार्जितंतत्रस्नानशालामुपानयत् ॥११३॥
भद्रासनंतत्रचित्रमृषिरन्वाविशन्नवम् ॥ तथोपविष्टंप्रयतातास्मिन्भद्रासनेशुभा ॥ ११४ ॥ स्नापयामासशनकैस्तमृषिंसुखहस्तवत् ॥ दिव्यंचवि
धिंचक्रेसोपहारंमुनेस्तदा ॥ ११५ ॥ शाकेनसुसुखोष्णेनतस्याहस्तसुखेनच ॥ व्यतीतांरजनींकृत्स्नांनजज्ञौसमहामनाः ॥ ११६ ॥ ततउत्था
यसमुनिस्तदापरमविस्मितः ॥ पूर्वस्यांदिशिसोमंचसोपश्यदुदितंदिवि ॥ ११७ ॥ तस्यबुद्धिरियंकिंनुमोहस्तत्वमिदंभवेत् ॥ अथोपास्य
सहस्रांशुंकिंकरोमीत्युवाचताम् ॥ ११८ ॥ साचामृतरसप्रख्यमृषेरन्नमुपानयत् ॥ तस्यस्वादुतयान्नस्यनप्रभूतंचकारसः ॥ ११९ ॥ व्यगम
च्चाप्यहःशेषंततःसंध्यागमत्पुनः ॥ अथस्त्रीभगवंतंसासुप्यतामित्यनोदयत् ॥ १२० ॥ तत्रवैशयनेदिव्येतस्यतस्याश्चकल्पिते ॥ ॥ अष्टा
वक्रउवाच ॥ ॥ नभद्रेपरदारेषुमनोमेसंप्रसज्जते ॥ १२१ ॥ उत्तिष्ठोत्तिष्ठभद्रंतेस्वपचैवरमस्वच ॥ सातदातेनविप्रेणतथावृत्या।निवर्तिता ॥ १२२ ॥
स्वतंत्रास्मीत्युवाचैनंनधर्मच्छलमस्तिते ॥ अष्टावक्रउवाच ॥ नास्तिस्वतंत्रतास्त्रीणामस्वतंत्राहियोषितः ॥ २३ ॥ प्रजापतिमतंह्येतन्नस्त्रीस्वातं
त्र्यमर्हति ॥ स्त्र्युवाच ॥ बाधतेमैथुनंविप्रममभक्तिंचपश्यसि ॥ २४ ॥ भूमौनिपतमानायाःशरणंमेभवानघ ॥ यदिवादोषजातंत्वंपरदारेषुपश्य
सि ॥ २५ ॥ आत्मानंस्पर्शयाम्यद्यपाणिंगृह्णीष्वमेद्विज ॥ नदोषोभवितातेद्यसत्येनैवब्रवीम्यहम् ॥ १२६ ॥ स्वतंत्रांमांविजानीहियोऽधर्मःसोस्तुवै

मयि ॥ अधर्मंप्राप्स्यसेविप्रयन्मांत्वंनाभिनंदसि ॥१२७॥ अष्टावक्रउवाच ॥ हरंतीदोषजातानिनरंयातुयथेच्छकम् ॥ नरंस्येपरदारेषुभद्रेस्वंशयनं
व्रज ॥२८॥ स्त्र्युवाच ॥ शिरसाप्रणमेविप्रप्रसादंकर्तुमर्हसि ॥ त्वय्यावेशितचित्ताचस्वतंत्रास्मिभजस्वमाम् ॥ २९ ॥ अष्टावक्रउवाच ॥ स्वतंत्रासिकथं
भद्रेब्रूहिकारणमत्रवै ॥ नास्तिलोकेहिकाचित्स्त्रीयावैस्वातंत्र्यमर्हति ॥१३०॥ स्त्र्युवाच ॥ कौमारंब्रह्मचर्यंमेकन्यैवास्मिनसंशयः ॥ कुमारावैमांतिवि
प्रश्रद्धांनोविजिहीहिमे ॥ ३१ ॥ अष्टावक्रउवाच ॥ यथाममतथातुल्यंयथातवतथामम ॥ जिज्ञासेयमृषेस्तस्याविघ्नंसत्यंतुकिंभवेत् ॥ ३२ ॥ आश्चर्यं
परमंहीदंकिंतुश्रेयोहिमेभवेत् ॥ दिव्याभरणवस्त्राहिकन्येयंमामुपस्थिता ॥ ३३ ॥ किंत्वस्याःपरमंरूपंजीर्णमासीत्कथंचन ॥ कन्यारूपमिहाद्यैव
किमिहात्रोत्तरंभवेत् ॥ ३४ ॥ यथावृत्तेःपरंशक्त्यानव्युत्थास्येकदाचन ॥ नरोचयेहंव्युत्थानंवृत्त्यैवसाधयिष्यसि ॥ १३५ ॥ व्यासउवाच ॥ नबिभे
मिकथंसास्त्रीशापस्यपरमद्युतेः ॥ कथंनिवृत्तोभगवांस्तद्ब्रवीतुमहामुने ॥ ३६ ॥ सनत्कुमारउवाच ॥ अष्टावक्रोन्वपृच्छत्तांरूपंविकुरुषेकथम् ॥ अ
नृतंचनवक्तव्यंब्रूहिब्राह्मणकाम्यया ॥ ३७ ॥ स्त्र्युवाच ॥ द्यावापृथिव्योर्मात्रैषाकाम्याब्राह्मणसत्तम ॥ शृणुष्वावहितःसर्वंयदिदंसत्यविक्रम ॥ ३८ ॥
उत्तरांमांदिशंविद्धिदृष्टंस्त्रीचापलंचते ॥ अभ्युत्थानेनवैलोकाजिताःसत्यपराक्रम ॥ ३९ ॥ जिज्ञासेयंप्रयुक्तामेस्थिरीकर्तुंतवानघ ॥ स्थविराणामपि
स्त्रीणांबाधतेमैथुनोज्वरः ॥१४०॥ तुष्टःपितामहस्तेद्यतथादेवाःसवासवाः ॥ सत्वंयेनचकार्येणसंप्राप्तोभगवान्निति ॥ ४१ ॥ प्रेषितस्तेनविप्रेणकन्यार्थ
मृषिसत्तम ॥ तवोपदेशंकर्तुंवैतच्चसर्वंकृतंमया ॥ ४२ ॥ क्षेमंगमिष्यसिगृहंश्रमश्चनभविष्यति ॥ कन्यांप्राप्स्यसितांविप्रपुत्रिणीसाभविष्यति ॥ ४३ ॥
काम्ययापृष्टवांस्त्वंमेततोव्याहृतमुत्तरम् ॥ अनतिक्रमणीयैषाकृत्स्नैर्लोकैस्त्रिभिःसदा ॥ ४४ ॥ गच्छस्वसुकृतंकृत्यंकिंचान्यच्छ्रोतुमिच्छसि ॥ याव
द्ब्रवीमिविप्रर्षेअष्टावक्रयथातथम् ॥ ४५ ॥ ऋषिप्रसादिताचास्मितवहेतोर्द्विजर्षभ ॥ तस्यसंमाननार्थंमेत्वयिवाक्यंप्रभाषितम् ॥ ४६ ॥ सनत्कुमा
रउवाच ॥ श्रुत्वातुवचनंतस्याःसविप्रःप्रांजलिस्तदा ॥ अनुज्ञातस्तयाचापिस्वगृहंपुनराविशत् ॥ ४७ ॥ गृहमागम्यविश्रांतःस्वजनंप्रतिपूज्यच ॥
अभ्यगच्छततंविप्रंन्यायतःप्रीतिपूर्वकम् ॥ ४८ ॥ पृष्टश्चतेनविप्रेणदृष्टमेतन्निदर्शनम् ॥ प्राहविप्रंततोविप्रःसुप्रीतेनांतरात्मना ॥ ४९ ॥
भवताहमनुज्ञातःप्रस्थितोगंधमादनम् ॥ तस्यचोत्तरतोदेशेदृष्टंतद्वैवनंमहत् ॥ १५० ॥ तयाचाहमनुज्ञातोभवांश्चापिप्रकीर्तितः ॥ श्रावितश्चा
स्मितद्वाक्यंगृहंचाभ्यागतःप्रभो ॥ ५१ ॥ तमुवाचततोविप्रःप्रतिगृह्णीष्वमेसुताम् ॥ नक्षत्रतिथिसंयोगेपात्रंहिपरमंभवान् ॥ १५२ ॥
अष्टावक्रस्तथेत्युक्त्वाप्रतिगृह्यचतांशुभाम् ॥ कन्यांपरमधर्मात्माप्रीतिमांश्चाभवत्तदा ॥१५३॥ कन्यांतांप्रतिजग्राहभार्यांपरमशोभनाम् ॥ ईदृशास्तु

सदानार्योभवत्येकापतिव्रता ॥ १५४ ॥ यस्याःसंकीर्तनात्सद्यःसर्वपापक्षयोभवेत् ॥ नराःकेत्वीदृश।नित्यंयेषांसंकीर्तनात्कलिः ॥ ५५ ॥ वर्ष्मस्थोपि
हिनिर्यातिसर्वकार्यप्रवर्तकः ॥ १५६ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांत्रिचत्वारिंशोध्यायः ॥ ४३ ॥ सनत्कुमारउवाच ॥ पुनरन्यत्तुवक्ष्यामिअरुं
धत्यायथावचः ॥ असतीत्वेयथास्त्रीणांतच्छृणुष्वमहामुने ॥ १ ॥ पुरादित्यश्चशक्रश्चधूमकेतुरचिंतयन् ॥ सदास्त्रीणांपतिर्देवोरविरग्निर्द्विजन्मनाम्॥२॥
तथातिथिर्गृहस्थानांनृपादीनांद्विजोत्तमाः ॥ एतेस्युर्यदिसंतुष्टाब्रह्मविष्णुमहेश्वराः ॥ ३ ॥ भवंतिसुखिनोनित्यंदेवाइंद्रपुरोगमाः ॥ इहातिर्धर्मकामानां
परत्रचशुभागतिः ॥ ४ ॥ अतःसमीक्षितोस्माभिःसत्यमस्तीहयोषिताम् ॥ असत्यंसाहसंमायामूर्खत्वमतिलोभता ॥ ५ ॥ अशौचंनिर्दयत्वंचस्त्रीणां
दोषाःस्वभावजाः ॥ श्रूयंतेयोषितःकाश्चित्सत्त्वधर्मेसमास्थिताः ॥ ६ ॥ द्विजास्तथास्वकर्मस्थागृहिणोगृहकर्मणि ॥ राजानोथविशश्चापिप्रजापालनत
त्पराः ॥७॥ अरुंधतीवसिष्ठस्यप्रख्यातासुपतिव्रता ॥ अस्याःसाम्येनतद्रूपंनचकारपतिव्रता ॥ ८ ॥ स्वाहाचैवापितांदृष्ट्वापुराविस्मयमागमत् ॥ धन्या
त्वमसिकल्याणियात्वमेकापतिव्रता ॥९॥ नतेरूपमहंकर्तुंशक्ताचान्याकरिष्यति ॥ तस्मात्त्वांयाःस्त्रियःकाश्चित्प्रेक्षिष्यंतिसुभावतः ॥ १० ॥ करंस्पृष्ट्वो
ढकालेतुभर्तुर्द्विजाग्निसंनिधौ॥सुखंतासांधनंपुत्रास्त्ववैधव्यंभविष्यति॥ ११॥एवंयासाभिमंतव्यागुणैर्युक्तापतिव्रता ॥ प्रोच्यतेस्त्रीभिरन्याभिर्गुणीवेत्तिय
तोगुणान् ॥१२॥ गच्छामोतोवयंप्रष्टुंव्रतंस्त्रीणांपतिव्रताम् ॥ इत्युक्त्वातेययुर्देवास्त्रयःसूर्येंद्रवह्नयः ॥ १३ ॥ ततोददृशुरायांतींस्वधाम्नोधृतकुंभकाम् ॥
अरुंधतींपतिप्राणांपत्युःप्रियहितेरताम्॥१४॥दृष्ट्वातांहर्षतस्तस्थुरग्रेतस्यास्तुवर्त्मनि ॥ ततःसातान्मुदादृष्ट्वाज्ञात्वादेवानरुंधती॥१५॥प्रदक्षिणमुपा
वृत्यप्रणिपत्यपुनःपुनः ॥ प्राहतान्मुनिकृत्यंयत्तद्भवंतुदिवौकसः ॥ १६ ॥ तच्छ्रुत्वातेवचस्तस्याःप्रोचुस्तांवरवर्णिनीम् ॥ प्रष्टुंवयंसमायाताःकंचित्प्रश्नं
हिनोवद ॥१७॥ साचतानाहमेधाम्निविश्रमध्वंक्षणादनु ॥ कथयिष्यामितत्सर्वंप्रश्नंचेष्टितमात्मनः ॥१८॥ यावदायामिसंगृह्यजलपूर्णमिमंघटम् ॥ तेता
मूचुर्घटंतेतुजलेनाशुअबीभरन् ॥१९॥ निवृत्यकथयास्माकंयेनगच्छामहेवयम् ॥ तच्छ्रुत्वाबाढंतानाहपूरयध्वमिमंघटम् ॥ २० ॥ इंद्रउवाच॥जन्मतो
ब्राह्मणस्येहयदिमेनभयंभवेत् ॥ तपसाब्रह्मचर्येणस्वर्गान्मांच्यावयिष्यति ॥ २१ ॥ तेनसत्येनमेदेविपादःकुंभस्यपूर्यताम् ॥अग्निरुवाच॥ हव्यैर्वाप्यथ
वाकव्यैर्हविष्यैरस्मितर्पितः ॥ २२॥ यदिमेतृप्तिरस्तीहब्राह्मणेवान्नतर्पिते ॥ तेनसत्येनमेदेविपादःकुंभस्यपूर्यताम् ॥२३॥ सूर्यउवाच ॥ ब्राह्मणाःप्रीति
तोनित्यंसंगृहीतोमहासुरैः॥जलपूर्णप्रसृत्यापिनोचेद्धन्युरुदैमिकिम्॥२४॥ तेनसत्येनमेदेविपादःकुंभस्यपूर्यताम्॥अरुंधत्युवाच॥यावद्गृहोनवास्त्रीणांया
वन्नैवाभिभाषणम् ॥ २५ ॥ तावत्तासांसतीत्वंस्यात्तस्माद्रक्ष्यावरस्त्रियः ॥ तेनसत्येनमेदेवाःपादःकुंभस्यपूर्यताम् ॥ २६ ॥ इत्युक्तेजलसंपूर्णेकुंभेदेवा

ब्रुवंस्ततः ॥ एतदेववयंदेवित्वत्समीपमिहागताः ॥ २७ ॥ स्त्रीणांहिचरितंप्रष्टुमतोयामःस्वमालयम् ॥ इत्युक्त्वातानुवाचेदमुत्तमाधममध्यमाः ॥२८॥
संतिनोविस्मयःकार्यःस्त्रियोहिदेवसंमताः ॥ इत्युक्तास्तेययुर्द्धामस्वंस्वमिंद्रपुरोगमाः ॥ २९ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांचतुश्चत्वारिंशो
ऽध्यायः ॥ ४४ ॥ ॥ सनत्कुमारउवाच ॥ ॥ विवाहंकारयेत्पश्चाद्विधिवद्विजपुंगवैः ॥ ततःसंपूजयेद्विप्रान्सपत्नीकान्महामुने ॥ १ ॥ भक्ष्यैर्भोज्यै
र्गंधमाल्यैर्वस्त्रैराभरणैर्द्विजः ॥ ततःक्षमापयेद्विप्रानिमंमंत्रमुदाहरेत् ॥ २ ॥ यथामद्रेशदुहितायमात्प्राप्तुवतीवरान् ॥ तथाहंप्राप्नुयांदेववरान्त्सर्वान्मनो
रमान् ॥ ३ ॥ इत्युक्त्वाप्रणिपत्याथद्विजेंद्रांस्तान्विसर्जयेत् ॥ ४ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ देव्युवाच ॥
भगवंस्त्वत्प्रसादेनज्ञातंमेसकलंमतम् ॥ यथार्चनंतुतेदेवयैर्मंत्रैश्चयथाविधि ॥ १ ॥ अद्यापिसंशयोह्येकःकालचक्रंप्रतिप्रभो ॥ मृत्युचिह्नंयथादेवकिं
प्रमाणंतथायुषः ॥ २ ॥ तथाकथयमेनाथयद्यहंतववल्लभा ॥ ईश्वरउवाच ॥ सत्यंतेकथयिष्यामियेनकालःप्रबुध्यते ॥ ३ ॥ अहःपक्षंतथामासमृतुंचा
यनवत्सरम् ॥ स्थूलसूक्ष्मगतैश्चिह्नैर्बहिरंतर्गतैस्तथा ॥ ४ ॥ तत्तेहंसंप्रवक्ष्यामिशृणुतत्वेनसुंदरि ॥ अकस्मात्पांडुरंदेहमूर्द्ध्वरागंसमंततः ॥ ५ ॥
मुखंकर्णौतथाचक्षुर्जिह्वास्तंभोयदाभवेत् ॥ तदामृत्युंविजानीयात्षण्मासाभ्यंतरंप्रिये ॥ ६ ॥ रौरवानुगतंभद्रेध्वनिंनाकर्णयेद्द्रुतम् ॥ षण्मासाभ्यंतरं
मृत्युर्ज्ञातव्यःकालवेदिभिः ॥ ७ ॥ रविसोमाग्निसंयोगाद्यदोद्द्योतंनपश्यति ॥ कृष्णंसर्पंसमस्तंचषण्मासंजीवितंतथा ॥ ८ ॥ वामहस्तोयदादेविसप्ता
हंस्पंदतेप्रिये ॥ उत्मीलयंतिगात्राणितालुकंशुष्यतेयदा ॥ ९ ॥ जीवितंतुतदातस्यमासमेकंनसंशयः ॥ नासातुस्रवतेयस्यत्रिदोषेपक्षजीवितम् ॥१०॥
वक्रंकंठश्चशुष्येतषण्मासांतिगतायुषः ॥ स्थूलाजिव्हाभवेद्यस्यद्विजाःक्लिद्यंतिभामिनि ॥११॥ षण्मासाज्जायतेमृत्युश्चिह्नैस्तैरुपलक्षयेत् ॥ अंबुतैलघृत
स्थंतुदर्पणेवरवर्णिनि ॥ १२ ॥ पश्यतेनयदात्मानंविकृतंस्थूलमेवच ॥ षण्मासायुःसविज्ञेयःकालचक्रंविजानता ॥ १३ ॥ शिरोहीनांयदाछायांस्व
कीयामुपलक्षयेत् ॥ अथवाछाययाहीनंमासमेकंनजीवति ॥ १४ ॥ आंगिकाःकथिताभद्रेबाह्यस्थाञ्छृणुसांप्रतम् ॥ रश्मिहीनंयदादेविसोमार्कमंडलद्व
यम् ॥ १५ ॥ दृश्यतेपटलाकारंमासार्द्धेनविपद्यते ॥ अरुंधतीमहायानमिंदुंलांछनवर्जितम् ॥ १६ ॥ सोपिजीवतिवर्षार्द्धंतथावादृष्टतारकः ॥ मेघहीनं
यदादेविविद्युद्भिर्ज्वलिनंनभः॥१७॥ दृष्टेगृहेचदिङ्मोहःषण्मासाज्जायतेध्रुवम् ॥ रात्रौधनुर्यदापश्येन्मध्याह्नेचोल्कपातनम् ॥१८॥ वेष्टचतेगृध्रकाकैश्चष
ण्मासायुर्नसंशयः ॥ ऋषयःस्वर्गपंथाश्चनैवदृश्येतचांबरे॥१९॥षण्मासायुर्विजानीयात्पुरुषैःकालवेदिभिः॥अकस्माद्राहुणाग्रस्तंसूर्यवासोममेवच॥२०॥
दिक्चक्रंभ्रांतवत्पश्येत्षण्मासान्म्रियतेस्फुटम् ॥ मक्षिकैर्नीलवर्णाभैरकस्माद्वेष्टचतेपुमान् ॥ २१ ॥ जीवतेमासमेकंतुज्ञातव्यंपरमार्थतः ॥ गृध्रःकाकः

कपोतश्चशिरश्चाक्रम्यतिष्ठति ॥२२॥ शीघ्रंतुम्रियतेजंतुर्मासैकेननसंशयः॥एवंचारिष्टभेदंतुबाह्यस्थंसमुदाहृतम् ॥ २३ ॥ आयुधानांहितार्थायसंक्षेपेणवदाम्यहम् ॥ हस्तयोरुभयोर्देवियथाकालंविजानते ॥ २४ ॥ वामदक्षिणयोर्भद्रेप्रत्यक्षंतेवदाम्यहम् ॥ वामंशुक्लंविजानीयाद्दक्षिणंकृष्णसंज्ञितम् ॥ २५ ॥ दक्षिणंसूर्यमित्याहुर्वामश्चंद्रउदाहृतः ॥ एवंपक्षौस्थितौद्वौतुसमासात्सुरसुंदरि ॥ २७ ॥ शुचिर्भूत्वास्मरेद्देवंसुस्नातःसंयतेंद्रियः ॥ हस्तौप्रक्षाल्यक्षीरेणालक्तकेनतुमर्दयेत् ॥ २७ ॥ गंधैःपुष्पैःकरौकृत्वामृगयेच्चशुभाशुभम् ॥ कनिष्ठामादितःकृत्वायावदंगुष्ठकंप्रिये ॥ २८ ॥ पर्वत्रयक्रमेणैवहस्तयोरुभयोरपि ॥ प्रतिपदादिंविन्यस्यतिथिंप्रतिपदादितः ॥ २९ ॥ संपुटाकारहस्तौतुपूर्वादिमुखसंस्थितः ॥ स्मरेन्नवार्णकंमंत्रंयावदष्टोत्तरंशतम् ॥ ३० ॥ निरीक्षयेत्ततोहस्तौसर्वपर्वणियत्नतः ॥ तस्मिन्पर्वणितद्रेखादृश्यतेभृंगसन्निभा ॥ ३१ ॥ तत्तिथौमृत्युर्विज्ञेयःकृष्णेशुक्लेतथाप्रिये ॥ निश्चितंमरणंतस्यकालचक्रस्यकीर्तितम् ॥ ३२ ॥ अधुनानादजंवक्ष्येसंक्षेपात्काललक्षणम् ॥ गमागमंविदित्वातुकर्मकुर्याच्छृणुप्रिये ॥ ३३ ॥ आत्मविज्ञानंसुश्रोणिचारंज्ञात्वातुतत्त्वतः ॥ क्षणंत्रुटिर्लवंचैवनिमेषंकाष्ठकालिकम् ॥ ३४ ॥ मुहूर्तंकंत्वहोरात्रंपक्षमासर्तुवत्सरम् ॥ अब्दंयुगंतथाकल्पंमहाकल्पंतथैवच ॥ ३५ ॥ एवंसंहरतेकालःपरिपाव्यासदाशिवः ॥ वामदक्षिणमध्येतुपथित्रयमिदंस्मृतम् ॥ ३६ ॥ दिनानिपंचचारभ्यपंचविंशद्दिनावधि ॥ वामचारगतोनादःप्रमाणंकथितंतव ॥ ३७ ॥ भूतरंध्रदिशश्चैवध्वजश्चवरवर्णिनि ॥ वामचारगतोनादःप्रमाणंकालवेदिनः ॥ ३८ ॥ ऋतुविकारभूताश्चगुणस्तत्रैवभामिनि ॥ प्रमाणंदक्षिणंप्रोक्तंज्ञातव्यंप्राणवेदिभिः ॥ ३९ ॥ भूतसंख्यांयदाप्राणोवहतेचइडादयः ॥ वर्षत्रयंतदातस्यजीवितस्यनसंशयः ॥ ४० ॥ दिनादशप्रवाहेनद्वावब्देचसजीवति ॥ पंचदशप्रवाहेनअब्दमेकंगतायुषः ॥ ४१ ॥ विंशद्दिनप्रवाहेनषण्मासंलक्षयेत्तथा ॥ पंचविंशद्दिनानांतुवहतेवामनाडिका ॥ ४२ ॥ जीवितंतुतदातस्यमासत्रयगतायुषः ॥ षड्विंशद्दिनमानेनमासद्वयगतायुषः ॥४३॥ सप्तविंशद्दिनानांतुवहतेत्वतिविश्रगा ॥ मासमेकंसमाख्यातंजीवितंवामगोचरे ॥४४॥ एतत्प्रमाणंविज्ञेयंवामवायुप्रमाणतः ॥ सव्येतरेदिनान्येवचत्वारआनुपूर्व्यशः ॥४५॥ चतुःस्थानेस्थितादेविषोडशैताःप्रकीर्तिताः ॥ तेषांप्रमाणंवक्ष्यामिअधुनाहिहितार्थतः ॥ ४६ ॥ षड्दिनान्यादितःकृत्वासंख्यायाश्चयथाविधि ॥ एतदंतर्गतंकालंवामरंध्रेप्रकाशितम् ॥ षड्दिनानियदारूढंवर्षद्वयंसजीवति ॥४७॥ मासान्यष्टौविजानीयाद्दिनान्यष्टादशानितु ॥ ४८ ॥ प्राणःसप्तदिनेदेविवर्षद्वयंनसंशयः ॥ सप्तमासान्विजानीयाद्दिनैःषड्भिर्गतायुषः ॥४९॥ अष्टौदिनप्रभेदेनवर्षद्वयंसजीवति ॥ मासांश्चत्वारिविज्ञेयंचतुर्विंशद्दिनावधिं ॥ ५०॥ नवदिनानियदाप्राणावहंतितत्त्रिमासकम् ॥ मासद्वयंचद्वेमासेदिनाद्वादशकीर्तिताः ॥ ५१ ॥ पूर्ववत्कथितायेतुकालंतेषांनपूर्वके ॥ अवांतरदिनाये

तुतेसमासेनकथ्यते ॥ ५२ ॥ एकादशप्रवाहेनवर्षमेकंनजीवति ॥ मासानवतथाप्रोक्तादिनाअष्टदिनावधि ॥ ५३ ॥ द्वादशाहेप्रवाहेनवर्षमेकंगतायुष
म् ॥ मासान्तसप्तविजानीयाद्दिनषट्कमुदाहृतम् ॥ ५४ ॥ यदाचवहतेनाडीत्रयोदशादिनावधि ॥ संवत्सरंभवेत्तस्यमासाश्चत्वारिकीर्तिताः ॥ ५५ ॥
चतुर्विंशद्दिनाःशेषाजीवितंचनसंशयः ॥ प्राणवाहोयदावामेचतुर्दशादिनानितु ॥ ५६ ॥ द्वादशाहप्रवाहेनद्विमासंजीवितंखलु ॥ द्वितीयंतुचतुर्थेनअंतरा
लदशांतरे ॥ ५७ ॥ तृतीयंचसमासेनकालचक्रंवदाम्यहम् ॥ षोडशाहप्रवाहेननवमासैर्गतायुषम् ॥ ५८ ॥ दिनाअष्टादशतत्रकथितंसाधकेश्वर ॥ वाम
चारंयदादेविअष्टादशादिनावधि ॥ ५९ ॥ जीवितंचाष्टमासंतुदिनाद्वादशकीर्तिताः ॥ चतुर्विंशद्दिनास्तत्रनिश्चयेनावधारय ॥ ६० ॥ प्राणवाहोयदावा
मेत्रयोविंशद्दिनावधि ॥ मासाश्चत्वारोविज्ञेयाःषड्दिनानितथोत्तरे ॥ ६१ ॥ चतुर्विंशप्रवाहेनमासत्रयंसजीवति॥ दिनास्तत्रदशाष्टौचसंहरत्यविचारतः
॥ ६२ ॥ अवांतरदिनायेतुसंक्षेपात्प्रकटीकृताः ॥ वामचारंसमाख्यातंदक्षिणंशृणुसांप्रतम् ॥ ६३ ॥ अष्टाविंशप्रवाहेनतिथिमानेनजीवति ॥ प्रवाहेन
दशाहेनतत्संख्येनविपद्यते ॥ ६४ ॥ त्रिंशवाहप्रवाहेनपंचाहेनविनश्यति ॥ एकत्रिंशद्यदादेविवहतेचनिरंतरम् ॥ ६५ ॥ दिनत्रयंतदातस्यजीवितस्यं
नसंशयः ॥ दक्षिणंकथितंप्राणंमध्यस्थंकथयामिते ॥ ६६ ॥ एकभावगतोवायुप्रवाहोमुखमंडले ॥ धममानःप्रवाहेतुदिनमेकंसजीवति ॥ ६७ ॥ चक्र
मेतत्परासोर्हिकालचक्रमुदाहृतम् ॥ एतत्तेकथितंदेविकिमन्यच्छ्रोतुमिच्छसि ॥ ६८ ॥ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांकालज्ञानंनाम
षड्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ देव्युवाच ॥ ॥ कथितंतुत्वयादेवकालज्ञानंयथार्थतः ॥ कालस्यवंचनंब्रूहियथातत्वेनयोगिनः ॥ १ ॥ काल
स्तुसंनिकृष्टोहिवर्ततेसर्वजंतुषु ॥ यथाचास्यनमृत्युश्चवंचतेकालमागतम् ॥ २ ॥ तथाकथयमेदेवहितार्थमिहयोगिनः ॥ शंकरउवाच ॥ शृणुदेविप्रव
क्ष्यामियत्त्वयापृच्छतेह्यहम् ॥ ३ ॥ कथयामिसमासेनमानुषाणांहितार्थतः ॥ पृथिव्यापस्तथातेजोवायुराकाशमेवच ॥ ४ ॥ एतेषांहिसमायोगःशरी
रंपांचभौतिकम् ॥ आकाशस्तुपरोव्यापीसर्वेषांसर्वगःस्थितः ॥ ५ ॥ आकाशेतुविलीयंतेसंभवंतिपुनस्ततः ॥ वियोगेतुसदैकस्यस्वंधामप्रतिपेदिरे ॥
॥ ६ ॥ ततोस्यस्थिरताचास्तिसंनिपातस्यसुंदरि ॥ ज्ञानिनोपितथायत्नात्तपोमंत्रबलाद्यदि ॥ ७ ॥ देव्युवाच ॥ श्वेतंनयनह्यतिघोररूपःकालःकराल
स्त्रिदिवेशनाथ ॥ दग्धस्त्वयात्वंपुनरेवतुष्टःस्तोत्रैःस्तुत्वात्वांप्रकृतिंसलेभे ॥ ८ ॥ त्वयासचोक्तःकृपयाजनानामदृष्टरूपःप्रचरिष्यसीति ॥ दृष्टंत्वयात
न्निहितंमयाहिप्रभोवरात्तेपुनरुत्थितंच ॥ ९ ॥ तदद्यभोःकालइहास्तिकिंचिद्धिहन्यतेयेनवदस्वतन्मे ॥ शंकरउवाच ॥ नहन्यतेदेववरैस्तुदैत्यैःसयक्षर
क्षोरगमानुषैश्च ॥ १० ॥ येयोगिनोध्यानपराःसदेहाभवंतितेघ्नंतिसुखेनकालम् ॥ ११ ॥ सनत्कुमारउवाच ॥ एतच्छ्रुत्वात्रिभुवनगुरोःप्राहगौरीविहस्य

सत्यंत्वंमेवदकथमसौहन्यतेयेनकालः ॥ शंभुस्तामाहशशिवदनेयोगिनोयेक्षयंतिकालंजातंसकलमनघास्तच्छृणुष्वैकचित्ता ॥ १२ ॥ शंकरउवाच ॥ पंचभूतात्मकोदेहःसदायुक्तस्तुतद्गुणैः ॥ उत्पद्यतेवरारोहेतद्विलीनैर्हिपार्थिवैः ॥ १३ ॥ आकाशाज्जायतेवायुर्वायोस्तेजश्चजायते ॥ तेजसोंबुविनिर्दिष्टं तस्माद्धिपृथिवीभवेत् ॥ १४ ॥ पृथिव्यादीनिभूतानिगच्छंतिक्रमशोवरम्॥धरापंचगुणाप्रोक्ताआपश्चैवचतुर्गुणाः॥१५॥ त्रिगुणंचतथातेजोवायुर्द्विगुण एवच ॥ शब्दैकगुणमाकाशंपृथिव्यादिषुकीर्तिताः॥१६॥ शब्दःस्पर्शश्चरूपंचरसोगंधश्चपंचमः ॥ विजहातिगुणंस्वंस्वंतदाभूतंविपद्यते ॥१७॥ यदा गुणंविगृह्णातिप्रादुर्भूतंतदुच्यते ॥ तस्माद्धियोगिनानित्यंस्वकायाकाशजागुणाः ॥ १८ ॥ चिंतनीयाःप्रयत्नेनदेविकालजिगीषुणा ॥ देव्युवाच ॥ कथंहिजीयतेकालोयोगिभिर्मेवदेश्वर ॥ १९ ॥ ध्यानेनजाप्यमात्रेणतत्सर्वंकथयप्रभो ॥ शंकरउवाच ॥ शृणुदेविप्रवक्ष्यामियोगिनांहितकाम्यया॥२०॥ परंज्ञानमकथ्यंचनदेयंयस्यकस्यचित् ॥ श्रद्दधानायदातव्यंभक्तियुक्तायधीमते ॥ २१ ॥ अनास्तिकायशुद्धायधर्मनित्यायभामिनि ॥ सुखासनेथ शय्यायांयोगंयुंजीतयोगवित् ॥ २२ ॥ दीपंविनांधकारेतुप्रजासुप्तेतुधारयेत् ॥ तर्जन्यापिहितौकर्णौपीडयित्वामुहूर्तकम् ॥२३ ॥ तस्मात्संश्रूयतेशब्द स्तुंदवह्निसमुद्भवः ॥ सध्मातोभुक्तमेवंहिपचत्यन्नंक्षणादपि ॥ २४॥ सर्वरोगांनिहंत्याशुज्वराद्युपद्रवान्बहून् ॥ यश्चोपलक्षयेन्नित्यमेकांतेघटिकाद्वयम् ॥ ॥ २५ ॥ जित्वामृत्युंयथाकामंस्वेच्छयापर्यटेदिह ॥ सर्वतःसर्वदर्शीचसर्वसिद्धिमवाप्नुयात् ॥ २६ ॥ यथाभ्रंनदतेनादंप्रावृण्नभसिसंस्थितम् ॥ तंश्रुत्वा मुच्यतेयोगीसद्यःसंसारबंधतात ॥२७॥ ततःसयोगिभिर्नित्यंसूक्ष्मःसूक्ष्मतरोभवेत् ॥ एतत्तेकथितंदेविशब्दब्रह्मविधिक्रमम् ॥२८॥ पलालमिवधान्या र्थीत्यजेद्वंधमशेषतः ॥ शब्दब्रह्मइदंप्राप्ययेकेचिदन्यकांक्षिणः ॥२९॥ घ्नंतितेमुष्टिनाकाशंकंडयंतिक्षुधातुषान् ॥ ज्ञात्वापरमिदंब्रह्मसुखदंमुक्तिकारणम् ॥ ३० ॥ अवाच्यमक्षरंचैवसर्वोपाधिविवर्जितम् ॥ मोहिताःकालपाशेनमृत्युपाशवशंगताः ॥३१॥ शब्दब्रह्मनजानंतिपापिनस्तेकुबुद्धयः ॥ तावद्भ्रम तिसंसारेयावद्ब्रह्मनविंदति ॥ ३२ ॥ विदितेतुपरेतत्त्वेमुच्यतेजन्मबंधनात् ॥ निद्रालस्यंमहाविघ्नंजित्वाशत्रुंप्रयत्नतः ॥ ३३ ॥ सुखासनेस्थितोनित्यं शब्दब्रह्माभ्यसेन्निशि ॥ शतवृद्धःपुमाँल्लब्ध्वायावदायुष्यमभ्यसेत् ॥३४॥ मृत्युंजयवपुस्तंभआरोग्यंचायुर्वर्धनम् ॥ प्रत्ययोदृश्यतेवृद्धेकिंपुनस्तरुणे जने ॥ ३५ ॥ नचोंकारोनमंत्रोपिनैवबीजंनचाक्षरम् ॥ अनाहतमनुच्चार्यंशब्दब्रह्मपरंशिवम् ॥ ३६ ॥ तस्माच्छब्दानवप्रोक्ताःप्राणविद्भिस्तुलक्षिताः ॥ तान्प्रवक्ष्यामियत्नेननादसिद्धिमनुक्रमात् ॥ ३७ ॥ घोषंकांस्यंतथाशृंगंघंटावीणादिवंशकम् ॥ दुंदुभिःशंखशब्दाश्चनवमंमेघगर्जितम् ॥ ३८ ॥ नवश ब्दंपरित्यज्यओँकारंतुसमाश्रयेत॥ध्यायन्नेवंसदायोगीपुण्यपापैर्नलिप्यते॥३९॥नशृणोतियदाशृण्वन्षण्मासेचतदंबिके॥म्रियतेभ्यस्यमानस्तंयोगीतिष्ठे

द्विवानिशम् ॥ ४० ॥ तस्मादुत्पद्यतेशब्दोमृत्युजित्सप्तभिर्दिनैः ॥ प्रथमंनदतेघोषमात्मशुद्धिकरंपरम् ॥ ४१ ॥ सर्वव्याधिहरंनादंवश्याकर्षणमुत्तम
म् ॥ द्वितीयंनदतेकांस्यंस्तंभयेत्प्राणिनांगतिम् ॥ ४२ ॥ विषंभूतग्रहान्सर्वान्बंधयेन्नात्रसंशयः ॥ तृतीयंनदतेशृंगमभिचारेनियोजयेत् ॥ ४३ ॥
विद्वेषोच्चाटनेशत्रोर्मारणेचप्रयोजयेत् ॥ घंटानादंचतुर्थंतुवदतेपरमेश्वरः ॥ ४४ ॥ आकर्षेसर्वदेवानांकिंपुनर्मानुषाभुवि ॥ यक्षगंधर्वकन्याश्चतस्याकृष्टा
ददंतिहि ॥ ४५ ॥ यथेप्सितांमहासिद्धिंयोगिनःकामतोपिवा ॥ वीणातुपंचमोनादःश्रूयतेयोगिभिःसदा ॥ ४६ ॥ तस्मादुत्पद्यतेदेविदूराद्दर्शनमेवहि॥
ध्यायतेवंशनादंतुसर्वज्ञत्वंप्रजायते ॥ ४७ ॥ दुंदुभिध्यायमानस्तुजरामृत्युविवर्जितः ॥ शंखशब्देनदेवेशिकामरूपंप्रपद्यते ॥४८॥ योगिनोमेघनादेन
वियत्संगमतोभवेत् ॥ सर्वज्ञःसर्वदर्शीचकामरूपीव्रजत्यसौ ॥ ४९ ॥ एतत्तेसर्वमाख्यातंकिंभूयः श्रोतुमिच्छसि ॥ देव्युवाच ॥ वायोस्तुपदमा
प्नोतियोगाकाशसमुद्भवात् ॥ ५० ॥ तन्मेसर्वंसमाचक्ष्वप्रसन्नस्त्वंयदिप्रभो ॥ शंकरउवाच ॥ पुरामेसर्वमाख्यातंयोगिनांहितकाम्यया ॥ ५१ ॥
कालंजिगमिषोःसम्यग्वायोर्लिंगंयथाभवेत् ॥ तेनज्ञात्वादिनंयोगीप्राणायामपरिस्थितः ॥ ५२ ॥ सजयत्यागतंकालंमासार्द्धेनैवसुंदरि ॥ हृत्स्थो
वायुःसदावह्नेर्दीपकःसोनुपावकः ॥ ५३ ॥ सबाह्याभ्यंतरव्यापीवायुःसर्वगतोमहान् ॥ ज्ञानविज्ञानमुत्साहंसर्ववायोःप्रवर्तते ॥ ५४ ॥ येनेहनिर्जितो
वायुस्तेनसर्वमिदंजगत् ॥ धारणायांसदातिष्ठेज्जरामृत्युजिघांसया ॥ ५५ ॥ लोहकारोयथाभस्त्रामापूर्यमुखतोन्यतः ॥ धारयेद्वायुनाकर्मतद्वद्यो
गीसमभ्यसेत् ॥ ५६ ॥ देवःसहस्रकोनेत्रपादहस्तसहस्रकः ॥ संयोपिसर्वमावृत्यसोग्रेतिष्ठद्दशांगुलम् ॥ ५७ ॥ गायत्रींशिरसासार्द्धंजपेद्व्याहृति
पूर्वकम् ॥ त्रिःपठेदायतप्राणःप्राणायामःसउच्यते ॥ ५८ ॥ गत्वागत्वानिवर्ततेचंद्रसूर्यादयोग्रहाः ॥ अद्यापिननिवर्ततेप्राणायामपरायणाः ॥ ५९ ॥
शतमब्दंतपस्तप्त्वाकुशाग्रापःपिबेद्द्विजः ॥ तदाप्नोतिफलंदेविप्राणानांधारणैकया ॥ ६० ॥ योद्विजःकल्यमुत्थायप्राणायामैकमाचरेत् ॥ सर्वपापंनिह
त्याशुब्रह्मलोकंसगच्छतिं ॥ ६१ ॥ योतंद्रितःसदैकांतेप्राणायामपरोभवेत् ॥ जरांमृत्युंविनिर्जित्यवायुगःखेचरीतिसः ॥६२ ॥ सिद्धस्यभवतेरूपंकां
तिर्मेधापराक्रमः ॥ शौर्यंवायुसमोगत्यासौख्यंश्लाघ्यंसुरादिभिः ॥ ६३ ॥ एतत्कथितमशेषंवायोःसिद्धिंयदाप्नुतेयोगी ॥ यत्तेजसोपिलभतेतत्तेवक्ष्या
मिदेवेशि ॥ ६४ ॥ स्थित्वासुखासनेसौध्वांतेजनवचनहीनेतु ॥ शिशिरवियुक्तयातेजःप्रकाशयेन्मध्यमेदेशे ॥ ६५ ॥ वह्निगतंभ्रूमध्येप्रकाशते
यस्त्वतंद्रितोयोगी ॥ तारंपश्येद्ध्यायेन्मुहूर्तार्द्धंतमेकभावोपि ॥ ६६ ॥ ततस्तुतमसिध्यानीपश्यतेज्योतिरैश्वरम् ॥ श्वेतंरक्तंतथापीतंकृष्णमिंद्रायुधप्र
भम् ॥ ६७ ॥ भ्रुवोर्मध्येललाटस्थंबालार्कसमतेजसम् ॥ तंविदित्वातुकामांगीक्रीडतेकामरूपधृक् ॥ ६८ ॥ कारणप्रसमावेशंपरकायप्रवेशनम् ॥

अणिमादिगुणावाप्तिर्मनसाचावलोकनम् ॥ ६९ ॥ दूराच्छ्रवणविज्ञानमदृश्यंबहुरूपधृक् ॥ संतताभ्यासयोगेनखेचरत्वंप्रजायते ॥ ७० ॥ श्रुताध्य
यनसंपन्नानानाशास्त्रविशारदाः ॥ ज्ञानिनोपिविमुह्यंतेपूर्वकर्मवशानुगाः ॥ ७१ ॥ पश्यंतोपिनपश्यंतिशृण्वानावधिरायथा ॥ यथांधामानुषेलोके
मूढाःपापविमोहिताः ॥ ७२ ॥ वेदामहेतंपुरुषंमहांतमादित्यवर्णंतमसःपरस्तात् ॥ तमेवविदित्वातिमृत्युमेतिनान्यःपंथाविद्यतेप्रायणाय ॥ ७३ ॥
एतत्तेकथितंसम्यक्तेजसोविधिमुत्तमम् ॥ कालंजित्वायथायोगीचामरत्वंप्रपद्यते ॥ ७४ ॥ पुनःपरतरंवक्ष्येयथामृत्युर्नजायते ॥ तुरीयाद्देविभूतानि
योगिनोध्यानिनःकदा ॥ ७५ ॥ सुखासनेसमास्थाययोगीनियतमानसः ॥ समुन्नतशरीरोपिसबद्धाकरसंपुटम् ॥ ७६ ॥ चंच्वाकारेणवक्रेणपिबन्वा
युंशनैःशनैः ॥ प्रस्रवंतिक्षणादापस्तालुस्थाजीवदायकाः ॥ ७७ ॥ ताजिघ्रेद्वायुनादायामृतंतच्छीतलंजलम् ॥ पिबन्ननुदिनंयोगीनमृत्युवशगोभवे
त् ॥ ७८ ॥ दिव्यकायोमहातेजाःपिपासाक्षुद्विवर्जितः ॥ ७९ ॥ बलेननागस्तुरगोजवेनदृष्ट्यासुपूर्णःसुश्रुतिस्तुदूरात् ॥ आकुंचिताकुंडलिकृष्णके
शोगंधर्वविद्याधरतुल्यवर्णः ॥ ८० ॥ जीवेन्नरोवर्षशतंसुराणांसुमेधसावाक्पतिनासमत्वम् ॥ ८१ ॥ पुनरन्यत्प्रवक्ष्यामिविधानंयत्सुरैरपि ॥
गोपितंतुप्रयत्नेनतच्छृणुष्ववरानने ॥ ८२ ॥ समाकुंच्याभ्यसेद्योगीरसनांतालुकंप्रति ॥ किंचित्कालांतरेणैवक्रमात्प्राप्नोतिलंबिकाम् ॥ ८३ ॥ ततः
प्रस्रवतेसातुसंस्पृष्ट्वाशीतलांसुधाम् ॥ पिबन्नेवसदायोगीसोमरत्वंहिगच्छति ॥ ८४ ॥ रेफाग्रंलंबकाग्रंकुरुतलघटनंशुभ्रपद्मस्यबिंदुस्तेनाकृष्टंसुधौ
घंपततिपरपदेदेवतानंदकारम् ॥ सारंसंसारतारंकृतकलुषतरंकारणंकालतारंयेनेमंप्लावितांगंसभवतिअमरःक्षुत्पिपासाविहीनः ॥ ८५ ॥ एभिर्युक्त्या
चतुर्भिःक्षितिधरतनयेयोगिनेयंधरावैधैर्यान्नित्यंकुतोंतःसकलमपिजगद्यत्सुखंप्रापणाय ॥ स्वप्नेदेहीविधत्तेसकलमपिसदामानसंयच्चदुःखंस्वर्गेह्येवंधरि
त्र्याःप्रभवतिचततोवासिकिंचिच्चतुर्णाम्॥८६॥ तस्मान्मंत्रैस्तपोभिर्व्रतनियमयुतैरौषधैर्योगयुक्ताधात्रीरक्तामनुष्यैर्नयविनययुतैर्धर्मविद्भिःक्रमेण॥भूता
नामादिदेवोनहिभवतिचलःसंयुतोवैचतुर्णांतस्माएवंप्रवक्ष्येविविधमनुदिनंछायिकंयच्छिवाख्यम् ॥ ८७ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांकाल
ज्ञानंनामसप्तचत्वारिंशोध्यायः ॥ ४७॥ देव्युवाच ॥ कथितंतेसमासेनछायिकंज्ञानमुत्तमम् ॥ विस्तरेणसमाख्याहियोगिनांहितकाम्यया ॥ १ ॥ शंक
रउवाच ॥ शृणुदेविप्रवक्ष्यामिछायापुरुषलक्षणम् ॥ यंज्ञात्वापुरुषःसम्यक्सर्वपापैःप्रमुच्यते॥२॥सूर्यंहिपृष्ठतःकृत्वासोमंवावरवर्णिनि ॥ शुक्लांबरधरः
स्रग्वीगंधधूपादिवासितः ॥ ३ ॥ संस्मरेन्मेमहामंत्रंसर्वकामफलप्रदम् ॥ नवात्मकंपिंडभूतंस्वांछायांस्वंनिरीक्षयेत् ॥ ४ ॥ दृष्ट्वातांपुनराकाशेश्वेत
वर्णस्वरूपिणम् ॥ सपश्यत्येकभावस्तुशिवंपरमकारणम्॥५॥ब्रह्महत्यादिकैःपापैर्मुच्यतेनात्रसंशयः ॥ शिरोहीनंयदापश्येत्षड्भिर्मासैर्भवेन्नसः ॥६॥

समस्तंचाभयंतस्यविद्यतेयोगिनस्तथा ॥ शुक्लेधर्मंविजानीयात्कृष्णेपापंविनिर्दिशेत् ॥७॥रक्तेबंधंविजानीयात्पीतेविद्वेषमादिशेत् ॥ विवाहोबंधुनाशः
स्याद्वितुंडेचैवक्षुद्भयम् ॥ ८ ॥ विकटौनश्यतेभार्याविजंघेधनमेवाहि ॥ पादयोर्वैविदेशःस्यादित्येतत्कथितंमया ॥ ९ ॥ सम्यक्कंपुरुषंदृष्ट्वासंनिवे
श्यात्मनात्मनि ॥ जपेन्नवात्मकंमंत्रंहृदयंमेमहेश्वरि ॥ १० ॥ वत्सरेविगतेमंत्रीतन्नास्तियन्नसाधयेत् ॥ अणिमादिगुणान्यष्टौखेचरत्वंप्रपद्यते ॥ ११ ॥
पुनरन्यत्प्रवक्ष्यामिशक्तिंज्ञातुंदुरासदाम् ॥ प्रत्यक्षंदृश्यतेलोकेज्ञानिनामग्रतःस्थितम् ॥१२॥अज्ञेयालिख्यतेलोकेयासर्पीकृतकुंडली ॥ सामात्राऽपान
संस्थापिदृश्यतेनचपच्यते ॥१३॥ ब्रह्मांडमूर्ध्निगायत्रीस्तुतावेदैस्तुनित्यशः ॥ जननीसर्वविद्यानांगुह्यविद्येतिगीयते॥१४॥खेचरासाविनिर्दिष्टासर्वप्राणि
षुसंस्थिता ॥ दृश्यादृश्याचलानित्याव्यक्ताव्यक्तासनातनी ॥ १५ ॥ अवर्णावर्णसंयुक्ताप्रोच्यतेबिंदुमालिनी ॥ तांपश्यन्त्सर्वदायोगीकृतकृत्योभि
जायते ॥ १६ ॥ सर्वतीर्थकृतस्नानाद्धवेद्दानस्ययत्फलम् ॥ सर्वयज्ञफलंयच्चमालिन्यादर्शनात्सदा ॥ १७ ॥ प्राप्नोतितत्रसंदेहःसत्यंचकथितंमया ॥
सर्वतीर्थेषुयःस्नात्वादत्वादानानिसर्वशः ॥ १८ ॥ सर्वेषांदेवियज्ञानांयत्फलंतल्लभेत्पुमान् ॥ तस्माज्ज्ञानंतथायोगमभ्यसेत्सततंबुधः ॥ १९ ॥
अभ्यासाज्जायतेसिद्धिर्योगोभ्यासात्प्रवर्तते ॥ संवित्तिर्लभ्यतेभ्यासान्मोक्षोभ्यासात्समश्नुते ॥ २० ॥ इत्येतत्कथितंदेविभुक्तिमुक्तिफलप्रदम् ॥ किम
न्यत्पृच्छसेदेविवदसत्यंब्रवीमिते ॥ २१ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायामष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥छ॥ देव्युवाच ॥ ज्ञाननिष्ठा
स्तपोनिष्ठाःपंचाग्निब्रह्मचारिणः ॥ दृश्यंतेविविधालोकेकाचैषामुत्तमागतिः ॥ १ ॥ एतत्सर्वंसमाख्याहियदितुष्टोसिमेप्रभो ॥ शंकरउवाच ॥ शृणुदे
विप्रवक्ष्यामियाथातथ्यंवरानने ॥ २ ॥ पुष्करेपर्वतेकौवात्रिविधोवर्ततेसदा ॥ उत्तमाधममध्यौवानोत्तमोबहुधानृषु ॥ ३ ॥ आत्मश्रेयोनजानंतिपश्यं
तोपिविचक्षुषः ॥ स्थावराःपापमिच्छंतिचतुष्पाद्दकुमीप्सवः ॥ ४ ॥ मानवाःस्वर्गमिच्छंतिमोक्षमिच्छंतिदेवताः ॥ यज्ञैर्दानैस्तपोभिस्तुस्वर्गःसंप्रा
प्यतेकिल ॥ ५ ॥ तत्रस्थामोक्षमिच्छंतिमानवाःपतनात्ततः ॥ मोक्षमिच्छेत्सदादेविसर्वदानंददायकम् ॥ ६ ॥ ब्रह्माविष्णुरहंदेविबद्धाःस्मकर्मणा
सदा ॥ कामक्रोधादिभिर्दोषैस्तस्मात्सर्वेअनीश्वराः ॥ ७ ॥ मुच्यंतेकर्मणःसंगाज्ज्ञानिनोमोक्षतत्पराः ॥ प्राप्नुवंतिनचेत्तांतुज्ञानावाप्तितुयोगिनः ॥८॥
यागतिःपुण्यशीलानांयज्विनांचतपस्विनाम् ॥ यदिनोज्ञानावाप्तिःस्याद्योगशास्त्राणियत्नतः ॥ ९ ॥ अध्येतव्यानिपौराणंशास्त्रंतच्छ्रूयतेसदा ॥ पापं
संक्षीयतेनित्यंधर्मश्चैवविवर्धते ॥ १० ॥ क्रमाज्ज्ञानफलावाप्तिर्नसंसारंप्रपद्यते ॥ अतएवपुराणानिश्रोतव्यानिप्रयत्नतः ॥ ११ ॥ धर्मार्थकामलाभा
यमोक्षमार्गांतयेतथा ॥ यज्ञैर्दानैस्तपोभिस्तुयत्फलंतीर्थसेवया ॥ १२ ॥ तत्फलंसमवाप्नोतिपुराणश्रवणान्नरः ॥ नभवेयुःपुराणानिधर्ममार्गेक्षणानि

तु ॥१३॥ यद्यत्रपद्धतीस्यातामिहपारात्रिकीकथम् ॥ १४ ॥ वेदेनदृष्टोजगतांहिमार्गःपौराणधर्मोहिसदावरिष्ठः ॥ शास्त्रंविनासर्वमिदंविभातिसूर्येणही नस्त्विवजीवलोकः ॥ १५ ॥ आदिसर्गश्चपौराणेवंशामन्वंतराणिच ॥ दानानिनियमाश्चैवएतदुक्तंस्वयंभुवा ॥ १६ ॥ षट्त्रिंशतिपुराणानामतएकंशृ णोतियः ॥ पठेद्वाभक्तियुक्तस्तुशृणुतस्यापियत्फलम् ॥ १७ ॥ अरण्येयोप्यधीयानश्चातुर्विद्यंफलंलभेत् ॥ यज्ञैर्दानैस्तपोभिस्तुदेवितत्पठना दृतः ॥ १८ ॥ एतत्तेकथितंदेविसुधावाप्तिफलंहितत् ॥ धर्मशास्त्रंहिश्रोतव्यंसर्वधर्मफलप्रदम् ॥ १९ ॥ सूतउवाच ॥ एतद्वःकथितंधर्मंयथादेवेनभा षितम् ॥ यत्पृच्छध्वंहितद्भूयःकथयामिपुरातनम् ॥ २० ॥ शौनकउवाच ॥ पादादिह्यंगमूर्द्धांतंदेवानांपूज्यतेसदा ॥ शंकरस्येज्यतेकस्माल्लिंगंशं सस्वमेसदा ॥ २१ ॥ एतन्मेब्रूहिसर्वंहियदिजानासितत्त्वतः ॥ सूतउवाच ॥ सनत्कुमारेणपुरायदुक्तंमुनिसत्तमाः ॥ २२ ॥ तद्वक्ष्यामिमतंभूयःपाराशर्य स्यपृच्छतः ॥ एकार्णवेपुराभूतेनष्टेस्थावरजंगमे ॥ २३ ॥ ब्रह्माविष्णुश्चरुद्रश्चसमुत्तस्थुर्जलात्किल ॥ अव्यक्ताभिगतिस्तेषांनजानंतिमनीषिणः॥२४॥ पृथिवीगतिःपूर्वेषांनष्टाःस्थावरजंगमाः ॥ वायुस्तीव्रःसमुत्तस्थौशोषयन्सप्तसागरान् ॥ २५ ॥ संशुष्काःसर्वतश्चापोविनष्टाजंगमास्ततः ॥ स्थावरा श्चततःसर्वेसंशुष्काःक्रमशःकिल ॥ २६ ॥ तस्थौप्रागुदितःसूर्यएकोभूद्द्वितीयःकिल ॥ दक्षिणायांसमाशायांतद्वदासीत्करैर्युतः ॥ २७ ॥ शोषयन्सर्व तस्तोयंप्रदहन्सचराचरम् ॥ पश्चिमायांततस्तस्थौतृतीयश्चोत्तरांदिशम् ॥ २८ ॥ प्रदहन्स्वंचतुर्थश्चउदितःसचराचरम् ॥ उपरिष्टात्तथाचाष्टाबु दिताद्वादशैवते ॥ २९ ॥ योसाविहसमाख्यातोरुद्रःकालाग्निसंज्ञितः ॥ समुत्तस्थौसपातालात्पूरयन्सर्वतोदिशम् ॥ ३० ॥ ऊर्द्ध्वंतिर्यक्सपातालंद ग्ध्वासर्वमशेषतः ॥ उदारःसर्वतोज्ञेयःस्वंधामपूर्वनिर्मितम् ॥ ३१ ॥ ततोमेघाःसमुत्तस्थुर्वर्षतःसर्वतोदिशम् ॥ ततस्तेपृथिवींसर्वांसंप्लाव्याद्रि दिशस्तदा ॥ ३२ ॥ निममज्जुश्चतत्रैवएकार्णवमभूज्जगत् ॥ नधरानदिशस्तत्रत्वंतरापुष्करंतदा ॥ ३३ ॥ ज्ञायतेकिंस्विदेवेहकबंधपरिपूरिते ॥ उदन्मध्येगतास्तस्थुस्त्रयोदेवाःसनातनाः ॥ ३४ ॥ ब्रह्माविष्णुश्चरुद्रश्चअव्यक्तगतयस्तुते ॥ ततस्तावूचतुःशर्वंज्वलितंतिग्मतेजसम् ॥ ३५ ॥ रौद्रींशक्तिंसुबिभ्राणंतंकविष्णूप्रणम्यह ॥ प्रभुस्त्वंसर्वतोस्माकंकुरुसृष्टिंयथेच्छया ॥ ३६ ॥ करिष्यामीतितावाहइत्युक्त्वाप्सुममज्जसः ॥ दिव्यं वर्षसहस्रंतुमग्नंसमभिवीक्ष्यते ॥ ३७ ॥ अन्योन्यमूचतुरावांकिंकरिष्यावहेविना ॥ कथंतुवर्ततेसृष्टिस्तावेवंवेधसंहरिः ॥ ३८ ॥ प्रोवाचकुरुमे वाक्यंनात्रकालात्ययोभवेत् ॥ प्रजासर्गनिमित्तंहिकुरुयत्नंपितामह ॥ ३९ ॥ लोकानांत्वंसमर्थोहिस्रष्टुंवैविविधाःप्रजाः ॥ शक्तिंतेहंप्रदास्यामि स्रष्टृत्वेपितथात्मनः ॥ ४० ॥ इत्युक्तश्चिंतयामासविष्णुवाक्यप्रणोदितः ॥ सृष्ट्यर्थंतुचकारासौसृष्टिंसर्वसुखावहाम् ॥ ४१ ॥ सदेवासुरगंधर्वा

सयक्षोरगराक्षसाम् ॥ तत्कृतायांततःशंभुरुन्ममज्जजलान्मुने ॥ ४२ ॥ कर्तुंकामःससर्गंचमनसासव्यचिंतयत् ॥ ततोपश्यज्जगत्सर्वमधोर्ध्वं
तुसमंततः ॥ ४३ ॥ सदेवासुरगंधर्वंसयक्षोरगराक्षसम् ॥ समनुष्यंमहादेवोमनसाक्रोधमादधे ॥ ४४ ॥ किंकरोमिकृतंसर्गंब्रह्मणासंहराम्यतः ॥
उच्छाद्यहात्मनःशुक्रमित्युक्त्वाग्निंमुखात्सृजन् ॥ ४५ ॥ तत्सर्वंदह्यमानंतुदृष्ट्वाब्रह्माचभक्तितः ॥ तंप्रणम्यमहेशानंतुष्टावप्रभुमीश्वरम् ॥ ४६ ॥
नमःशर्वायरुद्रायस्थाणवेतिग्मतेजसे ॥ ईशानायनमोनित्यंनमःकालस्वरूपिणे ॥ ४७ ॥ सहस्राक्षविरूपाक्षत्र्यक्षयज्ञाधिपप्रिय ॥ शंकुकर्ण
महाकर्णकुंभकर्णार्णवालय ॥ ४८ ॥ गजेंद्रकर्णगोकर्णपाणिकर्णनमोस्तुते ॥ शतोदरशतावर्तशताजिह्वशतानन ॥ ४९ ॥ नमश्चंडायमुं
डायरुद्रायवरदायच ॥ नमोर्ध्वदंष्ट्रकेशायनीलग्रीवायतेनमः ॥ ५० ॥ नमोस्तुप्रतिरूपायविरूपायशिवायच ॥ भैरवायनमोनित्यंशंभवेऽमित
तेजसे ॥ ५१ ॥ शितिकंठायशुभ्रायस्थाणवेचकपर्दिने ॥ पशूनांपतयेतुभ्यंनमस्त्रिपुरघातिने ॥ ५२ ॥ नित्यंत्रिशूलहस्तायनमःकापालमालिने ॥
महादेवायवेशायदेवदेवायवेधसे ॥ ५३ ॥ यमीशंसर्वभूतानांध्यायंतियतयोक्षरम् ॥ व्यापिनंपरमंदेवंतमस्मिशरणंगतः ॥ ५४ ॥ ब्रह्मभूतंजगत्सर्वं
सदेवासुरमानुषम् ॥ यःसृजेदीश्वरोदेवंतमस्मिशरणंगतः ॥ ५५ ॥ सव्यापसव्येब्रह्माहंगतःशंभुसदास्थितः ॥ यंत्रिमूर्तिधरंशांतंतमस्मिशरणं
गतः ॥ ५६ ॥ ब्रह्मातुयस्यवक्त्रेथचतुर्वेदमयःप्रभुः ॥ जिष्णुःप्रभोःपुराजज्ञेतमस्मिशरणंगतः ॥ ५७ ॥ ब्रह्मरूपधरंदेवंजगद्योनिंमहेश्वरम् ॥ स्रष्टृत्वे
संस्थितःसृष्ट्यैतमस्मिशरणंगतः ॥ ५८ ॥ यःपालनेचसृष्टौचास्थितावसुरसूदनः ॥ तमादिपुरुषंशंभुंप्रणतोस्मिसनातनम् ॥ ५९ ॥ भूतक्रीडासहो
नाथोभूतानामादिकृद्धरः ॥ तमादिपुरुषाज्जातंप्रणतोस्मिसनातनम् ॥ ६० ॥ यज्ञैर्यजंतितंविप्रारोहितायज्ञभावनम् ॥ तंयज्ञपुरुषंहीमंप्रणतोस्मि
सनातनम् ॥ ६१ ॥ संभक्षयित्वासकलंतथासृष्टमिदंजगत् ॥ योवैतिष्ठतिरुद्रात्मातंनतोस्मिसनातनम् ॥ ६२ ॥ कल्पांतेयमरूपोयःसंहृत्यसकलं
जगत् ॥ अविज्ञेयागतिर्यस्यतमस्मिशरणंगतः ॥ ६३ ॥ स्थाणुमीशंपशुपतिंशितिकंठंमहेश्वरम् ॥ भक्तानुकंपिनंदेवंतमस्मिशरणंगतः ॥ ६४ ॥
शूलपाणिमहादेवंभीमंशर्वंत्रिलोचनम् ॥ भक्तानुकंपिनंदेवंतमस्मिशरणंगतः ॥ ६५ ॥ गंगाधरंहरंरुद्रंशिवंशंभुमुमापतिम् ॥ भक्तानुकंपिनंदेवंतमस्मिशर
णंगतः ॥ ६६ ॥ स्मरारिंवामदेवंचत्र्यंबकंत्रिपुरांतकम् ॥ भक्तानुकंपिनंदेवंतमस्मिशरणंगतः ॥ ६७ ॥ शिपिविष्टंविरूपाक्षंशंकरंप्रमथाधिपम् ॥
भक्तानुकंपिनंदेवंतमस्मिशरणंगतः ॥ ६८ ॥ ईशानंशूलिनंवेशमर्द्धचंद्रंकपार्दिनम् ॥ भक्तानुकंपिनंदेवंतमस्मिशरणंगतः ॥ ६९ ॥ जगदा
दिशिरोहर्तापिनाकीवृषभध्वजः ॥ सभक्त्यासंस्तुतोनित्यंदेवोमांपातुसर्वतः ॥ ७० ॥ कपालमालीबालेंदुशेखरःसर्पभूषणः ॥ सभक्त्यासंस्तुतो

नित्यंदेवोमांपातुसर्वतः ॥ ७१ ॥ प्रजासंहारकारीयोभूतेशश्चंद्रशेखरः ॥ कृशानुरेताःश्रीकंठोदेवोमांपातुसर्वतः ॥ ७२ ॥ गिरीशोव्योमकेशश्चशर्वो भीमःसुयज्ञहा ॥ कृपालुर्भक्तियुक्तेभ्योदेवोमांपातुसर्वतः॥७३॥संतुष्टोब्रह्मणात्वेवंतुष्टःप्रोवाचशंकरः ॥ शंकरोहंसदाब्रह्मन्योमांभक्त्याप्रपद्यते ॥ ७४॥ तस्याहंसर्वकार्याणिसाधयिष्यामिनामतः ॥ तुष्टोस्मितेवरंब्रूहियद्वैमनसिकांक्षितम् ॥७५ ॥ तच्छ्रुत्वाप्राहतंब्रह्माप्रजासर्गंसुविस्तरम् ॥ कृतंमेतत्तथै वास्तुयदितुष्टोसिमेप्रभो ॥ ७६ ॥ तच्छ्रुत्वाप्राहकंरुद्रोयत्तेजोमेसमाहृतम् ॥ संहर्तुंतेतुसर्गायब्रूहिकिंकरवाणिते ॥ ७७ ॥ सनत्कुमारउवाच ॥ एत च्छ्रुत्वासुसंचिंत्यब्रह्मालोकहितायवै ॥ प्रोवाचशंकरंसूर्येस्वकंतेजोनिवेशय ॥७८॥ यतस्त्वंप्रभुरादित्येस्रष्टापातानियामकः ॥ सूर्यतेजासिवत्स्यामोवयं सर्वैःसहामरैः॥७९॥त्रिकालार्चांग्रहीष्यामोभक्त्यादत्तांतुमानवैः॥कल्पांतेत्वंमहादेवजगदेतच्चराचरम्॥८०॥ सूर्यरूपंसमास्थायसंनिर्दहसितत्क्षणात् ॥ सतथेतिहसन्मत्वाब्रह्माणमिदमब्रवीत्॥८१॥प्रजासर्गविनानेनलिंगेनासप्रयोजनम् ॥ इत्युक्त्वातंविनिर्भिद्यचिक्षेपचमहीतले॥८२॥तल्लिंगंतुधरांभित्त्वा जगामाकाशमेवाहि॥तस्यांतंविष्णुरन्वेष्टुमधस्तात्प्रययौहिसः ॥८३॥ ब्रह्मापिचययावूर्ध्वंप्रापतुर्नांतमोजसा ॥ आकाशप्रभवावाणीतयोस्तत्रोपविष्टयोः ॥८४॥बभाषेपूजितंलिंगंसर्वान्कामान्कपर्दिनः ॥ प्रदास्यतिनसंदेहोहृदयेयदभीप्सितान् ॥८५॥एतच्छ्रुत्वाततोब्रह्माविष्णुःसर्वाश्चदेवताः॥लिंगंसमर्च यंतिस्मभक्त्यातद्गतमानसाः॥८६॥इतिश्रीशिवमहापुराणेधर्मसंहितायामेकोनपंचाशत्तमोऽध्यायः ॥४९॥ सूतउवाच ॥ लिंगंशंभोर्हरिर्दृष्ट्वाअनंतंसर्व तोमुखम् ॥ तुष्टावप्रणतोभूत्वादेवदेवंसुनामाभिः ॥ १ ॥ नमःशिवायशांतायस्थाणवेमिततेजसे ॥ईशानायनमोनित्यंपशूनांपतयेनमः ॥२॥शितिकं ठायरुद्रायमहादेवायवैनमः॥शूलहस्तायतेनित्यंनमोभीमायशंभवे ॥ ३ ॥ नमोभर्गायत्र्यक्षायनमोगंगांकधारिणे॥नमोहरायशुभ्रायनमोगौरीप्रियायच ॥४॥नमःस्मरारयेतुभ्यं नमस्त्रिपुरघातिने ॥ वामदेवायवेद्यायशिपिविष्टायतेनमः॥५॥महेश्वरायउग्रायनमःकपालमालिने ॥ प्रमथाधिपकामायनम स्तेस्तुकपर्दिने ॥ ६ ॥ विषाणायनमोनित्यंनीलग्रीवायतेनमः ॥ नीललोहितरूपानमस्तेतिविषादिने ॥७॥भूतेशायनमोनित्यंप्रजासंहारकारिणे ॥ नमोबालेंदुभूषायनमःकृशानुरेतसे ॥ ८ ॥ श्रीकंठायनमस्तुभ्यंदक्षयज्ञविनाशिने॥व्योमकेशायशर्वायनौमिनित्यंनमोनमः ॥ ९ ॥सनत्कुमारउवाच ॥ विष्णुनासंस्तुतंलिंगंमंत्रेणानेनसुव्रत ॥ प्रसन्नवदनोभूत्वाइदंवचनमब्रवीत् ॥ १० ॥ युवाभ्यांसंस्तुतोभक्त्यास्तोत्रेणानेनतोषितः ॥ स्वकेनापि हितान्कामान्ब्रह्मविष्णूसमाप्नुतः ॥ ११ ॥ दुर्जयत्वंहरिलभैशत्रुभिःसहसंगरे ॥ स्वर्चनंमानवेलोकेसुप्रजायास्तुपालनम् ॥ १२ ॥ ब्रह्माचैवाक्षयांसृष्टिं यावन्मन्वंतराणिच ॥ एवंचान्योपियःस्तौतिमानवोभक्तितःशुचिः ॥ १३ ॥ सर्वान्कामानवाप्नोतिपरत्रचशुभांगतिम् ॥ लिंगस्यपूजनंशंभोःस्वर्गमो

क्षप्रदंनृणाम् ॥ १४॥ इहकामप्रदंनृणांराज्यपुष्टिसुखप्रदम् ॥ किंपुनर्वःप्रवक्ष्यामिपृच्छध्वंयदभीप्सथ ॥ १५॥ इतिश्रीशिवमहापुराणेधर्मसंहितायां
पंचाशत्तमोऽध्यायः ॥ ५० ॥ शौनकउवाच ॥ श्रुतंमेमहदाख्यानंयत्त्वयापरिकीर्तितम् ॥ अतोहंश्रोतुमिच्छामियथासर्गंतुब्रह्मणः ॥ १ ॥
देवानांदानवानांचपार्थिवानांचसर्वशः ॥ समुत्पन्नंतुमेब्रूहियथाव्यासाच्चतेश्रुतम् ॥ २ ॥ सूतउवाच ॥ मुनेशृणुकथांदिव्यांसर्वपापप्रणाशिनीम् ॥
कथ्यमानांमयाचित्रांबह्वर्थांश्रुतविस्तराम् ॥ ३ ॥ यश्चेमांधारयेत्तांचशृणुयाद्वाप्यभीक्ष्णशः ॥ स्ववंशोद्धरणंकृत्वास्वर्गलोकेमहीयते ॥ ४ ॥
प्रधानंपुरुषोयत्तन्नित्यंसदसदात्मकम् ॥ प्रधानपुरुषोभूत्वानिर्ममेलोकभावनः ॥ ५ ॥ स्रष्टारंसर्वभूतानांनारायणपरायणम् ॥ तंवैविद्धिमुनिश्रेष्ठब्रह्मा
णममितौजसम् ॥ ६ ॥ यस्मात्कल्पायतेकल्पःसमग्राशुचयःशुचिः ॥ तस्मैहिरण्यगर्भायपुरुषायेश्वरायच ॥ ७ ॥ अजायस्थाणुरूपायवरिष्ठाय
प्रजाभुवे ॥ नमस्कृत्यप्रवक्ष्यामिभुवःसर्गमनुत्तमम् ॥ ८ ॥ ब्रह्मास्रष्टाहरिःपातासंहर्ताचमहेश्वरः ॥ तस्यसर्गस्यनान्योस्तिकालेकालेयथागते ॥ ९ ॥
सोपिस्वयंभूर्भगवान्सिसृक्षुर्विविधाःप्रजाः ॥ अपएवससर्जादौतासुवीर्यमवासृजत् ॥ १० ॥ आपोनाराइतिप्रोक्ताआपोवैनरसूनवः ॥ अयनंतस्य
ताःपूर्वंतेननारायणःस्मृतः ॥ ११ ॥ हिरण्यवर्णमभवत्तदंडमुदकेशयम् ॥ तत्रजज्ञेस्वयंब्रह्मास्वयंभूरितिविश्रुतः ॥ १२ ॥ हिरण्यगर्भोभगवानुषि
त्वापरिवत्सरम् ॥ तदंडमकरोद्द्वैधंदिवंभूमिंचनिर्ममे ॥ १३ ॥ अधोथोर्ध्वंप्रयुक्तानिभुवनानिचतुर्दश ॥ तयोःशकलयोर्मध्यमाकाशमसृजत्प्रभुः॥१४॥
अप्सुपरिप्लुतापृथ्वींदिशश्चदशधादिवि ॥ तत्रकालोमनोवाचःकामक्रोधावथोरतिम् ॥ १५ ॥ मरीचिमत्र्यंगिरसंपुलस्त्यंपुलहंक्रतुम् ॥ वसिष्ठंतुमहाते
जाःसोसृजत्सप्तमानसान् ॥ १६ ॥ सप्तब्रह्माणइत्येतेपुराणेनिश्चयंगताः ॥ ततोसृजत्पुनर्ब्रह्मारुद्रानेवात्मसंभवान् ॥ १७ ॥ सनत्कुमारंचऋषिसर्वेषा
मपिपूर्वजम् ॥ सप्तत्वेतेप्रजायंतेपश्चाद्रुद्राश्चसर्वतः ॥ १८ ॥ अतःसनत्कुमारस्तुतेजःसंक्षिप्यातिष्ठति ॥ तेषांसप्तमहावंशादिव्यदेवर्षिपूजिताः ॥ १९ ॥
विद्युतोऽशनिमेघांश्चरोहितेंद्रधनूंषिच ॥ पयांसिचससर्जादौपर्जन्यंचससर्जह ॥ २० ॥ ऋचोयजूंषिसामानिनिर्ममेयज्ञसिद्धये ॥ पूज्यास्तैरयजन्देवा
नित्येवमनुशुश्रुम ॥ २१ ॥ मुखाद्देवानजनयत्पितॄंश्चैवाथवक्षसः ॥ प्रजनाच्चमनुष्यान्वैजघनान्निर्ममेऽसुरान् ॥ २२ ॥ उच्चावचानिभूतानिगात्रेभ्य
स्तस्यजज्ञिरे ॥ आपवस्यप्रजासर्गंसृजतोवैप्रजापतेः ॥ २३ ॥ सृज्यमानाःप्रजाश्चैवनवर्धतेयदातदा ॥ द्विधाकृत्वात्मनोदेहंस्त्रीचैवपुरुषोभ
वत् ॥ २४ ॥ ससृजेथप्रजाःसर्वामहिम्नाव्याप्यविश्वतः ॥ विराजमसृजाद्विष्णुंससृष्टःपुरुषोविराट् ॥ २५ ॥ द्वितीयंतंमनुंविद्धिमनोरंतरमेवच ॥ सवै
राजःप्रजासर्गंससर्जपुरुषःप्रभुः ॥ २६ ॥ नारायणविसर्गस्यप्रजास्तस्याप्ययोनिजाः ॥ आयुष्मान्कीर्तिमान्धन्यःप्रजावांश्चभवत्यतः ॥ २७ ॥ आदि
सर्गंविदित्वैवंयथेष्टांप्राप्नुयाद्गतिम् ॥ २८ ॥ इति श्रीशिवमहापुराणेधर्मसंहितायामेकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥छ॥ सूतउवाच ॥ संसृष्टासुप्रजा

स्वेवआपवोथप्रजापतिः ॥ लेभेवैपुरुषःपत्नींशतरूपामयोनिजाम् ॥ १ ॥ आपवस्यमहिम्नातुदिवमावृत्यातिष्ठतः ॥ धर्मेणैवमहात्मासशतरूपाव्य
जायत ॥ २ ॥ सातुवर्षशतंतप्त्वातपःपरमदुश्चरम् ॥ भर्तारंदीप्ततपसंपुरुषंप्रत्यपद्यत ॥ ३ ॥ सवैस्वयंभुवंजज्ञेपुरुषोमनुरुच्यते ॥ यस्यैकसप्ततियु
गंमन्वंतरमिहोच्यते ॥४॥ वैराजःपुरुषाद्वीराशतरूपाव्यजायत॥प्रियव्रतोत्तानपादौवीरिकायामजायताम् ॥ ५ ॥ काम्यानाममहाभागाकर्दमस्यप्रजा
पतेः ॥ काम्यापुत्रांश्चचत्वारःसाम्राक्षाक्षिर्विराट्प्रभुः ॥ ६ ॥ उत्तानपादोजनयत्पुत्रांश्छक्रसमान्प्रभुः ॥ धर्मस्यकन्यासुश्रोणीसुनीतिर्नामविश्रुता॥७॥
उत्पन्नाचापिधर्मेणध्रुवस्यजननीतथा ॥ ध्रुवोवर्षसहस्राणित्रीणिदिव्यानिकानने ॥ ८ ॥ तपस्तेपेसबालस्तुप्रार्थयन्स्थानमव्ययम् ॥तस्मैब्रह्माददौप्रीतः
स्थानमात्मसमंप्रभुः ॥ ९ ॥ अचलंचैवपुरतःसप्तर्षीणांप्रजापतिः॥ तस्मात्पुष्टिंचधान्यंचध्रुवात्पुत्रौव्यजायताम्॥१०॥पुष्टेरावंतमुच्छायाःपंचपुत्रानक
ल्मषान् ॥ रिपुंरिपुंजयंविप्रंवृकलंवृकतेजसम् ॥ ११ ॥ रिपोरावंतमहिषीचाक्षुषंसर्वतेजसम् ॥ अजीजनत्पुष्करिण्यांवरुणंचाक्षुषोमनुः ॥ १२ ॥
मनोरजायंतदशनड्वलायांमहौजसः ॥ कन्यायांहिमुनिश्रेष्ठवैराजस्यप्रजापतेः ॥ १३ ॥ रुरुःपूरुःशतद्युम्नस्तपस्वीसत्यजित्कविः ॥ अग्निष्टोमोतिरा
त्रश्चातिमन्युःसुयशादश ॥ १४ ॥ रुरोरजनयत्पुत्रान्षडाग्नेयीमहाप्रभा ॥ अंगंसुमनसंख्यातिंक्रतुमांगिरसमृषिम् ॥ १५ ॥ अंगात्सुनीथाभार्यावैवे
नमेकमसूयत ॥ अपचारेणवेनस्यकोपस्तुसुमहानभूत् ॥ १६ ॥ प्रजार्थमृषयस्तस्यममंथुर्दक्षिणंकरम् ॥ वेनस्यपाणौमथितेसंबभूवततःपृथुः ॥१७॥
सधन्वीकवचीजातस्तेजसादित्यसंनिभः ॥ पृथुर्वैन्यस्तदापृथ्वीमरक्षत्क्षत्रपूर्वजः ॥ १८ ॥ राजसूयाभिषिक्तानामाद्यःसवसुधाधिपः ॥ तस्माच्चैवसमु
त्पन्नौनिपुणौसूतमागधौ ॥ १९ ॥ तेनेयंगौर्मुनिश्रेष्ठदुग्धासर्वहितायवै ॥ प्रजानांहितकामेनदेवैःसर्षिगणैःसह ॥ २० ॥ पितृभिर्दानवैश्चैवगंधर्वैःसा
प्सरोगणैः ॥ सर्पैःपुण्यजनैश्चैववीरुद्भिःपर्वतैस्तथा ॥ २१ ॥ तेनदत्तेनजीवंतिसर्वदेवगणाःसदा ॥ २२ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांसर्गवर्ण
नंनामद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ सूतउवाच ॥ पृथोःपुत्रौतुधर्मज्ञौजज्ञातेभुविपार्थिवौ ॥ हविर्धानीहविर्धामनामानौतौबभूवतुः ॥ १ ॥ शिखं
डिनीहविर्धामात्पुत्रंप्राचीनबर्हिषम् ॥ प्राचीनाग्राःकुशास्तस्यपृथिवीतलचारिणः ॥ २ ॥ समुद्रतनयायांतुकृतदारोभवत्प्रभुः ॥ समुद्रतनयायास्तु
दशप्राचीनबर्हिषः ॥ ३ ॥ सर्वेप्रचेतसोनामधनुर्वेदस्यपारगाः ॥ अपृथग्धर्मचरणास्तेतप्यंतमहत्तपः ॥ ४ ॥ दशवर्षसहस्राणिसमुद्रसलिलेशयाः ॥
तपश्चरत्सुपृथिव्यामभवन्त्सुमहीरुहः ॥ ५ ॥ अरक्ष्यमाणायांपृथ्व्यांबभूवाथप्रजाक्षयः ॥ तंदृष्ट्वातुद्रुमेभ्यस्तेप्रासृजन्नग्निमारुतौ ॥ ६ ॥ वृक्षातुन्मूल्य
वायुस्तानदहद्धव्यवाहनः ॥ वृक्षक्षयंततोदृष्ट्वाकिंचिच्छिष्टेषुशाखिषु ॥ ७ ॥ उपगम्याब्रवीदेतान्राजासोमःप्रतापवान् ॥ कोपंयच्छथराजानःसर्वेप्रा

चीनबर्हिषः ॥ ८ ॥ अनुभूतानुकन्येयंवृक्षाणांवरवर्णिनी ॥ भविष्यंजानतासातुधृतागर्भेणवैमया ॥ ९ ॥ भार्यावोस्तुमहाभागासोमवंशविवर्धिनी ॥
अस्यामुत्पत्स्यतेविद्वान्दक्षोनामप्रजापतिः ॥ १० ॥ युष्माकंतेजसार्धेनममचांशेनतेजसः ॥ ब्रह्मतेजोमयोभूयःप्रजाःसंवर्धयिष्यति ॥ ११ ॥ ततः
सोमस्यवचनाज्जगृहुस्तेप्रचेतसः ॥ भार्यांधर्मेणतस्यास्तुदक्षोजज्ञेप्रजापतिः ॥ १२ ॥ सोपिजज्ञेमहातेजाःसोमस्यांशेनवैमुने ॥ अचरांश्चचरांश्चैवद्वि
पदोथचतुष्पदः ॥ १३ ॥ ससृष्ट्वामनसादक्षःपश्चादसृजतस्त्रियः ॥ ददौसदशधर्मायकश्यपायत्रयोदश ॥ १४ ॥ शिष्टाःसोमायदक्षोपिनक्षत्राख्यांददौ
प्रभुः ॥ देवासुराःखगानागादितिजाश्चान्यदेवताः ॥ १५ ॥ ततःप्रभृतिविप्रेंद्रप्रजामैथुनसंभवाः ॥ संकल्पाद्दर्शनात्स्पर्शात्पूर्वेषांसृष्टिरुच्यते ॥ १६ ॥
शौनकउवाच ॥ अंगुष्ठाद्ब्रह्मणोजातोदक्षश्चोक्तःपुरात्वया ॥ कथंप्राचेतसत्वंहिपुनर्लेभेमहातपाः ॥ १७ ॥ एतन्मेसंशयंसूतआख्यातुंवैत्वमर्हसि ॥
दौहित्रश्चैवसोमस्यकथंश्वशुरतांगतः ॥ १८ ॥ ॥ सूतउवाच ॥ उत्पत्तिश्चनिरोधश्चनित्यंभूतेषुवर्तते ॥ कल्पेकल्पेभवंत्येतेसर्वेदक्षादयो
मुने ॥ १९ ॥ पुनश्चैवनिरुध्यंतेसुज्ञस्तत्रनमुह्यति ॥ ज्येष्ठःकनिष्ठोमध्यस्थःपूर्वमासीन्महामुने ॥ २० ॥ इमांविसृष्टिंदक्षस्ययोविद्यात्सचराचरम् ॥
प्रजावानायुषापूर्णःस्वर्गलोकेनहीयते ॥ २१ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ शौनकउवाच ॥ देवानांदानवा
नांचगंधर्वोरगरक्षसाम् ॥ सृष्टिंतुविस्तरेणेमांसूतपुत्रब्रवीहिमे ॥ १ ॥ सूतउवाच ॥ पूर्वंहिमनसादक्षःसृष्टिंचक्रेप्रजापतिः ॥ यदानवर्धतेसातुवी
रणस्यप्रजापतेः ॥ २ ॥ सुतांसुतपसायुक्तामाह्वयत्स्वर्गकारणात् ॥ समैथुनेनधर्मेणससर्जविविधाःप्रजाः ॥ ३ ॥ तस्यांपुत्रसहस्राणिवीरिण्यां
पंचवीर्यवान् ॥ आश्रित्यजनयामासदक्षएवप्रजापतिः ॥ ४ ॥ तान्सिसृक्षंस्ततोदृष्ट्वानारदःप्राहवैमुने ॥ पूर्वंसतुसमुत्पन्नोनारदःपरमेष्ठिनः ॥ ५ ॥
श्रुतंवाचाकश्यपाद्वैपुंसांसृष्टिर्भविष्यति ॥ दक्षस्यवैदुहितरितस्मात्तानब्रवीत्तुसः ॥ ६ ॥ अजानंतःकथंसृष्टिंबालिशावैकरिष्यथ ॥ दिशंकांचिदजानं
तस्तस्माद्विज्ञायतांभुवम् ॥ ७ ॥ इत्युक्तावव्रजुःसर्वेआशांविज्ञातुमोजसा ॥ गतैस्तैर्जनयामासपुनःपंचशतंसुतान् ॥ ८ ॥ दक्षस्यपुत्राहर्यश्वा
विवर्धयिषवःप्रजाः ॥ तानुवाचपुनःसोपिनारदःकिंहिबालिशाः ॥९॥ भुवोमानमजानंतःकथंसृष्टिर्भविष्यति ॥ तेतुतद्वचनंश्रुत्वानिर्यांताःसर्वतोदिशम्
॥ १० ॥ अनंतंपुष्करंप्राप्यगतास्तेपिपराभवम् ॥ अद्यापिनविवर्ततेसमुद्रेभ्यइवापगाः॥११॥ तदाप्रभृतिवैभ्राताभ्रातुरन्वेषणेरतः ॥ प्रयातोनश्यति
मुनेतन्नकार्यंविपश्चिता ॥१२ ॥ तांश्चापिनष्टान्विज्ञायपुत्रान्दक्षःप्रजापतिः ॥ षष्टिकन्यासृजत्पश्चाद्वीरण्यामितिनःश्रुतम् ॥ १३॥ ददौसदशधर्मायक
श्यपायत्रयोदश॥सप्तविंशतिंसोमायचतस्रोरिष्टनेमिने॥१४॥द्वेचैवब्रह्मपुत्रायद्वेचैवांगिरसेतदा ॥ द्वेकृशाश्वायविदुषेतासांनामानिमेशृणु॥१५॥अरुंधती

वसुर्जामिर्लंबाभानुर्मरुत्वती ॥ संकल्पाचमुहूर्ताचसाध्याविश्वाचवैमुने ॥ १६ ॥ धर्मपत्न्योदशत्वेतास्तास्वपत्यानिमेशृणु ॥ विश्वेदेवास्तुवि
श्वायाःसाध्यान्साध्याव्यजायत ॥ १७ ॥ मरुत्वत्यामरुत्वंतोवसोस्तुवसवस्तथा ॥भानोस्तुभानवःसर्वेमुहूर्तायामुहूर्तजाः ॥ १८ ॥ लंबायाश्चैवघो
षोथनागवीथीचजामिजा ॥ पृथिवीविषयस्तस्यामरुंधत्यांव्यजायत ॥ १९ ॥ संकल्पायास्तुसत्यात्माजज्ञेसंकल्पएवहि ॥ अयोध्रुवश्चसोमश्चधरश्चै
वानिलोनलः ॥२०॥ प्रत्यूषश्चप्रभासश्चवसवोनामतःस्मृताः॥अयस्यपुत्रोवेतंडःश्रमःशांतोमुनिस्तथा॥२१॥ध्रुवस्यपुत्रोभगवान्कालोलोकप्रभावनः॥
सोमस्यभगवान्वर्चावर्चस्वीयेनजायते ॥ २२ ॥ धरस्यपुत्रोद्रविणोहुतहव्यवहस्तथा ॥ मनोहरायाःशिशिरःप्राणोथरमणस्तथा ॥ २३ ॥
अनिलस्याशिवाभार्यायस्याःपुत्रःपुरोजवः ॥ अविज्ञातगतिश्चैवद्वौपुत्रावनिलस्यतु ॥ २४ ॥ अग्निपुत्रःकुमारस्तुशरस्तंबेश्रियावृते ॥ तस्यशाखो
विशाखश्चनैगमेयश्चपृष्ठतः ॥ २५ ॥ अपत्यंकृत्तिकानांतुकार्तिकेयइतिस्मृतः ॥ प्रत्यूषस्यत्वभूत्पुत्रऋषिर्नाम्नातुदेवलः ॥ २६ ॥ द्वौपुत्रौदे
वलस्यापिप्रजावंतौमनीषिणः ॥ बृहस्पतेस्तुभगिनीवरस्त्रीब्रह्मचारिणी ॥ २७ ॥ योगसिद्धाजगत्कृत्स्नंसमंताद्व्यचरत्युत ॥ प्रभासस्यतुसाभार्याव
सूनामष्टमस्यच ॥ २८ ॥ विश्वकर्मामहाभागस्तस्यांजज्ञेप्रजापतिः ॥ कर्ताशिल्पसहस्राणांत्रिदशानांचवर्धकिः ॥ २९ ॥ भूषणानांचसर्वेषांक
र्ताशिल्पवतांवरः ॥ यःसर्वासांविमानानिदेवतानांचकारह ॥ ३० ॥ मनुष्याश्चोपजीवंतियस्यशिल्पंमहात्मनः ॥ अजैकपादहिर्बुध्न्यस्त्वष्टारुद्रश्चवी
र्यवान् ॥३१॥ त्वष्टुश्चाप्यात्मजःश्रीमान्विश्वरूपोमहायशाः ॥ हरश्चबहुरूपश्चत्र्यंबकश्चापराजितः ॥३२॥ वृषाकपिश्चशंभुश्चकपर्दीरैवतस्तथा॥एकाद
शैतेकथितारुद्रास्त्रिभुवनेश्वराः ॥ ३३ ॥ एवंतेवंशमाख्यातंरुद्राणाममितौजसाम् ॥ अदितिर्दितिश्चदनुररिष्टासुरसाइला ॥ ३४ ॥ सुरभिर्विनताचैवता
म्राक्रोधासमाइला ॥ कद्रुःशनिश्चविप्रेंद्रतास्वपत्यानिमेशृणु ॥ ३५ ॥ पूर्वमन्वंतरेश्रेष्ठाद्वादशासन्सुरोत्तमाः ॥ तुषितानामतेन्योन्यमूचुर्वैवस्वतेंतरे ॥
॥ ३६ ॥ उपस्थितेचान्वयशश्चाक्षुषस्यांतरंमनोः ॥ हितार्थंसर्वलोकानांसमागम्यपरस्परम् ॥३७॥ आगच्छंस्तांस्तुतानूचुरदितिंसंप्रविश्यच ॥ मन्वं
तरेप्रसूयामःसतांश्रेयोभविष्यति॥३८॥एवमुक्तास्तुतेसर्वेचाक्षुषस्यांतरेमनोः ॥ मरीचेःकश्यपाज्जातास्त्वदित्यादक्षकन्यया॥३९॥तत्रविष्णुश्चशक्रश्च
जज्ञातेपुनरेवहि ॥ अर्यमाचैवधाताचत्वष्टापूषातथैवच ॥ ४० ॥ विवस्वान्सविताचैवमित्रावरुणएवच ॥ अंसोभगश्चातितेजाआदित्याद्वादशस्मृताः
॥ ४१ ॥ चाक्षुषस्यांतरेपूर्वमासन्येतुषिताःसुराः॥ रैवतस्यांतरेतेतुआदित्याद्वादशस्मृताः॥४२॥सप्तविंशतियाःप्रोक्ताःसोमपत्न्योथसुव्रताः ॥ तासाम
पत्यान्यभवन्दीप्तयोमिततेजसः ॥४३॥ अरिष्टनेमेःपत्नीनामपत्यानीहषोडश ॥ बहुपुत्रस्यविदुषश्चतस्रोयाःसुताःस्मृताः ॥४४ ॥ कृशाश्वस्यतुदेवर्षेर्दे

वप्रहरणाःस्मृताः ॥ एतेयुगसहस्रांतेजायंतेपुनरेवहि ॥ ४५ ॥ सर्वेदेवनिकायाश्चत्रयस्त्रिंशत्तुकामजाः ॥ तेषामपिचविप्रेंद्रनिरोधोत्पत्तिरुच्यते ॥ ४६॥
यथासूर्यस्यनित्यंहिउदयास्तमयाविह ॥ एवंदेवनिकायास्तेसंभवंतियुगेयुगे ॥ ४७ ॥ दित्याबभूवतुःपुत्रौकश्यपादितिनःश्रुतम् ॥ हिरण्यकशिपुश्चै
वहिरण्याक्षश्चवीर्यवान् ॥ ४८ ॥ सिंहिकाचाभवत्कन्याविप्रचित्तेःपरिग्रहः ॥ हिरण्यकशिपोःपुत्राश्चत्वारोप्यमितौजसः ॥ ४९ ॥ अनुह्लादश्चह्लादश्च
प्रह्लादश्चैववीर्यवान् ॥ संह्लादश्चचतुर्थोभूद्ध्रादपुत्रोह्लदःस्मृतः ॥ ५० ॥ ह्लदस्यपुत्रआयुष्माञ्छिबिःकालस्तथैवच ॥ विरोचनस्तुप्राह्लादिर्बलिर्जज्ञेवि
रोचनात् ॥ ५१ ॥ बलेःपुत्रशतंत्वासीद्बाणोज्येष्ठश्चतस्यतु ॥ हिरण्याक्षसुताःपंचपंडिताःसुमहाबलाः ॥ ५२ ॥ कुकुरःशकुनिश्चैवभूतसंतापनस्त
था ॥ महानादश्चविक्रांतःकालनाभस्तथैवच ॥ ५३ ॥ अभवन्दनुपुत्राश्चशतंतीव्रपराक्रमाः ॥ महाबलामहावीर्याःप्राधान्येननिबोधमे ॥ ५४ ॥ द्वि
मूर्धाशकुरश्चैवतथाबलिशिवःप्रभुः ॥ अयोमुखःशंबरश्चकपिलोवामनस्तथा ॥ ५५ ॥ विश्वानरःपुलोमाचविद्रावणमहाशरौ ॥ स्वर्भानुर्वृषपर्वाचवि
प्रचित्तिश्चवीर्यवान् ॥ ५६ ॥ एतेसर्वेदनोःपुत्राःकश्यपादनुजज्ञिरे ॥ स्वर्भानोस्तुप्रभाकन्यापुलोम्नस्तुशचीसुता ॥ ५७ ॥ उपदानवीहयशिराःशर्मिष्ठा
वार्षपर्वणी ॥ पुलोमाकालिकाचैववैश्वानरसुतेउभे ॥ ५८ ॥ बह्वपत्येमहावीर्येमरीचेस्तुपरिग्रहे ॥ तयोःपुत्रसहस्राणिषष्टिर्दानवनंदनाः ॥ ५९ ॥
मरीचिर्जनयामासमहतातपसान्वितः॥पौलोमाःकालखंजाश्चदानवानांमहाबलाः ॥ ६० ॥ अवध्यादेवतानांहिहिरण्यपुरवासिनः ॥ पितामहप्रसादे
नयेहताःसव्यसाचिना ॥ ६१ ॥ सिंहिकायामथोत्पन्नाविप्रचित्तेःसुतास्तथा ॥ दैत्यदानवसंयोगाज्जातास्तीव्रपराक्रमाः ॥ ६२ ॥ सैंहिकेयाइतिख्या
तास्त्रयोदशमहाबलाः ॥ राहुःशल्यःसुबलिनोबलश्चैवमहाबलः ॥ ६३ ॥ वातापिर्नमुचिश्चैवइल्वलःस्वसृपस्तथा ॥ अजिकोनरकश्चैवकालनाभस्तथै
वच ॥ ६४ ॥ शरमाणःशरकल्पएतेवंशविवर्द्धनाः ॥ तेषांपुत्राश्चपौत्राश्चदनुवंशविवर्धनाः ॥ ६५ ॥ संह्लादस्यतुदैत्यस्यनिवातकवचाःकुले ॥ उत्प
न्नामहतातस्मिंस्तपसाभावितात्मनः ॥ ६६ ॥ खरमुखामहासत्वास्ताम्रायाःपरिकीर्तिताः ॥ काकीश्येनीचभासीचसुग्रीवीगृध्रिकाशुकी ॥ ६७ ॥
काकीकाकानजनयदुलूकीप्रत्युलूकिकान् ॥ श्येनीश्येनांस्तथाभासीभासान्गृध्रीतुगृध्रकान् ॥ ६८ ॥ शुकीशुकान्यदेवांस्तुसुग्रीवीशुभपक्षिणः ॥
अश्वानुष्ट्रान्गर्दभांश्चताम्रावंशःप्रकीर्तितः ॥ ६९ ॥ विनतायास्तुपुत्रौद्वावरुणोगरुडस्तथा ॥ सुपर्णःपततांश्रेष्ठश्चादरुणःस्वेनकर्मणा ॥ ७० ॥
सुरसायाःसहस्रंतुसर्पाणाममितौजसाम् ॥ अनेकशिरसांतेषांखेचराणांमहात्मनाम् ॥ ७१ ॥ येषांप्रधानाराजानःशेषवासुकितक्षकाः ॥ ऐरावतोमहाप
द्मःकंबलाश्वतरावुभौ ॥ ७२ ॥ एलापत्रस्तथापद्मःकर्कोटकधनंजयौ ॥ महानीलमहावर्णौधृतराष्ट्रोबलाहकः ॥ ७३ ॥ कुहरःपुष्पदंतश्चदुर्मुखःसुमु

खस्तथा ॥ बहुशःखररोमाचपाणिरित्येवमादयः ॥ ७४ ॥ गणंक्रोधवशाविप्रतस्यसर्वेचदंष्ट्रिणः ॥ अंडजाःपक्षिणोब्जाश्ववरायाःपशवःस्मृताः ॥७५॥ अनायुषायाःपुत्रास्तुपंचाशच्चमहाबलाः ॥ अभवन्बलवृत्ताश्चविक्षरोथबृहस्तथा ॥ ७६ ॥ शशांस्तुजनयामाससुरभिर्महिषीतथा ॥ इलावृक्षलतावल्लीस्तृणजातींश्चसर्वतः ॥ ७७ ॥ खसातुयक्षरक्षांसिमुनिरप्सरसस्तथा ॥ अरिष्टासूतसर्वांश्चप्रभावैर्मानवोत्तम ॥ ७८ ॥ एतेकश्यपदायादाः कीर्तिताःशृणुजंगमान् ॥ एषांपुत्राश्चपौत्राश्चशतशोथसहस्रशः ॥ ७९ ॥ एषमन्वंतरेतातसर्गःस्वारोचिषेस्मृतः ॥ वैवस्वतेतुमहतिवारुणेवितते क्रतौ ॥ ८० ॥ जुव्हानस्यब्रह्मणोवैप्रजासर्गइहोच्यते ॥ पूर्वंयत्रतुब्रह्मर्षीनुत्पन्नान्त्सप्तमानसान् ॥ ८१ ॥ पुत्रान्वैकल्पयामासस्वयमेवपितामहः ॥ ततोविरोधेदेवानांदानवानांमहर्षयः ॥ ८२ ॥ दितिर्विनष्टपुत्रावैकश्यपंसमुपस्थिता ॥ तांकश्यपःप्रसन्नात्मासम्यगाराधितस्तथा ॥ ८३ ॥ वरेणच्छंदयामाससाचवव्रेवरंतदा ॥ पुत्रमिंद्रवधार्थायसमर्थममितौजसम् ॥ ८४ ॥ सचतस्यैवरंप्रादात्प्रार्थितःसुमहातपाः ॥ धारयामासगर्भंतुशुचिःसावरवर्णिनी ॥ ८५ ॥ ततस्त्वाधायसोदित्यांगर्भंतंसंशितव्रतः ॥ जगामकश्यपस्तप्तुंतपसाहृष्टमानसः ॥ ८६ ॥ तस्याश्चैवांतरंप्रेप्सुःसोभवत्पाकशासनः ॥ ऊनेवर्षशतेचास्याददर्शांतरमेवसः ॥८७॥ अकृत्वापादयोःशौचंदितिरर्वाक्छिरास्ततः ॥ निद्रामाहारयामासतस्याःकुक्षिंप्रविश्यह ॥ ८८ ॥ वज्रपाणिस्तुतंगर्भंसप्तधासमकृंतत ॥ सपाट्यमानोगर्भोथवज्रेणप्ररुरोदह ॥८९॥ मारोदीस्त्वंपुनःशक्रःपुनरेवाभ्यभाषत ॥ सोभवत्सप्तधागर्भस्तमिंद्रस्त्रसितःपुनः ॥९०॥ एकैकंसप्तधाचक्रेवज्रेणैवारिकर्शनः ॥ मरुतोनामतेदेवाबभूवुःसुमहाबलाः ॥९१॥ खगाएकोनपंचाशत्सहायावज्रपाणिनः ॥ तेषामेवप्रवृद्धानांहरिःप्रादात्प्रजापतिः ॥ ९२ ॥ क्रमशस्तानिराज्यानिपृथुपूर्वंशृणुष्वतत् ॥ अरिष्टपुरुषोवीरःकृष्णोजिष्णुःप्रजापतिः ॥ ९३ ॥ पर्जन्यस्तुधनाध्यक्षस्तस्यसर्वमिदंजगत् ॥ भूतसर्गमिमंसम्यक्कथितंशृणुचाग्रतः ॥ ९४ ॥ अभिषिच्याधिराज्येतुपृथुंवैन्यंपितामहः ॥ ततःक्रमेणराज्यानिव्यादेष्टुमुपचक्रमे ॥ ९५ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांचतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ सूतउवाच ॥ द्विजानांवीरुधांचैवनक्षत्रग्रहयोस्तथा ॥ यज्ञानांतपसांचैवसोमंराज्येभ्यषेचयत् ॥ १ ॥ अपांतुवरुणंराज्येराज्ञांवैश्रवणंप्रभुम् ॥ आदित्यानांतथाविष्णुंवसूनामथपावकम् ॥ २ ॥ प्रजापतीनांदक्षंतुमरुतामथवासवम् ॥ दैत्यानांदानवानांचप्रह्लादममितौजसम् ॥ ३ ॥ वैवस्वतंपितॄणांचयमंराज्येभ्यषेचयत् ॥ मातॄणांचव्रतानांचमंत्राणांचतथागवाम् ॥ ४ ॥ यक्षाणांराक्षसानांचपार्थिवानांतथैवच ॥ सर्वभूतपिशाचानांगिरीशंशूलपाणिनम् ॥ ५ ॥ शैलानांहिमवंतंचनदीनामथसागरम् ॥ मृगाणामथशार्दूलंगोवृषंतुगवामपि ॥ ६ ॥ वनस्पतीनांवृक्षंतुएवंराज्येभ्यषेचयत् ॥ दिशापालांस्ततश्चैवस्थापयामाससर्वशः ॥ ७ ॥ पूर्वस्यांदिशि

पुत्रंतुवैराजस्यप्रजापतेः ॥ सुधन्वानंतुराज्येतुकर्दमस्यप्रजापतेः ॥ ८ ॥ दक्षिणस्यांतथापुत्रंस्थापयद्दैवतंविभुः ॥ पश्चिमायांदिशितथारजसःपुत्रमच्यु
तम् ॥ ९ ॥ केतुमंतंमहात्मानंराजानंव्यादिशत्प्रभुः ॥ तथाहिरण्यरोमाणंपर्जन्यस्यप्रजापतेः ॥ १० ॥ उदीच्यांदिशिराजानंदुर्धर्षसोभ्यषेचयत् ॥
तस्यविस्तरमाख्यातंमनोर्वैवस्वतस्यह ॥ ११ ॥ महद्धचैतदधिष्ठानंपुराणंपरिकीर्तितम् ॥१२॥ इतिश्रीशिवमहापुराणेपंचपंचाशत्तमोऽध्यायः॥५५॥
सनत्कुमारउवाच ॥ आसीद्धर्मस्यगोप्तावैपूर्वमत्रिसमःप्रभुः ॥ अत्रिवंशसमुत्पन्नस्त्वंगोनामप्रजापतिः ॥१॥ तस्यपुत्रोभवद्वेनोनात्यर्थंधार्मिकोभवत् ॥
जातोमृत्युसुतायांवैसुनीथायांप्रजापतेः ॥ २ ॥ समातामहदोषेणवेनःकालात्मजात्मजः ॥ स्वधर्मंपृष्ठतःकृत्वाकामाल्लोकेष्ववर्तत ॥ ३ ॥ मर्यादांस्था
पयामासधर्मशास्त्रविरोधिनीम्॥वर्णधर्मानतिक्रम्यसोधर्मेनिरतोभवत् ॥४॥ निःस्वाध्यायवषट्कारास्तस्मिन्राजनिशासति ॥ प्रावर्ततपपुःसोमंकुतोयज्ञे
षुदीक्षिताः ॥५॥ नयष्टव्यंनहोतव्यमित्याज्ञापयतिप्रजाः ॥ तमतिक्रांतमर्यादमददानमसांप्रतम् ॥ ६ ॥ ऊचुर्महर्षयःसर्वेमरीचिप्रमुखास्तदा॥वयंदीक्षां
प्रवेक्ष्यामःसंवत्सरगणान्बहून् ॥ ७॥ अधर्मंकुरुमावेनएषधर्मःसतामपि ॥ निधानंहिप्रसूतस्त्वंप्रजानांपरिपालकः ॥ ८ ॥ प्रजास्त्वंपालयिष्येहमितितैः
समयःकृतः ॥ तांस्तदाब्रुवतःसर्वान्मुमूर्षुरब्रवीत्ततः ॥ ९ ॥ वेनःप्रहस्यदुर्बुद्धिरिममर्थंविचिंतयन् ॥ स्रष्टाधर्मस्यकश्चान्यःश्रोतव्यःकश्चवैमया ॥ १० ॥
संमूढानविदुर्द्धर्मंभवंतोमांविशेषतः ॥ इत्थंसंसाधयन्पृथ्वींश्रावयेयंतथाजलम् ॥११॥ द्यांभुवंचैवविध्येयंनात्रकार्याविचारणा ॥ यदानशक्यतेनेतुंदैवमो
हेनमोहितम् ॥ १२ ॥ अनुनेतुंतदावेनंततःक्रुद्धामहर्षयः ॥ निगृह्यतंदुरात्मानंविस्फुरंतंमहाबलम् ॥ १३ ॥ ततोस्यसव्यमूरुंतेममंथुर्जातमन्यवः ॥
तस्मिन्सुमथ्यमानेवैराज्ञऊरोःप्रजज्ञिवान् ॥ १४ ॥ ह्रस्वोतिमात्रःपुरुषःकृष्णश्चापिबभूवह ॥ सभीतःप्रांजलिर्भूत्वातस्थौचऋषिसत्तम ॥ १५ ॥ तम
त्रिर्विह्वलंदृष्ट्वानिषीदेत्यब्रवीद्वचः ॥ निषादवंशकर्तासबभूववदतांवरः ॥ १६ ॥ धीवरानसृजच्चापिवेनकल्मषसंभवान् ॥ येचान्येविंध्यनिलयाःपु
लिंदास्तुंबरास्तथा ॥ १७ ॥ अधर्मरुचयोयेचविद्धितान्वेनकल्मषान् ॥ ततःपुनर्महात्मानःपाणिंवेनस्यदक्षिणम् ॥ १८ ॥ अरणीमिवसंधायममंथुस्तेम
हर्षयः ॥ पृथुस्तस्मात्समुत्तस्थौकराज्जलजसंनिभात् ॥१९॥ दीप्यमानःसुवपुषासाक्षादग्निसमोज्ज्वलः ॥ आद्यमाजगवंनामधनुर्गृह्यमहारवम् ॥ २० ॥
शरांश्चदिव्यान्रक्षार्थंकवचंचमहाप्रभम् ॥ तस्मिञ्जातेथभूतानिमुदितानितुसर्वशः ॥ २१ ॥ समापेतुर्दिशोदेवावेनश्चत्रिदिवंययौ ॥ सत्पुत्रेणसुजा
तेनएवंसर्वमिदंजगत् ॥ २२ ॥ त्रातासपुरुषव्याघ्रःपुन्नाम्नोनरकात्तदा ॥ तंसमुद्राश्चनद्यश्चरत्नान्यादायसर्वशः ॥ २३ ॥ तोयानिचाभिषेकार्थंसर्वएवा
वतस्थिरे ॥ पितामहश्चभगवान्देवैश्चांगिरसैः सह ॥ २४ ॥ समागम्यतदावैन्यमभ्यषिंचन्नराधिपम् ॥ महताराजराज्येनप्रजापालोमहाद्युतिः ॥ २५ ॥

अभिषिक्तोमहातेजाविधिवद्धर्मकोविदैः ॥ आदिराज्येमहातेजाःपृथुर्वैन्यःप्रतापवान् ॥ २६ ॥ पित्रापरंजितास्तस्यप्रजास्तेनानुरंजिताः ॥ अनुरागा
त्ततस्तस्यनानाश्चर्यमभूत्तदा ॥ २७ ॥ आपःसंस्तंभितादद्युर्मार्गेसमभिपद्यत ॥ पर्वताश्चददुर्मार्गेध्वजसंगश्चनाभवत् ॥ २८ ॥ अकृष्टपच्यापृथिवी
सिद्ध्यंत्यन्नानिचिंतया ॥ सर्वकामदुघागावःपुटकेपुटकेमधु ॥ २९ ॥ एतस्मिन्नेवकालेतुयज्ञेपैतामहेशुभे ॥ सूतःसूत्यांसमुत्पन्नःसौत्येहनिमहाम
तिः ॥ ३० ॥ तस्मिन्नेवमहायज्ञेप्रातेजज्ञेथमागधः ॥ पृथोस्तवार्थंतौतत्रसमाहूतौमहर्षिभिः ॥ ३१ ॥ तावूचुर्ऋषयःसर्वेस्तूयतामेषपार्थिवः ॥
कर्मैतदनुरूपंवापात्रंवायन्नराधिपः ॥ ३२ ॥ तावूचतुस्तानानम्यनविज्ञोलक्षणंयशः ॥ तावूचुस्तेभविष्यैश्चलक्षणैःस्तूयतामिति ॥ ३३ ॥ तच्छ्रुत्वा
शस्तुचक्रातेराज्ञस्तौसूतमागधौ ॥ तयोःस्तवांतेसुप्रीतःपृथुःप्रादात्प्रजेश्वरः ॥ ३४ ॥ अनूपदेशंसूतायमगधंमागधायच ॥ तंदृष्ट्वापरमप्रीतादेवाब्र
ह्मपुरोगमाः ॥ ३५ वृत्तीनामेषवोदाताभविष्यतिनरेश्वरः ॥ ततोवैन्यंप्रजाःसर्वाजीवनायाभिदुद्रुवुः ॥३६॥ त्वंनोवृत्तिंविधत्स्वेतितमूचुर्ब्राह्मणाःकिल ॥
सोपसृत्याथसहसाप्रजापतिचिकीर्षया ॥३७॥ धनुर्गृह्यपृषत्कांश्चधरांप्रत्युद्ययौपुनः ॥ ततोवैन्यभयत्रस्तागौर्भूत्वाप्राद्रवन्मही ॥३८॥ तांपृथुर्धनुरादाय
द्रवंतीमन्वधावत ॥ सालोकाँल्लोकपालादीन्ययौवैन्यभयात्तदा ॥३९॥ अलभंतीतुसात्राणंतंवैशरणमेयिवान् ॥ कृतांजलिपुटाभूत्वाइदंवचनमब्रवीत्
॥ ४० ॥ कथंधारयिताचासिप्रजाराजन्मयाविना ॥ मयिलोकाःस्थिताराजन्मयेदंधार्यतेजगत् ॥ ४१ ॥ मत्कृतेचविनश्यंतिसर्वेपार्थिवपार्थिवाः ॥
नमामर्हसिहंतुंवैश्रेयश्चेत्त्वंचिकीर्षसि ॥४२॥ उपायतःसमारब्धाःसर्वेसिद्ध्यंत्युपक्रमाः॥उपायंपश्ययेनत्वंधारयेथाःप्रजानृप॥४३॥अनुभूताभविष्यामि
यच्छकोपंमहीपते ॥ अवध्यांचास्त्रियंप्राहुस्तिर्यग्योनिगतेष्वपि ॥ ४४ ॥ सत्वंतुपृथिवीपालनधर्मंत्यक्तुमर्हसि ॥ एवंबहुविधंवाक्यंश्रुत्वाराजामहामनाः
॥ ४५ ॥ कोपंनिगृह्यधर्मात्माइदंवचनमब्रवीत् ॥ एकस्यार्थेतुयोहन्याद्बहून्पापंतुतस्यतत् ॥ ४६ ॥ बहूनांहंतिवाप्येकंतस्यनास्तीहपातकम् ॥ सोहं
प्रजानिमित्तंत्वांहनिष्यामिवसुंधरे ॥ ४७ ॥ यदिमेवचनंत्वद्यकरिष्यसिचनोहितम् ॥ सात्वमाज्ञांसमास्थायममसंजीवयप्रजाः ॥ ४८ ॥ इतिश्रीशिव
महापुराणेधर्मसंहितायांषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ सूतउवाच ॥ तच्छ्रुत्वापृथिवीप्राहनमांत्वंहंतुमर्हसि ॥ वत्संतुमेमतंपश्यक्षरेहंयेनवत्सला
॥ १ ॥ समांचकुरुसर्वत्रपर्वतैरावृतायतः ॥ यथाविस्पंदमानाहंक्षीरंसर्वत्रभावये ॥ २ ॥ ततउत्सारयामासगिरीञ्छतसहस्रशः ॥ धनुष्कोट्यातदावैन्य
स्तेनशैलाविवर्धिताः ॥ ३ ॥ नहिपूर्वविसर्गेवैविषयेपृथिवीतले ॥ प्रविभागःपुराणांवैग्रामाणांवाभवत्तदा ॥ ४ ॥ नसस्यानिनगोरक्षानकृषिर्नवणि
क्पथः ॥ यत्रतत्रसमत्वंस्याद्भूमेर्वासस्त्वभूद्द्विजाः ॥ ५ ॥ आहारःफलमूलानिप्रजानांचाभवत्तदा ॥ संकल्पयित्वावत्संतुमनुंस्वायंभुवंप्रभुः ॥ ६ ॥

सपाणौपुरुषश्रेष्ठोदुदोहपृथिवींतदा ॥ सस्यजातानिसर्वाणिगोर्हिवैन्यःप्रतापवान् ॥ ७ ॥ तेनान्नेनप्रजाःसर्वावर्तयंत्यद्यनित्यशः ॥ ऋषिभिस्तुततो
दुग्धावत्सःसोमोभवत्ततः ॥ ८ ॥ पात्रंछंदांसिदोग्धावैतपोदुग्धंचशाश्वतम् ॥ ततोदेवगणैर्दुग्धावत्संकृत्वापुरंदरम् ॥ ९ ॥ कांचनंपात्रमादायदोग्धाचै
वतुभास्करः ॥ क्षीरमूर्जस्करंचैवयेनवर्तंतिदेवताः ॥ १० ॥ पितृभिश्चपुनर्दुग्धापात्रमादायराजतम् ॥ वत्संकृत्वामयंचैवदोग्धाकालस्तुचांतकः ॥ ११ ॥
स्वधादुग्धंतुनागैर्यापुनर्दुग्धावसुंधरा॥अलाबुपात्रमादायवत्संकृत्वातुतक्षकम् ॥१२॥ नागैर्दुग्धंवसुमतीविषंक्षीरंमहाऋषे॥तेषामैरावतोदोग्धाधृतराष्ट्रः
प्रतापवान् ॥ १३ ॥ वाय्वाहारास्तदाचाराःसदासर्पाविषोल्बणाः ॥ असुरैश्चपुनर्दुग्धापात्रंकृत्वातदायसम् ॥ १४ ॥ मायादुग्धंतुवत्सांहिकृत्वापौत्रं
विरोचनम् ॥दोग्धादैत्योमधुस्तत्रततोमायाधिकाःसुराः ॥ १५ ॥ यक्षैःसंश्रूयतेदुग्धाआमपात्रेवसुंधरा ॥ अंतर्धानंचवैदुग्धंवत्संवैश्रवणंतथा ॥ १६ ॥
राक्षसैश्चपिशाचैश्चपुनर्दुग्धावसुंधरा ॥ क्षीरंरुधिरमेवापिदोग्धाराक्षसनायकः ॥ १७ ॥ वत्संसुमालिनंकृत्वातेनतेवर्तयन्त्यथ ॥ पद्मपत्रेपुनर्दुग्धागं
धर्वैःसाप्सरोगणैः ॥ १८ ॥ वत्संचित्ररथंकृत्वादोग्धावसुरुचिस्तथा ॥ शैलैश्चश्रूयतेदुग्धारत्नान्योषधयःशुभाः ॥ १९ ॥ वत्सस्तुहिमवानासीद्दोग्धामे
रुर्महागिरिः ॥ आसीदियंसमुद्रांतामेदिनीचपरिश्रुता ॥२०॥ मधुकैटभयोःकृत्स्नामेदसाचपरिप्लुता ॥ दुहितृत्वमनुप्राप्ताधरापृथ्व्युच्यतेततः ॥ २१ ॥
पृथुनाप्रविभक्ताचकृतासस्वरवंदना ॥ एवंप्रभावोवैन्यःसराजासीन्मुख्यतोनृणाम् ॥२२॥ नमस्यश्चैवपूज्यश्चवृत्तिकामैर्नृपैःसदा ॥ ब्राह्मणैश्चमहाभागैर्वै
श्यैःशूद्रैर्धनेप्सुभिः॥२३॥ योधैरपिचविक्रांतैःपार्थिवत्वमभीप्सुभिः ॥ आदिकर्तारणानांचयोधानांप्रथमोमुने॥२४॥योहियोधोरणंयातिकीर्तयित्वापृथुं
नृपम् ॥सघोररूपात्संग्रामात्क्षेमीतरतिमूर्तिमान् ॥२५॥ वैश्योपिकृषिभागीस्याच्छूद्रःपुण्यफलंलभेत्॥पृथुःसदानमस्कार्योभूतिकामैस्तुपर्वसु॥२६॥
इति श्रीशिवमहापुराणेधर्मसंहितायांसप्तपंचाशत्तमोऽध्यायः ॥५७॥ सूतउवाच ॥ एतत्तेमेमुनेख्यातंव्यासस्यामिततेजसः॥यथासनत्कुमारेणकथितंय
त्पुरातनम्॥ १ ॥ यत्पृच्छसिमुनेभूयस्तद्वक्ष्यामीहसांप्रतम् ॥ शौनकउवाच ॥ मन्वंतराणिसर्वाणिविस्तरेणानुकीर्तय ॥ २ ॥ यावंतोमनवश्चैवश्रोतु
मिच्छामिमानद ॥ सूतउवाच ॥ स्वायंभुवोमनुश्चैवततःस्वारोचिषस्तथा ॥ ३ ॥ वैवस्वतोमुनिश्रेष्ठसांप्रतंमनुरुच्यते ॥ सावर्णिश्चमनुश्चैवभौत्योरौ
च्यस्तथापरः ॥ ४ ॥ तथैवमेवसावर्णिश्चत्वारोमनवस्तथा ॥ अतीतावर्तमानाश्चतथैवानागताश्चये ॥ ५ ॥ कीर्तितामनवश्चापिमयैवैतेयथाश्रुताः ॥
ऋषींस्तेषांप्रवक्ष्यामिपुत्रान्देवगणांस्तथा ॥ ६ ॥ मरीचिरत्रिर्भगवानंगिराःपुलहःक्रतुः ॥ पुलस्त्यश्चवसिष्ठश्चसप्तैतेब्रह्मणःसुताः ॥ ७ ॥ उत्तरस्यांदि
शितथामुनेसप्तर्षयस्तथा ॥ यामानामतथादेवाआसन्स्वायंभुवांतरे ॥ ८ ॥ आग्नीध्रश्चाग्निबाहश्चमेधामेधातिथिर्वसुः ॥ ज्योतिष्मान्द्युतिमान्हव्यः

सवनःशुभ्रएवच ॥ ९ ॥ एतेमहर्षयस्तत्रवायुप्रोक्तामहाव्रताः ॥ देवाश्चतुषितानामस्मृताःस्वारोचिषेंतरे ॥ १० ॥ हरिघ्नःसुकृतिर्ज्योतिरयोमूर्तिरयः
स्मयः ॥ प्रथितश्चमनस्यश्चनभःसूर्यस्तथैवच ॥ ११ ॥ स्वारोचिषस्यपुत्रास्तेमनोःपुत्रामहात्मनः ॥ कीर्तितामुनिशार्दूलमहावीर्यपराक्रमाः ॥१२॥
द्वितीयमेतत्कथितंमुनेमन्वंतरंतव ॥ तृतीयंतववक्ष्यामितन्निबोधयथातथम् ॥ १३ ॥ वसिष्ठपुत्राःसप्तासन्वासिष्ठाइतिविश्रुताः ॥ हिरण्यगर्भस्यसुता
ऊर्जानाममहौजसः ॥ १४ ॥ ऋषयोत्रसमाख्याताःकीर्त्यमानान्निबोधमे ॥ औत्तमेयाऋषिश्रेष्ठदशपुत्रामनोरमाः ॥ १५ ॥ इषऊर्जातमूर्जश्चमधुर्मा
धवएवच ॥ शुचिःशुक्रवहश्चैवनभसोनभएवच ॥ १६ ॥ ऋषभस्तत्रदेवाश्चमन्वंतरउदाहृताः ॥ मन्वंतरंचतुर्थंतेकथयिष्यामितच्छृणु ॥ १७ ॥
गार्ग्यःपृथुस्तथैवाग्निर्जन्योधाताकपीनकः ॥ कपीवान्सप्तर्षयस्तुसत्यादेवगणास्तथा ॥ १८ ॥ तामसस्यांतरेचैवमनोर्मेकथितास्तव ॥ द्युतिपोतः
सौतपस्यस्तपःशूलश्चतापनः ॥ १९ ॥ तपोरतिरकल्माषस्तन्वधिन्वीमहाऋषे ॥ तामसस्यसुताह्येतेदशपुत्रामहाव्रताः ॥ २० ॥ वायुप्रोक्तामहा
कालेचतुर्थेवैतदंतरे ॥ वेदबाहुर्जयश्चैवमुनिर्वेदशिरास्तथा ॥ २१ ॥ हिरण्यरोमापर्जन्यऊर्ध्वबाहुश्चसोमपाः ॥ सत्यनेत्ररताश्चान्येएतेसप्तर्षयोपरे
॥ २२ ॥ देवाश्चभूतरजसस्तथाप्रकृतयस्तथः ॥ पारिप्लवश्चरैभ्यश्चमनोरंतरमेवच ॥ २३ ॥ अथपुत्रानिमांस्तस्यनिबोधगदतोमम ॥ धृतिमा
नव्ययोव्यक्तःसत्यदर्शीनिरुत्सवः ॥ २४ ॥ अरण्यश्चप्रकाशश्चनिर्दोहःसत्यवान्कृतिः ॥ रैवतस्यमनोःपुत्राःपंचमंचैतदंतरम् ॥ २५ ॥
षष्ठंतेसंप्रवक्ष्यामितन्निबोधमहामुने ॥ भृगुर्नहोविवस्वांश्चसुधर्माविरजास्तथा ॥२६॥ अतिनामासहिष्णुश्चसप्तैवैतेमहर्षयः ॥ चाक्षुषस्यांतरेविप्रमनोर्दे
वानिमाञ्छृणु ॥ २७ ॥ आद्याःप्रसूताऋभवःपृथूग्राश्चदिवौकसः ॥ लेखाश्चनामाविप्रेंद्रपंचदेवगणाःस्मृताः ॥ २८ ॥ ऋषेरंगिरसःपुत्रामहात्मानो
महाबलाः ॥ नद्वलेयामुनिश्रेष्ठदशपुत्राश्चविश्रुताः ॥ २९ ॥ रुरुप्रभृतयोविप्रषष्ठेमन्वंतरेस्मृताः ॥ अत्रिर्वसिष्ठोभव्यश्चकश्यपश्चमहानृषिः ॥ ३० ॥
गौतमोथभरद्वाजोविश्वामित्रस्तथैवच ॥ जमदग्निःसप्तमस्तुऋषयःसांप्रतंदिवि ॥ ३१ ॥ आदित्यान्मरुतोरुद्रानश्विनौभास्करान्वसून् ॥ महाराजिक
साध्यांश्चसाध्यांश्चैवगणान्विभुः ॥ ३२ ॥ मनोर्वैवस्वतस्यैतेवर्तंतेसांप्रतंतुये ॥ इक्ष्वाकुप्रमुखाश्चैवपुत्रपौत्रामहात्मनः ॥ ३३ ॥ मनोःसमभवन्विप्रादि
क्षुसर्वासुशौनक ॥ मन्वंतरेषुसर्वेषुप्राग्वृषःसप्तसप्तकाः ॥३४॥ स्थिताधर्मव्यवस्थार्थंलोकसंरक्षणायच ॥ मन्वंतरेव्यतिक्रांतेचत्वारःसप्तसप्तकाः॥३५॥
कृत्वाकर्मदिवंयांतिब्रह्मलोकमनामयम् ॥ ततोन्येतपसास्थानंतत्पूर्वसंप्रयांतिच ॥ ३६ ॥ सवर्णामुनयोभव्याःपंचतांश्चनिबोधमे ॥ एकोवैवस्वत
स्तेषांचत्वारस्तुप्रजापतेः ॥ ३७ ॥ परमेष्ठिसुताविप्रमेरुसावर्णतांगताः ॥ दक्षस्यतेचदौहित्राःप्रियायास्तनयास्तुते ॥ ३८ ॥ महतातपसायुक्तामे

रुपृष्ठेवसंतिहि ॥ रुचेःप्रजापतेःपुत्रोरौच्योनाममनुःस्मृतः ॥ ३९ ॥ भूत्यांचोत्पादितोदेव्यांभौत्योनामाभवत्पुनः ॥ अनागताश्चसप्तैतेकल्पेऽस्मिन्म
नवःस्मृताः ॥ ४० ॥ अनागताश्चसप्तैवस्मृतादिविमहर्षयः ॥ रामोव्यासस्तथात्रेयोदीप्तिमान्तसुबहुश्रुतः ॥ ४१ ॥ भारद्वाजिस्तथाद्रौणिरश्वत्थामाम
हाद्युतिः ॥ गौतमस्यात्मजश्चैवशरद्वान्गौतमःकृतः ॥ ४२ ॥ कौशिकोगालवश्चैवरुरुःकाश्यपएवच ॥ एतेसप्तमहात्मानोभविष्यामुनिसत्तमाः ॥४३॥
देवतानांगणास्तत्रत्रयःप्रोक्ताःस्वयंभुवा ॥ मारीचेश्चैवपुत्रास्तेकश्यपस्यमहात्मनः ॥ ४४ ॥ वीरवांश्चावनीवांश्चसुमंतोधृतिमान्वसुः ॥ वारेष्णुरार्यो
विष्णुश्चराजासुमतिरेवच ॥ ४५ ॥ सावर्णस्यमनोःपुत्राभविष्यादशशौनक ॥ प्रथमंमेरुसावर्णिंप्रवक्ष्य।मिमनुंशृणु ॥ ४६ ॥ मेधातिथिश्चपौलस्त्यो
वसुःकाश्यपएवच ॥ ज्योतिष्मान्भार्गवश्चैवद्युतिमानांगिरास्तथा ॥ ४७ ॥ सवनश्चैववासिष्ठआत्रेयोहव्यएवच ॥ पौलहःसप्तइत्येतेऋषयोरोहितांतरे
॥ ४८ ॥ देवतानांगणास्तत्रत्रयएवमहामुने ॥ दीक्षापुत्रस्यपुत्रास्तेरोहितस्यप्रजापतेः ॥ ४९ ॥ दृष्टकेतुर्दीप्तकेतुःपंचहस्तोनिराकृतिः ॥ पृथुश्रवा
भूरिद्युम्नऋचीकोबृहतोगयः ॥ ५० ॥ प्रथमस्यतुसावर्णेर्नवपुत्रामहौजसः ॥ दशमेत्वथपर्यायेद्वितीयस्यांतरेमनोः ॥ ५१ ॥ हविष्मान्पुलहश्चैवसुकृ
तिश्चैवभार्गवः ॥ आयोमुक्तिस्तथात्रेयोवासिष्ठश्चाव्ययःस्मृतः ॥ ५२ ॥ पौलस्त्यःप्रयतिश्चैवनाभारश्चैवकाश्यपः ॥ अंगिरानभसःसत्यःसप्तैतेपरमर्ष
यः ॥ ५३ ॥ देवतानांगणाश्चापिद्विषिमंतश्चयेस्मृताः ॥ अक्षत्वान्नोत्तमौजाश्चभूरिषेणश्चवीर्यवान् ॥ ५४ ॥ शतानीकोनिरामित्रोवृषसेनोजयद्रथः ॥
भूरिद्युम्नःसुवर्चाश्चदशत्वेतेमनोःसुताः ॥ ५५ ॥ एकादशेतुपर्यायेतृतीयस्यांतरेमनोः ॥ तस्यापिसप्तऋषयःकीर्त्यमानान्निबोधमे ॥ ५६ ॥ हवि
ष्मान्कश्यपश्चापिवपुष्मांश्चैववारुणः ॥ आत्रेयोथवसिष्ठश्च अनघस्त्वंगिरास्तथा ॥ ५७॥ चारुधृष्यश्चपौलस्त्योनिस्वरोऽग्निस्तुतेजसः ॥ सप्तैतेऋ
षयःप्रोक्तास्त्रयोदेवगणाःस्मृताः ॥ ५८ ॥ ब्रह्मणस्तुसुतास्तेतुअतःशृणुमहामते ॥ सर्वत्रगःसुशर्माचदेवानीकस्तुक्षेमकः ॥ ५९ ॥ दृढेषुःपंडकोदर्शे
ऊरुर्वाहोमनोःसुताः ॥ सुवर्णस्यतुपुत्रावैतृतीयस्यनवस्मृताः ॥ ६० ॥ चतुर्थस्यतुसावर्णेऋषीन्सप्तान्निबोधमे ॥ द्युतिर्वसिष्ठपुत्रश्चआत्रे
यःसुतपास्तथा ॥ ६१ ॥ अंगिरास्तपसोमूर्तिस्तपस्वीकश्यपस्तथा ॥ तपोशनश्चपौलस्त्यःपौलहश्चतपोरतिः ॥ ६२ ॥ भार्गवःसप्तमस्ते
षांविज्ञेयस्तपसोनिधिः ॥ पंचदेवगणाःप्रोक्तामानसाब्रह्मणःसुताः ॥ ६३ ॥ द्वादशेचैवपर्यायेभाव्येरौच्यांतरेमनोः ॥ अंगिराश्चैवधृतिमा
न्पौलस्त्योहव्यवांस्तुयः ॥ ६४ ॥ पौलहस्तत्वदर्शीचभार्गवश्चनिरुत्सवः ॥ निष्प्रपंचस्तथात्रेयोनिर्मोहःकाश्यपस्तथा ॥ ६५ ॥ सुतपाश्चैववारिष्ठः
सप्तैवैतेमहर्षयः ॥ त्रयएवगणाःप्रोक्तादेवतानांस्वयंभुवा ॥ ६६ ॥ पुनर्महात्मजास्तेवैचित्रोवैचित्रएवच ॥ तयोर्धर्मभृतोध्रश्चसुनेत्रःक्षत्रवृद्धकः ॥ ६७॥

निर्भयःसुतपाद्रोढोमनोरौच्यस्यतेसुताः ॥ त्रयोदशतुपर्यायेशैव्यस्यैवांतरेमनोः ॥ ६८ ॥ आग्नीध्रःकाश्यपश्चैवपौलस्त्योमागधश्चयः ॥ भार्गवो
प्यतिवाह्यश्चशुचिरांगिरसस्तथा ॥ ६९ ॥ युक्तश्चैवतथात्रेयःशक्रोवासिष्ठएवच ॥ अजितःपुलहश्चैवअंत्याःसप्तर्षयश्चते ॥ ७० ॥ एतेषांकल्यउत्था
यकीर्तनात्सुखमेधते ॥ अतीतानागतानांवैमहर्षीणांसदानरः ॥ ७१ ॥ देवतानांगणाःप्रोक्ताःपंचशृणुमहामते ॥ तरंगभीरुर्बुध्नश्चतनूग्रोनुग्रएवच ॥
॥ ७२ ॥ अतिमानीप्रवीणश्चविष्णुःसंक्रंदनस्तथा ॥ तेजस्वीशंबलश्चैवसत्यस्यैतेमनोःसुताः ॥ ७३ ॥ भौत्यस्यैवाधिकारेतुपूर्वकल्पस्तुपूर्यते ॥
इत्येतेनागतातीतामनवःकीर्तितामया ॥ ७४॥ उक्ताःसनत्कुमारेणव्यासायामिततेजसा ॥ पूर्णेयुगसहस्रांतेपरिपाल्यस्वधर्मतः ॥ ७५ ॥ प्रजाभिस्तप
सायुक्ताब्रह्मलोकंव्रजंतिते ॥ युगानिसप्ततिर्ह्येकसाम्राण्यंतरमुच्यते ॥ ७६ ॥ चतुर्दशैतेमनवःकीर्तिताःकीर्तिवर्धनाः ॥ मन्वंतरेषुसंहाराःसंहारांतेपुन
र्भवः ॥७७॥ नशक्यमंतरंतेषांवक्तुंवर्षशतैरपि ॥ पूर्णेशतसहस्रेतुकल्पोनिःशेषउच्यते ॥७८॥ तत्रसर्वाणिभूतानिदग्धान्यादित्यरश्मिभिः ॥ ब्रह्माणम
ग्रतःकृत्वासदादित्यगणैर्मुने ॥ ७९ ॥ प्रविशंतिसुरश्रेष्ठहरिंनारायणंप्रभुम् ॥ स्रष्टारंसर्वभूतानांकल्पांतेषुपुनःपुनः ॥ ८० ॥ भूयोपिभगवान्रुद्रःसं
हर्ताकालएवहि ॥ कल्पांतेतःप्रवक्ष्यामिमनोर्वैवस्वतस्यवै ॥ ८१ ॥ विसर्गंपुण्यमाख्यानंधन्यंकुलविवर्धनम् ॥ ८२ ॥ इतिश्रीशिवमहापुराणेधर्मसं
हितायांमन्वंतरकथावर्णनेऽष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ सूतउवाच ॥ विवस्वान्कश्यपाज्जज्ञेदाक्षायण्यांमहानृषिः ॥ तस्यभार्याभवत्संज्ञात्वा
ष्ट्रीदेवीसुरेणुका ॥ १ ॥ भर्तृरूपेणनातुष्यद्रूपयौवनशालिनी ॥ आदित्यस्याहितद्रूपमसहंतीसुतेजसा ॥ २ ॥ दह्यमानाततोद्वेगमकरोद्वरवर्णिनी ॥
ऋषेऽस्यांत्रीण्यपत्यानिजनयामासभास्करः ॥ ३ ॥ संज्ञायांतुमनुःपूर्वंश्राद्धदेवःप्रजापतिः ॥ यमश्चयमुनाचैवयमजौसंबभूवतुः ॥ ४ ॥ संवर्तुलंतुत
द्रूपंदृष्ट्वासंज्ञाविवस्वतः ॥ असहंतीततश्छायामात्मनःसासृजच्छुभा ॥ ५ ॥ छायासतीतुसासंज्ञामवोचद्भक्तितःशुभे ॥ किंकरोमिहिकार्यंतेकथयस्व
शुचिस्मिते ॥ ६ ॥ संज्ञोवाच ॥ अहंयास्यामिभद्रंतेममैवभवनंपितुः ॥ त्वयैवभवनेमह्यंवस्तव्यंनिर्विकारया ॥ ७ ॥ इमौचबालकौमह्यंकन्याचेयं
सुमध्यमा ॥ पालनीयाःसुखेनैवममचेदिच्छसिप्रियम् ॥ ८ ॥ छायोवाच ॥ आकेशग्रहणाद्देविसहिष्यामिसुदुष्कृतम् ॥ आख्यास्यामिमतंतुभ्यंगच्छ
देवियथासुखम् ॥ ९ ॥ इत्युक्तासागमद्देवीव्रीडितासंनिधौपितुः ॥ पित्रानिर्भर्त्सितातत्रनियुक्तासापुनःपुनः ॥ १० ॥ आगच्छद्वडवाभूत्वाछाद्यरूपं
ततःस्वकम् ॥ कुरूंस्तदोत्तरान्प्राप्यनृणांमध्येचचारह ॥ ११ ॥ संज्ञांतांतुरविर्मत्वाछायायांससुतंतदा ॥ जनयामाससावर्णिर्मनुःसभविताकिल
॥ १२ ॥ संज्ञातुपार्थिवीयातुतस्यपुत्रस्यवैतदा ॥ चकाराभ्यधिकंस्नेहंनतथापूर्वजेसुते ॥ १३ ॥ अनुजस्यचभूपादियमस्तस्यनचक्षमे ॥ सरोषःसच

बाल्याच्चभाविनोर्थस्यवैबलात् ॥ १४ ॥ छायांसंतर्जयामासपदावैवस्वतोयमः ॥ तंशशापततः क्रोधाच्छायातंकलुषीकृता ॥ १५ ॥ चरणःपततामे
षनवोतिभृशरोषिता ॥ यमस्ततःपितुःसर्वंप्रांजलिःप्रत्यवेदयत् ॥ १६ ॥ भृशंशापभयोद्विग्नःसंज्ञावाक्यैर्विचेष्टितः ॥ मात्रास्नेहेनसर्वेषुवर्तितव्यंसुते
षुवै ॥ १७ ॥ स्नेहमस्मानपहायकनीयांसंविभूषति ॥ तस्मान्मयोद्यतःपादस्तद्भवान्क्षंतुमर्हसि ॥ १८ ॥ शप्तोहमस्मिदेवेशजनन्यातपतांवर ॥
तवप्रसादाच्चरणोनपतेन्ममगोपते ॥ १९॥ सवितोवाच ॥ असंशयंपुत्रमहद्भविष्यत्यत्रकारणम् ॥ येनत्वामाविशत्क्रोधोधर्मज्ञंसत्यवादिनम् ॥ २० ॥
नशक्यमेतन्मिथ्यावैकर्तुंमातृवचस्तव ॥ कृमयोमांसमादायगमिष्यंतिमहीतले ॥ २१ ॥ तद्वचोभवितानित्यंत्वंचत्राताभविष्यसि ॥ आदि
त्यश्चाब्रवीत्तांतुछायांक्रोधसमन्वितः ॥ २२ ॥ किंतुल्येभ्यधिकस्नेहएतदाख्यातुमर्हसि ॥ सारवेर्वचनंश्रुत्वायाथातथ्यंन्यवेदयत् ॥ २३ ॥
विवस्वानपितच्छुत्वाक्रुद्धस्त्वष्टारमभ्यगात् ॥ त्वष्टाचतंयथान्यायमर्चयित्वाविभावसुम् ॥ २४ ॥ निर्दग्धकामंरोषेणसांत्वयामासवैतदा ॥ तवातिते
जसादग्धाइदंरूपंनशोभते ॥ २५ ॥ असहंतीचतत्संज्ञावनेवसातिशाद्वले ॥ श्लाघ्यायोगबलोपेतायोगमासाद्यगोपते ॥ २६ ॥ अनुकूलन्तुदेवेशयदि
स्यान्ममयन्मतम् ॥ रूपंनिवर्तयाम्यद्यनवंकांतंकरोम्यहम् ॥ २७ ॥ तच्छुत्वापगतःक्रोधोमार्तंडस्यविवस्वतः ॥ भ्रमिमारोप्यतत्तेजःशातयामासवै
मुनिः ॥ २८ ॥ ततोविभ्राजितंरूपंतेजसासंवृतंनच ॥ कृतंकांततरंरूपंत्वष्ट्रातच्छुशुभेतदा ॥ २९ ॥ ततोसौयोगमास्थायस्वांभार्यांवैददर्शह ॥ अधृ
ष्यंसर्वभूतानांतेजसानियमेनच ॥ ३० ॥ सोश्वरूपंसमास्थायगत्वातांमैथुनायच ॥ मैथुनायविचेष्टंतीपरपुंसोपशंकया ॥ ३१ ॥ मुखतोनासिकायांतु
शुक्रंतस्याद्धान्मुने ॥ देवौततःप्रजायेतामश्विनौभिषजांवरौ ॥३२॥ नासत्यौतौचदस्रौचस्मृतौद्वावश्विनावपि ॥ तौतुकांतेनरूपेणदर्शयामासभास्करः
॥ ३३ ॥ आत्मानंसातुतंदृष्ट्वाप्रहृष्टापतिमादरात् ॥ यमस्तुकर्मणातेनभृशंपीडितमानसः ॥ ३४ ॥ धर्मेणरंजयामासधर्मराजइमाःप्रजाः ॥ लेभेसकर्म
णातेनधर्मराजोमहाद्युतिः ॥ ३५ ॥ पितॄणामाधिपत्यंचलोकपालत्वमेवच ॥ मनुःप्रजापतिस्त्वासीत्सावर्णःसतपोधनः ॥ ३६ ॥ भावीसावर्णिके
न्यस्मिन्मनुःसावर्णिकेंतरे ॥ मेरुपृष्ठेतपोघोरमद्यापिचरतेप्रभुः ॥ ३७ ॥ भ्राताशनैश्चरश्चापिग्रहत्वंसलब्धवान् ॥ त्वष्टातुतेजसातेनविष्णोश्चक्र
मवर्तयत् ॥ ३८ ॥ तदप्रतिहतंयुद्धेदानवानांचिकीर्षया ॥ यवीयसीतयोर्जातुयमकन्यायशस्विनी ॥ ३९ ॥ अभवत्सासरिच्छ्रेष्ठायमुनालोकपा
वनी ॥ मनुरित्युच्यतेलोकेसावर्णिरितिचोच्यते ॥ ४० ॥ यदिदंजन्मदेवानांशृणुयाद्धारयेतवा ॥ आपदंप्राप्यमुच्येतप्राप्नुयात्सुमहद्यशः ॥ ४१ ॥
इतिश्रीशिवमहापुराणेधर्मसंहितायामेकोनषष्टितमोऽध्यायः ॥ ५९ ॥ सूतउवाच ॥ मनोर्वैवस्वतस्यासन्पुत्रावैनवतत्समाः ॥ इक्ष्वाकुःशिबिनाभा

गौधृष्णुःशर्यातिरेवच ॥ १ ॥ नरिष्यंतोथनाभागःकरूषश्चप्रियव्रतः ॥ अकरोत्पुत्रकामस्तुमनुरिष्टिंप्रजापतिः ॥ २ ॥ अनुत्पन्नेषुपुत्रेषुतत्रेष्ट्यां संबभूवह ॥तत्रदिव्यांबरधरादिव्याभरणभूषिता ॥ ३ ॥ दिव्यसंहननाचैवइडाजज्ञेथविश्रुता ॥ तामिडेत्येवहोवाचमनुर्दंडधरस्तथा ॥ ४ ॥ अनुगच्छस्वमामेतितामिडाप्रत्युवाचह ॥ धर्मयुक्तमिदंवाक्यंपुत्रकामंप्रजापतिम् ॥ ५ ॥ मित्रावरुणयोरंशेजातास्मिवदतांवर ॥ तयोःसकाशंयास्यामि नमेऽधर्मोहितद्भवेत् ॥ ६ ॥ एवमुक्तामयासातुमित्रावरुणयोरतः ॥ गत्वांतिकंवरारोहाप्रांजलिर्वाक्यमब्रवीत् ॥ ७ ॥ अंगास्मिन्युवयोर्जाताब्रूतकिं करवाणिवाम् ॥ तांतथावादिनींसाध्वींमित्रावरुणावूचतुः ॥ ८ ॥ अनेनतवधर्मज्ञेप्रश्रयेणदमेनच ॥ सत्येनचैवसुश्रोणिप्रीतौद्वौवरवर्णिनि ॥ ९ ॥ आवयोस्त्वंमहाभागेख्यातिंचैवगमिष्यसि ॥ मनोर्वंशकरःपुत्रस्त्वमेवचभविष्यसि ॥ १० ॥ सुद्युम्नइतिविख्यातस्त्रिषुलोकेषुविश्रुतः ॥ जगत्प्रियो धर्मशीलोमनोर्वंशविवर्धनः ॥ ११ ॥ विवृत्तासातुतच्छ्रुत्वागच्छंतीपितुरंतिकम् ॥ बुधेनांतरमासाद्यमैथुनायोपमंत्रिता ॥ १२ ॥ सोमस्यपुत्रस्तस्यां तुपुत्रोजज्ञेपुरूरवाः ॥ जनयित्वातुसापुत्रंपुनःसुद्युम्नकंगता ॥ १३ ॥ सुद्युम्नस्यतुदायादास्त्रयःपरमधार्मिकाः ॥ उत्कलश्चगयश्चैवविनताश्वश्चवीर्यवान् ॥ १४ ॥ उत्कलस्योत्कलाविप्रविनताश्वस्यपश्चिमा ॥ दिक्पूर्वामुनिशार्दूलगयस्यतुगयास्मृता ॥ १५ ॥ प्रविष्टेतुमनौतातेदिवाकरमतंमुने ॥ दशधातत्रतत्क्षेत्रमकरोत्पृथिवींमनुः ॥ १६ ॥ इक्ष्वाकुःश्रेष्ठदायादोमध्यदेशमवाप्तवान् ॥ वसिष्ठवचनादासीत्प्रतिष्ठानंमहात्मनः ॥ १७ ॥ प्रतिष्ठांधर्मराजस्यसुद्युम्नोथततोददौ ॥ तत्पुरूरवसेप्रादाद्राज्यंप्राप्यमहायशाः ॥ १८ ॥ मानवोयोमुनिश्रेष्ठस्त्रीपुंसोर्लक्षणःप्रभुः ॥ नरिष्यतः शकाःपुत्रानाभागस्यसुतोभवत् ॥ १९ ॥ अंबरीषस्तुवार्ष्णेयोबाल्हीकंक्षेत्रमावसन् ॥ शर्यातेर्मिथुनंत्वासीदानर्तोनामविश्रुतः ॥ २० ॥ पुत्रःसुकन्याकन्याचयापत्नीच्यवनस्यहि ॥ आनर्तस्यहिदायादोरेवोनाममहाद्युतिः॥२१॥आनर्तविषयेचैवपुरीनामकुशस्थली॥रेवस्यरैवतःपुत्रःककुद्मी नामविश्रुतः ॥ २२ ॥ ज्येष्ठःपुत्रःसतस्यासीद्राज्यंप्राप्यकुशस्थलीम् ॥ सकन्यासहितःश्रुत्वागांधर्वंब्रह्मणोंतिके ॥ २३ ॥ मुहूर्तभूतंदेवस्यजातंबहुयुगं तदा ॥ आजगामयुवैवाथस्वांपुरींयादवैर्वृताम् ॥२४॥ कृतांद्वारवतींनामबहुद्वारांमनोरमाम् ॥ भोजवृष्ण्यंधकैर्गुप्तांवासुदेवपुरोगमैः ॥२५॥ ततस्तद्रैवतोज्ञात्वागतान्बहुयुगांस्तदा ॥ कन्यांतांबलदेवायप्रादात्तत्रसरेवतीम् ॥२६॥ दत्वाजगामशिखरेमेरोस्तपसिसंस्थितः ॥ सूतउवाच ॥ नजराक्षुत्पिपासावानमृत्युर्ब्रह्मणोंतिके ॥ २७ ॥ ककुद्मिनश्चतत्रैवगतस्यरैवतस्यहि ॥ हतापुण्यजनैस्तीव्रराक्षसैःसाकुशस्थली ॥ २८ ॥ तस्यपुत्रशतंत्वासीद्धार्मिकस्यययौदिशः ॥ अन्ववायस्तुसुमहांस्तत्रतस्यमहात्मनः ॥२९॥ क्षत्रियादिक्षुसर्वासुगताःसर्वत्रधार्मिकाः॥नाभागारिष्टस्यसुतौयौतौब्राह्मणसंगतौ॥३०॥

कारूषस्यतुकारूषाःक्षत्रियायुद्धदुर्मदाः ॥ प्राहुरेकोभवत्पुत्रःप्रजातेरितिनःश्रुतम् ॥ ३१ ॥ पृषध्रोहिंसयित्वातुगुरोर्गांमुनिसत्तम ॥ शापाच्छ
द्रत्वमापन्नोनवैतेपरिकीर्तिताः ॥ ३२ ॥ पूर्वजस्तुमनोर्विप्रइक्ष्वाकुरभवत्सुतः ॥ तस्यपुत्रशतंत्वासीदिक्ष्वाकोर्भूरिदक्षिणम् ॥ ३३ ॥ तेषांविकुक्षि
र्ज्येष्ठस्तुसोयोध्यामभवन्नृपः ॥ शकुनिप्रमुखास्तस्यपुत्राःपंचदशस्मृताः ॥ ३४ ॥ उत्तरापथदेशस्यरक्षितारोमहीक्षितः ॥ श्राद्धकर्मणिचोद्दिष्टेह्यकृते
श्राद्धकर्मणि ॥ ३५ ॥ भक्षयित्वाशशंशीघ्रंशशादत्वंततोगतः ॥ इक्ष्वाकुणापरित्यक्तोवसिष्ठवचनात्प्रभुः ॥३६॥ इक्ष्वाकुःसंस्थितोराजाशशादोवनमा
विशत् ॥ अयोधस्यतुदायादःककुत्स्थोनामवीर्यवान् ॥ ३७ ॥ अरिनाभःककुत्स्थस्यपृथुरारिनभःसुतः ॥ विष्टराश्वःपृथोःपुत्रस्तस्मादिंद्रोव्यजायत
॥ ३८ ॥ इंद्रस्ययुवनाश्वस्तुश्रावस्तस्यव्यजायत ॥ जज्ञेश्रावस्तकोराज्ञःश्रावस्तीयेननिर्मिता ॥ ३९ ॥ श्रावस्तस्यतुदायादोबृहदश्वोमहायशाः ॥
कुवलाश्वःसुतस्तस्यराजापरमधार्मिकः ॥ ४० ॥ यःसधुंधुवधाद्भूतोधुंधुमारोनृपोत्तमः ॥ कुवलाश्वस्यपुत्राणांशतमुत्तमधन्विनाम् ॥ ४१ ॥ बभूवाथ
पिताराज्येकुवलाश्वोन्ययोजयत् ॥ पुत्रसंक्रामितश्रीकोवनंराजासमाविशत् ॥ ४२ ॥ तमुत्तंकोथविप्रार्षिःप्रयांतंप्रत्यवारयत् ॥ उत्तंक उवाच ॥ भव
तारक्षणंकार्यंपृथिव्याधर्मतःशृणु ॥४३॥ त्वयाहिपृथिवीराजन्रक्ष्यमाणामहात्मना ॥ भविष्यतिनिरुद्विग्नानारण्यंगंतुमर्हसि ॥ ४४ ॥ ममाश्रमसमीपेतु
समेषुमरुधन्वसु ॥ समुद्रवालुकापूर्णेदानवोबलदर्पितः ॥ ४५ ॥ देवतानामवध्योहिमहाकायोमहाबलः ॥ अंतर्भूमिगतस्तत्रवालुकांतर्हितःस्थितः ॥
॥ ४६ ॥ राक्षसस्यमधोःपुत्रोधुंधुनामासुदारुणः ॥ शेतेलोकविनाशायतपआस्थायदारुणम् ॥ ४७ ॥ संवत्सरस्यपर्यंतेसनिःश्वासंविमुंचति ॥ यदा
तदासाचलतिसशैलवनकानना ॥ ४८ ॥ तस्यनिःश्वासवातेनरजउद्धूयतेमहत् ॥ आदित्यपथमापूर्यसप्ताहंभूमिकंपनम् ॥ ४९ ॥ सविस्फुलिंगंसांगारं
सधूममपिदारुणम् ॥ तेनराजन्नशक्नोमितस्मिन्स्थातुंस्वआश्रमे ॥ ५० ॥ तंवारयमहाबाहोलोकानांहितकाम्यया ॥ लोकाःस्वस्थाभवंत्वद्यतस्मिन्वि
निहतेत्वया ॥ ५१ ॥ त्वंहितस्यवधायैवसमर्थःपृथिवीपते ॥ विष्णुनाचवरोदत्तोमह्यंपूर्वयुगेनघ ॥५२ ॥ तेजसास्वेनतेविष्णुस्तेजआप्याययिष्यति ॥
पालनेहिमहान्धर्मःप्रजानामिहदृश्यते ॥ ५३ ॥ नतथादृश्यतेरण्येमातेभूद्बुद्धिरीदृशी ॥ ईदृशोनहिराजेंद्रधर्मःक्वचनविद्यते ॥ ५४ ॥ प्रजानांपालने
यादृक्पुराराजर्षिभिःकृतः ॥ सएवमुक्तोराजर्षिरुत्तंकेनमहात्मना ॥ ५५ ॥ कुवलाश्वःसुतंप्रादात्तस्मैधुंधुनिवारणे ॥ भगवन्न्यस्तशस्त्रोहमयंतुतनयो
मम ॥ ५६ ॥ भविष्यतिद्विजश्रेष्ठधुंधुमारोनसंशयः ॥ इत्युक्त्वापुत्रमादिश्ययौसतपसेनृपः ॥ ५७ ॥ कुवलाश्वश्वसोत्तंकोययौधुंधुविनिग्रहे ॥
तमाविशत्तदाविष्णुर्भगवांस्तेजसाप्रभुः ॥ ५८ ॥ उत्तंकस्यनियोगाद्वैलोकानांहितकाम्यया ॥ तस्मिन्प्रयातेदुर्धर्षेदिविशब्दोमहानभूत् ॥ ५९ ॥

एषश्रीमान्भूपसुतोधुंधुमारोभविष्यति ॥ दिव्यैर्माल्यैश्चतंदेवाःसमंतात्समवारयन् ॥ ६० ॥ सगत्वाजयतांश्रेष्ठस्तनयैःसहपार्थिवः ॥ समुद्रंखनयामा
सवालुकार्णवमध्यगः ॥ ६१ ॥ नारायणस्यविप्रर्षैस्तेजसाप्यायितस्तुसः ॥ बभूवसुमहातेजाभूयोबलसमन्वितः ॥ ६२ ॥ तस्यपुत्रैःखन
द्भिस्तुवालुकांतर्गतस्तुसः ॥ धुंधुरासादितोब्रह्मन्दिशमाश्रित्यपश्चिमाम् ॥ ६३ ॥ मुखजेनाग्निनाक्रोधाल्लोकानुद्वर्तयन्निव ॥ वारिसुस्रा
ववेगेनमहोदधिरिवोदये ॥ ६४ ॥ सोमस्यचत्रिभिर्ह्नंदग्धंपुत्रशतंहितत् ॥ ततःसराजाविप्रेंद्रराक्षसंतंमहाबलम् ॥ ६५ ॥ आससादमहातेजाधुंधुं
विप्रविनाशनम् ॥ तस्यवारिमयंवेगमापीयसनराधिपः ॥ ६६ ॥ वह्निबाणेनवह्निंतुशमयामासवारिणा ॥ तंनिहत्यमहाकायंबलेनोदकराक्षसम्
॥ ६७ ॥ उत्तंकस्येक्षयामासकृतंकर्मनराधिपः ॥ उत्तंकस्तुवरंप्रादात्तस्मैराज्ञेमहामुने ॥ ६८ ॥ अददच्चाक्षयंवित्तंशत्रुभिश्चापराजयम् ॥ धर्मेम
तिंचसततंस्वर्गेवासंतथाक्षयम् ॥ ६९ ॥ पुत्रांस्तथाक्षयाँल्लोकान्येचैवरक्षसाहताः ॥ तस्यपुत्रास्त्रयःशिष्टादृढाश्वःश्रेष्ठउच्यते ॥ ७० ॥ हंसाश्वक
पिलाश्वौचकुमारौचकनीयसौ॥धौंधुमारिर्दृढाश्वोयोहर्यश्वस्तस्यचात्मजः ॥७१ ॥ हर्यश्वस्यनिकुंभोभूत्पुत्रोधर्मरतःसदा॥संहताश्वोनिकुंभस्यपुत्रोरणवि
शारदः ॥७२॥ अक्षाश्वश्चकृताश्वश्चसंहताश्वसुतोभवत्॥तस्यहैमवतीकन्यासतांमातादृषद्वती ॥७३॥विख्याताात्रिषुलोकेषुपुत्रस्तस्याःप्रसेनजित्॥लेभे
प्रसेनजिद्भार्यांगौरींनामपतिव्रताम्॥७४॥अभिशप्तातुसाभर्त्रानदीसाबाहुदाकृता॥तस्याःपुत्रोमहानासीद्युवनाश्वोमहीपतिः॥७५॥मांधातायुवनाश्वस्यत्रि
षुलोकेषुविश्रुतः ॥ तस्यचैत्ररथीभार्याशशबिंदुसुताभवत् ॥ ७६ ॥ शशबिंदोर्मतीनामरूपेणाप्रतिमाभवत् ॥ पतिव्रताचज्येष्ठाचभ्रातृणामयुतस्यच
॥ ७७ ॥ तस्यामुत्पादयामासमांधाताद्वौसुतौतदा ॥ पुरुकुत्संचधर्मज्ञंमुचुकुंदंचधार्मिकम् ॥ ७८ ॥ पुरुकुत्ससुतस्त्वासीत्रसदस्युर्महीपतिः ॥
नर्मदायांसमुत्पन्नःसंभूतस्तस्यचात्मजः ॥७९॥ संभूतस्यतुदायादस्त्रिधन्वारिप्रमर्दनः ॥ राज्ञस्त्रिधन्वनस्त्वासीद्विद्वांस्त्रय्यारुणिःप्रभुः ॥ ८० ॥ तस्यस
त्यवतोनामकुमारोभून्महाबलः ॥ पाणिग्रहणमंत्राणांविघ्नंचक्रेमहात्मभिः ॥ ८१ ॥ येनभार्याहृतापूर्वंकृतोद्वाहापरस्यवै ॥ बलात्कामाच्चमोहाच्चसं
हर्षाच्चमदोत्कटात् ॥ ८२ ॥ जहारकन्यांकामाच्चकस्यचित्पुरवासिनः ॥ अधर्मसंगिनंतंतुराजात्रय्यारुणिस्त्यजन् ॥ ८३ ॥ अपध्वंसेतिबहुशोवद
त्क्रोधसमन्वितः ॥ पितरंसोब्रवीत्त्यक्तःक्वगच्छामीतिवैतदा ॥ ८४ ॥ सतुसत्यव्रतस्तंतुश्वपाकावसथांतिके ॥ पित्रात्यक्तोवसद्वीरःपितात्वस्यवनंययौ
॥ ८५ ॥ ततस्तस्यतुविषयेनावर्षत्पाकशासनः ॥ समाद्वादशविप्रर्षेतेनाधर्मेणवैतदा ॥ ८६ ॥ दारांस्तस्यतुविषयेविश्वामित्रोमहातपाः ॥ संत्यज्य
सागरानूपेचचारविपुलंतपः ॥८७॥ तस्यपत्नीगलेबद्धामध्यमंपुत्रमौरसम् ॥ शेषस्यभरणार्थायव्यक्रीणीतशतेनच ॥ ८८ ॥ तांतुदृष्ट्वागलेबद्धांविक्रीणं

तींस्वमात्मजम् ॥ महर्षिपुत्रंधर्मात्मामोक्षयामासवैऋषे ॥ ८९ ॥ सत्यवतोमहाबाहुर्भरणंतस्यचाकरोत् ॥ विश्वामित्रस्यतुष्ट्यर्थमनुक्रोशार्थमेवच ॥
॥ ९० ॥ सोभवद्गालवोनामगलबंधान्महातपाः ॥ ९१ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायांवंशकथनंनामषष्टितमोऽध्यायः ॥ ६० ॥ सूतउवाच ॥
सत्यव्रतस्तुतद्भक्त्याकृपयाचप्रतिज्ञया ॥ विश्वामित्रकलत्रंचपोषयामासवैतदा ॥ १ ॥ हत्वामृगान्वराहांश्चमहिषांश्चवनेचरान् ॥ विश्वामित्राश्रमा
भ्याशेतन्मांसंचाक्षिपन्मुने ॥ २ ॥ तीर्थगांचैवराष्ट्रंचतथैवांतःपुरंमुनिः ॥ याज्योपाध्यायसंयोगाद्वसिष्ठःपर्यरक्षत ॥ ३ ॥ सत्यव्रतस्यबाल्याद्वाभाविनो
र्थस्यवैबलात् ॥ वसिष्ठोभ्यधिकंमन्युंधारयामासनित्यशः ॥ ४ ॥ पित्रातुतंतदाराष्ट्रात्परित्यक्तंस्वमात्मजम् ॥ नवारयामासमुनिर्वसिष्ठःकारणे
नह ॥ ५ ॥ पाणिग्रहणमंत्राणांनिष्ठास्यात्सप्तमेपदे ॥ नचसत्यव्रतस्तस्यतमुपांशुमबुध्यत ॥ ६ ॥ जानन्धर्मान्वसिष्ठात्तुनतंशंसतिभार्गव: ॥
सत्यव्रतस्तदारोषंवसिष्ठोमनसाकरोत् ॥ ७ ॥ गुणबुद्ध्यातुभगवान्वसिष्ठःकृतवांस्तदा ॥ सचसत्यव्रतस्तस्यतमुपांशुमबुध्यत ॥ ८ ॥ त
स्मिन्नपरितोषायपितुरासीन्महात्मनः ॥ कुलस्यानिष्कृतिर्विप्रकृतवान्वैभवेदिति ॥ ९ ॥ नतंवसिष्ठोभगवान्पित्रात्यक्तंन्यवारयत् ॥ अभिषेक्ष्या
म्यहंपुत्रमस्यांतेवैब्रवीन्मुनिः ॥ १० ॥ सतुद्वादशवर्षाणिदीक्षांतामुद्वहद्बली ॥ अविद्यमानेमांसेतुवसिष्ठस्यमहात्मनः ॥ ११ ॥ सर्वकामदुघांदो
ग्ध्रींददर्शसनृपात्मजः ॥ तांवैक्रोधाच्चलोभाच्चश्रमाद्वैचक्षुधार्दितः ॥ १२ ॥ दाशधर्मगतोराजाजघानतांसवैमुने ॥ सतंमांसंस्वयंचैवविश्वामित्रस्यचा
त्मजम् ॥ १३ ॥ भोजयामासतच्छ्रुत्वावसिष्ठोह्यस्यचुक्रुधे ॥ वसिष्ठउवाच ॥ पातयेयमहंक्रूरंतवशंकुमयस्मयम् ॥ १४ ॥ यदितेद्वाविमौशंकूनश्ये
तांवैकृतौपुरा ॥ पितुश्चपरितोषेणगुरोर्दोग्ध्रीवधेनच ॥ १५ ॥ अप्रोक्षितोपयोगात्सात्रिविधस्तेव्यतिक्रमः ॥ त्रिशंकुरितिहोवाचत्रिशंकुरितिसस्मृतः ॥
विश्वामित्रस्तुदाराणामागतोभरणेकृते ॥१६॥तेनतस्मैवरंप्रादान्मुनिःप्रीतस्त्रिशंकवे॥छंद्यमानोवरेणाथवरंवव्रेनृपात्मजः॥१७॥अनावृष्टिभयेचास्मिञ्ञा
तेद्वादशवार्षिके ॥अभिषिच्यपितृराज्येयाजयामासतंमुनिः ॥१८॥ मिषतांदेवतानांचवसिष्ठस्यचकौशिकः॥सशरीरंसदातंतुदिवमारोपयत्प्रभुः ॥१९॥
तस्यसत्यरथानामभार्याकैकयवंशजा ॥ कुमारंजनयामासहरिश्चंद्रमकल्मषम् ॥ २० ॥ सवैराजाहरिश्चंद्रस्त्रैशंकवइतिस्मृतः ॥ आहर्ताराजसूय
स्यसम्राडितिहविश्रुतः ॥ २१ ॥ हरिश्चंद्रस्यतुसुतोरोहितोनामविश्रुतः ॥ रोहितस्यवृकःपुत्रोवृकाद्बाहुस्तुजज्ञिवान् ॥ २२ ॥ हैहयास्तालजंघाश्चनि
रस्यंतिस्मतंनृपम्॥नात्मार्थधार्मिकोविप्रसहिधर्मयुगेभवत् ॥२३॥ सगरंससुतंबाहुर्जज्ञेसहगरेणवै ॥ और्वस्याश्रममासाद्यभार्गवेणाभिरक्षितः ॥ २४ ॥
आग्नेयमस्त्रंलब्ध्वाचभार्गवात्सागरोनृपः ॥ जिगायपृथिवींगत्वातालजंघान्तसहैहयान् ॥ शकान्बहूदकांश्चैवपारदातगणान्खशान् ॥ २५ ॥

॥ शौनकउवाच ॥ गरेणैवयुतः सोऽथकथंजातस्तुक्षत्रियात् ॥ जितवानेतदाचक्ष्वविस्तरेणैवसूतज ॥ २६ ॥ सूतउवाच ॥ पारीक्षितेनयत्पृष्टो
वैशंपायनएवच ॥ यदाचष्टापितद्वक्ष्येशृणुष्वैकमनासुने ॥ २७ ॥ पारीक्षितउवाच ॥ कथंससगरोराजागरेणसहितोमुने ॥ जातःसजज्ञिवान्भूपाने
तदाख्यातुमर्हसि ॥ २८ ॥ वैशंपायनउवाच ॥ बाहोर्व्यसनिनस्तातहृतंराज्यमभूत्किल ॥ हैहयैस्तालजंघैश्चशकैःसार्थविशांपते ॥ २९ ॥
यवनाःपारदाश्चैवकांबोजाःपह्लवास्तथा॥एतेषांचगणाराजन्हैहयार्थेपराक्रमन् ॥३०॥ हृतराज्यस्ततोराजासवैबाहुर्वनंययौ॥पत्न्याचानुगतोदुःखीसवैप्रा
णानवासृजत् ॥३१॥ पत्नीतुयादवीतस्यसगर्भापृष्ठतोन्वगात् ॥ सपत्न्याचगरस्तस्यादत्तःपूर्वंतुसेर्ष्यया॥३२॥सातुभर्तुश्चितांकृत्वाज्वलनंचावरोहत ॥
और्वस्तांभार्गवोराजन्कारुण्यात्समवारयत् ॥ ३३ ॥ तस्याश्रमेचवैगर्भोगरेणैवसहच्युतः ॥ व्यजायतमहाबाहोसगरोनामपार्थिवः ॥ ३४ ॥ और्वं
स्तुजातकर्मादितस्यकृत्वामहात्मनः ॥ अध्याप्यवेदंशास्त्राणिततोस्त्रंप्रत्यपादयत् ॥ ३५ ॥ आग्नेयंतंमहाभागसामरैरपिदुःसहम् ॥ सतेनास्त्रबलेनाजौ
बलेनचसमन्वितः ॥ ३६ ॥ हैहयान्विजघानाशुक्रुद्धोह्यस्त्रबलेनच ॥ आजहारचलोकेषुकीर्तिंकीर्तिमतांवरः ॥३७॥ ततःशकाःसयवनाःकांबोजाःपह्लवा
स्तथा ॥ हन्यमानास्तदातेतुवसिष्ठंशरणंययुः ॥ ३८ ॥ वसिष्ठोवंचनांकृत्वासमयेनमहाद्युतिः ॥ सगरंवारयामासतेषांदत्त्वाभयंनृपम् ॥ ३९ ॥
सगरःस्वांप्रतिज्ञांतुगुरोर्वाक्यंनिशम्यच ॥ धर्मंजघानतेषांवैकेशान्यत्वंचकारह ॥ ४० ॥ अर्धंशकानांशिरसोमुंडंकृत्वाव्यसर्जयत् ॥ य
वनानांशिरःसर्वंकांबोजानांतथैवच ॥ ४१ ॥ पारदामुंडकेशाश्चपह्लवाःश्मश्रुधारिणः ॥ निःस्वाध्यायवषट्काराःकृतास्तेनमहात्मना ॥ ४२ ॥
सर्वेतेक्षत्रियास्तातधर्महीनाःकृताःपुरा ॥ सधर्मविजयीराजाविजित्येमांवसुंधराम् ॥४३॥ अश्वंसंस्कारयामासवाजिमेधायपार्थिवः ॥ तस्यचारयतःसोश्वः
समुद्रेपूर्वदक्षिणे ॥ ४४ ॥ वेलासमीपेऽपहृतोभूमिंचैवप्रवेशितः ॥ सतंदेशंतदापुत्रैःखानयामाससर्वतः ॥ ४५ ॥ आसेदुस्तेततस्तत्रखन्यमानेमहार्णवे॥
तमादिपुरुषंदेवंकपिलंविश्वरूपिणम् ॥ ४६ ॥ तस्यचक्षुःसमुत्थेनवह्निनाप्रतिबुध्यतः ॥ दग्धाःषष्टिसहस्राणिचत्वारस्त्ववशेषिताः ॥ ४७ ॥ हर्षकेतुः
सुकेतुश्चतथाधर्मरतोऽपरः ॥ शूरःपंचजनश्चैवतस्यवंशकरानृप ॥ ४८ ॥ प्रादाच्चतस्मैभगवान्हरिःपंचवरान्स्वयम् ॥ वंशंमेधांचकीर्तिंचसमुद्रंतनयं
धनम् ॥ ४९ ॥ सागरत्वंचलेभेसकर्मणातेनतस्यवै ॥ तंचाश्वमेधिकंसोश्वंसमुद्रादुपलब्धवान् ॥ ५० ॥ आजहाराश्वमेधानांशतंससुमहायशाः ॥५१॥
शौनकउवाच ॥ सगरस्यात्मजावीराःकथंजातामहाबलाः ॥ विक्रांताःषष्टिसाहस्राविधिनाकेनवावद ॥ ५२ ॥ सूतउवाच ॥ द्वेपत्न्यौसगरस्यास्तांत
पसादग्धकिल्बिषे ॥ और्वस्तयोर्वरंप्रादात्तोषितोमुनिसत्तमः ॥५३॥ षष्टिंपुत्रसहस्राणिएकावत्रेतरस्विनम् ॥ एकंवंशधरंत्वेकायथेष्टंवरशालिनी॥५४॥

तत्रैकाजगृहेलुब्धापुत्राञ्छूरान्बहूंस्तदा॥साचैवसुषुवेतुंबंबीजपूर्णंपृथक्कृताः ॥५५॥ ततोधात्रीभिःसर्वेपिववृधुस्तेयथाक्रमम् ॥ घृतपूर्णेषुकुंडेषुकुमाराः
प्रीतिवर्धनाः ॥५६ ॥ कपिलाग्निप्रदग्धानांतेषांतत्रमहात्मनाम् ॥ एकःपंचजनोनामपुत्रोराजाबभूवह ॥५७॥ ततःपंचजनस्यासीदंशुमान्नामवीर्यवान् ॥
दिलीपस्तनयस्तस्यपुत्रोयस्यभगीरथः ॥ ५८ ॥ यःसगंगांसरिच्छ्रेष्ठामवातारयंतप्रभुः ॥ समुद्रमानयच्चेमांदुहितृत्वेप्रकल्पयत् ॥ ५९ ॥ भगीरथसु
तोजातःश्रुतसेनइतिश्रुतः ॥ नाभागस्तुसुतस्तस्यपुत्रःपरमधार्मिकः ॥ ६० ॥ अंबरीषस्तुनाभागिःसिंधुद्वीपस्ततोभवत् ॥ अयुताजित्सुदायादः
सिंधुद्वीपस्यवीर्यवान् ॥ ६१ ॥ अयुताजित्सुतस्त्वासीदृतुपर्णोमहायशाः ॥ दिव्याक्षहृदयज्ञोसौराजानलसखोभवत् ॥ ६२ ॥ ऋतुपर्णसुतस्त्वासीद
नुपर्णोमहाद्युतिः॥तस्यकल्माषपादोवैनाम्नामित्रसहस्तथा ॥ ६३ ॥ कल्माषपादस्यसुतःसर्वकर्मेतिविश्रुतः ॥ अनरण्यस्यपुत्रोभूद्विश्रुतःसर्वकर्मणः
॥ ६४ ॥ अनरण्यसुतोराजाविद्वान्मुंडिद्रुहोभवत् ॥ निषधस्तस्यतनयोरामस्यप्रपितामहः ॥ ६५ ॥ येनस्वर्गादिहागत्यमुहूर्तंप्राप्यजीवितम् ॥
त्रयोभिसंचितालोकाबुद्ध्यासत्येनचानघ ॥ ६६ ॥ दीर्घबाहुस्ततस्तस्यरघुनामाभवत्सुतः ॥ अजस्तस्यतुपुत्रोभूत्तस्माद्दशरथोप्यजात् ॥ ६७ ॥
रामोदशरथाज्जज्ञेधर्मात्मायोमहायशाः ॥ रामस्यतनयोजज्ञेकुशइत्याभिविश्रुतः ॥ ६८ ॥ अतिथिस्तुकुशाज्जज्ञेनिषधस्तस्यचात्मजः ॥ निषधस्यनलः
पुत्रोनभःपुत्रोनलस्यतु ॥ ६९ ॥ नभसःपुंडरीकस्तुक्षेमधन्वाततःस्मृतः ॥ क्षेमधन्वसुतस्त्वासीद्देवानीकःप्रतापवान् ॥ ७० ॥ आसीदहीनगुर्नामदेवा
नीकात्मजःप्रभुः ॥ अहीनगोस्तुदायादःसहस्वान्नामवीर्यवान् ॥ ७१ ॥ वीरसेनात्मजस्तस्ययश्चेक्ष्वाकुकुलोद्वहः ॥ इक्ष्वाकुवंशप्रभवाःप्राधान्येनप्रकी
र्तिताः ॥ ७२ ॥ एतैर्वैवस्वतेवंशेराजानोभूरिदक्षिणाः ॥ पठन्सम्यगिमांसृष्टिमादित्यस्यविवस्वतः ॥ ७३ ॥ श्राद्धदेवस्यदेवस्यप्रजानांपुष्टिदस्यच ॥
प्रजावानेतिसायुज्यमादित्यस्यनसंशयः॥ ७४ ॥ इतिश्रीशिवमहापुराणेधर्मसंहितायामेकषष्टितमोऽध्यायः ॥ ६१ ॥ शौनकउवाच ॥ श्रुतोवैश्राद्धदेव
स्यह्यादित्यस्यविवस्वतः॥श्रोतुमिच्छामिमाहात्म्यंश्राद्धस्यकिंफलंभवेत्॥१॥प्रीताश्चपितरोयेनश्रेयसायोजयंतिच ॥ एतद्वैश्रोतुमिच्छामिपितॄणांसर्गमु
त्तमम् ॥ २ ॥सूतउवाच ॥ हंततेकथयिष्यामिपितॄणांसर्गमुत्तमम् ॥ मार्कंडेयेनकथितंभीष्मायपरिपृच्छते ॥३॥ गीतंसनत्कुमारेणमार्कंडेयायधीमते ॥
॥ तत्तेहंसंप्रवक्ष्यामिसर्वकामफलप्रदम् ॥ ४ ॥ युधिष्ठिरेणसंपृष्टोभीष्मःप्रोवाचतच्छृणु ॥ युधिष्ठिरउवाच ॥ पुष्टिकामेनधर्मज्ञकथंपुष्टिरवा
प्यते॥५॥एतदाख्यातुमिच्छामिकिंकुर्वाणोनसीदति ॥ भीष्मउवाच ॥ श्राद्धैःप्रीणातिहिपितॄन्सर्वकामफलैस्तुयः ॥ ६ ॥ सपुनःप्रथितःश्राद्धीप्रेत्य
चेहचमोदते ॥ यंयंकाममभिध्यायश्राद्धंप्रकुरुतेतुयः॥७॥तंतंप्राप्नोत्ययत्नेनपितॄणांतुप्रसादतः ॥ युधिष्ठिरउवाच ॥ वर्ततेपितरःस्वर्गेकेषांचिन्नरकेपुनः८॥

